REPRODUCTION OF 1967 EDITION OF
BRAHMA SUTRA-SRI BHASHYA WITH SRUTAPRAKASIKA
OF UBHAYA VEDANTA GRANTHAMALA

# ब्रह्मसूत्र श्रीभाष्यम्

सुप्रसिद्ध श्रुतप्रकाशिकासहितम्

# BRAHMASUTRA-SRIBHASHYA

WITH SRUTAPRAKASIKA

## Vol. I

VISISHTADVAITA PRACHARINI SABHA
Office : SRI DESIKA VIDYA BHAVANAM
27, Venkatesa Agraharam, Mylapore,
Madras-600 004.

1989

श्रीः



भगवद्बादरायणप्रणीत ब्रह्मसूत्राख्यशारीरकमीमांसाभाष्यं

श्रीभगवद्रामानुजविरचितं

# श्रीभाष्यम्

श्रीवात्स्यवरदार्य (नडादूर् अम्माळ्) पादसेवासमधिगतसर्वार्थं

श्रीसुदर्शनसूरि विरचित सुप्रसिद्ध

## श्रुतप्रकाशिकाख्य

व्याख्यासमुद्भासितम्

अभिनवदेशिक वात्स्यसच्चक्रवर्ति

श्री उत्तमूर्. ति. वीरराघवाचार्यैः परिष्कृत्य मुद्रितम्

तच्छिष्यैः मद्रनगरसंस्कृतकलाशालाव्याकरणप्रधानाध्यापकैः

श्री उ. वे. श्रोत्रियम् पैयम्बाडि चेट्लूर् वा. श्रीवत्साङ्काचार्यैः सम्पादितम्

द्वितीयावृत्तिः

(प्रथमसंपुटः—प्रथमाध्यायपादद्वयम्)

*PUBLISHED WITH THE FINANCIAL ASSISTANCE FROM GOVERNMENT OF INDIA, MINISTRY OF HUMAN RESOURCE DEVELOPMENT*

*By :*

SRI VISISHTADVAITA PRACHARINI SABHA (Regd.)
Sri Desika Vidya Bhavanam,
27, Venkatesa Agraharam, Mylapore,
Madras – 600 004.

*If any defect is found in this book, please return the copy by V. P. P. to the Publisher for exchange free of cost or postage.*

1989

**Price of 2 Volumes Rs. 260/-** **Rupees Two Hundred and Sixty**

श्रीः

# अनुक्रमणिका

# विज्ञप्तिः

श्रीभाष्यवत् अशेषविद्वदभिनन्द्यं भाष्यं प्रणेतुं प्रभविष्णवोऽपि सिद्धित्रयादिप्रौढप्रबन्धनिर्माणप्रख्यापितपाण्डित्यप्रकर्षाः श्रीभगवद्यामुनमुनयः बोधायनवृत्तिं शारीरकव्याख्यां साक्षान्निरीक्ष्य प्रणेतव्यमित्यभिसंधिना समयं प्रतीक्षाञ्चक्रिरे इतीदं तच्छिष्यमुखेनाधिगत्य स्वयं काश्मीरान् गत्वा आन्तं तां वृत्तिमवेक्ष्य प्रतिनिवृत्य तामनुसृत्य श्रीयामुनादिदर्शितेनैव पथा शांकरादि निरस्य प्राच्यसांप्रदायिकार्थव्यक्तये तत्साधुत्वाधिगतये च स्वयं भाष्यमभाषिषत श्रीभगवद्रामानुजस्वामिपादाः। 'सूत्राक्षराणि व्याख्यास्यन्ते' इति स्वप्रतिज्ञानुरोधेन प्रतिसूत्रं परयोजनासु दोषं परिशील्यैव आर्जवेनार्थं भाषमाणा अपि न सर्वत्र तं दोषं मुक्तकण्ठमाविरचिकीर्षन्; गम्भीरपदन्यासशैल्यैव सुधीभिः सर्वं सुविवेचमिति मेनिरे। शैलीयं गीताभाष्येऽपि दृश्यमाना श्रीमन्निगमान्तमहादेशिककृतया तात्पर्यचन्द्रिकया सुग्रहा भवति, यथेह तत्त्वटीकया। तदिदं श्रीभाष्यं तत्तन्मतभाष्यविलक्षणम् आमूलाग्रं प्रत्यक्षरपरिशीलनप्रवृत्तया भाष्यान्तरव्याख्याविलक्षणया श्रुतप्रकाशिकयैव संप्रकाशितसर्ववैभवमिति विपश्चितां निश्चप्रचम्। तथा च—

श्रीमद्यामुनवश्यहस्तिवरदप्रेमेद्धरामानुज-
श्रीभाष्यं श्रुतवेदसंग्रहकृतिश्रीवासभक्त्यात्मकम्।
अम्बेत्यादृतमान्यवात्स्यवरदस्वव्याक्रियाप्रक्रिया-
सर्वस्वायित-रङ्गिदत्तविरुदव्यासार्यकृत्युज्ज्वलम्॥

सर्वासु दिक्षु संप्रसृत्वरयशःप्रकर्षाणाम् एषामिदं श्रीभाष्यं काश्मीरेषु सरस्वत्या श्लाघितम्, जयश्रीसमृद्धम्, "देवीं सरस्वतीं व्यासं ततो जयमुदीरयेत्" इति मानितेन, इदमेव भाष्यं सूत्रकृतः स्वस्याभिमतमर्थं यथावद्दर्शयतीति प्रीतेन व्यासेनैव व्यासार्यरूपेणावतीर्य विरचितया श्रुतप्रकाशिकयाऽनया सह यथावत् संशोध्य सहृदयानां तत्त्वज्ञप्तये सर्वदेशप्रचारौपयिक्या लिप्या प्रकाशनीयमिति उभयवेदान्तग्रन्थमालास्थापनकाले विंशतेर्वर्षेभ्यः प्रागेव अस्मदाचार्यैः श्रीरङ्गरामानुजमहादेशिकैरनेकग्रन्थनिर्माणालंकर्मीणैराज्ञप्तस्य मे तदाज्ञापरिपूरणभाग्यं साम्प्रतमेव फलेग्रहि संपन्नम्।

इदमत्र वक्तव्यम्—यत्—संस्कृतभाषासंरक्षणार्थविविधोपायविधानव्यग्रया भारतराष्ट्रमहामन्त्रिसमित्या द्रविणसाहाय्यं संविहितं यतः, तत एवात्र महति कार्ये उत्साह आसीत्। धार्मिकाग्रेसरश्रीवैष्णवधर्मदीप-श्री-उ-वे माडभूषिसुदर्शनाचार्यादयश्च तमुत्साहमभ्यवर्धयन्। 10-6 1964 समये द्रविणसंभरणेन 1965 वत्सरे मुद्रणे प्रवृत्तस्य मे मुद्रणालये नानाकार्यव्यासंगिनि सर्वथा विलम्बमपरिहार्यमालक्षयतः पुनरवसाद एवासीत्। एतस्मिन्नवसरे श्रीमान् आर्. वेंकटाचार्यः समुपसन्नः सर्वप्रकारप्रियहितपरमास्तिकपरिषदमेकां परिकल्प्य वाचामगोचरं साहाय्यं मे कर्तुमुदयुंक्त। तत एवेदं सर्वं संपन्नम्, संपद्यते च। परिषन्निविष्टौ श्रीमन्तौ एम्. एस्. वरदाचार्यः टि. नरसिंहाचार्यश्चैवं गणनीयौ। परिषदियम् एतावति अनुपरम्य श्रीमन्निगमान्तमहादेशिकादिनिर्मितान् ग्रन्थांश्च मुद्रयितुमध्यवस्यति।

यथाशक्ति तालकोश-ग्रन्थाक्षर-आन्ध्रलिप्यादिकोशनिरीक्षणपूर्वकं विशोध्य गहनस्य ग्रन्थस्य पूर्वोत्तरपक्षविभागादि विधाय मुद्रणं निरवर्ति। अथापि सहायभूतविद्वज्जनदुर्भिक्षेण कार्यान्तरगौरवेण मुद्राक्षरसंयोजकादीनां नूत्नतया च तत्रतत्र अल्पो विपर्ययः आपतितः। अक्षरभ्रंशः व्युत्पन्नानां सुज्ञान एवेति मानीय शोधनप्रकाशने यत्नः क्रियते। पूर्वं मदीयव्याख्यानेन भाष्यार्थदर्पणेन सह मुद्रिते श्रीभाष्ये यथावत् कृत्स्नभाष्यप्रमाणाकरप्रदर्शनमकारीति तत इव अनत्ययसूच्या च तत्सुदर्शतामालोचयताऽपि मया श्रुतप्रकाशिकाप्रमाणाकरप्रदर्शनमावश्यकमित्येव निश्चितमासीत्। तथापि तदर्थं प्रकाशनविलम्बमसहमानेन, सर्वग्रन्थान्तरोपयोगमप्यनुचिन्त्य पृथक् शीघ्रमेव प्रकाशयिष्यमाणे श्रीसूक्तिप्रमाणाकराख्ये ग्रन्थे सर्वदर्शनसौकर्यं भावि मन्वानेन चात्र तद्विषये उदासि।

अत्र श्रीमता न्यायव्याकरणप्रवीणेन पैय्यम्बाडिचेट्लूर् श्रीवत्साङ्काचार्येण भावप्रकाशिकादर्शितटीकापाठभेदानां प्रदर्शनं शोधनिकासंयोजनञ्च कृतमत्र प्रकाशितम्। विशेषतः टिप्पणं चिकीर्षुणाऽपि मया द्रविणसंपादनश्रमचिन्तया तत्रतत्र विरलमेव कृतम्। यत्र किञ्चिद्गहनमिवालक्ष्यत, यत्राक्षेपसमाधानयोरवसरः प्रत्यभात्, यत्र पाठवैमत्यात् स्थितरक्षणं सुकरं न वेति चिन्ताऽभूत्—तत्रतत्र किञ्चिदलेखि। बहुषु स्थलेषु श्रीभाष्ये योजनाभेदाः सुवचाः, विशेषांशाश्च वक्तव्याः मदीये भाष्यार्थदर्पणेऽपि द्रष्टव्या भवेयुः। यथा श्रुतप्रकाशिकयैव चरितार्थता न भवेत्—तथा खलु तद्व्याख्यानं प्राक् प्रणीय प्रकाशितम्।

इदमन्यन्मे भाग्यम्—यदत्रास्मत्परमाचार्याणां श्रीकेताण्डपट्टिस्वामिन इति सुप्रसिद्धानां बहुषु ग्रन्थेषु लघुः संगतिग्रन्थ एक इह प्रकाशनीय इति भक्तानामपेक्षां पूरयितुं सौकर्यमासीत्, यच्च श्रीमदहोबिलमठास्थाने चतुश्चत्वारिंशतया अभिषिक्ताः श्री. प. प. श्रीवण्शठकोपश्रीमद्वेदान्तदेशिकयतीन्द्रमहादेशिकाः स्वनिर्मितं ब्रह्मसूत्रानुबन्धिपद्यजातमत्र मुद्रयित्वा प्रकाशयितुं मामादिशन्। इमे प्रायो मया प्रकाश्यमानानां ग्रन्थानां प्रकाशनार्थं सर्वदा सुबहु उपकुर्वन्त एव सन्तीतीदं समयेऽत्रावश्यं वक्तव्यम्। एतद्ग्रन्थप्रकाशनादेव मया लिखिताः केचिदंशाः पुनरुक्तिभिया अत्र न मुद्रिताः। यत् यदत्र निवेशितम्, तत् सर्वं प्रथमं पट्टिकायां निर्दिश्यते। तदस्मिन् वृत्ते—

आचार्यभागवतानुग्रहपुरस्कारेण साम्प्रतमभ्यर्थनीयं तावत्—

उपनिषदुदितार्थव्यक्तये सत्प्रबन्धान्
उभयनिगमचूडामालया श्रीनिवासः।
उपकृतिपर इत्थं ख्यापयन् स्वावतार-
श्रुतिशिखरगुरूक्तीरेवमाविष्करोतु॥

इति श्रीवैष्णवचरणपरागपरमाणुः

29-5-67. उत्तमूर् - ति - वीरराघवाचार्यः

श्रीः

श्रीमते रामानुजाय नमः

## प्रास्ताविकम्

मान्याः महान्तः !

अस्मदाचार्यवर्यैः सर्वशास्त्रपारङ्गतैः अभिनवदेशिकैः श्रीमद्भिः वात्स्यवीरराघवाचार्यमहादेशिकैः विविधपरिष्कारपरिमण्डितं श्रुतप्रकाशिकासमेतं श्रीभगवद्रामानुजानुगृहीतं श्रीभाष्यं द्वाविंशतिसंवत्सरेभ्यः प्राक् देवनागरीलिप्यां मुद्राप्य प्रकाशितमिति सर्वे जानन्त्येव । तस्य ग्रन्थस्याद्यत्वे सुदुर्लभतामालोच्य श्रीविशिष्टाद्वैतप्रचारिणीसभानिर्वाहकाः पुनर्मुद्रणं साम्प्रतमिति मेनिरे ।

पूर्वमेवाचार्याणामिदङ्ग्रन्थमुद्रणावसरे श्रुतप्रकाशिकाभावप्रकाशिकादिषु पाठभेदादिसमीक्षणे सानुग्रहमहं तैरादिष्टः विस्तरेण परिशीलनमकरवम् । विलिख्य तत्तत्स्थलेषु पाठस्थितिराचार्याणां करकमलयोः समर्पिता । तदात्वे शीघ्रमेव ग्रन्थप्रकाशनस्योरीकृतत्वात् अवकाशस्तत्परिष्करणे नालमासीत् । पश्चाद् भविष्यतीति चाचार्यैः भूमिकायां निरदेशि । तस्याद्यावकाशः समजनि ।

अत्र संस्करणेऽस्माभिः भावप्रकाशिकागताः श्रुतप्रकाशिकापाठभेदाः, श्रीभाष्यस्था अपि क्वाचित्काः सम्प्रतिपन्नाः पाठविशेषाः तत्रतत्रान्येषु ग्रन्थेषु प्रसङ्गात् दृष्टाः समीचीनाः पाठाश्च यथासम्भवं प्रादर्शिषत । न्यायसिद्धाञ्जने, तत्त्वटीकायाम्, तत्त्वमार्तण्डे, षष्ठीदर्पणेऽन्यत्र च केचन पाठभेदा उपलब्धाः । तेषामप्यत्र सङ्कलनं कृतम् । तदात्वे "उद्यानपत्रिका" नाम्न्यां मासिकपत्रिकायां श्रीभाष्यश्रुतप्रकाशिकयोः क्वचित् क्वचित् पाठरीतिमधिकृत्य संक्षिप्ताः केचन विमर्शाः प्रस्तुताः । तेषामत्यन्तमुपयुक्तत्वात्, भाष्यनिगूढार्थपरिज्ञानौपयिकत्वात् पण्डितप्रकाण्डैस्तेषामनुमोदनाच्च तत्रतत्रायोजनमस्माभिः कृतम् । यथा—गोबलीवर्दन्यायः । गोबलीवर्दन्यायः सामान्यविशेषन्यायस्य पर्यायरूपेण लोके सर्वैरपि शास्त्रज्ञैरुपादीयते । परं तु महाभाष्यपरिशीलिनां स न्यायः प्रकारान्तरेणैव भायात् । तत्तत्त्वं विमृष्टमत्र । एवं सुबहु । अर्थव्यक्तिरीदृशविमर्शनेन भविष्यतीति धिया तादृशा अत्यन्तोपयुक्ता अत्रोपात्ताः । मद्रनगरसंस्कृतमहाकलाशालायां व्याकरणादिशास्त्रस्य, गृहे वेदान्तस्य च प्रवचनेनालब्धाधिकावकाशोऽहं इतोऽपि परिष्करणे नापारयम् । लब्धेन सन्तोष्टव्यम् ।

श्रीभाष्यश्रुतप्रकाशिके अधिकृत्यास्मदाचार्यवर्यैरेव विस्तरेणात्र दर्शनविवेकनाम्नि प्रास्ताविकेऽभ्यधायि । "व्यासोच्छिष्टं जगत् सर्वम्" इति रीत्या तैरविमृष्टोंऽशो यद्यपि न कोऽप्यस्ति । तथाऽपि तत्र तत्र जिज्ञासूनां कृतेऽत्र सुबहु इतोऽपि वक्तव्यमस्ति । यथा आदेशशब्दविषयेऽन्यत्र च । "उत तमादेशमप्राक्ष्यः" इत्यत्र आदेशशब्दः

किं कर्मणिघञन्तः? किंवा कर्तरिघञन्तः इति । अमुं विषयमधिकृत्य श्रीमद्भिः परमहंसपरिव्राजकाचार्यैः श्रीवीरराघवशठकोपयतीन्द्रमहादेशिकैः श्रीमदहोबिलमठास्थाने मूर्धाभिषिक्तैः विस्तरेण विचार्य ग्रन्थ एको निर्मितः, यस्य "आदेशमणिः" इत्याख्या । तैरारचितानां श्रीभाष्यानुबन्धिनां विचारभरितग्रन्थानामस्माभिः पृथक् मुद्रणं कृतम्— "वादतरङ्गिणी" इत्याख्यया । तत्र ते विषया अवगन्तव्याः । शब्दसौष्ठवविषये भाष्यगतविशेषार्थपरिज्ञाने च साहाय्यमाचरन्तो बहवो ग्रन्था विद्यन्ते । तेषामचिरेणैव प्रकाशोऽस्माभिश्चिकीर्षितः ।

श्रीभाष्य - श्रुतप्रकाशिका - भावप्रकाशिकानां त्रयाणां मुद्रणं चिकीर्षितमासीत् । श्रुतप्रकाशिकाव्याख्यायाः उपनिषद्भाष्यकारैः श्रीमद्भिः परमहंसपरिव्राजकाचार्यैः चतुष्षष्टिप्रबन्धनिर्माणालङ्कर्मीणैः श्रीरङ्गरामानुजमुनिभिरारचितायाः भावप्रकाशिकाया अभावे नूनं श्रुतप्रकाशिकाया अर्थाधिगमो विदुषामपि दुश्शकः । परं तु तस्यापि सहैव मुद्रणे भूयान् कालोऽपेक्षितः । द्रव्यसंविधानं तु वाचामगोचरम् । प्रतीक्ष्यते च तादृशः कालः—येन श्रीभाष्य-श्रुतप्रकाशिका-भावप्रकाशिकाः प्रतिपुटं प्रस्फुटमध्ययनसौकर्याय मुद्राप्यमाणाः स्युः, येन च पण्डितकुलमाराधितं भविष्यति इति । भवतु । स्थितस्य संरक्षणं कृतमित्याश्वासः कार्यः । धनिकाः सिद्धान्तप्रचारबद्धादराः शास्त्रव्यसनिनः उद्युञ्जानाः अद्यत्वे विरलाः । तैः साधनीयोऽयं क्रमः । आशास्महे—स भगवान् अचिरेणैव ईदृशरीत्या अखिलानपि विशिष्टाद्वैतशास्त्रग्रन्थान् प्रकाशयिष्यतीति ।

श्रीभाष्यस्य बहुधा मुद्रणेऽपि सम्पूर्णायाः श्रुतप्रकाशिकायाः मुद्रणं अस्मदाचार्यवर्यैरेव देवनागरीलिप्यां निर्वर्तितम् । प्रप्रथमं श्रीबृन्दावने षट्सु सम्पुटेषु श्रीभाष्य-श्रुतप्रकाशिका-भावप्रकाशिकाः देवनागर्यां अशीतिसंवत्सरेभ्यः पूर्वं मुद्रिताः । तेऽद्य न कुत्रापि सुलभाः । तत्रापि प्रथमसम्पुटे भावप्रकाशिका नास्ति । तत्त्वटीका यावदुपलम्भं प्रकाशिता तैस्तत्र प्रथमसम्पुटे । अतिगहनस्य परमतप्रक्रियाविमर्शनात्मकस्य महासिद्धान्तभागस्य भावप्रकाशिका तत्र नास्ति । काश्यां "पण्डित" पत्रिकायां श्रुतप्रकाशिकासहित श्रीभाष्यं शतसंवत्सरात् पूर्वं मुद्रितम् । दाक्षिणात्यलिपिभिरान्ध्रग्रन्थात्मकैः मुद्रितान् कोशान् निरीक्ष्य तस्य मुद्रणस्य निर्वर्तितत्वात् प्रतिपङ्क्ति शोधनिका तत्रापेक्ष्यते । "पण्डित" पत्रिकासंस्करणम्, "बृन्दावन" संस्करणमित्येतदुभयं अत्र संस्करणेऽस्माभिरान्तमवलोकितम् । महाशूरनगरे श्रीब्रह्मतन्त्रपरकालमठास्थान्यां मूर्धाभिषिक्तैः श्रीपरमहंसपरिव्राजकाचार्यैः श्रीमदभिनवरङ्गनाथब्रह्मतन्त्रपरकालमहादेशिकैः कृतेन स्वोपज्ञगूढार्थसङ्ग्रहनामकविस्तृतव्याख्यानेन सह श्रुतप्रकाशिका चमसाधिकरणपर्यन्तं मुद्रिता । यतस्तावत्पर्यन्तमेव तेषां गूढार्थसंग्रहः समस्ति । तदुपरि श्रुतप्रकाशिकायाः श्रीभाष्यस्य वा तैर्मुद्रणं न कृतम् ।

एतत् सर्वं समीक्ष्यैव अस्मन्न्यायमीमांसावेदान्ताचार्यैः श्रीमद्भिः अभिनव-देशिकैः अतीते गणरात्रे ग्रन्थस्यास्य सुपरिष्कृतं मुद्रणमुपक्रान्तं यस्य फलमद्य विद्वत्कर-कमलयोरिदं संस्करणं समर्प्यते ।

नयप्रकाशिकादिषु उपत्रिंशेषु श्रीभाष्यव्याख्यानेषु प्राचीनेषु सत्स्वपि "गुरु-भ्योऽर्थः श्रुतः, शब्दैस्तत्प्रयुक्तैश्च योजितः । सौकर्याय बुभुत्सूनां संकलय्य प्रकाश्यते ॥" इति श्रीसुदर्शनभट्टारकैः स्वकीयायाः श्रुतप्रकाशिकायाः नामनिर्वचनपूर्वकं गुरुभ्योऽधि-गतत्वं ज्ञापयत् इदं ग्रन्थरत्नमेव सर्वतः प्रामुख्यमावहति इति विदितं विदितवेदित-व्यानाम् । सेयं श्रुतप्रकाशिका श्रीमन्निगमान्तगुरुभिः "व्यासार्यैः न्यासि च द्विः श्रुत-मिति" इति सश्लाघं निर्दिष्टा, "श्रुतप्रकाशिका भूमौ येनादौ परिरक्षिता" इति श्रीकुमारवरदाचार्योक्तरीत्या परिरक्षिता च । रक्षणं च गोपन-प्रवचन-प्रचारण-व्याख्या-विलेखन-मुद्रण-परिष्करण-तदुपर्याक्षेपदूरीकरणादिकमेव । एषु एकैकं कैश्चित् कृतम् । अस्मदाचार्यैस्तु सर्वमपि सुष्ठु निर्वर्तितम् ।

श्रीभगवद्रामानुजार्यदिव्याज्ञात्वेन सम्प्रदायग्रन्थेषु निर्दिष्टेषु पञ्चविधेषु प्रप-न्नानुष्ठेयेषु धर्मेषु अभ्यर्हितत्वेन प्राथम्यमुपगतस्य "श्रीभाष्यमधीत्य प्रवर्तनम्" इत्यस्य जरामर्यत्वेन स्वीकारोऽस्मदाचार्यैः कृतः । यदाप्रभृति मद्रनगरमधितिष्ठमानास्ते आसन्, तदाप्रभृति "आध्यात्मग्रन्थनिर्माणमन्येषां चावबोधनम्" इति श्रीयामुनार्यसूक्ति-सार्थक्यमकुर्वन् ।

सत्सम्प्रदायग्रन्थसंरक्षणदीक्षया मध्यसर्वकारैराद्रियमाणेषु बहुषु प्रकारेषु चिरन्तनसुदुर्लभावश्यकसर्वसम्मतग्रन्थप्रकाशनमन्यतमम् । तदर्थं सुविधा बह्वचस्तैरा-दृताः । तत्रास्मद्भाग्यवशात् श्रुतप्रकाशिकाप्रकाशितस्य यतिक्ष्माभृद्दीपस्याद्य जाज्व-ल्यमानता लब्धा । तदर्थं केन्द्रीयसर्वकाराः सप्रश्रयं धन्यवादार्हाः । ईदृशविशिष्ट-ग्रन्थमुद्रापणप्रचरादिबद्धादराः श्रमसाध्येऽस्मिन् कर्मणि मां नियुक्तवन्तः श्रीविशि-ष्टाद्वैतप्रचारिणीसभानिर्वाहकाः, विशिष्य तत्कार्यदर्शिनः श्रीमन्तः कुमारवाडि. S वरदाचार्याश्च श्लाघास्पदम् । वर्धतां शास्त्रसम्पत् ॥

१७-३-१९८९,
विभवपुनर्वसुः
श्रीदेशिकविद्याभवनम्
२७, वेङ्कटेशाग्रहारः
महिलापुरी, मद्रास् – ६०० ००४

इत्थं विद्वद्विधेयः पैयम्बाडि चेट्टलूर्.
**वा. श्रीवत्साङ्काचार्यः**

॥ श्रीः ॥

# दर्शनविवेकः

प्रत्यक्षेण यथा तथा प्रबलया युक्त्या प्रकृष्टागमैः
दृष्टस्य स्फुटदर्शकं भवति यत् तत् दर्शनं विश्रुतम् ।
पाराशर्यमहर्ष्युपज्ञमनघं शारीरकं तत् पुनः
श्रीमल्लक्ष्मणयोगिदर्शितयथाभूतार्थमालक्ष्यते ॥

## वेदान्तोपनिषत्पदार्थः

वेदे कर्मकाण्ड-ज्ञानकाण्डात्मना द्वेधा विभक्ते द्वितीया विधा वेदान्तः, उपनिषत् । वेदस्यान्ते वर्तमानत्वाद्वेदान्तः । तथा वेदार्थनिर्णयोपयोगित्वादपि ; अन्तोऽवसानं संशयापगमो निर्णय इति । वेदान्तव्युत्पत्तिमलब्धवता च पूर्वकाण्डार्थोऽपि दुर्ग्रहः । किन्देवतोद्देशेन कर्माणि प्रवृत्तानि, किञ्च कर्मणां मुख्यं लक्ष्यमिति वेदान्तत एव विज्ञेयम् । सुसूक्ष्मं तत्त्वं सुबहु परिश्रम्य गृहीतमेव स्थेम्ने कल्पत इति धर्मादनन्तरं वेदे तत्त्वोपदेशः । अत एव खल्वारुणिर्गौतमः स्वात्मजं श्वेतकेतुं स्वयमनध्याप्य अन्यत्र प्रेष्य सर्वज्ञे तस्मिन् प्रतिनिवृत्ते तस्याप्यज्ञानमुद्भाव्य तस्मिन ज्ञातुं त्वरमाणे उपदिदेश, यस्मिन् ज्ञाते सर्वमिदं ज्ञातं भवति, यद्विद्या सर्वविद्या प्रतिष्ठा, तत् तत्त्वं परमं रहस्यम् । अतो यदुपरि वेदनीयं किमपि नावशिष्यते, तत् वेदान्तेन वेद्यत इति ॥ अथ कस्मादुपनिषत् ? उप = समीपे, निषद्य = उपविश्य, शिष्येणाचार्यात् गृह्यमाणत्वादुपनिषदिति केचित् । सर्वस्यापि वेदस्य विद्यास्थानस्य चेदमविशिष्टम् । अथापि परमरहस्यत्वाद्वेदान्त एवात्यन्तसमीपे उपविश्य अन्तेवासिना गृह्यत इत्याशयो वाच्यः । शांकरोपनिषद्भाष्ये च षद्‌लृ विशरणगत्यवसादनेष्विति विशरणार्थकोऽयं धातुः उपनिपूर्वः निश्शेषतापत्रयविशरणं ज्ञानं तत्संपादकतया वेदभागश्च वक्तीत्यभाषि । अत्र प्राचीनः सांप्रदायिकोऽर्थः श्रुतप्रकाशिकायामेवं दर्शितः—" ब्रह्मण्युपनिषण्णेत्युपनिषत् । 'उपनिषण्णत्वाद्वा उपनिषत्' इति हि वाक्यम् । 'गहने हीयं विद्या सन्निविष्टा' इति तद्विषयं द्रमिडभाष्यम् । 'गहने ब्रह्मण्युपनिषण्णे'ति भाष्यविषया वामनटीका । अद्वारकभगवत्प्रतिपादकत्वमुपनिषण्णत्वम् " इति । वाक्यं नाम च्छान्दोग्यव्याख्यानरूपो ब्रह्मनन्दिकृतो ग्रन्थः । " यं वाकेष्वनुवाकेषु निषत्सूपनिषत्सु च । गृणन्ति सत्यकर्माणम् " इति च महाभारतवचनम् । अत्र 'वाकेषु = मन्त्रेषु, अनुवाकेषु = तदर्थदर्शिषु ब्राह्मणेषु, निषत्सु = देवताप्रतिपादकभागेषु, तथोपनिषत्सु च इत्यर्थः' इत्याहुः । स हि सत्यकर्मा सर्वकर्मसमाराध्यः सृष्टिस्थितिसंहारनित्यविभूतिविहारावतारादिसत्यक्रियः परमपुरुषः । निषत्पदाभिधेयो देवतान्तरप्रतिपादकभागोऽपि तद्विषये निषत् ;

वेदान्तस्तूपनिषदिति इतोऽवगमात् उपेत्येतत् अद्वारकभगवत्प्रतिपादकत्वाभिप्रायेण प्रयुक्तमिति ज्ञायते। (अनेन सत्यकर्मपदेन उपनिषदां सगुणब्रह्मपरत्वं प्रपञ्चसत्यत्वञ्च स्पष्टम्।) निषीदत्यस्यां देवतेति निषदिति केचिद्व्युत्पादयन्ति। द्रमिडभाष्याद्यानुसारे तु निषीदतीयं देवतायामिति व्युत्पत्तिर्युक्ता। अर्थे शब्दस्य वृत्तिश्च प्रसिद्धा। अत्र सत्यकर्माणमित्यस्य स्थाने 'सत्यधर्माणः' इत्येव पाठ इति पाञ्चरात्राधिकरणश्रुतप्रकाशिकातो ज्ञातव्यम्। तथा तत्र ग्रन्थे न्यायपरिशुद्धौ चैकायनश्रुतिविषयमिदं वचनं निरदेशि। अस्तु निषत्पदं यत्किञ्चिदर्थकम्। सर्वथा उपनिषत्पदमन्ततः श्रुतप्रकाशिकादर्शितेऽर्थे वर्तते। प्रयुज्यते चोपनिषत्पदं रहस्यार्थे, 'एषा वेदोपनिषत्', 'तस्योपनिषदहरिति' इत्यादौ।

तत्र भगवान् बादरायणः पाराशर्यः कृष्णद्वैपायनो व्यासः शारीरकं नाम ब्रह्मसूत्रापरनामधेयमध्यात्मज्ञानसंपिपादयिषया वेदान्तवाक्यार्थविचारात्मकं प्रणीय ततः परतत्त्वहितपुरुषार्थप्रतिबोधः प्रतिष्ठास्यतीति विस्रब्ध आसीत्। दैवासुरसर्गयोरनादितया पुरुषबुद्धिवैचित्र्येण परश्शतेषु मतेषु प्रादुर्भवत्स्वपि प्रजासु प्रतायमानानि मतानि परिमितान्येव भवन्ति। तानि वेदबाह्यानि आभ्यन्तराणि चेति द्विविधानि विशिष्य गृहीत्वा अवश्यस्वीकार्यात् सर्वप्रमाणसामरस्यभूमेरेकस्मादन्यत्र मतेषु प्रतिष्ठितान् दोषानप्युद्घाट्य वेदान्तार्थनिर्णये विधीयमाने कथं बहुमतप्रचारावकाश इत्यभिसंदधे।

अत एव सांख्ययोगतर्कमतानि शिष्टजनगोष्ठीनिविष्टानि, बौद्धजैनपाशुपतानि च बाह्यानि प्रयत्नेन प्रदूष्य तद्वैलक्षण्यं वेदान्तसिद्धान्तस्य व्युदपीपदत्। परं परिगृहीतवेदान्ता एव ये केचित् तर्कप्राधन्यमवधूय वाक्यार्थसामञ्जस्योपयोगितर्कमात्रमादृत्य, 'आर्षं धर्मोपदेशञ्च वेदशास्त्राविरोधिना। यस्तर्केणानुसंधत्ते स धर्मं वेद नेतरः' इत्युक्तरीत्या वाक्यार्थमीमांसार्थन्यायबलाबलदत्तदृष्टय एव सन्तोऽपि परस्परं बुद्धिस्फुरणवैचित्र्येण विवदन्ते, तेषां परमास्तिकमीमांसकानामपि परस्परविरोधिनो व्याहाराः न कार्त्स्न्येन प्रामाणिका भवितुमर्हन्ति। अतो निष्कृष्टमेकं विना सर्वमन्यत् परमास्तिकविकल्पितमपि, "या वेदबाह्याः स्मृतयो याश्च काश्च कुदृष्टयः। सर्वास्ता निष्फलाः प्रेत्य तमोनिष्ठा हि ताः स्मृताः" इत्युक्तकुदृष्टिपक्षनिक्षेपमेवार्हतीत्याकलय्य तत्परिहारेऽपि प्रयत्नं यथार्हं चकारेत्येव शारीरकदर्शने वक्तव्यं भवति।

स हि महात्मा स्वयमुपनिषदर्थनिर्धारणे निष्ठां गरिष्ठां वहन् बहून् महर्षीन् परमास्तिकान् संमेलय्य परिषदं विधाय निष्कृष्टव्यमित्यप्यध्यवस्यति स्मेति साम्प्रतं तर्कितुम्, यतः शारीरके तत्र तत्र बादरि-जैमिनि-औडुलोमि-कार्ष्णाजिनि-काशकृत्स्न-आश्मरथ्यादीनामाशयमन्योन्यविरुद्धमाविष्कृत्य अन्ते एकतमं पक्षमाद्रियत। परिषन्निविष्टेषु परे महर्षयो नाम्ना न निरदिश्यन्त, यतस्तैर्न कश्चिदंशो विवादपदमानीयत। ततस्तैस्तत्त्वमभ्युपगतवद्भिर्भाव्यम्। एवमुपनिषदर्थविचारमुपक्रममाणो विचारस्यास्य विशेषतः फलं नेति मन्वाना अपि किं सन्ति नेति निरीक्ष्य नूनं जैमिनिमेव कर्मकाण्डनिष्णातं तत्र प्रत्यवतिष्ठमानं प्रैक्षत। तस्य तावद् वादः तादात्विको व्यासेन शारीरकतृतीयतुरीये प्राप्ते कर्मावसरे प्रादर्शि। स एवम्—

महता प्रयत्नेन वेदैर्विस्तरेण विहितानि इष्टिपशुसोमात्मकानि कर्माणि यस्मिन् आश्रमे स्थित्वा सम्यगनुष्ठेयानि, स गार्हस्थ्याश्रम एव श्लाघ्यतरः। ब्रह्मचर्यमेतस्यैव पूर्वरङ्गम्। वानप्रस्थाश्रमो न वनस्थतामात्रेण भवति। वनवासिनां विशिष्टानामृषीणां प्राचुर्येण 'गार्हस्थ्यस्यैव प्रत्यक्षमुपलम्भात्। अनुष्ठानाशक्ति-पुत्रादिसद्भावस्थानासौकर्यादिहेतोः तपोऽप्यग्राणां केषां चित् कामं स आश्रमः स्यात्। संन्यासस्तु सर्वथोपेक्ष्यः। सर्वथैवाशक्ताः दारप्रसक्तिदूराः सञ्चारक्षमा मौनिनः केचिदनाश्रमित्वदोषात् कथञ्चित् संन्यासाश्रमस्वीकारेण वार्येरन् न वा। एवं गार्हस्थ्ये कर्मानुष्ठाननैर्भर्ये वेदाभिमते विमृश्यमाने तदर्थमपेक्षितं वैदुष्यं कियद्दूरमवर्जनीयमिति चिन्तायाम्—न ह्यविद्वानधिकृतोऽस्तीति न्यायेनानुष्ठेयार्थवैशद्यं श्रेयसे भूयसे कल्पते इति संप्रतिपन्नमेतत्।

तत्राराध्यानां देवतानां ज्ञाने किञ्चिद्वक्तव्यमस्ति—तत्तद्देवताया विग्रहायुधपरिजन परिच्छदादिकं विशेषत इतिहासपुराणादिकं साकल्येन परिशीलितवतोऽपि दुरवधरम्। तज्ज्ञानावश्यकत्वे च तत्तद्विधिसमीप एव तद्ध्यानविधिप्रकारोऽपि व्युत्पादितः स्यात्। अनुष्ठेयार्थवैशद्यमात्रमनुष्ठातुरपेक्षितमिति मन्वानो वेदो वात्सल्यातिशयेन अज्ञाभिज्ञसाधारण्येनानुग्रहमिच्छन् तद्विवेचने उदास्ते। यथा खलु देहातिरिक्तमात्मानमनवबुध्य राजादिशरीरे सादरमुपचर्यमाणे तदन्तरो जीवात्मा तुष्यति, यथा च कञ्चुकोपरि माल्यनिक्षेपेऽपि स्वशरीरं स्वमेव वा तेन बहुमतं सत्कार्यों मन्यते, तथा देवताऽपि यथाविधि स्वरवर्णश्लेषमन्तरेण स्वनाम समुच्चार्य कर्मणि क्रियमाणे स्वयं तुष्यति। भगवद्गीतासु च, 'यो यो यां यां तनुं भक्तः श्रद्धयार्चितुमिच्छति' इति सर्वसमाराध्यपरतत्त्वज्ञानविकलानामपि परतत्त्वमवरतत्त्वमुखेनानुग्रहमादधातीति गदितमिहानुसंधानमर्हति। यथा स परः, तथैवावरदेवा अप्यात्मविषयज्ञानविरहिणमप्यनुष्ठातारमनुगृह्णन्तीति तत्त्वस्थितिः। अन्यथा असंपूर्णज्ञाना अलब्धफला एवेति पक्षे परिगृह्यमाणे प्रजाः सर्वाः, अप्यास्तिकप्रजाः प्रयासमात्रफलाः परितप्येरन्।

अत एव-विधिवाक्ये प्रयुक्तो देवताशब्दश्चतुर्थ्यन्तो निर्देष्टव्यः; तदर्थो यादृशस्तादृशो भवत्विति वादेऽपि न कापि हानिरिति नात्र तत्त्वशोधने प्रयासः कार्यः। यथैवम्; तथा कर्तारः स्वात्मस्वरूपमप्यजानाना एवानुष्ठाय फलं लभेरन्निति प्रतिपत्तव्यम्। अत एव श्रूयते, 'योऽहमस्मि स सन् यजे' इति। यथा खलु देहातिरिक्त एव सन् लौकिकानां सुखानां भाजनं भवन्नपि स्वयं स्वं तथाभूतमनवबुध्य देहमेवात्मानं मत्वैव सर्वं कुर्वन्नपि न मात्रयापि सुखेन हीयते, तथैवामुष्मिकं फलमधिकृत्य प्रयस्यन्नपि स्वात्मस्वरूपं यथावदविज्ञायानुतिष्ठन् अवश्यं फलं लभेतैव। यदिपरं सः, देहातिरिक्त एवायमात्मेति ज्ञानवान् भवितुमर्हति। अपरधा देह एवात्मा कर्ता भोक्ता चेत् मन्येत, तस्यावसाने भस्मसाद्भावात् आत्मानमामुष्मिकफलभोक्तृत्वेन नाध्यवस्येदिति न तत्र प्रवर्तेत। एतावच्च देहात्मविवेकरूपं ज्ञानं लौकिकसुखदुःखव्यवस्थादिवैचित्र्यदिहेतुविवेकव्यासक्तानां लौकिकानां तथा सांख्यतर्कादिशास्त्रान्तरपरिचयशालिनाम्, एवं 'यजेत स्वर्गकाम' इत्यादिकर्मकाण्ड तात्पर्यपरिशीलिनामपि सुलभम्।

अ॰: स्वात्मतत्त्व - देवतातत्त्व - परमात्मयाथात्म्यज्ञानवैधुर्येऽपि सर्वकर्मानुष्ठानसंभवात् कर्मप्रभावत एव सर्वस्मिन्नपि पुरुषार्थे संपत्स्यमाने उपनिषदर्थपरिज्ञानप्रयासः किमर्थः। यदा तु विधिवाक्यसंनिकृष्टानां तदेकवाक्यतापन्नत्वेन सर्वस्वीकृतानामर्थवादानामपि प्रतिपद-

व्युत्पत्तिविरहेऽपि सामान्यतः प्राशस्त्यसमर्पणप्रवृत्ता एते इत्येतन्निष्कर्षमात्रं कर्मानुष्ठानायालम्, तदा का कथा दूरस्थौपनिषदवाक्यप्रत्येकार्थवैशद्यलाभापेक्षणस्य। योऽपि कश्चित् आत्मतत्त्वमुपनिषत्तो यथावदधिगच्छेत्—सोऽपि तमधिगममनुष्ठेयकर्माङ्गमेव मन्तुमर्हति। अतोऽङ्गिभूतकर्मानुष्ठानमेवात्मनः सर्वस्मै श्रेयसे कल्पत इति किमुपनिषद्विशेषविचारेणेति।—

प्रत्यवस्थानमिदं प्रतिविहितवतो बादरायणस्याशयस्तावत्—सत्यं संपूर्णज्ञाने सत्येव फलिष्यति कर्मेति न नियमः। ज्ञानतारतम्यमनुविधत्ते फलतारतम्यम्। देवतातत्त्वविचारे क्रियमाणमौदासीन्यं क्रमेण तथा विपरीतबुद्धिं वर्धयति, यथा—कथं क्षणभङ्गिकर्मजातं कालान्तरे फलं जनयितुं पारयतीत्येवं प्रश्ने समापतिते, साक्षादपारयदपि कर्म अपूर्वमुत्पाद्य तद्द्वारा पारयिष्यतीति अश्रुतापूर्वपरिकल्पने प्रयस्येत्; प्रत्यक्षश्रुतिभिरर्थवादादिरूपाभिरभिहितमपि देवताप्रीतिरूपं द्वारं न गृह्णीयात्। राजसेवकन्यायेन देवसेवकैर्विनैवापूर्वं सेव्यदेवताप्रसादादेव फले सुलभे किमित्यदृष्टस्यादृष्टस्य कल्पनेन। अपि च यद्युपनिषदः इष्टिकर्तृणामात्मस्वरूपमेव विशदयितुं प्रवृत्ता इति स्यात्-स्यादपि न तासामवश्यविचार्यतेति। ततोऽधिकं सर्वजगत्सृष्टिस्थितिलयनिर्वाहकं सर्वफलप्रदं मुमुक्षूपास्यं मुक्तभोग्यं सर्वदेवातिशायिनं पुरुषोत्तमं प्रतिपादयन्त्यस्तु कर्मणामप्यत एव फलम् कर्माङ्गकोपासनविशेषाख्यमानसकर्मण एव मोक्षञ्च वदन्त्यः तत्र प्रवर्तमानस्य भोक्ष्यमाणस्य स्वात्मनः स्वरूपमपि तत्र मोक्षे प्रवृत्त्युत्तम्भनायानुसंधेयमुपदिशन्तीति कथं न विचारणीयाः। एवमिमाः अधिकमुपदिशन्ति न वेति विज्ञानाय वाऽन्ततो विचार्या एव भवन्ति। अत एव कर्मकाण्डावसितादतिशयितस्योपायस्य फलस्य च सद्भावात् तदर्थे प्रयतमानानां मध्ये ये तावदेतदुपायफलप्राप्तिविरोधमेव स्वस्य गार्हस्थ्ये पश्यन्ति, विचित्रबुद्धिकत्वात् प्रजानां कुटुम्बे सर्वत्र सर्वेषामानुकूल्यमेवेत्यस्याशक्यावधारणत्वात्—ते 'कुटुम्बे शुचौ स्वाध्यायमधीयानः' इत्युक्तशुचित्वाध्ययनाद्यर्हत्वादिवैकल्यदर्शिनः, किं प्रजया करिष्याम इति विरज्य सर्वप्रकारैषणातो व्युत्थाय भिक्षाचर्यं चरन्तः परमपुरुषार्थं प्रतिपत्तुमीहन्त इति, न युक्तं कर्मप्राधान्यं वा संन्यासस्याप्रामाणिकत्वं वाऽभ्यूहितुमिति। इममंशं यथावज्जैमिनिं ग्राहयित्वा सम्यगुपसन्नाय तस्मै स्वाभिमतवेदवेदान्तार्थमुपदिश्य तन्मुखेनैव कर्मकाण्डमीमांसामारचय्य स्वयं शारीरकमात्रमरचत्। प्रारम्भ एवौत्पत्तिकसूत्रे गौरवेण बादरायणं निर्दिशन् जैमिनिर्न तद्विरुद्धमर्थं स्वग्रन्थे दर्शितवान् स्यात्। अत एव जैमिनेर्वेदान्तविज्ञानं पदे पदे गौरवेण शारीरके दर्शयन् बादरायणः महामीमांसकेन जैमिनिनाऽपि विचारप्राक्कालिकोऽन्यादृशाभिमानोऽत्यन्तं परित्यक्त इति नाल्पज्ञैरत्र विशयानैर्भाव्यमिति ज्ञापयितुमेव शारीरके तत्रतत्र जैमिनीयं पूर्वदशास्थितमाशयं परिहार्यत्वेन प्रास्तौषीत्।

अथोपनिषदां विचारे वर्तनीये निश्चिते यदत्र मुख्यप्रतिपाद्यं तज्जिज्ञासैव प्रतिज्ञातव्येत्यवधार्य ब्रह्मोपासनमपि प्रधानमनाकलय्य ब्रह्मैव प्राधान्येन निरदिक्षत्। तेनोपासनस्य व्याजमात्रत्वं ब्रह्मण एव प्रधानोपायत्वञ्च ज्ञापयति। ब्रह्मज्ञानेन जीवानां यथावस्थितस्वरूपप्राप्तिरूपो मोक्ष इत्येतावत् सर्वमहर्षिसंप्रतिपन्नम्। कीदृशं ब्रह्म, किं वा जीवयाथात्म्यम्, किं तत् ब्रह्मस्वरूपादनन्यत् अन्यद्वेति तु विचार्यमासीत्। तत्र—ब्रह्मणः सत्यं ज्ञानमनन्तं ब्रह्मेति निर्देशदर्शनेन सत्यत्वादेरेव ब्रह्मलक्षणत्वाभ्युपगमे जीवब्रह्मभेदो नावधारितः स्यात्। अत एव श्रुतिरपि यतोवाइमानि भूतानीति सर्वजीवकारणत्वमेव लक्षणत्वेन

निर्दिशति ; कारणं तु ध्येय इति कारणवस्तुज्ञानादेवामृतत्वमुपदिशतीत्यादि मनसिकृत्य जन्माद्यस्य यतः इति जगत्कारणत्वमेव ब्रह्मलक्षणमसूत्रयत् । कारणत्वं यैर्गुणैर्विना न शक्यमुपपादयितुम् , ते सर्वज्ञत्वसर्वशक्तित्वादयोऽपि तल्लक्षणकथनेनैवोक्ता भवन्तीति तदाशयः । अत एव, 'ब्राह्मेण जैमिनिरुपन्यासादिभ्यः इति सूत्रे ब्राह्मपदेन अपहतपाप्मत्वादि सत्यसंकल्पत्वान्तमिव सर्वज्ञत्वं सर्वेश्वरत्वञ्च शांकरभाष्यं ग्राहयति । ब्राह्मापेक्षया चिन्मात्रताया अन्यत्वेनोपरि सूत्रणात् ज्ञानस्वरूपत्वमात्रं ब्राह्मपदमुख्यार्थो न भवतीति सुस्पष्टम् । अत एव सत्यकामत्वसत्यसंकल्पत्वादेः सत्यत्वात् मुक्तिकालिकत्वात् जगन्मिथ्यात्वमप्यनार्षम् ।

एवं सत्यपि ईदृशब्रह्मैक्यं जीवस्य भवति न वेति विवादो महर्षीणामेवासीत् । अत एव वाक्यान्वयादित्यधिकरणे मैत्रेयीब्राह्मणं जीवात्मपरं परमात्मपरं वेति विचारयन् बादरायणः, यदि जीवो नात्र विवक्षितः, कथं तर्हि जीवस्यादिमध्यावसानेषु प्रस्तावः जीवब्रह्मैक्यनिर्देशश्चेति शंकां परिहर्तुं महर्षिमतत्रयमुपन्यस्यति, 'प्रतिज्ञासिद्धेर्लिङ्गमाश्मरथ्यः', 'उत्क्रमिष्यत एवम्भावादित्यौडुलोमिः', 'अवस्थितेरिति काशकृत्स्नः' इति । तत्रैकविज्ञानेन सर्वविज्ञानप्रतिज्ञानिर्वाहाय प्राक्परमात्मभूतस्य पश्चाज्जीवरूपेण भाव इति पूर्वमेव जीवब्रह्मैक्यमाश्मरथ्यमतम् । अनादितया पार्थक्येनैव स्थितस्य जीवस्य ब्रह्मणैक्यं मुक्तौ भविष्यतीति तदाशयेनैक्यव्यपदेश इति औडुलोमिमतम् । एवदुभयविलक्षणं काशकृत्स्नमतम् । तत् किमित्यत्राद्वैतिविशिष्टाद्वैतिनोरस्ति निर्वाहभेदः । तत्र कालभेदं विना सार्वकालिकमैक्यमिति शांकरम् , जीवे ब्रह्मणोऽवस्थितिमात्रेणैक्यवादात् सार्वकालिको भेद इति विशिष्टाद्वैतिपक्षः । अत्राश्मरथ्यपक्षः उपेक्ष्यते, अचेतनप्रपञ्चस्येव जीवस्य पृथगुत्पत्त्यभावात् । जीवानादित्वानंगीकारे अकृताभ्यागमकृतविप्रणाशादिदोषप्रसंगाच्च पूर्वमभिन्नस्य पश्चात् कार्यात्मना जनिरिति न युक्तमिति । औडुलोमिसंमतं पश्चात्तनमैक्यमपि कीदृशमिति विचारे—चतुर्थाध्याये स्थितम् चितितन्मात्रेण तदात्मकत्वादित्यौडुलोमिरिति सूत्रमुपतिष्ठते । तत्र चिन्मात्रतया सर्वभेदप्रहाणेनैक्यमिति व्याख्यातम् । तत्र मोक्षे जैमिन्युक्तब्राह्मसर्वाकारसद्भावेऽपि श्रौतं चिन्मात्रत्वमविरुद्धमिति बादरायणाशयः । तमाशयमाविष्कुर्वदिव शांकरं शोधने क्रियमाणे औडुलोमिपक्ष एवात्मानं निक्षिपति । परं तु तदैक्यमिदानीमप्यस्त्येवेति शांकराशयः । एवं तर्हि मुक्तौ विशेषप्रतिपादकतत्रत्यसूत्रविरोध इति तावदास्ताम् ; प्रकृतवाक्यान्वयाधिकरणविचार एव कथमिति च विचार्यम् । उभयोः सर्वदैवैक्ये जीवो वा परो वाऽत्र प्रतिपाद्यत इति किमर्थं विचारः ।

सूत्रकारेण प्रथमाध्याये प्रायेण जीवपरत्वपूर्वपक्षः परमात्मपरत्वसिद्धान्तश्च क्रियते । वस्तुत उभयैक्ये एवं विकल्प एव कथमिति शंका भवति । एषा कदाचिदेवं परिह्रियेत—एकस्यैवावस्थाद्वयम् ; तत्र कीदृशावस्थापन्नः प्रकृतवाक्यार्थ इति विचार्यते । तत्फलञ्च परमात्मावस्थाया उच्यमानत्वे तथाभूतोपासनात् फलप्राप्तौ वाक्यस्य तात्पर्यमिति ॥ सत्यम् । उपासनपरतया निर्वाहो यत्र, तत्र स विचारः स्यात् समञ्जसः । या तु न सगुणविद्या, किं तु निर्गुणविद्या । तत्र परमात्मपरत्वस्थापनं किमर्थम् । प्रत्युत

कारणत्व-तदौपयिकगुणगणविशिष्टनिरूपणं निर्विशेषत्वनिरोधि स्यात्। जीवपरत्वे वा परमात्मपरत्वे वा विशेषणानां त्यागेन शुद्धात्मनि पर्यवसानस्यैवामृतत्वहेतुत्वाय विवक्षणीत्यतया जीवपरमात्मविकल्प इहानावश्यक एव। सांख्यसंमतजीवपरत्वं नेष्टमिति चेत्—को दोषः। सोऽपि प्रकृतिवियुक्त जीवज्ञानं मोक्षायेत्येव वाक्यार्थमाह। तदुभयत्राविशिष्टम्! किञ्च तथा सति अनेकात्मवादिसंमततत्तदात्मस्वरूपनिरूपणम्, उत सर्वव्याप्येकात्मपक्षावलम्बनमिति विचार्यताम्। किं जीवो वा परमात्मा वेति विचारेण। तत्रैव तात्पर्यमिति चेत्—तर्हि सर्वात्मैक्यपक्षेण विचारे जीवपरैक्यवर्णनं कथमिति शंका कथमवतरति। आनन्दमयाधिकरणमारभ्य प्रायेण जीवो वा परो वेति विचारमेवोपक्षिप्य जीवपरभेदस्यैव नैर्भर्येण स्थापनात् अत्राप्येवं भेदे वर्ण्यमाने हि जीवेन सहैकीकृत्य व्यवहारः कथं निरुह्यत इति हि शंका समञ्जसा स्यात्। तदा च सुस्पष्टस्थापितजीवपरभेदाविरोधेन तन्निर्वाहस्यैव कार्यतया कथञ्चिदैक्यवादिमहर्षिपक्षमप्यतिक्रम्य शाश्वतभेदसंमत्यैवैक्यव्यवहारं सूत्रकृत् निर्वहतीति ज्ञायत इति अवस्थितेरिति पदं जीवे ब्रह्मणोऽवस्थितेरित्यर्थकमेव युक्तम्। स्वरसश्च; यथा, अनवस्थितेरसंभवाच्चेति सूत्रे।

एवमेव निर्गुणविद्यावाक्यमादाय जीवो वा परो वेति विचारोऽनेकत्र कृतोऽनावश्यक एव भवति। अङ्गुष्ठमात्रः पुरुषो मध्य आत्मनि तिष्ठति ईशानो भूतभव्यस्येत्यत्र निर्गुणपरत्वं यदीष्टम्, तर्हि अङ्गुष्ठमात्रपदेन जीवं ईशान इति तद्गतगुणञ्चोक्त्वा वा निर्गुणलक्षणा स्वीक्रियताम्, परमेवोभयत्र गृहीत्वा वा; कोऽत्र विशेषः। दहराधिकरणे जीवः परो वेति विचारितम्। तत् युक्तम् अपहतपाप्मत्वविशिष्टदहरोपासनेन सर्वलोककामचारस्य प्राप्यतया उपासनकाले तद्गुणविशिष्टः पर एवेति तदुपासनस्य निरूप्यत्वात्। तत्रापि त्विदं वक्तव्यम्—कामादीति सूत्रे वाजिच्छान्दोग्यदहरविद्यावाक्यद्वयं गृहीत्वा परस्परगुणोपसंहार उक्तः। तत्र छान्दोग्यविद्या सगुणविद्या, वाजिविद्या निर्गुणविद्येति शांकरे उक्तम्। तथासति गुणोपसंहारवर्णनं कथम्; विद्ययोर्भिन्नत्वात्। निर्गुणविद्यायां गुणोपसंहारायोगाच्च। स्तुत्यर्थं गुणोपसंहार इति यदुक्तम्—तन्न घटते; प्रशस्ते निर्गुणे अप्रशस्तसगुणधर्मकथनं निन्दैवेति अन्यत्र भामत्युक्तेः। सर्वसगुणविद्यागुणानामपि तदर्थमुपसंहारापत्तिश्च। विद्ययोर्भेदे वाजिविद्योक्तगुणश्छान्दोग्ये नैवोपसंह्रियेत। वशित्वादीनां सत्यसंकल्पत्वस्य चैकत्वादुपसंहार इति चेत्—एकत्वे प्रागेव सिद्धत्वादुपसंहारकथनं वृथा। अतो यदेवम्—अग्राह्यो न हि गृह्यते, नेह नानास्ति, नेति नेति इत्येवमधिगमनीयांशसद्भावेऽपि छान्दोग्यगुणानां वाजिविद्यायामुपसंहारं सूत्रकृन्मन्यते, अत एव निर्गुणतया प्रतीयमानानां सगुणत्वाविरोधेनार्थवर्णनमेव स स्वीकरोतीत्यास्थेयम्।

अत एव कामाद्यधिकरणे भास्करभाष्ये सर्वापि सगुणविषयिण्येवेत्युक्त्वा द्रमिडभाष्यमपि स्मारितम्—फलं त्वविशिष्टम् अन्तर्गुणदेवतोपासनादिति। तदुत्तरत्र विशदयिष्यते। एवञ्च औडुलोमिमतमनभ्युपगम्य, 'एवमप्युपन्यासात् पूर्वभावादविरोधं बादरायणः' इति चिन्मात्रातिरेकि जैमिनिमतं ब्राह्मरूपं मुक्ते साधयन् मुक्तस्य ब्रह्मणश्च सगुणत्वमेवाशेते इति स्थिते औडुलोम्यविशेषेण शांकरवर्णितं निर्विशेषचिन्मात्रात्मवादं कथं सूत्रकारोक्ततया स्वीकुर्वीमहि। इयान् विशेषः—औडुलोमिः संसारे भेदं मुक्तावभेदञ्चाह। शांकरास्तु संसारेऽप्यभेदम्। एवञ्च संसारे संमतो भेद औपाधिकः पारमार्थिक इति भास्करीये, अपारमार्थिक इति शांकरे। अतो जगत्सत्यत्वासत्यत्वविषयेऽन्यतरावधारणमेतावन्मात्रेणौडुलोमिमते कीदृशमिति दुर्वचम्। भास्करे तु जीवेश्वरभेदस्यौपाधिकत्वेऽपि मुक्तौ जैमिनिवद्गुणा इष्टा इति नौडुलोमिसाम्यम्।

किञ्च जीवस्यावस्थाविशेषान् जागरस्वप्नादीन् उपवर्ण्य परस्वरूपशोधनार्थं नस्थानतोऽपीत्यादि-क्रमारेभे सूत्रकारः। तेनैव जीवपरभेदः स्पष्टः। तत्र सूत्रे परस्य पृथिव्यादिस्थितितोपि नोभयलिङ्गम् इत्यन्वयवर्णनमयुक्तम्। परस्येति षष्ठीनिर्देशात्। परमुभयलिङ्गम्। उभयं च लिंगं साकारत्वं निराकारत्वञ्च भवदिष्टम्। न हि तदुभयं पृथिव्यादिस्थानप्रयुक्तम्। अतः साकारत्वं सदोषत्वमित्येव वक्तव्यं स्यात् पूर्वान्वयविवक्षायाम्। उत्तरत्र साध्यानिर्देशात् निराकारत्वानिर्धारणञ्च। अत उभयलिङ्गं सर्वत्रेत्युपरिष्टादन्वयात् ब्रह्मणः सविशेषत्वमेव स्वरसम्। यदि चेदं निर्विशेषम्, तर्हि फलमत उपपत्तेरिति तस्य फलप्रदायित्वं कथमुच्येत। अथ सर्ववेदान्तप्रत्ययमिति गुणोपसंहारः कथं वर्ण्येत। "न हि मुक्तिसाधनभूतायां विद्यायां कर्मणामिव भेदोऽस्ति। सगुणासु तु विद्यासु मनोमयः प्राणशरीर इत्यादिषु गुणावापोद्वापवशात् भेदोपपत्तौ सत्यां युज्यते फलभेदः" इति निर्गुणविद्याभेदाभावकथनात्। इदं मुक्तिफलानियमाधिकरणभाष्यं मनोमयाद्युपासनानामविशिष्टफलत्वप्रदर्शिविकल्पाधिकरणभाष्यविप्रतिषिद्धमित्यन्यदेतत्। एवं कार्त्स्न्येन गुणोपसंहारपादस्य सगुणविद्याविषयत्वे स्थिते, समनन्तरपादारम्भे पुरुषार्थोऽत इत्यत्र अतश्शब्देन निर्गुणविद्याग्रहणं न युज्यते। 'शमदमाद्युपेतः स्यात् तथापि तु तद्विधेस्तदङ्गतया तेषामप्यवश्यानुष्ठेयत्वात्' इति सूत्रे शमादीनामङ्गतयाऽनुष्ठेयत्वकथनात् शमादीनामन्तरङ्गतया विद्यासाधनत्वस्य च तदिष्टत्वात् अङ्गतयाऽनुष्ठानस्य च वैधविद्याविषय एव संभवात् अविधेयवाक्यार्थज्ञानस्याहेतुत्वं सिद्धम्। तन्मते आत्मेति तु इति सूत्रमपि व्यर्थम्। तत्त्वज्ञानस्यैव मोक्षसाधनतया मदन्य इति ज्ञानस्य मोक्षहेतुत्वप्रसक्त्यभावेन पूर्वपक्षानुदयात्। आश्रमधर्माणां सर्वेषामविशेषेण विद्याङ्गत्वे वाचनिके विविदिषार्थत्वकथनञ्चानपेक्षितम्। सगुणविद्याविषये स्वरसावगतसाधनत्वस्यैव संभवात्। निष्प्रमाणनिर्गुणविद्यायां कर्मानुपयोगं स्वयमुत्प्रेक्ष्य संभवस्थलेऽपि तत्त्यागायोगात्। आदित आन्तं शारीरकं सगुणपरमेवेति श्रुतप्रकाशिका—शतदूषणी—परमार्थभूषणादिषु प्रपञ्चितमेवेति किमत्र बहुना।

शांकरोक्तं निर्गुणत्वं जगन्मिथ्यात्वञ्चासहमानैर्भास्कराचार्यैः अद्वैतवाक्यप्राधान्यमातिष्ठमानैः ब्रह्मपरिणामवाद एवोपपादितः। एवञ्च मृद्घटयोरिव कार्यकारणैक्यात् अचेतनप्रपञ्चैक्यं ब्रह्मणि ; भेदश्चास्ति दशाभेदात्। भोक्त्रापत्तेरविभाग इत्यत्र परिणामवादमाश्रित्याक्षेपपरिहारौ कृताविति शांकरेऽपि स्वीकारात् तदनन्तरे तदनन्यत्वमित्यधिकरणे तदनभ्युपगमेन विवर्तवादः सूत्रकृदिष्ट इति न युक्तं वक्तुम् ; असंमतत्वे तत्रैवाधिकरणे तस्याविष्करणीयत्वात्। अनभ्युपगमे परिणामादिति सूत्रविरोधाच्च। सूत्रार्थासामञ्जस्याच्च। न च परिणामस्वीकारे क्षीरस्य कार्त्स्न्येन दधिरूपेणेव ब्रह्मणो निरवशेषं परिणामः स्यादिति शंक्यम्—कृत्स्नप्रसक्त्यधिकरणोक्तरीत्या शब्दप्रमाणाधीनशक्तिवैचित्र्येण सर्वोपपत्तेरित्युक्त्वा मायावादः महता प्रपञ्चेन खण्डितः। जीवस्तु नोत्पद्यते। अतो घटाकाशस्य महाकाशेनेव प्रतिनियतकर्मशरीराद्युपाध्यवच्छिन्नप्रदेशरूपस्य तत्तज्जीवस्य मिथो भेदः ब्रह्मणा चाभेदः इति औपाधिक एव भेदः। भेदाभेदयोरविरोधश्चैतदिष्टः। कर्मविशिष्टाद्वैतोपासनेन ब्रह्मप्रसादवशात् सर्वेश्वरतदैक्यप्राप्तिरेव मोक्षः। स च सदेहत्वविदेहत्वरूपयथेच्छाकारः अर्चिरादिना परं ज्योतिरुपसंपन्नस्य। कार्यभूतहिरणगर्भलोकप्राप्तावपि अन्ते ब्रह्मणासह मुक्तिर्भवतीति न पुनरावृत्तिप्रसक्तिः। ईश्वरैक्यं प्राप्तस्य निरवधिकमेवैश्वर्यं बादरायणेष्टम्। कार्यब्रह्मलोकगतानामिव पृथगवस्थानमिच्छतां तु मते जगद्व्यापारवर्जमैश्वर्यं स्यात्। तन्नेष्टं सिद्धान्त इति तत्पक्षस्थितिः।

**यादवप्रकाशीये** तु प्रपञ्चस्येव जीवानामपि अग्नेर्विस्फुलिङ्गानामिव ब्रह्मणः प्रादुर्भावात् कार्यकारणभावोऽप्यस्तीति जीवब्रह्मणोरपि अभेद इव भेदोऽपि स्वाभाविक एवेष्टः। कर्मज्ञानयोः समप्राधान्यम्, परमे पदे मुक्तिः, भगवदधीनतया पृथक्स्थितिः, सत्यामिच्छायां स्वात्मन एव अनेकधाविभागस्यापि संभवः, जगद्व्यापारवर्जमेव साम्यमिति मुक्तावपि द्वैतमेव। तथापि सन्मात्रमेकमेव ब्रह्मद्रव्यं समुद्र इव फेनबुद्बुदतरङ्गरूपेण जडजीवेश्वरभेदेन विभक्तमिति अद्वैतमिति। एवं भास्करयादवप्रकाशीययो र्भेदाभेदः सर्वलेष्टः। मीमांसकैरपि लोके भेदाभेद इष्टः। तमिमं भास्करपक्षादरणेन **पार्थसारथिमिश्रः शास्त्रदीपिकायां** सुदूरमुपन्यास्थत्।

तमिमं भेदाभेदं विशिष्टाद्वैतिन इवाद्वैतिनोऽपि नेच्छन्ति। अत एव श्रीभाष्ये समन्वयाधिकरणे भास्करप्रपञ्चितो भेदाभेदपक्षस्तत्रैवाधिकरणे अद्वैतिमुखेनैव निरासि। एवमुभयसंमतं ब्रह्मणो वास्तवप्रपञ्चाद्वैतं निर्विकारत्वनिखिलहेयप्रत्यनीकत्वादिकं ब्रह्मणः प्रतिपादयतां प्रमाणानामन्यथाकरणं विना न संपद्यत इति ब्रह्मणि दोषास्पदत्वमसहमानाः दोषाणां कल्पितत्वस्य मृषात्वस्य स्थापनाय जगन्मिथ्यात्वमेवान्वमन्यन्तानन्तरा अप्यद्वैतिन इति शांकरमतस्यैवानुच्छिन्नः प्रचार आसीत्।

प्रत्यक्षादिसर्वप्रमाणविरुद्धस्य जगन्मिथ्यात्वस्य कल्पनया अद्वैतसंरक्षणमपेक्ष्य सर्वप्रमाणाविरोधायाद्वैतत्याग एव समुचितः। आहुश्च मीमांसकाः, "असंनिकृष्टवाचा च द्वयमत्र जिहासितम्। ताद्रूप्येण परिच्छित्तिः तद्विपर्ययतोऽपि वा" इति। अत एव लोके निमित्तोपादानयोर्भेदस्यैव दर्शनात् परमात्मनो नोपादानत्वम्; किंतु निमित्तत्वमात्रम्। एकविज्ञानेनसर्वविज्ञानकथनञ्च सर्वस्य तदधीनत्वात् प्रधानपुरुषदर्शनेऽन्येषां ज्ञातप्रायत्ववचनवदुपपद्यते। 'वाचारम्भणं विकारो नामधेयं मृत्तिकेत्येव सत्यम्' इति वाक्यञ्च न कार्यमिथ्यात्वपरम्। मृत्तिकादिसंस्कृतशब्दानां साधुत्वम् अपभ्रंशानां शब्दानामसाधुत्वादिकञ्च तत्रोच्यते। अतो भेदाभेदपक्षे अद्वैतपक्षे च जीवादिदोषाणां ब्रह्मण्यापत्त्या तस्य निर्दोषत्वादिस्थापनाय जडस्येव जीवस्यापि ब्रह्मणो भेद एव प्रतिपत्तव्य इति द्वैतिनः।

एवं द्वैतवादिभिरेभिः क्वचिदद्वैतं क्वचित् द्वैताद्वैतञ्च स्वीचक्रे—विष्णुलक्ष्मीजीवाः जडपदार्थाश्च मिथो भिन्ना एवेति यथा द्वैतम्, तथा विष्णुना सह तद्गुणतदवयवतद्गुणक्रियादीनामद्वैत-(अभेद) मेव। एवं लक्ष्म्याः मुक्तानां च तत्तद्गुणदेहक्रियादिभिरभेद एव। 'द्वैताद्वैतं (भेदाभेदः) तु बद्धानां गुणैः स्वैः कर्मभिस्तथा—अंशांशिनोः गुणस्यापि गुणिनः कर्मतद्वतोः। कार्योपादानयोश्चैव व्यक्तिसामान्ययोरपि' इति। एवमभेदे सत्येव भेदव्यवहारः तत्रतत्र विशेषाख्यधर्मस्वीकारात् तन्मूलं इति च। एवंतर्हि ब्रह्मजीवयोरप्यभेद एव कस्मान्नेष्यते भेदव्यवहारस्यान्यथानिर्वाहादिति न शंक्यम्—तदा हि जीवगतसर्वदोषास्पदमेव परं ब्रह्म भवेत्। एभिर्जीवानां विष्णुप्रतिबिम्बत्वं स्वीकृतमिति अभेदोऽप्यापतेदिति चेत्-कथमेषां प्रतिबिम्बतेत्येतत्, "अतएवचोपमा सूर्यकादिवत्" इति सूत्रे जीवानामुपमा—प्रतिबिम्बता विष्णवपेक्षया भिन्नत्वाधीनत्वसादृश्यैरेव भवति, नोपाध्यधीनत्वादिनेति समाहितम्। अतोंशत्वात् विष्णवभेदोऽपि स्यादिति न मन्तव्यम्; अभेदे हि सति भक्तिर्न स्यात् स्वस्मिन् स्वस्य भक्त्ययोगात् साधनोपदेशादिव्याकोप इति। अस्मिन् सूत्रे अत एव चोपमेति पूर्वपक्षः, इति चेन्नेति पूरणेन सूर्यकादिवदिति समाधानमिति, पूर्णं सूत्रं समाधानरूपमेवेति च द्वेधा निर्वाहोऽस्ति।

द्वैतिनां प्रमेयनिष्कर्षे स्थितं वैलक्षण्यं तस्य सर्वमतसाधारण्यात् न विस्मयाय। तैः क्रियमाणं सूत्रव्याख्यानं तु तत्पूर्वबहुव्याख्यातृविद्वज्जनसरणिसुदूरविप्रकृष्टम् । सर्वैस्तान्त्रिकैः जगतः सत्यत्वे स्वीकृते शांकरैर्हन्त बौद्धपथप्रवेशः कृत इति वैदिकाः व्याहरन्तः शांकरभाष्यं सुनिरीक्ष्य एवं वदन्ति—आनन्दमयाधिकरणे सूत्राणि स्वरसप्रतीतार्थपराण्येव व्याख्याय स्वाशयं परमन्यमन्ते आविश्चकार। सूत्रेषु पूर्वस्य पूर्वपक्षसूत्रता उत्तरस्य सिद्धान्तसूत्रतेति गमनिकायाः सुप्रसिद्धत्वेऽपि कार्याधिकरणे पूर्वसूत्राणां सिद्धान्तपरत्वमुत्तरेषां पूर्वपक्षपरत्वञ्चाभाषिष्ट। एवं सर्वशिष्टपरिग्रह-संपादनार्थं ब्रह्मसूत्रव्याख्यानमादृत्य स्वाशयमन्यमेवात्र प्रतिष्ठापयामास। अत एवोपक्रमेऽपि, 'यथा चायमर्थः सर्वेषां वेदान्तानाम्, तथा वयमस्यां शारीरकमीमांसायां प्रदर्शयिष्याम' इत्यभाषिष्ट। एतेन बादरायणपरास्तः पक्ष एव शांकरस्वपक्ष आसीदिति विमर्शे प्राप्तेऽपि एकमिदं संतोषस्थानम्, यत् प्रायः पूर्वपुरुषोदाहृतविषयवाक्यान्येव तत्र तत्र निर्दिश्य स्वाभिमतं तत्र घटयति। प्राच्येष्वनेकेषु व्याख्यानेषु मिथो भेदं निरीक्ष्य युक्तं परिगृह्य परमुपेक्षते। एवं प्रवर्तमानस्य संभाव्यत एव यत्रकापि स्वातन्त्र्येणार्थवर्णनम्। आनन्दतीर्थीये तु शांकराद्वैतदर्शनजनितातिमात्रहृदयक्षोभवशात् तदुदाहृतवाक्यग्रहण—तदनुगुणसूत्रार्थवर्णनादि सर्वथैवोपेक्ष्य स्वसूक्ष्मबुद्धिप्रतिभातया कयाचिदपूर्वयैव सृत्या परबुद्धिप्रतिभानदूरा एवार्थाः प्रादर्शिषत। किमित्येवं प्रायः प्राच्यव्याख्यासरणिरुपेक्ष्यते। स्वाभिमतानामर्थानां तदनुसरणेनैव वर्णनं हि नैवाशक्यमिति। एषां मतसंग्रहो भाष्यार्थदर्पणभूमिकायामेव कृतो द्रष्टव्यः। तत्र तैराहृतानि प्रमाण वाक्यानि प्रायः सांप्रतमनुपलभ्यमानानीत्येव न ; पूर्वैर्नाम्नाऽप्यनिर्दिष्टानि माध्वमतैकप्रतिपादक-व्यासकृतत्वाभिमतब्रह्मतर्कग्रन्थादीनि।

बादरायणप्रतिष्ठापितः श्रुत्यन्तमार्गः परमर्षिणा बोधायनेन, अथ गते गणराले संख्यातीते वाक्यकारेण ब्रह्मनन्दिना, तद्व्याख्यानप्रवृत्त द्रमिडाचार्यायैश्चानेकैः प्रबन्धैः परिष्कृत एव, ये लेखनरक्षणपरिश्रमात् प्रत्युत्पन्नग्रन्थपर्याप्तताबुद्ध्या चार्वाचीनैरभावमेवार्थात् गमिताः। क्रि. प. 1238 वत्सरोत्पन्नश्रीमदानन्दतीर्थपादशिष्यस्य अक्षोभ्यतीर्थस्य विद्यारण्यमुनेश्च वादं पत्रमुखादुपकर्ण्य (1268-1369) श्रीदेशिकचरणप्रहितः असिनातत्त्वमसिनेति श्लोक इति सुप्रसिद्धम्। तादृश्या सरण्या माध्वमतं तज्ज्ञातमासीत्। अक्षोभ्यतीर्थशिष्यः श्रीमध्वाचार्यमतस्थापकमूर्धन्यः जयतीर्थाचार्यः विद्यारण्यमुनिमाननभाजनमियादि वदन्ति। विद्यारण्यकृते सर्वदर्शनसंग्रहे श्रीदेशिकचरणश्लोकः स्वोक्तार्थप्रामाणिकत्वप्रदर्शनायोदाहृत इति नूनं श्रीदेशिकचरणास्तदा तदधिकवयस्काः स्युः। जयतीर्थकाल एव विशिष्टाद्वैतग्रन्थपरिज्ञानस्य तेष्ववसरः। जयतीर्थकृतव्याख्यानबलादेव माध्वमतपरिज्ञानमन्येषां सुकरमासीत्। (1280) श्रुतप्रकाशिकायामद्वैतिपक्षत्रयवत् माध्वमतस्याखण्डनं न केवलं श्रीभाष्यकारसमये (1017-1137) तदभावमात्रात्; टीकाकारकाले तद्ग्रन्थावेक्षणाघटनादपि। तथा तद्व्याख्यानभंग्याः सर्वथा विलक्षणतया पृथगेव विचार्यत्वादपीत्यपि केचित्। अद्यत्वे तेषामनुपलम्भेऽपि तत्र तत्र पूर्वैरुदाहृतानि कानिचित् वचनानि यत्र येषामर्थस्वारस्यदर्शनेऽपि कथञ्चिन्मतनिष्कर्षः प्राचां मनसि स्थितो मात्रया न्यूनत्वेऽपि ज्ञातकल्प एव लक्ष्येत—तादृशप्राच्यग्रन्थगतानि वाक्यान्युपादाय यदि माध्वमतमार्गः प्रस्थितः स्यात्, तत्र विस्रम्भस्य विशेषतोऽवसरः स्यात्। शांकरग्रन्थतद्व्याख्यानयोरुपात्तानि कानिचित् वाक्यानि पूर्वापरसन्दर्भपुरस्सरं परिशील्य, तदनुदाहृतान्यपि बहूनि वाक्यान्युदाहृत्य, स्वमतं स्थापयामासुः श्रीभाष्यकाराः। तथा वृत्तिग्रन्थस्य तैर्दूषितत्वेऽपि तदादर्तव्यताञ्च। नूनमेतदुपलम्भे संपन्ने श्रीमन्मध्वाचार्याणां शांकर-

दर्शनजनितापार्थमयत्वाध्यवसायनिबन्धनान्याहशव्याख्याविरचनपूर्वक-वैष्णवमतस्थापनार्थप्रत्यग्र प्रयासभूमा हसितः स्यात् । यत इमे श्रीभाष्यकाराः द्वैतिवत् प्रत्यक्षानुमानशब्दरूपप्रमाणत्रयवादिनः प्रत्यक्षाविरोधं अनुमेयविषये लाघवानुसारं, शास्त्रस्य सामस्त्येन प्रामाण्यञ्च वर्णयन्ति । परं भेदाभेदं कुत्राप्यनंगीकृत्य गुणक्रियादिविषयेऽपि यथानुभवं भेदमेव प्रापञ्चयन् । श्रीभाष्यकार तदनुयायिदर्शितानि प्राचां वचांसि तावत् उपरि प्रकाश्यन्ते । प्रकृते मुख्यविषयविवेकसंपादनाय द्वित्राण्युदाह्रियन्ते ।

औपनिषदं पुरुषं परं ब्रह्म प्रतिपद्यमानाः तस्य जगत्सर्गसंकल्पाश्रयत्वेन निमित्तकारणत्वं निर्विवादमभ्युपयन्त्येव । उपादानत्वं माध्वास्तार्किका इव नेच्छन्ति । अन्ये वेदान्तव्याख्यातारः सर्वे तदप्यातिष्ठन्ते । तत्र सद्विद्यादौ कार्यकारणाभेदनिर्देशः, तत्पुरस्सरमेकविज्ञानेन सर्वविज्ञानवचनं मृल्लोह तद्विकार निदर्शनमित्यादि प्रमाणम् । ब्रह्मणि सर्वं रज्जौ सर्पादिवत् कल्पितमित्यद्वैतिमते सृष्टे-रेवाभावात् ब्रह्मण उपादानत्वस्थापनं कथम्, निमित्तत्वमपि हि निरस्तं भवतीति शंका जायते । एतद्विरोधशमनायाद्वैतिभिः लोके रज्जुसर्पस्थलेऽपि विलक्षणस्य सर्पस्योत्पत्तिरस्तीति वाद उपक्रान्तः । जातश्चेत् सर्पः, कथं न सर्वैर्लक्ष्यते, कथञ्च न दशति, कथञ्च दण्डघातादि विना म्रियत इत्याक्षेपः परिह्रियते विलक्षणोऽयं सर्प इति वादेन । यदि सर्पो न जायेत कथं स चक्षुषा दृश्येतेत्युक्त्वा तद्रीत्या ब्रह्मणोऽपि जगदुत्पत्तिं श्रौतीं निर्वहन्ति । एवञ्च रज्जुः सर्पस्येव ब्रह्म जगत उपादानमिति तदाशयः । अत्रेहेममेकं विमर्शमुपस्थापयामः—येयं रज्जौ सर्पस्योत्पत्तिः, सा किं परमार्थभूता, उत कल्पिता । नाद्यः, अपरमार्थसंबन्ध्युत्पत्तेः परमार्थत्वायोगात् । आद्यक्षणसंबन्धरूपोत्पत्तेः परमार्थत्वे उत्तरोत्तरक्षण संबन्धरूपस्थितेरपि तथात्वमिति पश्चात् सर्पो नाश्य एव स्यात् ; न बाध्यः । कल्पितेति पक्षे च यः पुरुषो भ्राम्यति अयं सर्प इति, तस्येयं कल्पना, उत परीक्षकस्याद्वैतिनः । नाद्यः ; अद्य सर्प उत्पन्न इति तेनाग्रहणात् ; प्रत्युत प्रागेवस्थितत्वस्यैव ग्रहणात् तदैवोत्पत्तेरयोगात् । अन्त्ये च रज्जावनिर्वचनीयसर्पाभावेऽप्यद्वैतिनः स्वयं कल्पयन्तीति अप्रामाणिकत्वमेव मुखान्तरेणोक्तं स्यात् । अनिर्वचनीयवादनिरासश्चास्माभिरपि परमार्थप्रकाशिकायां परमार्थभूषणे चोपबृंहितः ।

यावद् यावद् विचार्येत तावत् तावदियं पुनः । अनिर्वाच्यपदार्थोक्तिर्वालुकावद् विशीर्यते ॥

अयमेव विवर्तवाद इत्युच्यते शांकरैः । रज्जुसर्पाद्युत्पत्तिकथाया एवाभावात अन्ये—नायं विवर्तः, यत्र विषमपरिणामो भवति तत्र विवर्तशब्दव्यवहारः । सजातीयपरिणामस्तु परिणाम-त्वेनैव प्रसिद्ध्यतीति प्राहुः । मृषावादिन एव यदा स्वगूढाशयाविष्करणे धैर्यमवलम्बन्ते, तदा—लोके कार्यकारणभाव एव दुर्निरूपः । ब्रह्मणो जगदुत्पत्तिरूपसृष्ट्यादिवादो वेदे परिदृश्यमानः सर्वोऽपि, ब्रह्म सत्यं जगन्मिथ्येत्येतत् तत्त्वं कयाचित् प्रणाल्या बुद्धौ स्थापनीयमिति हेतोः रज्जुसर्पादि-निदर्शनाश्रयेन मृद्घटादिदृष्टान्तघटनेन वेदेनादृतः कश्चित् पन्था इति लिखन्ति । कबन्धमीमांसकैरुप-निषदामूषरप्रायत्वं कथितममृष्यमाणैरेभिः पूर्णवेदप्रतिष्ठापनप्रवृत्तैः उपनिषद्वाक्यव्याख्यानकुतूहलिभिः सर्वमिदमसत्यवर्त्मप्रदर्शनमिति प्रचारयद्भिः कर्मकाण्डेन सह ज्ञानकाण्डः श्वासमात्रावशेष आपादितः ।

सोयं ब्रह्मश्वासः शुण्ठिकाचूर्णनिक्षेपपूर्वकेण फूत्कारेण प्रयस्य प्रणिहितमतिभिः प्रगुणितो वेदवैदिक सर्वप्राणनाय पर्याप्तः संप्रति लक्ष्यते । अनिर्वचनीयोत्पत्त्यसंभवे च सति बौद्धजैनतार्किकादिकृतपदार्थ-परिकल्पनायाः वेदकृतकल्पनायाश्च न कश्चिद्विशेष इति सर्वहानिरेव शांकरे ।

परिणामादिति सूत्रे भास्करीये विवर्तवादखण्डने प्राचीनसंप्रदायग्रन्थमपि संवादं प्रदर्श्यैवमुक्तम्, "सूत्रकारः श्रुत्यनुकारी परिणामपक्षं सूत्रयाम्बभूव । अयमेव छान्दोग्ये वाक्यकार—वृत्तिकाराभ्यां संप्रदायमतः समाश्रितः । तथा च वाक्यम्, 'परिणामस्तु स्यात् दध्यादिवत्" इति । भोक्त्रापत्त्यधि-करणम् उपसंहारदर्शनाधिकरणे क्षीरवद्धीति निदर्शनञ्चानुरुन्धानो वाक्यकारः तदनन्यत्वाधिकरणस्यापि जगन्मिथ्यात्वपरत्वं नानुमन्यत इत्युक्तं भवति । अत्र भास्करीये वृत्तिकारस्यापि निर्देशात् शांकरपक्षस्या-सांप्रदायिकत्वस्य माहायानिकबौद्धग्रथितमायावादवर्णनरूपत्वस्य चोपपादनात् छान्दोग्यवृत्तेरपि ततो ज्ञायमानत्वात् तद्वत् विशिष्टाद्वैतिभिरद्वैतखण्डनाय वृत्तिप्रदर्शनं स्थाने इति सुग्रहम् । शांकरे तदनन्यत्वाधिकरणेऽभाष्यत, "व्यवहाराभिप्रायेण तु 'स्याल्लोकवत्' इति महासमुद्रस्थानीयतां ब्रह्मणः कथयति । अप्रत्याख्यायैव कार्यप्रपञ्चं परिणामप्रक्रियाञ्चाश्रयति, सगुणेषूपासनेषूपयोक्ष्यत इति" इति । भोक्त्रापत्तिसूत्रं विवर्तवादाश्रयणेन न व्याचिख्यासतीति संतोष्टव्यम् । शक्यते किल तदपि—भोक्तुर्भोग्यस्य चैकब्रह्मविवर्तत्वं कथम्, सर्वं भोक्तृ वा प्रतीयेत, भोग्यमेव वेति शंकायाम्, एकस्मिन्नेव स्थाणौ पुरुषत्वशिलास्तम्भत्वादिविचित्रकल्पनस्य लोके दर्शनान्न दोष इति व्याख्यातुम् । एवञ्च प्रकृत्यधिकरणे परिणामादिति सूत्रणं परिणाम्युपादानत्वं कृत्वोपासनार्थमिति शांकरानु-सारिभिर्युक्तं वक्तुम् । तद् विहाय परिणामादित्यस्य विवर्तादिति व्याख्यानं तु सूत्रेषु स्वमतदुर्भिक्ष-दर्शनजनितात् भयादेव । भामतीकारः पदेपदे भास्करीयं खण्डयति परुषमप्रयुज्य । कल्पतरुकारस्तु भास्करकृतेनामर्यादेन दूषणेन क्षुभितहृदयः, 'भास्करो बभ्राम' इति भृशं गर्हयति । तेनापि वाक्यकारवचनं तदुदाहृतं नापलप्यते । वाक्यस्थं वचनान्तरं प्रदर्श्य जगदनिर्वचनीयत्वस्थापनेन तस्यान्यथानिर्वाहमभि-प्रैति । यदाह—"छान्दोग्यवाक्यकारेण ब्रह्मनन्दिना हि, नासतोऽनिष्पाद्यत्वात्, प्रवृत्त्यानर्थक्यं तु सत्त्वाविशेषात्, न संव्यवहारमात्रत्वात्" इति । एतदर्थश्च—जगन्न शशविषाणवदसत् निष्पत्त्ययोगात्, न च सत्. सतः सर्वदासत्त्वात् निष्पत्त्यर्थप्रवृत्त्ययोगादिति शंका । तत्रोच्यते—नैवम् । व्यावहारि-कमात्रं किलेदं सदसनिर्वचनीयमिति अप्पय्यदीक्षितेष्टः ।

अत्रेदं वक्तव्यम्—इदं वाक्यं भास्करानुदाहृतमित्येतावता उपेक्ष्यमिति हठवादं नेच्छामः । न कल्पतरुकारस्य, अन्यस्य वा प्राचीनस्य विपश्चितः असद्वाक्यपरिकल्पनेन जयप्रवृत्तिं आधु-निकवत् सहसा कल्पयितुं प्रवर्तेमहि । परं पौर्वापर्यपरामृष्टः शब्दोऽन्यां कुरुते मतिम् इति न्यायादर्थ-विषये विवादस्यावसरोऽस्ति, मा भूत् तत्संदर्भविज्ञानम् । भास्करोदाहृतदधिवाक्याविरोधेन स्ववाक्यगतपदस्वारस्याविरोधेन चार्थो वर्णनीयः । दधिनिदर्शनेन परिणामपक्षस्य सिद्धत्वात् तत्स्थापनमेवानेन वाक्येन क्रियत इति वक्तुमवसरो लक्ष्यते । नासदनिष्पाद्यत्वादित्यनेन, प्रपञ्चस्य निष्पाद्यत्वं लोकप्रसिद्धं स्वाभिमतमिति ज्ञापितम् । रज्जुसर्परीत्या विवर्तपक्षे च

निष्पत्तिरेव नास्तीति प्रागेव प्रत्यबोधि। अतो न तत्र सदसदनिर्वचनीयसिद्धान्तः। किञ्च नासदित्यादेः पूर्वोक्तो वाऽर्थोऽस्तु, यद्वा संक्षेपशारीरके, "आत्रेयवाक्यमपि संव्यवहारमात्रं कार्यं समस्तमिति नः कथयाम्बभूव। सत्कार्यवादविषयो न हि दोषराशिर्मायामये भवितुमुत्सहते विरोधात्। काणाददर्शनसमाश्रयदोषराशिर्दूरान्निरस्त इह संव्यवहारमात्रे।' इत्युक्तं सांख्यतार्किकवादनिरासपरत्वम्। सदसद्विलक्षणपरत्वस्थापकं तु तद्वाक्यं न भवति। अभीक्ष्णमात्रेयवंश्यत्वकथनमात्रेण शंकराचार्यवत् मायावादित्वं तस्येति न शक्यं वक्तुम्।' 'काणादशाक्यपाषण्डैस्त्रयीधर्मो विलोपितः। त्रिदण्डधारिणा पूर्वं विष्णुना रक्षिता त्रयी' इत्युक्तदत्तात्रेयस्यैव त्रिदण्डधारिवादसंभवात् सत्यजगद्वादित्वमपि सिध्येत्। अद्वैतज्ञापनायैकदण्डधारणम्; तत्त्वत्रयज्ञापनाय त्रिदण्डधारणमिति नियम इति चेत्—अद्वैतित्वेऽपि भास्कराचार्यस्य त्रिदण्डित्वं कुल्लूकभट्टेन मानवव्याख्याने उक्तम्।

किञ्च न सत् नाप्यसत् इति पूर्वपक्ष्युक्तं सदनिर्वचनीयवादिन इष्टमेव किल। तथा सति सत्यमिति वक्तव्ये नेति खण्डनारम्भः कथम्। अतः पूर्वपक्षी सत्त्वासत्त्वनिषेधेन सदसद्विलक्षणत्वमेव शंकते। नेत्यादिना तत्खण्डनम्। अयमर्थः—रज्जुसर्पादिनिष्पत्तिरप्रामाणिकी। अपि च अत्यन्तासत्त्वात्यन्तसत्त्वनिषेधमात्रेण सामान्यतः सदसद्विलक्षणत्वं न भवति; किं तु किञ्चिद्रूपेण सदसत्त्वमेव। नामधेय—जलाहरणादिद्विविधव्यवहाररूपपरिच्छेदवत्त्वात् घटादेः तदर्थं सत्त्वस्य तदसंभवे चासत्वस्यैष्टव्यत्वादिति। अयं संव्यवहारशब्दः, "एतत्तु यत् संव्यवहारभूतं तत्रापि चोक्तं भुवनाश्रितं ते" इति विष्णुपुराणपदसमानार्थकः। तत्र पदार्थानामुत्पत्तिविनाशित्वरूपकादाचित्कत्वमुपपाद्य नित्यपरमार्थत्वाभावमात्रमुक्तम्, न मिथ्यात्वमिति प्रपञ्चितमेव श्रीभाष्ये। अनेन वाचारम्भणं विकारो नामधेयमितीदं व्याख्यातम्। एवं वा-घटादिर्न सर्वात्मना अभावः, तस्यानिष्पाद्यत्वात्; नापि मृत्पिण्ड एव, कारकव्यापारवैयर्थ्यात्। अतो मृदि उपादाने अवयविभूतं द्रव्यमुत्पद्यत इति पूर्वपक्षस्तार्किकस्य। तत्राह नेति। जलाहरणादिकार्यघटादिव्यवहारमात्रम्, न तु द्रव्यान्तरोत्पत्तिरपि; महागौरवात् अननुभवात् अनुभवविरोधाच्चेति। अत्र पक्षे मात्रपदं व्यवच्छेदार्थं स्पष्टम्। सर्वमिदं दधिनिदर्शनवाक्यग्रन्थाविरुद्धमिति तदनुकूलार्थोत्प्रेक्षणमयुक्तम्।

अत एव, "आत्मेत्येव तु गृह्णीयात् सर्वस्य तन्निष्पत्तेः" इति वाक्यग्रन्थोऽपि नाद्वैतिपक्षानुकूलः। ब्रह्म प्रत्यगात्मत्वेन ग्राह्यम्, प्रपञ्चस्य तन्निष्पत्तेः—तत्र ब्रह्मणि कल्पितत्वादिति अद्वैतिमतोऽर्थः। निष्पत्तिशब्दस्य कल्पनेत्यर्थः सर्वथा क्लिष्टः। अहमर्थस्यापि कल्पिततया मिथ्यात्वेन बाध्यतया नाहमित्येवोपासनापत्तिश्च। अतः सर्वस्य जगतः तस्मादुत्पन्नत्वादिति स्वरसार्थवर्णने ब्रह्मणः कारणत्वमुपादानत्वमुक्तं भवति। उपादानत्वं च निर्विकारस्य तस्यान्तर्यामित्वमुखेनैवोपपादनीयमिति कारणध्यानविधायकवाक्यस्य अन्तरात्मतया ध्यानविधाने तात्पर्यात् सन्मूलाः सर्वाः प्रजा इति स्वस्यापि ततो निष्पत्तिस्तस्यान्तरात्मत्वप्रयुक्तैक्यादिति स्वान्तरात्मत्वेन ब्रह्मोपासनं कर्तव्यमित्येव तदर्थः। कार्यकारणभावप्रयुक्तैक्यादहंग्रहोपासनमिति वेदार्थसंग्रहे।

किञ्च आत्मेत्येवोपासीतेति श्रुतिवाक्यात् पूर्वं, 'योऽत एकैकमुपास्ते न स वेद, अकृत्स्नो ह्येषोऽत एकैकेन भवति' इति वाक्येन जगदपलापो न कृतः। किं तु चेतनाचेतनमात्रोपासने कृत्स्नोपासनता न भवतीत्युक्तम्। अथ कृत्स्नोपासनत्वसिद्धये, आत्मेत्येवोपासीतेत्युक्तम्। तच्च चेतनाचेतनात्यागेन तद्विशिष्टपरमात्मोपासने सत्येव। अत एव उपासाद्वैविध्यादिति प्रागुक्तम्। उपासाद्वैविध्यमेव वृत्तिकारेष्टमिति तत्र शांकरादौ स्पष्टम्। शांकरानिष्टं यत् वृत्तिकारेष्टं चिद्वि-

शिष्टोपासनम्, तदेवात्र वाक्यकारो वदतीति वृत्तिवाक्यसामञ्जस्ये विशदमवबुध्यमाने कथं तद्विरुद्धार्थकल्पना । अतः कृत्स्नस्योपासननिष्पत्तये एवं वाच्यमिति वाक्यार्थः उपादेयः । अपि च अन्यत्वाद्ब्रह्मणः अन्यत्वेनोपासनं कार्यमिति यदुच्यते पूर्वपक्षिणा, तस्यापि निष्पत्तिरितो भवति । अहं ब्रह्मास्मीत्यत्र अहंशब्देन यदि जीवमात्रं गृह्येत, तदा ब्रह्मणि तदैक्यापातात् अन्यत्वरूपतत्त्वहानिः स्यात् । अन्तरात्मत्वप्रयुक्तं यत् जीववैशिष्ट्यम्, तदादायोपासने तु भेदोऽपि गृहीतो भवति । अत एवान्तर्यामित्वग्रहो भेदग्रह एवेति, 'भेदव्यपदेशाच्चान्यः' इति सूत्रे अन्तर्यामिब्राह्मणमादाय सर्वैरुक्तम् । एवं विशिष्टवेषेणोपासने च जीवेऽत्यन्तपारतन्त्र्यलाभः । अत्यन्तपारतन्त्र्यरूपस्यैकान्तिकनित्यकिङ्करत्वरूपफलस्य तत्क्रतुन्यायेन सिद्ध्यर्थं तथोपासनम् । अतः सर्वस्यापेक्षितस्य एवमुपासने निष्पद्यमानतया अन्तरात्मेति विशिष्टवेषेणोपासीतेति वाक्यग्रन्थवाक्यस्यार्थस्वारस्यमस्मन्मते सूक्ष्मं निरीक्षणीयम् । सर्वस्य सगुणोपासनत्वे खल्वेवम्, निर्गुणोपासने एवमर्थवर्णनं कथमिति चेत्—तत् प्रागेव प्रतिविहितम् । किञ्च सद्विद्या निर्गुणविद्या न भवतीति वाक्यग्रन्थादेवावसीयते । तदुक्तम् श्रीभाष्यकारैः, "युक्तं तद्गुणकोपासनात्" इति वाक्यग्रन्थमुपादाय । एतद्वाक्यव्याख्यानरूपं द्रमिडभाष्यमेकदेशतो गृहीत्वा संक्षेपशारीरकादौ अपार्थकल्पनं न घटत इति इहापि किञ्चित् ज्ञाप्यते ।

"अन्तर्गुणा भगवती परदेवतेति प्रत्यग्गुणेति भगवानपि भाष्यकारः । आह स्म यत् तदिह निर्गुणवस्तुवादे संगच्छते न तु पुनः सगुणप्रवादे" इति संक्षेपशारीरकम् । एतद्ग्रन्थकारश्च सर्वज्ञमुनिः चोलवंशीयस्याऽऽदित्यस्य राज्ञः काले इति, स च (क्रि.प) द्वादशशताब्द्या उत्तरभागे आसीदिति तद्ग्रन्थगतवाक्यत एव निरधारि । तस्मिंश्च समये वाक्यभाष्यादिग्रन्थानां यथावदनुपलम्भादयं प्रपञ्चः । अत्र 'अन्तर्गुणामेव देव ां भजते' इति द्रमिडाचार्यभाष्यं व्याख्यायते । तत्र भाष्ये प्रत्यग्गुणेति पदं नास्ति । अन्तर्गुणेति पदस्य स्वयं प्रत्यग्गुणेत्यर्थवर्णनमिति नृसिंहाश्रमविवरणम् । तथैव किञ्चिद्विस्तरेण मधुसूदनविवरणम्, "अन्तर्गुणेति । सेयं देवतैक्षतेतिश्रुतिमनुसृत्य परदेवतेति ब्रह्मैवोच्यते । अन्तर्गुणेत्युक्तं विशदयति प्रत्यग्गुणेति । गुणशब्द स्वरूपपरः । अन्याः देवताः पराग्रूपाः । परदेवता तु प्रत्यगात्मरूपापरोक्षचिदेकरसेत्यर्थः" इति । अनेन अन्तर्गुणां देवतां भजत इति भाष्यस्य प्रत्यग्रूपाखण्डब्रह्मज्ञानवान् भवतीति, तत् त्वमसिवाक्यकटाक्षेण प्रवृत्तिरिति ज्ञायते । अन्तश्शब्दस्य प्रत्यगिति, गुणशब्दस्य स्वरूपमिति, देवताशब्दस्य अखण्डब्रह्मेति, भजत इत्यस्य वाक्यार्थज्ञानमिति चार्थः किं स्वरसः । प्रत्युत गुणशब्दस्य विशेषणपरत्वे प्रत्यग्गुणा प्रत्यग्विशिष्टेत्यर्थ एव भवेत् । प्रत्यग्रूपेति व्याख्यागतरूपपदात् प्रत्यगात्मशरीरकेत्यपि याहच्छिकी अर्थसिद्धिः । तदा च सविशेषपरत्वमेव । वस्तुतो भाष्यमिदम्, अन्यासां देवतानां स्वापेक्षया भिन्नत्वात् अहं सेत्युपास्या न भवति । परदेवता तु प्रत्यगभिन्नत्वात् अहं ब्रह्मेत्युपास्येति निरूपणार्थं न प्रवृत्तम् । न हि 'योऽन्यां देवतामुपास्ते अन्योऽसावन्योऽहमस्मीति न स वेद' इति वाक्यमन्यदेवतायाः स्वान्यत्वेनैवोपास्यतया तदुपासनस्य हेयत्वपरमिति तदर्थवर्णनाय प्रवृत्तम् । अस्तु वा तथा प्रवृत्तम् । परदेवता परं भगवती सर्वेश्वरात्मिका कथं जीवेनैकीभूता स्यात् । तत्पदार्थत्वम्पदार्थधर्मयोर्मिथोविरोधस्येष्टत्वात् । यदि विशेषाणां हानेनैक्यम्, तत् देवतान्तरेष्वपि समानम् । अत एव अहं मनुः, अहं कक्षीवानिति जीवद्वयैक्यवादो भवन्मते । किमनेनाप्रस्तुतेन । भाष्यमिदं "युक्तं तद्गुणकोपसनात्" इति वाक्यव्याख्यानार्थप्रवृत्तमिति पूर्वापरभागयुक्तमन्वभाषि श्रीभाष्यकारैः, "यद्यपि सच्चित्तो न निर्भुग्नदैवतं गुणगुणं मनसाऽनुधावेत्, तथाऽप्यन्तर्गुणामेव तां भजते इति तत्रापि सगुणैव देवता प्राप्यते" इति । अर्थश्चावर्णि ।

तदेवम्—सद्विद्यायां निर्गुणमुपास्यम्, यावन्नविमोक्ष्येऽथसंपत्स्य इत्युक्त्याऽत्रैव मुक्तिरिति बादरिमतानुरोधेन शंकायाम्, वाक्यकारेण प्रतिविहितम् गुणयुक्तमेव प्राप्यम्; तत एव मुक्तिरर्चिरादिमार्गेण। सगुणकस्यैवोपास्यतया निर्गुणप्राप्तेर्दुर्वचत्वात्; तत्क्रतुनयविरोधादिति। तदत्र भाष्ये विव्रियते। दहरविद्यायां 'अथइहात्मानमनुविद्य व्रजन्ति एतांश्च सत्यान् कामान्' इति परात्मन इव गुणानामप्युपासनं यथा कथितम्, तथाऽत्र गुणानां पृथङ्निर्देशाभावेऽपि, आनन्दमयविद्यायामारम्भे गुणानामकथनात् निर्गुणमेवोपास्यमिति शंकायाः, सोऽश्नुते सर्वान् कामान् सहेति गुणानामपि प्राप्यत्वकथनेनार्थात् यथा परिहारः, तथा गुणानुभवरूपफलस्य सद्विद्यायामकीर्तनेऽपि तत् त्वमसीति तच्छब्दबलादेव सगुणोपासनं सिद्धम्। तच्छब्दो हि तदैक्षतेति ईक्षणविशिष्टाम्, सेयं देवतैक्षत, तेजः परस्यां देवतायामिति देवतापदनिर्दिष्टां कारणत्वाद्यौपयिककल्याणगुणगणाकरतया भगवतीं परां देवतामाह। यथा तच्छब्देन गुणविशिष्टमुपस्थाप्यते; तथा त्वम्पदेनापि अपहतपाप्मत्वादिसत्यसंकल्पत्वान्तगुणस्वरूपस्वात्मकचिदन्तर्यामित्वरूपेण देवतोपस्थाप्यत इति इदमपि तद्गुणकोपासनादित्यत्र विवक्षितम्। किञ्च किं निर्गुणत्वेन रूपेणोपासनम्, उत वस्तुतो यन्निर्गुणं तदुपासनम्, उत गुणाविषयकम्। नाद्यः, निर्गुणत्वरूपप्रकारविधायकपदाभावात्। न द्वितीयः, तस्यैवाप्रसिद्धेः। सद्विद्यायां तत्परपदाभावात्। न तृतीयः, गुणस्योपासनाविषयत्वेपि वस्तुनो गुणसत्त्वाद निर्गुणप्राप्तेर्दुर्वचत्वाच्च। अतस्तत्पदार्थान्तर्निविष्टत्वात् गुणानां नागुणोपासनम्। अतश्च प्राप्तिर्निर्गुणस्येति न शंकावकाश इति। वाजिदहरविद्यायामपि छान्दोग्यदहरविद्यागुणोपसंहारः कामाद्यधिकरणसूत्रसिद्धः। अपरिच्छिन्नसुखात्मकभूमोपासनेऽपि, स एकधा भवति त्रिधाभवतीत्यादिना बहुशरीरपरिग्रहसर्वलोककामचाररूपफलश्रवणात् न निर्गुणविषयकत्वम्। फलस्य सर्वत्र साकल्येनानिर्देशेऽपि निवृत्तप्रतिबन्धतया सत्यकामत्वसत्यसंकल्पत्वादिरूपस्वरूपाविर्भावस्य कथनादेव सर्वस्या अपि विद्याया अविशिष्टफलत्वं शिष्टप्रायम्। अतो ब्रह्मणः सगुणत्वेऽपि गुणं विनोपासने तावन्मात्रानुभवोऽप्यस्तु इति शंकाया अपि नावकाशः; निर्गुणविद्याया एवादर्शनात्। प्रतर्दनविद्यायाः हिततमार्थपरत्वात् मुख्यमुक्तिरूपनिर्गुणप्राप्तिसाधनस्य निर्गुणज्ञानस्यैव हिततमत्वात् तत्परत्वमित्यालोच्य, तर्हि तत्रोपासात्रैविध्यादिति तदुपासनस्य त्र्यंशत्वं सूत्रकारोक्तं न घटत इति विभाव्य त्रैविध्यादित्यस्य त्रैविध्यप्रसंगादित्यर्थं प्रथममुक्त्वा, तथासति निर्गुणज्ञान जीवोपासन-प्राणोपासनरूपार्थत्रयपरत्वमेव वक्तव्यम्, निर्गुणज्ञानेऽन्यघटनायोगात् इत्याशयं प्रदर्श्य, यथाश्रुतव्याख्यानमेव पश्चादन्वभाषि। तत्र भामत्यामवतारणम्, "तदेवं स्वमतेन व्याख्याय प्राचां वृत्तिकृतां मतेन व्याचष्टे" इति। अनेन, स्वरूपेण जीवात्मकरूपेण प्राणात्मकरूपेण चोपासनं वृत्तिकृदिष्टमिति सिद्धम्। एवञ्च सगुणोपासनतत्फलपरत्वमेवैतद्विद्याया इति नेयमपि निर्गुणविद्या। भामतीकारस्यैतद्दूषणगमनिका तु प्राप्तानुवादेनानेकविधानं न भवतीति मीमांसावैदुष्यप्रदर्शनमूला 'मनोमयः प्राणशरीरः' इति भाष्योदाहृतशाण्डिल्यविद्यायां कथं विधानमिति विचार्य अनायासेन सुनिरसेति अलमत्र विस्तरेण; तत्र विचारितत्वात्।

एतावता वृत्तिवाक्यद्रमिडभाष्यादीन् स्वाभिमतार्थविरोधिनः सम्यगालक्ष्य क्वचिदुपेक्षणेन क्वचिदन्यथाऽर्थवर्णनेन च स्वाभिमतमर्थं कथञ्चित् सूत्रेषु तन्मूलभूतासु चोपनिषत्सु आरोप्य अद्वैतप्रचारे बद्धश्रद्धा आसन्निति सिद्धम्। ब्रह्मदत्तानुसारि भास्करादिकृतानां दूषणानां दुष्परिहरत्वेऽपि तन्मते ब्रह्मणो वास्तवसर्वहेयास्पदत्वापत्त्या वरं तदपेक्षया मिथ्यावाद इति मतिरासीदर्वाचाम्। वेदान्तवाक्यानि सर्वलोकप्रसिद्धप्रपञ्चभेदमात्रानुवादेनानुपरम्य विलक्षणं सर्वगुणशेवधिं ब्रह्म निरूप्य सर्वस्य सर्वप्रकारेण तादधीन्यमप्राप्तं प्रापयन्तीति यथा शास्त्रसिद्धपदार्थमिथोभेदो न सहसा प्रतिक्षेपमर्हति-तथा ऐक्यमपि तत्र प्रतिपाद्यमानम्। तदत्र गहने स्वयं बुद्धिपरिश्रमेण निर्धार्यैव तृप्तिं प्राप्तुं प्रवृत्तेषु प्रेक्षावत्सु बुद्धिवैविध्यात् प्राचीनोपेक्षणपर्यन्तेऽपि साहसं भवत्येव। एवमेव द्रमिडभाष्याद्यनन्तरमपि अधुनेव मध्यकालेऽपि विविधं प्रस्थानमासीत्। अत्यन्तविशदव्याख्यानविधानव्यग्रश्रीशंकरादिग्रन्थानन्तरं तन्मत एव मायाविद्याविभागवाद-एकानेकजीववादाद्यसंख्याताभिप्रायभेददर्शनेऽनुवर्तमाने गहनग्रन्थमात्रेण कियान् क्षोभः परिह्रियेत। एवंस्थितेऽपि जन्मादिसूत्रादिभि-अनावृत्तिसूत्रान्तैरत्यन्तादरेण जीवपरभेदं प्रतिष्ठापयतो बादरायणस्याशयमन्यथाकृत्य औपनिषदाभेदस्थापनमनुचितमिति परिशीलयद्भिरास्माकपूर्वाचार्यैः प्राचीन एव घण्टापथः पुनः सम्यग्विशोध्य सर्वविपश्चित्सुखसञ्चारानुरूपं व्यस्तारि।

यदि शंक्येत, तदनन्तरभावित्वान्माध्वमतं ततोऽपि श्रेय इति, तत्र वक्तव्यं प्रागेवावाचि, तन्मतमूलपुरुषैर्विशिष्टाद्वैतस्य स्वरूपकालात् प्रागेव लब्धप्रचारस्य सिंहीस्तन्यवत् परदुर्लभस्य स्वदेशे सर्वथैवाज्ञाततया शांकरानौचित्यामर्षणमूलः प्रायो नव एव निरूपणप्रकारः प्राचीनसूत्रव्याख्यानग्रन्थावलोकनवैयग्र्यवैधुर्येण परिजगृह इति। रूपरसादिगुण-तदाश्रय-ज्ञानतदाश्रयादिभेदे सर्वप्रमाणसंप्रदर्शिते सति स्वयं द्वैतिनोऽपि भूत्वा तत्राभेदं किमिति कल्पयन्ति। न हि प्रत्यक्षमभेदग्राह्यस्ति, नीलो घट इति व्यवहारवत् ज्ञानमात्मेति लोकव्यवहारस्तु नास्ति। शास्त्रे तु घ्राता विज्ञातेत्यादिरीत्या ज्ञानज्ञानिभेदः सुस्पष्टः। सूत्राणि च ज्ञोऽत एव, व्यतिरेको गन्धवदित्यादीनि भेददर्शीनि। तत्र सर्वत्र क्लेशनिर्वाहो वा अनुक्तविशेषपदार्थकल्पनं वा किमर्थम्। न च नीलो घट इति व्यवहारमात्रेण नैरूयं घटः, रूपं घटः, रसः फलं, गन्धः पुष्पमिति व्यवहारापादकमैक्यं गुणगुणिनोर्भवितुमर्हति। अत एव रूपं घट इत्यादिव्यवहारविरहादेव प्रत्यक्षं गुणगुणिभेदग्राह्येवेति ज्ञायते। नीलादिशब्दानां विशिष्टबोधकत्वस्वाभाव्यात्तु तथाव्यवहार इति न तेनैक्यसिद्धिः। ब्रह्मतर्कग्रन्थप्रामाण्यात् तथा स्वीकुर्म इति ते ब्रूयुः। स कश्चित् साक्षात् वेदव्यासकृतो ग्रन्थ इत्येतत् कैरप्यनुदाहृतत्वात् न स्वीकारमर्हति। यच्च यावच्च माध्वोक्तम्, तच्च तावच्च तथैव श्लोकात्मना ब्रह्मतर्कनाम्ना प्रदर्श्यते। स चेत् प्रमाणम्, न कस्यापि मतस्य प्रादुर्भावप्रसक्तिः। नूनं तैः संकर्षान्तरवत् ब्रह्ममीमांसास्थाने ब्रह्मतर्कः कश्चिदुद्भावितः। न च तत्र प्रमाणपुरस्सरं सर्वस्थापनम्। तत्रापि, "सर्वान्तर्यामकत्वात्तु सर्वस्यात्मा जनार्दनः, न तु सर्वस्वरूपत्वात्" इति विशिष्टाद्वैतिपक्ष उक्तोऽस्ति। "अतः स्वरूपभेदेपि ह्यात्मैवेदमिति श्रुतिः। वदत्यस्येशतन्त्रत्वादि" इति तार्किकच्छायाऽपि। भेदमात्रसत्त्वे अभेदव्यपदेश औपचारिक इति श्रुतिशैल्यैव निरूप्य अद्वैतखण्डने सुकरेऽपि अद्वैत-

वाक्यानामपि मुख्यार्थत्वं विशिष्टाद्वैतिपक्ष इति विशेषादतिशेते इदं मतमशेषाण्यपि ॥ यस्तु—बोधायनादय एव नासन् विशिष्टाद्वैतिनो मिथ्यावादेन वञ्चयन्ति । तत्तत्सद्भवप्रतिपादकतटस्थवाक्यादिष्वपि न विस्रम्भः कार्य इत्यादिभिः कुतर्कैरद्वैतमेकतः स्थापयितुमिच्छति, अपरतश्च शैवविशिष्टाद्वैतस्य प्राचीनत्वं विष्णुविशिष्टाद्वैतस्य ततः कल्पितत्वं श्रीयामुनाचार्यग्रन्थादौ वाक्यस्य यथेच्छमन्यथाकल्पनादि च मन्यते, तस्य मृषावादिमूर्धन्यस्य विद्वेषानार्जवविवशस्य शिक्षणं यावत् कर्तव्यम्, तावत् विशिष्टाद्वैतसिद्धितदनुबन्धकारपर्यन्तैः कृतमेव । किमेवम् । शैवभाष्यकर्तृत्वेनाभिमतः श्रीकण्ठः भगवतो बादरायणादपि प्रागेव प्रादुर्भूतः भविष्यतः शारीरकस्य शांकरादेश्चाऽऽगामिनो योगसिद्ध्या निरीक्षणेन पाश्चात्यत्वाभिनयेन भाष्यं निरमादिति यथार्थमिति तन्महिमसाक्षात्कारेण विलिख्य ईदृशाः संतुष्यन्तु । यानि पुनरुत्तरदेशे तत्र तत्रोपलभ्यन्तेऽन्यादृशानि वैष्णवमतानि, तानि प्रायो भास्कर-भगवद्रामानुज सिद्धान्तानुसारीणि संकुचितप्रचाराणि भगवद्भक्तिमार्गसमभिवृद्धिलक्ष्यकतया तत्त्वनिरूपणैदम्पर्य-विरहात् नावश्यं विवादपदमानेयानि । वस्तुतो माध्वमतमप्यस्माकं वैष्णवानामतीव संनिकृष्टमिति तद्योजनाभेदौचित्यविवादो नास्माकं मुख्यः । मततारतम्यपरिशीलनप्रवृत्तैश्च—तत्तन्मतोपपादनं तैस्तैः क्रियमाणम् यत् यत् सर्वसंमत शास्त्रवचनं मुख्यमवलम्ब्य, तस्य तस्य तदिष्टार्थपरत्वे स्वारस्यं कियदस्तीत्ये-तावदेव प्रथमं विमृश्यम् । सिद्धे मते तत्प्रमेयाविरोधेन तत्र तत्र प्रदर्श्यमानाः ये वाक्यार्थयोजनाभेदाः, तत्र कतमस्य युक्तत्वमिति विचारस्तावत् केवलं वाक्यार्थसामञ्जस्यनिर्धारणे उपयुज्यते ; न मतस्थापने इति स विचारः पाश्चात्यः, न मुख्यः । तस्मात् प्रतिसूत्रमर्थभेदं तत्तन्मतोक्तमवेक्ष्य तावन्मात्रेण मतयाथात्म्य-निर्वाहो न सुकरः, यदि सोऽर्थः तन्मतासाधारणो न स्यात् । तत् सिद्धम्, सर्ववेदान्तसामरस्य-संपादकत्वातिशयादिदं विशिष्टाद्वैतदर्शनमेव वरिष्ठमिति । यदाहुः श्रीमन्निगमान्तमहादेशिकाः—

"यद्येतं यतिसार्वभौमकथितं विद्यादविद्यातमः—
प्रत्यूषं प्रतितन्त्रमन्तिमयुगे कश्चित् विपश्चित्तमः ।
तत्रैकत्र झटित्युपैति विलयं तत्तन्मतस्थापना—
हेवाकप्रथमान हैतुककथाकल्लोलकोलाहलः ॥"

इति । न केवलं वेदान्तवाक्यानां सर्वेषां सस्मृतीतिहासपुराणानामैककण्ठ्यं भवतीत्येतावन्मात्रात्, किं तर्हि, तदुक्तरीत्या, "दृष्टेऽपह्नुत्यभावादनुमितिविषये लाघवस्यानपायात् शास्त्रेणैवावसेये विमतिविरहिते नास्तिकत्वप्रहाणादपि हेतोः नाथोपज्ञं प्रवृत्तं बहुभिरुपचितं यामुनेयप्रबन्धैः, त्रातं सम्यग्यतीन्द्रैः अखिलतमः-कर्शनमिदमेव दर्शनमिति । परमतेषु प्रत्यक्षानुमानविरोधः परस्तादवसरान्तरे विशदं निरूपणीय इत्यलमत्र ।

इति यतिराजसूक्तिरसमद्भुतवेदशिरो—
गुरुवरदिव्यसूक्तिबलक्लृप्तविवेकवशात् ।
परमतनिष्ठदोषगणदर्श्यनुभावयति
स्वयमनुभूय वात्स्यरघुवीरकृती सहृदः ॥

## पूर्वाचार्यवचनानि उदाहृतानि

भगवद्रामानुजोदाहृतानि च वृत्ति-वाक्य-द्रमिडभाष्यादिवचनानि यथावदावेदयतां तदाहृता सिद्धान्तसरणिः सुगमा भवितुमर्हति। तदत्र तानि वचनान्यनुवाचयामः— तथा हि वेदार्थसंग्रहे—

वाक्यगतं वाक्यम्, 'युक्तं तद्गुणकोपासनात्' इति ([1] पु. १४६ )। तत्र द्रमिडाचार्य-व्याख्या, 'यद्यपि सच्चितो न निर्भुग्नदैवतं गुणगणं मनसाऽनुधावेत्—तथाप्यन्तर्गुणामेव देवतां भजत इति तत्रापि सगुणैव देवता प्राप्यते' इति।

वाक्यम्, 'तस्मिन् यदन्तरिति कामव्यपदेशः' इति (१८२. पु.)।

वाक्यम्, 'आत्मेत्येव तु गृह्णीयात् सर्वस्य तन्निष्पत्तेः' (१८७. पु.) इति।

अन्यत्र द्रमिडाचार्यभाष्यम्, 'फलसंविभन्त्सया हि कर्मभिरात्मानं पिप्रीषन्ति। स प्रीतोऽलं फलायेति शास्त्रमर्यादा' इति (२२३. पु.)। श्रीभाष्येऽपि (जि.) 252 पुटे।

अन्यत्र च (द्र. भा.) 'तस्याज्ञया धावति वायुः, नद्यः स्रवन्ति, तेन च कृतसीमानो जलाशयाः समदा इव मेषविसर्पितं कुर्वन्ति।' (मेषविसर्पितम्-उज्जृम्भणम्) (२२९. पु.)

वाक्यम्, 'आदित्यक्षितं वा श्रीमत्त्वात्' इति। (२४६)

वाक्यम्, 'हिरण्मयः पुरुषो दृश्यत इति प्राज्ञः सर्वान्तरः स्यात् लोककामेशोपदेशात्, तथोदयात् पाप्मनाम्' इति (२४२)।

वाक्यम्, 'स्याद् रूपं कृतकमनुग्रहार्थं तच्चेतसाम्, ऐश्वर्यात्। रूपं वाऽतीन्द्रियमन्तःकरण-प्रत्यक्षं तन्निर्देशात्' इति (२५० पु.)।

तत्र द्रमिडभाष्यम्, "अञ्जसैव विश्वसृजो रूपम्। तत्तु न चक्षुषा ग्राह्यम्। मनसा तु अकलुषेण साधनान्तरवता गृह्यते। 'न चक्षुषा गृह्यते, नापि वाचा। मनसा तु विशुद्धेन' इति श्रुतेः। न ह्यरूपाया देवताया रूपमुपदिश्यते। यथाभूतवादि हि शास्त्रम्। 'माहारजनं वासः', वेदाहमेतं पुरुषं महान्तमादित्यवर्णं तमसः परस्तात्' इति प्रकरणान्तरनिर्देशाश्च साक्षिणः" इति।

श्रीभाष्ये "भगवद्बोधायनकृतां विस्तीर्णां ब्रह्मसूत्रवृत्तिं पूर्वाचार्याः संचिक्षिपुः" इत्युपक्रमे निर्दिष्टग्रन्थतस्तत्रतत्र कतिपयानि वाक्यानि उदाहारिषत। तत्रोपात्तानि वृत्तिवाक्यादि-ग्रन्थवचनानि यथा—

पु-9 तदाह वृत्तिकारः, "वृत्तात् कर्माधिगमादनन्तरं ब्रह्मविविदिषा", "संहितमेतच्छारीरकं जैमिनीयेन षोडशलक्षणेनेति शास्त्रैकत्वसिद्धिः" [इदं वृत्तिग्रन्थारम्भे]

18 वाक्यकारेण च--... "वेदनमुपासनं स्यात् तद्विषये श्रवणात्। "सकृत्प्रत्ययं कुर्यात् शब्दार्थस्य कृतत्वात् प्रयाजादिवत्" (शांकरेऽपि. 4-1-1)। "सिद्धं तूपासनशब्दात्", "उपासनं स्यात् ध्रुवानुस्मृतिः संभवात् निर्वचनाच्च"

19 वाक्यकारश्च, "तल्लब्धिर्विवेकविमोकाभ्यासक्रियाकल्याणानवसादानुद्धर्षेभ्यः संभवा-न्निर्वचनाच्च"। "जात्याश्रयनिमित्तादुष्टात् अन्नात् कायशुद्धिर्विवेकः।"

---

[1] पुटसंख्यानिर्देशः पुष्करस्वामिमुद्रितकोशानुसारात्।

20 "विमोकः कामानभिष्वङ्गः"। "आरम्बणसंशीलनं पुनःपुनरभ्यासः"। "पञ्चमहायज्ञाद्यनुष्ठानं शक्तितः क्रिया।", सत्यार्जवदयादानाहिंसानभिध्याः कल्याणानि।", "देशकालवैगुण्यात् शोकवस्त्वाद्यनुस्मृतेश्च तज्जं दैन्यमभास्वरत्वं मनसोऽवसादः।", "तद्विपर्ययजा तुष्टिरुद्धर्षः।" [अत्र निर्वचनोदाहरणान्यपि वाक्यभाष्यदर्शितान्यनूदितानि।]

28 तथा च वाक्यकारः, "आत्मेत्येव तु गृह्णीयात् सर्वस्य तन्निष्पत्तेः"।

249 पुराणघट्टे च वृत्तिः—'जगद्व्यापारवर्जं समानो ज्योतिषा' इति। [इदं वृत्तिग्रन्थान्ते?]। द्रमिडभाष्यम्— देवतासायुज्यादशरीरस्यापि देवतावत् सर्वार्थसिद्धिः स्यात् इति।

1-1-10 तदाह वृत्तिकारः "सता सोम्य तदा संपन्नो भवतीति संपत्त्यसंपत्तिभ्यामेतदध्यवसीयते। प्राज्ञेनात्मना संपरिष्वक्त इति चाह।"

1-2-1 यथाह वृत्तिकारः--"सर्वं खल्विति सर्वात्मा ब्रह्मेशः।"

1-3-7 तदाह वृत्तिकारः "भूमा त्वेवेति भूमा ब्रह्म; नामादिपरम्परया आत्मन ऊर्ध्वमुपदेशात्।"

1-3-32 तदाह वृत्तिकारः, "अस्ति हि मध्वादिषु संभवः, ब्रह्मण एव सर्वत्र निचाय्यत्वात्"

2-1-14 यथाऽऽह द्रमिडभाष्यकारः, "यथा लोके राजा प्रचुरदन्दशूके घोरेऽनर्थसंकटेऽपि प्रदेशे वर्तमानो व्यजनाद्यवधूतदेहो दोषैर्न स्पृश्यते, अभिप्रेतांश्च लोकान् परिपालयति, भोगांश्च गन्धादीन् अविश्वजनोपभोग्यान् धारयति—तथाऽसौ लोकेश्वरो भ्रमत्स्वसामर्थ्यचामरो दोषैर्न-स्पृश्यते। रक्षति च लोकान् ब्रह्मलोकादीन्, भोगांश्चाविश्वजनोपभोग्यान् धारयति।"

2-2-3 तथाऽऽह द्रमिडाचार्यः, "फलसंविभक्त्सया हि कर्मभिरात्मानं पिप्रीषन्ति, स प्रीतोऽलं फलायेति शास्त्रमर्यादा।"

श्रुतप्रकाशिकायामुपात्तानि वचनानि—

द्रमिडभाष्यम्—"नमः प्रवरगुणैकास्पदाय स्थिरत्रसकुलबीजकुम्भभूताय भुवनकोशस्य गोप्त्रे ब्रह्मणे। नमो जैमिनये वेदरहस्यसम्पुटनिगूढविष्फारयित्रे न्यायप्रज्वलितचेतसे। नमोऽस्त्वाचार्येभ्यः"[1]

वाक्यम्, "उपनिपण्णत्वाद्वा उपनिषत्।" तत्र द्रमिडभाष्यम्—"गहने हीयं विद्या संनिविष्टा"। तस्य च वामलटीका—"गहने ब्रह्मणि उपनिषण्णा।"

1-1-21 अन्तरधिकरणे—"हिरण्मय इति रूपसामान्यात् चन्द्रमुखवत्" इति वाक्यकारः।

तत्रैव कप्यासश्रुत्यर्थपरवाक्यप्रस्तावे, अस्य वाक्यस्य वाक्यकारेण षडयर्थाः......उक्ताः। तत्र यस्य पूर्वपक्षत्वं तत्स्वभावादेवावगतम्......अर्थान्तरत्रयं तूपपन्नम्......तथाह वाक्यकारः, "आदित्यक्षिप्तं वा श्रीमत्त्वात्" इति।

तत्रैव सिद्धान्ते अपहतपाप्मशब्दार्थवर्णने—"स्युः पाप्मानः कालजरामृत्युशोकादयः संख्यातत्वात्" इति वाक्यकारवचः।

---

1 ग्रन्थानुपलम्भेऽपि यथा, 'यो वेत्ति युगपत् सर्वं प्रत्यक्षेण सदा स्वतः' इति न्यायतत्त्वमंगलश्लोक इति पारम्परिकप्रसिद्धिः, तद्वदत्रापि द्रमिडभाष्यमंगलग्रन्थत्वप्रसिद्धिः। अस्य मीमांसान्यायकोशगतत्वे वक्तव्यं विशिष्टाद्वैतसिद्धयनुबन्धकारैरुक्तं द्रष्टव्यम्।

## मध्यकालपरिस्थितिः

उदाहृतानां वृत्ति-वाक्य-द्रमिडभाष्यवचनानामद्वैतप्रतिकूलत्वम् अस्मत्पक्षानुकूलत्वञ्च स्पष्टम् । ब्रह्मनन्दिकृतवाक्यग्रन्थव्याख्यातृद्रमिडाचार्यानन्तरः गम्भीरन्यायसागरभाषी भगवान् श्रीवत्सांकमिश्र इति श्रीभगवद्यामुनमुनिविरचितादात्मसिद्धिग्रन्थादवसीयते । अथ तत्राचार्यटङ्क-भर्तृप्रपञ्च-भर्तृहरि-ब्रह्मदत्ताद-योऽपि श्रीशङ्कराचार्यतः प्राच्या निर्दिष्टाः । तत्र भर्तृप्रपञ्चस्याद्वैतित्वं प्रकरणपञ्चिकातो (8. प्र.) ज्ञायते । परमेतद्व्याख्यानं शांकरोपनिषद्भाष्ये (बृ. 3-4-2) खण्डितमस्ति । भर्तृमित्रं श्लोकवार्तिके (1-6-130) कुमारिलभट्टो दूषयामास । भर्तृहरिः स्फोटरूपशब्दाद्वैती प्रसिद्धः । ब्रह्मदत्तो भेदाभेदवादी जीवानां स्वरूपतः सृष्टिसंहृतिविषयत्वमाहेति श्रीदेशिकचरणानां ग्रन्थतः परमतभङ्गात् सर्वार्थसिद्धेश्च (जी. 16) ज्ञायत इति स यादवप्रकाशतुल्यः । सर्वमिदं सिद्धित्रयटिप्पणपरिशिष्टे अस्माभिरुट्टङ्कितमेव । आचार्यटङ्को ब्रह्मनन्दी चैक इति आस्माकप्राच्यग्रन्थावगम्यम् । अन्ये गुहदेव-कपर्दि-भारुचिप्रभृतयोऽपि वेदार्थसंग्रहे व्यपदिष्टाः । इमे सर्वे साक्षात् ब्रह्मसूत्रव्याख्यातार इति न ब्रूमः । वेदस्य, उपनिषदः, ब्रह्मसूत्रस्य, अन्यस्य वा व्याख्यारूपं वा स्वतन्त्रं वा यथायथं ग्रन्थं ग्रथितवन्त इमे अद्वैतप्रतिकूला इत्येतावदिह ग्राह्यम् । तदुक्तं सर्वं तथैव ग्राह्यमित्यपि नेष्यते, सितासितग्रन्थकृतां वचनस्य कार्त्स्न्येन ग्रहणायोगात् । आप्ततमानामादरभाषितान्यपि क्वचित् प्रौढ्या, परपक्षान्वारोहेण, विवक्षितप्रधानार्थपरिर-क्षणैदम्पर्येण, तुष्यतुदुर्जन इत्यभ्युपगमवादेन वा प्रवृत्तानि तेषामाशयमन्यतोऽवगम्य उपेक्षणीययथा-श्रुतार्थानि भवन्ति, किमुतान्येषाम् । एवमीषदंशान्यथाकरणस्य संभावितत्वेऽपि भूयोंशपरिग्राह्यता-प्रयुक्तमाप्ततमत्वं न विहन्यते । अत एव द्रमिडाचार्यादिवाक्यानि अनेकानि प्रदर्श्य स्वपक्षानुकूल्यं श्रीभाष्यकारैः प्रतिबोध्यते । अद्वैतिनः तद्विरोधपरिजिहीर्षया कतिपयवाक्यान्यथानयने वृथैव प्रयस्यन्तीत्यप्यावेद्यते ।

आर्जवातिशयादेव श्रीभगवद्यामुनमुनयः आगमप्रामाण्ये, "नन्वत्रभवतां भाष्यकाराणां विरुद्धां-शाप्रामाण्याभिधानं कथमिव" इति शंकामुत्थाप्य, "तत् गम्भीरन्यायसागरमवगाढुमपरिबृढानां कोमलमनसां वेदानादरो मा भूदित्येवम्परम्, यथैव हि भगवतो जैमिनेः कर्मणः फलोपन्यासः कर्मश्रद्धासंवर्धनाय" इति प्रतिव्यधुः । सति वेदविरोधे अप्रामाण्यमेवेति न्यायः स्वात्यन्ताभिमतपाञ्चरात्रेऽपि प्रसजन् न परित्यज्यते, किमुत परेषु तन्त्रेष्विति शास्त्रान्तरनिरसनैदम्पर्यमेवानया भंग्या भाष्यकारैराविष्क्रियते ; न पुनः पाञ्च-रात्रेऽप्यवश्यं विरोधोऽस्तीति स्थापने नैर्भर्यम् । विरोधो नास्तीति निरूपणे निष्पन्नेऽपि उपेक्षणीयता-मृजुबुद्धिर्नाऽऽस्थास्यत इति पादसंगतिलोभिनः प्रति कृत्वाचिन्तया कथनस्याशयः । किं बहुना । शांकरे पाञ्चरात्रस्यातिस्वल्पांशो स्वीकृतमप्रामाण्यमपि कल्पतरुकारो न सहत इति परमार्थभूषणे व्यक्तमुपपादित-मस्माभिः । नन्विदं पाञ्चरात्रविषयं भाष्यं सूत्रव्याख्याने, किंवा छान्दोग्यव्याख्यानभूतवाक्यव्याख्याने इति चेत्—किमनेन विचारेण । आत्मसिद्धिवाक्यस्वारस्यं भोक्त्रापत्त्यधिकरणश्रीभाष्योपात्त-तद्व्याख्यानद्र-मिडाचार्यसूक्तिरीतिं प्रकृतपाञ्चरात्रविचारञ्च पश्यतां सूत्रव्याख्यानमपि वाक्यव्याख्यानवत् स्थितमिति

प्रतीयते । वाक्यव्याख्यानेऽपि, सति प्रसंगे सूत्रतदाशयवर्णनं नासंभावितम् । अर्वाचां नामानि ग्रन्थांश्च यथावद् गणयितुमप्यपारयतामतिप्राचीनविषये भवन् निर्णयः कियान् भविष्यति । तदुक्तित्वं तु नापलप्यम् ।

अर्वाग्विषयेऽप्यनिर्णये इदमेकमुदाहरणम्—संक्षेपशारीरककारः सर्वज्ञात्मा देवेश्वरशिष्य इति तत एव ग्रन्थादवगम्यते । तत्र मधुसूदनसरस्वत्या लिखितम्—देवेश्वरः सुरेश्वराचार्यः । सुरपदस्थाने देवशब्दप्रयोगः साक्षाद् गुरुनामाग्रहणायेति । एवं सर्वज्ञात्मनः सुरेश्वराचार्यशिष्यत्वमेतदालोचितं सर्वज्ञात्ममुनिप्रणीतप्रमाणलक्षणग्रन्थविरुद्धम् । तत्र तालकोशे श्रेष्ठानन्दशिष्य-देवानन्दशिष्यः देवेश्वरः सर्वज्ञात्मनो गुरुरिति विशदं निर्दिष्टमस्ति । अतो देवेश्वरसुरेश्वरभेदः सुस्पष्टः । स हि साक्षात् श्रीशंकराचार्यशिष्यः । इदं विमर्शका विलिखन्ति । अतोऽस्पष्टार्थविषये वृथोत्प्रेक्षणं प्रायोऽन्यथाग्रहण एव पर्यवस्यतीत्यलम् ।

एवं वृत्तिवाक्यभाष्यादिषु यथावत् वेदान्तशारीरकार्थसंरक्षकेषु सत्स्वपि तेषां ग्रन्थानां सामग्र्येणानुपलम्भात् पश्चात्तनानां भर्तृप्रपञ्चादीनां परस्परविरुद्धव्याहारदर्शनात् अभेदवाक्यार्थस्य ब्रह्मनिर्दोषत्वस्य च निर्वाहप्रकारनिष्कर्षं ततः स्वयमप्रतिलभ्य, गौडपादाचार्यमूलप्राप्तं जगन्मिथ्यात्ववादमेव समाधायकं स्वयमनुचिन्त्य, स्वाभीष्टमद्वैतसिद्धान्तमनुरुध्य सर्वं व्याख्यातव्यमिति निर्धार्य श्रीशंकराचार्यैर्यतितम् । एवं पाञ्चरात्रोक्तपञ्चकालिकप्रक्रियादिषु विस्रम्भं वहन्तो वैष्णवदेवालयादिसेवापरा अपि ते न वैष्णवेषु सम्प्रदायार्थाभिज्ञेषु स्वपक्षप्रचारं व्यधुः ; नाप्यपारयन् त्रिदण्डोपवीतादिसंन्यासलक्षणादिवैकल्यनिरीक्षणेनानुपसन्नेषु अवावदूकेष्वप्यपरित्यक्तप्राच्यपथेषु तेषु आत्मनो वैष्णवत्वेऽप्याशयमाविष्कर्तुम् । किंतु कौमारिलाद्यर्वाचीनमीमांसकमताभिनिविष्टानामुपेक्षितोपनिषदां तदर्थचिन्ताविमुखानां मण्डनमिश्रादीनां सविधमेत्य तेषां वेदान्तपरिचयविरहात् अद्भुतोपन्यासवागुरान्तर्यन्त्रणे समापतिते तादृशबहुविद्वज्जनविजयेन अनायासेनात्ममतप्रचारमकुर्वन् । स्वयं नारायणस्य परदेवतात्वं परमशिवस्याकारणत्वं ततो निकर्षञ्च स्वग्रन्थेषु स्फुटं कथयन्तोऽपि क्षुद्रफलार्थिकाम्यकर्मरत-देवतान्तरसंपर्कातिशयानुरूपाचारवैदिकबृन्दपरिवृततया तदनुगुणविहाराहारव्यवहारविदूरतामात्मनि स्थापयितुं न शेकुः । अथापि सगुणब्रह्मप्रवणपुरुषवत् अनुष्ठानादौ सत्यपि अन्तर्निर्गुणतत्त्वविषयो यथा निगूढ आशयः, तथा बहुदेवतान्तरव्यासक्तजनसमुदायसमयाचारसंपातेऽपि सर्वातिशायी विष्णुरिति धारणा तावत् अप्रकम्प्यैव हृदयकुहरे यथावदवर्तिष्ट । व्यासादिग्रन्थपरिश्रमफलं ह्येतत् ।

भगवान् हि बादरायणः ब्रह्मजिज्ञासाप्रतिज्ञानेन उपनिषत्परमार्थो ब्रह्मेति प्रतिबोध्य तत्स्वरूपविवेकस्तैत्तिरीयत एव यथावद्भवतीति विमृश्य तैत्तिरीयनिर्दिष्टं जगत्कारणत्वं लक्षणं प्रदर्श्य, कारणत्वमिदं कार्यब्रह्मत्वेन प्रसिद्धे रुद्रादिसर्वव्यष्टिस्रष्टरि हिरण्यगर्भेऽप्यसंभावितनिरतिशयानन्दसागरो यः, अर्थात् नारायणः, तस्मिन्नेवेति विष्णुपारम्यवादितया विश्वप्रसिद्धेन भृगुणा आनन्दो ब्रह्मेति अवधारितमिति सूचयित्वा, सदादिवाक्यानां सामान्यवाचिनां तस्मिन् नारायण एव विश्रम इति, एको हवै नारायण आसीदिति गतिसामान्यादपि सुग्रहमित्यवबोध्य, अतएव तैत्तिरीयनारायणानुवाकेन सब्रह्मा स शिव इति सर्वान्तर्यामी नारायण एव सर्वपरविद्योपास्य इत्यपि ज्ञापितप्रायमिति मत्वा, सोऽयमानन्दमयः पुण्डरीकाक्ष एवेत्यनन्तरेण अन्तरधिकरणेन अप्राकृतदिव्यमङ्गलविग्रहविशिष्टतया तमुपदिश्य, एवंरीत्या

विमर्शे क्रियमाणे ब्रह्मसूत्राणां नारायणपारम्यपरत्वं निराबाधमिति निश्चिन्वानोऽपि आपातग्राहिणामत्र डोलायमानमानसता मा भूदिति हितकाम्यया महाभारते, 'तत्त्वं जिज्ञासमानानां हेतुभिः सर्वतोमुखैः। तत्त्वमेको महायोगी हरिर्नारायणः परः' इति हरिमेव ब्रह्ममीमांसाप्रतिपाद्यत्वेन प्रतिपाद्य, शङ्कुसुकचित्त-स्थैर्यसंपादनाय, 'सत्यं सत्यं पुनः सत्यमुद्धृत्य भुजमुच्यते। वेदाच्छास्त्रं परं नास्ति न दैवं केशवात् परम्' इति वदन् वेदबाह्यागमानुसार-शिवजिनादिपारम्यग्रहादिकं परास। महाभारतानन्तरं विरचिते च श्रीभागवते शिवादीनां भागवतत्वं भगवतो नारायणस्य पारम्यञ्च स्थूणानिखननन्यायेन निश्चलप्रतिष्ठितम-कार्षीत्। श्रीविष्णुमुख्यावतारभूतश्रीरामश्रीकृष्णमहिमवर्णनेदम्पराभ्यामितिहासाभ्यां विष्णुपुराणादिभिश्च विशयलेशस्याप्यवकाशं विनैव नारायणपारम्यावगमात्, आलोड्य सर्वशास्त्राणि विचार्य च पुनः पुनः ध्येयो नारायणः सदेति बादरायणनिष्पादितमेव सर्वेषां सात्त्विकानां सुनिष्पन्नम्।

एवं स्थिते वैखानसपाञ्चरात्रप्रामाण्यप्रतिबोधेन प्राचः कालादेव परश्शतानां विष्णुदेवालयानां प्रादुर्भावतः, "कलौ खलु भविष्यन्ति नारायणपरायणाः। क्वचित् क्वचिन्महाभागा द्रमिडेषु च भूरिशः। ताम्रपर्णी नदी यत्र कृतमाला पयस्विनी। कावेरी च महाभागा प्रतीची च महानदी। ये पिबन्ति जलं तासां मनुजा मनुजेश्वर। प्रायो भक्ता भगवति वासुदेवेऽमलाशयाः' इति श्रीभागवतोक्तरीत्या उत्तरोत्तरश्रीवैष्णवसमृद्ध्या च विष्णुपारम्यं सुरक्षितमेवासीत्। 'कामैस्तैस्तैर्हृतज्ञानाः प्रपद्यन्तेऽन्यदेवताः' इति रीत्या क्षुद्रफलक्षिप्रप्राप्तिकामनातुरपृथग्जनभूयस्तया देवतान्तरेषु प्रतिपत्तौ तत्रतत्र प्रत्यक्ष्यमाणायामपि प्रतिबुद्धाः यथावस्थितं पारमैकान्त्यं पृथिव्यां यावच्छक्ति प्रचारपथमानीतवन्त एवाऽऽसन्। नित्यविभूतिवत् लीलाविभूतिं कर्तुं को नु प्रभविष्णुः। मोहाद्वा कामाद्वा भयाद्वा संघर्षाद्वा जनानां परमार्थतो भ्रंशः साहजिकः। एवमपि यथायथं संप्रदायानुवृत्तिरपि भवति सार्वदिकी। अतो भवभयतप्तजनभागधेयेन—

शठमर्षणवंश्येन शठजित्सूर्यनुग्रहात्।
श्रुतिकोपविदूरार्थस्थापनं सम्यगाहितम्॥

## नाथमुनिवंशः

पञ्चाशतो वत्सरेभ्यः प्राङ्मुद्रिते प्राच्यग्रन्थमूलके यामुनवैभवे शठमर्षणवंशः चतुर्मुख-पुत्राङ्गिरःप्रभृति अनुक्रमेणादर्शि। जगति शिशोरज्ञानापादकशठाख्यवायुविषये जातं कोपं न्यरुणदिति शठमर्षण इति नामेत्याहुः। एवमन्येभ्योऽपि शठेभ्यः अपकृतवद्भ्यो नाक्रुध्यदिति तत्सहनशीलत्वात् शठमर्षण इत्यप्यस्तु। तत्र चतुर्वेदमुनेः पुत्रो ब्रह्मनन्दी कश्चित्, 'ब्रह्मनन्दिमुनिं वन्दे श्रीशेषाचलवासिनम्' इति निर्दिष्टोऽस्ति। स किं छान्दोग्यवाक्यकारो ब्रह्मनन्दी अन्यो वेति न विद्मः। पारम्पर्यप्राप्तोऽस्य श्रीशेषाचलवासः। पूर्वं [1]ब्रह्मनन्दी पतसिद्धान्ताचार्य आसीत्। ततो गते गणरात्रे वकुलभूषणमुनिराचार्य आसीदिति संप्रदायपरिशुद्धौ श्रीदेशिकचरणाः। एतत्पौत्रस्य पद्माक्षमुनेः श्रीशैले स्वस्थाने भूतसरोवेतालोख्यदिव्यसूरित्रयसमागमोऽप्यत्र यामुनवैभव ग्रन्थे निरदेशि। अथ कुम्भघोणे भक्तिसारदिव्यसूरिसमागमश्च। गोमन्तपर्वतापर-नामधेये श्रीनारायणपुरपर्वते श्रीकृष्णप्रसादेन भक्तियोगशीघ्रनिष्पत्तिहेतवे मन्त्रविशेषः नवनीत-

कृष्णविग्रहध्यानेन प्राप्तौ । तदधीने योगिश्रैष्ठ्ये सति कृष्णानुग्रहादेव श्रेष्ठकुलम् शौट्टैक्कुलम् इति बिरुदलाभः । नूनमेतमारभ्य योगरहस्यमेतत्कुलेऽवर्तिष्ट । नाथमुनिशिष्येण श्रीकुरुकेशतातेन योगनिष्णातेन योगकाले योगसाक्षात्क्रियमाणभगवद्रूपस्य झटित्यन्यत्र मुखपरिवर्तनमापतितमवेक्ष्य किमत्र शौट्टैक्कुलभवाः समागता इति कृतः शौट्टैपदप्रयोगोऽपि योगप्रभावनिबन्धना सा प्रथेति गमयेत् । श्रीभगवद्यामुनमुनिप्रभृति भक्तियोगप्रकारस्यानुवृत्तिरापेदे । प्रागुक्तात् पश्चाक्षात् त्रिषु पुरुषेष्वतिगतेषु ईश्वरमुनेः प्रादुर्भावः, यतः श्रीरङ्गादिदिव्यदेशयात्रापरात् अनुष्ठितसर्वयज्ञात् श्रीभगवन्नाथमुनिराविर्बभूव ।

अस्य रङ्गनाथ इति श्रीरङ्गसेवापरपितृकृतं पूर्णं नामधेयम्; एकदेशेन व्यवहार इति स्तोत्रभाष्ये श्रीदेशिकचरणा अप्यभाषिषत । जगति ख्यातयशसां शुचीनां शिष्टानां गुणपुरुषतत्त्वस्थितिविदां निसर्गादेव नारायणचरणकमलैकान्तमानसां महति वंशे लब्धजन्मनो नाथमुनेः श्रीवैष्णवसंप्रदायप्राप्तिराजानसिद्धैवासीत् । वैदुष्यातिशयादेष न्यायतत्त्वग्रन्थनिर्माणेन शांकरान्तसर्वमतनिरासेन परमार्थमतं प्रतिष्ठापयामास । स तदीययोगरहस्यग्रन्थवत् न झटित्यलुप्यत; यतो भगवद्यामुनमुनिना प्रौढानां विदुषां तदर्थवैशद्यविधित्सया सुबहुविचारात्मकं सिद्धित्रयं तत्प्रकरणग्रन्थत्वेन प्राणायि । श्रीनाथमुनिस्थितिकालः (क्रि·प) नवमशतकमध्ये । श्रीयामुनमुनेश्च दशमशतके स्थितिं परिशीलयन्ति । उत्तरां दिशं प्राप्य बृन्दावने श्रीकृष्णरूपस्य यमुनातीरदिव्यालये सेवां चिरं प्राप्तवतः स्वस्थानं वीरनारायणपुरं प्रति भगवन्नियोगेन निवर्तनम्, "आरावमुदे" इति श्रीवकुलभूषणदिव्यसूरिगाथादशकस्य यदृच्छया श्रवणम्, ततः सहस्रसंख्याश्रवणेन पूर्णग्रन्थलाभाय श्रीकुरुकापुरीगमनम्, तल्लाभमार्गस्य तत्र मधुरकविवंश्यतोऽवगमः, मधुरकविदिव्यप्रबन्धपारायणध्यानप्रसन्नभगवत्प्रेरित श्रीवकुलभूषणयोगिसंदर्शनम्, तदुपदेशेन सर्वदिव्यप्रबन्धसाक्षात्कारवत् प्रपत्त्याद्युपदेशस्यापि लाभ इत्यादि यथागुरुपरम्पराग्रन्थोक्तमनुसधेयम् ।

एवञ्च मतान्तराणामिवास्मत्संप्रदायस्य न संसारमग्नपुरुषैकोपदेशमूलता, किंतु निर्दोषनिरतिशयज्ञाननित्यसूरिनिरवग्रहानुग्रहमूलतेति विशेषोऽपि विज्ञातव्यः । श्रीमद्यामुनाचार्याश्च बाल्य एव काव्येषु कोमलधियः तर्केषु कर्कशधियः मीमांसापूर्वभागभाट्टप्राभाकरपद्धतियुग्मपारदृश्वानः सर्वतन्त्रस्वतन्त्राः प्रतिवादिवारणप्रकटाटोपविपाटनपटिमप्राग्भारप्रख्यातप्रचण्डपञ्चवक्त्राः सर्वविद्द्विजयसंतुष्टसपत्नीकचोलाधिराजसमर्पितार्धराज्यसंपत्तिविहितविशिष्टधर्माः श्रीमन्नाथमुनिप्रशिष्यश्रीराममिश्रोपदिष्टमन्त्रगीताशारीरकादिसाम्प्रदायिकार्थसाराः अष्टौ मुनयोऽभूवन्; ग्रन्थांश्चाररचन् ।

## भगवद्रामानुजचरितम्

एषामेव शिष्यस्य पौत्रस्य च श्रीशेषशैले श्रीनिवाससेवापरस्य श्रीशैलपूर्णस्य सोदर्यां भूदेव्यां हरितकुलतिलकवीरराघवसर्वक्रतुयाजितनूजस्य श्रीकेशवसोमयाजिनः पुत्ररत्नरूपेणावतीर्णाः श्रीमद्यामुनमुनिपरिपूर्णकटाक्षपात्रभूताः तच्छिष्यभूतमहापूर्ण-श्रीशैलपूर्ण-गोष्ठीपूर्ण-मालाधरगुरुमुखानेकमहनीयसेवासंप्राप्तसर्वार्थाः ततःप्रागेव स्वसहजवैदुष्यविधूतप्राच्यनव्यसर्वपरदर्शनाः श्रीभगवद्रामानुजमुनय इत्येतादृशवृत्तान्तपरिशीलने, मिथस्संबन्धसमेधमानश्रीवैष्णवसमृद्धिकुलजातं शांकराद्यर्वाचीनक्षोभानास्पदं प्राच्यार्थसंप्रदायस्य कथञ्चित् परिपालकञ्च सत् दुर्लभप्राच्यग्रन्थान्वेषणवास्तवार्थप्रचारणबद्धश्रद्धमप्यासीदित्यवगम्यते[1] । एषां चरितस्य चायं संग्रहः—

---

[1] सम्प्रदायिकार्थोपदेशपारम्पर्येऽयं श्लोकोऽपि प्रमाणम्—"आचार्यात् यामुनेयादधिगतनिगमान्तार्थजातं प्रपत्तिञ्चोपादिक्षत् रहस्यान्यपि यतिपतये किञ्च तद्रक्षणार्थम् । चोलेन्द्रं प्राप्य चोक्त्वा सदसि, परपुमान् श्रीपतिर्हेति पीडां शारीरीं तत्कृताञ्चाप्यसहत, मनत्रै तं महापूर्णमार्यम् ॥"

श्रीभूकेशवसोमयाजितनयः श्रीभूतपुर्युद्भवो
हारीतान्वयदुग्धवारिधिविधुः शेषस्य मूर्तिः परा ।
गायत्रीं श्रुति-संप्रदायसरणीः प्राप्यैव यस्तातता
व्याख्यां यादवमुख्ययोगिकलितां ज्ञातुं तदन्तेऽवसत् ॥ १ ॥

काञ्च्यां हस्तिगिरिश्रितेन महता श्रीयामुनेयेन यो
दृष्टो यादवशिष्यगोष्ठ्युपगतः प्रीत्याऽस्मदीयोऽस्त्विति ।
यस्यार्थे शरणं प्रपद्य वरदं तस्मिन् स्वदेशं गते
योऽसौ यादवनीत ऐच्छदनघो गङ्गादितीर्थाटनम् ॥ २ ॥

कप्यासश्रुतिमुख्यचिन्तनविधौ भग्नो गुरुः स्वात्मनेऽ-
निष्टं चिन्तयतीति सोदरमुखाद् विज्ञाय यात्रां त्यजन् ।
एकाकी विपिने विचिन्त्य वरदं तस्थौ य एष क्षणात्
कैराताकृतिदिव्यदम्पतिवशः काञ्चीं समासादयत् ॥ ३ ॥

तीर्थापेक्षिकिरातरूपकमलाकान्तोपचारं चिरं
कुर्वन् यामुनयोगिवर्यकलिते स्तोत्रे कदाचित् श्रुते ।
तत्सेवात्वरितोऽपि यो यतिवरश्रीदेहमात्रेक्षणात्
दूनोऽभूदथ तन्मनोरथमहापूर्त्यै च यत्नं व्यधात् ॥ ४ ॥

काञ्चीपूर्णमुखादवेत्य भगवद्भावं स्वयं प्रस्थितः
मध्ये यो मधुरान्तके श्रितमहापूर्णाङ्घ्रिपद्मोऽर्थवित् ।
आज्ञां तस्य वतंसयन् अधिगतः श्रीयामुनेयाश्रितान्
गोष्ठीपूर्णमुखान् परानपि महाप्राज्ञो बभौ भूतले ॥ ५ ॥

श्रीकूरेशसहाय एव सहसा काश्मीरदेशं गतः
यो बोधायनवृत्तिमद्भुतरसाम् आन्तं निरीक्ष्याऽऽगतः ।
वेदार्थं च समग्रहीत् बहुविधप्राच्योक्तिरक्षी व्यधात्
श्रीभाष्यं[1] त्वथ दीपसारसहितं भाष्यञ्च गीताश्रितम् ॥ ६ ॥

---

[1] काश्मीरदेशं गत्वा बोधायनवृत्तिमवेक्ष्य तदनुसारेण कृतत्वात् भाष्यस्य, तत्रास्य प्रचारार्थं प्रणतार्तिहराचार्यं परमान्तरङ्गं शिष्यं प्रेष्य, तत्र काश्मीरदेशे सरस्वतीपीठे सदस्येतदुपन्यासे नपरान् विजितवति तस्मिन्, सरस्वत्या चेदमेव भाष्यं सर्वोत्कृष्टत्वात् श्रीभाष्यमिति श्लाघिते प्रकामं तुष्टः श्रीभाष्यकारः प्रतिनिवृत्ताय तस्मै वेदान्तोदयन इति बिरुदमप्यनुजग्राह । 'वेदान्तोदयन सम्प्रदायसुधाम्' इति स श्रीदेशिकचरणनिर्दिष्टः ।

प्राप्तो यो यतिराजतां बहुशतैश्छात्रैः शुभैर्योगिभिः
संख्यातीतगृहस्थसेवितपदो देशान् अटन् ऐधत ।
अद्वैतादिमतं निरस्य सगुणश्रीशैकनिष्ठां हरि-
द्वारात् सेतुपदावधि प्रचुरयन् देवालयान् पालयन् ॥ ७ ॥

शेषाद्रौ विनुतोऽथ मातुलवरश्रीशैलपूर्णादिभिः
श्रीरङ्गादिपरिष्कृतिं विरचयन् शैवश्च विध्वंसयन् ।
श्रीनारायणशैलशृङ्गभुवि यः श्रीशं प्रतिष्ठापयन्
लोकक्षेमपरो भुवं व्यतनुत श्रीवैष्णवैकाञ्चिताम् ॥ ८ ॥

इत्थं श्रीकरिशैल-वेंकटगिरि-श्रीयादवाद्रिप्रभृ-
त्यार्यक्षेत्रपरिष्कृतेः परमसौ श्रीरङ्गवासी भवन् ।
दिव्यद्रामिडवेदबोधनपरः श्रीव्यासबोधायन-
श्रीमन्नाथमुनीन्द्रदर्शितपथानीताखिलार्यव्रजः ॥ ९ ॥

सर्वज्ञैः स्वकदर्शनप्रचरणं कुर्वंश्चतुःसप्ततौ
पीठेषु श्रितवत्सलैः प्रपदनं प्रख्याप्य मुक्तौ हितम् ।
भक्तिज्ञानविरक्तिशीलनिगमाचारादि पुष्णन् भुवि
ख्यातोऽभूत्, अयमस्तु मे हृदि सदा रामानुजार्यो मुनिः ॥ १० ॥

## श्रीश्रुतप्रकाशिकाचार्यः

श्रीभाष्यकारान्तरङ्गशिष्याणां श्रीभाष्यकारवदेव हरितकुलतिलकभूतानां[1] वैराग्यशेवधीनां कूरत्ताल्वान् इति प्रसिद्धानां श्रीवत्साङ्कमिश्राणां द्वौ पुत्रौ भट्टपराशरपादः, श्रीवेदव्यासनामा श्रीराममिश्रश्च । आद्यस्य वैदुष्यातिशयं भगवदनुभवञ्च वक्तुं सहस्रमपि मुखानि नालमिति विरम्यते । द्वितीयस्य महात्मन एवौरससंततिरासीत् । तस्य वेदव्यासभट्टस्य पुत्रयोः वाग्वि-जयिभट्ट सर्वज्ञभट्टयोर्मध्ये आद्यस्य पुत्ररत्नमयं श्रीसुदर्शनभट्टो नाम श्रुतप्रकाशिकाचार्यः । एतत्पुत्र एव वेदाचार्यभट्टः क्षमाषोडशीकर्ता । अस्यां संततौ त्रयस्त्रिंशेन संप्रति श्रीरङ्गदिव्यालये पारम्प-रिककैङ्कर्यभाग्यभाजा श्रीमता वेदव्यासरंगनाथभट्टनाम्ना महात्मना संततिस्वरूपमित्थमवगमितम् । अयं श्रुतप्रकाशिकाचार्यः श्रीभाष्यकारस्थापितेषु चतुस्सप्ततौ सिंहासनेष्वेकतममधिरूढस्य नडादूर आल्वानिति प्रसिद्धस्य श्रीभाष्यकारभागिनेयस्य पौत्रात् वात्स्यवरदाचार्यात् सर्वपरमत-परिमर्दनपूर्वकस्वसिद्धान्तश्रीभाष्यादिग्रन्थव्याख्यानवैखरीविख्यातवैभवात् अनेकान् वारान् श्रीभाष्यं

---

[1] हरितगोत्रं हारीतगोत्रञ्चैकमिति मन्यते । श्रीभाष्यकारगोत्रं प्रथमतः हरितगोत्र-आसूरि-सोमयाजिसुतवीरराघव सर्वक्रतुयाजितनय-आदिकेशवेत्येवं हरितपदेन निर्दिश्य, पश्चात् 'यः श्रीभूतपुरे हरेरभिमतो हारीतगोत्रोद्भवः' इति हारीतशब्देन तस्य निर्देशात् । अतः श्रुतप्रकाशि-कायामपि मातृकाभेदेन हरितहारीतपदभेददर्शनं न दोषायेति ।

श्रुत्वा तदातदा प्रोक्तां व्याख्यानभंगीं तत्तदवसर एव गृहमागत्य तालपत्रे विलिख्य रक्षितवान् कदाचित् नूत्नसमागतैः सतीर्थ्यैः सह श्रवणकाले आचार्येण कस्यचित् वाक्यस्यार्थं पृष्टः तदुपदिष्टान् अर्थभेदान् तदातदा श्रुतान् सर्वानपि क्रमेणानूवाद। आचार्यो विसिष्मिये। कथमियती धारणेति पप्रच्छ। विलिख्य संरक्षितं विलोक्यैव प्रत्यग्रार्थविशेषश्रवणाय समागच्छन्नस्मीति प्रत्युत्तरिते लिखितकोशसमानयनार्थमाज्ञाप्य श्रीदेवाधिराजस्थाने श्रीहस्तिगिरिशिखरे यथापूर्वं भवन्त्यां कालक्षेपगोष्ठ्यामेव दृष्ट्वा संफुल्लस्वान्तगात्रः समनुगृह्य अस्य श्रुतप्रकाशिकेति नाम स्तादित्यादिदेश। सन्त्येव श्रीभाष्यस्यानेकाः व्याख्याः, अथापि सेयं वाक्यानां विविधमवतारणात् विभिन्नार्थवर्णनात् विचित्राशयाविष्करणात् प्रतिपदपरिशीलनात् अधिकरणाङ्गानां सर्वेषां व्युत्पादनात् फलफलिभावप्रदर्शनात् संगतिसंचिन्तनात् प्रत्यधिकरणं परमतानां त्रयाणामपि (शांकरभास्करयादवानां) पराकरणात् अधिकाक्षेपसमाधानविस्तरात् अत्यन्तविशदवाक्यशैलीतश्च अनावश्यकाप्रस्तुतार्थविस्तरविरहाच्च सर्वामपि व्याख्यामतिशेते। आपदि प्राप्तायामेतद्ग्रन्थसंरक्षणभरः ग्रन्थकृतैव स्वपुत्रयोः रक्षणभरेण साकं श्रीमन्निगमान्तमहादेशिके निक्षिप्तः। अतएवानुसंधीयते—"श्रुतप्रकाशिका भूमौ येनाऽऽदौ परिरक्षिता। प्रवर्तिता च पात्रेषु तस्मै श्रेष्ठाय मङ्गलम्," इति। एवञ्च रामानुजभाष्यमेवासत्सूत्रानुगुणमिति श्लाघितवता वेदव्यासेन व्यासार्यरूपेणावतीर्य व्याख्याय तत्स्थापनमकारीति कथनं साम्प्रतम्। श्रीदेशिकग्रन्थतश्च श्रीभाष्यकारादनन्तरं श्रीभाष्यव्याख्यानात्मना प्रकारान्तरेण च प्रबद्धाः प्रबन्धा आसन्नित्यवगम्यते।

तत्र श्रीराममिश्रकृताः षोडश ग्रन्थाः मेघनादारिसूरिविरचिताश्च बहवोऽस्माभिर्नयद्युमणिभूमिकायां निरदेशिषत। तथा न्यायसिद्धाञ्जनदर्शिता अन्ये च ग्रन्थाः। अधिकरणचिन्तामणौ, यत्तत्सेनेश्वरार्यैरिति श्लोकव्याख्याने सेनेश्वरार्याः श्रीरङ्गराजान्तरङ्गपरिकरतल्लजाः शारीरकाधिकरणार्थसंग्रहपद्यकर्तारः, वकुलभृत्किङ्कराः वरदनारायणभट्टारका न्यायसुदर्शनकर्तारः, श्रीविष्णुचित्ताः शठमर्षणगोत्रप्रभवाः प्रमेयसंग्रहकर्तार इत्युक्तम्। सेनेश्वराचार्यस्य श्रीनिवासाचार्यं इति सहजं नाम। ग्रन्थनाम च न्यायकलापसंग्रह इति। यथा श्रीभाष्यविवरणं विष्णुचित्तीयमेकम्, तथा (सोमाशियाण्डान्)श्रीराममिश्रीयमपि श्रीभाष्यविवरणमस्तीति न्ययसिद्धाञ्जनतोऽपि ज्ञायते। यथैषां शारीरकव्याख्यानरूपत्वम्, तथा मेघनादारिसूरिकृताया नयप्रकाशिकाया अपि। सेयं विपुलेति तत्कृतं लघु भाष्यभावावबोधनाख्यं व्याख्यानमन्यदस्तीति चाहुः। परंत्वयं मेघनादारिसूरिः श्रीराममिश्रपरम्परायां श्रीभाष्यकारादष्टमः। अथापि श्रीकुरुकेशपरम्परायां श्रीभाष्यकारात् पञ्चमस्य श्रुतप्रकाशिकाचार्यस्य समसामयिकः; श्रीदेशिकनिर्दिष्टत्वात्। अतः पूर्वे ग्रन्थाः श्रीसुदर्शनसूरिपरिचिताः स्युः। अन्योऽपि तूलिकाख्यो ग्रन्थः श्रुतप्रकाशिकायां निरदेशि (ले. पु. अवसाने)।

अनेन कृताश्च ग्रन्थाः—श्रुतप्रकाशिका, श्रुतप्रदीपिकेति संग्रहरूपव्याख्यानान्तरम्, वेदार्थसंग्रहतात्पर्यदीपिका, सुबालोपनिषद्विवृतिः, शरणागतिगद्यव्याख्या, सन्ध्यावन्दनभाष्यम् इत्यादि। श्रीभागवतस्य शुकपक्षीयमिति व्याख्यानमेतत्कृतमिति च वदन्ति। एवं साक्षाच्छारीरकासंबन्धिनो बहवो ग्रन्थाः श्रीकुरुकेश--श्रीकूरेश--पराशरभट्ट-विष्णुचित्त-वरदाचार्य-वादिहंसाम्बुदादिमहनीयनिर्मिताः अप्रकृतत्वादत्र न निर्दिश्यन्ते। श्रुतप्रकाशिकातः पश्चादपि तत्त्वटीकामूलभावप्रकाशिकादयः श्रीभाष्यव्याख्याः गम्भीरसूक्त्यर्थविशेषव्युत्पादनार्थतया आत्मानमलभन्त। अस्यामपि श्रुतप्रकाशिकायामलभ्या अतीव भोग्याः भाष्यार्थाः पदेपदे तत्त्वटीकायामुपलभ्यन्ते। सेयं शतदूषण्याः पश्चात् संकल्पसूर्योदेः प्राक् अष्टविंशे प्रवचनविधौ श्रीदेशिककृतेति

तत्रैवावगम्यते । महासिद्धान्तमध्यं यावदुपलभ्यते, सर्वोऽप्युपरितनभागः शिष्याणां श्रद्धावैकल्येन सर्वात्मना लुप्तः। श्रुतप्रकाशिकाया अपि व्याख्याः सन्ति। तत्र भावप्रकाशिका एकैव कथञ्चित् प्राप्तप्रचारा लक्ष्यते । अकृतशास्त्रपरिश्रमेषु अथवा अपरिचिताधिकसंस्कृतग्रन्थेषु कोमलमतिष्वेव काले वर्धमानेषु, अन्येषु च धनिकेष्वश्रद्दधानेषु कथमीदृशां शाखोपशाखात्मनां विचारग्रन्थानां प्रचारस्यावकाशः। विस्तीर्णेषु संक्षेपकामना संक्षिप्तेषु विस्तरवाञ्छेति पर्यायचक्रं सर्वत्र लोके सर्वदा भ्रमदेव लक्ष्यते । कथमप्येतस्य व्याख्यानस्य मुद्रणेन परिरक्षणं साम्प्रतं संपन्नमिति संतुष्यामः।

उदयगिरिसमृद्धो यः कराग्रेण पृथ्वीमपहततिमिरौघामद्भुतार्थप्रकाशाम् ।
अकृत निगममूर्तिर्गोनिधिर्मुक्तिनेता जयति स यतिराजो भास्करो लोकबन्धुः ॥

॥ श्रीः ॥

## ब्रह्मसूत्रे पाठभेदः

मुद्रणादेः प्रसक्तिलेशविधुरे प्राचीने काले तालपत्रादिषु विलिख्य ग्रन्थपरिरक्षणेऽपि तावदैदम्पर्यं नोढमासीत्, यावत् अभ्यस्य हृदयेन धारणे । बहूनां भाष्यादिग्रन्थानां धारणानवकाशात् लेखनस्यावश्यम्भावेऽपि सूत्राणामन्येषाञ्च दैनन्दिनपारायणेऽप्युपयुज्यमानानां मुखस्थीकरणमेव पर्याप्तमिति प्राञ्चोऽमन्यन्त । उपदेशैकप्रापणीयेषु ग्रन्थेष्वतः सम्प्रदायमूलमेव परिज्ञानं वृत्तमासीत् । अत एवोपदेशपारम्पर्यामायतते पाठभेद इति श्रीगीतापाठभेदमधिकृत्य वदद्भिः श्रीमद्वेदान्तदेशिकैः तात्पर्यचन्द्रिकायामभ्यधायि । तावता स्वस्वमतसंरक्षणाय मतानुकूलपाठभेदकल्पनमेषामिति तु नैव मन्तव्यम् । अभिप्रायभेदमर्थभेदञ्चासंख्यमाविष्कृतवन्तोऽपि प्राञ्चः वेदे वा स्मृतीतिहासादिषु वा नैव पाठपरिवर्तने प्रागल्भ्यं प्रदर्शयामासुः । तादृशा इमे परमास्तिकाः कथङ्कारं सूत्रेषु अल्पाक्षरेषु अनेकार्थवर्णनक्षमेषु स्वमताभिनिवेशेनान्यादृशं पाठमारोपयेयुः। उपलभ्यमानानां पाठभेदानां तथा तत्तत्पक्षसाधकत्वानुपलम्भादपि नैवमुल्लेखस्यावसरोऽस्ति । एकतममतादृतस्य पाठभेदस्यान्यतममतानुकूलार्थवर्णनासंभवोऽपि न लक्ष्यत इति तथाकल्पनमस्थाने । अतः सम्प्रदायश्रद्धयैव तत्तत्पाठरक्षणम्, न तु मतस्थापनशेषतया । इदं तु स्यात्—यत् विवक्षितस्यार्थस्यैकरूपत्वे, तस्य यादृशपाठादरणे सम्यक्प्रतीयमानता यत्र, तत्र तमेकं पाठमादृत्य अन्ये पाठा उपेक्षितुं युक्ता इति । परंतु सम्प्रदायश्रद्धया न तदपि धाष्टर्यं ते वोढुं पारयामासुः । चतुर्थप्रथमे "आ प्रयाणात् तत्रापि हि दृष्टम्" इति सूत्रपाठः श्रीभाष्ये । आप्रायणादिति प्रयाणशब्दस्थाने प्रायणशब्दः परग्रन्थे । 'येयं प्रेते', 'प्रेत्याभिसंभावितास्मि' इत्यादिश्रुतिषु प्रेतिधातुश्रवणात् प्रायणपदमुचितं मन्येत । गीतायाम्, 'प्रयाणकाले मनसाऽचलेन' 'प्रयाता यान्ति तं कालम्,' 'तत्र प्रयाता गच्छन्ति' 'प्रयाणकालेऽपि च माम्' इत्याद्यनुसरणे प्रयाणपदमपि युक्तमेवाध्यवसीयते । गीतायां तथा स्वयं व्यवहृतवतो बादरायणस्यात्र तेनैव कृते

ब्रह्मसूत्रेऽपि प्रयाणपदं परिचयातिशयप्राप्तमित्यपि स्यात् । प्रायणं स्थूलशरीरविश्लेषः । प्रयाणं प्रस्थानमचिरादिमार्गं प्रति । इतः प्रेत्याभिसंभवितास्मीति इतःशब्दस्वारस्यात्, 'अस्माल्लोकात् प्रेत्य' इत्यादिप्रयोगाच्च प्रायणपदं मरणपूर्वकप्रयाणवाच्येव दृश्यत इत्यपि ब्रूयुः । एवमादिपाठभेदविषये न कुत्रचिन्नैर्भर्यम् । एवं सूत्रसंरक्षणादेव तैस्तैः सूत्रार्थे पृथक्पृथक् वर्ण्यमाने कतमार्थपरिग्रहे सूत्राणामाञ्जस्यमिति विमर्शः तत्रतत्र क्रियमाणोऽवसरं लभते । यथा आनन्दमयाधिकरणादिसूत्रेषु ; सर्वत्र वा । अन्यथा यथाच्छन्दं सूत्रानुपूर्व्यं कल्पयन्तो यदि स्वाभिमतमर्थं वर्णयेयुः, कथं तदा विमर्श एष घटते ।

तत्र श्रीभाष्यतः शांकरे स्थिताः पाठभेदास्तावदेवम्—

1-1-8 हेयत्वावचनाच्चेति सूत्रे चकारार्थत्वेन शांकरदर्शितमंशं प्रतिज्ञाविरोधादिति पृथक्सूत्रेणैव दर्शयति श्रीभाष्यम् । शांकररीत्या सूत्रमिदं न ।

1-1-25 चेतोर्पणनिगमादित्यत्र निगदादिति शांकरपाठः । माध्वे निगमादित्येव ।

1 2-15 सुखविशिष्टाभिधानादेवचेति सूत्रानन्तरम्, अतएव च स ब्रह्मेति सूत्रमुपेक्षितं शांकरे । प्राच्यपरिदृष्टमिदमित्युक्त्वैव व्यर्थमित्युपेक्षितं मन्यते भास्करीये । श्रीभाष्ये रक्षितमेतत् ।

1-2-19 अन्तर्याम्यधिदैवाधिलोकादिष्वित्यत्र शांकरे परम् अधिलोकपदं नास्ति ।

अनन्तरसूत्रस्थं शारीरश्चेति पदम् उभयेपीत्युत्तरसूत्रारम्भे योजितं तत्र ।

शब्दादिभ्योऽन्तः प्रतिष्ठानाच्च नेत्यत्र चकारो न शांकरे ।

1-3—नानुमानमतच्छब्दादिति पृथक् । प्राणभृच्चेति पृथक्सूत्रम् ।

अनुकृतेस्तस्यचेत्येतदनन्तरे अपिस्मर्यत इत्यत्र अपिचेति चकारोऽधिकः ।

अपशूद्राधिकरणे क्षत्रियत्वगतेश्चोत्तरत्र चैत्ररथेन लिंगादिति सूत्रद्वयमेकीकृतम् । तथा, श्रवणाध्ययनार्थप्रतिषेधात् स्मृतेश्चेत्येकीकारः ।

1-4-26 आत्मकृतेः परिणामादिति सूत्रद्वयमेकीकृतम् ।

2-1-11 तर्काप्रतिष्ठानादपीति सूत्रमुत्तरसूत्रेणैकीकृतम् ।

2-1-18 असदिति सूत्रं वाक्यशेषादिति समाप्य, युक्तेः शब्दान्तराच्चेति पृथक्सूत्रं कृतम् ।

नकर्मेतिसूत्रात् पृथक्कृतम्, उपपद्यतेचाप्युपलभ्यतेचेति ।

2-2-1 प्रवृत्तेश्चेति पृथक्सूत्रं कृतम् ।

इतरेतरेति सूत्रे इतरेतरप्रत्ययत्वादितिचेन्नोत्पत्तिमात्रनिमित्तत्वादिति अन्यादृशः पाठः ।

नभावोऽनुपलब्धेरिति सूत्रानन्तरं क्षणिकत्वाच्चेत्येकमधिकं सूत्रम् ।

2-3-3 गौण्यसंभवादिति पृथक् ; शब्दाच्चेति पृथक् ।

प्रतिज्ञाहानिरव्यतिरेकात् शब्देभ्य इत्येकीकृतम् ।

पृथिव्यधिकाररूपशब्दान्तरेभ्य इत्येकीकृतम् ।

व्यतिरेको गन्धवदिति पृथक् ; तथाच दर्शयतीति पृथक् ।

उपादानाद्विहारोपदेशाच्चेति न; विहारोपदेशादिति पृथक् प्रथमम् ; उपादानादिति पृथक् पश्चात् ।

मन्त्रवर्णाच्चेति चकारः । अपिचस्मर्यत इति चकारः । प्रकाशादिवन्नैवंपरः इति तुकारं विना ।

आभासएवचेत्येक एव पाठः ।

2-4-2 गौण्यसंभवादिति पृथक् । तत्प्राक्छ्रुतेश्चेति पृथक् ।

—ज्योतिराद्यधिष्ठानं तु तदामननादिति पृथक् ; प्राणवता शब्दादिति पृथक् ।

3-1-4 अपि च सप्तेति चकारोऽधिकः ।

3-1-5 तत्रापि च तद्व्यापारादविरोध इति चकारोऽधिकः ।

—अन्याधिष्ठितेषु पूर्ववदभिलापादिति बहुवचनान्तम् ।

3-2-3 मायामात्रमिति सूत्रसमनन्तरमेव सूचकश्चेति सूत्रम् ।

3-2-12 नभेदादितिचेदिति नञ् आरम्भे अधिकः ।

3-2-20 वृद्धिह्रासभाक्त्वमन्तर्भावादुभयसामञ्जस्यादेवम् इत्यत्र वृद्धिह्रासस्थं दर्शनाच्चेत्येतत् पृथक्सूत्रं कृतम् ।

3-2-24 अपि च संराधने इति चकारोऽधिकः

3-2-2 भेदान्नेतिचेन्नैकस्यामपि । अत्र द्वितीयो नञ् अधिकः

3-3-3 स्वाध्यायस्य तथात्वे इत्यत्र तथात्वेनेति तृतीयान्तपाठः

3-2-24 पुरुषविद्यायामपीत्यत्र अपिशब्दस्थाने इवशब्दः ।

3-3-31 अनियमः सर्वेषामित्यत्र सर्वासामिति स्त्रीलिङ्गम् ।

3-3-35 अन्तराभूतग्रामवत्स्वात्मन इति पृथक्सूत्रम् । अन्यथेत्यादिपृथक् । तत्र उपदेशवदित्यत्र उपदेशान्तरवदिति पाठः

3-3-47 विद्यैव तु निर्धारणादिति पृथक् ; दर्शनाच्चेति पृथक् ।

3-3-54 व्यतिरेकस्तद्भावभावित्वादित्यत्र तद्भावाभावित्वादिति पाठः ।

3-4-24 तथाचैकवाक्योपबन्धादित्यत्र वाक्यत्वेति तरप्रत्ययोऽधिकः ।

27 शमदमेतिसूत्रे तेषामप्यवश्येत्ययम् अपिर्नास्ति ।

45 आर्त्विज्यसूत्रादनन्तरं श्रुतेश्चेत्येकं सूत्रमधिकम् ।

4-2-2 अतएव सर्वाण्यनु इत्यत्र अतएवचेति चकारोऽधिकः ।

12 प्रतिषेधादिति चेन्नशारीरादिति पृथक् । स्पष्टो ह्येकेषामिति पृथक् ।

20 अतश्चायनेऽपि हि दक्षिणे इत्यत्र हिशब्दोऽधिकः ।

4-3-4 आतिवाहिकसूत्रानन्तरम् उभयव्यामोहात् तत्सिद्धेरिति सूत्रमधिकम् । एवं सूत्रपाठभेदः शांकरगतः प्रदर्शितः । तत्रतत्र पदच्छेदाधिकरणभेदादिवैलक्षण्यं त्वन्यत् अर्थविमर्शे वक्तव्यम् ।

# भास्करपाठैक्यम्

अथ श्रीभाष्यशाङ्करयोर्यत्र सूत्रपाठे भेदो लक्ष्यते, तत्र भास्करेणैकरस्यं यत्र तानि स्थलानि प्रदर्श्यन्ते—

(1915 काशीविद्याविलासमुद्रालयमुद्रितभास्करभाष्यग्रन्थतः)

(1) 1-2-16 **अत एव च स ब्रह्म** इति सूत्रं श्रीभाष्ये लक्ष्यते, यन्न शांकरे। भास्करे तु एतस्य पृथग्व्याख्यानविरहेऽपि एवमभाषि, "अत्रावसरे **अत एव तद्ब्रह्म** इति सूत्रमन्ये पठन्ति ; तत् पुनः गतार्थमित्यन्यैर्नाभिधीयते" इति । तेनैष पाठः शांकरात् प्राचीनोऽस्तीति विज्ञायते । यथाचास्य सार्थक्यं स्यात्, तथा व्याख्यातं श्रीभाष्ये । टीकायाञ्च अतएवेत्येतदर्थविषये विशेषविचारो यः कृतः, स नूनमिदं भास्करभाष्यं मनसिकृत्यैव स्यात् । स इत्यस्य स्थाने तदित्यनुवादस्तु भास्करे तदश्रद्धानिबन्धनः । मुद्रणाशुद्धयश्च भास्करभाष्ये प्रतिपंक्ति लक्ष्यन्त इति तदुपेक्षणमेव साम्प्रतम् ।

(2) 1-2-19 **अन्तर्याम्यधिदैवाधिलोकादिषु तद्धर्मव्यपदेशात्** इति श्रीभाष्ये पाठः । अधिलोकपदप्रयोजनञ्च शाखान्तरज्ञापनरूपं तत्रोक्तम् । पाठोऽयं शाङ्करे अनादृतोऽपि भास्करे यथावदाद्रियते ।

(3) 2-2-19 **इतरेतरप्रत्ययत्वादुपपन्नमिति चेन्न संघातभावानिमित्तत्वात्** इति सूत्रपाठः श्रीभाष्ये । भास्करेऽप्येवमेव । मुद्रणाशुद्ध्या तत्रेषदन्यथाभावप्रतीतावपि भाष्ये वाच्यमानेऽयमेव पाठ इति सुकरं निर्धारणम् । शांकरस्तु 'इतरेतरप्रत्ययत्वादिति चेन्नोत्पत्तिमात्रनिमित्तत्वात्' इति पाठः सर्वथैव नेति सुज्ञानम् । तत्र मात्रपदेन संघातभावानिमित्तत्वरूपमर्थमानयति शांकरम् । विस्पष्टमेव सोंशः श्रीभाष्यभास्करयोर्निर्दिश्यत इति विशेषः ।

(4) 2-3-26 **गुणाद्वाऽऽलोकवत्** इति श्रीभाष्यपाठः । एवमेव भास्करेऽपि । शांकरे तु गुणाद्वालोकवत् इति लोकपदघटितसूत्रपाठसम्प्रदाय एव लक्ष्यते । शांकरभाष्यं तु आलोकवदिति पाठानुरोधेऽपि नासंभवन्निर्वाहमित्यन्यदेतत् ।

(5) 2-3-45 **अपि स्मर्यते** इत्येव लक्ष्यते यथाश्रीभाष्यम् ; न तु 'अपि च स्मर्यते' इति शांकर इव चकारः । एवं 3-4-37 सूत्रेऽपि ।

(6) 3-1-15 **अपि सप्त** इत्येव श्रीभाष्य इव ; न तु अपि च सप्तेति ।

(7) 3-1-22 **तत्स्वाभाव्यापत्तिरुपपत्तेः** इति श्रीभाष्ये । अत्र तत्पदं भास्करे शांकरे च नोपलभ्यते । परं साभाव्येति पाठः शांकरसंमत इति भामत्यनुरोधेन वक्तव्यम् । कल्पतरौ स्वाभाव्य-पाठमुल्लिख्य भामतीपाठे आदरः प्रादर्शि । भास्करपाठस्तु श्रीभाष्य इव स्वाभाव्येत्येव ।

(8) 3-1-24 **अन्याधिष्ठिते पूर्ववदभिलापात्** इति भास्करे श्रीभाष्ये चैकरूपः पाठः ; न तु शांकर इव अन्याधिष्ठितेष्विति बहुवचनम् ।

(9) 3.2.24 **अपि संराधने प्रत्यक्षानुमानाभ्या**मिति चकाररहितपाठो भास्करेऽपि। शांकरे तु अपिचेति चकारः।

(10) 3.3.3 **'स्वाध्यायस्य तथात्वे हि समाचारेऽधिकाराच्च सववच्च तन्नियमः'** इति श्रीभाष्ये पाठः। शांकरे तथात्वेनेति तृतीयान्तं पठित्वा व्याख्यायि। भास्करे तु, **'तथात्वे**— अध्ययनाङ्गत्वे ; निमित्तसप्तमी' इति सप्तम्यन्तपाठस्वीकारः स्पष्टः।

(11) 3.3.24 **पुरुषविद्यायामपि चेतरेषामनाम्नात्** इति अपिशब्दघटित एव पाठः श्रीभाष्य इव भास्करेऽपि ; न तु शांकर इव अपेः स्थाने इवः।

(12) 3.3.43 **प्रदानवदेव तदुक्तम्** इति सूत्रे शांकरे संकर्षसूत्रोदाहरणे, "नाना वा देवतापृथग्ज्ञानात्" इति पाठोऽस्ति। भास्करीयेतु...पृथक्त्वादिति। एवमेव श्रीभाष्येऽपि। एतस्यैव पाठस्य सामञ्जस्यमस्माभिः **परमार्थभूषणे** प्रादर्शि।

(13) 3.4.45 **आर्त्विज्यमित्यौडुलोमिः तस्मैहिपरिक्रीयते'** इत्येव पठनात् भाष्यशैल्या च श्रीभाष्य इव भास्करेऽपि श्रुतेश्चेति शांकरदर्शितसूत्रपाठो नास्तीति ज्ञायते।

(14) 4.2.2 **अत एव सर्वाण्यनु** इति श्रीभाष्ये पाठः। शांकरे तु अत एवचेति चकारघटितः। भास्करे तु चशब्दव्याख्यानाभावात् चकारघटनेनैव मुद्रणेऽपि मुद्रणाशुद्धिबाहुल्यस्य तत्रोपलम्भात् शांकरवासनावासितस्वान्तेन मुद्रणकृता प्रमादात् चकारो न त्यक्त इति यदि मन्येत, तदा श्रीभाष्यैककण्ठ्यम्। स्यान्नाम कथमपि।

(15) 4.2.12 **प्रतिषेधादिति चेन्न शारीरात् स्पष्टो ह्येकेषाम्** इति विशिष्टमेकं सूत्रं श्रीभाष्ये। शांकरे तु शारीरादित्यत्र सूत्रसमाप्तिः। स्पष्ट इत्यादि पृथक्। प्रतिज्ञातेऽर्थे हेतुमाहेत्यवतार्य व्याख्यानात्, एकसूत्रतया पाठाच्च श्रीभाष्य इव सूत्रैक्यं भास्करे स्पष्टम्। पूर्वपक्षसिद्धान्तरूपेणार्थकल्पनया शांकरव्याख्यानसरणिस्तत्राप्युपेक्षितैवेति।

(16) 4.3.4 आतिवाहिकास्तल्लिंगादित्येतदनन्तरं शांकरदृष्टम्, उभयव्यामोहात् तत्सिद्धेरित्यधिकं सूत्रं न भास्करीये।

एवं पञ्चदशाधिकेषु स्थलेषु भास्करीयपाठः शांकराद् विलक्षणो दृष्ट इति श्रीभाष्यकृतां साम्प्रदायिकः सूत्रपाठः प्राच्यपरसंमत इत्यवधार्यते।

## सूत्रे माध्वपाठविशेषः

(1) 1-2-25 छन्दोभिधानादिति सूत्रे निगमादिति पाठो यथाऽस्माकम्

1-3-23 अपिस्मर्यते इति चकारं विना। 3-4-37 सूत्रेऽपि।

3-1-26 अन्याधिष्ठिते इत्येकवचनमेव

3-3-24 पुरुषविद्यायामपि चेति अपिरेव।

3-3-32 अनियमः सर्वेषामिति ; न तु सर्वासामिति ।

3-3-37 अन्यथाभेदेतिसूत्रे उपदेशवदित्येव, न तु उपदेशान्तरवदिति ।

3-3-56 व्यतिरेकस्तद्भावभावित्वादित्येव, न तु अभावित्वादिति ।

3 4 24 तथाचैकवाक्योपन्बन्धात् इति असद्वत् ।

3-4-44 आर्त्विज्यसूत्रानन्तरं श्रुतेश्चेति सूत्रं नास्ति ।

(2) एवमस्सदैक्यमुक्तम् । अथ तत्र सर्वापेक्षया विशेषा उच्यन्ते—

1-2-26 शब्दादिभ्य इति सूत्रे पुरुषमित्यत्र पुरुषविधमिति ।

1 4-5 प्राज्ञोहीत्यत्र सूत्रपूर्तिः । प्रकरणादिति पृथक् सूत्रम्

1-4-10 ज्योतिरुपक्रमा इत्यत्र ज्योतिरुपक्रमादिति पञ्चम्यन्तम् ।

2-1-4 नविलक्षणत्वादिति सूत्रानन्तरमेव 'दृश्यतेतु इति सूत्रम्; तदुपर्येव अभिमानीति सूत्रम् । तदनन्तरं 'दृश्यतेच' इति सूत्रान्तरमधिकम् ।

2-3-18 ज्ञोतएवेति सूत्रानन्तरम् 'युक्तेश्च' इति अपूर्वं सूत्रम् ।

2-4-2 गौण्यसंभवात् तत्प्राक्श्रुतेश्चेति सूत्रयोर्मध्ये 'प्रतिज्ञानुपरोधाच्च' इति अपूर्वसूत्रम् ।

3-1-22 तृतीयेशब्दावरोधः इति तृतीयशब्दः सप्तम्यन्तः ।

23 तत्सूत्रानन्तरं 'स्मरणाच्च' इति अपूर्वं सूत्रम् ।

3-2-32 परमत इति सूत्रानन्तरं 'दर्शनात्' इत्येकं सूत्रम्, 'सामान्यात्तु' इति सूत्रं नास्ति ।

3 2 37 तथान्यप्रतिषेधादित्यत्र 'अन्यत्' इति पृथक्पदम् ।

3-2-38 अनेनेति सूत्रे आयामशब्देति न पाठः ; किंतु सर्वगतत्व-मायामयशब्दादिभ्य इति मायामयशब्दघटितमेकं पदम् ।

3-3-3 स्वाध्यायस्य तथात्वेन समाचारेऽधिकाराच्चेति पृथक्सूत्रम् । अथ सलिलवच्च तन्नियम इतिपृथक् । सवपदस्थाने सलिलपदम् ।

3-3-32 अनियमः सर्वेषामविरोधादिति पञ्चम्यन्तम्

3-3-34 अक्षरधियांत्वविरोध इति पाठः । न तु अवरोधः इति

3-3-36 अन्तराभूतग्रामवदिति चेत् तदुक्तम् इति सूत्रपाठः ।

3-3-42 उपस्थितेऽतस्तद्वचनादित्यत्र अत इति पदं न ।

3-3-44 प्रदानवदेवहि इति हिशब्दोऽधिकः ।

3-3-51 अनुबन्धादिभ्य इति पृथक्सूत्रम् । प्रज्ञान्तरेत्यादि पृथक् । तत्र दृष्टश्चेत्यत्र दृष्टिश्चेति पाठः ।

3-4-39 अतस्त्वितरदिति सूत्रानन्तरं 'विशेषानुग्रहश्च' इति सूत्रमस्ति वेति विचार्यम् ।

3-4-40 अनन्तरे तद्भूतस्येति सूत्रे नियमातद्रूपाभावेभ्य इति पाठः ।

3-4-42 उपपूर्वमितिसूत्रे भावमशनवदित्यत्र भावशमनवत् इति पाठः ।

4-2-19 निशीति सूत्रे संबन्धादिति पञ्चम्यन्तम् ; न तु संबन्धस्येति । यावद्देहेत्यादि पृथक्सूत्रम् ।

एवं माध्वे असदैक्यं तत्रतत्र सर्ववैलक्षण्यञ्चोक्तम् । अन्यत्र सर्वत्र शांकरैक्यं मन्तव्यम् ।

एवं सिद्धः साम्प्रदायिकः सूत्रपाठभेदः

—o—o—o—

## भावप्रकाशिकाकृत्संमतटीकापाठाः

अथ तत्रतत्र भावप्रकाशिकादर्शितः टीकावाक्ययथावस्थितपाठोऽत्र संकलय्य प्रकाश्यते, परिशीलनेन समुचितपरिग्रहार्थम् । तत्रतत्र भावप्रकाशिकाधृतप्रतीकदर्शनमात्रेण पाठभेदोल्लेखस्तु संभवन् स्वयमेव विमृश्य निर्णेय इति नात्र तदंशोद्धारः । तत्रतत्र टीप्पणीमपि दृष्ट्वा परिशीलनं कार्यम्—

28 **फलप्रदतया शेषत्वमस्त्वितिचेदिति** ।......

'फलप्रदतया शेषित्वमस्तु' इति पाठेऽपि इत्यादि ।

34 **ग्रहणशेषतया विनियुक्तस्येति** । ग्रहणशेषतया अविनियुक्तस्येति छेदः ।

51 क्वचिच्चावयवावयवभूतप्रणवाद्युपासनं विधीयते, ओमित्येतदक्षरमुद्गीथमुपासीतेति' इति पाठः समीचीनः । मध्ये, तत्रोद्गीथावयवभूतप्रणवोपासनं विधीयते इति क्वचित् पठ्यते । न तस्य सामीचीन्यं पश्यामः इति ।

54 अत्र—सूत्रमुपादत्ते आवृत्तिरिति । आवृत्तिद्वयत्रयव्यावृत्त्यर्थमसकृदिति सौत्रं पदम् । उपासनशब्दाश्रवणात् सूत्रस्य तत्परत्वमस्फुटमिति तस्यार्थमाह तदिदमिति—इति पाठः समीचीनः । केचित्तु इत्यादि ।

75 उपायप्रतिबन्धकनिरासार्थमिति छेदः । (छेदः—वाक्यसमाप्तिः)

86 उभयलिंगत्वं साकारनिराकारत्वं साकारत्वञ्चेत्यन्वयः—इत्यादि ।

106 'अनुभूतिरिति व्यवहारे चेत्यर्थः' इत्ययं ग्रन्थो लेखकस्खलनकृतः; परत्र, प्रकाशत इति व्यवहारस्योत्पाद्यत्वेन अनुभूतिरिति व्यवहारस्यानुत्पाद्यत्वादिति द्रष्टव्यमिति ।

110 **यद्वा अप्रामाणिकाहम्प्रत्ययगोचरत्वेन हीति** । अस्मिन् पक्षे इत्यादि । केचित्तु.... अभ्युपगन्तव्यमित्यर्थ इत्यस्यानन्तरं यद्वेति पदं कोशेषु दृश्यते । न तस्य सम्यक्त्वं पश्यामः । अप्रामाणिकेत्यादेः अहमर्थादिति भाष्यावतारिकारूपत्वस्यैव युक्तत्वात् । अत एव अहम्प्रत्ययगोचरादिति न प्रतीकग्रहणम्, किंतु अहमर्थादिति....आहुः—इति ।

112 **प्रतिजानाति** । वक्तुमुत्कण्ठत इत्यर्थः । प्रतिजानीते इति पाठः सुगम एव । केचित्तु परमपुरुषशब्देनोपेयम् इति ग्रन्थे प्रतिजानातीति पाठो युक्तः । इह तु प्रतिजानीते इत्येव । लेखकदोषात् व्यत्यस्तमिति ।

118 कल्पनामपि व्युदस्यति त्रिकोणेति इति ग्रन्थानन्तरम् यद्वा अनुपपत्तिं व्युदस्यति त्रिकोणेति इति पाठः सुगमः ।

151 दूरोपलब्धगन्धानामिति हेतुगर्भविशेषणम् । कर्पूरादीनां दूरोपलब्धगन्धत्वादित्यर्थः । अतश्च यत् कैश्चिदुक्तम्...इदं प्रक्षिप्तमिति...तन्निरस्तम् इत्यादि ।

156 न व्यभिचरति प्रकाशो यस्य सत्तामिति । अत्र केचित्—न व्यभिचरति प्रकाशं यस्य सत्तेति पाठः समीचीनः ; तस्यैवार्थस्योचितत्वात् ।......भाष्यस्थाव्यभिचरितपदस्य कर्मणि क्तप्रत्ययान्तत्वेन....।

161 अत्र केचित्—भाष्ये केयं तच्छायापत्तिरिति पाठो युक्तः ; पूर्वत्र तच्छायापत्त्येत्युक्तेः । ततश्च......विकल्पो युज्यते इति ।

173 अनहमि अहम्बुद्धिगर्भाविमौ अहम्भावाहङ्कारशब्दाविति पाठो दृश्यते । तत्राहम्भाव-शब्दो लेखकस्खलनकृतः इत्यादि ।

177 **लेखकस्खलनकृत** इति टीकामुपादाय—अत्र केचित्—**अज्ञातस्वतिमिरस्येति** टीकासंमतभाष्यपाठमुपेक्ष्य **ज्ञातस्वतिमिरस्येति** पाठमाद्रियन्ते इति ।

196 (?) उदीयमानमिति पाठे इण् गताविति धातोः रूपमिति द्रष्टव्यम् ।

197 पर्यवसितं युक्तमिति पाठः

221 अनुसंधानायोपदेश इति निर्देशः मशकेभ्यो धूम इतिवत् द्रष्टव्यः । तथाऽननुसंधा-नायेति वा पाठः । केचित्तु—**तथानुसंधानाय** अनुपास्यत्वेनानुसंधानायेत्यर्थ इति ।

[टीकोदाहृतं **पढइ** इति पद्यं तावत् भावप्रकाशिकायामेवं पठितम् ।

"पढइ परासरसद्दं सोवि जुआ सरसकव्वदुल्ललिओ । अंहो कालस्स गई अह्येवि णिअं पदं गमिआ ॥" छाया—पठति पराशरशब्दं सोऽपि युवा सरसकाव्यदुर्ललितः । अहो कालस्य गतिः वयमपि निजं पदं गमिताः]

223 सत्यत्वज्ञानत्वादिरस्ति चेत् स स्वरूपातिरिक्त इति दर्शयितुं स्वभावशब्द इति समीचीनः पाठः । सत्यत्वज्ञानत्वस्वभावोऽस्ति चेत् इति पाठे स्वभावशब्दो धर्मपरः ।

2-14 'स्मृतेः स्मर्यमाणसमकालवर्तित्वनियमाभावात्' इत्यनुवादः । टीकायां तु स्मर्यमाणस्य च स्मृतिसमेत्येवम् ।

2-80 **ऐन्द्राग्नश्चेति षड्यागाइति** । अत्र ऐन्द्रौ द्वौ आग्नेयश्चेति षट् यागा इति पाठः समीचीनः । ऐन्द्राग्नश्चेति पाठे एवमभिप्रायं केचिदाहुरित्यादि ।

2-80 **उत्पत्तिवाक्यैः** यदाग्नेयो........ **पृथगुत्पन्नान्** पृथक्प्रतिपादितान् इति पाठक्रमस्तु समीचीनः ।

2-85 व्युत्पन्नकःकूजतिशब्देनेति क्वचित् पाठः......व्युत्पन्नकूजतिशब्देनेति पाठः सुगम एव ।

2-88 भाष्ये **एनमवेही**ति । क्वचित् कोशे अवैहीति पाठो दृश्यते । स तु लेखकस्खलनकृतः ।

2-91 गां क्रीणीहि इति । विक्रीणीहि इति क्वचित् कोशे पाठो दृश्यते । तत्र विशब्दो लेखकस्खलनकृतः । इतरथा 'परिव्ययेभ्यः क्रियः' इत्यात्मनेपदप्रसंगात् ।

2-91 विषिण्वन् विषय उच्यते इति पाठः समीचीनः । विपूर्वात् सिनोतेर्निष्पन्नत्वात् विषयशब्दस्य ।

2-93 न हि दण्डचक्रादिर्घटो भवतीत्ययं ग्रन्थः, 'कुत इत्यत्राह दुःखात्मकत्वात्' इति ग्रन्थात् पूर्वं पठितव्यः । न क्वापि पठितव्यो वा ; अनतिप्रयोजनकत्वात् । अतो व्युत्क्रमेण प्रतीकग्रहणशंका न कार्या ।

2-107 कारणमनूद्यते इति पाठः समीचीनः । उत्तरत्र कारणस्य ब्रह्मत्वं विधीयते इत्युक्तेरिति द्रष्टव्यम् ।

2-110 शाखाग्रमुपलक्षणमित्यस्यानन्तरम्, 'कालविशेषे देशविशेषसंबन्ध उपलक्ष्याकारः । शाखाग्रचन्द्रयोश्च ऋजुप्रदेशवर्तित्वं संबन्धः' इति पाठश्चेत्, सुश्लिष्टः इति ।

2-128 तृतीया चेत्थम्भाव इति । केचित् तु-कार्यत्वेनोत्पत्तिविनाशयोः कल्पनेपीति वा कल्प्यमानयोरिति वा अध्याहृत्य व्याचक्षत इति । (अत्र भाष्यपाठयाथात्म्यं विचार्यम्)

2-145 **द्रष्टव्य इति तस्य दर्शनरूपते**ति क्वचित् कोशे पाठो दृश्यते । तस्य न सम्यक्त्वं पश्यामः । ....तद्ध्याननियोगेन तत्साक्षात्कारफलेनेत्युत्तरभाष्यतद्व्याख्यानानुगुण्याभावाच्चायं ग्रन्थो लेखकस्खलनकृतः इति प्रतिभाति । केचित्तु इत्यादि ।

2-166 श्रामकतयेति क्वचित् पाठो दृश्यते । तत्राण्यन्तत्वे नोदात्तोपदेशस्य इति वृद्धिनिषेधप्रसंगेन, ण्यन्तत्वे मितां ह्रस्व इति ह्रस्वत्वप्रसंगेन श्रामकेति रूपासिद्धावपि, प्रज्ञादिभ्यश्चेति सिद्धिः । यद्वा मितांह्रस्वः इति सूत्रे केचित् वेत्यनुवर्तयन्तीति काशिका ।

2-204 एतत्कालादिविशिष्टतया ज्ञातत्वमिति छेदः ।

2-209 [**बाहीको नामेति** "पञ्चानां सिंधुषष्ठानामन्तरं ये समाश्रिताः । बाहीका नाम ते देशाः न तत्र दिवसं वसेत्" । भावप्रकाशिकायामविद्यमानमपीदमुपयुक्तत्वादुक्तम् ।]

2-230 मन्त्राणां प्राबल्यं केचित् वदन्तीति कोशेषु दृश्यते । प्रथमसूत्रे मन्त्रापेक्षया ब्राह्मण-प्राबल्यवादोऽनुपपन्न इत्युक्तेः तदविरोधाय मन्त्राणामप्राबल्यमिति पाठो युक्तः । केचित्तु इत्यादि ।

2-271 स्थानविशेषादुपरिस्थितिरिति । स्थानविशेषस्थोपरिस्थितिरिति पाठः समीचीनः ।

2-293 यद्वा कर्तरि क्तप्रतिपचिरिति । क्त इत्यनेन क्तप्रत्ययान्तजन्यप्रतीति[पत्ति]र्लक्ष्यत इति भावः [अत्र टीकायामन्यथा लक्ष्यते]

2-310 द्रव्यसंस्कारकर्मसु परार्थत्वात् फलश्रुतिरर्थवादः स्यात्' इति जैमिनीयसूत्रपाठः । द्रव्यगुणसंस्कारकर्मस्विति क्वचित् पाठो दृश्यते । स तु लेखकस्खलनकृतः ।

2-317 इतीत्यस्यानन्तरं सूत्र इति क्वचित् कोशे पठ्यते । न तस्य प्रयोजनं पश्यामः इति । (अत्र टीकायां अष्टानि वाक्यानि तालकोशे उपलब्धानि अत्र मुद्रणे योजितानि । अतः सप्रयोजनम् ) ।

2-325 अत इतीत्यस्यानन्तरं राद्धान्ते अदृश्यत्वेतीति कोशेषु पाठो दृश्यते । तस्य मन्दप्रयोजनस्यापि शिष्यावधानार्थत्वमिति ।

2-338 शारीराद्विशिनष्टीति । शारीरादित्यनन्तरं विलक्षणत्वेनेत्यध्याहार्यम्........ विशिनष्टि हि प्रकरणं प्रधानात् पुरुषाच्च इति भाष्य........ प्रधानात् पुरुषाच्चेत्यस्य व्यावर्तयतीत्यर्थ इति तन्त्रत्योत्तरवाक्यान्वितत्वादिति । (एतदनुगुणो भाष्यपाठो ग्राह्यः)

2-350 द्युप्रभृतिमूर्धत्वादिसंपादनमिति पाठः । मस्तकचिबुकान्तराले इत्येतत् काकाक्षिन्यायेनोभयत्र संबध्यते ।

## द्वितीयसंपुटे

8 वाक्कर्तृकमुक्त(?) प्रत्यभिज्ञानादिति पाठः समीचीनः । 'विग्विमुक्तैः' इति परैरुक्तेः ।

11 सप्राणनिष्प्राणविषयोपमर्द तदभावयोरिति पाठः क्वचित् दृश्यते । सप्राणनिष्प्राणविषयोपमर्दयोरिति पाठः समीचीनः ।

33 भाष्ये—स्यादेतदेवम्, यदि श्रुतिरेव दहराकाशं न व्यभक्ष्यत । व्यभाक्षीत्तु सा इति पाठः ; विभजनस्यैव प्रकृते विवक्षितत्वात् ।

34 परमात्मनोऽन्तवर्ति तत्कारणं सूक्ष्मं किमपि न संभवतीति, 'किं तदत्र विद्यते' इति वाक्येनाक्षिप्य—द्यावापृथिव्यादिकार्यस्य तदन्तवर्तितया समाधानमिति....परैर्वर्ण्यत इति पाठो बहुषु कोशेषूपलभ्यते ।

51 (वस्तुमात्रैक्येत्यस्य स्थाने स्वरूपमात्रपरत्वे इति प्रतीकग्रहणम् )

61 योग्यानुपलम्भस्त्विति पाठो दृश्यते । तत्र योग्यपदं संपातायातमिव भाति । प्रत्युत उपलम्भायोग्यस्यैव प्रदर्शनीयत्वात् ।

62 अत्र सरूपसृष्टिनियमानुपपत्तेर्वैरूप्यसंभवात् द्वितीये तु या व्यक्तिरिति पाठः समीचीनः । मध्ये ततश्चेत्यादिग्रन्थस्तु द्वितीयपक्षान्वितत्वादधिक इति प्रतिभाति । कोशाश्च निरीक्षणीयाः ।

75 विद्याशब्दं व्याचष्टे विद्या—वेदविद्येति । अत्राध्ययनमिति क्वचित् पाठो दृश्यते । स तु लेखकस्खलनकृतः ।

77 अध्ययनव्रतोपनयनादय उच्यन्ते इति । अत्र चोपनयनपदं लेखकप्रमादादागतम् ।

97 प्रधानपुरुषादिप्रतिपादनमुखेनेति । ...प्रधानादीनां प्रतिपादनमुखेन प्रधानादिकारणत्वप्रतिपादनच्छायानुसारीणीति पाठस्तु समीचीनः । कोशस्तु निरीक्ष्यः ।

103 प्रकृतिभावस्मरण.......। प्रकृतिवद्भावस्मरणेति क्वचित् पाठो दृश्यते । स तु लेखकस्खलनकृतः ।

106 निरुह्यत इति पाठ इत्यादि ।

106 मत्वा धीरो हर्षशोकौ जहातीति निर्दिष्टस्य ब्रह्मोपासनस्येति पाठः । धीरो न शोचतीति पाठो लेखकदोषात् । तस्याप्रकृतत्वात् ।

115 भाष्ये सिद्धान्ते चमसवदविशेषादिति सूत्रोपादानानन्तरम्, 'नात्र तन्त्रसिद्धा प्रकृतिर.भधीयते' इति केषुचित् कोशेषु दृश्यते । तत् अदृष्टश्रुतप्रकाशिकैः पण्डितम्मन्यैः प्रक्षिप्तम् । उपक्रमस्थं प्रतिज्ञावाक्यमनुषज्यत इति मत्वेति टीकोक्तेः ।

116 यथेति न श्रुतिपदमिति पाठः । स च श्रुतिभ्रान्तिनिवारणार्थ इति । (मुद्रितटीकाकोशेषु नायं नोपलभ्यते । श्रुतौ यथेतिपदाभावात् तदसत्त्वमयुक्तमिति भावः)

126 अन्नशब्दं व्याचष्टे अन्नस्येति इति द्विः पठ्यते । न तस्य प्रयोजनं पश्यामः ।

128 एकस्मादित्यस्य एकरूपात् कारणादिति व्याख्यानं दृश्यते । न तस्य सामीचीन्यं पश्यामः ।

139 इति हि श्रुतिरिति । तौ ह सुप्तं पुरुषमाजग्मतुरिति क्वचित् भाष्यकोशे पाठो दृश्यते । स तु लेखकानवधानकृत इति भावः ।

153 दुन्दुभिशब्दे अध्यस्ता इति पाठो दृश्यते । तस्यायमर्थः—दुन्दुभिशब्दादव्यतिरिक्ता इति । विशेषस्य सामान्ये ऽध्यासाभावात् ।

173 अध्यासो भवितुं युक्तमिति...अन्योन्यस्मिन्......ति च विषये युष्मदर्थ इति पाठो दृश्यते । तत्र भवितुं युक्तमितीत्यस्यानन्तरम्, आक्षिप्य तथापीति शेषः पूरणीयः ।

182 त्रय एव यज्वानः इति एवकारः कोशेषु दृश्यते । तस्य नातीव प्रयोजनं पश्यामः ।

239 यद्यप्यत्र कल्पिकाविद्या इति बहुश आवृत्त्या पठ्यते । तस्य च निर्वाहः संभवति–तथापि कल्पकाविद्येत्येवम् इत्वरहितः पाठ इति द्रष्टव्यम् । [एष न्यायः भाष्योपक्रमे आच्छादिकाविद्येत्यत्रापि ग्राह्यः]

259 अयं स इति या प्रत्यभिज्ञा साऽत्रोच्यते इति पाठश्चेत् समीचीनः । अयं स इति ज्ञानमभिज्ञा ; साऽत्रोच्यत इति पाठे तु न सामीचीन्यम् ।

270 चन्द्रद्वित्वाभावेऽपि चन्द्रो बहुधा विभज्यते इति पाठो दृश्यते । वस्तुतश्चन्द्रानेकत्वाभावेऽपि चन्द्रोऽनेकधा प्रतीयत इत्यर्थः ।

279 प्रत्यनुमानोपयोगिनीं व्याप्तिं शिक्षयतीत्यत्र प्रत्यनुमानं दर्शयति न भवदुक्तमिति इति पाठः समीचीन इति केचित् वदन्ति ।

297 अत्र तृष्णा वाक्कायचेष्टेति क्वचित् पाठो दृश्यते । तत्र मध्ये लेखकदोषात् ग्रन्थलेशः पतितः । एवं हि वाचस्पतिग्रन्थः...

344 न विप्रतिषेधमात्रं पूर्वपक्षितम् ; नाप्युत्पत्ति सिद्धान्त्येकदेशिमतं कृत्वेति पाठः ।

389 **पूर्वाधिकरणविषयवाक्यस्थेति** केषुचित् कोशेषु पठ्यते । तत्र पूर्वशब्दो लेखकदोषायत्तः ।

417 अयं लोको नास्ति पर इतीति ।......आचार्यास्तु चशब्दमध्याहृत्य व्याचक्षते–अत्र चामुत्र च सुखं नास्तीत्यर्थ इति । [टीकामनुरुध्य भाष्येपि अयं लोको नास्ति न पर इति मुद्रितवन्तः । भाष्यार्थदर्पणो द्रष्टव्यः]

418 जज्ञे ममारेति भूतार्थता वेति उत्तरेण च संबध्यते । जज्ञे मम्रे इति क्वचित् पठ्यते । ....पुरीमवस्कन्द लुनीहि नन्दनमित्यादिवदित्यत्र भूतार्थता वेत्यनुकृष्यते इति । [इह मम्रे ममारेति पाठभेदादिकं द्रष्टव्यम् ।]

419 **याम्या यातना** इति । यमाच्चेति वक्तव्यमिति ण्यप्रत्ययः । यामीर्यातना इति पाठे तु निर्वाहान्तरं द्रष्टव्यम् ।

445 तर्हि निष्प्रपञ्चं ब्रह्म कीदृशम् अत्राहेति क्वचित् पाठो दृश्यते । स तु चिन्तनीयः ।

456 सर्वस्मात् परत्वं प्राप्यत्वमिति पाठो दृश्यते । तस्यायमर्थः—प्राप्यत्वोपयुक्तं सर्वस्मात् परत्वमित्यादि ।

457 शास्त्रं दर्शयति एवं वेदेऽपीति क्वचित् पठ्यते । स तु न समीचीनः । शास्त्रं दर्शयति तथा यजेतेति इति बहुषु कोशेषु दृष्टः पाठः समीचीनः ।

460 एकसंज्ञकत्वेन एकफलत्वेन श्रूयमाणा इत्यर्थ इति पाठः ।

460 एकस्यामपि शाखायामिति छेदः ।

465 आसन्य(न्न्य ?)मिति । आसन्नमिति स्वार्थे ष्यञ् ; मुख्यमित्यर्थ इति । लोके हि श्रेष्ठ आसन्नो भवति...केषुचित् कोशेषु ।

467 मासमात्रहोमसमाप्तिकमिति ।...अत्र होमशब्दः संपातायातः ।

477 पूर्वमेव वर्णक्रमपरैरादृतमिति पाठः ।

480 एतमेव तदनमनग्नं कुर्वन्तो मन्यन्त इत्यत्र वेदने विधिप्रत्ययश्रवणादिति पाठश्चेत्—समीचीनः ।

489 केषुचित् कोशेषु समयाविषिते–समया उदिते इत्यर्थ इति पठ्यते । तस्य वाक्यस्यायमर्थः साम्प्रदायिकः । उदितशब्द प्रकाशमानपरः । समयाविषिते अर्धं प्रकाशमाने । अर्धास्तमिते इत्यर्थः पर्यवसितः । अस्य ग्रन्थस्य बहुषु कोशेषु पाठश्च न दृश्यते ।

492 तद्वदिहापीति छेदः ।

496 अर्चिरादिगतिमत्त्वप्रतिपादनं दर्शयति छान्दोग्ये य इत्थं विदुरिति क्वचित् कोशेषु पाठो दृश्यते । तत्र छान्दोग्य इत्येतत् लेखकदोषकृतम् ।

498 किं मैत्रेयीब्राह्मणश्रुतमित्यत्र मैत्रेयीशब्दो लेखकस्खलनकृतः । गार्गीब्राह्मण इति पठितव्यम् ।

512 भोजनलोपे लोपः तच्च कौण्डपायिनामयनाग्निहोत्र इति क्वचित् पाठो दृश्यते । तच्चेत्येतत् संपातायातमिव भाति ।

512 अत्र पूर्वकाण्डसिद्धमित्यस्यानन्तरम्, 'एकनिष्पत्तेः सर्वं समं स्यात्', 'पदकर्मप्रयोजकं नयनस्य परार्थत्वात्' इति पाठः समीचीनः ।

518 मानसग्रहसामान्येन न क्रियाशेषत्वमिति पाठः ।

517 किमेते मनश्चिदादयः...इति । इष्टकचितादिवत् अकारान्तत्वभ्रमात् लिखितम् तदनादरणीयम् । मनश्चिदादय इत्येव पाठः ।

521 अयं लोको भूरिति पाठः ।

527 एतमेवमात्मानं वैश्वानरमुपास्त इत्यादिष्विल्यर्थ इति । एष वै सुतेजा आत्मा वैश्वानरः इत्यादिना तेषु तेषूपासनेषु उपास्यस्य वैश्वानरत्वञ्चाहेति भाष्ये स्फुटान्वये, एवं व्याख्यानमयुक्तमिति मन्यमाना इमं ग्रन्थं लेखकप्रक्षिप्तं वर्णयन्ति ।...प्रक्षिप्त इत्येव युक्तमिति । केचित्तु—इत्यादि ।

560 तदप्रामाणिकत्वं सिद्धान्तयन्तीत्यस्यानन्तरम्, न चाधिकारिकमपीत्यधिकरणान्तरम्; नैष्ठिकादीनामाश्रमभ्रष्टानां प्रायश्चित्तसंभवासंभवपरं वर्णयन्तोऽसंभव इति सिद्धान्तयन्तीति केषुचित् पाठो दृश्यते । स त्वग्रन्थः......लेखकदोषायत्तः । केचित्तु इत्यादि ।

563 उतार्थान्तरं मननरूपमित्यस्यानन्तरम्, 'मुनिशब्दस्य प्रकृष्टमननशीले व्यासादौ प्रयोगदर्शनमर्थान्तरत्वमुपोद्बलयति, नेति पाठोऽस्ति चेत्, समीचीनः ।

566 **द्वितीयसूत्रनिर्वाहस्योत्तरं दत्त**मिति । (टीकापाठोऽन्यथा)

571 नवेति विचारयन्ति, तदयुक्तमित्यस्यानन्तरं ज्ञानवेदनशब्दान्वितेति वाक्यं पठितं चेत् सुसंगतमिव भाति । पाठो निरीक्ष्यः ।

572 **मुक्तस्य सर्वज्ञत्वे** इत्याक्षेपश्च, **ननु मुक्तस्यानन्दाधिक्ये** इत्याक्षेपश्च प्रासङ्गिकः इति, नाशङ्का कार्या । केचित्तु अत्र कानिचित् वाक्यानि पतितानीति मन्यन्ते ।

578 ब्रह्ममतिवत् आदित्यादिमतयोऽपीति चशब्दार्थ इति ग्रन्थो राद्धान्तव्याख्याने उत्कृष्टश्चेत्—सुश्लिष्ट इव भाति ।

578 उद्गीथादीनां क्रियारूपणामिति पाठः । कर्मसमवायितयेति क्वचित् पाठो लेखकानवधाननिबन्धनः ।

579 तत्र क्षत्त्रध्यासाभावादिति क्वचित् पाठो दृश्यते । न तस्य सामीचीन्यं पश्यामः ।

596 भूतसूक्ष्मांशा विवक्षिताः इति वाक्यस्यानन्तरम्, उपगमः संबन्ध इति पाठः समीचीनः ।

598 व्याख्यातं त्र्यात्मकत्वादितीति । त्र्यात्मकत्वात्तु भूयस्त्वादितीति पाठः । शांकरभाष्ये तथा दर्शनात् ।

603 मृतत्वाभावशंकां शमयितुमिति पाठः ।

617 भाष्ये, अर्चिःपर्यायत्वेनेति. . .अर्चिष्पर्यायत्वेनेति भवितव्यम् । यथा सर्पिष्कुण्डिका इति चेत् . . .षत्वं न भवति ।. . .अर्चिष्प्रभृतिष्वित्येव बहुषु कोशेषु पाठो दृश्यते ।

617 देवलोकशब्दाभिहितात् वायोरुपरीति काचित्कः पाठः । (षष्ठ्यन्तपाठो मुख्य इति)

913 भाष्ये क्वचित् कोशेषु. 'स वरुणलोकं स आदित्यलोकं स इन्द्रलोकं स प्रजापतिलोकम्' इति वरुणेन्द्रलोकयोर्मध्ये आदित्यलोकपाठो दृश्यते । स तु न प्रामाणिकः. . . . . .परे तु इत्यादि ।

619 लोकत्वसाधकहेतुरर्थसिद्ध इति । विजिहीर्षत इति विहरणेच्छाप्रतिपादनादिति भावः । इदं च विजिहीर्षत इति काचित्कपाठमभिप्रेत्योक्तम् ।

633 रूपं साध्यमित्यर्थ इति ग्रन्थानन्तरं एवञ्चेति प्रतीकग्रहणं दृश्यते, तत् स्वेनशब्दः कथमित्यत्राहेति ग्रन्थात् पूर्वमेव द्रष्टव्यम् । कोशान्तरं वा निरीक्षणीयम् इति ।

एषु अनेके अंशाः टिप्पणे विचारिताः केचित् त्यक्ता इति तत्रैव द्रष्टव्यम् ।

—o—o—o—

श्रीः

## संगतिसंग्रहः

प्रसङ्गावसराक्षेपाः दृष्टान्तः प्रत्युदाहृतिः ।
अपवादोऽतिदेशश्चोपोद्घातादिश्च संगतिः ॥ 1
निर्वाहकैक्यं कार्यैक्यं हेतुत्वाद्यपि तत्र तु ।
उपस्थितस्योपेक्षाया अनर्हत्वं प्रसङ्गिता ॥ 2
स्थानप्राप्तिस्त्ववसरः आक्षेपस्तु भवेदिह ।
यत्र पूर्वस्थापितस्यासंभवः शंक्यते पुनः ॥ 3
पूर्वाधिकरणन्यायमुपजीव्य तथाविधे ।
स्थलान्तरे पूर्वपक्षे दृष्टान्तः संगतिर्भवेत् ॥ 4
पूर्वाधिकरणोद्दिष्टयुक्त्यप्रसरयुक्तितः ।
विधान्तराविष्करणे प्रत्युदाहरणं भवेत् ॥ 5
पूर्वाधिकरणोपात्तविषयान्तर्गते क्वचित् ।
सिद्धान्तस्यान्यथोक्तौ स्यात् अपवादाख्यसंगतिः ॥ 6
यत्र पूर्वोत्तरौ पक्षावधिकाशंकया पुनः ।
आनीयेते प्राङ्नयस्थौ अतिदेशोऽत्र संगतिः ॥ 7
चिन्तां प्रकृतसिद्ध्यर्थामुपोद्घातं विदुर्बुधाः ।
एवमन्याश्च भाव्याः स्युरानन्तर्यप्रयोजिकाः ॥ 8

श्रीमते रंगरामानुजमहादेशिकाय नमः ॥

(श्रीकेताण्डपट्टिस्वामि) श्रीरङ्गरामानुजमहादेशिक संयमिसार्वभौमानुगृहीता

शारीरकाधिकरणसंगतिः

श्रीः

ओं अथातो ब्रह्मजिज्ञासा—"शारीरकशास्त्रोपोद्घातरूपमिदमधिकरणम् ।[1]

[2]अधिकरणं पञ्चाङ्गम्—विषयः संशयश्चैव विचारो निर्णयस्तथा । प्रयोजनं च पञ्चांगं प्राञ्चोऽधिकरणं विदुः इति ॥ दशाङ्गमित्याहुराचार्याः । संगतिर्विषयश्चैव संशयोत्थानकारणम् । संशयस्य प्रकारश्च तदर्था च विचारणा ॥ तस्याः फलफलित्वं च न्यायौ द्वौ पक्षयोर्द्वयोः । निर्णयस्तत्फलश्चेति बोध्यान्यधिकृतौ दश ॥ इति ।

---

'श्रीरङ्गलक्ष्मणमुनिः स्वकृतप्रबन्धगूढार्थबोधनकृते समभूत् यदात्मा ।
वेदान्तलक्ष्मणमुनीन्द्रपदाब्जभृङ्गं श्रीरङ्गलक्ष्मणमुनिं तमहं प्रपद्ये'

इत्यनुसंधीयमानानाम् अद्भुतज्ञानवैराग्यानुष्ठानानामेषां परमाचार्याणां चरणारविन्दसंश्रयण-भाग्येन अस्मत्सिद्धान्तजैत्रध्वजा भूत्वा परश्शताः परमैकान्तिनः यतयो गृहस्थाश्च परां प्रसिद्धिमापुरिति विदितं विश्वेषाम् । त इमे संश्रितानां बहूनां संपूर्णग्रहणधारणाक्षमत्वमालक्ष्य शारीरकाधिकरणसंगति—सारास्वादिनीसंग्रहादीन् आरुरुक्षूपयुक्तान् अनेकान् ग्रन्थान् अनुगृहीतवन्तः सन्ति । तत्र प्रकृतोपयुक्तो ग्रन्थ इह निवेश्यते ।

असंगतं किमपि न वक्तव्यमिति सर्वे स्वीकुर्वन्ति । तत्रैकमेव विषयमधिकृत्य प्रवृत्तानां वाक्यानां सांगत्यं सुग्रहम् । पूर्वोत्तररूपेण विभक्तायाः मीमांसायाः भिन्नभिन्नप्रकरणगतभिन्नभिन्नविषयपरनानावेदवेदान्तवाक्यविचारात्मकबह्वधिकरणरूपत्वात् केन वा संबन्धेन एकानन्तरमन्यदधिकरणमारभ्यत इति संगतिजिज्ञासा स्वरसवाहिनी । तत्र पूर्वदर्शिताः मीमांसकव्यवाह्रियमाणाः आक्षेपदृष्टान्तापवादादयः यथायथं ग्राह्याः स्युः । तदुपयोगिनमुत्थितिप्रकारं मीमांसकशैल्या संगृह्य वक्तुमेतद्ग्रन्थारम्भः । संगतिविचार एव तु पृथक् क्रियमाणो महान् ग्रन्थो भवेत् । आसीच्च तथा कश्चित् विष्णुचित्तीयो ग्रन्थः । एकप्रकारज्ञानस्यापि पर्याप्ततया संग्रहरुचिभिस्तावत एवापेक्षिततया च नेहाधिके व्याप्रियते । तथा सोमनाथीयादिदृष्टमीमांसकशैलीमेवानुरुध्य प्रत्यधिकरणं प्रथमसूत्रमात्रस्यार्थोऽपि वर्ण्यते । सर्वसूत्रसुबहुविवरणरूपं श्रीभाष्यम्; अधिकरण-पूर्वपक्षसिद्धान्तोपन्यासपूर्वं सर्वसूत्रसंग्रहव्याख्यारूपो दीपः ; प्रायः सर्वसूत्रार्थमात्रदर्शी वेदान्तसारः । तद्वदयं संगतिं प्रथमसूत्रार्थं च संग्रहीतुं कृतो ग्रन्थ इति विशेषः ।

1 चतुस्सूत्री उपोद्घातपेटिका । तत्र द्वयंद्वयमवान्तरपेटिकेति वक्ष्यते । एवमपि प्रथमसूत्रस्योपोद्घातरूपतायां विवादलेशस्याप्यभावादारम्भे एतस्योपोद्घातत्वमुक्तम् । नातोऽन्यव्यवच्छेदः । 2 अधिकरणस्य पञ्चाङ्गत्वकथनप्रभृति सर्वमिदं अधिकरणचिन्तामणिगतमेव । तत्र विस्तरेणोक्ते स्वोपयुक्तमात्रानुवाद इह ।

1 विषयोऽपि द्विविधः । अधिकरणप्रतिपाद्यार्थस्तावदेकः प्रधानः । तत्प्रतिपादकश्रुतिरवान्तरविषयः । सर्वाधिकरणसुखग्रहणाय संगत्यादिकमभिधीयते—[1]शास्त्रकाण्डद्विकाध्यायपादपेटिकाधिकरणसूत्रभेदात् अष्टविधा संगतिः ।

अस्याधिकरणस्य 'स विष्णुराह हि । तं ब्रह्मेत्याचक्षते तं ब्रह्मेत्याचक्षते' इति देवताकाण्डान्तिमाधिकरणेन संगतिः । तत्रापि तं ब्रह्मेत्युपादानात् सूत्रसंगतिः[1] ।

अथ—कर्म विचारानन्तरम् अतः—कर्मविचाराद्धेतोः ब्रह्मविचारः कर्तव्य इति सूत्रार्थः ।

2 पूर्वाधिकरणे ब्रह्मविचारस्य कर्तव्यत्वमुक्तम् । तत् ब्रह्म किमिति [2]शिष्याकांक्षायां जन्माद्यधिकरणमारभ्यते । जन्माद्यस्य यतः । सूत्रार्थः—विविधविचित्रभोक्तृभोग्यपूर्णस्य जगतः यतो जन्मादि तत् ब्रह्म इति प्रतिपादयितुं शक्नोति यतो वा इमानीति वाक्यमिति ।

3 शास्त्रयोनित्वात् । शास्त्रारम्भार्थोपोद्घातपेटिकायां प्रतीतिजननार्था पूर्वपेटिका वृत्ता । तात्पर्यलिंगसमर्थनार्था उत्तरपेटिका आरभ्यते । तत्र अप्राप्तत्वलक्षणं तात्पर्यलिंगं तृतीये, सफलत्वलक्षणं चतुर्थे इति । जगत्कारणस्याप्राप्तत्वं नास्ति, अनुमानसिद्धत्वादिति शंकया संगतिः । शास्त्रं यस्य योनिः कारणं प्रमाणं तत् ब्रह्म शास्त्रयोनि । तद्बुद्धिकारणत्वेन शास्त्रस्य योनित्वम् । प्रमाणान्तराविषयत्वेन शास्त्रैकप्रमाणकत्वात् ब्रह्मणः, तस्मिन् यतो वा इत्यादिकं वाक्यं प्रमाणमिति सूत्रार्थः ।

4 तत्तु समन्वयात् । साफल्यलक्षणं तात्पर्यलिंगं समर्थ्यते । तुशब्दः शंकानिवृत्त्यर्थः । पूर्वसूत्रोदितं ब्रह्मणः शास्त्रयोनित्वं समन्वयात् सिद्ध्यति । सम्यगन्वयः समन्वयः । वेदितुर्निरतिशयानन्दस्वरूपत्वेन परमपुरुषार्थरूपे परे ब्रह्मणि वेदकतया शास्त्रस्य अन्वयात् ब्रह्मणः शास्त्रप्रमाणकत्वं सिद्धमिति ।

एवं वेदान्तवाक्यानां ब्रह्मणि प्रामाण्यरूपपरीक्ष्यतापरिकरस्थापनं कृतम् । अथ परीक्ष्यता इति पेटिकासंगतिः । पुमर्थतया समन्वयोऽनुपपन्नः । अपुमर्थप्रधानादिप्रतिपादनपरत्वादि[3]त्याक्षेपेणोत्थानात् पूर्वाधिकरणसंगतिः ।

5 तत्र प्रकृतिविषयं प्रथममधिकरणम् । ईक्षतेर्नाशब्दम् । ईक्षतिः—ईक्षतिधात्वर्थः ईक्षणम् । शब्दः प्रमाणं यस्य न भवति, तत् अशब्दम्—परोक्तमानुमानिकं प्रधानम् ।

---

1 अधिकरणचिन्तामणिस्थमिदं सर्वम् ।

2 ब्रह्मणो लक्षणेन दुर्ग्रहतया, तस्य विचार्यत्वस्थापनमयुक्तमित्याक्षेपे तत्परिहारायेदमधिकरणम् । किमित्यस्य तावत्पर्यन्ते तात्पर्यम् । एवमुपर्यधिकरणद्वयेऽपि आक्षेपः संगतिः ।

3 उपोद्घातोऽवसितः । अथ विचारस्यावसरः । न पुनर्विचार्यत्वाक्षेपः । अत इदमाक्षेपपदं सारावलांविव पूर्वपक्षमात्रपरम् ।

उ-६

सदेव सोम्येदमिति जगत्कारणतयाऽन्वयिनः ईक्षणव्यापारान्नाचेतनमशब्दम्, अपि तु सर्वज्ञं ब्रह्मैव जगत्कारणमिति ।

6 आनन्दमयोऽभ्यासात् । यदि सतो मुख्यमीक्षणमिष्टम्, तर्हि चेतनत्वाज्जीव एव जगत्कारणमस्त्विति पूर्वपक्षोत्थानात् [1]संगतिः । आनन्दमयशब्दनिर्दिष्टः आकाशादि-जगत्कारणभूतः प्रत्यगात्मनोऽर्थान्तरभूतः परमात्मा । कुतः । आनन्दस्य निरतिशयत्वप्रतीति-बलात् । स एको मानुष आनन्दः; ते ये शतम् इत्यभ्यासात् । तस्य प्रत्यगात्मन्यसंभावि-तस्य तदतिरिक्ते परमात्मन्येव संभवात् ।

7 अन्तस्तद्धर्मोपदेशात्—पूर्वं जीवसामान्यस्य निरासः; इदानीं जीवविशेषस्येति संगतिः । आदित्यान्तः श्रूयमाणः पुरुषः परं ब्रह्म तदसाधारणापहतपाप्मत्वादि-धर्मोपदेशात् ॥

8 आकाशस्तल्लिंगात्—पूर्वमादित्यान्तर्वर्तिनः पुरुषस्य विशेषलिंगात् वेदान्तवेद्यत्व-मुक्तम् । इदानीनाकाशस्य विशेषश्रुत्या तदाशंक्य परिहियते । सूत्रार्थः—आकाशशब्द-निर्दिष्टं परमेव ब्रह्म; प्रसिद्धवन्निदिश्यमानजगत्कारणत्वादिलिंगात् ।

9 अत एव प्राणः ॥ उक्तन्यायातिदेश इति संगतिः । सर्वाणि ह वा इमानीति प्रसिद्धवन्निर्देशादेव हेतोः प्राणशब्दनिर्दिष्टं परमेव ब्रह्म ।

10 ज्योतिश्चरणाभिधानात्—[2]अत्राकाशादिषु "आकाशाद्वायुः" इत्याद्युक्तक्रमेणो-पस्थिते अग्नौ पूर्वपक्षोत्थानं समा[धा]नश्चेति संगतिः । ज्योतिः परमं ब्रह्म । अस्य ज्योतिषः पूर्ववाक्ये सर्वभूतचरणत्वाभिधानात् । तच्च परस्यैवोपपद्यते ।

11 प्राणस्तथाऽनुगमात् । कथं परमपुरुषस्य ज्योतिःशब्दोक्तत्वम् । इन्द्रो हि वेदान्तवेद्यः प्रतीयत इति शंकया संगतिः । उपास्यतयोपदिष्टम् इन्द्रप्राणशब्दाभिधेयं परं ब्रह्म । तथेति प्रकारवचनम् । परब्रह्मप्रकारभूतेष्वानन्दादिष्वस्यानुगमात् ॥—इति प्रथमः पादः

1-2.

द्वौ प्रथमाध्यायविवक्षितौ; परमपुरुषायोगव्यवच्छेदः प्रथमे पादे, तदन्ययोगव्य-वच्छेदस्त्रिपाद्यामिति पादसंगतिः । प्रथमाध्याये चतुर्षु पादेषु क्रमेण अस्पष्टतरास्पष्टस्पष्टस्पष्टतर-जीवलिंगकानि वेदान्तवाक्यानि विचार्यन्ते ।

पूर्वं परमात्मप्रतिपादकान्महावाक्यात् जीवप्रतिपादनानुकूलमुपक्रमवाक्यं निराकृतम् । तर्हि तेनैव न्यायेन जीवप्रतिपादनानुकूलात् महावाक्यात्, परमात्मप्रतिपादनानुकूलं

1 एतदारभ्य उत्तरोत्तरमाक्षेप एव संगतिः । उत्थानरीतिः परं भिन्ना ।

2 सर्वत्राक्षेपस्याविशिष्टत्वेन आकाशादिक्रमनियामकमन्यदप्याह अत्रेति ।

[यत् तत्]निराक्रियतामिति शंकया [1]संगतिः। सर्वत्रप्रसिद्धोपदेशात्। सूत्रार्थः—सर्वत्र – सर्वं खल्विदं ब्रह्मेति निर्दिष्टे वस्तुनि सर्वशब्दसामानाधिकरण्येन तदात्मतया निर्दिष्टं परं ब्रह्मैव, कुतः। प्रसिद्धोपदेशात्। तज्जलानिति सर्वमिदं ब्रह्म खल्विति प्रसिद्धवत् तस्योपदेशात्। तदेव हि जगज्जनिस्थितिलयहेतुत्वेन वेदान्तेषु प्रसिद्धम्।

2 अत्ता चराचरग्रहणात्। पूर्वं अन्तर्यामिणो भोक्तृत्वं नास्तीत्युक्तम्; तर्ह्यत्र भोक्तृत्वेन प्रतिपन्नः, परमपुरुषो न स्यादिति शंकया संगतिः। अत्ता परमात्मा ब्रह्मक्षत्र-शब्देनचराचरस्य कृत्स्नस्य जगतो ग्रहणात्। मृत्यूपसेचनो ह्योदनः न ब्रह्मक्षत्रमात्रम्; अपि तु तदुपलक्षित चराचरात्मकं कृत्स्नं जगदेव।

3 अन्तर उपपत्तेः—परस्य तंदुर्दर्शंगूढमिति दुर्दर्शत्वोक्तेः, 'य एष...दृश्यत इत्युक्तो न पर इति संगतिः। अक्ष्यन्तरः परमात्मा संयद्वामत्वादीनामत्रैवोपपत्तेः।

4 स्थानादिव्यपदेशाच्चेति पूर्वं परमात्मनः उक्तं चक्षुषिस्थित्यादिकमत्र समर्थ्यते। अन्तर्या....त्। सूत्रार्थः—अधिदैवाधिलोकादिपदचिह्नितेषु वाक्येषु श्रूयमाणोऽन्तर्यामी परमात्मा, सर्वान्तरत्व - सर्वाविदितत्व - सर्वशरीरकत्व - सर्वनियमन-सर्वात्मत्वामृतत्वादि-परमात्मधर्माणां व्यपदेशात्।

5 अदृश्यत्वादिगुणको धर्मोक्तेः—पूर्वम् अदृष्टो द्रष्टेत्यादिना जीवो नान्तर्यामी-त्युक्तम्। इह तु न तादृशं द्रष्टृत्वादिकमुच्यते। अतोऽक्षरं प्रधानमित्येवं शंकया संगतिः। सूत्रार्थः—अदृश्यत्वादिगुणकः परमात्मा, सार्वज्ञ्यादितद्धर्मोक्तेः।

6 वैश्वानरः साधारणशब्दविशेषात्—उपन्यस्तं रूपं परस्मादन्यत्र दृश्यत इति शंकया संगतिः। सूत्रार्थः—वैश्व'नरशब्दनिर्दिष्टः परमात्मा, वैश्वानरशब्दस्य परमात्मा-साधारण सर्वात्मत्वादिभिर्विशेष्यमाणत्वात्। विशेष्यत इति विशेषः॥

1-3.

1 द्युभ्वाद्यायतनं स्वशब्दात्। पादसंगतिः प्रागुक्ता। द्युपृथिव्याधारत्वं परस्मादन्यत्र दृश्यत इति शंकया [अधिकरण] संगतिः। सूत्रार्थः—द्युपृथिव्यादीनामायतनं परमात्मा, स्वशब्दात्—स्वासाधारणात्मशब्दात्।

2 भूमा संप्रसादादध्युपदेशात्। परप्रकरणाविशेषात् तत्परत्वमुक्तम्। तर्हि जीवप्रकरणाविशेषाज्जीवपरत्वं स्यादिति शंकया संगतिः। सूत्रार्थः—भूमा—भूमगुणविशिष्टं परं ब्रह्मैव, संप्रसादात् प्रत्यगात्मनोऽधिकतयोपदेशात्। अतिवादित्वं हि स्वोपास्याधि-क्यवादित्वम्॥

---

1 दृष्टान्तसंगतिः। एवमुपरि यथायथं भाव्यम्।

3 अक्षरमम्बरान्तधृतेः । स्वे महिम्नि स्थितिरुक्ता । सा परस्मादन्यत्रापि दृश्यत इति शंकया संगतिः । सूत्रार्थः—अक्षरं परमात्मा, अम्बरान्तधृतेः । अम्बरं वायुमान् आकाशः, अंबरान्तः—अंबरपारभूतः ; अम्बरकारणमिति यावत् । तच्च प्रधानम् । तस्य धृतेः—धारणात् ॥

4 ईक्षतिकर्म व्यपदेशात् सः—आकाशशब्दवत् नान्तरिक्षब्रह्मलोकशब्दयोरन्यथा-निर्वाह इति शंकया संगतिः । सूत्रार्थः—ईक्षतिकर्म सः परमात्मा, व्यपदेशात् । तद्विषयतया, शान्तमजरममृतमभयं परं चेति परमात्मधर्माणामुपदेशात् ॥

5 दहर उत्तरेभ्यः—पूर्वं पुरिशयस्य परमात्मत्वमुक्तम् । तस्यापरमात्मत्वमिहोच्यत इति शंकया संगतिः । सूत्रार्थः—दहराकाशः परं ब्रह्म ; उत्तरेभ्यो वाक्यगतेभ्योऽपहत—पाप्मत्वादिपरमात्मासाधारणधर्मेभ्यो हेतुभ्यः ।

6 शब्दादेव प्रमितः—अल्पश्रुतेरिति परस्याल्पपरिमाणमुक्तम् । तद्विशेषो जीवस्य श्रूयत इति शंकया संगतिः । सूत्रार्थः—अंगुष्ठप्रमितः परमात्मैव, ईशानो भूतभव्यस्येति परमात्मवाचिशब्दात् ॥

7 तदुपर्यपि वादरायणः संभवात् । मनुष्यशब्दव्यावर्त्यं किं तिर्यङ्मात्रमुत देवाद-योऽपीति शंकया संगतिः । सूत्रार्थः—तदुपर्यपि—तेभ्यो मनुष्येभ्य उपरि वर्तमानानामपि अधिकारोऽस्ति [तदस्ति] । तेषामपि ब्रह्मस्वरूप-तदुपासन-प्रकारज्ञान-तदर्थित्व-तदुपासनसामर्थ्यसंभवात् ।

8 मध्वादिष्वसंभवादनधिकारं जैमिनिः । उपासनासामान्ये देवतासामान्यस्याधि-कारो निरूपितः । अथ तद्विशेषेषु तद्विशेषाणां स निरूप्यते इति संगतिः । सूत्रार्थः—मधुविद्यादिषु वस्वादीनामनधिकारं जैमिनिर्मन्यते ; असंभवात्—वस्वादीनामेवोपास्यानामुपासकत्वासंभवात् । वसुत्वादेः प्राप्तत्वादेव प्राप्यत्वासंभवाच्च ।

9 शुगस्य तदनादरश्रवणात् तदाद्रवणात् सूच्यते हि । अर्थित्वसामर्थ्ययोः प्रयोजकत्वे शूद्रादेरप्यधिकारोऽस्त्विति शंकया संगतिः । सूत्रार्थः ब्रह्मविद्यावैकल्येन हंसोक्तानादरश्रवणात् तदैव आचार्यं प्रति आद्रवणाच्च आचार्येण तस्य शुश्रूषोः विद्याऽलाभकृता शुक् सूच्यते । हि हेतौ ।

10 आकाशोऽर्थान्तरत्वादिव्यपदेशात् । दहरानन्तरमल्पश्रुतिप्रसंगेनांगुष्ठप्रमितस्य परत्वमुक्तम् । तत्रैव च मनुष्याधिकारत्वप्रसंगादधिकरणत्रयं मध्ये निवेशितम् । तदनन्तरं पूर्वाधिकरणशेषोऽपि समापितः । अधुना पूर्वप्रकृतदहरविद्योपसंहारस्यास्य, "आकाशो ह्वा"

इत्यादेर्जीवपरत्वशंकया संगतिः । सूत्रार्थः—आकाशः परमात्मा, अस्य नामरूपयोर्निर्वोढृत्व-तदस्पर्शलक्षणार्थान्तरत्वव्यपदेशात् ॥ आदिशब्देन निरुपाधिकब्रह्मत्वामृतत्वादीनि गृह्यन्ते ।

॥ इति प्रथमाध्यायस्य तृतीयः पादः ॥

1-4.

1 आनुमानिकमप्येकेषामिति चेन्न शरीररूपकविन्यस्तगृहीतेः दर्शयति च ॥ पादसंगतिः प्रागुक्ता । पूर्वमुक्तं जीववैलक्षण्यमयुक्तम् ; ततः परस्य निषेधादिति अवान्तर-शंकया संगतिः । सूत्रार्थः—एकेषां शाखायाम् आनुमानिकं प्रधानं जगत्कारणत्वेनाम्नायत इति चेत्—तन्न ; अव्यक्तशब्देन शरीराख्यरूपकविन्यस्तस्य गृहीतेः । दर्शयति चैनमर्थं वाक्यशेषः, यच्छेद्वाङ्मनसी' इत्यादिः ।

2 चमसवदविशेषात् । पूर्वं पारिशेष्य-स्थानप्रमाणाभ्यां कारणशब्दस्य कार्यशरीर-परत्वमुक्तम् । इह तु कार्यवाचिशब्दस्याश्रवणादकार्यं प्रधानमेवोच्यत इति शंकया संगतिः । सूत्रार्थः—नायमजाशब्दः तन्त्रसिद्धप्रधानविषयः, चमसवदविशेषात् । यथा अर्वाग्बिलश्चमस इति मन्त्रे भक्षणसाधनत्वयोगेन प्रवृत्तस्य चमसशब्दस्य शिरसि वृत्तौ, इदं तच्छिरः एष-ह्यर्वाग्बिलश्चमसः इति वाक्यशेषे विशेषो दृश्यते—तथा अजामेकामित्यजाशब्दस्य तन्त्रसिद्ध-प्रधाने वृत्तौ विशेषाभावान्न तद्ग्रहणं न्याय्यम् ॥

3 न संख्योपसंग्रहादपि नानाभावादतिरेकाच्च । प्रकृतेर्ब्रह्मात्मकत्वं साधितम् । तदयुक्तम्, परमात्मपरत्वे तत्त्वसंख्याधिक्यादिति शंकया संगतिः । "पञ्च पञ्चजनाः" इत्यत्र पञ्चविंशतिसंख्योपसंग्रहादपि न तान्त्रिकाणि इमानि तत्त्वानि । यस्मिन्निति यच्छब्दनिर्दिष्टब्रह्माधारतया तान्त्रिकेभ्यो नानाभावादेषां तत्त्वानाम् ; पृथग्भावादित्यर्थः । अतिरेकाच्च—तान्त्रिकेभ्यस्तत्त्वातिरेकप्रतीतेश्च । यस्मिन्निति निर्दिष्टमतिरिक्तम् ; आकाशश्च ।

4 कारणत्वेन चाकाशादिषु यथाव्यपदिष्टोक्तेः । एवं त्रिभिरधिकरणैः सांख्योक्तच्छायानुसारिवाक्यानां परमात्मपरत्वं प्रसाध्य तैरब्रह्मात्मकतया परिगृहीताव्यक्तादि-शब्दसामर्थ्यमपि परमात्मपरत्व एव सुसंगतमाचक्षाणः ईक्षत्याद्यधिकरणोक्तमर्थतत्त्वं सिंहावलोकनेन स्थापयतीति संगतिः । सूत्रार्थः—आकाशादिपदचिह्नितेषु, "तस्माद्वा एतस्मादात्मन आकाशः संभूतः" इत्यादिषु सर्वेषु सृष्ट्यादिवाक्येषु यथाव्यपदिष्टस्यैव कारणत्वेनोक्तेः । यथाव्यपदिष्टः—सार्वज्ञ्यादियुक्ततयाऽस्माभिर्व्यपदिष्टः ॥

5 जगद्वाचित्वात् ॥ पूर्वमव्याकृतशब्दस्य परमात्मपरत्वं निर्णीतम् । अत्र कर्मशब्दस्य जगद्वाचित्वमुच्यते इति संगतिः । सूत्रार्थः—यस्य वैतत् कर्मेति कर्मशब्दस्य क्रियत इति व्युत्पत्या जगद्वाचित्वात्, कृत्स्नं जगत् यस्य कार्यम् स परमपुरुष एव वेदितव्यतयोपदिष्टो भवति ।

6 वाक्यान्वयात् ॥ कमत्रश्य वाचिपदेन तद्रहितस्वरूपोक्तिर्लाक्षणिकीति जीवपरत्वं निरस्तम् । अत्र तु बद्धमुक्तसाधारणात्मशब्दश्रवणात् मुक्तिलिंगश्रवणाच्च तत्परत्वं युक्तमिति शंकया संगतिः । सूत्रार्थः—वाक्यस्य परमात्मन्येवान्वयात्, निर्दिष्ट आत्मा परमात्मैव ।

7 प्रकृतिश्च प्रतिज्ञादृष्टान्तानुपरोधात् । संगतिर्भाष्ये—एवं निरीश्वरसांख्ये निरस्ते सेश्वरसांख्यः प्रत्यवतिष्ठते । यद्यपि ईक्षणादिगुणयोगात् सर्वज्ञमीश्वरं जगत्कारणत्वेन वेदान्ताः प्रतिपादयन्ति, तथापि वेदान्तैरेव जगदुपादानतया प्रधानमेव प्रतिपाद्यते इति शंकया संगतिः । सूत्रार्थः—प्रतिज्ञादृष्टान्तानुपरोधात् उपादानश्च ब्रह्मैवेति ।

8 एतेन सर्वे व्याख्याताः व्याख्याताः । शास्त्रारम्भे जन्मादिसूत्रोक्तं जगन्निमित्तोपादानत्वं प्रकृत्यधिकरणे निगमितम् । अतः परम् उक्तावशिष्टानां श्रुतिवाक्यानां आनन्त्यात् अशेषेण वक्तुमशक्यत्वेन, तेनैव प्रकारेण निर्वाह ऊह्य इति संगतिः ॥ सूत्रार्थः—"यतो वा इमानि भूतानि इत्यादिवाक्येषु "जन्माद्यस्य यतः" इत्यादिनोक्तेन न्यायकलापेन सर्वे वेदान्ताः ब्रह्मपराः व्याख्याताः । पदाभ्यासोऽध्यायसमाप्तिद्योतनार्थः । इति प्रथमोऽध्यायः ।

## द्वितीयाध्याये प्रथमः पादः ॥

1 स्मृत्यनवकाशदोषप्रसंङ्ग इति चेन्न, अन्यस्मृत्यनवकाशदोषप्रसंगात् ॥ अयोगान्ययोगव्यवच्छेदेन ब्रह्मकारणत्वं निरूपितम् । द्वितीये तु तद्विरोधः परिह्रियत इति संगतिः । सूत्रार्थः—वेदान्तानां ब्रह्मकारणत्वपरत्वे आप्तप्रणीतायाः केवलतत्त्वपरायाः कपिलस्मृतेरनवकाशप्रसंग इति वेदान्तवेद्यं प्रधानमिति चेत्—अन्यस्मृतिभिः मन्वादिस्मृतिभिरुपबृंहणं न्याय्यम् । अन्यथा तेषामनवकाशो महानयं दोषः स्यात् ।

2 एतेन योगः प्रत्युक्तः । आतिदेशिकी संगतिः । कपिलस्मृतिवत् वेदविरुद्धत्वाविशेषात् योगोऽप्यनादरणीयः ।

3 न विलक्षणत्वादस्य तथात्वं च शब्दात् । मन्वादिस्मृतिभिर्वेदान्तानामुपबृंहणं कार्यमित्युक्तम् । ताः तर्कविरुद्धाः ; तर्कानुगृहीतसांख्यस्मृत्यैव तत् कार्यमिति प्रत्यवस्थानात् संगतिः । सूत्रार्थः—अज्ञत्वेन दुःखित्वेन चोपलब्धस्यास्य चिदचिन्मिश्रस्य जगतः सर्वज्ञात् हेयप्रत्यनीकान्निरतिशयानन्दाद्ब्रह्मणो विलक्षणत्वेन जगतो ब्रह्मकार्यत्वप्रतिपादनं वेदान्तानां न संभवति । तथात्वं च—विलक्षणत्वं च शब्दादवगम्यते ।

4 एतेन शिष्टापरिग्रहा अपि व्याख्याताः । सांख्यपक्षं प्रतिक्षिप्य तत्तुल्यन्यायेन कणभक्षादिपक्षाणामप्युक्तदोषेण त्याज्यत्वमित्यातिदेशिकी संगतिः । सूत्रार्थः—न परिगृह्यन्ते वैदिकैरित्यपरिग्रहाः । एतेन तर्काप्रतिष्ठानलक्षणेन कापिलस्मृतिनिरासहेतुना परिशिष्टाः कणभक्षादिस्मृतयोऽपि निरस्ता व्याख्याताः ।

5 भोक्त्रापत्तेरविभागश्चेत् स्याल्लोकवत् । पूर्वाधिकरणेन 'न तु दृष्टान्तभावात्' इति देही(हो) दृष्टान्तीकृतः । ततः तत्प्रयुक्तभोक्तृत्वशंकयोत्थानात् संगतिः । ब्रह्मणः सशरीरत्वात् जीवादविभाग इति चेत्—स्यादेव विभागः, लोकवत्—राज्ञ इव ।

6 तदनन्यत्वमारम्भणशब्दादिभ्यः । "असदिति चेन्न प्रतिषेधमात्रत्वात्" इत्यादिषु कारणभूतात् ब्रह्मणः कार्यस्य जगतोऽनन्यत्वमुपपादितम् । इदानीं तदेवाक्षिप्य समाधीयत इति संगतिः । सूत्रार्थः—तस्मात्—ब्रह्मणोऽनन्यत्वं कार्यस्य जगतः, आरम्भण-शब्दादिभ्यो वाक्येभ्यस्तदुपपादयद्भ्यः उपपद्यते ।

7 इतरव्यपदेशात् हिताकरणादिदोषप्रसक्तिः । असदित्यत्र प्रस्तुतमप्यनन्यत्वं तस्याधिकरणान्तरत्वात् तत्र न साधितम् । आरम्भणाधिकरणस्य तत्प्रयोज्यत्वात् प्रतिपादन-भेदाच्च । एवमनन्यत्वे समर्थितेऽनभिमतमापतितमिति शंकया संगतिः[1] । सूत्रार्थः—इतरः जीवः । ब्रह्मणो जीवतयाव्यपदेशात्, जीवस्य च दुःखित्वात् हितरूपजगदकरणमहितरूप-जगत्कारणमित्यादिदोषप्रसक्तिर्ब्रह्मणः । अतो जगत्कारणत्वं न संभवतीति ।

8 उपसंहारदर्शनान्नेति चेन्न क्षीरवद्धि ॥ सत्यसंकल्पत्वादिधर्मैर्हि व्यावृत्तिरुक्ता । अत्र सत्यसंकल्पत्वादेरसंकोचो निरूप्यते इति संगतिः । लोके कार्यजननसमर्थस्यापि वस्तुनस्तत्कार्यजनने अनेककारकोपसंहारदर्शनात् असहायस्य ब्रह्मणो जनयितृत्वं नेति चेन्न; क्षीरस्य दधिभावे अनन्यापेक्षत्वदर्शनात् ब्रह्मणः कारणत्वं संभवत्येव ।

9 कृत्स्नप्रसक्तिर्निरवयवत्वशब्दकोपो वा । प्राक्दृष्टान्तितक्षीरवत्[2] सावयवत्वं न वेति शंकया संगतिः । सूत्रार्थः—ब्रह्मकारणत्वे कृत्स्नस्य ब्रह्मणः कार्यत्वेनोपयोगप्रसंगः । निरवयवत्वशब्दकोपो वा—सावयवत्वे निरवयवत्वशब्दबाधप्रसंग इत्यर्थः ।

10 न प्रयोजनवत्त्वात् । यद्यपीश्वरः सर्वशक्तिर्विचित्रं जगत् स्रष्टुं शक्नोति—तथापि ईश्वरकारणत्वं जगतो न संभवति, प्रयोजनाभावादीश्वरस्येति शंकया संगतिः । प्रयोजन-वत्त्वात् सृष्टेरीश्वरस्य स्वतः परिपूर्णस्य प्रयोजनाभावान्न स्रष्टृत्वमिति सूत्रार्थः। इति प्रथमः पादः ॥

2-2.

1 रचनानुपपत्तेश्च नानुमानं प्रवृत्तेश्च ॥ स्वपक्षे कारणविषयपरोक्तदोषः परिहृतः ; परपक्षे कारणविषयदोष उच्यत इति पादसंगतिः ।

अधिकरणसंगतिस्तु—पूर्वाधिकरणे प्रयोजनाभावादनिमित्तत्वापत्तिः परिहृता ब्रह्मणः ; अधुना परोक्तस्यानुपपत्तिरुच्यते । सूत्रार्थः—अनुमीयत इत्यनुमानम्—प्रधानम् ।

1 एवं संगतिर्विष्णुचित्तीयैः (संगतिमालायाम) उक्तेत्यधिकरणचिन्तामणुक्तमत्रानूद्यते ।

2 क्षीरं यथा कृत्स्नं दधि भवति, तथा स्यादित्यपि विवक्षितम् ।

तस्याचेतनस्य प्राज्ञानधिष्ठितस्य विचित्रसंनिवेशजगद्रचनानुपपत्तेः तन्न कारणम् । चकारः सत्त्वादीनां द्रव्यगुणत्वेन शौक्ल्यादेरिव उपादानकारणत्वासंभवं समुच्चिनोति । प्राज्ञानधिष्ठितस्याचेतनस्य प्रवृत्त्यनुपपत्तेः प्राज्ञाधिष्ठितत्वे त्वचेतनस्य प्रवृत्तेश्च न प्रधानं कारणम् ॥

2 महद्दीर्घवद्वा ह्रस्वपरिमण्डलाभ्याम् ॥ प्रकृतिपरमाण्वोरानुमानिकत्वान्निरासौ संगतौ । किं च ईश्वरानधिष्ठितप्रधानकारणवादी पूर्वं निरस्तः । अधुना निमित्तमात्रेश्वराधिष्ठितपरमाणूपादानवादी निरस्यत इति संगतिः । सूत्रार्थः—असमञ्जसमिति वर्तते । वाशब्दः चार्थे । ह्रस्वपरिमण्डलाभ्यां द्व्यणुकपरमाणुभ्यां त्र्यणुकद्व्यणुकोत्पत्तिवत् अन्यच्च तदभ्युपगतं सर्वमसमञ्जसम् ।

3 समुदाय उभयहेतुकेऽपि तदप्राप्तिः । परमाणुषु चातुर्विध्य-एकान्तत्वसाम्याभ्युपगमात् संगतिः । सूत्रार्थः—उभयहेतुकेऽपि समुदाये समुदायाप्राप्तिः । परमाणुहेतुकः पृथिव्यादिसमुदायः, पृथिव्यादिहेतुकः शरीरेन्द्रियादिसमुदाय इत्युभयहेतुक समुदायः क्षणिकत्वाभ्युपगमादुक्तेन न्यायेन न सिद्ध्यतीत्यर्थः ॥

4 नाभाव उपलब्धेः । पूर्वं बाह्यार्थास्तित्ववादिनो वैभाषिकाः सौत्रान्तिकैः सह निरस्ताः । अधुना बाह्यार्थनास्तित्ववादिनः योगाचारा निरस्यन्ते इति संगतिः । सूत्रार्थः—ज्ञानव्यतिरिक्ताभावो न शक्यते वक्तुम् । घटमहं जानामीति जानातेः कर्मतया कर्तृतया चोपलब्धेः ॥

5 सर्वथाऽनुपपत्तेश्च । माध्यमिकपक्ष एव सुगतमतकाष्ठा । पक्षान्तराणि तु शिष्यबुद्धियोग्यतानुगुण्येनार्थाभ्युपगमादिना पूर्वमुपन्यस्तानि । अधुना प्रधान एव पक्ष उपन्यस्य निरस्यत इति संगतिः । सर्वशून्यवादिनः सर्वथापि सर्वशून्यत्वानुपपत्तेः स्वाभिमतासिद्धिः, सद्भावासद्भावयोर्विद्यमानवस्तुधर्मत्वोपपादनात् ॥

6 नैकस्मिन् असंभवात् ॥ एकान्तत्व—अणुचातुर्विध्योपगमसाम्यात् कणादसौगतनिरासयोस्संगतत्वात् सौगतानन्तरमार्हतनिरासस्संगतिः—जैनमतं न युक्तम् । एकस्मिन् युगपद्विरुद्धधर्मसमावेशासंभवात् ।

7 पत्युरसामञ्जस्यात् ॥ वेदविरोधित्वसाम्यात् धीस्थतया संगतिः । सूत्रार्थः—न पशुपतेर्मतमादरणीयम् । कुतः । वेदविरुद्धतत्त्वाचारबोधित्वेनासामञ्जस्यात् ।

8 उत्पत्त्यसंभवात् । कपिलादितन्त्रसामान्यात् भगवदभिहिते परमनिःश्रेयससाधनावबोधिनि पाञ्चरात्रतन्त्रेऽपि अप्रामाण्यमाशङ्क्य निराक्रियत इति संगतिः । "न जायते म्रियते" इत्यादिश्रुतेः जीवस्य उत्पत्त्यसंभवात् जीवोत्पत्तिवचनाच्च न प्रमाणं पाञ्चरात्रम् ॥ [इदं पूर्वपक्षसूत्रम्] । इति द्वितीयाध्याये द्वितीयः पादः ।

2-3-

1 न वियदश्रुतेः। कारणविषये परोक्तदोषपरिहार-परपक्षप्रतिक्षेपौ पादद्वयेन कृतौ ; अथ कार्यविषये परोक्तदोषाः परिह्रियन्त इति [1]पादसंगतिः। आत्मन उत्पत्त्यसंभवः प्रस्तुतः। तद्वत् निरवयवद्रव्यस्य वियतोऽनुत्पत्तिरित्यधिकरणसंगतिः ॥ सूत्रार्थः—वियन्नोत्पद्यते। कुतः। अश्रुतेः। श्रुतिः--श्रवणम्। असंभावनीयस्य श्रवणासंभवात्। [पूर्वपक्षसूत्रम्]

2 तेजोऽतस्तथा ह्याह ॥ ब्रह्मव्यतिरिक्तस्य कृत्स्नस्य ब्रह्मकार्यत्वमुक्तम् ; इदानीं व्यवहितकार्याणां किं केवलात् तदनन्तरभूताद्वस्तुन उत्पत्तिः आहोस्वित् तद्रूपाद्ब्रह्मण इति चिन्त्यत इति [2]संगतिः। सूत्रार्थः—अतः—वायोरेव केवलादुत्पद्यते तेजः, तथा ह्याह, "वायोरग्निः" इति। [पूर्वपक्षसूत्रम्]

3 नाऽऽत्मा श्रुतेर्नित्यत्वाच्च ताभ्यः ॥ पूर्वमचिदुत्पत्तिप्रकारश्चिन्तितः ; अधुना जीवोत्पत्तिवादानां प्रकरणान्तरप्रदर्शनादन्यथासिद्धिः क्रियत इति [3]संगतिः। सूत्रार्थः—नाऽऽत्मोत्पद्यते, "न जायते" इति अनुत्पत्तिश्रुतेः। "अजो नित्यः", "नित्यो नित्यानाम्" इत्यादिश्रुतिभ्यो नित्यत्वावगमाच्च ॥

4 ज्ञोऽत एव ॥ वियदादिवत् जीवो नोत्पद्यत इत्युक्तम् ; तत्प्रसंगात् जीवस्वरूपं निरूप्यत इति संगतिः। सूत्रार्थः—अतः—श्रुतेः ज्ञातैव ॥

5 कर्ता शास्त्रार्थवत्त्वात् ॥ ज्ञातृत्वसापेक्षत्वात् कर्तृत्वस्य तदनन्तरं तच्चिन्तेति संगतिः ॥ सूत्रार्थः—स्वर्गापवर्गसाधनानुष्ठानविधानशास्त्राणामर्थवत्त्वाय कर्तैवात्मा ॥

6 परात्तु तच्छ्रुतेः। जीवस्योक्तं कर्तृत्वं स्वातन्त्र्येण उत परमात्मायत्तमिति चिन्त्यत इति संगतिः ॥ सूत्रार्थः—"अन्तः प्रविष्टः शास्ता जनानां सर्वात्मा", "य आत्मानमन्तरो यमयति" इति श्रुतेः परमात्मायत्तमेव कर्तृत्वम्।

7 अंशो नानाव्यपदेशादन्यथा चापि दाशकितवादित्वमधीयत एके। जीवोऽनुमतिदानात् प्रवर्त्यश्चेत्, राजभृत्यादिवत् स्वनिष्ठः स्यादिति शंकया संगतिः। सूत्रार्थः—अंशः—परमात्मांशो जीवः ; नानाव्यपदेशात् ; अन्यथा च—अभेदव्यपदेशाच्च। उक्तरीत्या उभयमुख्यत्वादेवेत्यभिप्रायः। 'ब्रह्म दाशाः' इत्यादिना दाशकितवादित्वमप्यधीयत एके शाखिनः।

इति द्वितीयाध्याये तृतीयः पादः ॥

---

1 पूर्वपादद्वयवत् उत्तरपादद्वयमपि पृथक्पेटिकेति भावः।

2 एवं तेजसस्तैत्तिरीयकोक्तवायुद्वारकत्वोक्तौ साक्षात् ब्रह्मजत्वबोधि छान्दोग्यमुपेक्ष्यमिति साक्षात्कारणत्वाभावशंकनमेवेति भावः।

3 अचिद्वत् चिदुत्पत्तिशंकया दृष्टान्तसंगतिः।

2.4

1 तथा प्राणाः । ब्रह्मव्यतिरिक्तकृत्स्नस्य उत्पत्तावुक्तायां जीवस्य स्वरूपान्यथाभावरूपोत्पत्तिरपोदिता ; तत्प्रसंगेन जीवस्वरूपं निरूपितम् । संप्रति जीवोपकरणानामुत्पत्तिप्रकारो विशोध्यत इति पादसंगतिः । [1]यथा जीवः श्रुतेर्नोत्पद्यते, तथेन्द्रियाण्यपि नोत्पद्यन्ते इति शंकया संगतिः 1 (पू) 1

2 सप्त गतेर्विशेषितत्वाच्च ॥ एवमिन्द्रियाणां कार्यत्वमुक्तम् ; तेषां संख्या विचिन्त्यत इति संगतिः ॥ सूत्रार्थः—सप्तानामेव गतिश्रवणात्, ज्ञानानि पञ्च मनो बुद्धिश्च इति विशेषितत्वाच्च तानि सप्तैव ॥

3 अणवश्च ॥ इन्द्रियाणां संख्या उक्ता ; तत्स्वरूपपरिमाणं चिन्त्यत इति संगतिः । सूत्रार्थः—प्राणमनूत्क्रामन्तं सर्वे प्राणा अनूत्क्रामन्तीति प्राणानामुत्क्रान्तिश्रवणात् परिमितत्वे सिद्धे सति अप्रत्यक्षत्वादणवः ।

4 न वायुक्रिये पृथगुपदेशात् ॥ पूर्वेणैव तुल्यन्यायतासिद्धं श्रेष्ठस्यापि प्राणस्योत्पाद्यत्वमुपजीव्य तत्स्वरूपविशेषचिन्ता । वायुमात्रं क्रिया वा न प्राणः ; पृथगुपदेशात् । "जायते प्राणः.... खं वायुः" इति हि पृथगुत्पत्तिरुपदिश्यते ।

5 अणुश्च । स्वरूपं विशोध्य अणुत्वं वर्ण्यते इति संगतिः । उत्क्रान्तिवचनात् इन्द्रियवत् प्राणश्चाणुः ।

6 ज्योतिराद्यधिष्ठानं तु तदामननात् प्राणवता शब्दात् ॥ सश्रेष्ठानां प्राणानामुत्पत्त्यादिकमुक्तम् ; अत्र जीवस्याग्न्यादिदेवतानां च प्राणविषयमधिष्ठानं चिन्त्यत इति संगतिः । सूत्रार्थः—प्राणवता—जीवेन सह ज्योतिरादेः—अग्न्यादेर्वागाद्यधिष्ठानम् तदामननात्—परमात्मामननात् भवति । आमननम्—आभिमुख्येन मननम् । तत्संकल्पादेव भवतीत्यर्थः ।

7 त इन्द्रियाणि तद्व्यपदेशादन्यत्र श्रेष्ठात् ॥ पूर्वं सर्वेषामुत्क्रान्तिरुक्ता । अत्र तु इन्द्रियशब्दवाच्यत्वनियमार्थं पुनरारभ्यते इति संगतिः । श्रेष्ठादन्यत्र ये प्राणास्ते इन्द्रियाणि । तेष्वेव तद्व्यपदेशात्—इन्द्रियव्यपदेशात् ।

8 संज्ञामूर्तिक्लृप्तिस्तु त्रिवृत्कुर्वत उपदेशात् । पूर्वपादोक्तसमष्टिसृष्टिचिन्तया व्यष्टिसृष्टिचिन्तेति [2]संगतिः । सूत्रार्थः—तुशब्दः पक्षव्यावृत्त्यर्थः । संज्ञामूर्तिक्लृप्तिः—

1 ज्ञाधिकरणादीनामात्माधिकरणप्रसंगप्राप्तत्वात् आत्माधिकरणेन साकमस्य संगतिः; यत्प्रसंगेन यत् आगतम्, तत्समाप्तौ तद्बुद्धिस्थं जायत इति न्यायादिति भावः । आत्मवदनुत्पत्तिशंकनात् दृष्टान्तसंगतिः । 2 पूर्वपादादि एतावत्पर्यन्तमेका पेटिका ; इदमधिकरणं व्यष्टिविषयं पृथगिति भावः । उपकारकेऽपि मुख्यप्राणे यथेन्द्रियत्वं नास्ति, तथा व्यष्टिषु परमात्मकर्तृकत्वं नास्तीति तद्दृष्टान्तेन शंकेत्यधिकरणसंगतिः ।

नामरूपक्लृप्तिः परमात्मन एव । कुतः । त्रिवृत्कुर्वत उपदेशात् । त्रिवृत्करणं तु परमात्मन एवेत्युक्तम् ॥ इति द्वितीयाध्यायः ॥

अथ तृतीयाध्याये प्रथमः पादः ॥ 3-1-

1 तदन्तरप्रतिपत्तौ रंहति संपरिष्वक्तः प्रश्ननिरूपणाभ्याम् ॥ पूर्वं मूर्तिः प्रसक्ता ; अत्र देशान्तरे मूर्त्यन्तरप्राप्तौ किं पूर्वमूर्तिसंगतभूतसूक्ष्मैः परिष्वक्तो याति, नेति विचार्यते इति संगतिः । सूत्रार्थः—तदन्तरप्रतिपत्तौ—देहान्तरगमने भूतसूक्ष्मैः संपरिष्वक्तः जीवः रंहति—गच्छति । कुतः । प्रश्ननिरूपणाभ्याम्—प्रश्नप्रतिवचनाभ्याम् ।

2 कृतात्ययेऽनुशयवान् दृष्टस्मृतिभ्यां यथेतमनेवं च ॥ यावत्संसारं प्रकृत्यसंबन्धो निषिद्धः । अथ तद्धेतुभूतकर्मसंबन्ध उच्यते इति संगतिः । कृतात्यये—कृतस्य पुण्यकर्मणः अत्यये, अनुशयवान्—भुक्तशिष्टकर्मवान् निवर्तते । कुतः। दृष्टस्मृतिभ्याम्—श्रुतिस्मृतिभ्याम् ।

3 अनिष्टादिकारिणामपि (च) श्रुतम् । कर्मसंबन्ध उक्तः ; तत्रापि साधुकर्म[गति ?]-संबन्धनियमो नेत्युच्यते इति संगतिः । सूत्रार्थः—(पू०) अनिष्टादिकारिणाम् —इष्टापूर्तादि अकुर्वतामपि चन्द्रगमनमस्ति । ये वै केचेति अविशेषेण श्रुतमिति ।

4 तत्स्वाभाव्यापत्तिरुपपत्तेः । इष्टादिकारिणश्चन्द्रमसोऽवरोहन्तीत्युक्तम् । अत्राकाशादिप्रतिपत्तौ, देवादिभाववत् आकाशादिभावः उत तत्सादृश्यादिमात्रमिति संशये देवादिभावदृष्टान्तेन शंकया संगतिः । सूत्रार्थः—तत्स्वाभाव्यापत्तिः—आकाशादि-सादृश्यापत्तिः । उपपत्तेः—सुखदुःखानुभवरूपोपपत्तेः ।

5 नातिचिरेण विशेषात् । आकाशादिप्राप्तिप्रभृति यावद्व्रीह्यादिप्राप्ति किं तत्र तत्र नातिचिरं तिष्ठति उतानियम इति विशये, देवादिभावदृष्टान्तेन चिरमिति संभवशंकया संगतिः । सूत्रार्थः—आकाशादिप्राप्तौ नातिचिरं तिष्ठति ; उत्तरत्र व्रीह्यादिभावे ततोवैदुर्निष्प्र पतरमिति विशिष्य चिरेण गमनवचनात् ।

6 अन्याधिष्ठिते पूर्ववदभिलापात् । अवरोहन्तो जीवाः व्रीह्यादिभावे जायन्त इति श्रूयते । किं अन्याधिष्ठितव्रीह्यादीन् आश्लिष्यन्ति उत भोक्तारो व्रीह्यादिशरीराः जायन्त इति चिन्त्यते । संश्लेषमात्रम् । कुतः । पूर्ववदभिलापात् । आकाशादिभाववत् केवलव्रीह्यादि-भावाभिलापात् । जन्महेतुकर्मानभिधानादित्यर्थः । इति प्रथमः पादः ।

3-2-

1 सन्ध्ये सृष्टिराह हि । एवं कर्मानुरूपगमनागमनजन्मादियोगेन जाग्रतो जीवस्य दुःखित्वं ख्यापितम् ; इदानीमस्य स्वप्नावस्था परीक्ष्यते इति संगतिः । सूत्रार्थः— (पू०)-स्वप्ने श्रूयमाणा रथादिसृष्टिः स्वप्नदृशा जीवेन कृता । कुतः । आह हि—स हि कर्तेति तस्यैव परामर्शादित्यर्थः । (पू०)

2 तदभावो नाडीषु तच्छ्रुतेरात्मनि च । तदभावः—स्वप्नाभावः सुषुप्तिः नाडीष्वत्मनि च । चकारात् पुरीतति च । तच्छ्रुतेः । त्रयाणां सुषुप्तिस्थानत्वेन श्रुतेः ।

3 स एव तु कर्मानुस्मृतिशब्दविधिभ्यः । [1]किं सुप्त एव प्रबोधसमये उत्तिष्ठति उतान्य इति विशये, सुषुप्तेः प्रागारब्धकर्मासमापनात्, सोऽहमिति प्रत्यभिज्ञानात्, इहव्याघ्रोवेत्यारभ्य यद्यत् भवन्तीति शब्दात्, मोक्षसाधनविध्यानर्थक्याच्च स एवोत्तिष्ठति ।

4 जाग्रत्स्वप्नसुषुप्तिरूपावस्थाविशेषान् परिशोध्य अनन्तरं मूर्छारूपा सुषुप्तितुल्यावस्था विचार्यते—मुग्धेऽर्धसंपत्तिः परिशेषात् ॥ जाग्रत्स्वप्नसुषुप्तिमतो या मूर्छावस्था सा मरणायार्धसंपत्तिः । कुतः । परिशेषात् प्राणादिसर्वव्यापारोपरतेर्न जागरावस्था । न च गतप्राणा ; तदाकारवैलक्षण्येन सूक्ष्मप्राणास्तित्वावगतेः । मूर्च्छितस्यैव कस्यचित् पुनर्जीवनाच्च न मरणमिति परिशेषान्मरणायार्धसंपत्तिरित्यवगम्यते ।

5 न स्थानतोऽपि परस्योभयलिंगं सर्वत्र हि । दोषदर्शनाद्वैराग्योदयाय जीवस्थावस्थाविशेषा निरूपिताः । इदानीं ब्रह्मप्राप्तितृष्णाजननाय प्राप्यस्य ब्रह्मणो निर्दोषत्वप्रतिपादनायारभते । पृथिव्यादिष्वन्तर्यामितयाऽवस्थितस्यापि ब्रह्मणः, जीवस्य तत्र तत्रावस्थितस्य ये दोषा उक्ताः ते परस्य न संभवन्ति । उभयलिंगं सर्वत्र हि । हिहेतौ । यतः सर्वत्र श्रुतिस्मृतिषु निरस्तनिखिलदोषतासमस्तकल्याणगुणात्मकतारूपोभयलक्षणं ब्रह्मैवावगतम् ॥

6 उभयव्यपदेशात्त्वहिकुण्डलवत् । अचित्प्रसंगात् संगतिः । सूत्रार्थः—तुशब्दोऽवधारणे । (पू०) अहेः कुंडलभावादिवत् ब्रह्मस्वरूपस्यैवाचिद्रूपेणावस्थानम् । कुतः । नानात्व-एकत्वरूपोभयव्यपदेशात् ॥

7 परमतः सेतून्मानसंबन्धभेदव्यपदेशेभ्यः । पूर्वत्र निर्दोषत्वं स्थापितम् ; इह तु कल्याणगुणात्मकत्वमिति संगतिः । (पू०) 'जन्माद्यस्य यतः' इत्यारभ्य, 'अतोऽनन्तेन तथा हि लिंगम्' इत्यन्तेन प्रतिपादितात् परस्मात् ब्रह्मणः परमपि किंचिदस्तीति कश्चिन्मन्यते । कुतः । सेतून्मानसंबन्धभेदव्यपदेशेभ्यः—अथ य आत्मा स सेतुरिति सेतुत्वव्यपदेशात्, एतं सेतुं तीर्त्वेति अस्य तरितव्यतोपदेशात्, चतुष्पात् ब्रह्म षोडशकलमिति परिमितत्वव्यपदेशात्, अमृतस्यैष सेतुरिति प्रापकत्वश्रुतेश्चेति सूत्रार्थः ।

8 फलमत उपपत्तेः । अतः—परस्मात् ब्रह्मण एव कर्मभिरुपासनेन च आराधितात् भोगापवर्गरूपफलम् । कुतः । उपपत्तेः । कर्म हि क्षणविध्वंसि न कालान्तरभाविफलायालम् । स हि सर्वज्ञः सर्वशक्तिः परमकारुणिको महोदारोऽनादिरनन्तश्च सर्वेश्वरः फलद इत्युपपद्यते । इति तृतीयाध्याये द्वितीयपादः ॥

---

1 एकैकजीवेऽपि उक्तद्वैयावस्थासमभिहारज्ञापनाभिप्रायेण भेदाभेदविचारः क्रियते ।

3.3.

1 सर्ववेदान्तप्रत्ययं चोदनाद्यविशेषात् । उक्तं ब्रह्मोपासिसिषोपजननाय ब्रह्मणः फलदायित्वपर्यन्तम् ; इदानीं ब्रह्मोपासनानां गुणोपसंहारविकल्पनिर्णयाय विद्याभेदाभेदचिन्ता प्रस्तूयत इति पादसंगतिः । पूर्वाधिकरणे उपास्यस्य फलदत्वेन प्राधान्यमुक्तम् ; अधुना फलसाधनत्वेन कर्मापेक्षया प्राधान्यात् विद्या विचार्यत इति संगतिः । तत्र विश्वप्रपञ्चविग्रहोपासनरूपाया वैश्वानरविद्यायाः परविद्यान्तरात् प्राधान्यात् सैव प्रथमं निर्दिश्यते । सूत्रार्थः—सर्ववेदान्तप्रत्ययमेकं दहराद्युपासनम् ; चोदनाद्यविशेषात् ।

2 अन्यथात्वं शब्दादिति चेन्नाविशेषात् । सामान्येन विद्यासु सर्वशाखाप्रत्ययनयावतार उक्तः ; तद्विशेषेषु भेदाभेदहेतुभावाभावौ निरूप्येते इति पेटिकासंगतिः । पूर्वोक्तमैक्यं क्वचिदपोद्यत इति अधिकरणसंगतिः । सूत्रार्थः—अन्यथात्वं शब्दादिति राद्धान्तच्छायया परिचोद्य नाविशेषादिति पूर्वपक्षी परिहरति । 'अथ ह य एवायं मुख्यः प्राणः तमुद्गीथमुपासाञ्चक्रिरे'', ''अथ हेममासन्यं प्राणमूचुस्त्वं न उद्गायेति । तथेति तेभ्य एष प्राण उदगायत्'' इति एकत्र उद्गीथे प्राणदृष्टिशब्दात् इतरत्र उद्गातरि प्राणदृष्टिशब्दाच्च रूपान्यथात्वमिति चेत्–तन्न ; अविशेषात् । उपक्रमे ह्यविशेषेण 'उद्गीथेनात्ययाम', उद्गीथमाजहुरनेनैनानभिहनिष्यामः' इत्युद्गीथस्यैवोपास्यत्वप्रतीतेः, 'त्वं न उद्गायेति, तथेति तेभ्य एष प्राण उदगायत् इति कर्मण्येवोद्गीथे कर्तृत्वमुपचर्यत इति युक्तम् ; अन्यथोपक्रमविरोधात् (पू०) ।

3 सर्वाभेदारन्यत्रेमे । एवं दृष्टिविशेषणतया प्राणः प्रस्तुतः । स्वतन्त्रतद्विषयमुपासनं निरूप्यत इति संगतिः । सूत्रार्थः—अन्यत्र कौषीतकिप्राणविद्यायामिमे वसिष्ठत्वादयः सन्त्येव । कुतः ? सर्वाभेदात् । प्राणज्यैष्ठ्यश्रैष्ठ्योपपादनप्रकारस्य सर्वस्य तत्राप्यभेदात् ।

4 आनन्दादयः प्रधानस्य । पूर्वं ज्यैष्ठ्यादिगुणान्तर्भावेन वसिष्ठत्वादीनामपि अनुसन्धेयत्वमुक्तम् । तत्प्रसंगात् ब्रह्मणः सर्वविद्यावेद्यत्वात् तत्स्वरूपनिरूपकधर्माणामानन्दादीनां तत्स्वरूपगुणान्तर्भावेनानुसन्धेयत्वमुच्यते इति संगतिः । सूत्रार्थः—आनन्दादयो गुणाः सर्वासूपसंहर्तव्याः ; प्रधानस्य गुणिनो ब्रह्मणः सर्वासु विद्यास्वभेदात् । सर्वासु परविद्यासु ब्रह्मैकमनुसन्धेयं चेत्, यैर्गुणैर्विना ब्रह्मस्वरूपानुसन्धानमशक्यम्, ते च ज्ञानानन्दादयोऽनुसन्धेया इत्यर्थः ।

5 कार्याख्यानादपूर्वम् ॥ पूर्वप्रस्तुतप्राणविद्याशेषभूतमिदानीं चिन्त्यते इति संगतिः । सूत्रार्थः—अपूर्वम्—अप्राप्तम् अपां प्राणवासस्त्वानुसंधानं विधेयम् ; न पुनः प्राप्तमाचमनम् । कुतः—कार्याख्यानात् अप्राप्ताख्यानस्वभावत्वात् शास्त्रस्येत्यर्थः ।

6 समान एवं चाभेदात् । पूर्वाधिकरणं प्राणविद्याप्रसंगात् कृतम् ; तत्पूर्वेणास्य संगतिः । सूत्रार्थः—मनोमयत्वादिके समाने सति विद्यैक्यम् । एकं चाभेदात्—वशित्वादिगुणेनाप्यभेदात् । वशित्वादिर्हि सत्यसंकल्पत्वविततिः ।

7 संबन्धादेवमन्यत्रापि । पूर्वं शाण्डिल्यविद्याया रूपभेदाभावात् विद्यैक्यमुक्तम् । तर्हि बृहदारण्यकोक्तादित्यविद्यायामपि रूपभेदाभावात् विद्यैक्यमिति शंकया संगतिः । सूत्रार्थः—यथा मनोमयत्वादिगुणविशिष्टस्यैकस्यैवोपास्यत्वेनोभयत्र विद्यैक्यम्, एवमन्यत्रापि ; अक्ष्यादित्याधारस्याप्येकस्यैव सत्यस्य ब्रह्मणः स्थानद्वयसंबन्धान्न रूपभेद इति विद्यैक्यात्, द्वे नामनी अनियते । (पू.) ०

8 संभृतिद्युव्याप्त्यपि चातः । नाम्नोरिव संभृत्यादेरपि व्यवस्थेति संगतिः । संभृतिद्युव्याप्तीति समाहारद्वन्द्वेनैकवद्भावः । संभृतिप्रभृतिगुणजातमपि अत एव—स्थानविशेषसंबन्धनियतत्वात् नियतम् । न सर्वत्रोपसंहार्यम् । द्युव्याप्तिर्हि स्वसामर्थ्यादल्पस्थानानर्हतया तदितरस्थाननियता । संभृत्याद्यपि तत्साहचर्यात् तथैव ॥

9 पुरुषविद्यायामपि चेतरेषामनाम्नानात् । द्युव्याप्तिसंनिध्युक्तसंभृत्यादेरिव ब्रह्मविद्यासन्निधिस्थपुरुषविद्यायास्तत्संबन्धित्वमिति संगतिः । पुरुषविद्यायामप्यत्र उभयत्र रूपभेदाद्विद्याभेदः । इतरेषां तैत्तिरीयकाम्नातानां छान्दोग्ये अनाम्नानात् ।

10 वेधाद्यर्थभेदात् । संनिधिस्थपुरुषविद्याया इव तादृशां "शंनोमित्रः" इत्यादिमन्त्राणां ब्रह्मविद्यांगत्वमिति शंकया संगतिः । सूत्रार्थः—शुक्रं प्रविध्येति मन्त्रसामर्थ्यात् वेधाद्यर्थभेदवत् "सत्यं वदिष्यामि" इति मन्त्रस्य, अध्ययनसंबन्धरूपार्थभेदसत्त्वात् न विद्यांगत्वम् । शं नो मित्रः इत्यादिमन्त्र[1] एव विषयः ।

11 हानौ तूपायनशब्दशेषत्वात् कुशाच्छन्दस्तुत्युपगानवत् तदुक्तम् । ब्रह्मविद्यासंनिधिसमाम्नातानां तदनंगत्वमुक्तम् ; तथा संनिधिसमाम्नातहानादिचिन्ता प्राप्तेति संगतिः । सूत्रार्थः—तुशब्दः पक्षव्यावृत्त्यर्थः । हानाविति प्रदर्शनार्थम् । विमोचनोपायनयोरितरेतरसमुच्चयोऽवश्यम्भावी । कुतः ? उपायनशब्दस्य हानिवाक्यशेषत्वात् । प्रदेशान्तरस्थस्य प्रदेशान्तराम्नातशेषत्वे दृष्टान्तानाह कुशाच्छन्दस्तुत्युपगानवदिति । यथा—वानस्पत्याः कुशा इति वाक्यस्य औदुम्बर्यः कुशा इति तद्विशेषवाचि प्रदेशान्तरस्थम्, यथा देवासुराणां छन्दोभिरिति प्रदेशान्तरस्थस्य तत्क्रमविशेषवाचि देवच्छन्दांसि पूर्वमिति प्रदेशान्तरस्थम्, यथा हिरण्येन षोडशिनः स्तोत्रमुपाकरोतीति प्रदेशान्तरस्थस्य तत्कालविशेषवाचि 'समयाविषिते सूर्ये षोडशिनः स्तोत्रमुपाकरोती'ति प्रदेशान्तरस्थम्, यथा ऋत्विज उपगायन्तीत्यस्य नाध्वर्युरुपगायेदिति तत्पर्युदासरूपं प्रदेशान्तरस्थम् । एवं

1 शुक्रंप्रविध्येत्यादिर्दृष्टान्तत्वाय निर्दिष्टः ; न तु विचार्यः ; असंदेहादिति भावः ।

संभवन्त्यां गतौ न विकल्पो युक्तः । तदुक्तं पूर्वस्मिन् काण्डे, अपि तु वाक्यशेषः स्यादन्याय्यत्वाद्विकल्पस्येत्यादिना ।

12 सांपराये तर्तव्याभावात् तथा ह्यन्ये । सुकृतादिहानमुपायनं च सर्वत्र चिन्त्यमुक्तम् ; तद्धानं किं देहवियोगकाले देहादुत्क्रान्तस्याध्वनि च, उत देहवियोगकाल एवेति चिन्त्यते । सूत्रार्थः—सांपराये देहवियोगकाल एवेति चिन्तनीयम् । कुतः । तर्तव्याभावात्—देहवियोगादूर्ध्वं ब्रह्मप्राप्तिव्यतिरेकेण तरितव्याभावात् । तथा ह्यन्येऽधीयते, "तस्य तावदेव चिरं यावन्न विमोक्ष्ये, अथ संपत्स्ये" इति । "अशरीरं वाव सन्तं न प्रियाप्रिये स्पृशतः" इति च ।

13 अनियमः सर्वेषामविरोधः शब्दानुमानाभ्याम् । पूर्वमर्चिरादिमार्गः प्रस्तुतः । स किं यत्र श्रुतः, तद्विद्यानिष्ठस्यैव उत सर्वविद्यानिष्ठस्येति चिन्त्यते । अनियमः—सर्वेषामविशेषेण तयैव प्राप्तिः । कुतः । अविरोधः शब्दानुमानाभ्याम् । तथा सत्येव श्रुतिस्मृतिभ्यामविरोधः । श्रुतिः पञ्चाग्निविद्यायां निदर्शिता । स्मृतिः, अग्निर्ज्योतिरहः शुक्ल इत्यादिका ।

14 अक्षरधियां त्ववरोधः सामान्यतद्भावाभ्यां औपसदवत् तदुक्तम् । पूर्वं अर्चिरादिगतेः सर्वसाधारण्यमुक्तम् । अधुना अक्षरधियां सर्वसाधारण्यं न वेति विचिन्त्यते । अक्षरधियाम्—अक्षरसंबन्धिनीनामस्थूलत्वादिधियां सर्वविद्यास्ववरोधः—संग्रहणम् । कुतः । सामान्यतद्भावाभ्याम् । ब्रह्मणः सर्वत्र समानत्वात् ब्रह्मानुसन्धानान्तर्भावाच्च तासाम् । गुणानां हि प्रधानानुवर्तित्वं स्वभावः । औपसदवत् । यथा जामदग्न्यचतूरात्रपुरोडाश्युपसद्गुणभूतः अग्ने वेर्होत्रं वेरिति मन्त्रः सामवेदपठितत्वेन सामवेदस्वरनियतोऽपि प्रधानभूतोपसदनुवर्तित्वात् याजुर्वेदिकत्वाच्चोपसदः याजुर्वेदिकोपांशुसंबन्धी, तद्वत् अक्षरविद्यासंबन्धितया अधीतत्वेन तद्विद्यानियता अपि प्रधानानुवर्तित्वस्वाभाव्यात् सर्वविद्यासंबन्धिन्यः । तदुक्तम्, गुणमुख्यव्यतिक्रमे तदर्थत्वादित्यादिना ।

15 अन्तरा भूतग्रामवत्स्वात्मनोऽन्यथा भेदानुपपत्तिरिति चेन्नोपदेशवत् । हेयप्रत्यनीकत्वं परस्यासाधारणं चेत्—अशनायाद्यतीतं ब्रह्म स्यात्, प्राणितृत्वाद्युपेतो जीवः स्यादिति शंकया संगतिः । सूत्रार्थः—अन्तरा य आत्मा सर्वान्तर इति उषस्तप्रश्नो भूतग्रामवत्स्वात्मनः—प्रत्यगात्मन इत्युपगन्तव्यः ; अन्यथा प्रतिवचनभेदानुपपत्तिरिति चेत्—नात्र प्रत्यगात्मविषयमस्ति प्रश्नद्वयम् । प्रतिवचनद्वयश्च परमात्मन्येवोपास्ये संभवतीत्यर्थः । उपदेशवत्—सद्विद्यायां प्रश्नप्रतिवचनभेदवत् ।

16 कामादीतरत्र तत्र चायतनादिभ्यः ॥ प्राणयितृत्वादि—अशनायाद्यतीतत्वयोर्धर्मिभेदाभावात् विद्यैक्यमुक्तम् । अत्र गुणाष्टकस्य वशित्वादेश्च धर्मिभेद इति शंकया

संगतिः । सूत्रार्थः—इतरत्र तत्र च—वाजसनेयके छान्दोग्ये च सत्यकामत्वाद्येव रूपम् । कुतः । आयतनादिभ्यः—हृदयायतनत्व-सत्यसंकल्पत्ववितत्तिरूपवशित्वादिभ्यः ।

17 तन्निर्धारणानियमः तद्दृष्टेः पृथग्घ्यप्रतिबन्धः फलम् ॥ सत्यकामत्वादीनामुपसंहार्यत्वमुक्तम्; एवमुद्गीथादिधियां नियमेनोपसंहार इति शंकया संगतिः । तन्निरिधणानियमः—निर्द्धारणं निश्चयेन चेतसोऽवधारणम्, उपासनमित्यर्थः, तस्योद्गीथोपासनस्यानियमः । कुतः । तद्दृष्टे—तेनोभौ कुरुत इत्यनियमदृष्टेः पृथग्भूतमुपासनस्य फलम्; तच्च अप्रतिबन्धरूपम् । वीर्यवत्तरत्वं नाम प्रबलकर्मान्तरबलेन एतस्य कर्मणः फलस्याप्रतिबन्धः । अविलम्बितत्वमित्यर्थः ।

18 प्रदानवदेव तदुक्तम् ॥ पूर्वं प्रासंगिकम् । अतः तत्पूर्वचिन्तितदहरविषयचिन्तान्तरमिति संगतिः । सूत्रार्थः प्रदानवदावृत्तिनियम एव । यथा—इन्द्राय राज्ञे पुरोडाशमेकादशकपालम्, इन्द्रायाधिराजाय, इन्द्राय स्वराज्ञे इतीन्द्रस्यैकत्वेऽपि राजत्वादिविशिष्टाकारभेदात् देवताभेद इति प्रदानावृत्तिः, तद्वद्वेव । तदुक्तं संकर्षे, नाना वा देवतापृथक्त्वादिति ।

19 लिंगभूयस्त्वात् तद्धि बलीयः तदपि ॥ पूर्वप्रकृतविद्यैकविद्यात्वेन तदुपास्यविशेषनिर्धारणमनेन क्रियत इति शंकया संगतिः । सूत्रार्थः—सर्वविद्योपास्यनिर्धारणे लिंगभूयस्त्वात् तदेव न्याय्यम्; लिंगभूयस्त्वात्—तस्य चिह्नभूतवाक्यभूयस्त्वादित्यर्थः । तद्धि वाक्यं प्रकरणात् बलीयः । तदपि श्रुतिलिंगवाक्यप्रकरणस्थानसमाख्यानां समवाये पारदौर्बल्यमर्थविप्रकर्षादित्यादिनोक्तम् ।

20 पूर्वविकल्पः प्रकरणात् स्यात् क्रिया मानसवत् ॥ नारायणानुवाक इव प्रकरणवाक्यादिबाधाभावात् मनश्चिदादयः क्रियामयक्रत्वनुप्रवेशिन इति शंकया संगतिः । सूत्रार्थ—मनश्चिदादिः क्रिया स्यात्—मनश्चिदादयो विद्यारूपाः क्रियामयक्रत्वंगभूता इत्यर्थः । कुतः । प्रकरणात् । पूर्वप्रकृतेनेष्टकचितेनाव्यभिचरितक्रतुसंबन्धिनोपस्थितक्रतुगृहीतत्वेन तदंगभूताः । एषां चाग्नित्वात् तेनेष्टकचितेन विकल्पः । विद्यारूपाणामप्येषां क्रियामयक्रत्वंगभावो न विरुद्धः । द्वादशाहांगभूतमानसग्रहवत् । (पू०)

21 एक आत्मनः शरीरे भावात् ॥ पूर्वं प्रासंगिकम् । तत्पूर्वस्मिन् भगवत एव सर्वविद्योपास्यत्वमुक्तम् । तथा प्रत्यगात्मनश्चेति संगतिः । कर्तृत्वादिविशिष्टमेवात्मरूपमनुसंधेयमित्येके मन्यन्ते । कुतः । शरीरे वर्तमानस्योपासितुरात्मनः तथाभावात् । (पू.)

22 अंगावबद्धास्तु न शाखासु हि प्रतिवेदम् । यत्र यत्र ब्रह्मोपास्यम्, तत्र तत्र शुद्धात्मन उपास्यत्वमुक्तम् । एवं यत्रयत्रोद्गीथानुप्रवेशः, तत्र तत्र तदुपास्तिः न वेति

शंकया संगतिः । सूत्रार्थः—न त्वंगावबद्धा उपासनाः तासु शाखासु व्यवस्थिताः ; अपि तु प्रतिवेदम्—सर्वशाखासु संबध्यन्त इत्यर्थः । हि हेतौ । यस्मादुद्गीथजातीयत्वाविशेषेण सर्वसंबन्धः, तस्मादित्यर्थः ।

23 भूम्नः क्रतुवज्ज्यायस्त्वं तथा हि दर्शयति ; पूर्वप्रकृतसामावयवभूतोद्गीथस्य समस्तस्य व्यस्तस्य चोपास्यत्वं श्रुतम् ; एवं किं वैश्वानरविद्यायां समस्तस्य व्यस्तस्य चोभयस्योपास्यत्वमिति शंकया संगतिः—सूत्रार्थः—भूम्नः ज्यायस्त्वं समस्तोपासनस्य ज्यैष्ठ्यम्—प्रामाणिकत्वमित्यर्थः । एकवाक्यत्वावगतेः । व्यस्तवादः क्रतुवत् द्रष्टव्यः । वैश्वानरं द्वादशकपालं निर्वपेत् .... यदष्टाकपालोभवतीत्यादिक्रताविवेत्यर्थः । तथा हि दर्शयति—समस्तोपासकस्य ज्यायस्त्वमेव दर्शयति श्रुतिः मूर्धातेव्यपतिष्यत् यन्मां नागमिष्य इत्यादिना व्यस्तोपासनेऽनर्थं ब्रुवती ॥

24 नाना शब्दादिभेदात् ॥ पूर्वं विद्याविशेषचिन्ता वृत्ता, अथ सर्वविद्याविषयचिन्तेति संगतिः । सूत्रार्थः—सद्विद्यादहरविद्यादिका नानाभूता, ब्रह्मण एकत्वेऽपि सद्भूमापहतपाप्मेत्यादिशब्दभेदात् । आदिशब्दात् अभ्याससंख्यागुणप्रक्रियानामधेयानि गृह्यन्ते ।

25 विकल्पोऽविशिष्टफलत्वात् ॥ भेदे सिद्धे हि विकल्प-समुच्चयचिन्तेति संगतिः । सूत्रार्थः—देशतः कालतः स्वरूपतश्चानवच्छिन्नानन्दस्वरूपब्रह्मानुभवः सर्वासां परविद्यानां फलम् । तच्च एकया विद्यया प्राप्तमिति सर्वासां विकल्पः ।

26 अंगेषु यथाश्रयभावः ॥ यथाकामं काम्यानां विकल्पसमुच्चयावुक्तौ । एवमुद्गीथविद्याश्च यथाकाममुपादेया न वेति संगतिः । सूत्रार्थः—अंगेषु—उद्गीथादिषु आश्रितानामुपासनानां यथाश्रयभावः । उद्गीथादिवदंगभावः । गोदोहनादिवत् तस्मिन् वाक्ये फलसंबन्धाश्रवणादंगभावो न विरुद्ध्यत इति । इति तृतीयः पादः ।

3-4.

1 पुरुषार्थोऽतः शब्दादिति बादरायणः ॥ अंगिचिन्तानन्तरं अंगचिन्तेति पादसंगतिः । विद्याया अंगित्वे सति हि तदंगचिन्त्यता । अतः तस्या अंगित्वं प्रथमं निरूप्यते । पूर्वमुद्गीथविद्यायाः पुरुषार्थसाधकत्वमुक्तम् । अत्र ब्रह्मविद्यायास्तत्साधकत्वं साध्यत इत्यधिकरणसंगतिः । सूत्रार्थः—पुरुषार्थः अतः—विद्यातः ; ब्रह्मविदाप्नोति परमिति शब्दात् ॥

2 स्तुतिमात्रमुपादानादिति चेन्नापूर्वत्वात् ॥ ब्रह्मसंस्थस्तुतिप्रसंगात् रसतमत्ववाक्यानि स्तुत्यर्थानि, नेति शंका जातेति संगतिः । सूत्रार्थः—कर्मांगभूतोद्गीथादिसंबन्धितयोपादानात् रसतमत्वादेः स्तुतिमात्रमेव, न रसतमत्वादिदृष्टिविधिरिति चेत्—न ; रसतमत्वादेरप्राप्तत्वात् । उपासीतेति विधिप्रत्ययेन दृष्टिविधिरेव ; न स्तुतिमात्रम् ॥

3 पारिप्लवार्था इति चेन्न विशेषितत्वात् ॥ इदं च प्रासंगिकम् । रसतमत्वादेः तुत्यर्थत्वं पूर्वपक्षीकृतम् । एवं प्रतर्दनाद्याख्यानानि किं स्तुत्यर्थानि न वेति संगतिः । सूत्रार्थः—प्रतर्दनाद्याख्यानानि पारिप्लवे विनियुक्तानि इति चेन्न ; मनुर्वैवस्वत इति तत्र विशेषितत्वात्[1] विद्याविध्यर्थान्येव ।

4 अत एव चाग्नीन्धनाद्यनपेक्षा ॥ पूर्वयोः प्रासंगिकत्वात् प्रथमाधिकरणेन संगतिः । सूत्रार्थः—अत एव विद्यावत्त्वश्रुतेरेव आधानाद्यनपेक्षा । अग्नीन्धनं ह्याधानम् ।

5 सर्वापेक्षा च यज्ञादिश्रुतेरश्ववत् ॥ पूर्वमूर्ध्वरेतस्सु अग्नीन्धनाद्यनपेक्षोक्ता । अत्र गृहस्थेषु यज्ञाद्यपेक्षोच्यत इति संगतिः । सूत्रार्थः—कर्मवत्सु गृहस्थेषु यज्ञादि—सर्वकर्मापेक्षा विद्या, [यथा गमनसाधनभूतोऽश्वः स्वपरिकरापेक्षः] ; तमेतं वेदानुवचनेनेति यज्ञादिश्रुतेः ।

6 शमदमाद्युपेतः स्यात् तथापि तु तद्विधेस्तदंगतया तेषामप्यवश्यानुष्ठेयत्वात् ॥ गृहस्थस्य शमादीन्यवश्यानुष्ठेयानि नेति चिन्त्यते । यद्यपि गृहस्थो यज्ञादिकर्मयुक्तः, तथापि तु शमदमाद्युपेतः स्यात् । कुतः । शान्तोदान्त इत्यादिना तद्विधेः । तदंगतया विद्यानिष्पत्तये तेषामवश्यानुष्ठेयत्वात् ।

7 सर्वान्नानुमतिश्च प्राणात्यये तद्दर्शनात् ॥ शमदमाद्यनुष्ठानमुक्तम् । शमविशेषरूप-भोजननियतिश्चिन्त्यत इति संगतिः । सूत्रार्थः—चशब्दोऽवधारणे । प्राणविदः सर्वान्नानु-मतिः प्राणात्ययापत्तावेव ; कुतः । तद्दर्शनात् । अतिशयितशक्तेर्ब्रह्मविदः प्राणात्यय एव सर्वान्नानुमतिदर्शनात् ।

8 विहितत्वाच्चाश्रमकर्मापि ॥ यज्ञादिकर्मांगिका विद्येत्युक्तम् । तानि च यज्ञादीनि अमुमुक्षुणा केवलाश्रमिणाऽप्यनुष्ठेयानि उत नेति चिन्त्यते । यावज्जीवमग्निहोत्रं जुहुयात् इत्यादिना केवलगृहस्थाश्रमिणः जीवननिमित्ततया विहितत्वादेव यज्ञादिकेवलाश्रमकर्म ।

9 अन्तरा चापि तु तद्दृष्टेः ॥ पूर्वं चतुर्णामाश्रमिणां ब्रह्मविद्यायामधिकारोऽस्ती-त्युक्तम् । अत्र विधुरादीनां सोऽस्ति, नेति चिन्त्यते । तुशब्दात् पक्षो व्यावृत्तः । च-शब्दोऽवधारणे । अन्तराऽपि —आश्रमान् अन्तरा वर्तमानानामपि अधिकारोऽस्त्येव । कुतः । तद्दृष्टेः । रैक्वादिषु विद्यानिष्ठत्वदृष्टेः ।

10 तद्भूतस्य तु नातद्भावो जैमिनेरपि नियमात् तद्रूपाभावेभ्यः ॥ विधुरा-देरिवानाश्रमित्वसाम्यादाश्रमभ्रष्टानामपि विद्याधिकारोऽस्ति, नेति चिन्तया संगतिः । नैष्ठिक-भूतस्य अतथाभावो न संभवति । कुतः । तद्रूपाभावेभ्यः शास्त्रैर्नियमात् । तद्रूपाभावाः—नैष्ठिकधर्माभावाः ; तेभ्यः नियच्छन्ति हि शास्त्राणि ब्रह्मचार्याचार्यकुलवासी तृतीयोऽत्यन्त-

1 पारिप्लवशंसनविध्यर्थानि न भवन्ति ; किंतु स्तुत्यर्थतया प्रकृतविद्याविध्यर्थान्येवेति ।

मात्मानमाचार्यकुलेऽवसादयन्'' इति नैष्ठिकस्य तत्रैव नियमः। अरण्यमियात् ततो न पुनरेयादिति वैखानसस्य, संन्यस्याग्नीन्न पुनरावर्तयेदिति परिव्राजकस्य। अत एव तेषामनाश्रमित्वेनावस्थानासंभवात् विद्याधिकारो न संभवति। जैमिनेरप्यवगीतोऽयम्।

11 स्वामिनः फलश्रुतेरित्यात्रेयः॥ उपासनानुष्ठातृविभागचिन्तानन्तरं उद्गीथाद्युपासनस्यापि तच्चिन्तनं क्रियत इति प्रसंगात् संगतिः। सूत्रार्थः—स्वामिनः यजमानस्य उद्गीथाद्युपासने कर्तृत्वम्। कुतः। तस्यैव फलश्रुतेरित्यात्रेयो मन्यते।

12 सहकार्यान्तरविधिः पक्षेण तृतीयं तद्वतो विध्यादिवत्॥ यज्ञादिः शमादिश्च सहकारी निरूपितः। तद्वत् सहकार्यन्तरं निरूप्यते। तद्वतः—विद्यावतः। विधीयत इति विधिः मौनम्, सहकार्यन्तरम्। विध्यादिवत्। अत्रापि विधीयत इति विधिः यज्ञदानप्रभृत्याश्रमधर्मः। आदिशब्दात् श्रवणमनने गृह्येते। आश्रमधर्मवत् श्रवणमननवच्च पाण्डित्यबाल्ययोस्तृतीयमिदं सहकार्यन्तरं मौनमपूर्वं विधीयते। कुत इत्यत्राह पक्षेणेति। मुनिशब्दस्य प्रकृष्टमननयुक्ते पक्षेण प्रसिद्धेः।

13 अनाविष्कुर्वन्नन्वयात्॥ मौनाख्यं विद्यांगं चिन्तितम्। तथा बाल्यमपि विद्यांगं चिन्त्यते। पाण्डित्यप्रयुक्तस्वमाहात्म्यमनाविष्कुर्वन्नेव वर्तेत विद्वान्। नाविरत इत्यादिशास्त्रैः तस्यैव विद्यान्वययोग्यत्वात्।

14 ऐहिकमप्रस्तुतप्रतिबन्धे तद्दर्शनात्॥ इत्थमंगचिन्ता कृता। इदानीमंगिनिष्पत्तिसमयचिन्ता क्रियते। ऐहिकमभ्युदयफलम्, अप्रस्तुते प्रबलकर्मान्तरप्रतिबन्धे सत्यनन्तरम्, प्रस्तुते तदुत्तरकालमुत्पद्यते। कुतः। यदेव विद्यया करोति, तदेव वीर्यवत्तरमिति उद्गीथोपासनस्य [बलेन ?] क्रतोः कर्मान्तरेण फलाप्रतिबन्धदर्शनात्।

15 एवं मुक्तिफलानियमस्तदवस्थावधृतेस्तदवस्थावधृतेः॥ पूर्वमैहिकफलानां विद्यानां निष्पत्तिकाल उक्तः। एवं ब्रह्मप्राप्तिहेतूनामपि विद्यानामनियम एवातिदिश्यत इति संगतिः। सूत्रार्थः—मुक्तिफलानामप्येवमनियमः। कुतः। तदवस्थावधृतेः—प्रतिबन्धाभावे सति फलकालावधृतेः। द्विरुक्तिरध्यायपरिसमाप्तिं द्योतयति।

इति तृतीयाध्याये चतुर्थः पादः॥

## अथ चतुर्थाध्याये प्रथमः पादः॥

1 आवृत्तिरसकृदुपदेशात्॥ तृतीये स्वोपयोग्यर्थैः सह विद्या चिन्तिता, अथ फलचिन्तेति संगतिः [आदौ स्वरूपचिन्ता।] सूत्रार्थः—वेदनस्यासकृदावृत्तिः शास्त्रार्थः। असकृदावृत्तं वेदनं ध्यानशब्दवाच्यमित्यर्थः। कुतः। उपदेशात्। वेदनविधायिसमानशास्त्रैः, ध्यातव्यः, उपासीत इत्युपदेशात्।

2 आत्मेति तूपगच्छन्ति ग्राहयन्ति च ॥ उक्तोपासनकर्मीभूतं ब्रह्म किमयुतसिद्धिरूपसंबन्धविरहेणोपास्यम् उत उपासितृशरीरत्वेनेति शंकया संगतिः। सूत्रार्थः—त्वं वा अहमस्मि भगवो देवते अहं वै त्वमसीति पूर्वे उपासितारः उपास्यमात्मत्वेनोपगच्छन्ति। अत आत्मेत्येव उपास्यम्। तान् उपासितॄन् प्रति, अर्थान्तरभूतस्यापि ब्रह्मण उपासितुरात्मत्वं ग्राहयन्ति शास्त्राणि, य आत्मनि तिष्ठन्नित्यादीनि।

3 न प्रतीके न हि सः ॥ उक्तमात्मतयोपासनं प्रतीकेष्वपि तथा कार्यं न वेति शंकया संगतिः। सूत्रार्थः—न प्रतीके आत्मत्वानुसन्धानं कार्यम्। कुतः। न हि मनआदिरुपासितुरात्मा।

4 आदित्यादिमतयश्चांग उपपत्तेः ॥ इहापि दृष्टिविशेषणचिन्तेति संगतिः। सूत्रार्थः—कर्मणोऽपि फलसाधनत्वमादित्यादिदेवताराधनद्वारेणेति आदित्यादेरेव उत्कर्षोपपत्तेरादित्यादिमतय एव कर्मांगोद्गीथादौ कार्याः।

5 आसीनः संभवात् ॥ अनन्तरयोः प्रासंगिकत्वात् तत्पूर्वेण संगतिः। सूत्रार्थः—आसीनस्यैव एकाग्रतासंभवादेकाग्रतामूलत्वादुपासनस्य आसीनः कुर्यात्।

6 आप्रयाणात् तत्रापि हि दृष्टम् ॥ विहितमुपासनमेकाह एव संपाद्यम्, उत आप्रयाणात् प्रत्यहमनुवर्तनीयमिति चिन्तया संगतिः। सूत्रार्थः—आप्रयाणादनुवर्तनीयम्। कुतः। तत्रापि हि दृष्टम्, 'स खल्वेवं वर्तयन् यावदायुषं ब्रह्मलोकमभिसंपद्यते' इति।

7 तदधिगम उत्तरपूर्वाघयोरश्लेषविनाशौ तद्व्यपदेशात् ॥ एवं विद्यास्वरूपं विशोध्य विद्याफलं चिन्तयितुमारभते। उपासने प्रारब्धे तत्सामर्थ्यादेव पूर्वकृताघनाशः उत्तरकृताघाश्लेषश्च भवति। 'एवं हास्य सर्वे पाप्मानः प्रदूयन्ते, एवमेवंविदि पापं कर्म न श्लिष्यते' इति श्रुतेः।

8 इतरस्याप्येवमसंश्लेषः पाते तु ॥ पापस्य अश्लेषविनाशावुक्तौ; पुण्यस्यापि अश्लेषविनाशावुच्येते। इतरस्यापि—पुण्यस्यापि अनिष्टफलत्वसाम्यात् एवम् अश्लेषविनाशौ। विद्यानुगुणस्य तु पुष्टयन्नारोग्यादिफलस्य शरीरपातादूर्ध्वमनिष्टत्वादश्लेषः।

9 अनारब्धकार्ये एव तु पूर्वे तदवधेः ॥ विद्योत्पत्तेः पूर्वोत्तरभाविनोः सुकृतदुष्कृतयोरश्लेषविनाशावुक्तौ; ततः पूर्वभाविनोस्तयोः किमश्लेषविनाशौ, उतारब्धयोरेवेति संशय इति संगतिः। सूत्रार्थः—विद्याधिगतेः पूर्वकृते पुण्यपापे फलदानायाप्रवृत्ते एव विनश्यतः। तस्य तावदेव चिरमिति शरीरपातावधिश्रुतेः॥

10 अग्निहोत्रादि तु तत्कार्यायैव तद्दर्शनात् ॥ सुकृतस्याप्यसंश्लेष उक्तः; तर्ह्यग्निहोत्रादीनामननुष्ठानमिति शंकया संगतिः। सूत्रार्थः—अग्निहोत्राद्याश्रमधर्मस्तु

विद्योत्पत्त्याख्यकार्यायैव आप्रयाणादनुष्ठेयः, तमेतं वेदानुवचनेनेत्यादिना विद्योत्पत्तिकार्यकत्वं ह्याश्रमधर्मस्य दृष्टम् ।

11 भोगेन त्वितरे क्षपयित्वाऽथ संपद्यते ॥ पुण्यपापे किं विद्यायोनिशरीरावसाने उत तदवसाने शरीरान्तरावसाने वेत्यनियम इति चिन्तनात् संगतिः । सूत्रार्थः—प्रारब्धफले पुण्यपापे यावता शरीरेण समापनीये, तावता क्षपयित्वा अनन्तरं ब्रह्म प्राप्नोति ।

इति चतुर्थाध्याये प्रथमः पादः ।

4-2.

1 वाङ्मनसि दर्शनाच्छब्दाच्च ॥ स्थूलशरीरस्थितिसमये यत् विद्याफलम् , तदुक्तम् । तद्विनश्यदवस्थायां गत्युपक्रमे यत् फलम् , तच्चिन्त्यत इति संगतिः । उत्क्रान्त्युपक्रम कथनात् प्रथमाधिकरणसंगतिश्च । सूत्रार्थः—वाक्स्वरूपमेव मनसि संपद्यते । दर्शनात्—अकारणे संपत्त्यभावस्य वाग्वृत्तावपि तुल्यत्वदर्शनात् । शब्दाच्च । वाङ्मनसि संपद्यते इति वाक्स्वरूपसंपत्तावेव हि शब्दः । संपत्तिशब्दः संयोगाभिप्रायः ।

2 तन्मनः प्राण उत्तरात् ॥ वाङ्मनसि संपद्यते, मनः प्राण इत्यनुक्रमेण चिन्तनात् संगतिः । सूत्रार्थः—तत् सर्वेन्द्रियसंयुक्तं मनः प्राणे संयुज्यते ; उत्तरात् , मनः प्राण इति शब्दात् ।

3 सोऽध्यक्षे तदुपगमादिभ्यः ॥ मनः प्राणे, प्राणस्तेजसि इत्यनुक्रमवचनात् श्रुतिक्रमानुसारेण संगतिः । सूत्रार्थः—सः—प्राणः करणाध्यक्षे जीवे संयुज्यते । उत्क्रान्तौ प्राणस्य जीवोपगमादिश्रुतेः ।

4 भूतेषु तच्छ्रुतेः ॥ प्राणस्तेजसीति प्राणस्य तेजसि संपत्तिरुक्ता । सा किं तेजोमात्रे उत सर्वेष्वपि भूतेष्विति चिन्त्यत इति संगतिः । सूत्रार्थः—प्राणः भूतान्तरसंसृष्टे तेजसि संयुज्यते । कुतः । पृथिवीमय इत्यादिना सञ्चरतो जीवस्य सर्वभूतमयत्वश्रुतेः ।

5 समाना चासृत्युपक्रमादमृतत्वं चानुपोष्य ॥ इयमुत्क्रान्तिः विद्वदविदुषोः समाना, उताविदुष एवेति चिन्त्यत इति संगतिः । सूत्रार्थः—सृतिः-गतिः । आगत्युपक्रमादुत्क्रान्तिर्विदुषोऽपि समाना । विदुषोऽर्चिरादिगतिश्रुतेः, 'अथ मर्त्योऽमृतो भवति' इत्युच्यमानममृतत्वमनुपोष्यैव—अदग्ध्वैव शरीरेन्द्रियादिसंबन्धम् उपासनारम्भपरिकररूपमित्यर्थः ।

6 तानि परे तथा ह्याह ॥ प्रत्यगात्मा भूतसूक्ष्मेषु संपद्यत इत्युक्तम् । जीवपरिष्वक्तानि भूतसूक्ष्माणि किं यथाकर्म यथाविद्यं च स्वकार्याय गच्छन्ति उत परमात्मनि

संपद्यन्त इति चिन्त्यत इति संगतिः । सूत्रार्थः— तानि-भूतानि परे-परस्मिन् ब्रह्मणि संपद्यन्ते । परस्यां देवतायामिति ह्याह श्रुतिः ।

7 अविभागो वचनात् ॥ सेयं परमात्मसंपत्तिः किं प्राकृतलयवत् कारणापत्तिरूपा उत वाङ्मनसीत्यादिवत् अविभागरूपेति चिन्त्यत इति संगतिः । सूत्रार्थः— अत्राप्यविभागोऽविश्लेष एव ; संपद्यते इति वचनात् ।

8 तदोकोऽग्रज्वलनं तत्प्रकाशितद्वारो विद्यासामर्थ्यात् तच्छेषगत्यनुस्मृतियोगाच्च हार्दानुगृहीतः शताधिकया ॥ उत्क्रान्तिरुक्ता । विदुषो विशेष उच्यत इति संगतिः ।....परमपुरुषाराधनरूपया विद्यया तदंगभूतगतिचिन्तनेन च प्रीतेन परमपुरुषेणानुगृहीतो जीवः तत्प्रसादप्रकाशितद्वारः तयैव मूर्द्धन्यनाड्या गच्छति ।

9 रश्म्यनुसारी ॥ मूर्धन्यनाड्या निर्गतस्य विदुषः रश्मीन् अनुसृत्य गमनं चिन्त्यत इति संगतिः । सूत्रार्थः—आदित्यरश्म्यनुसार्येव गच्छति ।

10 निशि नेति चेन्न संबन्धस्य यावद्देहभावित्वात् दर्शयति च ॥ निशि सूर्यकिरणसद्भावोऽस्तु, तथापि आत्मविदां निशि मरणस्य निषिद्धत्वात् तेषां निशि मरणमेव न संभवतीति शंकया संगतिः । सूत्रार्थः—निशि मरणस्य गर्हितत्वेन, अधोगतिहेतुत्वात्, निशि मृतस्य न ब्रह्मप्राप्तिरिति चेन्न ; संबन्धस्य यावद्देहभावित्वात् । अनारब्धकार्यस्य कर्मसंबन्धस्य विद्यया विनष्टत्वात् आरब्धकार्यकर्मसंबन्धस्यापि यावच्चरमदेहभावित्वात् । बन्धहेत्वभावेन ब्रह्मप्राप्तिरस्त्येवेत्यर्थः । तदेतत् श्रुतिश्च दर्शयति, 'तस्य तावदेव चिरं यावन्न विमोक्ष्ये, अथ संपत्स्ये' इति ।

11 अतश्चायनेऽपि दक्षिणे ॥ विदुषः मरणे दिवारजनीभिदा नास्तीत्युक्तं येन, तेनैव हेतुना दक्षिणोत्तरायणविभागोऽपि नास्तीत्युच्यत इति संगतिः । सूत्रार्थः—यतो हेतोः निशामृतस्य ब्रह्मप्राप्तिः, तत एव बन्धहेत्वभावात् दक्षिणायने मृतस्यापि ब्रह्मप्राप्तिरस्त्येव ।

इति चतुर्थाध्यायस्य द्वितीयः पादः ।

4.3.

1 अर्चिरादिना तत्प्रथितेः ॥ विदुषः उत्क्रान्तस्य नाडीविशेषेण हार्दानुग्रहात् गत्युपक्रम उक्तः । तस्य गच्छतो मार्ग इदानीं निर्णीयत इति पादसंगतिः । अर्चिरादिनैकेन गच्छति विद्वान् । कुतः । तत्प्रथितेः । प्रथितिः—प्रसिद्धिः । सर्वत्र तत्प्रत्यभिज्ञानादिति ।

2 वायुमब्दादविशेषविशेषाभ्याम् ॥ संवत्सरादित्ययोर्मध्ये प्राप्तयोः वायुदेवलोकयोर्भेदमंगीकृत्यानियमेन क्रमोऽङ्गीकर्तव्यः, उत प्रमाणबलादेकत्वमंगीकृत्यैकस्या

नापन्नत्वमेवेति चिन्त्यत इति संगतिः। अब्दात्—संवत्सरादूर्ध्वं आदित्यात् पूर्वं वायुमेकमेव निवेशयेत् देवलोकवायुशब्दाभ्यामविशेषविशेषाभ्यां वायोरेकस्यैव निर्दिष्टत्वात्। देवानां वासस्थानमित्यविशेषेण हि देवलोकशब्दो वायुं देवानां वासस्थानभूतमभिदधाति, वायुशब्दस्तमेव विशेषेणेति द्वयोः प्रकरणद्वयविहितयोरेकत्वादित्यर्थः।

3 तटितोऽधि वरुणः संबन्धात् ॥ अत्रापि क्रमविशेषचिन्तैव क्रियते। विद्युत उपरि वरुणो निवेश्यः; विद्युतो मेघोदरवर्तित्वेन विद्युद्वरुणयोर्लोके वेदे च संबन्धावगमात्। इन्द्रादेरपि वरुणोपरि निवेशः।

4 आतिवाहिकास्तल्लिंगात् ॥ किमर्चिरादयो मार्गचिह्नभूताः, उत भोगभूमयः, अथवा विदुषां ब्रह्मप्रेप्सूनामतिवोढार इति चिन्त्यत इति संगतिः। सूत्रार्थः—आतिवाहिकाः—विदुषामतिवाहे परमपुरुषेण नियुक्ता अर्चिराद्यभिमानिदेवताविशेषाः गमयितार इत्यर्थः। एनान् ब्रह्म गमयतीति लिंगात्।

5 कार्यं बादरिरस्य गत्युपपत्तेः ॥ अर्चिरादिनैव गच्छति विद्वान्, अर्चिरादिः अमानवान्तश्च गणः आतिवाहिकः विद्वांसं ब्रह्म गमयतीत्युक्तम्। इदमिदानीं चिन्त्यते—किमर्चिरादिको गणः कार्यं हिरण्यगर्भमुपासीनान् नयति, उत परब्रह्मोपासीनान् प्रत्यगात्मानं ब्रह्मात्मकतयोपासीनांश्चेति। एवं परोपासकस्य नेयत्वासंभवाशंकया नेयविषयचिन्तया संगतिः। कार्यं हिरण्यगर्भमुपासीनान् आतिवाहिको गणो नयतीति बादरिराचार्यो मन्यते; अस्यैव गत्युपपत्तेः। परमुपासीनस्य हि न तत्प्राप्तयेगतिरुपपद्यते। सर्वगतत्वात् परस्य ब्रह्मणः। (पू०)

इति चतुर्थाध्यायस्य तृतीयः पादः।

4-4.

1 संपद्याविर्भावः स्वेनशब्दात् ॥ परं ब्रह्मोपासीनानामर्चिरादिना मार्गेणापुनरावृत्तिलक्षणा गतिरुक्ता; इदानीं मुक्तानामैश्वर्यप्रकारश्चिन्तयितुमारभ्यते इति पादसंगतिः। किं उक्तरीत्या परं ज्योतिरुपसंपन्नस्य देवादिरूपवत् साध्येन संबन्धः, उत स्वाभाविकस्वरूपाविर्भाव इत्यधिकरणसंगतिः। सूत्रार्थः—परं ज्योति रुपसंपद्य स्वरूपेणाविर्भावः प्रतिपाद्यते। कुतः। स्वेनशब्दात्। साध्यस्यापि रूपस्यासाधारणत्वेन स्वेनेति विशेषणं ह्यनर्थकम्।

2 अविभागेन दृष्टत्वात् ॥ किं मुक्तः स्वात्मानं परमात्मनः पृथग्भूतमनुभवति, उत तत्प्रकारतया तदविभक्तमिति शंकया संगतिः। सूत्रार्थः—अहं ब्रह्मास्मीत्यविभागेन ब्रह्मानुभवति मुक्तः। स्वात्मनोऽप्यात्मतयोपासनेन यथावस्थितपरमात्मात्मकस्वरूपस्य दृष्टत्वात्।

3 ब्राह्मेण जैमिनिरुपन्यासादिभ्यः। मुक्तस्य स्वरूपाविर्भाव एवेत्युक्तम्। प्रथमाधिकरणे आविर्भूतं स्वरूपं श्रुतिवैविध्यात् विचार्यते। सूत्रार्थः—ब्राह्मेणापहत-

पाप्मत्वादिना स्वरूपाविर्भावः । अपहतपाप्मत्वादयो दहरवाक्ये ब्रह्मगुणाः श्रुताः । उपन्यासादिभ्यः । तेषां ब्रह्मगुणादीनां प्रत्यगात्मन्यपि य आत्मा अपहतपाप्मेत्यादिनो-पन्यासात् । आदिशब्दात् जक्षत् क्रीडन् रममाण इत्यादिभ्योऽपि सत्यसंकल्पादयोऽव-गम्यन्त इति जैमिनिराचार्यो मन्यते ।

4 संकल्पादेव तच्छ्रुतेः ॥ मुक्तस्य सत्यसंकल्पात्वादिकं श्रूयते, तत् किं स्वायत्तम्, उत परायत्तमिति विचार्यते । सूत्रार्थः— संकल्पादेवास्य पितरः समुत्तिष्ठन्तीत्यवधारणान्नान्या-पेक्षत्वम् ।

5 अभावं बादरिराह ह्येवम् ॥ किं मुक्तस्य देहेन्द्रियाणि सन्ति, उत न सन्ति, अथवा यथासंकल्पं सन्ति न सन्तीति चिन्त्यत इति संगतिः । सूत्रार्थः—शरीराभावं बादरिर्मेने, एवमाह हि श्रुतिः, अशरीरं वाव सन्तमिति । (पू०)

6 जगद्व्यापारवर्जं प्रकरणादसंनिहितत्वाच्च ॥ किं सत्यसंकल्पस्य मुक्तस्यैश्वर्यं जगत्सृष्ट्यादिपरमपुरुषानुभावविषयमिति चिन्त्यत इति संगतिः । सूत्रार्थः—यतो वा इमानि भूतानि जायन्ते, सदेव सोम्येदमग्र आसीत्, आत्मावा इदमेक एवाग्र आसीत्, एकोहवै नारायण आसीदित्यादिषु परं ब्रह्म प्रकृत्यैव जगद्व्यापारः श्रूयते । तत्र तत्र प्रकरणे न मुक्तस्य सन्निधिरस्ति । अतो जगन्नियमनधुरावर्जम् 'सोऽश्नुते सर्वान् कामान् सह ब्रह्मणा विपश्चिता', 'स एको ब्रह्मण आनन्दः, श्रोत्रियस्य चाकामहतस्य' इति अनवधिकातिशयानन्द-ब्रह्मानुभवे मुक्तस्य साम्यम् । ब्रह्म हि स्वस्य परस्य चानुभूयमानमविशेषेणानवधिकातिशयानन्दं भवति । आनन्दस्वरूपत्वाविशेषात् ।

इति चतुर्थाध्यायस्य चतुर्थः पादः ॥

इति श्रीमदाण्डिकाट्टिस्वामिवेदान्तरामानुजयतीन्द्रमहादेशिकलब्धसार्वज्ञ्य-
श्रीमद्रंगरामानुजसंयमिसार्वभौममहादेशिकानुगृहीता शारीरकाधिकरणसंगतिः ।

श्रीमते रंगरामानुजमहादेशिकाय नमः ।

श्रीरंगलक्ष्मणाभिख्यमहादेशिकनिर्मिताम् ।
शारीरकाधिकरण संगतिं [1]लक्ष्मणोऽलिखत् ॥
विषु सिंहश्रावण दर्शे ॥

1 अयं लेखकश्लोकः । इमे लेखकमहाशयाः ईहैस्वामिन इति प्रसिद्धाः ज्ञानशीलशेवधयः । एतत्तनय-विद्वद्वर-श्रीवेदान्तदेशिकाचार्यसकाशादेवेयं मातृका मुद्रणार्थं गृहीतेति कृतज्ञाः स्मः ।

शुभमस्तु

॥ श्रीः ॥

# उपयुक्तमीमांसा

धर्मस्य जैमिनिमते चरणप्रकारे श्रीबादरायणमते फलहेतुमार्गे ।
निष्ठां गतौ निखिलसूत्रविचारदृष्टी नित्यं यतीन्द्रनिगमान्तगुरू नतोऽस्मि ॥

मानेर्जिज्ञासायामिति विचारार्थे निष्पन्नो मीमांसाशब्दः । तत्र वेदार्थविचाररूपार्थे शब्दमिमं प्रयुज्य चतुर्दशसु विद्यास्थानेषु एकतमत्वेनेयं मीमांसा पर्यगणि, अङ्गानि चतुरो वेदाः मीमांसा न्यायविस्तरः । पुराणं धर्मशास्त्रञ्च विद्या ह्येताश्चतुर्दशेति । तत्र अङ्गानीति शिक्षादीनां षण्णां वेदोपकारकत्वेनाङ्गत्वं मुक्तकण्ठमुक्तमिति तेषामप्राधान्यं सिद्धम् । पुराणधर्मशास्त्रे तदुपबृंहणार्थं प्रवृत्ते । उपबृंहणञ्च विवक्षितार्थविशदीकरणम् । एवं धर्मतत्त्वरूपवेदार्थवैशद्यहेतुत्वात् तद्व्याख्यानरूपतया तयोर्वेदाङ्गत्वम् । पुराणधर्मशास्त्रविशदीकृतार्थलाभो वेदेभ्यः कथं भवतीति तद्विचारे कर्तव्ये, सेयं मीमांसा भवति । तत्र प्रयोक्तव्यन्यायप्रकारशिक्षणरूपत्वात् न्यायविस्तरस्तया समुच्चीयते । संशयविपर्ययसहमापातज्ञानं व्यपोह्य वेदवाक्यार्थनिर्णयस्य संपादकतया मीमांसाशास्त्रं वेदस्यान्तरङ्गसहकारि भवति । अत एवाहुः, "धर्मे प्रमीयमाणे तु वेदेन करणात्मना । इतिकर्तव्यताभागं मीमांसा पूरयिष्यति" इति ।

अत्र धर्मशब्दो वेदार्थं सामान्येनाहेति उत्तरमीमांसाऽपि क्रोडीकार्या भवति तत्त्वविदाम् । ब्रह्मणोऽपि धर्मत्वमातिष्ठमानानां तु तत्र संदेहस्य नैव प्रसक्तिः । धर्मपदमधर्मादेर्यथोपलक्षणम्, तथा ब्रह्मणोऽपीति वा काममुच्यताम् । सर्वथा वेदार्थविचार एव मीमांसा । वेदार्थस्यैव पूज्यत्वात् प्रधानत्वात् पूज्यार्थविचारो मीमांसेति वाचस्पतिमिश्रादिभिरप्यभाणि । धर्मो नाम चोदनागम्यं धृतिसाधनम् । धृतिः प्रीतिः । धृतिः स्थितिः स्थैर्यं सुखजीवनमित्यादि च भाव्यम् । द्रव्यक्रियागुणादीनां फलसाधनानां धर्मत्वमिष्टम् । यथा जुहुयात् स्वर्गकाम इत्यत्र क्रिया फलसाधनम् । दध्नेन्द्रियकामस्य जुहुयादित्यत्र दध्येव फलसाधनम् । यः कामयेत वर्षुकः पर्जन्यः स्यादिति, नीचैः सदो मिनुयादित्यत्र सदोगतं नीचैस्त्वं फलसाधनम् । पञ्चमे ब्रह्मवर्चसकामस्योपनयनमित्यत्र पञ्चमवयस्कत्वरूपकालोऽपि फलसाधनमित्येवम् ।

सेयं मीमांसा पूर्वमीमांसा उत्तरमीमांसेति द्वेधा विभज्यते । किं मीमांसाशास्त्रमेकमिति तत्र पूर्वमीमांसा पूर्वो भागः उत्तरमीमांसा चोत्तर इति पूर्वकायोत्तरकायशब्दयोरिव पूर्वमीमांसापदोत्तरमीमांसापदयोर्विग्रहः, आहो शास्त्रद्वयमेवेति अत्र विवदन्ते । मीमांसा न्यायविस्तर इत्यत्रैकवचनादेकं शास्त्रमिति वादे—पुराणं धर्मशास्त्रमित्यत्रैकवचनवत् किं न स्यात्; नाना हि पुराणानि धर्मशास्त्राणि च; इतिहासश्चानेक

इति प्रत्यवतिष्ठन्ते । अत्र वदन्ति—न ह्येकवचनमात्रेणैकत्वसाधनम् । एकवचनावगतमेकत्वमसति बाधे न प्रतिषेध्यमिति तत्त्वे विमृश्यमाने औचित्यात् प्राच्यैरैकशास्त्र्यमुररीकृतं किमित्याकाण्डे खण्डनीयमिति ताटस्थ्येन द्रष्टव्यमिति ।

व्यवहारे भट्टनय इति वदद्भिरद्वैतिभिः पूर्वमीमांसानुसार आविष्क्रियते । तत्रत्यं प्रमाणलक्षणात्मकं प्रथममध्यायमन्यच्च यथायथमुपजीव्य बादरायणेन प्रणीतमिदं शारीरकमिति संप्रतिपन्नम् । स्वशास्त्रे पूर्वोक्तमर्थं तदुक्तमिति निर्दिशति यथा 'अल्पश्रुतेरिति चेत् तदुक्तम्' इति, तथा पूर्वमीमांसोक्तमपि तदुक्तमित्येव निर्दिशन् बादरायणः ऐकशास्त्र्यमभिप्रैतीति विज्ञायते । अपिच, सर्ववेदान्तप्रत्ययं चोदनाद्यविशेषादित्यत्र आदिपदेन शाखान्तराधिकरणोक्तानि, नानाशब्दादिभेदादिति आदिपदेन द्वितीयाध्यायोक्तानि कर्मभेदकप्रमाणानि, 'श्रुत्यादिबलीयस्त्वाच्च न बाधः' इति आदिपदेव तृतीयाध्यायोक्तानि लिङ्गादीनि अङ्गत्वेप्रमाणानि, 'लिङ्गभूयस्त्वात् तद्धि बलीयस्तदपि' इति सुस्पष्टनिर्देशेन च तानि, 'पूर्वविकल्पः प्रकरणात् स्यात् क्रिया मानसवत्' इति दशमषष्ठत्रयोदशाधिकरणम्, भूम्नः क्रतुवदिति प्रथमचतुर्थद्वादशं वैश्वानराधिकरणम्, विधिर्वा धारणवत् इति, विधिस्तु धारणेऽपूर्वत्वादिति तृतीयचतुर्थपञ्चमम्, भावशब्दाच्चेति भावार्थाः कर्मशब्दा इति सूत्रम् (2-1-1), 'न चाधिकारिकमपि पतनानुमानात् तदयोगात्' इति अधिकारलक्षणे षष्ठे अष्टमचतुर्थम् 'अवकीर्णिपशुश्च तद्वत्' इत्यधिकरणम्, 'द्वादशाहवदुभयविधं बादरायणोऽतः' इति दशमचतुर्थषोडशम् 'द्वादशाहस्य सत्रत्वम्...', 'यजतिचोदनादहीनत्वम्...' इत्यधिकरणम् एवमन्यान्यच्च पदेपदे स्मारयन् ऐकग्रन्थ्यमैकरस्यञ्चाविष्करोतीति सहृदयेन स्वहृदयेन संभूय संशीलनीयम् । अन्यादृशो विस्तरश्च श्रुतप्रकाशिकाशतदूषणीपरमार्थभूषणादिषु द्रष्टव्यः ।

किं बहुना । पूर्वमीमांसानिर्णेयस्य कर्मणः उत्तरमीमांसामीमांस्यस्य ब्रह्मणश्च न कश्चित् संबन्धः, प्रत्युत विरोध इति कलयत्यपि शांकरे 3-3-30 ऐकात्म्या (शरीरेभावा) धिकरणे ऐकशास्त्र्यं स्वाभिमतमाविरकारि । देहव्यतिरिक्तात्मसद्भावो नेह स्थापनीयः ; शास्त्रप्रमुख एव (एतन्मीमांसाशास्त्रारम्भ एव) प्रथमे पादे शास्त्रफलोपभोगयोग्यस्य आत्मन उक्तत्वादिति शंकामुद्भाव्य, 'सत्यमुक्तं भाष्यकृता । न तु तत्रात्मास्तित्वे सूत्रमस्ति । अत्र स्वयं सूत्रकृदेवाह' इति वर्णितम् । अत्र उक्तं भाष्यकृतेति पदम्, कुमारिलभट्टपादश्लोकमपि स्मारयति, य एषः, "इत्याह नास्तिक्यनिराकरिष्णुरात्मास्तितां भाष्यकृदत्र युक्त्या । दृढत्वमेतद्विषयस्तु बोधः प्रयाति वेदान्तनिषेवणेन" इति । कर्मविचारेदम्परो जैमिनिः तत्त्वेदम्परबादरायणकरिष्यमाणोत्तरभागावसेयत्वमात्मनः प्रतीक्ष्य स्वयं न तत्र सूत्रं प्रणिनाय । भाष्यकारस्तु वक्ष्यमाणमेव प्रसंगादाकृष्याबोधयदिति भावः । आह चोपरि, "इत एवाकृष्य आचार्येण शबरस्वामिना प्रमाणलक्षणे वर्णितम् । अत एव च भगवतोपवर्षेण प्रथमे तन्त्रे आत्मास्तित्वाभिधानप्रसक्तौ शारीरके वक्ष्याम इत्युद्धारः कृतः। इह चेदं चोदनालक्षणेषूपासनेषु विचार्यमाणेष्वात्मास्तित्वं विचार्यते कृत्स्नशास्त्रशेषत्वप्रदर्शनाय" इति यावद्रूप आत्मा बादरायणेन बोधनीयः, तावद्रूपतया तज्ज्ञानमनपेक्षितं कर्मविचारे । किञ्चिद्विचारे कृते पुनः सम्यग्विचारः कार्यः पश्चादिति किमत्र तद्विचारग्रहणेनेति जैमिनिरुदास्त ।

अपेक्षितं देहातिरिक्तत्वं तु पारलौकिकफलस्थापनादेव सिद्धम् । तत्स्वरूपस्वभावजिज्ञासायां तदंशस्य प्रकृतानुपयोगात्, शारीरके वक्ष्याम इत्युक्तमुपवर्षेणेति तत्त्वम्। अत्र शांकरे वक्ष्यमाणस्याकृष्य वर्णनं शाबरे इत्युक्तत्वात् अहमर्थत्वरूपस्वरूपस्य विज्ञानगुणकत्वस्य च शाबरोक्तत्वात् उपवर्षवक्ष्यमाणमेवेदमिति चातएव ज्ञायमानत्वात् एवम्भूतात्मस्वरूपमस्वीकुर्वतामहमर्थातिरिक्तात्मवादिनामद्वैतिनां पूर्वसंप्रदायग्रन्थविरोधोऽप्युक्तो भवतीत्यन्यदेतत् । अत्र हि शांकरभाष्ये पूर्णमीमांसाशास्त्रस्यैकत्वम्, तत्प्रथमाध्यायस्य पूर्णशास्त्रमुखत्वम्, अत्रोक्तोपासनानां तत्रोक्तचोदनालक्षणधर्मत्वम्, अत्र विचार्यस्यात्मस्वरूपस्य तत्रोक्तधर्मार्थितयाऽपि विचार्यत्वं च व्यक्तमुक्तम् । शास्त्रप्रमुखे, कृत्स्नशास्त्रेत्यादिपदस्वारस्यमवधेयम् । धर्माधर्मयोरिव कर्मब्रह्मणोर्विरुद्धत्वेऽपि तत्तत्परमीमांसयोः तदर्थप्रतिपादकवेदभागयोरिवैकशास्त्रावयवत्वं जाघटीतीति हि तदाशयः । अन्यथा कर्मज्ञानकाण्डयोर्नैकवेदता स्यात् । अतः शाखाद्यैक्यवत् शास्त्रैक्ये सत्यपि प्रमेययोर्द्वयोर्मिथोऽनन्वय उपपन्न इत्येतावदेव शांकरहृद्गतम् । "शास्त्रैकत्वसिद्धिः" इति वृत्तिविरोधः शबरोपवर्षादिमीमांसकग्रन्थविरोधश्चान्यथा स्यादिति किमत्र प्रतिवादेनेति । किं सुदूरगमनेन । शांकरे उपक्रम एवाथशब्दार्थविचारे, स्वाध्यायानन्तर्यं तु समानमित्युक्तम् । तदर्थं विशदयता च वाचस्पतिमिश्रेण अथातोधर्मजिज्ञासेत्यस्य सामान्यतो वेदार्थजिज्ञासेत्यर्थकत्वात् ब्रह्मभूतवेदार्थविचारे स्वाध्यायाध्ययनानन्तर्यस्य शास्त्रप्रमुख एवोक्तत्वात् इह विशेषकिञ्चिदानन्तर्यमेव वक्तव्यमिति स्पष्टमुक्तम् । तद्व्याख्याने कल्पतरौ तद्विवरणभूते परिमले च ऐकशास्त्र्याभ्युपगमौपयिकनिरूपणविस्तरो द्रष्टव्यः । यावत्सामरस्यं प्राचीनपरिगृहीतम्, तत्रापि भेदकल्पनया वृथाकोलाहलो न सहृदयहृद्यः ।

विशिष्टाद्वैतिनः शास्त्रैक्याभावे अथशब्दस्य कर्मविचारानन्तरमित्यर्थः कथं स्यादिति तत्स्थापनशेषतया न तत् निरूपयन्ति; किं तर्हि, तत्त्वं प्राच्येष्टं च तदित्येतावतैव । अध्ययनक्रमादिनैव कर्मब्रह्मविचारक्रमसिद्ध्या अथशब्दाभिमतार्थस्य सौस्थ्यात् । अद्वैतिना भास्कराचार्येण अथशब्दस्य सौत्रस्य कर्मविचारानन्तरमित्यर्थ एव प्राच्योक्तः पर्यग्राहि । एवंस्थिते शांकरानुयायिनः आकरविरोधादप्यबिभ्यतो हठेन शास्त्रभेदप्रतिष्ठापने मुष्टिं बध्नन्ति; किं तेषां गृहीतग्रहणप्रतिविधानेन ।

प्रतिस्पर्धितयाऽप्यभिमतेऽत्र पूर्वतन्त्रे प्रतिपादितान् विषयान् अद्वैतिन एव पदेपदे उदाहृत्य स्वग्रन्थान् महयन्ति; अन्ये तु स्वल्पम् '। अद्वैतिनामुभयोरैकरस्यस्थापनावश्यकत्वापर्यालोचनया, मीमांसाव्याख्यातृवर्णितानां सर्वेषां सूत्रकृतो जैमिनेः शिरसि निक्षेपेऽपि न हानिः काचिदासीत् । परं निर्दुष्टे दोषारोपणमित्येष दोषः । विशिष्टाद्वैतिनस्तु विरोधं परिहरन्तः ऐकरस्यस्थापकान् अंशान् दर्शयन्ति । आपातप्रतीतविरोधपरिहारस्तावदवश्यमेव कार्यः । संभवति महर्षीणां सामरस्ये विरोधारोपेण वैरस्यापादनमस्थाने । व्याख्यातृणां प्रमादस्तु सर्वत्र संभाव्यते । अत एव आदिकपिलमहर्षिगत्यनिश्चयेन सेश्वरनिरीश्वरसांख्यभेदः समपद्यत । जैमिनिग्रन्थं पूर्वमीमांसां स्वग्रन्थशारीरकोपजीव्यं सर्वप्रकारेण दर्शयन् बादरायणो जैमिनेः सेश्वरत्वम्, 'साक्षादप्यविरोधं जैमिनिः', 'अन्यार्थं तु जैमिनिः', 'परं जैमिनिर्मुख्यत्वात्' 'ब्राह्मेण जैमिनिः', 'भावं जैमिनिः', इत्येवं सुस्पष्टं प्रकटयति ।

एवं सति यदि मीमांसकाः निरीश्वरवादं वर्धयेयुः, तत् कथं जैमिनेर्हृदयं भवितुमर्हति ? एवं देवतानिराकरणमपि मीमांसाव्याख्यातॄणां स्वप्रौढिमप्रकटनप्रागल्भ्यादेव ; अथवा शून्यवादिनो बुद्धस्य चातुर्विध्यमतवत् गुडजिह्विकान्यायेन सेश्वराणामेव निरीश्वरवादो नास्तिकसंग्रहाय । न पुनर्जैमिनेराशयस्य तथात्वेन । अत एव हि बादरायणो देवानामर्थित्वसामर्थ्याभावादुपासनेऽनधिकारमुद्भाव्य परिहरन् शंकेयं जैमिनीयेति नाह । प्रत्युत "मध्वादिष्वसंभवादनधिकारं जैमिनिः' इति मधुविद्यादिषु स्वस्वविषयकविद्यासु स्वस्यस्वस्य देवस्य नाधिकार इत्येतावदेव जैमिन्युक्तत्वेनादर्शयत् । अतः, देवतानां देहादिकमस्ति, परं स्वस्यैवाराध्यभावः स्वपदमपि फलं यत्रोपासने, तत्र ताः कथमधिक्रियेरन् इत्येव स मेने ।

किञ्च पश्यत(1-3-26)शांकरदर्शितम् "न देवानां देवतान्तराभावात्" इति वाक्यम् । तेन देवानामविग्रहत्वादनधिकार इति न, किंतु स्वातिरिक्ताया आराध्यदेवताया अभावादेवेति ज्ञायते । व्यवृणोच्च वाचस्पतिर्भामत्याम्—वस्वादीनां हि न वस्वाद्यन्तरमस्तीति । यदि तु वस्वादय एव नेष्येरन् , तर्हि आदित्यमधुभोगार्थो वस्वादिभावः फलमित्यपि परित्यक्तं स्यादिति गतं विधिवाक्येनापि । शांकरोदाहृतमिदं वाक्यं (पू. मी. 6-1-5) कर्तुर्वेति सूत्रे शाबरभाष्ये स्थितम् । एवंस्थिते यत् अप्पय्यदीक्षितैः परिमले (1-1-1) "जैमिनिना तिर्यगधिकरणे 'न देवता देवतान्तराभावात्' इति सूत्रेण .... देवताभ्युपगम एव स्पष्टीकृत इत्युक्तम् । तत्र पर्यवसितार्थस्य ग्राह्यत्वेपि तथाविधसूत्रसद्भावकथनं विचार्यम् । तथा जैमिनिसूत्रानुपलम्भात् । किं जैमिनिरिति, भाष्यकारः शबरस्वाम्यपि हि न देवतामपलपति, देवतान्तराभावादेव हि देवानधिकारः तेनाभाषीति तावत् वक्तुं कश्चित् व्यवस्येत् , यावत् 'देवता वा' (6) इति नवमप्रथमशाबरं नेक्षते । तत्र हि गुणत्वे देवताश्रुतिरित्यत्रातिथिवैलक्षण्यं वर्णयता देवता विग्रहवती भुङ्क्ते चेति पक्षोऽपि परास्यते । आस्तामेतत् । सूत्रे तु मालयाऽपि न विग्रहादिराहित्यं प्रतीयते । तदेतदनन्तरं दर्शयिष्यामः । एवं विकृतियागे द्रव्यघटितं वा देवताघटितं वा सादृश्यमतिदेशोपयोगीति विमर्शे द्रव्यघटितसादृश्यस्य जैमिन्यादृतत्वमात्रेण देवतापलापो न शक्यशंक इत्यपि वक्ष्यामः । एवमाकृतिशक्तिवादिनो जैमिनेः, 'शास्त्रदृष्ट्या तूपदेशो वामदेववत्', 'चराचरव्यपाश्रयस्तु' इत्येवं विशिष्य व्युत्पत्तिं वदतो बादरायणस्य च आशयभेद इत्येतदपि व्याख्यातृमतिभेदमूलमित्यपि दर्शयिष्यामः ।

उपनिषद्विचारं विशिष्य कर्तुमप्रवृत्तस्य जैमिनेर्बादरायणेन सह तदर्थविचारः पश्चात् कर्तव्य आपतितः, तदा तस्य प्राथमिकमाशयं परास्यन् गुरुः शिष्यं यथावस्थितमध्वानमानिनाय । तत्र प्राथमिकी तद्दशाऽपि क्वचिदुद्घाट्यते शारीरके । अथ विनीतस्य तस्य वास्तवार्थविमर्शनैपुण्यमपि बहुषु स्थलेषु प्रीतो बहुमत्या गुरुराविष्करोति । एवमुपसन्नस्य तस्य ग्रन्थे विरोधमपश्यन्नेव गुरुस्तन्मीमांसनमादृत्योपरिलनभागमात्रं स्वयं मीमांसते स्म । तदिह अर्वाग्दृष्ट्या विरोधशंकावहानि पूर्वमीमांसाधिकरणानि कतिचित् यथावत् व्याख्याय सूत्राणामाञ्जस्येनानुकूल्यं दर्शयामः—

तत्र पूर्वमीमांसायामध्यायाः षोडश । तत्र द्वादश सशाखोपशाखं विशेषतो वर्धिताः । अध्यायेषु तृतीयषष्ठदशमेष्वष्टौ पादाः ; अन्यत्र सर्वत्र चत्वार एव । प्रत्यध्यायं तत्र प्रतिपादितं प्रमेयं तावत्

सर्वाविगीतमेवं संगृह्णीमः—मानं भेदः शेषभावः प्रयुक्तिः पौर्वापर्यञ्चाधिकारोऽतिदेशः। सामान्येनाथो विशेषातिदेशः ऊहो बाधस्तन्त्रमन्ते प्रसंगः इति। आदौ धर्मविचारं प्रतिज्ञाय चोदनारूपवेदप्रमाणको धर्म इति तं लक्षयित्वा, वेद एव प्रमाणं वेदःप्रमाणमेवेत्यंशद्वयं निरूपयन् प्रमाणविभागे दत्तदृष्टिः विध्यर्थवादमन्त्रस्मृत्याचारनामधेयवाक्यशेषसामर्थ्याख्यानि अष्टौ प्रमाणानि सावान्तरभेदं प्रथमेऽध्याये प्रत्यपीपदत्। द्वितीये यागहोमदानादिधर्मभेदे प्रमाणानि षट् शब्दान्तरमभ्यासः संख्या संज्ञा गुणः प्रकरणान्तरमिति विभज्य न्यरूपयत्। एवं लक्षितविभक्तानां धर्माणां नानारूपाणामङ्गाङ्गिभावनिर्णयाय अङ्गत्वे प्रमाणानि श्रुतिलिङ्गवाक्यप्रकरणस्थानसमाख्यानामानि षट् प्रतिपाद्य तेषामुत्तरोत्तरदौर्बल्यं तन्मूलमङ्गाङ्गिनिर्णयप्रकारञ्च तृतीयेऽध्यायेऽष्टभिः पादैरदीदृशत। चतुर्थे—एवमङ्गाङ्गिनिर्णयस्य समाहारेणानुष्ठानार्थत्वात् सत्यप्यङ्गित्वे केषाञ्चित् अङ्गानुष्ठानप्रयोजकत्वं नास्तीत्याकलय्य तं प्रयोज्य-प्रयोजकभावं विचारयन् कर्मणि क्रत्वर्थपुरुषार्थविभागं विधाय तत्रतत्राक्षाभ्यञ्जन-तुषोपवाप आर्थवादि-काङ्गफलादीनामेकहायनीनयन-पुरोडाशकपाल-अङ्गानुष्ठानादिकं प्रति प्रयोजकत्वम् अनुष्ठापकत्वं नास्ती-त्येवमादिकमचकथत्। अनुष्ठेयतयाऽवधारितानां पौर्वापर्यव्यवस्थां दर्शयितुं पञ्चमे श्रुत्यर्थपठनस्थानमुख्य-प्रवृत्त्याख्यानि षट् क्रमप्रमाणानि प्राचीकशत्। षष्ठे कस्मिन् कोऽधिकारीति नित्यनैमित्तिककाम्य-विभागेनाधिकारिनिरूपणमकार्षीत्। एवमुपदेशषट्कं वृत्तम्।

यत्र समग्राङ्गोपदेशो भवति, यस्य कर्मणः अन्यकर्मसकाशादङ्गानि नानीयन्ते, सा प्रकृतिः। तस्मिन् कर्मण्युपदिश्यमानानामङ्गानामनुष्ठानप्रकारश्चिन्तित एवं षट्केन। अथातिदेशषट्कम्। यत्रान्य-कर्मसकाशादङ्गान्यानीयन्ते, सा विकृतिः। तत्र विकृतिकर्मण्यङ्गानयनमेवातिदेशः। तत्प्रमाणनिरूपणं सप्तमेऽध्याये। तच्च प्रमाणं नाम वचनञ्चेति द्विविधम्। नित्याग्निहोत्रातिरिक्ते क्वचित् अग्निहोत्रनाम-करणात् तद्बलेन तत्र नित्याग्निहोत्रादङ्गातिदेशो नामातिदेशः। वचनञ्च प्रत्यक्षवचनं सादृश्यादिबलक्लृप्त-वचनञ्चेति द्विविधम्। अथाष्टमे विशेषातिदेशः—विवादस्थले एतस्मादेवातिदेशः न त्वन्यस्मादिति निर्धारणं तत्रतत्र क्रियत इति। नवमे अतिदिष्टेषु मन्त्रादिषु प्राकृताग्न्यादिपदस्थाने सूर्यादिपदप्रक्षेपः कर्तव्यो विचार्यते। दशमे अतिदिश्यमानेषु केषाञ्चित् प्रयोजनलोपात् बाधः, तत्स्थानेऽन्य-प्रत्याम्नानात् बाधः, कण्ठतो निषेधाच्च बाध इति बाधो निरूप्यते। एवमतिदिष्टानामियत्तयाऽवधृताना-मङ्गानां, तथोपदिष्टानामपि सकृत्करणं यद्यनेकोद्देशेन, तत् तन्त्रम्। तत् शोध्यत एकादशे। यदि एकोद्देशेनानुष्ठितेनैवाङ्गेनान्यस्याप्यर्थात् कार्यसिद्धिः, तत्र पृथगनुष्ठानं नास्तीति स प्रसङ्गो नाम द्वादशे ज्ञाप्यते। एवं द्वादशाध्याय्यर्थसंग्रहः।

अथ तत्र शिष्यन्ते चत्वारोऽध्यायाः। तस्य संकर्षकाण्ड इति व्यवहारः, देवताकाण्ड इति च। द्वितीयनामानुगुणं तत्र चतुर्षु 'स्वरूपमादौ तद्भेदः तदुपासनपूर्वकम्। फलञ्च देवताकाण्डे देवतानां तु कथ्यते' इति अधिकरणचिन्तामणौ वैश्वामित्रैर्वरदगुरुभिरभाणि। संकर्षकाण्डस्य देवताकाण्ड इति व्यवहारो भामतीव्याख्याने कल्पतरावपि क्रियते। तत्र परिमले—देवताविषयविशेषविचारविरहिते तत्र देवता-

काण्डेति व्यवहारः क्लेशेनैव निर्वाह्य इत्यप्पय्यदीक्षितनिरूपणं स्फुटमस्ति। माध्वग्रन्थे 3-3 उपसंहार इति सूत्रे पूर्णत्वाविरोधिगुणमात्रस्योपास्यता, न दोषस्येति निरूपणार्थं, "तथाच सांकर्षणसूत्रम्, अचेतना सत्यायोग्यानि अनुपास्यानि अफलत्वविपर्ययाभ्याम्" इति उपासनविषयं सूत्रमुदाहारि। एवं संकर्षान्ते, "स विष्णुराह हि तं ब्रह्मेत्याचक्षते" इति सूत्रं निर्दिशन्तः तेन सह अथातोब्रह्मजिज्ञासेति शारीरकारम्भसूत्रस्य संगतिमपि संदर्शयन्ति। सर्वमिदमप्पय्यदीक्षितदर्शिते संप्रति लोके सितासिततया प्राप्तप्रचारत्वे संकर्षे नैव लक्ष्यते। अत्राभियुक्तैर्भट्टपराशरपादैः काशकृत्स्नप्रभवः संकर्ष इत्यभाषि। तर्हि स देवताप्रतिपादकः स्यादित्याशेरते। परं तु तस्य किं संकर्षस्य विंशतिलक्षणमीमांसानिविष्टत्वम्, आहो जैमिनीयस्येति विवादे श्रीभाष्योदाहृतवृत्तिग्रन्थे, "जैमिनीयेन षोडशलक्षणेन" इति स्पष्टनिर्देशात् जैमिनिरेव मीमांसानिविष्टसंकर्षकृदिति वक्तव्यम्। काशकृत्स्नोऽपि श्रीपराशरभट्टार्यगौरवेणाद्रियमाणः श्रीदेशिकचरणैरपि उदलेखि सेश्वरमीमांसाप्रथमसूत्रे। "कर्मणाञ्च प्रकृतिविकृतिरूपाणां धर्मार्थकामरूप-पुरुषार्थसाधनतानिश्चयः प्रभुत्वादार्त्विज्यम् इत्यन्तेन सूत्रकलापेन संकर्षेण कृतः' इति श्रीभाष्यकारसार-ग्रन्थसूक्तिः। प्रभुत्वादार्त्विज्यमिति तावत् द्वादशाध्यायान्तिमाधिकरणादिमसूत्रम्। अन्वाहार्ये च तद्दर्शनादिति तदधिकरणान्तिमसूत्रम्। संकर्षकाण्डान्तिमसूत्रे तु, यथा याज्यासंप्रैषो यथा याज्यासंप्रैष इत्यभ्यास इति तदेवान्तिमसूत्रम्। अतः सारे संकर्षेण चेति चकारोऽपेक्षितः। तस्य तदाऽपि प्रचारा-भावादेव तदन्तिमसूत्रं नादर्शीत्यूहस्यावसरोऽस्ति।

शबरस्वामिनाऽपि द्वादशाध्ययीभाष्यमेव रचितमिति प्रपञ्चहृदये। तत्र केचित् विशेषा अवगम्यन्ते। तद् यथा—"तस्य विंशत्यध्यायनिबद्धस्य मीमांसाशास्त्रस्य कृतकोटिनामधेयं भाष्यं बोधायनेन कृतम्। तत् ग्रन्थबाहुल्यादुपेक्ष्य किञ्चित् संक्षिप्तमुपवर्षेण कृतम्। तदपि मन्दमतीन् प्रति दुष्प्रतिपादं विस्तीर्णत्वादुपेक्ष्य षोडशलक्षणपूर्वमीमांसाशास्त्रमात्रस्य देवस्वामिना अतिसंक्षिप्तं कृतम्। भवदासेनापि कृतं जैमिनीयभाष्यम्। पुनर्द्विकाण्डे धर्ममीमांसाशास्त्रे पूर्वस्य तन्त्रकाण्डस्य आचार्य-शबरस्वामिना अतिसंक्षेपेण संकर्षकाण्डं द्वितीयमुपेक्ष्य कृतं भाष्यम्" इति। एवञ्च संप्रति मीमांसाशास्त्र-प्रचारो यं ग्रन्थमाकरीकृत्य, तत् शाबरभाष्यमेव द्वादशलक्षणीमात्रविश्रान्तमित्यवगमात् कालक्रमेण तथा लोपमभजत संकर्षकाण्डः, यथा सूत्राण्यप्यनुपलभ्यानि समवर्तन्त; दूरे तेषामर्थबोधः। लोके सर्वमपि क्षीणमिव लक्षितमपि देशवैशाल्यात् परिग्रहभूयस्तया च कदाचित् अन्यदाऽभिवर्धमानं पश्यामः। अतः सारस्वतं स्रोत इव लक्ष्यालक्ष्यं कालदेशानुकूल्ये पुनःप्रादुर्भवेदपि, यथा भामतीकल्पतरुकाले निलीनः स एव संकर्ष ईषदात्मानमदर्शयदप्पय्यदीक्षितकाले इति। विस्तरोऽस्मत्कृते परमार्थभूषणे द्रष्टव्यः।

तदेवं लुप्तप्रायः संकर्षः जैमिनीयः षोडशाध्याय्यन्तर्गतः, यत्र यूपपादः, इष्टकापादः, अवदानपादः, होमपादः, कालपादः, अग्निपादः, ग्रहपादः, वरणपादः, सामिधेनीपादः, निगदपादः, वषट्कारपाद इति पादनामानुरूपं द्वादशाध्यायीप्रमेयमेव प्रकीर्णं विचीर्यते इति न देवतास्वरूपाद्यैदम्पर्यम्। एवमपि काशकृत्स्न-कृतोऽन्यः संकर्षः प्रकृतकर्ममीमांसोपयोगित्वात् देवताप्रतिपादकः सन् पूर्वसंकर्षशेषः सन् पूर्वान्तर्भूतत्वेनैव

परिगण्यत इति तत एव हेतोः तत्रत्यसूत्राणामपि, तं ब्रह्मेत्याचक्षत इत्यादीनां शारीरकपूर्वांशत्वेन ग्रहणम् ; काशकृत्स्नबादरायणयोः समानाशयत्वात् । अत एव जीवब्रह्माभेदनिर्देशनिर्वाहविषये काशकृत्स्नपक्षमेव बादरायण आद्रियमाण एवमसूत्रयत, "अवस्थितेरिति काशकृत्स्नः" इति । तदिदमुभयो रैकमत्यं सर्वसंप्रतिपन्नम् । इदमभिप्रेत्य श्रीपराशरभट्टपादैः संकर्षः काशकृत्स्नप्रभव इत्यभ्यध्यायि । शांकरभाष्य-तृतीयतृतीये 43 सूत्रे आनन्दगिरिः, 'संकृष्यते—कर्मकाण्डस्थमेवावशिष्टं कर्म संक्षिप्योच्यत इति संकर्षो देवताकाण्डम्" इति । मधुसूदनसरस्वती च प्रस्थानभेदे, "तथा संकर्षकाण्डमप्यध्यायचतुष्टयात्मकं जैमिनिप्रणीतम् । तच्च देवताकाण्डसंज्ञया प्रसिद्धमप्युपासनाख्यकर्मप्रतिपादकत्वात् कर्ममीमांसान्तर्गतमेव" इति । मीमांसकमूर्धन्यखण्डदेवशिष्यश्च शम्भुभट्टः भाट्टदीपिकाव्याख्यायां प्रभावल्याम्, "मीमांसा अथातोधर्मजिज्ञासेत्यादिना जैमिनिप्रणीता द्वादशाध्यायीसंकर्षकाण्डात्मिका चतुरध्यायी च कर्ममीमांसा, अथातोब्रह्मजिज्ञासेत्यादिना व्यासप्रणीता चतुरध्यायी शारीरकमीमांसा च" इति । किमनेनानेकसितासितवाक्यकदम्बप्रदर्शनेन । सर्वथा देवतोपसनादितत्परे वा उपासनीयदेवतोद्देश्यककर्मान्तर्गतानेकविप्रकीर्णार्थव्युत्पादके वा संकर्षकाण्डे पूर्वसूचितरीत्या कर्मशेषतयैव देवतादिप्रमेयस्थितिर्भाव्या ; न प्राधान्येन ।

एवं शाबरप्रभृति समभिवृद्धो निरीश्वरमीमांसकप्रचारः शारीरके श्रद्धां वहद्भिरद्वैतिद्वैतिविशिष्टाद्वैतिभेदभिन्नैः सर्वैरेव वेदान्तिभिः शारीरकार्थविवरणमुखेन प्रशममनीयत । तदर्थं च विशिष्य कतिपयसूत्रव्याख्यानिरासेन व्याख्यानान्तरं विधातुं मार्गदर्शिन आसन् श्रीभगवद्रामानुजस्वामिपादाः, ये आनन्दमयाधिकरणभाष्ये अरुणाधिकरणमन्यथा व्युदपादयन् । एवमाकृत्यधिकरणादिष्वपि तदभिसंहिता व्याख्यानप्रणाली श्रीमन्निगमान्तमहादेशिकैः कृत्स्नमीमांसासूत्रविशदव्याख्यानप्रवृत्तैः सेश्वरमीमांसायां सम्यङ् न्यरूपि । परं प्रकृष्टग्रन्थगौरवग्रहणदूरैरलसास्तिकैरपरिरक्षिता साम्पतं प्रथमपादद्वयमात्रेण सा जीवितं धारयति । अन्या च मीमांसापादुका पद्यमयी तैरेव प्रथमपादमात्रार्थसंग्रहरूपा प्रणीता । उपलभ्यमानांशे च जैमिनिसूत्राशयो बादरायणाशयानुरूपो निरीश्वरमीमांसकागृहीतो यथावद्व्युदपाद्यत । अतः प्रथमपादसूत्राणामत्र व्याख्यायार्थप्रदर्शनमनावश्यकमिति आशयभेदः परं संगृह्यते—

तत्र प्रथमाधिकरणे धर्मविचारः कार्य इति यत् स्थाप्यते, तत्र पूर्वपक्षसिद्धान्तोपपादनप्रणाली प्राभाकरमतेऽन्या, भाट्टमते परा, अस्मन्मते चान्यादृशी । तथा हि—स्वाध्यायोऽध्येतव्य इति वाक्यमध्ययनविधायकं न भवति, यजेत स्वर्गकाम इत्यादौ स्वर्गकामादेरिवात्र नियोज्यस्य कस्यचिदश्रवणात्, बालस्याव्युत्पन्नस्य वेदप्रेर्यत्वायोगाच्च । अतो व्युत्पन्नः प्रौढ आचार्यः, तमाचार्यं प्रचक्षते, तमध्यापयेदित्यादिवाक्यार्थवेदी स्वयमाचार्यककामः अतएव विधिनियोज्यो भवन् बालमुपनीयाध्यापयति आचार्यकं स्वयमाप्तुम् । एवं लब्धत्वात् वेदस्य आचार्यककार्थस्यार्थज्ञानार्थत्वाभावात् तदर्थविचारे न प्रवृत्तिः संभवति, ज्ञानस्यानपेक्षितत्वादिति पूर्वः पक्षः । अध्यापनविधिप्रयुक्तत्वेऽप्यध्ययनस्याध्यापकनिष्ठबहिरङ्गभूताचार्यकापेक्षया अध्येतृनिष्ठस्यान्तरङ्गस्यार्थज्ञानस्यैव फलत्वं युक्तमिति कर्तव्यस्तत्सिद्धये विचार इति प्राभाकराः ।

भाट्टास्तु नाध्यापनविधिप्रयुक्तमध्ययनम्, किं तु स्वाध्यायोऽध्येतव्यः इति स्वविधिप्रयुक्तम्। अनधीयाना व्रात्या भवन्तीति अनध्ययने प्रत्यवायश्रवणात् अध्ययनस्यावश्यकार्यतया नाचार्यककामना आचार्यनिष्ठा तत्प्रेरिका। ननु अध्ययनवाक्ये नियोज्यो न श्रूयत इत्युक्तम्। स्यान्नाम। तमध्यापयीतेत्यत्रापि नियोज्यो न श्रूयते, आचार्यककाम इति पदाभावात्। बालस्याध्ययनविधिज्ञानं कथं भवतीति चेत्—संध्योपासनादिकं कार्यमिति कथं जानाति। न हि तत् सर्वमप्याचार्यककामनाधीनम्। अतो हितकारिपित्रादिप्रवर्तितो विधिवश इति सर्वत्राविशिष्टम्। तस्मात् प्रकारान्तरेणाधिकरणरचना कार्या। अत्रैवं पूर्वपक्षः—अध्ययनं नार्थज्ञानार्थं विधीयते। अध्ययनादन्येनाप्युपायेन स्वाध्यायप्राप्तेरर्थज्ञानस्य च सुसंपादत्वात्। अतोऽध्ययनविधिरदृष्टार्थः, नार्थज्ञानार्थः। अतो न विचारः कार्य इति। सिद्धान्तस्तु यावद्दृष्टफललाभमदृष्टकल्पनस्यान्याय्यत्वात्. शब्दस्यार्थबोधकताया आनुभविकत्वात् तदर्थमेवाध्ययनम्। विधान्तरेणाप्यर्थज्ञानसंभवात् किमर्थमेतद्विधिरिति चेत्—एतद्विधिबलप्रवृत्तस्वाध्यायार्थज्ञानपुरुषलाभेन शान्ताकांक्षा यागादिविधयः अन्येषां स्वानुष्ठानार्थमर्थग्रहणोपायकल्पने न कदापि प्रवर्तन्त इति अन्येषामनधिकारित्वसिद्धिरेव फलम्। अर्थज्ञानञ्च विचारमन्तरा न भवितुमर्हतीति सोऽपि कर्तव्य इति।

इदमपि वेदान्तिनो नानुमन्यन्ते। स्वाध्यायोऽध्येतव्य इति वाक्ये हि स्वाध्यायो वेद एवाध्ययनकर्म। अतस्तदुद्देशात् तत्प्राप्तिरेव फलम्। न च तदनिष्टत्वम्, साक्षात्फलत्वस्यार्थज्ञानेऽप्यभावात्; परम्परया फलत्वस्य स्वाध्यायेऽप्यक्षतत्वात्। निरर्थकहुम्फडादिभागेऽर्थज्ञानायोगाच्च; तदतिरिक्तपारायणादिफलान्तरसत्त्वाच्च। अत एव **न्यायरत्नमालायाम**पि, "न केवलार्थविज्ञानसिद्धिरस्य प्रयोजनम्। अपेक्षितं दृश्यते यत् सर्वं तत्फलमिष्यते", "जपयज्ञपारायणादिविधिभिर्वेदस्वरूपावधारणमपेक्षितमिति तदपि प्रयोजनम्" इत्युक्तम्। अत एव बादरायणोऽपि, 'अध्ययनमात्रवतः' इति सूत्रेणाध्ययनविधेरर्थज्ञानपर्यन्तता नेति न्यरूपयत्। अतः स्वाध्यायलाभेनैव विधिचारितार्थ्यात् अध्ययनसमनन्तरमेव, अधीत्य स्नायादिति समावर्तनविधानादवसरालाभाच्च न विचार इति पूर्वः पक्षः। सांगवेदाध्ययनादापातप्रतीतिसद्भावात् तस्या एव विचारे प्रेरकत्वात्, अविदुषां कर्मणि मुख्याधिकारित्वाभावात्, कृतेपि समावर्तने गुरोरिव शिष्यस्यापि पूर्णावकाशलाभात् अध्ययनानन्तरं तत एव सांगाध्ययनात् हेतोर्विचारो भवितुमर्हतीति। तदेवं प्रथमाधिकरणे भाट्टप्राभाकरवत् वेदान्तिनः प्रस्थानभेदः।

अथ धर्मलक्षणम्, प्रमाणपरीक्षणम्, प्रत्यक्षादेरप्रामाण्यम्, वेदस्य प्रामाण्यमित्यंशाः क्रमेण निरूप्यन्ते। तत्र नातीव विवादः। यत् तत्र प्रत्यक्षानुमानोपमानशब्द-अर्थापत्त्यनुपलब्धिभेदेन प्रमाणषाड्विध्यवर्णनम्, तत् व्याख्यातृभिः कृतम्, न सौत्रम्। अतः प्रत्यक्षानुमानागमरूपत्रैविध्यं विशिष्टाद्वैतिदर्शितं न जैमिनिविरोधाय। अथ शब्दनित्यताधिकरणम्, अत्र वर्णनित्यत्वं स्थापयन्ति मीमांसकाः। वर्णनित्यत्वेपि कुमारसंभवादिवत् वेदानित्यत्वसंभवात् तत्स्थापनं वृथा।

नन्वेवं शब्दनित्यता कथम्। पदनित्यत्वे तद्घटकवर्णानामपि नित्यत्वध्रौव्यात्; तत्स्थापनञ्च व्यर्थम् पदनित्यत्वेऽपि कुमारसंभवादिवत् वेदानित्यत्वसंभवाच्च॥ उच्यते—

सामर्थ्यात् ज्ञानभावाच्चाबाधादप्राप्तबोधनात् । प्रमाण्यस्य स्वतस्त्वाच्च धर्मे वेदस्य मानता इति पूर्वाधिकरणे निरणायि । तत्र शब्दस्य बोधकत्वं संकेताधीनमेव लोके दृष्टम् । पदानि संकेतकाले तदर्थं कल्पितान्येव भवन्तीति पदानामनित्यत्वमवर्जनीयम् । एवं पदानित्यत्वे वेदनित्यत्वनिर्दुष्टत्वादेर्न प्रसक्तिरिति शंकायाम्—बोधकत्वरूपसंबन्धस्य स्वाभाविकत्वं संकेतासंभवञ्चोपपाद्य पदनित्यत्वं स्थाप्यते । तच्च पदनित्यत्वात् वेदनित्यत्वमिति स्थापनायेति न मन्तव्यम् । किंतु पदानित्यत्वे वेदानित्यत्वं स्यादिति शंकायामेतदारम्भः । नन्वेवं वर्णानित्यत्वे वेदानित्यत्वं स्यादिति शंकापरिहारार्थमेव वर्णनित्यत्वस्थापनं मीमांसकक्कृतमस्त्विति चेन्न—वर्णनित्यत्वस्य शास्त्रविरोधेनानंगीकार्यत्वात् । सृष्टिप्रलयानभ्युपगमेन 'न कदाचिदनीदृशं जगत्' इति वदतां शब्दं द्रव्यत्वेन मन्यमानानां मीमांसकानां तन्नित्यत्ववादः शब्दस्याकाशाद्यनित्यभूतगुणत्वं सृष्टिप्रलयौ च वदद्भिर्वेदान्तिभिर्नेषितुं शक्यते । ताल्वादेरभिव्यञ्जकत्व-पक्षेऽपि सृष्ट्यारम्भे वर्णा उत्पादिताः प्रलयारम्भे प्रलीयन्त इत्यवश्याभ्युपेत्यमिति वर्णनित्यत्वं दुर्भणम् । एवं तर्हि कथं पदनित्यत्वमिति चेत्—पदानामानुपूर्व्यैक्यमेव पदनित्यत्वमिति न दोषः । एवमपि अनित्यानेकविधोपाख्यानदर्शनात् काठकादिसमाख्यानादिना च कुमारसंभवादिवत् वेदानित्यत्वे शंकिते तन्निर्वाहायान्तिममधिकरणमिति अनित्यार्थसंयोगात् वेदानित्यत्वशंकायाम् 'किं ते कृण्वन्ति कीकटेषु गावः' इत्यादौ प्रमगन्दादिशब्दानामप्रसिद्धार्थकल्पनया सर्वोपाख्यानान्यथाकरणं मीमांसकेष्टम् बादरायणः, "अतः प्रभवात् प्रत्यक्षानुमानाभ्याम्" इति इन्द्रचन्द्रवसिष्ठविश्वामित्रादिशब्दानामपि गवादिशब्दवत् आकृतिविशिष्टवाचितया प्रवाहनित्यतास्थापनात् नाद्रियतेति तदविरोधेन जैमिनिसूत्रार्थ-वर्णनमेव वेदान्तिनो मन्यन्ते । कुमारिलवार्त्तिकेऽपि, "यदा मन्त्रार्थवादेतिहासपुराणप्रामाण्यात् सृष्टि-प्रलयाविष्येते । तत्र........प्रतिसृष्टि च ऋतुलिंगन्यायेन तुल्यनामप्रभवव्यापारवस्तूत्पत्तेर्नानित्यताप्रसंगः" इति कथितमिति सेश्वरमीमांसायामुदाहृतमप्यनुसंधेयम् । तस्मादविरोधेनार्थवर्णनमेव तेषामपि हृद्यम् ।

तत्रैवं विचारविषयेष्वधिकरणेषु आकृत्यधिकरणस्य प्रथमतृतीयान्तर्गततया प्राथम्यात् तत्रत्य-सूत्राणामर्थः शोध्यते । शब्दानां जातिशक्तिवादिभाट्टप्राभाकरमीमांसकमतं टीकायां जिज्ञासाधिकरणोत्तरभागे (2-65प्रभृतिषु) विस्तरेण खण्डितमिति सूत्रार्थशोधनमेवात्रास्मत्कृत्यम् । आकृत्यधिकरणतः पूर्वं व्याकरणाधि-करणम् । तत्र गवादय एव शब्दाः साधवः न गाव्यादयः, साधव एव प्रयोक्तव्याः नासाधव इति नियमद्वयं व्याकरणस्मृतिप्रामाण्यादेषितव्यमित्युक्तम् । तत्र 'तदशक्तिश्चानुरूपत्वात्' इति गाव्यादिशब्दानां प्रमाद-करणापाटवादिमूलानामशक्तत्वं गवादिशब्दानामेव व्याकरणसंस्कृतानां शक्तिमत्त्वमिति कथनात् शब्दशक्तेर्विषयः कः इति विचारः प्रसक्तः । अन्तिमसूत्रे च तत्र, एकदेशत्वाच्च विभक्तिव्यत्यये स्यात्' इत्यस्मिन्, यथा अश्मकेभ्य आगच्छामीति कश्चित् ब्रूयात् तत्र विभक्तिव्यत्ययेऽपि अपभ्रंशस्य तदशक्यस्याप्यवगतिः, तथा गवादिशब्दस्थानगते गाव्यादिप्रकृतिभागेऽपीत्युक्तम् । विभक्तीनामर्थ-व्यवस्था व्याकरणानुशिष्टा कर्मणि द्वितीयेत्येवं विस्तरेण । तथा, "नाम च धातुजमाह निरुक्ते व्याकरणे शकटस्य च तोकम्" इति व्युत्पत्तिपक्षे सर्वस्यापि धातुतो निष्पन्नत्वात् कृदन्तत्वात् कृताञ्च यथायथं कर्तृ-

कर्माद्यर्थकत्वस्य मीमांसकादिसर्वेष्टत्वात् भावार्थप्रत्ययव्यतिरिक्तस्थले तत्तद्द्रव्यादिपरत्वं शब्दस्य सुगमम्। धातूनाञ्च क्रियावाचित्वं भूवादय इत्याद्यवगतमेव। विभक्तीनां तिङां सुपाञ्च कर्तृकर्माद्यर्थकत्वमनुशासनादवगम्यते, लःकर्मणि चेत्येवम्। पच्यादेरनेकक्रियासमुदायोऽर्थ इति च। एवञ्च धातवः प्रत्यया वा सर्वे क्रियातत्संबन्धिविविधव्यक्तिवाचिन एव व्याकरणादवगताः। 'तदधीते तद्वेद', 'तस्यापत्यम्' इत्यादिसूत्रनिष्पादितान्यपि वैयाकरणः पाराशर्य इत्यादीनि पदानि द्रव्यवाचीन्येव। क्वचिदेव तु 'जात्याख्यायामेकस्मिन्' इत्यादौ विवक्षावशात् जातिमात्रे स्थितिर्व्याकरणेष्टा। न केवलं व्याकरणमात्रेण, लोकव्यवहारेणापि सर्वेषां पदानां व्यक्तिवचनत्वमेव सुनिरूढम्, गौर्गच्छति, गामानय, गवा समृद्ध्यतीत्येवम्। एवं व्युत्पत्तिलभ्यविशेषणांशस्य यत्र बाधः, तत्र लक्षणया प्रयोग इत्येवाध्यवसातव्यम्।

एवं विचारावसरे विचारान्तरं पदं धत्ते—किं य एव लौकिकाः शब्दाः त एव वैदिका इति; लोके प्रयुज्यमानाः संस्कृतशब्दाः, वेदे प्रयुज्यमानाश्चाभिन्ना उत भिन्ना इति। कुतोऽयं विशय इत्यत्र समुचितं कारणं न निर्दिशन्ति। अत्रास्माभिरुक्तमवधेयम्। संस्कृतशब्दानां सर्वेषां धातुनिष्पन्नत्वादनित्यत्वमायातम्। वैदिकास्तु शब्दा अपौरुषेया इति नः सिद्धान्तः। न च नित्यानां तेषामनित्यानाञ्चैषामैक्यं संभाव्यते। अत एव व्याकरणदर्शितव्युत्पत्तिमुखेन लौकिकानां ये अर्था अवधारिताः, त एवार्था वैदिकानामपीत्यवधारणस्य नावसरोऽस्ति। अतोऽर्थभेदोऽपि शब्दभेदवदिति शंका। तत्र सूत्रकृत् शब्दैक्यादर्थैकत्वमप्याह—"प्रयोगचोदनाभावादर्थैकत्वमविभागात् स्यात्" इति। अयमर्थः—प्रयोगे-लोकव्यवहारे चोदनायां-वेदे च शब्दानामेकरूपाणामेव भावात् अविभागात् एकत्र धातुजत्वमन्यत्रान्यादृशत्वमित्यादिविभागाभावाच्चोभयैक्यादर्थैक्यमेवेति। व्याकरणेन निष्पादिताः शब्दाः पश्चादेव कुलालादिकृता घटादय इवात्मानं लभन्त इति नास्ति। प्रागेव स्थितानां शब्दानामर्थावधारणोपायं कञ्चिदेवमाहुः शाब्दिकाः। आहुश्च "उपायाः शिक्षमाणानां बालानामुपलालनाः। असत्ये वर्त्मनि स्थित्वा ततः सत्यं समीहते" इति। अर्थस्तावत् पदानां व्युत्पाद्य व्याकरणाधिगमित एव सर्वत्र ग्राह्यः। प्रकृतिप्रत्ययनिष्पत्तिबलाद्वा भवतु; "स्वमपीतो भवति। तस्मादेनं स्वपितीत्याचक्षते। स्वं ह्यपीतो भवति", "यत्रैतत् पुरुषोऽशिशिषति नाम, आप एव तदशितं नयन्ते। तद् यथा गोनायोऽश्वनायः पुरुषनाय इति, एवं तदप आचक्षते अशनायेति", "यत्रैतत् पुरुषः पिपासति नाम, तेज एव तत् पीतं नयते...तत् तेज आचष्टे उदन्येति (उदनायेति)" इति स्वपित्यशनायोदन्याशब्दनिर्वचनवत् विवक्षितार्थस्य हृदये लग्नत्वाय व्युत्पत्त्यारोपणमात्रमिति कृत्वा व्युत्पादितार्थवत्त्वं पदानां स्वभावादित्येव वा। सर्वथा शब्दभेदेऽर्थभेदे व्युत्पादितार्थातिरिक्तार्थे च न प्रमाणमिति। य एव लौकिकास्त एव वैदिका इत्यस्यार्थस्तावत् वैदिकशब्दानां लौकिकसजातीयानां लौकिकभिन्नत्वं नास्तीत्येतावानेव। न तु लोके प्रयुज्यमानशब्दापेक्षया अन्ये शब्दा न सन्ति वेदे इति; न वा लौकिकान् शब्दानेव घटयित्वा वेदाः कृता इति। वैदिकेष्वेव शब्देषु केचिल्लोके प्रयुज्यन्ते। अत्राप्रयुक्ताः प्रयोगानर्हाश्च

केवलवैदिका बहवः शब्दाः सन्ति । वेदेष्वप्रयुक्ताः शब्दा लोकमात्राश्रितास्तु न संस्कृतशब्दा भवन्तीति तत्त्वस्थितिः । एवं तर्हि य एव वैदिकाः त एव लौकिकाः इति हि वक्तव्यमिति चेत्—सत्यम्—व्याकरणाधीनार्थनिर्णयो लौकिकमात्रविश्रान्त इति न वेदस्येत उपयोग इति शंकायां तत्रैतदर्थस्थापनाय लौकिका एव वैदिका इति प्रतिविधानमासीदिति ध्येयम्। ननु व्याकरणे भाषायामेव केचिच्छब्दाः व्यवस्थाप्यन्ते, ते कथं वैदिका इति । उच्यते । कर्णेभिरित्यादिवत् वेदमात्रविश्रान्ताः शब्दाः न लोके प्रयोज्या इति ज्ञापनाय कर्णैरिति भाषायामित्युक्तौ वेदे कर्णैरिति पदं नास्तीति न मन्तुं साम्प्रतम् । एवं वैदिका एव शब्दाः पूर्वापरपर्यालोचनायां तत्रार्थान्तरे प्रयुक्ततयानिश्चिताः लोके अर्थान्तरे कालक्रमेण नीताः सन्ति केचित् । ते भाषायामित्युक्तौ, तेष्ववर्थेषु ते भाषायां भवन्तीत्यर्थः । अर्थान्तरे वेदे प्रयुक्तत्वात् शब्दानां वैदिकत्वं न हन्यते । सन्तु वा केचन शब्दाः पृषोदरादिवत् कालक्रमेण किञ्चिदन्यथाभूता अपि लोके ; अथापि वैदिकशब्दविकारा एवेमे प्राचीनादरणवशादनुवर्तन्त इति । तत्रापि मूलभूतपदशोधनस्य कार्यतया वैदिकत्वमेव । अत आनुपूर्वीभेदोर्थभेदश्च संभाव्यताम् । शब्दैक्यं संप्रतिपत्तव्यम् । प्रकृतेः प्रत्ययस्य च पृथक्पृथक्वेदे उपलम्भे भाषायामन्यादृशस्तत्समाहारोऽपि स्यादिति लोके तथा प्रयोगस्य वेदेनानुमतत्वाद्वा वैदिकत्वम् ।

तदेवं लौकिकवैदिकैक्यं समर्थ्य लौकिकानां व्याकरणाद्यनुसारेण व्यक्तिपरत्वात् व्यक्तिरेवार्थ इत्याह । तत्रापीदं सूत्रमावर्तते—प्रयोगचोदनाभावात् अर्थैकत्वमविभागादिति । गामानयति गामानय, प्रजापतिः प्रजा असृजत पशुमालभेत इत्यादिप्रयोगाणां चोदनानाञ्च व्यक्तिविषये भावात् स एवार्थः, क्वचित् आकृतिविवक्षायामपि न तस्या अर्थत्वम् । अतएवार्थैकत्वम् । आकृतिप्रतीतिस्तु क्वचित् अविभागात् व्यक्तिसंबन्धात् स्यात् । स्थलभेदेनार्थविभागश्चायुक्तः ; अन्याय्यत्वादनेकशक्तिकल्पनस्येति । आकृतिमात्रपरत्वं व्युदसितुं हेत्वन्तरमाह अद्रव्यशब्दत्वादिति । अस्यापि न तदुक्तोऽर्थः । किं तु अद्रव्यं लिङ्गसंख्यादि । तद्वाचकशब्दसत्त्वात् तदर्थान्वयार्थं द्रव्यस्यापि वाच्यतया आकृतिपरत्वमयुक्तम् । अन्यथा, 'षड् देयाः द्वादश देयाः' इत्यादीनि निरर्थकानि स्युरिति । हेत्वन्तरञ्चाह अन्यदर्शनाच्चेति । यदि पशुरुपाकृतः पलायेत, अन्यं तद्वर्णं तद्वयसमालभेत इत्यादौ अन्यतदादिशब्दानामर्थवर्णनं पशुशब्दस्य जातिवाचित्वे न घटते, तज्जातीयादन्यो हि तर्हि गृह्येतेति ।

एवं प्राप्तेऽभिधीयते—आकृतिस्तु क्रियार्थत्वात् । यत् तावदुच्यते, न शब्दानामाकृतिवाचित्वम् । श्येनचितं चिन्वीतेत्यादौ श्येनपक्ष्ययोगात् श्येनाकृतिमात्रग्रहणेऽपि व्यक्तावेव प्रयोगभूम्ना व्याकरणवशाच्च व्यक्तावेव व्युत्पत्तिरिति । तत्रेदं वक्तव्यम्—'गमेर्डोः' इति गोशब्दव्युत्पत्त्या गमनकर्तृव्यक्तिपरत्वे गोजातीयभिन्नापि नरवानरादिः क्रयान्वयिनी स्यात् गां दद्यात् गवा क्रीणातीत्यादौ । पूर्वपक्षिसंमतमुख्यार्थग्रहणे वैदिकलौकिकसर्वक्रियाक्षोभोऽभिमतद्रव्यानिश्चयात् स्यात् । गमनकर्तृत्वांशाभावे गोरपि गोपदग्राह्यता न स्यात् । कर्तृत्वस्योपलक्षणत्वे व्यक्तिरूपविशेष्यमात्रार्थकत्वे चातिप्रसंगः परिच्छेदकाभावादर्थानिर्णयश्च स्यात् । अतः क्रियार्थमेवार्थपरिच्छेदकतयाऽवश्यमाकृतिरपेक्ष्यते । अतश्च

व्युत्पत्तिनिमित्ततया गमनक्रियादौ स्वीकृतेऽपि प्रयोगनियमपरिपालनार्थं प्रवृत्तिनिमित्ततया स्वीकर्तव्या भवत्याकृतिः । अत एव रूढिशक्तिरिष्यते । व्युत्पत्तिनिमित्तविरहितेपि वस्तुनि प्रयोगदर्शनात् । अतो व्युत्पत्तिबलेन पदानां पश्चात् कल्पितत्वस्य भवताप्यनंगीकारात् भूरिप्रयोगेणाकृतेरपि बोधनीयत्वात् गोशब्दादितो गमनादिरूपार्थस्य बोधे मानाभावाच्च धात्वर्थवैशिष्ट्यं न विवक्षणीयम् । अव्युत्पन्ना एव शब्दाः अर्थधारणानुकूलत्वाय व्युत्पत्तिकल्पनयाऽपि निरूप्यन्ते । क्वचित्, 'पद्मानि यस्याग्रसरोरुहाणी-' त्यादौ व्युत्पत्तेरावश्यकत्वात् क्वचिद्व्यङ्ग्यार्थपोषणादिहेतोर्व्युत्पत्तेरपि ग्रहणाय च तत्प्रदर्शनं सफलम् । तत्र विशेषणभूताकृतिमात्रविवक्षया श्येनचितमिति प्रयोगः । न पुनः सर्वथा शक्तिबलाप्रतीताया एवाकृतेः श्येनादविभागमात्रेण गङ्गाशब्देनानुपस्थिततीरग्रहणवत् ग्रहणम्, वैषम्यात् । अतो गोशब्दादेर्न गमनकर्तृत्वादि निमित्तम्; किं तु गोत्वादिकमेवेति ।

एवं पूर्वपक्षसिद्धान्तयोः स्थितौ मीमांसकोक्तप्रकारः सर्वथोपेक्ष्य एव । व्यक्तिशक्तिवादनिरासेन आकृतिमात्रशक्तिस्थापनं तच्चिकीर्षितम् । व्यक्तिशक्तिवादे एकव्यक्तिशक्तौ व्यक्त्यन्तरे प्रयोगायोगः, सर्वव्यक्तिशक्तौ आनन्त्यमितीदृशदोषोद्भावनं स्वकपोलकल्पितम् । सूत्रे तत्सूचकपदलेशस्याप्यभावात् । आकृतिं प्रवृत्तिनिमित्तीकृत्य तद्विशिष्टव्यक्तिसामान्यपरत्वे दूषणास्यानवसरः तार्किकैः प्रपञ्चित एव । प्रयोगबाहुल्यं व्याकरणं च सर्वथैवोपेक्ष्यानुभवविप्रकृष्टं लाघवविचारं को नामाद्रियेत । मीमांसकैरेव गवा क्रीणाति इति तृतीयाविभक्तिस्थले आकृतेर्द्रव्यपरिच्छेदद्वारा करणत्वेनान्वयेऽपि कर्मसंप्रदानापादानाधि-करणार्थकविभक्तिषु व्युक्तिपर्यन्तत्वविवक्षाया आवश्यकत्वमुक्तम् । परं तत् लक्षणया, न तु शक्त्येति तैरुच्यते । भूयसांन्यायः किमिति प्रस्मर्यते । न च कुत्रापि जैमिनिर्जातिशक्तिमाह । यत्तु (7-1-2) 'उत्पत्त्यर्थाविभागाद्वा सत्त्ववदैकधर्म्यं स्यात्' इति सूत्रे अङ्गानां सामान्यतो यागतदपूर्वार्थत्वम्, उत यत्किञ्चिदर्थत्वमिति विचारे सत्त्वदृष्टान्तकथनस्य व्याख्यानम्—गौर्न पदा स्प्रष्टव्य इत्यत्र गोत्वे स्पर्शनिषेध-संबन्धः; गोशब्दस्याकृतौ शक्तेरिति—तत् व्याख्यातृकल्पनमात्रम् । चतुर्थसूत्रे 'सत्त्वे लक्षणसंयोगात् सार्वत्रिकं प्रतीयेत' इत्यत्र प्रवृत्तिनिमित्तभूतलक्षणयोगात् सर्वसत्त्वग्रहणमिति गोत्वस्य लक्षणताया एवोक्तत्वात् । लक्षणसंयोगादित्यस्य व्यक्तिलक्षणाबलादिति व्याख्यानं तु कुत्सितम् । एवं "तेषामृक् यत्रार्थवशेन पादव्यवस्था", "गीतिषु सामाख्या" इत्यादिसूत्रात् अनेकव्यक्त्यर्थकत्वं पदस्यादुष्टमित्येव जैमिनिर्ज्ञापयतीति सुवचम् ।

अन्यदप्यवधेयम्—आकृतिशब्देन सूत्रेण जातिं तार्किकेष्टां गृह्णन्ति । तदयुक्तम्; तस्या आकृतिव्यङ्ग्यत्वात् आकृतिशब्दार्थत्वाभावात्; श्येनचितमित्युदाहरणेऽनन्वयाच्च । न हि तत्र श्येनत्व-जातिरस्ति । आकृतौ सत्यां तद्व्यङ्ग्या जातिरपि स्यादेवेति चेत्—तर्हि तदाश्रयो व्यक्तिरपि स्यादेव । विकलाकृतिसद्भावात् न तदुभयमपीति तु तत्त्वम् । बादरायणवत् जैमिनिरपि आकृतिव्यतिरिक्तां नित्यामनेकानुगतां तार्किकजातिं नेच्छतीति आकृतिपदप्रयोगादेव ज्ञायते । आकृतेरपि व्यक्तिभेदेन भेदेऽपि अर्थत्वं स्थापयन् आनन्त्यादिदोषं नाद्रियत इत्यपि ध्येयम् । शक्तपदव्यक्त्यनेकत्वेऽपि शक्त्यै-

यवत् शक्यव्यक्त्यनेकत्वेऽपि शक्त्यैक्यं सूपपादमिति न्यायकुसुमाञ्जल्युक्तमपि घटव्यम् । शक्तिः सविषयकपदार्थ इह । लोके ज्ञानेच्छादेः सविषयकस्याश्रयभेदेन व्यक्तिभेदेऽपि विषयभेदेन भेदो न लक्ष्यते । एकैकज्ञानादेरनेकविषयकत्वस्य संप्रतिपन्नत्वात् । अतो विषयभूतव्यक्त्यनेकत्वे शक्त्यनेकत्वमिति वार्तम् । एवञ्च प्रथमसिद्धान्तसूत्रं नाकृतिमात्रे शक्तिस्थापकमिति स्थितम् ।

अनन्तरसूत्रम्—'न क्रिया स्यादिति चेदर्थान्तरे विधानं न द्रव्यमिति चेत' इति । अस्यैवमर्थं वर्णयन्ति—जातिमात्रशक्तिवादे व्रीहीन् प्रोक्षतीत्यादौ प्रोक्षणादिक्रियासंबन्धो व्रीहित्वादौ अशक्यः, अन्यं तद्वर्णे पशुमित्यत्रार्थान्तरमिष्टं न गृह्येत, षड् देया इत्यादौ द्रव्ये संख्यान्वयो न सिद्ध्येदिति चेदिति । एवं व्याख्याने सूत्रमध्यगतम् इति चेदिति पदद्वयं व्यर्थम् । अतोऽयमर्थः—श्येनचितमित्यादौ पक्षिव्यक्तौ न क्रियायोग इति हेतोः पक्षिव्यतिरिक्ते आकृतिरूपार्थान्तरे विधानं चेन्मन्यते, तथैव आकृतिमात्रमर्थमिष्ट्वा न द्रव्यं वाच्यतयेष्यताम्, प्रोक्षतीत्यादावाकृतौ क्रियानन्वयादर्थान्तरे द्रव्येऽन्वयकल्पनमित्यस्तु इति चेदिति पूर्वपक्षः । तत्रोत्तरम्—तदर्थत्वात् प्रयोगस्याविभाग इति । सर्वत्र व्यक्तिग्रहणार्थत्वात् प्रयोगस्य व्याकरणादिसिद्धार्थत्यागायोगात् आकृतिव्यक्त्योरविभागात् विशिष्टमेव शब्देनोच्यते, यथा चक्षुषा प्रमाणेन विशिष्टमेव ज्ञाप्यते ; न तत्र वैषम्यकल्पने किञ्चित् प्रमाणम्—एवमिति । तदेवं विशिष्टपरत्वमाकृत्यधिकरणार्थः । व्युत्पत्तिनिमित्तमुपेक्ष्य प्रवृत्तिनिमित्ततया आकृतिस्वीकरणमत्र चिकीर्षितम् । यद्यपि आकृतिरवयवसंस्थानमिति सर्वत्र दुर्वचम्—अथाप्यसंभवस्थलेऽन्यो धर्मः । तदुक्तं श्रीभाष्ये, आकृतिः संस्थानम् संस्थानं नाम स्वासाधारणो धर्म इति यथावस्तु संस्थानं वेदितव्यमिति । एवं लोकव्युत्पत्तिं जैमिनिस्थापितामादृत्य वेदान्तव्युत्पत्तिप्रदर्शनेन शेषपूरणं बादरायणश्चकार शास्त्रदृष्ट्या तूपदेश इत्यादौ । जैमिनिरपि द्रव्यपरत्वमेव मन्यत इति साक्षादप्यविरोधं जैमिनिरित्यादौ च ज्ञायते । यूपाहवनीयादिशब्दानामपि न संस्कारमात्रवाचित्वम् संस्काराणामपि भिन्नतयाऽनेकत्वाविशेषात् । 'यूपस्य स्वरुं करोति' 'तत्र यः प्रथमः शकलः परापतेत् स स्वरुः', मूलतः शाखां परिवास्योपवेषं करोति (4-2-1, 2) इत्यादौ स्वरु–उपवेषादिशब्दानां यूपकाष्ठ–वत्सापाकरणशाखांमूलादिद्रव्यविशेषपरत्वमेव स्वरसतोऽवगम्यते ।

आख्यातस्याकृत्यधिकरणन्यायेन कृतावेव शक्तिः न तु कर्तरीत्युक्तमप्ययुक्तम् ; कृतीनामप्यानन्त्यात् शक्त्यानन्त्यप्रसंगात् । कृतित्वेन सर्वकृतिग्रहणे न दोष इति चेत्—तुल्यं गवादावपि । विशेषणग्रहाभावे विशिष्टग्रहो न भवतीति विशेषणे शक्तिरिष्यत इति चेत्—न ; विशिष्टग्रहे विशेषणग्रहणं कारणमित्यनंगीकारात् । विशिष्टग्रहो नियमेन विशेषणविषयक एव भवतीत्येतावदेवानुभविकम् । अतः प्रत्यक्षं शाब्दमर्थज्ञानञ्च विशिष्टविषयकमेव । अन्यथा गवादिनाम्नां गोत्वादिमात्रार्थकत्वे उद्भिच्चित्राग्निहोत्र-श्येनादिनामधेयानामपि तत्तद्यागविशेषगतजातिविशेषनामधेयत्वमेव स्यात् । तस्य जातिविशेषस्यैव मुख्यार्थस्य प्रमाणबलात् स्वर्गादिकरणत्वं भवेत् । एवञ्च यागादौ नष्टेऽपि कृतिसाधितयागादिव्यक्त्युपलक्षितनित्यभूत-जातित एव कालान्तरभाविफलसंभवे कृतमपूर्वेणेति महदनिष्टं मीमांसकम्मन्यानाम् । एवं तावत् सूत्रस्वरसार्थः प्रादर्शि । इतोऽपि स्वरसेऽर्थान्तरे संभवति अस्योपेक्ष्यत्वेऽपि आकृतिमात्रशक्तिपक्षस्तु

जैमिनिमतत्वेन न वक्तुं शक्यते इत्यलम्। कथं तर्हि अरुणाधिकरणे आरुण्यरूपगुणमात्रस्य क्रियान्वयमभिसंधाय पूर्वोत्तरपक्षौ वर्तयामासेति चेत्—तथावर्तनं व्याख्यातृचेष्टितम्, जैमिनिस्तु विशिष्टपरमाकलय्यैव प्रावर्तयदिति भगवता भाष्यकृता आनन्दमयाधिकरणे सति प्रसंगे सम्यगुपपादितमेवेति।

किञ्च मीमांसकमते सोमेनयजेत, व्रीहिभिर्यजेतेत्यादावपि सोमादिशब्दस्य जातिवाचितया ततक्रियान्वयायोग इत्याशंक्य परिहारार्थमप्येकमधिकरणमपेक्षितम्। अगत्या द्रव्यपरिच्छेदद्वाराऽन्वय इति लोकव्युत्पत्तिकालिकपरिश्रमादेव भोत्स्यत इति चेत्—तथेहापि भोत्स्यत इति गुणवाचित्वप्रयुक्तानन्वयशंकाया नैवावकाशः। किञ्च चतुर्थद्वितीये (25) तथा द्रव्ये गुणश्रुतिरुत्पत्तिसंयोगादिति सूत्रे, 'श्वेतं पशुमालभेत', 'शुक्लानां चरुम्' इत्यादौ गुणविषयनियमविधिं वदता द्रव्ये गुणश्रुतिरिति पदप्रयोगेण द्रव्ये गुणान्वयस्य श्रौतत्वमलाक्षणिकत्वमेव ज्ञाप्यते। अत्र पृथगधिकरणत्वतदभावविषयमतिभेदस्तावदास्ताम्। पूर्वं कर्तृदेशकालानां नियमविधिरुक्तः। तस्य सर्वकारकविषयकत्वं वर्णयन्ति। तत्र सामान्यतः क्रियायाः कर्तृदेशकालाक्षेपकत्वेऽपि समेदर्शपूर्णमासाभ्यामित्येवं समादिदेशनियमस्यासिद्ध्या तन्नित्यवच्छ्रवणबलात् तन्नियमः स्वीकार्य इत्युक्तम्। तद्वदेवायं गुणविचारोऽपि। परं तु द्रव्ये इति पदेनेदं ज्ञाप्यते, यत्र एकां गामित्यादौ द्रव्योद्देशेन गुणविधानमेव वाक्यकृत्यम्। तत्र गुणनियमस्यावश्यकत्वेऽपि यत्र द्रव्यस्यापि विधानमत्रैव भवति, तत्र तावत्येव तात्पर्यमिति गुणस्य संभावितत्वेनानूद्यमानत्वमस्त्विति शंकायाम् विधिवाक्यश्रुतत्वात् गुणस्य, अर्थवादश्रुतत्वाभावेन पाक्षिकत्वकल्पनायोगात् गुणविशिष्टद्रव्यविधानेन गुणान्वयेपि नियम इति। यदि च गुणमात्रं शब्दार्थः स्यात्। तर्हि तस्यैव प्रथमं क्रियान्वयात् अङ्गत्वेन श्रुतस्य पश्चादुपेक्षणायोगात् उपेक्षारूपपूर्वपक्षस्यैवानवसरः। गुणविशिष्टद्रव्यपरत्वे च गुणांशे विधिसंक्रमाभावशंका भवितुमर्हति। उत्पत्तिसंयोगादित्यस्य विधेयविशेषणत्वादित्यर्थः; न तु कर्मविधिवाक्यगतत्वादितीत्यलम्।

अथात्रापूर्वस्य प्रसक्तत्वात् तद्विचारस्य द्वितीयारम्भ एव स्थितत्वेनानन्तर्याच्च तदपि विचार्यते। "चोदना पुनरारम्भः" इति सूत्रम्। तत्र चोदनेत्यपूर्वं ब्रूम इति शाबरं भाष्यम्। क्षणभङ्गित्वात् क्रियाणाम्, तासां स्थितानामेव सौक्ष्म्यादिनाऽनुपलम्भ इति कल्पनायाः प्रत्यक्षविरुद्धत्वाच्च सर्वगतात्मस्थतया कर्मजन्यतया चापूर्वकल्पनमेव ज्याय इति च वर्णितम्। सूत्रकारस्तावत् अपूर्वशब्दं 'अपि वा नामधेयं स्यात् यदुत्पत्तावपूर्वम्' इत्यादौ मानान्तराज्ञातपूर्वे विधेये प्रायुङ्क्त, यथा बादरायणः, 'कार्याख्यानादपूर्वम्' इति। चोदनाशब्दस्य पुरुषगतादृष्टपरत्वं कथमिति चिन्तायां विप्रकर्षेणापि संबन्धो दुर्ग्रह इव। अत एव लाभमार्गमप्रदर्श्य अपूर्वं ब्रूम इति गम्भीरमुक्तं शाबरे। एतदपेक्ष्य आरम्भ इत्यपूर्वं ब्रूम इत्युच्यते चेत्, युज्यते। अनेन ज्ञायते; क्षणभङ्गिकर्मणः कथं फलमिति प्रश्नशमनं चोदनाशब्देन प्राञ्चः कृतवन्त इति। इदमेव भाष्यमवलम्ब्य नियोगोऽपूर्वमित्युच्यते। नूनं नियोगातिरिक्तमपूर्वं नापेक्षितमिति प्रारब्धो वादः कर्मजन्यस्य कस्यचिदपूर्वस्य नियोगत्व-लिङर्थत्वकल्पनयाऽन्यथा परिणमितः प्राभाकरैः। तथाचापूर्वमित्यात्मगतमदृष्टं किमपि नास्ति; यागादेर्नष्टत्वेऽपि तदुपलक्षिता तदुत्तरत्वविशिष्टा यागादिप्रेरणैवापौरुषेयवाक्यीया

नित्या फलं जनयिष्यतीति जैमिनिर्मेने । यथा यागोपलक्षितः कालो यज्वा वा फलहेतुरिति न्यायकुसुमाञ्जलिदर्शितमेकं मतम्, तथैतदिति । इदमेव धर्मं जैमिनिरतएवेत्यत्र शारीरके निगूढमिव । बादरायणस्तु यागप्रवृत्तिहेतुभूतां प्रवर्तनाख्यां चोदनां फलहेतुत्वेनानिच्छन् यथाश्रुतियागादिजन्यं प्रीतिविशेषं तथात्वेनाह । सोपि नियोगविशेष एव, अयं कर्ता फलमिदंलभतामिति संकल्परूप इति । एवञ्च प्रवर्तनाया एव स्थिरायाः आरम्भत्वं फलहेतुत्वं'चोदनापुनरारम्भ'इति विवक्षितं स्यात् जैमिनिना । अस्तु वा, चोदनेति क्रियायाः प्रवर्तकं वाक्यमाहुरिति शाबरभाष्यात् वाक्यमेव नित्यं धर्मोपलक्षितं फलहेतुरिति ; कृतमपूर्वेण । तदुपलक्षितत्वं नाम तद्धर्मतद्ध्वंसान्यतरकालिकत्वम् । यद्यपूर्वरूपं द्वारं जैमिन्याशयितं स्यात, तर्हि बादरायणः फलाधिकरणे फलमत इति धर्मजन्यप्रीतिमत्परमपुरुषद्वारस्थाने तदिष्टमपूर्वमेव दर्शयितुम् अपूर्वं जैमिनिरत एवेति सूत्रयेत् । धर्मशब्दस्यापूर्ववाचित्वं यद्यपि तार्किकमते, न तु मीमांसकमते । न च चोदनालक्षणोऽर्थोधर्म इति सूत्रस्य विधिवाक्येन वाच्यतयाऽन्यथा वा ज्ञापितं कर्मसाध्यत्वादर्थभूतमपूर्वं धर्म इत्येवार्थोऽस्त्विति वाच्यम्—अपसिद्धान्तादित्यलम् । अतो धर्मं जैमिनिरित्येव सूत्रणात् धर्मोत्पाद्यं किञ्चिद्विनैव फलोत्पत्तिः जैमिनीष्टेति विज्ञायते ।

देवताप्रीतिविषये जैमिन्याशयः कीदृश इति चेत्—उच्यते । देवताप्रीतिद्वारा चेत् फलं भवेत्, भवति देवतायाः प्राधान्यमिति यागे द्रव्यप्रयुक्तसादृश्यं देवताप्रयुक्तसादृश्यात् प्रबलमिति अष्टमप्रथमे सिद्धान्ते कथितं न संगच्छत इति केचिन्मन्येरन्—तन्न युक्तम् । न ह्यत्र देवतापलापेन द्रव्यसादृश्यप्राबल्यं विवक्षितम्, किंतु सत्या एव तस्या दुर्बलत्वमात्रम् । तथाहि—ऐन्द्राग्नमेकादशकपालं निर्वपेत् इति, आग्नेयं पय इति च श्रूयते । तत्र किं देवतैक्यात् ऐन्द्रपुरोडाशयागे ऐन्द्रसान्नाय्यविध्यन्तः, उत द्रव्यसारूप्यात् पुरोडाशयागविध्यन्त इति विशये देवताप्रयुक्तं साम्यं बलीय इति पूर्वपक्षः—तत्र हेतुः पुरोडाशवाचकपदापेक्षया ऐन्द्रमिति देवतावाचिनः पदस्य प्रथमे श्रवणमिति शाबरे उक्तम् । एवं तर्हि यदि तत्पदं पश्चात्, तत्र न शंकेति स्यात् । देवतोद्देश्यकद्रव्यत्यागरूपे यागे देवतानिर्देशः प्रथममिति तत् कारणमित्युत्प्रेक्षान्तरम् । सर्वमिदं विहाय देवताया आराध्यतया प्राधान्यात् तत्कृतं प्राबल्यं ग्राह्यमिति युज्यते । तत्र समाधिः—'विप्रतिपत्तौ हविषा नियम्येत कर्मणस्तदुपाख्यत्वात्' इति । हविर्देवतयोर्मध्ये कतरस्यादर इति विप्रतिपत्तौ सत्यां हविरादाय नियमः कार्यः । कर्मणो हविरुपाख्यत्वात्—हविर्मूलं दृश्यमानत्वात् । "हविस्त्यज्यमानं दृश्यते" इति च शाबरम् । प्रत्यक्षं सादृश्यं परोक्षात् सादृश्यात् प्रबलमित्युक्तं भवति । देवतोद्देश्यकद्रव्यत्यागे त्यागरूपप्रधानांशे द्रव्यान्वयः, देवतायास्तु तद्विशेषणे उद्देशांशे इति विप्रकर्षश्च । तदुक्तमनन्तरसूत्रेण, तेन च कर्मसंयोगादिति । किञ्च ऐन्द्रम् आग्नेयमित्यादौ देवता उपसर्जनतया प्रतीयते, द्रव्यं विशेष्यतया । द्रव्यस्य क्रियान्वयः साक्षात् । अतोपि तत्सादृश्यग्रहणम् । तदुच्यते सूत्रान्तरेण-गुणत्वेन देवताश्रुतिरिति । यत् पुनरुक्तम् आराध्यतया देवतायाः प्राबल्यमिति – तत्रापीदमेवोत्तरम्—गुणत्वेन देवताश्रुतिरिति । देवताया अतिथिवैलक्षण्यस्य वक्ष्यमाणत्वात् देवताया यागं प्रति अङ्गत्वेनान्वयात् द्रव्यदेवतयोर्द्वयो-

रप्यङ्गत्वाविशेषात् अन्तरङ्गद्रव्यघटितसादृश्यमेव ग्राह्यमिति । राजपुरुषमानयेत्यादौ राज्ञि आर्थप्राधान्ये सत्यपि कार्यान्वयः पुरुष एव ; तद्वत् द्रव्यप्राबल्यमिति च शाबरोक्तम् । अतो देवताया आराध्यताप्रयुक्तप्राधान्येऽपि द्रव्यप्राबल्यमूलातिदेशप्राप्तेतिकर्तव्यताकयागाराध्यत्वाय देवतासादृश्यत्यागः । वस्तुतो द्रव्यघटितसादृश्यग्रहणे सत्येव संनिपत्योपकारकावहननादीनामन्वयौचित्यम् । प्रथमसूत्रे कर्मणस्तदुपाख्यत्वादित्यत्रेदमुक्तं मन्तव्यम् । संनिपत्योपकारककर्मकलापसंस्कृतेनैव द्रव्येण हविर्निष्पद्यमानं दृश्यते । तथाविधेनैव हविषा देवता भवत्याराधनीया । तत्र हविरैक्यप्रयुक्तसादृश्ये स्वीकृते सर्वविध्यन्तातिदेशौचित्यमिति । अतो न देवतापलापः । अपिचाङ्गानामेवातिदेशः, न फलादेः । अतोऽतिदेशविषये गुणत्वाकारपुरस्करणं युक्तमिति देवतारूपगुणापेक्षया द्रव्यरूपगुणस्यान्तरङ्गत्वादिना प्राबल्यमिति ।

यदपि सप्तमे (7-1-3) 'चोदनाशेषभावाद्वा तद्भेदात् व्यवतिष्ठेरन् उत्पत्तेर्गुणभूतत्वात्' इति सूत्रे शाबरे चोदनाशब्देनापूर्वग्रहणायोपपादनम्—दर्शपूर्णमासाभ्यां कुर्यादिति कार्यं यज्यतिरिक्तं प्रतीयते, तच्च न फलम्, तस्य यागासाध्यत्वात् । विनष्टे हि यजौ तद्भवति । अतोऽपूर्वमेव क्रियते इति तदेव कार्यं चोदनेति—तत्रोच्यते—नूनमीदृशान्येव शाबरवाक्यानि नियोगाख्यापूर्वस्य लिङ्वाच्यत्ववादिनः प्राभाकरस्याधारभूतानि । प्रकृतपूर्वपक्षस्तु तावता न भवति । यजिधातोः यागत्वेन सर्वपरत्वात् सर्वयागार्थः प्रयाजाद्यङ्गकलापः स्यादिति पूर्वपक्षे अपूर्वार्थत्ववर्णनेन कः परिहारः ; अपूर्वत्वेन सर्वयागापूर्वग्रहणे तदाशंकातादवस्थ्यात् । अतोऽपूर्वं दूरीकृत्य, तत्र तत्र श्रूयमाणस्य लिङादेर्भिन्नभिन्नचोदनारूपप्रेरणापरत्वस्य निर्विवादत्वात् तत्प्रेरणान्वितेन यजिना तच्छेषभूतप्रकृतयागस्यैवोपस्थापनात् । अनुवादस्य सति संभवे संनिहितगामित्वात् व्यक्तिवचनानां संनिहितगामित्वमिति न्यायाच्च सर्वयागग्रहणायोगात् प्रयाजादेर्नियन्त्रणमित्येव सूत्राशयः । अतो न चोदनापदस्य कार्यपरतया कार्यत्वमुखेनापूर्वपरत्वमपि । अपूर्वस्य कार्यत्वं स्वशेषेण दूषितं श्रीभाष्यजिज्ञासाधिकरणान्ते, ततः प्रागेव वेदार्थसंग्रहे च । लिङर्थश्च न प्राभाकरोक्तं भाट्टोक्तं वा, किंतु कृतिसाध्यत्वमित्यपि तत्रैव स्थापितम् । अतो लिङ्निष्ठा नित्या काचिच्चोदना शब्दभावनेत्यपि निर्मूलभावनामात्रम् ।

एवञ्चेत् देवताप्रीतेः फलहेतुत्वसंभवात् कथं नवमे देवताया अतिथिवैषम्यवर्णनेनानाराध्यत्वं जैमिनिराहेति चेत्-न ; तत्रातिथिवैषम्यप्रदर्शनेऽप्यनाराध्यत्वस्याकथनात् । तानि च सूत्राणि तत्त्वटीकायां श्रीदेशिकचरणैरेव व्याख्यातानीति नात्र विस्तरस्यावसरः ।

तदेवात्र तदभिप्रायं परिगृह्य मुखान्तरेण संगृह्णीमः—पूर्वं फलदेवतयोश्चेत्यधिकरणे फलप्रतिपादकस्य अगन्म सुवरिति मन्त्रस्य, देवताप्रतिपादकस्य च मन्त्रस्य फलदेवतार्थत्वं न तत्तत्स्थलनिर्दिष्टतत्तत्फलदेवतात्वाकारेण, किं तर्हि प्रकृतकर्मसंबन्धिफलत्वेन कर्मसंबन्धिदेवतात्वेन च । अतो विकृतौ फलान्तरे देवतान्तरे च कर्मसंबन्धिनि यथायथमूहो मन्त्रे कार्य इति निर्णीतम् । तत्र फलस्य कर्मसंबन्धः तत्साध्यत्वरूप इति सुनिश्चितम् । देवतायाः कर्मसंबन्धः किं फलवदेव प्राधान्यरूपः उत तत्साधनत्वरूप इति विशये-द्रव्यस्य तद्दानरूपयागस्य च देवता किं प्रयोजिका उत नेति विचारः

क्रियते । तत्र पूर्वपक्षसूत्राणि त्रीणि । 'देवता वा प्रयोजयेदतिथिवत् भोजनस्य तदर्थत्वात्' (9-1-6) इति प्रथमम् । समर्प्यमाणहविरपेक्षयाऽप्यधिकेष्टत्वं संप्रदानत्वाद् देवतायाः संमन्तव्यम् । हविश्च तच्छेषभूतमिति सैव प्रयोजिका । अतिथिवत्; अतिथिप्रीतिमुद्दिश्य भोज्यदानात् अतिथिरेव हि तत्र प्रयोजकः । अस्मद्द्रव्यं प्रति अस्वामिभूतोऽप्यतिथिः प्रयोजको यदि, सुतरां देवतायाः प्रयोजकत्वम्, तस्याः द्रव्यस्वामित्वस्यापि सद्भावादिति वक्तुमनन्तरसूत्रम् आर्थपत्याच्चेति । नेदं सूत्रं सामान्यतो देवलोकस्थद्रव्यस्वामित्वसाधकम्; किं तु यजमानमनुजद्रव्यस्वामित्वस्यापि । तत् अर्थसिद्धम् । ननु परिपूर्णायाः देवतायाः किमनेन द्रव्येण ! किञ्च दत्तेऽपि द्रव्ये मदीयमेव मह्यमर्पितमिति कृत्वा कदाचिदुपेक्षेतापि इत्यत्राह 'ततश्च तेन संबन्ध' इति । फलेन पुंसः संबन्धः तत एव—देवतात एव भवति ।

अयं भावः—प्रकृतितः करग्राही पार्थिव इव देवता प्रजाया हित एव व्याप्रियते । कर्म द्विविधम्, नित्यं काम्यञ्च । तत्र नित्ये कर्मणि द्रव्यदानं स्वरूपप्राप्तं मन्वानाऽपि देवता काम्यस्य अवश्यकार्यत्वाभावात् तत्र नराणां स्वांशदानार्थप्रवृत्तिमभिलक्ष्य करप्रदानरूपावश्यकार्यातिरेकेण प्रजया प्रकारान्तरेण क्रियमाणेन पुरस्कारेण पार्थिव इव विशिष्य तुष्यतीति ततः फलं भवतीति । तस्मात् देवता द्रव्यस्य प्रयोजिकेति पूर्वः पक्षः । अत्राह—अपिवा शब्दपूर्वत्वात् यज्ञकर्म प्रधानं स्यात् गुणत्वे देवताश्रुतिरिति । ज्योतिष्टोमेन यजेत स्वर्गकाम इत्यादौ तृतीयया यागस्यैव फलसाधनत्वावगमात् प्राधान्याप्राधान्यनिर्णयस्य शब्दाधीनत्वात् सोमेनयजेतेत्येवं यागाद्युद्देशेन द्रव्यविधानात् द्रव्यस्य यज्ञ एव प्रयोजकः; यज्ञस्य च फलम्, नित्यस्थले तत्र निमित्तञ्च प्रयोजकम् । ननु यज देवपूजायामिति पूजोद्देश्यत्वं देवताया गम्यते । उच्यते । स्वर्गोद्देशेनान्विते द्रव्यमिव देवताऽपि तन्निष्पादकतया आग्नेयमित्यादौ गुणत्वेनैवान्वेतीति न देवतायाः प्रयोजकत्वसंभवः । गोदानादौ कर्तव्येऽध्यवसिते तदुचितशास्त्रसंमतसंप्रदानसंग्रहवत् कर्तव्यकर्मार्थे यथाशास्त्रं देवतासंग्रहः । न पुनरस्मदिष्टां देवतामुद्दिश्य वा देवतेष्टमनुरुध्य वाऽस्माभिः कर्म परिगृह्यत इति ।

अत एवातिथिदृष्टान्तो विषम इत्याह "अतिथौ तत्प्रधानत्वमभावः कर्मणि स्यात् तस्य प्रतिविधानत्वात्" इति । दूरादागतं बुभुक्षापरीतमतिथिमभिलक्ष्य गृहं प्रविष्टम्, उपचरितुं त्वरमाणाः तदभिकांक्षितमनुबुध्य यथायथं परिचरितुं प्रवर्तामहे । यद्यत् अतिथये रोचते, तत् कर्तव्यम्, यत् तस्मै न रोचते, न तत् बलात् कारयितव्यम् । इह तु देवताकांक्षामप्रतीक्ष्य, यत् अस्मद्वशे स्थितं द्रव्यं चरुः पुरोडाशो वा पयो यवागूर्वा तत्प्रतिनिधिर्वा, तद् ग्राहयन्तः स्वतस्तामाहूयार्पयामः । तस्मादातिथ्ये कर्मणः प्रयोजकत्वं नास्ति । तत्र कर्म अतिथ्यागमप्रतिविधानरूपमिति । अत्र सूत्रे प्रतिविधानत्वादित्येतत्स्थाने प्रीतिप्रधानत्वादिति शाबरादौ पाठो लक्ष्यते । शाबरभाष्यं तु प्रीतिप्रधानत्वादिति पाठं स्थापयतीति दुर्निर्णयम् 'आतिथ्ये हि तत्प्रीतिर्विधीयते', 'अभावः प्रीतिविधानस्य' इति पठ्यते । प्रधानपदानुगुणमभाषित्वा विधानपदप्रयोगात् विधानपदघटितमेव सूत्रमभिमतं स्यात् । प्रीतिशब्दस्थाने प्रतिशब्दो भाष्ये सुयोजः । नूनं देवताप्रीतिविचारस्यापि क्रियमाणत्वात् तदनुरोधेन प्रीतिप्रधानेति

पाठविपर्यासः पाश्चात्य इति । अतस्तत्त्वटीकानुरोधी प्रतिविधानशब्द आदर्तव्यः । प्रतिविधानपदप्रयोगो जैमिनेरन्यत्रापि । प्रीतिप्रधानत्वादित्येव पाठेऽपि तत्रातिथिप्रीतिरेवोद्देश्या, इह तु कर्म तत्फलं वेति वैलक्षण्यं भाव्यम् । तावता देवताविग्रह-तदाराधन-तत्प्रीत्यादेर्नापलापः ; किं तु तत्प्रीतेरातिथ्य इव प्राधान्याभावमात्रमुच्यते । न हि देवता वाञ्छतीति यागे विहितोपेक्षया मन्त्रद्रव्यादीनि अन्यानि अस्माभिः स्वीकर्तुं शक्यन्ते । एवं तावत् प्राच्योक्तमेव मुखान्तरेण सूत्राक्षरार्थशोधनेन विशदीकृतम् । देवताप्रीतिवि ग्रहाद्यपलापसाधकं किमत्र सूत्रेषु लक्ष्यते, येन जैमिनेर्धर्मनास्तिकत्वं शंक्येत । तदाहुस्तत्त्वटीकायाम्—"सूत्रेषु तावदेतेषु पूर्वपश्चिमपक्षयोः । देवताविग्रहादेर्न प्रतिक्षेप्यत्वसूचनम्" इति ।

यदेवं सूचनेऽप्यसति शाबरे देवताविग्रहादिनिराकरणम्, यच्च तदनुयायिनां वर्णनम्, "विग्रहो हविरादानं युगपत् कर्मसंनिधिः । प्रीतिः फलप्रदानञ्च देवतानां न विद्यते" इति—तत् सर्वमभिसंधायोक्तं भगवता भाष्यकृता वेदार्थसंग्रहे, "अश्रुतवेदान्तानां कर्मण्यश्रद्धा मा भूदिति देवताधिकरणेऽतिवादाः कृताः" इति । तस्मात् यथा कर्तुरात्मनः, "फलञ्च पुरुषार्थत्वात्" इति सूत्रोक्तरीत्या भोक्तृत्वावस्थया प्राधान्येऽपि प्रथमं कर्तृत्वावस्थया कर्मशेषत्वम्, यथा च फलस्वर्गादेः कर्मसाध्यतया प्राधान्येऽपि अगन्मसुवरिति मन्त्रप्रकाश्यत्वाकारेण कर्मप्रोत्साहकरत्वादिना शेषत्वम्, तथा देवतायाः आराध्यत्वफलप्रदत्वाकारेण प्राधान्येऽपि यागं प्रति रूपतया तन्निर्वर्तकत्वेन तच्छेषत्वं निर्बाधमिति ।

एवं देवतायां प्रयोजकत्वनिरसनस्य किं फलम्, यदि विग्रहतत्प्रीत्यादि न निरस्यते इति चेत्—इदमेव, यत् वेदार्थसंग्रहे भंग्या सूचितम् । तदुक्तं तत्त्वटीकायाम्—

**अनिर्धारितवास्तवप्राधान्यानामपि कर्मश्रद्धासंवर्धनमिति ।**

अयमाशयः—देवताप्राधान्ये द्रव्यसादृश्यबलीयस्त्वप्रयुक्तातिदेशस्याष्टमोक्तस्य भंगः स्यादिति, तथा देवतापदमन्यदूहितव्यमिति न स्यात् अपूर्वप्रयुक्तत्वाभावादिति च तत्तदुक्तं प्रयोजनवर्णनं न क्षोदक्षमम् ; आराध्यत्वफलप्रदत्वादिना सत्यपि प्राधान्ये शाब्दाप्राधान्यादेरुक्तरीत्या वर्णनेनैव तद्दोषपरिहारात् तदर्थं विग्रहापलापापूर्वस्वीकारादेरनावश्यकत्वात् । उक्तरीत्या देवताया गुणभूततया अतिथिवैलक्षण्यात् देवतास्वाच्छन्द्याभावात् तन्नियोगादिकल्पनया द्रव्येतिकर्तव्यताद्यन्यथाकरणं न संभावनीयम् । अत एव दीयमानपिण्डग्रहणार्थं पितृदेवतया हस्ते प्रसार्यमाणेऽपि, 'भूमौ दत्तेन पिंडेन' इति वाक्यार्थलोपभिया भीष्मो भूमावेव पिण्डं निचिक्षेपेति प्रसिद्धिः । न तावता पित्राद्यपलापप्रसक्तिः ; प्रत्यक्षदृष्टेः । एवं द्रव्यादेस्तद्देवताप्रयुक्तत्वे विकृतौ तद्देवताविरहे तद्द्रव्यतद्देवत्यमन्त्रादेरतिदेशोऽपि न स्यात् । अन्यदपि विमृश्यन्—फलदेवतयोरिति पूर्वसूत्रे देवताविषयः स्पृष्टः । उपरि 'देवता वा' इति वाशब्दघटितसूत्रारम्भात् तदधिकरणनिवेश एव तस्याक्षेपस्य । एवञ्च अपिवेति समाधानसूत्रमपि तदन्तर्गतमेवेति तदधिकरणप्रयोजनमेवैतत्प्रयोजनम् । यदि देवताविषयं तत्राविचार्य वा, विचारेऽप्यधिकशंकया विचारयितुं वाऽधिकरणारम्भः—तदापि तत्प्रयोजनमेवैतत्प्रयोजनमिति ॥ तदत्र गुणत्वमपि वर्णितम् । तेनोक्तरीत्या सकलांगोपसंहारवत एव कर्मणः फलम् । शास्त्रप्रामाण्याच्च तत एव देवता-

प्रीतिः । परं तु स प्रीतिविचारो न जैमिनिना तदा मुख्यत्वेनामन्यत ; 'चोदना पुनरारम्भः' इति प्राक् सूत्रितत्वात् ।

देवताप्रीतेर्द्वारत्वमेव बादरायणोक्तं कस्मान्न जैमिनिराहेति चेत्—देवानामनित्यतया तद्विलये कथं कर्म फलिष्यतीति केचिन्मन्येरन् ; "स्तेगान् दंष्ट्राभ्यां मण्डूकान् जम्भ्येभिः" इत्यश्वमेधीय-मन्त्रादितः (स्तेगाः क्षुद्रजन्तुविशेषाः गोकर्णगा इति लोके प्रसिद्धा इति सायणीये) स्तेगमण्डूकादीनां तिरश्चामचेतनानाञ्चौषधिवनस्पतीनां होमेषु देवतात्वश्रवणात् त्यज्यमानहविरुद्देश्यत्वातिरिक्तमारध्यत्वादिकं न विवेकिविश्वसनीयम् । देवतानुद्देश्यकेषु दानोपवासकृच्छ्रादिषु देवता का प्रीयेत ? तत्र कः फलहेतुः । अतः सर्वानुगुण्येन चोदनाबलात् भवति फलमिति गूढहृदयः सामान्यमुपदिश्य जैमिनिर्व्यरंसीत् । व्यासाभि-संहितदेवताप्राधान्यस्य जैमिन्युपदर्शितद्रव्यसादृश्यप्राबल्य-अतिथिवैलक्षण्यादेश्च मिथो विरोधो नास्तीति सिद्धमेतावता । असति विरोधे क्वचित् ग्रन्थे (कणादसूत्रेऽपि) अदृष्ट-अपूर्वादिशब्दाः अदृश्यमानत्वाज्ज्ञात-पूर्वत्वाद्युपाधिना भगवदनुग्रहादिपरा एव वक्तुं शक्यन्ते । दानतपःप्रभृतिषु देवतानुद्देश्यकेष्वपि, श्रुतिः स्मृतिर्ममैवाज्ञेत्युक्तरीत्या भगवदाज्ञात्वस्याक्षततया तन्निग्रहानुग्रहरूपत्वमेव सर्वत्र पापपुण्ययोर्बादरायणः प्राह । तथा च द्रमिडभाष्यकारः "फलसंविभन्तस्या हि कर्मभिरात्मानं पिप्रीषन्ति । स प्रीतोऽलं फलयेति शास्त्रमर्यादा" इति । अत्र अलमिति पदेन अन्यादृशापूर्वकल्पन-देवतान्तरानित्यत्वप्रयुक्तफलविनाभाव-विमर्शादिसर्वव्युदसनमभिसंहितमिति ।

किञ्च 1-1-5 "औत्पत्तिकस्तु शब्दस्यार्थेन संबन्धः" इति सूत्रे. "अव्यतिरेकश्चार्थेऽनुपलब्धे तत् प्रमाणं बादरायणस्यानपेक्षत्वात्" इत्यनेन प्रमाणान्तरागोचरोऽर्थः औत्पत्तिकबोध्यबोधकभावाख्य-संबन्धरूपशक्तिशालिना वेदेन बोध्यमानः पुरुषबुद्धिमूलत्वादिप्रयुक्तदोषसंभावनायाः बाधस्य चाभावात् प्रामाणिक एव स्वीकार्यः ; तथोपदिष्टं बादरायणेनेति बादरायणपुरस्कारेण निरूपणमुपक्रममाणो जैमिनिः बादरायणपक्षादन्यं पक्षं मन्यत इति कथं कल्पनां सहेमहि । अतो मन्त्रार्थवादाद्यर्थं बादरायणवदेव सोऽपि स्वीचकारेत्यत्र न विशयलेशः । परं क्रियाशेषत्वं विना तेषां स्वातन्त्र्यं न स मेने, शासनाद्धि शास्त्रमिति । आदेशाभावेऽप्युपदेशोऽपि पर्याप्त इति बादरायणाशयः । सोऽप्यंशः तत्रैव सूचितः, "तस्य ज्ञानमुपदेशः" इति । उपदेशस्याप्यादेशपर्यवसानं जैमिनीष्टम् । अन्यत्र भागे तथात्वेऽपि उपनिषद्भागे उपदेशस्य स्वातन्त्र्यं बादरायणो मन्यते । स्वयं तत्राप्रवर्तमानो जैमिनिः स्वविचारणीये कर्मकाण्डे उपदेशानामादेशशेषत्वं बादरायणेष्टमेवेति स्वयं तथा तत्र न्यरूपयत् । औत्पत्तिकसूत्रादिवास्तवार्थादिकं सेश्वरमीमांसायां द्रष्टव्यम् ॥

॥ श्रीः ॥

## अथ भाष्यटीकोदाहृतकतिपयमीमांसाविषयाणां विवरणम्—

(पुट.) 6. 'छागो वा मन्त्रवर्णात्' । षष्ठाध्यायान्तिमाधिकरणे पशुचोदनायामित्यत्र विचारितम् । यत्रैकवाक्यता, तत्र संदिग्धेषु वाक्यशेषादिति न्यायेन सामान्यस्य विशेषे पर्यवसानं युक्तम् ।

अग्नीषोमीयं पशुमालभेतेति वाक्यं तु, 'छागस्य वपाया' इति मन्त्रनिरपेक्षमेव निस्संदेहार्थबोधहेतुरिति अविशेषात् सर्वस्यापि पशोर्यथालाभं द्रव्यत्वम्। छागमन्त्रस्तु छागप्रयोगे उपयुज्यते इत्याक्षेपः। पशुपदस्य सामान्यस्य छागरूपमन्त्रोक्तविशेषपर्यवसानेनाविरोधे संभवति छागमन्त्रपाक्षिकत्वं न युक्तम्। सति विशेषश्रवणे सामान्यं भिन्नवाक्यत्वेऽपि तद्विशेषे पर्यवस्यतीति सिद्धान्तः।

22. विरोधाधिकरणन्यायेति। श्रुतिमूलकतया स्मृतेः प्रामाण्यं प्रागुक्तम्। अथ-2-3-2 'विरोधे त्वनपेक्ष्यं स्यादसति ह्यनुमानम्' इति विरोधाधिकरणे श्रुतिविरोधे स्मृतिवचनमनादरणीयं स्यात्। मूलानपेक्षं श्रुतिवचनमेव प्रमाणं स्यात्। असत्येव श्रुतिविरोधे स्मृत्या श्रुतेरश्रूयमाणाया अनुमानं तन्मूलं स्मृतिप्रामाण्यं च भवतीत्युक्तम्।

28. ज्योतिष्टोमे पृष्ठाख्यस्तोत्रसाधनत्वेन बृहत् रथन्तरमिति सामनी विहिते। तत्र, 'रथन्तरे प्रस्तूयमाने संमीलयेत्, बृहति प्रस्तूयमाने समुद्रं मनसा ध्यायेत्' इति रथन्तरसामांगतया नेत्रसंमीलनं बृहत्सामांगतया च समुद्रध्यानं विहितम्। साम्नः पृष्ठस्तोत्रसाधनत्वाकारेणोद्देश्यत्वात् साधनत्वस्य सामद्वयेऽप्यविशिष्टत्वात् उभयत्राप्युभयं स्यात, न तु व्यवस्थेति पूर्वपक्षे—निर्देशबलात् तत्तत्सामासाधारणधर्म एवोद्देश्यतावच्छेदक इति व्यवस्थैवेत्युक्तम्। प्रकृते तु न स विषयो विवक्षितः; समुद्रध्यानस्य बृहत्सामांगत्वं कया विधयेति विचारे दृष्टद्वाराभावाददृष्टविधैव वक्तव्येत्येतावदेव।

29. सक्तुहोमवदिति। व्रीहीनवहन्ति, व्रीहीन् प्रोक्षतीत्यादाविव द्वितीयाश्रवणेऽपि द्वितीयायाः साध्यत्वरूपार्थस्य मुख्यत्वेऽपि, सक्तून् जुहोतीत्यादौ सक्तुकरणकहोमविधानमेव, संस्कार्यत्वे सक्तूनां भूतभाव्यन्यतरोपयोगस्य वाच्यत्वात् तदभावात्। अतः प्रयाजवत् प्रधानकर्मतेति 2-1-4 धर्ममात्रेत्वित्यधिकरणे स्थितम्।

30. विलम्बितधीहेतुत्वमिति। 3-3-7. 'श्रुतिलिङ्गवाक्यप्रकरणस्थानसमाख्यानां समवाये पारदौर्बल्यमर्थविप्रकर्षात्' इत्यत्र उत्तरोत्तरस्य दुर्बलत्वमुक्तम्। इमानि अङ्गत्वे प्रमाणानि। उत्तरोत्तरं पूर्वपूर्वप्रमाणकल्पनेनैवाङ्गताबोधकम्। अतो यावदुत्तरप्रमाणमङ्गताबोधं निर्वर्तयेत्, ततः प्रागेव पूर्वेण प्रमाणेनान्याङ्गताबोधस्य निर्वर्तितत्वात् आकांक्षाशमनादुत्तरमुपरमतीति।

33. सुवर्णं भार्यमिति। 3. 4., 12. 'अप्रकरणे तु' इत्यत्र, सुवर्णं हिरण्यं भार्यमित्यनारभ्याधीतवाक्ये विचारः। सक्तूनां भूतभाव्युपयोगायोगेनासंस्कार्यत्वेऽपि सुवर्णस्य धारणसंस्कार्यत्वसंभवात् तस्य च क्रतूपयुक्तहिरण्यरूपत्वे क्रत्वर्थत्वस्याक्षतत्वात् अव्यभिचरितक्रतुसंबन्धाभावेऽपि अदृष्टरूपसंस्कारस्यादृष्टार्थक्रतूपस्थापकत्वसंभवात् संस्कारकर्मतेत्याशंक्य, भार्यमिति श्रुतकर्मत्वस्य लौकिकं यत् क्रियाजन्यफलशालित्वरूपं कर्मत्वं तत्परतयैवोपपत्तेः हिरण्यपदस्य क्रतुप्रकरणावर्तिनः क्रतुसंबन्धिहिरण्यानुवादरूपत्वाज्ञानाच्च हिरण्यभरणं पुरुषार्थमेवेति निरूपितम्।

37. न स्वांगं स्वव्यवधायकमिति। प्रकरणं स्थानमिति प्रमाणद्वयेन सर्वाङ्गग्रहणोपपादनसिद्धमिदम्। तथा हि—फलवत्संनिधौ अफलं तदङ्गमित्युच्यते। यजेत स्वर्गकाम इति वाक्ये फलश्रवणात् तत् प्रधानम्। तत्संनिधौ फलमनिर्दिश्य विहितानि सर्वाणि तदङ्गानि। तत्राङ्गानां क्रमेण पाठे प्रथमपठितेनाङ्गेन द्वितीयादेर्व्यवहितत्वात द्वितीयतृतीयादिकं न स्यात् फलवद्यागाङ्गम्; भवतु पूर्वपूर्वं प्रति उत्तरोत्तरमङ्गमिति शंकायामुच्यते, न स्वांगं स्वव्यवधायकमिति। बहूनामङ्गानां वक्तव्यत्वे क्रमेणैव वक्तव्यतया अशोकवनिकान्यायेन किमपि पूर्वं गृह्यते। अतोऽविशेषात् सर्वेषां प्रधानाङ्गत्वमेव। अतः प्रथमाङ्गव्यवहितत्वात् द्वितीयं नांगमिति नेति। अन्योऽप्यर्थः। क्वचित् प्रधानं फलवद्विधाय तदङ्गे तदङ्गोपयुक्तद्रव्यसंपादनादि विधाय पश्चात् तदङ्गमुच्येत। तत्राङ्गस्य स्वांगद्रव्यादिना फलवत्प्रधाने व्यवधानं नास्तीति। लोकेपि भुजान्तरो हस्तः, हस्तान्तराऽङ्गुलिरिति हस्तस्य जीवात्माङ्गभूतभुजव्यवहितत्वे प्रतीतेऽपि न हस्तस्य जीवाङ्गत्वे विवादः, अवयवान्तरमुखेनावयवान्तरस्य कदाचित् प्रेर्यत्वेऽपि च साक्षादङ्गत्वमपीष्यत इत्यादि द्रष्टव्यम्।

37. आधानविधेरुत्तरक्रतुविधिपर्यन्तत्वं नेति। यजेत, जुहुयादित्यादिवाक्यैर्यागहोमाः स्वयं विहिताः। अग्नीनादधीतेति वाक्येनाग्न्युद्देशेनाऽऽधानं विहितम्। आधानजन्यातिशयविशिष्टाग्नीनां यागहोमाङ्गत्वं प्रामाणिकम्। अथापि आधानवाक्यस्याग्निसंपादनमात्रे विश्रान्तिः, न तस्य तत्तद्यागहोमविधानेपि तात्पर्यम्। तद्वत् अध्यापनविधिः स्वाध्यायप्राप्तौ विश्राम्यति। न त्वर्थज्ञानप्रेरणेऽपि, अन्यथा यागहोमप्रेरणेपि अध्ययनविधितात्पर्यं किमिति न कल्प्यत इति।

50. भूयसां स्यादिति। भूयसां स्यात् बलीयस्त्वमिति विचारसिद्धोंशः। सूत्रं तु (12-2-22) "विप्रतिषिद्धधर्मा(र्म)णां समवाये भूयसां स्यात् सधर्मत्वम्" इति। काम्येष्टिकाण्डे आग्नेयपुरोडाश-ऐन्द्रपुरोडाश-प्राजापत्य-अम्मधुदधिघृतधानाद्रव्ययागानां पशुकामानुष्ठेयत्वमुक्तम्। तत्राग्नेयः साधारणः। ऐन्द्रदधिनी अमावास्याविकारौ। अम्मधुदधिघृतानि पौर्णमासीविकाराः। तत्र सर्वार्थं सकृदाज्यभागाद्यंगानुष्ठाने किममावास्यामन्त्राणां ग्रहणम् उत पौर्णमासीमन्त्राणामिति विशये ऐन्द्रस्य प्राजापत्यापेक्षया पूर्वत्वेन मुख्यत्वेऽपि अम्मधुघृतरूपभूयोनुग्रहाय पौर्णमासीमन्त्रग्रहणमेव कार्यमित्युक्तम्।

53. सर्वशाखाप्रत्ययन्यायादिति। द्वितीयाध्यायान्तिमाधिकरणम्। अस्मिन् कर्मभेदाध्याये शब्दान्तरादिभिर्भेदश्चिन्तितः। तदपवादेनैक्यं क्वचिदुच्यत इह। अग्निहोत्रं जुहोतीति वाक्यमनेकत्र शाखासु पठ्यते। तत्रैकेन विहितस्य पुनरन्येन विधानायोगात् अभ्यासः प्रकरणान्तरमिति प्रमाणद्वयमनुरुध्य तत्तत्र विहितोऽग्निहोत्रहोमो विभिन्न इति पूर्वः पक्षः। तत्र सिद्धान्तसूत्रम्, एकं वा संयोगरूपचोदनाख्याऽविशेषादिति। इदमेव सूत्रं प्रत्यभिज्ञापयता बादरायणेन सर्ववेदान्तवेद्याक्षरविद्यादिरूपोपासनैक्यं सूत्रितम्, सर्ववेदान्तप्रत्ययं चोदनाद्यविशेषादिति। जैमिनिसूत्रार्थस्तु-फलसंबन्धरूपसंयोगस्य, कर्माङ्गद्रव्यादेः, विधेः, अग्निहोत्रादिनाम्नश्चाविशिष्टत्वात् कर्मैक्यमेव। न च विहितविधानायोगः; तत्तच्छाखाध्यायिनां पुरुषाणां भिन्नभिन्नत्वात्। अतः सर्वत्र शाखासु श्रूयमाणानामग्निहोत्राणां सर्वैरप्युपसंहृत्यानुष्ठेयत्वमेतद्विचारफलमिति।

58. न विधौ परः शब्दार्थ इति । यदाग्नेयोऽष्टाकपालो...भवति' सौर्यं चरुं निर्वपेत्', 'अग्नीषोमीयं पशुमालभेत' इत्यादिविधौ वाच्यार्थभवननिर्वापालम्भादीनां परित्यागेन यागरूपलक्ष्यार्थः स्वीक्रियते ; द्रव्यदेवतासंबन्धस्य यागमन्तरेणानिष्पत्त्या तावति तात्पर्यस्यावश्यवक्तव्यत्वात् । एवमावश्यकार्थाधिकार्थलाक्षणिकत्वं विधिवाक्यस्य नास्ति । मुख्यार्थेनैव निर्वाहे लक्षणा विधिवाक्येषु न भवतीत्यर्थः । ननु विधिवाक्येति किम् । सर्वत्रैव मुख्यार्थेनैवोपपत्तावमुख्यग्रहणमयुक्तम् । तात्पर्यग्राहकप्रमाणसत्त्वे त्वमुख्यग्रहणमपि सर्वत्राविशिष्टमिति को विशेषः ॥ उच्यते । अर्थवादवाक्ये वाक्यार्थबोधसंपादनाय आदित्यो यूप इत्यादौ गौण्यादिनाऽर्थान्तरे वर्णितेऽपि तावति अनुपरम्य प्राशस्त्यरूपार्थान्तरावगमकत्वमपि स्वीक्रियते । विधिवाक्ये तु प्रथमप्रतीतादन्यदपि ग्राह्यं न भवति चारितार्थ्यादित्येतावता वैषम्येणैवं मीमांसकव्यवहारः । एवं अर्थवादस्य प्राशस्त्य एव तात्पर्यात् तदुपयोगितया वर्ण्यमानो वाक्यार्थो यथायथं तत्तद्बुद्ध्यनुसारेण नेतुं शक्यते विवक्षितांशहान्यभावात् न त्वन्यत्रैवमिति । 'नचानन्यपरं...उपचरितार्थ'मिति भामत्यामेतदनुसंधेयम् ।

58. **दर्शपूर्णमासशब्दयोर्लक्षणयेति** । 2-2-3. प्रकरणं तु पौर्णमास्यामित्यधिकरणे, 'य एवं विद्वान् पौर्णमासीं यजते, य एवं विद्वानमावास्यां यजते' इति विद्वद्वाक्यद्वयम् । विद्वत्पदघटितत्वात् विद्वद्वाक्यमिदम् । आग्नेयादिलक्षणकर्मविधायकमिदम् उत तदनुवादकमिति विचार्य अनुवादस्य प्रयोजनसद्भावात् य एवमिति यच्छब्दाद्यनुरोधादनुवादत्वमेव । किं प्रयोजनमिति चेत्—दर्शपूर्णमासाभ्यां यजेत स्वर्गकामः इति वाक्ये दर्शपूर्णमासपदेन कीदृशकर्मग्रहणमिति विमर्शे प्रकरणश्रुताग्नेयाग्नीषोमीयप्रयाजानुयाजादीनामविशेषेण ग्रहणेन सर्वेषां फलसंबन्धात् प्राधान्यापत्तौ वाक्यद्वयमिदम् येषामुत्पत्तिवाक्ये तत्तत्कालश्रवणमस्ति तावन्मात्रस्य पौर्णमासीम् अमावास्यामिति कालवाचिपदेनानुवादकं सत् आग्नेयोपांशुयाजाग्नीषोमीययागत्रयरूपसमुदायं आग्नेयैन्द्रदधिपयोयागत्रयरूपसमुदायं च दर्शयतीति तावन्मात्रं दर्शपूर्णमासशब्दार्थ इति ज्ञापनं प्रयोजनमिति । तत्र समुदायद्वयाभिप्रायेण द्विवचनम् । दर्शपूर्णमासपदद्वयस्य यथार्हं तत्तत्त्रयरूपसमुदायोर्थः । अत्र न समुदायत्वेन । किं तु यागा अर्थः । द्वित्वस्य स्वाश्रय समुदायघटकत्वसंबन्धेनयागेऽन्वय इति नव्याः । एवञ्चेत् समुदायमपि परित्यज्य स्वाश्रयकालघटितवाक्योत्पन्नत्वसंबन्धेनैव यागेऽन्वयोऽस्तु इति विचारितमस्माभिः मीमांसासुधास्वादे इत्यन्यदेतत् । समुदायलक्षणामाश्रित्यात्रोक्तम् ।

58. श्येनादिशब्दानां गौण्येति । 1-4 5 तद्व्यपदेशश्चेति सूत्रे श्येनेनाभिचरन् यजेतेति वाक्ये अभिचाररूपफलार्थं ज्योतिष्टोमाश्रयणेन श्येनपक्षिरूपगुणविधानमित्याशंक्य तद्विरोध्यपदेशस्य एतद्बाधकापदेशस्य सद्भावात् न तथा । 'यथा वै श्येनो निपत्यादत्ते, एवमयं द्विषन्तं भ्रातृव्यं निपत्यादत्ते' इति श्येनपक्षिणमुपमानीकृत्य तदुपमेयस्यान्यस्यैवाभिचारहेतुत्वस्यार्थवादे वर्णनात् याग एवाभिचारहेतुः ; श्येनपक्षिकार्यकारित्वात् तद्गुणयोगेन गौणं सन्नामधेयं श्येनपदमिति निर्णीतम् ।

58. अर्धमन्तर्वेदीति । 3-7-5. अर्धमन्तर्वेदि मिनोत्यर्धं बहिर्वेदीति वाक्ये यूपार्धमानोद्देशेन वेद्यन्तर्भागस्य विधाने अवशिष्टयूपार्धभागस्य बहिर्वेदि अवस्थानमर्थसिद्धमित्याशंक्य, अर्धमेवान्तर्वेदीति एवकारघटनेन परिसंख्याने कृते सत्येव यूपार्धान्तरं वेद्यन्तर्वारितं स्यात्, अन्यथा बहिरर्धनियमो न स्यादिति तद्दोषवारणाय अन्तर्वेदिबहिर्वेदीति पदद्वयेन उभयसंबन्धिस्थानविशेषं लक्षयित्वा तत्र यूपनिखननविधानमित्युक्तम् ।

60. न पृथिव्यामिति । 1-2-5. अभागिप्रतिषेधादिति सूत्रेण अप्रसक्तप्रतिषेधात् अप्रतिषेध्य-प्रतिषेधाच्चाप्रमाणं वाक्यम्, यथा—'न पृथिव्यामग्निश्चेतव्यः, नान्तरिक्षे न दिवि' इति । अत्र हि अन्तरिक्षे दिवि च चयनकरणप्रसक्त्यभावात् व्यर्थो निषेधः । पृथिव्यामपि चयनस्याकर्तव्यत्वे 'श्येनचितं चिन्वीत स्वर्गकाम' इति चयनविधिरनादृतः स्यात् । तत्र तदविधाने चयनप्रसक्त्यभावात् पृथिवीचयननिषे-धोऽप्यप्रसक्तप्रतिषेधः स्यादिति प्रत्यवस्थानं कृतम् । तत् 1-2-18. 'अन्त्ययोर्यथोक्तम्' इति सूत्रेण परिहृतम् । विहितं चयनं पृथिव्यामेव प्राप्तम् । तत्र हिरण्यं निधाय चेतव्यमिति वाक्येन हिरण्यनिधान-पूर्वकत्वं विधीयते । तेन अनिहितहिरण्यकेवलपृथिव्यां चयनं न कर्तव्यमिति सिद्ध्यत्येव । तदेवार्थ-सिद्धमर्थवादरूपेणानूद्यते केवलपृथिवीनिन्दने हिरण्यनिधाने श्रद्धा जायेतेति । तत्र चमत्कारेणान्यदुक्तम्—यथाश्रुतग्राहिणा पुरुषेण मन्येत, न पृथिव्यामग्निश्चेतव्य इति वाक्यश्रवणमात्रेण—यदि पृथिव्यां चयननिषेधः, तर्हि अन्तरिक्ष एव कर्तव्यं स्यात् । यदि अन्तरिक्षे अनालम्बने तन्न शक्यम्, तर्हि तदर्थं द्यौर्गन्तव्या स्यात् । तावच्छक्तिविकलेन न चयनं कार्यमिति । तं प्रति कथ्यते—पृथिव्यां निषेध बणमात्रेण अन्तरिक्षे वा दिवि वेति नालोचयेः, न तयोस्तत् कर्तव्यम्; किं तर्हि पृथिव्यामेव हिरण्यं निधायेति । तस्मादन्त्ययोः नान्तरिक्षे न दिवीत्यनयोरपि न पृथिव्यामित्यस्येवार्थवादत्वैकवाक्यत्वसंभवान्न दोष इति । सेश्वरमीमांसायामिदं सुदर्शम् ।

90. अर्थैकत्वादेकं वाक्यमिति । 2-1-46. ऋचः पादबद्धत्वात् एकैको मन्त्र इति सुगमम् । साम्नोपि ऋगारूढत्वात् तत्परिमाणमपि सुज्ञानम् । यजुषां तु केवलपदकदम्बत्वात् कियत्पदमेलने एकयजुर्मन्त्रतेति जिज्ञासायाम्, यावदेकं वाक्यम्, तावदेकं यजुरिति ज्ञापयितुमेकवाक्यलक्षणमुक्तम् अर्थैकत्वादेकं वाक्यं साकांक्षं चेत् विभागे स्यादिति । यत्र विभज्यमानांशसाकांक्षत्वमेकार्थबोधकत्वञ्च, तदेकवाक्यमिति । भगो वां विभजतु, अर्यमा वां विभजतु इति मन्त्रद्वयस्य पुरोडाशविभजनप्रकाशनरूपैक-प्रयोजनकत्वादेकार्थत्वेऽपि नैकवाक्यता । अतो विभागे साकांक्षत्वकथनम् । स्योनं ते सदनं कृणोमि.... तस्मिन् सीदेत्यनयोः सदनकरण-सादनरूपभिन्नार्थत्वेपि विभागे साकांक्षत्वमस्ति उत्तरवाक्यस्य तच्छब्दघटि-ततया पूर्ववाक्यसापेक्षत्वात् । अतस्तद्वारणायार्थैकत्वमपि निवेश्यम् । अत्रार्थपदं प्रयोजनपरमिति वार्त्तिके प्रपञ्चितम् । वाक्यस्य नानाकारकान्वितैकाख्यातार्थाभिधायित्वात् प्रधानभूतार्थैक्यमेव विवक्षितमिति प्रकृतटीकाशयः । एवं महावाक्यस्थले अवान्तरवाक्यानि पदस्थाने परिकल्प्य एकवाक्यता ग्राह्या । यथा समिधोयजति, तनूनपातं यजति इत्थं दर्शपूर्णमासाभ्यांयजेतेति । तत्रोभयाकांक्षादिकमस्त्येव ।

९३. अपच्छेदन्यायेनेति। ज्योतिष्टोमे बहिष्पवमानस्तोत्रार्थं हविर्धानात् बहिष्पवमानदेशं एकस्य पश्चादन्य इति संतत्य प्रसर्पतामन्वारम्भः श्रुतः, अध्वर्युं प्रस्तोता संतनुयात् प्रस्तोतारमुद्गाता उद्गातारं प्रतिहर्ता प्रतिहर्तारं ब्रह्मा, ब्रह्माणं यजमानः, यजमानं प्रशास्तेति। अन्वारम्भः स्पर्शः पृष्ठकच्छग्रहणम्। एवमन्वारभ्य गच्छतां मध्ये, 'यदि प्रस्तोताऽपच्छिन्द्यात् ब्रह्मणे वरं दद्यात्; यदि प्रतिहर्ता, सर्ववेदसं दद्यात्; यद्युद्गाता, अदक्षिणं तं यज्ञमिष्ट्वा तेन पुनर्यजेत. तत्र तद् दद्यात् यत् पूर्वस्मिन् दास्यन् स्यात्' इति अपच्छेदभेदेन विचित्रं प्रायश्चित्तमाम्नायते। तत्रैकापच्छेदे न विवादः। अपच्छेदयौगपद्ये, सति संभवे समुच्चयः, असंभवे विकल्प इत्युक्तम्। अथ क्रमेणापच्छेदे चिन्ता। तत्र प्रथमस्यासंजातविरोधत्वादुपक्रमन्यायेन पूर्वप्रायश्चित्तमिति पूर्वः पक्षः। सिद्धान्तस्तु–यत्रोत्तरस्य पूर्वगृहीतार्थसापेक्षतया तदेकवाक्यतयाऽर्थबोधकत्वम्, तत्रोपक्रमन्यायः। नात्र द्वितीयनिमित्ताधीनोपस्थितिकवाक्यार्थज्ञानस्य पूर्ववाक्यार्थज्ञानोपजीवनेनोत्पत्तिः। निमित्तज्ञानस्येव नैमित्तिकज्ञानस्यापि निरपेक्षमुत्पत्तेः। उत्पन्नं ज्ञानं पूर्वज्ञानविरुद्धविषयकतया पूर्वं दुर्बलयति, यथा पाश्चात्यं प्रत्यक्षं पूर्वोत्पन्नतद्विपरीतज्ञानबाधकम्, तथा। अत उत्तरापच्छेदनिमित्तकप्रायश्चित्तमेवेति, "पौर्वापर्ये पूर्वदौर्बल्यं प्रकृतिवत्" इति सूत्रेण निरणायि। प्रकृतिवदित्यस्य, यथा प्राकृतकुशातिदेशस्य विकृतौ शरमयंबर्हिर्भवतीति प्रत्याम्नातेन शरेण दौर्बल्यम् तद्वदित्यर्थः। विस्तरोऽस्मत्परमार्थभूषणे।

**असंजातविरोधन्यायः**—तृतीयतृतीयाद्ये, श्रुतेर्जाताधिकारः स्यादिति पूर्वपक्षे वेदो वा प्रायदर्शनात् इति समाहितम्। तदर्थ एवम्—उच्चैःऋचा क्रियते, उपांशु यजुषा, उच्चैः साम्ना' इति वाक्येषु ऋगादिपदस्य द्वितीयाध्यायोक्तरीत्या ऋगादिमन्त्र एवार्थः उत ऋग्वेदादिरिति विशयः। मुख्यार्थत्वान्मन्त्रपरत्वमिति शंका। श्रुतेः मुख्यार्थत्वात् जाताधिकारः—ऋक्त्वयजुष्ट्वसामत्वरूपजातिकमन्त्रोद्देश एव स्यात्; न वेदानामुद्देश्यता, वेदस्य मन्त्रब्राह्मणोभयात्मकतया ऋङ्मन्त्रप्रायवेद इत्याद्यर्थस्य लक्ष्यत्वेन मुख्यत्वाभावादिति। अत्र जातपदं जातिमदर्थकम्। जातिमात्रं विवक्षितं चेत्, जात्यधिकार इत्येव सूत्रयेत्। जातिशक्तिवादस्य स्वयं कल्पितत्वात् व्याख्यातारः जातं जातिरिति क्लिष्टं वर्णयन्ति। उद्देश्यत्वं कर्मत्वं धर्मस्य न भवति, किंतु धर्मिण इति स्वोक्तिव्याघातश्च मीमांसकानाम्। अतः 'जातिर्जातञ्च सामान्ये' इति कोशसत्त्वेऽप्यत्र विशिष्टमेव ग्राह्यं जातशब्दमुख्यार्थः। एवं पूर्वपक्षे प्रतिविधिः वेदोवेति। तत्तद्वेद एव तत्तच्छब्दविवक्षित इह। प्रायदर्शनात्। प्रायः=उपक्रमः। तत्र वेदस्य दर्शनात्। "प्रजापतिरकामयत प्रजाः सृजेयेति" इत्यारभ्य—"त्रयो देवा असृज्यन्त अग्निर्वायुरादित्यः। तेभ्यस्तेपानेभ्यस्त्रयो वेदा अजायन्त, अग्ने ऋग्वेदः वायोर्यजुर्वेदः आदित्यात् सामवेदः" इति वेदानां प्रस्तुतत्वात् तत्रैव, इमान् वेदानधिकृत्य किमप्युत्तरत्र वक्ष्यत इति बुद्धिप्रसरात् तद्विरोधेन ऋगादिमन्त्रग्रहणे प्रकृतार्थवादैकवाक्यता विधिवाक्यानां भज्येत। अतोऽर्थवादत्वेऽपि तस्य प्रथमबोधितार्थकतया मुख्यत्वात् तदा तद्बुद्धिविरोधिनः प्रत्ययस्य संजातत्वाभावात् असंजातविरोधिकोऽर्थवाद इति तस्य प्राबल्यम्। संजातविरोधिकं तु पाश्चात्यं विधिवाक्यं वेदपरं सत् ऋग्वेदादिक्रियमाणोद्देशेन उच्चैःस्वरं यजुर्वेदक्रियमाणोद्देशेनोपांशुस्वरञ्च विदधातीति।

प्रथमसंजातविरोधन्यायोऽप्युपक्रमन्याय इत्युच्यते । अन्यदप्युपक्रमाधिकरणमस्ति 3.4-15. "अचोदितञ्च..." इति । तत्रेदं विषयवाक्यम्—प्रजापतिर्वरुणायाश्वमनयत् । स स्वां देवतामार्च्छत् । स पर्यदीर्यत । स एतं वारुणं चतुष्कपालमपश्यत् । तं निरवपत् । ततो वै स वरुणपाशादमुच्यत । वरुणो वा एतं गृह्णाति योऽश्वं प्रतिगृह्णाति । यावतोऽश्वान् प्रतिगृह्णीयात्, तावतो वारुणान् चतुष्कपालान्निर्वपेत् इति । अत्रार्थवादे वरुणायाश्वान् ददत् प्रजापतिर्वरुणेनाक्रान्तः बाधामन्वभूत् । तत्परिहाराय वारुणचतुष्कपालेष्टिः कृतेत्युक्तम् । वरुणदेवताक्रमणं नाम जलोदराख्यरोगप्राप्तिः । विधिवाक्ये तु प्रतिग्राहिणा इष्टिः कर्तव्येत्युच्यत इति विरोधः । तत्र विधिप्राबल्येन पूर्वपक्षः । उपक्रमप्राबल्येन, दात्रैव कर्तव्येष्टिः । प्रतिगृह्णीयादिति वैधपदस्य प्रतिग्राहयेदिति लक्षणयाऽर्थः इति सिद्धान्तः । प्रतिशब्दयोगात् तत्प्रतीपार्थोऽपि सुवच इति प्रतिगृह्णीयादिति पदं दद्यादित्यर्थकमपि सुवचम्-अथापि सत्यामपि लक्षणायां सा सोढव्येति ज्ञापनाय तथोक्तिः । एतत्पूर्वाधिकरणे दोषात्त्विष्टिरित्यत्र नेयमिष्टिर्लौकिकेऽश्वदाने; किंतु शास्त्रीयकर्माङ्गदान एवेति स्थितम् । असंजातविरोधाधिकरणस्यैवोपक्रमाधिकरणत्वेनव्यवहारोऽत्राधिकरणे मीमांसकैरेव कृतः ।

3 3-1. सर्ववेदान्तप्रत्ययं चोदनाद्यविशेषादिति सूत्रे चोदनादिपदेन शाखान्तराधिकरणोक्तसंयोगरूपचोदनाख्यानां निर्देशः । एतच्चाधस्तात् सर्वशाखाप्रत्ययमेकं कर्मेत्येतद्विवरणत एवावगन्तव्यम् । तत्र चोदनायाः प्रथमनिर्देशस्तु पुरुषार्थाधिकरणशंकिष्यमाणरीत्या वाक्यार्थज्ञानातिरिक्तं विधेयं किमपि नेति भ्रमो न कार्य इति प्रारम्भे प्रतिबोधनार्थम् । अत्र पादे द्वितीयाध्यायोक्तभेदकप्रमाणानि मनसिकृत्य पूर्वपक्षसिद्धान्तप्रवर्तनात् तानि ज्ञातव्यानि । तानि प्रमाणानि षट्, शब्दान्तरम् अभ्यासः संख्या संज्ञा गुणः प्रकरणान्तरमिति । तत्र शब्दान्तरम्—अपर्यायधातुः; यथा यजति जुहोति ददातीति । अभ्यासः—एकस्यैव धातोर्विधेयान्तरादितात्पर्यप्रसक्त्यभावेऽपि पुनः कथनम्, समिधो यजति तनूनपातं यजतीत्येवम् । संख्या—कर्मविधायकवाक्ये निर्दिष्टद्वित्वादिसंख्या, यथा तिस्र आहुतीर्जुहोतीति । तेन तेषां होमानां मिथोविजातीयत्वम् । संज्ञा—अथैष ज्योतिः अथैष विश्वज्योतिरिति नामभेदः । गुणः—वैश्वदेव्यामिक्षेति वाक्ये द्रव्यदेवताविशिष्टयागपरे सत्येव, वाजिभ्योवाजिनमिति द्रव्यान्तरादिश्रवणात् तस्य पूर्वकर्मण्यन्वयायोगाद् भेद इत्येवम्भूतद्रव्यादि । प्रकरणान्तरम्-पूर्वोक्तकर्मोपस्थापनेन तत्र किञ्चिद्गुणोपादानमिति यत्र दुर्वचम्, तत्र नामैक्येऽपि कर्मभेदः । यथा कुण्डपायिनामयनमितिनाम्नः कर्मणो मध्ये मासमग्निहोत्रं जुह्वतीति । सर्वमिदं "नाना शब्दादिभेदात्" इत्यादिसूत्रे स्पष्टमनुसंधेयम् ।

3-3-4.7 श्रुत्यादिबलीयस्त्वाच्च न बाधः इत्यादिसूत्रे तृतीयाध्याये अङ्गताबोधकत्वेनोक्तानि प्रमाणान्यनुसंधेयानि । तानि षट्-श्रुतिः लिङ्गं वाक्यं स्थानं प्रकरणं समाख्येति । अर्थस्य [अङ्गत्वस्य] स्वरसत एव बोधकः शब्द श्रुतिः । तादृशश्रुतिकल्पनानुकूलं सामर्थ्यं शब्दगतमर्थगतं वा लिङ्गम् । तत्सामर्थ्यपरिशीलनानुकूलः अङ्गाङ्गिबोधकशब्दसमभिव्याहारः वाक्यम् । तादृशसमभिव्याहारसंपादिका अङ्गाङ्गिगताकांक्षा प्रकरणम् । एकतरगताकांक्षा अन्यतरस्मिन्नप्याकांक्षाकल्पनौपयिकी स्थानम् । प्रकृतिप्रत्ययरूपेणान्यथा वा

विभागार्हेणैकेन पदेनोपस्थापितयोर्यत्राकांक्षादिकल्पनामुखेनाङ्गाङ्गित्वबोधः संपाद्यते, तत्र तादृशं पदमेव समाख्या। एषु चोत्तरोत्तरस्य पूर्वपूर्वकल्पनद्वारैवाङ्गताबोधकत्वात् यत्र पूर्वप्रमाणेनैकाङ्गत्वमुत्तरप्रमाणेन अन्याङ्गत्वमिति समवायः—विरोधप्रसक्तिः, तत्रोत्तरेण पूर्वकल्पना यावद् भवति तावदेव पूर्वं क्लृप्तं कार्य..रं भवति । तत्र निश्श्रेण्यारोहणप्राप्यं फलमधिगन्तुमुभयोः पुरुषयोरारोहतोः पूर्वपर्वस्थः फलं लभते, अधस्तनपर्वस्थश्च किञ्चिदारोहन्नपि मोघः प्रतिनिवर्तते यथा, तथेहेति ध्येयम् । अयमेवाप्राप्तबाध इत्युच्यते, उत्तरप्रमाणकार्याङ्गत्वप्रसक्तिवारणात् ; अङ्गताबोधकश्रुतेरेवोत्तरप्रमाणेनाकल्पनात् । दशमाध्याये उच्यमानस्तु प्राकृतपदार्थस्य विकृतौ बाधः प्राप्तबाध इत्युच्यते । अतिदेशप्रमाणस्य सामान्येन कल्पितत्वात् प्रमाणाकल्पनाविरहात् स्थितमप्यतिदेशप्रमाणं बाधनीयार्थविषयकं भवतीति ।

3-3-59. "अङ्गेषु यथाश्रयभावः" इति सूत्रे आश्रयशब्दं प्रयुञ्जानः मीमांसकसंकेतितमाश्रयशब्दार्थमनुरुन्धे बादरायणः । फलाय विधीयमानं किञ्चित् तत्फलजननार्थं यां क्रियामाश्रयते, स आश्रयः ; यथा गोदोहनेन पशुकामस्य प्रणयेदित्यत्र प्रणयनम् । अपां प्रणयनं चमसपात्रेण कार्यम् , यदि यजमानः पशुकामः स्यात्, तर्ह्यध्वर्युः गोदोहनपात्रेण तत्प्रणयनं कुर्यात् । अप्प्रणयनस्य पशुकामनायां सत्यामसत्याञ्च भावात् प्राप्ताप्राप्तविवेकेन गोदोहनस्यैव फलं पशुः । परं तत् यागाङ्गभूतप्रणयनरूपक्रियामनुपजीव्य तटस्थं क्रियान्तरान्वयि वा न फलं जनयेत् । अतः प्रणयनं तेनाश्रीयत इति स आश्रयः । एवं क्रतुमध्यगतमुद्गीथमाश्रयं परिकल्प्य तत्र शत्रुपराभवरूपफलाप्तये मुख्यप्राणदृष्टिरूपमुपासनं विधीयमानमपि द्रष्टव्यम् । यद्यत्र विशेषतः फलं नाश्रोष्यत, तर्हि विधीयमानं गोदोहनं प्राणोपासनमित्यादि तत्तदाश्रयाङ्गमापत्स्यतेति अङ्गत्वप्रसक्त्या तस्य गुणशब्देन व्यवहारः । आश्रयलक्षणं ब्रह्मसूत्रोक्तलक्ष्यापरिचयात् संकुचितं कृतं मीमांसकैः । तदस्माभिर्मीमांसासुधास्वादे यथावत् परिष्कृतम् ।

4-3. एवमर्चिरादिपादे वायुमब्दादविशेषविशेषाभ्यामित्यादौ पञ्चमाध्यायोक्तानि क्रमप्रमाणानि श्रुत्यर्थपठनस्थानमुख्यप्रवृत्त्याख्यानि मनसिकृत्य पौर्वापर्यं परिकल्पयामास । श्रुतिरत्र साक्षात् पौर्वापर्यवाचकः शब्दः । अर्थः प्रयोजनम् ; तद्वशेन क्रमः । अतो यवागूपाकः पश्चात् श्रुतोऽपि अग्निहोत्रहोमात् प्राक् अनुष्ठीयते । तस्यास्तद्द्रव्यत्वात् । काम्येष्टीनां मन्त्राणाञ्च प्रथमस्य प्रथममिति रीत्या क्रमः पाठक्रमः । एकत्र स्थानेऽनेकेष्वनुष्ठेयेषु तत्स्थानिनः प्रथममनुष्ठानं स्थानक्रमात् । प्रधानक्रमेणाङ्गानुष्ठाने मुख्यक्रमः । बहुषु अङ्गेषु बह्वङ्गिविषये पृथक्पृथगनुष्ठेयेषु एकाङ्गानुष्ठानं यस्मिन् अङ्गिनि आरब्धम् , अन्येषामङ्गानामपि तदङ्गिन्यारम्भेण तेनैव क्रमेणानुष्ठाने प्रवृत्तिक्रमः । यथा प्रजापतिदेवत्येषु सप्तदशसु पशुषु उपाकरणनियोजनादिषु कर्तव्येषु उपाकरणं यं पशुमारभ्य यथा, तथा नियोजनमपीत्येवम् । तदेवं पूर्वमीमांसार्थानामिहोत्तरमीमांसायामुपयुक्ततया उदाहरणतया ग्रहणाच्च तत्र किञ्चिद्वैशद्यं संपादितं महते उपकाराय कल्पत इति दिक्प्रदर्शनमकारि । एवंरीत्या शिष्टमपि द्रष्टव्यम् ।

इदमप्यत्र बोध्यम्—विध्यर्थवादमन्त्रात्मना त्रेधा विभक्ते वेदे विधिः स्वतन्त्रः । तच्छेषत्वं शेषयोः । अत्र विधिशब्देन प्रवर्तकनिवर्तकवाक्यराशिः सर्वो गृह्यते । तत्र यथायथं विधेयनिषेध्यतदनुबन्धिविषये

स्तुतिनिन्दापरतया अर्थवादस्य तदेकवाक्यत्वम् । मन्त्राणां तु प्रयोगकाले उच्चार्यमाणानामनुष्ठेयार्थस्मृति-हेतुतेति सप्रयोजनत्वम् । तत्र देवतानां गुणविग्रहाद्यनंगीकारिनिरीश्वरमीमांसकपक्षे 'आदित्योयूप'इत्यादाविव संभावितगौणार्थकल्पनात् तादृशार्थज्ञानस्य यथार्थत्वात् यथार्थज्ञानरूपप्रमितिजनकत्वात् प्रामाण्यम् । गुणविग्रहादिस्वीकारिवेदान्तिमते स्वरसत एव याथार्थ्यम् । तस्य देवतागुणादेर्वेदैकगम्यतया अज्ञातार्थ-ज्ञापकत्वरूपप्रामाण्यमपि सुस्थम् । एवमर्थवादेऽपि भाव्यम् । आकांक्षायां सत्यां फलसमर्पकत्व-संदिग्धार्थ-निर्णायकत्व-अर्थविशेषव्युत्पादकत्वादिकमपीष्यते । यथा प्रतितिष्ठन्ति हवा य एता रात्रीरुपयन्ति, तेजोवैघृतम्, वसन्ते.......यवाः कणिशशालिनः इत्यादिषु । परमपुमर्थभूतब्रह्मप्रतिपादकोपनिषद्भागस्तु विधिभिन्नोऽपि स्वतन्त्रः न तु किञ्चिच्छेषभूतः । विधौ प्रवर्तकवाक्यं चतुर्विधम्, उत्पत्तिविधिः विनियोगविधिः प्रयोगविधिः अधिकारविधिश्चेति । अपूर्वविधेयस्वरूपबोधकः प्रथमः ; विहितानां मिथोऽङ्गाङ्गिभावबोधको द्वितीयः, तेषामनुष्ठानक्रमबोधकस्तृतीयः ; तत्राधिकारी क इति फलादिबोधकः चतुर्थ इति ।

मीमांसकमते वाक्यार्थवर्णनप्रक्रिया चैवम्—विधिर्नाम प्रवर्तकवाक्यगतलिङ्लोडादिलकारार्थः, स नियोगोऽपूर्वमिति प्राभाकराः । शब्दगता भावना प्रवर्तनारूपेति भाट्टाः । इष्टसाधनत्वमिति मण्डनमिश्रः । इष्टसाधनत्वकृतिसाध्यत्वबलवदनिष्टाननुबन्धित्वरूपार्थत्रयं विधिरिति तार्किकाः । प्रवर्तकपुरुषरूपाप्तगतेच्छा-विशेष इति प्राच्यो न्यायाचार्य उदयनः । एतदिच्छासमानयोगक्षेम एव शब्दव्यापारो भाट्टेष्टः । ईश्वरगतेयमिच्छा वा कृतिसाध्यत्वविशेष एव वा विधिरिति श्रीभाष्यकृतः । मीमांसकैराख्यातेन सर्वेण लकारेण कृतिरर्थतयेष्यते । सा अर्थभावना । तस्याः भावयेदिति व्यवहारः । भावयेदित्यस्य उत्पादयेदित्यर्थः । सा च पुरुषप्रयत्नाख्यो व्यापार एव । तस्याः किं भावयेत्, केनभावयेत्, कथं भावयेदित्याकांक्षात्रयं दवन्ति । तासां साध्याकांक्षा करणाकांक्षा इतिकर्तव्यता(अङ्ग)कांक्षेति व्यवहारः । प्रयाजादिभिः सह दर्शादिना यजेत स्वर्गकाम इति वाक्ये तस्यामाख्यातोपात्तायामर्थभावनायां साध्याकांक्षाबलात् स्वर्गः साध्यत्वेनान्वेति, करणाकांक्षायां यागः करणत्वेन, इतिकर्तव्यताकांक्षायां प्रयाजादिरितिकर्तव्यतात्वेन । कारकाणां सर्वेषां क्रियान्वयस्यानुभविकत्वात् तानि सर्वाणि भावनामनुयन्ति । भावनैव मीमांसकमते क्रिया । तथा च स्वर्गोद्देश्यका यागकरणिका प्रयाजादीतिकर्तव्यताका अर्थभावना विधिविषय इति भावनामुख्यविशेष्यको बोधः । अत्र न्यायपरिशुद्ध्यादिपरिशीलनेन अस्मन्मते निष्कृष्टव्यमस्ति । तत् अवसरान्तरे भवितुमर्हतीत्यलं बहुना ॥

इत्थं मीमांसाविषय उक्तः । एवं पराशर्यवचस्सुधामित्यादौ व्याकरणालंकारादिविषयाः भाव्याः । भावप्रकाशिकाभूमिकायां वचस्सुधारूपकसमासविचारोऽस्माभिरपि कृतो द्रष्टव्यः ।

**इत्थं यतीन्द्रनिगमान्तगुरूपदिष्टब्रह्मिष्ठजैमिनिसदाशयशीलनेन ।**
**टीकोपयुक्ततमतान्त्रिकमार्गदर्शी श्रीवीरराघवसुधीर्मुदमातनोति ॥**

शुभमस्तु

श्रीः

# ब्रह्मसूत्रप्रमेयसारः

श्रीभगवद्रामानुजानुगृहीतः (वेदान्तदीपे)

"तत्र प्रथमे पादे प्रधानपुरुषावेव जगत्कारणतया वेदान्ताः प्रतिपादयन्तीत्याशङ्क्य सर्वज्ञं सत्यसङ्कल्पं निरवद्यं समस्तकल्याणगुणाकरं ब्रह्मैव जगत्कारणतया प्रतिपादयन्तीत्युक्तम्। द्वितीय-तृतीयचतुर्थपादेषु—कानिचित् वेदान्तवाक्यानि प्रधानादिप्रतिपादनपराणीति तन्मुखेन सर्वाक्षेपमाशङ्क्य तान्यपि ब्रह्मपराणीत्युक्तम्। तत्रास्पष्टजीवादिलिङ्गकानि वाक्यानि द्वितीये निरूपितानि; स्पष्टलिङ्गकानि तृतीये; चतुर्थे तु प्रधानादिप्रतिपादनतच्छायानुसारीणीति विशेषः। अतः प्रथमेऽध्याये सर्वं वेदान्तवाक्यजातं सार्वज्ञ्यसत्यसङ्कल्पत्वादियुक्तं ब्रह्मैव जगत्कारणतया प्रतिपादयतीति स्थापितम्।

द्वितीयेऽध्याये तस्यार्थस्य दुर्धर्षत्वप्रतिपादनेन द्रढिमोच्यते। तत्र प्रथमे पादे सांख्यादिस्मृतिविरोधात् न्यायविरोधाच्च प्रसक्तो दोषः परिहृतः। द्वितीये तु साङ्ख्यादिवेदबाह्यपक्षप्रतिक्षेपमुखेन तस्यैवादरणीयता स्थिरीकृता। तृतीयचतुर्थयोर्वेदान्तवाक्यानामन्योन्यविप्रतिषेधादिदोषगन्धाभावख्यापनाय वियदादीनां ब्रह्मकार्यताप्रकारो विशोध्यते। तत्र तृतीये पादे चिदचित्प्रपञ्चस्य ब्रह्मकार्यत्वे सत्यपि अचिदंशस्य स्वरूपान्यथाभावेन कार्यत्वम्; चिदंशस्य स्वभावान्यथाभावेन ज्ञानसङ्कोचविकासरूपेण कार्यतोदिता। चतुर्थे तु जीवोपकरणानामिन्द्रियादीनामुत्पत्तिप्रकारः—इति प्रथमेनाध्यायद्वयेन मुमुक्षुभिरुपास्यं निरस्तनिखिलदोषगन्धम् अनवधिकातिशयासंख्येयकल्याणगुणगणं निखिलजगदेककारणं ब्रह्मेति प्रतिपादितम्।

उत्तरेण द्वयेन ब्रह्मोपासनप्रकारः तत्फलभूतमोक्षस्वरूपञ्च चिन्त्यते।

तत्र तृतीयस्य प्रथमे पादे ब्रह्मोपासिसिषोत्पत्तये जीवस्य संसरतो दोषाः कीर्तिताः। द्वितीये च उपासिसिषोत्पत्तय एव ब्रह्मणो निरस्तनिखिलदोषताकल्याणगुणाकरतारूपोभयलिङ्गता प्रतिपाद्यते। तृतीये तु ब्रह्मोपासनैकत्वनानात्वविचारपूर्वकमुपासनेषूपसंहार्यानुपसंहार्यगुणविशेषाः प्रपञ्चिताः। चतुर्थे तूपासनस्य वर्णाश्रमधर्मेतिकर्तव्यताकत्वमुक्तम्।

चतुर्थेऽध्याये ब्रह्मोपासनफलचिन्ता क्रियते। तत्र प्रथमे पादे ब्रह्मोपासनफलं वक्तुमुपासनस्वरूपपूर्वकोपासनानुष्ठानप्रकारो विद्यामाहात्म्यञ्चोच्यते। द्वितीये तु ब्रह्मोपासीनानां ब्रह्मप्राप्तिगत्युपक्रमप्रकारश्चिन्तितः। तृतीये तु अर्चिरादिगतिस्वरूपम्, अर्चिरादिनैव ब्रह्मप्राप्तिरिति च प्रतिपाद्यते। चतुर्थे तु मुक्तस्य ब्रह्मानुभवप्रकारश्चिन्त्यते।

अतो मुमुक्षुभिर्ज्ञातव्यं निरस्तनिखिलदोषगन्धमनवधिकातिशयासंख्येयकल्याणगुणाकरं निखिलजगदेककारणं परं ब्रह्म, तज्ज्ञानञ्च मोक्षसाधनम् असकृदावृत्तस्मृतिसंतानरूपमुपासनात्मकम्, उपासनफलञ्चार्चिरादिना ब्रह्म संपद्य स्वस्वरूपभूतज्ञानादिगुणाविर्भावपूर्वक-अनन्तमहाविभूत्यनवधिकातिशयानन्दब्रह्मानुभवोऽपुनरावृत्तिरूप इति शारीरकशास्त्रेणोक्तं भवति॥" इति।

—०—०—

श्रीः

श्रीलक्ष्मीहयवदनपरब्रह्मणे नमः

# सिद्धान्तमुक्तासरः

1 श्रीशारम्भां यतीशश्रुतिशिखरगुरुप्रख्यमध्यां गुरूणां
पंक्तिं श्रीरङ्गरामानुजमुनिचरमां भक्तिभूम्ना प्रणम्य ।
श्रीमद्व्यासोक्तशारीरकनय यतिराड्दृष्ट सिद्धान्तविख्यै
वात्स्यः सिद्धान्तमुक्तासरमिह कुरुते वीररघ्वीशसूरिः ॥

2 सिद्धे व्युत्पत्तिभावादथ निखिलजगद्धेतुतालक्ष्मभावात्
अप्राप्तत्वाच्च, शास्त्रैरतिशयितपुमर्थत्वरूपेण चोक्तेः ।
स्यादेव ब्रह्मचिन्ता प्रमितमिह तु सद्विद्यया नानुमानम्
ब्रह्मण्यानन्दमय्यं कनकवपुरिदं त्वन्तरादित्य उक्तम् ॥ अत्राधिकरणानि (7)

3 आकाशः प्राण एवं परमपि च दिवो ज्योतिरेतत् तथेन्द्र-
प्राणोऽप्याकाशनोज्जीवनरुचिरवपुष्ट्वान्तरात्मत्वयोगात् ।
मानोमय्याद्युपेतं जनिलयमुखकृद् ब्रह्म संहारकोऽत्ता
सोक्ष्यन्तश्चान्तरात्माऽप्यदृशिमुखपदश्चापि वैश्वानरात्मा ॥ (10)

4 द्युभ्वाद्याधारभूमाक्षरपदगमितश्चेक्षतेः कर्म दह्रो
ब्रह्माङ्गुष्ठप्रमाणो भवति दिविषदामप्युपासाधिकारः ।
वस्वादित्याद्युपास्यं मधु मिहिरमयं ब्रह्म शूद्रस्त्वनर्हः
क्षत्रं जानश्रुतिर्यत्, निरघचिदभिसंभाव्य आकाश एषः ॥ (10)

5 अव्यक्ताख्याच्छरीरात् स पर इदमधीनाऽस्त्वजा ब्रह्मनिघ्ने
प्राणादौ पाञ्चजन्यं भवति सदसदव्याकृतात्मा परः सः ।
कर्तुः कर्मेति कार्यं जगदुदितमथात्मैष मैत्रेय्यधीतः
स्याच्चोपादानमीशः सकलमपि जगद्धेतुवाक्यं यथोक्तम् ॥ (8)

6 वर्ज्या सांख्यस्मृतिः स्यात् स्मृतिरपिच विधेर्योगः ईशाज्जगत् स्यात्
वैलक्षण्येऽपि, शिष्टाः स्मृतय इह तथा तर्कमूला उपेक्ष्याः ।
भोक्तृत्वं नान्तरात्मन्यखिलमपि जगत् स्यादनन्यत् परस्मात्
अन्यत्वात् स्वाहिताकृत् तदिदमनुपसंहारि हेतुः पयोवत् ॥ (8)

7 कृत्स्नापत्तिर्निरंशश्रुतिहतिरपि नो वेदशब्दैकमूले
स्वार्थाभावेऽपि लीला शुभतदितरकृज्जीवसृष्ट्यादिरीशे ।
नाव्यक्तं कर्तृहीनं रचयति निखिलं नाणुवादः सुतर्कः
नो बौद्धोक्तोऽपि सर्वः क्षणिकसमुदयो नापि विज्ञानमात्रम् ॥ (6)

8 शून्योक्तिर्नोपपन्ना, जिनकथितमनेकान्तवाक्यं च भग्नम्
नो सामञ्जस्यलेशः पशुपतिसमये, पाञ्चरात्रं तु मानम् ।
कार्यत्वं स्याद्वियत्यप्यखिलमिदमभिध्यायिविघ्नं तु हेतुः
नात्मा जायेत, स ज्ञः, कृतिकृदपि परायत्त एवापिचांशः ॥ (11)

9 अक्षाण्युत्पत्तिमन्ति प्रलयसमयगः प्राण आत्मा परो यत्
नो सप्तैकादशैतान्यविभुपरिमितीन्यस्तु वायोर्विशेषः ।
प्राणः सर्वोप्यणुश्चाप्यविभुपरिमितेर्ज्योतिराद्यैरमीषां
जीवेऽधिष्ठानमीशात् तनुकृदपि चितामेष योऽयं त्रिवृत्कृत् ॥ (7)

10 रंहन् मूर्त्यन्तरार्थं भवति मरणभाक् भूतसूक्ष्मैः समेतः
स्वर्गादौ स्वोपभुक्तादितरविविधकर्मैष आवर्ततेऽत्र ।
नैवानिष्टादिकारी विधुपदमभियात्यागते व्योमभावा-
द्यैतत्संश्लेषमात्रं त्वनतिचिरगतिर्जन्म न व्रीहिताऽपि ॥ (6)

11 संध्ये नो जीवसृष्टं भगवदुपगतिः स्यात् सुषुप्तौ, प्रबुद्धो
न स्यादन्यः सुषुप्तात् स्वपनमरणयोर्मध्यभावस्तु मुग्धिः ।
ईदृक्षावस्थजीवस्थितिरपि परमो दोषदूरो गुणाढ्यः
चिद्रूपवंशोऽचिदस्य स्वयमखिलपरः स्यात् फलञ्चात एव ॥ (8)

12 आख्यैक्ये ब्रह्मविद्या न भवति भिदुरोद्गीथविद्या तु भिन्ना
नैवं स्यात् प्राणविद्या निखिलपरमितिर्व्यापि चानन्दतादि ।
अब्यासस्त्वं विधेयं स्थलयुगपठितैकैव शाण्डिल्यविद्या
नामाहश्चाप्यहञ्च प्रतिनियतम्, अपि दृश्याप्तिमुख्यं तथा स्यात् ॥ (8)

13 पुंविद्या तैत्तिरीये भवति तु परविद्याङ्गभूता, न मन्त्राः
प्रारम्भोक्तास्तथा स्युः निखिलविदुषि सोपायना हानिचिन्ता ।
हानञ्चोत्क्रान्तिकाले गतिरमृतविदामर्चिरादिः समाना
ह्रस्थूलत्वादिचिन्ताऽप्युभयमनधिकं यद्वद्युषस्ते कहोले ॥ (7)

14 वाज्युक्ता दह्रविद्याऽनधिकनिजवपुः स्यात् किलोद्गीथविद्या
क्वाचित्की, धर्मिवृत्तिर्दहरगुणमतौ, श्रीपतिः सर्ववेद्यः ।
विद्यांगं स्यान्मनश्चित्प्रभृति मतिपदं शुद्धरूपं चितः स्यात्
सर्वत्रास्त्वंगविद्या सकलमननमेवास्ति वैश्वानरीये ॥ (8)

15 वेद्याद्यैक्येऽपि विद्या भवति बहुविधा स्यात् फलैक्यात् विकल्पः
प्रागुक्तोद्गीथविद्यास्वनियतिरविकल्प्याऽस्ति यस्मात्फलार्थाः ।
विद्या कर्माङ्गिकेष्टा चिदधिकपरमात्मोक्तितो दृष्ट्युपासा-
वाक्यं नैवार्थवादः विधिरपि तु कथाः सन्तु विद्यार्थवादाः ॥ (6)

16 अङ्गं संन्यासिधर्मोऽप्यलमिति भवतात् तेषु विद्या, गृहस्थे
यज्ञादेरस्त्यपेक्षा शमदममुखमप्यंगमत्राविरोधात् ।
नो सर्वान्नाभ्यनुज्ञा त्वविपदि परविद्यप्युपाख्यानदृष्टेः
भक्त्यङ्गत्वेऽपि धर्मा अविदुषि नियमादाश्रमार्था भवेयुः ॥ (5)

17 भक्तौ तेऽधिक्रियन्ते विपदि परविदो ह्याश्रमान् अन्तरा ये
भ्रष्टा नाधिक्रियेरन् क्रतुगुणवदुपास्तिष्वथार्त्विज्यता स्यात् ।
बाल्यात् पाण्डित्यतश्च श्रवणमननतो मौनमन्यद्विधेयम्
सर्वेषाम्, बाल्यमेतद् भवति तु महिमाविष्क्रियाभावमात्रम् ॥ (5)

18 भुक्त्यर्थोपासनाख्यं फलमिह जनने कर्मजं विघ्नहानौ
मुक्त्यर्था चाप्युपासा महदपचरणात् जातु जन्मान्तराप्त्या ।
आवृत्तिः स्यादुपास्तावसकृदथ परः स्वान्तरात्मेत्युपास्यः
नैवं दृष्टौ प्रतीकः क्रतुगुणविषये देवतादृष्टिरिष्टा ॥ (6)

19 ध्यायेदासीन एव प्रतिदिवसमिदञ्चाप्रयाणात् परश्चेत्
दृष्टोऽघाश्लेषनाशौ सुकृतमपि गलेत् भोज्यमारब्धकार्यम् ।
ज्ञानार्थं त्वग्निहोत्रादिकमत उदितोऽश्लेष इष्टोऽन्यपुण्ये
भोज्ये प्रारब्धकार्ये सति विदुषि मतं भूरि भूयोऽपि जन्म ॥ (7)

20 वागाद्यं स्यान्मनःस्थं समुपरतमिदं प्राण एवं स जीवे
सप्राणः सोऽपि भूतेष्वविदि विदि तथोत्क्रान्तिरेषा समाना ।
जीवः संपद्यतेऽस्मिन् पर इयमिह संपत्तिरस्याविभागो
न त्वज्ञस्येव, सोऽग्रज्वलनगतपथो याति मूर्धन्यनाड्या ॥ (8)

21 रश्मिग्राही स रात्रावपि निशि मरणान्नाशुभं दक्षिणे वा
स्यात् पन्था अर्चिरादिर्नियत इह मतो देवलोकस्तु वायुः ।
नो वायोर्विद्युतः स्याद्वरुण उपरि ते स्युस्तु देवा नियुक्ताः
स्यादान्तं वैद्युतस्तैर्नयनमपि परे त्वप्रतीकेक्षिणां स्यात् ॥ (9)

22 आविर्भूतस्वभावो भवति न च पृथग्भाव एतस्य रूपं
ब्राह्मं संकल्पशक्त्याद्यपरिकरतयैवास्य पित्रादिसृष्टिः ।
निर्देहो वा सदेहः सममनुभवति श्रीशसृष्टैः स्वसृष्टैः
लोकस्रष्टृत्वमुख्ये त्वसति स परमं भोगसाम्यं सदेति ॥ (6)

7-10-10-8 8 6-11 7-6-8 8-7-8-6 5-5-6-7-8-9-6=156 अधिकरणानि ।

23 हेतुत्वं वा प्रपञ्चं प्रति तु तदविनाभूतधर्मोऽथवोक्तः
स्यादीदृग्वाक्यजातं न चिदचिदभिधानैकविश्रान्तियोग्यम् ।
व्याकुर्वन् व्यास इत्थं श्रुतिनिकरमथो वारयन् सांख्यमुख्य-
स्मृत्या युक्त्या च बाधं परमतसरणौ दोषमुद्भावयंश्च ॥

24 पश्चात्कार्थांशबोधिश्रुतिवचनमिथोव्याहतिक्षेपदृष्ट्या
भूतान्यात्मानमक्षाद्यपि निखिलदशास्वेतदायत्तमुक्त्वा ।
तेनान्यैर्व्योमजीवादिषु परिकलिताः प्रक्रिया अप्यपास्यन्
व्यष्टावप्यस्य कृत्यं स्फुटमभिदधदास्थापयत् कारणत्वम् ॥

25 स्वर्गादेः पातभीतिं बहुविधदुरवस्थाश्च जीवेष्वथास्मिन्
नैर्दोष्यं प्राप्यभावं फलकलनमथोपास्यताराध्यतादि ।
प्रख्याप्य, प्रायणान्तस्थिरमतिमनघं सोऽयमुत्क्रान्तिकाले
नीत्वा नित्यं स्वधाम प्रदिशति परमं साम्यमित्यप्यभाणीत् ॥

26 अव्यक्ताद्यं त्वचित् स्यात्, मतिमुखसुगुणाश्चेतनाः बद्धमुक्ताः
सर्वात्मा ब्रह्म दिव्याद्भुतकनकवपुः पुण्डरीकाक्ष एव ।
कार्या भक्तिर्विमुक्तिः फलमिति निखिलं प्राह शारीरके यो
व्यासात्मा श्रीहयास्यः सकलगुरुमयः प्रीयतां सेवयैवम् ॥

इति प्रत्यधिकरण शारीरक प्रमेयदर्शी

सिद्धान्तमुक्तासरः

—o—o—o—

## अध्यायपादनामानि

शारीरकाध्यायाश्चत्वारः क्रमेण समन्वय-अविरोध-साधन-फलनामानः । पादाश्च षोडश क्रमेण अयोगव्यवच्छेद-अस्पष्टजीवादिलिङ्गक-स्पष्टजीवादिलिङ्गक-सुस्पष्टजीवादिलिङ्गक-स्मृति-तर्क-वियत्-प्राण-वैराग्य-उभयलिङ्ग-गुणोपसंहार-अङ्ग-आवृत्ति - उत्क्रान्ति - गति - फलनामानः । एतद्विषयाः अधिकरणनामविषयाश्च श्लोका भाष्यार्थदर्पणभूमिकायां द्रष्टव्याः ।

शुभमस्तु

श्रीः

# श्रुतप्रकाशिकायुक्तश्रीभाष्ये प्रथमपादद्वय विषयसूची

शुभमस्तु

श्रीः

## शारीरक प्रथमपादद्वये
## प्रतिसूत्रविषयवाक्यस्थलसूची

| शारीरकम् | उपनिषत् |
|---|---|
| 1-1-1 | उपनिषत्सामान्यं विषयः<br>एतत्सूत्रसमानार्थकवाक्यं तु<br>परीक्ष्यलोकानित्यादि मु. 1-2-12, 13 |
| 1-1-2 | तै. भृ-1 |
| 1-1-3 | ,, तै. आन-इत्यादि |
| 1-1-4 | ,, तै. आन-इत्यादि |
| 1-1-5—10 | छा-6-1-16. सद्विद्या |
| 1-1-11 | ऐ-1-1-इत्यादि |
| 1-1-12 | छा-8-1-इत्यादि |
| 1-1-13—20 | तै. आनन्दवल्ली-आनन्दमयविद्या |
| 1-1-21 | छा-1-6 |
| 1-1-22 | बृ-5-7-9 |
| 1-1-23 | छा-1-9 |
| 1-1-24 | छा-1-10-11 |
| 1-1-25 | छा-3-13-7 |
| 1-1-26 | छा-3-12-1 |
| 1-1-27 | छा-3-12-5 |
| 1-1-28 | छा-3-12-1 |
| 1-1-29—32 | कौ-3-प्रतर्दनविद्या |
| 1-2-1—8 | छा-3-14 |
| 1-2-9 | कठ-1-2-25 |
| 1-2-9 | ,, 1-2-22 |
| 1-2-10 | ,, 1-3-1 |
| 1-2-11 | कठवल्ली सर्वा |
| 1-2-13—18 | छा-4-15 |
| 1-2-14 | बृ-5-7-22 |
| 1-2-15 | छा-4-10 |
| 1-2-19—21 | (का) 5-7 (मा) 6-7 |
| 1-2-22—23 | मुण्डक |
| 1-2-24 | मु-2-1-4 |
| 1-2-25—33 | छा-5-1 अग्निरहस्यम् 10-5-6 |
| 1-2-32 | 5-24 |
| 1-2-33 | 5-18 |

—o—o—o—

श्रीरस्तु

श्रीः

श्रीमते वात्स्य वरदार्यमहादेशिकाय नमः ।

यतीन्द्रकृतभाष्यार्थाः यद्व्याख्यानेन दर्शिताः । वरं (व्यासं) सुदर्शनार्यं तं वन्दे कूरकुलाधिपम् ॥

## श्रीमत्सुदर्शनसूरिविरचिता टीका

# श्रुतप्रकाशिका

वरदं[1] द्विरदाद्रीशं श्रीनिधिं करुणानिधिम् । शरण्यं शरणं यामि प्रणतार्तिहरं हरिम् ॥ १ ॥

बहिरन्तस्तमश्छेदि ज्योतिर्वन्दे सुदर्शनम् । येनाव्याहतसङ्कल्पं वस्तु लक्ष्मीधरं विदुः ॥ २ ॥

सम्यङ्न्यायकलापेन महता भारतेन च । उपबृंहितवेदाय नमो व्यासाय विष्णवे ॥ ३ ॥

तस्मै रामानुजार्याय नमः परमयोगिने । यः श्रुतिस्मृतिसूत्राणामन्तर्ज्वरमशीशमत् ॥ ४ ॥

वन्देऽहं वरदार्यं तं वत्साभिजनभूषणम् । भाष्यामृतप्रदानात् यः सञ्जीवयति मामपि ॥ ५ ॥

प्रपद्ये [2]प्रणवाकारं भाष्यं रङ्गमिवापरम् । परस्य ब्रह्मणो यत्र शेषित्वं स्फुटमीक्ष्यते ॥ ६ ॥

श्रुत्यन्तेषु श्रुतं भाष्ये मतं ध्यातं हृदम्बुजे । लक्ष्मीधरं(पतिं) प्रपद्येऽहं दृष्टं श्रीरङ्गधामनि ॥ ७ ॥

प्रमाणं च प्रमेयं च प्रमातारश्च सात्त्विकाः । जयन्तु क्षपितानि(रि)ष्टं सह (दा) सर्वत्र सर्वदा (धा) ॥८॥

अविस्तृताः सुगम्भीरा रामानुजमुनेर्गिरः । दर्शयन्तु प्रसादेन स्वं भावमखिलं दृढम् ॥ ९ ॥

श्रीरङ्गेशाज्ञया लब्धव्याससंज्ञं सुदर्शनम् । [3]वाचाविजयिनः पुत्रं भाष्यभक्तिरचूचुदत् ॥ १० ॥

---

श्रीः

वात्स्य वीरराघवाचार्यकृता सुदर्शनसेवा

श्रीभाष्यकारवेदान्तदेशिकाद्युज्ज्वलां भजे । गुरुपङ्क्तिं रमेशाद्यां रङ्गरामानुजान्तिमाम् ॥

अद्भुतज्ञानविख्यातवरदार्यदयावशम् । व्यासं सुदर्शनार्यं तं सुदर्शनसमं श्रये ॥

1 वरदमिति । वरदं द्विरदाद्रीशं श्रीनिधिं करुणानिधिं प्रणतार्तिहरमिति तत्रत्यपञ्चबेरविवक्षयेति संप्रदायविदः । वरदमिति स्वाचार्योऽप्यनुसंधीयते । द्विरदाद्रिशिखर एव वेदान्तप्रवचनं तत्कृतं स्वश्रुतञ्चेति ज्ञापनाय द्विरदाद्रीशमित्यपि तद्विशेषणम् । अत एव स्वश्रीरङ्गनाथापेक्षयाऽप्यस्य प्रथमनिर्देशः ।

2 प्रणवाकारमिति । रङ्गविमानस्य प्रणवाकारत्वं प्रसिद्धम् । तत्र शेषित्वं—शेषशायित्वमीक्ष्यते । श्रीभाष्यञ्च अकारोपक्रमात् मकारेणोपसंहारात् प्रथमाध्यायचतुर्थपादारम्भगत-उकारमध्यसत्त्वाच्च प्रणवाकारम् । प्रणव इवात्र जीवपरयोः शेषशेषिभावः नारायणे सर्वशेषित्वं स्फुटमीक्ष्यते ।

3 महाचार्यवंश्यकृते श्रीवेदान्तदेशिकवैभवप्रकाशिकाविशेषे, श्रीरामप्पिल्लैइत्याह्वयवेदव्यासभट्टपौत्रः 'नावाल्वेन्दान्' इत्याह्वयस्य पुत्रः श्रीसुदर्शनाचार्यः श्रीमद्वात्स्यवरदाचार्यशिष्येष्वन्यतम इत्युक्तम् ।

गुरुभ्योऽर्थः श्रुतः शब्दैस्तत्प्रयुक्तैश्च योजितः[1] । सौकर्याय बुभुत्सूनां सङ्कलय्य प्रकाश्यते ॥ ११ ॥
कः कृत्स्नं वेत्ति भाष्यार्थं श्रुतांशस्थितये कृतिः । आढ्यैः काकणिके(कै)वैषा नोपेक्ष्या भाष्यवित्तमैः ॥ १२ ॥

भाष्यं चेत् व्यवृणोत् स्वयं यतिपतिर्व्याख्यानवाचां तथा
गाम्भीर्यादनवस्थितिः मितमतिर्दूरे जनस्तद्गिराम् ।
प्रष्टव्यः कथमीश्वरः स हि न नः प्रत्यक्षरूपो दृशाम्
तद्भाष्यं स च भाष्यकृत् स च हरिः सम्यक् प्रसीदन्तु नः ॥ १३ ॥

सर्वेषां पुरुषाणां प्रमाणाधीनप्रमेयनिश्चयानामुपादित्सितजिहासितेष्टानिष्टफलतत्साधनानामलौकिके पुरुषार्थ(र्थे)तत्साधनरूपे [च] वस्तुनि शब्दैकसमधिगम्ये, तत्राप्यपुरुषशेमुषीदोषमषीमालिन्यस्य वेदाख्याक्षरराशेरेव प्रधानतः प्रमाणतया आश्रयणीयत्वे सिद्धे, तत्र च पशुपुत्रवृष्ट्यन्नस्वर्गाद्यैहिकामुष्मिकार्वाचीनफलतत्साधनपरेऽवगते पूर्वभागे, परमपुरुषार्थतत्साधनावबोधके च तदुपरिभागे पूर्वाचार्याभिमतमुक्तिघण्टापथकण्टकायमानविविधकुदृष्टिजनदुर्वचनशतोपप्लुते, तदुपदर्शित[2]कुपथप्रवृत्तिनि जगति च मोमुह्यमाने, तदुज्जिजीवयिषया सदसद्विवेचनचतुरपूर्वाचार्यपरिचितं प्राचीनमेव समीचीनमध्वानं निष्कण्टकीकृत्य परमपुरुषार्थाभ्यर्थिजनसार्थं कृतार्थयितुं भवभयाभितप्तजनभागधेयवैभवभावितावतरणेन परमकारुणिकेन भगवता [3]भाष्यकारेण शारीरकं शास्त्रं व्याचिख्यासितम् । परमर्षिप्रणीतानि व्याख्येयानि; तेषां च महर्षिप्रणीतानि व्याख्यानानि [च] सन्ति चेत्, तान्येवा(व ह्य)नुरोद्धव्यानि ; न ह्यनृषेः सूक्ष्मदर्शित्वम् । ऋषेरभिप्रायमृषिरेव [च] स्वतो वेदितुमर्हति; न तु जडमतिरितरो जनः । ऋषिवचसा(नाना)मेव अभिन्नवक्तृकाणां मिथो विरोधे पूर्वपक्षाभिप्रायवैभववादादिभिरविरोधो नेयः ; भिन्नवक्तृकाणां तु विरोधे दुष्परिहरे युक्तियुक्तं ग्राह्यमिति न दोषः । ये पुनः सन्त्यपि तान्यनादृत्य व्याख्येयान्तराणि व्याख्यानान्तराणि च तद्विरुद्धानि रचयन्ति, तेषामाग्रहगृहीतहृदयत्वे पण्डितमानित्वे पाण्डित्यख्यापनपरत्वे च तत्प्रवृत्तिरेव प्रमाणम् । इतरेषां च व्याख्यातॄणामार्षव्याख्यानातिलङ्घित्वम्, "उपासात्रैविध्यात्", "सर्वत्र प्रसिद्धोपदेशात्", "भूमा संप्रसादादध्युपदेशात्", "दहर उत्तरेभ्यः" इत्यादिषु स्पष्टतरम् । इह तु वृत्त्यनुसारः प्रतिज्ञातः । न च तत्प्रतिज्ञानमहृदयमि[मेवे]ति शङ्कनीयम् ; दुष्परिहरबाधकानुपलम्भात् ।

यद्यपि कर्ममीमांसायाश्च कचित्कचिदर्वाचीनव्याख्यातृभिराकुलत्वमापादितम्, तथापि तत्र प्रयोगमार्गे स्खलनाभावादनुष्ठानमात्राधीनायाः स्वर्गादिफलसिद्धेर्देवतास्वरूपतद्याथात्म्यसत्कार्यत्वादाद्विज्ञाननैरपेक्ष्यम्, परम-

---

1 योजित इति । अस्मद्व्याख्यया प्रतिपाद्यमानः गुरुभ्यः श्रुतोऽर्थः उपदेशकाले तैरिवेहापि तत्प्रयुक्तशब्दयोगं लम्भितः । तच्छब्दानामपि यथार्हं स्ववाक्ये घटनं क्रियत इति यावत् । संकलय्येति । अनेकाध्यापनाऽऽवृत्त्यवसरेषु प्रोक्ता अर्था विभिन्नाः यथार्हं पौर्वापर्यकल्पनयाऽत्र समाह्रियन्त इत्युक्तं भवति ।

2 कुपथेति । नात्र पथिन्शब्दः; कापथेत्यापातात् । किंतु पथशब्द एवाकारान्त इति भावप्रकाशिका । कुशब्दो भूमिवाची सन् अधोलोकपरो वा । अतः कुपथः अधोगतिः । पाठान्तरं मृग्यम् ।

3 भाष्यकारेणेति भाविनीं वृत्तिमाश्रित्य; व्याख्याकारकाले तत्त्वस्य सिद्धत्वाद्वा । भगवद्रामानुजमुनिनेति यावत् ।

श्रीनिवासपरब्रह्मणे नमः

॥ श्रीमते रामानुजाय नमः ॥



श्रीः

श्रीमद्भगवद्रामानुजमुनिविरचितं

# श्रीभाष्यम्

## शारीरकमीमांसाभाष्यम्

अखिलभुवनजन्मस्थेमभङ्गादिलीले विनतविविधभूतव्रातरक्षैकदीक्षे ।
श्रुतिशिरसि विदीप्ते ब्रह्मणि श्रीनिवासे भवतु मम परस्मिन् शेमुषी भक्तिरूपा ॥ १ ॥

---

पुरुषार्थस्य ज्ञानैकसाध्यतया ज्ञानमार्गस्खलनस्याऽऽत्महानिफलकत्वेन तद्विपरीतज्ञानानामवश्यपरिहर्तव्यत्वम्, उत्तरभागे च तत्तदर्थौपयिकतया प्रसक्तानां पूर्वभागार्थानां शिक्षणीयत्वम्, प्रदर्शितयैव दिशा अनुक्तानामपि शिक्षणीयार्थान्तराणां सुकरनिर्वाहत्वं चाभिप्रेत्य ब्रह्मसूत्राण्येव भगवान् भाष्यकारः प्रारभते विवरीतुम् ॥

एवं प्रारिप्सितस्य प्रबन्धस्याविघ्नपरिसमाप्तिप्रचयगमनार्थं स्मृत्याचारसिद्धमिष्टदेवतोपासनरूपं मङ्गलं श्रौतमाचरति–अखिलेत्यादिना श्लोकेन ।

"मङ्गलाचारयुक्तानां नित्यं च प्रयतात्मनाम् । जपतां जुह्वतां चैव विनिपातो न विद्यते ॥" इति हि स्मर्यते[1] । आचर्यते च तत्तत्प्रबन्धृभिः । श्रोतृबुद्धि[मनः]समाधानार्थं शास्त्रार्थसङ्क्षेपश्चार्थतः क्रियते; यथा चोदनासूत्रे[ण] धर्मस्वरूपं प्रमाणञ्च श्रुत्यर्थाभ्यां निरूपितम् । प्रसिद्धं हि श्रोतुः प्रतिपत्तिसौकर्याय वक्तुरर्थप्रतिपादनस्य संक्षेपपूर्वकत्वम्, "इष्टं हि विदुषां लोके समासव्यासधारणम्" इति । शास्त्रार्थसंक्षेपेण वस्तुनिर्देशः, भवत्विति आशीर्वादश्च कृतौ भवतः । विनतेति, भक्तिरूपेति च ब्रह्मणि प्रह्वीभावावगमात् प्रणतिरपि फलिता । 'णमु प्रह्वत्वे' इति हि धातुः । एवं त्रिविधं मङ्गलमाचरितं भवति ।

श्लोकस्य प्रथमपादेन पूर्वस्याध्यायद्विकस्यार्थः संक्षिप्तः; द्वितीयेन तु उत्तरद्विकस्य । कर्ममीमांसायां प्रतिपाद्यभेदेन षट्कभेदवत् अत्रापि विषयविषयिरूपप्रतिपाद्यभेदेन द्विकभेदः । शास्त्रप्रतिपाद्यमुपायोपेयात्मकम् । सिद्धोपाय उपेयश्च ब्रह्म । साध्योपायो भक्तिः । तत्र सप्तम्यन्तैः पदैः सिद्धोपायरूपमुपेयञ्च ब्रह्मोच्यते ।

---

1 स्मर्यत इति । मङ्गलाचारपदमविशेषात् आदर्शदर्शनादिनित्यकर्मणः कायिककार्यारम्भकर्तव्यविष्वक्सेनाराधनादेः वाचिकव्यापारात्मकग्रन्थारम्भकर्तव्यवाचिकदेवतानमस्क्रियादिमङ्गलस्य च वाचकम् । न तु तत्त्वचिन्तामण्युक्तरीत्या आदर्शदर्शनाद्याचारमात्रपरम्; सर्वस्य प्रामाणिकत्वेनानुवादसंभवादिति भावः ।

भवतीति भुवनं कार्यवर्गः। रूढिशक्त्या तत्कारणस्य कुलालादि[तो] व्यावृत्तिः। भुवनशब्दो हि विपुलतरकार्यविशेषे रूढः। अखिलशब्देन सर्वदेशसर्व(सकल)कालवर्तीन्यण्डजातानि विवक्षितानि। तेन ब्रह्मादिव्यावृत्तिः। खिलं नास्तीत्यखिलम्; कार्येषु ब्रह्मणः सृष्ट्यादिव्यापाराविषयभूतं न किञ्चिदस्तीत्यर्थः। अनया व्यतिरेकोक्त्या प्रायिकत्वनिवृत्तिः; "अज्ञातं नास्ति ते किञ्चित्" इतिवत्। अतः सकलमित्यन्वयमुखेनानुक्तिः। अकारोपक्रमत्वसिद्धये निखिलेत्यनुक्तिः। "अ[1] इति भगवतो नारायणस्य प्रथमाभिधानं भगवतो वाचकम् अकारं प्रयुञ्जानेन किं नाम मङ्गलं न कृतम्" इति चाभियुक्तैरभ्यधायि। अत्र भगवद्वाचित्वाविवक्षायामपि भगवद्वाचकत्वशक्तियोगादकारो माङ्गलिकः; "अइउण्" इत्यत्र अकारवत्। नञो निषेधवाचित्वेऽपि निषेध्यवशात् शुभत्वाशुभत्वे। अतः, "निष्प्रत्यूहमुपास्महे" इत्यादिनिर्देशस्येव शुभतरत्वम्; वैकल्यनिषेधेन पौष्कल्यपरत्वात्॥ अखिलशब्देन चिदचिद्भेदोऽप्यभिप्रेतः। जन्म नित्यनैमित्तिकप्राकृतरूपम्। स्थेमा स्थितिः। सा चान्तर्यामि-विष्ण्ववतार-लोकपाल-मन्वादिनृप-मातापित्रादिमुखेन क्रियमाणा बहुविधा विवक्षिता। भङ्गः नित्यनैमित्तिकप्राकृतरूपः। मोक्षस्य लयान्तर्भावेऽपि शाब्द[illegible]न परमप्रयोजनत्वादत्र स नान्तर्भावितः। अत एवाऽऽदिशब्देऽपि नान्तर्भाव्यः; तस्य साधारणतया स्फुटप्रतिपत्तिहेतुत्वाभावात्। पृथगेव हि पूर्वैश्च स्पष्टतरं निर्दिष्टो मोक्षः, "जगदुद्भवस्थितिप्रणाशसंसारविमोचनादयः" इति, "जगज्जन्मस्थितिध्वंसमहानन्दैकहेतवे" इति च। भगवान् भाष्यकारश्च तथा निर्दिशति; यथा वेदार्थसङ्ग्रहे, "उद्भवस्थितिप्रलयसंसारनिवर्तनैकहेतुभूत" इति, भाष्ये च, "निखिलजगदुदयविभवविलयमहानन्दैककारणम्" इति। विनतेत्यादिपदेन स्थेमान्तर्भूतस्वर्गादिसांसारिकफलप्रदत्वस्य पृथगुक्तिरनपेक्षिता। शास्त्रासाधारणस्य परमप्रयोजनस्य मोक्षस्यैव हि पृथगुक्त्यपेक्षा। आदिशब्देन सृष्ट्याद्यौपयिकमन्तःप्रवेशनियमनादि गृह्यते। तथा च भाष्ये स्वयमेव वक्ष्यति, "जगदुत्पत्तिस्थितिसंहारान्तःप्रवेशनियमनादिलीलम्" इति। जन्मस्थेमभङ्गोक्त्यैवान्तःप्रवेशनियमनादेरर्थसिद्धत्वाश्रयणमयुक्तम्। अध्यासपरिणामपक्षयोस्तस्याऽऽर्थत्वाभावेन तद्व्यावृत्त्यर्थं स्वमते पृथग्वक्तव्यत्वात्; शाब्दत्वे संभवति आर्थत्वकल्पनाऽयोगात्, विस्तरेणोक्तस्यार्थस्य संक्षेपोक्तौ विवक्षितत्वोपपत्तेश्च।

लीलाशब्देन भगवतः परिपूर्णत्वानन्यप्रेर्यत्वस्वच्छन्दचेष्टितत्वादिकमभिप्रेतम्। यथोक्तं महाभारते, "अप्रमेयोऽनियोज्यश्च यत्रकामगमो वशी। मोदते भगवान् भूतैर्बालः क्रीडनकैरिव" इति। अप्रमेयत्वं परिपूर्णत्वम्। अनियोज्यत्वमनितरचेतनप्रेर्यत्वम्। यत्रकामगम इत्यनेन वायूदकादिप्रेरणाधीनाबुद्धिपूर्वपरिस्पन्दादिचेष्टाव्यावृत्तिः; स्वेच्छाकृतप्रवृत्तिविघातव्युदासो वा। स्वाधीनलीलोपकरणत्वं वशिशब्दार्थः; विश्वं वशे यस्य स वशी। इन्द्रियपरा(इन्द्रियव्यापारा)धीनचेष्टाव्यावृत्त्यर्थो वा वशिशब्दः, बालदृष्टान्तेन लीलायाः प्रयोजनान्तरनैरपेक्ष्यमभिप्रेतम्। अनेन राज्ञां पणबन्धपूर्वकद्यूतादिव्यावृत्तिः। कार्यवर्गापेक्षया भगवन्महिम्नो विपुलतरत्वं क्रीडनकैरित्यनेन फलितम्॥ ननु प्रयोजकव्यापारो हि लीला।

---

1 अ इति भगवत इति वाक्यं भर्तृहरिग्रन्थस्थम्; ग्रन्थश्च महाभाष्यप्रदीपिका। वाक्यमिदं भाष्ये अथशब्दानुशासनमिति अकारम्, अइउण् इति अकारञ्चाभिप्रैतीत्यपि मन्यन्ते। 'अइउण् इत्यत्राकारवत्' इति समनन्तरवाक्यमत्र टीकायामक्षरसमाम्नाय-अकारग्रहणबाधकमिव।

अतो भङ्गस्य[1] लीलात्वे युक्तेऽपि कथं प्रयोज्यव्यापारभूतयोर्जन्मस्थित्योर्लीलात्वम्? ॥ उच्यते । "बहु स्यां प्रजायेय" इति हि श्रुतिः । अतः प्रयोजकव्यापारवत् प्रयोज्यव्यापारस्य च लीलात्वकथनेनोपादानत्वं फलितम् । लीलाशब्देन निमित्तत्वं च । भङ्गादीत्यन्तेन प्रथमाध्यायार्थः संक्षिप्तः । अवाप्तसमस्तकामस्य व्यापारानुपपत्तिं परिहरता लीलाशब्देन विरोधपरिहारपरद्वितीयलक्षणार्थः सूचितः ।

एवं पूर्वद्विकोक्तं कारणत्वरूपं परत्वं संक्षिप्तम् । तस्यैव (परस्य ब्रह्मणः) समाश्रयणीयताप्रतिपत्त्यर्थमुत्तरद्विकोक्तमभिगम्यत्व-मोक्षप्रदत्वलक्षणं सौलभ्यं सङ्क्षिप्यते—विनतेत्यादिपदेन । केवलं पर(प्रकृष्ट)त्वं केवलं सौलभ्यं च कनकाचललोष्टशकलयोरिव न समाश्रणीयत्वाय कल्पत इति तदुभयव्यावृत्त्यर्थमिदं पदद्वयम् । विशेषेण नताः प्रह्वीभूताः विनताः । न्यासोपासनात्मकाशेषविद्याविशेषनिष्ठाः सर्वे विवक्षिताः । वैविध्यं च, "तदुपर्यपि बादरायणः", "ऊर्ध्वरेतःसु च" इत्यादिना वक्ष्यमाणदेवत्वमनुष्यत्ववर्णाश्रम[मादि]भेदेन जन्मवृत्तगुणैश्च(जन्मगुणवृत्तभेदेन च)अभिप्रेतम् । भगवज्ज्ञानेन लब्धसत्ताकत्वं भूतशब्दार्थः । "अस्ति ब्रह्मेति चेद्वेद सन्तमेनं ततो विदुः" इति हि श्रुतिः । लब्धस्वरूपाणाञ्च, "तेषामेवानुकम्पार्थमहमज्ञानजं तमः । नाशयाम्यात्मभावस्थः", "ददामि बुद्धियोगं तम्", "अहं स्मरामि मद्भक्तम्" इत्याद्युक्तप्रकारेण साक्षात्कारविरोधिनिवर्तनादिकं हि भगवत एव भर इति, न स्वरूपप्रच्युतिसम्भवः । भूतसंबन्धी व्रातो भूतव्रातः । संश्रितसंबन्धिनोऽपि तत एव कारणाद् भगवता रक्ष्या इत्यभिप्रायः । यथा, "आस्फोटयन्ति पितरः प्रनृत्यन्ति पितामहाः । वैष्णवो नः कुले जातः स नः संतारयिष्यति" इति, "पशुर्मनुष्यः पक्षी वा ये च वैष्णवसंश्रयाः । तेनैव ते प्रयास्यन्ति तद्विष्णोः परमं पदम्" इति च ॥ ननु षष्ठ्यन्तनिर्दिष्टानतिरिक्तविषयः समुदायशब्दः, यथा 'ब्राह्मणसमाजः' इति ॥ नैवम्; राजपरिषदित्यादिष्वतिरिक्तस्यापि दर्शनात्; समासान्तर्गतायाः षष्ठ्याः सम्बन्धमात्रविषयत्वात्; षष्ठ्यन्तनिर्दिष्टानतिरिक्तत्वनियमस्यानुशासनाभावाच्च । समुदायशब्दे श्रुते, 'समुदायिनः के' इत्यपेक्षायां संनिहितशब्दवाच्यनिष्ठः समुदायः शीघ्रं प्रतीयत इति, ब्राह्मणसमूह(मुदाय) इत्यादिष्वनतिरेकप्रतीतिः । राजपरिषदित्यादिष्वतिरिक्तस्यापि दर्शनात् तत्तत्समुदायि[य]ग्राहकप्रमाणानुरोधेनार्थवर्णनं युक्तम्—इति यथोक्त एवार्थः । एवं च सति व्रातशब्दप्रयोगस्यार्थवत्त्वं स्यात् ॥ इष्टप्रापणपर्यन्तानिष्टनिवारणलक्षणा रक्षा । तस्यामेकदीक्षः प्रधानदीक्षः । दीक्षा सङ्कल्पः । स्वसत्ताया अपि संश्रितरक्षासङ्कल्पनिर्वर्तनस्यात्यन्ताभिमतत्वं प्राधान्यम् । "अप्यहं जीवितं जह्याम्" इति ह्युक्तम् । "काममात्मानं भार्यां पुत्रं वोपरुन्ध्यात्; न त्वेव दासकर्मकरम्" इति चाऽऽपस्तम्बः । ईदृशीयं स्मृतिर्यस्याऽऽज्ञा, तस्यापि तथानुष्ठानस्याभिमततरत्वम्, "अप्यहं जीवितं जह्याम्" इत्यनेनावगम्यते । दीक्षायाः प्राधान्येन रक्षाप्राधान्यं फलितम् । दीक्षाशब्देनाश्रितसंरक्षणस्य स्वप्रयोजनत्वं दर्शितम् । व्रतभ्रंशसमाप्त्योरनर्थ-अभ्युदयफलत्वं हि व्रतिन एव । संश्रितरक्षणं च तद्व्रतम्; यथा, "ददाम्येतद् व्रतं मम" इति । विनत-रक्षाशब्दाभ्यां तृतीयचतुर्थाध्यायार्थौ संक्षिप्तौ ।

---

1 भङ्गस्येति । भञ्जो आमर्दने । भङ्गो नाशनं प्रयोजकव्यापार एव । भङ्गो लय इत्युक्तिस्तु फलमात्रविवक्षया ।

एवं जगत्कारणत्वमोक्षप्रदत्वे कथिते । एते हि राज्ञः छत्रचामरवद् ब्रह्मणोऽसाधारणं चिह्नम् । परत्वसौलभ्ये च संश्रयणीयतानिमित्ततयाऽवगते, यथा "य एनं विदुरमृतास्ते भवन्ति" इत्युपक्रम्य, "सं बाहुभ्यां नमति सं पतत्रैर्द्यावापृथिवी जनयन् देव एकः" इति, "सर्वलोकमहेश्वरम् । सुहृदं सर्वभूतानां ज्ञात्वा मां शान्तिमृच्छति" इति च ॥

प्रमेयशरीरं साधीयः, यदि प्रमाणमुपलभामहे इत्यपेक्षायां द्विकद्वयशेषभूतचतुःसूत्र्यर्थं वदन् प्रमेयानुरूपं प्रमाणं दर्शयति—श्रुतिशिरसि विदीप्ते इति । श्रूयते नित्यमिति श्रुतिः । अनेनापौरुषेयत्वान्निर्दोषत्वं विवक्षितम् । अत एव पूर्वमीमांसान्यायानां प्रामाण्याद्युपयोगिनामत्रोपजीव्यत्वं सूचितम्, शिरःशब्देनानन्यपरत्वं विवक्षितम् । परतत्त्वप्रधानाः मन्त्रब्राह्मणभागा ह्युपनिषदः । विदीप्ते । पूर्वभागेऽपि अग्नीन्द्रादिरूपतया ब्रह्मण एव प्रतिपाद्यत्वम्, "तदेवाग्निस्तद्वायुः" इत्यादिनोपनिषद्वाक्येनैव ज्ञायत इति विशेषेण दीप्तं विदीप्तम् । यद्वा क्षुद्रसुखसाधनभूतदुःखात्मकप्रवृत्तिनिवृत्तिरूपं प्रयोजनं पूर्वभागे दीप्तम्; ब्रह्म तु स्वयं निरतिशयानन्दरूपतया परमपुरुषार्थभूतमुपरितनभागे विशेषेण दीप्तमिति भावः । अनेन समन्वयाधिकरणार्थः सूचितः । तत्पूर्वाधिकरणत्रयार्थश्चात्र द्योतितो भवति; व्युत्पत्ति-लक्षणसौष्ठवाभावे श्रुतिशिरोवेद्यत्वायोगात्; श्रुतिशिरःशब्दस्य प्रमाणान्तरव्यावर्तकत्वाच्च । ब्रह्मणीति सामान्यपदमौपनिषदानां सद्ब्रह्मात्मादिसामान्यशब्दानां प्रदर्शनार्थम् । श्रीनिवास इति विशेषपदं नारायणादिविशेषशब्दानां प्रदर्शनार्थम् । "पशुना यजेत", "छागस्य वपाया मेदसः" इत्यत्र, "छागो वा मन्त्रवर्णात्" इति (पू. मी. 6. 8. 31.) सूत्रोक्तन्यायेन पशुशब्दस्य छागशब्दपर्यवसायित्वनिर्णयात् सामान्यवाचिपदानां विशेषपदे सति तत्पर्यवसायित्वात् सद्ब्रह्मादिसामान्यशब्दानां नारायण एव विशेषे पर्यवसानं सूचितम् । श्रीनिवासशब्दस्यावयवशक्त्या नित्यविभूतिमत्त्वं सूचितम् । रूढिशक्त्या त्रिमूर्तिसाम्यं, तदैक्यं, ब्रह्मणस्तदुत्तीर्णत्वं च निषिद्धम्; 'ईश्वर एव ब्रह्म; स त्रिमूर्त्यतिरिक्तः सदाशिवः; ब्रह्मादयस्त्रयोऽप्यनीश्वराः' इति पक्षश्च व्युदस्तः ।

परस्मिन्निति "परमतः सेतून्मान" इत्यधिकरणार्थः सूचितः । तेनैवोपेयान्तरव्यावृत्तिः । 'ब्रह्मविदाप्नोति परम्' इत्यत्र प्राप्यस्य परशब्देनाभिधानात् । यद्वा कारणत्वशङ्कितदोषव्युदासाय, "न स्थानतोऽपि परस्य" इत्यधिकरणसिद्धं शोधकवाक्योक्तमुभयलिङ्गतया वैलक्षण्यं सूचितम् । अथोपायोपेयात्मके प्रतिपाद्ये विनतपदसूचितमुपायस्वरूपं वदति—शेमुषीति । अयं सामान्यशब्दः, भक्तिरूपेति विशेषशब्दः । अत्रापि छागो वा मन्त्रवर्णादिति न्यायोऽभिप्रेतः । शेमुषीशब्दोपादानेन ज्ञानकर्मसमुच्चय[मत]व्यावृत्तिः । भक्तिरूपेति वाक्यार्थज्ञानव्यावृत्तिः । "शुद्धभावं गतो भक्त्या शास्त्राद्वेद्मि जनार्दनम्", "भक्त्या त्वनन्यया ........ज्ञातुं द्रष्टुं च तत्त्वेन प्रवेष्टुं च" इत्युक्तप्रकारेण ज्ञानदर्शनप्राप्तिसाधनभूता [1]भक्तिरप्यत्र विवक्षिता; अविशेषेण भक्तिरूपेत्युक्तत्वात् । "अहमस्म्यपराधानामालयः" इत्याद्युक्तप्रकारेण स्वात्मानमनुसन्धायाह

1 भक्तिरपीति । अपिशब्दः तत्तद्विषयभक्तिसमुच्चायकः । ज्ञानदर्शनप्राप्तिविषया भक्तिश्च स्नेहपूर्वकोत्तरोत्तरतत्तल्लिप्सातिशयः ।

पाराशर्यवचस्सुधामुपनिषद्दुग्धाब्धिमध्योद्धृताम् संसाराग्निविदीपनव्यपगतप्राणात्मसञ्जीवनीम् ।
पूर्वाचार्यसुरक्षितां बहुमतिव्याघातदूरस्थितामानीतां तु निजाक्षरैः सुमनसो भौमाः पिबन्त्वन्वहम् ॥

ममेति । भवत्विति भक्तेरेव स्वादुतमतया प्रार्थनीयता सूचिता । यद्वा—न हि भक्तिः सर्वेभ्योपि स्वदते इत्यत्राह—ममेति । मम-प्रतिबन्धकपापरहितस्य । शान्तपित्तस्य हि क्षीरे(र)स्वादुतमताबुद्धिरिति भावः । रक्षैकदीक्षे परस्मिन्नित्यन्तैः सप्तम्यन्तैः पदैरुपेयभूत एव सिद्धोपाय उक्तः । भक्तिरूपेति साध्योपायः ॥

अत्र श्लोके शास्त्रप्रतिपाद्यैकदेशभूतः परपक्षप्रतिक्षेपश्चार्थतः(र्थात्) सूचितो भवति । जन्मस्थेमभङ्गादि-शब्देन युगपत्सर्गादिकमनभ्युपगच्छन्तो भाट्टप्राभाकरा व्यावर्तिताः । लीलाशब्देन साक्षिमात्रेश्वरवादिहैरण्य-गर्भव्युदासः । विनतेत्यादिपदेन जीवानां परस्परम्, ब्रह्मणा च भेदमनभ्युपयन्तो ब्रह्माज्ञानवादिनोऽपास्ताः, श्रुतिशिरसीत्यनेन वेदबाह्यचार्वाकबौद्धार्हतनिरासः; तेनैव पदेनानुमानिकेश्वरवादिनो व्युदस्ताः । ब्रह्मणी-त्यनेनाब्रह्मात्मकप्रधानपरमाणुकारणवादिसाङ्ख्यवैशेषिकादिव्युदासः । श्रीनिवासशब्देन पाशुपतादिव्युदासः । अनेनैवेश्वरोत्तीर्णब्रह्मवादिनो [भेदाभेदवादिनो] व्युदस्ताः । शेमुषीशब्देन ज्ञानकर्मसमुच्चयोपायवादिव्युदासः । भक्तिरूपेति वाक्यार्थज्ञानमात्रोपायवादिव्युदास इत्येवमनुसन्धेयम् ॥

श्रुतेरेवोपायोपेयावगतौ सत्यां किं भवतो वक्तव्यमित्यत्राह-पाराशर्येति । प्रथमश्लोकेन स्वप्रबन्धस्य परमप्रयोजनतया सिद्धरूपः परमविषयो दर्शितः; साध्यरूपं च रक्षापदेनातिसंक्षिप्तम् । अथ द्वितीयेन श्लोकेन स्वप्रबन्धस्यावान्तरविषयः परम्परया ब्रह्मविषयत्वं स्वप्रबन्धं प्रति सम्यग्ज्ञानस्याव्यवहितावान्तरप्र-योजनत्वं परम्परया मुक्तेः परमप्रयोजनत्वं स्वव्याख्येयस्य प्रमाणमूलताकथनेन व्याख्येयान्तराणामप्रमाणमूलकता स्वव्याख्येयविषयभाष्यान्तरव्यावृत्त्यर्थं स्वोक्तार्थस्य (स्वप्रबन्धस्य) साम्प्रदायिकत्वमित्यादि श्रौतमुच्यते; स्तुत्यात्म-कगुरूपासनरूपमङ्गलाचारश्चार्थतः क्रियते । "जायमानं हि पुरुषं यं पश्येन्मधुसूदनः", "तद्विद्धि प्रणिपातेन", "ददामि बुद्धियोगं तम्"इत्यादिभिराचार्योपसत्तेरपि भगवत्कटाक्षहेतुकत्वावगमात् परदेवतोपासना-नन्तरभावित्वं गुरूपासनस्य युक्तम् । तथा च श्रुतिः, "यस्य देवे परा भक्तिर्यथा देवे तथा गुरौ" इति । पूर्वैरपि तथाऽऽचरितम् । यथा भगवता वैशम्पायनेन, "नमस्कृत्य हृषीकेशम्", "नमो भगवते तस्मै व्यासाय" इति । यथा च द्रमिडाचार्यैः,[1] "नमःप्रवरगुणैकास्पदाय स्थिरत्रसकुलबीजकुम्भभूताय भुवनकोशस्य गोप्त्रे ब्रह्मणे । नमो जैमिनये वेदरहस्यसम्पुटनिगूढविस्फारयित्रे न्यायप्रज्वलितचेतसे । नमोऽस्त्वाचार्येभ्यः" इति । पाश्चात्यैश्च, "विशुद्धज्ञानदेहाय", "अभिवन्द्य गुरूनादौ" इति, "प्रणम्य हेतुमीश्वरं मुनिं कणादमन्वतः" इति च ।

पाराशर्यशब्देन जन्मोत्कर्षः "स होवाच व्यासः पाराशर्यः" इति श्रुतिप्रसिद्धः, तस्यैव बादरायणसंज्ञत्वं च विवक्षितम् । यथोक्तम् महर्षिणैव, "द्वीपे बदरिकामिश्रे बादरायणमच्युतम् । पराशरात् सत्यवती पुत्रं लेभे परन्तपम्[2]" इति । यद्यपि ऋष्यन्तरेऽपि बादरायणशब्दप्रयोगः, तथापि सूत्रकृद्विषयो बादरायणशब्दः पाराशर्यगोचर एव । तथाच स्कान्दे व्यक्तमुक्तम —

1 नेदं द्रमिडाचार्यवाक्यमित्यसूयुवचनमर्वाचीनाशुद्धग्रन्थान्तरतालदर्शनादिमूलकमश्रद्धेयम् ।
2 परंतपमिति । पितुः पराशरत्ववत् पुत्रस्य परंतपत्वमपि, सर्वमतनिरासात् ।

## द्वितीयश्लोकार्थः

"नारायणात् विनिष्पन्नं ज्ञानं कृतयुगे स्थितम् । किंचित् तदन्यथा भू(जा)तं त्रेतायां द्वापरेऽखिलम् ॥
गौतमस्य ऋषेः शापात् ज्ञाने त्वज्ञानतां गते । सङ्कीर्णबुद्धयो देवाः ब्रह्मरुद्रपुरःसराः ॥
शरण्यं शरणं जग्मुर्नारायणमनामयम् । तैर्विज्ञापितकार्यस्तु भगवान् पुरुषोत्तमः ॥
अवतीर्णो महायोगी सत्यवत्यां पराशरात् । उत्सन्नान् भगवान् वेदान् उज्जहार हरिः स्वयम् ॥
चतुर्धा व्यभजत् तांश्च चतुर्विंशतिधा पुनः । शतधा चैकधा चैव तथैव च सहस्रधा ॥
कृष्णो द्वादशधा चैव पुनस्तस्यार्थवित्तये । चकार ब्रह्मसूत्राणि येषां सूत्रत्वमञ्जसा ॥
अल्पाक्षरमसन्दिग्धं सारवत् विश्वतोमुखम् । अस्तोभमनवद्यं च सूत्रं सूत्रविदो विदुः ॥
निर्विशेषितसूत्रत्वं ब्रह्मसूत्रस्य चाप्यतः । सविशेषाणि सूत्राणि ह्यपराणि विदो विदुः ॥
मुख्यस्य निर्विशेषेण शब्दोऽन्येषां विशेषतः । इति वेदविदः प्राहुः शब्दतत्त्वार्थवेदिनः ॥
एवंविधानि सूत्राणि कृत्वा व्यासो महायशाः । ब्रह्मरुद्रादिदेवेषु मनुष्यपितृपक्षिषु ॥
ज्ञानं संस्थाप्य भगवान् क्रीडते परमेश्वरः ॥" इत्यादिना ।

वचस्सुधाम् । वचश्शब्दस्य अर्थे तात्पर्यम्; यथा 'वेदवित्', 'शास्त्रवित्' इत्यादौ वेदादिशब्दानाम् । अर्थाभिधायकं हि वाक्यम । वचसः सुधामिति केचिदाचार्याः । [1]रूपकप्रकरणात्, सुधाशब्दलक्षणाभयाच्च सुधेव वच इति, "उपमितं व्याघ्रादिभिः" इत्यादि[ना]समासमपरे आचार्या आद्रियन्ते । सुधाशब्देन भोग्यत्वमभिप्रेतम् । एवमवान्तरविषय उक्तः । तर्हि कथं ब्रह्मणो विषयत्वमिति शङ्कायां सद्वारकं ब्रह्म[णो]-विषयत्वमित्याह— उपनिषदिति । ब्रह्मण्युपनिषण्णेति उपनिषत् । "उपनिषण्णत्वाद्वोपनिषत्" इति हि वाक्यम् । "गहने ह्रीयं विद्या संनिविष्टा" इति तद्विषयं द्रमिडभाष्यम् । "गहने ब्रह्मण्युपनिषण्णा" इति भाष्यविषया वामनटीका । अद्वारकभगवत्प्रतिपादकत्वम् उपनिषण्णत्वम् । दुग्धशब्देन पूर्वभागादप्युपनिषदः सारत्वं विवक्षितम् । यथा, "आरण्यकं च वेदेभ्यः ओषधीभ्यो यथाऽमृतम्" इति । अब्धिशब्देन आलोचितानामुपनिषदामानन्त्यादि सूचितम् । मध्यशब्देन सर्ववाक्यानां मुख्यार्थापरित्यागोऽभिप्रेतः; मध्यस्य सर्वपर्यन्तदेशापेक्षया तुल्या ह्यासत्तिः । उद्धृतशब्देनातिनिम्नदेशनिमग्नोद्धर(द्ग्रह)णमप्यभिदधता निश्शेषार्थग्रहणं सूच्यते । स्वप्रबन्धस्यावान्तरविषयः पाराशर्यसूत्रम्, तस्यावान्तरविषयः उपनिषत्, तद्विषयभूतं ब्रह्मेति परम्परया ब्रह्मणः प्रतिपाद्यत्वम् । बादरायणसूत्राणामुपनिषन्मूलकत्वकथनेन सांख्यादिग्रन्थानामप्रमाणमूलत्वात् तदनादरेणैतद्व्याख्यानमिति सूचितम् ।

प्रणाड्या शास्त्रजन्यं परमप्रयोजनमाह–संसारेति । संसाराग्निशब्देन संसारस्य कार्त्स्न्येन तापत्रयरूपता विवक्षिता । यथा, "स्वर्गेपि पातभीतस्य क्षयिष्णोर्नास्ति निर्वृतिः" इति । दीपनशब्देनासङ्कोचात् सदाभिज्वलनवाचिना, विद्यालब्धेः पूर्वं कदाचिदप्यनिर्वाप्यत्वमभिप्रेतम् । वैविध्यम् आध्यात्मिकादिरूपेण, तेषु त्रिष्वेकैकस्यापि शारीरमानसादिरूपेण च । आत्मनां प्राणः परमात्मा । "सर्वाणि ह वा इमानि भूतानि प्राणमेवाभिसंविशन्ति" "को ह्येवान्यात् कः प्राण्यात्" इत्यादिश्रुतेः । गतशब्देन तद्लाभः,

---

1 रूपकेति । अत्र वक्तव्यं भावप्रकाशिकाभूमिकायामप्यस्मदीयायां द्रष्टव्यम् ।

**भगवद्बोधायनकृतां विस्तीर्णां ब्रह्मसूत्रवृत्तिं पूर्वाचार्याः संचिक्षिपुः। तन्मतानुसारेण सूत्राक्षराणि व्याख्यास्यन्ते।**

उपसर्गाभ्यां तस्यानादित्वं विविधत्वं च विवक्षितम्। ज्ञानदर्शनप्राप्तिष्वन्यतमस्याप्यभावादलाभस्य वैविध्यम्। **सञ्जीवनीमिति**। जीवनमुज्जीवनम् - संसारोन्मोच (न्मूल) नम्। समिति कैवल्यव्यावृत्तिः[1]।

अथ सांप्रदायिकत्वमाह-**पूर्वाचार्येति**। पूर्वशब्देन शङ्करार्वाचीनव्यावृत्तिः। **सुरक्षिताम्**; नोपदेशमात्रेण; ग्रन्थरूपेण चेति भावः। [2]पूर्वाचार्यग्रन्थैरर्थस्वरूपं प्रतिपन्नं चेत्, किं भवतः कृत्यमित्यत्राह **बहुमतीति**। बह्वयो मतयः; बहूनां मतयो वा। तासां परस्परव्याघातेन, ताभिः समीचीनार्थव्याघातेन चार्वाचीनजनैर्दुरवगम(गाह)त्वमाह-**दूरस्थितामिति**। न यथावदप्रतीतिमात्रम्, अन्यथा च प्रतिपत्तिरासीदिति भावः। सूत्राद्यवान्तरविषयस्य विषयी स्वग्रन्थ इति न पूर्वं कण्ठोक्तम्; तदाह--**आनीतामिति**[3]। सुधापक्षे **निजाक्षरैः**—गायत्र्यवयवभूतैरमृताक्षरैरिति यावत्। अतो ममाक्षरैरित्यनुक्तिः। **सुमनसः** "सारासारविवेकज्ञाः" इत्युक्ताः। अनेनासदपरिग्रहो न दोषायेत्युक्तं भवति। देवादीनां वृत्तिकारग्रन्थादिभिः सुगमत्वात् **भौमा** इत्युक्तम्। **पिबन्त्वन्वहमिति**। रस्यतातिशयान्न तृप्तिकरीति भावः। फलान्तराद् भगवत्प्राप्त्युपाय एव हि स्वादुतमः। यथोक्तम्, "क्व नाकपृष्ठगमनं पुनरावृत्तिलक्षणम्। क्व जपो वासुदेवेति मुक्तिबीजमनुत्तमम्" इति। यद्वा गभीरत्वादन्वहं शीलनीयेति भावः।

तर्हि पुरातनग्रन्था एव वाचयितव्याः; किमपूर्वग्रन्थनिर्माण—तत्प्रवर्तनयत्नगौरवेणेति शङ्कायामाह **भगवदिति**। भगवच्छब्देन शङ्करादिवत् अनाप्तत्वं नास्तीत्यभिप्रेतम्। **बोधायन**शब्देन **पूर्वाचार्य**शब्दोऽप्यर्थाद्विवृतः। **विस्तीर्णां....सञ्चिक्षिपुरिति**। अनेन वृत्त्यादीनामत्रत्येष्वद्यतनजनेष्वकार्यकरत्वं सूचितम्। बोधायनेन ह्यतिविस्तीर्णा वृत्तिः कृता; द्रमिडभाष्यकारादयो हि परपक्षप्रतिक्षेपाद्यनादरेणातिसंक्षिप्तान् ग्रन्थान् अरचयन्; अतिविस्तीर्णातिसंकुचितग्रन्थानां साफल्यमायुष्मद्बुद्धिमज्जनप्रचुरेषु देशकालान्तरेष्वेव भवति; न हीदानीन्तनपुरुषाणां सर्वेषां शतायुष्ट्वं यावज्जीवं ग्रन्थपरिश्रमः सहजधीविशेषाश्च सन्ति; तस्मात् परमतनिरासाद्यर्थम्, अनतिविस्तरतया सुग्रहत्वार्थं च सूत्रं व्याख्यातव्यमिति यावत्। **तन्मतानुसारेण**; न तु स्वोत्प्रेक्षितमतान्तरेण। **सूत्राक्षराणि**। सूत्रपदानां प्रकृतिप्रत्ययविभागानुगुणं वदामः; न तु स्वोत्प्रेक्षितार्थेषु सूत्राणि यथाकथञ्चिद्योजयितव्यानीति भावः। **व्याख्यास्यन्ते**। व्याङ्भ्यामुपसर्गाभ्यामपेक्षितविस्तरानपेक्षितसंक्षेपौ द्योतितौ।

---

1 समितिकैवल्यव्यावृत्तिरिति। व्यपगतप्राणेत्यत्र वि-अपेत्युपसर्गद्वयविशिष्टगतशब्देन प्राणस्य प्राप्तिः दर्शनं ज्ञानमिति त्रयमप्यादितो नास्तीति बोध्यते। संसारो नाम वैषयिकभोगार्थोच्चनीचलोकसंचारः कर्म च। तत्कृतः प्राणव्यपगमश्च स्वात्मपरमात्मोभयानुभवराहित्यम्। प्राणौ परजीवौ। तत्रैकांशप्राप्तिरूपप्राणसंगमो जीवनम्। तत् कैवल्यम्। उभयप्राप्तिर्मोक्ष इति। प्राणशब्दस्य परमात्मपरत्वं प्रागुक्तम्। न तस्य जीवव्यवच्छेदे तात्पर्यम्; किंतु प्राणवायुपरत्वव्युदास एव। भूमविद्यादौ प्राणशब्दो जीवपरतया प्रसिद्धः। तद्विशिष्टपरमात्मग्रहणमिह। यद्वा अननं वैषयिकभोगः; प्राणनं कःप्राण्यादित्युक्तो जीवपरानुभवः। तत्प्रदत्वाकारेण पर इह प्राणशब्दविवक्षितः। संसारोन्मोकरूपश्चाभावः जीवपरमात्मान्यतरानुभवविशेष एव। कैवल्यनित्यत्वानित्यत्वचिन्ता तु प्रकृतग्रन्थबाह्या। 2 पूर्वाचार्याः श्रीभगवद्यामुनेयादिग्रन्थदर्शिताः इति तत्त्वटीका। 3 श्लोकस्थतुशब्दार्थो भाष्यार्थदर्पणे।

## अथातो ब्रह्मजिज्ञासा ॥ १-१-१.

अत्रायमथशब्द आनन्तर्ये भवति ;

ननु, "सूत्रार्थो वर्ण्यते यत्र वाक्यैः सूत्रानुकारिभिः । स्वपदानि च वर्ण्यन्ते भाष्यं भाष्यविदो विदुः" इति हि भाष्यलक्षणम् । अतः सूत्रव्याख्यानरूपत्वाभावादखिलेत्यादिकं न भाष्यान्तर्भावीति चेन्न—सूत्रतात्पर्यार्थपरत्वात् भाष्यान्तर्भाव्येव । सूत्रतात्पर्यार्थपरत्वं च श्लोकव्याख्याने स्पष्टम् । किञ्च मङ्गलाचरणं प्रारिप्सितग्रन्थाविघ्नपरिसमाप्त्याद्यर्थतया तदुपयोगीति तदन्तर्भाव्येव ॥ शाबरशाङ्करादिभाष्येषु नमस्कारादर्शनादत्र नमस्कारकथनमयुक्तमिति चेन्न; "नमः प्रवरगुणैकास्पदाय" इति द्रमिडभाष्ये देवतागुरुनमस्कारश्रवणात् । शाबरशाङ्करयोस्तु ईश्वरानभ्युपगमात् जीवब्रह्मभेदानभ्युपगमाच्च नमस्यानादरः । अत्र तु सिद्धान्तानुरूप्यात् नमस्या अत्यन्तोपपन्ना । शाङ्करग्रन्थोपक्रमे च व्याख्यातृभिर्नमस्कारायभावात् कुग्रन्थत्वमाशङ्क्य, युष्मदित्यादिग्रन्थेन प्रत्यगर्थानुसन्धानेनार्थान्मङ्गलाचारः कृतः इति परिहृतम् ।

**अथातो ब्रह्मजिज्ञासा** । पूर्वं पदानि व्याचिख्यासुः प्रथममथशब्दं व्याचष्टे— **अत्रायमथशब्द आनन्तर्ये भवति** इति । "पदच्छेदः पदार्थोक्तिर्विग्रहो वाक्ययोजना । आक्षेपस्य समाधानं व्याख्यानं पञ्चलक्षणम्" इति हि व्याख्यानप्रकारः ॥

ननु नैतौ **अथातः**शब्दौ व्याख्येयौ ; प्रयोजनाभावात् । अज्ञान-संशय-विपर्ययनिवृत्त्यर्थं हि व्याख्यानम् । न तावदत्राज्ञानम् ; आनन्तर्ये, प्रकृतस्य हेतुभावे च तयोः प्रसिद्धत्वात् । नापि संशयः, अर्थान्तरेषु सत्स्वपि तयोरुक्तार्थपरत्वेन प्रसिद्धिप्राचुर्यात् । न हि गोशब्दं शृण्वतः सास्नादिमति संशयो जायते । अत एव विपर्ययोऽपि दूरोत्सारित इति ॥ अत्र ब्रूमः । आनन्तर्य-वृत्तहेतुभावपरत्वनिर्णयस्य पूर्ववृत्तविशेषावगमसापेक्षत्वात् तदप्रतिपत्त्या प्रसिद्धिप्राचुर्यस्य सापवादत्वात् । अथशब्दस्याधिकारादिषु, एतच्छब्दस्य च 'एतदुक्तं भवती'त्यादिषु वक्ष्यमाणेऽर्थे, तसेश्च सर्वविभक्त्यर्थवाचिनः 'इत' इत्यादिषु पञ्चम्यर्थव्यतिरिक्तेऽर्थे[च] प्रयोगदर्शनात् संशयविपर्ययौ स्यातामिति तन्निरासायाथातःशब्दव्याख्यानं युक्तम् (मिति) । अतस्तौ व्याख्यायेते ।

अत्र[1] तावत् अथशब्दस्याधिकारार्थत्वमयुक्तम् । अधिकारो हि प्रस्तावः । ब्रह्मजिज्ञासा प्रस्तूयत इति वचो मन्दप्रयोजनम्; प्रारभ्यत इत्युक्तिं विनापि, प्रारम्भादेव प्रारभ्यमाणत्वावगमात् । उच्यमानं हि वचनम्, ब्रवीमीत्युक्तिमन्तरेणापि सन्निहितपुरुषेण, उच्यत इत्येवावगम्यते ; न तु नोच्यत इति । प्रस्तोतव्यत्वमुच्यत इति चेत्—तदानीमपि न्यायप्रतिपादकस्य सूत्रस्योपदेशाऽऽज्ञापनपरत्वाभावात् युक्तितः प्रारम्भयोग्येत्यर्थः स्यात् । योग्यत्वमशाब्दम् ॥ नन्वध्याहारेण योजना स्यात् । आनन्तर्यपक्षेऽपि कर्तव्येति ह्यध्याहर्तव्यमिति चेन्न—अधिकारार्थत्वपक्षे अध्याहृतस्यापि पदस्यान्वयदौर्घट्यात् । यथा, 'च योग्या' इत्युक्ते

---

1 अथशब्दस्य आरम्भ-मङ्गल-अर्थान्तरत्व-प्रश्न-कार्त्स्न्य-आनन्तर्यरूपार्थषट्कम् , 'मङ्गलानन्तरारम्भ-प्रश्नकार्त्स्न्येषु अथो अथ', 'अथैष विश्वज्योतिः' इति कोश-प्रयोगादिसिद्धम् । तत्र आनन्तर्यातिरिक्तस्यार्थस्य प्रकृतेऽनन्वयं दर्शयति अत्रेत्यादिना ।

समुच्चेतुं योग्येत्यर्थो न शक्याभिधानः, एवम् 'अथ योग्या' इत्युक्तेऽप्यधिकर्तुं योग्येत्यभिधानं हि न शक्यम् । अत एव हि महाभाष्ये, "शब्दानुशासनं नाम शास्त्रमधिकृतं वेदितव्यम्" इत्युक्तम्; न त्वधिकर्तुं योग्यमिति । [1]अधिकृतमित्यपि फलितार्थकथनम् । न तु वाचनिकोक्तिः; चादीनां द्योतकत्वात् । अत्र त्वधिकृतमित्यर्थपरत्वे वैयर्थ्यमित्यु(र्थ्यमु)क्तम् । शब्दानुशासनोपक्रमे त्वधिकारार्थत्वमगत्याऽऽश्रितम् । न ह्युपनीतेन वेदमधीयानेनाध्येतव्यस्य तदङ्गभूतस्य व्याकरणस्यासाधारणो वृत्तविशेषः संभवति । इह तु प्रयोजनवदर्थान्तरसंभवादधिकारार्थत्वाश्रयणमयुक्तम् । आनन्तर्यपरत्वे प्रयोजनवत्त्वं च वक्ष्यते ।

मङ्गलं तु नाथशब्दवाच्यम्; अपि तु शङ्खस्वनादिवत् श्रूयमाणोऽथशब्दो मङ्गलावह इति [2]ओङ्कारस्येवार्थान्तरपरत्वेऽपि मङ्गलं सिद्ध्यति । ओङ्कारतुल्यो ह्यथशब्दः स्मर्यते, "ओङ्कारश्चाथशब्दश्च द्वावेतौ ब्रह्मणः पुरा । कण्ठं भित्त्वा विनिर्यातौ तस्मान्माङ्गलिकावुभौ" इति । मङ्गलवाचित्वाभ्युपगमेऽपि मङ्गलरूपा ब्रह्मजिज्ञासेति ब्रह्मजिज्ञासा स्तुता स्यात् । ततश्च सूत्रस्यार्थवादता स्यात्, न तु न्यायनिबन्धनत्वम् । जिज्ञासाविशेषणत्वाभावे मङ्गलं भवतीति वाक्यभेदः स्यात् ।

प्रकृतादर्थादर्थान्तरपरत्वं चायुक्तम् । तद्धि प्रकृतमपेक्ष्य वक्ष्यमाणस्यार्थान्तरत्वज्ञापनम् । तच्च कल्पान्तरोपन्यासविवक्षायामेव दृष्टम् । अत्र तु कल्पान्तरोपन्यासाभावात् तदनुपपन्नम् ।

प्रश्नपरत्वमप्ययुक्तम्; वचनव्यक्तेः प्रश्नप्रतिवचनरूपत्वाभावात् । तदा हि, किं ब्रह्मजिज्ञासा कर्तव्येत्युक्तं स्यात् । सा कर्तव्येति वाक्यान्तरेण प्रतिवचनं स्यात् । न च प्रतिवचनरूपं वाक्यान्तरमुपलभ्यते ।

अथशब्दस्य कात्स्न्र्यपरत्वे कात्स्न्र्येन सा कर्तव्येत्यर्थः स्यात् । सोऽनुपपन्नः; एकदेशकर्तव्यतायाः शङ्कितत्वाभावात् । कर्तव्यतामात्रं हि संशयपदम् । तन्निरासार्थं च सूत्रम् ।

[3]किञ्च अधिकाराद्यर्थान्तरपरत्वमतश्शब्दान्वयोऽपि निवारयति । अतश्शब्दो हि प्रकृतमर्थं हेतुतया परामृशन् अथशब्दोपस्थापितं वा ब्रह्मजिज्ञासापदसामर्थ्याक्षिप्तं वा परामृशेत् । तत्र यदि अथशब्दोपस्थापितमधिकृतत्वं हेतुतया परामृशेत्, तदा अधिकृतत्वादधिकर्तव्येति, हेतोः साध्याविशिष्टत्वं स्यात् । मङ्गलस्यानभिधेयतया न पदान्तरपरामर्शयोग्यता । वाच्यत्वाभ्युपगमेऽपि, तस्य च प्रकृतापेक्षत्वस्य च कात्स्न्र्यस्य च पूर्वपक्षयुक्तिप्रत्यनीकत्वाभावान्न तानि हेतुतया परामर्शनीयानि । न ह्यमङ्गलत्वप्रकृतानपेक्षत्वाकात्स्न्र्यैः पूर्वपक्षोत्थानम् । नयसूत्राणि च विरुद्धार्थव्युदासपराणि । प्रश्नवाक्यगतप्रश्नस्तु तस्मिन्नेव वाक्ये

---

1 च योग्या, अथ योग्या इत्यादावन्वयाभावे हेतुं दर्शयति अधिकृतमितीति । शब्दानुशासनपदेन अधिकारस्य स्वविशेषणतया बोधनात् न तस्य योग्येत्यादिपदेनान्वय इति च ध्येयम् ।

2 ओंकारस्येवेति । न ह्यथशब्दस्येव तस्यापि मङ्गलार्थकत्वे कोशादिकमस्तीति भावः । कल्पान्तरम् कोटयन्तरम् । इदमुपलक्षणम् । अथैषविश्वज्योतिरित्यादिदृष्टेः ।

3 एवमथशब्दस्यानन्तर्यातिरिक्तार्थपरत्वेऽनुपपत्तिरुक्ता । अथ अतश्शब्दोऽपि तन्निवारक इत्याह किञ्चेति । ब्रह्मजिज्ञासापदमपि तन्निवारकमिति चैतन्निगमने दर्शयिष्यति । प्रकृतापेक्षत्वं प्रकृतप्रतियोगिकत्वम्, प्रकृतादर्थान्तरत्वमिति यावत् ।

**अतश्शब्दो वृत्तस्य हेतुभावे ।**

हेतुतया परामर्शानर्ह एव । किं ब्रह्मजिज्ञासा कर्तव्येति वाक्येऽपरिसमाप्ते, कथं किंशब्दार्थो हेतुतया परामृश्येत ? अतोऽतश्शब्दपरामर्शयोग्यार्थश्चेदथशब्दोऽभ्युपगम्यते, तदा अधिकाराद्यर्थत्वं न घटते । यदि ब्रह्मजिज्ञासापदसामर्थ्याक्षिप्तस्य पूर्ववृत्तत्वेन तत्तद्व्याख्यात्रभिमतस्य वस्तुनोऽतश्शब्देन परामर्श इष्येत—तदानीं जिज्ञासानुपयोगिनस्तदाक्षेप्यत्वायोगात् उपयोग्यर्थएव तदाक्षेप्य इति तत्परामर्शिनाऽतश्शब्देन जिज्ञासोपयोगितया तत्पूर्वभाव्यर्थविशेषोपस्थापनात् अथशब्दस्य स्वारसिकानन्तर्यपरत्वे सम्भवति अस्वरसविफलार्थान्तरस्वीकारो न घटते । ततश्चातश्शब्दवत् ब्रह्मजिज्ञासापदसामर्थ्यमप्यधिकाराद्यर्थपरत्वनिवारकं स्यात् ।

एवमर्थान्तराणामनुपपन्नतामर्थतो दर्शयन् आनन्तर्यार्थत्वमप्यथशब्दस्योपपादयति—**अत्रायमथशब्द आनन्तर्ये भवतीति** । 'अथशब्द आनन्तर्ये' इति प्रतिज्ञा, तदुपपादकमत्रायं भवतीतिपदत्रयम् । तत्र भवतीति पदेन आनन्तर्ये स्वारस्यं सूच्यते । स्वारस्यापवादिकां पूर्ववृत्ताप्रतिपत्तिं परिहरति अत्रेति । अत्र वेदस्योत्तरभागविचाररूपब्रह्ममीमांसारम्भसूत्रे इत्यर्थः । ब्रह्मजिज्ञासापदसामर्थ्यात् पूर्वभागविचाररूपवृत्तविशेष आक्षिप्त इत्यभिप्रायः । हेत्वन्तरमभिप्रयन्नाह अयमिति । अयम् अथशब्दः "अथशब्दानुशासनम्", "अथ योगानुशासनम्" इत्यादि[1]सूत्रान्तरगताथशब्दव्यावृत्त इत्यर्थः । अतश्शब्दशिरस्क इत्युक्तं भवति । वेदान्तसारे ह्ययमर्थः कण्ठोक्तः । प्रकृतपरामर्शिनैतच्छब्देन पूर्ववृत्तसामान्यमभिहितमित्यभिप्रायः । एवं समभिव्याहृतोभयपदस्वारस्यात् सामान्यतोऽभिहितं विशेषत आक्षिप्तं च पूर्ववृत्तं सिद्धमिति वृत्तविशेषाप्रतिपत्तिरूपस्य स्वारस्यापवादकस्याभावादथशब्द आनन्तर्यार्थ एवेति वाक्यार्थः । एवमथशब्दस्योत्तरभागविचारारम्भसूत्रगतत्वम्, अतश्शब्दशिरस्कत्वमानन्तर्यस्वारस्यं च दर्शयद्भिः आनन्तर्योपपादकैः अत्र अयं भवतीति पदैरेव अस्मिन् सूत्रे अर्थान्तराणां गत्यभावस्वीकार्याणामनादरणीयत्वं फलितम् ।

अतश्शब्दं व्याचष्टे **अतश्शब्दो वृत्तस्य हेतुभावे** इति । वृत्तस्येति प्रकृत्यर्थ उक्तः; हेतुभाव इति प्रत्ययार्थः । इयं प्रतिज्ञा । अत्रायं भवतीत्यनुषक्तं पदत्रयमुपपादकम् । प्रकृतिप्रत्यययोरुक्तार्थपरत्वेन प्रसिद्धिप्राचुर्यं भवतिना दर्शितम् । अत्रेत्यस्य पूर्ववदर्थः । अनेन वृत्तविशेषः तस्य हेतुभावार्हत्वं चाऽऽक्षिप्तम् । तदर्हत्वं च अनन्तरमेव व्यक्तं भविष्यति । अयम् आनन्तर्यस्वरसाथशब्दपूर्वकः । अनेन वृत्तसामान्यमाक्षिप्तम् ॥

नन्वथशब्दार्थनिर्णयोऽतश्शब्दार्थनिर्णयसापेक्षः; अतश्शब्दार्थनिर्णयश्चाथशब्दार्थनिर्णयसापेक्ष इत्यन्योन्याश्रयः ॥ नैवम् । अथशब्दस्यानन्तर्यस्वारस्यं हि नातश्शब्दार्थनिर्णयसापेक्षम् । अतःशब्दस्य वृत्तहेतुभावपरत्वस्वारस्यं न अथशब्दार्थनिर्णयसापेक्षम् । 'अथशब्द आनन्तर्यपरः स्वस्वारस्यात्, समभिव्याहृतपदान्तरस्वारस्याच्च; अतःशब्दोऽपि वृत्तस्य हेतुभावपरः स्वस्वारस्यात्, समभिव्याहृतपदान्तरस्वारस्याच्च' इति

---

1 सूत्रान्तरेति । अथशब्दानुशासनमित्यस्य भाष्यत्वेऽपि तद्व्याख्येयसंग्रहवचनरूपत्वात् सूत्रत्वम् । वस्तुत इदं पाणिनिसूत्रमेव भाष्यकारेण प्रथममनूद्य व्याख्यातमिति हर्यादिग्रन्थावगम्यमिति तत्पक्षेणात्र सूत्रत्वोक्तिरित्यप्याहुः ।

भवत्ययंशब्दाभ्यां दर्शितं भवति । इमे चाभ्युच्चययुक्ती ; अत्रपदाभिप्रेतब्रह्मजिज्ञासापदसामर्थ्यादेव पदद्वयस्योक्तार्थपरत्वसिद्धेः । अतः स्वपरपदस्वारस्यात् ब्रह्मजिज्ञासापदसामर्थ्याच्च अथातःशब्दौ यथोक्तार्थपराविति न दोषः ।

ननु अथातःशब्दयोरन्यतरेणालमिति चेत्—न ; अथशब्दस्यानन्तरकालमुपस्थापयतो वर्तिष्यमाणब्रह्मजिज्ञासाविशेषणतया, अतःशब्दस्य वृत्तहेतुभावपरतया चापर्यायत्वात् ; प्रतिज्ञाहेतुरूपेण पदयोर्भिन्नप्रयोजनत्वाच्च ॥ ब्रह्मजिज्ञासा कर्तव्येति हि प्रतिज्ञेति चेत्, न ; ब्रह्मजिज्ञासेति धर्मिनिर्देशः ; अथेति साध्यधर्मोक्तिः । न कर्तव्यतामात्रं साध्यधर्मः ; अपित्वानन्तर्यविशिष्टकर्त[1]व्यत्वम् । एवमथातःपदयोः प्रतिज्ञाहेत्वर्थत्वेन विभागः, "अथातो धर्मजिज्ञासा" इत्यत्रापि समानः । एवमर्थभेदस्याविवक्षितत्वेन हि, "अथ योगानुशासनम्", "अथ शब्दानुशासनम्" इत्यादिष्वतःशब्दाप्रयोगः ॥ ननु ब्रह्मजिज्ञासापदसामर्थ्याक्षिप्ततया बुद्धिस्थस्य कर्मविचारस्य हेतुभावोऽतःशब्दावगन्तव्य इति किमथशब्देन ॥ मैवम् । आनन्तर्योक्तिमुखेन तस्य हेतोः शास्त्रान्तरश्रवणव्यवधाननैरपेक्ष्यद्योतनार्थत्वादथशब्दस्य । ततश्च वेदान्तश्रवणात् पूर्वं शास्त्रान्तरश्रवणेन विना संपादयितुमशक्यत्वात्, शास्त्रान्तराणामनवसरग्रस्तत्वाच्च शास्त्रान्तरसापेक्षाणां नित्यानित्यवस्तुविवेकादीनां पूर्ववृत्तत्वव्युदासः फलितः स्यात् ॥ ननु न यत् किञ्चिदतीतं पूर्ववृत्तत्वेन वक्तव्यम् ; अतिप्रसङ्गात् । अतो वर्तिष्यमाणोपयुक्तमेव पूर्ववृत्तमथशब्दोपस्थापितमिति, तस्य हेतुत्वमपि शास्त्रान्तरश्रवणनैरपेक्ष्यवत् तेनैव वस्तुसामर्थ्येन सिद्धमिति किमतःशब्देन ? ॥ नैवम् । [2]अथशब्दाक्षिप्तहेत्वसिद्धिशङ्कापरिहारार्थत्वादतःशब्दस्य । हेतुश्च विशिष्टः । तस्य विशेषणांशविशेष्यांशयोरसिद्धिशङ्कातत्परिहारप्रकारौ सूत्रकाराभिप्रेतौ परस्तात् दर्शयिष्येते-इति प्रयोजनवत्तरं पदद्वयम् ॥

---

1 कर्तव्यत्वमिति । इदञ्चारम्भणीयत्वमारम्भयोग्यत्वरूपम्, न त्वाज्ञापनादिविषयत्वरूपमिति अथशब्दस्य प्रस्तावार्थकत्वखण्डकटीकात एव सुगमम् । तत्रारम्भ एव न भवति कारणाभावादिति शंकायां कारणसद्भावो हेतूक्रियते अत इति । पूर्वोत्तरमीमांसयोरेकव्याख्यानग्रन्थत्वात् पूर्वसिद्धः कर्मविचार एव 'अत' इति गृह्यते । एतद्धेतुसत्त्वेऽपि हेत्वन्तरस्य नित्यानित्यवस्तुविवेकादेरपेक्षिततया आरम्भविलम्बशंकादिभावात् तत्परिहारः क्रियते अथेति । एवं कर्मविचारानन्तर्यविशिष्टमारम्भयोग्यत्वमस्तीति साध्ये स्थिते,'अत'इत्युच्यमानो हेतुर्न कर्मविचारमात्रम् ; किंतु पुष्कलसामग्री । एककारणमात्रेणानन्तर्यस्य दुस्साधत्वात् । तत्र ब्रह्मविषयकापातप्रतीतिः कर्मनिर्णयश्चेति द्वयमेव विवादविषय इति तदस्तित्वसूचनाय तद्धेतूकरणमेव अतश्शब्दाभिप्रेतम । इदं द्वयमपि प्रकृतमेव, कर्मविचारात् प्राक्कालप्रभृति ब्रह्मापातप्रतीतेरपि सद्भावात् । एवमपि पूर्वं ब्रह्मजिज्ञासाया अकरणं कर्मजिज्ञासायास्तत्प्रतिबन्धकत्वात् । अथ कर्मविचारस्य सिद्धव्युत्पत्त्यभावनिर्णयघटिततया ब्रह्मापातप्रतीतिविघटकत्वचिन्तया, पूर्वमापातप्रतीतिस्थित्या कर्तुमर्हाऽपि ब्रह्मजिज्ञासा कर्मविचारात् पश्चादकर्तव्यैव सिद्धेति शंकायां तन्निरासाय अथातश्शब्दौ । तथा कर्मनिर्णयस्य कर्मफलस्थैर्यविषयकत्वसंभवात् प्रतिबन्धकत्वमेवेति शंकापरिहारार्थश्चातश्शब्दः । एवञ्चाल्पास्थिरफलकत्वप्रकारककर्मनिर्णयो ब्रह्मापातप्रतीतिश्च मिलितौ हेतुः । इदमेव वक्ष्यति, हेतुश्च विशिष्ट इति ।

2 अथशब्दाक्षिप्तहेत्विति कथनम् हेतुत्वार्हस्यैवानन्तर्यप्रतियोगितया अथशब्देनाऽऽक्षेपात् । न पुनर्हेतुत्वमप्याथशब्दाक्षिप्तम् ।

अधीत साङ्गसशिरस्कवेदस्य, अधिगताल्पास्थिरफलकेवलकर्मज्ञानतया सञ्जातमोक्षाभिलाषस्यानन्त-स्थिरफलब्रह्मजिज्ञासा ह्यनन्तरभाविनी ।

---

अत्रेति पदसूचितब्रह्मजिज्ञासापदसामर्थ्यसिद्धं वृत्तम्, वर्तिष्यमाणम्, तयोर्हेतुहेतुमद्भावं च विवृण्वन् उक्तमानन्तर्यमुपपादयति अधीतेति । कर्मज्ञानशब्देन वृत्तमुक्तम्; ब्रह्मजिज्ञासापदेन वर्तिष्यमाणमुक्तम् । अल्पास्थिरफल-अनन्तस्थिरफलशब्दाभ्यां हेतुहेतुमद्भावो दर्शितः । केवलशब्देन ब्रह्मज्ञानपूर्वककर्मव्या-वृत्तिः । कर्मज्ञानस्यैव पूर्ववृत्तत्वं कथम्, अनन्तस्थिरफलापातप्रतीतिश्च कथमिति शङ्कायाम् अधीतेत्यादिपदेन तदुपपादनम् । सशिरस्कवेदशब्देन कृत्स्नाध्ययनस्य विहितत्वं व्याख्यानपौर्वापर्यहेतुभूतव्याख्येयपौर्वापर्य-नियमः भागद्वयस्यैकप्रबन्धत्वं च सूच्यते । साङ्गशब्देनानन्तस्थिरफलापातप्रतीतिजनकत्वे हेतुर्दर्शितः । "कृष्णपक्षे तथाऽङ्गानि", "उपनीय तु यः शिष्यं वेदमध्यापयेद्द्विजः । सकल्पं सरहस्यं च तमाचार्यं प्रचक्षते" इत्यादिवचनानि अधीतसाङ्गसशिरस्कवेदस्येत्यत्राभिप्रेतानि । एवमधीतेत्यादिषष्ठ्यन्तविशेषणद्वयेन ब्रह्मजिज्ञासापदसामर्थ्यानुगृहीताथातःशब्दोपस्थापितोऽधिकारिविशेषः प्रदर्शितो भवति । समधिगतकर्मा सांसारिकफलनिर्विण्णोऽनन्तस्थिरफलाकाङ्क्षी हि शास्त्रमधिकरोति[1] ।

अनन्तस्थिरफलब्रह्मजिज्ञासेति । अनन्तस्थिरफलरूपस्य ब्रह्मणो जिज्ञासेत्यर्थः । अनन्तस्थिरफलत्वस्य ब्रह्मजिज्ञासाविशेषणत्वे जिज्ञासायास्तथात्वमागमोत्थविवेकादिजन्यज्ञानद्वारेणेति द्रष्टव्यम् । अनन्तरभाविनीति पदेनाथातश्शब्दफलितं हेतोः साधनान्तरनैरपेक्ष्यं विवक्षितम् । कर्मविचारानन्तरं ब्रह्मविचारस्य कर्तव्यत्वे कर्मणामल्पास्थिरफलत्वनिर्णयसहितानन्तस्थिरफलापातप्रतीतिरित्ययं विशिष्टो हेतुः । अतश्शब्देन वृत्तस्य कर्मविचारस्य हेतुतयोक्तत्वात् कर्मविचारस्य साङ्गाध्ययनजन्यानन्तस्थिरफलापातप्रतीतिपूर्वकत्वात्, आवृत्तिविधानादिभिः कर्मणामल्पास्थिरफलत्वावगमहेतुत्वाच्च । अयं विशिष्टो हेतुः अधिगताल्पा-स्थिरफलकेवलकर्मज्ञानतया सञ्जातमोक्षाभिलाषस्येत्यनेनोक्तः । अत्र अधिगतेति कर्मणः फलद्वारा हानाय ज्ञातव्यत्वं कण्ठोक्तम् । स्वरूपेणोपादानाय ज्ञातव्यत्वमपि कर्मविचारपूर्ववृत्तत्वे हेतुः । "अपेक्षितकर्म-स्वरूपज्ञानं केवलकर्मणामल्पास्थिरफलत्वज्ञानं च कर्ममीमांसावसेयम्" इति हि वक्ष्यते । तत्र स्वरूपेणोपादे-यताप्रतीतिरनन्तस्थिरफलापातप्रतीत्यन्तर्भूता ; उपायतदितिकर्तव्यताविशेषैः सहैव ह्यनन्तस्थिरफलापात-प्रतीतिरिति विशिष्टहेत्वन्तर्भावः; उपरितनग्रन्थाविरोधश्च ।

ननु कर्मविचारो ब्रह्मविचारस्य निरपेक्षहेतुश्चेत्, कृतकर्मविचारैः सर्वैरपि ब्रह्म विचार्येत—इति स्वर्गार्थ-कर्मानुष्ठात्रभावप्रसङ्गः ॥ मैवम् । अश्रुतमीमांसत्वेऽप्युपाध्यायादिवचनाद् येऽनुतिष्ठन्ति, तेषां स्वर्गार्थानुष्ठाना-विरोधात् । श्रुत्वापि ये स्वर्गार्थिनः, तेषामदृष्टवैगुण्यात् असमीचीनव्याख्यानश्रवणमूलस्यामुमुक्षुत्वस्य संभवाच्च । साङ्गाध्ययनं कर्मविचारपूर्ववृत्तं चेत्, अधीतसाङ्गवेदैः सर्वैरपि कर्म विचार्येत । न च तथा क्रियते । वेदेऽधीतेऽप्यश्रुतकर्ममीमांसा हि बहवो दृश्यन्ते ॥ तेषां कर्मविचारानधिगतिरदृष्टदेशकालादिवैगुण्यात्; न तु

---

1. शास्त्रमधिकरोतीति । पुरुषं शास्त्रमधिकरोति, पुरुषः शास्त्रेणाधिक्रियत इति प्रयोगः तन्त्रप्रसिद्धः । तद्वत् पुरुषः शास्त्रे अधिकरोति, पुरुषः शास्त्रमधिकरोतीति प्रयोगोऽप्यस्तीति ज्ञेयम् ।

ब्रह्मणो जिज्ञासा ब्रह्मजिज्ञासा। ब्रह्मण इति कर्मणि षष्ठी; "कर्तृकर्मणोः कृति" इति विशेषविधानात्। यद्यपि संबन्धसामान्यपरिग्रहेऽपि जिज्ञासायाः कर्मापेक्षत्वेन कर्मार्थत्वसिद्धिः—तथाप्याक्षेपतः प्राप्तादाभिधानिकस्यैव ग्राह्यत्वात् कर्मणि षष्ठी गृह्यते।

---

साङ्गाध्ययनस्य पूर्ववृत्तत्वाभावादिति चेत्—तदिहापि तुल्यम्। तथा साधनचतुष्टयादिलाभेऽप्यनधिगतब्रह्मविचारानेकपुरुषदर्शनात् साधनचतुष्टयादेर्ब्रह्मविचारं प्रति नियमेन हेतुत्वं कथमिति परिचोदिते, तत्पूर्ववृत्तत्ववादिभिरपि अदृष्टादिवैगुण्याददोष इति परिहर्तव्यम्; तदिहापि तुल्यम्। दुष्परिहरदूषणान्तरसद्भावस्तेषां वैषम्यम्। तस्मात् घटनिष्पत्तेः कुलालादिवत् ब्रह्मविचारस्य कर्मविचारः पूर्वभावित्वेन नियतः; दृष्टादृष्टप्रतिबन्धकविरहितस्य समीचीनः कर्मविचारो ब्रह्मविचारसामग्रीति न कश्चित् दोषः। एवमथातश्शब्दार्थो निरूपितः।

अथ ब्रह्मजिज्ञासापदार्थं विवक्षुस्तदैकपद्यस्य समासनिबन्धनत्वात् प्रथमं समासार्थं निरूपयति **ब्रह्मण** इत्यादिना। कर्मत्वकरणत्वादिसंबन्धविशेषेषु इतराः विभक्तयः, "कर्मणि द्वितीया" इत्यादिभिः सूत्रैर्विहिताः। "षष्ठी शेषे" इति सूत्रेण संबन्धसामान्ये षष्ठी विहिता। अत्र तस्याः सामान्यविषयत्वमाशङ्क्य कर्मविषयत्वं निश्चीयते; तत्र सामान्येन समासस्यानेकविभक्तिसाधारणत्वात् विभक्त्यन्तरशङ्काव्यावृत्त्यर्थमिह तेषामनुपपत्तिमभिप्रयन् पदं विगृह्णाति **ब्रह्मणो जिज्ञासेति**। चतुर्थीपरिग्रहे प्रयोजनत्वसिद्धावपि प्रकृतिविकारभावाभावे चतुर्थीसमासायोगात् तदपरिग्रहः। "सप्तमी" इति योगविभागाद् ब्रह्मणि जिज्ञासेति समासेऽपि ब्रह्मणो विषयत्वमात्रं स्यात्, न तु प्रयोजनत्वमिति सप्तम्यपरिग्रहः। शङ्कुला(लया)खण्ड इतिवत् तृतीयासमासे विषयत्वप्रयोजनत्वे न सिद्ध्यत इत्यभिप्रायः॥ ब्रह्मण इति शब्दरूपस्य षष्ठीपञ्चमीसाधारण्यात् षष्ठ्याश्चानेकार्थत्वात् तन्निर्णयार्थमाह **ब्रह्मण इतीति**। कुत इत्यत्राह **कर्तृकर्मणोरिति**। षष्ठ्याः कर्तृकर्मसाधारण्येऽपि जिज्ञासाकर्तृत्वं तापत्रयातुरस्यैव, ब्रह्मणस्तु कर्मत्वमित्यभिप्रायेण **ब्रह्मण इति कर्मणि षष्ठीत्युक्तम्**। कर्मणि षष्ठीस्वीकारे ब्रह्मणो विषयत्वप्रयोजनत्वे सिद्ध्येतामिति भावः।

ननु तर्हि कथं यद्यपीत्यादेः संबन्धसामान्यपरिग्रहशङ्काविषयस्य भाष्यस्योत्थानं युज्यते? ॥ उच्यते। संबन्धसामान्यस्वीकारेऽपि जिज्ञासापदसामर्थ्याद् ब्रह्मणः कर्मत्वसिद्धेः, परम्परया संबन्धिनामुपायोपासकप्रतिबन्धा[1]दीनामपि जिज्ञास्यत्वसिद्धेः; प्रतिपदविहितषष्ठ्याः समासनिषेधाच्च। तत्र सामर्थ्यात् षष्ठ्याः कर्मार्थत्वसिद्धिं ब्रह्मानुबन्धिनामपि जिज्ञास्यत्वसिद्धिञ्च शङ्कते **यद्यपीति**। **संबन्धसामान्यपरिग्रह** इत्यत्र परिणा ब्रह्मानुबन्धिनामपि जिज्ञास्यत्वसिद्धिः सूच्यते। परितो[1] ग्रहणेन हि परितः स्थितानामपि ग्राह्यत्वं लभ्यते। अत एव ह्युत्तरत्र 'गृह्यत' इत्युक्तम्; न तु 'परिगृह्यत' इति। तदुभयं परिहरति **तथापीति**। अत्रायमर्थः-प्रधानस्य ब्रह्मणः अप्रधानानामन्येषां च कर्मत्वस्याक्षेपसिद्धत्वादपि प्रधानकर्मत्वस्याऽऽभिधानिकत्वम्, इतरेषां प्रधानसंबन्धादाकाङ्क्षावशाच्च कर्मत्वस्य सामर्थ्यसिद्धत्वं च स्वीकर्तुं युक्तमिति। अतः प्रतिपदविहिता षष्ठी ग्राह्या;

---

1 प्रतिबन्धेति; परित इति। ब्रह्मणो विचारस्य च यः संबन्धः तस्य परितो ग्रहणं नाम परम्परासंबन्धैः सह संबन्धत्वेन ग्रहणम्। तेनार्थपञ्चकान्तर्गतानां ब्रह्मप्राप्ति-तत्कर्तृ-तदुपाय-तद्विरोधिनां ब्रह्म परितः स्थितानामपि विचार्यत्वं लभ्यत इति।

न च, "प्रतिपदविधाना षष्ठी न समस्यते" इति कर्मणि षष्ठ्याः समासनिषेधः शङ्कनीयः; "कृद्योगा च षष्ठी समस्यते" इति प्रतिप्रसवसद्भावात् ।

---

"विलम्बितधीहेतोः शीघ्रधीहेतुर्बलीयान्" इति न्यायात् । षष्ठ्याः संबन्धसामान्यविवक्षायां हि कर्मत्वधीर्विलम्बिता स्यात्, कृद्योगषष्ठीविवक्षायां तु शीघ्रभाविनी ॥ ननु कर्तृकर्मणोरुभयोरप्यर्थयोः सूत्रप्रतिपन्नत्वाद् विलम्बिता कर्मधीरिति चेन्न—कर्तुर्जिज्ञासोरधिगतकर्मणः प्रतिपन्नत्वात् कर्मार्थत्वमेव हि प्रथमतरं धियमधिरोहेत् ।

समासनिषेधमाशङ्क्य परिहरति नचे ति । चः शङ्कासमुच्चये । प्रतिप्रसवोऽपवादापवादः । सर्पिषो ज्ञानमित्यादिप्रयोगेषु, "ज्ञोऽविदर्थस्य करणे" इत्यादिसूत्रविहितायां षष्ठ्यां समासनिषेधस्य सावकाशत्वम् । सर्पिषा प्रवृत्तिरिति हि तस्य वाक्यस्यार्थः । यद्यपि ज्ञानपदं कृदन्तम्—तथापि सर्पिष इति षष्ठी न कृद्योगविहिता । सर्पिषो जानीते इति तिङन्तपदान्वयार्हत्वात्, [ज्ञा]धातोर्विभक्तेश्च प्रवृत्तितत्करणार्थत्वाच्च । न हि तद् सर्वं कृद्योगविहितत्वे सिद्ध्यति । अतो नात्र प्रतिप्रसवप्राप्तिरिति समासनिषेधस्य सावकाशत्वम् ।

ननु नेयं षष्ठी व्याख्येया अप्रयुक्तत्वात् सूत्रे । प्रयुक्त एव हि शब्दोऽर्थबोधकः; न त्वप्रयुक्तः । बोधकशब्द एव हि व्याख्येयः ॥ अप्रयुक्ताऽपि स्मृता विभक्तिर्बोधिकेति सा व्याख्येयेति चेन्न; तत्स्मरणेन विनाऽप्यर्थप्रतिपत्तेः । अर्थप्रतिपत्तिश्च प्रातिपदिकेन लक्षणया । लक्षणा च योग्यतादिना । अतोऽनुशासनेन तद्व्याख्यानमयुक्तम् ॥

उच्यते । अप्रयुक्तविभक्त्यर्थस्य प्रातिपदिकेन लक्षणा हि समासः । अत्र लक्ष्यार्थोपलक्षणतया विभक्तिरनुप्रविष्टा । अतो लक्ष्यार्थविशेषनिर्णयाय विग्रहवाक्यस्था षष्ठी व्याख्येया ॥ तर्हि नानुशासनेन सा व्याख्येया । लाक्षणिकार्थो हि योग्यतादिनाऽवसीयते । न हि, गङ्गायां घोषः इत्यत्रानुशासनवशात् कूलं लक्ष्यते; अपि तु योग्यतादिनैवेति ॥ नैवम् । सर्वासु लक्षणासु योग्यतादिनैवार्थनिर्णय[इति]नियमाभावात् । स तु नियमः प्रातिपदिकेन प्रातिपदिकान्तरार्थलक्षणायाम् । प्रातिपदिकेन विभक्त्यर्थलक्षणायां तु; 'एतद्विभक्त्यर्थो लक्ष्यः; न विभक्त्यन्तरार्थः' इति नियमो भवति । स च शब्दानुशासनाधीन इति तदनुरोधेन तन्निरूपणं युक्तम् । तत्र संबन्धसामान्यं लक्षयित्वा तेन कर्मत्वस्याक्षेपादपि प्रथमत एव कर्मत्वस्यैव लक्षणा शब्दानुशासनानुमता युक्ता । अतः समस्तपदलक्ष्यार्थविशेषनिर्णयायानुशासनानुरोधेन लक्ष्यार्थोपलक्षणभूता विग्रहवाक्यस्था षष्ठी व्याख्येयेति ।

यद्वा लुप्तविभक्तिकशब्देन विभक्त्यर्थोपस्थापनं मुख्यं स्यात् । संबन्धिनो हि लक्षणा दृष्टा; न संबन्धमात्रस्य । विभक्त्यर्थश्च स्वयं संबन्धरूपः । न च संबन्धस्य संबन्धान्तरानपेक्षत्वेन स्वस्मिन् संबन्धि(न्ध)कार्यकरत्वाल्लक्षणा संभवतीति वाच्यम्; संबन्धस्य स्वपरनिर्वाहकत्वानभिज्ञानामपि विभक्त्यर्थप्रतीतेः । न हि सम्बन्धः [स्व]सत्तया लक्षणाहेतुः; किन्तु ज्ञायमानतयैव । न चेत्, अतिप्रसङ्गात् । एवं लक्षणानुपपत्त्या प्रयोगस्यानन्यथासिद्धत्वात् समस्तशब्देन विभक्त्यर्थबोधनं (र्थोपस्थापनं) मुख्यम् । अमुख्यत्वेपि वा का नः क्षतिः ।

**ब्रह्मशब्देन च स्वभावतो निरस्तनिखिलदोषोऽनवधिकातिशयासङ्ख्येयकल्याणगुणगणः पुरुषोत्तमोऽभिधीयते ।**

ननु विग्रहवाक्येऽपि कथं कर्मत्वमाभिधानिकम्? प्रयुज्यमानाऽपि ह्युपपदविभक्तिर्निरर्थिका । तद्विधानं दाराः, कलत्रमितिवत् प्रयोगसाधुत्वाय । अर्थस्त्वर्थसामर्थ्याक्षिप्तः । अत एव हि कारकविभक्तेरुपपदविभक्तिदौर्बल्यम् । समासे त्वप्रयुक्ताया उपपदविभक्तेः कथंतरां कर्मत्वाभिधायकत्वमिति चेत् - उच्यते । आभिधानिकवत् कृदन्तपदप्रयोगेण शीघ्रधीविषयत्वसाम्यादाभिधानिकत्वोक्तिः । पदान्तरश्रवणापेक्षामात्रात् नाक्षेपादिवत् विलम्बाधिक्यम् । सामान्यषष्ठीपक्षे संबन्धसामान्यं प्रतिपद्य जिज्ञासाशब्दार्थगतसकर्मकत्वस्वभावालोचनयाऽर्थविशेषावगमादपि कृदन्तश्रवणमात्रभुवः कर्मत्वधियः शीघ्रत्वादिति कश्चित् परिहारः । "कर्मणि द्वितीया" इतिवत्, "कर्तृकर्मणोः कृति" इति सप्तम्यन्तनिर्दिष्टयोः कर्तृकर्मणोरभिधेयत्वमनुशासनस्वारस्यानुगुणमिति भाष्यकाराभिप्रेतः परिहार इति सम्प्रदायः । कारकविभक्तेरुपपदविभक्तिवैषम्यं पदान्तरयोगविहितत्वरूपमस्त्येव । न च पदान्तरयोगावगम्यत्वमाभिधानिकत्वविरोधि; तस्य क्वचिन्मुख्यार्थव्यवस्थापकत्वदृष्टेः; यथा 'आदित्यस्य गावः प्रकाशयन्ति' इत्यादिषु । न हि तत्राऽऽदित्यादिपदान्तरयोगेन गोशब्दस्य किरणपरत्वं लाक्षणिकम् । पदान्तरपरामर्शसापेक्षत्वेन विलम्बितधीहेतुरुपपदविभक्तिः, कारकविभक्तिस्तु तन्निरपेक्षत्वात् शीघ्रधीहेतुरिति प्राबल्यदौर्बल्यविभाग एव; न तु सार्थकत्वनिरर्थकत्वाभ्यां वैषम्यम् । विभक्त्यश्रवणादमुख्यत्वं तु परिहृतम् ।

एवं समासान्तर्गतविभक्त्यर्थे निरूपिते समस्तयोः पदयोः प्रथमं ब्रह्मशब्दं व्याचष्टे **ब्रह्मशब्देन चेति** । ब्रह्मशब्दस्य प्रधानाद्यर्वाचीनार्थान्तरेषु प्रयोगदर्शनात्, इतरव्याख्यातृभिरीश्वरातिरिक्तवस्तुपरत्वेन व्याख्यातत्वात्, देवतान्तरपरत्वस्य कैश्चिदभ्युपगतत्वाच्च तद्व्यावृत्त्यर्थं **ब्रह्मशब्देन......पुरुषोत्तमोऽभिधीयते** इति प्रतिजानीते । पुरुषोत्तमशब्दस्य रूढ्या ब्रह्मशब्दस्य देवतान्तरपरत्वादिव्युदासः; अवयवशक्त्या बद्धमुक्तावस्थचेतनवैलक्षण्यमुक्तम् । स्वेतरवैलक्षण्यमात्रं तृणादेरप्यस्तीति तद्व्यावृत्त्यर्थं **स्वभावत** इत्यादिना विशेषणद्वयेन वै (तद्वै)लक्षण्यं विशिनष्टि । इदं च विशेषणद्वयं शब्दशक्तेरर्थसामर्थ्याच्च ब्रह्मशब्दस्य पुरुषोत्तमपरत्वप्रतिपादनोपयोगितयोक्तम्; न तु प्रवृत्तिनिमित्ततया; गुणतोऽपि बृहत्त्वे सति शब्दशक्त्यसंकोचसिद्धेः; मुमुक्षोरशेषदोषनिवृत्ति-निरतिशयानन्दप्राप्तिहेतुत्वाच्च । वाद्यन्तरोक्तस्य निर्गुणत्वस्य अविद्यादिदोषान्वयस्य च व्यावृत्त्यर्थम्, उपाध्युपहितब्रह्मस्वरूपस्यैव कर्मवश्यत्वदुःखित्वादिव्यावृत्त्यर्थम्, 'ज्ञानादिशक्तियोग एवास्य स्वाभाविकः; सार्वज्ञ्यनिरतिशयानन्दादियोगस्तु कादाचित्कः' इति मतस्य च व्यावृत्त्यर्थमिदं विशेषणद्वयमुक्तम् । निरस्तकतिपयदोषत्वं निरस्तनिखिलदोषत्वं च केषांचिद् बद्धानां, मुक्तानां नित्यानामप्यस्तीति तद्व्यावृत्त्यर्थं **स्वभावतो निरस्तनिखिलदोष** इत्युक्तम् । नित्यसिद्धानामपि भगवन्नित्यसङ्कल्पाधीनं हि नित्यनिर्दोषत्वम् । **स्वभावत** इत्युत्तरत्राप्यनुषङ्गः; तेन गुणानामविद्याकल्पितत्व[पक्ष]व्यावृत्तिः । "ते ये शतम्" इत्यत्र पूर्वपूर्वगुणेभ्य उत्तरोत्तरगुणानामतिशयः सावधिक इति तद्व्यावृत्त्यर्थमनवधिकातिशयशब्दः । तत्र हि ब्रह्मगुणातिशयस्य वाङ्मनसागोचरतयाऽनवधिकत्वमुक्तम् । सत्यसङ्कल्पत्वान्तर्भूताः वशित्वादिगुणा इति हि वक्ष्यते । अतः कस्मिंश्चिद् गुणे तद्विधाभेदरूपतया गुणानां बहूनामन्तर्भावाभिप्रायो गणशब्दः ॥ नन्वनवधिकातिशयशब्दस्य गुणविशेषणत्वे गणशब्दसामाना-

**सर्वत्र बृहत्त्वगुणयोगेन हि ब्रह्मशब्दः। बृहत्त्वं च स्वरूपेण गुणैश्च यत्रानवधिकातिशयम्, सोऽस्य मुख्योऽर्थः।**

विकरण्याभावाद् बहुव्रीहिर्न स्यात्। गणविशेषणत्वमप्ययुक्तम्; गुणस्वरूपस्य ह्यनवधिकातिशयत्वम्; न तु गणस्वरूपस्य॥ नैवम्। गण एव विशेष्य इति बहुव्रीहिसिद्धिः। तथाप्यर्थवशाद् गणान्तर्भूतैकैकगुणव्यक्तेरनवधिकातिशयत्वं फलितं स्यात्; यथा, 'एषा परिषदभिजनवती श्रुतशीलशालिनी' इत्यत्र श्रुतशीलादीनां परिषद्विशेषणत्वे प्रतीतेऽपि तदन्तर्भूतानामेव श्रुताद्यन्वयः; न तु समूहस्य; ततो निर्गतानां श्रुताद्यभावप्रसङ्गात्। असंख्येयत्वमपि गणविशेषणं युक्तम्; गणासंख्येयत्वे गुणासङ्ख्येयत्वं कैमुत्यसिद्धम्। **अनवधिकातिशय**शब्देन नित्यसिद्धव्यावृत्तिश्च; तद्गुणानां जगद्व्यापारानुगुणत्वेन भगवद्गुणापेक्षया सातिशयत्वात्। तेषामीश्वरतद्गुणविभूतिसाक्षात्कारस्यात्यन्तानुकूलस्य निरवधिकातिशयत्वेपि तादृशासंख्येयगुणाभावात् तद्व्यावृत्तिः। अनुषक्तेन **स्वभावत** इति पदेन वा नित्यसिद्धव्यावृत्तिः। तेषां तादृशगुणकत्वं हि भगवन्नित्येच्छाधीनम्। स्वरूपेणानवधिकातिशयत्वाभावाच्च नित्यसिद्धव्यावृत्तिः। ते ह्यणुस्वरूपाः। अत्र स्वरूपस्यानवधिकातिशयत्वं गर्भितम्; विभुत्वस्यापि गुणान्तर्भावात्; 'बृहत्त्वं च स्वरूपेण गुणैश्च' इत्युपपादकग्रन्थोक्तेः। **अभिधीयते** मुख्यया वृत्त्या बोध्यते। अस्मिन् ग्रन्थे, "येनाक्षरं पुरुषं वेद सत्यम्" इति श्रुतिश्चैतत्सूत्रार्थानुवादिनी अनुसंहिता भवति। तत्र हि, "प्रोवाच तां तत्त्वतो ब्रह्मविद्याम्" इति पुरुषपदपर्यायतया ब्रह्मशब्दः प्रयुक्तः।

एवं प्रतिज्ञातमर्थं शब्दसामर्थ्यात् प्रथममुपपादयति **सर्वत्रे**त्यादिना। तत्रार्थान्तरेषु ब्रह्मशब्दप्रयोगस्यान्यथासिद्धिं विवक्षुस्तदुपयुक्तं गुणयोगं दर्शयति **सर्वत्रे**ति। **सर्वत्र**—ब्रह्मशब्दप्रयोगविषयेषु सर्वेषु बृहत्त्वगुणयोगोऽस्तीत्यर्थः। पुरुषोत्तमे गौणत्वमन्यत्र मुख्यत्वं च किं न स्यादित्यत्राह **बृहत्त्वञ्चे**ति। बृहत्त्वगुणमात्रयोगिषु सर्वेषु ब्रह्मशब्दप्रयोगाभावात् स्वरूपतो गुणतश्चानवधिकातिशयबृहत्त्वं प्रवृत्तिनिमित्तमित्यर्थः॥ ननु, "बृहति बृंहयति तस्मादुच्यते परं ब्रह्म", "बृहत्त्वाद् बृंहणत्वाच्च तद्ब्रह्मेत्यभिधीयते" इति [1]श्रुतिस्मृतिभ्यां बृहत्त्वे बृंहणत्वे च प्रवृत्तिनिमित्ततयाऽवगते कथमिह(व)बृहत्त्वमात्रं निमित्तमुच्यते॥ गुणतो बृहत्त्वे बृंहणत्वस्यान्तर्गतत्वादिति ब्रूमः। "स चाऽऽनन्त्याय कल्पते" इत्यादिश्रुतिप्रसिद्धसकलसङ्कोचनिवृत्तिपूर्वकनिरवधिकज्ञानविकासरूपानन्त्यावहत्वं हि बृंहणत्वम्। तद्धि सकलहेयप्रत्यनीकत्वक्षान्तिकारुण्यादिमोक्षप्रदत्वौपयिकगुणवत्त्वम्। अत एव हि, 'स्वभावतो निरस्तनिखिलदोष' इत्यादिकं प्रतिज्ञावाक्येऽभिहितम्॥ ननु स्वरूपतो बृहत्त्वमेव निमित्तमस्तु; किं गौरवेणेति चेत्—न; ब्रह्मगुणादेरपि स्वरूपेण बृहत्त्वाद् ब्रह्मशब्दवाच्यत्वप्रसङ्गात्॥ तर्हि गुणतो बृहत्त्वमेवास्तु निमित्तमिति चेन्न—शब्दशक्तेरसङ्कोचस्य स्वतः प्राप्तत्वात्; स्वरूपे[ण] च बृहत्त्वसद्भावात्। "सत्यं ज्ञानमनन्तं ब्रह्म" इति हि श्रुतिः। गुणतो बृहत्त्वं नाम सद्वारकं बृहत्त्वम्। गुणद्वारा हि तत्।

---

1. श्रुतीति। अथर्वशिरसि, "अथ कस्मादुच्यते परं ब्रह्म? यस्मात् परमपरं परायणञ्च बृंहत् बृहत्याबृंहयति तस्मात् परं ब्रह्म" इत्युपलभ्यमानपाठः। बृहतीति छान्दसम्। बर्हति, बृंहति इति च शुद्धम्।

**स च सर्वेश्वर एव । अतो ब्रह्मशब्दस्तत्रैव मुख्यवृत्तः । तस्मादन्यत्र तद्गुणलेशयोगादौपचारिकः; अनेकार्थकल्पनायोगात्; भगवच्छब्दवत् ।**



---

स्वरूपेण गुणैश्च निरतिशयबृहत्त्ववद्वस्तु पुरुषोत्तमादन्यदपि स्यात्, अन्यदेव ब्रह्म स्यादित्यत्राह **स चेति** । चः शङ्कानिवृत्तौ । सर्वेश्वरशब्देनैवकारेण च "तमीश्वराणां परमं महेश्वरम्", "न तत्समश्चाभ्यधिकश्च दृश्यते" इति वाक्ययुगलार्थो विवक्षितः । ततः किमित्यत्राह **अत इति** । अतः—अनवधिकातिशयबृहति ब्रह्मशब्दस्य मुख्यत्वात्, सर्वेश्वरस्यैव तादृशबृहत्त्वगुणयोगित्वाच्चेत्यर्थः । कथं तत्रैव मुख्यवृत्तः, अन्यत्रापि हि ब्रह्मशब्दः प्रयुज्यत इत्यत्राह **तस्मादिति** । तस्मात्—ब्रह्मणः । सर्वत्र मुख्यः कुतो न स्यादित्यत्राह **अनेकार्थेति** । परस्माद् ब्रह्मणोऽन्यत्र प्रयोगस्यान्यथासिद्धत्वान्न तत्र शक्तिकल्पनम्, 'अनन्यथासिद्धः प्रयोगः शक्तिं कल्पयती'ति न्यायादित्यर्थः; ।

अनेकशक्तिकल्पनं गौणत्वं वा न स्यात्, बृहत्त्वगुणयोगिसर्वव्यक्तिष्वेकयैव शक्त्या मुख्यत्वसंभवादित्यत्राह **भगवच्छब्दवदिति** । तथा च श्रीमति वैष्णवे पुराणे भगवच्छब्दं प्रकृत्योक्तम्, "तत्र पूज्यपदार्थोक्तिपरिभाषासमन्वितः । शब्दोऽयं नोपचारेण त्वन्यत्र ह्युपचारतः" इति ॥ अनेन प्रस्तुतचोद्यस्य कः परिहार उक्तो भवति? ॥ उच्यते । बृहतिधातोर्मनिन्प्रत्ययान्तत्वेन निष्पन्नस्य ब्रह्मशब्दस्य प्रधानादिषु दृश्यमानः प्रयोगो नावयवशक्तिनिबन्धनः । तथा हि सति बृहन्महच्छब्दादिवत् आपेक्षिकबृहत्त्वयोगिषु सर्ववस्तुषु प्रयोगः स्यात् । न च तथा प्रयुज्यते । त्रसरेणुमपि हि ततोऽणिष्ठतयाऽभिमतद्रव्यान्तरापेक्षया महिमगुणशालीति वदन्ति । न च त्र्यणुकादिषु ब्रह्मशब्दप्रयोगः । एवं सर्वत्र प्रयोगदर्शनात् पङ्कजशब्दव्यवस्थापककुमुदादिव्यावृत्ततामरसानुवृत्तपद्मत्वजातिवत् ब्रह्मशब्दप्रयोगविषयपञ्चषव्यक्त्यनुवृत्त-अन्यव्यावृत्ताकारादर्शनादनेकशक्तिकल्पने प्राप्ते, अनन्यथासिद्धस्य प्रयोगस्य शक्तिकल्पकत्वात्, ब्रह्मशब्दप्रयोगविषयेष्वन्येषु च बृहत्त्वगुणलेशयोगेन प्रयोगस्यान्यथासिद्धत्वाच्च नानेकशक्तिकल्पनं युक्तम् । तस्मात् पुरुषोत्तम एव प्रवृत्तिनिमित्तपौष्कल्यवति मुख्यत्वम्, अन्यत्रौपचारिकत्वं च । औपचारिकस्तु प्रयोगः सङ्कोचसह इष्टः, न तु सार्वत्रिक इति । तमिमं न्यायमभिप्रेत्य भगवच्छब्दस्य पुरुषोत्तम एव मुख्यत्वमन्यत्रामुख्यत्वं च भगवता पराशरेणोक्तम् ।

तथाहि——ज्ञानादिमात्रं वा निरङ्कुशज्ञानादिकं वा भगवच्छब्दप्रवृत्तिनिमित्तम्? आद्ये, पिपीलिकादावपि भगवच्छब्दः प्रयुज्येत । द्वितीये तु सर्वत्र निरवधिकज्ञानाद्यभावात् प्रवृत्तिनिमित्तासिद्धेर्नैकशक्त्या सर्वत्र मुख्यत्वम् । अनेकशक्तिकल्पनं चायुक्तम्; प्रयोगान्यथासिद्धेरिति भगवत्पराशराभिप्रायः ॥ ननु, "उत्पत्तिं प्रलयं चैव भूतानामागतिं गतिम् । वेत्ति विद्यामविद्यां च स वाच्यो भगवानिति" इति ग्रन्थोक्तेष्वौपचारिकभगवच्छब्दप्रयोगयोग्येषु यत् अलौकिकार्थसाक्षात्कारित्वमस्ति, तदेव प्रवृत्तिनिमित्तीकृत्य भगवच्छब्दः सर्वत्र मुख्यः स्यात् ॥ नैवम् । अलौकिकार्थसाक्षात्करणमात्रस्य प्रयोगाविषयव्यावृत्तत्वाभावात् । न हि समाधिपर्यन्तयोगकाष्ठानिष्ठेषु केशिध्वजखाण्डिक्यप्रह्लादादिषु भगवच्छब्दः प्रयुज्यते । किञ्च प्रत्यक्षमूलव्युत्पत्त्या गवादिशब्दानामिव आगममूलव्युत्पत्त्या समग्रषाड्गुण्यादिमत्येव तस्य मुख्यत्वावगमात्, "ज्ञानशक्तिबलैश्वर्यवीर्यतेजांस्यशेषतः । भगवच्छब्दवाच्यानि विना हेयैर्गुणादिभिः" इति निर्दोषत्वपर्यन्तानां ज्ञानादीनां

तापत्रयातुरैरमृतत्वाय स एव जिज्ञास्यः । अतः सर्वेश्वर एव जिज्ञासाकर्मभूतं ब्रह्म ।

प्रवृत्तिनिमित्ततया वाच्यत्वमुच्यते । निर्दोषत्वञ्च निमित्ततया वाच्यत्वेनोच्यते ; अन्यथा तदुक्तिवैयर्थ्यात् । न ह्यवाच्यं सर्वं निषेद्धव्यम् । अनुक्त्यैव ह्यवाच्यत्वं सिद्ध्यति । न च ज्ञानशक्त्यादिष्वेकैकस्य प्रवृत्तिनिमित्तत्वम् ; किन्तु ज्ञानादिसमुदायस्यैव तत् । अन्यथा अशेषत इति पदवैयर्थ्यात् । ऐश्वर्यस्य समग्रस्येत्युक्तत्वात् गवादिष्वतिप्रसङ्गभयाच्च प्रकर्षविशेषवतां ज्ञानादीनां समुदायस्यैव प्रवृत्तिनिमित्तत्वमुक्तमित्यभ्युपेत्यम् । एवं न्यायसिद्धार्थस्याऽऽगमसिद्धार्थो भाष्ये दृष्टान्तीकृतः भगवच्छब्दवदिति । तथा[च] भगवता पाराशर्येण, "परं जैमिनिर्मुख्यत्वात्", "स्याच्चैकस्य ब्रह्मशब्दवत्" इत्यादिसूत्रेषु ब्रह्मशब्दस्य भगवत्येव मुख्यत्वमुत्तरत्रोक्तम् । अतो यथोक्त एवार्थः । तथा च स्पष्टीकृतं श्रीमति गारुडे पुराणे, "वेदे भूरिप्रयोगाच्च गुणयोगाच्च शार्ङ्गिणि । तस्मिन्नेव ब्रह्मशब्दो मुख्यवृत्तो महामुने" इत्यारभ्य- "यस्मिन् प्रयुज्यमाने तु गुणयोगः सुपुष्कलः । तत्रैव मुख्यवृत्तोऽयमन्यत्र ह्युपचारतः" इति ।

एवं शब्दसामर्थ्यमुपपादितम् । अथ ब्रह्मशब्दस्यानेकार्थमुख्यवृत्तत्वेऽप्येतत्सूत्रस्थस्य तस्यार्थस्वाभाव्यात् पुरुषोत्तमपरत्वमुच्यते । तापत्रयातुरैरिति । सः एव अमृतत्वायेति पदैः, "तमेवं विद्वानमृत इह भवति नान्यः पन्थाः" इत्यादिश्रुत्यर्थो विवक्षितः । अत एव हि 'पुरुषोत्तमोऽभिधीयते' इत्युक्तम् । श्रुतेरपि पूर्वोक्तहेयप्रत्यनीकत्वकल्याणगुणाकरत्वविशिष्ट एव तापत्रयातुरैरुपास्यः, न तु तेष्वन्यतम इति । न हि कारागारनिगलित एव तन्मोचनार्थिभिरभ्यर्थनीयः । तथा च वैष्णवे पुराणे निर्दोषकल्याणगुणाकरस्यैव मुमुक्षूपास्यत्वमुक्तम्, "स सर्वभूतप्रकृतिं विकारान्", "समस्तकल्याणगुणात्मकोसौ" इत्यादिना, "तद् ज्ञानमज्ञानमतोऽन्यदुक्तम्" इत्यन्तेन ।

ब्रह्मशब्दव्याख्यां निगमयति अत इति । अतः निर्दोषमङ्गलगुणाकरस्य सर्वेश्वरस्यैव तापत्रयातुरैर्जिज्ञास्यत्वादत्र तापत्रयातुरजिज्ञास्यतयोक्तं ब्रह्म सर्वेश्वर एवेत्यर्थः । यद्वा अतः—उक्तशब्दसामर्थ्यादर्थसामर्थ्याच्चेत्यर्थः ।

ननु ब्रह्मशब्दो व्युत्पन्नोऽव्युत्पन्नो वा भगवति मुख्यः? अव्युत्पन्नत्वे बोधकत्वविरहिणस्तस्य न क्वचिन्मुख्यत्वम् । नापि व्युत्पन्नः स मुख्यः ; अलौकिकेऽर्थे व्युत्पत्त्यसंभवात् । कथमप्रतीते व्यवहाराविषये बुद्धिपूर्विका, यादृच्छिकी च व्युत्पत्तिः संभवति ॥ उच्यते । यथा कामिनीचन्दनभवनादिषु प्रयोगेण सुखविषयतया व्युत्पन्नस्य स्वर्गशब्दस्य "यस्मिन्नोष्णम्" इत्याद्यर्थवादपदसमभिव्याहारेणालौकिकसुखविशेषविषयतया व्युत्पत्तिः, यथा लोके क्वचिदप्यव्युत्पन्नत्वेपि यूप-आहवनीय-स्फ्य-[1]कपाल-चषाल-चात्वालादिशब्दानां वाक्यान्तरपदान्तरसमभिव्याहारात् तत्तदर्थविषयतया व्युत्पत्तिः, एवं ब्रह्मात्मेश्वरादिशब्दानां लोके केषुचिदर्थेषु प्रयोगाद् व्युत्पत्तौ सत्यामसत्यामपि, "यतो वा इमानि भूतानि जायन्ते", "सत्यं ज्ञानमनन्तं ब्रह्म" इत्यादिप्रसिद्धार्थवाक्यान्तरपदान्तरसमभिव्याहारात् अलौकिकपरमात्मविषयत्वव्युत्पत्तिरुपपद्यते । अतो ब्रह्मशब्दस्योक्तरीत्या भगवत्येव मुख्यत्वं युक्तम् ।

---

1. कपालेति । अष्टाकपालमित्यादौ यज्ञोपयुज्यमाने विलक्षणाकृतिद्रव्ये विशेषरूपेण वा इतरसाधारणरूपेण वा लोकप्रसिद्धिर्नेति भावः ।

**ज्ञातुमिच्छा जिज्ञासा । इच्छाया इष्यमाणप्रधानत्वादिष्यमाणं ज्ञानमिह**

अथ जिज्ञासाशब्दस्य व्याख्येयत्वस्फोरणाय प्रकृतिप्रत्ययविभागं दर्शयति **ज्ञातुमिच्छा जिज्ञासेति**। विषयवैलक्षण्याधीनाया इच्छायाः कथं विधेयत्व[1]मित्यत्राह **इच्छाया इति**। ज्ञानस्य विधानार्हतामाह **इष्यमाणप्रधानत्वादिति**। सन्वाच्याया इच्छाया धात्वर्थः कर्म; कर्मणश्च क्रिया शेषभूता; तत्सिद्ध्यर्थत्वात् तस्याः। यथा यागीयव्रीह्यादेः प्रोक्षणादिः (पू. मी. २-१-४)। कर्तुः क्रियया आप्तुमिष्टतमत्वं हि कर्मत्वम्। अतः प्रकृत्यर्थभूतज्ञानकर्मिकेच्छा तत्सिद्ध्यर्था। अत इच्छाया इष्यमाणज्ञानप्रधानत्वाद् इष्यमाणं ज्ञानं विधेयमित्यर्थः। जिज्ञासायाः कर्तव्यत्वे प्रतीयमाने कथं ज्ञानस्य विधेयत्वम्?॥ उच्यते। यथा, 'स्नात्वा भुञ्जीत', 'प्राङ्मुखो भुञ्जीत' इत्यत्र भुजिधातोर्विधिप्रत्ययान्तत्वाद् भोजनस्य कर्तव्यत्वे प्रतीतेऽपि स्नान-प्राङ्मुखत्व-नियमयोरेव विधेस्तात्पर्यमिति अर्थस्वभावादभ्युपगम्यते, तयोरप्राप्तत्वात्, "अप्राप्ते हि शास्त्रमर्थवत्"; तत्र भोजनं चान्यतः प्राप्तमनूद्यते—एवमिच्छाया विधेयत्वासंभवात् तद्विषयभूतं विचारात्मकं ज्ञानमेव तात्पर्यतो विधीयते। "इष्यमाणं ज्ञानमिहाभिप्रेतम्" इति हि सारेऽभिहितम्। सन्नन्तनिर्देशश्च, "निदिध्यासितव्यः", "विजिज्ञासितव्यः", "तद्विजिज्ञासस्व" इत्यादिश्रुत्यनुसारेण क्रियते। श्रुतिश्च उपायदशाप्रभृति भगवज्ज्ञानस्य प्रीतिरूपत्वेन इच्छाविषयत्वात् तथा निर्दिशति। यद्वा, **ब्रह्मजिज्ञासेति** सन्नन्तनिर्देशो विचारस्य रागप्राप्तत्व-ज्ञापनार्थः। एवमेव, "धर्मजिज्ञासा" इत्यत्रापि। अत्र तर्करूपं ज्ञानं विधेयम्; तर्कानुगृहीतवाक्यजन्यप्रमिति-रूपज्ञानं तु फलत्वान्न विधेयम्। 'प्रमितिरूपं[2] ज्ञानं विधेयम्, तर्करूपं ज्ञानमार्थम्' इत्यपि परैरुक्तम्, अन्तर्नीतं विचारमाक्षिपतीति। ततोपि प्रागुक्तपक्षः साधीयान्। वेदान्तार्थविचारात्मकन्यायनिबन्धनरूपं हि शास्त्रं ब्रह्ममीमांसेति प्रसिद्धिः। प्रमितिश्च फलम्। अत एव हि **ब्रह्मविचारः कर्तव्य इति** भाष्ये वक्ष्यते। सन्नन्तस्यास्य ज्ञाधातोर्ज्ञानसामान्यवाचिनो विशेषाकाङ्क्षायां समुचितविशेषपर्यवसानं हि न्याय्यम्।

ब्रह्मणो जिज्ञासा कर्तव्या; न तु कपिलसुगताद्यभिमतानां प्रधानादितत्त्वानामिति ज्ञातव्यविशेषनिर्णयपर-मिदं सूत्रं व्याख्यातं यादवप्रकाशाचार्यैः। तद्व्यावृत्त्यर्थ **इह**शब्दः। इह—अस्मिन् उपक्रमसूत्र इत्यर्थः। ब्रह्मणो

---

1 विधेयत्वं प्रयत्नसाध्यत्वम्। तत् विचारात्मकज्ञाने सुस्थम्। विधानार्हतामिति। इष्यमाणपदेना-निष्पन्नत्वज्ञापनात् निष्पादनार्हत्वमुच्यत इति भावः। इष्यमाणप्रधानत्वादिति कर्मणः प्राधान्यमुक्त-मुदाहृत्योपपादयति यथा यागीयेति। तथा च गुणप्रधानयोर्मध्ये प्रधाने तदन्वयो युक्त इति भावः। इष्यमाणप्रधानत्वादित्यस्य इष्यमाणसिद्ध्यर्थत्वादिति वाऽर्थः, तथा विवरणात्। शाब्दस्यासंभवं शंकते जिज्ञासाया इति। सविशेषणेहीति न्यायोऽत्र भाव्यः।

2 ज्ञानं विधेयमिति। 'ब्रह्मात्मभावोपायो ज्ञानमेषितव्यम्। निर्णयात्मकतदिच्छामुखेन मीमांसायां प्रवर्त्यते' इति भामत्युक्तेरिति भावः। अत्र एषितव्यमिति तव्यप्रत्ययः अनुवादत्वव्यावृत्तये इति कल्पतरुः। अतो ज्ञाप्यत्वरूपविधेयत्वसिद्धिः। 'निर्णयश्च विचारसाध्य इति तत्कर्तव्यताऽर्थाद्गम्यते। आर्थिके चास्मिन्नर्थे कर्तव्यपदाध्याहारः। श्रौतस्तु—ब्रह्मज्ञानेच्छा भवितुं युक्तेत्येष एव' इति च कल्पतरुः। इत्यपीति अपिशब्देन, 'तर्करूपज्ञानस्यापि सौत्रज्ञाधातुना ग्रहणं तदिष्टम्; 'अवगतिपर्यन्तं ज्ञानं सन्वाच्याया इच्छायाः कर्म' इति निर्णयोपधायकज्ञानार्थकत्वस्य शांकरभाष्यस्वरसलब्धत्वात्' इति सूच्यते।

**विधीयते । मीमांसापूर्वभागज्ञातस्य कर्मणोऽल्पास्थिरफलत्वात् उपरितनभागावसेयस्य ब्रह्मज्ञानस्यानन्ताक्षयफलत्वाच्च**

जिज्ञास्यत्वमात्रे सिद्धे हि तस्यैव जिज्ञास्यत्वसिद्धिः । न चोभयं सूत्रप्रतिपाद्यम्; ब्रह्म जिज्ञास्यमेव, ब्रह्मैव जिज्ञास्यमिति वाक्यभेदप्रसङ्गात् । ननु ब्रह्मणो मुमुक्षुभिर्नियमेन जिज्ञास्यत्वं तन्त्रान्तरसिद्धानां प्रधानादीनामजिज्ञास्यत्वेन विना न सिद्ध्यतीति ब्रह्मजिज्ञास्यत्वसमर्थने प्रधानादीनामजिज्ञास्यत्वसमर्थनमर्थादापततीति न वाक्यभेदप्रसङ्ग इति चेत्—न; अधीतक्रमेण वेदार्थे निरूप्यमाणे पूर्वभागविचारस्य प्रधानादिनिरासनिरपेक्षत्वात् । न ह्येकस्य प्रबन्धस्यैकदेशे निरूपिते तदेकदेशान्तरनिरूपणस्य प्रबन्धान्तरप्रमेयनिराससापेक्षता भवति । न हि पूर्वषट्के निरूपिते सति उत्तरषट्कनिरूपणं कपिलसुगतादिमतव्युदसनेन विना न संभवति । यदि वेदान्तार्थश्रद्धादार्ढिम्ने तदितरपक्षनिरसनमपेक्षितमिह क्रियत इति मतम्, तदनुपपन्नम्; कृतकरत्वप्रसङ्गात् । एतदुक्तं भवति—इह प्रधानादीनामजिज्ञास्यत्वं किं वेदान्तानामतत्परत्वोपपादनेन समर्थ्यते, उत कपिलसुगताद्यागमाप्रामाण्य-तत्प्रमेयदौस्स्थ्यप्रतिपादनेन समर्थ्यते ? । न प्रथमः; ईक्षत्यधिकरणादिभिर्वेदान्तानामतत्परत्वस्य वक्ष्यमाणतया अत्र वक्तव्यत्वाभावात्; न द्वितीयः; वेदविरुद्धस्मृतीनामप्रामाण्यस्य पूर्वमीमांसायामेव समर्थितत्वात्; सांख्यसौगताद्यभिमतप्रमेयदौस्स्थ्यस्य तर्कपादे प्रतिपादयिष्यमाणत्वात् । "विप्रतिषेधाच्चासमञ्जसम्", "इतरेषां चानुपलब्धेः", "एतेन योगः प्रत्युक्तः", "उदासीनानामपि चैवं सिद्धिः", "अन्त्यावस्थितेश्चोभयनित्यत्वादविशेषः" इत्यादिभिः सूत्रैस्तदुक्तमोक्षतदुपायनिरासस्यापि करिष्यमाणतया चात्र वक्तव्याभावात् । किञ्च, "एतेन सर्वे व्याख्याता व्याख्याताः" इत्यत्र, "अनावृत्तिः शब्दादनावृत्तिः शब्दात्" इति शास्त्रान्ते च, "सूत्राभ्यासफलमनुक्तांशज्ञापनम्; अनुक्तांशश्च सांख्ययोगावगम्यः" इति वदताम्, मोक्षस्य सांख्ययोगसमुच्चयसापेक्षत्वं च प्रतिपादयतां सौगतादिवत् सांख्यादिनिरासेन शारीरकस्यैवारम्भणीयत्वप्रतिज्ञानमतीव व्याहतम् ॥ सांख्ययोगयोर्विरुद्धांशाभिप्रायमनादरणीयत्वकथनमिति चेन्न; विरुद्धांशानादरणीयत्वस्य विरोधाधिकरणन्यायसिद्धत्वादेव । अतो यादवप्रकाशकृतं सूत्रतात्पर्यवर्णनमनुपपन्नमिति इहशब्दाभिप्रायः ।

विधीयत इति । अज्ञातज्ञापनं विधिरिह विवक्षितम्; न त्वप्रवृत्तप्रवर्तनम्; रागतः प्रवृत्तेर्वक्ष्यमाणत्वात् । रागतः प्रवृत्तस्यापि पूर्वपक्षयुक्त्याऽनारम्भणीयताबुद्धौ सत्यामारम्भणीयत्वज्ञापनं[1] हि अज्ञातज्ञापनम् । अतो विधीयत इत्यस्य स्वयमेव प्रवर्तत इति वक्ष्यमाणग्रन्थेनाविरोधः ।

इत्थं पदार्था व्याख्याताः । अथ सूत्रस्य वाक्यार्थमाह मीमांसेति । अत्र पूर्ववृत्तात् कर्मज्ञानादनन्तरं तत एव हेतोरिति अथात शब्दार्थ उक्तः । ब्रह्म ज्ञातव्यमिति ब्रह्मजिज्ञासापदार्थः । ज्ञातव्यम् विचारयोग्यम् ।

---

1 ननु विचारे रागतः प्रवृत्तिरस्ति चेत्, तस्य ज्ञातत्वमप्यस्ति; अज्ञाते प्रवृत्त्ययोगात् । अतः अज्ञातज्ञापनं कथमित्यत्र विवक्षितमाह आरम्भणीयत्वज्ञापनमिति । एतद्भाष्यसंदर्भव्याख्यानरीत्यन्तरं भाष्यार्थदर्पणे द्रष्टव्यम् ।

पूर्ववृत्तात् कर्मज्ञानादनन्तरं तत एव हेतोर्ब्रह्म ज्ञातव्यमित्युक्तं भवति । तदाह वृत्तिकारः—"वृत्तात् कर्माधिगमादनन्तरं ब्रह्मविविदिषा" इति । वक्ष्यति च कर्मब्रह्ममीमांसयोरैकशास्त्र्यम्, "संहितमेतच्छारीरकं जैमिनीयेन षोडशलक्षणेनेति शास्त्रैकत्वसिद्धिः" इति ।

---

तत एवेत्येवकारेण[1] शास्त्रान्तराधिगमनैरपेक्ष्यमथशब्दफलितमभिप्रेतम् । उक्तं भवतीति । शब्दतोऽर्थतश्चेति भावः । कथमस्य सूत्रस्यायमर्थ इति शङ्कायां तदुपपादयति मीमांसेत्यादिना । अथात इत्यादिपदानां यथोक्त एवार्थः; कर्मब्रह्ममीमांसयोरैकशास्त्र्यात् । ऐकशास्त्र्यं च नियतपौर्वापर्यभागद्वयात्मकवेदाख्यैकप्रबन्धव्याख्यान-रूपत्वादित्यर्थः । अत्र व्याख्येयस्य पूर्वापरभावेनावस्थितभागद्वयरूपत्वम्, तद्धेतुकं व्याख्यानस्य पौर्वापर्यविशेष-विशिष्टभागद्वयरूपत्वं चोभयं पदयोजनायां वाक्ययोजनायां च वक्तव्यम्—तथापि ग्रन्थलाघवार्थं पदयोजनायाम् 'अधीतसाङ्गसशिरस्कवेदस्य' इति व्याख्येयस्य नियतपौर्वापर्यभागद्वयरूपत्वमुक्तम् । अत्र तु वाक्ययोजनायां व्याख्यानस्य नियतपौर्वापर्यभागद्वयरूपतयैकशास्त्र्यमुक्तम् । उभयत्रोभयमनुसंधेयम् । भाग-शब्दाभ्यां मीमांसाद्वयस्य एकावयवित्वं सूचितम् । पूर्वोपरितनशब्दाभ्यां क्रमनियम उक्तः । कर्मब्रह्म-शब्दाभ्यां वृत्तवर्तिष्यमाणकथनम् । अल्पास्थिरफलत्वानन्तस्थिरफलत्वाभ्यां तयोर्हेतुहेतुमद्भावोपपादनम् । मुक्त्युपायोपयोगितया कर्मणां स्वरूपेणोपादेयताप्रतीतिरनन्तस्थिरफलापातप्रतीत्यन्तर्भूता । अतः पृथगनुक्तिः । एवं क्रमविशेषविशिष्टैकव्याख्येयव्याख्यानरूपतया कर्मब्रह्ममीमांसयोरैकशास्त्र्यात् सूत्रस्य यथोक्त एवार्थ इत्यर्थः ।

पूर्वप्रतिज्ञातं वृत्तिकारमतानुसारं वृत्तिग्रन्थेन संवादयति तदाहेति । कर्माधिगमस्यैव पूर्ववृत्तत्वं न केवलं कण्ठोक्तम्, ऐकशास्त्र्योक्त्याक्षिप्तश्चेत्यभिप्रयन्नाह । वक्ष्यतिचेति ।

वृत्तादित्यादिः, संहितमित्यादिश्च वृत्तिग्रन्थौ । शारीरकं ब्रह्ममीमांसा । जगच्छरीर[क]ः परमात्मा शारीरः । "तस्यैष एव शारीर आत्मा" इति श्रुतेः । तद्विषयं शास्त्रं[2] शारीरकमित्युच्यते । षोडशलक्षणेन षोडशाध्यायेन । संहितमिति । नियतपौर्वापर्यैकव्याख्येयव्याख्यानरूपतया संगतमिति भावः । "अर्थैकत्वादेकं वाक्यम्" इति न्यायेन प्रधानप्रतिपाद्यैक्यात् व्याख्येयस्य वेदस्यैकप्रबन्धत्वं भवेत् । तच्चोपपद्यते । पुरुषार्थपरत्वाद्वेदस्य । ब्रह्मपरत्वाद्वा; "सर्वे वेदा यत्पदमामनन्ति", "वेदैश्च सर्वैरहमेव वेद्यः" इति हि श्रुतिस्मृती । वेदार्थविचारस्यानुगत-त्वान्मीमांसाया एकप्रबन्धत्वम् । अनेनैकशास्त्र्येण क(ध)र्माधिगमस्य पूर्ववृत्तत्वमाक्षिप्तम् ॥

ननु यदि ऐकशास्त्र्यं कर्मब्रह्मविचारयोः, तर्हि उपक्रमे साधारणार्थः प्रतिज्ञायेत, 'अथातो वेदार्थजिज्ञासे'ति । न चैवं प्रतिज्ञातम् । किन्तु पूर्वभागासाधारण एव प्रतिज्ञातः, 'अथातो धर्मजिज्ञासे'ति ॥

---

1 एवकारेणेति । अद्वैतिनः, अथेत्यनेन यदानन्तर्यमुच्यते, तस्यैव हेतुत्वम् अतःशब्देनोच्यते इति स्वरसप्रतीतं परित्यज्य, अथ=साधनचतुष्टयसंपत्त्यनन्तरम् अतः=वेदेनैव कर्मणामनित्यफलकत्व-बोधनादित्यर्थं वर्णयन्ति, तत्खण्डनमप्येवकारेणेति ध्येयम् । तत्त्वटीकोक्तमपि ज्ञेयम् ।

2 शारीरकम् । शारीरं कायति प्रतिपादयतीति शारीरकम् । कै गै शब्दे । 'आतोऽनुपसर्गे कः' इति कप्रत्यये गोद इतिवत् सिद्धिः । शारीरमधिकृत्य प्रवृत्तं शास्त्रं शारीरकमिति चानन्दमयाधिकरण भाष्यमे तत्तात्पर्यकम् । यद्वा शारीरमाचष्टे इति नामधातौ क्विपि कर्त्रर्थेण्वुलन्तम् । शारीरभूतपरमात्माख्यानकरमित्यर्थः ।

अत्र ब्रूमः—अथातो ब्रह्मजिज्ञासेत्येवोभयभागसाधारणार्थप्रतिज्ञा। कर्मविचारस्तु ब्रह्ममीमांसातृतीयलक्षणचतुर्थपादे सङ्गतः। ब्रह्मविचारान्तर्भावेपि पृथक्करणमुपपद्यते; यथा निग्रहान्तर्भूतच्छलजात्योराह्निकभेदेन पृथगुक्तिः, यथा च निग्रहान्तर्भूतहेत्वाभासानामध्यायभेदेन [1]पृथगुक्तिः। पृथक्करणं च बहुग्रन्थप्रतिपाद्यत्वात्। तत्र [च] पूर्वभावित्वमुपजीव्योपजीवकभावादिवक्ष्यमाणहेतुनिबन्धनम्। एतदुक्तं भवति—अर्थक्रमाद् ब्रह्ममीमांसातृतीयलक्षणचतुर्थपादेन कर्मविचारः सङ्गतः। प्रतिपत्तिसौकर्यलक्षणक्रमात्तु कर्मविचारस्य पूर्वभाव इति॥ एवं वा—साधर्म्यवैधर्म्यसमयोर्जात्योः कथनेन यथा प्रतिधर्मसमा उभयानुयायिनी अर्थसिद्धा। एवं भागद्वयासाधारणार्थप्रतिज्ञाद्वये कृते साधारणार्थप्रतिज्ञानमार्थं स्यात्। साधारणार्थे प्रतिज्ञातेऽप्यसाधारणार्थस्तु पृथगेव प्रतिज्ञातव्यः। धर्मजिज्ञासायां प्रतिज्ञातायामपि, "अथातः शेषलक्षणम्", "अथातः क्रत्वर्थपुरुषार्थयोर्जिज्ञासा" इत्यादौ ह्यसाधारणार्थप्रतिज्ञा कृता। अतो भागद्वयासाधारणार्थप्रतिज्ञानेन तदनुगतसाधारणार्थप्रतिज्ञानमार्थं स्यादिति प्रथमम्, 'अथातोधर्मजिज्ञासे'ति प्रतिज्ञातम्; न तु वेदार्थजिज्ञासेति॥ अथवा—अथातोधर्मजिज्ञासेत्येव साधारणप्रतिज्ञा। अलौकिकश्रेयःसाधनं हि धर्मः; तत् अनुयायिप्रतिपाद्यम्। धर्मश्च साध्यसिद्धभेदेन द्विविधः। सिद्धरूपे वस्तुनि धर्मशब्दप्रयोगो महाभारते दृष्टः। यथा, "ये च वेदविदो विप्रा ये चाध्यात्मविदो जनाः। ते वदन्ति महात्मानं कृष्णं धर्मं सनातनम्" इति। तथाऽभियुक्तैश्च अलौकिकत्वे सति श्रेयःसाधनत्वं धर्मशब्दप्रवृत्तिनिमित्तं मन्वानैः सिद्धरूपेऽर्थे धर्मशब्दः प्रयुक्तः, "द्रव्यक्रियागुणादीनां धर्मत्वं स्थापयिष्यते। तेषामैन्द्रियकत्वेपि न तादूरूप्येण धर्मता" इत्यादौ। तत्र द्रव्यादिसद्भावेऽपि क्रियाप्राधान्यात् साध्यधर्मपरः पूर्वभागः; उपासनतदङ्गसद्भावेपि ब्रह्मप्रधानत्वात् सिद्धधर्मपर ऊर्ध्वभागः। अत उभयभागविचारसाधारणी प्रथमप्रतिज्ञा। तत्र धर्मशब्दस्य साध्यधर्मविषयतया प्रसिद्धिप्राचुर्येण बुद्धिस्थत्वात्, पूर्वभागप्रतिपन्नत्वेन प्राथम्यात्, धर्मजिज्ञासापदेनैव तन्त्रेण वा अर्थतो वा प्रतिज्ञातत्वोपपत्तेश्च तल्लक्षणमुक्तं चोदनासूत्रे। सिद्धरूपधर्मविशेषस्य च साधारणप्रतिज्ञयैव अर्थतः प्रतिज्ञातत्वेपि तस्य बहुग्रन्थव्यवधानात्, [2]शब्दाबोध्यत्वशङ्कापरिजिहीर्षया च पुनः प्रतिज्ञा कृता; तस्य लक्षणमुक्तं जन्मादिसूत्रे—इति युक्तमैकशास्त्र्यम्।

ननु पूर्वभागस्य साध्यधर्मप्रधानतोक्तिरुदाहृतवचनेन विरुध्यते। तत्र पूर्वभागेऽपि सिद्धरूपस्य परस्य कर्माराध्यतया प्रधानप्रतिपाद्यत्वावगमात्। तस्मिन् वचने वेदविच्छब्दो हि पूर्वभागाभिज्ञपरः, गोबलीवर्दन्यायात्; "विष्णुनामा स वेदेषु वेदान्तेषु च गीयते" इत्यनेनैकार्थ्याच्च। न च गुणभावेन कर्मणः(णां) प्रतिपाद्यत्वमित्यविरोधः; प्राधान्येन प्रतिपाद्यत्वस्य जैमिनेरभिमतत्वात्, भवद्भिरपि तथोक्तत्वाच्च। सत्यम्। वस्तुतः प्राधान्यं परमात्मन एव; यथा राज्ञस्तात्पर्यगोचरत्वलक्षणम्। शाब्दं प्राधान्यं तु कर्मण एव; यथा राजपुरुषस्य। तच्चातिरस्कृतम्। तत्र तस्य परमात्माराधनरूपत्वानवगमात्। न च तदवगमोऽवश्यं संपाद्यः। अन्तवत्स्वर्गादिफलप्रदत्वे कर्मणां परदेवताज्ञाननैरपेक्ष्यं हि श्रुतिस्मृतिभ्यामवगम्यते। "यो ह वा एतदक्षरं गार्गि! अविदित्वाऽस्मिँल्लोके जुहोति, यजते, तपस्तप्यते बहूनि वर्षसहस्राणि, अन्तवदेवास्य तद्भवति" इति, "अहं हि सर्वयज्ञानां भोक्ता च प्रभुरेव च। न तु मामभिजानन्ति तत्त्वेनातश्च्यवन्ति ते" इति च।

---

1 पृथगुक्तिः न्यायदर्शने। 2 शब्दाबोध्यत्वशंका सिद्धेव्युत्पत्त्यभावभ्रान्तिमूला।

**अतः प्रतिपिपादयिषितार्थभेदेन षट्कभेदवत् अध्यायभेदवच्च पूर्वोत्तरमीमांसयोर्भेदः ।**

अतस्तन्नैरपेक्ष्यलक्षणमपि प्राधान्यमस्ति कर्मणः । अतः पूर्वभागे कर्मणः प्रागवगतं प्राधान्यं पश्चादवगन्तव्य-परमात्माराधनरूपत्वं चाविरुद्धम् । अतः प्रतिज्ञोपपत्तेः शास्त्रैक्यं युक्तम् ।

यद्यपि कर्मब्रह्ममीमांसयोरैकशास्त्र्यमविवक्षितं जैमिनिना——तथापि तदङ्गीकृत्य तदेकशास्त्रतया बादरायणेन ब्रह्मसूत्रप्रणयनं युक्तम्, यतः[1] "अतदर्थतया क्लृप्तमपि योग्यमपेक्षितम् । तादर्थ्यमर्हति ग्रामे कल्प्ये पूर्वतटाकवत्" । विवक्षितत्व(त्वं)सम्भवश्च दर्शितः । अतः(तश्च)शास्त्रैक्यं युक्तम् ।

नन्विदमयुक्तमैकशास्त्र्यम्, शारीरकशब्दसूचितात् प्रधानप्रतिपाद्यभेदात्, जैमिनीयशब्दसूचितात् कर्तृ-भेदात्, तदुभयफलितात् प्रयोजनभेदात्, अर्थविरोधाच्चेत्याशङ्कां परिहरति अतः प्रतिपिपादयिषितेति । अतः वृत्तिकारोक्तात् एकव्याख्येयव्याख्यानरूप[त्व]संबन्धादित्यर्थः । षट्कभेदः पूर्वमीमांसायाम्, अध्यायभेदस्तत्रोत्तरत्र च निदर्शनार्थमुक्तौ । अर्थभेदाभावे ह्येकं षट्कमेकोऽध्यायो वा स्यात् । अत एकावयवित्वे सिद्धे सति अवान्तरार्थभेदो न महावाक्यैकत्वविरोधी, यथा पदार्थभेदो वाक्यैकत्वाविरोधीति भावः । अनेन प्रतिपाद्यभेदः परिहृतः । प्रयोजनभेदश्चार्थात्परिहृतः; षट्कद्वयचिन्तित[2]प्रकृतिविकृतिप्रयोजनभेदस्य शास्त्रभेदकत्वाभावात् । अनेन वृत्तिग्रन्थगतषोडशलक्षणशब्दतात्पर्यं च दर्शितम् । पूर्वोत्तरमीमांसाशब्देन जैमिनीयशारीरकशब्दौ च विवृतौ । प्रतिपिपादयिषितशब्देनार्थविरोधः परिहृतः । प्रतिपादयितुमिष्टं हि प्रतिपिपादयिषितम् । स च तात्पर्यविषयोऽर्थः । विरुद्धतया प्रतीयमानेषु देवतानिरासादिषु न तात्पर्यमित्यभिप्रायः ॥

---

1 अतदर्थतयाक्लृप्तामति । न तदिति समासः । तदतिरिक्तकार्यार्थितयैव क्लृप्तमित्यर्थः । अन्यदीयश्लोक इह स्ववाक्यच्छाययाऽनूदितः । अतः यत इत्यस्य तादर्थ्यमर्हतीत्यत्रान्वयः । विवक्षितत्वं संभवश्चेति पाठे धर्मजिज्ञासासूत्रस्य साधारणतया व्याख्यानात् विवक्षितत्वमुक्तम् । कर्मब्रह्मज्ञानयोः सापेक्षत्वं व्याख्येयैक्यादि च शास्त्रैक्यसंभवोपपादकमुक्तमित्यर्थः । किञ्च पूर्वमीमांसाग्रन्थानारूढ-जैमिन्युक्तार्थप्रसंगेषु सर्वत्र बादरायणो जैमिनिं नाम्ना निर्दिशति । तत्र किञ्चित् स्वानभिमतमपि; जैमिनिनाऽपि विमर्शायोपस्थापितमात्रमपि भवेत् । निर्विवादं सत् पूर्वमीमांसोक्तं तु, तदुक्तमिति वाक्येन दर्शयति । तत् ऐकग्रन्थ्याभिप्रायेणैव । अत एव शांकरभाष्यादौ अपशूद्राधिकरणशरीरेभावाधिकरणादौ पौनरुक्त्यशंकापरिहारप्रवृत्तिरुपपद्यत इत्यादि द्रष्टव्यम् । शास्त्रैक्यसंभवस्योपरि विस्तरेणोपपादनादत्र विवक्षितत्वसंभव इति पाठ एव श्रेयान् ।

2 प्रकृतिविकृतीति । उपदेशषट्कमतिदेशषट्कमित्यपि व्यवहारः प्रसिद्धः । अध्यायभेदहेतुस्तु-द्वादशानामध्यायानाम् - 'मानं भेदः शेषभावः प्रयुक्तिः पौर्वापर्यञ्चाधिकारोऽतिदेशः । सामान्येनाथो विशेषातिदेश ऊहो बाधस्तन्त्रमेवं प्रसङ्गः' इत्यर्थभेदोऽस्माभिरपि दर्शितः । उपरि चतुरध्यायी संकर्षकाण्डः । तदर्थभेदश्चाधिकरणचिन्तामणौ, "तत उपरि चतुर्लक्षणी देवतार्था" इत्यधिकरणसारावलिविवरणावसरे, "स्वरूपमादौ तद्भेदस्तदुपासनपूर्वकम् । फलञ्च देवताकाण्डे देवतानां तु कथ्यते" इति देवतास्वरूप-तद्भेद-तदुपासन-तत्फलरूपेण दर्शितः । तदिदमत्र काशकृत्स्नीयसंकर्षकाण्डैकसंग्रहपक्षे । यदा तु जैमिनीय एव संकर्ष-काण्डश्चतुरध्यायी गृह्यते; काशकृत्स्नीयस्तु जैमिन्युक्तिविशदानवगम्यदेवताविशोधनप्रवृत्तः तच्छेषः स्यादिति—तदा तस्य द्वादशाध्याय्युक्तार्थेषु केषाञ्चिदस्फुटानामाकृष्य संकलय्य विचाररूपत्वात् तत्र होमपाद-यूपपाद-इष्टकापाद-अवदानपाद-वरणपादेत्यादिपादनामनिर्देशाच्चान्यादृश एवार्थभेदो भाव्य इत्यलम् । विस्तरः परमार्थभूषणे ।

नन्वेवं कथमभिधीयते? "आम्नायस्य क्रियार्थत्वात्" (पू. मी. १-२) इति सिद्धपरवाक्यानां तच्छेषत्वं हि सूत्रकारेण कण्ठोक्तम्। तच्च विरुद्धयत एव। अतः शास्त्रभेद इति ॥

नैवम्। "पदे जुहोति", "आहवनीये जुहोति", "न हिंस्यात् सर्वा भूतानि", "पशुमालभेत" इतिवत्, शास्त्रान्तरे, "कर्मण्यण्" "आतोऽनुपसर्गे कः" इतिवच्च उत्सर्गापवादन्यायेन शास्त्रैक्याविरोधात्। सामान्येन सिद्धपरवाक्यानां क्रियाशेषत्वेऽभिहिते सिद्धपरवाक्यविशेषस्य किं विधिशेषत्वं न वेति विचार्य, 'स्वयं पुरुषार्थविरहिणामेव सिद्धपराणां क्रियाशेषत्वम्; स्वयंपुरुषार्थपर्यवसायिनां तु सिद्धपरवाक्यानामतच्छेषत्वम्' इति हि निर्णेतुं युक्तम्, यथा होमस्य सामान्येनाऽऽहवनीये प्राप्तत्वेऽपि होमविशेषस्य पदे कर्तव्यत्वनिश्चयः, यथा च सामान्यतो हिंसानिषेधेऽपि हिंसाविशेषस्य कर्तव्यतोक्तिः, यथा च सामान्येन कर्मण्युपपदे धातोरणि[1] प्राप्तेऽपि आकारान्तात् धातोः कप्रत्ययविधिः। न च तत्र शास्त्रभेदः—तद्वत् ॥

देवतानिराकरणे च न तात्पर्यम्; अश्रुतवेदान्तानां कर्मण्यश्रद्धानिराकरणाय कर्मप्राधान्यपरत्वात् तस्य। "न हि निन्दा निन्द्यं निन्दितुं प्रवर्तते, अपि तु निन्दितादितरत् प्रशंसितुम्" इति हि न्यायविदः। यद्वा वेदप्रामाण्य-कर्मावश्यकर्तव्यतातात्पर्यातिशयात् तत्प्रतिपक्षनिराचिकीर्षया अन्वारुह्यवादो देवतानिरासोक्तिः स्यात्। अभिमततरार्थानादरेणापि हि विपक्षव्युदासो दृश्यते; यथा—"अभीष्टार्थव्ययेनापि जयति क्षेत्रहारिणम्। लब्धक्षेत्रैर्न दुष्प्रापः स्यादर्थ इति निश्चयात्"। एवमभिमततरेश्वरानादरेणापि वेदप्रामाण्यादिसमर्थने पश्चादभिमतसिद्धिरयत्नलभ्येति जैमिनेरभिप्रायः। तत्सिद्धिप्रकारश्च तदुक्तरात्रिसन्याया[2]द्यधीन इत्युत्तरत्र व्यक्तीभविष्यति। न च तत्सिद्धिमभ्युपगच्छतस्तदनादरवादव्याघातः; तस्यान्वारुह्यकृतत्वात् ॥ कथमन्वारुह्यत्वादत्वनिश्चयः? ॥ उच्यते। "सम्पत्तेरिति जैमिनिः", "अन्यार्थं तु जैमिनिः", "परं जैमिनिर्मुख्यत्वात्", "ब्राह्मेण जैमिनिः" इत्यादिब्रह्मसूत्रैरेव जैमिनेर्ब्रह्मस्वरूपतद्गुणतदुपासनतत्फलाद्यभ्युपगमस्य प्रतिपन्नत्वात्; महाभारते च हयशिरउपाख्यानादिषु, भगवद्व्यासोपदेशलब्धपरमात्मतत्त्वज्ञानत्वावगमाच्चेति। अतो विरुद्धेऽर्थे तात्पर्याभावान्नार्थविरोधः ॥

नन्वर्थविरोधो दुष्परिहरः। तथा हि विशेषातिदेशनिरूपणपरे अष्टमेऽध्याये—विकृतिषु प्रकृतिधर्मातिदेशे कर्तव्ये सति कस्मिन् कर्मणि कस्य कर्मणो धर्मातिदेशः प्राप्तः इत्यपेक्षायाम्, यस्य कर्मणो येन कर्मणा द्रव्यसाम्यं देवतासाम्यं वा भवति तस्मिन् तद्धर्मोऽतिदेष्टव्य इति स्थितम्[3]। तत्र, 'यस्य केनचिद् द्रव्यसाम्यं केनचित् देवतासाम्यं च भवति, तस्मिन् द्रव्यसाम्यवत एव कर्मणो धर्मातिदेशः कृतः, न तु देवतासाम्यवतः' इति द्रव्यप्राधान्यमुक्तं जैमिनिना, [4]द्रव्यदेवतासाम्ये द्रव्यं बलीयः इति। न च द्रव्यप्राधान्योक्तेरतिवादत्वम्; अनुष्ठानविरोधात् द्रव्यप्राधान्येन ह्यनुष्ठानं दृश्यते। अतो द्रव्यप्राधान्यं वदतो जैमिनेर्देवतानिरासे तात्पर्यमस्तीति ॥

---

1 अणि कुम्भकार इति, कप्रत्यये गोद इति उदाहरणं द्रष्टव्यम्। 2 रात्रिसत्रन्यायादीति। इदमुपरि जिज्ञासाधिकरणरचनावसरे भाष्य एव व्यक्तम्। "ज्योतिर्गौरायुः......य एता रात्रीरुपयन्ति" इति रात्रिसत्रवाक्यम्। 3 स्थितमिति। प्रथमाधिकरणादाविति भाव्यम्। 4 द्रव्यदेवतासाम्ये इत्यादिरर्थानुवादः। सूत्रं तु 'विप्रतिपत्तौ हविषा नियम्येत कर्मणस्तदुपाख्यत्वात्' इत्यादि (8-1-32-34)।

मीमांसाशास्त्रम्—"अथातो धर्मजिज्ञासा" इत्यारभ्य, "अनावृत्तिश्शब्दादनावृत्तिश्शब्दात्" इत्येवमन्तं

अत्रोच्यते । नात्र द्रव्यदेवतयोः सद्भावासद्भावाभ्यां प्राधान्याप्राधान्ये विवक्षिते; अपि तु विलम्बिताविलम्बितप्रवृत्तिकप्रमाणविषयत्वाधीने । द्रव्यं ह्यविलम्बितप्रत्यक्षगम्यम्; देवता तु विलम्बितशास्त्रगम्या । विलम्बाविलम्बावेव हि श्रुतिलिङ्गादिषु प्रत्यक्षादिषु च पूर्वोत्तरप्राबल्यदौर्बल्यहेतू ॥ ननु हविष्ट्वं शास्त्रैकगम्यमिति न द्रव्यस्यापि प्राधान्यमिति चेत्—नैवम् । चरुपुरोडाशादिकं द्रव्यं हि प्रत्यक्षम् । हविष्ट्वाख्यधर्ममात्रमेव तत्र शास्त्रगम्यम् । देवतायास्तु स्वरूपं श्रेयःसाधनत्वादिधर्मश्चोभयमपि शास्त्रगम्यम् । अतः स्वरूपतो धर्मतश्च विलम्बितमानगम्यत्वाद् देवताया अप्राधान्यम्; धर्ममात्रस्य शास्त्रगम्यत्वेऽपि धर्म्यंशेना-(शस्या)विलम्बितमानगम्यत्वात् हविषः प्राधान्यम् । अतः प्राधान्याप्राधान्ययोः प्रमाणद्वारकत्वेन स्वरूपासद्भावे तात्पर्यं नास्तीति देवतानिरासोक्तिरन्यपरा । एवमर्थान्तराण्यप्यविरोधेन नेतुं शक्यानीति नार्थविरोधः ॥

ननु ब्रह्मसूत्रैरेव जैमिनिपक्षमनूद्य प्रतिक्षेपादर्थविरोधो दुष्परिहरः । तथा हि—"फलमत उपपत्तेः" इत्यत्रेश्वरस्य फलप्रदत्वोक्त्या, "धर्मं जैमिनिः" इति धर्मस्य फलप्रदत्वमनूद्य प्रतिक्षिप्तम् ॥ न; श्रुतत्वोपपत्तिभ्यां कालान्तरभाविफलसाधनमात्रे जैमिन्यभिहिते ताभ्यामेवात्र फलसाधनविशेषसिद्धेरुक्तत्वात् ॥

ननु, "शेषत्वात् पुरुषार्थवादो यथा अन्येष्विति जैमिनिः" इत्यत्र वेदान्तोदितात्मज्ञानस्य कर्मशेषतयाऽऽत्मनां कर्मशेषत्वोक्तिः, "अधिकोपदेशात्" इति सिद्धान्तेन विरुद्ध्यते । न च विकल्पेन निर्वाहः संभवति; वस्तुनि विकल्पायोगात् । न च जैमिनिना परमतमुपन्यस्तमिति वाच्यम्—जैमिनिमतत्वेन सिद्धान्तिना प्रतिक्षेपायोगात् ॥ नैवम् । विपक्षनिरासार्थस्य जैमिनेरन्वारुह्यवादस्य तथोपन्यासप्रतिक्षेपोपपत्तेः । अन्यथा, "परं जैमिनिः" इत्यादिसूत्राणां मिथोविरोधः; भारतोक्तिविरोधश्च । जैमिनेरन्वारुह्यवादमजानतां तु तदुक्ते तत्त्वबुद्धिः स्यादिति तन्निवारणाय ब्रह्मसूत्रे तदुपन्यासनिरासौ कृतौ । अत एव, "परामर्शं जैमिनिः" इत्यत्र नैष्ठिकाद्याश्रमप्रतिक्षेपोऽपि परिहृतः । "तद्भूतस्य" इत्यत्र नैष्ठिकाद्याश्रमभ्रंशस्य जैमिन्यनभिमतत्वाभिधानात् । न ह्याश्रमानभिमतौ तद्भ्रंशानभिमतिसंभवः । अतो वीतरागव्यतिरिक्तानामग्निहोत्रादिष्वश्रद्धानिवारणार्थं आश्रमान्तरप्रतिक्षेपः पूर्ववदन्वारुह्यवादः । स च पूर्वमीमांसायामसूत्रितः । तथाप्यौडुलोम्यादिमतवदनूद्य निरस्तः । न च मधुविद्यायां वस्वाद्यनधिकारोक्तिरधिकारोक्त्या विरुध्यत इति वाच्यम्; अनधिकारोक्तेर्वस्वादिदेवताभ्युपगमचिह्नत्वेन शास्त्रैक्याविरुद्धतया तदुद्घाटनवैयर्थ्यात् । "भावं जैमिनिः" इत्यादिसूत्रोक्ताश्च पक्षाः शास्त्रैक्याविरुद्धाः, कर्मविचारे तेषामसमर्थनादिति न तत्पर्यनुयोगावकाशः ।

तस्मान्नार्थविरोधः । कर्तृभेदपरिहारस्तु प्रसिद्धत्वान्न कण्ठोक्तः । अत एव चशब्दसूचितो वा । धूर्तस्वामिकपर्दिकर्तृकस्याऽऽपस्तम्बसूत्रव्याख्यानस्य व्याख्येयैक्यादेकप्रबन्धत्वं हि दृष्टम् । पाणिनीयसूत्र-पूर्वोत्तरवृत्त्योश्च वामनजयादित्यकर्तृकयोर्व्याख्येयैक्यादेकव्याख्यानत्वं दृष्टम्;

तस्मादुपपन्नमैकशास्त्र्यम् ॥

अस्त्वैकशास्त्र्यम्; कथं पौर्वापर्यनियम इत्याशङ्कां परिहरन् वृत्तिग्रन्थस्थं संहितमिति पदं विवृणोति मीमांसेति । क्रमविशेषान्वितमैकशास्त्र्यं संहितमित्यनेनाभिप्रेतम् । आरभ्य एवमन्तमिति पौर्वापर्यनियम उक्तः ।

सङ्गतिविशेषेण विशिष्टक्रमम् । तथाहि—प्रथमं तावत् "स्वाध्यायोऽध्येतव्यः" इति अध्ययनेनैव स्वाध्याय-

---

सङ्गतिविशेषेणेति । अत्रामी सङ्गतिविशेषा अभिप्रेताः—पाठक्रमः, चेतनानां त्रिवर्गे प्रथमप्रावण्यसंभव-रूपोऽर्थस्वभावः, औपनिषदेष्वङ्गाङ्गिभावप्रतिपादकवाक्येषु यज्ञादिकर्मणः पदार्थत्वेन सम्बन्धः, कासुचिद्विद्यासु यज्ञतदुपकरणादीनां दृष्टिविशेषणत्वोक्तिः, कर्मब्रह्मविद्ययोर्दृष्टान्तदार्ष्टान्तिकभावः, विद्याकर्मणोरुत्पाद्योत्पादक-भावात् तच्छेषभूतविचारयोः तत्क्रमभाक्त्वोपपत्तिः, व्याख्यानभूतमीमांसायां च उत्तरभागस्य पूर्वभागोक्तन्यायसापेक्षत्वं चेति । एवं पौर्वापर्यनियामकसङ्गतिविशेषेण विशिष्टक्रमं-क्रमविशेषवदित्यर्थः ॥ ननु भवतु वेदप्रामाण्यसिद्धये प्रथमाध्यायस्य पूर्वभावित्वम् ; द्वितीयाध्यायात् पूर्वं ब्रह्मविचारः किं न स्यादिति चेत्-न, तत्रतत्रोक्तैः सङ्गतिविशेषैः षोडशलक्षणानुपूर्वीसिद्धेस्तदनन्तरप्राप्तत्वात् ब्रह्मविचारस्ये-त्यभिप्रेत्य सङ्गतिविशेषेण विशिष्टक्रममित्युक्तम् ।

एवमत्रैकशास्त्र्यं पौर्वापर्यनियमः शास्त्रस्यारम्भणीयत्वं चेति त्रयं प्रतिज्ञातम् । पूर्वोक्तस्य साङ्गस-शिरस्काध्ययनस्य प्रमाणं दर्शयन् साधनचतुष्टयसंपादनस्यानवसरग्रस्ततां च दर्शयन् प्रतिज्ञातार्थत्रयमुप-पादयितुमाह तथाहीति । प्रतिज्ञातार्थत्रयोपपादनार्थमध्ययनविधिं निरूपयति प्रथममिति ।

ननु वेदप्रामाण्यसमर्थनमिव कर्मविचारसिद्धमध्ययनविधिनिरूपणं किं नोपजीव्यते इति चेत्—न ; अर्वाचीनव्याख्यातृभिरर्थज्ञानपर्यन्ततायास्तत्रोक्तत्वात् । अक्षरराशिग्रहणपर्यन्तत्वं हि भगवद्बादरायणाभिमतम् । "अध्ययनमात्रवतः" इति हि वक्ष्यते । अतस्तत्र वक्ष्यमाणोऽर्थः शास्त्रारम्भणीयत्वायात्र प्रतिपाद्यते । अध्ययनविधेरक्षरराशिग्रहणमात्रपर्यन्तत्वे निरूपिते शास्त्रस्यारम्भणयित्वासिद्धिः ; कृत्स्नविषयत्वनिरूपणेन ऐकशास्त्र्यपौर्वापर्यनियमसिद्धिः ॥

कथमक्षरग्रहणमात्रपरत्वे आरम्भणीयत्वम् ? ॥ इत्थम् । अध्ययनविधेरर्थज्ञानपर्यन्तत्वे सति, अर्थज्ञानस्य "अधीत्य स्नायात्", "आचार्यकुलाद्वेदमधीत्याभिसमावृत्य" इति यज्ञाद्यनुष्ठानशेषत्वेन विनियोगादुपनिषत्सिद्धस्य ब्रह्मज्ञानस्यापि कर्मशेषत्वापत्तेः तस्य च ज्ञानस्य, "आत्मा वा इदम्", "अयमात्मा ब्रह्म" इति त्र्यन्तस्थब्रह्म-शब्दस्यात्मपर्यायत्वेनाऽऽत्मविषयत्वात् आत्मज्ञानस्य व्रीह्यादिद्वारा प्रोक्षणादेरिवात्मद्वारा कर्मशेषत्वे सति द्वारभूत-व्रीह्यादेरिव द्वारभूतात्मनश्च कर्मशेषत्वं स्यात् । न च समुद्रध्यान(पू. मी. ९-२-४७ सू.)वत् आत्मज्ञानस्या-दृष्टद्वारा कर्मशेषत्वात् समुद्रवदात्मा न कर्मशेष इति वाच्यम्—कर्मशेषतयाऽवक्लृप्तस्याऽऽत्मनो द्वारभावे संभवत्यदृष्टकल्पनायोगात्, समुद्रस्य तु क्रतूपकारकत्वासंभवेन ह्यदृष्टकल्पनम् ॥ नन्वात्मनः फलप्रदतया शेषत्वमस्त्विति चेत्—न, संप्रतिपन्नेनाऽऽत्मना, आत्मज्ञानस्य कर्मशेषत्वे निरूढेऽप्यसंप्रतिपन्नात्मकल्पनाऽ-योगात् । न हि जीवविलक्षण आत्मा संप्रतिपन्नः । अतोऽनुष्ठानशेषभूत आत्मा कर्मसु कर्तृभूतो जीव एवेति वेदान्तानां जीवपरत्वेन तदतिरिक्तेश्वरे प्रमाणाभावादप्रामाणिकेश्वरविचाररूपं शास्त्रमनारम्भणीयं स्यादिति प्राप्नुयात् । अक्षरराशिग्रहणमात्रपर्यन्तत्वे तु अर्थज्ञानस्यानुष्ठानशेषत्वाभावेन कर्मसु कर्तृभूतजीवातिरिक्तात्मप्रति-पादनसंभवात् प्रामाणिकपरमात्मविचाररूपं शास्त्रमारम्भणीयं स्यादिति । अतोऽध्ययनविधिर्निरूप्यते ।

शब्दवाच्यवेदाख्याक्षरराशेर्ग्रहणं विधीयते । तच्चाध्ययनं किंरूपम्, कथं च कर्तव्यम् इत्यपेक्षायाम्, "अष्टवर्षं ब्राह्मणमुपनयीत; तमध्यापयेत्" इत्यनेन,

तत्राध्ययनस्य सक्तुहोमवत् प्रधानकर्मत्वं स्वरूपेण विधेयत्वमध्यापनविधिप्रयुक्तत्वमुपनयनस्याध्यापनाङ्गत्वं च प्राभाकराभिमतमनादृत्य, अध्ययनस्यावघातवद् गुणकर्मत्वं नियमस्य विधेयत्वमध्ययनस्य स्वविधिप्रयुक्तत्वमुपनयनस्याध्ययनाङ्गत्वं चेति कौमारिलाभिमतमर्थचतुष्टयम्, उभयानभिमतमक्षरराशिग्रहणमात्रपर्यन्तत्वं च संग्रहेण प्रतिजानीते प्रथममिति । प्रथमं तावत् — प्रथमत एव । "यावत्तावच्च साकल्येऽवधौ मानेऽवधारणे" इति नैघण्टुकाः । प्राथम्यं शास्त्रान्तरश्रवणयोग्यावस्थापेक्षया पूर्वभावित्वम् । गर्भाष्टमोपनीतस्य ह्यध्ययनम् । ततः पूर्वं शास्त्रान्तरपरिश्रमानर्हत्वात्, अध्ययनविधिपरतन्त्रस्य साङ्गाध्ययनानन्तरं कर्मविचारावश्यम्भावस्य स्वरससिद्धत्वाच्च साधनचतुष्टयादिपूर्ववृत्तान्तरनिष्पादनस्यानवसरग्रस्तत्वं प्रथमं तावदित्यनेन फलितम् । लौकिकाक्षरराशिव्यावृत्त्यर्थो वेदाख्यशब्दः । वेदाख्यशब्देन कृत्स्नाध्ययनं च सूचितम् । न हि वेदान्तभागमात्रं स्वाध्यायशब्दवाच्यम् । अध्ययनेनेति निर्देशेन गुणकर्मत्वं सूचितम्; भावार्थस्यान्यनिष्ठत्वप्रतीतेः । यदि प्रधानकर्मत्वमविवक्षिष्यत्, तदा हि, स्वाध्यायेनाध्ययनं संपाद्यमिति वचनव्यक्तिरभविष्यत् । एवकारेण नियमविधित्वं द्योतितम् । न तु पुस्तकनिरीक्षणादिनेत्यर्थः । "स्वाध्यायोऽध्येतव्यः" इति अध्ययनविधिवाक्योपादानेन स्वविधिप्रयुक्तत्वं सूचितम् । न हि, अध्यापयेदिति वाक्यमुपात्तम् । प्राथम्यवचनादध्ययनस्योपनयनाङ्गकत्वं च फलितम् । शास्त्रान्तरपरिश्रमायोग्यगर्भाष्टमवर्षाभिप्रायेण हि प्राथम्यमुक्तम् । अध्ययनस्य च प्राथम्यम्, "अष्टवर्षं ब्राह्मणमुपनयीत" इत्युपनयनविषयतयोक्तस्य कालस्य उपनयनद्वाराऽध्ययनशेषत्वे सत्येव ह्युपपद्यते । एवमर्थपञ्चकं संक्षेपेण प्रतिज्ञातं भवति । अस्मिन्नध्ययनविधिवाक्येऽध्ययनस्य प्राथम्यं साङ्गत्वमुपनयनाङ्गकत्वं च न प्रतीतम; "उपनयीत; तमध्यापयेत्" इति वाक्यान्तरेणाध्ययनस्याध्यापनविधिप्रयुक्तत्वमध्यापनस्योपनयनाङ्गकत्वं च प्रतीयते इति शङ्कायामाह तच्चेति । चः शङ्कानिवृत्तौ । तत् — "स्वाध्यायोऽध्येतव्यः" इति वाक्यप्रतिपादितमित्यर्थः । [1]"आद्ये त्वध्ययने नैव काचिदस्ति फलश्रुतिः । धारणे जपयज्ञे च या साप्येवं निवारिता" इति जपादेरप्यध्ययनशब्दवाच्यत्वात् तेषु प्रस्तुताध्ययनस्य आद्याध्ययनत्वनिश्चयायाह किंरूपमिति । किं सकृदुच्चारणरूपमाहोस्विदसकृदुच्चारणरूपम, किं वा स्वतन्त्रोच्चारणरूपमुत परतन्त्रोच्चारणरूपमित्यर्थः । परतन्त्रासकृदुच्चारणरूपत्वे ह्याद्याध्ययनत्वसिद्धिः । कथम्; किमङ्गकमित्यर्थः । इत्यपेक्षायाम् अपेक्षितानि विधीयन्ते इत्यन्वयः । प्राथम्यं परतन्त्रोच्चारणरूपत्वमुपनयनाङ्गकत्वञ्च दर्शयितुमाह अष्टवर्षमिति । अष्टवर्षमित्यनेन प्राथम्यं सिद्धम् । उपनयनद्वाराऽध्ययनशेषत्वात् कालस्य 'ब्राह्मणमुपनयीत' इति द्वितीयाश्रुत्या माणवकशेषत्वावगमादुपनयनस्य तद्गताध्ययनाङ्गत्वसिद्धिः । उपनयनस्याकर्त्रभिप्रायसूत्रविहितत्वाच्च

1 'आद्ये त्वध्ययने' इति न्यायरत्नमालाश्लोके चतुर्थः पादः 'फलश्रुतिरियं यतः' इत्याकारकः । तदर्थस्तु—ग्रहणाध्ययनं धारणाध्ययनं जपाध्ययनमिति त्रिविधेऽध्ययने धारणाध्ययनगोचरं तपःफलप्राप्तिवचनम् । जपाध्ययनगोचरं क्रतुफलायुरादिप्राप्तिवचनम । स्वाध्यायोऽध्येतव्य इति स्वीकरणाध्ययनस्य तु न फलं श्रुतमिति स्वर्गार्थता स्यादिति । अत्र, या साऽप्येवं निवारिता इति चतुर्थपादानुवादात् जपधारणाध्ययनविषयवाक्यगतफलश्रुतीनामपि फलश्रुतित्वासंभवमुपपाद्य स्वर्गार्थत्वदृढीकरणार्थं प्रवृत्तं न्यायरत्नमालापश्चाद्भावि ग्रन्थान्तरमिदमिति विमृश्यते ।

"श्रावण्यां प्रोष्ठपद्यां वा उपाकृत्य यथाविधि । युक्तश्छन्दांस्यधीयीत मासान् विप्रोऽर्धपञ्चमान् ॥" इत्यादिव्रतनियमविशेषोपदेशैश्चापेक्षितानि विधीयन्ते ।

---

नाध्यापनाङ्गत्वसिद्धिः । "अध्यापयेत्" इत्यनेन परतन्त्रोच्चारणरूपत्वसिद्धिः । "द्वादशाहेन प्रजाकामं याजयेत", "अन्नाद्यकामं याजयेत्", "निषादस्थपतिं याजयेत्" इति प्रतिपन्नस्य याजनस्येव, अर्थार्जनाद्यर्थतया रागप्राप्तस्याध्यापनस्याविधेयत्वादध्यापनेऽधिकारिविशेषाश्रवणाच्चाध्ययनस्याध्यापयितृपूर्वकत्वमुच्यते इति अयमध्ययनाङ्गविधिरिति भावः । उपाकर्मादिव्रतनियमाङ्गकत्वं साङ्गत्वं च दर्शयितुमाह श्रावण्यामिति । अर्द्धपञ्चमान् मासानित्यादीत्यत्रादिशब्दोपात्तैः, "अत ऊर्ध्वं तु छन्दांसि शुक्लेषु नियतः पठेत् । वेदाङ्गानि च सर्वाणि कृष्णपक्षेषु संपठेत्" इत्यादिवचनैरङ्गाध्ययनस्य कालो दर्शितः । व्रतम्-उपाकर्म-काण्डव्रतादि । नियमः "पद्यु ह वा एतच्छ्मशानम्, यच्छूद्रः । तस्माच्छूद्रसमीपे नाध्येतव्यम्" इत्याद्युक्तदेश-काल-भक्ष्यादिव्यवस्थारूपः । अध्यापयेदित्यनेन व्रतनियमविशेषोपदेशैश्च इति पृथङ्निर्देशः श्रुतित्वस्मृतित्व-विभागात् विप्रतिपन्नत्वसंप्रतिपन्नत्वविभागाच्च कृतः । उपाकर्मादिव्रतनियमवत् उपनयनमप्यध्ययनाङ्गमिति भावः । किंरूपम्, कथं कर्तव्यम् इत्यपेक्षायामेभिरङ्गविधायकवाक्यैरपेक्षितानि विधीयन्ते इत्यर्थः ॥

ननु अष्टवर्षं ब्राह्मणमित्यत्रोपनयनस्याध्ययनाङ्गत्वमवगम्यते इत्युक्तम्; तदयुक्तम् । तस्योपनेयासत्तिद्वाराऽध्येतृसाकाङ्क्षाध्यापनाङ्गत्वं ह्यवगम्यते । "उपनीय तु यः शिष्यम्" इत्यादिस्मृतिवचनाच्च तदवगम्यते ॥ उच्यते । "ब्राह्मणमुपनयीत" इत्यत्र द्वितीयाश्रुत्या उपनयनस्य माणवकशेषत्वमवगम्यते । माणवकशेषमुपनयनम्; अध्ययनं च तद्धनम् । तत्रान्तरङ्गबहिरङ्गन्यायादुपनयनमध्ययनाङ्गमेव ॥ ननु "उपनीय तु यः शिष्यं वेदमध्यापयेद्द्विजः । सकल्पं सरहस्यं च तमाचार्यं प्रचक्षते" इति वचने क्त्वाश्रुत्योपनयनस्याध्यापनाङ्गत्वं युक्तम् । अन्तरङ्गत्वं हि वस्तुसामर्थ्यरूपं लिङ्गम् । ततः क्त्वाश्रुतिर्बलीयसीति चेत्——न । अन्तरङ्गत्वं हि प्रत्यक्षश्रुतिसिद्धम्; क्त्वाश्रुतिस्तु स्मृतिगता अनुवादरूपवचनस्था च । अतोऽस्याः स्मृतिवचनस्थत्वान्मूलश्रुतिसापेक्षत्वम्, अनुवादरूपवचनगतत्वाद्विध्यन्तरसापेक्षत्वमिति विलम्बद्वयमस्ति । श्रुतिलिङ्गादिषु विलम्बिनधीहेतुत्वं हि परदौर्बल्यहेतुः । अतो विलम्बद्वयोपहता क्त्वाश्रुतिर्न बलीयसी । किञ्च श्रोत्रियोपाध्यायगुर्वादिनामविधानवत् तत्प्रकरणस्थमिदं वचनम् उपनीयाध्यापयितुराचार्यनामविधानपरमिति क्त्वाश्रुतिरुपनयनस्याध्यापनाङ्गत्वे प्रमाणं भवितुमर्हति । किञ्च "स्वरितञितः कर्त्रभिप्राये क्रियाफले" इत्यात्मनेपदे प्राप्तेऽपि, "संमाननोत्सञ्जनाचार्यकरण[1]ज्ञानभृतिविगणनव्ययेषु नियः" इति पुनर्विधानस्याकर्त्र-भिप्रायार्थत्वादुपनयनस्य नाध्यापनाङ्गत्वं युक्तम् । "अकर्त्रभिप्रायार्थोऽयमारम्भः" इति हि तद्वृत्तिकारः ।

ननु कर्त्रभिप्रायत्वं कर्तर्येव फलस्याभिप्रेतत्वम् । तदवधारणनिषेधार्थं पुनर्विधानम् । अतः फलमुभयान्वयि । अतो माणवकद्वारेणाचार्यान्वय्युपनयनफलमिति अध्यापनाङ्गत्वं युक्तमिति चेत्——

---

1 आचार्यकरणेति । स्वमाचार्यं करोतीति यत् तत् आचार्यकरणम् । नायं नियो वाच्यार्थः; अपितु पश्चाद्गम्यः । एतद्धेतुः माणवकस्य स्वसमीपप्रापणं वाच्यार्थः । तत्फलमध्ययनं माणवकनिष्ठम् । तस्मिन् निष्पन्ने आचार्यत्वसिद्धिरिति तत्सिद्धिहेतुत्वमुखेन समीपप्रापणमुपलक्ष्यते । आदधीतेत्यत्र धातूधात्रोः ञित्वात् आत्मनेपदम् । तत्र फलस्य अग्निपुरुषोभयान्वयितया न कर्तृमात्राभिप्रायत्वरूपत्वसंभवः ।

न; "अग्नीनादधीत" इत्यत्र कर्त्रभिप्रायसूत्रविहितेऽप्यात्मनेपदे फलस्योभयान्वयितया पुनर्विधानस्य नियमनिषेधार्थत्वाभावेन कर्त्रभिप्रायत्वमात्रस्य निषेधार्थत्वात् । अतो नाध्यापनाङ्गत्वम् ॥

ननु कर्त्रभिप्रायशब्देन कर्तृव्यतिरिक्तचेतने फलानन्वयो विवक्षितः। अतो न, अग्नीनादधीतेति व्यभिचारः। पुनर्विधानस्य तन्निवारणार्थत्वे फलस्याचार्येऽप्यन्वयोपपत्तेरध्यापनाङ्गत्वमिति चेत्—न; "ऋत्विजो वृणीते" इत्यत्र स्वरितेत्यादिसूत्रविहितेऽप्यात्मनेपदे फलस्य कर्तृव्यतिरिक्तचेतनान्वयदर्शनेन पुनर्विधानस्य नियमनिषेधार्थत्वाभावात् । अतः कर्त्रभिप्रायमात्रनिषेधार्थं पुनर्विधानमिति नाध्यापनाङ्गमुपनयनम् ॥ ननु क्रियाफलं नाम क्रियानन्तरभाविफलम् । तस्य कर्तर्यन्वितत्वं कर्त्रभिप्रायत्वम् । अत आचार्यकस्योपनयनक्रियानन्तरभावित्वाभावादव्यवहितफलस्य कर्तृगतत्वाभावाच्चात्मनेपदस्याप्राप्तौ अव्यवहितफलस्याकर्त्रभिप्रायत्वेऽप्यात्मनेपदं सम्माननेत्यादिसूत्रेण विधीयते । अतोऽकर्त्रभिप्रायार्थत्वेऽपि व्यवहिताचार्यकनिष्पत्त्यर्थतयाऽध्यापनाङ्गत्वमुपनयनस्याविरुद्धमिति चेत् —नैवम्; अग्नीनादधीतेत्यत्र स्वरितेतिसूत्रविहितेऽप्यात्मनेपदे अग्निसंस्काराव्यवहितस्याऽऽहिताग्नित्वापत्तिरूपफलस्य कर्त्रन्वयित्वदर्शनात् । अतोऽकर्त्रभिप्रायार्थं सम्माननेत्यादिसूत्रं फलमात्रस्य कर्त्रन्वयनिवारणार्थम् ॥ संस्कारविशिष्टाग्निः फलमित्याधानकर्तरि न व्यवहितफलान्वय इति चेत् —तर्ह्युपनयनसंस्कारविशिष्टमाणवकसिद्धिरेवाव्यवहितं फलमिति कर्त्रभिप्रायसूत्रेणैवात्मनेपदसिद्धेरकर्त्रभिप्रायसूत्रवैयर्थ्यं स्यात् ॥

यद्येवं व्यवहितमव्यवहितं वा फलमात्रं कर्त्रभिप्रायसूत्रेण निवार्यते, तर्ह्युपनेतुः प्रवृत्तिर्नोपपद्यते; यतः "प्रयोजनमनुद्दिश्य न मन्दोऽपि प्रवर्तते" इति ॥ नैवम् । उपनयनफलस्य माणवकान्वयित्वेऽप्याचार्याय वरो देय इति विध्यन्तरप्राप्तदक्षिणाफललिप्सया प्रवृत्त्युपपत्तेः । न चैतेनाकर्त्रभिप्रायत्वविरोधः; असाधारणफलानन्वयविषयत्वादकर्त्रभिप्रायसूत्रस्य ॥

अव्यवहितक्रियाफलस्य कर्तुरभिमतत्वं कर्त्रभिप्रायत्वम्, तदनभिमतत्वमकर्त्रभिप्रायत्वमित्यप्ययुक्तम्; क्रियाफलस्य कर्त्रनभिमतत्वव्याघातात् आचार्यकनिष्पत्त्युपयोगिनो माणवकसंस्कारस्याचार्यानभिमतत्वानुपपत्तेः।

अतः उपनयनमध्येष्यमाणमाणवकासत्तिमुखेन नाध्यापनाङ्गम्; अपि त्वध्ययनाङ्गमेव । अध्ययनं च नाध्यापनविधिः प्रयुङ्क्ते । अध्यापयेदिति तु द्वादशाहेन प्रजाकामं याजयेदित्यादिवदित्युक्तम् । यद्यपि प्रजाकामम् अन्नाद्यकाममितिवत् तत्प्रयोज्यव्यापारस्याध्ययनस्याधिकारिविशेषणं फलं न श्रूयते—तथापि स्वाध्यायसिद्धिरधिकारिविशेषणं स्यात्; "स्वाध्यायोऽध्येतव्यः" इति स्वाध्यायस्याध्ययनसाध्यत्वावगमात् । यथा अग्नीनादधीतेत्यत्राग्नीनामाधानसाध्यत्वावगमादग्निसिद्धिरधिकारिविशेषणम्, तद्वत् ।

न च स्वविधिप्रयुक्तत्वेऽध्ययनविधेरनुष्ठात्रभावः । सन्ति हि प्रबुद्धाध्येतारः। तथाऽऽह भगवानापस्तम्बः, "तस्मिन्नभिजनविद्यासमुदेतं समाहितं संस्कर्तारमीप्सेत्" इति । तेषु परविधिप्रयुक्तत्वे सति अध्ययनं नोपपद्यते । अप्रबुद्धविषये तु स्वतन्त्रस्याध्ययनविधेर्माणवकविषयत्वं ज्ञात्वा हितैषिणो माणवकमध्ययनादि कारयन्ति । अतः प्रबुद्धेष्वप्रबुद्धेषु च स्वविधिप्रयुक्तत्वमध्यनयस्य युक्तम् । परविधिप्रयुक्तत्वे नित्यस्याध्ययनस्य काम्यविधिप्रयुक्तत्वं स्यात् । ततश्चानुष्ठाननियमो न स्यात् । आचार्यकामो ह्यध्यापकः । तस्याचार्यककामनाया अभावेऽध्ययनासिद्धेः ॥ अध्यापकबाहुल्यात् तत्सिद्धिरिति चेत् —न; अध्यापकेभ्योऽप्यध्येतृबाहुल्यदर्शनात् ।

एवं सत्सन्तानप्रसूतसदाचारनिष्ठात्मगुणोपेतवेदविदाचार्य्योपनीतस्य व्रतनियमविशेषयुक्तस्याचार्योच्चारणानूच्चारणरूपमक्षरराशिग्रहणफलमध्ययनमित्यवगम्यते ।

अध्ययनञ्च स्वाध्यायसंस्कारः; "स्वाध्यायोऽध्येतव्यः" इति स्वाध्यायस्य कर्मत्वावगमात् ।

---

आधानस्योत्तरक्रतुविधिप्रयुक्तत्वेऽपि न काम्यविधिमात्रप्रयुक्तत्वम्; "वसन्ते वसन्ते ज्योतिषा यजेत", "यावज्जीवमग्निहोत्रं जुहोति" इति नित्यविधिसद्भावादित्येवमादि अनुसन्धेयम् । अतो यथोक्त एवार्थः ॥

अङ्गविध्युपेतेन प्रधानविधिनाऽङ्गस्वरूपमङ्गिस्वरूपं च कथं प्रतिपन्नमित्यत्राह एवमिति । **एवम्**—अङ्गविधिभिः सह प्रधानविधौ निरूपिते इत्यर्थः । **सत्सन्तानेत्यादिना**, तस्मिन्नभिजनविद्येत्यापस्तम्बवचनार्थोऽनुसंहितः । **आत्मगुणा** अक्रोधादयः । अनेन समाहितशब्दार्थ उक्तः । **वेदविच्छब्देन** विद्यासमुदेतशब्दार्थ उक्तः । **वेदविदाचार्योपनीतस्येति** आचार्यविशेषणमुपनयनद्वारा माणवकार्थम्; यथा उपनयनस्याध्यापनाङ्गत्वे माणवकविशेषणमाचार्यार्थम्, तद्वदिति भावः । **व्रतनियमविशेषयुक्तस्य** । व्रतनियमविशेषवत् आचार्यविशेषणमपि माणवकार्थमिति भावः । **आचार्योच्चारणानूच्चारणमिति** परतन्त्रोच्चारणरूपता दर्शिता । **अक्षरराशिग्रहणफलमिति** पदम् असकृदावृत्तिरूपत्वस्याऽऽक्षेपकं दर्शयति । यथा "व्रीहीनवहन्ति" इत्यत्र दृष्टफलत्वस्याप्यपरित्याज्यत्वेनावहननस्य वैतुष्यपर्यन्तत्वाद् अश्रुताऽप्यावृत्तिः सिद्धा । दृष्टप्रयोजनापरित्यागेनैव नियमस्य विधेयत्वात् । **आचार्योच्चारणानूच्चारणमित्यनेन**, **वेदविदाचार्योपनीतस्येत्यनेन** च अध्ययनस्याध्यापयितृसापेक्षत्वेन परतन्त्रोच्चारणरूपत्वं स्वविधिप्रयुक्तत्वमुपनयनाङ्गकत्वं चोक्तम् । **आचार्योच्चारणानूच्चारणमक्षरराशिग्रहणफलमित्यनेन** किंरूपमित्याकाङ्क्षा शमिता । **वेदविदाचार्योपनीतस्य व्रतनियमविशेषयुक्तस्येत्यनेन** कथं च कर्तव्यमित्यपेक्षा पूरिता । **अक्षरराशिग्रहणफलमित्यनेन** स्वाध्यायग्रहणकामत्वमध्ययनाधिकारिविशेषणमित्यपि सूचितम् ।

सक्तून् जुहोतीत्यत्र पुरुषस्य सक्तुहोमजन्यादृष्टभाक्त्वात् सक्तुहोमो [1]यथा पुरुषसंस्कारः, तद्वत् अध्ययनस्य पुरुषसंस्कारत्वेऽस्याक्षरराशिग्रहणफलत्वं न स्यात्; अपूर्वसिद्ध्यर्थतया स्वाध्यायसिद्ध्यर्थत्वाभावात् । ततश्चाक्षरराशिग्रहणफलत्वाभावेनावृत्त्यसिद्धेः सकृदुच्चारणरूपमेवाध्ययनं स्यादित्याह **अध्ययनं चेति** । उपनयनाङ्गकत्ववत् स्वविधिप्रयुक्तत्ववत् इदंचोपपादनीयमिति चार्थः । **स्वाध्यायसंस्कारः** । न तु सक्तुहोमवत् अपूर्वविषयतया पुरुषसंस्कार इत्यर्थः । कुत इत्यत्राह **स्वाध्याय इति** । तव्यप्रत्ययात् **कर्मत्वावगमः** । **स्वाध्यायस्य** हि कर्मत्वावगमः; न पुरुषस्य । कर्तुः क्रिययाऽऽप्तुमिष्टतमत्वं हि कर्मत्वम् । अतोऽध्ययनं स्वाध्यायसंस्कारः; न तु पुरुषस्येत्यर्थः ॥ ननु निर्वर्त्यादेरपि साधारणं कर्मत्वं कथं संस्कारत्वे हेतुतयोच्यत इत्यत्र निर्वर्त्यत्वविकार्यत्वानुपपत्तिमभिप्रेत्य स्वाध्यायस्येति पुनः कीर्तनम् । वस्तुसामर्थ्यसचिवकर्मत्वावगमः संस्कार्यत्वे हेतुरिति भावः । [2]फलान्तरे

---

1 यथा पुरुषसंस्कार इति । अदृष्टार्थसन्निपत्योपकारककर्मण एव संस्कारजनकत्वात् सक्तुहोमस्य पुरुषोद्देशेनाविहिततया न पुरुषसंस्कारकता—तथापि अपूर्वसामान्यस्य संस्कारपदेन व्यवहारः, "संस्कारः पुंस एवेष्टः" इत्यत्र तार्किकाभिमत इति तदनुसारेणेदम् । तदिदं भाक्त्वादित्यन्तेन ज्ञापितमेव । 2 फलान्तरे इत्यादि । पुरुषस्य स्वाध्यायप्राप्तिरेवाध्ययनफलम्; प्राप्तिफलं तु स्वर्ग इति न युक्तम्-स्वाध्यायस्य संस्काररूपफलभाक्त्वस्वीकारे तस्य पारायणार्थज्ञानादावुपयोगसत्त्वेन दृष्टपरम्परारूपफलान्तरसंभवात् तत्त्यागायोगादित्यर्थः ।

**संस्कारो हि नाम कार्यान्तरयोग्यताकरणम् । संस्कार्यत्वञ्च स्वाध्यायस्य युक्तम्; धर्मार्थकाममोक्षरूपपुरुषार्थचतुष्टयतत्साधनावबोधित्वात्, जपादिना स्वरूपेणापि तत्साधनत्वाच्च। एवमध्ययनविधिर्मन्त्रवन्नियमवदक्षरराशि-**

संभवति प्राप्यत्वमात्रपर्यवसानं चायुक्तम् ॥ ननु न कर्मत्वावगममात्रात् संस्कार्यत्वम्; 'सक्तून् जुहोति' "सुवर्णं भार्यम्" (पू. मी. 3. 4.12.) इत्यत्र सक्तुसुवर्णयोः संस्कार्यत्वाभावादिति [1]शङ्कायां संस्कारस्वरूपं शोधयति **संस्कारोही ति** । हिनाम(मा)भ्यां प्रसिद्धिः प्रतियोग्यभ्युपगमश्च सूच्यते। अपिचेतिवत् अनेकान्ययतुल्यरूप एकशब्दो वा। यद्यपि सत उत्कर्षाधानं संस्कार इति भूतभाव्युपयोगिसंस्कारानुगतलक्षणम्—तथापि स्वाध्यायस्य भूतोपयोगित्वासंभवात् भाव्युपयोगिसंस्कारलक्षणमत्रोक्तम् । संस्कारलक्षणानुपपत्त्या "सक्तून् जुहोति" इत्यादिषु प्रत्ययस्वारस्यावगतमपि कर्मत्वं भग्नमिति भावः । अत्र तु न तथाऽनुपपन्नमित्याह **संस्कार्यत्वं चेति** । चः शङ्कानिवृत्तौ । कुत इत्यत्राह **धर्मार्थेति** । **पुरुषार्थचतुष्टयतत्साधनेत्यनेन** पूर्वोक्तव्याख्येयैकत्वाय प्रयोजनवदर्थावबोधनमनुगतमिति दर्शितं भवति । पुरुषार्थपरत्वञ्चानुगतम् । धर्मादिषु हि पुरुषार्थत्वमनुगतम्; इष्टतत्साधनयोरुभयोरपि पुरुषार्थत्वात् । यद्यप्यर्थकामतदुपायेषु केचिल्लोकसिद्धाः—तथापि धनेशसुरेशादिविभूतिरूपातिशयितार्थकामतत्साधनानाम्, लोकसिद्धस्य पशुपुत्रादेश्चित्रा[2]दिसाध्यत्वस्य च लौकिकप्रमाणागोचरत्वात् पुरुषार्थचतुष्टयस्य वेदवेद्यत्वोक्तिर्युक्ता । **अवबोधित्वात्**—अनुष्ठानौपयिकबोधजनकत्वादिति भावः । अर्थावबोधकत्वस्य [3]हुमादावव्याप्तत्वादाह **जपादिनेति** । **स्वरूपेणापि** । अर्थज्ञानानुष्ठानाभ्यामृते जप्यमानेनाक्षरमात्रेणापीत्यर्थः । आदिशब्दादध्यापनग्रहणम् । अनुष्ठानानुगुणं ज्ञानं जपादि चाध्ययनसंस्कृतेन स्वाध्यायेनैवेत्युक्तं भवति । यद्वा पुरुषार्थतत्साधनावबोधित्वेन सह तत्साधनत्वं चशब्देन [4]समुच्चीयते । तत्साधनत्वं द्विधा—जपादिना, ध्रियमाणेन स्वरूपेण चेति । अतोऽवान्तरसमुच्चेतव्यसमुच्चयपरोऽपिशब्दः ।

एवं नियमविधित्वं चोपपादितं भवति । अर्थज्ञानपर्यन्तत्वं किं शब्दस्वारस्यादभ्युपगम्यते, उतार्थानुपपत्त्येति विकल्पमभिप्रेत्य तत्र शब्दस्वारस्यं प्रतिवदन् अध्ययनविधिनिरूपणमुपसंहरति **एवमिति** । **मन्त्रवदिति** । पृथङ्निर्देशो व्रतान्तर्भावेन तदनन्तर्भावेन वाऽध्ययनोपकारकमन्त्राभिप्रायः । अस्ति हि शन्नोमित्रादिमन्त्राणां व्रतानुप्रवेशेनापि जपमात्रेणोपकारकत्वम् । **नियमाः** पूर्वोक्ताः । [5]यद्वा—यथा बालस्य उपनयनकाले सन्ध्योपासनादिकाले च विधीयमानमुच्चारणं नियमवदक्षरपठनमेव, नार्थधीसंपादनम्; न हि बालानां मन्त्रार्थावबोधसंभवः—तद्वदिति । **अक्षरराशिग्रहणेति** । सनियमकोच्चारणमध्ययनशब्दस्य मुख्योऽर्थः; वेदानां किंचिदधीत्य ब्राह्मणः, एकां शाखामधीत्य श्रोत्रियः, अङ्गाध्यायी अनूचानः, कल्पाध्यायी

---

1 शंकायामिति । इदमुपलक्षणम् । मीमांसकैरदृष्टमात्ररूपातिशयं एव संस्कारपदप्रयोगात् अत्र तदभावात् कथं संस्कार्यत्वोक्तिरिति शंकायां शोधयतीत्यपि ध्येयम् । एवञ्च कार्यान्तरमिष्टं दर्शयति संस्कार्यत्वञ्चेति वाक्येन । 2 चित्रेष्टिः चित्रया यजेत पशुकामः इति विहिता ।

3 हुमादौ—हुम्, फट् इत्यादिषु स्तोभेषु । 4 समुच्चीयते हुमाद्यन्यसार्थकवाक्यगतमेवाभिसंधीयते । जपादिना स्वरूपेणापि==अर्थाबोधकेनापि रूपेण । अर्थज्ञानमर्थसंबन्धि; जपादिकं तु स्वसंबन्धीति स्वरूपमित्येकोऽर्थः । जपाध्यापनाभ्यां धारणात्मकस्वरूपेण चेत्यपरोऽर्थः । 5 यद्वेति । पूर्वव्याख्याने मन्त्रवदिति मतुप् । मन्त्रविशिष्टं ग्रहणमिति, नियमवदितिवत् । द्वितीये वतिप्रत्ययः मन्त्रे इवेत्यर्थः ।

 

ग्रहणमात्रे पर्यवस्यति । अध्ययनगृहीतस्य स्वाध्यायस्य स्वभावत एव प्रयोजनवदर्थावबोधित्वदर्शनात् गृहीतात्

---

ऋषिः, कल्पसूत्रप्रवचनाध्यायी भ्रूण इत्यादिप्रयोगात् । न हि स्वशाखैकदेशाध्यायिनोऽर्थज्ञानसंभवः; अङ्गाध्ययनस्य पृथगुपादानेन तद्विरहे अर्थज्ञानप्रसङ्गाभावात् । स्वाध्यायशब्दश्च नार्थज्ञानवाची, अपि तु स्वशाखामात्रवाचीति तत्कर्मत्वं स्वाध्यायस्यैव युक्तम्; न त्वर्थज्ञानस्य । अध्ययनस्य प्रयोजनाकाङ्क्षायां दृष्टे संभवत्यदृष्टकल्पनाऽयोगात् । अक्षरग्रहणस्याऽऽसन्नत्वात् धर्मादिष्वनुगतत्वाच्च तत्स्वीकारो युक्तः । व्यवहितत्वादसार्वत्रिकत्वाच्च नार्थज्ञान (?) मित्यभिप्रायः । सकृदुच्चारणावधिकत्वव्यावृत्त्यर्थमक्षरग्रहणे पर्यवसानमुक्तम् । मात्रचा विधिव्यापारस्यार्थज्ञानपर्यन्तत्वव्युदासः । पर्यवस्यतीति । यथा अग्नीनादधीतेति वाक्यमाधानमात्रपरम्; न तूत्तरक्रतुविनियोगपरम्, यथा च "कारीर्या वृष्टिकामो यजेत" इति वाक्यं वृष्टिसिद्धिपर्यन्तकर्मविशेषपरम्; न तु वृष्ट्युपरितनोपयोगपरम्, तथेति भावः ।

एवं शब्दस्वारस्यादर्थज्ञानपर्यन्तत्वं निरस्तम् । अथार्थानुपपत्तिं परिहरति । त्रिधा चाऽनुपपत्तिशङ्का— विधेरक्षरग्रहणमात्रपरत्वे ग्रहणशेषतया विनियुक्तस्य स्वाध्यायस्यार्थपरत्वे प्रमाणाभावादविवक्षितार्थत्वं स्यात्; मीमांसायाः प्रवर्तकाभावादनारम्भणीयत्वं स्यात्; अक्षरराशिग्रहणमात्रस्य दुःखरूपतया विधेः प्रयोजनपर्यवसानं न स्यादिति । एतच्छङ्कात्रयनिराकरणमुखेनाध्ययनविधेरर्थज्ञानपर्यन्ततां, तन्निमित्तां ब्रह्मविचारानारम्भशङ्कां च व्युदस्यन् वेदाख्यैकप्रबन्धव्याख्यानरूपतया धर्मब्रह्मविचारयोरैकशास्त्र्यमपि दर्शयति अध्ययनगृहीतस्येति । इह साङ्गाध्ययनं विवक्षितम्; 'अधीतसाङ्गसशिरस्कवेदस्य', 'ननु च साङ्गवेदाध्ययनात्' इति पूर्वापरानुगुण्यात् । तेन हि प्रयोजनवदर्थापातप्रतीतिसिद्धिः । अर्था यज्ञोपासनादयः । ते स्वर्गमोक्षादिप्रयोजनवन्तः । प्रयोजनवदर्थशब्देन काकदन्तवदपरीक्ष्यत्वशङ्काव्युदासः । प्रयोजनवदर्थावबोधित्वदर्शनादित्यनेन विधेः परम्परया पुरुषार्थपर्यवसायित्वमुक्तं भवति । अध्ययनस्य साक्षात्प्रयोजनमक्षरराशिग्रहणमित्युक्तम् अध्ययनगृहीतस्येति पदेन । अयमर्थः—किं साक्षात् पुरुषार्थपर्यवसायित्वं विधेर्विवक्षितम्, उत परम्परया ? साक्षात्प्रयोजनपर्यवसायित्वं विधेरर्थज्ञानपर्यन्तत्वेऽपि नोपपद्यते; अनुष्ठानापूर्वद्वारा स्वर्गस्यैव प्रयोजनत्वात् । अध्ययनविधेः स्वर्गपर्यन्तत्वानभ्युपगमाच्च । परम्परया चेत्-अस्मत्पक्षेऽपि संभवतीति । स्वभावत इति । शब्दस्य बोधकत्वशक्तिस्वाभाव्यादित्यर्थः । व्युत्पन्नपदपदार्थं प्रति शब्दस्यार्थावबोधकत्वं स्वाभाविकमिति लोकसिद्धम् । एवकारो विधिनैरपेक्ष्यपरः । अन्यत्र विनियोगस्तु न स्वाभाविकं शब्दस्यार्थपरत्वं निरुणद्धि; जपविधिवत् । "याजयित्वा प्रतिगृह्य वाऽनश्नन् त्रिः स्वाध्यायं वेदमधीयीत त्रिरात्रं वा सावित्रीम्", "वेदमेव जपेन्नित्यम्" इत्यादिविधानं हि न वेदस्यार्थपरत्वं निवारयति ॥ स्वाध्यायः स्वतोऽर्थबोधकश्चेत्, किं मीमांसयेत्यत्राह गृहीतादिति । गृहीतात्—गृहीतमात्रात्; अध्ययनगृहीतस्येत्युक्तेः । तेन मीमांसाख्येतिकर्तव्यताराहित्यं विवक्षितम् । आपातप्रतीतेः संशयविपर्ययसहत्वात् तन्निराकरणाय मीमांसेति भावः । अध्ययनगृहीतस्येत्यादिना वेदस्य बोधकत्वस्वभावत्वमुक्तम् । प्रयोजनवदर्थशब्दः परम्परया पुरुषार्थपर्यवसानज्ञापनाय । उपरि तन्निमित्तापातप्रतीतिजनकतायाः निर्णयसहकारिवैकल्यनिबन्धनत्व[मुक्त?]मिति अपौनरुक्त्यम् । न हि वेदस्यापातप्रतीतिजनकत्वं स्वभावः, प्रमितिजनकत्वस्वभावत्वात् । मीमांसा-

स्वाध्यायात् अवगम्यमानान् प्रयोजनवतोऽर्थान् आपाततो दृष्ट्वा तत्स्वरूपप्रकारविशेषनिर्णयफल-वेदवाक्यविचाररूपमीमांसाश्रवणेऽधीतवेदः पुरुषः स्वयमेव प्रवर्तते ।

रूपपरिकरशून्यस्य तदभावो न श्रुतेः प्रमितिजनकत्वस्वभावविरोधी । यथा आलोकादिसहकारिविरहे रूपाद्यनुपलम्भश्चक्षुरादीनां रूपादिसाक्षात्कारजनकत्वस्य स्वाभाविकत्वं न विहन्ति, तद्वत् । आपातप्रतीतावपि प्रयोजनवत्त्वेन प्रतीतिरस्तीति दर्शयितुं पुनः प्रयोजनवदर्थशब्दः । प्रयोजनवदर्थापातप्रतीतिर्हि तन्निर्णयरागं जनयति । न हि निष्प्रयोजनकाकदन्ताद्यापातप्रतीतिस्तन्निर्णयरागं जनयति । आपाततोऽवगम्यमानान्[1] दृष्ट्वेत्यन्वयः । अर्थानामवगम्यमानत्वं दृष्ट्वेत्यर्थः । "स्वात्मनो बुद्ध्युत्पत्तिं दृष्ट्वा" (जिज्ञा. भा. अधिकरणरचनायाम्) इतिवत् । प्रयोजनवदर्थापातप्रतीतेः स्वानुभवसिद्धत्वान्न तदपह्नवः शक्य इति भावः । व्याकरणादिफलस्वरूपविलक्षणे मीमांसाफलस्वरूपे दर्शयति तत्स्वरूपेति । स्वरूपविशेषाः—अङ्गिनः; प्रकारविशेषाः अङ्गानि; पूर्वपक्षोक्तस्वरूपप्रकारतः सिद्धान्तितस्वरूपप्रकारयोर्वैषम्यं विशेषशब्देन विवक्षितम् । प्रयोजनवदर्थ-स्वाध्याय-वेद-मीमांसाशब्दाः पूर्वोत्तरभागसाधारणाः । स्वयमेव । न तु विधिना । तदुपपादकमधीतवेदः पुरुष इति पदद्वयम् । अधीतवेद इति अध्ययनविधिव्यापारस्यानुष्ठितांशे पर्यवसितत्वान्मीमांसायां तस्याप्रवर्तकत्वं द्योतितम् । चेतनत्वात् फलवदर्थापातप्रतीत्या स्वयं प्रवर्तत इति पुरुषशब्दस्याभिप्रायः ।

नन्वक्षरराशिग्रहणपर्यन्तत्वपक्षे रागतः प्रवृत्तिर्नोपपद्यते; "वेदाङ्गानि समस्तानि कृष्णपक्षेषु संपठेत्", "निष्कारणः षडङ्गो वेदोऽध्येयः", "वेदमध्यापयेद्द्विजः", "सकल्पं सरहस्यं च" इत्यादिविहिताङ्गाध्ययनस्याप्यक्षरग्रहणपर्यन्ततया व्याकरणादेरर्थावबोधाभावात् प्रकृतिप्रत्ययादिज्ञानाभावेनापातप्रतीत्यभावात्—मैवम्[2]; व्याकरणादीनां वेदाङ्गत्वादकिंचित्करस्याङ्गत्वायोगात् दृष्टकिंचित्कारे संभवति तत्प्रहाणेन चादृष्टपरिकल्पनायोगात् पदाद्यवबोधरूपदृष्टकिंचित्कार एव स्वीकार्य इति अङ्गत्वान्यथानुपपत्त्यैव व्याकरणाद्यर्थावगमसिद्धेः प्रयोजनवदर्थापातप्रतीतिसिद्ध्या मीमांसारम्भोपपत्तेः ।

'अधीतवेदः पुरुषः स्वयमेव प्रवर्तत' इत्यनेन, "अथातो धर्मजिज्ञासा" इति सूत्रमप्यर्थाद् व्याख्यातं भवति । विधेरक्षरराशिग्रहणपर्यन्तत्वे प्रवर्तकाभावात् स्वाध्यायस्यार्थपरत्वे प्रमाणाभावाच्च मीमांसा नारम्भणीयेति पूर्वः पक्षः । साङ्गाध्ययनानन्तरं शब्दस्य स्वतोऽर्थावबोधित्वदर्शनात् प्रवर्तकान्तराभावेऽपि रागात्प्रवृत्त्युपपत्तेरारम्भणीयेति सिद्धान्त इति ॥ ननु कर्मविचारस्य रागप्राप्तत्वे, "अधीत्य स्नायात्" इति समावर्तनस्मृतिर्बाधिका

---

1 अवगम्यमानान् दृष्ट्वेति । प्रयोजनवतो दृष्ट्वेति योजनान्तरं भावप्रकाशिकायाम् । यथाश्रुतान्वयोऽपि युक्तः । अवगम्यमानानिति पदं प्रमितिजनकत्वस्वाभाव्यमुक्तमनुवदति । वस्तुतःश्रुतिप्रमेयानेव प्रयोजनवतोऽर्थान् आपाततः पश्यति प्राय इति ।

2 मैवमिति । अङ्गत्वानुपपत्तिवत् संपठेदिति प्रयोगोऽप्यङ्गानां सार्थग्रहणगमकः । अपिच्चोपनयनात् प्रागपि संस्कृतपठनमार्यकुलेषु नियतम् । संस्कृतव्यवहारपरेष्वार्यकुलेषु सुतरां प्रागेव व्युत्पत्तिः । अतोऽप्यापातप्रतीतिः सुलभा । हितैषिवचनादेवाध्ययने प्रवृत्तावपि क्रमेणाध्ययन गृहीतेन वेदेन किं कार्यमिति जिज्ञासाऽध्येतुर्भवत्येवेति तदा जपार्थमर्थानुष्ठानाय चेति हितैषिमुखादेव जानन् तदर्थं व्युत्पत्तिलाभाय संस्कृतमभ्यस्येदिति अङ्गेष्वप्यर्थग्रहणप्रवृत्तिसिद्धिः ।

स्यात्। वैधत्वे स्मृतेरपि श्रुतेर्बलीयस्त्वात् स्मृतिरवकाशप्रदा स्यात् ॥ नैवम्। अध्ययनविधेरक्षरराशिग्रहणपर्यन्तत्वार्थज्ञानपर्यन्तत्वयोः किमभिप्रेत्यैतदुक्तम्? यद्यर्थज्ञानपर्यन्तत्वम, तर्हि अधीत्य स्नायादिति स्मृतिगताध्ययनशब्दस्य तत्तुल्यार्थत्वान्न विरोधः। यद्यक्षरराशिग्रहणपर्यन्तत्वम, ततोऽपि तुल्यार्थत्वान्न विरोधः। किंच— विरोधे सत्यपि प्रत्यक्षश्रुतिरप्यस्ति; यथा छान्दोग्ये, "आचार्यकुलाद्वेदमधीत्य यथाविधानं गुरोः कर्मातिशेषेणाभिसमावृत्य कुटुम्बे शुचौ देशे" इत्यादिः। ततश्च स्मृतिवचनोपेता स्नानश्रुतिर्बलीयसी। तस्मात् श्रुतिस्मृतिवचनयोः प्राबल्यदौर्बल्यकथनं निरर्थकम् ॥ नन्वेवं श्रुत्यापि रागतः प्रवृत्तिर्बाध्यत इति चेत्—न; समावृत्तस्यापि रागतः श्रवणोपपत्तेः ॥ नन्वध्ययनानन्तरभावित्वे समावर्तनस्य तत्पूर्वकगृहस्थकर्मानुष्ठानानवरुद्धश्रवणावसरालाभान्मीमांसानारम्भः प्रसज्यते ॥ नैवम्; समावृत्तस्यापि श्रोतुः श्रावयितुरिवावसरसंभवात् ॥ आचार्यस्य ह्यध्यापनं विहितम्; न तु गृहस्थस्य श्रवणमिति चेन्न; अध्यापनस्य याजनप्रतिग्रहवत् रागप्राप्तत्वात् ॥ रागप्राप्तमपि, "प्रतिग्रहादिना धनमर्जयेत्" इत्यादिशास्त्रानुमतमध्यापनमिति चेत्—श्रवणमपि शास्त्रानुमतम्; अनिषिद्धत्वात् यज्ञानुष्ठानोपयुक्तत्वाच्च।

ननु "संवत्सरे संवत्सरे द्वौ द्वौ मासौ समाहित आचार्यकुले वसेत् भूयः श्रुतिमिच्छन् इति श्वेतकेतुः" इत्यारभ्य, "तच्छास्त्रैर्विप्रतिषिद्धम्। निवेशे हि वृत्ते नैयमिकानि श्रूयन्ते अग्निहोत्रमतिथयः" इत्यादिना श्रवणं गृहस्थस्य निषिद्धमिति चेन्न—साकल्येन मासद्वयं गुरुकुलवासस्यानुष्ठानोपरोधित्वेन तस्यैव निषिद्धत्वात्। "निवेशे हि वृत्ते नैयमिकानि श्रूयन्ते, अग्निहोत्रमतिथयः" इति ह्युच्यते। आचार्यस्याप्यनुष्ठानानुपरोधेन श्रावणस्य हि शास्त्रानुमतत्वम्। अतोऽनुष्ठानानुपरोधोपरोधप्रयुक्तानुमत्यननुमतिविषयत्वं श्रावणस्य श्रवणस्य च तुल्यम्। अत एव हि युधिष्ठिरादीनां गार्हस्थ्यनिष्ठानामपि भीष्मादिभ्यः श्रवणं भारतादिषु प्रतिपाद्यते ॥ यद्यपि श्रावणकाल एव. श्रवणकालः, तथापि श्रोतुरुदकाहरणकाष्ठसंपादनादिभिरनुष्ठानोपरोध इति चेन्न—अध्ययनविधिप्रयुक्तस्योदकाहरणादेस्तन्निवृत्त्या निवृत्तत्वात्। वित्त-ख्यात्यादिप्रयोजनान्तरस्पृहया, शिष्यस्नेहेन च गुरोः, श्रावणमुपपद्यते ॥ श्रावयितुर्ज्ञातार्थत्वादनुष्ठानमुपपद्यते; श्रोतुरज्ञातार्थत्वान्नेति चेन्न—उपनयनप्रभृत्यनुष्ठानवत् हितैषिवचनादनुष्ठानोपपत्तेः ॥ तर्हि हितैषिवाक्यमेव स्यात्; किमर्थं मीमांसाश्रवणमिति चेत्—हितैषिवचनस्य प्रमाणमूलत्वनिश्चयार्थम्, प्रष्टॄणामपरेषां स्वयमुपपादनार्थं च ॥

हितैषिवचनादनुष्ठानसंभवे शूद्रादीनामप्यनुष्ठानप्रसङ्गः इति चेन्न—"न शूद्राय मतिं दद्यात्", "न चास्योपदिशेद्धर्मं न चास्य व्रतमादिशेत्" इत्यादिनिषेधवचनसद्भावात्। न हि यज्ञादिकं ब्राह्मणाः शूद्रायोपदिशन्ति। न च शुश्रूषादिरहितशूद्रविशेषविषयत्वेनैतन्निषेधवचनानां सङ्कोचः कार्यः; संकोचकाभावात्। न हि शूद्रस्य यज्ञाद्यर्हत्वविषयं वचनान्तरं दृश्यते। किंच यजमानेन कृत्स्नवेदस्य मन्त्रविशेषाणां च जप्यतावचनम् तेषामध्ययनलभ्यत्वात्। अध्ययनस्योपनयनसापेक्षत्वादुपनयनस्य त्रैवर्णिकाधिकारत्वान्न शूद्राद्यधिकारप्रसङ्गः ॥ ननूपनयनविधिः त्रैवर्णिकाध्ययनविषयतया नेतुं शक्यते। अतः शूद्रस्याध्ययनमुपनयननिरपेक्षमिति तस्य याजमानाद्युच्चारणसम्भव इति चेत्—न। "तस्माच्छूद्रसमीपे नाध्येतव्यम्" इति, "अथ हास्य वेदमुपशृण्वतस्त्रपुजतुभ्यां श्रोत्रप्रतिपूरणम्, उदाहरणे जिह्वाच्छेदो धारणे शरीरभेदः" इत्यादिना शूद्रस्य

वेदश्रवणादेर्निषिद्धत्वात् । अध्ययनं चेदुपनयनाङ्गकम्, तत् त्रैवर्णिकाधिकारमेवेति न तत्र शूद्राद्यधिकार इति मन्त्रविशेषोच्चारणानुपपत्तेः न हितैषिवचनाच्छूद्रादेः क्रत्वनुष्ठानप्रसङ्ग इति नापशूद्राधिकरणविरोधः ।

किंच यथा, "यावज्जीवमग्निहोत्रं जुहोति" इत्यादिविधिः, "न स्वाङ्गं स्वव्यवधायकम्" इति न्यायात् स्वोपयोगिनोऽर्थार्जनादेः रागप्राप्तस्याप्यवसरप्रदः—तथाऽनुष्ठानोपयोगिमीमांसाश्रवणस्य समावर्तनविधिरवकाशप्रदः स्यात् । क्त्वाप्रत्ययस्य च समानकर्तृकत्वपूर्वकालीनत्वमात्रमर्थः ; न त्वानन्तर्यम् ॥ नन्वानन्तर्यमेव विधेयम् । न चेत्, विधिवैयर्थ्यम् ; दुःखात्मकगुरुकुलवासनिवृत्तेः स्वतःप्राप्तत्वादिति चेत्—न । आनन्तर्यपरत्वेऽपि विधिवैयर्थ्यात् । तच्च गुरुकुलवासस्य दुःखात्मकत्वादेव । अतः सांनियमसंस्कारविशेष एव स्नानमिति तद् विधेयम् ; न त्वानन्तर्यम् । तस्मात् अधीत्येति क्त्वाश्रुतेर्न विरोधः । तस्मात् स्वयमेव प्रवर्तते ॥

ननु "यो ह वा अविदितार्षेयच्छन्दोदैवतेन मन्त्रेण यजति याजयति वाऽध्यापयति वा, स्थाणुं वर्च्छति गर्तं वाऽऽपद्यते प्र वा मीयते । पापीयान् भवति । यातयामान्यस्यच्छन्दांसि भवन्ति । अथ यो मन्त्रे मन्त्रे वेद, स सर्वमायुरेति ; श्रेयांश्च भवति ; अयातयामान्यस्यच्छन्दांसि भवन्ति । तस्मादेतानि मन्त्रे मन्त्रे विद्यात्" इति श्रुत्या, "अविदित्वा ऋषिं छन्दो दैवतं योगमेव च । योऽध्यापयेज्जपेद्वापि पापीयान् जायते तु सः" इति स्मृत्युपबृंहितयाऽर्थज्ञानविधानं फलितम् । मन्त्रप्रतिपाद्यदेवताज्ञानस्यात्र विहितत्वात् तुल्यन्यायतया, दैवतशब्दस्य मन्त्रप्रकाश्यानुष्ठेयार्थप्रकाशनार्थतया च विध्यादिभागार्थज्ञानस्यापि विधेयत्वापत्तेः । योगो मन्त्राणां विनियोगः ; तज्ज्ञानस्य ब्राह्मणभागार्थज्ञानसापेक्षत्वाच्चेति चेत्—न ; प्रतिग्रहर्तुसंवेशनादेरिव रागप्राप्तत्वानिवृत्तेः । न हि "ब्राह्मणः प्रतिग्रहादिना धनमर्जयेत्", "ऋतावुपेयात्" इति वचनं रागतः प्राप्तिं प्रतिग्रहादेर्निरुणद्धि । किंचानेनैव वाक्येनार्थज्ञानं विहितमित्यध्ययनविधेरर्थज्ञानपर्यन्तत्वं नाश्रयणीयम् । यथा क्रतूनां विध्यन्तरसिद्धत्वादाधानविधेरुत्तरक्रतुविधिपर्यन्तत्वं नाऽऽश्रीयते, तद्वत् ॥ न चेदं वेदवाक्यमध्ययनस्यार्थधीपर्यन्तत्वमवगमयति ; न च स्वयमर्थज्ञानं विधत्ते; अर्थज्ञानस्यान्यतः सिद्धत्वात् । अत्र मन्त्रमात्रस्य ऋष्यादिविज्ञानविधानप्रतीतेश्च । ततश्च वेदस्य साङ्गतयाऽध्येतव्यत्वं सिध्येत्; न त्वर्थज्ञानम् । छन्दोदैवतादिज्ञानस्य छन्दःकल्पव्याकरणनिरुक्तादिसापेक्षत्वात् मीमांसानपेक्षत्वाच्च ॥ विनियोगविषयसंदेहे सति मीमांसापेक्षा स्यादिति चेत्—तर्हि संदेहापाकरणाय रागतः प्रवृत्तिः स्यात् । "यदधीतमविज्ञातं निगदेनैव शब्द्यते । अनग्नाविव शुष्कैधो न तज्ज्वलति कर्हिचित्" इतीदमपि वचनं नार्थज्ञानपर्यन्तत्वमध्ययनविधेरवगमयति ; "अधीतमविज्ञातम्" इति अत्रैवाध्ययनार्थज्ञानयोः पृथङ्निर्देशात् ; रागप्राप्तस्य विधातुमशक्यत्वाच्च । "वेदानां किंचिदधीत्य ब्राह्मणः, एकां शाखामधीत्य श्रोत्रियः, अङ्गाध्यायी अनूचानः" इत्यादयः कल्पसूत्रप्रयोगाश्च अध्ययनादर्थज्ञानं पृथग्भूतमवगमयन्ति । अतः श्रवणस्य दुःखरूपत्वेन तन्द्रालुतया वा, अर्थार्जनाद्यन्यपरतया वा यो न शृणोति, तत्प्ररोचनार्थमिदम्, यदधीतमित्यादिवचनम् । यथा, "अक्षैर्मा दीव्यः कृषिमित्कृषस्व वित्ते रमस्व बहु मन्यमानः" इति वाक्यं तन्द्रालुप्ररोचनार्थम् । प्ररोचनया हि प्रवृत्तिरुत्कटा स्यात् । न ह्येतावता कृषेरर्थार्जनस्य च रागप्राप्तत्वभङ्गेन सर्वत्र वैधत्वमेव स्यात् । तद्वदिदमपि वचनं श्रवणस्य रागप्राप्तत्वं न विहन्ति ।

तत्र कर्मविधिस्वरूपे निरूपिते कर्मणामल्पास्थिरफलत्वं दृष्ट्वा अध्ययनगृहीतस्वाध्यायैकदेशोपनिषद्वाक्येषु चामृतत्वरूपानन्तस्थिरफलापातप्रतीतेः तन्निर्णयफलवेदान्तविचाररूपशारीरकमीमांसायामधिकरोति ।

तथा च वेदान्तवाक्यानि केवलकर्मफलस्य क्षयित्वं ब्रह्मज्ञानस्य चाक्षयफलत्वं दर्शयन्ति, "तद्यथेह कर्मचितो लोकः क्षीयते, एवमेवामुत्र पुण्यचितो लोकः क्षीयते," "अन्तवदेवास्य तद्भवति",

---

तस्माद्रागत एव प्रवर्तते । एवमन्यतः प्रवृत्तौ संभवन्त्यां शब्दशक्त्युल्लङ्घनेन मीमांसाश्रवणस्य विधेयत्वकल्पनमयुक्तम् ॥

ऐकशास्त्र्यं रागतः प्रवृत्तिश्चास्तु ; कथं पौर्वापर्यनियमः ? तत्राह तत्रेति । तत्र--वेदे । कर्मविधिस्वरूपे निरूपित इति । कर्मभागस्य वेदोपक्रमत्वादधीतक्रमेणैव निरूपणं प्राप्तमिति कर्मविचारस्य पूर्वभावित्वमिति भावः ।

ननु न हि कर्मणामल्पास्थिरफलत्वमनन्तस्थिरफलत्वञ्च पूर्वपक्षसिद्धान्तरूपेण क्वचिन्निरूपितम् । तत् कथमल्पास्थिरफलत्वावगतिरित्यत्राह स्वरूपे निरूपिते इति । केवलं कर्मविधिस्वरूपमेव निरूपितम् । अल्पास्थिरफलत्वज्ञानमावृत्तिविधानादिना फलितमिति भावः । यद्वा कर्मविधिस्वरूपं निरूपितम् ; न त्वाराध्यपरदेवतेति भावः । तदाराधनत्वेन कृते ह्यनन्तस्थिरफलत्वसिद्धिः । अध्ययनगृहीतस्वाध्यायेति । अध्ययनस्य कृत्स्नस्वाध्यायविषयत्वादुपनिषदश्च स्वाध्यायशब्दान्तर्गतत्वादिति भावः । एकदेशशब्देनैकप्रबन्धांशत्वं सूचितम् । साधारणवेदशब्दनिर्दिष्टे शब्दराशौ अनन्यपरं प्रदेशं पृथङ्निर्दिशत्युपनिषच्छब्देन । वेदान्तशब्देन विचारपौर्वापर्यनियमहेतुर्दर्शितः । मीमांसाशब्दोक्ते व्याख्याने प्रदेशभेदं विशिनष्टि शारीरकशब्देन । "अन्नवानन्नादो भवति महान् भवति प्रजया पशुभिर्ब्रह्मवर्चसेन" इत्याद्युक्तानुषङ्गिकाल्पास्थिरफलव्यावृत्त्यर्थममृतत्वरूपशब्दः । आनुषङ्गिकाणामल्पास्थिरत्वेऽपि प्रधानफलस्यानन्तास्थिरफलत्वेनापातप्रतीतिरस्तीत्यर्थः । कर्ममीमांसासंस्कृतमनस्कत्वादत्राप्यानुषङ्गिकं प्रधानफलं च संभवतीति श्रोतुः प्रतीयत एव ॥ ननु फलत्वादिदमप्यनित्यमिति बुद्धिः स्यात् ॥ नैवम्, विपक्षे बाधकाभावात्, यथा भौमसुखात् स्वर्गादिसुखं विलक्षणं प्रतिपन्नम् ; तत्रापि परस्परवैलक्षण्यं देशकालस्वरूपभेदात् प्रतिपन्नम्—तथैव तस्मादपि विलक्षणं सुखं संभवतीति । अतोऽत्र रागजननायास्यापि प्रतीतिः स्यात् । अधिकरोति अधिकारी भवति । एवं कर्मविचारकृदेवाधिकारी भवति ; न तु साधनचतुष्टयवानित्यभिप्रायः ॥

एवमैकशास्त्र्य—क्रमनियम—आरम्भणीयत्वान्युपपादितानि । कैर्वेदान्तवाक्यैरारम्भणीयत्वौपयिकापातप्रतीतिरित्यत्राह तथाचेति । यथा सूत्रं व्याख्यातम्, तथेत्यर्थः । चशब्दाशङ्कानिवृत्तौ ; प्रसिद्धौ वा । केवलशब्देन ज्ञानाङ्गकर्मव्यावृत्तिः ॥ ननु कर्मविचारेण निर्णीतेऽपि कर्मफलक्षयिष्णुत्वे पुनश्चाल्पास्थिरफलत्वप्रतीतिजनकवाक्यानि किमर्थमुदाह्रियन्ते ? अनन्तस्थिरफलापातप्रतीतिजनकान्येव वाक्यान्युदाहर्तव्यानि ॥ उच्यते । अधिगतकर्मणः पुरुषस्य हि निर्णीतार्थसंवादिवाक्यदर्शनात् कर्मफलास्थिरत्ववद् ब्रह्मज्ञानफलाक्षयित्वस्य प्रामाणिकत्वं संभवतीति श्रद्धास्थिरीकरणार्थम् । तद्यथेति । लोक्यत इति लोकः फलम् । "अन्तवदेवास्य तद्भवति" इत्यनेन ज्ञानविधुरकर्मणोऽनेककालानुष्ठितस्य बहुविधस्यापि क्षयित्वमुक्तं भवति । "यो ह वा एतदक्षरं गार्ग्यविदित्वाऽस्मिँल्लोके जुहोति यजते तपस्तप्यते बहूनि वर्षसहस्राणि" इत्येतद्वाक्य-

"न ह्यध्रुवैः प्राप्यते," "प्लवा ह्येते अदृढा यज्ञरूपाः" "परीक्ष्य लोकान् कर्मचितान् ब्राह्मणो निर्वेदमायात् नास्त्यकृतः कृतेन। तद्विज्ञानार्थं स गुरुमेवाभिगच्छेत् समित्पाणिश्श्रोत्रियं ब्रह्मनिष्ठम्। तस्मै स विद्वानुपसन्नाय सम्यक् प्रशान्तचित्ताय शमान्विताय। येनाक्षरं पुरुषं वेद सत्यं प्रोवाच तां तत्त्वतो ब्रह्मविद्याम्॥", "ब्रह्मविदाप्नोति परम्", "न पुनर्मृत्यवे तदेकं पश्यति",

---

पूर्वकत्वात् तस्य वाक्यस्य। अन्तवदित्युक्त क्रियास्वरूपस्यान्तवत्त्वं लोकसिद्धतयाऽनुपदेश्यमिति फलस्यैवान्तवत्त्वमर्थसिद्धं स्फुटीकर्तुं पूर्वं तद्यथेति वाक्योपादानम्। सांसारिकफलस्याध्रुवत्वं स्यात्; कर्मभिरेव ध्रुवं फलं संपाद्यतामिति शङ्काव्युदासाय उपादत्ते न ह्यध्रुवैः प्राप्यत इति। "ध्रुवं तत्" इति वाक्यखण्डः। तदुपपादकत्वेन प्रतीयमानं वाक्यान्तरमुदाहरति प्लवा ह्येते अदृढा यज्ञरूपाः" इति। संसारपारं तारयितुं नालं मध्ये भंगुरत्वादित्यर्थः। सूत्रयोजनानुगुणतरं कर्मणामल्पास्थिरफलत्वं, ब्रह्मोपासनस्यानन्ताक्षयफलत्वं च दर्शयद्वाक्यमुपादत्ते परीक्ष्य लोकानिति। अस्मिन् वाक्ये न्यायसिद्धार्थानुवादेन गुरूपसत्तिर्विधीयते। कर्मचितान् कर्मसञ्चितान्, कर्मसंपाद्यान्। परीक्ष्य मीमांसान्यायैर्निरूप्य। ब्राह्मणः अधीतसाङ्गसशिरस्कवेदः। य इत्यध्याहार्यम्; स इत्युत्तरत्र श्रवणात्। अकृतः नित्यः। अत्र पुरुषो विशेष्यः; लिङ्गवशात्; अक्षरं पुरुषमित्यनन्तरोक्तेश्च। कृतेन कर्मणा। नास्ति न सिध्यति। इतिकरणं द्रष्टव्यम्। इति यो निर्वेदमायात्, सः तद्विज्ञानार्थं गुरुमेवाभिगच्छेत्। एवकारेण नियमविधित्वं गम्यते। समित्पाणिः—न रिक्तपाणिः। "रिक्तपाणिस्तु नोपेयात् राजानं दैवतं गुरुम्" इति हि स्मर्यते। श्रोत्रियं श्रुतवेदान्तम्। ब्रह्मनिष्ठं ब्रह्मसाक्षात्कारवन्तम्। श्रुतवेदान्तोऽपि रुचिभेदादब्रह्मनिष्ठो नोपगन्तव्य इति भावः। अभिगच्छेदित्यन्वयः। शमः बाह्येन्द्रियनियमनरूपः; प्रशान्तचित्तायेत्यन्तःकरणनियमनस्योक्ततया पारिशेष्यात्। एतेन श्रवणोपयुक्तमवधानं विवक्षितम्; न तूपासनोपयुक्तात्यन्तेन्द्रियजयादिः। तस्मै स विद्वान् प्रोवाचेत्यन्वयः। येनेति निर्देशो विज्ञानाभिप्रायः। तद्विज्ञानार्थमिति हि प्रकृतम्। सामान्यतः कारणाभिप्रायो वा। लिङ्गव्यत्ययो वा; अक्षरं स्वरूपेणाविकारम्; सत्यं—गुणतोऽप्यविकारम्। आभ्यामचिज्जीवव्यावृत्तिः। "तां ब्रह्मविद्याम् प्रोवाच प्रब्रूयादित्यर्थः" इति वेदान्तसारे व्याख्यातम्। "छन्दसि लुङ्लङ्लिटः" इति लिट्।

ननु प्रशान्तचित्ताय शमान्विताय इति शमादेः पूर्ववृत्तत्वं प्रतीयते॥ न; श्रवणोपयोग्यवधानमात्रस्य विवक्षितत्वात्। नात्रोपासनाङ्गभूतात्यन्तविषयवैतृष्ण्यं विवक्षितम्। तद्धि "शमदमाद्युपेतः स्यात्" इति निरूपयिष्यते। अतो निरूप्यसंपाद्यैस्तैः निरूपणात्प्रागेव विशिष्टत्वमनुपपन्नम्। श्रुतिश्च शास्त्रजन्यज्ञानवतः पुरुषस्य तदुत्तरभाविशमाद्यङ्गकमुपासनं दर्शयति, "तस्मादेवंविच्छान्तो दान्त उपरतस्तितिक्षुः समाहितो भूत्वाऽऽत्मन्येवाऽऽत्मानं पश्येत्" इति। अत्र हि एवंविदिति शास्त्रजन्यज्ञानवत्त्वमुक्तम्। भूत्वा पश्येदित्युपासनस्य शमाद्यङ्गकत्वं स्था(ज्ञा)पितम्। केवलानन्तस्थिरफलपरवाक्यान्युदाहरति ब्रह्मविदिति। अत्रानुवाके "यतो वाचो निवर्तन्ते" इति श्रवणादनन्तस्थिरफलत्वसिद्धिः। प्राप्यस्य ब्रह्मणोऽनन्तस्थिरत्वेऽपि प्राप्तेः कादाचित्कत्वशङ्काव्यावृत्त्यर्थमपुनर्निवृत्तिमाह न पुनरिति। यद्वा विद्ययाऽनन्तस्थिरफलरूपब्रह्मप्राप्तिमाह ब्रह्मविदिति। विद्यया ब्रह्मप्राप्तेः प्रतिबन्धनिवृत्तिपूर्वकत्वमाह न पुनरिति। मृत्युः प्रमादः, मोहो वा। "मोहो मृत्युः संमतो यः कवीनाम्", "प्रमादं वै मृत्युमहं ब्रवीमि" इत्युभयत्र

"न पश्यो मृत्युं पश्यति", "स स्वराड् भवति"; "तमेवं विद्वानमृत इह भवति नान्यः पन्था अयनाय विद्यते", "पृथगात्मानं प्रेरितारं च मत्वा जुष्टस्ततस्तेनामृतत्वमेति" इत्यादीनि ॥

नतु च साङ्गवेदाध्ययनादेव कर्मणां स्वर्गादिफलत्वं स्वर्गादीनां च क्षयित्वं ब्रह्मोपासनस्यामृतत्वफलत्वञ्च ज्ञायत एव । अनन्तरं मुमुक्षुर्ब्रह्मजिज्ञासायामेव प्रवर्तताम्; किमर्था धर्मविचारापेक्षा? ॥ एवं तर्हि शारीरकमीमांसायामपि न प्रवर्तताम्; साङ्गाध्ययनादेव कृत्स्नस्य ज्ञातत्वात् ॥ सत्यम्; आपातप्रतीतिर्विद्यत एव । तथापि न्यायानुगृहीतस्य वाक्यस्यार्थनिश्चायकत्वात् आपातप्रतीतोऽप्यर्थः संशयविपर्ययौ नातिवर्तते । अतस्तन्निर्णयाय वेदान्तवाक्यविचारः कर्तव्य इति चेत्—तथैव धर्मविचारोऽपि कर्तव्य इति पश्यतु भवान् ॥

---

मृत्युशब्दव्यपदेशात् । प्रमादो यथावस्थितात्मस्वरूपस्याज्ञानम्; मोहः भ्रान्तिज्ञानम्; दिङ्मोह इत्यादिव्यपदेशात् । न मृत्युनिवृत्तिमात्रमेव; तत्कार्यमपि निवर्तत इत्याह **न पश्यो मृत्युं पश्यतीति** । अस्य वाक्यस्योपरि, "न रोगं नोत दुःखताम्" इति हि श्रूयते । **न पुनरित्यादिवाक्यं** ब्रह्मणि दृष्टे मृत्युप्रमुखनिवृत्तिरिति ज्ञापनार्थम् । **न पश्यो मृत्युमित्य**त्रापि पश्यशब्दस्य ब्रह्मदर्शीत्यर्थः; तदेकं पश्यतीत्यनन्तरोदाहृतवाक्ये विषयस्य दर्शितत्वात् । **स स्वराड् भवतीति** । कर्मवश्यो न भवतीत्यर्थः । "स्वराट् स्वतन्त्रो विज्ञेयः" इति नैघण्टुकाः । **तमेवंविद्वानिति** वाक्येन निर्विशेषचिन्मात्रज्ञान—देवतान्तरोपासनाद्युपायान्तरव्यावृत्तिसिद्धिः; पुरुषोत्तमोपासनस्यैवोपायतयोक्तत्वात् । तदुपासनरूपज्ञानं च नाऽऽत्मैक्यविषयम्; अपितु पृथक्त्वविषयमिति दर्शयति **पृथगात्मानमिति** । **मत्वा**—ज्ञात्वा । **ततः** पृथक्त्वज्ञानात् तेन **जुष्टः** प्रीतिविषयीकृतः, अनुगृहीतोऽमृतत्वमेतीत्यर्थः । **इत्यादीनि वेदान्तवाक्या**नीति पूर्वेणान्वयः ।

उदाहृतस्पष्टार्थवाक्यमात्रतृप्तः कश्चिच्चोदयति **ननुचे** ति । पूर्वत्र चोद्यान्तराणां कण्ठोक्त्यभावेऽपि परिहारकण्ठोक्त्या तान्यभिप्रेतानि । अतः चशब्देन तैरर्थसिद्धैः सह समुच्चयो युक्तः । **साङ्गेति** । कर्मज्ञानपूर्ववृत्तत्ववादिनाऽपि साङ्गाध्ययनस्यापेक्षितत्वं स्वीकृतमिति तदधिकव्युदासार्थ एवकारः । अध्ययनस्य साङ्गत्वादङ्गानां चार्थज्ञानहेतुत्वान्मीमांसानिरपेक्षं स्वर्गादेरेव केवलकर्मफलत्वं स्वर्गादेश्च क्षयित्वं ब्रह्मोपासनस्याक्षयफलत्वञ्च ज्ञायत इत्यर्थः । ब्रह्मोपासनस्येत्यादिग्रन्थो दृष्टान्ताभिप्रायः । **ज्ञायत एवे**त्येवकारो ज्ञातृत्वसंप्रतिपत्तिसूचकः । ज्ञानसामग्री हि सिद्धेति भावः । ततः किमित्यत्राह **अनन्तरमिति** । कर्मणोऽल्पास्थिरफलत्वज्ञानेन मुमुक्षासिद्ध्यर्थं हि कर्मविचारः । तन्निरपेक्षमेवाल्पास्थिरफलत्वज्ञानान्मुमुक्षासिद्धेः ब्रह्मजिज्ञासैव कर्तव्या; धर्मविचारे प्रयोजनाभावादित्यर्थः । परिहरति **एवमिति** । एवं तर्हि उदाहृतवाक्यमात्रतृप्तोऽसि चेत् । **कृत्स्नस्येति** । ब्रह्मणोऽपीति भावः । वेदान्तवाक्यान्यपि स्फुटार्थानि ह्यस्माभिरुदाहृतानि, तेषामर्थोऽपि मीमांसानपेक्षं ज्ञायते । अतोऽनन्तस्थिरफलज्ञानाय न ब्रह्मविचारः कर्तव्य इत्यर्थः । **सत्यमि**त्यर्धाङ्गीकारे; आपातप्रतीतावभ्युपगमः; ब्रह्मविचारनैरपेक्ष्येऽनभ्युपगमः । **आपातेति** । **आपातप्रतीतिः**-अज्ञाननिवृत्तिमात्रेण संशयविपर्ययसहज्ञानम् । संशयविपर्ययौ च—कारणवाक्यगतसद्ब्रह्मात्माकाशप्राणवैश्वानरादिशब्दैरर्थतत्त्वस्य दुर्निश्चयत्वात्, "विज्ञानघन एवैतेभ्यो भूतेभ्यः समुत्थाय तान्येवानुविनश्यति", "असद्वा इदमग्र आसीत्" इत्यादिभिरात्मानित्यत्वादेः प्रतीतेः, "अन्नवानन्नादो भवति प्रजया पशुभिर्ब्रह्मवर्चसेन" इत्यादिनाऽल्पास्थिरफलत्वावगमाच्च स्याताम्; । अतः साङ्गाध्ययनमात्रेण तयोरनतिवृत्तेस्तद्व्युदासस्य न्यायानुगृहीतवाक्यफलत्वाच्च ब्रह्मविचारः कर्तव्य इति चेदित्यर्थः । **भवान्**—अनुदाहृतवाक्यान्तरपर्या-

लघुपूर्वपक्षः

ननु च ब्रह्मजिज्ञासा यदेव नियमेनापेक्षते, तदेव पूर्ववृत्तं वक्तव्यम् । न धर्मविचारापेक्षा ब्रह्मजिज्ञासायाः; अधीतवेदान्तस्यानधिगतकर्मणोऽपि वेदान्तवाक्यार्थविचारोपपत्तेः ॥ कर्माङ्गाश्रयाण्युद्गीथाद्युपासनान्यत्रैव चिन्त्यन्ते । तत् अनधिगतकर्मणो न शक्यं कर्तुमिति चेत्—अनभिज्ञो भवान् शारीरकशास्त्रविज्ञानस्य । अस्मिन् शास्त्रे अनाद्यविद्याकृतविविधभेददर्शननिमित्तजन्मजरामरणादिसांसारिकदुःख-

लोचनायामपि प्रवृत्तस्त्वमिति भावः । **तथैव** एतया दृष्ट्या अत्रापि संशयविपर्ययनिरासस्यापेक्षितत्वं जानन्ननुदाहृतवाक्यानि पश्ये[दि]त्यर्थः । "अक्षय्य ह वै चातुर्मास्ययाजिनः सुकृतं भवति", "पूर्णाहुत्या सर्वान् कामानवाप्नोति", "सर्वान् लोकान् पशुबन्धयाज्यभिजयति", "अपाम सोमममृता अभूम." "अनन्तं ह वा अपारमक्षय्यं लोकं जयति, योऽग्निं नाचिकेतं चिनुते", "नास्येष्टापूर्ते क्षीयेते । योऽग्निं नाचिकेतं चिनुते" इत्यादीनि हि, 'अमृतत्वं भजन्ते, 'सोऽश्नुते सर्वान् कामान्', 'इमान् लोकान् कामान्नी कामरूप्यनुसंचरन्' इत्यादिब्रह्मवेदनफलवाक्यैस्तुल्यानि वाक्यानि दृश्यन्ते । अत औपनिषदवाक्येष्विवानुदाहृतवाक्येषु संशयविपर्ययबाहुल्यात् तन्निरासाय कर्मविचारः कर्तव्य इत्यर्थः ॥

एवं फलद्वारा हानाय कर्मज्ञानापेक्षा दर्शिता । अथ स्वरूपेणोपादानाय च नियमेन कर्मज्ञानापेक्षाऽस्तीति दर्शयितुं मुमुक्षोः कर्मणो नियमेनानपेक्षितत्वलक्षणं परपक्षमुपक्षिपति **ननु** चेति । नियमेनापेक्षितत्वस्य विवक्षितेतरगामित्वव्युदासार्थः प्रथम **एव**कारः; द्वितीयस्तु नियमेनानपेक्षितस्य पूर्ववृत्तत्वनिवृत्त्यर्थः । ततः किमित्यत्राह **न धर्मे**ति । कुत इत्यत्राह **अधीते**ति । ये ब्रह्मविद्याधिकारिणः, तेषां सर्वेषामवश्यापेक्षितं हि नियमेनापेक्षितम् । वेदान्तमात्राध्यायिनस्तु तत्रैवापातप्रतीतिर्बुभुत्सा च स्यात्; तस्य कर्मविषयापातप्रतीत्यभावात् न कर्मविचारस्य नियमेनापेक्षेत्यर्थः । यद्वा अधीतकृत्स्नवेदस्यापि जन्मान्तरसुकृतवशाद्वेदान्तवाक्य एव बुभुत्सा जायते चेत्, तस्य न कर्मविचारापेक्षेति । तदा अधीतवेदान्तस्येति पदमयोगव्यवच्छेदपरम्; नान्ययोगव्यवच्छेदपरम् । कृत्स्नवेदाध्ययनादपेक्षितवेदान्तभागोऽप्यधीत एवेत्यर्थः । एवं हानार्थमपि कर्मणो ज्ञातव्यत्वं निषिद्धम्; उपादानार्थमपि न ज्ञातव्यत्वमित्युपपादयितुं वेदान्तमात्रबुभुत्सोरपि कर्मविचारापेक्षां शङ्कते **कर्माङ्गे**ति । एकस्य साम्नः पञ्च भागाः सन्ति । ते प्रस्तावोद्गीथप्रतिहारोपद्रवनिधनाख्याः । एते भागाः भक्तिशब्दाभिधेयाः । तासु पञ्चसु भक्तिषु प्रस्तावो हिङ्कारपूर्वं गीयते; उद्गीथः प्रणवपूर्वं गीयते । तत्र पञ्चविधसामोपासनं क्वचिद्विधीयते, "लोकेषु पञ्चविधं सामोपासीत" इति । क्वचित्सामावयवेषु पञ्चस्वेकैकावयवोपासनं विधीयते । तत्रोद्गीथावयवभूतप्रणवोपासनं विधीयते, "ओमित्येतदक्षरमुद्गीथमुपासीत" इति । **कर्माङ्गाश्रयाणि** कर्माङ्गभूतोद्गीथादिविषयाणि । अनधिगतकर्मण उद्गीथाद्युपासनचिन्तनं न शक्यं कर्तुमिति प्रतिज्ञा । **कर्माङ्गाश्रयाणी**ति हेतुगर्भविशेषणम् । कर्माङ्गोद्गीथाद्याश्रयाण्युपासनानीत्युक्ते सति हेतावुद्गीथशब्दस्य वैयर्थ्यं स्यात; उपासनमात्रस्य च पक्षीकारः प्रतीयेत । अतो यथोक्तैव वचनव्यक्तिर्युक्ता । अनधिगते कर्मण्युद्गीथादिविषयोपासनचिन्ताया अशक्यत्वात् कर्मविचारोऽपेक्षित-इति चेदित्यर्थः । सोपालम्भं परिहरति । **अनभिज्ञ** इति । शास्त्रे प्रधानतया प्रतिपाद्यं ज्ञानमिदमिति त्वया न ज्ञातमित्यर्थः । अत्र किं प्रधानप्रतिपाद्यं ज्ञानमित्यत्राह **अस्मिन्नि**ति ।

सागरनिमग्नस्य निखिलदुःखमूलमिथ्याज्ञाननिबर्हणायात्मैकत्वविज्ञानं प्रतिपिपादयिषितम् । अस्य हि भेदावलम्बिकर्मज्ञानं कोपयुज्यते? प्रत्युत विरुद्धमेव । उद्गीथादिविचारस्तु कर्मशेषभूत एव ज्ञानरूपत्वाविशेषादिहैव क्रियते । स तु न साक्षात्सङ्गतः । अतो यत्प्रधानं शास्त्रम्, तदपेक्षितमेव पूर्ववृत्तं किमपि वक्तव्यम् ॥

बाढम् ; तदपेक्षितं च कर्मविज्ञानमेव ; कर्मसमुच्चितात् ज्ञानादपवर्गश्रुतेः ।

---

भेदः—ज्ञातृज्ञेयज्ञानरूपः । वैविध्यम्-तदवान्तरभिदाबाहुल्यम् । एवंविधभेददर्शनस्य हेतुरविद्या । तस्याः को हेतुरित्यनवस्थापरिहारार्थमनादिशब्दः । एवमविद्याकृतभेददर्शननिमित्तकं जन्मजरामरणादिकमेव सांसारिकदुःखम् । आदिशब्देन नरकगर्भवासादिग्रहणम् । संसारः —प्रकृतिसंबन्धः । तत्प्रभवं सांसारिकम्, तन्निरसनीयत्वाय दुःखरूपत्वोक्तिः । सागरशब्दस्तदानन्त्यपरः । निमग्नस्येति दुःखनिवृत्त्युपायापेक्षाहेतुतयोक्तम् । अधिकारिस्वरूपमुक्तम् ; प्रयोजनमाह निखिलेति । मिथ्याज्ञानं—भ्रान्तिज्ञानम् ; "दुःखजन्मप्रवृत्तिदोषमिथ्याज्ञानानामुत्तरोत्तरापाये तदनन्तरापायात्" इति प्रयोगात् । भ्रान्तिज्ञानं च भेददर्शनम् । यद्वा मिथ्याभूतमज्ञानं मिथ्याऽज्ञानम् । ज्ञाननिवर्त्यत्वाय मिथ्याशब्दः । तस्य निबर्हणाय । तन्निबर्हणमेव मोक्ष इत्यभिप्रायः । तत्साधनं किमित्यत्राह आत्मैकत्वविज्ञानमिति । सर्पभ्रमस्य रज्जुयाथात्म्यज्ञानं हि निवर्तकम् ; न तु कर्मविशेषः । एवं भेददर्शनस्याविद्याकृतत्वादैक्यज्ञानमेव तन्निवर्तकमिति तत्रैव तात्पर्यं वेदान्तवाक्यानामित्यर्थः । ततः किमित्यत्राह अस्य हीति कोपयुज्यते । न कुत्रचित् । ज्ञानस्य स्वरूपोत्पत्तौ, तत्फलोत्पत्तौ, ज्ञानोत्पत्तिसाधनानुग्रहे वा नोपयुज्यत इत्यर्थः । न केवलमुपयोगाभावः, प्रतिकूलफलत्वमप्या(पील्या ?)ह प्रत्युतेति । द्वैतवासनाजनकत्वादित्यभिप्रायः । तथाप्युपनिषत्स्वधीतत्वाद् ब्रह्ममीमांसायां निरूप्यमाणत्वाच्चोद्गीथाद्युपासनं ब्रह्मविद्यापेक्षितमित्युद्गीथादिविचारः साक्षात्सङ्गत इत्यत्राह उद्गीथादीति । तर्हि कथमुपनिषत्स्वध्ययनं ब्रह्मविचारे तद्विचारश्चेत्यत्राह ज्ञानरूपत्वाविशेषादिति । ज्ञानस्वरूपत्वसाम्यात् बुद्धिस्थतया कृतः, न तु प्रधानार्थोपयोगित्वादित्यर्थः । ततः किमित्यत्राह सत्विति । तुशब्दद्वयं[1] शङ्काद्वयव्यावर्तकम् । प्रधानप्रतिपाद्योपयुक्तस्यैव पूर्ववृत्तत्वं निगमयति अत इति । किमपि कर्मविचारादन्यदिति भावः । प्रधानार्थोपयोगित्वेन सङ्गतिः साक्षात्सङ्गतिः । येन केनाप्याकारेण साम्याद्बुद्धिस्थत्वं प्रसङ्गात्सङ्गतिः । अतः प्रासङ्गिकोद्गीथाद्युपासनचिन्तापेक्षितस्य प्रधानार्थविरुद्धस्य कर्मविचारस्य न पूर्ववृत्तता युक्ता ; अपि तु प्रधानप्रतिपाद्यात्मैकत्वविज्ञानापेक्षितमेव किमपि पूर्ववृत्तं वक्तुं युक्तमित्युक्तं भवति ॥

अत्र भास्करीयाः प्रत्यवतिष्ठन्ते बाढमिति । बाढमित्यर्धाङ्गीकारे । यत्प्रधानं शास्त्रम, तदपेक्षितमेव पूर्ववृत्तमित्येतावन्मात्रविषयोऽङ्गीकारः । तदपेक्षितं चेति प्रतिज्ञा । त्वया यदनपेक्षितमित्युक्तम, तदेवापेक्षितमित्येवकाराभिप्रायः । कुत इत्यत्राह कर्मसमुच्चितादिति । समुच्चितशब्दः साहित्यमात्रपरः ; न समुच्चयपरः । "अस्मद्विद्या च आत्मविद्या चेति समुच्चित्योपदेशात्" (1-2-15.भा.) इत्यत्र समुच्चित्यशब्दवत् । कर्मज्ञानाभ्यामिति न निर्दिष्टम ; अपि तु कर्मसमुच्चिताज्ज्ञानादिति विशेषण

---

1 तुशब्दद्वयम्—विचारस्तु, स तु इति तुशब्दद्वयम् ।

वक्ष्यति च, "सर्वापेक्षा च यज्ञादिश्रुतेरश्ववत्" इति । अपेक्षिते च कर्मण्यज्ञाते 'केन समुच्चयः; केन न' इति विभागो न शक्यते ज्ञातुम् । अतस्तदेव पूर्ववृत्तम् ॥.

---

विशेष्यभावेन निर्दिष्टम । अतो ज्ञानप्राधान्यमवगम्यते । कर्माङ्गकात् ज्ञानादित्यर्थः । श्रुतिश्च, "यज्ञेन दानेन" इत्यादिर्विवक्षिता । कर्मणो विद्याङ्गत्वे सूत्रकाराभिमतिं दर्शयति वक्ष्यति चेति । चः प्रतिपादकसमुच्चये । अङ्गतया कर्मणोऽनुष्ठानमपेक्षितमस्तु ; तज्ज्ञानस्य कथं पूर्वभावित्वम्—कर्मज्ञानं ब्रह्मविचारपाश्चात्यं किं न स्यादित्यत्राह अपेक्षिते चेति । प्रयाजादिवन्निष्पन्नस्य करणस्य फलोत्पत्तिदशायामनुग्राहकत्वेनाङ्गतयाऽपेक्षा विवक्षिता । तृतीयस्य चतुर्थपादे समावृत्ताकृतदार-मृतदारादीनाम्, आश्रमविशेषवर्तिनां च ब्रह्मविद्यानिष्ठानां कर्मस्वनुष्ठेयाननुष्ठेयविभागस्य निरूपयिष्यमाणत्वमभिप्रेत्योक्तं केन समुच्चयः केन नेतीति । यद्वा नित्यनैमित्तिकयोः समुच्चयः, न तु काम्यनिषिद्धयोरिति विभागो न ज्ञायत इत्यर्थः । अयमर्थः-पदार्थज्ञानपूर्वकं हि वाक्यार्थज्ञानम् । "यज्ञेन दानेन" इत्यादिवाक्ये यज्ञादिकर्मणां पदार्थभूतत्वात् वाक्यार्थज्ञानस्य च पदार्थज्ञानपूर्वकत्वात् यज्ञादिकर्मविचारस्य पूर्वभावित्वम् । न हि "व्रीहीनवहन्ति" इत्यादिवाक्यार्थज्ञानं व्रीह्यादिपदार्थज्ञानेन विनोपपद्यते ; पदार्थसंसर्गरूपत्वाद्वाक्यार्थस्य ॥ ननु गामानयेत्यादि-वाक्यात् व्युत्पत्तौ गवानयनादिरूपं वाक्यार्थं पूर्वं प्रतिपद्य आवापोद्वापमुखेन पश्चात् पदार्थप्रतिपत्तेः न पदार्थधीपूर्वकत्वनियमो वाक्यार्थज्ञानस्य ॥ उच्यते । व्युत्पन्नाच्छब्दादर्थप्रतिपत्तौ सर्वत्र पदार्थज्ञानपूर्वकमेव वाक्यार्थज्ञानम् । व्युत्पत्तिदशायां तु प्रमाणान्तरेण शब्दान्तरेण वा वाक्यार्थावगमः पूर्वं स्यात् । न तु तस्मादेव शब्दात् ; तस्यागृहीतसम्बन्धत्वेन बोधकत्वायोगात् । व्युत्पत्तावपि न वाक्यार्थधियः पूर्वभावनियमः ; अम्बाताततमातुलादिपदानां पदान्तरासंसृष्टानामेव प्रथमव्युत्पत्तिदर्शनात् । अस्य शब्दस्यायमर्थ इति व्युत्पत्तौ वाक्यार्थज्ञानस्य पूर्वभावाभावाच्च । न चास्मिन्नेव वाक्ये यज्ञादिशब्दव्युत्पत्तिसंभवः ; विविदिषानिष्पत्तिरूप-वाक्यार्थस्याप्रत्यक्षत्वेन गवानयनादाविव व्युत्पत्त्यनुपपत्तेः । अतः पदार्थज्ञानपूर्वकं वाक्यार्थज्ञानमित्युक्तम् ।

बाढमित्यादिकं सिद्धान्तिनश्चोद्यपरमिति च व्याख्यातृभिर्व्याख्यातम । तदानीमपि पदार्थवाक्यार्थभावः क्रमविशेषहेतुतया विवक्षितः । किञ्च अपेक्षिते चेत्यङ्गतयाऽपेक्षितत्वस्य विवक्षितत्वात् कर्मणां च ज्ञानोत्पादकतया तदङ्गत्वात् उत्पादकोत्पाद्ययोः पौर्वापर्यनियमात् विचारविषययोः कर्मज्ञानयोः पूर्वापरभावेन तच्छेषभूतयोर्विचारयोरपि तत्क्रमभाक्त्वं न्याय्यमिति चाभिप्रायः । शेषभूतस्य शेषिक्रमानुरोधित्वं हि न्यायसिद्धम, यथा—"सारस्वतौ होमौ भवतः" इति युगपदुत्पन्नयोरपि सारस्वतहोमयोः याज्यापुरोनुवाक्या-मन्त्रानुसारेण सरस्वतीयागस्य पूर्वभावे सरस्वद्यागस्य च पश्चाद्भावे च(?) प्राप्ते तदङ्गानामपि तेनैव क्रमेणानुष्ठानं निर्णीतम् (पू.मी.5.1.14) दृष्टान्ते दार्ष्टान्तिके च शेषिणोः क्रमनिश्चायकहेतुवैषम्यमेव । तयोः क्रमे निश्चिते शेषस्य शेषिक्रमानुरोधित्वं तत्र चात्र च तुल्यम् । एवञ्चोपासनस्यैव विचारं प्रति शेषित्वात तृतीयलक्षणे कृतस्योपास-नचिन्तनस्यैव कर्मविचारापेक्षया पश्चाद्भाव इति न वाच्यम्—विद्याविषयतत्फलचिन्तनस्यापि तदपेक्षितत्वेन कृत्स्नाया अपि ब्रह्ममीमांसायाः कर्मविचारपश्चाद्भावप्राप्तेः ॥ निगमयति अत इति । बाढमित्यादेः सिद्धान्तिचोद्यप-रत्वादपि भास्करमतपरत्वमुचितम ; "कर्मसमुच्चिताज्ज्ञानादपवर्गश्रुतेः" इत्यस्य ग्रन्थस्य भास्करीयभाष्ये श्रूयमाण-त्वात, अङ्गभावस्य तदभ्युपगतत्वेन तद्विषयसूत्रोपादानाविरोधाच्च शब्दतोऽर्थतश्च भास्करमतप्रत्यभिज्ञानात् ।

नैतद्युक्तम्; सकलविशेषप्रत्यनीकचिन्मात्रब्रह्मविज्ञानादेवाविद्यानिवृत्तेः ।

---

सिद्धान्तिचोद्यस्यापि तदन्तर्भावाच्च । भास्करपक्षं यादवप्रकाशपक्षं चोपजीव्य बाढमित्यादिना पार्श्वस्थश्चोदयतीति च निर्वाहः साम्प्रदायिकः । तत्रेयं योजना—कर्मसमुच्चितादिति समसमुच्चयो विवक्षितः । कर्मसमुच्चिताज्ज्ञानादिति विशेषणविशेष्यभावेन निर्देशो ज्ञानस्य मोक्षोपायत्वप्रसिद्धिप्राचुर्यनिबन्धनः । श्रुतिश्च, "विद्यां चाविद्यां च" इत्यादिः । अस्मिन् वाक्ये मृत्युशब्दः उपेयप्राप्तिविरोधिकर्मवाची । प्रतिबन्धनिवृत्तिर्ब्रह्मप्राप्तिश्चेति साध्यद्वयम, क्रमेण कर्म ज्ञानं चेति साधनद्वयमपि हि यादवप्रकाशैरभ्युपगतम् । अतः "विद्यां चाविद्यांच" इति वाक्ये पूर्वखण्डः साधनद्वित्वपरः, उत्तरखण्डस्तु साध्यद्वित्वपर इति तेषां निर्वाहः । वक्ष्यति चेति चशब्दः प्रतिपाद्यसमुच्चये अङ्गभावं च वक्ष्यतीत्यर्थः । ज्ञानोत्पत्तेः पश्चात् कर्मणो ब्रह्मप्राप्तिप्रतिबन्धनिवर्तकत्वम्, ज्ञानोत्पत्तेः पूर्वं कर्मणो ज्ञानोत्पादकतया तदङ्गत्वमपि हि तदभ्युपगतम् । अङ्गभावपरसूत्रमुपादत्ते सर्वापेक्षेति । 'सर्वापेक्षेति सूत्रमङ्गाङ्गिभावपरम्; सहकारित्वेन चेति सूत्रं समसमुच्चयप्रतिपादकम्' इति हि तेषां प्रक्रिया । अङ्गभावे समुच्चये च श्रुतिवाक्ये सूत्रे चोदाहर्तव्येऽपि ग्रन्थलाघवार्थं समुच्चये श्रुतिः अङ्गभावे सूत्रं चोदाहृतम् । अङ्गभावप्रतिपादकवाक्यविषयसूत्रोपादानेन भास्करमतस्यावलम्बितं भवति । एवमुभयथा कर्मणोऽपेक्षा दर्शिता । ततः किमित्यत्राह अपेक्षिते चेति । समप्रधानतया अङ्गतया चापेक्षिते इत्यर्थः । अन्यत् सर्वं पूर्ववत् । यद्यपि यादवप्रकाशमते कर्मविचारस्य पूर्ववृत्तत्वमनभिमतम्, तथापि समुच्चयेनाङ्गतया च कर्मणोऽपेक्षितत्वस्य तदुपपादितत्वात् तावन्मात्रमुपजीव्य पार्श्वस्थेन मतद्वयावलम्बिना चोदयित्रा पूर्ववृत्तत्वापादनमुखेन चोदितमिति न निगमनग्रन्थविरोधः । समुच्चयशब्दस्य प्रधानतयाऽन्वये स्वारस्यात् अङ्गत्वपरसूत्रोपादानात् तदनन्तरं साध्यद्वित्वस्य साधनद्वित्वस्य च निराकरिष्यमाणत्वाच्च मतद्वयावलम्बनेन चोदितमिति पूर्वाचार्यैर्निर्वाहः कृतः ॥

अत्र प्रतिवदति नैतद्युक्तमिति । ज्ञानार्थं कर्मणां ज्ञातव्यत्वं प्रागेव प्रतिक्षिप्तम्; वेदान्तमात्राध्यायिनः कर्मविषयापातप्रतीत्यभावेन कर्मनैरपेक्ष्यवचनात्, सुकृतवशाद्वेदान्तमात्रबुभुत्सावतः कर्मज्ञानानपेक्षावचनाच्च । अत्रोपादानार्थं कर्मणो ज्ञातव्यत्वं निराचिकीर्षुः समसमुच्चयेनाङ्गभावेन च द्विविधेऽप्युपादाने समसमुच्चयार्थमुपादानं प्रथमं निराकर्तुं साधनद्वित्वं साध्यद्वित्वं च वाक्यद्वयेन प्रतिक्षिपति सकलविशेषेत्यादिना । यदा बाढमित्यादिग्रन्थो भास्करमतेन सिद्धान्तिमतेन वा चोद्यपरः, तदानीं पूर्वपक्षे सम्भावितसमस्तप्रकारेण कर्मणोऽपेक्षां प्रतिक्षेप्तुकामः, 'किं त्वया समसमुच्चयो विवक्षितः उताङ्गभावः' इति विकल्पमभिप्रेत्य प्रथमं समुच्चयपक्षं प्रतिक्षिपतीति निर्वाह्यम् । सकलविशेषाः—सजातीयविजातीयस्वगतव्यावृत्त्यन्वयरूपविशेषाः; तेषां प्रत्यनीकम । सर्पाद्याकाराणां रज्जुत्वमिव तेषां निवर्तकमिति भावः । चिन्मात्रमिति मात्रचा ज्ञातृत्वज्ञेयत्वव्यावृत्तिः । यद्वा सकलविशेषप्रत्यनीकशब्देन विजातीयसजातीयभेदप्रत्यनीकत्वं चिन्मात्रमिति मात्रचा स्वगतभेदशून्यत्वं च विवक्षितम् । प्रत्यनीकशब्देन नित्यानर्हत्वं विवक्षितम् । न हि शुक्तिशकलं कदाचिद्रजतत्वसम्बन्धार्हम् । नित्यानर्हत्वादेव हि शुक्तिज्ञानस्य रजतत्वनिवर्तकत्वम् । ब्रह्मविज्ञानादेवाविद्यानिवृत्तेरिति । रज्जुत्वज्ञानादेव हि सर्पत्वनिवृत्तिः; न तु कर्मणेति भावः ।

अविद्यानिवृत्तिरेव हि मोक्षः । वर्णाश्रमविशेषसाध्यसाधनेतिकर्तव्यताद्यनन्तविकल्पास्पदं कर्म सकलभेददर्शननिवृत्तिरूपाज्ञाननिवृत्तेः कथमिव साधनं भवेत् ? श्रुतयश्च कर्मणामनित्यफलत्वेन मोक्षविरोधित्वं ज्ञानस्यैव मोक्षसाधनत्वं च दर्शयन्ति, "अन्तवदेवास्य तद्भवति", "तद्यथेह कर्मचितो लोकः क्षीयते । एवमेवामुत्र पुण्यचितो लोकः क्षीयते". "ब्रह्म वेद ब्रह्मैव भवति", "तमेव विदित्वाऽति मृत्युमेति" इत्याद्याः ।। यदपि चेदमुक्तम् –

---

एवं साधनद्वित्वं निरस्तम् । कथं साधनद्वित्वव्युदासः; साध्यद्वित्वं हि विद्यत इति शङ्कायां साध्यद्वित्वं व्युदस्यति **अविद्यानिवृत्तिरेव हि मोक्ष** इति । ब्रह्मणो नित्यप्राप्तत्वात् प्रतिबन्धनिवृत्तिरेव साध्या; न तत्प्राप्तिः । हिशब्दस्यायमभिप्रायः---या प्रतिबन्धनिवृत्तिः कर्मसाध्यत्वेन त्वयोक्ता, सैव ज्ञानसाध्या श्रुतिस्मृतिसूत्रैरभिहिता, "तमेव विदित्वाऽति मृत्युमेति", ज्ञात्वा देवं मुच्यते सर्वपाशैः," "निचाय्य तं मृत्युमुखात् प्रमुच्यते", "क्षीयन्ते चास्य कर्माणि तस्मिन् दृष्टे परावरे", "एवमेवंविदि पापं कर्म न श्लिष्यते", "ज्ञानाग्निः सर्वकर्माणि भस्मसात्कुरुते तथा", "तदधिगम उत्तरपूर्वाघयोः" इत्यादिभिः । तस्माद्वाक्यद्वयेन, 'न साध्यसाधनद्वित्वमस्ती'त्युक्तं भवति । अविद्यानिवृत्तिरेव मोक्षोऽस्तु; ततः किं कर्मनैरपेक्ष्यस्येत्यत्राह **वर्णाश्रमेति** । अनेन पदेन पूर्वोक्तं कर्मणो भेदावलम्बित्वं विवृतं भवति । आदिशब्देन निषिद्धानि, प्रायश्चित्तकर्माणि च विवक्ष्यन्ते । अनन्तशब्देन वर्णादीनां बाहुल्यम् । विकल्पो भेदः । **सकलभेददर्शननिवृत्तिरूपाज्ञाननिवृत्तेरिति** । मूलाज्ञाननिवृत्तेः फलं हि भेददर्शननिवृत्तिः । अतो भेददर्शननिवृत्तिरज्ञाननिवृत्त्यन्तर्गतेत्यर्थः । **कथमिव साधनम्** । न कथञ्चिदपीति यावत् । "न हि वचनविरोधे न्यायः प्रभवति" इति नियमात् श्रुतिसिद्धं कर्मणोऽपेक्षितत्वं न बाध्यमिति शङ्कायामुक्तोपपत्तेः श्रुत्यानुकूल्यं दर्शयति **श्रुतयश्चेति** । न केवलोपपत्तिः, तदनुग्राह्यमप्यस्तीति चशब्दस्य भावः । पूर्वं भेदावलम्बितया विरोध उक्तः । अत्र तु फलानित्यतया विरोधश्च युक्त्यन्तरत्वेन दर्शितः । **अनित्यफलत्वेनेति** । नित्यफलस्य मोक्षस्य कथमनित्यफलदं कर्म साधनमित्यर्थः । **श्रुतय** इति एकस्मादनेकवाक्यानां प्राबल्यं विवक्षितम्; **दर्शयन्ती**त्यनेनास्फुटार्थात् स्फुटार्थानाम् । **अन्तवदेवास्येति** । कर्मसाध्यत्वे मोक्षस्यानित्यत्वम्, नित्यत्वे कर्मणस्तत्साधनत्वं वा न स्यात्; कर्मणोऽन्तवत्फलत्वनियमादिति भावः । अनेन वाक्येन कर्मणामनित्यत्वमुक्तम् । **तद्यथे**त्यनेन कर्मक्षयस्य फलद्वारकत्वमुक्तम् । पूर्ववाक्यमनेककालानुष्ठितसकलकर्मणामन्तवत्त्वज्ञापनार्थम् । "अस्मिन् लोके जुहोति यजते तपस्तप्यते बहूनि वर्षसहस्राणि, अन्तवदेवास्य तद्भवति" इति हि श्रूयते । तत एव कर्मनैरपेक्ष्यवादे अस्य वाक्यस्य प्रथमत उपादानम् । **ब्रह्मविदाप्नोतीति** ज्ञानस्य मोक्षसाधनत्वमुक्तम् । प्राप्यप्राप्तृभेदनिषेधार्थं **ब्रह्म वेद ब्रह्मैव भवती**त्युपात्तम् । **तमेवेति** प्रतिबन्धनिवृत्तेर्ज्ञानफलत्वं ज्ञापितम् । ज्ञानव्यतिरिक्तस्य कर्मादेरुपायत्वनिषेधश्चानेन सिद्धः । "नान्यः पन्था" इति ह्यनन्तरवाक्यम् । एवं ज्ञानस्यैव मोक्षोपायत्वपरतर्कानुगृहीतस्पष्टार्थानेकवाक्योपादानेन, "विद्यां चाविद्यां च" इति समसमुच्चयपरत्वेन परोक्ता श्रुतिश्चातदर्थेत्युक्तं भवति । तस्या एकत्वादस्फुटार्थत्वादतर्कोपेतत्वाच्च श्रुत्यन्तराविरोधेन वर्णनीयत्वात् ।

एवं ज्ञानस्यैव मोक्षोपायत्वे प्रमाणतया श्रुतय उपपत्तयश्च दर्शिताः । अथ यज्ञादिश्रुतेः कर्मापेक्षितत्वपरतां व्युदस्यति **यदपी**त्यादिना । सिद्धान्ति-भास्कर-यादवप्रकाशानां त्रयाणामपि कर्माभिमतमितीदृशं

यज्ञादिकर्मापेक्षा विद्येति, तत् वस्तुविरोधाच्छ्रुत्यक्षरपर्यालोचनया च अन्तःकरणनैर्मल्यद्वारेण विविदिषोत्पत्तावुपयुज्यते ; न फलोत्पत्तौ ; विविदिषन्तीति श्रवणात् ।

विविदिषायां जातायां ज्ञानोत्पत्तौ शमादीनामेवान्तरङ्गोपायतां श्रुतिरेवाह. "शान्तो दान्त उपरतस्तितिक्षुः समाहितो भूत्वाऽऽत्मन्येवाऽऽत्मानं पश्येत्" इति ॥

---

प्राधान्य सूचयत्यपिशब्दः । समुच्चयपरवाक्यस्य श्रुत्यन्तरानुगुण्येन निर्वाहे सति यज्ञादिश्रुतिश्च निर्वाह्येति समुच्चयाभिप्रायश्चशब्दः, अविच्छिन्नखण्डोऽयं शब्दो वा । तदानीमप्युक्तप्रकारेण समुच्चयपरः । यदुक्तम् = 'यज्ञादिकर्मापेक्षा विद्या' इत्यनया वचनव्यक्त्या समुच्चयेन विद्यापेक्षितं यत् कर्मोक्तमित्यर्थः । वस्तुविरोधः द्वैतवासनाजनकत्वमनित्यफलत्वञ्च । श्रुत्यक्षरपर्यालोचना—सन्प्रत्ययार्थनिरूपणम् । चः समुच्चये । विविदिषोत्पत्तावुपयोगप्रकारमाह अन्तःकरणेति । न फलोत्पत्तौ—न मोक्षोत्पत्तौ । "यज्ञेन दानेन तपसाऽनाशकेन ब्राह्मणा विविदिषन्ति" इति हि श्रुतिः, न तु मुच्यन्त इतीति भावः । अक्षरपर्यालोचना कथमित्यत्राह विविदिषन्तीति श्रवणादिति । एवं च, यज्ञादिश्रुतिपर्यालोचनया च ज्ञानकर्मणोः समुच्चयः प्रत्युक्तः । न फलोत्पत्ताविति फलशब्दस्य मोक्षे स्वारस्यादेवं योजना कृता । यद्वा—यज्ञादिकर्मापेक्षा विद्येति वचोभङ्ग्याऽङ्गतयाऽपेक्षितं यत्कर्मोक्तमित्यर्थः । न फलोत्पत्तौ —न वेदनोत्पत्तावित्यर्थः । विविदिषापेक्षया हि फलं वेदनम् । अन्यत् सर्वं पूर्ववत् । अस्यां योजनायां यज्ञादिकर्मापेक्षा विद्येति निर्देशस्वारस्यमस्ति; अङ्गाङ्गिभावसूत्रस्मारकत्वादस्य निर्देशस्य । अथवा—यज्ञादीति प्रयाजादिवन्निष्पन्नस्य करणस्य फलोत्पत्तिदशायामनुग्राहकतयाऽङ्गं यत्कर्मोक्तम्, तन्नोपयुक्तमित्यर्थः । न फलोत्पत्तौ —न मोक्षोत्पत्तौ; करणभूतविद्यानुग्राहकत्वेन नोपयुक्तमित्यर्थः । अस्यां योजनायामङ्गाङ्गिभावसूत्रस्मारकनिर्देशस्य फलोत्पत्ताविति निर्देशस्य च स्वारस्यमस्ति ।

विविदिषन्तीत्युक्तिः, असिना जिघांसतीतिवदिति यज्ञादेर्वेदनोपयोगित्वं स्यादिति शङ्कायां वेदनोत्पत्तौ हेतुत्वं कर्मणः इतिकर्तव्यतात्वं करणत्वं चानुपपन्नमित्याह विविदिषायामित्यादिना वाक्यद्वयेन । तत्र शमादिभिः सह समुच्चयेन विकल्पेन चेतिकर्तव्यतात्वं प्रथमं व्युदस्यति विविदिषायामित्यादिवाक्येन । एवकारद्वयेन कर्मणः समुच्चयो विकल्पश्च व्युदस्यते । शमादीनामिन्द्रियव्यापारोपरतिरूपत्वेन यज्ञादिकर्मणस्तत्प्रवृत्तिरूपत्वेनान्योन्यविरोधित्वान्न समुच्चय उपपद्यत इत्यभिप्रायेण शमादीनामेवेत्युक्तम् । तुल्यबलयोर्हि विकल्पः ; "भूत्वाऽऽत्मानं पश्येत्" इति शमादीनामात्मदर्शनं प्रति साक्षात्साधनत्वस्य न्यायनैरपेक्ष्येण शीघ्रं प्रतिपन्नतया बलीयस्त्वात्, विविदिषन्तीति यज्ञादेरिच्छासाधनत्वेन स्वरसतः प्रतिपन्नत्वेऽपि स्वारस्यभङ्गेन, असिना जिघांसतीत्यादिदृष्टान्तपर्यालोचनरूपन्यायसापेक्षतया कर्मणो विद्यासाधनत्वस्य विलम्बेन प्रतिपन्नतया दुर्बलत्वाच्च न विकल्प इत्यभिप्रायेणाह श्रुतिरेवाहेति । तथापि विविदिषापेक्षितत्वात् कर्म च ज्ञानोपयोगि, तत् कथम् एतत् त्यज्यते, शमादिरुपादीयते इति शङ्कायां कर्मणः शमादिवैषम्यमाह अन्तरङ्गोपायतामिति । 'भूत्वा पश्येत्' इत्यन्तरङ्गत्वं स्पष्टम् । विविदिषायाः पूर्वं हि कर्मोपयोगः, शमादि तु पश्चादप्युपयुज्यत इत्यभिप्रेत्य जातायामित्युक्तम् ॥

तदेवं जन्मान्तरशतानुष्ठितानभिसंहितफलविशेषकर्ममृदितकषायस्य विविदिषोत्पत्तौ सत्याम्, "सदेव सोम्येदमग्र आसीत् एकमेवाद्वितीयम्", "सत्यं ज्ञानमनन्तं ब्रह्म", "निष्कलं निष्क्रियं शान्तम्", "अयमात्मा ब्रह्म", "तत्त्वमसि" इत्यादिवाक्यजन्यज्ञानादविद्या निवर्तते । वाक्यार्थज्ञानोपयोगीनि च श्रवणमनननिदिध्यासनानि । श्रवणं नाम—वेदान्तवाक्यानि आत्मैकत्वविद्याप्रतिपादकानीति तत्त्वदर्शिन आचार्यात् न्याययुक्तार्थग्रहणम् । एवमाचार्योपदिष्टस्यार्थस्य स्वात्मनि, एवमेव युक्तमिति हेतुतः प्रतिष्ठापनं मननम् । एतद्विरोध्यनादिभेदवासनानिरसनायास्यैवार्थस्यानवरतभावना निदिध्यासनम् । श्रवणादिभिर्निरस्तसमस्तभेदवासनस्य वाक्यार्थज्ञानमविद्यां निवर्तयतीति एवंरूपस्य श्रवणस्यावश्यापेक्षितमेव पूर्ववृत्तं वक्तव्यम् ।

तच्च नित्यानित्यवस्तुविवेकः, शमदमादिसाधनसंपत्, इहामुत्रफलभोगविरागः, मुमुक्षुत्वं चेत्येतत्साधनचतुष्टयम् । अनेन विना जिज्ञासानुपपत्तेः अर्थस्वभावादेवेदमेव पूर्ववृत्तमिति ज्ञायते ॥

---

ज्ञानं प्रति कर्मणः करणत्वमपि नास्तीत्याह तदेवमिति । करणत्वं संभवतीत्याशङ्क्य निरस्यते ; न त्वभ्युपगतत्वात् । विशुद्धं मनो हि करणम् ; "मनसा तु विशुद्धेन" इति श्रुतेः । तत्—उक्तेभ्यो हेतुभ्यः । एवम्—समुच्चयेन विकल्पेन चेतिकर्तव्यतात्वेऽनुपपन्ने । स्वर्गादिसाधनस्य कर्मणो विविदिषासाधनत्वानुपपत्तिपरिहारायानभिसंहितफलशब्दः । विविदिषाया अपि तत्साध्यत्वेन फलत्वात् तस्या अनभिसंहितत्वव्यावृत्त्यर्थं फलविशेषेत्युक्तम् । विविदिषासिद्ध्यर्थमिदानीमप्यनुष्ठानाय कर्मज्ञानापेक्षाशङ्काव्यावृत्त्यर्थं जन्मान्तरशब्दः । 'अनेकजन्मसंसिद्धः' इति वचनादिदानीमप्यनुष्ठेयमित्याशङ्कापरिहारार्थः शतशब्दः । कार्यकल्प्यं हि कारणम् । इदानीं विविदिषोत्पत्तिदर्शनेन जन्मान्तरशतानुष्ठानं कल्पनीयमिति भावः । तेन कर्मणा मृदितकषायस्य नष्टपापस्य । "कषायपक्तिः कर्माणि ज्ञानं तु परमा गतिः", "कषाये कर्मभिः पक्वे ततो ज्ञानं प्रवर्तते" इति हि स्मृतिः । एवं विविदिषोत्पत्तौ सत्यां ज्ञानोत्पत्तिकारणमाह सदेवेति । सदेवेत्यादि कारणवाक्यम् । सत्यं ज्ञानमिति शोधकवाक्यम् । सत्यज्ञानादिवाक्यफलितव्यावृत्तिविशदीकरणाय निष्कलमित्यादिवाक्यमुपात्तम् । अयमात्मा ब्रह्म इत्यैक्यवाक्यम् । उपक्रमादिषड्विधतात्पर्यलिङ्गोपेतमैक्यवाक्यं दर्शयति तत्त्वमसीति । अस्मिन् वाक्ये ब्रह्मणा जीवविशेषस्यैक्यं श्रुतम् । श्रुतमैक्यं सर्वात्मनामिति ज्ञापनार्थम् अयमात्मा ब्रह्मेति वाक्यम् । इत्यादिवाक्यं ज्ञानोत्पत्तौ करणम् ; न कर्मेत्यर्थः । वाक्यजन्यज्ञानमविद्यानिवर्तकं चेत्, श्रवणादिपूर्वकध्यानविधिवैयर्थ्यमित्याशङ्क्याह वाक्यार्थेति । चः शङ्काव्यावर्तकः तेषां स्वरूपमाह श्रवणं नामेति । प्रतिपादकानि—निष्पादनक्षमाणि ; वाक्यजन्यज्ञानादिति ह्युक्तम् । एतद्विरोधि आत्मैकत्वविद्याविरोधि । श्रवणादीन्येवंरूपाणि [यानि] स्युः, कथमेषां वाक्यार्थज्ञानोपयोगः इत्यत आह श्रवणादिभिरिति । वाक्यार्थज्ञानोत्पत्तिविरोधिनिरसनमुपयोग इत्यर्थः । इति—उक्तहेतोः ; ज्ञानकर्मसमुच्चयाङ्गाङ्गिभावानुपपत्तिहेतुभ्य इत्यर्थः । एवंरूपस्य बन्धनिवृत्तौ कर्मनिरपेक्षवाक्यार्थज्ञानोपक्रमभूतस्य; न तु प्रासङ्गिकार्थस्य । अवश्यापेक्षितम् नियमेनापेक्षितम् । अपेक्षितं च किमित्यत आह तच्चेति । कुत एतदपेक्षितमित्यत्राह अनेन विनेति । जिज्ञासानुपपत्तेः—विचारानुपपत्तेः । अनुपपत्तिमुपपादयति अर्थस्वभावादिति । कथमर्थस्वभावः ? इत्थम्—नित्यानित्यवस्तुविवेकादनित्यसांसारिकफलभोगविरागो नित्यपुरुषार्थेच्छा च स्यात् । ततः श्रवणादौ प्रवृत्तिः । मनोवधानहेतुतया तदुपयोगिनी शमादिसम्पत्तिरिति । अर्थस्वभावादेव । पूर्वप्रकृतादेवेत्येवकाराभिप्रायः । ज्ञानस्यैवोपायत्वं कर्मणोऽनपेक्षितत्वं

एतदुक्तं भवति—ब्रह्मस्वरूपाच्छादि(द)काविद्यामूलमपारमार्थिकं भेददर्शनमेव बन्धमूलम् । बन्धश्चापारमार्थिकः स च समूलोऽपारमार्थिकत्वादेव ज्ञानेनैव निवर्त्यते । निवर्तकं च ज्ञानं तत्त्वमस्यादिवाक्यजन्यम् ।

---

च अर्थस्वभावाद्धि पूर्वमुक्तम् । यद्वा अनेन विना जिज्ञासानुपपत्तेरिति [1]शमाद्यर्थस्वभावादित्यर्थः । शमादि पूर्ववृत्तमस्तु; कर्म च पूर्ववृत्तं स्यादित्यत आह अर्थस्वभावादेवेति । येनार्थस्वभावेन शमादेः पूर्ववृत्तत्वम्, तेनैवार्थस्वभावेनान्यस्य पूर्ववृत्तत्वनिषेध इति प्रथमस्यैवकारस्य भावः । पूर्ववृत्तान्तरस्य व्यावृत्त्यर्थं द्वितीय एवकारः । अत्रार्थस्वभावशब्देन शमाद्यर्थस्वभाव उक्तः; ज्ञानार्थस्वभावः कर्मार्थस्वभावश्चाभिप्रेतः । ज्ञानस्य कर्मनिरपेक्षोपायत्वस्वभावात्, कर्मणो भेदावलम्बित्वेन विरुद्धस्वभावत्वाच्च, शमादेर्निवृत्तिरूपत्वेन प्रवृत्तिरूपकर्मविरोधिस्वभावत्वाच्च साधनचतुष्टयमेव पूर्ववृत्तम्; न त्वन्यदित्युक्तं भवति । इदमेव पूर्ववृत्तमिति ज्ञायते इति । इदमेवशब्दावयोगान्ययोगव्यवच्छेदपरौ । इदंशब्दो हि साधनचतुष्टयपूर्ववृत्तत्वपरः, एवकारः कर्मव्युदासपरः शमाद्यर्थस्वभावात् तदयोगव्यवच्छेदः । तस्मात् ज्ञानकर्मणोरर्थस्वभावाच्चान्ययोगव्यवच्छेदः ।

सकलविशेषप्रत्यनीकं ब्रह्म चेत्, कथं संसारप्रवृत्तिः, कथं वाक्यार्थज्ञानादेवाविद्यानिवृत्तिः, अन्तः—करणस्य केन वा मालिन्यम्, कथं कर्मणा नैर्मल्यम्, ते चायोगान्ययोगव्यवच्छेदहेतुभूता अर्थस्वभावाः कथमिति शङ्कायामुक्तार्थं सङ्कलय्य दर्शयन् शङ्काश्च परिहरति एतदुक्तमिति । ब्रह्मस्वरूपाच्छादिका[2]शब्देन सकलविशेषप्रत्यनीकत्वेऽपि स्वरूपतिरोधानाद्भेददर्शनं संभवतीत्युक्तम् । भेदः—ज्ञातृज्ञेयादिः । अपारमार्थिकं भेददर्शनमेव बन्धमूलम् । न कर्मेत्यर्थः । कर्मापि भ्रान्तिमूलकमिमि भावः । यद्वा अपारमार्थिकं भेददर्शनमेव; न सत्यभूतं किंचिदपीति भावः । तथा सति किं कर्मापेक्षा । बन्धः—जन्मजरामरणादिः । बन्धश्चापारमार्थिक इति । अविद्यामूलापारमार्थिकभेददर्शनकार्यत्वादिति भावः । ततः किं कर्मनैरपेक्ष्यस्येत्यत्राह स चेति । अपारमार्थिकत्वादेवेति । पूर्वोक्तादेवापारमार्थ्यात् कर्मनैरपेक्ष्यसिद्धिरित्येवकाराभिप्रायः । ज्ञानेनैव । न कर्मणेत्यर्थः । न ह्यपरमार्थसर्पनिवृत्तेः रज्जुज्ञानेन विना वैनतेयोपासनकर्मापेक्षा । एवं समसमुच्चयः प्रत्युक्तः । ज्ञानं प्रत्यपि कर्मणो न साधनत्वमित्याह निवर्तकं चेति । निवर्तकबोधः प्रमाणजन्य इति यावत् । प्रमाणजन्यशुक्तिज्ञानं हि रजतनिवर्तकम् । अत्र शमादेरितिकर्तव्यतात्वेन कर्मण इतिकर्तव्यतात्वमपि विरोधान्नेत्यभिप्रेतम् । ततः किमित्यत्राह तस्येति । तस्य कर्मनिरपेक्षस्य, एतस्य अद्वैतविषयस्य । तदेतच्छब्दयोः प्रस्तुतवाचित्वाविशेषेऽपि दूरस्थान्तिकस्थविशेषणविशिष्टपरामर्शित्वं ह्युचितम् । अद्वैतविषयत्वे

---

1 अनुपपत्तेरिति शमादीति । पूर्वमनुपपत्तेरित्यन्तं पृथग्वाक्यम् । इदानीमनुपपत्तिरूपार्थस्वभावादित्येकान्वयः । अर्थस्वभावपदप्रयोगः कर्मार्थस्वभाव—ज्ञानार्थस्वभावसूचनार्थ इति उपरि, 'अत्रार्थ—अभिप्रेतः' इति वाक्यात् ज्ञायते । साधनचतुष्कगतस्वभावात् तत्पूर्ववृत्तत्वं ज्ञायते । कर्मगतस्वभावात् तन्न पूर्ववृत्तमिति ज्ञायते । आत्मैकत्वज्ञानगतस्वभावात् कर्म न पूर्ववृत्तम्; किं तु साधनचतुष्टयमिति ज्ञायत इति ॥

2 आच्छादिकाशब्दस्यैव विग्रहकाले साधुत्वात् तथाऽनुवादः । मूले तु आच्छादकशब्द एव । अन्यथा तत्समर्थनविचारः टीकायां कृत एव स्यात् । तत्त्वटीकायामपि न विचारः कृतः । प्रत्युत 'आच्छादकत्वोक्त्या' इति पदमेव लक्ष्यते । परं यथाश्रुतटीकां तात्पर्यदीपिकाश्चानुरुध्यैव आच्छादिकापदमेव मूले रोचयन्ते, समर्थयन्ते च । साधुत्वेऽपि व्यवहारपरिपाट्यपि अनुसर्तव्या ।

तस्यैतस्य वाक्यजन्यस्य ज्ञानस्य स्वरूपोत्पत्तौ कार्ये वा कर्मणो नोपयोगः, विविदिषायामेव तु कर्मणामुपयोगः। स च पापमूलरजस्तमोनिबर्हणद्वारेण सत्त्वविवृद्धया भवतीति, इममुपयोगमभिप्रेत्य, "ब्राह्मणा विविदिषन्ति" इत्युक्तमिति। अतः कर्मज्ञानस्यानुपयोगादुक्तमेव साधनचतुष्टयं पूर्ववृत्तमिति वक्तव्यम्॥

अत्रोच्यते—यदुक्तम्—अविद्यानिवृत्तिरेव मोक्षः, सा च ब्रह्मविज्ञानादेव भवति इति, तदभ्युपगम्यते। अविद्यानिवृत्तये वेदान्तवाक्यैर्विधित्सितं ज्ञानं किंरूपमिति विवेचनीयम्—किं वाक्याद्वाक्यार्थज्ञानमात्रम्, उत तन्मूलमुपासनात्मकं ज्ञानम् इति। न तावत् वाक्यजन्यं ज्ञानम्; तस्य विधानमन्तरेणापि

---

हेतुमाह वाक्यजन्यस्येति। तत्त्वमस्यादिवाक्यजन्यत्वादद्वैतविषयत्वमित्यर्थः। कार्ये मोक्षे। तर्हि कुत्रोपयोग इत्यत्राह विविदिषायामिति। तुशब्देन करणेतिकर्तव्यतात्वव्युदासः। उपयोगः कथमित्यत्राह स चेति। पापमूलेत्यादिना अन्तःकरणनैर्मल्यद्वारेणेति पूर्वोक्तं विवृतं भवति। रजस्तमोनिबर्हणादिकं नास्मिन् वाक्ये श्रुतमित्यत्राह इतीममिति। अभिप्रेत्यशब्देन शङ्कापरिहारः। इतिर्हेतौ। वस्तुविरोधादितिकर्तव्यतात्वकरणत्वाद्यनुपपत्तिहेतुभ्य इत्यर्थः। इमम् उपयोगम्—रजस्तमोनिबर्हणसत्त्वविवर्धनरूपं परम्परयोपयोगमित्यर्थः। विविदिषन्तीत्युक्तमित्येतदुक्तं भवतीत्यन्वयः। प्रकृतमुपसंहरति अतः कर्मज्ञानस्येति। अतः—हानार्थमुपादानार्थं च कर्मज्ञानस्यानपेक्षितत्वादित्यर्थः। अत्र व्याख्यातृभिरुक्तौ सङ्ग्रहश्लोकौ—(तूलिका)

"विरोधादप्रमाणत्वाच्चित्तशुद्ध्युपयोजनात्। ज्ञानमात्रस्य हेतुत्वश्रुतेः सामर्थ्यतोऽपि च॥
शमाद्यङ्गकताम्नानान्न धीकर्मसमुच्चयः। श्रवणादिक्रमोन्निद्रवाक्यजा धीर्विमोचिका" ॥ इति ॥

विरोधादिति कर्मणामनित्यफलतया भेदवासनाजनकतया च विरोधो विवक्षितः। सामर्थ्यत इति ज्ञानस्य मिथ्यार्थनिवर्तकत्वे कर्मनिरपेक्षत्वरूपं वस्तुसामर्थ्यं विवक्षितम्॥

राद्धान्तमारभते अत्रोच्यत इति। अस्मिन् पूर्वपक्षे सिद्धान्त उच्यत इत्यर्थः। पूर्वपक्षोक्तेष्वर्थेष्वविरुद्धांशमभ्युपगमेन प्रतिवदति यदुक्तमिति। अविद्यानिवृत्तिः—प्रतिबन्धनिवृत्तिः। साध्यसाधनद्वित्वनिरासोऽभिमत इत्यर्थः। यः प्रतिबन्धनिरासः कर्मसाध्य उक्तः, तस्य "तमेव विदित्वाऽति मृत्युमेति" इत्यादिषु ज्ञानसाध्यत्वमुक्तम्। ब्रह्मप्राप्तिस्तु स्वतःसिद्धा। एवकाराभ्यां साध्यान्तरं साधनान्तरं च व्यावर्त्यते। यद्यप्यनिष्टनिवृत्तिरिष्टप्राप्तिश्च द्वयमस्ति, तथापीष्टतमब्रह्मप्राप्तेः स्वतःसिद्धायाः पृथगुपायसाध्यत्वाभावात् प्रतिबन्धनिवृत्तिरेव साध्या। स्वत एव सर्वसाक्षात्कारक्षमं ज्ञानं प्रतिबन्धके निवृत्ते सति ब्रह्मस्वरूपरूपगुणविभवादिकं सर्वं साक्षात्करोति। यथा सेतौ भग्ने जलं स्वयमेव गच्छति-न केनचिन्नेतव्यम्, तद्वत्; यथा अश्मापनयने मार्गसमीकरणतत्प्रापणे उभे अपि पृथग्यत्नसाध्ये, न, तथेत्यर्थः। यद्वा भावान्तरस्यैवाभावत्वादविद्यानिवृत्तिरेव ब्रह्मप्राप्तिरित्यर्थः। साध्यसाधनद्वित्वनिरासोऽभ्युपेतश्चेत्, विप्रतिपत्तिविषयः क इत्यत्राह अविद्येति। साधनस्वरूपविशेषे विप्रतिपत्तिरित्यर्थः। किंरूपम्। किं कर्माङ्गकत्वानर्हं भवदुक्तं ज्ञानम्, उत कर्माङ्गकत्वार्हमस्मदुक्तं ज्ञानमित्यर्थः। किंरूपमित्यभिप्रेतं विवृणोति किमिति। किं वाक्यादित्यादिना परमतं स्वमतं च वदति; न तु परमतविकल्पः। प्रथमं परपक्षप्रतिक्षेपः क्रियते, स्वपक्षस्थापनं तु पश्चादित्यभिप्रेत्याह न तावदिति। न तु दूष्यशिरसोरन्यतरदूषणं क्रियते। कुत इत्यत्राह तस्येति। विधानमन्तरेणापीति। प्रमाणज्ञानं वस्तुतन्त्रम्, न पुरुषतन्त्रम्,

**वाक्यादेव सिद्धेः; तावन्मात्रेणाविद्यानिवृत्त्यनुपलब्धेश्च । न च वाच्यम्—भेदवासनायामनिरस्तायां वाक्यमविद्यानिवर्तकं ज्ञानं न जनयति; जातेऽपि सर्वस्य[1] सहसैव भेदज्ञानानिवृत्तिर्न दोषाय; चन्द्रैकत्वे ज्ञातेऽपि द्विचन्द्रज्ञानानिवृत्तिवत् ।**

---

कर्तुमकर्तुमन्यथाकर्तुं चाशक्यत्वात् । अतः पुरुषतन्त्रत्वाभावान्न तत् विधेयमिति तैरेवोक्तमिति भावः । **वाक्यादेव** ब्रह्मस्वरूपपरवाक्यादेव । व्युत्पत्तिमन्तं पुरुषं प्रति न्यायानुगृहीतस्य वाक्यस्यार्थबोधकत्वं स्वतः-सिद्धम्; न तु विध्यधीनम् । तच्छ्रवणे पुरुषस्य प्रवृत्तिश्च रागादेवेत्युपपादितम् : यद्यपि न रागात्, तथाप्यध्ययनविधिरेवाधीतकृत्स्नवेदवाक्यविचारे प्रवर्तक इति, "प्रज्ञां कुर्वीत" इत्यादिविधिर्निरर्थक एव । न च प्रमाणज्ञानस्य श्रेयःसाधनत्वमलौकिकमिति तद्रूप्येण तस्य विधेयत्वम्; शुक्तिरूप्यादिभ्रमनिवर्तक-ज्ञानस्येव बन्धनिवर्तकज्ञानस्य दृष्टार्थत्वाभ्युपगमात् । अतो विधिवैयर्थ्यम् । तेनासकृदावृत्तसाक्षात्कारभक्तिरूपत्व-यावज्जीवानुष्ठेयत्वपराणाम्, "यावन्न विमोक्ष्ये अथ संपत्स्ये" इत्यादीनां मुक्तेः शरीरपातानन्तरभावित्वपराणाम्, नाडीविशेषनिष्क्रमणवादिनीनाम्, मार्गपराणां चानेकश्रुतानां नैरर्थक्यं प्रसज्येतेत्येवम् अनेकश्रुतिविरोधस्य प्रदर्शनार्थं तस्य विधानमन्तरेणापीत्युक्तम् । अथ प्रत्यक्षविरोधं दर्शयति **तावन्मात्रेणेति** । तावदंशस्ततो-ऽधिकेऽप्यस्तीति तद्व्यावृत्त्यर्थं तावन्मात्रेणेत्युक्तम् । बहुशास्त्रविरोध-प्रत्यक्षविरोधरूपमिदं दूषणद्वयं वदता भगवता आपस्तम्बेनापि वाक्यार्थज्ञानमात्रस्य मोक्षसाधनत्वं निरस्तम्, यथा, "बुद्धे क्षेमप्रापणम्; तच्छास्त्रैर्वि-प्रतिषिद्धम् । बुद्धे चेत् क्षेमप्रापणम्, इहैव न दुःखमुपलभेत । एतेन परं व्याख्यातम्" इति । शास्त्रैरिति बहुवचनेन पूर्वोदाहृतानेकश्रुतिविरोधोऽभिप्रेतः । विप्रतिषेधः अधिकबलेन प्रतिषेधः; न तु प्रकरणसमवत् तुल्यबलेन प्रतिषे(रो)धः । बहुशास्त्रविरोधः प्रबलतरः; "भूयसां स्यात् बलीयस्त्वम्" इति न्यायादित्यभि-प्रायेण विप्रतिषिद्धमित्युक्तम् । यत्तु परैरस्य दूषणस्य प्रतिवचनं द्वेधा कृतम्, तदनुभाष्य दूषयति **न च वाच्य-मिति** । वाक्यं ज्ञानोत्पत्तिमिदानीं न जनयतीति कश्चिन्निर्वाहः; तमाह **भेदेति** । इदानीं ज्ञानोत्पत्तिर्दृश्यत इति चेत्, तत्परिहारायाह **अविद्यानिवर्तकमिति** । पश्चादपि वाक्यादेवाविद्यानिवर्तकविशदज्ञानोत्पत्तिश्चेत्, इदानीमेव जनयत्वित्यत्राह **भेदवासनायामिति** । प्रतिबन्धकाभावश्च सामग्र्यन्तर्भूतः । अतः सामग्रीवैकल्यात् ज्ञानमनु-त्पन्नम् । ध्यानादिविधयः प्रतिबन्धकनिरासौपयिका इति भावः । अनेन शास्त्रप्रत्यक्षविरोधौ परिहृतौ भवतः । सनकादीनां ज्ञानाधिकत्वेन श्रुतिस्मृतिप्रसिद्धानामपि ज्ञानानुदयोऽनुपपन्न इति शङ्कायां निर्वाहान्तरमाह **जातेऽपीति** । [1]अविद्याया एकत्वात् प्रपञ्चप्रतिभासस्यैकस्य ब्रह्मणः स्वप्नरूपत्वाच्च **सर्वस्येत्युक्तम्** । **न दोषाय** । अनिवर्तकत्वं दोषाय न भवति । ज्ञानोदयेऽपि भ्रमानिवृत्तौ दृष्टान्तं दर्शयति **चन्द्रैकत्वे** इति ।

---

1 सर्वस्येत्यनेन, परोक्षरूपाद्वैतज्ञानवत इव साक्षात्कारवतः सनकादेरपि अविद्या न निवर्तते भेदज्ञानसत्त्वादिति न मन्तव्यम्-अविद्यानिवृत्तावपि तदंशसत्त्वाद्वा, तत्संस्कारानुवृत्त्या वा भेदज्ञानसंभवादिति बोध्यते । एवं नानाजीववादे समन्वितमेव भाष्यमेकजीववादेऽपि घटयितुमाह अविद्याया एकत्वादिति । तत्त्वज्ञानमविद्यानिवर्तकं जातमेव चेत् सर्वजीवनिवृत्तिरवश्यम्भाविनी । तत् कथं सर्वजीवानिवृत्तिः, तदीयभेद-ज्ञानानिवृत्तिश्चेति शंका । अविद्याया एकत्वात् सर्वस्यैकजीवस्वप्नरूपत्वाच्च सर्वस्य भेदज्ञानानिवृत्तिर्भवेदिति न; मूलच्छेदेऽपि ज्ञानानिवृत्तिसंभवादिति परिहारः ।

अनिवृत्तमपि छिन्नमूलत्वेन न बन्धाय भवति—इति । सत्यां सामग्र्यां ज्ञानानुत्पत्त्यनुपपत्तेः । सत्यामपि विपरीतवासनायामाप्तोपदेशलिङ्गादिभिर्बाधकज्ञानोत्पत्तिदर्शनात् । सत्यपि वाक्यार्थज्ञाने अनादिवासनया मात्रया भेदज्ञानमनुवर्तत इति भवता न शक्यते वक्तुम्; भेदज्ञानसामग्र्या अपि वासनाया मिथ्यारूपत्वेन ज्ञानोत्पत्त्यैव निवृत्तत्वात् । ज्ञानोत्पत्तावपि मिथ्यारूपायास्तस्या अनिवृत्तौ निवर्तकान्तराभावात् कदाचिदपि नास्या वासनाया निवृत्तिः । 'वासनाकार्यं भेदज्ञानं छिन्नमूलम्, अथ चानुवर्तते' इति बालिशभाषितम् ।

---

अनिवृत्तं चेत्, भेददर्शनं बन्धकं स्यात् इत्यत आह अनिवृत्तमपीति । छिन्नमूलत्वेन छिन्नाविद्याख्यमूलत्वेन अकार्यकरम् । यथा दग्धः पटः पूर्वसंनिवेशेन प्रतीयमानोऽप्याच्छादनादिकार्यायोग्यः क्रमेण विनश्येत्, यथा कुलालभ्रमितं चक्रं भ्रामयितृव्यापारोपरमेऽपि पूर्ववेगवशात् कञ्चित् कालं स्वयमेव भ्रमत् क्रमेणोपरमते, तद्वदिति भावः । अत्र इतिकरणस्य न वाच्यमित्यनेनान्वयः । प्रथमं ज्ञानानुत्पत्तिं दूषयति सत्यामिति । न्यायानुगृहीतवाक्यमेव सामग्री । प्रतिबन्धिका भेदवासनाऽस्तीति चेत्, तत्राह सत्यामपीति । निवर्त्या वासना निवर्तकोत्पत्तिप्रतिबन्धिका न भवतीत्यर्थः । आदिशब्दादिन्द्रियं गृह्यते । यथा चिरतरतिमिरवासितगुहायां प्रदीपो न नोत्पद्यते; तस्मिन् दीपिते सद्य एव तमो विनश्येत्—यथा क्वचिद्देशे सर्प इति वाक्याच्चिरं भ्रमितोपि पुरुषः, न तत्र सर्प इत्याप्तोपदेशाज्जानाति—यथा च वनं न दग्धमिति श्रुत्वा चिरं भ्रान्तस्य पश्चात्तत्र गत्वाऽङ्गारादिलिङ्गदर्शनेन दग्धमिति ज्ञानं जायते—यथा चिरं सर्पत्वेन वासिते वस्तुनि समीपगमनानन्तरमिन्द्रियव्यापारेण रज्जुज्ञानं सहसैव जायते—तद्वदित्यभिप्रायेणाप्तोपदेशलिङ्गादिभिर्बाधकज्ञानोत्पत्तिदर्शनादित्युक्तम् । वेदान्तवाक्यं हि दार्ष्टान्तिकम्; अत आप्तोपदेशस्य प्रथमोपादानम् । अथ द्वितीयनिर्वाहमनूद्य निरस्यति सत्यपीति । मात्रया अल्पमित्यर्थः । भवता ब्रह्मव्यतिरिक्तकृत्स्नमिथ्यात्ववादिनेति भावः । भवतेति सूचितमर्थं विवृणोति भेदेति । वासनाया अपि मिथ्यात्वाविशेषात् तस्या अपि ज्ञानेनैव निवृत्तत्वमवश्याश्रयणीयमिति भावः । किं ज्ञानोत्पत्तावपि वासना न निवृत्तेत्युच्यते, उत तन्निवृत्तावपि निर्हेतुकं भेददर्शनं भवति इति शङ्काद्वयं हृदि निधाय प्रथमां परिहरति ज्ञानोत्पत्तावपीति । ब्रह्मव्यतिरिक्तस्य कृत्स्नस्य मिथ्यात्वात् वासनापि ज्ञानैकनिवर्त्या । नो चेत्, निवर्तकान्तरमपि ज्ञानत्वाविशेषान्न निवर्तयेदित्यर्थः । स्वयमेव वासना नश्यतीति चेत्—तदयुक्तम् । स्वयमेवेति बाधकज्ञाननैरपेक्ष्यस्य विवक्षितत्वे, वासनाया नश्यन्त्या अपि सत्यत्वप्रसङ्गात् । स्वयमेव नश्यतीति स्वेनैव स्वविनाशकरणं विवक्षितं चेत्—व्याघातः । [1]फल-उपान्त्यकारणनाशादिनाश्यत्वेऽपि सत्यत्वप्रसङ्गोऽवर्जनीय एव; कर्म-शब्दादिषु तथैव वैशेषिकैर्वर्णितत्वात्; तेषां च पारमार्थ्यदर्शनात् । किंच स्वप्नार्थोत्पत्त्यादिवत् वासनाया मिथ्यात्वेन तदुत्पत्तिस्थिती अपि मिथ्याभूते इति तद्विनाशोऽपि मिथ्याभूतः । अतो विनाशविषयभ्रमः पुनस्तिष्ठतीति निश्शेषभ्रमनिवृत्तिर्न स्यात् । अथ द्वितीयां शङ्कां परिहरति वासनेति । छिन्नमूलम्—छिन्नवासनाख्यमूलम्[2] । बालिशभाषितमिति । अकारणकार्योत्पत्तिप्रसङ्ग इत्यर्थः । यद्यकारणं भेददर्शनं भवति, तर्हि मुक्तिरपि ज्ञाननिरपेक्षा स्याद्;

---

1 फलोपान्त्येत्येतद्विवृणोति कर्मशब्देति । क्रियाजन्योत्तरदेशसंयोगात् क्रियानाश इति फलस्य नाशकता । वीचीतरङ्गन्यायानुवृत्तशब्दसंततौ उत्तरोत्तरस्य पूर्वपूर्वनाशकत्वेऽपि अन्त्यस्योपान्त्यशब्दनाश्यत्वमिति वैशेषिकमतम् । 2 वासनाख्येति अविद्योपलक्षणम्; पूर्वानुसारात् ।

द्विचन्द्रज्ञानादौ तु बाधकसन्निधावपि मिथ्याज्ञानहेतोः परमार्थतिमिरादिदोषस्य ज्ञानबाध्यत्वाभावेनाविनष्टत्वात् मिथ्याज्ञानानिवृत्तिरविरुद्धा । प्रबलप्रमाणबाधितत्वेन भयादि कार्यं तु निवर्तते । अपिच भेदवासनानिरसनद्वारेण ज्ञानोत्पत्तिमभ्युपगच्छतां कदाचिदपि ज्ञानोत्पत्तिर्न सेत्स्यति ; भेदवासनाया अनादिकालोपचितत्वेनापरिमितत्वात्, तद्विरोधिभावनायाश्चाल्पत्वादनया तन्निरासानुपपत्तेः ।

अतो वाक्यार्थज्ञानादन्यदेव ध्यानोपासनादिशब्दवाच्यं ज्ञानं वेदान्तवाक्यैर्विधित्सितम् । तथा

---

श्रवणादिभिर्विना वाक्यार्थज्ञानं स्यात्; अविद्यया विना जगद्भ्रमश्च स्यात्; अधिष्ठानेन विना अविद्याऽपि कार्यकरी स्यादिति भावः । ननु तर्हि कथं सत्यपि बाधकज्ञाने चन्द्रद्वित्वानिवृत्तिरित्यत्राह **द्विचन्द्रेति** । तुशब्दो विवक्षितार्थवैषम्यपरः । **बाधकसन्निधावपि**—तज्ज्ञानसंनिधावपि । तिमिरादिदोषस्य पारमार्थ्यात् ज्ञानाबाध्यत्वादिति भावः । तत्पारमार्थ्यञ्च व्यावहारिकतयापि परेणाभ्युपगन्तव्यम् ; अन्यथा आप्तोपदेशानन्तरं रज्जुसर्पव्यवहारोच्छेदवत् दोषो मिथ्येति वचनानन्तरं दोषनिवृत्त्या चन्द्रद्वित्वादिव्यवहारोच्छेदप्रसङ्गात् । अतो दोषस्य विद्यमानत्वाद् भेदभ्रमस्य समूलत्वम् । अनेन बाधकसंनिधौ बाध्यसद्भावः अकारणकार्योत्पत्तिश्चेति दूषणद्वयं दृष्टान्ते परिहृतं भवति । परमते तु दूषणद्वयं तिष्ठत्येव । तर्ह्याप्तोपदेशादिवैयर्थ्यमित्यत्राह **प्रबलेति** । [1]रज्जुसर्पभ्रान्तिमत्पुरुषापेक्षया भयादिकार्यनिवृत्तिः फलत्वेनोक्ता । **आदि**शब्दात् पलायनादि गृह्यते । द्विचन्द्रज्ञाने च स्वस्यादुष्टकरणत्वधीनिवृत्तिरौषधादिप्रवृत्तिश्च फलम् । ऐन्द्रजालिकभ्रमादिषु भ्रमहेतोः प्राबल्यात् वस्तुतो भ्रमत्वेऽप्यसत्यविषयत्वनिश्चयप्रतिबन्धः स्यादिति तद्व्यावृत्त्यर्थः **प्रबलप्रमाण**शब्दः । **निवर्तत इति** । प्रतिभासे विद्यमानेऽपि विषयसत्यत्वाभावनिश्चयद्वारा भयादिनिवृत्तिहेतुराप्तोपदेशादिरित्यर्थः । यद्वा यथावदर्थस्वरूपापरोक्ष्यप्रवृत्तिद्वारा भयादिनिवृत्तिहेतुरित्यर्थः । तुशब्दः शङ्काव्यावर्तकः । ज्ञानानुत्पत्तिपक्षस्य बह्वभिमतत्वात् सिंहावलोकितकेन तं दूषयति **अपिचेति** । नायं सर्पो रज्जुरितिवत् दृष्टद्वारा हि भेदनिरासः ; अदृष्टमुखेन चेत्, भेदसत्यत्वप्रसङ्गात् । अतो भूयस्या भेदवासनाया अल्पीयस्याऽद्वैतवासनया निरासोऽनुपपन्न इत्यर्थः ॥ नन्वदृष्टद्वारा निवर्त्यत्वे(ऽपि) निवर्त्यस्य सत्यत्वं नानिष्टम्, । ध्याननिवर्त्यसर्पवत् व्यवहारदशायां वासनायाः सत्यत्वाभ्युपगमात् ; उत्पन्ने तु ज्ञाने तदुत्पत्तिस्थितिविनाशाश्च बाधिताः स्युरिति ॥ नैवम् ; ध्याननिवर्त्यसर्पस्यानित्यत्वमेव, न कदाचिदपि बाध्यत्वं सिद्धमिति तद्वदेवादृष्टनिवर्त्यवासनाया अपि वास्तवसत्यत्वप्रसङ्गात् ॥ नन्वैक्यभावनारूपं निदिध्यासनं प्रतिबन्धनिवर्तकं चेत्, उक्तदोषः स्यात् । तत्तु न प्रतिबन्धनिवृत्त्यै ; किन्तु वाक्यार्थज्ञानोदयसहकारीति ॥ नैवम् ; स्मृतिरूपस्य निदिध्यासनस्यानुभवसापेक्षतया तस्य वाक्यार्थज्ञानजननसहकारित्वायोगात् ॥ ननु यद्यपि परोक्षानुभवस्य ध्यानमनुपकारकम्—तथापि निदिध्यासनसहकृतं वाक्यमपरोक्षधीहेतुः स्यात् ॥ नैवम् ; निदिध्यासनसहकृतत्वेऽपि शब्दत्वादेवापरोक्षधीहेतुत्वायोगात् ज्योतिष्टोमवाक्यवत् ।

एवं शास्त्रप्रत्यक्षविरोधात् तदविरोधनिर्वाहानुपपत्त्या च वाक्यार्थज्ञानमात्रस्य निवर्तकत्वासंभवात् पारिशेष्याद् वाक्यार्थज्ञानादन्यदेव मुक्त्युपायज्ञानं विधित्सितमित्याह **अत इति** । न केवलं पारिशेष्यम् ; तदनुग्राह्याः श्रुतयश्च सन्तीत्याह **तथा चेति** । विज्ञायेत्यादिवाक्यद्वये ज्ञानसामान्यशब्दः । वाक्यद्वयोपादानं च

---

1 द्विचन्द्रभ्रान्तिमति भयं दुर्वचमित्यत्राह रज्जुसर्पेति ।

च श्रुतयः, "विज्ञाय प्रज्ञां कुर्वीत", "ओमित्येवात्मानं ध्यायथ", "निचाय्य तं मृत्युमुखात्प्रमुच्यते", "आत्मानमेव लोकमुपासीत", "आत्मा वा अरे द्रष्टव्यः श्रोतव्यो मन्तव्यो निदिध्यासितव्यः", "सोऽन्वेष्टव्यः स विजिज्ञासितव्यः" इत्येवमाद्याः । अत्र निदिध्यासितव्यः इत्यादिनैकार्थ्यात्, "अनुविद्य विजानाति", विज्ञाय प्रज्ञां कुर्वीत" इत्येवमादिभिः वाक्यार्थज्ञानस्य ध्यानोपकारकत्वात् 'अनुविद्य' 'विज्ञाय' इत्यनूद्य, 'प्रज्ञां कुर्वीत' 'विजानाति' इति ध्यानं विधीयते । श्रोतव्य इति चानुवादः—स्वाध्यायस्यार्थपरत्वेनाधीतवेदः पुरुषः प्रयोजनवदर्थावबोधित्वदर्शनात् तन्निर्णयाय स्वयमेव श्रवणे प्रवर्तते इति श्रवणस्य प्राप्तत्वात् । श्रवणप्रतिष्ठार्थत्वान्मननस्य 'मन्तव्य' इति चानुवादः, तस्मात् ध्यानमेव विधीयते ।

---

उपसर्गभेदेऽपि, विधिप्रत्ययान्तत्वतद्राहित्ययोश्चार्थभेदो नास्तीति ज्ञापनार्थम् । ध्यायथेति विशेषशब्दः । निचाय्येति ध्यानस्य प्रत्यक्षसमानाकारता दर्शिता । चायृ [1]दर्शने इति हि धातुः । उपासीतेत्यनेन ज्ञा(ध्या)नस्योपासनशब्दवाच्यत्वं सिद्धम् । अन्वेष्टव्य इति मननशिरस्कश्रवणोक्तिः । निदिध्यासितव्यः विजिज्ञासितव्य इत्युपादानेन सन(न्न)न्तत्वेऽपीष्यमाणज्ञानपरं वाक्यमिति दर्शितम् । सन्नन्तपदद्वयस्योपादानं सामान्यविशेषशब्दत्वात् । इत्येवमाद्या इति । इतिशब्द उपात्तश्रुतिवाक्यस्वरूपमात्रपरः ; एवंशब्दः सन्नन्तत्वविधिप्रत्ययान्तत्वतद्राहित्योपसर्गभेदादिप्रकारपरः । .... .... .... ....

उदाहृतवाक्येषु ज्ञानसामान्यवाचिपदानां विशेषाकाङ्क्षायां वाक्यार्थज्ञानस्वरूपो विशेषः पर्यवसानभूमिः स्यादिति शङ्कानिवृत्त्यर्थमाह अत्रेति । अत्र—उपात्तेषु । इत्येवमादिभिर्ध्यानं विधीयत इत्यन्वयः । निदिध्यासितव्य इत्यादिनेति आदिशब्देन सन्नर्हितज्ञानविशेषवाचिवाक्यान्तरं विवक्षितम् । ऐकार्थ्यं च सर्वशाखाप्रत्ययन्यायात् । स ह्यनुक्ताकांक्षितस्वीकारफलः । तत्र "छागो वा मन्त्रवर्णात्" इति न्यायात् सामान्यवाचिशब्दानां विशेषपर्यवसानम् । अनुविद्य विजानाति, विज्ञाय प्रज्ञां कुर्वीत इत्यत्र केन पदेन वाक्यार्थज्ञानमनूद्यते, केन वा ध्यानं विधीयते इत्यपेक्षायामाह अनुविद्य विज्ञायेत्यनूद्येति । अनुवादः किमर्थः इत्यत्राह ध्यानोपकारकत्वादिति । प्रज्ञां कुर्वीत विजानातीति वाक्यद्वयोपादानस्य पूर्वोक्तमेव फलम् । एवं स्मृतिष्वपि सामान्यशब्दः सति विशेषोपस्थापके तत्पर्यवसितो दृष्टः । "निषिद्धभक्षणं जैह्म्यमुत्कर्षे च वचोऽनृतम् । रजस्वलामुखास्वादः सुरापानसमानि तु ॥" इत्यत्र निषिद्धसामान्यस्य भक्षणसामान्यं पातित्यहेतुरवगतम् । "छत्राकं विड्वराहं च लशुनं ग्रामकुक्कुटम् । पलाण्डुं गृञ्जनं चैव मत्या जग्ध्वा पतेद् द्विजः" इत्यत्र निषिद्धविशेषस्य भक्षणविशेषः पातित्यहेतुर्दृष्टः । अत्र पूर्वग्रन्थः चरमग्रन्थार्थे पर्यवस्यति । भवतु सामान्यशब्दो विशेषपर्यवसायी ; अत्र तु ज्ञानसामान्यवाचिशब्दः श्रोतव्य इति श्रवणरूपज्ञानविशेषे पर्यवस्यत्वित्यत्राह श्रोतव्य इति चेति । चः शङ्कानिवृत्तौ, समुच्चये वा । विज्ञाय अनुविद्येतिवत् अयं चानुवाद इत्यर्थः । तत् सङ्क्षेपेणोपपादयति स्वाध्यायस्येति । आपातप्रतीत्या स्वतःप्राप्तिः श्रवणस्य स्यात् ; मननस्य तादृशहेत्वभावात् तत्र पर्यवसानमस्त्वित्यत्राह श्रवणप्रतिष्ठार्थत्वादिति । चः पूर्ववत् । तस्मात् ध्यानमेवेति । न तु वाक्यार्थज्ञानमित्यर्थः ॥ ननु श्रोतव्य इति पुस्तकनिरीक्षणादिव्यावृत्त्यर्थो विधिः किं न स्यात् ॥ नैवम्—वेदान्तवाक्यानामपि पुस्तकनिरीक्षणादिव्युदासस्याध्ययनविधिसिद्धत्वात् ;

---

2 चायृ इति । चायृ पूजानिशामनयोरिति धातुपाठः । तदेकदेशानुवादोऽयम् ।

वक्ष्यति च, "आवृत्तिरसकृदुपदेशात्" इति । तदिदमपवर्गोपायतया विधित्सितं वेदनमुपासनमित्यवगम्यते; विद्युपास्योर्व्यतिकरेणोपक्रमोपसंहारदर्शनात्—"मनो ब्रह्मेत्युपासीत" इत्यत्र "भाति च तपति च कीर्त्या यशसा ब्रह्मवर्चसेन य एवं वेद", "न स वेद अकृत्स्नो ह्येषः....आत्मेत्येवोपासीत", "यस्तद्वेद यत्स वेद स

---

ब्रह्ममीमांसायाः विलेखनपठनादेरप्रतिषिद्धत्वात्; गुरूपसत्तौ श्रवणशब्दस्य मुख्यार्थत्वाभावात्; तस्याश्चात्राविहितत्वेपि, "गुरुमेवाभिगच्छेत्" इति वाक्यान्तरसिद्धत्वाच्च ॥ [1]ननु न्यायोपेतवाक्यमात्रानवगम्यकेवलोपदेशगम्यार्थविशेषश्रवणं श्रोतव्य इति विधेयमिति चेन्न—मननपूर्वभावितयाऽस्य श्रवणस्य न्यायानुगृहीतवाक्यजन्यज्ञानरूपत्वावगमात्; शब्दस्वारस्याच्च । न च मन्तव्य इत्यालम्बनसंशीलनरूपमननविधिरिति वाच्यम्—श्रवणशब्दस्य न्यायोपेतवाक्यजन्यज्ञान इव मन्तव्यशब्दस्य तत्प्रतिष्ठापने प्रसिद्धिप्राचुर्यात् तस्य चापवादाभावात् । उभयोरप्राप्तार्थद्वयविधायित्वे वाक्यभेदप्रसङ्गात् । सति गत्यन्तरे विशिष्टविधानाश्रयणस्यान्याय्यत्वाच्च । विधिर्हि पदावगतेष्वर्थेष्वेकत्रोपक्षीणशक्तिर्लाघवाय तदितरेषु स्वतोऽनुवादमपेक्षमाणः प्रापकाभावाद्विशिष्टे तात्पर्यं भजते । अत्र त्वनुवादसंभवान्न विशिष्टविषयत्वकल्पनं युक्तम् । तस्मादनुवादः । अनेन श्रवणशब्दस्य [2]यादवमिश्रोक्तनिर्वाहो निरस्तः । अत्र द्रष्टव्यशब्द उपायोपेयदशासाधारणत्वात् उपरि नियामकस्फुटार्थवाक्यान्तरेण सह व्याख्यास्यते ॥ ननु न साधारणत्वम्; द्रष्टव्य इति तव्यता दर्शनस्य विधेयत्वप्रतीतेः; फलस्य चाविधेयत्वात् ॥ उच्यते । निदिध्यासनवत् दर्शनस्य च विधाने वाक्यभेदप्रसङ्गात् निश्चितानुवादश्रवणमननसाहचर्याच्च विधित्वनिश्चयप्रतिबन्धात् । उपायस्य दर्शनरूपत्वविषयप्रमाणादर्शने विशिष्टविधित्वाश्रयणायोगात्, "मनसैतान् कामान् पश्यन् रमते, य एते ब्रह्मलोके", "परात्परं पुरुषमीक्षते" इत्यादिभिः फलदशायां दर्शनस्य प्रामाणिकत्वाच्च श्रोतव्य इतिवत् तव्यदर्थमनादृत्य फलसमर्पकत्वं द्रष्टव्यशब्दस्य शङ्कितुं युक्तमित्यत उपरिष्टाद्व्याख्येयत्वम् । [3]अथोपासनस्य विधित्सितत्वद्रढिम्ने सूत्रकारोक्तिं दर्शयति **वक्ष्यति चेति** । तादृशसूत्रासंभवव्युदासाय सूत्रमुपादत्ते **आवृत्तिरिति** । उपासनशब्दाश्रवणात् सूत्रस्य तत्परत्वमस्फुटमिति तस्यार्थमाह **तदिदमिति** । आवृत्तिद्वयत्रयव्यावृत्त्यर्थमसकृदिति सौत्रं पदम् । कस्याऽऽवृत्तिरित्यपेक्षायामाह **तदिदं वेदनमिति** । तदिदं तृतीयाध्यायावसाने, "एवं मुक्तिफलानियमस्तदवस्थावधृतेस्तदवस्थावधृतेः" इति प्रस्तुतं मोक्षफलं ज्ञानमित्यर्थः । यद्वा प्रज्ञां कुर्वीतेत्यादिसामान्यशब्दोक्तं वेदनमसकृदावृत्ति(त्त)रूपमुपासनमित्यर्थः । **इत्यवगम्यत** इत्यन्तेन आवृत्तिरसकृदिति सूत्रांशो व्याख्यातः; उपदेशादिति पदं व्याचष्टे **विद्युपास्योरिति** । स्थलत्रयमुदाहरति **मन इति** ।

---

1 श्रोतव्य इति उपदेशैकगम्यार्थविशेषश्रवणं मन्तव्य इति आलम्बनसंशीलनञ्च क्रमभावि विधीयताम् । एवञ्च विधिश्रुतिसार्थक्यमित्याशंकापरिहारौ नन्वित्यादिना । पुनर्वक्ष्यति चेदं 57 पुटे ।

2 यादवमिश्रेति । 'आहुश्च केचित् सांख्ययोगोपदेशश्रवणादिकमिति' इति तत्त्वटीका । शब्दादिभेदाधिकरणटीका च द्रष्टव्या । 3 'अथोपासनस्येति । उपायभूतं ज्ञानं वेदनं न वाक्यार्थज्ञानम् किंतु ध्यानोपासनादिशब्दवाच्यमिति प्राक् भाषितं हि । तत्र ध्यानशब्दवाच्यत्वमुपपादितम् । अथ तस्य वेदनस्योपासनशब्दवाच्यत्वोपपादनायारभत इत्यप्यत्राशयो भाव्यः ।

मयैतदुक्तः" इत्यत्र—"अनु म एतां भगवो देवतां शाधि यां देवतामुपास्से" इति ॥ ध्यानं च

मनो ब्रह्मेति वाक्यम्, 'रात्रीरुपेयात्' [1]इतिवत्; 'प्रतितिष्ठन्ति ह वा एते, य एता रात्रीरुपयन्ति' इत्यत्र य एता रात्रीरिति सत्रानुवादवत् य एवं वेदेति पूर्वविहितोपासनस्य फलार्थमनुवादः। वितरणविक्रमादिहेतुभेदात् कीर्तियशसोर्भेदः। मनो ब्रह्मेत्युपासीतेत्यादिप्रकरणे, यस्तद्वेदेत्यादिप्रकरणे च वेदनोपासनवाचिशब्दयोर्विप्रकर्षात् प्रकरणैकत्वज्ञापनाय अत्रेत्युक्तम्। अनु म इति। यां देवतामुपास्से, एतां देवतामनुशाधि। अनुपूर्वः शासिर्विविच्य ज्ञापनार्थः। विविच्य ज्ञापयेत्यर्थः। "व्यवहिताश्च" इति सूत्रेण छन्दस्युपसर्गाणां व्यवहितप्रयोगः। न स वेदेत्यत्र[2] संनिकर्षादत्रशब्दाप्रयोगः। न स वेदेत्यस्य "स योऽत एकैक मुपास्ते" इत्येतद्वाक्यपूर्वकत्वादुपक्रमोपसंहारयोरुपासनशब्दः; मध्ये वेदनशब्दः। इदं च पूर्वस्मिन् वाक्ये उपक्रमोपसंहारदर्शनादित्येतेनाभिप्रेतम्। यस्तद्वेद—तस्य ब्रह्मणो वेदिता यो रैक्वः, यत् स वेद—तस्य रैक्वस्य वेद्यं यद्ब्रह्म, स वेदिता रैक्वः एतत् वेद्यं च उभयं तव मयोक्त[3]मित्यर्थः। सामान्यविशेषन्यायेन प्रकरणान्तरोक्तज्ञानसामान्यवाचिशब्दानां प्रकरणान्तरोक्तविशेषपर्यवसायित्वं पूर्वमेव स्वयमेव हि भाष्यकारेण दर्शितम्। सूत्रव्याख्याने त्वेकैकप्रकरणे व्यतिकरेणोपक्रमोपसंहारदर्शनमुपदेशादिति पदस्यार्थत्वेनोक्तम्। उभयत्रोभयं हेतुत्वेन वाच्यम्। तथाप्यविस्तरार्थमेकैकमुक्तम्। अत एव हि चतुर्थाध्याये (4-1.1.) उभयमपि हेतुत्वेन वक्ष्यते।

तदिदमित्यादिकं सूत्रव्याख्यानम्। अन्यथा तदिदमपवर्गोपायतया विविदिषितं वेदनमिति नोच्येत; किन्तु ध्यानमुपासनमित्येवोच्येत। इतरथा शृङ्खलितोक्तिप्रकरणानौचित्यात्। पश्चादपि ध्यानं च तैलधारावदविच्छिन्नस्मृतिसन्तानरूपमिति पूर्वप्रकृतध्यानशब्देन निर्देशात्। पूर्वग्रन्थे ध्यानस्योपासनरूपत्वं विवक्षितं चेत् -पश्चादुपासनमविच्छिन्नस्मृतिसन्तानरूपमित्युपासनशब्देनोच्येत।

एवं प्रकृतसूत्रार्थेऽवधृते पूर्वप्रकृतस्य ध्यानस्य ध्रुवानुस्मृतित्वमुपपादयति ध्यानं चेति। वेदनस्यासकृदावृत्तिं वदतः सूत्रकारस्यायं भावः—यथा ज्ञानसामान्यवाचिनां शब्दानां विशेषपर्यवसायित्वेनासकृदावृत्तिरूपज्ञानपरत्वं सिद्धम्, एवं विशेषान्तरोपस्थापकेषु सत्सु तद्विशेषपर्यवसायित्वं न्याय्यमिति। तस्मात् सूत्रकारेण कण्ठोक्तां ज्ञानस्यासकृदावृत्तिरूपतामुपपाद्य तेनाभिप्रेतं श्रुत्यन्तरोपस्थापितं विशेषान्तरमाह ध्यानं चेति। अनेन ग्रन्थेनासकृदावृत्तेर्व्यवहितत्वशङ्कानिरासार्थं विजातीयप्रत्ययान्तरा-

---

1 उपेयादिति। रात्रीरुपेयुरित्यर्थकज्योतिर्गौरायुरितिवाक्यवदित्यर्थः। एकत्वमविवक्षितम्, बहुयजमानकत्वात् सत्त्रस्य।

2 संनिकर्षादिति। न स वेद; अकृत्स्नो ह्येष इत्यस्य, आत्मेत्येवोपासीत इत्यस्य च मध्ये तद्वाक्यान्तर्गत पदत्रयमेवानुपात्तमस्तीति संनिकर्षः; अन्यत्र तु वाक्यव्यवधानान्न तथेति। उपरिटीकायां तालकोशपाठः उपनिषद्भाष्यादृतः, 'सयोतएकैकमुपास्ते' इत्येव। अन्यत्र मुद्रितस्तु, 'योऽन्यांदेवतामुपास्ते' इति पाठः भावप्रकाशिकादृष्टोऽपि तथाश्रुत्यभावादुपनिषद्भाष्यानुसाराच्चाशुद्धः।

3 उक्तमिति। उक्त इति श्रुतौ पुंलिङ्गश्रवणेपि एतदित्यानुगुण्याय उक्तमिति विपरिणमनीयम्। अत्र उक्तिक्रियाविशेषणम् एतदिति। स इत्येकमेवोक्तिकर्म। पूर्ववाक्ये तदिति एदं यदित्यस्य प्रतिसंबन्धि। तथा च यत् स रैक्वो वेद, तत् यो वेद......स मयैवमुक्त इत्यर्थ इति तत्त्वटीकादिविस्तर उपनिषद्भाष्यपरिष्कारे।

तैलधारावदविच्छिन्नस्मृतिसन्तानरूपम् । "ध्रुवा स्मृतिः । स्मृतिलम्भे सर्वग्रन्थीनां विप्रमोक्षः" इति ध्रुवायाः स्मृतेरपवर्गोपायत्वश्रवणात् । सा च स्मृतिर्दर्शनसमानाकारा ; "भिद्यते हृदयग्रन्थिश्छिद्यन्ते सर्वसंशयाः । क्षीयन्ते चास्य कर्माणि तस्मिन् दृष्टे परावरे" इत्यनेनैकार्थ्यात् । एवं च सति, "आत्मा वा अरे द्रष्टव्यः" इत्यनेन निदिध्यासनस्य दर्शनसमानाकारता विधीयते ।

---

व्यवहितत्वमुक्तम् अत्र विच्छिन्नाविच्छिन्नस्मृतिसन्ततिसाधारणो ध्यानशब्दश्चेत्, ध्यानं चेत्यादिना विशेषान्तरे पर्यवसानमुक्तं भवति ; ध्यानशब्दस्याविच्छिन्नस्मृतिसन्तत्यसाधारणत्वे ध्यानशब्दो व्याख्यातो भवति । अविच्छिन्नस्मृतिसन्ततित्वे वचनमाह ध्रुवेति । स्मृतेर्ध्रुवत्वं नाम विजातीयप्रत्ययान्तराव्यवहितसन्ततित्वम् ; स्मृतिव्यक्तीनां क्षणिकत्वात् । अपवर्गोपायत्वश्रवणादिति । तत्रापवर्गोपायभूतवेदनस्यासकृदावृत्तिरुक्ता । अत्रापि तदुपायत्वप्रत्यभिज्ञानात् तस्यैवाविच्छिन्नसन्ततिरूपत्वं विवक्षितमिति भावः । तस्याः दर्शनरूपत्वमुच्यते सा चेति । न केवलं विषयैक्यतः साम्यम्, अपित्वापरोक्ष्येणापीति आकारशब्दस्य भावः । हृदयस्य मनसः. ग्रन्थयो रागादयः । यद्वा, मञ्चाः क्रोशन्तीतिवत् हृदयशब्दस्तत्स्थजीवपरः ; हृत्स्थानमयतीति व्युत्पत्तेर्वा । तस्य ग्रन्थिः—प्रकृतिसंबन्धः ; हृदयशब्दोपलक्षितं वा शरीरं ग्रन्थिः । संशयशब्दो विपर्ययस्यापि प्रदर्शनार्थः । देहात्माभिमानादिरूपाविद्येत्यर्थः । कर्माणि—पुण्यपापरूपाणि । अविद्यासञ्चितकर्मकृतप्रकृतिसम्बन्धनिवृत्तिर्दर्शनसमानाकारोपासनेनेत्यर्थः । एवं च सतीति । उपायदशायां(पन्न)ज्ञानस्य दर्शनरूपत्वे स्फुटार्थवाक्यान्तरसिद्धे सतीत्यर्थः । चशब्दो द्रष्टव्यशब्दस्य फलदशाभिप्रायत्वशङ्कानिवृत्त्यर्थः । दर्शनशब्दस्य ज्ञानसामान्यपरत्वसंभवेऽपि, "द्रष्टव्यः श्रोतव्यो मन्तव्यो निदिध्यासितव्यः", "आत्मनि खल्वरे दृष्टे श्रुते मते विज्ञाते इदं सर्वं विदितम्" इति श्रवणादीनां पृथगुक्तत्वाद्द्रष्टव्य इति पदं साक्षात्काररूपत्वपरम् । दृष्टशब्दश्च तत्तुल्यार्थः । स चोपायदशाभिप्रायः ; तस्मिन् दृष्टे हृदयग्रन्थिर्भिद्यते इत्युक्तत्वात् ; "येनाहं नामृता स्याम्", "अमृतत्वस्य तु नाशाऽस्ति वित्तेन", "एतावदेव खल्वरेऽमृतत्वम्" इति पूर्वापरवाक्येषु फलस्य निर्दिष्टत्वात् ; प्रकरणान्तरोक्तस्य साक्षात्कारत्वस्येहापि वक्तुमपेक्षितत्वात् अपेक्षितविधेः अनपेक्षितविधानदौर्बल्याच्च ॥

ननु ध्रुवानुस्मृतेरेव दर्शनरूपत्वविधिरयुक्तः ; ध्रुवानुस्मृतिदर्शनयोर्भिन्नप्रकरणाम्नातयोर्दहरशाण्डिल्यादिवेदनानामिव परस्परनिरपेक्षोपायत्वं हि प्रतीयते ॥ नैवम् । द्रष्टव्यो निदिध्यासितव्यः इत्येकवाक्यविहितत्वात् । न च तत्रापि विद्याद्वयविधानं शक्यम् ; रूपभेदाभावात् । तत एव वाक्यैकत्वे संभवति वाक्यभेदाश्रयणायोगात् । विद्यान्तराणामिव तयोर्विकल्पप्रसङ्गाच्च ॥ तयोर्निरपेक्षोपायत्ववादिनो विकल्प इष्ट इति चेन्न ; तस्याष्टदोषदुष्टस्य सति गत्यन्तरेऽभ्युपगन्तुमयुक्तत्वात् । दृश्यते हि व्रीहियवशास्त्रयोस्तस्याष्टदोषदुष्टत्वम्—व्रीह्यनुष्ठाने यवशास्त्रस्य प्रामाण्यत्यागः अविद्यमानाप्रामाण्यकल्पनम्, यवानुष्ठाने तस्य त्यक्तप्रामाण्यस्वीकारः स्वीकृताप्रामाण्यत्यागश्चेति यवशास्त्रे चत्वारो दोषाः ; यवानुष्ठानवेलायामेव प्रथमप्रयोगे स्वीकृतव्रीहिशास्त्रप्रामाण्यत्यागः, तदप्रामाण्यकल्पनं च ; तृतीयप्रयोगे व्रीहिषूपादीयमानेषु द्वितीयप्रयोगे स्वीकृतव्रीहिशास्त्राप्रामाण्यत्यागः त्यक्तप्रामाण्यस्वीकारश्चेति व्रीहिशास्त्रे चत्वारो दोषाः । इहापि

यथासम्भवं[1] दोषप्राप्तिः । यद्वा प्रतिपत्तिबाधोऽनुष्ठानबाधोऽपूर्वबाधः फलबाधश्चेति एकैकशिरसि दोष-चतुष्टयादष्टदोषदुष्टत्वम् । अतः, गत्यन्तरे सति विकल्पायोगाच्च न ध्रुवानुस्मृतिदर्शनयोः पृथगुपायत्वम् ।

नापि समुच्चयः; चशब्दाश्रवणात्; दर्शपूर्णमासयोरिव द्वन्द्वनिर्देशाभावाच्च । परमात्मनोऽतीन्द्रियत्वात् तत्साक्षात्कारस्य चक्षुषा शब्दग्रहणस्येव प्रक्रान्तयोगं प्रति अशक्यविधानत्वाच्च शब्दविषययोः स्मरणचाक्षुषज्ञानयोरिव समुच्चयोऽनुपपन्नः ॥ ननु परमात्मनो योगपरिशुद्धमनोग्राह्यत्वान्न तद्दर्शनस्य चक्षुषा शब्दज्ञानतुल्यतेति दर्शनोपायभूतस्य व्यापारस्य विधेयत्वोपपत्तेः समुच्चयः संभवतीति ॥ सत्यम्; कस्तद्दर्शनोपायः? ॥ "ततस्तु तं पश्यते निष्कलं ध्यायमानः" इति श्रुतेर्ध्यानमेवेति चेत्—तर्हि द्रष्टव्यनिदिध्यासितव्यपदयोः पुनरुक्तिः स्यात्; उभयोरपि दर्शनोपायध्यानविधिपरत्वाविशेषात् ॥ द्रष्टव्य इति दर्शनोपाये विहिते, क उपायः इत्यपेक्षायां निदिध्यासनं विधीयते; द्रष्टव्यपदाभावे निदिध्यासनस्य तदुपायत्वं न ज्ञायत इति तज्ज्ञापनार्थत्वान्न पुनरुक्तिरिति चेन्न—द्रष्टव्यपदश्रवणेऽपि दर्शनस्य ध्यानसाध्यत्वाप्रतीतेः । न हि दर्शनकामेनेति श्रूयते; तथा सति हि स्वर्गयागयोरिव साध्यसाधनभावावगमः स्यात् । न च ध्यानं प्रति श्रवणमननयोरिव दर्शनं प्रति ध्यानस्य [2]दृष्टकिञ्चित्कारः । अतो न मानान्तरेण तयोः साध्यसाधनभावावगम इति वैयर्थ्यम् । किंच ध्यानसाध्यं दर्शनं चेत्, ध्यानदर्शनयोः समुच्चयश्च न संभवति । दर्शनं प्रति समुच्चये, दर्शनस्य दर्शनं साधनमित्यात्माश्रयप्रसङ्गात् । न च मोक्षं प्रति समुच्चयसंभवः; ध्यानस्य स्वसाध्यदर्शनव्यवहितस्य मोक्षं प्रति दर्शनेन सहाव्यवहितकिंचित्कारायोगात् । न हि यागनिष्पत्त्यर्थानां प्रोक्षणावघातादीनामपूर्वनिष्पत्तौ यागेन सह समुच्चयः । यदि साक्षात्कारं प्रति ध्यानेन सह अव्यवहितकिंचित्कारोपपत्तये दर्शनसमानाकारं ज्ञानान्तरं विधेयमित्युच्यते—तदयुक्तम्; स्वर्गं प्रति ज्योतिष्टोमस्येव निदिध्यासनस्य साध्यं प्रति निरपेक्षोपायताप्रतीतिस्वारस्यभङ्गप्रसङ्गात् । न हि "ज्योतिष्टोमेन स्वर्गकामो यजेत" इति वाक्यप्रतिपन्नज्योतिष्टोमस्य स्वर्गसाधनत्वं कर्मान्तरसापेक्षमवगम्यते । न चात्र चशब्दो द्वन्द्वसमासो वा । अतः—'दर्शनसमानाकारतारूपविशेषणस्य किं विशेष्यमित्याकाङ्क्षायाम्, विशेष्यान्तरं च न दृश्यते; निदिध्यासनं च संनिहितम; अतस्तदेव दर्शनसमानाकारतया विधित्सितम्' इति युक्तमभ्युपगन्तुम् । ततश्च वाक्यभेदोऽपि न स्यात् । निदिध्यासनस्य निरपेक्षोपायताप्रतीतिस्वारस्यं च न बाध्येत[3] ॥

ननु विशिष्टविध्याश्रयणं चेत्–उपदेशैकगम्यार्थश्रवण–शुभाश्रयमनन–दर्शनरूपताविशिष्टनिदिध्यासन-विधिः किं न स्यात् ॥ नैवम्; चतुर्ष्वंशेषु तात्पर्यकल्पनादपि द्वयोस्तत्कल्पनस्य लघुत्वात्; लघुपक्षसंभवे गुरु-

---

1 ननु व्रीहियवयोरिवोपायद्वयस्यैकपुरुषकर्तृकाव्यवस्थितानुष्ठानविषयत्वाभावात् कथमिहाष्टदोषत्वमित्यत्राह यथासंभवमिति । एकोपायस्वीकारिणा अन्योपायशास्त्रस्यानुष्ठापकत्वरूपप्रामाण्यस्य त्यागात् अननुष्ठापकत्वरूपाप्रामाण्यस्वीकारात् प्रतिशास्त्रं पुरुषभेदेन दोषद्वयमवर्जनीयम् । तथा च शास्त्रद्वये दोषचतुष्टयमित्येवं भाव्यम् । प्रतिपत्तिबाध इति । अपूर्वमनुग्रहः । एकोपायग्राहिणा उपायान्तरशास्त्रस्य स्वविषयकत्वबाधात्, तदुपायाननुष्ठानात्, तन्मूलकानुग्रहस्य, तन्मूलकतया फललाभस्य च बाधात् दोषचतुष्टमिति । 2 दृष्टकिञ्चित्कार इति । योगिनामतीतानागतादिविज्ञानं देवतानुग्रहरूपादृष्टद्वारकम्, वाल्मीकेरिव चतुर्मुखानुग्रहादिति भावः । 3 न बाध्येतेति । एवं ध्यानातिरिक्तस्य दर्शनस्योपायत्वप्रतिषेधात् तथावादिमाध्वमतमपि प्रत्युक्तम् ।

भवति च स्मृतेर्भावनाप्रकर्षात् दर्शनरूपता ।

पक्षाश्रयणायोगाच्च । न चास्मिन् वाक्ये विधानाभावादौपदेशिकार्थाधिगम-आलम्बनसंशीलनयोरसिद्धिः शङ्कनीया ; "तस्माद् ब्राह्मणः पाण्डित्यं निर्विद्य बाल्येन तिष्ठासेत् । बाल्यं च पाण्डित्यञ्च निर्विद्याथ मुनिः" इत्यनन्यथा-सिद्धवाक्यान्तरासिद्धत्वात् । तद्धि निरूपयिष्यते, "सहकार्यन्तरविधिः" इति सूत्रेण । तस्मात् दर्शनसमानाकारत्व-गुणविशिष्टनिदिध्यासनविधिः ॥

नन्वेवमपि सर्वोपासनानां न दर्शनसमानाकारनिदिध्यासनरूपतासिद्धिः ; 'दृष्टव्यो निदिध्यासितव्यः' इति वाक्यस्य मैत्रेयीब्राह्मणे सत्त्वात् । अतस्तत्र प्रतिपाद्यस्यैवोपासनविशेषस्य तादृग्रूपता प्रतिपाद्या स्यात् ॥ नवमैं ; "आत्मनि खल्वरे दृष्टे श्रुते मते विज्ञाते इदं सर्वं विदितम्" इति तत्रस्थेनैव वाक्येन जगत्कारणविषय-सर्वोपासनानां दर्शनसमानाकारनिदिध्यासनरूपतावगमात् । न हीदं वाक्यं विद्याविशेषविधायकम् ; कारणज्ञानेन सर्वज्ञाततप्रतिज्ञानपरत्वात् । कारणमेव[1] हि सर्वविद्योपास्यम् ; "कश्च ध्येयः" इत्युपक्रम्य, "कारणं तु ध्येयः" इति कारणस्यैव ध्येयत्वविधानात् । कारणविषयं चोपासनमत्र दर्शनसमानाकारनिदिध्यासनरूपमवगम्यते । अस्मिन् वाक्ये विज्ञातशब्दो हि निदिध्यासनपरः ; "द्रष्टव्यः श्रोतव्यो मन्तव्यो निदिध्यासितव्यः", "दृष्टे श्रुते मते विज्ञाते" इति स्थानप्रमाणात् । अतोऽस्य वाक्यस्य सर्वविद्यासाधारणकारणमात्रविषयत्वात्, जगत्कारणो-(णविषयो)पासनं चेत्[2], दर्शनसमानाकारनिदिध्यासनरूपम(पमित्य)वगम्यते । किञ्च नानाविद्यानां विकल्पस्य वक्ष्यमाणत्वात्, [3]गुरुपक्षविषयशास्त्रवैयर्थ्यप्रसङ्गेन गुरुलघुयत्नविकल्पायोगात् [4]वस्तुसामर्थ्यस्य प्रकरणाद् बलीयस्तया च ध्रुवानुस्मृतिरूपत्वं दर्शनरूपत्वं वक्ष्यमाणभक्तिरूपत्वञ्च सर्वविद्यासाधारणाकारा भवितुमर्हन्ति ॥

नन्विन्द्रियजन्मनोऽनुभवस्य ह्यपरोक्षरूपत्वम् । तत् कथं स्मृतेः संभवतीत्यत्राह **भवति चेति** । **भावना** वासना । **दर्शनरूपता**[5] दर्शनसमानाकारता । 'वृक्षे वृक्षे च पश्यामि' इत्यादिष्वपि दर्शनसमानाकारत्वं स्मृतेश्च दृष्टमिति भावः । तच्च विशदतरावभासरूपत्वम् । न चैतदनुभवासाधारणम् ; स्मृतेरपि तत्सद्भा(संभ)वस्य प्रामाणिकत्वात् ॥ ननु दर्शनसमानाकारत्वविधानमयुक्तम् ; दर्शनवाचिशब्देन तत्समानाकारोपस्थापनस्यामुख्य-त्वात् । "न विधौ परः शब्दार्थः" इति हि न्यायविद इति चेन्न—तैरेव, "दर्शपूर्णमासाभ्यां स्वर्गकामो यजेत" इत्यत्र दर्शपूर्णमासशब्दयोर्लक्षणया (2-2-3), श्येनादिवाक्येषु श्येनादिशब्दानां गौण्या वृत्त्या (1-4-5) च कर्मनामधेयत्वाभ्युपगमात् ; "अर्धमन्तर्वेदि मिनुयादर्धं बहिर्वेदि" इत्यत्रापि (3-7-6) मध्यदेशलक्षणाया अङ्गीकृतत्वाच्च ॥ विशदतरत्वस्य [च[ फलरूपत्वादपुरुषतन्त्रस्य कथं विधानमिति चेन्न ; आज्यावेक्षणस्येव विधानोपपत्तेः ॥ तत्राऽऽज्यसाक्षात्कारहेतुभूतव्यापारविषयो विधिरिति चेत्-इहापि विशदतरत्वावहस्मृतिसंतति-विषयमनोव्यापारविधिरित्युपपन्नम् ॥

---

1 कारणमेव हीति । कारणत्वमुपास्याकारो भवतु, मा वा । विद्यानुष्ठानात् प्राक् तन्मुखेन ज्ञानमावश्यकमिति । 2 उपासनं चेदिति । उपासनं सर्वमिति यावत् । 3 ननु लघुत्वेऽपि अप्राप्तत्वात् ते द्वे अपि विधेये इत्यत्राह गुरुपक्षेति । 4 वस्तुसामर्थ्यस्येति । लिङ्गप्रमाणस्येत्यर्थः । 5 दर्शनरूपतेति । समानाकारतेत्याकारशब्दप्रयोगे समानविषयकत्वमित्यप्यर्थः स्यात् । वैशद्यरूपधर्मविवक्षावैशद्याय रूपपद-प्रयोगः । एतदाशयेनाह तच्चेति ।

वाक्यकारेणैतत् सर्वं प्रपञ्चितम्—:"वेदनमुपासनं स्यात् तद्विषये श्रवणात्" इति, सर्वासूपनिषत्सु मोक्षसाधनतया विहितं वेदनमुपासनमित्युक्तम्। "सकृत्प्रत्ययं कुर्याच्छब्दार्थस्य कृतत्वात् प्रयाजादिवत्" इति पूर्वपक्षं कृत्वा, "सिद्धं तूपासनशब्दात्" इति वेदनमसकृदावृत्तं मोक्षसाधनमिति निर्णीतम्। "उपासनं स्यात् ध्रुवानुस्मृतिर्दर्शनान्निर्वचनाच्च" इति तस्यैव वेदनस्योपासनरूपस्यासकृदावृत्तस्य ध्रुवानुस्मृतित्वमुपवर्णितम्॥

सेयं स्मृतिर्दर्शनरूपा प्रतिपादिता। दर्शनरूपता च प्रत्यक्षतापत्तिः। एवं प्रत्यक्षतापन्नामपवर्गसाधनभूतां

अथ सूत्रकाराभिप्रायविदां वचनं दर्शयति वाक्यकारेणेति। एतत्सर्वमिति। सूत्रकारेण कण्ठोक्तमभिप्रेतं चेत्यर्थः। प्रपञ्चितमिति। पूर्वपक्षसिद्धान्तरूपेणोक्तमित्यर्थः। प्रपञ्चनं च वेदनमुपासनं स्यादित्यादिना वाक्यचतुष्टयेन। वाक्यमेकैकं व्याचष्टे सर्वासूपनिषत्स्विति। [1]न केवलं छान्दोग्य इत्यर्थः। मोक्षसाधनतया विहितं वेदनमिति घटादिज्ञानव्यावृत्तिः। विहितमिति अनूदितश्रवणादिव्यावृत्तिः। अस्यार्थस्य पूर्वपक्षसिद्धान्तरूपेण स्फुटीकरणार्थम्, सकृत्प्रत्ययं कुर्यादिति वाक्यश्रवणेन वेदनमुपासनं स्यादिति वाक्यस्य पूर्वपक्षपरत्वशङ्काव्यावृत्त्यर्थं च सकृदित्यादिकं व्याचष्टे सकृदिति। सकृदित्यादिवाक्यमेव पूर्वपक्षपरम्; न तु वेदनमुपासनं स्यादिति वाक्यम्; अनन्तरमेवोपासनरूपत्वस्य सिद्धान्तितत्वादिति भावः। तथा सिद्धान्तितत्वं दर्शयति सिद्धं त्विति। सिद्धं तु सिद्धान्तस्त्वित्यर्थः। यद्वा वेदनमुपासनं सिद्धमित्यर्थः। उपासनशब्दादित्येतद्व्याचष्टे वेदनमसकृदावृत्तमिति। अस्याविच्छिन्नस्मृतिसन्ततिरूपत्वं सूत्रकाराभिप्रेतं वाक्यकारेण कण्ठोक्तञ्च दर्शयति उपासनं स्यादिति। दर्शनात् लोके दर्शनात्। निर्वचनात् श्रुतिवाक्यात्। तस्यैवेति। मोक्षसाधनतया विहितस्येत्यर्थः। उपासनरूपस्येति हेतुगर्भम्; उपासनरूपत्वात्—उपासनशब्दवाच्यत्वादसकृदावृत्तस्येत्यर्थः। असकृदावृत्तं ज्ञानं ह्युपासनम्। एवमविच्छिन्नस्मृतिसन्ततिरूपत्वमुपपादितम्॥

सूत्रकारकण्ठोक्तमसकृदावृत्तिरूपत्वं तदभिप्रेतं ध्रुवानुस्मृतित्वं च वदतो वाक्यकारस्यायं भावः—एतत्तुल्यन्यायतया विशेषान्तरोपस्थापकवाक्ये सति वेदनादिशब्दाः तत्पर्यन्ताः स्युरिति। तस्मात् पूर्वोक्तं[2] दर्शनसमानाकारत्वमपि वाक्यकाराभिप्रेतमित्यभिप्रयन्नाह सेयमिति। सेयम्—असकृदावृत्तिरूपा ध्रुवानुस्मृतिरूपा चेत्यर्थः। दर्शनशब्दस्य, अर्थदर्शी तत्त्वदर्शीत्यादिप्रयोगात् परोक्षापरोक्षसाधारण्यमाशङ्क्याह दर्शनरूपता च प्रत्यक्षतापत्तिरिति। प्रत्यक्षसमानाकारतापत्तिरित्यर्थः। "आत्मनि खल्वरे दृष्टे श्रुते मते विज्ञाते इदं सर्वं विदितम्", "आत्मा वा अरे द्रष्टव्यः श्रोतव्यो मन्तव्यो निदिध्यासितव्यः" इति श्रवणादिपरोक्षज्ञानपर्वसु उक्तेष्वपि पृथङ्निर्देशादिति भावः। सूत्रकारवाक्यकारयोः कतिपयविशेषं वदतोः सति विशेषान्तरोपस्थापके तत्पर्यवसायित्वस्याभिप्रेतत्वाच्छ्रुत्यन्तरसिद्धं[3] विशेषान्तरमस्तीत्याह एवमिति। अनेन श्रवणादीनां मुक्त्युपायत्वनिषेधात् नोपासनस्य मोक्षोपायत्वमिति शङ्काव्युदासश्च भवति। एवम् उक्तेन प्रकारेण सामान्यविशेषन्यायेन

---

1 न केवलं छान्दोग्ये इति। वाक्यनाम्नो ग्रन्थस्य ब्रह्मनन्दिकृतस्य छान्दोग्यव्याख्यानरूपत्वात् तत्रैव वेदनमुपासनं विवक्षितमिति न मन्तव्यम्; गुरुलघुविकल्पायोगात्; सूत्रकारेणाऽऽवृत्त्याद्युक्तेश्चेत्याशयः। 2 पूर्वोक्तमिति। अत्र दर्पणदर्शितं बृहदारण्यक (3-4-15) वाक्यमपि द्रष्टव्यम्। 3 विशेषान्तरमिति। पूर्वोक्तसर्वाकारमात्रेणोपास्योपासकभेदस्यास्फुटत्वात् तन्निर्णयरूपविशेषोऽन्यत्र भवतीति ध्येयम्।

ध्रुवानुस्मृतिं(स्मृतिं)विशिनष्टि—"नायमात्मा प्रवचनेन लभ्यो न मेधया न बहुना श्रुतेन । यमेवैष वृणुते तेन लभ्यस्तस्यैष आत्मा विवृणुते तनूं स्वाम्" इति। अनेन केवलश्रवणमनननिदिध्यासनानामात्मप्राप्त्यनुपायत्वमुक्त्वा, 'यमेवैष आत्मा वृणुते तेनैव लभ्यः' इत्युक्तम् । प्रियतम एव हि वरणीयो भवति । यस्यायं निरतिशयप्रियः स एवास्य प्रियतमो भवति। यथाऽयं प्रियतम आत्मानं प्राप्नोति, तथा स्वयमेव भगवान् प्रयतत इति भगवतैवोक्तम्, "तेषां सततयुक्तानां भजतां प्रीतिपूर्वकम्। ददामि बुद्धियोगं तं येन मामुपयान्ति ते" इति, "प्रियो हि ज्ञानिनोऽत्यर्थमहं स च मम प्रियः" इति च। अतः साक्षात्काररूपा स्मृतिः स्मर्यमाणात्यर्थप्रियत्वेन स्वयमप्यत्यर्थप्रिया यस्य, स एव परेणात्मना वरणीयो भवतीति तेनैव लभ्यते पर आत्मेत्युक्तं भवति । एवंरूपा

---

प्रत्यक्षतापन्नामित्यर्थः । **अपवर्गसाधनभूतामिति** प्रतीकोपासनव्यवच्छेदः । **नायमात्मेति । प्रवचनशब्देन** मननं लक्षयति, मननफलत्वात् प्रवचनस्य ; मननस्याचार्यप्रवचनफलत्वाद्वा ; प्रोच्यतेऽनेनेति करणव्युत्पत्त्या वा प्रवचनं मननम् । **मेधा** निदिध्यासनम्; परिशेषात् । अस्मिन् वाक्ये श्रवणादीनामनुपायत्वं प्रतीतम् ; ध्रुवानुस्मृतिविशेषणत्वेन न किंचित्प्रतिपन्नम् ; अतस्तद्व्याचष्टे **अनेनेति । केवलश्रवणमनननिदिध्यासनानां** वक्ष्यमाणविशेष[ण]विरहितानामित्यर्थः । यथा "न पृथिव्यामग्निश्चेतव्यः" इत्यत्र हिरण्योपधानरहितपृथिव्यां चयनं निषिध्यते ; न तु पृथ्वीमात्रे—तद्वदिति भावः । विवक्षितं विशेषं वाक्यतात्पर्यनिरूपणेन दर्शयिष्यन् वाक्यस्यार्थान्वयं दर्शयति **यमेवैष आत्मा वृणुते तेनैव लभ्य इत्युक्तमिति ।** वरणीयेन लभ्योऽस्तु ; ततः कथं ध्रुवानुस्मृतेर्विशेषितत्वमिति शङ्कायां तद्दर्शयितुं लोकसिद्धप्रतीतिमाह **प्रियतम एव हीति** । प्रीतिविषयमात्रस्य न वरणीयत्वम् ; किन्तु स्वयमुपस्थितस्य स्वीकार एव । अतस्तद्व्यावृत्त्यर्थं प्रियतम इत्युक्तम् । ततः किमित्यत्राह **यस्येति** । यस्योपासकस्यायं परमात्मा निरतिशयप्रीतिविषयः, स एवास्य परमात्मनः निरतिशयप्रीतिविषयो भवति । चेतनत्वे सति भगवता वरणीयत्वं भगवति निरतिशयप्रीतिमत एव । यद्वा स्वतःप्रियत्वं वरणीयत्वं च स्वस्मिन् प्रीतिमत एव । पुण्यक्षेत्रादिषु भगवतः प्रीतिः स्वस्मिन् प्रीतिमत्पुरुषवरणार्थां । पत्रपुष्पफलादिषु[तु] तत्संबन्धनिबन्धना । स एवेत्येवकारेण केवलश्रवणादिमद्व्यावृत्तिः । भगवति प्रीतिमत एव भगवत्प्रीतिविषयत्वमिति कथमिदमवगम्यते इत्यपेक्षायाम् , अत्र प्रमाणतया स्मृतिवचनमर्थोपन्यासपूर्वकं दर्शयन् वरणप्रकारमपि विवृणोति **यथेति** । अयम् भगवति निरतिशयप्रीतिमान् । **प्रियतमः** निरतिशयभगवत्प्रीतिविषयो भवन्नित्यर्थः । ददामि बुद्धियोगं तमित्यस्यार्थविवक्षया **स्वयमेव भगवान् प्रयतत इत्युक्तम् ।** अनेन [1]वरणप्रकारो दर्शितः । **भगवतैवोक्तमि**त्येवकारेण भगवदाप्ततिशयः[2] सूचितः । **तेषामिति । सततयुक्तानां** सततयोगं काङ्क्षमाणानाम् । "आशंसायां भूतवच्च" इति कर्तरि क्तः । प्रीतिपूर्वकं ददामीत्यन्वयः । अनेन परस्परविषयप्रीतिरुपास्योपासकयोर्दर्शिता । सततयुक्तशब्दार्थस्फुटीकरणायाह **प्रियो हीति । अत्यर्थम्**[3]

---

1 वरणप्रकार इति । "अत्र वरणं मामयं प्राप्नुयादित्यमोघः संकल्पः" इति तत्त्वटीका । एतदमोघत्वविवरणाय गीता—8. 14. भाष्योक्तं सर्वमनुसंधेयम् । 2. आप्त्यतिशयः—आप्ततमत्वम् ।

3. अत्यर्थम्—अर्थमतिक्रम्य इत्युक्तौ, वस्तुनि यावत् प्रियत्वं युक्तम्, तावतोऽधिकं प्रियत्वमित्यर्थः स्यात् । स न युक्तः—संभावितसर्वप्रकारप्रियत्वस्यापि अनवधिकानन्दे ब्रह्मणि अपर्याप्तत्वात् । अतोऽर्थशब्दप्रवृत्तिनिमित्ताभिधेयतातिक्रमपर्थव सानायाहअनिक्रान्ताभिधेयमिति ।

ध्रुवानुस्मृतिरेव भक्तिशब्देनाभिधीयते, उपासनपर्यायत्वाद्भक्तिशब्दस्य । अत एव श्रुतिस्मृतिभिरेवमभिधीयते, "तमेव विदित्वाऽति मृत्युमेति", "तमेवं विद्वानमृत इह भवति । नान्यः पन्था अयनाय विद्यते", "नाहं वेदैर्न

अतिक्रान्ताभिधेयम् ; प्रियत्वं वाचामगोचरमित्यर्थः । ध्रुवानुस्मृतिं विशिनष्टीति हि पूर्वमुक्तम् । अत्र यो भगवति प्रीतिमान् भवति, तस्मिन्नुपासके भगवतः प्रीतिमत्त्वमुक्तम् ; तत् कथं ध्रुवानुस्मृतेर्विशेषितत्व-मित्यत आह—अत इति । अतः—उक्तार्थस्य लोकस्मृतिभ्यां सिद्धत्वादित्यर्थः । यद्वा, ध्रुवानुस्मृतिवचनात् वरणीयत्ववचनात् वरणीयस्य च भगवति निरतिशयप्रीतिमत्त्ववचनाच्चेत्यर्थः । साक्षात्काररूपा स्मृतिरित्यनेन पूर्वोक्ताकारविशिष्टाया एव विशेषान्तरमिति दर्शितम् । स्मर्यमाणात्यर्थप्रियत्वेन स्वयमप्यत्यर्थप्रियेति । अर्थेनैव विशेषो हि निराकारतया धियाम् ' इति भावः । स्वयमप्यत्यर्थप्रिया । अनुभूयमानोऽनुभव इतिवदयं निर्देश औपचारिकः ; अत्यर्थप्रीतिरूपेत्यर्थः । यद्वा, अत्यर्थप्रिया—अत्यर्थानुकूलरूपा । स्मर्यमाणस्य भगवद्विषयस्य निरवधिकनिरुपाधिकानुकूलत्वेन तद्विषयानुस्मृतिरपि हि निरतिशयानुकूला भवति । यद्वा ध्रुवानुस्मृतिः स्वयमत्यन्तानुकूलत्वादयुक्तावस्थायामपि प्रीतिरूपज्ञानेन प्रतिसन्धीयत इति प्रिया । अत एव हि, "या प्रीतिरविवेकानाम्" इत्यादिना सा प्रार्थ्यते ॥ प्रीतिरूपध्रुवानुस्मृतेरपवर्गोपायत्वमुक्तम् ; अन्यत्र भक्तेरुपायत्वं दृश्यते ; कथमनयोरैकार्थ्यमित्यत्राह एवंरूपेति । यद्वा "शेमुषी भक्तिरूपा" इति भक्तिरूप-ज्ञानस्योपायत्वं प्रागुक्तम्, कथमिदानीं प्रीतिरूपध्रुवानुस्मृतेरुपायत्वं प्रतिपाद्यते इत्यत्राह एवंरूपेति । एवंरूपा—साक्षात्कारत्वप्रीतिरूपत्वपर्यन्ता ध्रुवानुस्मृतिरेव भक्तिशब्दवाच्येत्यर्थः । कुत इत्यत्राह उपासनपर्यायत्वादिति । उपासनादिशब्दानां भक्तिशब्दस्य चैकार्थवृत्तित्वं विवक्षितम् ; न तु घटकुम्भशब्दयोरिव पर्यायत्वम् । एकार्थवृत्तित्वञ्च "सेवा भक्तिरुपास्तिः" इति नैघण्टुकोक्तेरवगम्यते, "स्नेहपूर्वमनुध्यानं भक्तिरित्यभिधीयते । भज इत्येष धातुर्वै सेवायां परिकीर्तितः । तस्मात् सेवा बुधैः प्रोक्ता भक्तिशब्देन भूयसी" इत्यादि चानुसन्धेयम् ।

[1]यद्यपि साक्षात्काररूपत्वभक्तिरूपत्वादिपराणां वाक्यानां विद्याविशेषविषयप्रकरणपरिगृहीतत्वेऽपि सर्वोपा-सनसाधारणत्वं लघुगुरुयत्नविकल्पानुपपत्तेः प्राप्तम्——तथाऽपि प्रपदने तु लघुगुरुयत्नविकल्पानुपपत्तिरूपन्यायो वचनबलप्रतिक्षिप्तः । न हि वचनविरोधे न्यायः प्रभवति । वचनविरोधाभावादुपासनेषु तस्य प्रवृत्तिः ॥

[2]वेदान्तेषूपासनपराणां वाक्यानामैकार्थ्यसिद्ध्यर्थं भक्तिदशापन्नस्योपासनस्यैवापवर्गोपायवेदनत्वमुक्तम् ; स्मृतिवचनप्रदर्शनं च श्रुत्यर्थवैशद्याय कृतम् । इदानीं तु श्रुतिस्मृत्योरैकार्थ्येन मुक्त्युपायवेदनस्य भक्तिरूपोपासनत्वमुपपाद्यते अत एवेति । अत एव—अपवर्गोपायवेदनस्य भक्तिरूपोपासनत्वा-देवेत्यर्थः । तमेव विदित्वेति वाक्यं श्वेताश्वतरोपनिषदि श्रूयते । तत्र, "तस्मात् सर्वगतः शिवः" इति शिवशब्दग्रहणात् शिवस्य परमात्मत्वविषयत्वभ्रमः कस्यचिन्मन्दधियः स्यादिति तन्निवृत्त्यर्थम्, "वेदाहमेतं पुरुषं महान्तम्", "महान् प्रभुर्वै पुरुषः सत्त्वस्यैष प्रवर्तकः" इत्युपक्रमोपसंहारयोरवगतपरमपुरुषपरैव सोपनिषदिति पुरुषसूक्तैकार्थ्यं दर्शयितुं तमेवं विद्वानिति वाक्यमुपात्तम् । तमेवं विद्वानिति वाक्ये, नान्यः पन्था इति,

1 ननु सामान्यविशेषन्यायेन सेवाभक्त्युपास्तीनामेकत्वे प्रपदनं पृथक् लघु न सिद्ध्येदित्यत्राह यद्य पीत्यादि । 'सकृदेव हि शास्त्रार्थः कृतोऽयं तारयिष्यति' इत्यादि बलात् प्रपदनस्य सकृत्त्वाशक्तविषयत्वाद्यवगमात् न तत्र साक्षात्कारत्वादिकल्पनावकाश इति भावः । 2 अत एवेति भाष्यमवतारयति वेदान्तेष्विति ।

तपसा न दानेन न चेज्यया। शक्य एवंविधो द्रष्टुं दृष्टवानसि मां यथा ॥ भक्त्या त्वनन्यया शक्य अहमेवंविधोऽर्जुन । ज्ञातुं द्रष्टुं च तत्त्वेन प्रवेष्टुं च परन्तप॥", "पुरुषः स परः पार्थ भक्त्या लभ्यस्त्वनन्यया" इति ।

एवंरूपाया ध्रुवानुस्मृतेः साधनानि यज्ञादीनि कर्माणीति, "यज्ञादिश्रुतेरश्ववत्" इत्यभिधास्यते ।

---

परमपुरुषवेदनव्यतिरिक्तोपायनिषेधः कृतः; नाहं वेदैरित्यादिना तद्भक्तिव्यतिरिक्तोपायनिषेध उक्तः; उभयोरप्युपबृंहणोपबृंहणीयवचनयोः प्रमाणतमत्वेन सर्वाविगीतयोरैकार्थ्यं वेदनादिशब्दानां भक्तिपर्यन्तत्वे सिद्ध्यतीति भावः । उपायान्तरनिषेधकण्ठोक्त्या ज्ञानदर्शनप्राप्तीनां भक्तिसाध्यत्वकण्ठोक्त्या च, नाहं वेदैरिति वचनमुपात्तम् ॥ ननु "भक्त्या मामभिजानाति........ततो मां तत्त्वतो ज्ञात्वा विशते तदनन्तरम्" इति भक्तिजन्यज्ञानस्यैवाव्यवहितोपायत्वमवगम्यते, न तु भक्तेरिति शङ्का च, नाहं वेदैरित्यनेन परिहृता भवति; अत्र ज्ञानदर्शनयोरिव प्राप्तेरपि भक्तिसाध्यत्वावगमात् । भक्त्या प्रवेष्टुं च शक्य इति ह्यन्वयः । भक्त्या मामिति वचनेऽपि, ततो मां विशत इति तच्छब्दपरामृष्टाया भक्तेरेव प्राप्त्युपायत्वमवगम्यते। तत इति भक्तिपरामर्शाभावे तदनन्तरमित्यनेन पौनरुक्त्यप्रसङ्गात् । अतश्च भक्तिरेवाव्यवहितोपायः । "पुरुषः स परः पार्थ" इत्यत्र च भक्त्या लभ्य इति भक्तेः प्राप्तिसाधनत्वं स्वरसतोऽवगम्यते । अनेन पुरुषशब्दप्रत्यभिज्ञापितपुरुषसूक्तप्रतिपाद्यवस्त्वैक्यवत् तत्प्रतिपन्नो(पाद्यो)पायैक्यं न्याय्यमिति सूचितम् ।

अस्त्वेवं वेदनस्य भक्तिरूपोपासनत्वसिद्धिः; ततः प्रकृतस्य कर्मापेक्षितत्वस्य किमायातमित्यत्राह एवमिति । एवंरूपायाः आपरोक्ष्य-प्रीतिरूपत्वविशेषणविशिष्टायाः । वाक्यकारसूत्रकाराभ्याममभिप्रेताः कण्ठोक्ताश्च मोक्षोपायज्ञानावस्थाविशेषाः कर्मसाध्या इति भावः । ध्रुवानुस्मृतेः साधनानीति । यथा असिना जिघांसतीत्यत्रासेर्हननसाधनत्वम्, न त्विच्छासाधनत्वम्––तथा यज्ञेन विविदिषन्तीत्यत्रापि विद्यासाधनत्वमेवोक्तम्, न तु तदिच्छासाधनत्वम्; यज्ञादेर्वेदनेच्छासाधनत्वेन विनियोगायोगादिति भावः। तथा हि––सर्वेषां पुरुषाणामवान्तरसाध्योपाये प्रवृत्तिः परमसाध्येच्छया विना नोपपद्यते । यथा यागाद्युपायभूतद्रव्यार्जनादौ प्रवृत्तिः यागादिसाध्यापूर्वादिविषयेच्छया विना नोपपद्यते––तथा इच्छासिद्ध्यर्थमनुष्ठानमिच्छासंपाद्यवेदनेच्छया विना नोपपद्यते । अतो वेदनेच्छायां जातायां वेदनोपायभूतेच्छासिद्ध्यर्थानुष्ठानम् । तस्यां जातायां च तदर्थमनुष्ठानमनपेक्षितमिति तदनुष्ठानविधिवैयर्थ्यं स्यात् । किंच स्वसिद्धिसापेक्षा स्वसिद्धिरित्यात्माश्रयः; वेदनेच्छया इच्छासिद्ध्यर्थकर्मानुष्ठानम् इच्छासिद्ध्यर्थकर्मानुष्ठानात् वेदनेच्छासिद्धिरित्यन्योन्याश्रयणं वा । अतो विविदिषासाधनत्वं कर्मणां न युक्तम् ॥ नन्विच्छासिद्ध्यर्थकर्मानुष्ठानस्याऽऽत्माश्रयादिग्रस्तत्वे क्वचिदपीच्छा न संभवेत्; इच्छाहेतुभूतकर्मानुष्ठानायोगात् । न चेच्छाया विषयवैलक्षण्यज्ञानमात्राधीनत्वम्; वैलक्षण्यज्ञानेपि कस्यचिदिच्छानुत्पत्तिदर्शनात् । अतः कस्यचिदिच्छोत्पत्तेः कर्महेतुकत्वमाश्रयणीयम् । तच्च त्वयानुपपन्नम् ॥ नैवम्––भोगादृष्टोद्बोधितपूर्ववासनासचिवात् विषयवैलक्षण्यज्ञानादिच्छोत्पत्त्युपपत्तेः । न चाज्ञातसुकृतवशात् धर्मरुचिवत् यज्ञादिना वेदनेच्छासिद्धिरिति वाच्यम्; बह्वर्थव्ययायाससाध्यानां यज्ञादीनामज्ञातसुकृतरूपत्वासंभवात् । यज्ञेन विविदिषन्तीति वाक्यस्य ह्यर्थश्चिन्त्यते । अतो बुद्धिपूर्वकमेव यज्ञाद्यनुष्ठानम् । तत्र मोक्षोपायवेदनेच्छाया

यद्यपि विविदिषन्तीति यज्ञादयो विविदिषोत्पत्तौ विनियुज्यन्ते—तथापि तस्यैव वेदनस्य ध्यानरूपस्याहरहरनुष्ठीयमानस्याभ्यासाधेयातिशयस्य आप्रयाणादनुवर्तमानस्य ब्रह्मप्राप्तिसाधनत्वात्, तदुत्पत्तये सर्वाण्याश्रमकर्माणि यावज्जीवमनुष्ठेयानि। वक्ष्यति च, "आप्रयाणात्, तत्रापि हि दृष्टम्", "अग्निहोत्रादि तु तत्कार्यायैव तद्दर्शनात्" "सहकारित्वेन च" इत्यादिषु। वाक्यकारश्च ध्रुवानुस्मृतेर्विवेकादिभ्य एव निष्पत्तिमाह—"तल्लब्धिर्विवे-

---

अभावे बह्वर्थव्ययप्रयत्नसाध्यकर्मणां फलान्तराभिसंधिपूर्वकत्वनियमान्न विविदिषां साधयति;[1] फलान्तराभिसंधिविधुरं तु यज्ञादिकं वेदनेच्छया विना नोपपद्यते; प्रयोजनानुद्देशेन प्रेक्षावतः प्रवृत्त्ययोगात्; प्रकृष्टप्रयोजनतदुपायेच्छाविरहे क्षुद्रप्रयोजनपरित्यागायोगाच्च। अतोऽवान्तरसाध्येच्छासिद्ध्यर्थमनुष्ठानं परमसाध्यवेदनेच्छया विना नोपपद्यत इति स्वसिद्ध्यर्थकर्मानुष्ठानस्य स्वसिद्धिसापेक्षत्वादात्माश्रयादिदोषः स्यादेव॥ अभिधास्यत इति। तत्रोपपादयिष्याम इत्यर्थः।

विविदिषासाधनत्वे यज्ञादेरात्माश्रयादिदोषाभावमभ्युपगम्याह यद्यपीति। तस्यैव इच्छाविषयभूतस्य। ध्यानरूपस्येति वाक्यार्थज्ञानव्युदासः। ध्यानस्याप्येकदिनानुष्ठेयत्वव्युदासार्थमाह अहरहरिति। अहरहरनुष्ठानफलमाह अभ्यासेति। अहरहरनुष्ठानेऽपि मासर्तुसंवत्सराद्यवधित्वव्यावृत्त्यर्थमाह आप्रयाणादिति। आप्रयाणादनुवर्तमानत्वेऽपि एकद्वित्रिदिनान्तरितव्यावृत्त्यर्थमहरहरनुष्ठीयमानस्येत्युक्तम्। तत्रापि स्मृतिविच्छेदव्युदासार्थं ध्यानरूपस्येत्युक्तम्। तदुत्पत्तये-विविदिषोत्पत्तये। वेदनस्याव्यवहितप्रकृतत्वेऽप्यर्थवशात् तच्छब्दो विविदिषापरः। विविदिषासाधनत्वं ह्यभ्युपगम्योच्यते। आप्रयाणादहरहरुपासनानुवृत्तौ यावज्जीवं कर्मणोऽपेक्षितत्वे च किं प्रमाणमित्यत्राह वक्ष्यति चेति। चः शङ्कानिवृत्तौ। सूत्रसंदर्शनेन तद्विषयभूतश्रुतिवाक्यमपि दर्शितं भवतीत्यभिप्रायेणोपासनानुवृत्तिपरं सूत्रं दर्शितम् आप्रयाणादिति। "स खल्वेवं वर्तयन् यावदायुषम्" इति श्रुतिः। यावच्छब्दस्य साकल्यार्थत्वात् अहरहरनुष्ठानसिद्धिः। तावत्कर्मापेक्षामाह अग्निहोत्रेति। आश्रमधर्माणामाश्रमशेषत्वेऽपि विद्याङ्गत्वमप्यस्तीत्याह सहकारित्वेन चेति। इत्यादिषु सूत्रेषु इममर्थं वक्ष्यतीत्यर्थः। उक्तं कर्मणो विद्याङ्गत्वमुपासनस्य शमाद्यङ्गकत्वविरोधान्नोपपद्यत इत्याशङ्क्य विरोधं परिजिहीर्षुः, तद्विषयश्रुतिवाक्यप्रदर्शनेनाप्रमाणतां च निराचिकीर्षुराह वाक्येति। सूत्रकाराभिप्रायज्ञैरप्येवमुक्तमिति भावः। ध्रुवानुस्मृतिशब्देन तल्लब्धिरित्यत्र तच्छब्दो व्याख्यातः। विवेकादिभ्य एव। न तु केवलकर्मणा केवलशमादिना वेत्यर्थः। वाक्यकारग्रन्थ उपादीयते तल्लब्धिरिति। उपासनं स्याद् ध्रुवानुस्मृतिरिति हि प्रकृतम्। अतो ध्रुवानुस्मृतिलब्धिरित्यर्थः। विवेकविमोकाभ्यासक्रियाकल्याणानवसादानुद्धर्षेभ्य इति द्वन्द्वसमासः। स चेतरेतरयोगार्थे। एषामन्यतमेन तल्लब्धेर्दुष्करत्वात्। समुच्चये संभवति पाक्षिकबाधगर्भविकल्पो ह्ययुक्तः। तस्याष्टदोषदुष्टत्वात्। समुच्चयस्य चात्र संभवात्। एवं विवेकादिविधायिनां वाक्यानां समुच्चये तात्पर्यमिति दर्शयितुमितरेतरयोगद्वंद्वेन वाक्यकारनिर्देशः॥ ननु समुच्चयादर्थान्तरमितरेतरयोगः; तत् कथमितरेतरयोगद्वन्द्वेन समुच्चयलाभः॥ उच्यते;—अन्वाचयसहपठितात् समुच्चयाद् विकल्पप्रतिसंबन्धिसमुच्चयोऽर्थान्तरम्। एकस्मिन्नेव कार्ये मिथो निरपेक्षसाधकानामन्वयोऽन्वाचयसहपठितः[2]। विकल्पसमभिव्याहृतसमुच्चयस्त्वेकस्मिन्

---

1 साधयतीति। यज्ञादिकं वक्ष्यमाणं कर्तृ। अत्र 'साधयति यज्ञादिकम्; फलाभिसंधिविधुरं तु' इति पाठः शुद्धः स्यात्। 2 तत्र न द्वन्द्वः। यथा ईश्वरस्य गुरोश्च भजनमिति।

कविमोकाभ्यासक्रियाकल्याणानवसादानुद्धर्षेभ्यः संभवान्निर्वचनाच्च" इति। विवेकादीनां स्वरूपं चाह, "जात्याश्रयनिमित्तादुष्टादन्नात् कायशुद्धिर्विवेकः" इति। अत्र निर्वचनम्—"आहारशुद्धौ सत्त्वशुद्धिः सत्त्वशुद्धौ ध्रुवा स्मृतिः" इति। "विमोकः कामानभिष्वङ्गः" इति। शान्त उपासीतेति निर्वचनम्। "आरम्भणसंशीलनं पुनः पुनरभ्यासः" इति। निर्वचनञ्च स्मार्तमुदाहृतं भाष्यकारेण, "सदा तद्भावभावितः" इति। "पञ्चमहायज्ञाद्यनुष्ठानं शक्तितः क्रिया" इति। निर्वचनम्; "क्रियावानेष ब्रह्मविदां वरिष्ठः", "तमेतं वेदानुवचनेन ब्राह्मणा विविदिषन्ति यज्ञेन दानेन तपसाऽनाशकेन" इति च। "सत्यार्जवदयादानाहिंसानभिध्याः कल्याणानि" इति।

---

कार्ये मिथःसापेक्षाणामन्वयः। स एव इतरेतरयोग इत्यविरोध इति॥ निवृत्तिरूपशमादेः प्रवृत्तिरूपयज्ञादेश्च विरोधान्न समुच्चय इति चेन्न; भिन्नविषयत्वेन विरोधाभावात्। अविहिताप्रतिषिद्ध-निषिद्ध-काम्यविषया हि शमादयः। संभवात्-उपपन्नत्वात्। निर्वचनाच्च-श्रुतिवचनाच्च। प्रमाणोपपत्तिभ्यामित्यर्थः। विवेकादयः किंरूपाः, कथं वा शमादेः कर्मणश्चाविरोधः इत्यत्राह विवेकादीनां स्वरूपं चाहेति। न केवलं परिगणनामात्रम्, तत्स्वरूपं च वाक्यकार एवाहेत्यर्थः। प्रथमं विवेकस्वरूपविषयं वाक्यमुदाहरति जात्याश्रयेति। आहारविषयविवेचनं विवेकशब्देन विवक्षितं भवति। दुष्टाहारात् सात्त्विकाहाराणां विवेचनं विवेकः। जातिदुष्टाः कलञ्जगृञ्जनादयः। आश्रयः—द्रव्यस्वामी पुरुषः। अभिशस्तपतितचण्डालादिद्रव्यमाश्रयदुष्टम्। उच्छिष्टकेशाद्युपहतं निमित्तदुष्टम्। एतत्त्रिविधदोषरहिताहारविवेचनफलभूतकायशुद्धौ विवेकशब्द उपचरितः। यद्वा विविक्ताहारसेवया राजसतामसाहाराप्यायितदेहात् स्वदेहस्य विवेचनं विवेकः। अशुद्धेभ्यो विवेचनं हि शुद्धिः। इतिशब्दो भाष्यकारीयः। अत्र निर्वचनमिति च भाष्यग्रन्थः। निर्वचनम्—निष्कृष्टवचनम्; अप्रमाणेभ्यो निष्कृष्टं प्रमाणभूतं वचनमित्यर्थः। आहारशुद्धावित्यादि निर्वचनम्। विमोकः कामानभिष्वङ्गः। विषयमभुक्त्वा स्थातुं न शक्नोति येन, स विकारोऽभिष्वङ्गः। "कामात् क्रोधोऽभिजायते" इत्यादिवचनात् क्रोधाद्यभावश्चात्र फलितः। "शान्त उपासीत" इति निर्वचने शान्तशब्देन रागद्वेषाद्यभावो विवक्षितः। आरम्भणम्—आलम्बनं—शुभाश्रयः; तस्य संशीलनम्॥ कथमेतत् साधनम्? साध्यं हीदम्॥ न। "शुचौ देशे प्रतिष्ठाप्य" इत्याद्युक्तदेशकालविशेषाभ्यसनीययोगशब्दवाच्या ध्रुवानुस्मृतिर्हि साध्या। इदं तु योगकालकर्तव्यध्यानानुग्राहकं सदा संशीलनम्। "सदा तद्भावभावितः" इति हि वक्ष्यति। सदा भगवत्संशीलनाभावे योगकालेषु कालान्तरसंशीलितं विषयान्तरं बुद्धिस्थं स्यात्। अतो न साध्याविशिष्टत्वमारम्भणसंशीलनस्य। निर्वचनं च स्मार्तमुदाहृतं भाष्यकारेणेत्यनेन पूर्वोपात्तनिर्वचनान्यपि द्रमिडभाष्योक्तानीति ज्ञायते। "अथ मुनिः" इति श्रौतं निर्वचनम्। तस्य न्यायोपन्याससापेक्षत्वेन, "सहकार्यन्तरविधिः" इत्यधिकरणे व्याख्येयत्वात् स्मार्तनिर्वचनस्य स्पष्टार्थत्वाच्च स्मार्तनिर्वचनमुदाहृतम्। "तस्मात् सर्वेषु कालेषु मामनुस्मर" इत्येवमन्तं वचनजातमिहाभिप्रेतम्। पञ्चमहायज्ञेति। शक्तितः। न हि शास्त्रमशक्यं विदधाति। क्रियावानेष इति सन्निहितवाक्यम्। ब्रह्मविदां वरिष्ठः ब्रह्मविदां मध्ये वरिष्ठः। न हि ब्रह्मविविदिषूणामित्युक्तम्। क्रियाशब्दार्थविशदीकरणायाह तमेतमिति। सत्यं भूतहितम्। आर्जवं मनोवाक्कायानामैकरूप्यम्। दया स्वार्थनिरपेक्षपरदुःखासहिष्णुत्वम्। अहिंसा करणत्रयेणापि परपीडानिवृत्तिः।

निर्वचनम्, "सत्येन लभ्यः", "तेषामेवैष....विरजो ब्रह्मलोकः" इत्यादि। "देशकालवैगुण्याच्छोकवस्त्वाद्यनुस्मृतेश्च तज्जं दैन्यमभास्वरत्वं मनसोऽवसादः' इति। तद्विपर्ययोऽनवसादः। निर्वचनम्, "नायमात्मा बलहीनेन लभ्यः" इति। "तद्विपर्ययजा तुष्टिरुद्धर्षः" इति। तद्विपर्ययोऽनुद्धर्षः। अतिसन्तोषश्च विरोधीत्यर्थः। निर्वचनमपि, "शान्तो दान्तः" इति। एवं नियमयुक्तस्याऽऽश्रमविहितकर्मानुष्ठानेनैव विद्यानिष्पत्तिरित्युक्तं भवति।

---

दानं लोभराहित्यम्। अभिध्या परकीये स्वत्वबुद्धिः; यद्वा निष्फलचिन्ता; अथवा[1] परकृतापकारचिन्ता। तद्राहित्यमनभिध्या। सत्येनेति। इत्यादीत्यादिशब्देन आर्जवा[2]दिप्रतिपादकवाक्यजातं क्रोडीकृतम्। देशेत्यादि। अनवसादानुद्धर्षयोरवसादोद्धर्षविपर्ययरूपत्वात् अवसादोद्धर्षलक्षणमात्रमुक्तं वाक्यकारेण। तद्विपर्ययरूपो नञर्थोऽर्थात्सिध्यतीति वाक्यकाराभिप्रायः। शोकवस्तु—शोकनिमित्तं वस्तु अतीतपुत्रमरणादि। आदिशब्देन भयनिमित्तमागामि विवक्षितम्। अतीतविषयो हि शोकः; आगामिविषयं च भयम्। अभास्वरत्वमिति दैन्यशब्दविवरणम्। अभीष्टकार्यप्रवृत्त्यक्षमत्वरूपं दैन्यमित्युक्तं भवति। भास्वरत्वविरोधीति वा दैन्यविशेषणम्। चशब्दो भिन्नक्रमः; तज्जं च—दैन्यजदैन्यं चेत्यर्थः। बन्धुजनदैन्ये दृष्टेऽपि हि दैन्यं स्यात्। देशकालवैगुण्यशोकवस्त्वाद्यनुस्मृतिहेतुकं मनसो भास्वरत्वाभावरूपं भास्वरत्वविरोधि वा दैन्यं, दैन्यजदैन्यं च मनसोऽवसाद इत्यर्थः। यद्वा भिन्नवाक्यतया योजनीयम्—देशकालवैगुण्यशोकवस्त्वाद्यनुस्मृतिजनितं मनसोऽभास्वरत्वमवसादः। किमुक्तं भवतीत्यत्राह तज्जं दैन्यमिति। तच्चाभास्वरत्वं तज्जम्—उक्तहेतुजं दैन्यमिति व्याख्येयव्याख्यानरूपं वाक्यद्वयमिति। तद्विपर्यय इत्यादिर्भाष्यग्रन्थः। बलहीनेन—मनोबलहीनेन। तद्विपर्ययजा—देशकालसाद्गुण्य-प्रियवस्त्वाद्यनुस्मृतिजा। तुष्टिरुद्धर्ष इत्येतावदेव वाक्यम्। तद्विपर्ययोऽनुद्धर्ष इत्यर्थसिद्धम्। कथं "स्वाध्यायशौचसंतोषतपांसि नियतात्मवान्" इत्यपेक्षितस्य संतोषस्य त्याज्यत्वमित्यत्राह अतिसन्तोषश्च विरोधीत्यर्थ इति। न केवलमसन्तोष एव विरोधी; अतिसन्तोषश्च विरोधीति चार्थः। यथाऽन्यविषयेष्वेव[3] प्रवृत्तिः स्यात, तथा सन्तोषोऽतिसन्तोषः; स त्याज्य इत्युक्तं भवति। निर्वचनमपीत्यपिशब्दः सर्वनिर्वचनसमुच्चये। एवं पदार्था व्याख्याताः। तल्लब्धिरित्यादेर्वाक्यकारग्रन्थस्य वाक्यार्थमाह एवमिति। एवं नियमयुक्तस्य आश्रमविहितकर्मानुष्ठानेनेति पृथङ्निर्देशेन प्रवृत्तिनिवृत्तिरूपकोटिद्वयविभागो दर्शितः। एतेन पदद्वयेन केवलशमादि केवलकर्म च व्यावर्तितम्। शमादि कर्म च समुच्चित्याङ्गमित्यर्थः। यत् विविदिषासाधनमिति त्वयोक्तम्, तेनैव विद्यानिष्पत्तिरिति एवकाराभिप्रायः। इत्युक्तंभवति—इति वाक्यार्थो भवतीत्यर्थः। 'विद्यां चाविद्यां चे'ति श्रुतेः [4]शङ्करयादवप्रकाशाभिमतयोजनाव्युदासार्थं तां व्याचिख्यासुरुपादत्ते

---

1 अभिध्या। अभिचारादिशब्दे अभेरुपसर्गस्य प्रातिकूल्यमर्थो दृष्ट इति तत्त्वटीका। 2 आर्जवादीति पदे अतद्गुणसंविज्ञानो बहुव्रीहिः। सत्येनेति श्रुत्या सत्यस्य, विरजो ब्रह्मलोक इति श्रुत्या आर्जवस्य च निरुक्तत्वात् दयादिविषय एवोदाहार्यत्वात्। अत्र उपरितनमूलवाक्यार्थे च तत्त्वटीकादर्पणौ द्रष्टव्यौ। 3 एवेति। विषयान्तरेष्वपि प्रवर्तकतया विरोधीत्यर्थ इति तत्त्वटीका। ऐश्वर्यमदमत्तो हीति चोदाहृतम्। 4 शङ्कर....मतयोजनेति। साक्षादुक्तयोजनाया एकत्वेऽपि अन्या अपि योजना अन्यप्रदर्श्यां अप्यनुकूलत्वादभिमता एव भवेयुरिति भावेनेदम्। अतः मृत्युं प्राप्य वर्तमानस्त्वमिति शाङ्करव्याख्यानाभावेऽपि न दोषः। अत एव, "शङ्कराभिमतयोजना स्यात्" इति उपरि स्यात्पदप्रयोगः। तस्य स्यात्पदस्य तत्पूर्ववाक्यस्थे योजनापदेऽप्यपकर्षः।

**तथाच श्रुत्यन्तरम्, "विद्यां चाविद्यां च यस्तद्वेदोभयं सह । अविद्यया मृत्युं तीर्त्वा विद्ययाऽमृतमश्नुते" इति । अत्राविद्याशब्दाभिहितं वर्णाश्रमविहितं कर्म । अविद्यया कर्मणा मृत्युं—ज्ञानोत्पत्तिविरोधि प्राचीनं कर्म तीर्त्वा—अपोह्य विद्यया—ज्ञानेन अमृतं—ब्रह्म अश्नुते—प्राप्नोतीत्यर्थः ।**

---

**तथा चे**ति । अनेन कर्मणोऽपेक्षितत्वे सन्नूरहितश्रुत्यन्तरं च दर्शितं भवति । **तथा च श्रुत्यन्तरम्** । यदन्यथा भवद्भिर्व्याख्यातम्, तच्चास्मदुक्तार्थानुगुणमिति तथाशब्दमन्तरशब्दं च प्रयुञ्जानस्य भावः । सन्नूरहिततया यज्ञादिवाक्यवैलक्षण्यच्चान्तरशब्दाभिप्रेतम् । अस्मिन् वाक्ये न कर्मत्वाचिशब्दः श्रूयत इत्यत्राह **अत्रे**ति । **अत्र**—श्रुतिवाक्ये । न तु, "अनात्मन्यात्मबुद्धिर्या" इत्यादिषु । अविद्याशब्दाभिहितं वर्णाश्रमविहितं कर्मास्तु ; ततः किमुक्तं भवतीत्याशङ्कायां पदान्तराण्यपि विवृण्वन् वाक्यार्थमाह **अविद्यये**ति । **अविद्यया—कर्मणा विद्यया—ज्ञानेने**त्यत्र च कर्मज्ञानशब्दाभ्याम्, "कषायपक्तिः कर्माणि ज्ञानं तु परमा गतिः । कषाये कर्मभिः पक्के ततो ज्ञानं प्रवर्तते" इति स्मृतिः स्वोपजीव्यार्था स्मारिता भवति । कर्माणि **कषायपक्तिः**—कषायपक्तिनिमित्तानि । **कषाय**शब्दः पापपरः ; 'धर्मेण पापमपनुदति' इत्यनेनैकार्थ्यात् । कषायशब्दस्य रागादिपरत्वेपि तत्पक्तिहेतुत्वं पापनिर्हरणद्वारा । **ज्ञानं परमा गतिः**—परमगत्युपायः । उभयत्र कारणे कार्योपचारः । कर्मभिः कषाये पक्के ततो ज्ञान **प्रवर्तते** प्रसरतीत्यर्थः । अत्रोपायविरोधिनिरासकत्वं कर्मणः स्पष्टम् । न हि, विविदिषा प्रवर्तते, मोक्षः प्रवर्तत इति चोक्तम्, अपितु ज्ञानं प्रवर्तत इत्येवोक्तम् । अस्य वाक्यस्यार्थमुपजीव्याह **मृत्युं—ज्ञानोत्पत्तिविरोधी**ति । न तु ब्रह्मप्राप्तिविरोधि, न च विविदिषाविरोधीत्यर्थः । उपेयविरोधिकर्मणो ज्ञाननिवर्त्यत्वं श्रुतिस्मृतिशतसिद्धम् । यथा "तमेव विदित्वाऽति मृत्युमेति नान्यः पन्थाः", "एवमेवंविदि पापं कर्म न श्लिष्यते", "क्षीयन्ते चास्य कर्माणि तस्मिन् दृष्टे परावरे" 'निचाय्य तं मृत्युमुखात् प्रमुच्यते", "ज्ञात्वा देवं मुच्यते सर्वपापैः", "ज्ञानाग्निः सर्वकर्माणि भस्मसात्कुरुते तथा" इति । एवमुपेयविरोधिनो ज्ञाननिवर्त्यत्वश्रवणेन परिशेषात्, नान्यः पन्था इत्युपेयविरोधिनिरासे उपायान्तरनिषेधस्वारस्यात्, समसमुच्चयपक्षे कर्मणोप्युपायतया वेदनव्यतिरिक्तकृत्स्नगोचर-अन्यशब्दस्य सङ्कोचप्रसङ्गात्, यज्ञेन विविदिषन्तीति कर्मण उपायहेतुत्वस्य कण्ठोक्त्या, "कषाये कर्मभिः पक्के ततो ज्ञानं प्रवर्तते" इति स्मृत्यानुगुण्याच्च सामान्येन मृत्युशब्देन प्रतिपन्नमपि निरसनीयमुपायविरोधिकर्मरूपे विशेषे पर्यवस्यति । तथा विविदिषासाधनत्वस्य प्रागुक्तान्योन्याश्रयणादिनिरस्तत्वेन परिशेषात् विविदिषन्तीत्यत्र च प्रकृतिप्रत्ययार्थयोर्वेदनतदिच्छयोरविशेषेण यज्ञादीनां साधनत्वे प्रतीतेऽपि, "ततो ज्ञानं प्रवर्तते" इति स्मृत्याद्यानुगुण्यात्, इष्यमाणप्रकृत्यर्थप्राधान्यस्य नीतिविद्भिर्निर्णीतत्वाच्च प्रकृत्यर्थभूतवेदनसाधनत्वं सिद्धम् । तस्मादुपायविरोधिकर्मैवात्र मृत्युशब्दवाच्यमविद्यानिवर्त्यमित्यभिप्रायः । उपासनरूपं न्यासरूपं चोपेयविरोधिनिरासकं ज्ञानम् उत्तरपूर्वाघयो रुभयोरपि निरासकं स्यादिति तद्व्यावृत्त्यर्थं **प्राचीन**मित्युक्तम् । उपायविरोधिनिरासककर्म प्राचीनमेव पापं शमयति, न तूत्तराघमित्यर्थः । **तीर्त्वे**ति पदं व्याचष्टे **अपोह्ये**ति । न तु, 'एतं सेतुं तीर्त्वा' इतिवत् प्राप्तिवचन इत्यर्थः । अविद्यया तीर्त्वेति पदद्वयव्याख्यानेन शङ्करमतयोजनाव्यावृत्तिः । 'अज्ञानेन संसारं प्राप्य स्थित' इति हि तद्योजना । तन्मते अविद्यायाः ज्ञातव्यत्वं च हेयत्वेन । अविद्याशब्दो विविदिषाविरोधिनिवर्तककर्मवाचीति वा शङ्कराभिमतयोजना स्यात् । अविद्याशब्द उपेयविरोधिनिवर्तककर्मवाचीति

मृत्युतरणोपायतया प्रतीता अविद्या विद्येतरत् विहितं कर्मैव । यथोक्तम्--"इयाज सोऽपि सुबहून् यज्ञान् ज्ञानव्यपाश्रयः । ब्रह्मविद्यामधिष्ठाय तर्तुं मृत्युमविद्यया" इति । ज्ञानविरोधि च कर्म पुण्यपापरूपम् । ब्रह्मज्ञानोत्पत्तिविरोधित्वेनानिष्टफलतयोभयोरपि पापशब्दाभिधेयत्वम् ।

---

यादवप्रकाशाभिमतयोजना । ज्ञानोत्पत्तिविरोधीति मृत्युशब्दव्याख्यानेन तदुभयव्युदासः । अयमविद्याशब्दः संसारहेतुभूताज्ञानपरः किं न स्यात्, कथं च तस्य कर्मवाचित्वमित्यत्राह मृत्युतरणेति । तरतेरुत्तरणवचित्वं स्वरससिद्धम्; प्राप्तिवाचित्वे तु स्वारस्यभङ्ग इत्यभिप्रेतम् । अविद्याशब्दस्य कर्मवाचित्वं दर्शयति विद्येतरदिति । तदन्यार्थे नञिति भावः । विहितं कर्मैवेत्येवकारेणाज्ञानमविहितं कर्म च व्यावर्त्यते । अत्र "विद्यां चाविद्यां च" इति चशब्दावनुक्तसमुच्चयपरौ । विद्यानुबन्धि कर्मानुमन्धि च यदनुक्तम्, तत् समुच्चेतव्यम् । विद्यानुबन्धि शमदमादिकम् । कर्मानुबन्धि फलाभिसन्धि-कर्तृत्वाभिमानराहित्यादिकम् । तदुभयं चशब्दसमुच्चेतव्यम् । यद्वा, "धर्मे चार्थे च कामे च मोक्षे च भरतर्षभ" इत्यत्र चशब्दवदत्राप्युक्तार्थविरोधिसमुच्चयपरौ चशब्दौ स्याताम विद्याविरोधि कर्मविरोधि च चशब्दाभ्यां हानार्थं ज्ञातव्यतया समुच्चिते भवतः, विद्या ब्रह्मविद्या; तद्विरोधि—तदितरविषयज्ञानतद्विषयरागद्वेषादिकम् । अविद्या विद्याङ्गं कर्म; तद्विरोधि संसरणहेतुभूतं फलाभिसन्ध्यादिसहितं कर्म, पापञ्च । तदुभयं हानार्थं ज्ञातव्यमिति चशब्दयोरभिप्रायः । यद्वा प्रतिपदद्योतकौ चशब्दौ स्याताम् । यथा धर्मे चार्थे च कामे चेति प्रतिपदं यत् अभिधेयम्, तस्य समुच्चयद्योतकत्वं प्रतिपदद्योतकत्वम्; तदत्रापि स्यात् । अस्मिन् वाक्ये अविद्यातरणशब्दयोरुक्तार्थपरत्वस्थापनायोपबृंहणवचनं च दर्शयति यथोक्तमिति । ज्ञानव्यपाश्रयः—आगमोत्थज्ञानवान् । ब्रह्मविद्यामधिष्ठाय-उपासनात्मकज्ञानं साध्यत्वेनावलम्ब्येत्यर्थः । ज्ञानविद्याशब्दयोरर्थभेदबुभुत्सायामागमोत्थविवेकादिजन्यज्ञानयोः प्रकृतत्वात् तत्परत्वाश्रयणं हि युक्तम् । तर्तुं मृत्युमित्यनेन तरतेः प्राप्तिवाचित्वशङ्का व्युदस्ता । न हि संसारं प्राप्तुं ब्रह्मविदा केशिध्वजेन नृपेण यज्ञादिकर्मानुष्ठीयते । मृत्युशब्दस्य विविदिषाविरोधिकर्मपरत्वमपि न शङ्कनीयम्; ज्ञानव्यपाश्रय इत्यनेन शास्त्रजन्यज्ञानवत्ताया अभिहितत्वात्; ब्रह्मविद्यामधिष्ठायेत्युक्तत्वाच्च । न हि ब्रह्मविद्येच्छामधिष्ठायेत्युक्तम् ॥ कथं ज्ञानोत्पत्तिविरोधि प्राचीनं कर्मेति पुण्यपापसाधारणकर्मशब्देन कर्ममात्रं निरसनीयमुक्तम; श्रुतिर्हि, "धर्मेण पापमपनुदति" इति पापरूपकर्मविशेषस्य निरसनीयत्वमाहेति शङ्कायां तत्रापि पापशब्दस्य पुण्यपापपरत्वं दर्शयितुं पुण्यपापयोरुभयोरपि पापशब्दवाच्यत्वोपपादनाय तयोर्ज्ञानोत्पत्तिविरोधित्वमाह ज्ञानविरोधि चेति । चः शङ्कानिवृत्तौ । पुण्यपापे उभे अपि ज्ञानविरोधिनी चेत्, कथं तयोरन्यतरस्य पापस्य निरसनीयत्वमन्यतरस्य पुण्यस्य निरासकत्वं च श्रूयते इत्यत्राह उभयोरपीति । तयोर्द्वयोरपि निवर्त्यत्वम्, फलाभिसन्ध्यादिरहितस्य धर्मान्तरस्यैव निवर्तकत्वञ्च विवक्षितमिति भावः । कथमुभयोः पापशब्दवाच्यत्वमित्यत्राह ब्रह्मज्ञानोत्पत्तीति । अनिष्टफलतयेति प्रवृत्तिनिमित्तसूचनम् । अलोकिकत्वे सति अनिष्टफलासाधारणकारणत्वं पापत्वमिति भावः । अत एव शस्त्रादावीश्वरे च नातिव्याप्तिः । "वासुदेवे मनो यस्य जपहोमार्चनादिषु । तस्यान्तरायो मैत्रेय देवेन्द्रत्वादिकं फलम् ।", "एते वै निरयास्तात स्थानस्य परमात्मनः" इत्यादिभिः पुण्यस्यापि मुमुक्षुं प्रति अनिष्टफलप्रदत्वं सिद्धम् । श्रुतिश्च दुष्कृतेन सह पूर्वनिर्दिष्टं सुकृतमपि पाप्मशब्देन निर्दिशन्ती निगमयति,

**अस्य च ज्ञानविरोधित्वं ज्ञानोत्पत्तिहेतुभूतशुद्धसत्त्वविरोधिरजस्तमोविवृद्धिद्वारेण । पापस्य च ज्ञानोदयविरोधित्वम्—"एष एवासाधु कर्म कारयति तम्, यमधो निनीषति" इति श्रुत्याऽवगम्यते ।**

---

"नैतं सेतुमहोरात्रे तरतः, न जरा न मृत्युर्न शोको न सुकृतं न दुष्कृतम्; सर्वे पाप्मानोऽतो निवर्तन्ते" इति । न चानुक्तपापान्तरविषयः पाप्मशब्दः; दुष्कृतशब्दस्य संप्रतिपन्नसमस्तपापसाधारणतया अनुक्तपापान्तरासंभवेन तद्विषयत्वायोगात् । संभवेऽपि न तन्मात्रपापान्तरविषयः पाप्मशब्दः, उक्तसर्वहेयनिवृत्तिसंवादितयोपात्ते, "अपहतपाप्मा ह्येष ब्रह्मलोकः" इत्यनन्तरवाक्ये पाप्मशब्दस्य सर्वहेयविषयत्वदर्शनात् । न ह्यनुक्तकतिपयपापनिवृत्त्युक्तौ उक्तसर्वहेयनिवृत्तिसंवादसिद्धिः । शोकादिषु पाप्मशब्दस्यामुख्यत्वेपि सुकृतदुष्कृतयोः प्रवृत्तिनिमित्तसंम्भवान्न मुख्यत्वं त्याज्यम् । क्वचिदमुख्यस्य सर्वत्रामुख्यत्वनियमाभावात् । अतः, 'सर्वे पाप्मानः' इत्यत्राजहल्लक्षणा छत्रिन्यायात् । "धर्मेण पापम्" इत्यत्र तु मुख्यत्वमेव ॥

कथं पापस्य ज्ञानविरोधित्वम् । रजस्तमसाहि तदवगम्यत इति शङ्कायां द्वारद्वारिभावादविरोधमाह **अस्येति** । पापस्य रजस्तमसोश्च ज्ञानविरोधित्वे प्रामाणिके सति द्वारद्वारिभावः कल्प्यत इ(कल्प्येते ?)त्यत्राह **पापस्य चेति** ॥ नन्वियं श्रुतिर्निरयनिनीषाविषया किं न स्यात् ॥ उन्नयनप्रत्यनीकत्वादधोनयस्येति ब्रूमः । अत्र विवक्षितमुन्नयनहेतुत्वमुपासननिष्पादनरूपम् । न चोन्नयनमपि नाकादिनयनमिति शङ्कनीयम्; "यमेभ्यो लोकेभ्य उन्निनीषति" इत्यवगतस्य समस्तलोकेभ्य उन्नयनस्यापवर्गप्रापणरूपत्वात् ॥ तर्हि गर्भजन्मजरामरणादिसंसारप्रापणमधोनयनं स्यात्, न तूपासनविरोध इति चेन्न—उन्नयनस्य ज्ञानोत्पादनद्वारकत्वावगमात् । "यं त्वं मनुष्याय हिततमं मन्यसे" इत्युपक्रमवाक्येन मामुपास्स्वेति विधित्सितस्य उपासनस्य ह्यव्यवहितोपायत्वमवगतम् । "नान्यः पन्थाः" इत्यादीनि च श्रुत्यन्तराणि तथाऽवगमयन्ति । तच्च कर्मणामपवर्गं प्रति अव्यवहितोपायत्वे विरुद्ध्येत । अत उपक्रमाद्यविरोधात् साधुकर्मणामपवर्गं प्रत्युपायत्वमुपासनद्वारकमवसीयते । अतः कर्मणामुन्नयनहेतुत्वमुपासननिष्पादनरूपमिति तद्विपरीतमधोनयनमुपासनप्रतिबन्धरूपमिति स्फुटतरमवगम्यते । किञ्च यद्यप्युन्नयनाधोनयने स्वर्गनरकप्रापणरूपे, तथाप्यसाधुकर्मणां ज्ञानविरोधित्वं सिद्ध्यति । तथा हि—उन्निनीषाधोनिनीषयोर्निर्हेतुकत्वे परमात्मनो वैषम्यनैर्घृण्यप्रसङ्गात् नेतव्यचेतनगोचरं यद्[1]वृत्तद्वयं गतिद्वयनिनीषानिमित्तभूतातिप्रभूतपुण्यपापकर्तृविषयं विज्ञायते । तत्र च गतिद्वयपर्याप्तोत्तरोत्तरसाध्वसाधुकर्मकारयितृत्वमीश्वरस्य न भूतावेशादिवत् जीवबुद्ध्यनपेक्षितं भवति; तथा सति ज्ञानचिकीर्षाद्यभावात् वायूदकादिनुन्नतृणादेरिव संसारिणां शास्त्रवश्यत्वाभावेन कर्मफलभोगानुपपत्तेः । एवं संसारिणां कर्मफलभोक्तृत्वान्यथानुपपत्तिरूपन्यायानुगृहीतम् एष एवेत्यादिकं वाक्यद्वयं ज्ञानप्रदानद्वारककारयितृत्वविषयमवसीयते । तथा सति स्मृत्यनुग्रहश्च भवति; "न देवा यष्टिमादाय रक्षन्ति पशुपालवत् । यं हि रक्षितुमिच्छन्ति बुद्ध्या संयोजयन्ति तम् । यस्मै देवाः प्रयच्छन्ति पुरुषाय पराभवम् । बुद्धिं तस्यापकर्षन्ति सोऽपनीतो विनश्यति" इति ह्युच्यते । तथा, "पुण्यं प्रज्ञां वर्धयति क्रियमाणं पुनःपुनः । वृद्धप्रज्ञः पुण्यमेव नित्यमारभते नरः । पापं प्रज्ञां नाशयति क्रियमाणं पुनःपुनः ।

---

1 यद्वृत्तद्वयम्—यमिति यत्पदद्वयम् ।

रजस्तमसोर्यथार्थज्ञानावरणत्वं सत्त्वस्य च यथार्थज्ञानहेतुत्वं भगवतैव प्रतिपादितम्, "सत्त्वात् सञ्जायते ज्ञानम्" इत्यादिना। अतश्च ज्ञानोत्पत्तये पापं कर्म निरसनीयम्। तन्निरसनञ्च अनभिसंहितफलेनानुष्ठितेन धर्मेण। तथा च श्रुतिः, "धर्मेण पापमपनुदति" इति।

---

नष्टप्रज्ञः पापमेव नित्यमारभते नरः ॥" इति च। तत्र बुद्धिमवकर्षन्ति, प्रज्ञां नाशयतीति च सम्यग्ज्ञानहानिपूर्वकतद्विपरीतज्ञाननिष्पत्तिरिह विवक्षिता; अन्यथा कर्मान्तरप्रारम्भानुपपत्तेः। यद्यपीदं वचनजातं सर्वकर्मदेवतासामान्यविषयम्; तथापि भगवज्ज्ञानस्य सम्यग्ज्ञानसामान्याबहिर्भावादसाधुकर्मणस्तद्विरोधित्वसिद्धिः। तथा विशेषतश्चोच्यते, "ददामि बुद्धियोगं तं येन मामुपयान्ति ते", "आसुरीं योनिमापन्ना मूढा जन्मनि जन्मनि ॥ मामप्राप्यैव कौन्तेय ततो यान्त्यधमां गतिम्" इति [च]। एवं न्यायस्मृत्युपबृंहितयाऽनया श्रुत्या सामान्येन ज्ञानविरोधित्वमसाधुकर्मणां सिद्धम्। अस्मादपि निर्वाहात् पूर्वोक्त उपपन्नः; प्रकरणानुगुण्यात्।

एवं पापस्य ज्ञानविरोधित्वे प्रमाणं दर्शितम्; अथ रजस्तमसोर्ज्ञानविरोधित्वे, सत्त्वस्य ज्ञानहेतुत्वे च प्रमाणं दर्शयति रजस्तमसोरिति। ततः किं प्रस्तुतस्य कर्मापेक्षितत्वस्येत्यत्राह अतश्चेति। अतः—पापस्य ज्ञानविरोधित्ववचनात्। ततोऽपि किमित्यत्राह तन्निरसनञ्चेति पापशब्दाभिधेययोः पुण्यपापयोरुभयोरपि निरसनीयत्वेन पापनिरासककर्मासंभवमाशङ्क्योक्तम् अनभिसंहितफलेनेति। अनेन स्वर्गादिफलप्रदकर्मव्यावृत्तिः। अनुष्ठितेन। न तु ज्ञातमात्रेणेति भावः। तत्र किं प्रमाणमित्यत्राह तथा च श्रुतिरिति। इदानीं निरासकविशेषे प्रमाणतयोदाहृतस्य वाक्यस्यार्थनिर्णयोपयोगितयैतद्वाक्यस्थनिरसनीयवाचिपदस्यार्थः पूर्वमेव शिक्षितः; निरासकवाचिपदस्यार्थोऽनन्तरमुक्तः ॥ नन्वयं धर्मशब्दः कृच्छ्रचान्द्रायणादिप्रायश्चित्तरूपधर्ममात्रविषयः किं न स्यात्; अनभिसंहितफलधर्मविषय इति कुतो निर्णीयते ॥ उच्यते। "यज्ञेन दानेन तपसाऽनाशकेन", "शान्तो दान्त उपरतस्तितिक्षुः", "कषाये कर्मभिः पक्के ततो ज्ञानं प्रवर्तते", "यज्ञदानतपःकर्म न त्याज्यं कार्यमेव तत्", "यज्ञो दानं तपश्चैव पावनानि मनीषिणाम्", "शमो दमस्तपः शौचम्" इत्यादिश्रुतिस्मृतिभिर्मुमुक्षोरपेक्षितत्वेनोक्तानां यज्ञदानतपःशमादीनामत्र श्रूयमाणत्वात्; "विज्ञानादानन्दो ब्रह्मयोनिः" इत्यादिनाऽस्य प्रकरणस्य ब्रह्मविद्याविषयत्वावगमाच्चायं धर्मशब्दो मुमुक्ष्वपेक्षितानभिसंहितफलधर्मविषय इत्यवगम्यते। अत्र यज्ञदानादिपर्यायेषु, "दानेन द्विषन्तो मित्रा भवन्ति" इत्यादिना सांसारिकफलकीर्तनम्, "अन्नवानन्नादो भवति" इत्यादिवत् ब्रह्मवेदनानुगुणानुषङ्गिकफलविषयं मन्तव्यम्; 'भूयो न मृत्युमुपयाहि विद्वान्" इति प्रधानफलश्रवणात्। किञ्च यद्यपीदं वाक्यं न मुमुक्षुमात्रविषयम्, तथाप्यमुमुक्षुमात्रविषयं च न भवेत्; प्रवृत्तिनिमित्तसाधारण्यात् न हि काम्यफलप्रदत्वं धर्मशब्दार्थः, अलौकिकेष्टासाधारणसाधनेनालौकिकानिष्टासाधारणकारणमपनुदेदिति ह्यर्थः स्यात्। ततश्च मुमुक्षुं प्रति काम्यकर्मणोऽनिष्टफलत्वेन धर्मशब्दवाच्यत्वायोगात् पापशब्दवाच्यान्तर्भावाच्च [1]पक्षधर्मताबलादनभिसंहितफलेन धर्मेण पुण्यपापयोरुभयोरपनोद्यत्वमुक्तं स्यात्।

---

1 पक्षधर्मताबलात्=प्रकृतविषयसंबन्धाहांशचिन्तनवशादिति यावत्। यथा विश्वमभिज्ञकर्तृकमित्युक्तौ कर्तृसार्वज्ञ्यसिद्धिः।

**अस्य च ज्ञानविरोधित्वं ज्ञानोत्पत्तिहेतुभूतशुद्धसत्त्वविरोधिरजस्तमोविवृद्धिद्वारेण । पापस्य च ज्ञानोदयविरोधित्वम्—"एष एवासाधु कर्म कारयति तम्, यमधो निनीषति" इति श्रुत्याऽवगम्यते ।**

---

"नैतं सेतुमहोरात्रे तरतः, न जरा न मृत्युर्न शोको न सुकृतं न दुष्कृतम्; सर्वे पाप्मानोऽतो निवर्तन्ते" इति । न चानुक्तपापान्तरविषयः पाप्मशब्दः; दुष्कृतशब्दस्य संप्रतिपन्नसमस्तपापसाधारणतया अनुक्तपापान्तरासंभवेन तद्विषयत्वायोगात् । संभवेऽपि न तन्मात्रपापान्तरविषयः पाप्मशब्दः, उक्तसर्वहेयनिवृत्तिसंवादितयोपात्ते, "अपहतपाप्मा ह्येष ब्रह्मलोकः" इत्यनन्तरवाक्ये पाप्मशब्दस्य सर्वहेयविषयत्वदर्शनात् । न ह्यनुक्तकतिपयपापनिवृत्त्युक्तौ उक्तसर्वहेयनिवृत्तिसंवादसिद्धिः । शोकादिषु पाप्मशब्दस्यामुख्यत्वेपि सुकृतदुष्कृतयोः प्रवृत्तिनिमित्तसंभवान्न मुख्यत्वं त्याज्यम् । क्वचिदमुख्यस्य सर्वत्रामुख्यत्वनियमाभावात् । अतः, 'सर्वे पाप्मानः' इत्यत्राजहल्लक्षणा छत्रिन्यायात् । "धर्मेण पापम्" इत्यत्र तु मुख्यत्वमेव ॥

कथं पापस्य ज्ञानविरोधित्वम् । रजस्तमसोर्हि तदवगम्यत इति शङ्कायां द्वारद्वारिभावादविरोधमाह **अस्येति** । पापस्य रजस्तमसोश्च ज्ञानविरोधित्वे प्रामाणिके सति द्वारद्वारिभावः कल्प्यत इ(कल्प्येते?)त्यत्राह **पापस्य चेति** ॥ नन्वियं श्रुतिर्निरयनिनीषाविषया किं न स्यात् ॥ उन्नयनप्रत्यनीकत्वादधोनयस्येति ब्रूमः । अत्र विवक्षितमुन्नयनहेतुत्वमुपासननिष्पादनरूपम् । न चोन्नयनमपि नाकादिनयनमिति शङ्कनीयम्; "यमेभ्यो लोकेभ्य उन्निनीषति" इत्यवगतस्य समस्तलोकेभ्य उन्नयनस्यापवर्गप्रापणरूपत्वात् ॥ तर्हि गर्भजन्मजरामरणादिसंसारप्रापणमधोनयनं स्यात्, न तूपासनविरोध इति चेन्न—उन्नयनस्य ज्ञानोत्पादनद्वारकत्वावगमात् । "यं त्वं मनुष्याय हिततमं मन्यसे" इत्युपक्रमवाक्येन मामुपास्स्वेति विधित्सितस्य उपासनस्य ह्यव्यवहितोपायत्वमवगतम् । "नान्यः पन्थाः" इत्यादीनि च श्रुत्यन्तराणि तथाऽवगमयन्ति । तच्च कर्मणामपवर्गं प्रति अव्यवहितोपायत्वे विरुद्ध्येत । अत उपक्रमाद्यविरोधात् साधुकर्मणामपवर्गं प्रत्युपायत्वमुपासनद्वारकमवसीयते । अतः कर्मणामुन्नयनहेतुत्वमुपासननिष्पादनरूपमिति तद्विपरीतमधोनयनमुपासनप्रतिबन्धरूपमिति स्फुटतरमवगम्यते । किञ्च यद्यप्युन्नयनाधोनयने स्वर्गनरकप्रापणरूपे, तथाप्यसाधुकर्मणां ज्ञानविरोधित्वं सिद्ध्यति । तथा हि—उन्निनीषाधोनिनीषयोर्निर्हेतुकत्वे परमात्मनो वैषम्यनैर्घृण्यप्रसङ्गात् नेतव्यचेतनगोचरं यद्[1]वृत्तद्वयं गतिद्वयनिनीषानिमित्तभूतातिप्रभूतपुण्यपापकर्तृविषयं विज्ञायते । तत्र च गतिद्वयपर्याप्तोत्तरोत्तरसाध्वसाधुकर्मकारयितृत्वमीश्वरस्य न भूतावेशादिवत् जीवबुद्ध्यनपेक्षितं भवति; तथा सति ज्ञानचिकीर्षाद्यभावात् वायूदकादिनुन्नतृणादेरिव संसारिणां शास्त्रवश्यत्वाभावेन कर्मफलभोगानुपपत्तेः । एवं संसारिणां कर्मफलभोक्तृत्वान्यथानुपपत्तिरूपन्यायानुगृहीतम् एष एवेत्यादिकं वाक्यद्वयं ज्ञानप्रदानद्वारककारयितृत्वविषयमवसीयते । तथा सति स्मृत्यनुग्रहश्च भवति; "न देवा यष्टिमादाय रक्षन्ति पशुपालवत् । यं हि रक्षितुमिच्छन्ति बुद्ध्या संयोजयन्ति तम् । यस्मै देवाः प्रयच्छन्ति पुरुषाय पराभवम् । बुद्धिं तस्यापकर्षन्ति सोऽपनीतो विनश्यति" इति ह्युच्यते । तथा, "पुण्यं प्रज्ञां वर्धयति क्रियमाणं पुनःपुनः । वृद्धप्रज्ञः पुण्यमेव नित्यमारमते नरः । पापं प्रज्ञां नाशयति क्रियमाणं पुनःपुनः ।

---

1 यद्वृत्तद्वयम्—यमिति यत्पदद्वयम् ।

रजस्तमसोर्यथार्थज्ञानावरणत्वं सत्त्वस्य च यथार्थज्ञानहेतुत्वं भगवतैव प्रतिपादितम्, "सत्त्वात् सञ्जायते ज्ञानम्" इत्यादिना। अतश्च ज्ञानोत्पत्तये पापं कर्म निरसनीयम्। तन्निरसनञ्च अनभिसंहितफलेनानुष्ठितेन धर्मेण। तथा च श्रुतिः, "धर्मेण पापमपनुदति" इति।

नष्टप्रज्ञः पापमेव नित्यमारभते नरः ॥" इति च। तत्र बुद्धिमवकर्षन्ति, प्रज्ञां नाशयतीति च सम्यग्ज्ञानहानिपूर्वकतद्विपरीतज्ञाननिष्पत्तिरिह विवक्षिता; अन्यथा कर्मान्तरप्रारम्भानुपपत्तेः। यद्यपीदं वचनजातं सर्वकर्मदेवतासामान्यविषयम्; तथापि भगवज्ज्ञानस्य सम्यग्ज्ञानसामान्याबहिर्भावादसाधुकर्मणस्तद्विरोधित्वसिद्धिः। तथा विशेषतश्चोच्यते, "ददामि बुद्धियोगं तं येन मामुपयान्ति ते", "आसुरीं योनिमापन्ना मूढा जन्मनि जन्मनि ॥ मामप्राप्यैव कौन्तेय ततो यान्त्यधमां गतिम्" इति [च]। एवं न्यायस्मृत्युपबृंहितयाऽनया श्रुत्या सामान्येन ज्ञानविरोधित्वमसाधुकर्मणां सिद्धम्। अस्मादपि निर्वाहात् पूर्वोक्त उपपन्नः; प्रकरणानुगुण्यात्।

एवं पापस्य ज्ञानविरोधित्वे प्रमाणं दर्शितम्; अथ रजस्तमसोर्ज्ञानविरोधित्वे, सत्त्वस्य ज्ञानहेतुत्वे च प्रमाणं दर्शयति **रजस्तमसो**रिति। ततः किं प्रस्तुतस्य कर्मापेक्षितत्वस्येत्यत्राह **अतश्चे**ति। अतः—पापस्य ज्ञानविरोधित्ववचनात्। ततोऽपि किमित्यत्राह **तन्निरसनञ्चे**ति पापशब्दाभिधेययोः पुण्यपापयोरुभयोरपि निरसनीयत्वेन पापनिरासककर्मासंभवमाशङ्क्योक्तम् **अनभिसंहितफलेने**ति। अनेन स्वर्गादिफलप्रदकर्मव्यावृत्तिः। **अनुष्ठितेन**। न तु ज्ञातमात्रेणेति भावः। तत्र किं प्रमाणमित्यत्राह **तथा च श्रुतिरि**ति। इदानीं निरासकविशेषे प्रमाणतयोदाहृतस्य वाक्यस्यार्थनिर्णयोपयोगितयैतद्वाक्यस्थनिरसनीयवाचिपदस्यार्थः पूर्वमेव शिक्षितः; निरासकवाचिपदस्यार्थोऽनन्तरमुक्तः ॥ नन्वयं धर्मशब्दः कृच्छ्रचान्द्रायणादिप्रायश्चित्तरूपधर्ममात्रविषयः किं न स्यात्; अनभिसंहितफलधर्मविषय इति कुतो निर्णीयते ॥ उच्यते। "यज्ञेन दानेन तपसाऽनाशकेन", "शान्तो दान्त उपरतस्तितिक्षुः", "कषाये कर्मभिः पक्वे ततो ज्ञानं प्रवर्तते", "यज्ञदानतपःकर्म न त्याज्यं कार्यमेव तत्", "यज्ञो दानं तपश्चैव पावनानि मनीषिणाम्", "शमो दमस्तपः शौचम्" इत्यादिश्रुतिस्मृतिभिर्मुमुक्षोरपेक्षितत्वेनोक्तानां यज्ञदानतपःशमादीनामत्र श्रूयमाणत्वात्; "विज्ञानादानन्दो ब्रह्मयोनिः" इत्यादिनाऽस्य प्रकरणस्य ब्रह्मविद्याविषयत्वावगमाच्चायं धर्मशब्दो मुमुक्ष्वपेक्षितानभिसंहितफलधर्मविषय इत्यवगम्यते। अत्र यज्ञदानादिपर्यायेषु, "दानेन द्विषन्तो मित्रा भवन्ति" इत्यादिना सांसारिकफलकीर्तनम्, "अन्नवानन्नादो भवति" इत्यादिवत् ब्रह्मवेदनानुगुणानुषङ्गिकफलविषयं मन्तव्यम्; "भूयो न मृत्युमुपयाहि विद्वान्" इति प्रधानफलश्रवणात्। किञ्च यद्यपीदं वाक्यं न मुमुक्षुमात्रविषयम्, तथाप्यमुमुक्षुमात्रविषयं च न भवेत्; प्रवृत्तिनिमित्तसाधारण्यात्। न हि काम्यफलप्रदत्वं धर्मशब्दार्थः, अलौकिकेष्टासाधारणसाधनेनालौकिकानिष्टासाधारणकारणमपनुदेदिति ह्यर्थः स्यात्। ततश्च मुमुक्षुं प्रति काम्यकर्मणोऽनिष्टफलत्वेन धर्मशब्दवाच्यत्वायोगात् पापशब्दवाच्यान्तर्भावाच्च [1]पक्षधर्मताबलादनभिसंहितफलेन धर्मेण पुण्यपापयोरुभयोरपनोद्यत्वमुक्तं स्यात्।

---

1 पक्षधर्मताबलात्=प्रकृतविषयसंबन्धाहांशचिन्तनवशादिति यावत्। यथा विश्वमभिज्ञकर्तृकमित्युक्तौ कर्तृसार्वज्ञ्यसिद्धिः।

**तदेवं ब्रह्मप्राप्तिसाधनं ज्ञानं सर्वाश्रमकर्मापेक्षम्। अतोऽपेक्षितकर्मस्वरूपज्ञानं केवलकर्मणामल्पास्थिरफलत्वज्ञानञ्च कर्ममीमांसावसेयमिति—सैवापेक्षिता ब्रह्मजिज्ञासायाः पूर्ववृत्ता वक्तव्या ॥ अपि च नित्यानित्यवस्तुविवेकादयश्च मीमांसाश्रवणमन्तरेण न संपत्स्यन्ते, फलकरणेतिकर्तव्यताधिकारिविशेषनिश्चयात् ऋते कर्मस्वरूपतत्फलतत्स्थिरत्वास्थिरत्वात्मनित्यत्वादीनां दुरवबोधत्वात् ।**

---

ज्ञानस्य कर्मसापेक्षत्वं निगमयति **तदेव**मिति । **तत्** —श्रुतिस्मृतितदनुग्राहकोपपत्तिसूत्रवाक्यकारवचनेभ्यः । **एवम्** —उपायप्रतिबन्धनिरासार्थम् । सर्वाश्रमिणां तत्तदाश्रमधर्माङ्गकोपासनाधिकारस्य वक्ष्यमाणत्वं हृदि निधाय **सर्वाश्रमकर्मापेक्ष**मित्युक्तम् । ततः किं कर्मविचारस्य ब्रह्मविचारपूर्ववृत्तत्वे इत्यपेक्षायामनुष्ठानस्य ज्ञानसापेक्षत्वात्, ज्ञानस्य मीमांसाधीनत्वाच्च, तदधिगमः पूर्ववृत्त इत्याह **अत** इति । अतः—ब्रह्मज्ञानस्य फलाभिसन्धिरहिताश्रमकर्मसापेक्षत्वात् कर्मज्ञानं हि हानार्थमुपादानार्थं वा; अत्र तूभयार्थमित्याह **अपेक्षिते**ति । फलद्वारकं हानम्, स्वरूपेणोपादानम् । मीमांसाशब्दस्य पूर्वोत्तरसाधारणत्वात् **कर्ममीमांसावसेय**मित्युक्तम् । **सैव** । या त्वया विरुद्धेति निरस्ता, सैवेत्यर्थः ।

यत् अनपेक्षितं परेणोक्तम्, तदेवापेक्षितमित्युक्तम्; यत्तु परेणापेक्षितमित्युक्तम्, तस्यानपेक्षितत्वमुच्यते **अपि** चेत्यादिना । **नित्यानित्यवस्तुविवेकादयश्चे**ति चस्त्वर्थः । प्रत्युतेति यावत् । **मीमांसाश्रवणमन्तरेण** कर्मब्रह्ममीमांसाश्रवणमन्तरेणेत्यर्थः । **न संपत्स्यन्त** इत्यनेन पश्चाद्भावित्वमुक्तम् । कुत इत्यत्राह **फले**ति । **फलविशेषः**—भोगमोक्षरूप; **करणविशेषः**—यज्ञोपासनादिः; **इतिकर्तव्यताविशेषः**—प्रयाजादिः साधनसप्तकं च; **अधिकारिविशेषः** बुभुक्षुर्मुमुक्षुश्च; एषां निश्चयादृते । **कर्मस्वरूपम्**—साङ्गं यज्ञात्मकमुपासनात्मकञ्च । भाष्यकारश्च, यागात्मकमुपासनात्मकं च कर्मेति हि वक्ष्यति; "प्रकाशश्च कर्मण्यभ्यासात्" इति च सूत्रम्; "उपासनात्मके कर्मणि" इति च तस्य भाष्यम् । उपासनस्य कर्मत्वं स्मृतिसन्ततिरूपतया तस्य प्रयत्नसाध्यत्वात् । "वाचिकैः पक्षिमृगतां मानसैरन्त्यजातिताम् । शरीरजैः कर्मदोषैर्याति स्थावरतां नरः" इत्यत्र मनुश्च, "मानसैः कर्मदोषैः" इत्युक्तवान् । फलं चोभयं भोगो मोक्षश्च । [**तत्स्थिरत्वास्थिरत्व**] **आत्मनित्यत्वादीना**मिति । आदिशब्देन आत्मनाम, "निर्वाणमय एवायम्" इत्युक्तज्ञानानन्दस्वरूपत्वादिकं विवक्षितम् ॥ अत्र साध्याविशिष्टत्वं हेतोः प्रतीयत इति चेत्—मैवम् । मीमांसायां फलकरणेतिकर्तव्यतादीनां प्रत्यधिकरणं तत्तन्न्यायैर्यो निर्णयः क्रियते, स हेतुः; एवं तत्तदधिकरणन्यायानुगृहीतश्रुतिवाक्यसमुदायजन्या या प्रमितिरुपायोपेयविषया, सा साध्या । तत्तदवान्तरवाक्यार्थनिश्चयैस्तत्समुदायरूपमहावाक्यार्थनिश्चयः साध्य इत्यर्थः । यथा पदार्थनिश्चयैर्वाक्यार्थनिश्चय इत्युक्ते सति न साध्याविशिष्टता, तद्वत् । अत एव हि करणेतिकर्तव्यतादिशब्दैः पूर्वं पृथगुक्त्वा पश्चात् **कर्मस्वरूप**शब्देनोक्तम् । **फलकरणे**त्यादिभाष्यस्य कर्ममीमांसामात्रविषयत्वे **तत्फल स्थिरत्वास्थिरत्वात्मनित्यत्वादीना**मिति वक्तुमयुक्तम् । निरुपपदमीमांसाशब्दस्य **मीमांसाशास्त्र**मित्यादिभाष्ये भागद्वयविषयतया प्रयुक्तत्वाच्च यथोक्त एवार्थः । तस्मात् कर्मब्रह्मविचारानन्तरभावी नित्यानित्यवस्तुविवेक; ततः इहामुत्रफलभोगविरागः, मुमुक्षुत्वं च; शमादमादिसाधनसंपच्च; 'शमदमाद्युपेतः स्यात्' इति ब्रह्ममीमांसायां हि शमदमादिस्वरूपं निरूप्यते । अस्मिन् चतुष्टये सिद्धे ब्रह्मविचारः, ब्रह्मविचारात् तत्सिद्धिरित्यन्योन्याश्रयः स्यात् । अतः पश्चाद्भाविनः पूर्ववृत्तत्वमनुपपन्नम् ॥

साङ्गाध्ययनजापातप्रतीतिरेव नित्यानित्यवस्तुविवेक इति चेत्—तदयुक्तम् । न ह्यापातप्रतीतिः इहामुत्रफलभोगविरागमुमुक्षुत्वयोर्हेतुः; नित्यानित्यविपर्ययप्रतीतेः । किञ्च आपातप्रतीतिरुभयभागविचारसाधारणी । तत्र प्रथमं कर्मविचार एव प्रवृत्तिर्युक्ता; उभयत्र बुभुत्साया अविशिष्टत्वात्, प्रथमातिक्रमे कारणाभावाच्च । शास्त्रान्तरेणापि नित्यानित्यविवेकादिर्नोपपद्यते; प्रथममेवाध्ययनविधिवश्यतया पुरुषस्य शास्त्रान्तरानवकाशात् ।

किञ्च शास्त्रान्तरे परमाणुकारणत्वाब्रह्मात्मकप्रधानकारणत्वगगनादिनित्यत्वनिमित्तमात्रेश्वरत्वादयो वेदान्तविरुद्धा एवार्था बहव उपलभ्यन्ते । अतः शास्त्रान्तरजन्यो नित्यानित्यवस्तुविवेको वेदान्तविरुद्धत्वान्न तद्विचारं प्रति पूर्ववृत्तो भवितुमर्हति । किञ्च शास्त्रान्तरे षट्पदार्थषोडशपदार्थज्ञानादीनां मोक्षसाधनत्वप्रतिपादनेन वेदान्तश्रवणनैरपेक्ष्याच्च न तज्जन्यविवेकस्य पूर्ववृत्तत्वं युक्तम् । "यतोऽभ्युदयनिःश्रेयससिद्धिः स धर्मः", "छलजातिनिग्रहस्थानानां तत्त्वज्ञानात् निःश्रेयसाधिगमः" इति हि तत्र तत्रोच्यते ।

किञ्च "तस्मादेवंविच्छान्तो दान्त उपरतस्तितिक्षुः समाहितो भूत्वाऽऽत्मन्येवात्मानं पश्येत्" इति श्रुतिः एवंविच्छब्देन शास्त्रजन्यज्ञानमनूद्य, पश्येदिति प्रतिपन्नस्योपासनस्याङ्गतया शमादीनुपदिशति । अतः शमादीनां श्रवणपूर्ववृत्तत्वं श्रुतिविरुद्धम् । प्रशान्तचित्तायेत्यादिश्रुतिस्तु श्रवणौपयिकावधाननिष्पादनार्थेत्युक्तम् ॥

इतिहासपुराणश्रवणान्नित्यानित्यविवेक इति चेत्—तर्हि तत एव ब्रह्मस्वरूपावगमात् ब्रह्मविचारस्यानारम्भणीयत्वं स्यात् ॥ इतिहासपुराणयोरपि संशयविपर्ययबाहुल्यात् तन्निरासाय ब्रह्मविचारोऽपेक्षित इति चेत्—संशयविपर्ययबाहुल्यादेव नित्यानित्यविवेकोऽपि तत्र दुस्संपाद इति न साधनचतुष्टयस्य पूर्ववृत्तत्वं युक्तम् ॥

यत्तु—'नित्यनित्ययोर्वसन्तीति नित्यानित्यवस्तूनि तद्धर्माः' इत्यारभ्य वाचस्पतिनोक्तम्, 'नित्यस्य धर्मिणो नित्यत्वं सत्यत्वं तत एवोपादेयत्वम्; अनित्यस्य धर्मिणोऽनित्यत्वम् असत्यत्वं तत एव हेयत्वमित्येवं नित्यानित्ययोर्धर्मिणोस्तद्धर्माणां च विवेको नित्यानित्यवस्तुविवेकः' इति—अत्र ब्रूमः । अनित्यस्य तावत् असत्यत्वं वक्ष्यमाणप्रकारेण निरस्तं वेदितव्यम् । यन्नित्यं तत् उपादेयम्, यदनित्यं तत् हेयमित्युभयमप्यनुपपन्नम्; सुखदुःखनिवृत्ति-तत्साधन-तदुपयोगिनामेवोपादेयत्वबुद्धिदर्शनात् तद्व्यतिरिक्तस्यैवानुपादेयताबुद्धिदर्शनाच्च । नित्यमपि दुःखरूपं दुःखनिमित्तं वा यदि स्यात्, हेयमित्येव प्रतीयेत । अनुभयं चेत्, उपेक्ष्येत । अनित्यमपि सुखरूपं वा सुखनिमित्तं वा भवति चेत्, तदुपादीयते ॥ निरूपकस्य तु हेयमिति चेन्न; प्रकृष्टसुखान्तरदर्शन-अत्यन्तदुःखसाध्यत्व-दुःखोदर्कत्वविरहे सति निरूपकस्यापि तत्रोपादेयताबुद्धिदर्शनात् । क्षीरौदनलाभात् कणस्त्यज्यते; अन्धकूपपतिता वराटिका तदुद्धरणक्लेशस्य तल्लाभसुखादतिशायित्वात् त्यज्यते; विषमिश्रमन्नं मरणभयात् त्यज्यते; स्रक्चन्दनादि तु ततः प्रकृष्टसुखालाभात् आद्यन्तयोस्तीव्रदुःखानुबन्धाभावाच्च परिमितमप्युपादीयते । तस्मादनित्यस्य हेयत्वं नानित्यत्वमात्रप्रयुक्तम् ॥

यद्युच्येत—नित्यस्य दुःखासंभिन्नसुखरूपत्वादुपादेयत्वम्; तदसंभवादनित्यस्य च हेयत्वमिति ॥ उच्यते । नित्यस्य दुःखासंभिन्नसुखरूपत्वं किं व्याप्त्याऽवगम्यते, उत शास्त्रात्? न प्रथमः,—नित्यस्य कालादेः सुखरूपत्वादर्शनात्; नित्यस्यात्मनो दुःखासंभिन्नसुखरूपत्वादर्शनाच्च । आत्मनो हि दुःखमुपलभ्यते, अहं दुःखीति ॥ शास्त्रतश्चेत्, यदि वेदात्—वेदजन्यं च किमापातज्ञानम्, उत प्रमितिरूपम्? प्रथमे कर्मब्रह्मभागसाधा-

रण्यात् कर्मविचारातिक्रमेण ब्रह्मविचारं प्रति तस्य पूर्ववृत्तत्वानुपपत्तिः । निश्चयरूपं चेत्—मीमांसाद्वयफलं स्यात् । आगमान्तरमूलत्वे विरुद्धतयाऽनुपयोगात् तस्यैतन्नैरपेक्ष्याच्च पूर्ववृत्तत्वानुपपत्तिः ॥

अथोच्येत—यन्नित्यम्, तदुपादेयमिति नैवं प्रतीतिः; किन्तु 'नित्यं सुखं संभवति चेत्, तदुपादेयम्; सति तस्मिन् अनित्यमनुपादेयम्' इति—तत्र तावत् नित्यसुखसंभवज्ञानस्य ब्रह्मविचारोपयोगो नित्यफलोपादित्साद्वारेणेति वक्तव्यम् । शास्त्रान्तरेषु कर्मकाण्डे च नित्यफलसंभावनाया निवारकाभावान्नित्यानित्यविवेकानन्तरं तेषामप्यारम्भणीयता स्यात् । तेषु हि नित्यं फलं प्रतीयते ॥ तदसदिति चेत्—तदसत्त्वमप्रामाण्यात् अन्यपरत्वाद्वा भवेत, तदुभयं कर्ममीमांसया विना न सिद्ध्यतीति तस्याः पूर्ववृत्तत्वमभ्युपेतव्यम् ॥ आद्यसूत्रं तज्ज्ञापनपरमिति चेन्न—तस्य स्वशास्त्रारम्भौपयिकविषयप्रयोजनपरत्वेन शास्त्रान्तराप्रामाण्यादिप्रतिपादनपरत्वाभावात् ॥ स्वार्थोपयोगित्वात् तदप्रामाण्यादिकमभिप्रेतमिति चेत्—तर्हि तस्य स्वोपजीव्यज्ञापनमपेक्षितमिति कर्मविचारस्य तर्कपादस्य च पूर्ववृत्तत्वमापद्येत । शास्त्रान्तराप्रामाण्यं हि कर्ममीमांसाप्रथमपादावसेयम् । अन्यपरत्वं वाक्यान्तरविरोधादिभिः । नित्यफलाविवक्षाध्यवसायश्च तत्रत्यन्यायाधीनः । शास्त्रान्तरप्रमेयदौस्थ्यञ्च तर्कपादे दर्शयिष्यते । किञ्च आद्यसूत्रादेव शास्त्रान्तरगतनित्यफलासत्त्वावगमश्चेत्—अन्योन्याश्रयः—ब्रह्मविचारे प्रवृत्तस्यान्यत्र नित्यफलासत्त्वावगमः, तदवगमाद्ब्रह्मविचारे प्रवृत्तिरिति । न चैवंसति धर्मजिज्ञासासूत्रेऽप्यन्योन्याश्रयः शङ्कनीयः; पित्रादिप्रेरणया कृतसाङ्गाध्ययनस्य पुरुषस्य प्रयोजनवदर्थापातप्रतीत्यैव प्रवृत्त्युपपत्तेः । येषां धर्मविचारो वैधः, तेषामेवान्योन्याश्रयः—वैधत्वज्ञानाद्विचारः, विचारात् वैधत्वज्ञानमिति ।

किञ्च—अनित्यफलहेयताज्ञानस्य स्वर्गादिफलजिहासाद्वारेण ब्रह्मविचारोपयोगो वक्तव्यः; स्वर्गादिफलस्यानित्यत्वं दुःखसंभिन्नत्वं च कथमवगम्यते? शास्त्रान्तरेण चेत्, तत्रैव नित्यपुरुषार्थसिद्धेः नैराकाङ्क्ष्येण ब्रह्मविचारप्रवृत्त्ययोगात् तत्पूर्ववृत्तत्वानुपपत्तिः ॥ यत् सुखम्, तदनित्यमिति स्वोत्प्रेक्षिततर्कमात्रेण चेत्, तेनैव निरस्तनित्यपुरुषार्थसंभावनतया ब्रह्मविचारः प्रतिबध्येत ॥ दुःखनिवृत्तेरन्तराहित्यात् स्वाभाविकसुखस्यानादिभावत्वादन्तविरहोपपत्तेश्च न नित्यपुरुषार्थासंभावनेति चेत्-न; 'दुःखनिवृत्तिश्चेत् दुःखानुबन्धिनी दुःखनिवृत्तित्वात् संप्रतिपन्नवत्; सुखं चेत्, सुखत्वादेव कृतकम्' इत्येवंरूपकुतर्कोत्प्रेक्षासंभवेन केवलतर्कशरणानां नित्यपुरुषार्थसंभावनाया दुरुपपादत्वात् ॥ शास्त्रसिद्धनित्येतरविषयो व्याप्तिनिश्चय इति चेन्न; वेदान्तश्रवणपूर्वको व्याप्तिनिश्चयः, तत्पूर्वकं वेदान्तश्रवणमित्यन्योन्याश्रयप्रसङ्गात् ।

अतो ब्रह्मविचारं प्रति नित्यानित्यगतधर्मविवेकोपयोगाय नित्यानित्यविभागे प्रत्यक्षाप्रवृत्तेः, तर्कस्यातिप्रसक्तेः, शास्त्रान्तराणां ब्रह्मविचारनैराकाङ्क्ष्यापादकत्वात्, तद्विरोधेनानुपयोगाच्च वेद एव प्रमाणीकर्तव्ये—तत्रापातप्रतीतेरुभयभागसाधारण्यात्, नित्यानित्यनिश्चयस्य मीमांसाद्वयफलत्वेनान्योन्याश्रयस्य दुस्तरत्वाच्च नित्यानित्यगतहेयोपादेयत्वज्ञानं नित्यानित्यवस्तुविवेक इत्ययुक्तम् ॥ ननु शास्त्रान्तरेषु नित्यफलसंभावनाया निवारकाभावान्नित्यानित्यविवेकादिमतः तत्रापि प्रवृत्तिप्रसङ्ग इति यदुक्तम्; तन्न; शास्त्रान्तरनिवारकत्वादाद्यसूत्रस्य । ब्रह्मैव जिज्ञास्यं न प्रकृतिपुरुषाविति हि सूत्रार्थ इति—तदयुक्तम्; साधनचतुष्टयपूर्वकत्वा-

**एषां साधनत्वं च विनियोगावसेयम्। विनियोगश्च श्रुतिलिङ्गादिभ्यः। स च तार्तीयः।**

वादिभिरस्यार्थस्यानङ्गीकृतत्वात्। तापत्रयाभिहतत्वज्ञानपूर्ववृत्तत्ववादिभि[1]रयमर्थ उक्तः। न चायमर्थ उपपन्नः। तथाहि—न तावदयमर्थः सूत्रकृतोपदिश्यते, न चाज्ञाप्यते, किन्तूपपाद्यत इति वक्तव्यम्, न्यायनिबन्धनत्वात् सूत्राणाम्। उपपत्तिश्च शास्त्रान्तरदौर्बल्यमेव वा, स्वशास्त्रप्राबल्यमेव वा, समुच्चितमुभयं वा। न प्रथमः; स्वशास्त्रस्य[2] दौर्बल्ये ब्रह्मणोऽप्यजिज्ञास्यत्वात्। न द्वितीयः; शास्त्रान्तरस्य प्राबल्ये ब्रह्मण एव जिज्ञास्यत्वासिद्धेः। तृतीये सूत्रवैयर्थ्यम्; पूर्वमीमांसायामेव चोदनासूत्रप्रभृतिभिस्तदुभयसिद्धेः। तत एव तस्याः पूर्ववृत्तत्वापत्तिश्च; अवश्यापेक्षितत्वात्॥ वेदप्रामाण्यमात्रे सिद्धेऽपि ब्रह्मणि प्रामाण्यं न तावता सिद्ध्यतीति चेत्—तर्हि यैर्हेतुभिर्ब्रह्मणि प्रामाण्यासंभवशङ्का, ते परिहर्तव्याः स्युः। ते च सिद्धेव्युत्पत्त्यनुपपत्त्यादय इति तत्परिहारेण ब्रह्मणि वेदान्तप्रामाण्यसमर्थनपरत्वे अस्मदीय एव पक्षः परिगृहीतः स्यात्। अत एव दुःखत्रयाभिघातज्ञानस्य पूर्ववृत्तत्वमपि निरस्तम्। तथाहि—किमैहिकदुःखज्ञानं पूर्ववृत्तम्, उत नारकदुःखज्ञानम्, उत स्वर्गादेरप्यल्पास्थिरतया तापत्रयान्तर्गतत्वज्ञानम्? न प्रथमः; आयुर्वेदादिभिस्तन्निरसनोपायावगमात् वेदान्तविचारनैरपेक्ष्यात्। न द्वितीयः; निरयदुःखहेतुभूतपापनोदनकरव्रतनियमविधायकशास्त्रबाहु[3]ल्याद्वेदान्तनैरपेक्ष्यात्। तृतीये तु कर्मविचारापेक्षा स्यादेव; प्रथमत एवाध्ययनविधिवश्यस्य शास्त्रान्तरावगमावसरविधुरत्वात्; सत्यप्यवसरे स्वर्गाद्यल्पास्थिरत्वज्ञापकैस्तैरेव शास्त्रैर्मुक्त्युपायस्यावगतत्वेन वेदान्तनैरपेक्ष्यात्; वेदान्तविरुद्धार्थाभिधायिनां तेषामवगमस्य वेदान्तज्ञानपूर्ववृत्तत्वायोगात्; आपातप्रतीतेरितिहासपुराणयोश्चाल्पास्थिरत्वानन्तस्थिरत्वविपर्ययप्रतीतिहेतुत्वाच्च।

पूर्वं [4]व्याख्येयस्वभावात् क्रमनियम उक्तः; व्याख्यानस्वभावादपि तत्सिद्धिरिदानीमुच्यते **एषामिति**। **एषाम्** शमादीनाम्। **साधनत्वञ्च**। चः समुच्चये। **विनियोगावसेयम्**। **विनियोगः** अङ्गत्वज्ञापनम्। ततः किमित्यत्राह **विनियोगश्चेति**। ततोऽपि किमित्यत्राह **स च तार्तीय** इति। तृतीयाध्यायोक्त इत्यर्थः। इदं प्रदर्शनार्थमुक्तम्; कर्मविचारोक्तकृत्स्नन्यायसापेक्षत्वाद्ब्रह्मविचारस्य। एतानि हि कर्ममीमांसाध्यायानां प्रमेयाणि——प्रथमेऽध्याये प्रमाणलक्षणं वृत्तम्। द्वितीयेऽध्याये शाखभेदः कर्मभेदो वा; भेदहेतवश्च शब्दान्तराभ्याससङ्ख्यागुणप्रक्रियानामधेयानि। तृतीयेऽङ्गनिरूपणम्; अङ्गत्वज्ञापकानि प्रमाणानि श्रुतिलिङ्गवाक्यप्रकरणस्थानसमाख्यानानि। चतुर्थे क्रत्वर्थपुरुषार्थभेदनिरूपणेन पुरुषार्थैः क्रत्वर्थानां प्रयुक्तिनिरूपणम्। पञ्चमे क्रमः; क्रमप्रमाणानि श्रुत्यर्थपाठप्रवृत्तिमुख्यकाण्डानि। षष्ठेऽधिकारिनिरूपणम्। सप्तमे सामान्यातिदेशो निरूपितः। अष्टमे विशेषातिदेशः। नवमे ऊहः। दशमे बाधः। एकादशद्वादशयोस्तन्त्रप्रसङ्गौ। यथोक्तम्—"धर्मधीमानभेदाङ्गप्रयुक्तिक्रमकर्तृभिः। सातिदेशविशेषोहबाधतन्त्रप्रसक्तिभिः" इति। एतन्न्यायसापेक्षत्वं सङ्कर्षसापेक्षत्वञ्च ब्रह्मविचारे तत्र तत्र द्रष्टव्यम्। तस्मात् **स च तार्तीय** इति प्रदर्शनार्थमुक्तम्।

---

1 वादिभिरयमिति। यादवप्रकाशैरिति विशेष्यम्। 2 स्वशास्त्रस्य दौर्बल्ये इति। प्रथमविकल्पे एवकारप्रयोगात् शास्त्रान्तरदौर्बल्यमात्रस्योपपत्तित्वमिष्टम्, न स्वशास्त्रप्राबल्यस्य। एवञ्च स्वशास्त्रदौर्बल्येऽपि तस्योपपत्तित्वं वक्तव्यम्। तच्च घटत इति भावः। 3 शास्त्रबाहुल्यात् बहुशास्त्रसत्त्वात्। 4 व्याख्येयेत्यादि। उपासनमेवोपायः, तदपेक्षितञ्च कर्मेति वेदद्वाराव्याख्येयकर्मोपासनस्वरूपपरिशीलनेन वक्तव्यमुक्तम्। व्याख्यानभूत पूर्वोत्तरमीमांसागतिमनुरुध्याप्युच्यत इति भावप्रकाशिका।

**उद्गीथाद्युपासनानि कर्मसमृद्ध्यर्थान्यपि ब्रह्मज्ञानापेक्षाणीति इहैव चिन्तनीयानि । तान्यपि कर्माण्यनभिसंहितफलानि ब्रह्मविद्योत्पादकानीति तत्सादुगुण्यापादनान्येतानि सुतरामिहैव सङ्गतानि । तेषां च कर्मस्वरूपाधिगमापेक्षा सर्वसंमता ॥**

अथ कर्मविचारापेक्षत्वे अभ्युच्चययुक्तिरुच्यते **उद्गीथादीति** । परेण प्रसङ्गात् सङ्गतिरुक्ता; अत्र तु साक्षात्सङ्गतिरुपपाद्यते । **कर्मसमृद्ध्यर्थान्यपीति,** "कर्मसमृद्ध्यर्थत्वे तत्प्रयोजनं तन्निर्वचनात्" इति वाक्यकारवचनं स्मारितम् । **ब्रह्मदृष्टिरूपाणीति** । अब्रह्मणि ब्रह्मत्वेन दृष्टिः ब्रह्मदृष्टिः । ब्रह्मदृष्टिरूपत्वात् ब्रह्मज्ञानसापेक्षाणीत्यर्थः । इतिर्हेतौ । **इहैव चिन्तनीयानि** न तु कर्मविचारे । **तान्यपि कर्माणि** । यत्समृद्ध्यर्थानि उद्गीथाद्युपासनानि तान्यपीत्यर्थः । **अनभिसंहितफलानि**—अनभिसंहितफलत्वात् ब्रह्मविद्योत्पादकानीत्यर्थः । इति हेतौ । **तत्सादुगुण्यापादनानि । सादुगुण्यं** प्रबलप्रतिबन्धके सत्यपि शीघ्रफलप्रदत्वम् ; **तदापादनानि** । ब्रह्मविद्यां शीघ्रं संपादयन्तीत्यर्थः । **एतानि** उद्गीथाद्युपासनानि अत **इहैव सुतरां सङ्गतानि** । प्रधानानुपयोगित्वेन सादृश्यादिना धीस्थत्वं प्रसङ्गात् सङ्गतिः । अन्यतरापेक्षया उभयापेक्षया वा सङ्गतिः साक्षात्सङ्गतिः । अत्र तुभयोरपेक्षितत्वं प्रतिपादितम् ; **ब्रह्मदृष्टिरूपाणीति**—उद्गीथाद्युपासनस्य ब्रह्मज्ञानापेक्षाऽभिहिता । **ब्रह्मविद्योत्पादकानीति** ब्रह्मज्ञानस्य उद्गीथाद्युपासनापेक्षाऽभिहिता । एतदभिप्रायेण **सुतरामिहैवेत्युक्तम्** । **इहैवेति** । उभयापेक्षायाः अत्रैव विद्यमानत्वात् सुतरां सङ्गतिरिहैव; न तु कर्मविचार इत्यर्थः ॥ ननु कथमुद्गीथादिविचारस्य ब्रह्मविचार एव सुतरां सङ्गतिः? कर्मविचारेऽपि सुतरां सङ्गतिरस्ति, उभयापेक्षया सङ्गतिर्हि सुतरां सङ्गतिः; कर्माङ्गाश्रयत्वादुद्गीथादिधियां तद्विचारस्य कर्मापेक्षाऽस्ति, कर्मणामपि स्वसमृद्ध्यर्थोद्गीथाद्युपासनापेक्षाऽस्तीत्युभयापेक्षाया विद्यमानत्वात् ॥ उच्यते । कर्मसमृद्ध्यर्थोद्गीथाद्युपासनापेक्षा केवलकर्मणां विद्याङ्गकर्मणां च तुल्या । अतः कर्मसमृद्ध्यर्थत्वहेतुः साधारणः । कर्माङ्गाश्रयत्वं पूर्वभागविचारसङ्गतेरसाधारणहेतुः । ब्रह्मज्ञानसापेक्षत्वमुत्तरभागविचारसङ्गतेरसाधारणहेतुः । एवं साधारणासाधारणहेतुद्वयवत्तासाम्येऽपि, ब्रह्मदृष्टिरूपोद्गीथाद्युपासनानां ब्रह्मज्ञानसापेक्षत्वात् तेन विना तच्चिन्तनमशक्यं पूर्वभागविचारे । न हि कर्मविचारात् पूर्वं ब्रह्मविचार उपपद्यते; प्रागुक्तसङ्गतिविशेषविशिष्टत्वात् तयोः । उत्तरभागे तु ब्रह्मज्ञानस्य सुलभत्वात् निर्वृत्तकर्मविचारस्योद्गीथाद्युपासनचिन्तनं कर्तुं शक्यम् । अत एव शक्यत्वादुद्गीथाद्युपासनानि उपनिषद्भागे विहितानि । अत एव ब्रह्ममीमांसायां निरूपितानि च ।

एवं वेदान्तभागविहितत्वब्रह्ममीमांसाविचारितत्वशक्यत्वरूपवैषम्यत्रयविशेषिताया उभयापेक्षाया उत्तरभाग एव विद्यमानत्वात् तन्निबन्धना सुतरां सङ्गतिस्तत्रैवेत्यभिप्रायेण, **सुतरामिहैव सङ्गतानीत्युक्तम्** । अयं चाभ्युच्चयहेतुः, यत् अप्रधानस्यार्थस्यापि साक्षात्सङ्गतत्वात् तस्याप्यवश्यापेक्षितः कर्मविचार इति । प्रधानप्रतिपाद्यस्य नियमेनापेक्षितत्वरूपः प्रधानहेतुः पूर्वमेवोक्तः ॥

ततः किं प्रकृतानन्तर्यस्येत्यत्राह **तेषां चेति** । **तेषाम्** उद्गीथाद्युपासनानाम् । **सर्वसंमता** । तत्साक्षात्सङ्गतत्वे हि विगानम् । उद्गीथाद्युपासने चिन्त्ये सति तस्य कर्मज्ञानापेक्षा सर्वाविगीता । यत्तु अधीतवेदान्तस्य कर्माधिगमापेक्षा नास्तीत्युक्तम्; तदयुक्तम्—वेदान्तेष्वपि उपायपर-मुक्तिपरवाक्य-

(महापूर्वपक्षः)

**यदप्याहुः—अशेषविशेषप्रत्यनीकं**

मात्राध्यायिनः पुरुषस्य ब्रह्मविचारोऽपि तृतीयचतुर्थाध्यायमात्रश्रवणप्रसङ्गात् ॥ तृतीयचतुर्थयोः प्रथमद्वितीयोक्तन्यायसापेक्षत्वमस्तीति चेत् — तर्हि कृत्स्नस्य ब्रह्मविचारस्य कर्मविचारन्यायसापेक्षत्वात् तस्यैव पूर्ववृत्तत्वम् ॥ जन्मान्तरसुकृतविशेषेण कस्यचिद् ब्रह्मविचारमात्रापेक्षेति चेत् — तस्य सुकृतविशेषेण तृतीयचतुर्थमात्रापेक्षा किं न स्यात्? अथवा सुकृतातिशयात् कृत्स्नब्रह्मविचारनिरपेक्षता किं न स्यात्? । किञ्च वेदान्तेषु उपायफलपरवाक्यमात्राध्ययनमशास्त्रीयमिति त्वयाऽपि वक्तव्यम्; तत् वेदान्तमात्राध्ययनस्यापि तुल्यम्; कृत्स्नस्वाध्यायाध्ययनस्य विहितत्वात् । अतो विध्यतिलङ्घिनां यत् अपेक्षितम, तदेव पूर्ववृत्तमित्यसङ्गतम् । कृत्स्नस्वाध्यायाध्यायिनोऽपि सुकृतवशात् क्वाचित्कश्रवणापेक्षायां पूर्वमेव दत्तमुत्तरम् ।

"विरोधादप्रमाणत्वात्" इत्यादिग्रन्थसंगृहीतानि दूषणानि अत्रोच्यत इत्यादिना सिद्धान्तभाष्येण परिहृतानि । तथा हि—कर्मणामनित्यफलत्वेन विरोधः अनभिसंहितफलत्वात् परिहृतः । भेदवासनाजनकत्वेनैक्यज्ञानविरोधस्तु, पृथगात्मानमिति पृथक्त्वज्ञानस्य मोक्षोपायत्वश्रुत्या परिहृतः । अयं विरोधो वक्ष्यमाणवस्तुसामर्थ्यान्तर्भूतश्च; मोक्षस्य सकलभेददर्शननिवृत्तिरूपतायाः प्रपञ्चमिथ्यात्वोपपादनसापेक्षत्वात् । ऐक्यज्ञानस्योपायत्वेऽपि कर्मणामदृष्टद्वारेणोपयोगादविरोधः । अप्रमाणत्वम्, 'क्रियावानेष ब्रह्मविदां वरिष्ठः' इत्यादिसन्दर्हितविनियोजकप्रमाणप्रदर्शनात् परिहृतम् । विविदिषार्थचित्तशुद्ध्युपयोगस्तु वेदनोत्पत्त्युपयुक्तमनोनैर्मल्यहेतुत्वोपपादनेन, विविदिषार्थत्वेऽपि तस्याहरहरुत्पत्त्यपेक्षोपपादनेन च प्रत्युक्तः । ज्ञानमात्रस्य हेतुत्वश्रवणं च साधनद्वित्वानभ्युपगमाद् दत्तोत्तरम् । सामर्थ्यं नाम मिथ्याभूतबन्धस्य ज्ञानैकनिवर्त्यत्वरूपं वस्तुसामर्थ्यम् । तत्तु प्रपञ्चमिथ्यात्वदूषणेन प्रतिवक्ष्यते । शमाद्यङ्गकताम्नानकृतो विरोधश्च प्रवृत्तिरूपयज्ञादेर्निवृत्तिरूपशमादेश्च भिन्नविषयत्वेनाविरोधात् परिहृतः । शमादयो ह्यविहिताप्रतिषिद्धनिषिद्धकाम्यविषया इत्युक्तम् । वाक्यार्थज्ञानस्यैव मोक्षोपायत्वं प्रत्यक्षविरोध-शास्त्रविरोधाभ्यां निरस्तम् । तत्र निवर्त्यवासनायाः निवर्तकोत्पत्तिप्रतिबन्धकत्वाभावेन श्रवणादेर्भेदवासनानिरासार्थमनपेक्षितत्वात् तद्वैयर्थ्यपरिहारस्यानुपपन्नत्वात्, 'श्रवणादिक्रमोन्निद्रवाक्यजा धीर्विमोचिका' इत्येतदपि परास्तम् ॥ (इति लघुसिद्धान्तः ॥)

साधनचतुष्टयस्य पूर्ववृत्तत्वे वस्तुसामर्थ्यं नाम हेतुरुक्तः । स पूर्वं **ब्रह्मस्वरूपाच्छादिके**त्यादिना प्रतिज्ञातः । तदुपपादनदूषणयोर्बहुग्रन्थकार्यत्वात् तदुभयं पूर्वं न कृतम् । अथ तदुपपादनायोपक्रमते । पूर्वमुपायोपदेशपरवाक्यपर्यालोचनया वस्तुसामर्थ्यव्यतिरिक्तहेतव उपन्यस्ताः, निरस्ताश्च । विविदिषितं ज्ञानमिति ह्युक्तम् । वस्तुसामर्थ्यं तु सिद्धपरवाक्यसिद्धम् । वस्तुस्वरूपोपदेशपरैरिति हि वक्ष्यते । अतः स्वरूपपरवाक्यपर्यालोचनामुखेन तदुपपादयितुमारभते **यदप्याहुरिति** । अपिना उपपादयिष्यमाणस्यार्थस्य प्राधान्यं सूच्यते । आहुरिति ग्रन्थकारबहुत्वम् । अनेन अस्य ग्रन्थस्य तत्तत्प्रबन्धोक्तसकलार्थगर्भितत्वञ्च दर्शितम । **सर्वे वेदान्ता आरभ्यन्त इति यदप्याहुः, तदनादरणीय**मित्युपर्यन्वयः । प्रथमं ब्रह्मैकमेव सत्यमिति प्रतिजानीते **अशेषेति** । **अशेषविशेषाः**—वक्ष्यमाणज्ञात्रादयः, विजातीयसजातीयस्वगता वा । स्वगतेष्वप्यन्वयिनो व्यावृत्तिरूपाश्च विशेषाः अशेषशब्देन विवक्षिताः; **तत्प्रत्यनीकम्**—स्वज्ञानेन निवर्तकं शुक्तिरिव रजतस्येत्यर्थः । निर्विशेषत्वे

**उद्गीथाद्युपासनानि कर्मसमृद्ध्यर्थान्यपि ब्रह्मज्ञानापेक्षाणीति इहैव चिन्तनीयानि । तान्यपि कर्माण्यनभिसंहितफलानि ब्रह्मविद्योत्पादकानीति तत्साद्गुण्यापादनान्येतानि सुतरामिहैव सङ्गतानि । तेषां च कर्मस्वरूपाधिगमापेक्षा सर्वसंमता ॥**

---

अथ कर्मविचारापेक्षत्वे अभ्युच्चययुक्तिरुच्यते **उद्गीथादीति** । परेण प्रसङ्गात् सङ्गतिरुक्ता; अत्र तु साक्षात्सङ्गतिरुपपाद्यते । **कर्मसमृद्ध्यर्थान्यपीति**, "कर्मसमृद्ध्यर्थत्वे तत्प्रयोजनं तन्निर्वचनात्" इति वाक्यकारवचनं स्मारितम् । **ब्रह्मदृष्टिरूपाणीति** । अब्रह्मणि ब्रह्मत्वेन दृष्टिः ब्रह्मदृष्टिः । ब्रह्मदृष्टिरूपत्वात् ब्रह्मज्ञानसापेक्षाणीत्यर्थः । इतिर्हेतौ । **इहैव चिन्तनीयानि** न तु कर्मविचारे । **तान्यपि कर्माणि** । यत्समृद्ध्यर्थानि उद्गीथाद्युपासनानि तान्यपीत्यर्थः । **अनभिसंहितफलानि**—अनभिसंहितफलत्वात् ब्रह्मविद्योत्पादकानीत्यर्थः । इति हेतौ । **तत्साद्गुण्यापादनानि** । **साद्गुण्यं** प्रबलप्रतिबन्धके सत्यपि शीघ्रफलप्रदत्वम्; **तदापादनानि** । ब्रह्मविद्यां शीघ्रं संपादयन्तीत्यर्थः । **एतानि** उद्गीथाद्युपासनानि अत **इहैव सुतरां सङ्गतानि** । प्रधानानुपयोगित्वेन सादृश्यादिना धीस्थत्वं प्रसङ्गात् सङ्गतिः । अन्यतरापेक्षया उभयापेक्षया वा सङ्गतिः साक्षात्सङ्गतिः । अत्र तूभयोरपेक्षितत्वं प्रतिपादितम्; **ब्रह्मदृष्टिरूपाणीति**—उद्गीथाद्युपासनस्य ब्रह्मज्ञानापेक्षाऽभिहिता । **ब्रह्मविद्योत्पादकानीति** ब्रह्मज्ञानस्य उद्गीथाद्युपासनापेक्षाऽभिहिता । एतदभिप्रायेण सुतरामिहैवेत्युक्तम् । **इहैवेति** । उभयापेक्षायाः अत्रैव विद्यमानत्वात् सुतरां सङ्गतिरिहैव; न तु कर्मविचार इत्यर्थः ॥ ननु कथमुद्गीथादिविचारस्य ब्रह्मविचार एव सुतरां सङ्गतिः? कर्मविचारेऽपि सुतरां सङ्गतिरस्ति, उभयापेक्षया सङ्गतिर्हि सुतरां सङ्गतिः; कर्माङ्गाश्रयत्वादुद्गीथादिधियां तद्विचारस्य कर्मापेक्षाऽस्ति, कर्मणामपि स्वसमृद्ध्यर्थोद्गीथाद्युपासनापेक्षाऽस्तीत्युभयापेक्षाया विद्यमानत्वात् ॥ उच्यते । कर्मसमृद्ध्यर्थोद्गीथाद्युपासनापेक्षा केवलकर्मणां विद्याङ्गकर्मणां च तुल्या । अतः कर्मसमृद्ध्यर्थत्वहेतुः साधारणः । कर्माङ्गाश्रयत्वं पूर्वभागविचारसङ्गतेरसाधारणहेतुः । ब्रह्मज्ञानसापेक्षत्वमुत्तरभागविचारसङ्गतेरसाधारणहेतुः । एवं साधारणासाधारणहेतुद्वयवत्तासाम्येपि, ब्रह्मदृष्टिरूपोद्गीथाद्युपासनानां ब्रह्मज्ञानसापेक्षत्वात् तेन विना तच्चिन्तनमशक्यं पूर्वभागविचारे । न हि कर्मविचारात् पूर्वं ब्रह्मविचार उपपद्यते; प्रागुक्तसङ्गतिविशेषविशिष्टत्वात् तयोः । उत्तरभागे तु ब्रह्मज्ञानस्य सुलभत्वात् निर्वृत्तकर्मविचारस्योद्गीथाद्युपासनचिन्तनं कर्तुं शक्यम् । अत एव शक्यत्वादुद्गीथाद्युपासनानि उपनिषद्भागे विहितानि; अत एव ब्रह्ममीमांसायां निरूपितानि च ।

एवं वेदान्तभागविहितत्वब्रह्ममीमांसाविचारितत्वशक्यत्वरूपवैषम्यत्रयविशेषिताया उभयापेक्षाया उत्तरभाग एव विद्यमानत्वात् तन्निबन्धना सुतरां सङ्गतिस्तत्रैवेत्यभिप्रायेण, **सुतरामिहैव सङ्गतानीत्युक्तम्** । अयं चाभ्युच्चयहेतुः, यत अप्रधानस्यार्थस्यापि साक्षात्सङ्गतत्वात् तस्याप्यवश्यापेक्षिनः कर्मविचार इति । प्रधानप्रतिपाद्यस्य नियमेनापेक्षितत्वरूपः प्रधानहेतुः पूर्वमेवोक्तः ॥

ततः किं प्रकृतानन्तर्यस्येत्यत्राह **तेषां चेति** । **तेषाम्** उद्गीथाद्युपासनानाम् । **सर्वसंमता** । तत्साक्षात्सङ्गतत्वे हि विगानम् । उद्गीथाद्युपासने चिन्त्ये सति तस्य कर्मज्ञानापेक्षा सर्वाविगीता । यत्तु अधीतवेदान्तस्य कर्माधिगमापेक्षा नास्तीत्युक्तम्; तदयुक्तम्—वेदान्तेष्वपि उपायपर-मुक्तिपरवाक्य-

(महापूर्वपक्षः)

यदप्याहुः—अशेषविशेषप्रत्यनीकं

मात्राध्यायिनः पुरुषस्य ब्रह्मविचारेऽपि तृतीयचतुर्थाध्यायमात्रश्रवणप्रसङ्गात् ॥ तृतीयचतुर्थयोः प्रथमद्वितीयोक्तन्यायसापेक्षत्वमस्तीति चेत् — तर्हि कृत्स्नस्य ब्रह्मविचारस्य कर्मविचारन्यायसापेक्षत्वात् तस्यैव पूर्ववृत्तत्वम् ॥ जन्मान्तरसुकृतविशेषेण कस्यचिद् ब्रह्मविचारमात्रापेक्षेति चेत् — तस्य सुकृतविशेषेण तृतीयचतुर्थमात्रापेक्षा किं न स्यात्? अथवा सुकृतातिशयात् कृत्स्नब्रह्मविचारनिरपेक्षता किं न स्यात्? । किञ्च वेदान्तेषु उपायफलपरवाक्यमात्राध्ययनमशास्त्रीयमिति त्वयाऽपि वक्तव्यम्; तत् वेदान्तमात्राध्ययनस्यापि तुल्यम्; कृत्स्नस्वाध्यायाध्ययनस्य विहितत्वात् । अतो विध्यतिलङ्घिनां यत् अपेक्षितम्, तदेव पूर्ववृत्तमित्यसङ्गतम् । कृत्स्नस्वाध्यायाध्यायिनोऽपि सुकृतवशात् क्वाचित्कश्रवणापेक्षायां पूर्वमेव दत्तमुत्तरम् ।

"विरोधादप्रमाणत्वात्" इत्यादिग्रन्थसंगृहीतानि दूषणानि अत्रोच्यत इत्यादिना सिद्धान्तभाष्येण परिहृतानि । तथा हि—कर्मणामनित्यफलत्वेन विरोधः अनभिसंहितफलत्वात् परिहृतः । भेदवासनाजनकत्वेनैक्यज्ञानविरोधस्तु, पृथगात्मानमिति पृथक्त्वज्ञानस्य मोक्षोपायत्वश्रुत्या परिहृतः । अयं विरोधो वक्ष्यमाणवस्तुसामर्थ्यान्तर्भूतश्च; मोक्षस्य सकलभेददर्शननिवृत्तिरूपतायाः प्रपञ्चमिथ्यात्वोपपादनसापेक्षत्वात् । ऐक्यज्ञानस्योपायत्वेऽपि कर्मणामदृष्टद्वारेणोपयोगादविरोधः । अप्रमाणत्वम्, 'क्रियावानेष ब्रह्मविदां वरिष्ठः' इत्यादिसन्निहितविनियोजकप्रमाणप्रदर्शनात् परिहृतम् । विविदिषार्थचित्तशुद्ध्युपयोगस्तु वेदनोत्पत्त्युपयुक्तमनोनैर्मल्यहेतुत्वोपपादनेन, विविदिषार्थत्वेऽपि तस्याहरहरुत्पत्त्यपेक्षोपपादनेन च प्रत्युक्तः । ज्ञानमात्रस्य हेतुत्वश्रवणं च साधनद्वित्वानभ्युपगमाद् दत्तोत्तरम् । सामर्थ्यं नाम मिथ्याभूतबन्धस्य ज्ञानैकनिवर्त्यत्वरूपं वस्तुसामर्थ्यम् । तत्तु प्रपञ्चमिथ्यात्वदूषणेन प्रतिवक्ष्यते । शमाद्यङ्गकृताम्नानकृतो विरोधश्च प्रवृत्तिरूपयज्ञादेर्निवृत्तिरूपशमादेश्च भिन्नविषयत्वेनाविरोधात् परिहृतः । शमादयो ह्यविहिताप्रतिषिद्धनिषिद्धकाम्यविषया इत्युक्तम् । वाक्यार्थज्ञानस्यैव मोक्षोपायत्वं प्रत्यक्षविरोध-शास्त्रविरोधाभ्यां निरस्तम् । तत्र निवर्त्यवासनायाः निवर्तकोत्पत्तिप्रतिबन्धकत्वाभावेन श्रवणादेर्भेदवासनानिरासार्थमनपेक्षितत्वात् तद्वैयर्थ्यपरिहारस्यानुपपन्नत्वात्, 'श्रवणादिक्रमोन्निद्रवाक्यजा धीर्विमोचिका' इत्येतदपि परास्तम् ॥ (इति लघुसिद्धान्तः ॥)

साधनचतुष्टयस्य पूर्ववृत्तत्वे वस्तुसामर्थ्यं नाम हेतुरुक्तः । स पूर्वं ब्रह्मस्वरूपाच्छादिकेत्यादिना प्रतिज्ञातः । तदुपपादनदूषणयोर्बहुग्रन्थकार्यत्वात् तदुभयं पूर्वं न कृतम् । अथ तदुपपादनायोपक्रमते । पूर्वमुपायोपदेशपरवाक्यपर्यालोचनया वस्तुसामर्थ्यव्यतिरिक्तहेतव उपन्यस्ताः, निरस्ताश्च । विविदिषितं ज्ञानमिति ह्युक्तम् । वस्तुसामर्थ्यं तु सिद्धपरवाक्यसिद्धम् । वस्तुस्वरूपोपदेशपरैरिति हि वक्ष्यते । अतः स्वरूपपरवाक्यपर्यालोचनामुखेन तदुपपादयितुमारभते यदप्याहुरिति । अपिना उपपादयिष्यमाणस्यार्थस्य प्राधान्यं सूच्यते । आहुरिति ग्रन्थकारबहुत्वम् । अनेन अस्य ग्रन्थस्य तत्तत्प्रबन्धोक्तसकलार्थगर्भितत्वञ्च दर्शितम् । सर्वे वेदान्ता आरभ्यन्त इति यदप्याहुः, तदनादरणीयमित्युपर्यन्वयः । प्रथमं ब्रह्मैकमेव सत्यमिति प्रतिजानीते अशेषेति । अशेषविशेषाः—वक्ष्यमाणज्ञात्रादयः, विजातीयसजातीयस्वगता वा । स्वगतेष्वप्यन्वयिनो व्यावृत्तिरूपाश्च विशेषाः अशेषशब्देन विवक्षिताः; तत्प्रत्यनीकम्—स्वज्ञानेन निवर्तकं शुक्तिरिव रजतस्येत्यर्थः । निर्विशेषत्वे

**चिन्मात्रं ब्रह्मैव परमार्थः, तदतिरेकि नानाविधज्ञातृज्ञेयतत्कृतज्ञानभेदादि सर्वं तस्मिन्नेव परिकल्पितं मिथ्याभूतम्; "सदेव सोम्येदमग्र आसीदेकमेवाद्वितीयम", "अथ परा यया तदक्षरमधिगम्यते, यत्तदद्रेश्यमग्राह्यमगोत्रमवर्णमचक्षुःश्रोत्रं तदपाणिपादं नित्यं विभुं सर्वगतं सुसूक्ष्मं तदव्ययं यद्भूतयोनिं परिपश्यन्ति धीराः', 'सत्यं ज्ञानमनन्तं ब्रह्म', 'निष्कलं**

---

शून्यता स्यादित्यत्राह **चिन्मात्र**मिति । चिच्छब्देन तुच्छत्वव्यावृत्तिः । स्वयंप्रकाशत्वं हि चित्त्वम् । **मात्र**चा ज्ञेयत्वव्यावृत्तिः । यद्वा प्रत्यनीकत्वरूपधर्मोऽपि **मात्र**चा व्यावर्त्यते । यद्वा मात्रचा वस्तुतः समस्तविशेषविरहो विवक्षितः । **ब्रह्मैवे**त्येवकारेण सगुणब्रह्मव्यावृत्तिः । **परमार्थः**—तत्त्वावेदकप्रमाणविषयः । **सगुणवाक्यानां न** तत्परत्वम्; फलविशेषार्थमुपासनेऽन्यपरत्वादिति भावः । 'कथं ब्रह्मण एव सत्यत्वम्; अन्यदपि हि प्रतीयते' इति शङ्कायाम् ब्रह्मण एव परमार्थत्वसिद्धये, तद्व्यतिरिक्तस्य तज्ज्ञाननिवर्त्यत्वाय च विश्वस्य मिथ्यात्वं प्रतिजानीते **तद**दिति । "अथात आदेशो नेति नेति" इत्यादौ प्रकृतैतावत्त्वमिति सूत्रविषये कृत्स्नस्य मिथ्यात्वेन ब्रह्मणोऽपि मिथ्यात्वं परैः पूर्वपक्षीकृत्य निरस्तमिति तदभिप्रायेणोक्तम् **तदतिरेकी**ति । 'नेह नानास्ति' इत्यादिनिषेधवाक्यस्य ब्रह्मव्यतिरेकेऽपि निषेध्यनानात्वं सिद्ध्यतीति दर्शितम् । **नानाविधे**ति । पूर्वमशेषविशेषशब्दोक्तविशेषविवरणार्थम्, 'नेह नानास्ति' इत्यादिवाक्यगतनानाशब्दविवरणार्थं च **नानाविध**शब्दवाच्यभेदो विवृतः **ज्ञातृज्ञेये**ति । **तत्कृतज्ञानभेदः**—ज्ञातृज्ञेयावच्छिन्नवृत्तिज्ञानभेदः । अनेन वृत्तिस्फुरितचैतन्यभेदस्य स्वरूपप्रयुक्तताव्यावृत्तिः । भेदशब्देनैकैककोटिषु अवान्तरभेदा विवक्षिताः । **आदि**शब्देन निरसनीयदुःखरूपजन्मजरामरणान्युच्यन्ते । **सर्व**मिति । वक्ष्यमाणश्रुतिगत**सर्व**शब्दस्यायमर्थ इति भावः । **तस्मिन्नि**ति निरधिष्ठानभ्रमपक्षव्युदासः । एवकारेणाधिष्ठानबहुत्वनिषेधः । तथा सति हि प्रपञ्चस्य तज्ज्ञाननिवर्त्यत्वसिद्धिः । यद्वा **तस्मिन्नि**त्येकवचनेनाधिष्ठानैकत्वसिद्धिः । नानाध्यासाः नानाधिष्ठानका दृष्टाः, तत् कथमेकाधिष्ठानकत्वमिति विरोधं स्वयंप्रकाशवस्तुनोऽधिष्ठानत्वविरोधं च स्फोरयत्येवकारः । **मिथ्याभूतम्** मिथ्याभाववत्; वक्ष्यमाणमिथ्यात्वलक्षणवदित्यर्थः । ब्रह्मण एव सत्यत्वे, व्यतिरिक्तमिथ्यात्वे च किं प्रमाणमित्यत्राह **सदेवे**ति । **सदेवे**ति विजातीयभेदो व्यावर्त्यते; **एकमेवे**ति सजातीयभेदः; **अद्वितीय**मिति स्वगतभावरूपभेदः । षड्विधतात्पर्यलिङ्गोपेतसद्विद्यागतत्वादिदं वाक्यं प्रथममुपात्तम् । अथैवकारफलितनिषेधकण्ठोक्तिमत् परविद्यावाक्यमुपादत्ते **अथे**ति । इदञ्च कारणत्वशङ्कितदोषव्युदासोपक्रमककारणवाक्यम् । भूतयोनिमित्युक्त्वा अनन्तरं तस्यैव प्रपञ्चनात् । **अद्रेश्यमग्राह्यम्**—प्रत्यक्षागोचरोऽनुमानागोचरः; अथवा चक्षुरगोचर इन्द्रियान्तरागोचरः । **अगोत्रम्**—अनामकम् । **अवर्णम्**—अनैल्यादिकम् । **अचक्षुःश्रोत्रमपाणिपादम्**—ज्ञानकर्मेन्द्रियरहितम् । **नित्यं विभुम्**—कालदेशाभ्यामपरिच्छिन्नम् । **सर्वगतम्**—सर्वेण जगताऽधिष्ठानतया **गतम्**—आश्रितम्; वस्तुपरिच्छेदरहितमित्यर्थः । **सुसूक्ष्मम्** । अदृश्यत्वं न तुच्छत्वातिदूरत्वादिना, किन्तु **सुसूक्ष्म**त्वादित्यभिप्रायः । वाक्यभेदादनेकयत्तच्छब्दान्वयोपपत्तिः । अथ शोधकवाक्यमुपादत्ते **सत्य**मिति । अनृतजडपरिच्छिन्नव्यावृत्तनिर्विशेषवस्तुपरमिदं वाक्यम्, कारणवाक्यैकार्थ्यात् शोधकवाक्यान्तरैकार्थ्यात् सामानाधिकरण्यान्यथानुपपत्त्या चेति वक्ष्यते । **निष्कलम्** । कला अवयवाः; निरवयवमित्यर्थः । तत्र लिङ्गं **निष्क्रिय**त्वम् । **शान्तम्**—ऊर्मिषट्करहितम्; अशनायापिपासे शोकमोहौ जरामृत्यू च ऊर्मयः । **निरवद्यं**

'यतो वा इमानि भूतानि जायन्ते', 'सदेव सोम्येदमग्र आसीत्', 'आत्मा वा इदमेक इवाग्र आसीत्' इत्यादिभिर्जगत्कारणतयोपलक्षितस्य ब्रह्मणः स्वरूपमिदमुच्यते—सत्यं ज्ञानमनन्तं ब्रह्मेति । तत्र सर्वशाखा-प्रत्ययन्यायेन कारणवाक्येषु सर्वेषु सजातीयविजातीयव्यावृत्तमद्वितीयं ब्रह्म अवगतम् । जगत्कारणतयोपलक्षितस्य ब्रह्मणोऽद्वितीयस्य प्रतिपिपादयिषितं स्वरूपं तदविरोधेन वक्तव्यम् । अद्वितीयत्व-श्रुतिर्गुणतोऽपि सद्वितीयतां न सहते । अन्यथा 'निरञ्जनम्' 'निर्गुणम्' इत्यादिभिश्च विरोधः । अतश्चैतल्लक्षणवाक्यमखण्डैकरसमेव प्रतिपादयति ॥

ननु च—सत्यज्ञानादिपदानां स्वार्थप्रहाणेन स्वार्थविरोधिव्यावृत्तवस्तुस्वरूपोपस्थापनपरत्वे लक्षणा स्यात् ॥

---

कारणवाक्यैकार्थ्यमित्यर्थः । कारणवाक्यैकार्थ्यं कुतोऽपेक्षितम्, ऐकार्थ्ये सति कथं वा निर्विशेष-परत्वमित्यत्राह **यत** इत्यादि । यतो वा इमानीत्यादि लक्षणवाक्यम् । एतस्य कारणत्वानुवादेन लक्षणपरत्वात् कारणत्वप्रापकं वाक्यमाह **सदेवेति** । **उपलक्षितस्य** । उपलक्षणं नाम चन्द्रस्य शाखेव तटस्थं ज्ञापकम् । **सत्यं ज्ञानमनन्तं ब्रह्मेतीति** । अनेन वाक्येनेत्यर्थः । कारणवस्तुनः स्वरूपशोधकत्वात् कारणवाक्यैकार्थ्यमस्यापेक्षितमित्युक्तं भवति । अस्तु कारणवाक्यैकार्थ्यम् । तत्तु सगुणब्रह्मकारणत्वत्वादिभिः, "यः सर्वज्ञः सर्ववित् यस्य ज्ञानमयं तपः । तस्मादेतद् ब्रह्म नाम रूपमन्नं च जायते", "तमीश्वराणां परमं महेश्वरम्...स कारणं करणाधिपाधिपः" इत्यादिवाक्यैरेव स्यादित्यत्राह **तत्रेति** । **तत्र**—कारणवाक्यैकार्थ्येऽपेक्षिते । सर्वशाखाप्रत्ययन्यायो ह्यनुक्तार्थस्वीकारफलः । तेन अत्रानुक्तस्य उपनिषदन्तरोक्तस्यार्थस्य स्वीकर्तव्यत्वे सति, सगुणमात्रपरासूपनिषत्सु निर्गुणमपि ब्रह्मोक्तं भवति । तत्रापच्छेदन्यायेन निर्गुणवाक्यानां बलीयस्त्वात् सर्वत्र सजातीयविजातीयव्यावृत्तमद्वितीयं ब्रह्मैव प्रतिपादितं भवतीत्यभिप्रायः । ततः किमित्यत्राह **जगदिति** । **जगत्कारणे**त्यादिपदैः कारणवाक्योक्तमर्थ-मनुवदति । **प्रतिपिपादयिषितम्**—तात्पर्यभूमिः । वस्तुमात्र एव तात्पर्यमित्यर्थः । **तदविरोधेन वक्तव्यम्**—कारणवाक्यप्रतिपन्नब्रह्मस्वरूपशोधकत्वात् तदविरोधेनानेन वाक्येन वक्तव्यमित्यर्थः । नरपतिरद्वितीय इत्यादिवत् समाभ्यधिकराहित्येऽद्वितीयत्वमुपपन्नमिति तदैकार्थ्येऽपि न निर्गुणपरत्वसिद्धिरित्यत्राह **अद्वितीयत्वश्रुतिरिति** । **सदेव, एकमेवेति** विजातीयसजातीयव्यावर्तकावधारणद्वयसमभिव्याहृतत्वादिदम-द्वितीयपदं गुणतोऽपि सद्वितीयतां न सहत इत्यभिप्रायः । एवं कारणवाक्यैकार्थ्यात् सत्यज्ञानादिवाक्यस्य वस्तुमात्रपरत्वमुपपादितम्; अथ शोधकवाक्यान्तरैकार्थ्यं हेतुरुच्यते **अन्यथेति** । **अन्यथा**—सत्यज्ञानादि-वाक्यस्य विशिष्टपरत्वे, निरञ्जनं निर्गुणमित्यादिभिर्विरोधः स्यात् । अतस्तदविरोधायेदं वाक्यं निर्विशेष-वस्तुमात्रपरमित्यर्थः । **अन्यथा निरञ्जनं निर्गुणमित्यादिभिर्विरोधश्चे**त्यनेनाद्वितीयत्वश्रुतेर्गुणतोऽपि सद्वितीय-तानिषेधपरत्वं च अर्थादुपपादितं भवति । हेतुत्रयेणोपपादितमर्थं निगमयति **अतश्चेति** । **अतः** पूर्वोक्तसामानाधि-करण्यान्यथानुपपत्त्या, पश्चादुक्तकारणवाक्यशोधकवाक्यान्तरैकार्थ्यरूपहेतुद्वयेन चेत्यर्थः । **एत-ल्लक्षणवाक्यम्**—स्वरूपलक्षणवाक्यम् । **अखण्डैकरसम्**—निर्विशेषतैकस्वभावमेव प्रतिपादयतीत्यर्थः ।

अथ मुख्यार्थपरित्यागेन लक्षणास्वीकारे दोषमुद्घाटयति **ननु चे**त्यादिना । **स्वार्थप्रहाणेन** । स्वार्थो हि विशेषणद्वारकं विशेष्यम्; तत्प्रहाणेनेत्यर्थः । लक्षणात्वमभ्युपगम्यादोषतां प्रतिजानीते **नैष दोष** इति ।

**नैष दोषः, अभिधानवृत्तेरपि तात्पर्यवृत्तेर्बलीयस्त्वात् । सामानाधिकरण्यस्य ह्यैक्य एव तात्पर्यमिति सर्वसमतम् ॥ ननु च स पदानां लक्षणा न दृष्टचरी ॥ ततः किम् ? वाक्यतात्पर्याविरोधे सति एकस्यापि न दृष्टा । समभिव्याहृतपदसमुदायस्यैतत्तात्पर्यमिति निश्चिते सति, द्वयोस्त्रयाणां सर्वेषां वा तदविरोधाय एकस्येव लक्षणा न दोषाय । तथा च शास्त्रस्थैरभ्युपगम्यते । कार्यवाक्यार्थवादिभिर्लौकिकवाक्येषु सर्वेषां पदानां लक्षणा समाश्रीयते । अपूर्वकार्य एव लिङादेर्मुख्यवृत्तत्वात् लिङादिभिः क्रियाकार्यं लक्षणया प्रतिपाद्यते । कार्यान्वितस्वार्थाभिधायिनाञ्चेतरेषां पदानामपूर्वकार्यान्वित एव मुख्यार्थ इति क्रियाकार्यान्वितप्रतिपादनं लाक्षणिकमेव ।**

---

मुख्यार्थत्वमुत्तरत्राभिधास्यते । हेतुमाह **अभिधानवृत्तेरपीति** । [1]तात्पर्यवृत्तिर्नाम—तात्पर्यादागता वृत्तिः, तत्परत्वरूपा वा । सा चात्र लक्षणावृत्तिर्विवक्षिता । वाक्यतात्पर्यविरोधिमुख्यवृत्तेरपि वाक्यतात्पर्यानुगुण-लक्षणावृत्तेर्बलीयस्त्वादित्यर्थः । कस्मिन्नर्थे तात्पर्यम्, यदनुरोधाय लक्षणास्वीकार इत्यत्राह **सामानाधि-करण्यस्येति** । **ऐक्य एव तात्पर्यमिति** । तात्पर्यनिश्चायिका समानविभक्तिरिति भावः । आनन्दमयाधिकरणे सिद्धान्तिना ह्येतत् वक्ष्यते । **सर्वसम्मतम्** । विशिष्टैक्यवादिभिरन्यैश्च सम्मतमित्यर्थः । गङ्गायां घोष इत्यादिषु सर्वपदलक्षणा न दृष्टेति चोदयति **ननु चेति** । तात्पर्यनिश्चायककतिपयमुख्यवृत्त्या तदनुगुणमन्येषां पदानां लाक्षणिकत्वमाश्रयणीयम्, सर्वपदलक्षणायां तु तन्न संभवतीत्यभिप्रायः । [2]तात्पर्याविरुद्धपदमुख्यार्थस्वीकारः तात्पर्यविरुद्धपदलक्षणास्वीकारस्याविरुद्ध इत्याशयेनाह **ततः किमिति** । **ततः** किमित्यभिप्रेतं विवृण्वन् प्रतिबन्दिमुखेन विवक्षितार्थं (विपक्षेबाधं) दर्शयित्वा परिहर्तुं विपक्षेबाधगर्भां प्रतिबन्दीमाह **वाक्यतात्पर्येति** । यदि अविरुद्धपदमुख्यार्थत्वं विरुद्धपदलक्षणाविरोधि, तर्हि गङ्गायां मत्स्याः प्रतिवसन्तीत्यादिषु अविरोधेन एकस्यापि पदस्य लक्षणानङ्गीकारात् गङ्गायां घोष इत्यादिष्वेकस्यापि पदस्य लक्षणा न स्यादित्यभिप्रायः । गङ्गायां मत्स्या इति वाक्ये विरोधाभावाल्लक्षणानङ्गीकारः ; गङ्गायां घोष इत्यत्र विरोधात् लक्षणा न दोष इति चेत्—तदत्रापि तुल्यमित्याह **समभिव्याहृतेति** । सर्वपदलक्षणा च विषं भुङ्क्ष्वेत्यादिषु दृष्टेत्यभिप्रायः । **एतत्तात्पर्यमिति निश्चिते सतीति** । अपवादकरहितसमान-विभक्तिनिर्देशो निश्चायक इति भावः । **द्वयोस्त्रयाणामित्यादि** । अविरोधविरोधावेव मुख्यलक्षणावृत्तिस्वी-कारप्रयोजकौ ; न तु पदानामेकत्वद्वित्वादिकमित्यर्थः । न केवलं विषं भुङ्क्ष्वेत्यादिषु लौकिकप्रयोगेष्वेव सर्वपदलक्षणाऽगत्याऽऽश्रिता ; अन्यैरपि परीक्षकैराश्रितेत्याह **तथा चेति** । **तथा**—सर्वपदलक्षणाया अदोषत्वम् । **अभ्युपगम्यते** । अभ्युपगमहेतुसद्भावादभ्युपगमः फलित इति भावः । कैः परीक्षकैः केषु वाक्येषु सर्वपदलक्षणाऽऽश्रितेत्यत्राह **कार्यवाक्यार्थेति** । लौकिकवाक्येषु सर्वपदलाक्षणिकत्वमुपपादयति **अपूर्वकार्य एवेति** । क्रियाकार्यं लाक्षणिकमस्तु ; तत् कथं सर्वपदलक्षणेत्यत्राह **कार्यान्वितेति** । पदानामन्विताभिधायित्वेन कारकपदानामपूर्वकार्यान्विताभिधायिनां तदन्वित एव मुख्यार्थ इति तदन्वयपरित्यागे लक्षणैवेत्यर्थः ।

---

1 तात्पर्यवृत्तिपदं तत्पुरुषेण कर्मधारयेण वा यौगिकं गौण्यादिसाधारणमिह लक्षणापरमिति ।
2 तात्पर्याविरुद्धेति । तात्पर्याविरोधस्थलीयेत्यर्थः । तात्पर्यविरुद्धेति । तात्पर्यविरोधस्थलीयेत्यर्थः ।

[1]ननु गङ्गायां घोषः प्रतिवसतीत्यादिषु गङ्गापदस्य लाक्षणिकार्थत्वेऽपि तदन्विताभिधायिनां पदान्तराणाममुख्यत्वं न दृष्टमिति चेन्न—गङ्गापदलक्षितस्य कूलस्य वाक्यार्थत्वाभावात्; इह तु वाक्यस्य प्रधानप्रतिपाद्यभूतकार्यार्थसमर्पकपदस्य लाक्षणिकत्वात् तदन्विताभिधायिनां पदानां लक्षणा स्यादेव। अत एव कार्यवाक्यार्थवादिभिरित्युक्तम्। ननु "कमलानि निमीलन्ति कुमुदान्युन्मिषन्ति च" इति वाक्यार्थभूतनिमीलनादेर्लाक्षणिकत्वेऽपि तदन्विताभिधायिनां कमलादिपदानां न लाक्षणिकत्वं दृष्टमिति चेत्—अनभिप्रायज्ञश्चोदयति भवान्। सर्वपदानां निमीलनरूपवाक्यार्थपरत्वस्य कैश्चिद्व्यवस्थापितत्वाभावात् निमीलनोपस्थापकपदलक्षणायामपि न तदन्विताभिधायिनां लाक्षणिकतापत्तिः; [2]त्वया तु सर्वपदानां कार्यपरत्वाभ्युपगमात् तत्कार्यसमर्पकपदलाक्षणिकत्वे तदन्वितस्वार्थाभिधायिनां लक्षणा प्राप्नोति। तथा हि—कार्यवाक्यार्थवादिना पदानां किं विशिष्टकार्यैकदेशे पदशक्तिर्निश्चीयते, उत विशिष्टस्थायिकार्यैकदेशे? प्रथमे विशिष्टकार्यैकदेशत्वाविशेषात् स्वार्थेषु कारकपदानामिव लिङादेः क्रियाकार्ये मुख्यत्वप्रसङ्गः। द्वितीये विशिष्टस्थायिकार्यैकदेशपरत्वप्रहाणस्य सर्वपदानामविशिष्टत्वात् लिङादेः क्रियाकार्य इव कारकपदानां क्रियाकार्यान्वितपरत्वे लक्षणा स्यात्॥ पदानां विशिष्टकार्यैकदेशपरत्वे तुल्येऽपि लिङादेः क्रियाकार्ये लाक्षणिकत्वम्, कार्यान्वितमात्रे कारकपदानां मुख्यत्वमिति चेत्—यदि कार्यान्वितमात्रे कारकपदानां मुख्यत्वमिष्टम्, क्रियाकार्ये लिङादेर्लाक्षणिकत्वं कथम्?॥ स्थायिकार्यपरत्वेन वेदप्रयुक्तत्वनिश्चयाल्लक्षणयाऽपि क्रियाकार्यबोधनसंभवादिति चेत्—कारकपदानामपि स्थायिकार्यान्वितपरत्वेन वेदप्रयोगदर्शनात् लक्षणयाऽपि क्रियाकार्यान्वितबोधनोपपत्तेः क्रियाकार्यान्वितप्रतिपादनं लाक्षणिकं स्यात्॥ सास्नादिमन्मात्रमुख्यत्वेऽपि प्रमाणान्तरेण खण्डादिसिद्धिवत् लिङादेः कार्यमात्रपरत्वे कार्यविशेषस्य प्रमाणान्तरेण सिद्ध्यभावादुभयत्रैकशक्तिकल्पनाऽयोगात् शक्तिद्वयकल्पने गौरवाच्च लिङादेरपूर्वकार्ये मुख्यत्वमिति क्रियाकार्यप्रतिपादनं लाक्षणिकम्; अन्यथा शब्दशक्तेः कार्यमात्रविषयत्वात् प्रत्यक्षाद्यविषयत्वाच्च कार्यविशेषो निष्प्रमाणकः स्यादिति चेन्न—कार्यविशेषस्य प्रामाणिकत्वे तत्र शक्तिकल्पनम्, शक्तिकल्पने तस्य प्रामाणिकत्वमित्यन्योन्याश्रयप्रसङ्गात्। किञ्च यदि कार्यविशेषस्याप्रामाणिकत्वपरिहाराय तत्र शक्तिकल्पनम्—तर्हि कारकपदानां कार्यान्वितमात्रपरत्वे कार्यविशेषान्वयस्य प्रमाणान्तरागोचरत्वादुभयत्र शक्तिकल्पने गौरवाच्च कार्यविशेषान्वये प्रमाणं न स्यादिति तत्परिहाराय कार्यविशेषान्वये कारकपदानां मुख्यत्वमिति क्रियाकार्यान्वितपरत्वं लाक्षणिकं स्यात्॥ लिङादिसमभिव्याहारबलात् कारकपदानां कार्यविशेषान्वयपरत्वसिद्धिरिति चेत्, तर्हि स्वर्गकामपदसमभिव्याहारबलात् लिङादेः कार्यविशेषान्वयपरत्वसिद्धिरिति लिङादिः कार्यमात्रपरः स्यात्। तस्माल्लिङादेरपूर्वकार्य एव मुख्यवृत्तत्वेन क्रियाकार्यस्यामुख्यत्वे कारकपदानामपि क्रियाकार्यान्वितपरत्वं लाक्षणिकमित्येवाभ्युपगन्तव्यम्॥ कारकपदानामन्वयांशे[3] लक्षणा; न सर्वत्रेति चेत्—समानाधिकरणवाक्येऽपि पदानां प्रातिपदिकांश एव लक्षणा न समानविभक्ताविति तुल्यम्।

---

1 अभ्युपगमः फलित इत्युक्तम्। कथमस्मन्मते सर्वलक्षणाभ्युपगमः फलित इति कार्यवाक्यार्थवादी पृच्छति नन्विति। 2 त्वया कार्यवाक्यार्थवादिना।

3 अन्वयांश इति। विभक्तिमात्रस्य लाक्षणिकत्वम्। न प्रातिपदिकस्येत्यर्थः।

**अतो वाक्यतात्पर्याविरोधाय सर्वपदानां लक्षणाऽपि न दोषः ।**
**अत इदमेवार्थजातं प्रतिपादयन्तो वेदान्ताः प्रमाणम् ॥**

**प्रत्यक्षादिविरोधे च शास्त्रस्य बलीयस्त्वमुक्तम् । सति च विरोधे बलीयस्त्वं वक्तव्यम्; विरोध एव न दृश्यते; निर्विशेषसन्मात्रब्रह्मग्राहित्वात् प्रत्यक्षस्य ॥ ननु च घटोऽस्ति पटोऽस्तीति नानाकारवस्तुविषयं प्रत्यक्षं कथमिव सन्मात्रग्राहीत्युच्यते । विलक्षणग्रहणाभावे सति सर्वेषां ज्ञानानामेकविषयत्वेन धारावाहिकविज्ञानवदेकव्यवहारहेतुतैव स्यात् ॥ सत्यम्; तथैवात्र विविच्यते ॥**

---

सर्वपदलक्षणानुपपत्तिपरिहारमुपसंहरति **अत इति** । **अतः**—सर्वपदलक्षणाया उपपत्तिसिद्धत्वात् लौकिकैः परीक्षकैश्चाङ्गीकृतत्वाच्चेत्यर्थः ।

यदप्याहुरित्यारभ्य शास्त्रेण स्वाभिमतार्थसिद्धिमुपसंहरति **अत इदमेवेति** । **अतः**—निर्विशेषे वस्तुनि, तस्यैव पारमार्थ्ये, व्यतिरिक्तस्य मिथ्यात्वे, तस्य दोषपरिकल्पितत्वे, दोषस्य च सदसदनिर्वचनीयत्वे, ज्ञानमात्रनिवर्त्यत्वे च [1]उक्तैरुपपत्तिसहितैः श्रुतिवाक्यैरित्यर्थः । **इदमेवार्थजातम्**—पूर्वोद्दिष्टमेवार्थजातम्; न तु सगुणवस्त्वादिकम् । **प्रतिपादयन्तो वेदान्ताः प्रमाणमिति** । वाक्यान्तराणां काल्पनिकार्थपरत्वेन तत्त्वाऽऽवेदकत्वाभावादुक्तार्थविषयमेव वाक्यजातं तत्त्वे प्रमाणमित्यर्थः ॥

पूर्वं प्रत्यक्षविरोधे शास्त्रप्राबल्यम्, शास्त्रे च भेदावलम्बिनां बाध्यत्वं चोक्तम् । अथ प्रत्यक्षविरोधो नास्तीत्युपपादयितुं प्रक्रमते **प्रत्यक्षादीति** प्रत्यक्षविरोधे शास्त्रप्राबल्यप्रतिपादकग्रन्थेन वक्ष्यमाणार्थसङ्गतिरिति भावः । **चः** समुच्चये । अविरोधपक्षस्य [च] बुद्धिस्थत्वात् तस्य चान्वारुह्योक्तस्य च समुच्चयः । विरोधाभ्युपगमेऽपीत्यर्थः[2] । **सति चेति** । अत्र चशब्दो हिशब्दार्थः । अविरोधं प्रतिजानीते **विरोध एव न दृश्यत इति** । हेतुमाह **निर्विशेषेति** । विषयविषयिभावरूपभेदव्यावृत्त्यर्थं **सन्मात्रब्रह्मे**त्युक्तम् । प्रतीतिविरोधेन चोदयति । **ननु चेति** । विरोधमुपपादयति **घटोऽस्तीत्यादिना** । न हि केवलम्, अस्तीति प्रतीतिः, अपि तु 'घटोऽस्ति', 'पटोऽस्ति'इत्येव हि प्रतीतिरित्यर्थः । प्रतीतेर्भ्रान्तिरूपत्वसंभवात् तद्व्युदासार्थं व्यवहारविरोधमाह **विलक्षणेति** । परिहरति **सत्यमिति** । घटोऽस्ति, पटोऽस्तीत्यत्रास्तित्वव्यवहारस्यैकरूपत्वात् तावन्मात्रे भेदावभासमात्रे चाङ्गीकारः, भेदव्यवहारस्य प्रत्यक्षमूलत्वे भेदावभासस्य प्रत्यक्षत्वे चानङ्गीकारश्च सूच्यते **सत्यमि**त्यर्धाङ्गीकारेण । **तथैव** । यथा सन्मात्रस्यैव प्रत्यक्षत्वमेकव्यवहारहेतुतैव च स्यात्, तथैवेत्यर्थः । **अत्र** घटादिविषयस्वरूपविषयव्यवहारसमुदाये । **विविच्यते** । यथा इदं रजतमित्यत्र इदंव्यवहारस्य प्रत्यक्षमूलत्वं रजतव्यवहारस्य भ्रान्तिमूलत्वम्, तथा विविच्यत इत्यर्थः । तत्रेदमंशरजतांशव्यवहारयोरबाधितत्वबाधितत्वाभ्यां विवेकः; अत्र स्वरूपविषयभेदविषयव्यवहारयोरुभयोरप्य-

---

1 **उक्तैरिति** । निर्विशेषवस्त्वादिविषयकतया दर्शितैरित्यर्थः । **श्रुतिवाक्यैरिति** । तथा च **अत** इत्यस्य श्रुतिवाक्यानामुपपत्तिबलात् प्रत्यक्षादिविरुद्धार्थजातप्रतिपादकत्वसंभवस्योक्तत्वादित्यर्थः पर्यवस्यति । **पूर्वोद्दिष्टमेव** । प्रत्यक्षादिविरुद्धमेवेति यावत् ।

2 विरोधाविरोधरूपपक्षद्वयेपि शास्त्रबलीयस्त्वस्य दुरुपपादत्वात् विरोधपक्षे इत्यर्थं परिशेषयति **विरोधाभ्युपगमेपीत्यर्थ इति** । तथा च चोऽन्वारोहपर्यवसायीति भावः ।

कथम् ? ॥ घटोऽस्तीत्यत्रास्तित्वं तद्भेदश्च व्यवह्रियते । न च द्वयोरपि व्यवहारयोः प्रत्यक्षमूलत्वं संभवति, तयोर्भिन्नकालज्ञानफलत्वात् ; प्रत्यक्षज्ञानस्य चैकक्षणवर्तित्वात् । तत्र स्वरूपं वा भेदो वा प्रत्यक्षस्य विषय इति विवेचनीयम् । भेदग्रहणस्य स्वरूपग्रहणतत्प्रतियोगिस्मरणसव्यपेक्षत्वादेव स्वरूपविषयत्वमवश्याश्रयणीयमिति न भेदः प्रत्यक्षेण गृह्यते । अतो भ्रान्तिमूल एव भेदव्यवहारः ॥

किञ्च — भेदो नाम कश्चित् पदार्थो न्यायविद्भिर्निरूपयितुं न शक्यते । भेदस्तावन्न वस्तुस्वरूपम् ; वस्तुस्वरूपे गृहीते स्वरूपव्यवहारवत् सर्वस्माद्भेदव्यवहारप्रसक्तेः । न च वाच्यम्—स्वरूपे गृहीतेऽपि भिन्न इति व्यवहारस्य प्रतियोगिस्मरणसव्यपेक्षत्वात्, तत्स्मरणाभावेन तदानीमेव न भेदव्यवहारः—इति ।

---

बाधितत्वाविशेषे कथं विवेकः इत्यभिप्रायेणाह कथमिति । यौक्तिकबाधोऽस्तीत्याशयेनाह घटोऽस्तीति । किमस्तित्वं तद्भेदश्चैकः पदार्थः, उत द्वौ ? द्वित्वे च किं तदुभयव्यवहारयोः प्रत्यक्षमूलत्वम् , उतान्यतरस्य ? द्वयोरपि प्रत्यक्षमूलत्वे, प्रत्यक्षं किं युगपदुभयग्राहि उत क्रमेण इति विकल्पान् हृदि निधाय, 'अस्तित्वलक्षणस्वरूपतद्भेदयोरैक्यं न संभवति, भेदग्रहणस्य स्वरूपग्रहणप्रतियोगिस्मरणसापेक्षत्वात्, सन्मात्रग्रहणस्य तन्निरपेक्षत्वाच्च' इत्यभिप्रयन्नाह अस्तित्वं तद्भेदश्चेति । भिन्न इति व्यवहार इव घट इत्यसाधारणव्यवहारोऽपि घटस्य पटाद्व्यावृत्ततया प्रतीतौ प्रतियोगिसापेक्षत्वात् घटव्यवहार एव भेदव्यवहार इत्युच्यते । द्वित्वे[1] च द्वयोरपि प्रत्यक्षमूलत्वं नेत्याह न च द्वयोरपीति । द्वयोरपि व्यवहारयोः—स्वरूपविषयभेदविषयव्यवहारयोः । प्रत्यक्षं युगपद्वा क्रमेण वा मूलं स्यादिति विकल्पमभिप्रेत्य यौगपद्यं दूषयति तयोरिति । प्रतियोग्यपेक्षानपेक्षारूपवैषम्यादित्यभिप्रेतम् । क्रमपक्षं प्रतिक्षिपति प्रत्यक्षज्ञानस्येति । चः समुच्चये । एवं युगपत् क्रमेण चोभयव्यवहारस्य प्रत्यक्षमूलत्वमनुपपन्नमिति तयोरन्यतरस्य प्रत्यक्षविषयत्वमाह तत्रेति । भेदः प्रत्यक्षविषयः स्यादित्यत्राह भेदेति । अस्तित्वभेदयोरैक्यायोगे तद्व्यवहारयोर्भिन्नकालज्ञानफलत्वे च य एव हेतुः, तेनैवेत्येवकाराभिप्रायः । प्रत्यक्षस्य स्वरूपमात्रविषयत्वे कथं भेदव्यवहारसंभव इत्यत्राह—अतो भ्रान्तीति । तथा च संवित्सिद्धौ, "यौगपद्यक्रमायोगाद्व्यवच्छेदविधानयोः । ऐक्यायोगाच्च भेदो न प्रत्यक्ष इति [2]यो भ्रमः ॥" इति । व्यवच्छेदः भेदग्रहणम् । विधानम् स्वरूपग्रहणम् ॥

एवं भेदे प्रमाणानुपपत्तिरुक्ता ; अथ प्रमेयानुपपत्तिमाह[3] किञ्चेति । किञ्चेत्यादिना प्रमाणानुग्राहकतर्काभावोऽप्युपपादितो भवति । दुर्निरूपत्वं प्रतिजानीते भेदो नामेति । विकल्पासहत्वादिति भावः । न्यायविद्भिः । न त्वापातप्रतीतिमात्रतृप्तैरिति भावः । स्वरूपधर्मविकल्पं हृदि निधाय स्वरूपपक्षं दूषयति भेदस्तावदिति । कुतः इत्यत्राह वस्तुस्वरूप इति । स्वरूपव्यवहारवत् सर्वस्माद्भेदव्यवहारप्रसक्तेरिति । प्रतियोगिनिरपेक्षभेदव्यवहारप्रसक्तेरित्यर्थः । स्वरूपग्रहणस्य शब्दव्युत्पत्तिव्युत्पन्नशब्दस्मरणनिरपेक्षत्वेऽपि भिन्न इति व्यवहारस्तु तत्सापेक्षो यथा भवति, तथा प्रतियोगिस्मरणमपि भेदव्यवहारसामग्र्यन्तर्भूतम् ; अतस्तत्स्मरणाभावात् तदानीमेव भेदव्यवहाराभावः, न तु भेदाग्रहणादिति परमतमाशङ्क्याह न चेति ।

---

1. द्वित्वे चेति । द्वित्वस्य सिद्धत्वे चेत्यर्थः । 2. यो भ्रम इति । स भेदेतरेतराभावाविवेकमूल इत्युत्तरश्लोकावगम्यं दूषणम् । 3. प्रमेयानुपपत्तिमिति । भ्रान्तिमूलत्वोपपादनार्थमिति शेषः ।

**स्वरूपमात्रभेदवादिनो हि प्रतियोग्यपेक्षा च नोत्प्रेक्षितुं क्षमा; स्वरूपभेदयोः स्वरूपत्वाविशेषात् । यथा स्वरूपव्यवहारो न प्रतियोग्यपेक्षः, भेदव्यवहारोऽपि तथैव स्यात् । हस्तः, करः इतिवत् घटः, भिन्न इति पर्यायत्वञ्च स्यात् । नापि धर्मः । धर्मत्वे सति तस्य स्वरूपाद्भेदोऽवश्याश्रयणीयः । अन्यथा स्वरूपमेव स्यात् । भेदे च, तस्यापि भेदस्तद्धर्मः, तस्यापीत्यनवस्था । किञ्च—जात्यादिविशिष्टवस्तुग्रहणे सति भेदग्रहणम्, भेदग्रहणे सति जात्यादिविशिष्टवस्तुग्रहणमिति - अन्योन्याश्रयणम् ।**

**अतो भेदस्य दुर्निरूपत्वात् सन्मात्रस्यैव प्रकाशकं प्रत्यक्षम् ॥**

---

कुत इत्यत्राह स्वरूपेति । यथा न स्वरूपग्रहणे प्रतियोग्यपेक्षा, तथा भेदव्यवहारे चेति चशब्दार्थः । हिशब्दो हेतौ । स्वरूपग्रहण इव भेदव्यवहारे प्रतियोग्यपेक्षाया असम्भवादित्यर्थः । असंभवः कुत इत्यत्राह **स्वरूपेति** । स्वरूपभेदयोः स्वरूपत्वमविशिष्टमस्तु, ततः किं प्रतियोगिनिरपेक्षभेदव्यवहारप्रसक्तेः इति शङ्कायां तद्विवृणोति यथेति । स्वरूपपक्षे दूषणान्तरमप्याह हस्तः कर इति । पर्यायत्वे सति सहप्रयोगस्त्याज्यः स्यादिति भावः । स्वरूपपक्षे मृषावादिभिर्दूषणान्तराण्यप्युक्तानि; उदाहृतदूषणपरिहारेण तान्यपि प्रत्युक्तानि भवन्तीति भाष्ये न कण्ठोक्तानि । तान्युच्यन्ते— स्वरूपपक्षे भिन्न इति व्यवहर्तुं न युक्तम्, भिन्नो हि भेदयोगी । एतद्व्यवहारसिद्धये यदि स्वरूपभूतं भेदान्तरं[1] स्वीक्रियते, तत्रापि भिन्न इति व्यवहारस्यायुक्तत्वात् तत्स्वरूपभूतभेदान्तरमाश्रयणीयमित्यनवस्था । किञ्च — भेदः किमनुवृत्तः, उत व्यावृत्तः? व्यावृत्तश्चेत्, स किं स्वरूपम्, उत धर्मः? प्रथमे घटस्य भेदव्यवहारे कृते पटविषयभेदव्यवहारो न स्यात्, व्यावृत्तत्वात् । धर्मश्चेत, पूर्वोक्तदोषो धर्मत्वप्रयुक्तदूषणानि च स्युः । यद्यनुवृत्तः, स च स्वरूपं चेत्— शब्दान्तरेण सन्मात्रमङ्गीकृतं स्यात् । धर्मपक्षे पूर्ववत् । किञ्च—भिदिधातोर्हि विदारणमर्थः, एकस्य वस्तुनो भेदो नाम द्विधाभावः, तत्खण्डस्यापि तथा स्यात् । अतो वस्तुनि भेदाभ्युपगमे विदारणपरम्परया नाश एव स्यादित्येवमादीनि ।

अथ धर्मपक्षं दूषयति नापीति । कुतः इत्यत्राह **धर्मत्व** इति । स्वरूपाद्धर्मस्य भेदाभावेऽनिष्टमाह **अन्यथेति** । स्वरूपधर्मयोर्भेदोऽस्तु ; ततः किमित्यत्राह **भेदे चेति** । **तस्यापि भेदस्तद्धर्मः**—तस्य धर्मतया स्वीकृतस्यापि भेदस्य स्वरूपापेक्षया यो भेदः, सोऽपि तस्य धर्मतया स्वीकृतस्य भेदस्य धर्मः । यद्वा—स्वरूपाद्धर्मस्य यो भेदः स्वीकृतः, तस्य धर्मिभूताद्धर्मात् भेदोऽपि धर्मः । अन्यथा स्वरूपमेव स्यात् । तदा(था) च स्वरूपपक्षदूषणानि स्युः; [2]सोऽपि भेदो धर्मः, तस्यापि स्वरूपाद्भेदः इत्यनवस्थेत्यर्थः । एवं धर्मपक्षेऽनवस्थामुक्त्वाऽन्योन्याश्रयणमाह **किञ्चेत्यादिना** । त्रेधा च तत् —धर्मिणि प्रतियोगिनि च गृहीते भेदग्रहणम्, भेदे गृहीते धर्मिप्रतियोगिग्रहणमिति; धर्मे धर्मिणि च गृहीते भेदग्रहणम्, भेदे गृहीते धर्मधर्मिग्रहणमिति; अयं घट इत्यत्रेदंशब्दनिर्दिष्टस्य घटजातीयत्वविशिष्टग्रहणं पटजातीयाद्भेदग्रहणपूर्वकम्, अन्यथा घटजातीयत्वविरोधात्; पटाद्भेदग्रहणमिदंशब्दनिर्दिष्टस्य घटजातीयत्वग्रहणपूर्वकम्, अन्यथा पटत्वप्रसङ्गादिति; एवं धर्मधर्मिग्रहणे, धर्मितया प्रतियोगितया च ग्रहणे, तत्तज्जातीयत्वग्रहणे च त्रिधाऽन्योन्याश्रयणमुक्तम् ।

साधकप्रमाणाभावमुपसंहरति अत इति । अतः—स्वरूपधर्मपक्षोक्तैर्दूषणैः, दुर्निरूपत्वादित्यर्थः ।

---

1. भेदान्तरम् । भेदयोगिशब्दान्तर्भूतभेदपदार्थात् भेदः योगिशब्दवाच्येधर्मिणि । 2. सोपीति । अत इति आदिः ।

किञ्च—घटोऽस्ति पटोऽस्ति, घटोऽनुभूयते पटोऽनुभूयत इति सर्वे पदार्थाः सत्तानुभूतिघटिता एव दृश्यन्ते। अत्र सर्वासु प्रतिपत्तिषु सन्मात्रमनुवर्तमानं दृश्यत इति तदेव परमार्थः। विशेषास्तु व्यावर्तमानतया अपरमार्थाः, रज्जुसर्पादिवत्। यथा रज्जुरधिष्ठानतयाऽनुवर्तमाना परमार्थसती; व्यावर्तमानाः सर्पभूदलनाम्बुधारादयोऽपरमार्थाः॥ ननु च—रज्जुसर्पादौ रज्जुरियं न सर्प इत्यादिरज्ज्वाद्यधिष्ठानयाथार्थ्यज्ञानेन बाधितत्वात् सर्पादेरपारमार्थ्यम्; न व्यावर्तमानत्वात्। रज्ज्वादेरपि पारमार्थ्यं नानुवर्तमानतया, किन्त्वबाधितत्वात्। अत्र तु घटादीनामबाधितानां कथमपारमार्थ्यम्?

उच्यते। घटादौ दृष्टा व्यावृत्तिः। सा किंरूपेति विवेचनीयम्। किं घटोऽस्तीत्यत्र पटाद्यभावः? सिद्धं तर्हि घटोऽस्तीत्यनेन पटादीनां बाधितत्वम्। अतो बाधफलभूता विषयनिवृत्तिर्व्यावृत्तिः। सा व्यावर्तमानानामपारमार्थ्यं साधयति। रज्जुवत् सन्मात्रमबाधितमनुवर्तते। तस्मात् सन्मात्रातिरेकि सर्वमपरमार्थः। प्रयोगश्च भवति—सत् परमार्थः, अनुवर्तमानत्वात्, रज्जुसर्पादौ रज्ज्वादिवत्; घटादयोऽपरमार्थाः व्यावर्तमानत्वात्, रज्ज्वाद्यधिष्ठानसर्पादिवदिति।

---

इत्थं साधकप्रमाणाभाव उक्तः। प्रमेयानुपपत्तिरूपस्तर्कश्च तच्छेषभूतः; सामग्रीविषयेणार्थस्वभावविषयेण वा निरूपणेन विषयविशेषे प्रमाणव्यवस्थापनं हि तर्ककृत्यम्। अथ बाधकप्रमाणमुपन्यस्यति किञ्चेति। तत्रानुमानं विवक्षुर्व्याप्तिं शिक्षयति घटोऽस्तीत्यादिना। "वैधर्म्याच्च न स्वप्नादिवत्" इत्यत्र सूत्रकारेणैव दृश्यत्वानुमानस्य निराकरिष्यमाणत्वात् तन्निरासस्य मिथ्यात्वानुमानानां सर्वेषां दूष्यत्वप्रदर्शनार्थत्वात् पूर्वपक्षे व्यावर्तमानत्वहेतुरुपन्यस्यते। अनुवृत्तत्वप्रदर्शनाय **घटोऽस्ति पटोऽस्तीत्युक्तम्**। सदनुभूत्योरेकत्वं वक्ष्यमाणं हृदि निधायानुभूतेरनुवृत्तिं दर्शयति **घटोऽनुभूयते पटोऽनुभूयत** इति। ततः किमित्यत्राह **अत्रेति**। **व्यावर्तमानतया**—उत्तरोत्तरप्रतिपत्तिविषयेष्वविद्यमानतया। **रज्जुसर्पादिवत्**—रज्ज्वादिवत् सर्पादिवच्चेत्यर्थः। तद्विवृणोति **यथेत्यादिना**। बाधिताबाधितत्वाभ्यां द्वयोरपि हेत्वोः सोपाधिकत्वं दर्शयंश्चोदयति **ननु चेति**। उपाधिनिवृत्त्या पक्षे साध्यनिवृत्तिमाह **अत्र त्विति**। विपरीतोपाधिसद्भावाच्च व्याघात इति चाभिप्रायः। परिहरति **उच्यत इत्यादिना**। प्रथमं सम्प्रतिपन्नांशमाह **घटादौ दृष्टा व्यावृत्तिरिति**। सपक्षेषु सर्वेषु विद्यमानः पक्षे अविद्यमानो ह्युपाधिः। तत्र परेणोपाधित्वेनोक्तस्य धर्मस्य पक्षे विद्यमानत्वकथनेन व्यावर्तमानत्वहेतोः सोपधिकत्वं दूषयिष्यन् तदुपयोगित्वेन, घटादिषु दृष्टा व्यावृत्तिः किं संवादफलभूता,[1] उत बाधफलभूतेति विवेचनीयमित्याह **सा किंरूपेति**। बाधफलभूतत्वं दर्शयितुं व्यावृत्तिस्वरूपमाह **घटोऽस्तीत्यत्रेति**। घटोऽस्तीति प्रतीते विषये पटाभाव इत्यर्थः। **सिद्धं तर्हीति**। रज्जौ भूदलनादीनामभावो हि बाधितत्वमिति भावः। तस्मात् बाधफलभूतैवेत्याह **अत इति**। बाधो नाम—अदुष्टकारणजा निषेधबुद्धिः। तेन[2] पुरोवर्तिन्यभावो व्यावृत्तिः। एवं निरुपाधिकत्वाद्व्यावर्तमानत्वमपारमार्थ्यसाधकमित्याह **सेति**। अबाधितत्वफलभूतानुवृत्तेः परमार्थत्वप्रयोजकत्वादनुवर्तमाने पारमार्थ्यं दर्शयति **रज्जुवदिति**। अबाधो नाम अविरोधित्वम्; अनुवृत्तिर्नाम तत्कृतो विषयतयाऽन्वयः; पुरोवर्तिनि सद्भावो वा। इत्थं व्याप्तिः शिक्षिता। न केवलं तर्कः; अनुग्राह्यमप्यस्तीत्याह **प्रयोगश्च भवतीति**। मायावेदान्तिनो हि ज्ञानमात्र-

---

1. संवादफलभूता—पटादिसत्ताग्राहकप्रतीतिगोचरभूता। बाधफलभूता—पटो नास्तीत्यादिधीग्राह्या।
2. फलशब्दार्थज्ञापनाय तेनेत्युक्तम्। तेन—तदधीनप्रकाशेत्यर्थः।

एवं सति अनुवर्तमानाऽनुभूतिरेव परमार्थः, सैव सती ॥ ननु च—सन्मात्रमनुभूतेर्विषयतया ततो भिन्नम् ॥ नैवम् । भेदो हि प्रत्यक्षाविषयत्वात् दुर्निरूपत्वाच्च पुरस्तादेव निरस्तः । अत एव सतोऽनुभूतिविषयभावोऽपि न प्रमाणपदवीमनुसरति ; तस्मात् सत् अनुभूतिरेव ॥ सा च स्वतःसिद्धा ; अनुभूतित्वात् । अन्यतः सिद्धौ घटादिवदननुभूतित्वप्रसङ्गः । किञ्च अनुभवापेक्षा चानुभूतेर्न शक्या कल्पयितुम् , सत्तयैव प्रकाशमानत्वात् । न ह्यनुभूतिर्वर्तमाना घटादिवदप्रकाशा दृश्यते, येन परायत्तप्रकाशाऽभ्युपगम्येत ॥

अथैवं मनुषे—उत्पन्नायामप्यनुभूतौ विषयमात्रमवभासते, घटोऽनुभूयत इति, न हि कश्चित् , घटोऽयमिति

---

पारमार्थ्यवादिनः ; तत् कथं सतः पारमार्थ्यसाधनमित्यत्राह एवं सतीति । व्यावर्तमानत्वानुवर्तमानत्वयोरपारमार्थ्ये पारमार्थ्ये च प्रयोजकत्वे सिद्ध इत्यर्थः । तर्हि परमार्थद्वयं स्यादित्यत्राह सैव सतीति । अथ सदनुभूत्योर्विषयविषयिभावरूपं भेदमुद्घाटयंश्चोदयति ननु चेति । भिन्नत्वं साध्यम् ; विषयतयेति हेतुः । परिहरति नैवमिति । तत्र साध्यांशं दूषयति भेदो हीति । पुरस्तादेव—ज्ञेयभेदनिषेधादेव ज्ञानभेदोऽपि निरस्त इत्यर्थः । हेत्वंशं दूषयति अत इति । न प्रमाणपदवीमनुसरतीति । विषयविषयिभावो भ्रान्तिसिद्ध इत्यर्थः । भेदस्य भ्रान्तिसिद्धत्वमपिना समुच्चीयते । श्रुतिप्रतिपाद्यान् अर्थान् तर्केणापि साधयन्, विषयविषयिभावे निरस्ते ग्राहकाभावाच्छून्यत्वशङ्कां च व्यावर्तयन् स्वप्रकाशत्वमुपपादयति सा चेति । चः शङ्काया निवृत्तौ । तत्र व्यतिरेकिणं हेतुमाह अनुभूतित्वादिति । विपक्षे बाधं दर्शयति अन्यतः सिद्धाविति । यत् अन्यतः सिद्धम्, तत् अननुभूतिदृष्टम् ; यथा घट इति व्याप्तिरर्थाद्दर्शिता । अस्य व्यतिरेकिणः पराभिमतं प्रत्यनुमानं सोपाधिकमिति दर्शयन् अर्थादनुमानान्तरमप्याह किञ्चेत्यादिना । अनुमानान्तरं कण्ठोक्तम् , आर्थः प्रत्यनुमाननिरासो वा स्यात् । अनुमानान्तरस्य कण्ठोक्तत्वे किञ्चशब्दः स्वरसः ! प्रत्यनुमानस्य कण्ठोक्तत्वे न शक्या कल्पयितुमिति निर्देशः स्वरसः । किञ्चेति । न केवलं स्वमतोपपत्तिः, परमतानुपपत्तिश्चेत्यर्थः । अनुमानान्तरं चेति वाऽर्थः । अनुभवापेक्षा चेति । पूर्वोक्तसमुच्चेतव्यद्वये किञ्चशब्दसमुच्चितादन्यस्य समुच्चयपरश्चशब्दः । न शक्या कल्पयितुम् । ज्ञानं परप्रकाशम् , वस्तुत्वात् भासमानत्वाद्वा, घटादिवदिति प्रत्यनुमानम् । एवमादिभिः परप्रकाशत्वं न वक्तुं शक्यमित्यर्थः । कुत इत्यत्राह सत्तयैवेति । सत्तयैव प्रकाशमानत्वादिति हेतोरसिद्धिशङ्कानिवृत्तये तं विवृणोति न हीति । विद्यमानदशायां कदाचिदप्रकाशमानत्वं पराधीनप्रकाशत्वे प्रयोजकम् ; अतः प्रत्यनुमानं सोपाधिकमित्यर्थः । विद्यमानदशायां सर्वदा भासमानत्वादिति व्यतिरेक्यनुमानान्तरमिति स्फुटतरम् । यथा संवित्सिद्धौ, "यद्यप्रकाशमाना धीः कदाचिदवतिष्ठते" इत्यारभ्य—"घटादाविव तत्रापि कल्पनीयं प्रकाशनम्" इति । अनेन ग्रन्थेन स्वसत्तयैव प्रकाशमानत्वादिति हेतोरसिद्धिशङ्का परिहृता ॥ विद्यमानत्वे सर्वदा प्रकाशमानत्वं सुखादावप्यस्तीत्यनैकान्त्यमिति चेन्न—सुखादिव्यतिरिक्तत्वे सतीति विशेषणस्याभिप्रेतत्वात् । सिद्धान्तिमते सुखादेरपि ज्ञानविशेषत्वेन पक्षेऽन्तर्भावान्नानैकान्त्यम् । एवमनुमानान्तरमुक्तम् । शङ्कितप्रत्यनुमानस्य सोपाधिकत्वञ्च दर्शितम् ॥

अथ प्राकट्यानुमेयपक्षं निराचिकीर्षुरनुवदति अथैवं मनुष इत्यादिना । प्रथमं स्वसत्तयैव प्रकाशमानत्वादिति हेतोरसिद्धिमुपपादयति उत्पन्नायामिति । अनेन स्वोक्तस्य, 'वस्तुत्वात्' 'भासमानत्वात्' इत्यादिप्रत्यनुमानस्य सोपाधिकत्वव्युदासः सेत्स्यतीति भावः । उत्पन्नायामप्यनुभूतौ विषयमात्रमवभासत इत्यत्र

जानन् तदानीमेवाविषयभूतामनिदम्भावामनुभूतिमप्यनुभवति । तस्माद्घटादिप्रकाशनिष्पत्तौ चक्षुरादि-करणसंनिकर्षवत् अनुभूतेः सद्भाव एव हेतुः । तदनन्तरमर्थगतकादाचित्कप्रकाशातिशयलिङ्गेनानुभूतिरनुमीयते ॥ एवं तर्ह्यनुभूतेरजडाया अर्थवत् जडत्वमापद्यत इति चेत्—किमिदमजडत्वं नाम? न तावत् स्वसत्तायाः

---

घटोऽयमितीत्यध्याहार्यम् । घटोऽयमिति विषयमात्रमवभासत इत्यर्थः । घटोऽयमिति जानन्निति हि वक्ष्यते । यथा संविसिद्धौ, "घटोऽयमिति विज्ञाने घटमात्र प्रकाशते न वित्तिरिति युष्माकं गोष्ठीषु ननु घुष्यते ॥" इति । घटोऽनुभूयत इतीत्यस्योत्तरत्रान्वयः । पूर्वत्रान्वयश्चेत्, 'विषयमात्रमवभासत' इत्यनेन विरोधः स्यात् । कथं विषयमात्रस्यावभासः; घटोऽनुभूयत इति अनुभवोऽपि प्रकाशत इति शङ्कायां विषयमात्रस्यैवावभा-समुपपादयति "घटोऽनुभूयत इत्यादिना । यदा घटोऽयमिति जानाति, न हि तदानीमेव घटोऽनुभूयत इति जानाति । कुत इत्यत्राह अविषयभूतामनिदम्भावामिति । अविषयभूताम्—घटशब्दार्थव्यतिरिक्ताम् । अनिदम्भावाम्—अयंशब्दार्थव्यतिरिक्ताम् । घटत्वविशिष्टं पृथुबुध्नोदराकारद्रव्यं घटशब्दार्थः । सन्निहितदेशवर्तमानकालविशिष्टत्वमयंशब्दार्थः । उभयव्यतिरिक्तो ह्यनुभवः । स तु घटोऽयमित्यनुभववेलायां नानुभूयत इत्यर्थः । अविषयभूतामिति साधारणनिर्देशः पटादीनामपि प्रदर्शनार्थः । अत एवाघटभूतामित्यनुक्तिः । यद्वा घटोऽनुभूयत इति पूर्वेणान्वयः । इतिर्हेतौ । यतो घट एवानुभूतिकर्म, न त्वनुभूतिरपि तदानीमनुभूतिकर्म भवति—तस्माद्विषयमात्रमवभासत इत्यर्थः । अस्यैव विवरणम् न हीति । शब्दलिङ्गालोकादीनां प्रकाशकानां ज्ञाततयैव प्रकाशकत्वं दृष्टम्; अतोऽनुभूतिरप्रकाशा चेत्, प्रकाशकत्वमपि न स्यादित्यत्राह तस्माद्घटादीति । सत्तया प्रकाशकं ज्ञायमानतया प्रकाशकञ्च द्विविधं प्रकाशकम् । तत्र सत्तया प्रकाशककोटिनिविष्टं ज्ञानमित्यर्थः । क एवं नियामकः इत्यत्राह तस्मादिति । स्वसत्तयैव प्रकाशमानत्वहेतोरसिद्धेः, अस्मदुक्तहेतोः सोपाधिकत्वनिरासाच्चेत्यर्थः । यद्यनुभूतिः स्वयमेव न प्रकाशते, तर्हि किं तस्यां प्रमाणमित्यत्राह तदनन्तरमिति । अर्थगतकादाचित्कप्रकाशातिशयलिङ्गेन—कादाचित्कत्वात् कार्यम्, कार्यत्वात् सहेतुकमित्यनुमानेन ज्ञायत इत्यर्थः । विषयगतप्राकट्यलिङ्गेन कथं स्वगतज्ञानमनुमीयत इति चेत्—स्वस्मै प्रकाशमानत्वात् स्वगतज्ञानानुमानमुपपद्यते । यदि ज्ञानपश्चाद्भाविना प्रकाशलिङ्गेन ज्ञानमनुमीयते, तर्हि घटोऽनुभूयत इति वक्तुमयुक्तम्, घटोऽन्वभावीत्येव वक्तुं युक्तमिति शङ्कायामुक्तं तदनन्तरमिति । प्रत्यासत्त्यतिशयात् वर्तमानत्वव्यपदेश इत्यर्थः । अर्थेन्द्रियसंप्रयोगसमनन्तरमेव घटोऽनुभूयत इति प्रतीतेः प्राकट्यलिङ्गेन ज्ञानानुमानानवकाशत्वशङ्का चानेन परिहृता तदनन्तरमिति । [पद्मपत्र]बहुपत्रवेधवदनुमानशैघ्र्यात् तथा प्रतीतिरुपपद्यत इति भावः । मृषावादी स्वदर्शनप्रसिद्ध्याऽनिष्टं प्रसञ्जयति एवं तर्हीति । जडत्वम्—ज्ञानव्यतिरिक्तत्वम्, अचित्त्वमित्यर्थः । इह चानुभूतिरजडेति विपर्यये पर्यवसानं प्रसञ्जनीयस्य जडत्वस्यानिष्टत्वञ्च प्रतिक्षेप्तुमजडत्वं विकल्प्य दूषयति किमिदमिति । किमिदं—न किमपि; दुर्निरूपमित्यर्थः; अनन्तरं शिरोद्वयप्रदर्शनाभावात् । दुर्निरूपत्वविवरणमुत्तरग्रन्थः । विकल्पपरो वा किंशब्दः । अजडत्वं नाम, किं हेतुत्वेनोक्तं विद्यमानदशायां सर्वदा प्रकाशमानत्वम्, उत साध्यतयाऽभिमतं स्वयमेव स्वस्य प्रकाशकत्वम् इति विकल्पोऽभिप्रेतः । तत्र प्रथमे कल्पे किमुत्पत्तिकालेऽपि प्रकाशाव्यभिचारो

प्रकाशाव्यभिचारः, सुखादिष्वपि तत्संभवात् । न हि कदाचिदपि सुखादयः सन्तो नोपलभ्यन्ते । अतोऽनुभूतिः स्वयमेव नानुभूयते, अर्थान्तरं स्पृशतोऽङ्गुल्यग्रस्य स्वात्मस्पर्शवदशक्यत्वादिति ॥ तदिदमनाकलितानुभवविभवस्य स्वमतिविजृम्भितम्; अनुभूतिव्यतिरेकिणो विषयधर्मस्य प्रकाशस्य रूपादिवत्

---

विवक्षितः, उतोत्पत्तिक्षणादूर्ध्वं प्रकाशाव्यभिचारः इति विकल्पोऽभिप्रेतः । तत्राद्ये शिरस्यसिद्धिः पूर्वमेवोक्तेति मत्वा द्वितीयेऽनैकान्तिकत्वमाह **सुखादिष्विति** । तद्विवृणोति **न हीति** । शिरोऽन्तरं दूषयति **अत इति** । **अतः**—हेतोरसिद्ध्यनैकान्तिकत्वाभ्यां साध्यमपि नेत्यर्थः । अनेन जडत्वं नानिष्टमिति दर्शितम् । अनुमानान्तरेण साधयिष्यन् इत्यत्राह **अर्थान्तरमिति** । व्याहतत्वान्न किञ्चिदपि प्रमाणमिममर्थं साधयितुमलमित्यर्थः । यथाहुः, "अङ्गुल्यग्रं यथाऽऽत्मानं नात्मना स्प्रष्टुमर्हति । स्वांशेन ज्ञानमप्येवं नात्मानं ज्ञातुमर्हति ॥" इति । एवं जडत्वप्रसङ्गरूपतर्कस्य विपर्यये पर्यवसानाभावः, व्याप्त्यभावः, इष्टप्रसङ्गत्वम्, व्याघातलक्षणप्रतितर्कपराहतत्वञ्च दर्शितम् । **इति—अथैवं मनुषे** इति पूर्वत्रान्वयः ॥ अथ स्वयंप्रकाशत्ववादमाह **तदिदमिति** । **अनाकलितानुभवविभवस्य** । स्वव्यतिरिक्तस्य कृत्स्नस्य प्रकाशकः सन्ननुभवः स्वात्मनि अनन्यापेक्ष इति एको विभवः । प्राकट्यहेतुको यो व्यवहारः 'प्रकाशते' इति, तं च जनयितुमयमेव क्षम इत्यपरः । एवं द्विविधोऽनुभवविभवोऽनाकलितो येन, सोऽनाकलितानुभवविभवः; तस्य । **स्वमतिविजृम्भितम्** । प्रमाणतर्कनिरपेक्षस्वोत्प्रेक्षामात्रविजृम्भितमित्यर्थः । स्वमतिमाहात्म्यमित्यधिक्षेपो वा । पारिशेष्यात् स्वयंप्रकाशत्वमभ्युपगमयितुं प्रथमं प्राकट्यलिङ्गं प्रतिक्षिपति **अनुभूतीत्यादिना** । **अनुभूतिव्यतिरेकिण** इत्यनेनासाधारण्यप्रतिक्षेपः फलितः । विषयधर्मशब्देन आत्मधर्मव्युदासः । तेन रूपादिवत् साधारण्यं फलितम् । अनुभूतिव्यतिरेकी विषयधर्मः प्रकाशः प्रत्यक्षयोग्यो न वा? न चेत्, लिङ्गज्ञानाभावात् अनुमानानुदयः । योग्यश्चेत्, अन्यैरप्युपलभ्यः स्यात् रूपादिवदिति भावः ॥ अपेक्षाबुद्धिजन्यस्य द्वित्वादेर्यथा तत्तदेकपुरुषवेद्यत्वम्; तद्वत् प्राकट्यमपि तदेकपुरुषवेद्यमिति चेन्न द्वित्वादिसङ्ख्याः प्रागेव सन्ति । यथैकत्र सर्वा दिशः; तत्तदुपाध्यपेक्षाबुद्ध्यभिव्यङ्ग्या हि ताः—एवमपेक्षाबुद्ध्यभिव्यङ्ग्यद्वित्वादि तस्यैव प्रकाशते, यद्गतमभिव्यञ्जकम् । अत तु रूपादिवत् जन्यधर्मत्वाभ्युपगमात् सर्वैरुपलभ्येत । अभिव्यङ्ग्यत्वेऽभिव्यञ्जकवत एवावभासते, सिद्धाञ्जनवतो निधिरिव । न तु जन्यं जनकस्यैवावभासते; न हि कुलालस्यैव घटः प्रकाशते । किञ्च **रूपादिवदिति** । धर्मस्य निराश्रयोत्पत्त्ययोगादतीतानागतयोरर्थयोर्ज्ञायमानयोरपि प्राकट्यायोगात् प्राकट्याभावेऽपि ज्ञानं प्रतीयत इति तत्र रूपादिवत् प्रकाशानुपलब्धेः प्राकट्येन ज्ञानानुमानं न संभवतीति भावः । यथा **संवित्सिद्धौ**, "अतीतेऽनागते चार्थे कथं प्राकट्यसंभवः । न हि धर्मिण्यसत्येव धर्मः संभवमृच्छति ॥" इति ॥ अतीतानागतयोरपि द्वित्वादिवत् प्राकट्यं जन्यत इति चेन्न; द्वित्वादेरपि निराश्रयोत्पत्त्ययोगात् । तत्र द्वित्वाद्यनुत्पत्तावपि घटादेरिव द्वित्वादेरपि धीस्थतया व्यवहारोपपत्तेश्च । ये पुनर्द्वित्वादिकं नाभ्युपगच्छन्ति, न तान् प्रति द्वित्वादिकं प्रतिबन्दीकार्यम् ॥ विषयविषयिभावसम्बन्धस्य विद्यमानाश्रयत्वनियमाभावाद्विषयविषयिभाव एव प्राकट्यमिति चेन्न, सम्बन्धिभ्यां विना प्रतीत्यनुपपत्त्या सम्बन्धि ज्ञानं च प्रतीयत इत्यनुमेयमेव न स्यात्—इति प्राकट्यं लिङ्गं न भवति ॥ एवं प्राकट्याद्यं वस्तु अनुपलब्धमप्यन्यथानुपपत्त्या

अनुपलब्धेः; उभयाभ्युपेतानुभूत्यैवाशेषव्यवहारोपपत्तौ प्रकाशाख्यधर्मकल्पनानुपपत्तेश्च । अतो नानुभूतिरनुमीयते । नापि ज्ञानान्तरसिद्धा ।

कल्प्यत इत्याशङ्क्य कल्पकस्यान्यथासिद्धिं दर्शयति उभयेति । अनुभूत्येत्युक्ते प्राकट्यस्य नामान्तरमुक्तं स्यादिति शङ्कानिरासार्थमुभयाभ्युपेतशब्दः । यां प्राकट्यजनकत्वेनाभ्यधाः, तयैवेत्येवकाराभिप्रायः । अशेषव्यवहारः—हानोपादानादि[व्यवहार]: । तस्यानुभूत्यैव संभवान्न तेन प्राकट्यं कल्प्यम् । ज्ञातो घटः, प्रकटो घटः इति व्यवहारश्च, इष्टो घटः द्विष्टो घट इति व्यवहारवदन्यथासिद्ध इत्यशेषशब्दाभिप्रायः । न हीच्छाजन्येनार्थगतेष्टत्वेन इच्छाऽनुमीयते ॥ घटः प्रकाशत इति घटकर्तृकतया प्रकाशः प्रतीयते; घटमनुभवतीति घटकर्मकतया अन्यकर्तृकतया चानुभवः प्रतीयते; एवमेकस्यैव कर्मकर्तृव्यवहारानुपपत्त्या कल्प्यत इति इति चेन्न—कारकभेदस्य धातुभेदनिबन्धनत्वेनार्थभेदनिबन्धनत्वाभावात्, यथा 'परशुमुद्यम्य वृक्षे निपातयति', 'परशुना वृक्षं छिनत्ति' इत्युक्तौ परशोः कर्मत्वकरणत्वे श्रुते; अथापि नार्थभेदः; वृक्षस्याधिकरणत्वकर्मत्वे श्रुते; तथापि नार्थभेदः—तथा व्यवहारभेदस्य धातुभेदनिबन्धनत्वेनार्थभेदहेतुकत्वाभावान्न व्यवहारः प्राकट्यकल्पक इत्यभिप्रायेण च अशेषव्यवहारोपपत्तावित्युक्तम् ॥ घटः प्रकाशत इति व्यवहारो घटगतातिशयेन विना नोपपद्यते, अन्यथा पटेऽपि तस्य व्यवहारस्य प्रसङ्गात् । स चातिशयः प्राकट्यमिति चेन्न—योऽतिशयो व्यवस्थापकः, स कथं घटे एव स्यात्; न पटे? ॥ इन्द्रियसंयोगवशादेति चेत्—तेन ज्ञानमेव व्यवस्थाप्यताम्, किमतिशयान्तराभ्युपगमेनेति । अयमर्थोऽप्यशेषव्यवहारशब्देनाभिप्रेतः ।

यत्तु घटोऽयमित्यनुभववेलायां नानुभूत्यनुभव इति—तन्न; अनुभूयत इति शब्दाप्रयोगस्याविवक्षानिबन्धत्वेनाननुभवप्रयुक्तत्वाभावात् । लोको ह्यनुभूतकृत्स्नार्थविवक्षाऽस्ति चेत्, तं सर्वं वदति । एकदेशाविवक्षाऽस्ति चेत्, अनुभूतैकदेशं वदति । एवमेकदेशविवक्षाऽपि नास्ति चेत्, न किञ्चिदपि वदति। अतोऽनुभूयत इति शब्दाप्रयोगो न तदप्रकाशत्वहेतुः । इदमप्यशेषव्यवहारशब्देनाभिप्रेतम्; विकलस्याविकलस्यापि व्यवहारस्याशेषशब्देन क्रोडीकर्तुं शक्यत्वात् । एवं व्यवहारस्यान्यथासिद्धत्वादनन्यथासिद्धस्यैव कल्पकत्वात् न प्रकाशः कल्प्य इत्यर्थः ॥

प्राकट्यानुमेयत्वानुपपत्तिं निगमयति अत इति । अतः—अनुपलब्धिव्यवहारान्यथासिद्धिभ्यां प्राकट्याभावात् अनुभूतिर्न प्राकट्यानुमेयेत्यर्थः । मानसप्रत्यक्षवेद्यत्वानुपपत्तिमभिप्रेत्याह नापि ज्ञानान्तरसिद्धेति । इदमत्र परोक्तमनुमानम्—ज्ञानं मानसप्रत्यक्षग्राह्यम्, क्षणिकत्वे सति आत्मविशेषगुणत्वात् सुखदुःखप्रयत्नादिवदिति । आत्मविशेषगुणत्वादित्युक्ते धर्मादिष्वनैकान्त्यं स्यादिति तद्व्यावृत्त्यर्थं क्षणिकत्वे सतीत्युक्तम् । क्षणिकविशेषगुणत्वादित्युक्ते शब्दे व्यभिचारः, क्षणिकात्मगुणत्वादित्युक्ते आत्मनः संयोगे व्यभिचारः स्यादिति तत्परिहारार्थमात्मविशेषशब्दौ । तदिदमनुपपन्नम्; क्षणिकत्वगुणत्वयोरन्यतरासिद्धत्वात् । दृष्टान्तश्च साधनविकलः । किञ्च यत् मानसप्रत्यक्षवेद्यं तत् अबुभुत्सितग्राह्यं दृष्टम्, यथा सुखादि । अतश्च तद्विषयं ज्ञानं नियतमिति वक्तव्यम् । तस्मात् घटादिज्ञानविषयं यत् ज्ञानम्, तस्याप्यबुभुत्सितग्राह्यत्वात् मानसप्रत्यक्षवेद्यत्वं स्यात्, तद्विषयज्ञानस्यापि तथेत्यनन्तसंविदावलीसमुदयस्यावर्जनीयत्वात् ज्ञानान्तरानवकाशः

**अपि तु सर्वं साधयन्ती अनुभूतिः स्वयमेव सिद्ध्यति ।**

**प्रयोगश्च— अनुभूतिरनन्याधीनस्वधर्मव्यवहारा, स्वसंबन्धादर्थान्तरे तद्धर्मव्यवहारहेतुत्वात् ।**

---

स्यात् ॥ मानसग्राह्यत्वस्याबुभुत्सितग्राह्यत्वव्याप्यत्वं नास्ति, स्वापादावुच्छ्वासनिश्श्वासप्रयत्ने सत्यपि तद्ग्रहणाभावादिति चेन्न—तदानीं जीवात्मनि प्रयत्नस्यैवाभावात्, देहधारणादयः परमात्मसङ्कल्पाधीनास्तदानीमिति हि वेदान्तवेदिनः । 'अन्तराभूतग्रामवत्' इत्यधिकरणेऽयमर्थः सुनिर्णयः । स्वापे देहपरिवर्तनादिस्त्वङ्गप्रत्यङ्गतोदात् दंशमशकादिजन्यदुःखादिना वाऽत्यल्पबोधे सति भवति । तदानीं च प्रयत्नो धीविषयः । अतो हेतोर्व्यभिचारात् मानसग्राह्यं सर्वमबुभुत्सितग्राह्यमिति, अनवस्था स्यादेव । यदि बुभुत्सितग्राह्यम्, तर्ह्यन्योन्याश्रयणम्—ज्ञाने सतीच्छा, इच्छायां सत्यां ज्ञानमिति । किञ्च मानसप्रत्यक्षवेद्यस्य बुभुत्सितग्राह्यत्वेऽपि, सुखादिषूपलब्धिनियमदर्शनात् बुभुत्सानियमः कल्प्य इति तद्वदेव ज्ञानेऽपि बुभुत्सानियमसिद्धेरुपलब्धिश्च नियता स्यात् । अतो बुभुत्सान्तरितज्ञानपरम्पराया अविरतिः स्यात् ॥ ज्ञानं बुभुत्सितग्राह्यम्, सुखादि तु नेति चेन्न; मानसप्रत्यक्षत्वाविशेषे नियामकाभावात् ॥ सुखादिषु घटादिविषयप्रथमज्ञाने च बुभुत्सा; द्वितीयादौ तु नेति चेन्न—नियामकाभावात्, मानसग्राह्यत्वाविशेषात् प्राप्तां बुभुत्सां को वारयेत्? ॥ मानसग्राह्यत्वे सति हि बुभुत्सा; सुखादिकं घटादिविषयप्रथमज्ञानं च मानसग्राह्यम्; द्वितीयादिज्ञानं न मानसप्रत्यक्षवेद्यमिति चेन्न; तत्रापि नियामकाभावात् । किञ्च—क्षणिकात्मविशेषगुणत्वे सत्यपि द्वितीयादिज्ञानं न मानसग्राह्यं चेत्, हेतोरनैकान्त्यम् ॥ यदि प्रत्यक्षेण गृह्यते, तदा मानसग्राह्यमिति चेत्; तर्हि पक्षो हेतुश्च प्रत्यक्षग्राह्यशब्देन विशेष्यौ स्याताम् । किञ्च अन्यैरप्युक्तानि दूषणान्तराण्युच्यन्ते—यदि द्वितीयं ज्ञानं न मानसग्राह्यम्, तस्य द्वितीयस्य निष्प्रमाणकत्वेन शून्यता च स्यात् । ततश्च प्रथमस्य, ततस्तद्विषयघटादेरपि शून्यता स्यात् । द्वितीयादिज्ञानं स्वतःसिद्धं चेत्, प्रथमज्ञानमपि तथा स्यादिति । एवमाद्यभिप्रायेण **नापि ज्ञानान्तरसिद्धा** इत्युक्तम् । अथ पारिशेष्यात् स्वयंप्रकाशत्वं सिद्धमित्याह **अपि त्विति** । **सर्वमिति** । अन्यथा संविदः शून्यत्वेन तदधीनसिद्धि सर्वं शून्यं स्यादिति तत्परिहाराय स्वयंप्रकाशत्वमवश्याभ्युपगन्तव्यमित्यभिप्रायेण **सर्वं साधयन्त्यनुभूतिः स्वयमेव सिद्ध्यतीत्युक्तम्** । यथा संवित्सिद्धौ, "तदेवापश्यतां सर्वशून्यत्वात् बिम्यतां सताम् । गतिः स्वयंप्रकाशत्वादृते नान्योपलभ्यते ॥" इति ।

अथ तर्कानुग्राह्यं स्वयंप्रकाशत्वे प्रमाणमुपन्यस्यति **प्रयोगश्चेति** । न केवलं पारिशेष्यात् स्वतःसिद्धत्वम्; साधकप्रमाणमप्यस्तीति चार्थः । **अनुभूतिरित्यादिना** अनुमानद्वयं ग्रन्थलाघवार्थमविभागेनोक्तम् । **अनुभूतिरनन्याधीनस्वधर्मा स्वसम्बन्धादर्थान्तरे तद्धर्महेतुत्वात्**, अनुभूतिरनन्याधीनस्वव्यवहारा स्वसम्बन्धादर्थान्तरे तद्व्यवहारहेतुत्वात् इत्येवं विभागः । अत एव हि **परत्र व्यवहारविशेषहेतोः स्वस्मिन्नपि तद्व्यवहारहेतुत्वमिति** उत्तरत्र वक्ष्यते । प्राकट्यमभ्युपगम्य तदुपजीवनेन प्रथमानुमानमुक्तम्; तदनुपजीव्य तु द्वितीयम् । प्राकट्याभ्युपगमस्य न स्वप्रकाशताविरोधित्वम्; तस्य ज्ञानानुमापकत्वानभ्युपगमात् । धर्मवत्त्वे अनन्याधीनधर्मवत्त्वे च साध्ये सिद्धसाध्यता स्यात्; अनुभूतित्वादिधर्माणां हेत्वन्तरनैरपेक्ष्यात् । न ह्यनुभूतित्वादिजातिर्हेत्वधीना; नित्यत्वात् । जात्यनभ्युपगमेऽप्यनुभूतिसामग्र्यतिरिक्तहेत्वनपेक्षत्वात् सिद्धसाध्यता । अतोऽनन्याधीनस्वधर्मेत्युक्तम् । स्वस्य धर्मः—स्वोत्पाद्यतया स्वसम्बन्धी धर्मः स्वधर्मः । परत्र स्वसाध्यधर्मा-

त्यन्तसजातीयधर्म इत्यर्थः ; अर्थान्तरे तद्धर्महेतुत्वादिति हेतूक्तेः । स्वधर्मशब्दनिर्दिष्टधर्मो हि तच्छब्दोक्तः । परत्र स्वसाध्यधर्मात्यन्तसजातीयः स्वस्मिन्नवश्यंभाविधर्मः स्वधर्मत्वेन विवक्षितः । अत एव स्वस्मिन् रूपित्वाना-पादनात् रूपस्य दृष्टान्तस्य साध्यविकलत्वशङ्का व्युदस्ता स्यात् ; दण्डान्तरनिरपेक्षं स्वस्मिन् दण्डित्वमनापादयति दण्डे व्यभिचारश्च परिहृतः स्यात् । अन्यशब्दश्च स्वात्यन्तसजातीयान्तरपरः ; अन्यथा हेतुमात्रनिरपेक्षत्वे दृष्टान्तस्य साध्यविकलत्वं स्यात् ; चक्षुराद्यपेक्षं हि रूपस्य चाक्षुषत्वम् । तादृशहेत्वपेक्षानियमराहित्यमनन्याधीन-शब्देन विवक्षितम् ; अन्यापेक्षामात्रविरहे साध्ये परज्ञानस्यानुमेयत्वदर्शनेन बाधितत्वप्रसङ्गात् । न हि ज्ञानान्तरागोचरत्वमेतदनुमानसाध्यम् ; अपि तु स्वात्यन्तसजातीयानपेक्षप्रकाशार्हत्वमात्रम् । तच्च परज्ञानस्य संभवतीति न बाधितविषयकत्वम् । अनन्याधीनस्वव्यवहारेत्यत्रापि व्यवहारवत्त्वे साध्ये सिद्धसाध्यता; अतोऽनन्याधीनशब्दः । अन्यशब्दस्यात्यन्तसजातीयपरत्वात् वागाद्यपेक्षया बाधितत्वशङ्का परिहृता स्यात् । घटादीनां हानादिव्यवहारे स्वात्यन्तसजातीयानपेक्षो हेतुरनुभूतिरिति सिद्धसाध्यत्वव्युदासाय स्वशब्दः । स च परत्र स्वसाध्यव्यवहारात्यन्तसजातीयपरः । व्यवहारस्यात्यन्तसजातीयत्वं नाम अभिन्नप्रवृत्तिनिमित्तकत्वम् । व्यवहारानुगुण्यमात्रं हि प्रकाशत इति व्यवहारस्य निमित्तम् । परज्ञानव्यवहारे कालात्ययापदेशपरिहाराया-पेक्षानियमराहित्यविवक्षा ।

हेतुमाह स्वसम्बन्धादिति । धर्महेतुत्वे व्यवहारहेतुत्वे च हेतौ विवक्षिते अनैकान्त्यं स्यादिति तत्परिहाराय तच्छब्दः । स्वस्य यो धर्मो व्यवहारश्च तदत्यन्तसजातीयो धर्मो व्यवहारश्च तच्छब्दविवक्षितः । स्वस्याग्निसंबन्धात् स्वस्मिन् पूर्वरूपसजातीयरूपान्तरतद्व्यवहारहेतुर्घटोऽग्निसापेक्ष इति तत्र व्यभिचारपरि-हाराय अर्थान्तर इत्युक्तम् । किञ्च अर्थान्तरशब्दो निर्दिष्टजातीयात् विजातीयपरः ; तेन परस्मिन् द्रव्ये संयुक्तत्वतद्व्यवहारहेतोर्द्रव्यस्य परद्रव्यसापेक्षतया ऽनैकान्त्यं परिहृतं स्यात् । द्रव्यं हि द्रव्यस्यात्यन्तसजातीयम् ॥ ननु घटो हि पटे संयुक्तत्वादिकमापादयन् स्वस्य तथात्वे घटान्तरापेक्ष इत्यनैकान्त्यम् ॥ नैवम् ; सजातीयापेक्षानियमविरहरूपस्य साध्यधर्मस्य तत्र विद्यमानत्वात् । न हि घटः स्वस्य संयुक्तत्वादौ स्वात्यन्तसजातीयं घटमेवापेक्षत इति नियमोऽस्ति । पुत्रे पुत्रत्वतद्व्यवहारहेतौ पितरि स्वस्य पुत्रत्वव्यवहाराय पित्रन्तरसापेक्षे व्यभिचारपरिहाराय स्वसम्बन्धादित्युक्तम् । विद्यमानस्वसम्बन्धो विवक्षितः । परत्र स्वसम्बन्धतुल्यकालस्वगतधर्मात्यन्तसजातीयधर्म-तत्सापेक्षव्यवहारहेतुत्वादित्यर्थः । न हि पित्रादिप्रवासनिधनयोः पुत्रादौ पुत्रत्वं तद्व्यवहारश्चापगच्छति । अत एव स्वस्मिन् अनन्यापेक्षद्वैधीभावमनापादयति परद्वैधीभावहेतौ द्रव्ये व्यभिचारश्च दूरोत्सारितः ।

ननु सिद्धान्तिनोऽप्यभिमतमिदमनुमानम् । चेतनः स्वसम्बन्धतुल्यकालं शरीरत्वं शरीरे जनयन् स्वस्मिन् शरीरत्वतद्व्यवहारयोर्नान्यानपेक्षः ; अपि तु परमात्मसापेक्षः । परमात्मा च चेतनत्वादत्यन्तसजातीयः । अतस्तत्रानैकान्त्यमिति ॥ नैवम् ; स्वव्यापकधर्महेतुत्वस्य विवक्षितत्वात् । न हि चेतनत्वव्यापकं शरीरत्वम् ; ईश्वरस्य चेतनस्यापि शरीरत्वाभावात् । अतः स्वधर्मशब्दाभिप्रेतेन स्वावश्यम्भावित्वेन परिहारः ।

एतदुक्तं भवति—धर्मशब्दः प्रकाशपरो वा धर्ममात्रपरो वा, अन्यशब्दश्च अन्यमात्रपरो वा स्वात्यन्तसजातीयान्यपरो वा । तत्र हेतुमात्रानपेक्षप्रकाशत्वे दृष्टान्तस्य साध्यविकलत्वम् ; रूपं हि

यः स्वसंबन्धादर्थान्तरे यद्धर्मव्यवहारहेतुः, स तयोः स्वस्मिन्ननन्याधीनो दृष्टः, यथा रूपादिश्चाक्षुषत्वादौ। रूपादिर्हि पृथिव्यादौ स्वसंबन्धात् चाक्षुषत्वादि जनयन्, स्वस्मिन् न रूपादिसंबन्धाधीनश्चाक्षुषत्वादौ। अतोऽनुभूतिरात्मनः प्रकाशमानत्वे, प्रकाशत इति व्यवहारे च स्वयमेव हेतुः।

चक्षुराद्यपेक्षप्रकाशम्। स्वात्यन्तसजातीयानपेक्षप्रकाशत्वे साध्ये व्यर्थविशेषणत्वं हेतोः; हेतुत्वमात्रेण साध्यसिद्धेः। न हि यस्य कस्यचिद्धेतुरसन् घटादिः स्वप्रकाशे घटान्तरादिकमपेक्षते। हेत्वनपेक्षधर्मत्वे ऽनुभूतित्वादिना सिद्धसाध्यता; परश्वधादिष्वनैकान्त्यञ्च; काष्ठद्वैधीभावहेतोः परश्वधस्य स्वद्वैधीभावे हेत्वन्तरसापेक्षत्वात्। स्वात्यन्तसजातीयानपेक्षधर्मत्वे चानुभूतित्वादिना सिद्धसाध्यता। विषयप्रकाशके परज्ञाने लिङ्गापेक्षप्रकाशत्वदर्शनात् बाधश्च। रूपे रूपान्तरानपेक्षस्वगतरूपित्वहेतुत्वाभावात् दृष्टान्तस्य साध्यविकलता। पुत्रगतपुत्रत्वहेतौ पित्रन्तरसापेक्षपुत्रत्वधर्मे पितरि अनैकान्त्यञ्च। परद्रव्यगतसंयुक्तत्वहेतौ द्रव्यान्तरसापेक्षसंयोगे द्रव्ये चानैकान्त्यम्। अत एवमादिदोषपरिहारार्थमित्थं प्रयोक्तव्यम्—अनुभूतिः स्वजन्यपरगतधर्मात्यन्तसजातीयधर्मभाक्त्वे स्वात्यन्तसजातीयापेक्षानियमरहितेति प्रतिज्ञा। स्वविजातीये स्वावश्यंभाविधर्मात्यन्तसजातीयस्वसम्बन्धतुल्यकालधर्महेतुत्वादिति हेतुः। तथा अनुभूतिः स्वजन्यपरगतव्यवहारात्यन्तसजातीयव्यवहारभाक्त्वे स्वात्यन्तसजातीयापेक्षानियमरहितेति प्रतिज्ञा. स्वविजातीये स्वावश्यम्भाविव्यवहारात्यन्तसजातीयस्वसम्बन्धतुल्यकालव्यवहारहेतुत्वादिति हेतुः। व्यवहारस्य स्वावश्यम्भावित्वं नाम अवश्यंभाविधर्मनिबन्धनत्वम्॥

व्याप्तिदर्शनपूर्वकं दृष्टान्तमाह य इति। साध्यसाधनधर्मौ सपक्षे दर्शयति—रूपादिर्हीति। पक्षधर्मताबलसिद्ध[धर्म]माह अतोऽनुभूतिरिति। प्रकाशत इति व्यवहार इति। अनुभूतिः [1]प्रकाशत इति व्यवहारे, अनुभूतिरिति व्यवहारे चेत्यर्थः॥ ननु स्वसम्बन्धादर्थान्तरे तद्धर्मव्यवहारहेतुत्वं सोपाधिकम्; सम्बन्धविशेषादर्थान्तरे तद्धर्मव्यवहारहेतुत्वस्यैव स्वस्मिन् तद्धर्मव्यवहारयोरनन्याधीनत्वे प्रयोजकत्वात्। स च सम्बन्धविशेष आश्रयाश्रयिभावरूपः। स तु रूपादावस्ति; न तु पक्ष इति॥ नैतत्—अस्य साध्यसमव्याप्त्यभावेनोपाधित्वाभावात्। आश्रयाश्रयिभावविरहेऽपि संबन्धमात्रादर्थान्तरे प्रकाशत इति व्यवहारहेतोर्दीपस्य स्वस्मिन्नपि तद्व्यवहारेऽत्यन्तसजातीयानपेक्षत्वं हि दृष्टम्। पूर्वं ज्ञानस्यापरप्रकाशत्ववादिभिः स्वसत्तयैव प्रकाशमानत्वादिति हेतोरसिद्धिर्व्याहतिश्चोक्ते। तत्र घटोऽयमित्यनुभववेलायामनुभूयत इति शब्दस्याप्रयोगात् असिद्धिरुक्ता; शब्दव्यवहारवैकल्यपौष्कल्ययोर्विवक्षाविशेषहेतुकत्वेनार्थानुभवेऽननुभवे च प्रयोजकत्वाभाववचनादसिद्धिः परिहृता। व्याहतिश्च नास्ति। तथा हि—अङ्गुल्यग्रस्य स्वात्मस्पर्शादिव्याहतिरुपलब्धिनिबन्धना। दीपादिषु च प्रकाश्यत्वप्रकाशकत्वे दृश्येते। निरूप्यमाणे, कर्मकर्तृभावविरोधश्च नास्ति। निरासको [हि] दीपः, निरसनीयं तमः; दीप उत्पादकः, ज्ञानमुत्पाद्यम्; ज्ञानमुत्पादकम्, व्यवहार उत्पाद्य इति। किञ्च यद्यपि कर्मकर्तृभावस्य स्वतो विरोधात् भेदकत्वमुपलब्धिसिद्धम्; तथापि ज्ञापकेषु विरोधनियमाभावश्चोपलब्धिसिद्धः। ज्ञातरि, मनसि, शब्दशब्दे, पदमिति पदे, तथेदशार्थान्तरेष्वप्यविरोधो हि उपलभ्यते। उत्पादकेष्वेव तु विरोधनियमः। तत्र चाऽऽकारान्तरेण चेत्-न विरोधः॥

1 प्रकाशत इति। अनुभूयत इत्यर्थः। एवमर्थे गौरवात् निष्कृष्टमाह अनुभूतिरितीति। भाष्यार्थदीपो द्रष्टव्यः। मूले आत्मनः प्रकाशमानत्वे इत्यस्य स्वनिष्ठप्राकट्ये इत्यर्थः।

**सेयं स्वयंप्रकाशानुभूतिर्नित्या च, प्रागभावाद्यभावात्। तदभावश्च स्वतस्सिद्धत्वादेव। न ह्यनुभूतेः स्वतस्सिद्धायाः प्रागभावः स्वतोऽन्यतो वाऽवगन्तुं शक्यते। अनुभूतिः स्वाभावमवगमयन्ती, सती तावन्नावगमयति। तस्याः सत्त्वे विरोधादेव तदभावो नास्तीति कथं सा स्वाभावमवगमयति? एवमसत्यपि नावगमयति; अनुभूतिः स्वयमसती स्वाभावे कथं प्रमाणं भवेत? नाप्यन्यतोऽवगन्तुं शक्यते; अनुभूतेरनन्यगोचरत्वात्। अस्याः प्रागभावं साधयत् प्रमाणम् अनुभूतिम् इयमि (अनुभूतिरियमि)ति विषयीकृत्य तदभावं साधयेत्। स्वतस्सिद्धत्वेन इयमिति विषयीकारानर्हत्वात् न तत्प्रागभावोऽन्यतः शक्यावगमः। अतोऽस्याः प्रागभावाभावादुत्पत्तिर्न शक्यते वक्तुम् इत्युत्पत्तिप्रतिबद्धाश्चान्येऽपि भावविकारास्तस्या न सन्ति॥**

ननु घटादिषु व्यवहारार्हत्वं स्वव्यतिरिक्तज्ञानहेतुकं दृष्टम्। ज्ञाने व्याप्तिर्भज्यते चेत्, व्यवहारस्य ज्ञानपूर्वकत्वव्याप्तिभङ्गेन अज्ञातस्यैव ज्ञानस्य व्यवहारास्पदत्वं स्यात्॥ नैवम्; घटादिषु ज्ञेयव्यतिरिक्तज्ञातृदृश्यत्वेऽपि स्वेनैव ज्ञात्रा ज्ञातरि दृश्यत्वमिति सर्वाविगीतमिति तत्र परेणापि कर्मकर्तृविरोधव्याप्तिभङ्गोऽभ्युपगन्तव्यः। तथा घटादौ स्वव्यतिरिक्तकरणजन्यज्ञानदृश्यत्वेऽपि मनसि तत् भग्नम्; स्वानुमाने मनस एव करणत्वात्। तथा सर्ववाच्यानां स्वव्यतिरिक्तशब्दवाच्यत्वेऽपि शब्दशब्दे पदपदे च तद् भग्नम्, घटादीनां स्वव्यतिरिक्तवाग्व्यवहार्यत्वेऽपि वागिन्द्रिये तत् भग्नम, अतः कर्मकर्तृभावस्य विरोधव्याप्तिर्नास्ति। व्यवहारस्य ज्ञानपूर्वकत्वं न कैश्चिदपि भग्नम्। ज्ञानव्यवहारस्य ज्ञानकर्मतापूर्वकत्वविरहः प्रसज्यते चेत्, नानिष्टः। अवभासपूर्वकत्वस्याभग्नव्याप्तिकत्वान्न तद्विरहप्रसङ्गः। तस्मादवभासमानस्यैव ज्ञानस्य व्यवहारास्पदत्वम्। अतः स्वविषयपरविषयव्यवहारानुगुण्यं ज्ञानस्य युक्तम्॥

अथ ज्ञातृज्ञेयनिरसनं ज्ञानस्वयंप्रकाशत्वञ्च बौद्धपक्षेऽपि समानमिति तद्व्यावर्तकं ज्ञानस्य नित्यत्वं साधयति सेयमिति। सेयम्—परमार्थभूतसन्मात्रैक्या प्रमाणाविषयभूता चेत्यर्थः; यद्वा स्वयंप्रकाशत्वहेतुभूतधर्मवत्तया प्रसिद्धेत्यर्थः। स्वयंप्रकाशत्वस्य नित्यताहेतुत्वविवक्षया स्वयम्प्रकाशेत्युक्तम्। चः साध्यसमुच्चये; सौगतसाम्यशङ्कानिवृत्तौ वा। कुत इत्यत्राह प्रागभावादीति। स च कथमिति शङ्कायां ग्राहकाभावादित्यभिप्रायेणाह तदभावश्चेति। स्वतःसिद्धत्वेन प्रागभावाद्यभावं विकल्पमुखेन उपपिपादयिषुर्विकल्पशिरोद्वयेऽनुपपत्तिं प्रतिजानीते न हीति। स्वतःपक्षे अनुभूतिः किं सती स्वाभावमवगमयति, उतासती इति विकल्पमभिप्रेत्य सत्त्वपक्षं दूषयति अनुभूतिरिति। कुत इत्यत्राह तस्या इति। ग्राह्याभावादित्यर्थः। अनुभूतिः किमनुमित्यादिरूपा स्वाभावमवगमयति, उत प्रत्यक्षरूपेति विकल्पे, लिङ्गाद्यभावात् प्रथमः कल्पो न संभवतीत्यभिप्रेत्य द्वितीयः कल्पो ग्राह्याभावाद्दूषितः। पूर्वाभिप्रेतविकल्पशिरसोरसत्त्वपक्षं ग्राहकाभावेन दूषयति एवमिति। पूर्वतराभिहितयोर्विकल्पशिरसोरन्यत इति पक्षं दूषयति नापीति। अनुभूतिरनन्यगोचरा स्यात्; ततः किमभावाग्रहणस्य? अभावो ह्यन्यगोचरत्वमर्हतीत्यत्राह अस्या इति। अस्याः। न ह्यन्यस्य प्रागभावो ग्राह्यः; अपि त्वनुभूतेरेव; तस्मात् तां विषयीकृत्यैव तदभावो ग्राह्यः; तस्या विषयीभावानर्हत्वान्न तत्प्रागभावग्रहणं शक्यमित्यर्थः। एवं प्रागभावाभावादुत्पत्त्यभावः(वं) ततश्च परिणामादिसर्वविकारान्तराभावमप्युपपादयति अतोऽस्या इति। अतः—स्वतःपरतःपक्षयोरुभयोरप्यभावस्य दुर्ग्रहत्वादित्यर्थः। विकारमात्रविरहे साध्येऽनुत्पन्नत्वमन्तवति प्रागभावेऽनैकान्तिकं स्यात्। अतो भावरूपविकारविरहस्य साध्यत्वज्ञापनाय भावशब्दः। यद्वा भावस्य विकार इति षष्ठीसमासः। ततश्च

अनुत्पन्नेयमनुभूतिरात्मनि नानात्वमपि न सहते; व्यापकविरुद्धोपलब्धेः। न ह्यनुत्पन्नं नानाभूतं दृष्टम्। भेदादीनामनुभाव्यत्वेन च रूपादेरिवानुभूतिधर्मत्वं न संभवति। अतोऽनुभूतेरनुभवस्वरूपत्वादेवान्योऽपि कश्चिदनुभाव्यो नास्या धर्मः।

यतो निर्धूतनिखिलभेदा संवित्, अत एव नास्याः स्वरूपातिरिक्त आश्रयो ज्ञाता नाम कश्चिदस्तीति

---

भावाभावरूपविकारमात्रविरहे साध्ये, प्रागभावे व्यभिचारशङ्कानिवारणार्थं भावत्वे सत्यनुत्पन्नत्वं विकारान्तराभावे प्रयोजकमिति फलितम्। अनुभूतिर्नान्तवती, भावत्वे सत्यनुत्पन्नत्वात्; यदन्तवत् तत् भावत्वे सत्यनुत्पन्नं न भवति, यथा घट इति।

बौद्धाभ्युपगतक्षणिकत्वव्यावृत्त्यर्थं नित्यत्वाय अनुत्पत्तिः, तद्व्याप्तविकारान्तराभावश्च साधितौ। अथ तदभ्युपगतानेकत्वव्यावृत्त्यर्थं सजातीयभेदं व्युदस्यति अनुत्पन्नेयमिति। व्यापकविरुद्धोपलब्धेः। नानात्वव्यापकोत्पत्तिविरुद्धानुत्पत्त्युपलब्धेरित्यर्थः। व्याप्तिं दर्शयति न हीति। अस्य ग्रन्थस्य, यदनुत्पन्नम् तदनानाभूतं दृष्टमित्यर्थो वक्तुं न युज्यते; ब्रह्मव्यतिरेकेणानुत्पन्नस्य अनानाभूतस्य कस्यचिन्मायावेदान्तिभिरनभ्युपगमात्। यदनानाभूतं तदनुत्पन्नमित्युक्ते व्यापकजन्मनिवृत्त्या व्याप्यनानात्वनिवृत्तिरुक्ता न स्यात्। तस्मादयमर्थः—यत् नानाभूतं तत् अनुत्पन्नं न दृष्टम्; अपि तूत्पत्तिमदेव दृष्टमिति। जन्मनो नानात्वव्यापकत्वं दर्शितम्। अनेनोत्पत्तिनिवृत्त्या नानात्वनिवृत्तिरित्यर्थसिद्धम्। यद्वा—यथा न ह्यनग्नि धूमवद्दृष्टमित्युक्ते अग्निमदेव धूमवदित्युक्तं स्यात्, तद्वदिहाप्यनुत्पन्नं नानाभूतं न दृष्टमित्युक्ते उत्पत्तिमदेव नानाभूतमित्युक्तं स्यात्; ततश्चोत्पत्तिर्व्यापिकेत्युक्तं भवति। अनुभूतिर्नाना न भवति, अनुत्पन्नत्वात्। यत् नानाभूतम्, तत् उत्पत्तिमद्दृष्टम्, यथा घट इति व्यतिरेक्यनुमानमनुभूतिं पक्षीकृत्योक्तम्। गगनादिषु व्यभिचारो दुर्वचः; तेषामुत्पत्तिमत्त्वेन वेदान्तिभिरभ्युपगमादिति भावः। एवं सजातीयभेदो निषिद्धः। अस्मिन्नर्थे विकारान्तराभावे च भेदं विकारान्तरं च पक्षीकृत्यान्वय्यनुमानमाह- भेदादीनामिति। आदिशब्देन उत्पत्त्यादयो विवक्षिताः। भेदादयो नानुभूतिधर्माः अनुभाव्यत्वात् रूपादिवदिति। व्यावृत्तिरूपधर्मोऽपि नास्तीत्युपपादयति अतोऽनुभूतेरिति। अन्योऽपि—व्यावृत्तिरूपोऽपीति भावः(?)। यद्वा—विकारनानात्वजडत्वनिषेधात् नित्यत्वैकत्वस्वयंप्रकाशत्वरूपधर्मवत्त्वशङ्काव्युदासार्थं पूर्वोक्तनानात्वादिव्युदासार्थं च व्यतिरेक्यनुमानमाह अतोऽनुभूतेरिति। अन्योऽपि नित्यत्वादिरूपोऽपीत्यर्थः। अनुभूतिर्न व्यावृत्तिरूपधर्मभाक् अनुभवस्वरूपत्वात्। यत् व्यावृत्तिरूपधर्मभाक्, तत् अननुभूतिर्दृष्टम्, यथा घटादीति व्यतिरेकि। यदि व्यावृत्तिरूपधर्मं पक्षीकृत्यानुभूतिधर्मत्वाभावः साध्यः स्यात्, तदा अनुभाव्यत्वं हेतुः; यथा रूपादीनि सपक्षः। इदमन्वयि। एवं स्वगतभेदो निरस्तः; पूर्वमेव ज्ञेयभेदो निरस्तः। "अत्रायं पुरुषः स्वयंज्योतिर्भवति" इत्यादिषु वेदान्तवाक्येष्वात्मनो नित्यत्वस्वयंप्रकाशत्वादयः प्रतिपन्नाः; अत्र तु संविदो नित्यत्वादिरुच्यते; तत् कथं सङ्गच्छते इत्यत्राह यत इति। निर्धूतनिखिलभेदा सकलभेदनिषेधेन विजातीयभेदोऽपि निरस्त इति विजातीयभेदस्य ज्ञातुर्मिथ्यात्वेन न स आत्मा, अपि तु परमार्थभूता संविदेवात्मेत्यर्थः। यद्वा—वेदान्तैरात्मनः प्रतिपादितं सजातीयविजातीयस्वगतनानात्वराहित्यं संविद एवोपपद्यत इति सैवात्मेत्यर्थः। स्वरूपेति। स्वरूपातिरिक्त आश्रयो हि ज्ञाता; स नास्ति—संवित्स्व-

स्वप्रकाशरूपा सैवात्मा। अजडत्वाच्च। अनात्मत्वव्याप्तं जडत्वं संविदि व्यावर्तमानम्, अनात्मत्वमपि हि संविदो व्यावर्तयति ॥

ननु च—अहं जानामीति ज्ञातृता प्रतीतिसिद्धा ॥ नैवम्; सा भ्रान्तिसिद्धा, रजततेव शुक्तिशकलस्य; अनुभूतेः स्वात्मनि कर्तृत्वायोगात्। अतो मनुष्योऽहमित्यत्यन्तबहिर्भूतमनुष्यत्वादिविशिष्टपिण्डात्माभिमानवज्ज्ञातृत्वमप्यध्यस्तम्। ज्ञातृत्वं हि ज्ञानक्रियाकर्तृत्वम्। तच्च विक्रियात्मकं जडं विकारिद्रव्याहङ्कारग्रन्थिस्थमविक्रिये साक्षिणि चिन्मात्रात्मनि कथमिव संभवति? दृश्यधीनसिद्धित्वादेव रूपादेरिव कर्तृत्वादेर्नात्मधर्म-

---

रूपातिरिक्तत्वादेवापरमार्थ इति स नात्मेति परमार्थभूता संविदेवात्मेत्यर्थः। स्वप्रकाशरूपा सैवात्मेति। वेदान्तैरात्मनः प्रतिपादितं स्वयम्प्रकाशत्वं संविद उपपन्नमिति सैवात्मेत्यर्थः। यद्वा तुच्छत्वशङ्कानिरासार्थमुक्तं स्वप्रकाशरूपेति। स्वयम्प्रकाशत्वं स्वतन्त्रसाधकं चेत्याह अजडत्वाच्चेति। इदं व्यतिरेकि—संवित् आत्मा अजडत्वात्; यन्नात्मा तज्जडम्, यथा घटादीति। एतद्विवृणोति अनात्मत्वेति। अनात्मत्वव्याप्तम्। व्याप्तमिति कर्तरि क्तः—व्यापकमित्यर्थः। प्राप्तमितिवत् ॥

तर्केण ज्ञातृत्वे प्रतिक्षिप्ते, आत्मनोऽहंप्रत्ययगोचरत्वस्य स्वानुभवप्रत्यक्षसिद्धत्वेन चोदयति ननु चेति। चश्चोद्यसमुच्चये। प्रतीतिसिद्धा—स्वानुभवरूपप्रतीतिसिद्धेत्यर्थः। अत्राह नैवमिति। प्रतीतेर्भ्रान्तित्वमाह सा भ्रान्तिसिद्धेति। अनुभवविषयत्वेन पूर्वं प्रतीता रजतता यथा शुक्तिज्ञानबाधितत्वात् भ्रान्तिसिद्धा भवति, तथेत्यभिप्रायेणाह रजततेव शुक्तिशकलस्येति। भ्रमाधिष्ठानत्वोपपत्तये शकलशब्दः। अविकलवपुषः शुक्तेर्भ्रमास्पदत्वायोगात्। यद्वा ज्ञातृत्वे प्रतीयमाने तत्र ज्ञानांशस्य पारमार्थ्ये कर्त्रंशस्यापारमार्थ्ये च दृष्टान्ततया रजततेव शुक्तिशकलस्येत्युक्तम्। तत्र हीदमंशः परमार्थः, रजततैवापरमार्थ इति। भ्रान्तिसिद्धत्वमुपपादयति अनुभूतेरिति। ततः किमित्यत्राह अतो मनुष्य इति। कर्तृत्वायोगमुपपादयति ज्ञातृत्वं हीति। यद्वा—ज्ञातृत्वं नाम किं ब्रह्मस्वरूपभूतज्ञानाश्रयत्वम्, उतान्तःकरणक्रियारूपज्ञानाश्रयत्वमिति विकल्पमभिप्रेत्य प्रथमं शिरो दूषयति—अनुभूतेरिति। पूर्वोक्तयुक्तिभिरनुभूतेरेव पारमार्थ्ये सिद्धे, तस्या ज्ञातृत्वं स्वात्मनि कर्तृत्वं स्यात्; तत्तु व्याहतमित्यर्थः। कर्तृत्वम् आश्रयत्वम्। ज्ञातृत्वं भ्रान्तपुरुषप्रतीतिसिद्धत्वाच्चाध्यस्तमित्यभिप्रायेणाह अत इति। पिण्डस्योत्पत्त्यादिभिरात्मव्यतिरिक्तत्वस्य संप्रतिपन्नत्वादत्यन्तबहिर्भूतेत्युक्तम्। अथ न केवलं स्वापेक्षया कर्तृत्वमनुपपन्नम्, अपि तु स्वपरविभागनिर्विशेषं कर्तृत्वमात्रमेवानुपपन्नमित्यभिप्रायेण द्वितीयं शिरो दूषयति ज्ञातृत्वं हीति। ततः किमित्यत्राह तच्चेति। विक्रियात्मकम्—उत्पत्तिविनाशयोगात् क्रियायाः तदाश्रयत्वमपि कादाचित्कमिति तत् विकाररूपमित्यर्थः। जडम्—ज्ञेयम्। अत एव विकारिद्रव्याहङ्कारग्रन्थिस्थम्, जडत्वविक्रियात्मकत्वसाम्यादिति भावः। ग्रन्थिर्नाम बन्धस्याशैथिल्यकरो ग्रथनविशेषः। अहङ्कारस्य सर्वभ्रममूलत्वात् ग्रन्थिरित्युक्तम्। एतद्विरोधिरूपमाह अविक्रिय इति। साक्षित्वाभ्युपगमेन ज्ञातृत्वमभ्युपगतं भवतीति शङ्कायां साक्षित्वमपि ज्ञानस्वरूपत्वानुगुणमित्यभिप्रायेण साक्षिणीत्युक्तम्। अविद्यानुभवरूपत्वमेव साक्षित्वमिति ज्ञानत्वाविरोध इति भावः। चिन्मात्रात्मनि—स्वयंप्रकाशे। जडम्। ज्ञातृत्वमजडस्य न संभवतीति भावः। कर्तृत्वादिर्नात्मधर्मः दृश्यधीनसिद्धित्वात् रूपादिवदित्यन्वयिनमभिप्रेत्याह दृश्यधीनसिद्धित्वादेवेति। कर्तृत्वादेरित्यादिशब्देनाहम्प्र-

त्वम् । सुषुप्तिमूर्छादावहम्प्रत्ययापायेऽप्यात्मानुभवदर्शनेन नात्मनोऽहम्प्रत्ययगोचरत्वम् । कर्तृत्वे अहम्प्रत्ययगोचरत्वे चाऽऽत्मनोऽभ्युपगम्यमाने देहस्येव जडत्वपराक्त्वानात्मत्वादिप्रसङ्गो दुष्परिहरः । अहम्प्रत्ययगोचरात् कर्तृतया प्रसिद्धात् देहात् तत्क्रियाफलस्वर्गादेर्भोक्तुरात्मनोऽन्यत्वं प्रामाणिकानां प्रसिद्धमेव; तथाऽहमर्थात् ज्ञातुरपि विलक्षणः साक्षी प्रत्यगात्मेति प्रतिपत्तव्यम् ।

एवमविक्रियानुभवस्वरूपस्यैवाभिव्यञ्जको जडोऽप्यहङ्कारः स्वाश्रयतया तमभिव्यनक्ति । आत्मस्थतया अभिव्यङ्ग्याभिव्यञ्जनमभिव्यञ्जकानां स्वभावः । दर्पण-जल-खण्डादिर्हि मुखचन्द्रबिम्बगोत्वादिकमात्मस्थतयाऽभिव्यनक्ति । तत्कृतोऽयं जानाम्यहमिति भ्रमः । स्वप्रकाशाया अनुभूतेः कथमिव तदभिव्यङ्ग्यजडरूपाहङ्कारेणाभि-

---

त्ययगोचरत्वं गृह्यते । य एव भेदादीनामनुभूतिधर्मत्वाभावे हेतुः, तेनैवेत्येवकाराभिप्रायः । अहमर्थो ह्यात्मा, तेन समानाधिकरणतया प्रतीतो ज्ञाता आत्मा स्यादित्यत्राह सुषुप्तिमूर्छादाविति । "नाह खलु"इत्यादिश्रुत्युपजीवनेनाहंप्रत्ययापायेऽपीत्युक्तम् । आत्मनः कर्तृत्वाहम्प्रत्ययगोचरत्वाभावे व्यतिरेक्यनुमानत्रयं प्रसङ्गरूपेणाह कर्तृत्वे इति । आत्मा न कर्ता, न चाहंप्रत्ययगोचर इति प्रतिज्ञाद्वयम्; अजडत्वात् प्रत्यक्त्वात् आत्मत्वादिति हेतुत्रयम्; यत् कर्तृ यदहंप्रत्ययगोचरः तज्जडं पराक् अनात्मा च दृष्टम्, यथा शरीरमिति । यद्वा आत्मा न कर्ता, न चाहंप्रत्ययगोचरः, जडत्वादिप्रसङ्गात् देहवदिति । जडत्वम्—दृश्यतैकस्वरूपत्वम् । पराक्त्वम्—परस्मै भासमानत्वम् । आत्मत्वम्-पुरुषार्थप्रतिसंबन्धित्वम्, देहं प्रति नियन्तृतया व्यापित्वं वा; तदभावोऽनात्मत्वम् । आदिशब्देन क्षयित्वादिकं विवक्षितम् । अहंप्रत्ययगोचरस्य देहस्यानात्मत्वे सिद्धे ह्यहंप्रत्ययगोचरस्य कर्तुरनात्मत्वप्रसक्तिरित्यत्राह अहंप्रत्ययगोचरादिति । क्रियाफलस्वर्गादेर्भोक्तुरित्यनेन देहातिरिक्तत्वं सिद्धम् । प्रामणिकानाम्-चार्वाकव्यतिरिक्तानाम् । अनात्मनः अहङ्कारस्य कर्तृत्वे कथमात्मनः संसारभोक्तृत्वमिति च शङ्का शरीरप्रतिबन्द्या निरस्ता । स्वर्गादिभोक्तुरात्मत्वे सिद्धे ज्ञातैवात्मा स्यादित्यत्राह तथेति । शरीरातिरिक्तात्मनोऽभ्युपगमो हि प्रमाणबलात् क्रियते; तथा ज्ञातुरपि विलक्षणत्वेन प्रमाणसिद्धत्वात् तथाऽभ्युपगन्तव्यमित्यर्थः । यद्वा—अप्रामाणिकाहम्प्रत्ययगोचरत्वेन हि शरीरस्यानात्मत्वादि; प्रामाणिकाहम्प्रत्ययगोचरस्य तु कथमनात्मत्वादीत्यत्राह अहंप्रत्ययगोचरादिति । देहस्याप्रामाणिकाहम्प्रत्ययगोचरत्वं प्रमाणबाधादेव हि ज्ञायते । एवं कर्मफलभोक्तुरौपाधिकाकारवतो ज्ञातुरात्मत्वं प्रमाणबाधितं चेत्, आत्मनस्तद्विलक्षणत्वं स्वीकार्यमित्यर्थः । अतः प्रामाणिकाप्रामाणिकविभागाभावेनाहम्प्रत्ययगोचरत्वमात्रमेवानात्मत्वसाधकमिति भावः ।

अविक्रियात्मनः कथं ज्ञातृत्वसंभवः इत्यत्राह एवमिति । यद्वा—ज्ञातृत्वमहङ्कारग्रन्थिस्थमिति पूर्वमुक्तम् । कथमहङ्कारस्य ज्ञातृत्वसंभव इत्यत्राह एवमिति । अभिव्यञ्जकत्वप्रयुक्तोऽयमहङ्कारस्य संविदाश्रयभाव इति भावः । अभिव्यञ्जकोऽस्त्वहङ्कारः; कथमस्य स्वाश्रयतयाऽभिव्यञ्जकत्वमित्यत्राह आत्मस्थतयेति । स्वभावशब्देन औत्सर्गिकत्वं विवक्षितम् । क्वचित् प्रमाणबाधश्चेत्, न तथेति भावः । दृष्टान्तं दर्शयति दर्पणेति । आत्मस्थतयाऽभिव्यञ्जनं न दर्पणत्वप्रयुक्तम्, न च प्रतिबिम्बत्वप्रयुक्तम्, अभिव्यञ्जकत्वमात्रप्रयुक्तमिति दर्शयितुं खण्डादिग्रहणम् । आदिशब्देन मुण्डादि(?) । एवं व्यञ्जकतृव्यङ्ग्यभावकृतो ज्ञातृत्वावभासः संविद इत्याह तत्कृत इति जडस्याभिव्यञ्जकत्वमयुक्तम्; स्वप्रकाशस्य वस्तुनोऽभिव्यङ्ग्यत्वं चायुक्तम्; संविदभिव्यङ्ग्यस्य च विशेषेण तदभिव्यञ्जकत्वमयुक्तम्-इतीमामाशङ्कां स्वयमेवोत्थाप्य प्रतिक्षिपति स्वप्रकाशाया इति ।

व्यङ्ग्यत्वमिति मा वोचः ; रविकरनिकराभिव्यङ्ग्यकरतलस्य तदभिव्यञ्जकत्वदर्शनात् । जालकरन्ध्रनिष्क्रान्तद्युमणिकिरणानां तदभिव्यङ्ग्येनापि करतलेन स्फुटतरप्रकाशो हि दृष्टचरः ।

यतः, अहं जानामीति ज्ञाताऽयमहमर्थः चिन्मात्रात्मनो न पारमार्थिको धर्मः, अत एव सुषुप्तिमुक्त्योर्नान्वेति । तत्र ह्यहमर्थोल्लेखविगमेन स्वाभाविकानुभवमात्ररूपेणाऽऽत्माऽवभासते । अत एव [[1]च] सुप्तोत्थितः कदाचित्, मामप्यहं न ज्ञातवानिति परामृशति ।

तस्मात् परमार्थतो निरस्तसमस्तभेदविकल्पनिर्विशेषचिन्मात्रैकरसकूटस्थनित्यसंविदेव भ्रान्त्या ज्ञातृज्ञेयज्ञानरूपविविधविचित्रभेदा विवर्तत इति तन्मूलभूताविद्यानिबर्हणाय नित्यशुद्धबुद्धमुक्तस्वभावब्रह्मात्मैकत्वविद्याप्रतिपत्तये सर्वे वेदान्ता आरभ्यन्ते—इति ॥

---

कुत इत्यत्राह रविकरेति । करतलस्य किरणाभिव्यञ्जकत्वं क्व दृष्टमित्यत्राह जालकेति । एवं ज्ञातृत्वस्यापारमार्थिकत्वमुक्तम् । एतदेव परमार्थवस्तुभासनवेलायामनवभासनप्रतिपादनेनोपपादयति यत इति । अनेन अहंप्रत्ययापायेऽपीति पूर्वोक्तार्थो विवृतो भवति । यत इति साध्यस्य हेतुतया निर्देशः ; अग्निमत्त्वेन धूमवत्त्वमितिवत् । मुक्तिसमभिव्याहारेण सुषुप्तावप्यहंप्रत्ययापायस्यागमसिद्धत्वं सूचितम् । तदा कथमवभासत इत्यत्राह तत्र हीति । "नाह खल्वयमेवं संप्रत्यात्मानं जानाति, अयमहमस्मीति" इति स्वापविषया श्रुतिः । "अहङ्कारं बलं दर्पं कामं क्रोधं परिग्रहम् । विमुच्य निर्ममः शान्तो ब्रह्मभूयाय कल्पते" इति मुक्तिविषया स्मृतिः । "महाभूतान्यहङ्कारो बुद्धिरव्यक्तमेव च" इति क्षेत्रान्तर्भावश्चोच्यते अहङ्कारस्य । "अहङ्कारविमूढात्मा कर्ताऽहमिति मन्यते" इति तस्य भ्रान्तिसिद्धत्वमुच्यते । हिशब्दः श्रुतिस्मृतिप्रसिद्धिद्योतनार्थः । न केवलं श्रुतिः सुषुप्तिविषया; परामर्शश्च तथाऽस्तीत्याह अत एवेति । (अत एव चेति) । अत एवेति साध्यस्य हेतुत्वेन परामर्शः । कथं साध्यसाधनयोर्विपरीतनिर्देशः ? इत्थम्—ज्ञप्तौ यत् साध्यम्, तत् उत्पत्तौ साधनम् ; यत् उत्पत्तौ साधनम् ([2]साध्यम् ?), तद् ज्ञप्तौ साध्यम् (साधनम् ?) । तस्मात् अग्निमत्त्वादेव हि धूमोद्गम इतिवत् उत्पत्तौ हेतुत्वमपेक्ष्य अत एवेत्युक्तम् ।

ततः किं प्रस्तुतपूर्ववृत्तत्वचिन्तायाः इत्यत्राह तस्मादिति । तस्मादित्यनेन यदप्याहुरशेषविशेषेत्यारभ्योक्तं प्रमाणतर्काभ्यां स्वमतोपपादनमभिप्रेतम् । निरस्तसमस्तभेदविकल्पेति । भेदविकल्पशब्देन ज्ञातृज्ञेयादिभेदस्यावान्तरवैविध्यं विवक्षितम् । निर्विशेषशब्देन स्वगतनित्यत्वादिभेदव्यावृत्तिः । कुत इत्यत्राह चिन्मात्रैकरसेति । चिन्मात्रत्वादित्यर्थः । अनेन शून्यत्वव्युदासश्च । कूटस्थम् निर्विकारम्; सर्वाधिष्ठानं वा । नित्यसंविदेवेति । चिन्मात्रशब्दः स्वयंप्रकाशत्वपरः, संविच्छब्दो विशेष्यपर इत्यपौनरुक्त्यम् । चिन्मात्रस्य कथं भेदसंभव इत्यत्राह भ्रान्त्येति । भ्रान्त्या विवर्तत इति कर्मकर्तृभवन्निर्देशः । शुद्धम् अविद्यारहितम् । बुद्धम् स्वयंप्रकाशम् । मुक्तम् परमार्थतो भेददर्शनजन्मादिरहितम् । एवंविधब्रह्मात्मैकत्वविद्यालब्धये[3] सर्वे वेदान्ता आरभ्यन्त इत्यर्थः । वेदान्तानामारम्भणीयत्वं नाम तद्विचारस्यारम्भणीयत्वम् । सर्वे वेदान्ता आरभ्यन्त इति यदप्याहुरिति पूर्वेणान्वयः । ब्रह्ममीमांसाशास्त्रं किमनारम्भणीयम्,

---

1 चकारस्य मूलेऽनुपलम्भेऽपि कतिपयव्याख्याकोशानुसारेण तदुल्लेखः ।
2 यत् ज्ञाप्यं तत् उत्पादकम् । यत् उत्पाद्यं तत् ज्ञापकमिति हि वक्तव्यम् । अत एवं स्यात् ।
3 लब्धय इति । मूलस्थं प्रतिपत्तिपदं लाभार्थकम् । भाष्यवाक्यमिदं शाङ्करभाष्यस्थम् ।

तदिदमौपनिषदपरमपुरुषवरणीयताहेतुगुणविशेषविरहिणाम्

उतारम्भणीयम् इति विचारे, बन्धस्य परमार्थत्वेन ज्ञाननिवर्त्यत्वाभावात् ज्ञानप्रतिपादकवेदान्तवाक्यविचाररूपं शास्त्रमनारम्भणीयमिति पूर्वपक्षं कृत्वा, बन्धस्य मिथ्यात्वेन ज्ञानमात्रनिवर्त्यत्वात् ज्ञानार्थं वेदान्तविचाररूपं शास्त्रमारम्भणीयमिति हि ब्रह्माज्ञानपक्षे[1] प्रथमाधिकरणार्थः शिक्षितः । अतो बन्धस्य मिथ्यात्वेन ज्ञानमात्रनिवर्त्यत्वात् ज्ञानप्रधानस्य शास्त्रस्य कर्मविचारो न पूर्ववृत्त इत्युक्तं भवतीति वैषम्यम् । उपाय आत्मैकत्वविज्ञानम्, उपेयं निर्विशेषचिन्मात्रं ब्रह्म, निवर्त्यं च मिथ्याभूतम् इति त्रयं कर्मविचारस्यानपेक्षितत्वाय पूर्वं विस्तरेणोपपादितं निगमनग्रन्थे संक्षिप्तं भवति ॥ * * * *

अथ कर्मविचारपूर्ववृत्तत्वविरोधिवस्तुसामर्थ्यनिरासार्थं परोक्तानामुपायोपेयनिवर्त्यानां प्रमाणतर्काभासमूलत्वं प्रतिजानीते (प्रतिजानाति) तदिदमिति । स्वाभिमतानामेव तेषां प्रमाणतर्कोपपन्नतां च संक्षेपेण प्रतिजानाति[2] । अर्थाद्बहुशास्त्रज्ञानां बहुग्रन्थकाराणामपि परेषां स्खलनानुपपत्तिशङ्काञ्च सम्यग्ज्ञानोत्पत्तिसामग्रीवैकल्यप्रतिपादनमुखेन परिहरति तदिदमित्यादिना । परमपुरुषशब्देनोपेयम्, वरणीयतेत्यादिना उपायम् अनादीत्यादिना निवर्त्यम् अनधिगतेत्यादिना परपक्षनैर्मूल्यम् न्यायानुगृहीतेत्यादिना स्वपक्षस्य समूलताम् अर्थतोऽनेकविद्वत्परिग्रहञ्च प्रतिजानीते । तदिदमिति अनन्तरवाक्यप्रकृतं परोक्तोपायोपेयनिवर्त्यत्रयं विवक्षितम् । औपनिषदपरमपुरुषशब्देन "तं त्वौपनिषदं पुरुषम्" इति श्रुतिं स्मारयति; एतेन अस्मदभिमतप्रमाणप्रमेयविशेषसंबन्धः श्रुत्यैव व्यक्त इति सूचयति । परमशब्देनेश्वरातिरिक्ततत्त्वव्यावृत्तिः । वरणीयताहेतुगुणविशेषविरहिणामित्यनेन, 'यमेवैष वृणुते तेन लभ्यः' इत्यभिमतोपायविशेषकथनं फलितम्; अनेन पदेन बहुशास्त्रज्ञबहुग्रन्थकाराणां भ्रमानुपपत्तिशङ्का च परिहृता भवति; सम्यक् शास्त्रार्थज्ञानोत्पत्तौ भगवद्भक्तेरपि सामग्र्यन्तर्भावेन केवलशास्त्रपरिश्रमस्य विकलहेतुत्वात् । यथा, "यस्य देवे परा भक्तिः" इत्यादिका श्रुतिः । स्मृतिश्च, "विद्या राजन् न ते विद्या मम विद्या न हीयते । विद्याहीनस्तमोध्वस्तो नाभिजानासि केशवम् ॥ धृतराष्ट्रः । गावल्ग(ल्ग)णे ! ते का विद्या या ते विद्या जनार्दने । यया त्वमभिजानासि त्रियुगं मधुसूदनम् । सञ्जयः । मायां न सेवे भद्रं ते न वृथा धर्ममाचरे । शुद्धभावं गतो भक्त्या शास्त्राद्वेद्मि जनार्दनम्" इति । अत्र, 'भक्त्या शुद्धभावं गतः शास्त्रात् जनार्दनं वेद्मि' इत्यनेन यथावच्छास्त्रार्थज्ञानोदयस्य भक्तिसापेक्षत्वं सिद्धम् । "जायमानं हि पुरुषं यं पश्येन्मधुसूदनः । सात्त्विकः स तु विज्ञेयः स वै मोक्षार्थचिन्तकः ॥ पश्यत्येनं जायमानं ब्रह्मा रुद्रोऽथवा पुनः । रजसा तमसा चास्य मानसं समभिप्लुतम् ॥" इति वचनाच्च तत्त्वार्थज्ञानस्य भक्तिप्रीतभगवत्कटाक्षसापेक्षत्वं ज्ञायते ॥ ननु, 'यया त्वमभिजानासि', 'भक्त्या वेद्मी'ति प्रश्नप्रतिवचनाभ्यां विद्याभक्तिशब्दयोरैकार्थ्यं प्रतीयते । भक्तिरूपा च विद्या मोक्षायेति प्रागुपपादितम् । ततश्च शास्त्रज्ञानमूला भक्तिः, भक्तिमूलं शास्त्रज्ञानमित्यन्योन्याश्रय इति चेत्—नैवम्; श्रवणवेलायामेव पदार्थतया अवगम्यमानेषु परमात्मगुणादिष्वनुकूलबुद्धिगोचरत्वाद्विद्याभक्तिशब्दयोः । तेन

---

1 ब्रह्माज्ञानपक्ष इति । जीवाज्ञानपक्षानुसारिभिः जीवब्रह्मैक्यात् अहमिति जीवस्फुटज्ञानेनैव ब्रह्मणो ज्ञाततया न विचार्यतेत्याशंक्य तस्य यथावत् अहमित्येतदज्ञेयतया विचार्यता इत्युक्तमित्याशयेनैतत्पदप्रयोगः ।

2 प्रतिजानाति—अनुसंधत्ते । काराणामपीत्यस्य वैकल्येऽन्वयः । अपिर्विशेषणसमुच्चये वा ।

अनादिपापवासनादूषिताशेषशेमुषीकाणाम् अनधिगतपदवाक्यस्वरूप-तदर्थयाथात्म्य - प्रत्यक्षादिसकलप्रमाण-वृत्त—तदितिकर्तव्यतारूपसमीचीनन्यायमार्गाणां विकल्पासहविविधकुतर्ककल्ककल्पितमिति न्यायानुगृहीत-प्रत्यक्षादिसकलप्रमाणवृत्तयाथात्म्यविद्भिरनादरणीयम् ॥ तथाहि—

सम्यग्वाक्यार्थनिर्णयलाभः । पूर्वपक्षतयोपन्यस्यमानेऽपि सुगताभिमतवेदाप्रामाण्यादौ हि भवति प्रद्वेषो वैदिकानाम् । भगवद्गुणादिष्वनुरक्तचित्तता भवति । न चैषा साक्षात्कारकल्पनिरन्तरध्यानरूपा भक्तिः । अतो नान्योन्याश्रयः । अथ शास्त्रार्थ[याथात्म्य] ज्ञानोत्पत्तिहेतुभूतभक्तिविरोधिनमाह अनादीति । यद्वा सम्यग्ज्ञानहेतुभूतभक्त्यभावात् सम्यग्ज्ञानविरोधिपापानुबन्धमाह अनादीति । वासनाशब्देन पापस्य दृढमूलत्वेन दुर्निवारत्वमुक्तम् । वासनया पापं पापेन वासना, अज्ञानेन पापवासना पापवासनया अज्ञानमित्यन्योन्याश्रयपरिहाराय अनादिशब्दः । शेमुषी मोक्षोपयोगि ज्ञानम् । अशेषशब्दस्योपायोपेय-निवर्त्यविषया विश्वशेमुषी दूषितेति भावः । अनेनार्थात् स्वपक्षे निवर्त्यं चोक्तं भवति; कर्मण एव मोक्षप्रतिबन्धकत्वात् । दूषितशेमुषीकत्वफलं सम्यग्ज्ञानाभावमाह अनधिगतेति । प्रत्यक्षविरोधे शास्त्रप्राबल्यस्य परेणोक्तत्वात्, पदशः समुदायेन च सविशेषपरत्वप्राधान्येन च प्रथमं शब्दप्रमाणमाह पदेति । प्रकृतिप्रत्यय-योगेन च पदत्वं न ज्ञातमिति पदशब्दस्य भावः । वाक्यस्वरूपेति । वाक्यम् अनेकपदार्थसंसर्गविशेषाभिधायि इति च न ज्ञातमिति भावः । तदर्थयाथात्म्यम्—तात्पर्यविषयः । प्रत्यक्षादीति आदिना(दिशब्देन) अनुमानम्; सकलशब्देन स्पार्शनचाक्षुषादिप्रत्यक्षावान्तरभिदा विवक्षिता; अन्वयव्यतिरेकाद्यनुमानावान्तरभिदा च विवक्षिता । यद्वा तत्तद्वाद्यभिमतार्थापत्त्यादिप्रमाणान्तरविषयः सकलशब्दः । वृत्तम्-बोधनम् । तदितिकर्तव्य-तारूपेति । तर्केण प्रमाणबाधवचनात् प्रमाणानुग्राहकस्तर्क इति च न ज्ञातमिति भावः । प्रमाणानु-ग्राहकतयैव हि वयं तर्कमङ्गीकुर्म इत्यत्राह समीचीनन्यायेति । अनुग्राहकबुद्ध्या स्वीकृतस्यापि तर्कस्य प्रमाणविरुद्धत्वात् सोऽसमीचीन इति भावः । अपच्छेदनयादिसमीचीनन्याया एव हि स्वीकृता इत्यत्राह न्यायमार्गाणामिति । अयमपच्छेदन्यायविषयः, अयं सामान्यविशेषन्यायविषय इति तत्तन्न्यायसञ्चारविषय-विभागोऽनवगत इति भावः । तर्हि किमवलम्ब्य प्रबन्धाः कृता इत्यत्राह विकल्पासहेति । कुतर्काः—प्रमाणविरुद्धाः मूलशैथिल्यमिथोविरोधादिदोषान्तराक्रान्ताश्च तर्काः । ते च त्रिचतुरपदस्थायिनो न भवन्ति, किन्तु विकल्पितान्यतरशिरःपरिग्रह एव भङ्गुराः इत्याह विकल्पासहेति । तर्कस्य विकल्पासहत्वं नाम तद्विषयसाधना-दिविकल्पासहत्वमेव । विविधेति । ब्रह्मणोऽनुभाव्यत्वेऽननुभूतित्वम्, प्रत्यक्षं सन्मात्रग्राहि, वेदान्तवेद्यं ब्रह्म प्रमा-णान्तरगोचर इत्यादिरूपं कुतर्काणामन्योन्यव्याहतिवैविध्यं विवक्षितम् । ईदृशकुतर्क एव कल्कम्—असारभूतम्, बौद्धैरात्तसारम्, ऋजीषमित्यर्थः । एतेन कल्पितम्—उत्कीर्णम् । इतिर्हेतौ । केषाञ्चित् समीचीनार्थान्तरविषय-ज्ञानेऽसत्य[प्य]स्यासमीचीनत्वनिश्चयः कथमित्यत्राह न्यायानुगृहीतप्रत्यक्षादिसकलप्रमाणवृत्तयाथात्म्य-विद्भिरिति । अनेन पूर्वोक्तविपरीताकार उक्तः । बहुवचनेन स्वपक्षस्य भगवद्बोधायनाद्यनेकशिष्टपरिग्रहः सूचितः । अनादरणीयमिति । शिष्यशिक्षासु पूर्वपक्षोपन्यासकौशलार्थमप्यादर्तुमयोग्यमित्यर्थः । अशेषविशेष-प्रत्यनीकचिन्मात्रमित्यारभ्य सर्वे वेदान्ता आरभ्यन्त इत्यन्तेन यदप्याहुः, तदनादरणीयमित्यन्वयः ॥

एवं सङ्क्षेपेण प्रतिपादितमर्थमुपपादयितुमुपक्रमते तथा हीति । ननु पूर्वपक्षिणा प्रथमं वेदान्तवाक्यानि

**निर्विशेषवस्तुवादिभिर्निर्विशेषे वस्तुनीदं प्रमाणमिति न शक्यते वक्तुम्; सविशेषवस्तुविषयत्वात् सर्वप्रमाणानाम्। यस्तु स्वानुभवसिद्ध इति स्वगोष्ठीनिष्ठः समयः, सोऽप्यात्मसाक्षिकसविशेषानुभवादेव निरस्तः। इदमहमदर्शमिति केनचिद्विशेषेण विशिष्टविषयत्वात् सर्वेषामनुभवानाम्।**

---

(क्यविशेषान्)उदाहृत्य तत्र निरूपणीयं सर्वं निरूप्य पश्चात् तद्व्यतिरिक्तप्रमाणतर्काः प्रदर्शिताः। अतः सिद्धान्ते च तेन क्रमेण तत्प्रतिक्षेपो युक्तः। तत् कथं प्रथमं सकलप्रमाणाविषयत्वनिरूपणं सङ्गच्छते? उत्तरत्र च कथं प्रत्यक्षादिनिर्विशेषविषयत्वनिरासपूर्वकं वेदान्तवाक्ययोजना क्रियते॥ उच्यते। प्रत्यक्षविरोधे शास्त्रप्राबल्याभ्युपगमात् परेण वेदान्तवाक्यानि प्रथममुदाहृत्य पश्चात् तदन्यत् वक्तव्यं सर्वमुक्तम्; प्रबलतयाऽभिमतप्रमाणपुरस्कारो ह्युचितः। सिद्धान्तिना तु प्रत्यक्षविरोधे शास्त्रप्राबल्यानभ्युपगमात् प्रत्यक्षादेर्निर्विशेषविषयत्वव्युदसनपूर्वकं तदविरोधेन वेदान्तवाक्यानि स्वरसतो व्याख्यास्यन्ते। तत्र निर्विशेषचिन्मात्रपारमार्थ्यस्य परेण प्रथमप्रतिज्ञातस्य सामान्येन सकलप्रमाणबहिष्कृतत्वरूपं दूषणं प्रथमं प्रतिजानीते **निर्विशेषेति**। अर्थात् प्रमाणस्व(प्रमाणा)भावश्च स्वपक्षानुगुणो निरूपितो भवति। खपुष्पमपि स्वानुभवसिद्धमिति वक्तुं शक्यमिति तद्व्यावृत्त्यर्थमिदंशब्दः। परसंप्रतिपत्तिपदं प्रमाणं न किञ्चिदपीति भावः। [1]यद्वा, न काचिदपि प्रमाणव्यक्तिर्निर्विशेषगोचरेत्येकवचनाभिप्रायः। कुत इत्यत्राह **सविशेषेति**॥ ननु विशेषा हि निर्विशेषाः,। तत् कथं निर्विशेषवस्तुनोऽप्रामाणिकत्वम्॥ उच्यते। धर्मेण धर्मी सविशेषः; धर्मिणा च धर्मः सविशेषः। कस्यचिद्धर्मभूतं धर्मि वा यन्न भवति, तत् प्रमाणशून्यमिति हि ग्रन्थार्थः। **विशेषः** व्यावर्तकः। धर्मी च स्वगतधर्मस्याश्रयान्तरगतधर्माद्व्यवच्छेदक इति विशेषशब्दवाच्यः। किञ्च विशेषो निर्विशेष इति शब्दौ किं पर्यायौ, न वा? आद्ये, सहप्रयोगानुपपत्तिः। द्वितीये तु, न निर्विशेषत्वम्; बोध्यभेदमन्तरेणापर्यायत्वायोगात्॥ ननु कथं सर्वप्रमाणानां सविशेषविषयत्वम्? न हि गन्धादिग्राहि प्रमाणं गन्धादिकं साश्रयमावेदयति॥ नैवम्; आश्रय एव विशेष इति नियमाभावात्। संविदोऽपि सर्वविशेषणतया सर्वार्थवैशिष्ट्यं ह्युपपद्यते। अयं गन्धोऽनुभूयत इति कालादिविशेषावच्छिन्नतयैव गन्धादिप्रतीतेश्च सविशेषविषयत्वोपपत्तिः। तथा प्रतीतिश्च वक्ष्यते॥ तर्हि न वयं प्रमाणान्तरेण निर्विशेषसिद्धिमभ्युपगच्छामः; स्वानुभवसिद्धं हि तदित्यत आह **यस्त्विति**। तुशब्देन समयं विशिंषन् समयवैशिष्ट्यमूलं स्वानुभवलक्षणप्रमाणवैषम्यमभिप्रैति। **स्वगोष्ठीनिष्ठ इति** परवाद्यसंमतत्वं दर्शयति। आत्मसाक्षिकानुभवस्य सविशेषत्वं दर्शयति **इदमहमिति**। **विशिष्टविषयत्वादिति**। विशिष्टो विषयः स्वयमनुभव एव; शिलापुत्रकस्य शरीरमितिवदयं निर्देशः; अन्यथा स्वानुभवनिर्विशेषत्वनिरासे घटादिसविशेषत्वसाधनस्यानुपयोगात्। **अनुभूयमानोऽप्यनुभव** इत्युपरितनग्रन्थस्याप्येवमेवार्थः; **स्वानुभवसिद्धमित्यनेनैकार्थ्यात्**। न चानुभवशब्दोऽनुव्यवसायपरः। न ह्यनुव्यवसायरूपं प्रत्यक्षमिष्टम्; अतीतविषयतया प्रत्यक्षत्वानुपपत्तेः। परज्ञानम्, प्रमुषितसंस्कारं स्वज्ञानं चानुमेयम्; अन्यत्तु स्मृतिविषयः। न च स्मृतिविषयत्वमिह विवक्षितम्; अनुभवशब्दस्यातदर्थत्वात्। अतो**ऽनुभूयमानत्वम्** अवभासमानत्वम्। **इदमहंशब्दाभ्यां** सकर्मकर्तृक एवानुभव इत्युक्तम्। अदर्शमित्यनेनापरोक्षत्वविशेषान्वयोऽभिप्रेतः। अतीतत्वं त्वविवक्षितम्; तदा स्वतःसिद्धत्वायोगात्। **केनचिद्विशेषेणेति**। उक्तेष्वप्यन्यतमविशेषणमन्ततो गत्वाऽप्यवर्जनीयमिति भावः।

---

1 **इदमिति पदं स्वानुभवव्यावर्तकतया व्याख्याय एकैकव्यक्तिग्राहितया व्याख्याति यद्वेति।**

सविशेषोऽप्यनुभूयमानोऽनुभवः केनचित् युक्त्याभासेन निर्विशेष इति निष्कृष्यमाणः सत्तातिरेकिभिः स्वासाधारणैः स्वभावविशेषैर्निष्कृष्टव्य इति निष्कर्षहेतुभूतैः सत्तातिरेकिभिः स्वासाधारणैः स्वभावविशेषैः सविशेष एवावतिष्ठते। अतः कैश्चिद्विशेषैर्विशिष्टस्यैव वस्तुनोऽन्ये विशेषा निरस्यन्त इति न कचिन्निर्विशेषवस्तुसिद्धिः। धियो हि धीत्वं स्वप्रकाशता च ज्ञातुर्विषयप्रकाशनस्वभावतयोपलब्धेः।

---

यद्वा, अदर्शमितीत्यत्र इतिशब्दः प्रकारवचनः प्रकृतसजातीयरूपं विशेषं यावत्सम्भवं गृह्णाति। तेन परोक्षत्व-वर्तमानत्वादिकं केनचिदिति विवक्षितं स्यात्। परोक्षत्वं विषयद्वारा। ननु न हि वयम् इदमहमदर्शमिति प्रतीतिमपलपामः। सा तु तर्कव्यवस्थापितविषया निर्विशेषे प्रमाणमित्यत्राह सविशेषोऽपीति। स्वव्याघातस्य दर्शयिष्यमाणत्वात् युक्त्याभासेनेत्युक्तम्। निर्विशेष इति निष्कृष्यमाण इति। यदा निर्विशेष इति निष्कृष्यते, तदानीमेवं हि निष्कृष्टव्य इत्यर्थः। कथं निष्कृष्टव्य इत्यत्राह सत्तातिरेकिभिः स्वासाधारणैरिति। सत्तानतिरेकी चेत्, पक्षाविशिष्टो हेतुः स्यात्। तदयुक्तम्; पक्षव्यावर्तको हि हेतुः। किञ्च अन्यस्य द्रव्यान्तराद्व्यावर्तकधर्मस्यैव [स्व]व्यावृत्तिरूपत्वसंभवः। स्वरूपे प्रतिपन्ने स्वस्यान्यतादात्म्यभ्रमविरोधिनश्च स्वरूपमेव व्यावृत्तिः, यथा शुक्तित्वादेः। ब्रह्मणस्तु वस्त्वन्तरस्यान्यस्माद्व्यावर्तकरूपधर्मत्वाभावात्, स्वरूपे भासमाने भ्रमसहत्वाच्च न स्वरूपमेव व्यावृत्तिरिति वक्ष्यमाणशौक्ल्यादिदृष्टान्तवैषम्याभिप्रायेण सत्तातिरेकिभिरित्युक्तम्। साधारणश्चेद्धेतुः, अनैकान्तिको भ्रमाविरोधी च स्यात्; यथा शौक्ल्यादिः। असाधारणं शुक्तित्वमेव हि रजतभ्रमविरोधि। अतः स्वासाधारणैरित्युक्तम्। स्वशब्देन व्यधि[1]करणासिद्धिपरिहारः। स्वभावविशेषैः—धर्मविशेषैः। एवं सामान्येनार्थशरीरमुक्तम्। अतस्त्वयाऽपि निरासकहेतुतयाऽभिमतानां सत्तातिरेकित्वस्वासाधारणत्वे अवर्जनीये इत्यभिप्रायेण सत्तातिरेकिभिः स्वासाधारणैरिति पुनः कथनम्। ये ये हेतवः सविशेषघटादिवस्तुव्यावृत्ताः सामान्येन सकलविशेषाभावसाधकाः, तेऽर्थसामर्थ्यात् सामान्यान्तर्गतं स्वात्मानमपि निवर्तयेयुरेवेत्यत्राह अतः कैश्चिदिति। अतः—तेषां सत्तातिरेकित्वस्वासाधारणत्वयोरवश्याभ्युपगन्तव्यत्वादित्यर्थः। कैश्चिदिति। स्वासाधारणैः प्रामाणिकैरित्यर्थः। विशिष्टस्यैवेति। निर्विशेषत्वसाधकनिवृत्तौ निर्विशेषत्वासिद्धेः, तदनिवृत्तौ तैरेव सविशेषत्वप्रसङ्गाच्चेत्यभिप्रायः। अन्य इति। निर्विशषत्वसाधका हेतवो येभ्यो घटादिभ्यो व्यावृत्ताः, तद्गता इहाप्रामाणिकाः रूपादयो विशेषा अस्मिन्निरस्यन्ते; न तु सर्वविशेषाः। अनग्निमद्व्यावृत्तो धूमः पक्षे ह्यनग्निमत्त्वमेव निवर्तयति; न त्वाकारान्तरमित्यर्थः। न क्वचिदिति। स्वानुभवे, प्रत्यक्षादिप्रमाणान्तरेष्वपीत्यर्थः। स्वव्याघातप्रसङ्गेन सकलविशेषनिवृत्तेः साधयितुमशक्यत्वात् न निर्विशषवस्तुसिद्धिरित्युक्तं भवति।

एवं कर्मकर्तृव्युदासमभ्युपगम्य सविशेषत्वमुपपादितम्। अथ कर्मकर्तृनिरास एव दुःशक इत्याह धियो हीति। धीत्वम्—विषयप्रकाशत्वम्। स्वप्रकाशता—अनन्याधीनप्रकाशत्वम्। एतदुभयं स्वप्रकाशवादे साधनतया साध्यतया च परेणोपन्यस्तम्। ज्ञातुर्विषयप्रकाशनस्वभावतयोपलब्धेरिति। नियमेन स्वाश्रयं प्रति विषयप्रकाशकतया भासमानत्वात् धीत्वस्वप्रकाशत्वे सिध्यत इत्यर्थः। धीत्वं विषयसाधनत्वम्;

---

1 व्यधिकरणस्य-अन्याधिकरणकस्य-पक्षावृत्तेरसिद्धिः; स्वरूपासिद्धिरिति यावत्। अप्रसिद्ध्याद्यसिद्धिवारणायैवं व्यवहारः।

स्वापमदमूर्च्छासु च सविशेष एवानुभव इति स्वावसरे निपुणतरमुपपादयिष्यामः। स्वाभ्युपगताश्च नित्यत्वादयो ह्यनेके विशेषाः सन्त्येव। ते च न वस्तुमात्रमिति शक्योपपादनाः; वस्तुमात्राभ्युपगमे सत्यपि विधाभेदविवाददर्शनात् स्वाभिमततद्विधाभेदैश्च स्वमतोपपादनात्। अतः प्रामाणिकविशेषैर्विशिष्टमेव वस्त्विति वक्तव्यम्।

---

तथावभासमानत्वादिति न साध्याविशिष्टता। यद्युपलब्धिसिद्धं सकर्मकर्तृकत्वं नाङ्गीकुरुषे, ततः सकर्मकर्तृकत्वहेतुकं स्वप्रकाशत्वमपि न सिध्येदिति भावः। [1]यद्वा धीत्वं धीस्वरूपमात्रम्। हिशब्द उपलब्धेः सर्वसम्प्रतिपत्तिं दर्शयति। ननु न कर्मकर्त्रवच्छिन्नं ज्ञानमात्मभूतम्; अन्यदेव तु स्वापाद्यवस्थानुभूतं निर्विशेषं साध्यत इत्यत्राह स्वापेति। अनुभवः—आत्मस्फुरणम्। न हि तदा धर्मभूतज्ञानस्फुरणम्। स्वावसरे—अहमर्थस्यैवात्मत्वसमर्थने। निपुणतरम्—परप्रयुक्तयुक्त्यैवेति भावः। 'सुखमहमस्वाप्सम्', 'मामप्यहं न ज्ञातवान्' इत्यादिना परोक्तपरामर्शेनैवेति यावत्। यद्वा निपुणतरं विशदतरम्। एतदुक्तं भवति—किं त्वया स्वानुभवाधीनं निर्विशेषत्वं कर्मकर्त्रवच्छिन्नस्य ज्ञानस्योच्यते, उताहमिति भासमानस्यात्मस्वरूपभूतज्ञानस्य, उत(?) तदुत्तीर्णस्य वा? आद्ये कर्मकर्त्रवच्छेदानियमादेव न निर्विशेषत्वम्। द्वितीये प्रत्यक्त्वानुकूलत्वादिभिः सविशेषत्वमवर्जनीयमिति वक्ष्यते। तृतीये शून्यत्वादेव न निर्विशेषत्वं साध्यमिति॥ मुखान्तरेण सविशेषत्वमाह स्वाभ्युपगताश्चेति। आदिशब्देन स्वप्रकाशत्वैकत्वानन्द(त)त्वादयो विवक्षिताः। ते वस्तुमात्रमिति ह्युक्तमित्यत्राह ते चेति। उपपादयति वस्त्विति। बौद्धैः क्षणिकत्वमुक्तम्; अनेन तु नित्यत्वम्। वैशेषिकादिभिश्च जडत्वबहुत्वे; अनेन तु स्वप्रकाशत्वैकत्वे। स्वरूपं तु तैः सर्वैरभ्युपेतम्। अतो विप्रतिपत्तिविषयः संप्रतिपत्तिविषयश्चैक एवेति वक्तुमयुक्तमित्यर्थः। विमत्यनन्तरभाविना तदुपपादनेन च स्वरूपातिरिक्ततां दर्शयति स्वाभिमतेति। क्षणिकत्ववादिनं प्रति ब्रह्मनित्यत्वं साधयता त्वया स्वरूपमात्रातिरेकेण किञ्चित् साधितमस्ति, न वा? अस्ति चेत्, सधर्मत्वम्। नो चेत्, सिद्धसाधनत्वम्; स्वरूपमात्रस्याभिमतत्वात्। संविन्नित्येति प्रतिज्ञावाक्यगतौ धर्मधर्मिशब्दौ किं पर्यायौ, न वा? आद्ये साधनायासो निष्फलः। द्वितीये स्वरूपातिरिक्तधर्माङ्गी(न्तरस्वी)कार इति भावः। स्वमतोपपादनान्न वस्तुमात्रमिति शक्योपपादना इत्यन्वयः। पूर्वं सविशेषत्वनिरासकहेतुभिः सविशेषत्वमुक्तम्; अनन्तरं साध्यधर्मैः; ततः कतिपयविशेषसाधकहेतुभिः। एते निरासकसाध्यसाधनधर्माः[2] अपरमार्था इत्यत्राह अत इति। अतः—विशेषव्युदासकत्वेन साध्यत्वेन साधनत्वेन च केषाञ्चिद्धर्माणां त्वयोक्तत्वात्. परमार्थभूतैः तैस्तैर्विशिष्टमित्यर्थः। प्रामाणिकैरित्यनेन कैश्चिदिति पूर्वोक्तस्यार्थस्यापि विशेषो दर्शितः। विशिष्टमेवेति। पूर्वोक्तसत्तातिरेकित्वस्वासाधारणत्वाभावे भ्रमोच्छेदो न स्यात्; निरासकधर्मापारमार्थ्ये, शुक्तित्वापारमार्थ्ये रजतसत्यत्ववत्, निरसनीयाकारसत्यत्वं प्रसजेत्; साध्यधर्मापारमार्थ्ये च नित्यत्वादिविपरीताकारसत्यत्वप्रसङ्गः; साधनापारमार्थ्ये च साध्यनित्यत्वादिविपरीताकार[स्य] सत्यत्वमापद्येतेति भावः।

इत्थं स्वानुभवप्रसङ्गात् तत्रापि सविशेषत्वमुपपादितम्; अथ प्रथमप्रतिज्ञातं सर्वप्रमाणानां सविशेषविषयत्वं वक्तुमारभते; तत्र परेण प्रत्यक्षाद्बलीयस्त्वेनोक्तत्वात् सविशेषबोधकत्वातिशयस्य

---

1 विषयप्रकाशकत्वसाधनस्य प्रकृतेऽनावश्यकत्वात् स्वप्रकाशत्वसाधकस्य विषयप्रकाशत्वस्यैव धीत्वहेतुताया भाष्यतो निरूप्यत्वाच्च धीत्वमन्यथा व्याख्याति धीत्वमिति। 2 धर्मपदं निरासकादिषु त्रिष्वप्यन्वेति।

शब्दस्य तु विशेषेण सविशेष एव वस्तुन्यभिधानसामर्थ्यम्; पदवाक्यरूपेण प्रवृत्तेः। प्रकृति-प्रत्यययोगेन हि पदत्वम्। प्रकृतिप्रत्यययोरर्थभेदेन पदस्यैव विशिष्टार्थप्रतिपादनमवर्जनीयम्। पदभेदश्चार्थ-भेदनिबन्धनः। पदसङ्घातरूपस्य वाक्यस्यानेकपदार्थसंसर्गविशेषाभिधायित्वेन निर्विशेषवस्तुप्रतिपादनासामर्थ्यात् न निर्विशेषवस्तुनि शब्दः प्रमाणम्॥

प्रत्यक्षस्य निर्विकल्पकसविकल्पकभेदभिन्नस्य न निर्विशेषवस्तुनि प्रमाणभावः। सविकल्पकं जात्याद्यने-

---

स्वाभिमतत्वाच्च प्रथमं शब्दस्य सविशेषविषयत्वमाह शब्दस्य त्विति। तुशब्दः परोक्तबलीयस्त्वसूचकः। विशेषेणेतिपदेन सविशेषवस्तुबोधकत्वातिशय उच्यते। यद्वा सर्वप्रमाणानां सविशेषगोचरत्वे प्रतिज्ञाते, चिद्वस्तुनि अन्तरङ्गतया स्वप्रकाशवृत्तिं निरूप्य तदनन्तरमात्मनि प्रत्यक्षादिभ्योऽन्तरङ्गत्वेन उभयवादिसंमतस्य शास्त्रस्य सविशेषविषयत्वमाह शब्दस्य त्विति। सविशेषगोचरत्वे प्रमाणान्तरेभ्योऽतिशयो विशेषेणेत्युच्यते। तुशब्देन तत्तदौपयिकं शब्दस्य सविशेषगोचरप्रत्यक्षादिपूर्वकत्वं विशेष उच्यते। प्रतिज्ञातस्य हेतुमाह पदवाक्यरूपेणेति। ततः किं सविशेषविषयत्वस्येति शङ्कायां पदरूपेण प्रवृत्तिं विवृणोति प्रकृतीति। ततः किमित्यत्राह प्रकृतिप्रत्यययोरिति। पदस्यैवेति। वाक्यं तावदास्ताम्; पदमेव सविशेषपरमिति भावः। वाक्यरूपेण प्रवृत्तिं विवृणोति पदभेदश्चेति। पदभेदः—पदानां परस्परभेदः। न केवलं प्रकृतिप्रत्ययभेद एवार्थभेदहेतुकः, पदभेदोऽपीति चार्थः। अन्यथा पदान्तरवैयर्थ्यादिति भावः। पदभेदस्यार्थभेदनिबन्धनत्वेऽपि वाक्यैकत्वात् निर्विशेषत्वसिद्धिरिति शङ्कायां वाक्यस्य सविशेषविषयत्वं वदन् निर्विशेषे प्रमाणाभावमुपसंहरति पदसंघातेति। तत्तत्पदाभिधेयानां संसर्गविशेष एव वाक्यप्रतिपाद्यः; न तु तत्तत्पदार्थप्रहाणेन अर्थान्तरमित्यर्थः॥

ननु निर्विशेषशब्देन निर्विशेषं वस्तु किं प्रतिपन्नम्, उत अप्रतिपन्नम्, उत सविशेषं वस्तु प्रतिपन्नम्? आद्ये, निर्विशेषवस्तुनः शब्देन प्रतिपादनान्निषेधोऽनुपपन्नः। द्वितीये तु निषेध्याप्रतिपत्तेर्निषेधोऽनुपपन्नः। तृतीये तु सविशेषनिरासः कृतः स्यात्॥ नैवम्; भ्रान्तिप्रमितिविभागात्। निर्विशेषवस्तुनि शब्दस्य प्रमाणभावो हि निषिध्यते; न तु भ्रमहेतुत्वम्; अतो निर्विशेषशब्दजनिता मिथोऽन्वयानर्हार्थगोचरा भ्रान्तिः प्रमितिजनकैः शब्दैर्बाध्यत इति युक्तम्। अधिकरणतदसाधारणनिषेध्यप्रतिपक्षधर्मतो विशेषशब्दस्य सङ्कोचानभ्युपगमे ह्यधिकरणालाभात् निषेधकशब्दस्यानन्वय एव स्यात्। न हि निर्विभक्तिकः पदान्तरान-न्वितो निर्विशेषशब्दोऽर्थाभिधायी। अतः सङ्कोचाभावे व्याघातः। यद्यपि कथञ्चिद्विभक्त्यर्थो न विवक्षितः, तथापि निर्विशेषपदस्य बहुव्रीहित्वादन्यपदार्थाभिधानमवर्जनीयम्। तत्पुरुष[पद]प्रयोगे च अधिकरणाभिधान-मवर्जनीयम्। अतो यदि निर्विशेषशब्दः प्रमाणभूतवाक्यस्थः, तदा विषयविभागो द्रष्टव्यः; सकलविशेषशून्यप्रति-पादनासामर्थ्यात्। नगरे को विशेष इत्युक्ते, न कश्चिदपीत्यादिषु वाक्येषु सविशेषनिषेधः सङ्कुचितविषयो दृष्टः। तथा शास्त्रेष्वपि, "अविशेषास्ततो हि ते" इति गन्धादिगुणान्वितानामपि पृथिव्यादीनां शान्तत्वघोरत्व-रूपकतिपयविशेषविरहविवक्षया अविशेषशब्दः प्रयुज्यते॥

एवं ज्ञानस्वरूपे आत्मन्यन्तरङ्गतया स्वानुभव-शब्दौ निरूपितौ; अथ व्यतिरिक्तप्रमाणेषु मूलभूतस्य प्रत्यक्षस्य सविशेषविषयत्वमुपपादयति प्रत्यक्षस्येत्यादिना। निर्विकल्पकानुभूतार्थस्य सविकल्पके प्रतिसन्धानस्य वक्ष्यमाणत्वात् तदुपयोगित्वेन च सविकल्पकरूप प्रदर्शितम्। अथ निर्विकल्पकस्य

कपदार्थविशिष्टविषयत्वादेव सविशेषविषयम् । निर्विकल्पकमपि सविशेषविषयमेव; सविकल्पके, स्वस्मिन्ननुभूतपदार्थविशिष्टप्रतिसन्धानहेतुत्वात् । निर्विकल्पकं नाम केनचिद्विशेषेण वियुक्तस्य ग्रहणम्, न सर्वविशेषरहितस्य; तथाभूतस्य कदाचिदपि ग्रहणादर्शनात्, अनुपपत्तेश्च । केनचिद्विशेषेण इदमित्थमिति हि सर्वा प्रतीतिरुपजायते, । त्रिकोणसास्नादिसंस्थानविशेषेण विना कस्यचिपि पदार्थस्य ग्रहणायोगात् । अतो निर्विकल्पकमेकजातीयद्रव्येषु प्रथमपिण्डग्रहणम् । द्वितीयादिपिण्डग्रहणं सविकल्पकमित्युच्यते । तत्र प्रथमपिण्डग्रहणे गोत्वादेरनुवृत्ताकारता न प्रतीयते । द्वितीयादिपिण्डग्रहणेष्वेवानुवृत्तिप्रतीतिः । प्रथमप्रतीत्यनुसंहितवस्तुसंस्थानरूपगोत्वादेरनुवृत्तिधर्मविशिष्टत्वं द्वितीयादिपिण्डग्रहणावसेयमिति द्वितीयादिग्रहणस्य सविकल्पकत्वम् ।—सास्नादिवस्तुसंस्थानरूपगोत्वादेरनुवृत्तिर्न प्रथमपिण्डग्रहणे गृह्यत इति,

---

सविशेषविषयत्वं प्रतिजानीते **निर्विकल्पकमपीति** । एकजातीयपिण्डेषु द्वितीयादिपिण्डग्रहणस्य सविकल्पकत्वं प्रथमपिण्डग्रहणस्य निर्विकल्पकत्वञ्च हृदि निधाय हेतुमाह **सविकल्पके** इति । विशिष्टप्रतिसन्धानमिति षष्ठीसमासः कर्मधारयो वा । **स्वस्मिन्**—निर्विकल्पके अनुभूतजात्यादिपदार्थविशिष्टवस्तुविषयस्य सविकल्पके प्रतिसन्धानस्य हेतुत्वादित्यर्थः । प्रथमपिण्डस्य विशिष्टतयाऽवगतत्वमर्थलब्धम् । प्रथमपिण्डे जातिविशिष्टतया प्रतीते हि द्वितीयादिषु जात्यनुवृत्तिबुद्धिलक्षणं प्रतिसन्धानं घटते ॥ कथं प्रतिसन्धानम्; सकलविशेषशून्यविषयं हि निर्विकल्पकमिति हेत्वसिद्धिमाशङ्क्याह **निर्विकल्पकं नामेति** । सकलविशेषवैधुर्याभावमुपपादयति **तथाभूतस्येति** । सकलविशेषशून्यग्रहणं किं दर्शनादभ्युपगम्यते, किं वा अनुपपत्त्या कल्प्यते इति विकल्प्य, न तावत् दर्शनमित्याह **कदाचिदपीति** । कल्पनं व्युदस्यति **अनुपपत्तेरिति** । निर्विशेषज्ञानबाधिकैव अनुपपत्तिर्दर्श्यते । तर्कलिङ्गिका तु दूरतो निरस्तेति भावः । अदर्शनं विवृणोति **केनचिदिति** । प्रकारविशेषनियमो नेति भावः । उत्तरत्र **ग्रहणायोगा**दिति पञ्चम्या हेतुत्वं स्फुटम् । अत्र पञ्चमीस्थाने **हि**शब्दः । **इदमित्थमिति** प्रतीतिमेव विवृण्वन् अर्थात् सकलविशेषशून्यग्रहणकल्पनामपि व्युदस्यति **त्रिकोणेति** । अनुपपत्तिं विवृणोति **ग्रहणायोगादिति** । अध्याहृतशङ्कावाक्येन **ग्रहणायोगादिति** पञ्चम्यन्तान्वयः । **त्रिकोणम्**—गोमुखम् । **ग्रहणायोगात्**-दृष्टव्याप्तिविरोधेन सकलविशेषशून्यग्रहणकल्पनस्यानुपपन्नत्वादित्यर्थः । **अनुपपत्तेरित्यनेन** विपक्षे बाधकतर्कोऽप्यभिप्रेतः—सविशेषविषयत्वाभावे प्रत्ययत्वमेव हीयेतेति । अस्य तर्कस्यानुग्राह्यं प्रमाणं प्रत्यक्षं योग्यानुपलम्भश्च । यद्वा अनुपपत्तेरित्यनेन सविशेषविषयत्वे साधकं प्रमाणं विवक्षितम्—प्रथमाक्षसन्निपातजं ज्ञानं सविशेषविषयम्, ज्ञानत्वात् संप्रतिपन्नवदिति । एवं साधकप्रमाणाभावबाधकप्रमाणसद्भावाभ्यां विवक्षितकतिपयविशेषशून्यग्रहणं निर्विकल्पकमिति सिद्धम् । अनेन निर्विकल्पकशब्दस्य सङ्कुचितवृत्तित्वं फलितम् । स च सङ्कोचः कस्मिन् विषय इत्यत्राह **अत इति** । **अतः**—उक्तादर्शनानुपपत्तिभ्यामित्यर्थः । प्रथमद्वितीयपिण्डयोः सविकल्पकनिर्विकल्पकशब्दौ न सङ्केतितौ; अतस्तयोः पिण्डयोर्वैषम्यं वक्तव्यमिति शङ्कायां ग्राह्याकारभेदं दर्शयति **तत्रेत्यादिना** वाक्यद्वयेन । गोत्वानुवृत्तिप्रतीत्यप्रतीत्योः सविकल्पकनिर्विकल्पकशब्दयोः प्रवृत्तिनिमित्ततां दर्शयति **प्रथमप्रतीती**त्यादिना वाक्यद्वयेन । पूर्वग्रन्थोक्तं गोत्वं संस्थानशब्देन विशेषितम्; तेन पराभिमतविलीनाज्यगतघृतत्वादेरिव प्रत्यक्षत्वे व्यञ्जकापेक्षया विलम्बो नास्तीति दर्शितम् । तदेव संस्थानमनन्तरग्रन्थे सास्नादिशब्देन निर्दिश्यते । एवमनुवृत्तिग्रहाग्रहाभ्यां सविकल्पकत्वं निर्विकल्पकत्वं चोक्तम् । नानुवृत्तिमात्राग्रहणान्निर्विकल्पकत्वम्, किंतु जात्यग्रहणाच्च । अनुवृत्त्यग्रहणे हि जातिरेवागृहीता स्यादिति शङ्कायामाह

प्रथमपिण्डग्रहणस्य निर्विकल्पकत्वम्; न पुनः संस्थानरूपजात्यादेरग्रहणात् । संस्थानरूपजात्यादेरपि ऐन्द्रियकत्वाविशेषात्, संस्थानेन विना संस्थानिनः प्रतीत्यनुपपत्तेश्च प्रथमपिण्डग्रहणेऽपि ससंस्थानमेव

न पुनः संस्थाना (नरूपजात्यादेर?) ग्रहणादिति । अत्राग्रहणानुपपत्तिद्योतकः संस्थानरूपशब्दः । गोत्वा-देरसाधारणधर्मभूतानुवृत्त्यग्रहणात् गोत्वादिर्न गृहीत इति शङ्कायामग्रहणानुपपत्तिमेव विवृणोति संस्थानरूप-जात्यादेरपीति । ग्रहणकारणभूतेन्द्रिययोग्यतायामपि स एव हेतुरिति द्योतनाय पुनः संस्थानशब्दोक्तिः । निर्वि-कल्पकस्य सविशेषविषयत्वे प्रमाणत्वेन सविकल्पके निर्विकल्पकानुभूतार्थविशिष्टप्रतिसंधानं(त्यभिज्ञानं)पूर्वमुक्तम्। पराभिमतनिर्विकल्पकाभावे योग्यानुपलम्भः प्रत्यक्षञ्च प्रमाणम् । तयोरनुग्राहकतर्कश्चानेनोक्तो भवति । किं प्रमाणानुपपत्त्या प्रमेयानुपपत्त्या वा वस्तुमात्रग्रहणाभ्युपगम इति विकल्पमभिप्रेत्य प्रमाणानुपपत्तिं प्रथमं व्युदस्यति ऐन्द्रियकत्वाविशेषादिति । अनेन पृथिव्यपृथक्सिद्धगन्धव्यावृत्तिः॥ कथमैन्द्रियकत्वम्? समवायस्यानैन्द्रियक-त्वात् तदयुक्तमिति चेत्, तर्हि सविकल्पके विशिष्टग्रहणमनुपपन्नम् । अतो न भिन्नेन्द्रियग्राह्यत्वमिति न प्रमाणानुपपत्तिः[1] । असंनिहितत्वं प्रमेयानुपपत्तिः; अपृथक्सिद्धत्वेन तन्नास्तीति परिहरति संस्थानेनेति । अनेन चाक्षुषत्वेऽपि पृथक्सिद्धदण्डादिव्यावृत्तिः । एकेन्द्रियग्राह्यत्वे सति अपृथक्सिद्धत्वात् प्रमाणप्रमेया-नुपपत्तिर्नास्तीति ससंस्थानमेव वस्तु गृहीतमित्यर्थः । एवं पूर्वं संस्थानरूपशब्देनाभिप्रेतोऽर्थो विवृतो भवति । अनुवृत्त्यग्रहणान्न संस्थानरूपजात्यादेरग्रहः शङ्कनीयः; प्रकारप्रकारिभावेन ग्रहणोपपत्तेरिति भावः । प्रथमपिण्डग्रहणे अनुवृत्त्यग्रहणात् गोत्वमगृहीतं चेत्, द्वितीयपिण्डेऽपि गोत्वं दुर्ग्रहम्; अनुवृत्त्यग्रहणात् । अनेकव्यक्त्यन्वयरूपा ह्यनुवृत्तिः । सा चान्वयिनः पदार्थस्य पूर्वव्यक्तिनिष्ठतापरामर्शेनैव द्वितीयादिषु गृह्यते । अतः प्रथमपिण्डे गोत्वाग्रहात् तदन्वयापरामर्शेन द्वितीयव्यक्त्यन्वयरूपानुवृत्तिर्द्वितीयेऽपि दुर्ग्रहेति तत्रापि गोत्वमगृहीतम्[2], एवं प्रथमद्वितीयव्यक्त्यन्वयापरामर्शे (र्शात्) तृतीयेप्यनुवृत्तिरगृहीतेति गोत्वमगृहीतम्[2], एवं व्यक्त्यन्तरेष्वपि गोत्वं दुर्ग्रहं स्यात् । अतः प्रथमपिण्डग्रहण एव गोत्वग्रहणमभ्युपेतव्यम् । एवं सकलविशेषशून्यवस्तुग्रहणं व्युदस्तम् । 'जात्यादयो विशेष्यं च पृथक् निर्विकल्पके गृहीतम्; सविकल्पक एव विशिष्टतया ग्रहणम्' इति पक्षश्चार्थान्निरस्तो भवति । विशेषणं विशेष्यं च पृथक् पृथक् गृहीतमिति कथमवगतम्? दण्डकुण्डलादिषु विशेषणविशेष्ययोः पृथक्पृथग्ग्रहणपूर्वकत्वदर्शनादिति चेत्—तत्र किमपृथक्सिद्धिवेलायां पृथग्ग्रहणम्? उत पृथक्स्थितिवेलायाम्? न प्रथमः, विशिष्टत्वेनैव ग्रहणात् । पृथक्स्थितिवेलायां तु विशिष्टग्रहणमेव नास्तीति न तत्प्रतीतिहेतुत्वम् । अतः पृथग्ग्रहणस्य विशिष्टग्रहण-हेतुत्वाभावान्न गोत्वादौ पृथग्ग्रहणप्रसङ्गः ॥

ननु विशेषणविशेष्यभावस्य सप्रतियोगिकत्वात् तज्ज्ञानस्य प्रतियोगिस्वरूपज्ञानमपेक्षितमिति विशिष्टप्रतिपत्तेर्जात्यादिपदार्थस्वरूपमात्रग्रहणपूर्वकत्वं स्वीकार्यम् ॥ उच्यते । प्रतियोगिज्ञानापेक्षा नाम किं विशिष्टज्ञाने प्रतियोग्यवभासनियमः? उत तद्ज्ञानस्य विशिष्टज्ञानहेतुत्वम्? प्रथममभ्युपगच्छामः । द्वितीये, च जात्यादयः पदार्थाः प्रथमं मिथो व्यावृत्ततया गृहीताः, न वा? न चेत्, अव्यावृत्ततया गृहीतानां पूर्वोत्तरज्वालानामिव विशेषणविशेष्यभावप्रतियोगिताप्रतीतिर्नोपपद्यते । यदि व्यावृत्ततया

---

1 वस्तुग्राहकेन्द्रियाग्राह्यत्वं प्रमाणानुपपत्तिः । 2 अगृहीतं स्यादित्यन्वयः ।

**वस्तु इत्थमिति गृह्यते । अतो द्वितीयादिपिण्डग्रहणेषु गोत्वादेरनुवृत्तिधर्मविशिष्टता संस्थानिवत् संस्थानवच्च सर्वदैव गृह्यत इति तेषु सविकल्पकत्वमेव ।**

गृहीताः—तदा व्यावृत्तिश्च विशेषणविशेष्यभावेन पारतन्त्र्यादिलक्षणेन तदौपयिकाकारान्तरेण वा यदि न स्यात्, विशेषणविशेष्यभावव्यत्यासप्रतीतिः प्रसज्यते ॥ वस्तुसामर्थ्यात् वास्तव एव विशेषणविशेष्यभावः प्रतीयत इति चेत्—तर्हि वस्तुसामर्थ्यं नाम विशेषणविशेष्यभावरूपं तदौपयिकाकारान्तररूपं वा स्यात् । वस्तुस्वभावस्य सत्तयोपकारकत्वे वस्तुस्वभावादेव विशिष्टप्रतीतिसंभवात् स्वरूपमात्रग्रहणकल्पनमयुक्तम् । ज्ञाततयोपकारकत्वे तेन स्वभावेन व्यावृत्ततया विशेषणस्य प्रागवगतिरस्तीति प्रथमत एव विशिष्टप्रतीतिरभ्युपगता स्यात् । अतो वरं द्रव्यस्यैव प्रथमं विशिष्टतया प्रतीत्यभ्युपगमः ॥ तस्यापि स्वभावस्य स्वविशेष्यभूतं विशेषणं प्रति विशेषणत्वं न प्रथममवगतम्; किन्तु स्वरूपमात्रमिति चेत्—तर्हि विशेषणतत्स्वभावयोर्विशेषणविशेष्यभावव्यत्यासः प्रतीयेत । तत्परिहाराय तस्य वस्तुस्वभावस्याकारान्तराभ्युपगमे अनवस्था । यदि व्यत्यासविशिष्टप्रतीतिप्राथम्यप्रसङ्गपरिहाराय जात्यादीनां स्वरूपमेव विशेषणभावः विशेष्यभावश्च, न त्वाकारान्तरमित्यभ्युपगम्यते—तदा प्रथमप्रतिपत्तिर्विशेषणतया विशेष्यतया च स्यात्; तदप्रतिपत्तौ स्वरूपस्याागृहीतत्वप्रसङ्गात् । तथैव प्रतीतौ प्रथमत एव विशिष्टप्रतीतिः स्यात्; एकस्यां प्रतीतौ विशेषणतया विशेष्यतया च जात्यादीनां प्रतिपन्नत्वात् । अतः प्रथमत एव परस्परप्रतियोगिकविशेषणविशेष्यभावप्रतीतिः संभवतीत्यभ्युपगन्तव्यम् । एवं सति विशिष्टग्रहणस्य पृथग्ग्रहणपूर्वकत्वे भिन्नसामग्रीवेद्यवस्तुगोचरत्वमुपाधिः स्यात् । [1]पक्षव्यतिरिक्तव्यवच्छेद्याभावेऽप्युक्ततर्कबलात् पक्षव्यवच्छेदकत्वसिद्धेरुपाधित्वं युक्तम् । यथा प्रध्वंसाभावस्यादिमत्त्वादन्तवत्त्वे भावरूपादिमत्त्वमुपाधिर्भवति, भावोन्मज्जनप्रसङ्गरूपतर्कबलात्; यथा अग्निमत्त्वात् धूमानुमाने आर्द्रेन्धनमुपाधिः सर्वत्राग्निमति धूमोपलम्भप्रसङ्गतर्कबलाद्भवति—तद्वत् । अतः—प्रथमपिण्डग्रहण एव गोत्वं गृह्यते; द्वितीयादिष्वनुवृत्तिग्रहणम(मित्य?)भ्युपेत्य(तव्य)म् । अतो यथोक्तस्वरूपे एव निर्विकल्पकसविकल्पके ॥

अनुवृत्तिग्रहाग्रहौ हि सविकल्पकनिर्विकल्पकयोः प्रयोजकौ कथितौ; तत् कथं द्वितीयादिग्रहणस्य सविकल्पकत्वमित्यत्राह अत इति । अतः—प्रथमग्रहण एव ससंस्थानवस्तुग्रहणात् । अनुवृत्तिग्रहणविधुरप्रथमेतरग्रहणे कथं सविकल्पकत्वमित्यत्राह द्वितीयादीति । द्वितीयादिपिण्डग्रहणेषु—द्वितीयादित्वेन पिण्डग्रहणेषु । [2]अनेन संस्कारसचिवग्रहणं सविकल्पकम्, इतरन्निर्विकल्पकमिति सिद्धम । एतेन न केवलं जात्यनुवृत्त्यैव सविकल्पकत्वम्; जातिगुणादिष्वन्यतमानुवृत्तिविशिष्टग्रहणमपि सविकल्पकमिति सिद्धम । सर्वविधानुवृत्तिविकलग्रहणमेव निर्विकल्पकम् । यथा एकव्यक्तौ प्रथमाक्षसन्निपातजं

---

1 ननु पक्षातिरिक्तस्यापि साध्यवत्त्वाद्व्यवच्छेको यः स एवोपाधिः; अन्यथा पक्षेतरत्वमप्युपाधिः स्यात् । प्रकृते च पक्षातिरिक्तं साध्यशून्यमुपाधिव्यवच्छेद्यं नेत्यत्राह पक्षातिरिक्तेति । अतिरिक्ताव्यवच्छेदेऽपि पक्षमात्रे साध्यवत्त्वाद्व्यवच्छिन्दन् धर्मोऽपि अनुकूलतर्के सति उपाधिरिष्ट इति भावः । पक्षव्यवच्छेद्यत्वेति भावप्रकाशिकापाठः ।

2 उक्तं हि भाष्यकारैरेव वेदार्थसंग्रहे-"सविकल्पकः सोऽयमिति पूर्वावगतप्रकारविशिष्ट प्रत्ययः" इति सविकल्पकस्य संस्कारसापेक्षत्वम् । तेन वक्ष्यमाणसर्वसिद्धिः ।

अतः प्रत्यक्षस्य कदाचिदपि न निर्विशेषविषयत्वम् ।

अत एव सर्वत्र भिन्नाभिन्नत्वमपि निरस्तम । इदमित्थमिति प्रतीतौ इदमित्थम्भावयोरैक्यं कथमिव प्रत्येतुं शक्यते ? तत्रेत्थम्भावः सास्नादिसंस्थानविशेषः, तद्विशेष्यं द्रव्यमिदमंश इति अनयोरैक्यं प्रतीतिपराहतमेव । तथाहि—प्रथममेव वस्तु प्रतीयमानं सकलेतरव्यावृत्तमेव प्रतीयते । व्यावृत्तिश्च गोत्वादिसंस्थानविशेषविशिष्टतयेत्थमिति प्रतीतेः । सर्वत्र विशेषणविशेष्यभावप्रतिपत्तौ तयोरत्यन्तभेदः प्रतीत्यैव सुव्यक्तः ।

---

ज्ञानम् ॥ नन्वेकव्यक्तावपि संस्कारजन्यं देशकालाद्यनुवृत्तिविशिष्टग्रहणं सविकल्पकं स्यात् ॥ स्यादेव ; संस्कारजन्यत्व-अनुवृत्तिगोचरत्वाविशेषात । एकजातीयद्रव्येषु प्रथमपिण्डग्रहणमित्युक्तिस्तु जात्यनुवृत्तिप्रदर्शनार्था । संस्थानिवत्संस्थानवदिति दृष्टान्तप्रदर्शनं स्पष्टीकरणार्थम । पिण्डधर्मः संस्थानम, तद्धर्मोऽनुवृत्तिरिति धर्मधर्मिभावरूपसाम्यनिबन्धनश्च दृष्टान्तद्वयोपादानम् । एवं सविकल्पकनिर्विकल्पकयोः संस्कारसचिवत्वतद्विरहौ सामग्रीवैषम्यम्, गोत्वाद्यनुवृत्तितद्विरहौ ग्राह्याकारवैषम्यमित्युक्तं भवति ॥ द्विविधस्यापि प्रत्यक्षस्य सविशेषविषयत्वं निगमयति अत इति ॥

प्रसङ्गात्[1] भेदाभेदं निराकरोति अत एवेति । अत एव—प्रथमपिण्डग्रहणस्य विशिष्टविषयत्वसमर्थनेन । सर्वत्र—पिण्डद्वय-जातिव्यक्ति-गुणगुणि-क्रियातद्वत्-कार्यकारणेष्वित्यर्थः । कथमित्यत्राह इदमित्थमिति । भेदाभेदवादिना, पिण्डानामन्योन्यभेदाभेदसमर्थने इदमिदं न भवतीति भेदः, इदमिदं भवतीत्यभेद इत्येकस्यैव युगपत् भावाभावरूपव्याहतिपरिहारार्थम , जात्यात्मना अभेदो व्यक्त्यात्मना भेद इत्याकारद्वयेन भेदाभेद उपपादितः । जातिगतोऽभेदः व्यक्तिगतो भेदश्चेति नैकस्य द्व्यात्मकतेति शङ्कापरिहाराय जातिव्यक्त्योश्चान्योन्यभेदाभेद उक्तः । तन्निर्वहणायाऽऽकारान्तरान्वयादर्शनात् प्रतीतिरेव शरणमित्याश्रिता । अतस्तन्निरासाय जातिव्यक्त्योर्भेदेनैव प्रतीतेरभेदस्य प्रतीतिविरोधं दर्शयति इदमित्थमिति । इदम्भावो विशेष्यम् ; इत्थम्भावो विशेषणम् । इत्थमंशः कः ; इदमंशः क इत्यत्राह तत्रेति । अत्र जातिव्यक्त्योर्भेदाभेदे चत्वारो हेतवः परोक्ताः—प्रथमपिण्डग्रहणे अभेदेन ग्रहणम , एकशब्दानुविद्धप्रत्ययः, मत्वर्थीयप्रत्ययनिरपेक्षसमानाधिकरणपदप्रयोगः, सहोपलम्भनियमश्चेति । अत्र सहोपलम्भनियमसमानाधिकरणप्रत्ययौ भेदाभेदसाधकौ ; अन्यौ द्वावभेदसाधकौ । इदं हेतुचतुष्टयमाशङ्क्याह तथा हीति । तान् हृदि कृत्वा प्रथमपिण्डग्रहणे अभेदेन ग्रहणं व्युदस्यति प्रथममेवेत्यादिना । सकलेतरव्यावृत्तम्—सकलविजातीयव्यावृत्तमित्यर्थः । ततः किं भेदेन ग्रहणस्येत्यत्राह व्यावृत्तिश्चेति । गोत्वादिसंस्थानविशेषविशिष्टतया इत्थमिति प्रतीतेर्व्यावृत्तिश्च निश्चीयत इत्यर्थः । अनेनाखण्डवाक्यार्थभङ्गश्चार्थतः कृतो भवति; शौक्ल्यादिवैधर्म्यस्येहाभिप्रेतत्वात् । तच्च पूर्वं दर्शितम् ॥ गोत्वादिविशिष्टतया प्रतीतिरस्तु, तथाप्यभेदः स्वप्रमाणेन प्रसजन् न (प्रसज्यते चेत्, न) निवार्यत इत्यत्राह सर्वत्रेति । सर्वत्र—गोत्वतदाश्रयादिषु, दण्डकुण्डलादिषु च । दण्डदण्डिनोरिव जातितद्वतोरपि विशेषणविशेष्यभाव एव अभेदविरोधीत्यर्थः । विशेषणविशेष्यभावेति । गोत्वव्यक्त्योरनुवृत्तिव्यावृत्त्यग्रहेऽपि विशेषणविशेष्यभावरूपेणाकारान्तरेण भेदो गृहीतः ; न ह्येकेनैवाकारेण भेदग्रह इत्यस्ति नियम इति भावः । उभयत्रात्यन्तभेदोऽस्ति चेत्, मत्वर्थीयप्रत्ययनिरपेक्षसामानाधिकरण्यमेकशब्दानुविद्धप्रत्ययः सहोपलम्भनियमश्च कथमेकत्र

---

1 प्रसंगादिति । वेदार्थसंग्रहेऽप्यत्रैव प्रकरणे एतन्मतनिरासात् प्रकारान्तरेणावतरणं दर्शितं भाष्यार्थदर्पणे

**तत्र दण्डकुण्डलादयः पृथक्संस्थानसंस्थिताः स्वनिष्ठाश्च कदाचित् क्वचिद्द्रव्यान्तरविशेषणतयाऽवतिष्ठन्ते । गोत्वादयस्तु द्रव्यसंस्थानतयैव पदार्थभूतास्सन्तो द्रव्यविशेषणतया अवस्थिताः । उभयत्र विशेषणविशेष्यभावः समानः । तत एव तयोर्भेदप्रतीतिश्च । इयांस्तु विशेषः—पृथक्स्थितिप्रतिपत्तियोग्या दण्डादयः, गोत्वादयस्तु नियमेन तदनर्हाः इति । अतो वस्तुविरोधः प्रतीतिपराहत इति प्रतीतिप्रकारनिह्नवादेवोच्यते । प्रतीतिप्रकारो**

~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~

**दृश्यते,** नान्यत्रेत्यत आह **तत्रेति** । तत्र – गोत्वतदाश्रयदण्डदण्ड्यादिवर्गे । पृथक्संस्थानविशिष्ट[1]स्वपर्यवसित-कादाचित्कविशेषणभावो मत्वर्थीयप्रत्ययसापेक्षसामानाधिकरण्यप्रत्यये प्रयोजकः । द्रव्यसंस्थानतयैव पदार्थत्वेन तत्पर्यन्तत्वात् तद्विशेषणतयैव स्थितिर्मत्वर्थीयप्रत्ययनिरपेक्षसामानाधिकरण्ये प्रयोजिका । सहोपलम्भनियमतद-भावयोरप्यपृथक्सिद्धत्वपृथक्सिद्धत्वे एव प्रयोजके; न तु भेदाभेदावित्यर्थः । सहोपलम्भनियमे, द्वयोरेव सहभावात् सहोपलम्भो द्वित्वसाधकः; तन्नियमस्तु भिन्नयोरेकस्मिन्नपि नास्तीत्यसाधारणानैकान्तिकत्वादनु-भयसाधकः । किञ्च विरुद्ध एव; द्वित्वसाधकसहोपलम्भनियमो हि द्वित्वस्य नियमं दर्शयति । एकशब्दा-नुविद्धप्रत्ययस्तु एको दण्डीत्यादिषु दण्ड्यन्तरव्यावर्तकत्वदर्शनेन धर्म्यन्तरनिषेधपरत्वान्न धर्मधर्मिणोरभेदसाधक इति भावः । यद्येवं जातिकुण्डलादेर्वैषम्यम्, यदि विशेषणविशेष्यभावसाम्यादुभयत्र भेदः साध्यते, तर्हि सहोपलम्भनियमादिवैषम्ये[ण]एकत्वमपि स्यादित्यत आह **उभयत्रेति** । विशेषणविशेष्यभावा[दि]विशेषात् तत्प्रयुक्तभेदप्रतिपत्तिरनिवार्या; विशेषणविशेष्यभावे सति भेदस्योभयसंप्रतिपत्तेः । सहोपलम्भनियमे ऐक्यं हि विमतम् । अतो न संप्रतिपन्नभेदविरुद्धाभेदः कल्प्यः । यथा शीतत्वोष्णत्वाद्यवान्तरवैषम्यं न द्रव्यत्वादिसाधारणा-कारविरोध्यद्रव्यत्वकल्पकम्, एवं सहोपलम्भनियमो न भेदविरोध्याकारकल्पक इति भावः । यद्वा—पृथक्-स्थितानां दण्डादीनामविशेषणानामेव सतां कदाचित् सहभावमात्रात् विशेषणत्वमध्यस्तमित्यत्यन्तभिन्नेषु विशेष-णत्वाभावाद्विशेषणत्वं नात्यन्तभेदसाधनसमर्थमित्यत्राह **उभयत्रेति** । व्यावृत्तप्रतीतौ व्यावर्तकतयोपयुज्य-मानत्वं विशेषणत्वम् । तच्च दण्डादिष्वपि मुख्यमिति विशेषणत्वादत्यन्तभेदो युज्यत इति भावः ॥ गोत्वतदा-श्रयादिष्वेव सहोपलम्भनियमः, नान्यत्रेति व्यवस्थासिद्ध्यर्थमैक्यं कल्पनीयमिति चेत्—तत्राह **इयां-स्त्विति** । इयानेव; न त्वधिकं कल्पनीयमित्यर्थः । यदि सहोपलम्भनियमव्यवस्थार्थमैक्यं कल्प्यते—तदयुक्तम्; तत्रैवैक्यम्, नान्यत्रेति व्यवस्थार्थमर्थान्तरकल्पनप्रसङ्गात् । यद्यैक्यं तत्र स्वाभाविकम्, तर्हि सहोपलम्भनियमः स्वाभाविक इति न प्रतिपन्नविरुद्धार्थान्तरकल्पनागौरवमाश्रयणीयमिति भावः । यद्वा, विशेषणविशेष्यभावप्रयुक्तभेदप्रतिपत्तिर्यथोभयत्र तुल्या, तथा सहोपलम्भनियमो दण्डदेवदत्तादावपि स्यात्, जातिव्यक्त्योर्वा स न स्यादित्यत्राह **इयानिति** । न हि साधारणाकारेऽभ्युपगतेऽवान्तर-भेदस्त्याज्य इत्यर्थः । घटे पटस्याभावो भेदः, तत्र तस्य सद्भावोऽभेद इति भावाभावविरोधस्य, 'न हि दृष्टेऽनुपपन्नं नाम' इति न्यायात् प्रतीतिपराहतत्वमाशङ्क्याह **अत इति** । अतः—इत्थं भेदसामानाधि-करण्येनाभेदस्य प्रतीत्यभावात् ॥ कथं प्रतीतिप्रकार इत्यत्राह **प्रतीतिप्रकारो हीति** । यदि विशेषण-विशेष्ययोरैक्यमस्ति, तर्ह्यन्यतरदेव प्रतीयेत । अन्यतरप्रतीतिर्वाऽस्तु—तथाऽपि नैक्यम्; यथा पूर्वानुभूतयोः पुरुषयोरेकस्मिन् दृष्टे न हि पुरुषैक्यम् ॥ जातिव्यक्त्योः सम्बन्धनियम एवैक्यमिति चेत्—न; भेदसाधक-

1 स्वपर्यवसितेति । स्वनिष्ठा इति भाष्योक्तार्थमिदम् ।
~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~

हि इदमित्थमित्येव सर्वसम्मतः । तदेतत् सूत्रकारेण, "नैकस्मिन्नसंभवात्" इति सुव्यक्तमुपपादितम् ।

अतः प्रत्यक्षस्य सविशेषविषयत्वेन प्रत्यक्षादिदृष्टसंबन्धविशिष्टविषयत्वादनुमानमपि सविशेषविषयमेव । प्रमाणसङ्ख्याविवादेऽपि सर्वाभ्युपगतप्रमाणानामयमेव विषय इति न केनापि प्रमाणेन निर्विशेषवस्तुसिद्धिः । वस्तुगतस्वभावविशेषैस्तदेव वस्तु निर्विशेषमिति वदन् जननीवन्ध्यात्वप्रतिज्ञायामिव स्ववाग्विरोधमपि न जानाति ॥

यत्तु—प्रत्यक्षं सन्मात्रग्राहित्वेन न भेदविषयम्, भेदश्च विकल्पासहत्वाद्दुर्निरूपः—इत्युक्तम, तदपि—जात्यादिविशिष्टस्यैव वस्तुनः प्रत्यक्षविषयत्वात् जात्यादेरेव प्रतियोग्यपेक्षया वस्तुनः स्वस्य च भेदव्यवहारहेतुत्वाच्च दूरोत्सारितम् । संवेदनवत् रूपादिवच्च परत्र व्यवहारविशेषहेतोः स्वस्मिन्नपि तद्व्यवहारहेतुत्वं युष्माभिरभ्युपेतं भेदस्यापि संभवत्येव । अत एव च नानवस्थाऽन्योन्याश्रयणञ्च ।

---

संबन्धनियमस्य भेदनियतसंबन्धनियम्यत्वात् । द्वयोर्हि संबन्धः; तन्नियम ऐक्यं चेत्, संबन्धस्वरूपभङ्गप्रसङ्गः । एवं भेदाभेदनिरासस्य सूत्रकाराभिमतत्वमाह तदेतदिति ।

अथ प्रमाणान्तराणां प्रत्यक्षमूलत्वात् तेषामपि सविशेषविषयत्वमाह अत इति । प्रत्यक्षादिदृष्टधूमादिसंबन्धविशिष्टाग्न्यादिविषयत्वादित्यर्थः । स्वाभिमतमुक्तं प्रमाणत्रयम् । प्रमाणान्तराभ्युपगमेऽपि तेषां सविशेषविषयत्वमाह प्रमाणसङ्ख्येत्यादिना । प्रमाणानि सविशेषविषयाणि स्युः, तानि तर्कपराहतानीति शङ्कायाम्—अस्मिन् सर्वप्रमाणसविशेषविषयत्वविस्तरोक्तिसमयेऽपि पूर्वं तत्सङ्ग्रहोक्ताविव, बुद्धिस्थस्वसिद्धिवादेऽपि न निर्विशेषत्वसिद्धिरिति ज्ञापनाय, 'सविशेषत्वबाधकतया परोक्तयुक्तयभ्युपगमेऽपि युक्तिरूपविशेषैः सविशेषत्वमवर्जनीयम्' इति पूर्वोक्तं स्मारयन् विरोधं च दर्शयति वस्तुगतेति । यद्वा पूर्वं स्वानुभवसिद्धे विशिष्टे निर्विशेषत्वनिष्कर्षो निष्कर्षकधर्मैः सविशेषत्वापादनेन दूषितः ; तत् सर्वं प्रमाणनिर्विशेषविषयत्वनिष्कर्षेऽप्यतिदिशति वस्तुगतेति ॥

एवं निर्विशेषचिन्मात्रपारमार्थ्य-व्यतिरिक्तापारमार्थ्यप्रतिज्ञाबाधः सामान्येन सर्वप्रमाणसविशेषगोचरत्वेन दर्शितः । अथ परोक्तं प्रमाणतर्कजातं विशेषतो दूषयितुमुपक्रमते । शास्त्रबलीयस्त्वमिच्छता परेण प्रथमं शास्त्रमुपन्यस्तम् । तदनिच्छता प्रत्यक्षाविरुद्धेऽर्थे शास्त्रं प्रमाणयता सिद्धान्तिना प्रत्यक्षस्य सन्मात्रविषयत्वं निराक्रियते । तत्र प्रत्यक्षस्य सन्मात्रविषयत्वे, भेदस्य दुर्निरूपत्वे च परोक्तं कुतर्कमनूद्य निरस्यति यत्त्विति । यत्त्वित्यादिना ग्रन्थद्वयेन तदनुभाषणम् (प्रमाणानुपपत्तिप्रमेयानुपपत्त्यनुभाषणम्) । तदपीति । न केवलं सविशेषविषयत्वोपपादनम्, निर्विशेविषयत्वोपपादनानुपपत्तिश्चेति अपिशब्दस्य भावः । यद्वा—न केवलं भिन्नविषयत्वं स्थापितम्; सन्मात्रविषयत्वमपि दूरोत्सारितमित्यपिशब्दस्य भावः । जात्यादेरेवेति । स्वपरनिर्वाहकत्वात् व्यावृत्तिरूपधर्मान्तरनिरपेक्षस्य प्रतियोगिनिरपेक्षस्यैव चेति भावः । दूरोत्सारितम् । प्रतियोगिस्मरणकृतविलम्बे सत्यपि ज्ञानस्य यावत्कार्यसिद्धि सत्त्वं(स्थिरत्वं)कल्प्यम् । तथापि प्रतियोगिनिरपेक्षजात्यादेर्भेदत्वेन, एकक्षणवर्तित्वेऽपि प्रत्यक्षस्य, भेदस्य सुग्रहत्वात् दूरोत्सारितमिति भावः । जात्यादेरेवेत्यभिप्रेतं भेदस्य स्वपरनिर्वाहकत्वं परोक्तयुक्त्यैव दर्शयति संवेदनवदित्यादिना । संवेदनवद्रूपादिवच्चेत्यनेन परोक्तपक्षसपक्षौ द्वावपि साक्षीकृतौ । अनेन परोक्तदूषणस्य परिहृतत्वं दर्शयति अत एवेति । अत्र प्रथमचशब्दस्य स्वपरनिर्वाहकत्वोपपादनेन दूषणपरिहारश्च सिद्ध इति भावः । द्वितीयश्चशब्दो दूषणद्वयसमुच्चये ॥ अनवस्थापरिहारसिद्धौ तदर्थस्वपरनिर्वाहकत्वसिद्धिः, तदर्थस्वपरनिर्वाहकत्वसिद्धौ अनवस्थापरिहारसिद्धिरित्यन्योन्याश्रय इति चेन्न ; भ्रमनिवृत्त्यन्वय-

एकक्षणवर्तित्वेऽपि प्रत्यक्षज्ञानस्य तस्मिन्नेव क्षणे वस्तुभेदरूपतत्संस्थानरूपगोत्वादेर्गृहीतत्वात् क्षणान्तरग्राह्यं न

व्यतिरेकाभ्यामेव स्वपरनिर्वाहकत्वसिद्धेरनवस्थापरिहारात् । प्रत्यक्षज्ञानस्य त्रिचतुरक्षणमात्रवर्तित्वेऽपि, एकक्षणवर्तित्वमभ्युपगम्य परिहरति एकक्षणवर्तित्वेऽपीति ।

अत्रेदमनुसन्धेयम् — किं भेदप्रतीतिरनभ्युपगता, उताङ्गीकारेऽपि मूलं नास्ति, किं वा मूलं दुर्निरूपमिति ; विषयो वा किं नास्ति, उत सन्नपि दुर्निरूप इति । तत्र प्रथमं (?) प्रतीत्यनभ्युपगमो नोपपद्यते ; वेदान्तानामनारम्भणीयत्वप्रसङ्गात् ; वादिप्रतिवादिरूपेण कथानुपपत्तेश्च । मूलमप्यस्ति ; कार्यस्य संप्रतिपन्नत्वेन कारणस्य कल्पनीयत्वात् । 'कार्यं हि प्रतीतं कारणकल्पनायां प्रमाणम् ; न पुनः स्फुटावधारितं कार्यं कारणनिरूपणायापह्नवमर्हति' इति नीतिविदः । दुर्निरूपत्वमपि नास्ति ; कार्योत्पत्त्यनुरूपत्वं हि कारणस्य सुनिरूपत्वम् । कार्योत्पत्त्या कारणस्य तदनुरूपत्वं सिद्धमिति न दुर्निरूपत्वम् । विषयोऽप्यस्त्येव । यदि न विषयः, तर्हि त्वयैव तत् अनुयुक्तेन वक्तव्यम् — प्रपञ्चस्य बाध्यत्वज्ञानं किं सविषयम् । उताविषयमिति । सविषयत्वे, विषयोऽङ्गीकृत एव । नो चेत्, बाध्यत्वमपि नेति प्रपञ्चपारमार्थ्यं स्यात् । अतोऽस्त्येव विषयः । न च बाध्यविषयत्वम् ; तथा सति भेदबाधकप्रमाणजन्यप्रतीतेरपि मिथ्याविषयत्वेन भेदपारमार्थ्यप्रसङ्गात् । एतान् प्रत्याहुः,

"स्वशास्त्रनिर्णये सत्ये सत्याः स्युर्लोकनिर्णयाः । स्वशास्त्रनिर्णयेऽसत्ये सत्याः स्युर्लोकनिर्णयाः ॥"

इति । उक्तविकल्पेषु पूर्वे चत्वारः पक्षाः अपि चेत्यादिना भाष्येण वक्ष्यमाणेनाभिप्रेता इति तेषां निरस्तत्वं तत्र ज्ञास्यते । अत्र प्रथमं बाध्यविषयत्वपक्षं प्राधान्यात् परिजिहीर्षता भाष्यकारेण प्रत्यक्षबाधस्तावन्न दृष्ट इति, यौक्तिकबाधः परिह्रियते । तत्र प्रतियोगिनिरपेक्षजात्यादेरेव भेदत्वेन तद्विशिष्टविषयतया क्षणान्तरग्राह्याभावात् क्रमयौगपद्यविकल्पायोगरूपा प्रमाणानुपपत्तिः परिहृता । एवं प्रमेयानुपपत्तौ स्वरूपपक्षे प्रतियोगिनिरपेक्षभेदव्यवहारप्रसक्तिश्च इष्टतया परिहृता ; हानोपादानादिरूपस्य गोत्वादिशब्दावलम्बिनश्च व्यवहारस्य, प्रतीतेश्च प्रतियोगिनिरपेक्षत्वात् । शब्दव्यवहारविशेषे प्रतियोगिसापेक्षत्वस्य, दाराः कलत्रम् आपः इत्यादिषु स्त्रीत्वनपुंसकत्वबहुत्वादिवत्, शब्दस्वभावायत्तत्वान्नार्थदूषणत्वम् । व्यावृत्तादिशब्दप्रयोगेष्वेव प्रतियोगिसापेक्षत्वदर्शनात् गोत्वादिप्रतिपत्तिव्यवहारेषु तदभावाच्च शब्दव्यवहारविशेषस्य प्रतियोगिसापेक्षत्वं शब्दविशेषस्वभावाधीनमित्यन्वयव्यतिरेकाभ्यां निश्चीयते । शब्दस्वभावश्च प्रवृत्तिनिमित्तसाधारण्यात् तदवच्छेदकोपाधिपुरस्कारेणार्थविशेषप्रतीतिहेतुत्वम् । गोत्वशब्दो ह्यसाधारणो गोत्वं स्वरूपेण दर्शयति । भेदशब्दस्तु व्यावृत्तिबुद्धिहेतुत्वरूपप्रवृत्तिनिमित्तसाधारण्यात् तदवच्छेदकमहिषादिपदार्थान्तररूपोपाधिपुरस्कारेण गोत्वं दर्शयति । पर्यायत्वप्रसक्तिश्च परिहृता ; व्यावृत्तिरूपे परे ब्रह्मणि ब्रह्मशब्देन सह स्वरूपशब्दवत् अधिकार्थाविवक्षायामपि भिन्नशब्दस्य प्रयोगसंभवात् । उपाधिशब्दानां हि वाच्यानतिरेकेऽपि तटस्थोपाधिभेदादपर्यायत्वमुपपद्यते । तत्रेच्छौ प्रयोगाप्रयोगौ । भेदस्य व्यावृत्त्यनुवृत्तिविकल्पोऽपि परिहृतः ; व्यावृत्त इत्यभ्युपगमे स्वरूपव्यावृत्तशब्दयोरिव भेदशब्दस्यानुवृत्तप्रयोगसंभवात् । 'भिन्नो हि भेदयोगी' इत्येतच्च स्वरूपस्यैव जात्यादिभेदविशिष्टत्वेन भिन्नशब्दप्रयोगसंभवात् परिहृतम् । धर्मभूतजात्यादिषु भिन्न इति प्रयोगो भवन्मते व्यावृत्तिरूपे ब्रह्मणि

अतः 'अनुभूतिः सती स्वयं स्वप्रागभावं न साधयति' इति प्रागभावासिद्धिर्न शक्यते वक्तुम् । अनुभूतेरनुभाव्यत्वसंभवोपपादनेन अन्यतोऽप्यसिद्धिर्निरस्ता । तस्मान्न प्रागभावाद्यसिद्ध्या संविदोऽनुत्पत्तिरुपपत्तिमती ॥

यदप्यस्या अनुत्पत्त्या विकारान्तरनिरसनम्— तदप्यनुपपन्नम् ; प्रागभावे व्यभिचारात् । तस्य हि जन्माभावेऽपि विनाशो दृश्यते । भावेष्विति विशेषणे तर्ककुशलताऽऽविष्कृता भवति । तथा च भवदभिमताऽविद्या अनुत्पन्नैव विविधविकारास्पदं तत्त्वज्ञानोदयादन्तवती चेति तस्यामनैकान्त्यम् ॥ तद्विकाराः सर्वे मिथ्याभूता इति चेत्—किं भवतः परमार्थभूतोऽप्यस्ति विकारः, येनैतद्विशेषणमर्थवद्भवति । न ह्यसावभ्युपगम्यते ॥

यदपि—अनुभूतिरजत्वात् स्वस्मिन् विभागं न सहते इति—तदपि नोपपद्यते, अजस्यैवात्मनो देहेन्द्रियादिभ्यो विभक्तत्वात् । अनादित्वेन चाभ्युपगताया अविद्याया आत्मनो व्यतिरेकस्यावश्याश्रयणीयत्वात् ।

स विभागो मिथ्यारूप इति चेत्—जन्मप्रतिबद्धः परमार्थविभागः किं क्वचिद्दृष्टस्त्वया ?

---

अथ प्रासङ्गिकमात्मानुभवं परिसमाप्य प्रस्तुतप्रागभावसिद्धिं निगमयति अत इति । अतः—निर्विषयज्ञानस्याप्रामाणिकत्वात् तदवच्छिन्नज्ञाननित्यत्वस्योक्तानुपपत्तिपराहतत्वात् प्रागभावग्राहकसमर्थनाच्चेत्यर्थः ॥ कथमनुभूतिः सती स्वप्रागभावं साधयेत् ॥ इत्थम्—स्मर्तव्यास्मरणलिङ्गेन इयन्तं कालं न किञ्चिदहमज्ञासिषमिति सुषुप्त्यवस्थापरामर्शेन ज्ञानसामान्याभावगोचरेण तदन्तर्गतस्वाभावोऽपि स्वेनैव विषयीकृत इति स्वतःपक्षे प्रागभावसिद्धिरुक्ता । परतःपक्षेऽपि सिध्यतीत्याह अनुभूतेरिति । अथ प्रागभावाभावहेतुकानुत्पत्तिदूषणमुपसंहरति तस्मादिति ।

अथानुत्पत्त्या विकारान्तरनिरसनं दूषयति यदपीत्यादिना । अनुत्पत्तिरूपहेत्वसिद्ध्या विकारान्तरनिरासोऽनुपपन्नः । तदभ्युपगमेऽपि, हेतोर्व्यभिचारमाह प्रागभाव इति । तद्विवृणोति तस्य हीति । भावशब्दोपादाने, तद्विरहेऽपि, व्यभिचारसाम्याभिप्रायेण भावशब्दोपादानमुपालभते भावेष्वितीति । नात्र(नतु) प्रतिज्ञान्तरं दूषणमुच्यते । तद्धि उक्तिदूषणम् ; न त्वर्थदूषणम् । भावरूपत्वे व्यभिचारं दर्शयति तथा चेति । तथाशब्देन भावरूपत्वं विवक्षितम् ; तैर्भावरूपाज्ञानस्य समर्थितत्वात् । तत्र परिहारं शङ्कते तद्विकारा इति । अस्य विशेषणस्य व्यावर्त्याभावान्नैरर्थक्यमाह किं भवत इति । व्यावर्त्यमस्ति चेत्—अद्वैतहानिः । न चेत्—विशेषणवैयर्थ्यमित्यर्थः । किं विकारमात्राभावः साध्यते, उत परमार्थविकाराभावः ? प्रथमेऽनैकान्त्यम् । द्वितीयेऽप्यनुभूतिः परमार्थविकाररहिता अजत्वादित्युक्तं स्यात् । यत् परमार्थविकारवत् तत् उत्पन्नम् , यथा घट इति व्यतिरेकोदाहरणं वाच्यम् । घटस्य परमार्थविकारानभ्युपगमाद्दृष्टान्तः साध्याव्यावृत्त इति हेतोर्व्याप्यत्वासिद्धिर्भवेदिति भावः ॥

अथाजत्वात् नानात्वनिषेधं प्रतिवदति यदपीति । अत्र किं भेदमात्रं दुदूषयिषितम् ? उत विजातीयभेदः, उत सजातीयभेदः, उत स्वगतभेदः इति पक्षेषु हेत्वसिद्ध्या निरस्तेष्वपि हेतुत्वाभ्युपगमेन प्रथमं द्वितीयं शिरश्च दूषयंश्चार्वाकव्यतिरिक्तसर्ववादिसंमतस्थले व्यभिचारं दर्शयति अजस्यैवेति । मृषावाद्यभिमतस्थल एव हेतोरनैकान्त्यमाह अविद्याया इति । "तमःप्रकाशयोरिव विरुद्धस्वभावयोरितरेतरभावानुपपत्तौ सत्याम्" इति हि तद्ग्रन्थः । तद्विभागस्य मिथ्यात्वमाशङ्क्य तदभ्युपगमेन परिहरति स विभाग इत्यादिना । जन्मप्रतिबद्धः—उत्पत्तिव्याप्तः । घटादिषु परमार्थविभागस्यैव उत्पत्तिव्याप्यत्वाभ्युपगमे घटादिविभागस्य पारमार्थ्यप्रसङ्गात्, तस्यापारमार्थ्ये विशेषणवैयर्थ्यादुक्तदोषः स्यादेवेत्यर्थः । हेतुदूषणस्य बुभुत्सायाम्, दृष्टान्तस्य

अविद्याया आत्मनः परमार्थतो विभागाभावे वस्तुतो ह्यविद्यैव स्यादात्मा। अबाधितप्रतिपत्तिसिद्धदृश्यभेदसमर्थनेन दर्शनभेदोऽपि समर्थित एव, छेद्यभेदात् छेदनभेदवत् ॥

यदपि—नास्या दृशेर्दृशिरूपाया दृश्यः कश्चिदपि धर्मोऽस्ति; दृश्यत्वादेव तेषां न दृशिधर्मत्वम्—इति च। तदपि स्वाभ्युपगतैः प्रमाणसिद्धैर्नित्यत्वस्वयंप्रकाशत्वादिधर्मैरुभयमनैकान्तिकम्। न च ते संवेदनमात्रम्, स्वरूपभेदात्। स्वसत्तयैव स्वाश्रयं प्रति कस्यचिद्विषयस्य प्रकाशनं हि संवेदनम्। स्वयंप्रकाशता

---

साध्यव्यावृत्तत्वमुखेन व्याप्यत्वासिद्धिरभिप्रेताऽनुसन्धेया। यत् परमार्थविभागवत् तत् उत्पन्नम्। यथा घट इति हि व्यतिरेकदृष्टान्तः। घटस्य परमार्थविभागवत्त्वानभ्युपगमात् साध्याव्यावृत्तत्वं हि स्पष्टम्। विभागस्य मिथ्यात्वे दूषणान्तरमाह **अविद्याया** इति। अथ सजातीयभेदाभावं व्युदस्यति **अबाधितेति**। पूर्वं प्रमाणप्रमेयानुपपत्तिमिथ्यात्वानुमाननिरासमुखेन दृश्यभेदः समर्थितः। तत्तुल्यन्यायतया दर्शनभेदोऽपि सिद्ध इत्यर्थः। अवच्छेदकगतो भेदः, न त्ववच्छेद्यगत इति घटकरकाकाशदृष्टान्तमाशङ्कयाह **छेद्यभेदादिति**। यथा **संवित्सिद्धौ**, "प्रतिप्रमातृविषयं परस्परविलक्षणाः। अपरोक्षं प्रकाशन्ते सुखदुःखादिवत् धियः॥ संबन्धिव्यङ्ग्यभेदस्य संयोगेच्छादिकस्य तु। न हि भेदः स्वतो नास्ति नाप्रत्यक्षश्च संमतः॥" इति। प्रतिप्रमातृविषयं ज्ञानभेदोऽपरोक्षः। परज्ञानं परोक्षतया भासते; स्वज्ञानमपरोक्षतया। घटादिविषयज्ञानानां परस्परवैलक्षण्यं चापरोक्षम्। अतस्तद्भेदापलापः स्वानुभवप्रत्यक्षबाधित इति प्रथमग्रन्थार्थः। सर्वमेकं ज्ञानं ज्ञातृज्ञेयरूपावच्छेदकसंबन्धभेदाद्भेदेन प्रतीयत इत्यत्राह **सम्बन्धीति**। **संबन्धिव्यङ्ग्यभेदस्येति** शङ्काबीजानुवादः। न च ज्ञातृज्ञेयरूपसम्बन्धिव्यङ्ग्यत्वमात्रेण ज्ञानस्य भेदः सम्बन्धिभेदकृत इति औपाधिकः स्यात्; संयोगादेरपि संबन्धिव्यङ्ग्यत्वमात्रेण घटकरकावच्छिन्नाकाशवदेकत्वप्रसक्तेः। संबन्धी हि द्वेधा—सत्ताहेतुर्व्यक्तिहेतुश्चेति। यस्य संयोगादेः संबन्धिव्यतिरेकेण स्वरूपे प्रमाणं नास्ति, तस्य संबन्धी सत्ताहेतुः; यस्य तु शब्दाकाशादेरस्ति, तस्य तदुपाधिको भेदावभासः; न स्वतः। तस्मात् ज्ञातृज्ञेयव्यतिरेकेणालब्धसद्भावस्य ज्ञानस्य स्वाभाविक एव भेदः। तस्मान्न सजातीयभेदापलाप इत्यर्थः। एतदभिप्रेत्य **छेद्यभेदादित्युक्तम्**॥

अथ स्वगतनित्यत्वैकत्वादिभेदनिरासार्थं पूर्वपक्षिणा अनुभूतिं पक्षीकृत्योक्तम् अनुभूतित्वादिति व्यतिरेकि, दृश्यं पक्षीकृत्योक्तं दृश्यत्वादित्यन्वयि च दूषयति **यदपीत्यादिना**। **अनैकान्तिकमिति**। अनियतम्; व्याप्तिशून्यमित्यर्थः। दृश्यत्वादित्यन्वयिनः पक्षत्रयवृत्तित्वलक्षणमनियतत्वम्; दृशित्वादिति व्यतिरेकिणः साध्यव्यावृत्तावपि साधनाव्यावृत्तिलक्षणमनियतत्वमात्रम्। अनुभूतिर्न दृश्यधर्मवती दृशित्वात्; यद् दृश्यधर्मवत्, तन्न दृशिः, यथा घटः इति ह्यनुमानशरीरम्। अत्र दृश्यधर्मवत्त्वस्य अदृशित्वव्याप्तिरनुभूतौ भग्ना, तस्याः दृशित्वनित्यत्वादिधर्मवत्त्वादिति भावः। नित्यत्वादिमिथ्यात्वे नित्यत्वादिविपरीताकारसत्यत्वं प्रसजेदिति तत्परिहाराय तेषां स्वरूपमात्रत्वमाशङ्क्य परिहरति **न चेत्यादिना**। तेषां स्वरूपमात्रत्वं किमन्वयरूपाणाम्, उत व्यतिरेकरूपाणामिति विकल्पमभिप्रेत्य, अन्वयमुखेन स्वरूपमात्रत्वं, संभावितं शिर इति दूषितम्; न तु पराभ्युपगमात्। हेतुमाह **स्वरूपभेदादिति**। स्वरूपाद्भेदः तेषां परस्परं भेदश्च विवक्षितः। अनेन पूर्वं **विधाभेदविवाददर्शनादित्युक्तं** विवृतं भवति। संवेदनत्वस्वयम्प्रकाशत्वयोः स्वरूपभेदमाह **स्वसत्तयेत्यादिवाक्यद्वयेन**। प्रकाश्यतेऽनेनेति **प्रकाशनम्**;

तु स्वसत्तयैव स्वाश्रयाय प्रकाशमानता । प्रकाशश्च चिदचिदशेषपदार्थसाधारणं व्यवहारानुगुण्यम् ॥ सर्वकालवर्तमानत्वं हि नित्यत्वम् । एकत्वमेकसङ्ख्यावच्छेद इति ।

तेषां जडत्वाद्यभावरूपतायामपि तथाभूतैरपि चैतन्यधर्मभूतैस्तैरनैकान्त्यमपरिहार्यम् । संविदि तु स्वरूपाति-

---

व्यवहारानुगुण्यापादकमित्यर्थः । उभयत्रानुगतप्रकाशशब्दार्थमाह प्रकाशश्चेति । चिदचिदशेषपदार्थाः तदा हि व्यवहारानुगुणाः, यदा तद्व्यवहारहेतुं ज्ञानं संनिधत्ते । तत्राचिदंशस्य स्वव्यवहारसामग्र्यन्तर्भूतज्ञानवत्त्वं व्यवहारानुगुण्यम् । वेद्यत्वे चिदंशस्याप्येवम् । स्वप्रकाशत्वे तु स्वव्यवहारसामग्र्यां ज्ञानान्तरानपेक्षया स्वस्यान्तर्भावः । यद्वा, एवमाहुः—व्यवहारानुगुण्यं व्यवहारप्रतिसंबन्धित्वं प्रकाश इत्यर्थः । तच्च ज्ञप्तिज्ञात्रोः स्वतः । ज्ञेयस्य तु ज्ञानाधीनम् । अतः पुरोवर्तिनो घटादेरपि तदेव प्रकाशः; न प्राकट्यम् ; तदतिरिक्ताभ्युपगमेऽपि न ज्ञानस्य स्वप्रकाशत्वविरोधः; तस्य तन्निरपेक्षसिद्धितया प्राकट्यस्य ज्ञानानुमापकत्वानभ्युपगमात् । यद्वा ज्ञानगतप्रकाशासाधारणं लक्षणमाह चिदचिदिति । चिदचिदशेषपदार्थापेक्षया साधारणं ज्ञानगतं चिद्व्यवहारानुगुण्यमचिद्व्यवहारानुगुण्यञ्च प्रकाशः ; स्वपरव्यवहारानुगुण्यं प्रकाश इत्यर्थः ॥

नन्वचितो विषयत्वमविगीतम् ; तच्च भासमानत्वम् । अचितो व्यवहारानुगुण्यं हि ज्ञानगतं चेत्, घटः प्रकाशत इति व्यवहारामुख्यत्वं स्यात् ; ज्ञानगतप्रकाशस्य तत्सम्बन्धिन्युपचरितत्वात् । न च ज्ञानसंबन्ध एव घटादेर्व्यवहारानुगुण्यम् ; व्यवहारानुगुण्यापादनस्वभाव इति ज्ञानलक्षणकथनायोगात् । संबन्धस्य द्विनिष्ठतया पुरोवर्तिनो घटादेरपि तद्धेतुत्वेन संबन्धरूपव्यवहारानुगुण्यापादकत्वं हि ज्ञानज्ञेयसाधारणं स्यात् ॥ उच्यते । व्यवहारकर्मत्वरूपं व्यवहारानुगुण्यं साधारणम् । तद्धि व्यवहारप्रतिसंबन्धित्वम् । तदेव भासमानत्वम् । घटः प्रकाशत इति व्यवहारश्च तन्निबन्धनतया मुख्यः । व्यवहारप्रतिसम्बन्धित्वं प्रति हेतुत्वरूपव्यवहारानुगुण्यं ज्ञानस्यैव । तत्र प्रत्यक्त्वानुकूलत्वैकत्वलक्षणस्य स्वस्य व्यवहारप्रतिसम्बन्धितां प्रति हेतुत्वरूपं व्यवहारानुगुण्यं ज्ञातृस्वरूपभूतज्ञानस्यैव स्वस्वरूपस्वगतैकत्वपराक्त्वानुकूलत्वाद्याकार—स्वाश्रयतत्सम्बन्ध-स्वविषयतत्सम्बन्धानां व्यवहारप्रतिसम्बन्धित्वे हेतुत्वरूपं व्यवहारानगुण्यं तु धर्मभूतज्ञानस्यैव । अतः स्वपरव्यवहारानुगुण्यं ज्ञानासाधारणप्रकाशलक्षणमिति युक्तम् ।

अथ नित्यत्वमाह सर्वेति । यद्यपि कालानवच्छिन्नत्वमनुगतं नित्यत्वलक्षणं प्रागुक्तम् [1]सदकारणवत्त्वञ्च नित्यत्वं प्रसिद्धम्—तथापि संविदः कालव्यतिरिक्तत्वात् कालव्यतिरिक्तार्थनित्यत्वं कृत्स्नकालसंबन्धव्याप्तमिति तेनापि सविशेषत्वापादनाय कालव्यतिरिक्तार्थनित्यत्वलक्षणमत्रोक्तम् ।

धर्माणामभावरूपत्वेऽप्यनैकान्त्यमाह तेषामिति । अभावरूपाणामपि स्वरूपानतिरिक्तत्वे दूषणमाह संविदि त्विति । तुशब्देन प्रागुक्तशौक्ल्यादिदृष्टान्तवैषम्यमिहाभिप्रेतम् । तस्य कस्यचिद्धर्मत्वेन स्वपरनिर्वाहकत्वात्, स्वरूपे प्रतिपन्ने भ्रमविरोधित्वाच्च स्वरूपमेव व्यावृत्तिः । ब्रह्मणस्तु कस्यचिद्धर्मत्वेनानभ्युपगमात्, स्वरूपे प्रतिपन्नेऽपि भ्रमसहत्वाच्च पुरोवस्थितशुक्लभास्वरशकलस्येव न स्वरूपमेव

---

1 सदकारणेति । "सदकारणवन्नित्यम्" इति कणादसूत्रम् । यत् सत्—सत्तावत् कारणरहितञ्च तत् नित्यमित्यर्थः । नेदं सूत्रं नित्यत्वसाधकदर्शि ; किंतु नित्यत्वलक्षणपरमित्याशयेनैवमुक्तिः । स्वमतेऽभावो नास्ति । शशशृंगवारणाय सदिति । अनित्यघटादिवारणाय अकारणवदिति ।

रेकेण जडत्वादिप्रत्यनीकत्वमित्यभावरूपो भावरूपो वा धर्मो नाभ्युपेतश्चेत् ; तत्तन्निषेधोक्त्या किमपि नोक्तं भवेत्।

अपि च संवित् सिद्धयति वा न वा? सिद्धयति चेत्, सधर्मता स्यात् । न चेत्, तुच्छता, गगनकुसुमादिवत् । सिद्धिरेव संविदिति चेत्; कस्य कं प्रतीति वक्तव्यम्; यदि न कस्यचित् कञ्चित्प्रति ; सा तर्हि न सिद्धिः । सिद्धिर्हि पुत्रत्वमिव कस्यचित् कञ्चित्प्रति भवति । आत्मन इति चेत्; कोऽयमात्मा? ननु संविदेवेत्युक्तम् । सत्यमुक्तम्; दुरुक्तं तु तत् । तथा हि—कस्यचित् पुरुषस्य किञ्चिदर्थजातं प्रति सिद्धिरूपतया तत्संबन्धिनी सा संवित् स्वयं कथमिवात्मभावमनुभवेत्?

---

व्यावृत्तिरिति । संविदस्तीतिशब्दो नित्यस्वयंप्रकाशादिशब्दाश्च किमधिकार्थाः उतानधिकार्थाः? अधिकार्थत्वे सविशेषत्वम्; अन्यथा पदान्तरवैयर्थ्यम्, स्वरूपमात्रस्याविगीतत्वात् । नित्यत्वादिसाधनैर्हेतुभिः किं संविन्मात्रं साध्यते, उत तदतिरिक्तं किञ्चित् । प्रथमे सिद्धसाध्यत्वम्; द्वितीये सविशेषत्वमित्यत्र समानाधिकरणपद-प्रयोगोनुपपत्तिर्नित्यत्वादिसाधकहेतूनां सिद्धसाधनत्वं चाभिप्रेतम् । यथा संवित्सिद्धौ, "न वेद्यं वित्तिधर्मः स्यादिति यत् प्रागुदीरितम् । तेनापि साधितं किञ्चित् संविदोऽस्ति न वा त्वया । अस्ति चेत् पक्षपातः स्यात् न चेत् ते विफलः श्रमः ॥" इति । नित्यत्वादिधर्माणां परस्परभेदानभ्युपगमे एकेनैव धर्मेण साधितेनालम्; न तु धर्मान्तरं साध्यम्; तस्य पूर्वप्रसाधितधर्मानतिरिक्तत्वात् । न हि नित्यत्वे प्रसाधिते कालापरिच्छेदः पुनरपि साध्योऽवतिष्ठते । एवं नित्यत्वादीनां स्वरूपाद्भेदः परस्परभेदश्च सिद्धः ।

परेण संविदो निर्भेदत्वापादनमुखेन तस्या आत्मत्वं साधितम् । अत्र निर्भेदत्वनिराकरणमुखेन संविदा-त्मत्वं निराकर्तुमारभते अपि चेत्यादिना । तत्र सविशेषत्वमापादयितुं विकल्पयति संवित्सिध्यति वा न वेति । किं प्रतीता उताप्रतीतेत्यर्थः । प्रथमं शिरो दूषयति सिध्यति चेदिति । सर्वप्रमाणानां सविशेषविषयत्वस्य पूर्वमुपपादितत्वादिति भावः । यद्वा सिध्यद्वस्तु सिद्धेराश्रयतया सविशेषं स्यात्—सिद्धिः प्रकाशः; व्यवहारानुगुण्यधर्मयोगी स्यादित्यर्थः । शिरोद्वयापादि(पति)तदोषपरिहाराय परोक्तं शङ्कते सिद्धिरेवेति । सिद्धेः सिद्ध्यन्तरानपेक्षत्वात् प्रमितिविषयत्वप्रयुक्तं सिद्धिसंबन्धित्वरूपं सविशेषत्वं न स्यात् । अथापि तुच्छत्वं च न भवेत्; न च शशशृङ्गं सिद्धिरूपमिति भावः । तत्रापि सविशेषत्वमाह कस्येति । प्रतीतिश्चेत्, कस्यचिदा-श्रयस्य कञ्चिद्विषयं प्रति भवेदिति तदुभयं वक्तव्यमित्यर्थः । विपक्षे बाधकमाह यदीति । तद्विवृणोति सिद्धिर्हीति । पितुः स्थाने विषयः, पुत्रस्थाने आश्रयः, पुत्रत्वस्थाने सिद्धिः । पुत्रत्वस्य हि पुत्रः आश्रयः । कस्यचिदित्युक्तज्ञात्रपेक्षाप्रतिक्षेपं शङ्कते आत्मन इति चेदिति । आत्मानं प्रतीत्यर्थः । आत्मशब्दः स्ववाची । अनेन प्रत्यक्त्वं फलितम् । सिद्धिप्रतिसंबन्धी स्वात्मा हि प्रत्यक् । स्वस्मै भासमानत्वं प्रत्यक्त्वमिति हि वक्ष्यते । तच्च संविदोऽनुपपन्नमित्यभिप्रायेणाह कोऽयमात्मेति । अयंशब्दः सिद्धिप्रतिसंबन्धित्वपरः । सिद्धिप्रतिसंबन्ध्यात्मा कः । किंशब्दः क्षेपे । संविन्न सिद्धिप्रतिसंबन्ध्यात्मा । संविदः प्रत्यक्त्वमनुपपन्नमित्यर्थः । संविदात्मत्वस्योपपादितत्वान्नानुपपन्नमिति चोदयति नन्विति । परिहरति सत्यमुक्तमिति । संविदात्मत्वस्य दुरुक्तत्वं संविदात्मत्वनिराकरणमुखेनोपपादयितुमारभते तथाहीति । कर्मनिर्देशो दृष्टान्तत्वेन । अर्थजात-मिति । धर्मधर्मिरूपपुञ्ज एव प्रमितिविषय इति भावः । सिद्धिरूपा प्रकाशरूपा; अत एव तदुभयसम्बन्धिनी । कथमिति । आत्मधर्मभूता संवित् स्वयं कथमात्मेत्यर्थः ।

एतदुक्तं भवति—अनुभूतिरिति स्वाश्रयं प्रति स्वसद्भावेनैव कस्यचिद्वस्तुनो व्यवहारानुगुण्यापादनस्वभावो ज्ञानावगतिसंविदाद्यपरनामा सकर्मकोऽनुभवितुरात्मनो धर्मविशेषः, घटमहं जानामि—इममर्थमवगच्छामि—पटमहं संवेद्मीति सर्वेषामात्मसाक्षिकः प्रसिद्धः। एतत्स्वभावतया हि तस्याः स्वयम्प्रकाशता भवताऽप्युपपादिता। अस्य सकर्मकस्य कर्तृधर्मविशेषस्य कर्मत्ववत् कर्तृत्वमपि दुर्घटमिति।

तथा ह्यस्य कर्तुः स्थिरत्वम्, कर्तृधर्मस्य संवेदनाख्यस्य सुखदुःखादेरिवोत्पत्तिस्थितिनिरोधाश्च प्रत्यक्षमीक्ष्यन्ते। कर्तृस्थैर्यं तावत्—स एवायमर्थः पूर्वं मयाऽनुभूत इति प्रत्यभिज्ञाप्रत्यक्षसिद्धम्। अहं जानामि, अहमज्ञासिषम्, ज्ञातुरेव ममेदानीं ज्ञानं नष्टमिति च संविदुत्पत्त्यादयः प्रत्यक्षसिद्धा इति कुतस्तदैक्यम्। एवं क्षणभङ्गिन्याः संविद आत्मत्वाभ्युपगमे, पूर्वेद्युर्दृष्टमपरेद्युः इदमहमदर्शमिति प्रत्यभिज्ञा च न घटते।

---

सिद्धिशब्द उत्पत्तिज्ञप्तिसाधारण इह किमर्थः? प्रकाशश्चेदिह विवक्षितः, स कः? तस्य कर्मकर्तृसम्बन्धित्वे किं प्रमाणम्? वृत्तिज्ञानं हि सकर्मकर्तृकम्, संवित्तु केवला। इह कर्मनिर्देशे किं फलमिति शङ्कायामाह एतदुक्तं भवतीति। अनुभूतिरित्यनेन ज्ञप्तिपरत्वमुक्तम्। स्वाश्रयं प्रति स्वसद्भावेनैव कस्यचिद्वस्तुनो व्यवहारानुगुण्यापादनस्वभाव इत्यनेन तत्स्वरूपमुक्तम्। एवं सिद्धिशब्दार्थ उक्तः। ज्ञानावगतिसंविदाद्यपरनामेत्यनेन ज्ञानसंविच्छब्दयोः पर्यायतया वृत्तिज्ञानसंविदोर्विभागस्य निष्प्रमाणकत्वं फलितम्। घटमहं जानामीत्यादिना, आत्मसाक्षिकः प्रसिद्ध इत्यन्तेन कर्मकर्तृसंबन्धस्य स्वानुभवसिद्धत्वं ज्ञानसंविदोः पर्यायत्वञ्चोक्तम्। तत्र स्वानुभवसिद्धत्वमुक्तम्। ज्ञानसंविच्छब्दयोः पर्यायत्वमुपपादितञ्च। कर्मकर्तृसंबन्धे पराभ्युपगतिमाह एतत्स्वभावतयेति। आत्मनः स्वयम्प्रकाशत्वं साधयता कर्मकर्तृसंबन्धिज्ञानस्य स्वयम्प्रकाशत्वं साधितमिति, सकर्मकर्तृकंज्ञानं जडरूपमात्मभूतज्ञानादन्यत् वृत्तिरूपमित्यभ्युपगमोऽनुपपन्न इति भावः। अस्येत्यादिना कर्मनिर्देशस्य फलं दर्शितम्। ननु न वयं संविदः कर्तृत्वमिच्छाम इति कथमयं प्रसङ्गः॥ उच्यते। संविद आत्मत्वं वदता प्रत्यक्त्वमभ्युपेतव्यम्। प्रत्यक्त्वञ्च ज्ञानाश्रयस्यैवेति संविदो ज्ञातृत्वमवर्जनीयम्। तच्च दुर्घटमित्यर्थः। कर्तृत्वमाश्रयत्वम्। धात्वर्थाश्रयो हि कर्ता।

एवं धर्मधर्मिभावेन प्रतीत्या संविदात्मत्वं निराकृतम्। अथ स्थिरत्वास्थिरत्ववैधर्म्येण तद् व्युदस्यते तथेति। हिर्हेतौ। तथाशब्देन चार्थेन हेत्वन्तरमुच्यते। कर्तृस्थैर्यमुपपादयति कर्तृस्थैर्यं तावदिति। प्रत्यभिज्ञायमानत्वाद्धि घटादेः स्थैर्यसिद्धिः; तद्वत् तत्र घटप्रत्यभिज्ञाकाले, पूर्वं मयाऽनुभूत इति कर्तुरपि प्रत्यभिज्ञाविषयत्वात् स्थैर्यसिद्धिरित्यर्थः। अथ ज्ञानस्योत्पत्तिस्थितिनिरोधान् दर्शयति अहमित्यादिना। जानामीत्यनेनोत्पत्तिस्थिती सिद्धे। अज्ञासिषमित्यतीतत्वप्रतीतिः। एतद्वैशद्यायानन्तरपूर्वकालसञ्जातज्ञानविशिष्टत्वपरामर्शद्योतनार्थं ज्ञातुरेव ममेत्युक्तिः। उत्पत्त्यादय इति आदिशब्देन स्थितिनिरोधग्रहणम्। संविद उत्पत्तिर्नाम त्रिचतुरक्षणस्थायिन्याः तस्याः प्रथमक्षणयोगः; क्षणान्तरसंबन्धः स्थितिः। संविदः स्वप्रकाशत्वात् ते प्रत्यक्षे। घटसंविदो निरोधो नाम पटसंवित्। सा च प्रत्यक्षा। इतिर्हेतौ। स्थिरत्वास्थिरत्ववैधर्म्येण न तदैक्यमित्यर्थः। एवं प्रत्यभिज्ञाविषयत्वेनाऽऽत्मनः स्थैर्यमुक्तम्। अथ प्रत्यभिज्ञाश्रयत्वेन स्थैर्यमुच्यते एवमिति। पूर्वत्र प्रत्यभिज्ञाप्रत्यक्षसिद्धमित्युक्तम्; अत्र प्रत्यभिज्ञा न घटत इत्युक्तम्। अयमभिप्रायः—प्रत्यभिज्ञाविषये ज्वालादौ यत्र क्वचिदन्यथासिद्धिः संभवेत्, तत्र न स्थैर्यसिद्धिः। अत्र प्रत्यभिज्ञाविषयत्वान्यथासिद्धावपि

**अन्येनानुभूतस्य न ह्यन्येन प्रत्यभिज्ञानसंभवः ।**

**किञ्च—अनुभूतेरात्मत्वाभ्युपगमे तस्याः नित्यत्वेऽपि प्रतिसन्धानासंभवस्तदवस्थः । प्रतिसन्धानं हि—पूर्वापरकालस्थायिनमनुभवितारमुपस्थापयति ; नानुभूतिमात्रम्—अहमेवेदं पूर्वमप्यन्वभूवमिति । भवतोऽप्यनुभूतेर्न ह्यनुभवितृत्वमिष्टम् । अनुभूतिरनुभूतिमात्रमेव । संविन्नाम काचिन्निराश्रया निर्विषया वा अत्यन्तानुपलब्धेर्न संभवतीत्युक्तम् । उभयाभ्युपेता संविदेवात्मेत्युपलब्धिपराहतम् । अनुभूतिमात्रमेव परमार्थ इति निष्कर्षकहेत्वाभासाश्च निराकृताः ॥**

---

प्रत्यभिज्ञाश्रयत्वस्यानन्यथासिद्धत्वात् भ्रान्तिरूपप्रत्यभिज्ञायामपि तदाश्रयस्य स्थैर्यमनन्यथासिद्धमिति प्रत्यभिज्ञाश्रयत्वप्रयुक्तं स्थैर्यं दुष्प्रकम्पमिति । प्रत्यभिज्ञाश्रयतया स्थैर्यं विवृणोति **अन्येनेति** ।

एवं स्थिरस्य ज्ञातुर्धर्मत्वेन अस्थिरत्वेन च प्रतीतत्वात् अस्थिरत्वनिबन्धनात्प्रतिसन्धानासंभवाच्च संविदात्मत्वं निरस्तम् ; अथ स्थिरत्वाभ्युपगमेऽपि प्रतिसन्धानासंभवादात्मत्वं व्युदस्यति **किञ्चेति । अनुभूतेरात्मत्वाभ्युपगमे तस्या नित्यत्वेऽपीति** । आत्मत्वाभ्युपगमौपयिकतया संविदो नित्यत्वाभ्युपगमेऽपीत्यर्थः । न केवलमनित्यत्वपक्ष एव संविदात्मत्वानुपपत्ति ; नित्यत्वेऽपि इत्यपिशब्दार्थः । आत्मा हि प्रतिसंधत्ते; प्रतिसंधानमत्र न संभवतीत्यर्थः । तदसंभवमुपपादयति **प्रतिसन्धानमिति** । तदुदाहरति **अहमिति** । ततः किमिति शङ्कायां तस्य परानिष्टत्वमाह **भवत इति** । न केवलं भवदनभ्युपगमः, अनुभूतेरनुभवितृत्वं गमनक्रियाया गन्तृत्ववत् अनुपपन्नं चेत्यभिप्रायेणाह **अनुभूतिरिति** । मात्रचाऽनुभवितृत्वव्यावृत्तिः । ननु धर्मत्वास्थिरत्वाप्रतिसंधातृत्वैः संविदोऽनात्मत्वं यदुक्तम्, तन्न वक्तव्यम्; अनुभवितृत्वस्यात्माकारत्वेनानभ्युपगमात्; विषयाश्रयशून्यायाः संविदो गुणभावाभावात् तदुभयसम्बन्धप्रयुक्तानित्यत्वप्रसङ्गाभावाच्चेत्यत्राह **संविन्नामेति** ॥ ननु कथं विषयाश्रयशून्यज्ञानाभावः? स्वरूपभूतं ज्ञानं विषयाश्रयशून्यं त्वन्मते ॥ उच्यते । स्वविष्टमिदं चोद्यम् । किं त्वया ज्ञातुरेव ज्ञानशब्दवाच्यस्याजडत्वनित्यत्वादिकं विषयाश्रयशून्यत्वमात्मत्वं च साध्यते? तत् सिद्धसाधनम् । यदि ज्ञातृव्यतिरिक्तस्य ज्ञानस्य, तर्हि ज्ञातृव्यतिरिक्तं विषयाश्रयविरहितं ज्ञानं शून्यमिति ब्रूमः । ज्ञातृज्ञेयतदवच्छिन्नज्ञानस्वरूपत्रिकातिरिक्तं ज्ञानमनुपलम्भनिरस्तमित्यर्थः । बौद्धैकदेशिभिः धर्मिकल्पनातो वरं धर्मकल्पनेति लाघवन्यायात्, ज्ञात्रात्मवादिना ज्ञानात्मवादिना च सम्प्रतिपन्ना संविदेवात्मेत्युक्तम् । तदाशङ्क्य परिहरति **उभयेति** । कल्पनायामेव लाघवन्यायः; न तूपलब्धौ । अन्यथा अत्यन्तलाघवार्थं माध्यमिकमतानुसारेण ज्ञानञ्च त्यज्येत ॥ कल्पने तु लाघवन्यायः; संवित्तूपलभ्यत इति चेत्—ज्ञाताऽपि तथोपलभ्यते । अत उपलब्धिपराहतत्वात् संविदात्मत्वमनुपपन्नमित्यर्थः । साश्रयैव संविदुपलभ्यते ; तथाऽपि युक्तिभिर्निर्विशेषत्वं साधितमित्यत्राह **अनुभूतिमात्रमिति** । यद्वा संविदः परमार्थत्वेनोभयवादिसंमतत्वात् सैवात्मेत्युक्तमित्याशङ्क्य दूषयति **उभयेति** । **उपलब्धिपराहतम्**—प्रत्यक्त्वलक्षणस्यात्मत्वस्य अहं जानामीति ज्ञातृत्वसामानाधिकरण्येनोपलब्ध्या पराहतमित्यर्थः । ज्ञातुरेव प्रत्यगात्मत्वमुपलब्धिसिद्धमित्युक्तम् । तस्या उपलब्धेर्निर्विशेषसंविदात्मत्वसाधकयुक्तिभिर्बाधितत्वमाशङ्क्याह—**अनुभूतिमात्रमिति** ।

प्रत्यगर्थो ह्यात्मा । प्रत्यक्त्वं चाहमर्थात्मत्वे तु न सिध्यति, संविदात्मत्वपक्ष एव सेत्स्यतीति चोदयति

ननु च अहं जानामीत्यस्मत्प्रत्यये योऽनिदमंशः प्रकाशैकरसश्चित्पदार्थः, स आत्मा । तस्मिन् तद्बलनिर्भासिततया युष्मदर्थलक्षणः, अहं जानामीति सिद्धयन्नहमर्थश्चिन्मात्रातिरेकी युष्मदर्थ एव ॥ नैतदेवम् ; अहं जानामीति धर्मधर्मितया प्रत्यक्षप्रतीतिविरोधादेव ॥

किञ्च—अहमर्थो न चेदात्मा प्रत्यक्त्वं नात्मनो भवेत् । अहम्बुद्ध्या परागर्थात् प्रत्यगर्थो हि भिद्यते ॥

---

ननु चेति । अहं जानामीत्यस्मत्प्रत्यये—अस्मत्प्रत्ययत्वेन पराभ्युपगते । यश्चित्पदार्थः, स आत्मा; कुत इत्यत्राह अनिदमंश इति । इदमंशव्यतिरिक्तः परागर्थव्यतिरिक्तः प्रत्यगर्थः । हेतुगर्भमिदम् ; प्रत्यगर्थत्वादित्यर्थः । प्रत्यक्त्वं च कुत इत्यत्राह प्रकाशैकरस इति । स्वयम्प्रकाशत्वादित्यर्थः । हेत्वभिप्रायश्चिच्छब्दः । ज्ञानत्वात् स्वयम्प्रकाशत्वमित्यर्थः । प्रत्यक्त्वं स्वस्मै प्रकाशमानत्वम् । स्वयंप्रकाशत्वमनन्याधीनप्रकाशत्वम् । अहमर्थस्तु युष्मदर्थलक्षणः । युष्मदर्थलक्षणत्वात् परागर्थविशेषोऽहमर्थ इत्यर्थः । युष्मदर्थलक्षणत्वं कुत इत्यत्राह तद्बलेति । तद्बलनिर्भासितत्वात्—ज्ञानाधीनप्रकाशत्वात् । तच्च चिन्मात्रातिरेकित्वादित्यर्थः । अस्मिंश्चोद्यग्रन्थे संविदात्मत्वे व्यतिरेकित्रयम् ; अहमर्थानात्मत्वेऽन्वयित्रयञ्चाभिप्रेतम् । तत्र व्यतिरेकिणां व्यतिरेकिदृष्टान्तोऽन्वयिनां सपक्षश्च युष्मदर्थशब्देन सूचितः । अनुभूतिरात्मा, प्रत्यक्त्वात् ; यदनात्मा तन्न प्रत्यक् यथा घटः—अनुभूतिः प्रत्यग्भूता स्वयंप्रकाशत्वात्, यन्न प्रत्यक् तन्न स्वयम्प्रकाशम्, यथा घटः—अनुभूतिः स्वयम्प्रकाशा, अनुभूतित्वात् ; यन्न स्वयंप्रकाशम् (स्वतस्सिद्धि), न तदनुभूतिः, यथा घट इति व्यतिरेकित्रयम् । अहमर्थो ज्ञानाधीनप्रकाशः चिद्व्यतिरिक्तत्वात् घटवत् ; अहमर्थः पराक् ज्ञानाधीनप्रकाशत्वात् घटवत् ; अहमर्थो नात्मा पराक्त्वात् घटवदित्यन्वयित्रयम् । स्वयम्प्रकाशत्वमेव संविदात्मत्वे साक्षाद्धेतुतया पूर्वमुक्तं पूर्वपक्षोपन्यासे; अत्र तु तेन प्रत्यक्त्वं साधयित्वा तेनाऽऽत्मत्वं साधितम् । एतत् परिहरति नैतदेवमिति । संवित्स्वयम्प्रकाशत्वमिष्टम् ; शिक्षणीयांश्च शिक्षितः(श्लोकः) । अतः स्वतस्सिद्धत्वसाधकहेतोः सिद्धसाध्यता । ज्ञातुः अस्वतस्सिद्धत्वसाधकहेतोश्चिदन्यत्वस्यासिद्धिर्वक्ष्यते । इतरानुमानचतुष्टयमिह निरस्यते । संविदात्मत्वादि किं प्रतीत्याऽभ्युपगतम्, उत प्रत्यक्त्वसिद्ध्यनुपपत्त्या, उत श्रुत्यर्थापत्त्या, उत श्रुतिस्मृतिसूत्रस्वारस्यात् इति विकल्पमभिप्रेत्य प्रथमपक्षे प्रत्यक्षप्रतीतिविरोधमाह अहं जानामीति । एतेन परोक्तानां ज्ञानप्रत्यक्त्वात्मत्वज्ञातृपराक्त्वानात्मत्वसाधकानामन्वयव्यतिरेक्यनुमानानां कालात्ययापदेश उक्तः । अहं जानामीत्यत्राहमर्थः स्वावभासेऽपि घटावभास इव प्रतिसम्बन्धितया अहमिति प्रतीयते । धर्मितयाऽवभासादेव न ज्ञानशेषतावभासः । अतः स प्रत्यक्; आत्मा च । ज्ञानं धर्मतया प्रतीयमानं सुखादिवदन्यस्मै भासत इति न प्रत्यक् नाप्यात्मा, अपितु पराक् अनात्मा च । अतश्चतुर्णां हेतूनां प्रत्यक्षबाध उक्तो भवति ।

अथ प्रत्यक्त्वं विपरीतसाधकं चेत्याह किञ्चेति । स्वस्मै प्रकाशमानस्वरूपं प्रत्यक्त्वम् परस्मै प्रकाशमानत्वं पराक्त्वं चाहमिदम्बुद्धिभ्यां हि विभज्यते । तस्मादहम्बुद्धिविगमे प्रत्यक्त्वमेव न सेत्स्यतीति प्रत्यक्त्वमहमर्थस्यैवात्मत्वसाधकमित्यर्थः । संविदि प्रत्यक्त्वाभावादात्मत्वसाधकहेतोरसिद्धिश्च फलिता । अहमर्थस्य पराक्त्वाभावादनात्मत्वसाधकहेतोरसिद्धिश्च सिद्धा । अहम्बुद्ध्येत्यनेन युष्मदस्मत्प्रत्ययगोचरयोरिति स्वोक्तिविरोधश्च, "कोऽहमित्येव निपुणः", "शब्दोऽहमिति दोषाय नात्मन्येष" इत्याद्यागमविरोधश्च गर्भितः; हिशब्दस्य प्रसिद्धिपरत्वात् । हेतौ वा, अनुभूतिः पराची अहमर्थव्यतिरिक्तत्वात्

निरस्ताखिलदुःखोऽहमनन्तानन्दभाक् स्वराट् । भवेयमिति मोक्षार्थी श्रवणादौ प्रवर्तते ॥
अहमर्थविनाशश्चेन्मोक्ष इत्यध्यवस्यति । अपसर्पेदसौ मोक्षकथाप्रस्तावगन्धतः ॥
मयि नष्टेऽपि मत्तोऽन्या काचिज्ज्ञप्तिरवस्थिता । इति तत्प्राप्तये यत्नः कस्यापि न भविष्यति ॥
स्वसम्बन्धितया ह्यस्याः सत्ता विज्ञप्तितादि च । स्वसंबन्धवियोगे तु ज्ञप्तिरेव न सिद्ध्यति ॥
छेत्तुश्छेद्यस्य चाभावे छेदनादेरसिद्धिवत् । अतोऽहमर्थो ज्ञातैव प्रत्यगात्मेति निश्चितम् ॥
'विज्ञातारमरे केन', 'जानात्येवे'ति च श्रुतिः । 'एतद्यो वेत्ति तं प्राहुः क्षेत्रज्ञ' इति च स्मृतिः ॥
'नात्मा श्रुते'रित्यारभ्य सूत्रकारोऽपि वक्ष्यति । 'ज्ञोऽत एवे'त्यतो नात्मा ज्ञप्तिमात्रमिति स्थितम् ॥
अहम्प्रत्ययसिद्धो ह्यस्मदर्थः, युष्मत्प्रत्ययविषयो युष्मदर्थः । तत्र, अहं जानामीति सिद्धो ज्ञाता युष्मदर्थ

---

घटवदिति । प्रत्यक्त्वहेतोरसिद्धिदार्ढ्यं, तत्प्रत्यक्त्वसाधकस्य स्वयम्प्रकाशत्वहेतोः सत्प्रतिपक्षत्वञ्च, अनुभूतिरनात्मा अहमर्थव्यतिरिक्तत्वात् घटादिवदिति संविदात्मत्वसाधकस्य प्रत्यक्त्वहेतोश्च सत्प्रतिपक्षत्वं चाभिप्रेतमित्यवगम्यते; अहम्बुद्ध्या परागर्थात् प्रत्यगर्थस्य भेदसमर्थनात् । हिशब्दाच्चात्र संवित्प्रत्यक्त्वहेतोरसिद्धिश्च सिद्धा । श्रुत्यर्थापत्तिं वक्तुं मुमुक्षोरभिसन्धिमाह निरस्तेति । ततः किमित्यत्राह अहमर्थविनाश इति । यत्सम्बन्धित्वेन दुःखज्ञानं यत्सम्बन्धिनी दुःखविनिवृत्तिर्यत्सम्बन्धिनी सुखप्राप्तिश्चेष्यते, तद्विनाशो मोक्षश्चेत्, अधिकारिविरहादप्रामाण्यं भवेत् । प्रमितिजनकत्वं हि शास्त्रस्य प्रामाण्यम् । बुभुत्सितप्राह्यस्य शास्त्रस्य पुरुषार्थपर्यवसायित्वाभावे श्रवणमननाद्यधिकारी न सिध्येत् । न हि शास्त्रं श्रवणादिनिरपेक्षं कस्यचित् प्रमितिं जनयति । अतोऽधिकारिविरहात् प्रामाण्यं न भवेदिति शास्त्रप्रामाण्यान्यथानुपपत्तिरूपश्रुत्यर्थापत्तिरुक्ता । अहमर्थे नष्टेऽपि ज्ञप्तिर्नित्या तिष्ठतीत्यत्राह मयि नष्टेऽपीति । न हि मयि नष्टेऽपि स्तम्भस्तिष्ठतीति स्वशिरश्छेदः पुरुषार्थः स्यादिति भावः । न हि केवलसंविदः श्रवणादौ प्रवृत्तिः, अपित्वहमर्थस्यैव; अतः प्रवर्तमानोऽयं स्वनाशाय न प्रवर्तते । अहमर्थविगमे ज्ञप्त्यवस्थानमभ्युपगम्य दूषणमुक्तम्; अथ तदवस्थानमेव नास्तीत्याह स्वसम्बन्धितयेति । सामान्याकारः सत्ता; विज्ञप्तिता—विषयप्रकाशकत्वरूपविशेषाकारः । आदिशब्देन स्वयम्प्रकाशत्वं विवक्षितम् । सत्ताया आश्रयसंबन्धाधीनत्वात्, स्वरूपलाभे सति ज्ञप्तित्वादिसंभवाच्च सर्वं तदधीनमित्यर्थः । अतो यत्सम्बन्धायत्ता सत्ता, तत्संबन्धवियोगे ज्ञप्तिरेव नेत्याह स्वसम्बन्धेति । घटकरकाकाशदृष्टान्तव्यावृत्त्यर्थं विषयाश्रयसम्बन्धस्य सत्ताहेतुत्वे दृष्टान्तमाह छेत्तुरिति । छेदनादेरिति आदिना सत्ता तत्फलं द्वैधीभाव इत्यादि विवक्षितम् ।

एवं प्रत्यक्षविरोधात् असिद्धत्वात् विपरीतसाधकत्वात् सत्प्रतिपक्षत्वाच्च संविदात्मत्वानुपपत्तेः, श्रुत्यर्थापत्त्या चाहमर्थात्मत्वमाह अत इति । पूर्वोक्तहेतूनामियं प्रतिज्ञा । श्रुतिस्मृतिसूत्राणि दर्शयति विज्ञातारमिति । ज्ञातव्यस्यात्मनो ज्ञातृत्वमुक्तम्, 'विज्ञातारमरे केन विजानीयात्' इति । ज्ञातृत्वस्य स्वाभाविकतया मुक्तावपि ज्ञातृत्वमस्तीति दर्शयति जानात्येवेति । "ज्ञोऽत एव" इत्यत्र ज्ञशब्दनिर्दिष्ट आत्मेति ज्ञापनार्थम्, "नात्मा श्रुतेः" इति सूत्रमुपात्तम्; त्वया अनित्यतया अभ्युपेतस्याहमर्थस्य नित्यत्वकथनमपि तस्यैवात्मत्वसाधकमिति च ज्ञापनार्थम् । अतो नात्मेति संविदात्मत्वप्रतिक्षेपनिगमनात् पूर्वोक्ताहमर्थात्मत्वप्रतिज्ञायां संविदात्मत्वप्रतिक्षेपे च यथायथमुक्तहेतवोऽनुसन्धेयाः ।

दूषणान्तरं व्याहतिरप्यस्तीत्याह अहंप्रत्ययेत्यादिना । अहंप्रत्ययसिद्ध इति सिद्धशब्देन स्वतस्सिद्धिः

इति वचनम्, जननी मे वन्ध्येतिवत् व्याहतार्थञ्च। न चासौ ज्ञाता अहमर्थोऽन्याधीनप्रकाशः; स्वयम्प्रकाशत्वात्। चैतन्यस्वभावता हि [1]स्वयम्प्रकाशता। यः प्रकाशस्वभावः सोऽनन्याधीनप्रकाशः दीपवत्।

सूचिता। अत एव ह्यन्यत्र युष्मत्प्रत्ययविषय इत्युक्तम्। अहंप्रत्ययसिद्धो हीति हिशब्देनास्मदर्थयुष्मदर्थशब्दतश्च युष्मदस्मत्प्रत्ययगोचरयोरिति तद्ग्रन्थप्रसिद्धिं दर्शयति। ज्ञानमेव स्वयम्प्रकाशम्; तद्व्यतिरिक्तत्वादहमर्थोऽन्याधीनप्रकाशः, अतो नात्मेति शङ्कायां हेतोरसिद्धिमभिप्रयन् अहमर्थस्य प्रकाशान्तरनैरपेक्ष्यं प्रतिजानीते न चासाविति। कुत इत्यत्राह स्वयम्प्रकाशत्वादिति। प्रकाशः—व्यवहारानुगुण्यम्। स्वत एव व्यवहारानुगुण्यशक्तियुक्तत्वादहमर्थः प्रकाशान्तरनिरपेक्ष इत्यर्थः। तच्च कथमित्यत्राह चैतन्यस्व[1]भावता हि स्वयम्प्रकाशतेति। चेतना ज्ञानम्, तद्भावश्चैतन्यं ज्ञानत्वम्; तत्स्वभावत्वं ज्ञानत्वगुणकतेत्यर्थः। ज्ञानत्वमेव हि ज्ञानस्य स्वयम्प्रकाशत्वम् तद्वदत्रापि ज्ञानत्वं प्रामाणिकं चेत्, तदेव स्वयम्प्रकाशत्वं भवतीत्युक्तं भवति। अहमर्थस्य चैतन्यस्वभावत्वे श्रुतिं प्रमाणं वक्ष्यन् तदनुग्राहकतर्कमुपन्यस्यति यः प्रकाशस्वभाव इत्यादिना। आत्मदीपधर्मभूतज्ञानप्रभयोः साक्षाद्वा प्रणाल्या वा यादृशव्यवहारानुगुण्यम्, तादृशं व्यवहारानुगुण्यमिह प्रकाशशब्देन विवक्षितम्। दीपस्य तमोविरोधि रूपमौज्ज्वल्यं प्रकाशः; ज्ञानस्य तु स्फुरणम्। यः तत्स्वभावः तद्धर्मकः स्वव्यवहारानुगुण्यापादनशक्तियुक्तः, सोऽनन्याधीनप्रकाशः स्वधर्मनिरपेक्षप्रकाश इत्यर्थः। प्रकाशस्वभावत्वासिद्धिर्न शङ्कनीया; यथा प्रभाश्रयस्य दीपस्यौज्ज्वल्यं प्रत्यक्षसिद्धम्, तथा ज्ञातुरपि स्वत एव स्वव्यवहारानुगुण्यस्य वक्ष्यमाणश्रुतिस्वारस्यावगतत्वात्। प्रकाशस्वभावस्य स्वधर्मभूतप्रकाशानपेक्षप्रकाशत्वमुपपन्नमित्येतावदेव ह्युच्यतेऽनेन ग्रन्थेन। अथ चक्षुर्ग्राह्यत्वे सति प्रभाव्यतिरिक्तत्वात् दीपो घटादिवत् प्रभाबलनिर्भास्य इति दृष्टान्तस्य साध्यवैकल्यमाशङ्क्याह नहीति। न च चक्षुर्ग्राह्यत्वे सति प्रभान्यत्वात् घटादिरिव दीपः प्रभावभास्यः, अन्धकारे व्यभिचारात्। अतो न दीपस्य प्रभापेक्षेत्यभिप्रायः। अप्रकाशत्वमन्याधीनप्रकाशत्वञ्चेति। स्वयमौज्ज्वल्यधर्मकत्वाभावस्तत्कृतप्रकाशान्तरसापेक्षत्वञ्च नास्तीत्यर्थः। (अर्थसिद्धं) अर्थस्थितिं वक्तुमाकाङ्क्षां दर्शयति किं तर्हीति। उत्तरमाह दीप इति। दीपो न केवलं स्वात्मानमेव प्रकाशयति, अपि तु स्वपरिकरेणान्यानपि प्रकाशयतीत्यतिशयमाह अन्यानपीति। एवं वाऽर्थः—दीपः प्रभानिरपेक्षप्रकाशश्चेत्, प्रभावत विषयानपि प्रकाशयेदित्यत्राह अन्यानपीति। विषयप्रकाशनक्षमोऽपि स्वरूपस्य क्वाचित्कतया विषयसम्बन्धाभावात् स्वरूपेण न प्रकाशयति, किन्तु विषयसम्बन्धिन्या स्वपरिकरभूतया प्रभयेत्यर्थः। "यथा प्रकाशयत्येकः कृत्स्नं लोकमिमं रविः" इत्यादिनिर्देशोऽभिप्रेतः।

यद्वा अनुमानविवक्षयाऽऽह चैतन्यस्वभावता हीति। चैतन्यस्वभावता ज्ञानधर्मकत्वम्। एतदेव हि स्वयम्प्रकाशत्वम्। ज्ञानधर्मकत्वात्[1] स्वयम्प्रकाशत्वम् इत्युक्तं भवति। यथा धूमवत्त्वं ह्यग्निमत्त्वमित्युक्ते धूमवत्त्वादग्निमत्त्वमित्युक्तं स्यात्—तद्वत्। अयं चान्वयी हेतुः। व्याप्तिं दर्शयति य इति। प्रकाशस्वभावः—प्रकाशधर्मकः। यो धर्म्यन्तरापरोक्षावभासे साक्षाद्वा परम्परया वा भासमानतयैव हेतुः, सोऽनन्याधीन(सइह)प्रकाशशब्दविवक्षितः। रूपि-तत्समवेतार्थचाक्षुषत्वनिमित्तस्य रूपस्य,

1 भाष्यार्थदर्पणो द्रष्टव्यः।

न हि दीपादेः स्वप्रभाबलनिर्भासितत्वेनाप्रकाशत्वमन्याधीनप्रकाशत्वञ्च ॥ किं तर्हि ॥ दीपः प्रकाशस्वभावः स्वयमेव प्रकाशते ; अन्यानपि प्रकाशयति स्वप्रभया ॥

एतदुक्तं भवति—यथैकमेव तेजोद्रव्यं प्रभाप्रभावद्रूपेणावतिष्ठते—

यद्यपि प्रभा प्रभावद्द्रव्यगुणभूता, तथापि तेजोद्रव्यमेव, न शौक्ल्यादिवद्गुणः ; स्वाश्रयादन्यत्रापि वर्तमानत्वात् रूपवत्त्वाच्च शौक्ल्यादिवैधर्म्यात्, प्रकाशवत्त्वाच्च तेजोद्रव्यमेव ; नार्थान्तरम् । प्रकाशवत्त्वञ्च स्वस्वरूपस्यान्येषाञ्च प्रकाशकत्वात् । अस्यास्तु गुणत्वव्यवहारो नित्यतदाश्रयत्वतच्छेषत्वनिबन्धनः ।

---

स्वाश्रयेतरद्रव्यानुमापकधूमादेश्च प्रकाशत्वव्युदासाय धर्म्यन्तर—अपरोक्षशब्दौ । इन्द्रियव्यवच्छेदार्थो भासमानशब्दः । पक्षसपक्षयोरनुगतत्वाय साक्षाद्वा परम्परया वेत्युक्तम् । ज्ञाता स्वधर्मभूतप्रकाशानिरपेक्षसिद्धिः प्रकाशधर्मकत्वात् दीपवदित्यनुमानशरीरम् । भासमानतया साक्षाद्वा परम्परया वा धर्म्यन्तरापरोक्षावभासहेतुधर्मकत्वादिति हेतुवाचिशब्दार्थः । दीपस्य स्वधर्मभूतप्रभानपेक्षप्रकाशत्ववत् ज्ञातुरपि स्वधर्मभूतज्ञाननिरपेक्षप्रकाशत्वं सिद्धमिति पक्षधर्मताबलात् स्वयम्प्रकाशत्वसिद्धिः । दृष्टान्ते साध्यान्वयं दर्शयति **नहीति** । साधनान्वयं दर्शयति **अन्यानपीति** ।

अनुमानपरत्वादपि ग्रन्थस्य श्रुत्यनुग्राहकतर्कपरत्वं युक्तम् ; उत्तरत्र **तथा हि श्रुतय** इति वक्ष्यमाणत्वात् । पूर्वमनुमानं विवक्षितं चेत्, तथा चेति हि वक्तव्यम् । उपक्रमे **चैतन्यस्वभावता हि स्वयम्प्रकाशतेति** समानाधिकरणनिर्देशस्वारस्याच्च । पञ्चम्यर्थत्वे हि स्वारस्यं भज्यते । निगमने च **चिद्रूपता हि स्वयम्प्रकाशतेत्युक्तम्** । चिद्रूपशब्दो ज्ञानस्वरूपत्वपरः ; न तु ज्ञानधर्मकत्वपरः ; अनन्तरपूर्वग्रन्थे **चिद्रूप एव चैतन्यगुणक** इति ज्ञानधर्मकत्वस्य पृथगुक्तत्वात् । एवं निगमने स्वयम्प्रकाशतापदसमानाधिकरणस्य चिद्रूपताशब्दस्य ज्ञानस्वरूपतापरत्वदर्शनात, पूर्वमपि स्वयम्प्रकाशतापदसमानाधिकरणस्य चैतन्यस्वभावतेति पदस्य ज्ञानस्वरूपतापरत्वस्य समुचितत्वाच्च **चैतन्यस्वभावते**त्यादिभाष्यं श्रुत्यनुग्राहकतर्कपरम् । एवमनुग्राहकतर्कस्य श्रौतत्वे सति अनुमानमप्यर्थसिद्धम ; ज्ञानधर्मकत्वज्ञानस्वरूपत्वोक्तेः ; एकजातीयद्रव्ययोर्नियतधर्मधर्मिभावे प्रभाप्रभावद्दृष्टान्तोक्तेश्च ।

ज्ञानस्य द्रव्यत्वे द्वयोर्ज्ञानयोर्नियमेन धर्मधर्मिभावो नोपपद्यते ; अन्यत्रादर्शनात् । गुणत्वे तु न ज्ञानाश्रयत्वसंभवः ; गुणानामगुणत्वात् । न च द्रव्यत्वेऽपि नियताश्रयाश्रयिभावः प्रभाप्रभावतोर्दृश्यत इति वाच्यम् ; प्रभाया विशीर्णदीपावयवत्वादित्याशङ्क्याह **एतदुक्तमिति** । "**यथैकमेव तेजोद्रव्यं प्रभाप्रभावद्रूपेणावतिष्ठते, एवमात्मा चिद्रूप एव चैतन्यगुणक**" इति **यथा**शब्दस्योत्तरत्रान्वयः । प्रथमं प्रभाया विशीर्णावयवान्यत्वं प्रतिजानीते **एकमेवेति** । **एकम्**— एकजातीयम् (सजातीयम्) । नियतधर्मस्य कथं द्रव्यत्वमित्यत्राह **यद्यपीति** । **गुणभूता**—परतन्त्रभूता ; अयुतसिद्धविशेषणभूतेत्यर्थः । **तेजोद्रव्यमेवेति** प्रतिज्ञातद्रव्यविशेषत्वसिद्ध्यर्थं प्रथमं द्रव्यत्वमुपपादयति **स्वाश्रयादिति** । द्रव्यत्वमस्तु ; तत्रापि तेजस्त्वे किं प्रमाणमित्यत्राह **प्रकाशवत्त्वादिति** । **प्रकाशः**—तमोविरोध्याकारविशेषः, औज्ज्वल्यम् । प्रकाशवत्त्वमुपपादयति **प्रकाशवत्त्वं चेति** । स्वविषयपरविषयज्ञानविरोधितमोनिरसनरूपकार्यदर्शनादित्यर्थः । तर्हि कथमस्या गुणत्वव्यवहार इत्यत्राह **अस्या इति** । **तु**शब्दः शौक्ल्यादिवैषम्यपरः । अथ विशीर्णावयवानां प्रभावत्वं प्रतिक्षिपति

**न च आश्रयावयवा एव विशीर्णाः प्रचरन्तः प्रभेत्युच्यन्ते ; मणिद्युमणिप्रभृतीनां विनाशप्रसंगात् ।**

नचेति । कुत इत्यत्राह मणीति । प्रतिक्षणं विनाशप्रसङ्गादित्यर्थः । तदभ्युपगमे मण्याद्यनुपलम्भप्रसङ्ग-परिहाराय प्रतिक्षणोत्पत्तिरभ्युपेत्या । प्रतिक्षणोत्पत्तिविनाशाभ्युपगमश्चानुपपन्नः; दीपस्येव उत्पत्तिविनाश-सामग्र्यनुवृत्त्यभावात् । तदभावेऽपि तेजस्त्वसामान्यात् दीप इव प्रत्यभिज्ञाबाधेन प्रतिक्षणं विनाशादिकल्पने सत्त्वद्रव्यत्वादिभिः घटादावपि क्षणिकत्वप्रसङ्ग इति भावः । रत्नेषु क्षणिकत्वं रत्नशास्त्रविरुद्धम्; कालविशेषे तदुत्पत्त्याद्यवगतेः । आदित्यादिषु च क्षणिकत्वं श्रुतिविरुद्धम्; 'सूर्याचन्द्रमसौ धाता यथापूर्वमकल्पयत्' 'नाग्नीषोमौ न सूर्यः' इति कालविशेषे तदुत्पत्तिविनाशावगतेः । न च सूर्यादिसृष्टिप्रलयपरवाक्यानां सन्तत्युप-क्रमोच्छेदपरत्वं वाच्यम्; रत्नसूर्यादिमात्रक्षणिकत्वे प्रमाणाभावात् । तेजस्त्वं हि(तु) तेजःपरमाणूनिच्छद्भिः न हेतुतया वाच्यम्; तेजःपरमाणुषु व्यभिचारात् । सत्त्वादिभिः क्षणिकत्वे जगत्क्षणिकत्वं स्यादित्युक्तम् ॥ ननु कर्पूरादीनां दूरोपलब्धगन्धानां गन्धाश्रयभूतावयवविशरणस्यावर्जनीयत्वात्, उत्तरकालोपलम्भाच्च प्रतिक्षणोत्प-त्तिविनाशावभ्युपगन्तव्यौ; तद्वन्मण्यादिष्वपीति ॥ नैवम् । समुद्गकसंपुटादिनिवातदेशनिहित-दृढपिहित-घनसारादेः दूरे गन्धोपलम्भाभावात् आश्रयावयवविशरणाभावेन यथापूर्वं स्थित्युपलम्भोपपत्तेः न प्रतिक्षणोत्पत्ति-विनाशौ कल्प्यौ । सवातदेशस्थघनसारादीनां दूरोपलभ्यमानगन्धानामल्पावयवविशरणमस्त्येव । अवयविनि च सूक्ष्मपरिक्षयो विद्यत एव; तुलया परीक्षणेऽप्यल्पाल्पपरिमाणापकर्षदर्शनात् । अतः प्रतिक्षणमवयवान्तरोपनिपात-विशेषहेतुकोत्पत्तिविनाशौ कल्प्यौ । कल्पनेऽपि परितः केषांचिदवयवानामुपलभ्यमानगन्धाश्रयत्वेनोभयवादि-संप्रतिपन्नानामेव स्थितिमात्रं कल्प्यम्; तावता गन्धोपलब्ध्युपपत्तेः । अनेकधर्मि-तदुत्पत्तिविनाश-अपरिदृष्ट-तदुभयसामग्रीकल्पने गौरवाच्च । यद्वा घ्राणस्यापि चक्षुष इव रश्मिद्वारा संबन्धात् दूरस्थपदार्थगत-गन्धग्राहित्वं कल्प्यम् । गौरवाभावात् । न केवलं कल्प्यं रश्मिमत्त्वम्; उक्तं च भारते, "न ह्यात्मा शक्यते द्रष्टुमिन्द्रियैः कामगोचरैः । प्रवर्तमानैरनयैर्दुर्धर्षैरकृतात्मभिः ॥ तेषां तु मनसा रश्मीन् यदा सम्यङ्नियच्छति । तदा प्रकाशते ह्यात्मा दीपो(?) दीप्यन्निराकृतिः ॥" इति । इन्द्रियाणां पञ्चीकृत-भूताप्यायनैः वायुतेजःप्रभृतिभिः संबन्धात् रश्मिमत्त्वं चोपपद्यते ॥

ननु अग्न्यातपसम्बन्धात् (तपतप्त) सलिलशिलादेरौष्ण्यतारतम्योपलम्भोऽग्न्यातपावयवसंक्रान्ति विना नोपपद्यते । सलिलादेः स्वत औष्ण्याभावान्निराश्रयधर्मसंक्रमणायोगाच्च औष्ण्याश्रयभूत-अग्न्यातपावयवस्य संक्रान्तिरभ्युपेत्या । एवमवयवसंक्रान्तिश्च विशरणेन विना नोपपद्यते । गत्वराणां रश्मीनां चरणतलानामिव कथं विशरणेन विना क्वचित्संक्रमः अवयवतारतम्याच्चौष्ण्यतारतम्यमिति ॥ उच्यते । अग्नितप्तेषु अग्न्यवयवसंक्रान्त्यैव औष्ण्योपलम्भः । सलिलादौ संक्रामन्तोऽग्न्यवयवा एव प्रभेति न वाच्यम्; दीपप्रभयाऽहोरात्रसंवृते(पृक्ते)ऽपि सलिलभूतलादावौष्ण्यानुपलम्भात् । आतपतप्तेष्वपि न किरणविशरणादवयवसंक्रमः, तुहिनकणानामिव रविकिरणोपात्तमुक्तानामग्न्यवयवानां संक्रमणादुष्णो-पलम्भोपपत्तेः । न चात्र कल्पकमन्वेष्टव्यम्; नापि कल्पनागौरवं प्रसजति; आगमसिद्धत्वादस्यार्थस्य । तथाहि मात्स्ये पुराणे कथ्यते, 'वसन्ते ग्रीष्मके रश्मिशतैः संतपति त्रिभिः । शरद्यपि च वर्षासु चतुर्भिः संप्रवर्षति ॥

दीपेऽप्यवयविप्रतीतिः कदाऽपि न स्यात् । न हि विशरणस्वभावा एव दीपाः चतुरङ्गुलमात्रं नियमेनं पिण्डीभूता ऊर्ध्वमुद्गम्य ततः पश्चात् युगपदेव तिर्यगूर्ध्वमधश्चैकरूपाः विशीर्णाः प्रचरन्तीति शक्यं वक्तुम् ।

---

हेमन्ते शिशिरे चैव हिममुत्सृजति त्रिभिः' इति । यथा वर्षासु हेमन्ते च रविकिरणमुक्ताः सलिलकणाः तुहिनकणाश्च न विशीर्णकिरणावयवाः ; किंतु किरणोपात्तविमुक्ता आप्यावयवा एव — एवं [वसन्ते ?] ग्रीष्मे च रविकिरणजन्यं संतापनं न तद्विशीर्णावयवकार्यम किंतु तदुपात्तमुक्ताग्न्यवयवकार्यमिति प्रतीयते । तथा 'अग्निं वावादित्यः सायं प्रविशति', 'उद्यन्तं वावादित्यमग्निरनुसमारोहति' इति श्रूयते । अत्र चाऽऽदित्यतिरोधानदर्शनावच्छिन्नकालविशेषपरौ सायंप्रातश्शब्दौ । कालस्य सायंभावप्रातर्भावौ रविविप्रकृष्ट-संनिकृष्टतत्तद्देशविशेषवृत्तिपुरुषापेक्षया सर्वदोपपद्येते इत्ययमर्थो भुवनकोशे स्फुटतरः । ततश्च प्रविशतीत्यनेनाग्नावादित्यस्य व्याप्तिरुच्यमाना दूरस्थितस्य स्वरूपेण नोपपन्नेति किरणद्वारा भवति । अग्निरनुसमारोहतीत्यनेन अग्न्यवयवानामादित्येनोपादीयमानत्वमुच्यते । न चाग्न्यधिष्ठातृदेवतारोहणपरमिदं वाक्यम् ; 'तस्माद्धूम एवाग्नेर्दिवा ददृशे' इत्यनन्तरवाक्येनाग्नेरादित्योपसर्पणनिमित्ततेजोमान्द्यकथनात् । अन्यथा सायम्प्रातस्समययोः सर्वदा संभवेनाग्नेरादित्ये सर्वदारोहणम् अग्नावादित्यस्य सर्वदारोहणञ्च प्रसजेत् । ततश्चाग्न्यादित्ययोः स्थानविनिमयेन सर्वदाऽस्थितिरुक्ता स्यात् । सा च प्रमाणान्तरविरुद्धा । अत आदित्यस्याग्नौ किरणद्वारा व्याप्तिः किरणैरग्न्यवयवोपादानं च वाक्यद्वयोक्तम् । अतश्चोपात्ताग्न्यवयववर्षेण तापनं मास्योक्तम् ; उत्सर्जनप्रकरणस्वारस्यात् । अतस्तुहिनकणानामिव रविकिरणमुक्तानामाग्नेयावयवानां विशीर्णकिरणावय-वत्वाभावात् रविकिरणेषु तन्मण्डले प्रतिक्षणविनाशोत्पत्तिक्ऌप्तिरनुपपन्ना । अतो न शीर्णावयवाः प्रभा ।

दूषणान्तरमाह दीपेऽपीति । अवयविप्रतिपत्त्यनुपपत्तिमुपपादयति नहीति । दीपः किं विशरणस्वभावः उत स्थिरस्वभावः ? विशरणस्वभावत्वे पिण्डीभावो मूर्तद्रव्यप्रतिबन्धनिबन्धनः स्यात् । स्थिरस्वभावत्वे विशरणं मूर्तद्रव्यप्रतिहतिहेतुकं स्यात् । अत्रोभयमनुपलम्भहतम् ॥ विशरणस्वभावत्वे पिण्डीभावो वायुनोपपद्यत इति चेत् — तर्हि निवाते पिण्डीभावो न स्यात् । स्तिमितसूक्ष्मवायुना पिण्डीभावश्चेत् — विशरणं न स्यात् । तच्च सूक्ष्मवायुना चेत्, एकस्य विरुद्धस्वभावद्वयायोगात् पिण्डीभावविशरणहेतुभूतवायुद्वयमभ्युपेत्यम् । तयोर्मिथःप्रतिघातुकत्वादन्यतरविगमे पिण्डीभाव एव वा विशरणमेव वा स्यात् । तत्परिहाराय परस्परान्तरितविरुद्धस्वभाववायुद्वयपरंपरया संनिधिविगम-परिकल्पने गौरवं स्यात् । तत्कल्पनेऽपि तिर्यग्गत्वराणां वाय्ववयवानां नोदनमात्रहेतूनां परितः प्रतिबन्ध-कत्वायोगात् पिण्डीभावो न स्यात् ।

ननु प्लोषणद्रवीभूतपार्थिवावयवसंदंशात् पिण्डीभावः, ततस्तदवयवगतस्निग्धत्वापगमेन संदंशकत्वा-भावादग्न्यवयवविशरणमित्यत्राह न हि विशरणेति । यद्यग्न्यवयवा उद्गमनस्वभावाः, तर्हि विशरणे तिर्यग्गतिर्न स्यात् । यदि ते तिर्यग्गतिस्वभावाः, तर्हि प्रथममूर्ध्वगतिर्न स्यात् । एकजातीयद्रव्यस्योपाधिना विना विरुद्धस्वभावत्वायोगात् । उपाधिश्च न दृश्यते । दीपप्रभयोर्भिन्नावयवित्वे तु विरुद्धस्वभावत्वमुपपद्यते । किञ्च चतुरङ्गुलादिपरिमिति (माण) तारतम्यनियामकोऽपि नास्ति । विशरणे च पार्श्वेऽपि विशरणं संभवति । समन्ततो

अतः सप्रभाका एव दीपाः प्रतिक्षणमुत्पन्ना विनश्यन्तीति, पुष्कलकारणक्रमोपनिपातात् तद्विनाशे विनाशाच्चावगम्यते । प्रभायाः स्वाश्रयसमीपे प्रकाशाधिक्यमौष्ण्याधिक्यमित्यादि उपलब्धिव्यवस्थाप्यम्, अग्न्यादीनामौष्ण्यादिवत्—एवमात्मा चिद्रूप एव चैतन्यगुणक इति । चिद्रूपता हि स्वयम्प्रकाशता ।

तथा हि श्रुतयः, "स यथा सैन्धवघनोऽनन्तरोऽबाह्यः कृत्स्नो रसघन एव, एवं वा अरेऽयमात्माऽनन्तरो-

---

युगपद्विशरणे नियामकाभावादित्यभिप्रायः । किञ्च विशीर्णानामवयवानां पांसूनामिव ऋजुप्रसरणनियमने च न हेतुः । प्रसरणस्यार्जवनियमश्च तिरोधायकं पदार्थं प्रति ऋजुदेश एव छायायोगादवगम्यते । छाया-वैपुल्यं तु निवार्यमाणरश्मीनां पृथुत्वप्रत्वकृतम्, न अनार्जवकृतम् । छायाकौटिल्यं तु तिरोधायककौटिल्यकृतम्; न तु प्रसरणा(सारा)नार्जवकृतम् । तच्च ऋजुप्रसारित्वसाधकम् । विशीर्णावयवत्वे रेणूनामिव पवनानुत्सार्यमाणत्वं च न घटते । प्राचीनजालकनिष्क्रान्ता हि प्रभा दक्षिणानिलेन नोत्सार्यते । अन्यथा रजसामपि तत्रानोदनं प्रसजेत् । जालकनिष्क्रान्तप्रभायाश्च पवनानुत्सारितत्वं ततः परस्मिन् भित्यादौ प्रभासंसर्गादवगम्यते । अतो धनुषि आततायाः मौर्व्या इव प्रभाया न विशीर्णावयवत्वमिति ।

ततः किमित्यत्राह अतस्सप्रभाका एव दीपाः प्रतिक्षणमुत्पन्ना इति । तेजस्त्वेन मण्यादि-विनाशाभ्युपगमे अतिप्रसङ्गात्, विशरणस्वीकारे पिण्डीभाव—युगपद्विष्वङ्निःसरण—ऋजुप्रसरणाद्यनेक-नियमव्यवस्थापकाभावात्, यथादृष्टाभ्युपगमे विरोधाभावाच्च सप्रभाका एव दीपाः प्रतिक्षणमुत्पन्ना इत्यर्थः । तर्हि कथं प्रतिक्षणोत्पत्तिविनाशावित्यपेक्षायाम्, यथा मण्यादीनां प्रतिक्षणविनाशो न प्रसजति, तथा दीपक्षणिकत्वे हेतुद्वयमाह पुष्कलकारणक्रमोपनिपातात्तद्विनाशे विनाशाच्चेति । पृथक्स्थितदण्डचक्रादि व्यावृत्त्यर्थं पुष्कलशब्दः । वर्त्यवयवाग्निसंयोगस्य दीपसामग्रीत्वं प्रथमवर्त्यवयवाग्निसंयोगे दृष्टम् । न च प्रथमावयवाग्निसंयोगस्यैव कारणत्वं शङ्कनीयम्; चरममध्यावयवयोरप्यग्निसंयोगे सति दीपोत्पत्तिदर्शनात् । अतः प्रत्यवयवमग्निसंयोगात् पुष्कलकारणपरम्परा दृष्टेति प्रत्यवयवमग्निसंयोगात् दीप उत्पद्यत एव । तत्र प्रतिक्षणमुत्पत्तौ सत्यां युगपदनेकदीपानुपलम्भात् विनाशोऽपि सिद्धः । प्रतिक्षणविनाशस्य पृथगनुमापकमुच्यते तद्विनाशे विनाशाच्चेति । वर्त्यवयवविनाशस्य दीपविनाशसामग्रीत्वं चरमवर्त्यवयवविनाशे दृष्टम् । एवं विनाशकारणानुवृत्तिदर्शनात् प्रत्यवयवविनाशं दीपो विनश्यत्येव । एवमुत्पत्तिविनाशसामग्र्यनुवृत्तिभ्यां प्रतिक्षणं तावनुमीयेते इत्यर्थः । प्रभा विशीर्णावयवा; न चेत्, दीपसमीपे तस्य औष्ण्याधिक्यादिकं कथम्? विशरणपक्षे ह्यवयवबाहुल्यवैरल्याभ्यामौष्ण्याधिक्यमान्द्यादिकमुपपद्यत इत्यत्राह प्रभाया इति । प्रकाशाधिक्यमौष्ण्याधिक्यमित्यादीति आदिशब्देन आश्रयविप्रकृष्टदेशे प्रकाशमान्द्यमौष्ण्यमान्द्यञ्च विवक्षितम् । उपलब्धिव्यवस्थाप्यत्वे दृष्टान्तमाह अग्न्यादीनामिति । उक्तं दार्ष्टान्तिकेऽतिदिशति एवमिति । चिद्रूपएवेति । रूपशब्दो धर्मिस्वरूपपरः । ततः किं स्वयप्रकाशत्वस्येत्यपेक्षायां चिद्रूपत्वं विवृणोति चिद्रूपताहीति । अनेन वक्ष्यमाणश्रुतिवाक्ये ज्ञानादिशब्दो विवृतो भवति ।

एवमनुग्राहकतर्कमुपन्यस्य प्रमाणमाह तथाहिश्रुतय इति । स यथा सैन्धवघन इति । अनन्तरः अन्तरङ्गव्यतिरिक्तः । अबाह्यः बहिरङ्गव्यतिरिक्तः । एवं व्यतिरेकनिर्देशेन निश्शेषग्रहणं कृतम् । तदेवाह कृत्स्न इति । दार्ष्टान्तिकविषयोऽबाह्यशब्दो धर्मिपरः; अनन्तरशब्दो धर्मपरः;

ऽबाह्यः कृत्स्नः प्रज्ञानघन एव", "विज्ञानघन एव", "अत्रायं पुरुषः स्वयञ्ज्योतिर्भवति", "न (हि) विज्ञातुर्विज्ञातेर्विपरिलोपो विद्यते", "अथ यो वेदेदं जिघ्राणीति स आत्मा", "कतम आत्मेति । योऽयं विज्ञानमयः प्राणेषु हृद्यन्तर्ज्योतिः पुरुषः", "एष हि द्रष्टा स्प्रष्टा श्रोता घ्राता रसयिता मन्ता बोद्धा कर्ता विज्ञानात्मा पुरुषः", विज्ञातारमरे केन विजानीयात्", "जानात्येवायं पुरुषः", "न पश्यो मृत्युं पश्यति न रोगं नोत दुःखताम्", "स उत्तमः पुरुषः.... नोपजनं स्मरन्निदं शरीरम्", "एवमेवास्य परिद्रष्टुरिमाः षोडश कलाः पुरुषायणाः पुरुषं प्राप्यास्तं गच्छन्ति", "तस्माद्वा एतस्मान्मनोमयात् अन्योऽन्तर आत्मा विज्ञानमयः" इत्याद्याः । वक्ष्यति च, "ज्ञोऽत एव" इति । अतः स्वयम्प्रकाशोऽयमात्मा ज्ञातैव; न

---

कृत्स्नशब्दस्तयोरेकदेशजडत्वशंकाव्युदासार्थः । अत्र सर्वत्रैकरूप्यमेव दृष्टान्तोपजीव्यम्, न त्वन्यत् । दृष्टान्तदार्ष्टान्तिकविषयवाक्यद्वयेऽप्यनन्तरोऽबाह्य इति ह्युक्तम् । शरीरित्वावस्थायामपि ज्ञानात्मकत्वपरं वाक्यमुपादत्ते विज्ञानघन एवेति । घनशब्दोक्तनैरन्तर्यस्य जडांशमिश्रत्वं व्यावर्तयत्येवकारः । ज्ञानत्वं नाम स्वयंप्रकाशत्वमिति ज्ञापनार्थम् अत्रायमिति वाक्योपादानम् । धर्मधर्मिभावं ज्ञापयति न विज्ञातुरिति । ज्ञातृसंबन्धिज्ञानस्य नित्यत्वे कथिते ज्ञानमात्रस्य(?) [1]नित्यत्वशङ्काव्युदासार्थं ज्ञातुरेवात्मत्वं दर्शयति अथय इति । एकवाक्येन ज्ञानगुणकत्व-स्वयंप्रकाशत्वयोः सहप्रतिपादकं वाक्यमाह कतम इति । ज्ञानगुणकत्व-ज्ञानस्वरूपत्वप्रतिपादकवाक्यमाह एष हीति । ज्ञातव्यस्य निष्कृष्टात्मस्वरूपस्य ज्ञातृत्वमाह विज्ञातारमिति । अनेन ज्ञातृत्वं स्वाभाविकमिति फलितम् । न केवलं संसृतिदशायाम्; मुक्तावपि ज्ञातृत्वं ज्ञापयति जानात्येवायमिति । अवधारणासंकोचान्मुक्तावपि ज्ञातृत्वसिद्धिः (ज्ञातृत्वं सिद्धम्) । मुक्तौ ज्ञाननिषेधश्रुतीनां विषयविभागं दर्शयति न पश्य इति, स उत्तम इति च । पुरुषं प्राप्तस्य मुक्तस्य ज्ञातृत्वेऽनुवर्तमान एव देहेन्द्रियविगमं दर्शयति एवमिति । अन्तःकरणोत्तीर्णस्य ज्ञातृत्वमाह तस्माद्वा इति । अस्यार्थस्य सूत्रकाराभिप्रेतत्वमाह वक्ष्यतिचेति । पूर्वं सूत्रोपादानमहमर्थात्मत्वं सूत्रकाराभिमतमिति ज्ञापनार्थम् । अत्रोपादानं ज्ञानगुणकत्वज्ञानस्वरूपत्ववादिनीनां श्रुतीनामविरोधः सूत्रकाराभिमत इति ज्ञापनार्थम् ॥ ज्ञानत्वात् ज्ञानं न ज्ञानान्तराश्रय इति चेत्—यदि व्याप्त्यनुरोधेनैवमुच्यते, तर्हि धर्मत्वेन स्वीकार्यम् । यदि श्रुतिबलात् स्वातन्त्र्येण स्वीक्रियते, तर्हि श्रुतिबलादेव ज्ञानाश्रयत्वमप्यङ्गीक्रियताम् । न च व्याप्तिविरोधः; धर्मभूतज्ञानत्वप्रयुक्तत्वात् ज्ञानानाश्रयत्वस्य । श्रुत्या ज्ञातुः स्वयंप्रकाशत्वसिद्धिं निगमयति अत इति ॥

ननु घटमहं जानामीत्यत्र ज्ञानस्य ज्ञातृ(ज्ञातृत्व?)संबन्धः प्रतीयत इत्यभ्युपेत्यम् । अन्यथा स्वज्ञानपरज्ञान-विभागस्य दुर्ग्रहत्वप्रसङ्गात् । स्वसंबन्धितया प्रतीतं ज्ञानं सम्बन्धाप्रतीतौ कथं स्वज्ञानमिति व्यवह्रियते? अतः स्वसम्बन्धः प्रतीयत एव । तत्प्रतीतिः न तावदहमर्थाद्भवति । 'अहमर्थः प्रत्यक्त्वेन अनुकूलत्वेनैकत्वेन च स्वतो भाति; न ह्यर्थान्तरमहमर्थो विषयीकर्तुमलम्' इति भवतां प्रक्रिया । अतो धर्मभूतज्ञानेनैव सम्बन्धप्रतीतिः । सम्बन्धश्च सम्बन्धिभ्यां विना न प्रतीयत इति ज्ञातृज्ञानयोरपि सम्बन्धप्रकाशकज्ञानान्तरवेद्यत्वं स्यात् । ततः स्वतोऽवभासो ज्ञानान्तरेणावभासश्चेत्यवभासद्वयाभावात्, ज्ञानान्तरेणैव प्रकाश्यतया स्वप्रकाश्यत्वासिद्धेः, ज्ञातुश्च ज्ञानस्य च जडत्वं स्यात् । किंच ज्ञानान्तरेण संबन्ध-

---

1. ज्ञानेत्यादौ पाठो निरीक्ष्यः । नित्यत्वेत्यत्र वा अनात्मत्वेति पाठः स्यात् । ज्ञानमात्रस्य-ज्ञानसामान्यस्य । धर्मभूतज्ञानस्येव धर्मिभूतज्ञानस्यापि अनात्मत्वेत्यर्थः । तत्त्वटीका द्रष्टव्या ।

प्रकाशमात्रम् । प्रकाशत्वादेव कस्यचिदेव भवेत् प्रकाशः दीपादिप्रकाशवत् । तस्मात् नात्मा भवितुमर्हति संवित् । संविदनुभूतिज्ञानादिशब्दाः संबन्धिशब्दा इति च शब्दार्थविदः । न हि लोकवेदयोः जाना[ती]त्यादेरकर्मकस्याकर्तृकस्य च प्रयोगो दृष्टचरः । यच्चोक्तम्—अजडत्वात् संविदेवाऽऽत्मेति—तत्रेदं प्रष्टव्यम् ।

---

प्रतीतिः अवश्यम्भाविनी चेत्, संबन्धविषयज्ञानेन स३ ज्ञातृसंबन्धस्यापि ज्ञानान्तरेण प्रतीत्यवश्यम्भावात् सम्बन्धज्ञानपरम्पराप्रसङ्गः । अवश्यम्भावाभावे सर्वज्ञानेषु अहं जानामीति ज्ञानज्ञातृसम्बन्धप्रतीतिर्न स्यात् ॥ नैवम्; स्वयम्प्रकाशप्रत्यक्षेणैव सम्बन्धप्रतीतेः । नियतविशेषणविशेष्यभावो हि सम्बन्धः । अहमर्थो विशेष्यैकस्वभावं स्वात्मानं प्रकाशयति । धर्मभूतज्ञानं च विशेषणैकस्वभावं स्वात्मानं प्रकाशयति । विशेषणविशेष्यभावस्य परस्परप्रतियोगिकत्वं च ज्ञातृज्ञानयोः सहावभासादेव प्रतीयते ॥ ननु सम्बन्धप्रतीतौ सम्बन्धिनोस्सहावभासश्च एकज्ञानगम्यतया विना नोपपद्यत इति ज्ञातृज्ञानयोः ज्ञानान्तरवेद्यत्वं स्यात् । सुरभि पुष्पमित्यादौ भिन्नसामग्रीवेद्ययोरपि गन्धपुष्पयोः सम्बन्धप्रतीतिवेलायामेकज्ञानगम्यत्वं हि दृश्यत इति चेन्न—तत्र सम्बन्धिनोः सम्बन्धेन सह एकज्ञानगम्यत्वस्य सहावभासप्रयुक्तत्वाभावात् । संबन्धिनोर्जडत्वप्रयुक्तं हि तत्रैकज्ञानगम्यत्वम् । अत्र स्वप्रकाशत्वात् स्वयमेव सहावभासमानयोर्ज्ञातृज्ञानयोर्विशेषणविशेष्यैकस्वभावत्वरूपसम्बन्धग्रहो ज्ञानान्तरानपेक्ष उपपद्यते । अत सम्बन्धाग्रह-स्वपरज्ञानविभागाभाव-सम्बन्धज्ञानपरम्पराप्रसङ्गाः दूरोत्सारिताः । एवं ज्ञातृस्वयम्प्रकाशत्वोपपादनेन चिन्मात्रव्यतिरिक्तत्वादिति जडत्वसाधकहेतुः निरस्तो भवति । ज्ञानव्यतिरिक्तत्वाज्जडत्वं वदता किं स्वयंप्रकाशव्यतिरिक्तत्वं हेतुरुक्तः, उत विषयप्रकाशकान्यत्वम् । प्रथमे साध्याविशिष्टत्वम् । द्वितीये ब्रह्मण्यनैकान्त्यम्; श्रुत्यादिबाधश्च ।

अथ साश्रयत्वे तर्कमाह प्रकाशत्वादेवेति । प्रकाशत्वात्—विषयेण साक्षात्संबध्य साक्षात्परम्परया वा ज्ञायमानत्वेनापरोक्ष्यव्यवहारानुगुण्यहेतुत्वादित्यर्थः । अनेन स्वरूपभूतज्ञानेन्द्रियलिङ्गादिव्यावृत्तिः । हेत्वन्तरमप्याह संविदनुभूतीति । संबन्धिशब्दत्वं शब्दस्वभावायत्तमित्याशङ्कयाह न हि लोकवेदयोरिति । यत्रार्थस्वरूपस्यान्यथात्वं दृश्यते; तत्र शब्दस्वभावायत्तत्वमाश्रयणीयम् । यथा दारा इत्यादिषु बहुत्वादेः । यत्र नान्यथात्वम्, तत्रार्थस्वभावायत्तत्वमेव, यथा भार्येत्यादिष्वेकत्वादेः । तथा लोकवेदयोः सकर्मकर्तृकत्वदर्शनात् अर्थस्वभावायत्तमेव संबन्धिशब्दत्वमित्यभिप्रायः । यद्वा कर्मकर्तृसंबन्धित्वं व्युत्पत्तिनिमित्तमस्तु; न प्रवृत्तिनिमित्तम् । तत्तु ज्ञप्ति(?)मात्रमित्यत्राह नहिलोकेति । प्रयोगाधीनं हि प्रवृत्तिनिमित्तान्तरकल्पनम् । प्रयोगश्च संबन्धिन्येवार्थ इति नार्थान्तरकल्पना स्यात् । स्वरूपभूतज्ञानवाचिशब्दानां सम्बन्धिशब्दत्वं त्वन्मतेऽप्यनुपपन्नमिति चेन्न स्वरूपगोचराणां स्वयंप्रकाशत्वे रूढानां ज्ञानादिशब्दानां अनुभूत्यादिशब्देभ्यःशब्दान्तरत्वात् । अतः (?) सम्बन्धिशब्दत्वोप(त्वव्यप ?) देशस्तु धर्मभूतज्ञाने सावकाशोऽस्मन्मते । विषयाश्रयसम्बन्धिज्ञानस्यैव विषयाश्रयसम्बन्धबाधेन निराश्रयत्वनिर्विषयत्वाभ्युपगमात् त्वन्मते सम्बन्धिशब्दत्वोपदेशो निरर्थक इति भावः ।

अथाजडत्वात् संविदात्मत्वसमर्थनं दूषयितुमनुवदति । यच्चोक्तमिति । अथ अजडत्वं किं स्वसत्ताप्रयुक्तप्रकाशत्वम्, उत अव्यभिचरितप्रकाशसत्ताकत्वम्, उत स्वस्मै प्रकाशमानत्वम्, उत स्वस्मै स्वयंप्रकाशत्वम्

अजडत्वमिति किमभिप्रेतम् ॥ स्वसत्ताप्रयुक्तप्रकाशत्वमिति चेत्—तथासति दीपादिषु अनैकान्त्यम् । संविदतिरिक्तप्रकाशधर्मानभ्युपगमेनासिद्धिर्विरोधश्च । अव्यभिचरितप्रकाशसत्ताकत्वमपि सुखादिषु व्यभिचारान्निरस्तम् । यद्युच्येत—सुखादिरव्यभिचरितप्रकाशोऽपि अन्यस्मै प्रकाशमानतया घटादिवत् जडत्वेन अनात्मा इति—ज्ञानं वा किं स्वस्मै प्रकाशते ? तदपि ह्यन्यस्यैवाहमर्थस्य ज्ञातुरवभासते, अहं सुखीतिवत्, जानाम्यहमिति । अतः स्वस्मैप्रकाशमानत्वरूपमजडत्वं संविदि असिद्धम् । तस्मात् स्वात्मानं प्रति स्वसत्तयैव सिध्यन् अजडोऽहमर्थ एवाऽऽत्मा । ज्ञानस्यापि प्रकाशता तत्संबन्धायत्ता । तत्कृतमेव हि ज्ञानस्य सुखादेरिव स्वाश्रयं प्रति प्रकटत्वम्, इतरं प्रति अप्रकटत्वञ्च । अतो न ज्ञप्तिमात्रमात्मा, अपितु ज्ञातैवाहमर्थः ।

---

उत स्वयंप्रकाशत्वमिति पञ्चधा विकल्पमभिप्रेत्याह अजडत्वमितिकिमभिप्रेतमिति । अहं जानामीति प्रत्यक्षबाधः सर्वसाधारणं दूषणम् । प्रथमं स्वसत्ताप्रयुक्तप्रकाशत्वपक्षं दूषयितुमाह स्वसत्तेति । स्वसत्ताप्रयुक्तः प्रकाशो यस्येति बहुव्रीहिः । वक्ष्यमाणासिद्धिदूषणोपयोगिभेदज्ञापनार्थं स्वसत्ताप्रयुक्तशब्दः । अनैकान्त्यमाह तथासतीति । स्वपक्षे ज्ञातुरात्मत्वात् सपक्षभूते तस्मिन्, विपक्षेऽनात्मनि दीपे च वृत्त्या अनैकान्त्यं पक्षत्रयवृत्तित्वलक्षणमुक्तम् । परपक्षे अनियतत्वमेवानैकान्त्यम्; सपक्षाभावात् । दूषणान्तरद्वयमाह संविदतिरिक्तेति । संवित् प्रयोजिका प्रकाशः प्रयोज्य इति तदतिरेकेणानभ्युपगमादसिद्धिः । अभ्युपगमे निर्विशेषत्वविरोधः । इमावसिद्धिविरोधौ विकल्पितसर्वशिरस्साधारणावनुसन्धेयौ । यद्वा विरोधः पक्षविपक्षयोरेव वर्तमानत्वम्; पक्षभूतसंविदि विपक्षे दीपादौ च वृत्तेः । परमतमात्रपर्यालोचनया अयं विरोध उक्तः । अत्र स्वसत्ताप्रयुक्तप्रकाशत्वमित्यत्र प्रकाशशब्देन किं साक्षाद्वा परम्परया वा व्यवहारानुगुण्यं विवक्षितम्, उत परम्परयैव, उत साक्षादेवेति त्रिकल्पोऽभिप्रेतः । प्रथमं शिरः स्वपरदर्शनपर्यालोचनयाऽभिहितयोरनैकान्त्यविरोधयोरन्यतरेण निरस्तं भवति । द्वितीये त्वसिद्धिः, परम्परयैव व्यवहारानुगुण्यस्य ज्ञप्तौ उभयवाद्यनभिमतत्वात् । तृतीये सत्ता(सन्मात्रा)तिरिक्तप्रकाशानभ्युपगमनिबन्धनासिद्धिः निर्विशेषत्वविरोधश्च स्यातामित्यभिप्रायः । द्वितीयं पक्षं प्रतिक्षिपति अव्यभिचरितेति । न व्यभिचरति प्रकाशो यस्य सत्तायां सोऽव्यभिचरितप्रकाशसत्ताकः । प्रयोज्यप्रयोजकत्वाभावेऽपि विद्यमानदशायां सर्वदा प्रकाशमानत्वमित्यर्थः । तस्यानात्मत्वेन संप्रतिपन्नेषु सुखदुःखादिषु व्यभिचार उक्तः । अथ तत्परिहारमुखेन स्वस्मै प्रकाशमानत्वपक्षमुपक्षिपति यद्युच्येतेति । परिहरति ज्ञानंवेति । कस्येत्राह तदपीति । परस्मै भासमानत्वमुपपादयति अहमिति । तस्मादेवंरूपाजडत्वमसिद्धमित्याह अत इति । अथ चतुर्थं शिरो दूषयन् असिद्धिमाह तस्मादिति । स्वयंप्रकाशत्वपक्षेऽपि स्वयंप्रकाशत्वं नाम किं ज्ञानकर्मतामन्तरेण व्यवहारानुगुणत्वम् उत ज्ञानान्तरनिरपेक्षप्रकाशत्वमित्यभिप्रेते विकल्पे प्रथमं शिरः तस्मादिति ग्रन्थेन दूषितम् । इतरात्मव्यावृत्त्यर्थं स्वात्मानमित्युक्तम् । स्वसत्तयैव सिध्यन्नित्यनेन स्वयंप्रकाशत्वमुक्तम् । स्वस्मै स्वयंभासमानत्वमहमर्थस्याधिकम् । स्वस्मै स्वयंभासमानस्य स्वयंभासमानत्वमप्यस्तीत्यभिप्रायेण स्वात्मानं प्रति स्वसत्तयैवेत्युक्तम् । तेन, ज्ञानकर्मतामन्तरेण व्यवहारानुगुणत्वं ज्ञातर्यप्यस्तीति तत् व्यभिचरितम्—स्वपक्षे अनात्मनि ज्ञातर्यपि विपक्षभूते वृत्तेरिति दर्शितम् । ज्ञानान्तरनिरपेक्षप्रकाशत्वं संविद्यसिद्धम्; तस्याः स्वरूपभूतज्ञानाधीनत्वात्; अहमर्थस्यैव तदित्यभिप्रायः सत्तयैवेत्यनेन सूचितः । तमेव विवृणोति ज्ञानस्यापीति । तत्सम्बन्धायत्तत्वमुपपादयति तत्कृतमेवहीति । ज्ञानस्फुरणस्य आश्रयसम्बन्धोऽपि सामग्र्यन्तर्भूत इति भावः । अजडत्वात् संविदात्मत्वासिद्धिं निगमयति अत इति ।

**अथ यदुक्तम्—अनुभूतिः परमार्थतो निर्विषया निराश्रया च सती भ्रान्त्या ज्ञातृतयाऽवभासते, रजततयेव शुक्तिः, निरधिष्ठानभ्रमानुपपत्तेः इति—तदयुक्तम् । तथासति अनुभवसामानाधिकरण्येनानुभविताऽहमर्थः प्रतीयेत, अनुभूतिरहमिति, पुरोवस्थितभास्वरद्रव्याकारतया रजतादिरिव । अत्र तु पृथगवभासमानैवेयमनुभूतिः अर्थान्तरमहमर्थं विशिनष्टि, दण्ड इव देवदत्तम् । तथा हि, अनुभवाम्यहमिति प्रतीतिः । तदेवमस्मदर्थमनुभूतिविशिष्टं प्रकाशयन् अनुभवाम्यहमिति प्रत्ययः, दण्डमात्रे दण्डी देवदत्त इति प्रत्ययवत् विशेषणभूतानुभूतिमात्रावलम्बनः कथं प्रतिज्ञायेत ?**

**यदप्युक्तम्—स्थूलोऽहमित्यादिदेहात्माभिमानवत एव ज्ञातृत्वप्रतिभासनात् ज्ञातृत्वमपि मिथ्येति—तदयुक्तम्, आत्मतयाऽभिमताया अनुभूतेरपि मिथ्यात्वं स्यात्; तद्वत एव प्रतीतेः ॥ सकलेतरोपमर्दितत्त्वज्ञानाबाधितत्वेनानुभूतेर्न मिथ्यात्वमिति चेत्—हन्तैवंसति तदबाधादेव ज्ञातृत्वमपि न मिथ्या ॥**

---

अथाहमर्थस्य भ्रान्तिसिद्धत्वं दूषयितुमनुवदति **अथ यदुक्तमित्यादिना** । संविदपि मिथ्या किं न स्यादित्यत्राह **निरधिष्ठानेति** । अनुभूतिव्यतिरिक्तापारमार्थ्यसिद्धत्वकारेणायं हेतुरुक्तः । दूषयति **तदयुक्तमित्यादिना** । अधिष्ठानसामानाधिकरण्येनाध्यस्तप्रतीतिं दृष्टान्तेनोपपादयति **पुरोवस्थितेति** । पक्षे तद्विपर्ययं दर्शयति **अत्रत्विति** । **पृथगवभासमाना**—व्यधिकरणतयाऽवभासमाना । तथा प्रतीतिं दर्शयति **तथाहीति** । ततः किमित्यत्राह **तदेवमिति** । तदेवम्—उक्तप्रकारेण धर्मधर्मिभावप्रतीतौ । विशेषणतया प्रतिपन्ने तद्विशेषणविशिष्टस्याध्यासोऽनुपपन्न इत्यर्थः । तत्र न सम्बन्धमात्राध्यासः; तथासति सम्बन्धिनो ज्ञातुः पारमार्थ्यप्रसङ्गात् । न च तथाऽभ्युपेतम् ॥ ननु विशेषणे विशिष्टाध्यासो दृश्यते; यथा प्रभायां मण्यध्यास इति ॥ इदं चोद्यं **पृथगवभासमानेत्यनेन** परिहृतम् । न हि तथा वैयधिकरण्येन विशेषणीभूता प्रभा, किन्तु अयं मणिरिति मण्यध्यासाधिष्ठानभूता । प्रभा मणिसामानाधिकरण्येनैव हि भाति ॥ ननु अनुभवसामानाधिकरण्येन प्रतीतिप्रसञ्जनमयुक्तम्; दिक्षु मालिन्यम्, नभसि राग इति वैयधिकरण्येनाप्यध्यासदर्शनात् ॥ नैवम्; पदद्वयप्रवृत्तिनिमित्तयोरेकाश्रयवृत्तित्वं हि सामानाधिकरण्यम् । इह दिक्त्वमालिन्ययोः नभस्त्वारुण्ययोश्च एकाश्रयवृत्तित्वात् अर्थतः सामानाधिकरण्यमस्ति । वैयधिकरण्यं तु शब्दगतम् । दिशो मलिनाः, दिक्षु मालिन्यमित्यत्र कोऽर्थभेदः? अध्यासेषु धर्म्यैक्यप्रतीतिरवर्जनीया । अतः सैवात्रापाद्यते **अनुभूतिरहमिति प्रतीयेतेति** ॥ ननु अनुभूतिरहमिति प्रतीतिप्रसङ्गो दुर्वचः । अनुभूतित्वं ह्यधिष्ठानासाधारणाकारः । तदस्फुरणं भ्रमानुगुणमेव । न हि, शुक्ती रजतमिति प्रतीयत इति ॥ एवं तर्ह्यनुभूतेर्निर्विशेषतया रूपान्तरेण स्फुरणाभावात् अनुभूतितया स्फुरणे विरोधाच्च तदधिकरणाध्यासानुदयः । अविरोधेन कृत्स्नाध्यासे ग्रन्थोक्तसामानाधिकरण्यप्रतीतिप्रसङ्गो दुर्वारः । एतदभिप्रायेण हि **पुरोवस्थितद्रव्याकारतया रजतादिरिवेत्युक्तम्** ॥ नन्वध्यासानुदयो दुर्वचः, विषयोपश्लिष्टा अनुभूतिः अहं जानामीत्यत्र ज्ञात्रध्यासे प्रतीयते । सा तु नाधिष्ठानम् । निर्विषया निराश्रयाऽनुभूतिरेवाधिष्ठानम् । तदप्रकाशादध्यासोदय इति ॥ उच्यते । तत्राप्रतिपन्नस्य अधिष्ठानत्वायोगाद्विषयाश्रयशून्यसंविदो योग्यानुपलब्धिनिरस्तत्वात्, विषयप्रकाशकसंविद एव आत्मत्वाभ्युपगमेन त्वया स्वयम्प्रकाशत्वसमर्थनाच्च सैवाधिष्ठानमिति तदवभासे, तस्याश्च शुक्तित्ववत् भ्रमविरोधित्वे अध्यासानुदय इति ।

देहात्माभिमानवतो ज्ञातृत्वप्रतिभासात् तन्मिथ्येत्युक्तमनूद्य दूषयति **यदप्युक्तमित्यादिना** । **तदबाधादेवेति** । ज्ञातृत्वस्याबाधितत्वं मुक्तावपि ज्ञातृत्वपरश्रुतिवाक्यात् । ज्ञातृत्वस्य विक्रियात्मकत्वं निराकर्तुं

**यदप्युक्तम्—अविक्रियस्याऽऽत्मनो ज्ञानक्रियाकर्तृत्वरूपं ज्ञातृत्वं न संभवति। अतो ज्ञातृत्वं विक्रियात्मकं जडं विकारास्पदाव्यक्तपरिणामाहङ्कारग्रन्थिस्थम् इति न ज्ञातृत्वमात्मनः; अपित्वन्तःकरणरूपस्याहङ्कारस्य। कर्तृत्वादिर्हि रूपादिवत् दृश्यधर्मः। कर्तृत्वेऽहम्प्रत्ययगोचरत्वे चाऽऽत्मनोऽभ्युपगम्यमाने, देहस्येवानात्मत्व-पराक्त्वजडत्वादिप्रसंगश्चेति—नैतदुपपद्यते; देहस्येवाचेतनत्व-प्रकृतिपरिणामत्व-दृश्यत्व-पराक्त्व-परार्थत्वादि-योगात् अन्तःकरणरूपाहङ्कारस्य; चेतनासाधारणस्वभावत्वाच्च ज्ञातृत्वस्य। एतदुक्तं भवति—यथा देहादिः दृश्यत्वपराक्त्वादिहेतुभिः तत्प्रत्यनीकद्रष्टृत्वप्रत्यक्त्वादेर्विविच्यते, एवमन्तःकरण-रूपाहङ्कारोऽपि तद्द्रव्यत्वादेव तैरेव हेतुभिः तस्माद्विविच्यते इति।**

---

तदनुवदति **यदप्युक्तमविक्रियस्येति**। ज्ञानस्य धात्वर्थतया क्रियात्वम्। तत्कर्तृत्वं च विकाररूपम्। अत एव जडं च। अविक्रियस्याजडस्याऽऽत्मनो न संभवति। विक्रियात्मकत्वाज्जडत्वाच्च तादृशाहङ्कारग्रन्थिस्थमित्यर्थः। सर्वाध्यासमूलत्वात् ग्रन्थित्वम्। अथ हेत्वन्तरेण च ज्ञातृत्वस्य अन्तःकरणधर्मत्वमुपपादयति **कर्तृत्वादिरिति**। दृश्यत्वादित्यर्थः। आत्मनो ज्ञातृत्वेऽनिष्टं प्रसञ्जयति **कर्तृत्व इति**। अत्र व्यतिरेक्यनुमानान्यभिप्रेतानीति पूर्वमेवोक्तम्। परिहरति **नैतदिति**। **देहस्येत्यादिना** अन्तःकरणस्य ज्ञातृत्वाभावोपपादनम्। आदिशब्दा-दन्तवत्त्वग्रहणम्। **चेतनासाधारणेत्यादिना** आत्मनो ज्ञातृत्वोपपादनम्। ज्ञातृत्वाभावः साध्योऽभिप्रेतः। अन्तःकरणं धर्मि। अचेतनत्वादयो हेतवः। **देहस्येवेति** सपक्षो दर्शितः। ज्ञातृत्वस्य चेतनासाधारणत्व-कथनात् व्यतिरेकव्याप्तिश्च कथिता। एवं परोक्तव्यतिरेकिणां प्रत्यनुमानान्युक्तानि भवन्ति—अन्तःकरणं न ज्ञातृ अचेतनत्वात् प्रकृतिपरिणामत्वात् दृश्यत्वात् पराक्त्वात् परार्थत्वात् देहवदिति। नन्वचेतनत्वात् अज्ञातृत्वे साध्ये साध्याविशिष्टता॥ नैवम्—अचेतनशब्देन अनात्मत्वस्य विवक्षितत्वात्। पुरुषार्थप्रतिसंबन्धित्वम्, देहं प्रति नियन्तृतया अन्तःप्रविष्टत्वं वा आत्मत्वम्; तदभावोऽनात्मत्वम्। प्रकृतिपरिणामत्वं प्रकृतिकार्यत्वम्। दृश्यत्वं नियमेन ज्ञानान्तराधीनसिद्धित्वम्। पराक्त्वं परस्मै भासमानत्वम्। परार्थत्व परप्रयोजनैकफलत्वम्; जीवोपकरणत्वमित्यर्थः। आत्मनो ज्ञातृत्वे साध्ये अमी हेतवो यथासंभवं तर्काः योजनीयाः—आत्मनो ज्ञातृत्वाभावे देहस्येवानात्मत्वप्रसङ्गः, परार्थत्वप्रसङ्ग इति। ननु यथा घटदेहयोरचेत-नत्वादिके तुल्येऽपि इन्द्रियाश्रयत्वादिकं देहासाधारणं भवति—तथा देहान्तःकरणयोरचेतनत्वादिके तुल्येऽपि ज्ञातृत्वमन्तःकरणासाधारणधर्मः स्यात्। अत इन्द्रियाश्रयत्वाभावस्येव ज्ञातृत्वाभावस्याप्यचेतनत्वा-दिकमप्रयोजकम्। अचिद्विशेषत्वमेव प्रयोजकम्। तथाऽऽत्मनो ज्ञातृत्वाभावेऽपि प्रत्यक्त्वादिरुपपद्यतामित्युभयत्रापि विपक्षे बाधकाभावमाशङ्क्य परिहरति **एतदुक्तमिति**। येन दृश्यत्वादिविरुद्धधर्मेण देहस्य द्रष्टृत्वाद्यनुपपत्तिः, तेनान्तःकरणस्यापि तद्द्रव्यत्वात् द्रष्टृत्वाद्यनुपपत्तिरित्यर्थः। ज्ञातृत्वाभावं प्रति अचेतनत्वादिकमप्रयोजकं चेत्, देहस्य ज्ञातृत्वप्रसङ्गः। ततश्च चार्वाकं प्रति देहात्मभेदस्त्वयापि दुरुपपादः। न च देहस्य देहत्वादज्ञा-तृत्वम्, घटादौ देहत्वाभावेऽपि ज्ञातृत्वाभावात्। अतः तत्राचित्त्वादिकस्य ज्ञातृत्वाभावप्रयोजकत्वमभ्युप गन्तव्यमिति क्वचिद् ज्ञातृत्वाभावप्रयोजकस्य तस्याचित्त्वादेः क्वचिदप्रयोजकत्वमयुक्तम्। अतोऽचित्त्वादिभिः देहस्येव अन्तःकरणस्य द्रष्टृत्वाद्यनुपपत्तिरित्यर्थः। **प्रत्यक्त्वादेरिति** आदिशब्दादजडत्वग्रहणम्। **विविच्यते**। प्रत्यक्त्वादिधर्मैस्संबन्धरहितोऽवगम्यत इत्यर्थः। **तैरेव हेतुभिस्तस्माद्विविच्यत इति**। पराक्त्वादिभिर्देहस्य ज्ञातृत्वाभावेऽङ्के पराक्त्वं व्याप्यं ज्ञातृत्वाभावो व्यापक इति सिद्ध्यति। ततश्च स्वाभावव्याप्तेषु पराक्षु निरवकाशं

**अतो विरोधादेव न ज्ञातृत्वमहङ्कारस्य, दृशित्ववत्—यथा दृशित्वं तत्कर्मणोऽहङ्कारस्य नाभ्युपगम्यते, तथा ज्ञातृत्वमपि न तत्कर्मणोऽभ्युपगन्तव्यम् ।**

**न च ज्ञातृत्वं विक्रियात्मकम् । ज्ञातृत्वं हि ज्ञानगुणाश्रयत्वम् । ज्ञानञ्चास्य नित्यस्य स्वाभाविक-**

---

ज्ञातृत्वं यदि प्रत्यग्वस्तुन्यपि न स्यात्, तदा निराश्रयं प्रसजेदिति पूर्वोक्तव्याप्तिस्थापनाय विपक्षे बाधकस्तर्कोऽत्राप्यभिप्रेतः । तस्माद्विविच्यत इत्येतदुक्तमित्यन्वयः । अतोऽचेतनत्वजडत्वादिस्वभावविरोधान्नाहंकारस्य ज्ञातृत्वमित्याह अत इति ।

न हि वयं द्रष्टृत्वाद्यनुपपत्त्या देहात्मविवेकं ब्रूमः । स तु परमतानुसारात् कृतः । वयं तु दृशित्वानुपपत्त्येति शङ्कायाम्—द्रष्टृत्वाभावस्य अचेतनत्वादिप्रयोज्यत्वे मृषावादसाधारणप्रतिबन्दीमाह दृशित्ववदिति । तदेव विवृणोति यथेति । दृश्यत्वाद्यविशेषेऽपि देहस्य घटादिविलक्षणस्येन्द्रियाश्रयत्ववत् अन्तःकरणस्य दृशित्वमुपपद्यताम् ॥ अन्तःकरणस्यापि दृश्यत्वादिना देहस्येव दृशित्वं नोपपद्यत इति चेत्—तथा दृश्यस्यान्तःकरणस्य दृश्यत्वादिनैव देहस्येव द्रष्टृत्वमपि नोपपद्यते । अतो दृशित्वाभाव इव द्रष्टृत्वाभावेऽप्यचेतनत्वादिकं प्रयोजकम्; अन्वयव्यतिरेकयोस्तुल्यत्वात् उपाध्यन्तरादर्शनाच्चेति भावः ।

अहम्प्रत्ययगोचरत्वमनात्मत्वसाधकं देहस्येवेति यदुक्तम्, तदयुक्तम्; बाधिताहम्प्रत्ययगोचरत्वस्य पक्षे वृत्त्यभावात्, अबाधिताहम्प्रत्ययगोचरत्वस्य सपक्षे देहादौ अभावाच्च । यद्यहम्प्रत्ययगोचरत्वमात्रेणात्मनि अनात्मत्वादिप्रसङ्गः, तर्हि रजतप्रत्ययगोचरत्वमात्रेण भ्रान्तवत् [अभ्रान्त] सम्यग्रजतेऽप्यरजतत्वाङ्गुलीयकनिर्माणानर्हत्वप्रसङ्गः स्यादिति असङ्गतम् । श्रुतिभिः प्रत्यक्षेण च कालात्ययापदेशश्च । अनात्मत्वादिप्रसञ्जकं कर्तृत्वं किं प्रयत्नाधारत्वम् उत स्पन्दरूपक्रियाश्रयत्वम् उत धात्वर्थमात्राश्रयत्वम् । प्रथमे, व्याप्त्यभावः; प्रयत्नाधारत्वानात्मत्वयोः क्वचित् सहदर्शनाभावात् । परमात्मन्यनात्मत्वादिप्रसङ्गश्चेत्, 'कर्तारमीशं पुरुषम्' इत्यादिना कालात्ययापदेशश्च ॥ जीवे चेत्, 'साधुकारी साधुर्भवति,' 'कर्ता शास्त्रार्थवत्त्वात्', 'यतः स्वकृतभुक् पुमान्' इत्यादिभिः प्रत्यक्षेण च कालात्ययापदेशश्च । द्वितीये, परमात्मन्यसिद्धिः । जीवे तु उत्क्रान्त्यादिश्रुतिभिः कालात्ययापदेशः । तृतीये, भ्रमाश्रयतयास्वाभिमतात्मन्य नात्मत्वप्रसङ्गः ॥ भेददर्शनं तदाश्रयत्वं च अपारमार्थिकमिति चेत्—किं परमार्थभूतधात्वर्थाश्रयत्वमनात्मत्वसाधकम् उतापारमार्थभूतधात्वर्थाश्रयत्वम् ? प्रथमे घटादावपि परमार्थभूतधात्वर्थान्वयानभ्युपगमात् व्याप्त्यभावः । द्वितीये त्वदभिमतस्य भ्रमाश्रयस्याऽऽत्मनोऽप्यनात्मत्वप्रसङ्गः ।

अथ विक्रियात्मकत्वं नेत्याह नचेति । तदुपपादयति ज्ञातृत्वं हीति । गुणा (क्रिया)श्रयत्वेऽपि तत् कादाचित्कं चेत्—क्रियाश्रयत्ववत् विक्रियात्मकं स्यादित्यत्राह ज्ञानंचास्येति । धर्मस्य स्वाभाविकत्वेऽपि धर्मी अनित्यश्चेत्, धर्मोऽप्यनित्यस्स्यात् । धर्मिनित्यत्वे धर्मः सोपाधिकश्चेत्, उपाधिविगमे धर्मो नश्यतीत्यनित्यःस्यात् । उभयव्यावृत्त्यर्थौ नित्य-स्वाभाविकशब्दौ । अवस्थाविशेषेण कादाचित्कत्वं तु प्रामाणिकत्वादिष्टम् । अनेन पदद्वयेन, 'न हि विज्ञातुर्विज्ञातेर्विपरिलोपो विद्यते अविनाशित्वादात्मनः' इति श्रुत्यर्थ उक्तो भवति । अस्याः श्रुतेरयमर्थः—ज्ञातृसंबन्धि विज्ञानं नित्यम्; कुतः? अविनाशित्वादात्मनः । विशिष्टस्य नित्यत्वेन विशेषणभूतज्ञानस्यापि नित्यत्वात् । यद्वा धर्मिनित्यत्वेन तत्स्वाभा-

धर्मत्वेन नित्यम् । नित्यत्वञ्चाऽऽत्मनः, "नात्मा श्रुतेः" इत्यादिषु वक्ष्यति । "ज्ञोऽत एव" इत्यत्र ज्ञ इति व्यपदेशेन ज्ञानाश्रयत्वञ्च स्वाभाविकमिति वक्ष्यति । अस्य ज्ञानस्वरूपस्यैव, मणिप्रभृतीनां प्रभाश्रयत्वमिव, ज्ञानाश्रयत्वमप्यविरुद्धमित्युक्तम् । स्वयमपरिच्छिन्नमेव ज्ञानं संकोचविकासार्हमित्युपपादयिष्यामः । अतः क्षेत्रज्ञावस्थायां कर्मणा संकुचितस्वरूपं तत्तत्कर्मानुगुणतरतमभावेन (तारतम्येन?) वर्तते । तच्चेन्द्रियद्वारेण व्यवस्थितम् । तमिममिन्द्रियद्वारा ज्ञानप्रसरमपेक्ष्य उदयास्तमयव्यपदेशः प्रवर्तते । ज्ञानप्रसरे तु कर्तृत्वमस्त्येव । तच्च न स्वाभाविकम्; अपितु कर्मकृतम् इत्यविक्रियस्वरूप एवात्मा । एवंरूपविक्रियात्मकं ज्ञातृत्वं ज्ञानस्वरूपस्याऽऽत्मन एवेति न कदाचिदपि जडस्याहङ्कारस्य ज्ञातृत्वसंभवः ॥

---

विकधर्मस्यापि नित्यत्वादिति । आत्मनो नित्यत्वे ज्ञानस्य तत्स्वाभाविकधर्मत्वे च प्रमाणं स्मारयन् पूर्वमेव श्रुतिवाक्योपादानात् सूत्रमुदाहरति नित्यत्वं चेति । सूत्रोदाहरणेन तद्विषयभूता श्रुतिरपि ह्यर्थतो दर्शिता स्यात् । सूत्रं च पूर्वं ज्ञानगुणकत्वप्रदर्शनायोपात्तम्; इदानीं नित्यत्वज्ञापनायोपात्तम् । ज्ञोत एवेत्यत्र ज्ञ इति व्यपदेशस्य विवरणम्, 'यावदात्मभावित्वाच्च न दोषः....' इति सूत्रम् । अतः स्वाभाविकत्वसिद्धिरिति भावः । ज्ञानस्वरूपस्य ज्ञानाश्रयत्वं कथमित्यत्राह अस्येति । ज्ञानं स्वाभाविकनित्यधर्मश्चेत्, सर्वदा सर्वज्ञत्वप्रसङ्ग इत्यत्राह स्वयमिति । स्वयं स्वतः । 'संपद्याविर्भावः....' इत्यादिसूत्रे उपपादयिष्याम इत्यर्थः । अनन्तरमेवेति वाऽर्थः । तर्हीदानीमपि कदाचित् सर्वज्ञत्वम्, मुक्तौ च कदाचिद् ज्ञानसंकोचः किं न स्यात् । यदि क्षेत्रज्ञावस्थाया सङ्कोचः, तर्हि सर्वेऽप्यज्ञाः स्युरित्यत्राह अतः क्षेत्रज्ञेति । अतः-सङ्कोचविकासार्हत्वात् । कर्मणेति सङ्कोचकोपाधिः । क्षेत्रज्ञावस्थायामिति । तदानीमेव सङ्कोच इत्यर्थः । सर्वेषामज्ञत्वप्रसक्तिश्च कर्मतारतम्यात् परिहृता । तारतम्यशब्देन, 'तया तिरोहितत्वाच्च शक्तिः क्षेत्रज्ञसंज्ञिता । सर्वभूतेषु भूपाल तारतम्येन वर्तते' इति वचनं स्मारितं भवति । कर्मणेति पदेन तयेति पदं श्लोकस्थं व्याख्यातं भवति । तया कर्मरूपाविद्ययेत्यर्थः । 'अविद्या कर्मसंज्ञाऽन्या तृतीया शक्तिरिष्यते । यया क्षेत्रज्ञशक्तिः सा वेष्टिता नृप! सर्वगा ॥ संसारतापानखिलानवाप्नोत्यतिसन्ततान्' इति हि प्रकृतम् । ज्ञानस्य नित्यत्वेन अनुत्पत्तिकत्वात् इन्द्रियनैरपेक्ष्यं स्यादित्यत्राह तच्चेति । यद्वा स्थावरेष्वपि ज्ञानविकासः स्यादित्यत्राह तच्चेति । इन्द्रियद्वारकत्वं संकोचविकासार्थमित्यर्थः । तर्ह्युत्पत्ति-विनाशव्यपदेशो न स्यादित्यत्राह तमिममिति । प्रसरान्वयव्यतिरेकावपेक्ष्योदयास्तमयव्यपदेश इत्यर्थः । यद्वा प्रसृतांशः प्रसरः । तस्य प्रसरणसङ्कोचावुदयास्तमयावित्यर्थः । संङ्कोचविकासाभ्युपगमे विक्रियात्मकत्वं स्यादित्यत्राह—ज्ञानप्रसरे त्विति । तादृशविक्रियात्मकत्वं प्रामाणिकत्वात् इष्टमित्यर्थः । अचेतनवत् परिणामो ह्यनभ्युपगत इत्येवकाराभिप्रायः । अनेन अविकारश्रुतीनां विषयो दर्शितः । मुखान्तरेणाप्यविकारश्रुतीनां निर्वाहं दर्शयति तच्चेति । स्वाभाविकविकारनिषेधपरा अविकारश्रुतय इत्यर्थः । स्वाभाविकं रूपं कथमित्यत्राह अविक्रियेति । स्वरूपं—स्वाभाविकरूपम् । अविकारित्ववाक्यानि उपाधिविमुक्तस्वाभाविकरूपपराणीत्यर्थः । प्रसरणकर्तृत्वमपि विकाररूपत्वात् अन्तःकरणस्यैवेत्यत्राह एवंरूपविक्रियात्मकामेति । स्वधर्मभूतज्ञानप्रसरणकर्तृत्वलक्षणविकारि त्वमेवंरूपशब्देन विवक्षितम् । ज्ञानस्वरूपस्य । ज्ञानमेव स्वाभाविको धर्मः यस्य स ज्ञानस्वरूपः । स्वधर्मभूतज्ञानप्रसरकर्तृत्वलक्षणविकारः तद्धर्मकस्याऽऽत्मन एव संभवति, न तु

जडस्वरूपस्याप्यहंकारस्य चित्संनिधानेन तच्छायापत्त्या तत्संभव इति चेत्—केयं चिच्छायापत्तिः? किमहंकारच्छायापत्तिः संविदः, उत संविच्छायापत्तिरहंकारस्य। न तावत् संविदः; संविदो ज्ञातृत्वानभ्युपगमात्। नाप्यहङ्कारस्य; उक्तरीत्या तस्य जडस्य ज्ञातृत्वायोगात्। द्वयोरप्यचाक्षुषत्वाच्च। न ह्यचाक्षुषाणां छाया दृष्टा।

अथाग्निसंपर्कात् अयःपिण्डौष्ण्यवत् चित्संपर्कात् ज्ञातृत्वोपलब्धिरिति॥ नैतत्। संविदि वास्तव-(वस्तुतो) ज्ञातृत्वानभ्युपगमादेव न तत्संपर्कादहङ्कारे ज्ञातृत्वं तदुपलब्धिर्वा।

यदप्युक्तम्—उभयत्र न वस्तुतो ज्ञातृत्वमस्ति;

---

जडस्वरूपत्वादतद्धर्मकस्याहङ्कारस्येत्यर्थः। एवं विक्रियात्मकत्वात् ज्ञातृत्वस्य आत्मधर्मत्वानुपपत्तिर्निरस्ता।

अथ परोक्तान् ज्ञातृत्वनिर्वाहप्रकारान् निरस्यति। ज्ञातृत्वं चिच्छायापत्तिकृतम्, चित्संपर्ककृतम्, चिदभिव्यञ्जकत्वकृतमिति त्रयः पक्षाः। तत्र प्रथमं चिच्छायापत्तिपक्षमाशङ्कते जडेति। दूषयति केयमिति। केयं—दुर्निरूपेत्यर्थः। विकल्पयति किमिति। चिच्छायाशब्दयोः समासान्तर्गता विभक्तिः षष्ठी वा सप्तमी वेति भावः।

अहङ्कारच्छायापत्तिःसंविदः। अहङ्कारे संविद्गतज्ञातृत्वच्छायापत्तिरित्यर्थः। संविच्छायापत्तिरहङ्कारस्येति। संविदि अहङ्कारगतज्ञातृत्वच्छायापत्तिरित्यर्थः। प्रथमं दूषयति नतावदिति। शिरोन्तरं व्युदस्यति नापीति। पूर्वमचेतनत्वप्रकृतिपरिणामत्वादिभिरहङ्कारस्य ज्ञातृत्वव्युदासमभिप्रेत्याह उक्तरीत्येति। दूषणान्तरमाह द्वयोरपीति। तद्विवृणोति नहीति। चित्संपर्कं दूषयितुं शङ्कते अथेति। पूर्ववद्विकल्प्य दूषयति नैतदिति। इयं साधारणी प्रतिज्ञा। अहङ्कारे संवित्संपर्कात् ज्ञातृत्वं व्युदस्यति संविदीति। अहङ्कारसंपर्काद् संविदि ज्ञातृत्वं दूषयति अहङ्कारस्यत्विति। सुतरामिति। ज्ञानस्याजडत्वात् ज्ञानाश्रयत्वं स्वमते संभवति। अहङ्कारस्य जडत्वेन वस्तुतो ज्ञानाश्रयत्वस्य स्वपरपक्षयोरुभयोरप्यसंभवान्न तत्संपर्कात् संविदि ज्ञातृत्वमिति भावः। रुमागतकाष्ठादीनां लवणसंबन्धाल्लवणत्वोत्पत्तिर्दृश्यते; अयःपिण्डेऽग्निसंपर्कादुष्णत्वमुपलभ्यते। अतो ज्ञातृत्वं तदुपलब्धिर्वेति पृथगुक्तम्॥ ननु पूर्वोक्तपक्षद्वये ज्ञातृत्वस्य छायापत्तिसंपर्कौ निरस्तौ। ज्ञानच्छायापत्तिसंपर्कौ कस्मान्न निरस्तौ॥ वक्ष्यमाणाभिव्यक्तिपक्षान्तर्भावादिति ब्रूमः। ज्ञानस्याहङ्कारे छायापत्तिर्नाम दर्पणे मुखस्येव तदाधेयतयाभिव्यक्तता। संपर्कपक्षेऽप्यधिष्ठानतया संपर्को ज्ञातृत्वप्रतीत्यनुपयुक्तः। अत आधेयतया संपर्को वक्तव्यः। स च तत्स्थतयाभिव्यक्तावन्तर्गतः। अतस्तत्रा(द?)नुपन्यासः। किञ्च छायापत्तिः संविदोऽचाक्षुषत्वेनैव निरस्ता। संपर्कश्चोपलम्भानुगुण्येन वक्तव्यत्वात् अपृथक्सिद्धधर्मधर्मिभावेन वक्तव्यः। स च नोपपन्नः; अचेतनस्य चैतन्यस्य च तथाविधधर्मधर्मिभावायोगात्। दण्डदेवदत्तयोरिव ज्ञानज्ञात्रोः पृथगवस्थानादर्शनात् अपृथगवस्थितयोस्संपर्कश्च अनुपपन्न इत्यनुसन्धेयम्। अथाभिव्यक्तिपक्षमनुभाषितुं छायापत्तिसंपर्कपक्षयोरभिव्यक्तिपक्षस्य चान्योन्यवैषम्यं दर्शयति उभयत्रेति। वस्तुत इति। छायापत्त्यादिना आपाद्यमानादध्यासात्पूर्वमेव सिद्धत्वं विवक्षितम्; न तु पारमार्थिकत्वम्। अलातचक्रादेरपि प्रतिबिम्बदर्शनात्, उष्णजलसंपर्कादनुष्णेऽप्यौष्ण्योपलम्भाच्च। एकत्र पूर्वसिद्धज्ञातृत्वाध्यासादन्यत्र ज्ञातृत्वनिर्वाहः पूर्वस्मिन् पक्षद्वये; अभिव्यक्तिपक्षे तु ज्ञातृत्वस्य पूर्वसिद्धिमनपेक्ष्य ज्ञानाध्यासात् ज्ञातृत्वनिर्वाह इति वैषम्यम्।

अहङ्कारस्तु अनुभूतेरभिव्यञ्जकः स्वात्मस्थामेवानुभूतिमभिव्यनक्ति, आदर्शादिवत् इति । तदयुक्तम्; आत्मनः स्वयञ्ज्योतिषो जडस्वरूपाहङ्काराभिव्यङ्ग्यत्वायोगात् । तदुक्तम्,

"शान्ताङ्गार इवाऽऽदित्यमहङ्कारो जडात्मकः । स्वयञ्ज्योतिषमात्मानं व्यनक्तीति न युक्तिमत्"

इति । स्वयम्प्रकाशानुभवाधीनसिद्धयो हि सर्वे पदार्थाः । तत्र तदायत्तप्रकाशोऽचित् अहङ्कारः अनुदितानस्तमितस्वरूपप्रकाशमशेषार्थसिद्धिहेतुभूतमनुभवमभिव्यनक्तीति आत्मविदः परिहसन्ति । किञ्च अहङ्कारानुभवयोः स्वभावविरोधात् अनुभूतेरननुभूतित्वप्रसङ्गाच्च न व्यङ्क्तृव्यङ्ग्यभावः । यथोक्तम्—

"व्यङ्क्तृव्यङ्ग्यत्वमन्योन्यं न च स्यात् प्रातिकूल्यतः ।
व्यङ्ग्यत्वेऽननुभूतित्वमात्मनि स्यात् यथा घटे ॥" इति ।

न च रविकरनिकराणां स्वाभिव्यंग्यकरतलाभिव्यंग्यत्ववत् संविदभिव्यंग्याहङ्काराभिव्यंग्यत्वं संविदः साधीयः; तत्रापि रविकरनिकराणां करतलाभिव्यंग्यत्वाभावात् । करतलप्रतिहतगतयो हि रश्मयो बहुलाः स्वयमेव स्फुटतरमुपलभ्यन्त इति तद्बाहुल्यमात्रहेतुत्वात् करतलस्य नाभिव्यञ्जकत्वम् ।

किञ्चास्य संवित्स्वरूपस्याऽऽत्मनोऽहङ्कार (रादि)निर्वर्त्या अभिव्यक्तिः किंरूपा । न तावत् उत्पत्तिः,

---

अभिव्यक्तिपक्षमाह अहङ्कारस्त्विति । दूषयति तदयुक्तमिति । कुत इत्यपेक्षायामात्मनोऽभिव्यञ्जकापेक्षा च नास्ति, अहङ्कारस्याभिव्यञ्जकत्वशक्तिरपि नास्तीत्याह आत्मन इत्यादिना । स्वोक्तार्थस्य सांप्रदायिकत्वप्रदर्शनार्थं, दृष्टान्तेन तद्विशदीकरणार्थं चाऽऽत्मसिद्धिग्रन्थमाह तदुक्तमिति ।

शान्ताङ्गार इत्यादिकं श्लोकं विवृणोति स्वयमिति । स्वयंप्रकाशशब्देन अभिव्यञ्जकापेक्षाया अभाव उक्तः । अनुभवाधीनसिद्धय इत्यनेन अहङ्कारस्याभिव्यञ्जकत्वाभाव उक्तः । अचिदहङ्कार इत्यनेन चिन्मात्रातिरेकित्वात् तदायत्तप्रकाश इति परोक्तहेतुः सूचितः । अनुदितानस्तमितस्वरूपप्रकाशम् । कदाचिदप्रकाशं चेत्, तदा अभिव्यञ्जकापेक्षा स्यात्; तदभावात् कदाचिदपि व्यञ्जकापेक्षा नास्तीत्यर्थः । अशेषार्थसिद्धिहेतुभूतम् । त्वया विषयप्रकाशकत्वेन हि स्वयम्प्रकाशत्वं समर्थितमिति भावः । परिहसन्तीति । ईदृशमनुभवमीदृशाहङ्कारोऽभिव्यनक्तीति त्वदीया एव त्वत्समीपस्था एव हसन्तीति भावः ।

अहङ्कारानुभवयोरभिव्यञ्जकत्वाभिव्यङ्ग्यत्वानभ्युपगमेन दूषणमुक्तम् । तयोरभिव्यञ्जकत्वमभिव्यङ्ग्यत्वं चास्तु; तत् परस्परं नोपपद्यत इत्याह किञ्चेति । स्वभावविरोधात्—अनुभवस्याशेषार्थसिद्धिहेतुत्वं तद्व्यतिरिक्तत्वेनाहङ्कारस्यास्य तदधीनसिद्धित्वं च विरोधः । यथा पितापुत्रयोरन्यं प्रति पुत्रत्वे पितृत्वे च सत्यपि परस्परं पितृत्वपुत्रत्वव्यत्ययो नोपपद्यते, एवमन्यापेक्षया तयोर्व्यङ्क्तृव्यङ्ग्यभावसंभवेऽपि परस्परं नोपपद्यत इत्यर्थः । दूषणान्तरञ्चाह अनुभूतेरननुभूतित्वप्रसङ्गाच्चेति ।

अस्मिन्नर्थेऽप्यात्मसिद्धिग्रन्थं दर्शयति यथोक्तमिति । प्रातिकूल्यतः । पूर्वोक्तस्वभावविरोधशब्देन प्रातिकूल्यशब्दो व्याख्यातः । तद्व्यङ्ग्यस्यैव तद्व्यञ्जकत्वे परोक्तदृष्टान्तं दूषयिष्यन्नाह नचेति । दृष्टान्तस्य साध्यविकलत्वमाह तत्रापीति । तत्र तथात्वस्यान्यथासिद्धिं दर्शयति करतलेति । न हि ब्रह्म प्रसरणस्वभावं द्रव्यम् । अतस्तद्बाहुल्यहेतुत्वमहङ्कारस्यानुपपन्नमित्यर्थः । तथा अहङ्कारेणास्याभिव्यक्तिं त्रि(त्रे)धा विकल्प्य दूषयति किञ्चेत्यादिना । किंरूपा—किंशब्दः क्षेपार्थः । दुर्निरूपेत्यर्थः । कुत इत्यपेक्षायां अभिव्यक्तिर्नाम किमुत्पत्तिः, उत प्रकाशनम्, उतानुभवसाधनानुग्रह इति त्रि(त्रे)धा विकल्पमभिप्रेत्योत्पत्तिपक्षं दूषयति न तावदिति ।

स्वतस्सिद्धतयाऽनन्योत्पाद्यत्वाभ्युपगमात् । नापि तत्प्रकाशनम्; तस्यानुभवान्तराननुभाव्यत्वात् ।

तत एव न तदनुभवसाधनानुग्रहः । स हि द्विधा-ज्ञेयस्येन्द्रियसंबन्धहेतुत्वेन वा-यथा जातिनिजमुखादिग्रहणे व्यक्तिदर्पणादीनां नयनादीन्द्रियसंबन्धहेतुत्वेन । बोद्धृगतकल्मषापनयनेन वा-यथा परतत्त्वावबोधनसाधनस्य शास्त्रस्य शमदमादिना । यथोक्तम्—"करणानामभूमित्वात् न तत्संबन्धहेतुता..." इति ।

विज्ञानुभूतेरनुभाव्यत्वाभ्युपगमेऽपि अहमर्थेन न तदनुभवसाधनानुग्रहः सुवचः। स ह्यनुभाव्यानुभवोत्पत्ति-

अनुत्पन्नस्य घटादेरभिव्यक्त्यसंभवात् उत्पादकस्यापि दण्डचक्रादेः उत्पादनद्वाराऽभिव्यक्तिहेतुत्वात् उत्पत्तिरपि विकल्पशिरसि निवेशिता । किञ्च व्यङ्ग्यप्रकाशोत्पादनं व्यञ्जनम् । संविदः स्वयमेव प्रकाशरूपत्वात् तदुत्पत्तिरेव तत्प्रकाशोत्पत्तिरूपाभिव्यक्तिरिति विकल्पशिरस्युत्पत्तिनिवेशः । स्वतःसिद्धतयेति । तथा हि प्रागभावाभाव उक्तः । अनादित्वादिति वार्थः । अथ द्वितीयं व्युदस्यति नापीति । प्रकाशनं अनुभवविषयप्रकाशोत्पत्तिः ।

अथ तृतीयं प्रतिवक्ति तत इति । तत एव —प्रकाशानुपपत्तेरेव ॥ नन्वनन्तरग्रन्थोत्थानमनुपपन्नम्; अनुग्राहकद्वैविध्यस्य तन्निरासानुपयोगित्वात् । उत्तरत्रात्मसिद्धिग्रन्थोदाहरणं चासङ्गतम्; इन्द्रियासंबन्धवाचित्वेनानुग्रहद्वैविध्यानुपयोगात् ॥ अत्रोच्यते । पूर्वमनुग्राह्यजन्यप्रकाशविषयानुभूतिपर्यालोचनया तदनुभवसाधनानुग्रहो दूषितः । इदानीमनुग्रहप्रकारविशेषपर्यालोचनया दूषणमाह सहीति । द्विविधस्याप्यनुपपत्तिं दर्शयितुं प्रथमं द्वैविध्यमाह ज्ञेयस्येति । शमदमादेः शास्त्रानुग्राहकत्वोक्तिः परमतेन । तद्धि उपासनानुग्राहकम् ॥ ननु स हि द्विधेति वक्तुमयुक्तम्; अनुग्रहस्य कोटिद्वयेऽप्यनन्तर्भावात् । अनुमानादेः व्याप्तिग्रहादिरनुग्रहोऽप्यस्तीति ॥ उच्यते । करणानुग्रहः कर्त्रनुग्रहश्चेति कोटिद्वयमेव । व्याप्तिग्रहणमपि करणानुग्रहान्तर्भूतम् । यद्वा दृष्टमुखेन चानुग्रहः अदृष्टमुखेन चेति द्विधा । व्याप्तिग्रहणमपि दृष्टमुखेनानुग्रहः । तस्मादिन्द्रियसंबन्धहेतुत्वेनेत्येतत् करणानुग्रहस्य दृष्टमुखेनानुग्रहस्य चोपलक्षणम् । तत्राहङ्काराभिव्यङ्ग्यायाः संविदोऽनुमानविषयत्वासंभवात् इन्द्रियसंबन्धहेतुत्वेनेत्युक्तम् । बोद्धृगतकल्मषापनयनेनेति कर्तुरनुग्रहस्यादृष्टमुखेनानुग्रहस्य चोपलक्षणमुक्तम् । आत्मसिद्धिग्रन्थेऽप्ययमेव भावः । एवं द्वैविध्यदर्शनेन द्विधाभूतोऽप्यनुग्रहोऽहङ्कारस्य न सुवच इत्यनुषङ्गेण योजना । कथमत्र द्विविधस्याप्यनुग्रहस्यानुपपत्तिरिति शङ्कायामात्मसिद्धिग्रन्थमाह यथोक्तमिति । करणानामभूमित्वात् न तत्संबन्धहेतुतेति हेतुत्वलक्षणानुग्रहः अनुपपन्न इति दर्शितः । बोद्धृगतकल्मषापनयनलक्षणानुग्रहानुपपत्तिर्न ग्रन्थस्था । अत्र केचिदाचार्या एवं व्याचक्षते—शमादेरनुग्राहकत्वं शास्त्रसिद्धम्; न तथा अहङ्कारस्याप्यनुग्राहकत्वं शास्त्रसिद्धमिति स्फुटत्वान्न ग्रन्थे कण्ठोक्त्या निरास इति । पूर्वार्धोदाहरणेन श्लोकस्योत्तरार्धे बोद्धृगतकल्मषापनयनलक्षणानुग्रहानुपपत्तिर्द्रष्टव्येत्याचार्याः । तदिदमुत्तरार्धं अहमर्थस्य बोद्धृत्वान्न स तेनैव शोध्यत इति । एकस्यैव स्वप्रतियोगितया शोध्यत्वं शोधकत्वं चानुपपन्नमित्यर्थः । अयं तु भाष्याभिप्रायः— अहमर्थस्य बोद्धृगतकल्मषापनयने कर्तृत्वं किं स्वरूपेण उतादृष्टकिञ्चित्कारमुखेन । प्रथमे कर्मकर्तृविरोधः, एकस्यैव स्वापेक्षया शोध्यत्वशोधकत्वानुपपत्तेः । द्वितीये निष्प्रमाणकत्वम् । न ह्यन्तःकरणस्यादृष्टवशादन्तःकरणशुद्धिरित्यत्र प्रमाणमस्तीति ।

पूर्वमिन्द्रियगोचरत्वानभ्युपगमेन दूषणमुक्तम्; अथानुभाव्यत्वाभ्युपगमेन दूषणमाह किञ्चेति । अनुग्रहस्वरूपं शिक्षयति सहीति ॥ व्यक्तिदर्पणादावनुग्रहप्रकारान्तरे दृष्टेऽपि कथं प्रतिबन्धनिरसनरूपानुग्रह

प्रतिबन्ध[क] निरसनेन भवेत्—यथा रूपादिग्रहणोत्पत्तिनिरोधिसंतमसनिरसनेन चक्षुषो दीपादिना । न चेह तथाविधं निरसनीयं संभाव्यते । न तावत् संविदात्मगतं तज्ज्ञानोत्पत्तिनिरोधि किञ्चिदप्यहङ्कारापनेयमस्ति । अस्ति ह्यज्ञानमिति चेत्—न; अज्ञानस्याहङ्कारापनोद्यत्वानभ्युपगमात् । ज्ञानमेव ह्यज्ञानस्य निवर्तकम् । न च संविदाश्रयत्वमज्ञानस्य संभवति; ज्ञानसमानाश्रयत्वात्, तत्समानविषयत्वाच्च । ज्ञातृभावविषयभावविरहिते ज्ञानमात्रे साक्षिणि नाज्ञानं भवितुमर्हति । यथा ज्ञानाश्रयत्वप्रसक्तिशून्यत्वेन घटादेः नाज्ञानाश्रयत्वम्, तथा ज्ञानमात्रेऽपि ज्ञानाश्रयत्वाभावेन नाज्ञानाश्रयत्वं स्यात् ।

संविदोऽज्ञानाश्रयत्वाभ्युपगमेऽपि आत्मतयाऽभ्युपगतायाः तस्या ज्ञानविषयत्वाभावेन ज्ञानेन न

---

एव परिशेषितः ॥ उच्यते । जातिव्यक्त्योर्नियतधर्मधर्मिभावेन, व्यक्तिः जातेः व्यञ्जिका । न तथा अहङ्कारानुभवयोः नियतधर्मिधर्मभावोऽस्ति । स तु परेणैव निरस्तः । मूर्तद्रव्यभूतः चाक्षुषरश्मिप्रतिहतिहेतुः दर्पणो मूर्तद्रव्यभूतचाक्षुषरश्मि मुखेन संबन्धयति; न तथा अहङ्कारो मूर्तद्रव्यं कस्यचित्प्रतिहतिहेतुरिति वक्ष्यमाणामिहानुग्रहप्रकारान्तरानुपपत्तिमभिप्रेत्य प्रतिबन्धनिरसनरूपानुग्रह एव परिशेषितः । ईदृशानुग्रहे दृष्टान्तमाह यथा रूपादीति । ततः किमित्यत्राह नचेहेति । तदुपपादयति न तावदिति । किं प्रागभावरूपमज्ञानम् किं वा भावरूपम् उतान्यन्निरसनीयमुच्यत इति शिरस्त्रयमभिप्रेत्य तावच्छब्दः प्रयुक्तः । न तावदिति ग्रन्थेन अन्यन्निरसनीयं निरस्तम् । यद्वा अहङ्कारस्याज्ञाननिरासकत्वमज्ञानस्य संवित्संबन्धित्वञ्चोभयमनुपपन्नमित्यभिप्रेत्य प्रथममहङ्कारापनेयत्वमज्ञानस्य प्रतिक्षिपति न तावदिति । अहङ्कारापनेयमज्ञानमस्तीति शङ्कते अस्तिहीति । दूषयति नेति । अज्ञानशब्दो भावरूपस्य चाभावरूपस्य च साधारणः । दूषणमपि साधारणम्; द्विविधस्याप्यज्ञानस्याहङ्कारापनोद्यत्वाभावात् । किं निवर्तकमित्यत्राह ज्ञानमेवहीति । प्रागभावस्यापि ज्ञानोत्पत्तिर्निवर्तिका । भावरूपस्यापि ज्ञाननिवर्त्यत्वं पराभ्युपेतम् ।

एवमज्ञानस्य संविदाश्रयत्वे सत्यप्यहङ्कारापनोद्यत्वायोगात् तन्निरसनरूपानुग्रहो न संभवतीत्युक्तम्; अथाज्ञानस्य संविदाश्रयत्वं चानुपपन्नमित्याह नचेति । संविदाश्रयत्वम् । संवित्संबन्धित्वमित्यर्थः । आश्रयणं संबन्धः । संबन्धश्च कर्मत्वेनाश्रयत्वेन च इत्युभयविधसंबन्धपरः आश्रयशब्दः । 'आश्रयश्चेतसो ब्रह्म' इत्यादिप्रयोगाच्चाश्रयशब्देन विषयस्याप्युपस्थापनं युक्तम् । संविदोऽज्ञानसंबन्धः किम् आश्रयतया किं विषयतया? उभयथापि संबन्धोऽनुपपन्न इत्यर्थः । कुत इत्यत्राह ज्ञानेति । ततः किमित्यत्राह ज्ञातृभावेति । साक्षिणि । द्रष्टुरेव साक्षित्वम्; ज्ञप्तेस्तु साक्षित्वमपि व्याहतं भवतीत्यभिप्रायः । भवितुमर्हतीति निर्देशेन आश्रयतया विषयतया वा संबन्धमात्रं विवक्षितम् । अनेन व्यतिरेकव्याप्तिर्दर्शिता भवति । संविदाश्रयत्वाभावे अन्वयव्याप्तिं दर्शयति यथेति । अज्ञानाश्रयत्वं [हि] ज्ञानप्रागभावाश्रयत्वमनिर्वचनीयाज्ञानाश्रयत्वं वा । तत् घटादौ नास्तीत्यर्थः । ज्ञानाश्रयत्वप्रसक्तीति । ज्ञातुरप्यज्ञानाश्रयत्वं ज्ञानाश्रयत्वं च कालभेदादविरुद्धमिति भावः । ज्ञानात्यन्ताभावाश्रयत्वं हि घटादेः । ज्ञानं नाज्ञानाश्रयः; न चाज्ञानविषयः । अज्ञानाश्रयत्वे तद्विषयत्वे चोपगम्यमाने ज्ञातृत्वज्ञेयत्वप्रसङ्ग इति प्रतिकूलतर्क उक्तो भवति । एवमज्ञानाश्रयत्वानभ्युपगमेन दूषणमुक्तम् । तदभ्युपगमेन दूषणमाह संविद इति । अवच्छिन्नज्ञानस्यानुभाव्यत्वेऽङ्गीकृतेऽप्यनवच्छिन्नस्याऽऽत्मभूतस्य ज्ञानस्यानुभाव्यत्वानभ्युपगमादित्यभिप्रायेणाह आत्मतयाभ्युपगताया इति । ज्ञानविषयस्यैवाज्ञाननिवृत्ति

तद्गताज्ञाननिवृत्तिः । ज्ञानं हि स्वविषय एवाज्ञानं निवर्तयति, यथा रज्ज्वादौ । अतो न केनापि कदाचित् संविदाश्रयमज्ञानमुच्छिद्येत । अस्य च सदसदनिर्वचनीयस्याज्ञानस्य स्वरूपमेव दुर्निरूपमित्युपरिष्टाद्वक्ष्यते । ज्ञानप्रागभावरूपस्य चाज्ञानस्य ज्ञानोत्पत्तिविरोधित्वाभावेन न तन्निरसनेन तत्साधनानुग्रहः ॥

अतो न केनापि प्रकारेणाहङ्कारेणानुभूतेरभिव्यक्तिः ।

न च स्वाश्रयतयाऽभिव्यञ्जकत्वम्; अभिव्यञ्जकानां स्वभावः; प्रदीपादिष्वदर्शनात् । यथावस्थितपदार्थप्रतीत्यनुगुणस्वाभाव्याच्च ज्ञानतत्साधनयोरनुग्राहकस्य च । तच्च स्वतःप्रामाण्यन्यायसिद्धम् । न च दर्पणादिर्मुखादेरभिव्यञ्जकः; अपितु चाक्षुषतेजःप्रतिफलनरूपदोषहेतुः । तद्दोषकृतश्च तत्रान्यथावभासः । अभिव्यञ्जकस्त्वालोकादिरेव । न चेह तथा अहङ्कारेण संविदि स्वप्रकाशायां तादृशदोषापादनं संभवति । व्यक्तेस्तु

---

सदृष्टान्तमाह ज्ञानंहीति । यद्यविषयेऽप्यज्ञाननिवृत्तिः, तर्हि शुक्तिज्ञानेन सर्व(र्प)भ्रमनिवृत्तिः स्यादित्यभिप्रायः ! एवं ज्ञाननिवर्त्याज्ञानाश्रयत्वे ज्ञानविषयत्वप्रसङ्ग इत्युक्तं भवति । आश्रयत्वाभ्युपगमेनोक्तदूषणं निगमयति अत इति । त्वया अहङ्कारापोह्यत्वेनोक्तमज्ञानं किं सदसदनिर्वचनीयम् उत ज्ञानप्रागभावरूपमिति विकल्प्याऽऽह अस्येति । द्वितीयं प्रतिवक्ति ज्ञानप्रागभावेति । विरोधिशब्देन प्रतिबन्धकत्वं विवक्षितम, न सहानवस्थानमात्रम् । अभिव्यक्तेर्दुर्निरूपत्वं निगमयति अत इति । केनापि प्रकारेण । उत्पादकत्वेन वा प्रकाशकत्वेन वा तदनुभवसाधनानुग्राहकत्वेन वेत्यर्थः ।

अथ स्वात्मस्थतयाऽभिव्यक्तिं दूषयति नचेति । व्यभिचारमाह प्रदीपादिष्विति । हेत्वन्तरञ्चाह यथावस्थितेति । प्रतीतिः व्यवहारानुगुण्यम्; तदनुगुणात् ज्ञानादीनां स्वभावादित्यर्थः । तदेवोपपादयति । तच्चेति ।

प्रामाण्याप्रामाण्यविषयाश्चत्वारः पक्षाः । प्रामाण्याप्रामाण्ये द्वे च परतः, द्वे च स्वतः, प्रामाण्यं परतः अन्यत् स्वतः, प्रामाण्यं स्वतः अन्यत् परत इति । प्रथममनुपपन्नम्, निःस्वभावत्वादिप्रसङ्गात् । प्रामाण्याप्रामाण्ये अन्यत्र विद्येते चेत्—तत्संबन्धात् ज्ञानस्य तथात्वम्, तत्संबन्धाभावेऽनुभयत्वञ्च युक्तम्; अनुष्णाशीतवत् । अन्यत्र तयोरविद्यमानत्वात् परतस्त्वमनुपपन्नम् । प्रामाण्यबुभुत्सापरम्परयाऽनवस्थाप्रसंगाच्च । द्वयोरपि स्वतस्त्वमनुपपन्नम्; विरुद्धधर्मत्वेन व्याघातात् । न च व्यक्तिभेदादविरोधः; इयं प्रामाण्याश्रयव्यक्तिः, इयं नेति नियामकाभावात् । अप्रामाण्यस्यैव स्वतस्त्वमनुपपन्नम्; प्रामाण्यस्यैव भूयस्त्वात् अन्यस्याभूयस्त्वाच्च । भूयसां स्वतस्त्वं अल्पीयस औ(सामौ)पाधिकत्वं च हि युक्तम् । घटपटादिज्ञानेषु, शुक्तिरजतादिज्ञानानामिदमंशेष्वपि प्रामाण्यदर्शनात् तस्य भूयस्त्वम् । अतः स्वतः प्रामाण्यं परतोऽप्रामाण्यमिति ।

क्वचिदात्मस्थतयाभिव्यञ्जनमभ्युपेत्य व्यभिचार उक्तः । अथ क्वचिदपि तन्नास्तीत्याह नचेति । तर्हि मुखदर्शनाय दर्पणादिकं नोपादीयेतेत्यत्राह अपित्विति । प्रतिफलनस्य दोषत्वमन्यथाज्ञानहेतुत्वादित्याह तद्दोषेति । कस्तत्राभिव्यञ्जक इत्यत्राह अभिव्यञ्जकस्त्विति । अहङ्कारस्य मूर्तस्वच्छस्थूलद्रव्यत्वाभावात्, संविदो ज्ञेयत्वाभावादचाक्षुषत्वाच्च अहङ्कारेण संविदि अविषयभूतायां तद्ग्राहकवस्तुप्रतिफलनदोषो न संभवतीत्याह नचेहेति । व्यक्तौ जातिप्रतीतिर्नियतधर्मधर्मिभावात्; न तु व्यङ्ग्यत्वादित्याह व्यक्तेरिति । एतत् दर्पणव्यक्तिनिर्वाहद्वयं हृदि निधाय पूर्वं प्रतिबन्धनिरसनरूपानुग्रहो दूषितः । धर्मधर्मिभावेन

जातिराकार इति तदाश्रयतया प्रतीतिः; न तु व्यक्तिव्यंग्यत्वात् । अतोऽन्तःकरणभूताहङ्कारस्थतया संविदुपलब्धेर्वस्तुतो दोषतो वा न किञ्चिदिह कारणमिति नाहङ्कारस्य ज्ञातृत्वं तथोपलब्धिर्वा । तस्मात् स्वत एव ज्ञातृतया सिद्ध्यन् अहमर्थ एव प्रत्यगात्मा । न ज्ञप्तिमात्रम् । अहम्भावविगमे तु ज्ञप्तेरपि न प्रत्यक्त्वसिद्धिरित्युक्तम् ।

तमोगुणाभिभवात् परागर्थानुभवाभावाच्चाहमर्थस्य विविक्तस्फुटप्रतिभासाभावेऽपि अप्रबोधात् अहमित्येकाकारेणाऽऽत्मनः स्फुरणात् सुषुप्तावपि नाहम्भावविगमः । भवदभिमताया अनुभूतेरपि तथैव प्रथेति

वस्तुतः तात्स्थ्येनोपलब्धिर्व्यक्तौ; दर्पणे तु प्रतिफलनरूपदोषात् । एवं परपक्षे न संभवतीत्याह अत इति । वस्तुतः कारणं धर्मधर्मिभावः; दोषस्तु तात्स्थ्येनोपलब्धिकारणं मूर्तस्वच्छस्थूलद्रव्यत्वम् । उभयमप्यहङ्कारे नास्तीत्यर्थः । वस्तुतः कारणाभावान्न ज्ञातृत्वं विद्यते, दोषरूपकारणाभावान्नोपलभ्यते चेत्यभिप्रायेणाह नाहङ्कारस्य ज्ञातृत्वं तथोपलब्धिर्वेति । ज्ञातुरात्मत्वं निगमयति तस्मादिति । ज्ञप्तेरात्मत्वमयुक्तम्, अहंत्वाभावे प्रत्यक्त्वायोगादित्याह अहम्भाव(न?)विगम इति । अहमिति व्यवहारानुगुणभासनविरहे स्वस्मै भासमानत्वं न स्यात् । अतः प्रत्यक्त्वमप्यहमर्थस्यैवाऽऽत्मत्वसाधकमित्यर्थः ।

अथ सुषुप्तावहमर्थस्फुरणमस्तीति साधयितुम्[1] 'वेदान्तावलम्बिभिः सर्वैः स्वयंज्योतिष्ट्वश्रुत्यनुसारात् सुषुप्तावात्मस्फुरणमभ्युपेत्यम् । तत्र, 'नाह खल्वयमेवं संप्रत्यात्मानं जानाति अयमहमस्मीति' इति श्रुत्या, 'मामप्यहं न ज्ञातवान्' इति परामर्शाच्च नाहमर्थानुभवः । अतोऽनुभूतिस्फुरणमेव तदानीम्' इति शङ्कायामहमर्थस्याविशदस्फुरणमस्तीति सोपपत्तिकं प्रतिजानीते तम इत्यादिना । चस्त्वर्थः शङ्कानिवृत्तौ । तमोगुणाभिभवहेतुकात् परागर्थानुभवाभावात् स्फुटावभासाभावः । विविक्तप्रतिभासः—व्यावृत्तप्रतिभासः । अनेकविशेषणविशिष्टावभासः स्फुटावभासः । व्यावर्तकब्राह्मणत्वादिबाह्यधर्मविशिष्टत्वेन बुद्धिसुखाद्यान्तरधर्मविशिष्टत्वेन च प्रतिभासाभावात्, सकलेतरव्यावृत्ततया स्फुटतया च प्रतिभासाभावः । केनाकारेण स्फुरतीत्यत्राह अहमित्येकाकारेणस्फुरणादिति । अहमिति न शब्दानुकारः; अपित्वेतद्वाच्यार्थानुकारः । प्रत्यक्त्वाकारेण स्फुरणादित्यर्थः । एकशब्देन अहम्भावाविगमो विवक्षितः । यद्वा एकाकारेण—सर्वात्मसाधारणाकारेणेत्यर्थः । प्रत्यक्त्वादिको हि सर्वात्मसाधारणः । सुखदुःखादयो देवत्वादयश्च न हि सर्वात्मसाधारणाः । सुषुप्तौ भासमान आत्मन्यहंभावः साध्यः; तथास्फुरणं हेतुः । विशदावभासाभावादहमर्थास्फुरणं नास्तीत्यत्राह भवदभिमताया अनुभूतेरपीति । न केवलमहमर्थस्फुरण एव अवैशद्यदोषः; अनुभूतिस्फुरणेऽपि स त्वया वाच्यः [स तुल्यः] । अतो विशदावभासाभावात् नास्तित्वं चेत्, ज्ञप्त्यात्मनोऽपि तदानीं स्फुरणं न स्यात् । "ज्ञातृज्ञेयोपश्लेषविरहात् स्फुटानवभासः" इति हि तदभ्युपगम इत्यभिप्रायः । भूषावादिभिर्वौद्धान्तैरपि जागरितावस्थायामेव अविशदावभासो निर्विकल्पकेऽङ्गीकृतः । ते यदि विशदावभासाभावादहमर्थास्फुरणं ब्रूयुः, तत्रापि—निर्विकल्पके पृथक्पृथग्वस्तुमात्रावभासाभ्युपगमो नोपपद्यते । अविशदवस्तुमात्रावभासः परैरप्रामाणिको निर्विकल्पके स्वीकृतः; अत्र तु, 'अत्रायं पुरुषः [2]स्वयंज्योतिर्भवति' इत्यादिश्रुत्यनुसारादविशदावभासः

1 साधयितुमित्यस्य प्रतिजानीते इत्यत्रान्वयः । वेदान्तेत्यादिः शंकाकारः । यद्यप्यात्मस्फुरणमभ्युपेत्यम्—अथाप्यनुभूतिस्फुरणमेव तदेति सैव स्यादात्मेति शंकार्थः । 2. स्वप्नविषयकस्यास्य (बृ. 6. 3. 14) सुषुप्तिविषयकतयोदाहरणं सर्वेष्टम् । सुषुप्तिविषयमेव अहमेवेदं सर्वोऽस्मीति (बृ.6.3 20) वाक्यमादिपदग्राह्यम् ।

वक्तव्यम् । न हि सुषुप्तोत्थितः कश्चित् अहम्भाववियुक्तार्थान्तरप्रत्यनीकाकारा ज्ञप्तिरहमज्ञानसाक्षितयाऽवतिष्ठे[1] इत्येवंविधां स्वापसमकालामनुभूतिं परामृशति । एवं हि सुप्तोत्थितस्य परामर्शः, सुखमहमस्वाप्समिति । अनेनैव(प्यनेन) प्रत्यवमर्शेन तदानीमप्यहमर्थस्यैवाऽऽत्मनः सुखित्वं ज्ञातृत्वञ्च ज्ञायते ।

---

प्रामाणिकः स्वीकृत इति भिदा । अतः सुषुप्तावात्मस्फुरणाभ्युपगमे अविशदावभासाभ्युपगमे च तुल्येऽपि मृषावादिमतादपि स्वपक्षे प्रमाणानुगुण्यं विवक्षुः परपक्षे प्रमाणाननुगुणत्वं दर्शयति नहीति । **अहम्भाव-वियुक्त-अर्थान्तरप्रत्यनीकाकारा**—ज्ञातृज्ञेयादिसमस्तविशेषरहितेत्यर्थः । प्रत्यक्त्वसिद्ध्यर्थं **ज्ञप्तिरहमिति** अत्राहंशब्दोपादानम् । स्वपक्षे परामर्शानुगुण्यमाह **एवंहीति** । अयं परामर्शः सुषुप्तिकाले सुखरूपतयाऽनु-भूतात्मगोचरः । अतीतकालसंबन्ध-स्वापौ तु पूर्वकालानुभूतार्थप्रत्यभिज्ञान-योग्यानुपलब्धिभ्यामनुमेयौ । स्वतोऽनुकूलतयाऽवभासमानस्याहमर्थस्याऽऽनुमानिककाल-स्वापवैशिष्ट्यगोचरप्रत्यभिज्ञाविशेषोऽयं परामर्शः सुखमहमस्वाप्समिति । एवं स्वपरमतयोः परामर्शानुगुण्य-तदभावरूपवैषम्यमुक्तम् । श्रुतिस्वारस्यं चास्मन्मते ; 'अत्रायं पुरुषःस्वयंज्योतिः' इति पुरुषशब्दश्रवणात् । पुरुषशब्दो न संविन्मात्रपरः । 'एष हि द्रष्टा श्रोता रसयिता घ्राता मन्ता बोद्धा विज्ञानात्मा पुरुषः' इति ज्ञातुरेव पुरुषत्वश्रवणात्; लोके ज्ञातरि पुरुषशब्दप्रसिद्धेश्च । प्रत्यक्त्वसिद्धिश्चास्मन्मत एवेति वक्ष्यते । उक्तपरामर्शफलितमर्थमाह **अनेनेति** ।

सुखमहमस्वाप्समिति परामर्शे सुखमित्यनेन तदानीमनुकूलतया भान(समानत्व)मनुसंहितं भवति । अहमित्यनेन स्वस्मैभासमानत्वरूपप्रत्यक्त्वं चानुसंहितं भवति । यथा मन्दमगच्छम, मधुरमगायमिति परामर्शेन पूर्वं गमनगानाभ्यां सह तदानीन्तनं मान्द्यं माधुर्यं चानुसंहितं भवति, तद्वदित्यर्थः । स्वस्मै स्वयमनुकूलमित्यानुकूल्यप्रतियोगित्वाभिप्रायेण सुखित्वमित्युक्तम् : स्वस्मै भासत इति भासनप्रतिसंबन्धित्वरूप-प्रत्यक्त्वाभिप्रायेण ज्ञातृत्वमित्युक्तम्; न तु धर्मभूतज्ञानस्फुरणात् । ननु, "विषयप्रकाशनवेलायां ज्ञातुरात्मनस्तथैव ; नतुसर्वेषां सर्वदा तथैव" इति भाष्यस्वारस्यविरुद्धम् । "पुंस्त्वादिवत्त्वस्य सतोऽभिव्यक्ति-योगात्" इति सूत्रस्वारस्यविरुद्धञ्च । अस्मरणनियमानुपपत्तिविरुद्धञ्च । संसारदशायां मनोव्यापारविरहेऽपि ज्ञानस्यात्मविषयत्वम्, "तच्चेन्द्रियद्वारेण व्यवस्थितम्" इति भाष्यस्वारस्यविरुद्धं च । अन्यथैषां सूत्रभाष्यवचसां संकोचःस्यात् । स च सङ्कोचकाभावादनुपपन्नः । तस्मात् तदानीमात्मा प्रत्यक्त्वेनानुकूलत्वेनानुसंहित इति परामर्शफलितार्थः ॥ सुखमहमस्वाप्समिति सुखस्य स्वापक्रियाविशेषणत्वे प्रतीयमाने कथमात्मविशेषणत्वमुच्यत इति चेत्—नैवम् । क्रियायाःसुखाश्रयत्वायोगेन पुरुषद्वारा क्रियाविशेषणत्वस्य युक्तत्वादिति । आत्मनस्तदानीं 'नकिञ्चिदवेदिषम्' इत्यज्ञानसाक्षित्वेन स्थितिं वदता अज्ञानाश्रयभूताहमर्थानुभवोऽभ्युपगन्तव्यः ; यथा प्रातश्चत्वरे गजो नासीदिति परामर्शे पूर्वं गजाभावाश्रयभूतं चत्वरमनुसंहितं भवति, तद्वत् । अस्वाप्समिति परामर्शेन मन्दमगच्छमित्यत्र गमनवत् स्वापोऽपि तदाऽनुसंहितस्स्यादिति चेन्न; यथा प्रातश्चत्वरे गजो नासीदित्यत्र पूर्वं गजाभावाननुसन्धानेऽप्येवं परामर्शोपपत्तिः, तद्वत् सकलज्ञाननिवृत्तिरूपस्वापस्य तदानीमननुसंहितत्वे-ऽप्येवं परामर्शोपपत्तेः । तत्र हि प्रातश्चत्वरमेवानुभूतम्, न गजाभावः ; प्रतियोगिभूतगजास्मरणात् । पश्चात्, 'गजः किं स्थितः' इति पृष्टेन योग्यार्थाननुस्मरणलिङ्गेन अभावोऽनुमीयते । तद्वत् सकलज्ञाननिवृत्तिरूप-

---

1. अवतिष्ठे इति तत्त्वटीकानुसारी पाठः । अवातिष्ठ इति वा ।

न च वाच्यम्—यथेदानीं सुखं भवति तथा तदानीमस्वाप्समित्येवा प्रतिपत्तिरिति-अतद्रूपत्वात् प्रतिपत्तेः। न चाहमर्थस्याऽऽत्मनोऽस्थिरत्वेन तदानीमहमर्थस्य सुखित्वानुसंधानानुपपत्तिः; यतः सुषुप्तिदशायाः प्रागनुभूतं वस्तु सुप्तोत्थितः, मयेदं कृतम्, मयेदमनुभूतम्, अहमेतद(वम)वोचमिति परामृशति ॥

एतावन्तं कालं न किञ्चिदहमज्ञासिषमिति च परामृशतीति चेत्—ततः किम्॥ न किञ्चिदिति कृत्स्नप्रतिषेध इति चेत्—न; नाहमवेदिषमिति वेदितुरहमर्थस्यैवानुवृत्तेः। वेद्यविषयो हि स प्रतिषेधः। न किञ्चिदिति निषेधस्य कृत्स्नविषयत्वे भवदभिमतानुभूतिरपि प्रतिषिद्धा स्यात्। सुषुप्तिसमये त्वनुसन्धीयमानमहमर्थमात्मानं ज्ञातारम् अहमिति परामृश्य, न किञ्चिदवेदिषमिति वेदने तस्य प्रतिषिध्यमाने, तस्मिन् काले निषिद्ध्यमानाया वित्तेः सिद्धिम् अनुवर्तमानस्य ज्ञातुरहमर्थस्य चासिद्धिमनेनैव, 'न किञ्चिदहमवेदिषम्' इति परामर्शेन साधयंस्तमिममर्थं देवानामेव साधयतु ॥

---

स्वापोऽपि योग्यानुस्मरणलिङ्गेनानुमीयते ॥ ननु सुखमहमस्वाप्समिति परामर्शस्वरूपे सति स्वापादेस्तदानीमननुभवः सुखित्वादेरनुभवश्च कथमुच्यते? सर्वमप्यनुभूतं स्यात्; न वा स्यात्॥ नैतत्॥ सुखमहमस्वाप्समित्यत्र यस्मिन्नंशे प्रतीतिस्वारस्यापवादकमस्ति, तद्विषयप्रतिपत्तिस्वारस्यभङ्गेऽप्यनपोदितांशविषयप्रतिपत्तिस्वारस्यभङ्गायोगात्। तत्र स्वापदशायां योऽर्थो नानुभवितुं शक्यः, तद्विषयप्रतिपत्तिस्वारस्यं भज्यते। यस्तु तदानीमनुभवयोग्यः, तद्विषयप्रतिपत्तिस्वारस्यं तिष्ठत्येव। बाह्यान्तः(न्तर?)करणजन्यसमस्तज्ञानाभावरूपत्वात् स्वापः तदाऽनुन्धातुं न शक्यते। अनुसन्धानमस्तीति चेत्—स्वाप एव न स्यात्; ऐन्द्रियकसमस्तज्ञाननिवृत्त्यभावात्। नैवं सुखादेः प्रतिपत्त्यनुपपत्तिरिति यथोक्त एवार्थः।

अथास्य परामर्शस्य परोक्तान्यथासिद्धिमनूद्य परिहरति न चेत्यादिना। अतद्रूपत्वादिति। एवमर्थः किं प्रतिपत्तिस्वारस्यात् उतानुपपत्त्याऽभ्युपगम्यत इति विकल्प्य, अतद्रूपत्वात्प्रतिपत्तेरिति प्रतिपत्तिस्वारस्यं परिहृतम्; यथा मन्दमगच्छम् मधुरमगायमिति परामर्शवचनस्य। न हि तत्र, यथेदानीं मान्द्यं माधुर्यं च भवति तथाऽगच्छमगायमित्यर्थ उपपद्यते। अपि तु गतिगानसमकालत्वमेव मान्द्यमाधुर्ययोरुपपन्नम्। तद्वत् प्रत्यक्त्वसुखित्वे अपि स्वापसमकालीने इत्यर्थः। अथानुपपत्तिं परिहरति नचेत्यादिना। अनुपपत्तिश्चाऽऽत्मनः अस्थिरत्वमनुभवाभावो वा। तत्र परामर्शेन स्थिरत्वमाह यत इति। मयेदं कृतमित्यादयो मानसवाचिककायिकत्रिविधव्यापारविषयपरामर्शपराः। अथाहमर्थाननुभवसाधकनिषेधसामान्यविषयं परामर्शं (र्शविशेषं) शङ्कते एतावन्तमिति। अहमर्थस्य निषेधविषयत्वाभावभिप्रायेणाऽऽह ततः किमिति। परविवक्षितं शङ्कते नकिञ्चिदिति। परिहरति नेति। वेद्यविषयः—वेद्यप्रतिभासविषयः। कृत्स्नविषयत्वेऽनिष्टमाह न किञ्चिदिति। नानुभूतिनिषेधः, तस्या अनुवृत्तेरित्याशङ्क्याह सुषुप्तिसमये त्विति। भवत्पक्षस्य विपरीतोऽयं परामर्श इत्यर्थः। यथा प्रातश्चत्वरे गजानुभवं पृष्टेन पश्चात् योग्यानुस्मरणलिङ्गेन चत्वरे गजाभावं वदता पुरुषेण पूर्वकालीनचत्वरानुभवेन विना गजाभावो न वक्तुं शक्यते—तथा अज्ञानाश्रयमहमर्थं वदता स्वापवेलायामहमर्थानुभवोऽभ्युपगन्तव्यः। अथाप्यहमर्थनिवृत्ति-ज्ञानानुवृत्तिकथनं चत्वरनिवृत्तिगजावस्थानवचनतुल्यमिति भावः। देवानामेव साधयतु। अर्चारूपा हि देवाः। प्रतिवचनमकुर्वतामित्यर्थः। क्षमावतामिति वा, प्रतिवाद्यसन्निधाविति वा, उल्लोकमुक्तमिति वाऽर्थः ॥

मामप्यहं न ज्ञातवानित्यहमर्थस्यापि तदानीमननुसन्धानं प्रतीयत इति चेन्—स्वानुभवस्ववचनयोर्विरोधमपि न जानन्ति भवन्तः। अहं मां न ज्ञातवानिति ह्यनुभववचने॥ मामिति किं निषिद्ध्यत इति चेत्—साधु पृष्टं भवता। तदुच्यते। अहमर्थस्य ज्ञातुरनुवृत्तेर्न स्वरूपं निषिध्यते; अपि तु प्रबोधसमयेऽनुसन्धीयमान (नाऽ?) स्याहमर्थस्य वर्णाश्रमादिविशिष्टता। अहं मां न ज्ञातवानित्युक्ते विषयो विवेचनीयः। जागरितावस्थानुसंहितजात्यादिविशिष्टोऽस्मदर्थो मामित्यंशस्य विषयः। स्वाप्ययावस्थाप्रसिद्धाविशदस्वानुभवैकतानश्चाहमर्थोऽहमित्यंशस्य विषयः। अत्र सुप्तोऽहम्, ईदृशोऽहमिति च मामपि न ज्ञातवानहमित्येव खल्वनुभवप्रकारः॥

किञ्च—सुषुप्तावात्मा अज्ञानसाक्षित्वेनाऽऽस्ते इति हि भवदीया प्रक्रिया। साक्षित्वञ्च साक्षाज्ज्ञातृत्वमेव। न ह्यजानतः साक्षित्वम्। ज्ञातैव हि लोकवेदयोः साक्षीति व्यपदिश्यते; न ज्ञानमात्रम्। स्मरति च भगवान् पाणिनिः, "साक्षाद्द्रष्टरि संज्ञायाम्" इति साक्षाज्ज्ञातर्येव साक्षिशब्दम्। स चायं साक्षी जानामीति प्रतीयमानोऽस्मदर्थ एवेति कुतस्तदानीमहमर्थो न प्रतीयेत। आत्मने स्वयमवभासमानोऽहमित्येवावभासत इति स्वापाद्यवस्थास्वपि आत्मा प्रकाशमानः अहमित्येवावभासत इति सिद्धम्॥

---

अथ निषेधविशेषविषयं परामर्शमाह मामपीति। परिहरति स्वानुभवेति। स्वानुभववचनयोर्नान्योन्यं विरोधः; किंतूभयोरप्यहमर्थानुवृत्तिनिषेधशब्देन विरोध इत्यर्थः। अनुभवैकदेशयोर्वचनैकदेशयोश्च मिथो विरोध इति वाऽर्थः। विरोधमेव दर्शयति अहमिति। अहं न ज्ञातवानित्यत्र अज्ञानसाक्षित्वेन अहमर्थानुवृत्तिः स्वानुभवसिद्धा, वचनमपि तदनुगुणमित्यनुभववचनाभ्यामहमर्थानुवृत्तिनिषेधवाक्यविरोध इत्यर्थः। निषेधशब्दतदर्थानुभवयोर्विरोध इति वाऽर्थः। तत्र मामिति पदस्यार्थं वक्तुं परप्रश्नमनुभाषते मामितीति। पूर्वं विरुद्धार्थकथनमसाधु; अर्थतत्त्वप्रश्नः साधुरित्यभिप्रायेणाह साध्विति। निषेधानुवृत्त्योर्विषयविभागं दर्शयति तदुच्यत इत्यादिना। अहं मामित्युभयोरपि पदयोर्विशिष्टविषयतैवोचिता रीतिभेदप्रसङ्गादित्यत्राह अहं मामिति। विधिनिषेधयोरेकविषयत्वे व्याघातः स्यादिति तन्निवृत्त्यर्थं विषयविभागः कार्य इत्यर्थः। विषयविभागविपर्याससशङ्कायां विषयविभागमुचितं दर्शयति जागरितेति। यत् सामग्र्यभावात् तदानीं न प्रकाशते, तदेव निषेधविषयः। यत् अनन्यापेक्षं स्वयं प्रकाशते, तदेवानुवर्तत इति, अप्रकाशमानस्यानुवृत्तिः प्रकाशमानस्य निषेधश्चानुपपन्नावित्यर्थः। एवं विषयविभागानुगुणमनुभवं दर्शयति अत्रेति। शब्दप्रयोगो विवक्षावशात्। धीस्थं सर्वं वदति वा; तदेकदेशं वदति वा; न किञ्चिदपि वदति वा। अतः शब्दप्रयोगे वैवक्षिकेऽप्यनुभव एकरूपः। स पुनः एवंविभागानुगुण एवेत्यर्थः। अनेन "नाह खल्वयमेवं सम्प्रत्यात्मानं जानात्ययमहमस्मि" इति श्रुतिवाक्यस्थायंशब्दो व्याख्यातः॥

परमतेनेममर्थमुपपादयति किञ्चेत्यादिना। साक्षित्वेनाऽऽत्माऽभ्युपगम्येत, ततः किमित्यत्राह साक्षित्वं चेति। साक्षाज्ज्ञातृत्वम्—साक्षात्काररूपज्ञानाश्रयत्वम्। असाक्षात्कारिणि साक्षिशब्दः प्रयुक्तश्चेत्, औपचारिकः। उपपादयति नहीति। अजानतः—अज्ञातुरित्यर्थः। कुत इत्यत्राह ज्ञातैव हीति। शब्दप्रयोगनियामकं लक्षणमाह स्मरतीति। साक्षिशब्दं स्मरतीत्यन्वयः। ततः किमहमर्थस्यात्मत्व इत्यत्राह स चेति। अस्मिन्नर्थे अनुमानमुत्तरत्र विस्तरेण विवक्षितम्; अत्र सङ्ग्रहेणाह आत्मने स्वयमिति। आत्मने स्वयमवभासमानोऽहमित्येवावभासत इति व्याप्तिवचनम्; जाग्रदात्मा सपक्षः; स्वस्मै प्रकाशमानत्वादिति हेतुः। निगमयति स्वापादीति। अविशदावभासस्य सर्वाभ्युपगतत्वात् श्रुतिस्वारस्यात् परामर्शस्वारस्यात् साक्षित्वोपपत्तेः प्रत्यक्त्वसिद्धेश्च सुषुप्तावात्मा अहमिति स्फुरतीत्युक्तं भवति॥

यत्तु—मोक्षदशायामहमर्थो नानुवर्तते—इति; तदपेशलम्। तथासति आत्मनाश एवापवर्गः प्रकारान्तरेण प्रतिज्ञातः स्यात्। न चाहमर्थो धर्ममात्रम्; येन तद्विगमेऽप्यविद्यानिवृत्ताविव स्वरूपमवतिष्ठेत। प्रत्युत स्वरूपमेवाहमर्थ आत्मनः। ज्ञानं तु तस्य धर्मः; 'अहं जानामि', 'ज्ञानं मे जातम्' इति चाहमर्थधर्मतया ज्ञानप्रतीतेरेव॥

अपि च यः परमार्थतो भ्रान्त्या वा आध्यात्मिकादिदुःखैर्दुःखितया स्वात्मानमनुसन्धत्ते 'अहं दुःखी' इति, 'सर्वमेतद्दुःखजातमपुनर्भवमपोह्य कथमहमनाकुलः स्वस्थो भवेयम्' इत्युत्पन्नमोक्षरागः स एव तत्साधने प्रवर्तते। स साधनानुष्ठानेन यदि अहमेव न भविष्यामीत्यवगच्छेत्, अपसर्पेदेवासौ मोक्षकथाप्रस्तावात्। ततश्चाधिकारिविरहादेव सर्वं मोक्षशास्त्रमप्रमाणं स्यात्॥ अहमुपलक्षितं प्रकाशमात्रमपवर्गेऽवतिष्ठत इति चेत्—किमनेन? मयि नष्टेऽपि किमपि प्रकाशमात्रमपवर्गेऽवतिष्ठत इति मत्वा न हि कश्चिद्बुद्धिपूर्वकारी प्रयतते। अतोऽहमर्थस्यैव ज्ञातृतया सिद्ध्यतः प्रत्यगात्मत्वम्।

---

अथ मुक्तावहमर्थाननुवृत्तिमनूद्य दूषयति यत्त्वित्यादिना। तुरर्थगौरवविशेषे। अपेशलम्—असाध्वित्यर्थः। कुत इत्यत्राह तथासतीति। सौगतान् ज्ञानसन्तत्युच्छेदं मोक्षं वदतः स्वरूपनाशस्य अपुरुषार्थत्वेन दूषयता त्वया शब्दान्तरेण स्वरूपनाश एवोक्तः स्यादित्यर्थः। नैयायिकाद्युक्ते मोक्षेऽप्यपुरुषार्थत्वं तुल्यम्। दुःखनिवृत्तिः सुखप्राप्तिश्चोभयं पुरुषार्थः। अत्रापुरुषार्थभूतदुःखाभावात्पुरुषार्थान्वयः, सुखाभावादपुरुषार्थान्वयश्चेति मुक्तेः पुरुषार्थापुरुषार्थमिश्रत्वं हि स्यात्। अहमर्थो ह्यारोपितः; अतस्तद्विगमे स्वरूपनाशो न प्रसज्जेदित्यत्राह नचेति। कुत इत्यत्राह अहमिति। अहमर्थधर्मतया ज्ञानप्रतीतेरेव। पूर्वोक्तहेतोरेवेत्यर्थः। अहमर्थात्मत्वसमर्थनोपजीवनेन स्वरूपनाशप्रसङ्ग उक्तः। एवं धर्मधर्मिभावेन प्रतीत्या अनुवृत्तिरुपपादिता। अथ श्रुत्यर्थापत्तिमाह अपिचेत्यादिना। पूर्वमहमर्थस्याऽऽत्मत्वसमर्थनाय श्रुत्यर्थापत्तिरुक्ता; इदानीमहमर्थस्य मुक्तावनुवृत्त्युपपादनाय तामेव श्रुत्यर्थापत्तिं विस्तरेणाऽऽह। यः स्वात्मानं दुःखिनमनुसन्धत्ते, स एव तन्निवृत्तिसाधने प्रवर्तते। स चाहमर्थ एव॥ दुःखित्वं भ्रान्तिसिद्धमिति चेत्—यः स्वात्मानं भ्रमन्तमनुसन्धत्ते, स एव भ्रमनिवृत्तिसाधने प्रवर्तते। स चाहमर्थः। द्विचन्द्रज्ञानादिभ्रान्तिमतोऽपि स्वभ्रमनिवृत्तिरेवापेक्षिता; न तु स्वविनाशः। अतोऽहमर्थविनाशोऽपुरुषार्थ इत्यभिप्रायेण परमार्थतो भ्रान्त्या वेत्युक्तम्। अनुसन्धत्त इत्यन्तेन, 'निरस्ताखिलदुःखोऽहम्' इत्यत्रापेक्षितं व्यक्तमुक्तम्। निरस्तेत्याद्यिश्लोकं विवृणोति सर्वमेतदित्यादिना। अनाकुलःस्वस्थो भवेयमिति। अपुनर्भवमपोह्येत्येतत्फलितमुक्तम् अनाकुल इति। आगामिदुःखशङ्कया मनःक्षोभः आकुलत्वम्; तदभावेऽनाकुलत्वम्। स्वस्थः—स्वस्मिन् स्थितः, स्वभावे स्थितः, यथावस्थितात्मानुभवपरः। अनन्तानन्दभागिति फलम्। स एव—पूर्वदुःखित एव। उत्पन्नानिष्टनिवृत्तीष्टप्राप्त्यभिलाषः स एवेत्यर्थः। श्रवणादाविति, पूर्वमुक्तत्वादिह तत्साधन इत्येतावदुक्तम्। अपसर्पेदसावित्यादिग्रन्थेन फलितमर्थमाह ततश्चाधिकारीति। श्रवणाद्यायाससाध्यस्य शास्त्रस्यापुरुषार्थपर्यवसायित्वे श्रवणाद्यधिकारिविरहात् श्रवणादिसापेक्षस्य शास्त्रस्य प्रमितिजनकत्वलक्षणं प्रामाण्यं न स्यादित्यर्थः। मयि नष्टेपीत्येतद्विवृणोति अहमुपलक्षितमित्यादिना। बुद्धिपूर्वकारीत्यनेन कस्यापीति पदं विवृतम्। श्रुत्यर्थापत्तिं निगमयति अत इति।

स च प्रत्यगात्मा मुक्तावप्यहमित्येव प्रकाशते स्वस्मै प्रकाशमानत्वात् । यो यः स्वस्मै प्रकाशते, स सर्वः अहमित्येव प्रकाशते; यथा तथाऽवभासमानत्वेनोभयवादिसंमतः संसार्यात्मा । यः पुनरहमिति न चकास्ति नासौ स्वस्मै प्रकाशते, यथा घटादिः । स्वस्मै प्रकाशते चायं मुक्तात्मा । स तस्मादहमित्येव प्रकाशते ॥

न चाहमिति प्रकाशमानत्वेन तस्याज्ञत्वसंसारित्वादिप्रसङ्गः मोक्षविरोधात् : अज्ञत्वाद्यहेतुत्वाच्चाहम्प्रत्ययस्य । अज्ञानं नाम स्वरूपाज्ञानमन्यथाज्ञानं विपरीतज्ञानं वा । अहमित्येवात्मनस्स्वरूपमिति स्वरूपज्ञानरूपोऽहम्प्रत्ययो नाज्ञत्वमापादयति; कुतः संसारित्वम् । अपि तु तद्विरोधित्वान्नाशयत्येव ॥

ब्रह्मात्मभावापरोक्ष्यनिर्धूतनिरवशेषाविद्यानामपि वामदेवादीनामहमित्येवात्मानुभवदर्शनाच्च । श्रूयते हि—

अहमर्थविगमे ज्ञप्त्यसिद्धिरप्यनुसन्धेया । अनुमानमाह सचेति । किञ्चानुमानमप्यस्तीति चार्थः । अन्वयव्याप्तिमाह योय इति । तथाऽवभासमानत्वेन—स्वस्मै प्रकाशमानत्वेन । व्यतिरेकव्याप्तिं दर्शयति यः पुनरिति । उपनयमाह स्वस्मा इति । निगमनमाह स तस्मादिति । स्वस्मै प्रकाशमानत्वं हेतुः, अहमिति व्यवहारार्हत्वं साध्यमिति न साध्याविशिष्टता । अहमित्येव प्रकाशते—अहमिति व्यवहारार्हं प्रकाशत इत्यर्थः ।

साध्यविपरीतविशेषसाधकतया विशेषविरुद्धत्वं शङ्कते नचेति । आदिशब्दात् रागद्वेषदुःखादि विवक्षितम् ॥ ननु व्यापकं हि प्रसञ्जनीयम् । न च कार्यं कारणस्य व्यापकम् ॥ सत्यम् । कारणजातीयस्य तु कदाचित्कार्यप्रसक्तिर्व्यापिका । अतोऽहंप्रत्ययेनात्मनोऽज्ञत्वादिप्रसञ्जनम् । अज्ञत्वादिप्रसक्तिः श्रुतिविरुद्धेत्याह मोक्षेति । 'न पश्यो मृत्युं पश्यति न रोगं नोत दुःखताम्' इति हि श्रुतिः । अतो यथा सहदर्शनमात्रेण पर्वते भाण्डादिप्रसक्तिः प्रत्यक्षबाधात् वार्यते, तद्वत् कालात्ययापदेश इत्यर्थः । सोपाधिकत्वमाह अज्ञत्वादीति । संसारित्वाहमर्थत्वयोः सहदर्शनमात्रेण मुक्तावपि संसारित्वादिप्रसङ्गश्चेत्, अनुभवस्यापि तत्सहभावदर्शनात् त्वत्पक्षेऽपि मुक्तौ संसारित्वप्रसङ्गः ॥ मोक्षग्राहिप्रमाणविरोधात् कालात्ययापदिष्ट[त्व ?]म्, संसारित्वादेरनुभवप्रयुक्तत्वाभावात् सोपाधिकत्वं चेति चेत्—तदस्मत्पक्षेऽपि समानमित्यभिप्रायः । अनेन अहमिति भासनं न स्वस्मैभासमानत्वप्रयुक्तम्, अपित्वज्ञत्वप्रयुक्तमिति हेतोः सोपाधिकत्वञ्च श्रुतिबलेन व्याप्तेर्भग्नतया सहदर्शनमात्रमेवेति परिहृतं भवति । एवं कालात्ययापदेशसोपाधिकत्वे उक्ते । तत्र सोपाधिकत्वमुपपादयितुमज्ञानत्वेन संभावितशिरांसि विकल्पयति अज्ञानं नामेति । धर्म्यैक्ये सति प्रकारान्तरारोपणेन ज्ञानमन्यथाज्ञानम्; यथा पीतः शङ्ख इति । इदं रजःकार्यम् । धर्म्यन्तरस्य धर्म्यन्तरत्वेन ज्ञानं विपरीतज्ञानम्; यथा शुक्तौ, इदं रजतमिति । इदं तमःकार्यम् । "अयथावत् प्रजानाति बुद्धिः सा पार्थ! राजसी ॥ अधर्मं धर्ममिति या मन्यते तमसा वृता । सर्वार्थान् विपरीतांश्च बुद्धिः सा पार्थ! तामसी" इति स्मृतेः । अहंप्रत्ययस्य स्वरूपज्ञानरूपत्वात् तत्प्रागभावान्यथाज्ञानविपरीतज्ञानानि विरोधादेवापगतानीत्याह अहमित्येवेति । अहमित्येवात्मनः स्वरूपम्—अहमिति व्यवहारबुद्ध्यर्हमेवात्मनः स्वरूपमित्यर्थः । अहम्प्रत्ययस्याज्ञत्वादिप्रयोजकत्वदूषणेनाज्ञत्वादेरविद्यान्वय एवोपाधिरित्यर्थादुक्तं भवति । अथवा कार्यकारणभावेन व्याप्तिमङ्गीकृत्य परेणाज्ञत्वादिप्रसङ्ग उक्त इति, व्याप्तिप्रतिक्षेपाय कार्यकारणभावं प्रतिक्षिपति अज्ञत्वाद्यहेतुत्वाच्चेत्यादिना । अज्ञत्वफलमपि नास्तीत्याह कुतः संसारित्वमिति ॥

निवृत्ताविद्यानामपि अहमित्यात्मप्रतिपत्तिदर्शनेन अहम्प्रत्ययस्य मुक्तावनुवृत्तिमाह ब्रह्मात्मभावेति ।

"तद्धैतत् पश्यन्नृषिर्वामदेवः प्रतिपेदे अहं मनुरभवं सूर्यश्चेति", "अहमेकः प्रथममासं वर्तामि च भविष्यामि च" इत्यादि । सकलेतराज्ञानविरोधिनः सच्छब्दप्रत्ययमात्रभाजः परस्य ब्रह्मणो व्यवहारोऽप्येवमेव, "हन्ताऽहमिमास्तिस्रो देवताः", "बहु स्यां प्रजायेय", "स ईक्षत लोकान्नु सृजा इति" । तथा—'यस्मात् क्षरमतीतोऽहमक्षरादपि चोत्तमः । अतोऽस्मि लोके वेदे च प्रथितः पुरुषोत्तमः', 'अहमात्मा गुडाकेश', 'न त्वेवाहं जातु नासम्', 'अहं कृत्स्नस्य जगतः प्रभवः प्रलयस्तथा', 'अहं सर्वस्य प्रभवो मत्तः सर्वं प्रवर्तते', 'तेषामहं समुद्धर्ता मृत्युसंसारसागरात्', 'अहं बीजप्रदः पिता', 'वेदाहं समतीतानि' इत्यादिषु ॥

यद्यहमित्येवात्मनः स्वरूपम् ; कथं तर्ह्यहङ्कारस्य क्षेत्रान्तर्भावो भगवतोपदिश्यते, "महाभूतान्यहङ्कारो बुद्धिरव्यक्तमेव च" इति ॥ उच्यते । स्वरूपोपदेशेषु सर्वेष्वहमित्येवोपदेशात् तथैवात्मस्वरूपप्रतिपत्तेश्चाहमित्येव

~~~~~~~~~~

तद्धैतत्पश्यन् इति ब्रह्मात्मकत्वसाक्षात्कारकथनेन निर्धूतनिरवशेषाविद्यत्वं गम्यते । ब्रह्मणोऽपि तथा प्रतिपत्तिमाह सकलेतरेति । सकलेतराज्ञानविरोधिनः—न हि सकलेतरविषहरणनिपुणस्य वैनतेयस्य विषवश्यत्वसंभव इति भावः । सच्छब्दप्रत्ययमात्रभाजः—सच्छब्दस्य सदिति प्रत्ययस्य च विषयभूतस्य । मात्रचा पाश्चात्यनामरूपभाक्त्वव्यावृत्तिः । अनेनाहङ्कारसृष्टेः पूर्वमप्यहम्प्रत्ययं ज्ञापयति । अहम्प्रत्ययस्फुटीकरणाय अहमिमा इति वाक्यं पूर्वमुपादत्ते । बहु स्यामिति वाक्ये "अस्मद्युत्तम" इत्युत्तमपुरुषबलादहमिति प्रत्ययसिद्धिः । अहमिमास्तिस्र इत्यत्राहंशब्दः कण्ठोक्तः । न ह्यहङ्कारस्य नामरूपव्याकर्तृत्वमिति भावः । बहूपनिषत्सु अहमिति निर्देशज्ञापनायोपादत्ते स ईक्षतेति । सृजा इत्युत्तमपुरुषेणाहंशब्दाकर्षसिद्धिरिति भावः । स्मृतिं दर्शयति तथा यस्मादिति । यस्मादिति वचनं क्षराक्षरातीतस्वाभाविकरूपेणाहम्प्रत्ययज्ञापनार्थमुपात्तम् । न ह्यहङ्कारः क्षराक्षरातीतः । अतोऽस्मीत्युत्तमपुरुषेणाप्यहमर्थसिद्धिः । आत्मनोऽहम्प्रत्ययं ज्ञापयति—अहमात्मेति । न ह्यहङ्कारः कश्चिदन्तरात्मा । स्वाभाविकनित्यरूपेऽहम्प्रत्ययं दर्शयति न त्वेवाहमिति । न ह्यहङ्कारो नित्यः । मृत्युविरोधिमुक्तिप्रदोऽप्यहम्प्रत्ययविषय इत्याह तेषामिति । न ह्यहङ्कारो मुक्तिप्रदः । एवमनेकश्रुतिस्मृतिवचनोपादानं परविवक्षितद्वित्राद्दशवचनापनोदनार्थम् । एभिरहंशब्दैश्चिन्मात्रमुपलक्ष्यते चेत् अनेकवाक्यस्थाहंशब्दलक्षणैव दोषः ।

"महाभूतान्यहङ्कारः" इति क्षेत्रान्तर्भाववचनमेकम्, "अहङ्कारं बलं दर्पं कामं क्रोधं परिग्रहम् । विमुच्य निर्ममः शान्तो ब्रह्मभूयाय कल्पते ॥" इति त्याज्यत्वपरं वचनं द्वितीयम्, 'अहङ्कारविमूढात्मा' इत्यपरम् ; एतत्त्रयमनुदाहृतमप्यभिप्रेतम् ; उत्तरत्र परिहारात् । पूर्वमेतद्वचनाभिप्रायेण, 'सुषुप्तिमुक्त्योर्नान्वेती'-त्युक्तम् । इममर्थमवलम्ब्य चोदयति कथं तर्हीति । परिहरति उच्यत इति । अहमर्थाहङ्कारयोरभेदबुद्ध्या परेण चोदिते प्रकृतिप्रत्यययोरर्थविभागव्युत्पादनाय प्रकृत्यर्थभूते आत्मन्यहम्बुद्धेः प्रामाणिकत्वस्थैर्यं दर्शयति स्वरूपोपदेशेष्विति । अन्यथासिद्धिं दर्शयन् तत्राहङ्कारशब्दविवक्षितमाह । अव्यक्तेति । अव्यक्तपरिणामभेदस्येति । न त्वहमर्थस्येत्यर्थः । 'अथातोऽहङ्कारादेशः' इत्यादिषु शुद्धस्वरूपस्याहङ्कारशब्देनाभिधानाभ्युपगमेऽपि न विरोधः ; स त्वहङ्कारशब्दोऽहमर्थविषयबुद्धिपरः । यद्यहङ्कारशब्दवाच्यत्वमात्रात् प्रत्यगात्माऽपि क्षेत्र (जड)भेदः स्यात्—तर्हि हरिशब्दवाच्यत्वसाम्यात् सिंहो मण्डूकः स्यात् । अतोऽनेकार्थाभिधायिशब्दैकत्वमर्थभेदाविरोधीति भावः । यथा आगमप्रामाण्ये, "तथा च हरिशब्दस्य दृष्टा मण्डूकवाचिता । इति तच्छब्दवाच्यत्वात् सिंहो मण्डूक एव किम् ॥ तथा गोशब्दवाच्यत्वाच्छब्दश्चापि विषाणवान्" इति । अथाहङ्कार-
~~~~~~~~~~

प्रत्यगात्मनः स्वरूपम् । अव्यक्तपरिणामभेदस्याहङ्कारस्य क्षेत्रान्तर्भावो भगवतैवोपदिश्यते । स त्वनात्मनि देहेऽहम्भावकरणहेतुत्वेनाहङ्कार इत्युच्यते । अस्य त्वहङ्कारशब्दस्य अभूततद्भावेऽर्थे च्विप्रत्ययमुत्पाद्य व्युत्पत्तिर्द्रष्टव्या । अयमेव त्वहङ्कार उत्कृष्टजनावमानहेतुर्गर्वापरनामा शास्त्रेषु बहुशो हेयतया प्रतिपाद्यते । तस्माद्बाधकापेताऽहम्बुद्धिः साक्षादात्मगोचरैव । शरीरगोचरा त्वहम्बुद्धिरविद्यैव । यथोक्तं भगवता पराशरेण, "श्रूयतां चाप्यविद्यायाः स्वरूपं कुलनन्दन । अनात्मन्यात्मबुद्धिर्या" इति ॥ यदि ज्ञप्तिमात्रमेवात्मा, तदाऽनात्मन्यात्माभिमाने, शरीरे ज्ञप्तिमात्रप्रतिभासः स्यात् ; न ज्ञातृत्वप्रतिभासः । तस्मात् ज्ञाताऽहमर्थ एवात्मा । तदुक्तम्—

"अतः प्रत्यक्षसिद्धत्वादुक्तन्यायागमान्वयात् । अविद्यायोगतश्चात्मा ज्ञाताऽहमिति भासते ॥" इति ।

---

शब्दस्याव्यक्तपरिणामविशेषवाचकत्वप्रकारं दर्शयति स त्विति । अहम्भावः अहमिति बुद्धिः । भावशब्दस्य बुद्धिवाचकत्वमभिप्रायपरतया प्रयोगादवगम्यते । सर्वत्राहंशब्दार्थमेकरूपमङ्गीकृत्याहङ्कारशब्दस्याव्यक्तपरिणामवाचित्वं शब्दानुशासनप्रक्रिययोपपादयति अस्य त्विति । च्विप्रत्ययस्य सर्वलोपः । कृञः करणे घञ् । क्षेत्रान्तर्भावोपदेशस्य निर्वाहः कृतः ; "अहङ्कारं बलं दर्पमिति त्याज्यतयोपदेशस्य निर्वाहः क्रियते अयमेव त्विति । अयंशब्देन प्रस्तुताहम्भावो विवक्षितः ; न त्वहम्भावकरणहेतुः ; गर्वापरनामेति वचनात् । न हि महदहङ्कारयोरन्यतरोऽहङ्कारो गर्वापरपर्यायः । अतोऽत्राहम्भाव एवायंशब्दविवक्षितः । प्रशस्तदेहेऽहम्बुद्धिरुत्कृष्टजनावमानहेतुः । अहङ्कारः अहम्बुद्धिः । मानसव्यापारवाचिनः करोतेः बुद्धिपरत्वं युज्यते । यथा, "तदेकावयवं देवं चेतसा हि पुनर्बुधः । कुर्यात्" इति । मनसा करणं हि वेदनम् । अतोऽहम्बुद्धिरहङ्कारः । च्विप्रत्ययार्थगर्भत्वात् अनहमि अहम्बुद्धिगर्भौ इमौ [1]अहम्भावाहङ्कारशब्दौ । अत्र भावे व्युत्पत्तिः ; पूर्वत्र करणे व्युत्पत्तिः । 'गर्वोऽभिमानोऽहङ्कारः' इति नैघण्टुकाः ॥ ननु कथं भावे (हेये ?) व्युत्पन्नस्याहङ्कारशब्दस्योपादेयगोचरतया प्रयोगः 'अथातोऽहङ्कारादेशः' इति ॥ उच्यते । स त्वहङ्कारशब्दः साक्षादहमर्थबुद्धिवाची ; न त्वनात्मन्यात्मबुद्धिपरच्विप्रत्ययार्थगर्भः । हेयोपादेयरूपेण शब्दप्रतिपन्नयोरहम्बुद्ध्योर्विषयविभागं निगमयति तस्मादिति । अस्मिन्नर्थे प्रमाणमाह यथोक्तमिति । तत्रैव पुराणे अनात्मविषयाहम्बुद्धिवचनयोर्भ्रान्तित्वम्, आत्मविषये त्वभ्रान्तत्वं च स्पष्टम् । यथा, "आकाशवाय्वग्निजलपृथिवीभ्यः पृथक्स्थिते । आत्मन्यात्ममयं भावं कः करोति कलेवरे ॥ पञ्चभूतात्मके देहे देही मोहतमोवृतः । अहं ममैतदित्युच्चैः कुरुते कुमतिर्मतिम् ॥" इति । आदिभरतचरिते, "आत्मन्येष न दोषाय शब्दोऽहमिति यो द्विज । अनात्मन्यात्मविज्ञानं शब्दो वा भ्रान्तिलक्षणः ॥" इति । एतद्वचनार्थमप्यहमर्थात्मत्वहेतुत्वेनाह यदीति । अनात्मनीति । अनात्मन्यहम्प्रतीतिः कथमात्माभिमान इत्यर्थः । अहमर्थात्मत्वं निगमयति तस्मादिति । अस्मिन्नर्थे आत्मसिद्धिग्रन्थमुदाहरति तदुक्तमिति । धर्मधर्मिभावेन प्रतीतिः, प्रत्यक्षसिद्धिः, स्थिरत्वास्थिरत्वादिवैषम्यम्, श्रुत्यर्थापत्तिश्च न्यायः । आगमः उदाहृतोपनिषद्वाक्यानि । अविद्यायोगः—अनन्तरोक्तभ्रान्तियोगः । अहमर्थस्यानात्मत्वे स्थूलोऽहमिति भ्रान्तेरयोग

---

1 अत्र अहम्भावशब्दो नेष्टो भावप्रकाशिकायाम् । [भावः अभिप्राय इति प्रागुक्तत्वात् कृभ्वस्तियोगाभावात् न च्विः ।] अहम्मतिशब्दवत् अहम्भावशब्दः च्विं विनैवारोपार्थक इति । तदा अहंकारशब्दौ इत्यस्य करणे भावे च व्युत्पन्नाहंकारशब्दद्वयमित्यर्थः । एतत्पाठे तु अनहमर्थमहमर्थं भावयतीत्यतो भावार्थे अहम्भावशब्दः च्विप्रत्ययगर्भः प्रयुज्यते लोके गर्वपर इति स्थितनिर्वाहः । च्विप्राप्तिलोपयोरभावेऽपि तदर्थगर्भत्वमिष्यत एवेति वा ।

तथा च—"देहेन्द्रियमनःप्राणधीभ्योऽन्योऽनन्यसाधनः। नित्यो व्यापी प्रतिक्षेत्रमात्मा भिन्नः स्वतस्सुखी॥" इति।

अनन्यसाधनः—स्वप्रकाशः। व्यापी—अतिसूक्ष्मतया सर्वाचेतनान्तःप्रवेशस्वभावः॥

यदुक्तम्—दोषमूलत्वेनान्यथासिद्धिसंभावनया सकलभेदावलम्बिप्रत्यक्षस्य शास्त्रबाध्यत्वमिति—

---

इति वाऽर्थः। ज्ञातुरात्मत्वे संवादिग्रन्थो दर्शितः। इतरेनात्मत्वे चात्मसिद्धिग्रन्थमाह तथा चेति। धीभ्योऽन्य इत्येतदत्रोपयुक्तम्। साधनशब्द(पद?)स्योत्पादकज्ञापकसाधारणत्वात् तत् व्याचष्टे अनन्येति। जीवस्वरूपविभुत्वशङ्कां व्युदासार्थं तत्र व्यापीति शब्दं व्याचष्टे अतिसूक्ष्मेति। पुराणादिषु व्यापिशब्दप्रयोगात् स एवात्र श्लोके प्रयुक्तः। यत्र यत्र जीवस्य व्याप्तिवाचिनः शब्दाः, तत्रायमेवार्थो द्रष्टव्य इति भावः। जीवस्य धर्मभूतज्ञानेन व्याप्तिरात्मसिद्धावेवोच्यते, "व्याप्तिरपि चैतन्यमात्रेणैव; न स्वरूपेण" इति। अतो यथोक्त एवार्थः॥

अथ शास्त्रप्रत्यक्षविरोधे शास्त्रप्राबल्यमनूद्य निरस्यति यदुक्तमित्यादिना। परेण पूर्वम्, 'मूलमूलिभावपरोक्षापरोक्षरूपत्वादिर्न बाध्यबाधकभावे कारणम्; ज्वालाभेदानुमाने व्यभिचारात्। 'आदित्यो यूपः' इत्यादावपि यूपादित्यैक्याद्यप्रतिपादनं न दौर्बल्यात्; अपि तु यूपाञ्जनविधिशेषत्वेनैक्ये तात्पर्याभावात् इत्युक्तम्। तत्र ज्वालाभेदानुमानात् शास्त्रस्य त्रिधा वैषम्यमस्ति. प्रमाणान्तरेण दोषमूलत्वानिश्चयादन्योन्याश्रयः, बाध्यबाधकयोस्तुल्यदोषत्वम्, मूलोच्छेदित्वञ्चेति; एतत्त्रयं ज्वालाभेदानुमाने नास्ति। तथाहि—एकवर्तिकावर्तित्वनिबन्धनसादृश्याख्यदोषस्य असत्यप्यैक्ये ऐक्यप्रतीतिहेतुत्वम् अचिरनिर्वापितारोपितप्रदीपे दृष्टमिति, चक्षुषा ज्वालैक्यप्रतिपत्तेः क्वचित् दोषमूलत्वनिश्चयात् अन्यत्रैक्यप्रतिपत्तावपि दोषमूलत्वसंभवात् ज्वालैक्यप्रत्यक्षं शङ्कितं न निश्चयजननक्षमं परीक्षकस्य भवेत्। ज्वालायां सादृश्यरूपदोषस्य असत्यप्यैक्ये ऐक्यप्रतीतिहेतुत्वं प्रमाणान्तरेण न दृष्टं चेत्, अन्योन्याश्रयः स्यात्—अनुमानस्य प्राबल्यात् प्रत्यक्षस्यान्यथासिद्धिः, तदन्यथासिद्ध्याऽनुमानस्य प्राबल्यमिति; ऐक्यप्रतीतेरन्यथासिद्धिसंभवः प्रमाणान्तरदृष्ट इति नान्योन्याश्रयः। अत्र न तथा प्रमाणान्तरेण भेदवासनाया दोषत्वं दृष्टम्। किञ्च दीपे बाध्यस्य ज्वालैक्यज्ञानस्य सादृश्याख्यदोषमूलत्वं बाधकस्य ज्वालभेदानुमानस्य न सादृश्यदोषमूलत्वं दृष्टम्। अत्र तु बाध्यस्य प्रत्यक्षस्य बाधकस्य शास्त्रस्य चोभयोः पराभ्युपेतदोषमूलत्वमविशिष्टं विद्यत इति तुल्यदोषत्वम्। किञ्च तत्र ज्वालाख्यधर्मिग्राहिणः प्रत्यक्षस्य प्रथमवर्त्यवयवाग्निसंयोगे चरमवर्त्यवयवस्य विनाशे च उत्पत्तिविनाशयोर्व्याप्तिग्राहिणः प्रत्यक्षस्य, प्रत्यवयवमग्निसंयोगवर्त्यवयवविनाशाख्यलिङ्गग्राहिणः प्रत्यक्षस्य च न भेदानुमानबाध्यविषयत्वम्। ऐक्यप्रतीतेरेव तत्। अत्र तु शब्दाख्यधर्मिग्राहिणः तस्य निर्दोषत्वसाधकलिङ्गग्राहिणः तल्लिङ्गव्याप्तिग्राहिणः षड्विधतात्पर्यलिङ्गग्राहिणश्च प्रत्यक्षस्य तेषां तात्पर्यलिङ्गानां च शास्त्रेणैव बाधोपगमान्मूलोच्छेदित्वमिति त्रिधा वैषम्यम्। एतद्वैषम्यत्रयमुपपादयिष्यन् पूर्वपक्षमनुवदति दोषमूलत्वेनेति। सकलभेदावलम्बिप्रत्यक्षस्येति। अत्रायं भावः—तत्त्वशुद्धिकारादिभिः कैश्चित् काचतिमिरादिरेव प्रत्यक्षस्य दोष उक्तः। स नोपपद्यते; काचतिमिरादेः काचित्कत्वात्। एतेन प्रत्यक्षान्तराणां दोषमूलत्वमनुमीयते चेत्, शब्दत्वात् शास्त्रस्यापि दोषमूलत्वमनुमीयताम्॥ शास्त्रे दोषस्य योग्यानुपलम्भनिरासश्चेत्, प्रत्यक्षेऽपि तथैव स्यात्। किञ्च आयुर्वेदे दोषाणां स्वरूपं तन्निवृत्त्युपायादिकं च निरूपितम्। सर्वप्रत्यक्षस्य दोषमूलत्वानुमानं तद्विरुद्धञ्च। किञ्च सर्वप्रत्यक्षस्य दोषमूलत्वे सन्मात्रग्राहिणः प्रत्यक्षस्य दोषमूलत्वात् सन्मात्रमपि

कोऽयं दोष इति वक्तव्यम् , यन्मूलतया प्रत्यक्षस्यान्यथासिद्धिः॥ अनादिभेदवासनैव हि दोष इति चेत्-भेदवासनायास्तिमिरादिवत् यथावस्थितवस्तुविपरीतज्ञानहेतुत्वं किमन्यत्र ज्ञातपूर्वम् ॥ अनेनैव शास्त्रविरोधेन ज्ञायत इति चेत् न; अन्योन्याश्रयणात्-शास्त्रस्य निरस्तनिखिलविशेषवस्तुबोधित्वनिश्चये सति भेदवासनाया दोषत्वनिश्चयः, भेदवासनाया दोषत्वनिश्चये सति शास्त्रस्य निरस्तनिखिलविशेषवस्तुबोधित्वनिश्चय इति । किञ्च यदि भेदवासनामूलत्वेन प्रत्यक्षस्य विपरीतार्थत्वम् , शास्त्रमपि तन्मूलत्वेन तथैव स्यात् ॥ अथोच्येत—दोषमूलत्वेऽपि शास्त्रस्य प्रत्यक्षावगतसकलभेदनिरसनज्ञानहेतुत्वेन परत्वात् तत् प्रत्यक्षस्य बाधकमिति—तन्न : दोषमूलत्वे ज्ञाते सति परत्वमकिञ्चित्करम् । रज्जुसर्पज्ञाननिमित्तभये सति भ्रान्तोऽयमिति परिज्ञातेन केनचित् 'नायं सर्पः; मा भैषीः' इत्युक्तेऽपि भयानिवृत्तिदर्शनात् । शास्त्रस्य च दोषमूलत्वं श्रवणवेलायामेव ज्ञातम् । श्रवणावगतनिखिलभेदोपमर्दिब्रह्मात्मैकत्वविज्ञानाभ्यासरूपत्वान्मननादेः ॥ अपि च—इदं शास्त्रम्; एतच्चासंभाव्यमानदोषम्; प्रत्यक्षं तु संभाव्यमानदोषम्—इति केनावगतं त्वया ? न तावत् स्वतस्सिद्धा निर्धूतनिखिलविशेषानु-

---

मिथ्या स्यादिति । दूषयति **कोऽयमित्यादिना** । **कोऽयं दोष इति वक्तव्यमिति** । कोऽयं दोष इत्यनया वचनव्यक्त्या दोषरूपं मूलं यदुक्तम्, तत् किमिति पृष्टे अयं दोष इति वक्तव्यमित्यर्थः । यद्वा यच्छब्दसामर्थ्यात् तत्रेत्याक्षेपसिद्धम् । **दोषमूलत्वेनेत्यादिना** यदर्थजातमुक्तम्, तत्र कोऽयं दोष इति पृष्टे, वक्तव्यमित्यर्थः । कुतो वक्तव्यमित्यत्राह **यन्मूलतयेति** । न हि दोषमनुक्त्वाऽन्यथासिद्धिः सुवचेत्यर्थः । दोषमाह **अनादीति** । स्वरूपसंप्रतिपत्तिपर एवकारः । **हिशब्देन** दोषान्तरासंभवसिद्धवत्कारः । स्वमते दोषत्वसंप्रतिपत्त्यभिमानाद्वा **हिशब्दः** । **दोषत्वं हि** विपरीतज्ञानहेतुत्वम् । अतो विपरीतज्ञानहेतुत्वेन व्याप्तेरदृष्टतया भेदवासनास्वरूपसम्प्रतिपत्तावपि दोषत्वासम्प्रतिपत्तेः पृच्छति **भेदवासनाया इति** । **तिमिरादिवदिति आदिशब्देन** सादृश्यादि विवक्षितम् । तद्धि ज्वालायामैक्यभ्रमहेतुः । अन्यत्र ज्ञातपूर्वत्वस्य दुर्वचत्वात् शंकते **अनेनैवेति** । दूषयति **नेति** । एवं प्रमाणान्तरेण दोषत्वानिश्चयेनान्योन्याश्रयणापत्तिरूपवैषम्यमुक्तम् । अथ तुल्यदोषत्वं बाध्यबाधकयोराह **किञ्चेति** । अथ दोषमूलत्वे तुल्येऽपि परत्वाद्बाधकत्वं शङ्कते **अथेति** । अपच्छेदादिषु, इदं रजतम् , नेदं रजतमित्यादिषु च परं बाधकं दृष्टम्; अतो निषेध्योपस्थापकमानापेक्षया निषेधकस्य परत्वात् बलीयस्त्वमित्यर्थः । एवं ब्रह्मप्रतिपादकशास्त्रस्यापि व्युत्पत्त्यादेः प्रत्यक्षादिमूलतया तत्पूर्वकस्य तस्य प्रत्यक्षाद्यपेक्षया परत्वात् तत्प्रतिपाद्यनिर्विशेषवस्तुसत्यत्वमपि तुल्यन्यायतया सिद्धम् । तद्दूषयति **तन्नेति** । परत्वस्याकिञ्चित्करत्वमुपपादयति **रज्जुसर्पेति** । उत्तरज्ञानस्य दोषमूलत्वेन प्रामाण्यानिश्चयात् भयानिवृत्तिः । ननु भ्रान्तत्वे ज्ञाते परत्वमकिञ्चित्करमस्तु; अत्र तु भ्रान्तत्वज्ञानं नास्तीत्यत्राह **शास्त्रस्य चेति** । ज्ञातत्वमुपपादयति **श्रवणावगतेति** । शास्त्रस्य भेदवासनामूलत्वं तावत् सम्प्रतिपन्नम् । तस्याश्च दोषत्वं भेदमिथ्यात्वज्ञानादवगम्यते । तन्मिथ्यात्वावगतिश्च ज्ञाननिवर्त्यत्वावगमात् । ज्ञाननिवर्त्यत्वावगमश्च ब्रह्मात्मैकत्वज्ञानस्य निखिलभेदोपमर्दित्वावगतेः । अत ईदृशनिवर्तकज्ञानाभ्यासरूपमननं कुर्वता शास्त्रस्य दोषमूलत्वमवगतमित्यर्थः ।

एवं बाध्यबाधकयोस्तुल्यदोषत्वरूपं वैषम्यमुक्तम् । अथ मूलोच्छेदित्वमाह **अपि चेति** । **इदं शास्त्रमिति** शब्दराशिव्यावृत्तिः । **असम्भाव्यमानदोषमिति** बौद्धागमादिव्यावृत्तिः । **त्वया**—प्रमाणप्रमेयादिकं तात्त्विकत्वेनानभ्युपगच्छता । **न तावदिति** । स्वतस्सिद्धत्वेन निर्धूतनिखिलविशेषत्वम् । एतद्विशेषणं निर्विषयत्व-

भूतिरिममर्थमवगमयति ; तस्याः सर्वविषयविरक्तत्वात् ; शास्त्रपक्षपातविरहाच्च । नाप्यैन्द्रियकप्रत्यक्षम् , दोषमूलत्वेन विपरीतार्थत्वात् । तन्मूलत्वादेव नान्यान्यपि प्रमाणानि । अतः स्वपक्षसाधनप्रमाणानभ्युगमान्न स्वाभिमतार्थसिद्धिः ॥

ननु व्यावहारिकप्रमाणप्रमेयव्यवहारोऽस्माकमप्यस्त्येव ; कोऽयं व्यावहारिको नाम ? आपातप्रतीतिसिद्धो युक्तिभिर्निरूपितो न तथाऽवस्थित इति चेत् ; किं तेन प्रयोजनम् ? प्रमाणतया प्रतिपन्नेऽपि यौक्तिकबाधादेव प्रमाणकार्याभावात् ॥

अथोच्येत—शास्त्रप्रत्यक्षयोर्द्वयोरप्यविद्यामूलत्वेऽपि प्रत्यक्षविषयस्य शास्त्रेण बाधो दृश्यते ; शास्त्रविषयस्य सदद्वितीयब्रह्मणः पश्चात्तनबाधादर्शनेन निर्विशेषानुभूतिमात्रं ब्रह्मैव परमार्थ इति । तदयुक्तम् , अबाधितस्यापि दोषमूलस्यापारमार्थ्यनिश्चयात् ।

---

प्रदर्शनार्थम् । कुतो नावगम्यत इत्यत्राह तस्या इति । सर्वविषयविरक्तत्वात् । निर्विषयत्वादित्यर्थः । न हि विज्ञानम् असंबध्य विषयं प्रकाशयति । वस्तुतो निर्विषयापि भ्रान्त्या अविद्यमानमपि शास्त्रप्राबल्यमवगमयतीत्यत्राह शास्त्रपक्षपातविरहाच्चेति । असम्बन्धाविद्यमानत्वाविशेषात् सौगतादिशास्त्रान्तरप्रामाण्यमप्यवगमयेदित्यर्थः । प्रत्यक्षादिकं नावगमयतीत्याह नापीति । योगिप्रत्यक्षादेरप्यैन्द्रियकप्रत्यक्षमूलशास्त्रजन्यज्ञानहेतुकादृष्टकार्यत्वादैन्द्रियकप्रत्यक्षं प्रथममुपात्तम् । तन्मूलत्वात्—भेदवासनामूलप्रत्यक्षमूलत्वात् । एवं प्रकृतगोचरतयोक्तं प्रमाणाभावं पराभिमतसर्वगोचरत्वेनोपसंहरति अत इति । न स्वाभिमतार्थसिद्धिः । स्वाभिमतम् , प्रत्यक्षदौर्बल्यशास्त्रप्राबल्यादिकम् ।

एतत् खण्डनकाराद्युक्तकुतर्कनिरसनोपलक्षणार्थमुक्तम् । तत्र प्रमाणाद्यभ्युपगमानभ्युपगमाभ्यां प्रमाणाद्यप्यादिभङ्गः क्रियते । तत्रेदं प्रष्टव्यम्—स्वाभिमतव्यतिरिक्तार्थपरं शास्त्रान्तरमपरमार्थार्थकमित्यस्मिन्नर्थे किं तव प्रमितिः, तत्साधनं वाऽस्ति, उत नास्ति ? अस्ति चेत् , न प्रमाणादिभङ्गः । नास्ति चेत् , तत एव न प्रमाणादिभङ्गः । प्रमितितत्साधनादिकमस्त्येव ; तत् व्यावहारिकमिति चेत्—किमिदं व्यावहारिकत्वम् ? किं परमार्थत्वम् , उतापरमार्थत्वम् ? अपरमार्थभूतं प्रमाणं किं साधकम , उतासाधकम् ? साधकं चेत् अपरमार्थसंज्ञितम् , अन्येषां च प्रमाणं तत्तत्पक्षसाधकमेव स्यात् । अथासाधकम् , ततो नितरां वाद्यन्तराभ्युपगतप्रमाणादिकं साधकं भवेत् । त्वदुक्तं प्रमाणादिकं परमार्थभूतं चेत्, द्वैती विजयी स्यादिति । स्वपक्षपरपक्षभेदः किं परमार्थः, उतापरमार्थः ? परमार्थश्चेत्, न भेदमिथ्यात्वम् । अपरमार्थश्चेत्, परपक्ष एव त्वयाऽङ्गीकृतः स्यादिति भेदपारमार्थ्यं त्वयैवोक्तं स्यदिति । एवमादिन्यायाः सर्वत्रानुसन्धेया इत्यभिप्रायः ॥

अथ स्वपक्षसाधनप्रमाणाभावं प्रतिविवक्षुश्चोदयति नन्विति । कोऽयमित्याक्षिपति । व्यावहारिकस्वरूपं दर्शयति आपातेति । दूषयति किं तेनेति । साध्यनिश्चयरूपप्रयोजनं नेत्यर्थः । कुत इत्यत्राह प्रमाणतयेति । युक्त्या बाधो यौक्तिकबाधः ; धूमबुद्ध्या गृहीतबाष्पादेः साध्यनिश्चयाहेतुत्वदर्शनादित्यर्थः । एवं मूलोच्छेदित्वं वैषम्यमुपपादितम् ।

एवं पूर्वं परोक्तं परत्वाद्वैषम्यं दूषितम् ॥ अथास्मात् परस्य कस्यचिद्बाधकस्याभावं ब्रह्मप्रतिपादकशास्त्रस्य प्रत्यक्षाद्वैषम्यं शङ्कते अथोच्येत इत्यादिना । बाधदर्शनाभावरूपं वैषम्यं शास्त्रस्य वक्तुं प्रत्यक्षविषयस्य बाधदर्शनमाह शास्त्रेति । प्रत्यक्षविषयात् शास्त्रविषयस्य वैषम्यमाह शास्त्रविषयस्येति । पाश्चात्यबाधादर्शनाभ्युपगमेन दूषयति तदयुक्तमिति । कुत इत्यत्राह अबाधितस्येति । "यस्य दुष्टं कारणं यस्य च

एतदुक्तं भवति—यथा सकलेतरकाचादिदोषरहित[1]पुरुषान्तरागोचरगिरिगुहासु वसतस्तैमिरिकजनस्य [अज्ञातस्वतिमिरस्य] [ज्ञातस्वतिमिरस्य] सर्वस्य तिमिरदोषाविशेषेण द्विचन्द्रज्ञानमविशिष्टं जायते। न तत्र बाधकप्रत्ययोऽस्तीति न तन्मिथ्या न भवतीति तद्विषयभूतं चन्द्रद्वित्वमपि (द्विचन्द्रत्वमपि) मिथ्यैव। दोषो ह्ययथार्थज्ञानहेतुः। तथा ब्रह्मज्ञानमविद्यामूलत्वेन बाधकज्ञानरहितमपि स्वविषयेण ब्रह्मणा सह मिथ्यैव—इति।

भवन्ति चात्र प्रयोगाः—विवादाध्यासितं ब्रह्म मिथ्या, अविद्यावत उत्पन्नज्ञानविषयत्वात् प्रपञ्चवत्। ब्रह्म मिथ्या, ज्ञानविषयत्वात्, प्रपञ्चवत्। ब्रह्म मिथ्या, असत्यहेतुजन्यज्ञानविषयत्वात्, प्रपञ्चवदेव।

न च वाच्यम्-स्वाप्नस्य हस्त्यादिविज्ञानस्यासत्यस्य परमार्थशुभाशुभप्रतिपत्तिहेतुभाववत् अविद्यामूलत्वेना-

मिथ्येति प्रत्ययः, स एवासमीचीनः प्रत्ययः" इति[हि]नीतिविदः। अतो दुष्टमूलत्वबाधकप्रत्ययौ प्रत्येकं मिथ्यात्वसाधकौ॥ व्याहतमिदम्, यत् अबाधितस्याप्यपारमार्थ्यनिश्चय इति; अपरमार्थत्वेन निश्चितत्वं हि बाधितत्वमित्यत्राह एतदुक्तमिति। अज्ञातस्वतिमिरस्येति पदं क्वचिद्दृश्यते। दोषज्ञाननिबन्धनपरोक्षबाधकज्ञानोदयव्युदासः प्रयोजनम्। [2]ज्ञातस्वतिमिरस्येति तु पाठो लेखकस्खलनकृतः। स हि पुरुषान्तरागोचरत्वोक्तिविरुद्धः। बाधकाभावे कथं मिथ्यात्वमित्यत्राह दोषो हीति। भ्रान्तिसमानाश्रयबाधकज्ञानाभावेऽपि पुरुषान्तरज्ञानेन मिथ्यात्वनिश्चयो न व्याहत इत्यर्थः। तिरश्चां यावज्जीवं बाधोदयाभावेऽपि देहात्मधीर्मिथ्यार्थविषया; तस्याः संसर्गरूपदोषमूलत्वात्। बाह्यभ्रमेषु स्पष्टोदाहरणस्य विवक्षितत्वादेव [3]तदनुक्तिः॥ ननु तिरश्चां देहात्मभ्रमो नास्माकं प्रत्यक्षः; कार्यानवगमात् भ्रमकारणदोषोऽपि दुरवगमः; तत् कथं दोषमूलत्वसम्भावनाज्ञानमात्रेण मिथ्यात्वनिश्चयः॥ उच्यते। अस्मदादेः शास्त्रश्रवणात्पूर्वं देहात्मभ्रमदर्शनात्, तेषां च शास्त्राधिकाराभावात् देहात्मभ्रमस्तन्मूलदेहसंसर्गरूपदोषवत्त्वं चानुमीयते; दोषमूलत्वनिश्चयान्मिथ्यात्वनिश्चयः। एवं तैमिरिकजनस्य तिमिरान्वये आप्तवाक्यादिकमन्वेष्टव्यम्; ततो मिथ्यात्वनिश्चयः। एवं सपक्षे शिक्षितमर्थं दार्ष्टान्तिके निगमयति तथेति। ज्ञानमिथ्यात्वं परमताभ्युपगमादुक्तम्। पाश्चात्यबाधादर्शनमुत्तरत्र निरसिष्यते। शास्त्रस्याविद्यामूलत्वाभ्युपगमेऽनिष्टं प्रसञ्जयति भवन्तीत्यादिना। व्याप्तिप्रदर्शनवचनत्वात् प्रयोगा इत्युक्तम्। प्रतिज्ञादृष्टान्तहेतुरूपेण कथनम्, 'अनिष्टप्रसङ्ग एवमपि न्याय्यः' इति ज्ञापनार्थम्। ज्ञानविषयत्वमात्रमेको हेतुः, एको दुष्टपुरुषज्ञानविषयत्वम्, एको मिथ्याभूतसामग्रीजन्यज्ञानविषयत्वमिति भिदा। पूर्वं सपक्षीभूत एवार्थोऽत्र सपक्ष इत्येवकारार्थः॥ नन्वसत्यहेतुजन्यधीविषयत्वमन्यतरासिद्धम्। प्रपञ्चवदिति दृष्टान्तश्च साध्यविकलः। कथमेवं प्रसङ्गः॥ उच्यते। 'ब्रह्मणोऽननुभूतित्वं त्वदुक्त्यैव प्रसज्यते' इतिवत् प्रसञ्जकप्रसञ्जनीयधर्मव्याप्तिं परमतेनाभ्युपगम्य दूषणमुक्तमिति न विरोधः।

नासत्यहेतुजन्यज्ञानविषयत्वादसत्यत्वं ब्रह्मणः; असत्यादपि सत्यप्रतिपत्तिर्दृश्यत इति शङ्कामनूद्य परिहरति न चेत्यादिना। किमसत्यस्य सत्योत्पत्तिहेतुत्वानुपपत्तिः, उत तज्ज्ञप्तिहेतुत्वानुपपत्तिः इति विकल्पमभिप्रेत्य उत्पत्तिहेतुत्वे ज्ञप्तिहेतुत्वे चोदाहरणानि दर्शितानि। तत्र स्वाप्नविषयाणां सत्यत्वेऽभिमतेऽपि

---

1 इकोगुणसूत्रभाष्यकैयटयोः, अन्यदेवेदं परिभाषान्तरमित्यत्र अन्तरपदं अन्यादिपदापर्यायतया विशेषार्थकमुक्तम्। तद्वदत्राप्यपुनरुक्तिर्भाव्या। 2 ज्ञातेति। अत्र भावप्रकाशिकाभाष्यार्थदर्पणौ द्रष्टव्यौ। पूर्वं क्वचिद्दृश्यत इत्युक्त्या पाठद्वयरहितोऽपि भाष्यपाठ ऊह्यते। 3 तदनुक्तिः—भाष्ये उक्तदेहात्मभ्रमानुक्तिः न तदभावात्; किंतु बाह्यभ्रमविशेषोक्तिः स्पष्टत्वादित्यर्थः।

सत्यस्यापि शास्त्रस्य परमार्थभूतब्रह्मविषयप्रतिपत्तिहेतुभावो न विरुद्ध इति; स्वाप्नज्ञानस्यासत्यत्वाभावात्। तत्र हि विषयाणामेव मिथ्यात्वम्; तेषामेव हि बाधो दृश्यते; न ज्ञानस्य। न हि-मया स्वप्नवेलायामनुभूतं ज्ञानमपि न विद्यत इति कस्यचिदपि प्रत्ययो जायते। दर्शनं तु विद्यते, अर्था न सन्तीति हि बाधकप्रत्ययः। मायाविनो मन्त्रौषधादिप्रभवं मायामयं ज्ञानं सत्यमेव प्रीतेर्भयस्य च हेतुः; तत्रापि ज्ञानस्याबाधितत्वात्। विषयेन्द्रियादिदोषजन्यं रज्ज्वादौ सर्पादिविज्ञानं सत्यमेव भयादिहेतुः। सत्यैव अदष्टेपि स्वात्मनि सर्पसन्निधानादष्टबुद्धिः। सत्यैव शङ्काविषबुद्धिर्मरणहेतुभूता। वस्तुभूत एव जलादौ मुखादिप्रतिभासो वस्तुभूतमुखगतविशेषनिश्चयहेतुः। एषां संवेदनानामुत्पत्तिमत्त्वादर्थक्रियाकारित्वाच्च सत्यत्वमवसीयते।

हस्त्यादीनामभावेऽपि कथं तद्बुद्धयः सत्या भवन्तीति चेत्; नैतत्, बुद्धीनां सालम्बनत्वमात्रनियमात्। अर्थस्य प्रतिभासमानत्वमेव ह्यालम्बनत्वे अपेक्षितम्। प्रतिभासमानता च अस्त्येव दोषवशात्।

---

विषयासत्यत्वमभ्युपगम्य परिहरति स्वाप्नेति। ज्ञानस्य सत्यत्वमुपपादयति तत्र हीति। अवधारणं कथमित्यत्राह तेषामेवेति। ज्ञानस्याबाधं दर्शयति नहीति। कथं जायत इत्यत्राह दर्शनं त्विति। अन्यविषयो बाधो नान्यत्र सञ्चारयितुं युक्त इत्यर्थः। अत्रानेकोदाहरणप्रदर्शनं तत्तज्ज्ञानसामग्रीविशेषाणां सत्यत्वज्ञापनार्थम्। तच्च ज्ञानसत्यत्वनिर्वहणार्थम्। स्वप्नकारणं पूर्वानुभवसंस्कारः सत्यः। प्रसिद्धत्वात् तदनुक्तिः। मायाविन इति। अत्र मन्त्रौषधादिप्रभवमित्यनेन कारणसत्यत्वमुक्तम्। मायामयम्—मिथ्याविषयमित्यर्थः; विचित्रविषयं वा। विषयेत्यादि। विषयदोषः सादृश्यादिः; इन्द्रियदोषः काचादिः; आदिशब्देन देशगतदूरत्वादिदोष उच्यते। दोषश्च सत्यः। सत्यैवेति। सर्पसंनिधानं कारणं सत्यम्; दष्टबुद्धिश्च सत्या; शङ्काविषबुद्धावपि सामग्री सत्या; निर्विषोरगदंशनं वा अन्धकारे अश्मलोष्टादिनिपीडनं वा सत्यं हि भवति। वस्त्विति। जलादि सत्यम्। तत्कृतचाक्षुषतेजःप्रतिहतिश्च सत्या। संवेदनानां सत्यत्वे निश्चिते ह्युक्तोदाहरणेषु सत्यात्सत्यप्रतिपत्तिरित्यत्राह एषामिति। उत्पत्तिमत्त्वमर्थक्रियाकारित्वं च द्वयमपि प्रत्येकं सत्यत्वे साधकम्। न हि शुक्तौ रजतमुत्पत्तिमत्; न च कार्यकरम्। अथ ज्ञानसत्यत्वं विषयसत्यताव्याप्तमिति तन्निवृत्त्या ज्ञानसत्यत्वनिवृत्तिरिति शङ्कते हस्त्यादीनामिति। अभावे—प्रतिपन्नोपाधौ तथात्वाभावे। ज्ञानसत्यत्वं सालम्बनत्वमात्रव्याप्तम्; अबाधितत्वादिति परिहरति नैतदिति। सालम्बनत्वमात्रशब्देन सत्यालम्बनत्वव्यावृत्तिः। मिथ्याभूतस्यालम्बनत्वं कथमित्यत्राह अर्थस्येति। आलम्बनम्—विषयः। प्रतिभासमानत्वमेव ह्यालम्बनत्वेऽपेक्षितमिति। प्रतिभासमानत्वमेव विषयत्वमित्यर्थः। अविद्यमानस्याप्यतीतानागतादेः प्रतिभासमानस्यालम्बनत्वदर्शनात्, विद्यमानस्याप्यप्रतिभासमानस्य तदभावाच्चेति भावः। पक्षे प्रतिभासमानत्वमप्यस्तीत्याह प्रतिभासेति। प्रतिभासमानता—संविदपेक्षया प्रतिसम्बन्धित्वम्॥ अविद्यमानस्य विद्यमानतया भासनात् तेन रूपेणासत्यता। तथा साक्षादवभासमानो विषयोऽपि ज्ञानहेतुः स्यात्; संप्रतिपन्नविद्यमानविषयवत् विद्यमानतया भासमानत्वाविशेषात्; तथासति असत्यात्सत्योत्पत्तिरित्यत्राह दोषवशादिति। अविद्यमानस्य विद्यमानतया भासनहेतुर्दोष एव; न त्वविद्यमानो विषयः। अविद्यमानो विषयो न ज्ञानस्य हेतुतयाऽपेक्षितः; केवलं विषयतया। विद्यमानस्तु तथात्वेन भासमानो विषयतया हेतुतया चापेक्षितः। अतो वस्तुतोविद्यमानत्वमेव विषयस्य ज्ञानहेतुत्वे उपाधिः। नियतपूर्वकालवर्तिनो हि हेतुत्वं दृष्टम्। तस्मादविद्यमानस्य हेतुत्वायोगात् दोष एव हेतुरिति नासत्यात्सत्योत्पत्तिरित्यर्थः। प्रतिभासमानत्वे द्वयोरप्यविशिष्टे

स तु बाधितोऽसत्य इत्यवसीयते । अबाधिता हि बुद्धिः सत्यैवेत्युक्तम् ॥

रेखया वर्णप्रतिपत्तावपि नासत्यात्सत्यबुद्धिः, रेखायाःसत्यत्वात् ॥ ननु वर्णात्मना प्रतिपन्ना रेखा वर्णबुद्धिहेतुः, वर्णात्मता त्वसत्या ॥ नैवम्; वर्णात्मताया असत्याया उपायत्वायोगात् ।

---

कथमन्यतरस्यासत्यत्वनिश्चय इत्यत्राह स त्विति । बुद्धिरप्यसत्या किं न स्यादित्यत्राह अबाधितेति । विषयासद्भावेन ज्ञानस्यासत्यताकथनं कालात्ययापदिष्टमित्यर्थः ॥

ननु स्वप्नादिविषयज्ञाने किं ज्ञानमात्रं शुभाशुभप्रतिपत्तिहेतुः, उत ज्ञानविशेषः? ज्ञानमात्रपक्षेऽतिप्रसङ्गः । ज्ञानविशेषश्चेत्, कस्तस्यावच्छेदकः? विषयश्चेत्, किं विषय उपलक्षणतयाऽवच्छेदकः उत विशेषणतया? यदि विशेषणतया,— विशेष्येण सह कार्यान्वयि हि विशेषणम् अतो— हस्त्यादेरपि शुभाशुभप्रतिपत्तिहेतुत्वादसत्यात्सत्यप्रतिपत्तिः । यद्युपलक्षणतया,— उपलक्ष्यबहिर्भूतः उपलक्ष्यप्रतीत्युपायो ह्युपलक्षणम् । अतो — विषयस्य ज्ञानप्रतिपत्तिहेतुत्वादसत्यात्सत्यप्रतिपत्तिः ॥ ज्ञानानां तत्तद्व्यवहारानुगुण्यलक्षणस्वभावविशेषैर्व्यावृत्तत्वान्नातिप्रसङ्ग इति न च वाच्यम्; व्यवहारानुगुण्यमात्रस्य व्यावर्तकत्वेऽतिप्रसङ्गात् । व्यवहारविशेषानुगुण्यस्य व्यावर्तकत्वे तद्विशेषश्च तत्संग्राहकविषयाधीन इति व्यवहारावच्छेदकतया अनृतस्य सत्यहेतुत्वमिति ॥

उच्यते — व्यावृत्तमेव ज्ञानं शुभाशुभाद्यनुमापकम्; व्यावृत्तिश्च स्वा(सा आ)लम्बनेन । अविद्यमानस्याप्यालम्बनत्वं दोषवशादित्युक्तम् । [1]अन्यथाख्यातिपक्षेऽप्यालम्बनसत्यता सर्वज्ञानानामिष्यत एव; विशेषणविशेष्यतत्संसर्गाणां क्वचित्सत्यत्वात् । विशेषणविशेष्ययोस्तथात्वनिर्वाहकः संसर्गः स्वस्य तदीयत्वे संसर्गान्तरनिरपेक्षः । स तु संसर्गः पुरोवर्तिनि भ्रमाधिष्ठाने प्रतीयमानः पुरोवर्त्यपेक्षया स्वयं स्वस्य संसर्गरूपत्वनिर्वहणासामर्थ्यात् पुरोवर्तिनि नास्तीति पुरोवर्त्यपेक्षया संसर्गोऽपरमार्थः; न तु स्वरूपेण । आलम्बनत्वे च संनिहितस्वरूपमनपेक्षितम्, असंनिहितस्याप्यालम्बनत्वदर्शनात् । अतः सत्येन रूपेणालम्बनत्वमिति हस्त्यारोहणादिज्ञानान्यपि सत्यभूतहस्त्याद्यालम्बनावच्छिन्नानि परमार्थभूतया स्वप्नावस्थयाऽवच्छिन्नत्वाज्जाग्रदवस्थाज्ञानविलक्षणानि शुभाशुभप्रतिपत्तिनिमित्तानि । अतो नातिप्रसङ्गः, नासत्यात्सत्यप्रतिपत्तिश्च । न च प्रतिबिम्बात् बिम्बानुमितावसत्यात्सत्यप्रतिपत्तिः; प्रतिबिम्बप्रतिभासस्य सत्यस्यैवानुमापकत्वात् । परमार्थतस्तु तत्र नानुमापकानुमेयविभाग, [2]दर्पणादिप्रतिहतैश्चाक्षुषतेजोभिर्बिम्बस्यैव दर्पणस्थतया गृह्यमाणत्वात् । अतः क्वचिदर्थात् प्रतिपत्तिः, क्वचित् तत्प्रतिभासात् तत्तदर्थप्रतिपत्तिरिति नासत्यस्य लिङ्गत्वम् । किञ्च असत्यात्सत्यप्रतिपत्तिः किं भवत्पक्षेणोच्यते, उतास्मत्पक्षेण । न तावत् भवत्पक्षे सा सिध्यति; शुभाशुभयोरपि मिथ्यात्वेन असत्यादसत्यप्रतिपत्तिरेव हि स्यात् । न चास्मत्पक्षे; यथार्थख्यात्यभ्युपगमात् सत्यादेव सत्यप्रतिपत्तेः । एषां स्वाप्नहस्त्यादिज्ञानादीनां शुभाशुभप्रतिपत्त्यादिहेतुभूतानां षण्णामुदाहरणज्ञानानां संस्कारादिसत्यसामग्रीकत्वं स्पष्टम्; ज्ञानानां सत्यत्वमुपपादितम् । अत उत्पत्तौ ज्ञप्तौ च हेतुसत्यत्वं सिद्धम् ॥

अथ ज्ञानव्यतिरिक्तासत्यहेतुना सत्यप्रतिपत्तौ हेतुसत्यत्वमुपपाद्यते रेखयेत्यादिना । हेतोरसत्यत्वं दर्शयँश्चोदयति नन्विति । परिहरति नैवमिति । वर्णात्मकता किं सत्तया वर्णप्रतिपत्तेरुपायः, उत प्रमिततया,

---

1 अविद्यमानत्वेऽप्यसत्यत्वाभावात् नासत्यात् सत्यसिद्धिरिति विशदयति अन्यथेति ।

2 सिद्धान्ते प्रतिबिम्बस्य बिम्बातिरिक्तस्यानभ्युपगम इह स्पष्टः ।

असतो निरुपाख्यस्य ह्युपायत्वं न दृष्टमनुपपन्नञ्च । अथ तस्यां वर्णबुद्धेरुपायत्वम्, एवं तर्ह्यसत्यात्सत्यबुद्धिर्न स्यात्; बुद्धेस्सत्यत्वादेव । उपायोपेययोरेकत्वप्रसङ्गश्च, उभयोर्वर्णबुद्धित्वाविशेषात् । रेखाया अविद्यमानवर्णात्मनोपायत्वे च एकस्यामेव रेखायामविद्यमानसर्ववर्णात्मकत्वस्य सुलभत्वादेकरेखादर्शनात्सर्ववर्णप्रतिपत्तिः स्यात् । अथ पिण्डविशेषे देवदत्तादिशब्दसङ्केतवत् चक्षुर्ग्राह्यरेखाविशेषे श्रोत्रग्राह्यवर्णविशेषसङ्केतवशात् रेखाविशेषो वर्णविशेषबुद्धिहेतुरिति—हन्त तर्हि सत्यादेव सत्यप्रतिपत्तिः, रेखायाः सङ्केतस्य च सत्यत्वात् ।

रेखागवयादपि सत्यगवयबुद्धिः सादृश्यनिबन्धना, सादृश्यञ्च सत्यमेव ।

न चैकरूपस्य शब्दस्य नादविशेषेणार्थभेदबुद्धिहेतुत्वेऽप्यसत्यात्सत्यप्रतिपत्तिः; नानानादाभिव्यक्तस्यैव शब्दस्य तत्तन्नादाभिव्यङ्ग्यस्वरूपेणार्थविशेषैस्सह संबन्धग्रहणवशादर्थभेदबुद्ध्युत्पत्तिहेतुत्वात् । शब्दस्यैकरूपत्वमपि न साधीयः; गकारादेर्बोधकस्यैव श्रोत्रग्राह्यत्वेन शब्दत्वात् ।

---

उत प्रतीततयेति विकल्पमभिप्रेत्याह असत इति । असत्यत्वात्सत्तयोपायत्वमनुपपन्नमित्यसत इति पदस्याभिप्रायः । असतः । सद्व्यतिरिक्तस्येत्यर्थः । असत्वादेव प्रमिततयोपायत्वं चानुपपन्नमिति निरुपाख्यशब्दाभिप्रायः । उपाख्या—प्रमितिः; तदविषयत्वं निरुपाख्यत्वम् । प्रतीतिविषयतयोपायत्वानुपपत्तिस्तु वक्ष्यते ॥ सत्ताप्रमित्योरभावेऽपि वर्णात्मतया उपायत्वमस्तीति कल्प्यते चेत्, तदनुपपन्नम्; व्याप्तिविरोधात् । व्याप्त्यनुगुणं हि कल्पनं प्रवर्तत इत्यभिप्रायेणाह अनुपपन्नं चेति । अथ भ्रान्तित प्रतीतायाः वर्णात्मतया वर्णप्रतिपत्तिहेतुत्वपक्षेऽपि बुद्ध्यंशस्य हेतुत्वे परस्यानुपपत्तिं दर्शयितुमाह अथेति । दूषयति एवं तर्हीति । कुत इत्यत्राह बुद्धेरिति । दूषणान्तरमाह उपायेति । तदुपपादयति उभयोरिति । बुद्ध्यंशस्य हेतुत्वे दूषणमुक्तम् । वर्णात्मतांशस्य हेतुत्वे सिंहावलोकितक्रमेण दूषणमाह रेखाया इति । अविद्यमानवर्णात्मना—अविद्यमानवर्णात्मत्वेनेत्यर्थः । अतिप्रसङ्गपरिहारार्थं शङ्कते अथेति । तत्रापि स्वमतसिद्धिमाह हन्तेति । तदुपपादयति रेखाया इति । उदाहरणान्तरं परिहरति रेखागवयादपीति ।

स्फोटवादावलम्बनेनोच्यमानमुदाहरणान्तरं परिहरति नचैकरूपस्येत्यादिना । 'नादैः स्फोट्यते इति व्युत्पत्त्या स्फोट एकरूपः शब्दः; तदभिव्यञ्जकनादविशेषाः बहवः; कत्वखत्वादिभेदो व्यञ्जकगतः शब्दे आरोपितोऽर्थविशेषप्रतिपत्तिहेतुः; तत्रासत्यात्सत्योत्पत्तिः' इत्यपि न युक्तमित्यर्थः । कुत इत्यत्राह नानानादेति । कत्वखत्वादिविशेषान्वितत्तन्नादकृतोऽभिव्यक्तिविशेषः सत्यः; तद्विशिष्टः सत्यःशब्दोऽर्थप्रतिपत्तिहेतुरित्यर्थः । यद्यपि कत्वखत्वादिवैशिष्ट्यं शब्दस्यारोपितम्—तथापि तज्ज्ञानं सत्यमेवार्थप्रतिपत्तिहेतुः । ज्ञानस्य च सत्येनैवालम्बनेन स्वाभ्युपगमहेतुत्ववृत्तिरनुसन्धेया । कत्वाद्यालम्बनाभिव्यक्तिविशिष्टरूपेण स्फोटस्यार्थप्रतिपत्तिहेतुत्वसंभवात् कत्वादिवैशिष्ट्यस्यासत्यस्यार्थस्य नार्थप्रतिपत्त्युपयोगः । एवं शब्दस्यैकरूपत्वमभ्युपगम्य परिहृतम् । अथ तदनभ्युपगमेन परिहरति शब्दस्यैकरूपत्वमिति । कुत इत्यत्राह गकारादेरिति । एवकारेणैकरूपः शब्दो व्यावर्त्यते; न तु दुन्दुभिशब्दादिः । स त्वनभिव्यक्तविशेषाकारो गकारादिरेव । "अथ गौरित्यत्र कः शब्दः? गकारौकारविसर्जनीया इति हि भगवानुपवर्षः" इति गकारादेरेव बोधकत्वं व्याचख्युः ॥ ननु "तस्मिंस्तस्मिंस्तु तन्मात्रं तेन तन्मात्रता स्मृता" इति शास्त्रवशादेकरूपं शब्दमात्रमभ्युपगन्तव्यम्; तत् कथं तत्प्रतिक्षेपः ॥ नैवम्; तन्मात्रावस्थसूक्ष्मभूतकारणगुणानामिन्द्रियग्राह्यत्वायोगात् । पञ्चीकृतभूतगुणानामेव ह्यैन्द्रियकत्वम् । किञ्च, दध्यवस्थायां दुग्धावस्थेव तन्मात्रावस्था । आकाशगुणभूतं शब्दतन्मात्रं स्थूलाकाशसृष्टेः पश्चान्न विद्यते ।

यथा—महाभूततृतीये तेजसि शुक्लकृष्णादिवर्णव्यतिरेकेण रूपतन्मात्रं किञ्चिदस्ति, शुक्लकृष्णादयश्चाभिव्यञ्जकगताः एकरूपे आरोपिता इति च वक्तुमयुक्तम्—एवमिदानीमेकरूपशब्दस्य विद्यमानत्वं तत्राभिव्यञ्जकगतानां कत्वखत्वादीनामारोपितत्वञ्च सर्गप्रतिपादकशास्त्रानुसारिभिरभ्युपेतुमयुक्तम् ।

अत्रायमभिसन्धिः—वर्णातिरिक्त एकरूपः शब्दः किं स्फुटप्रतिपन्नत्वादभ्युपगम्यते, उत कल्पनावशात् । न प्रथमः, गकारादिव्यतिरिक्तस्य कस्यचिदनुपलम्भात् । न द्वितीयः, कल्पकाभावादिति ॥ ननु वर्णानां वाचकत्वानुपपत्तेः, एकं पदमित्यादिप्रत्ययस्य वर्णेष्वनुपपत्तेः, भिन्नेषु वर्णेषु शब्दः शब्द इत्यनुवृत्तिबुद्धिवशाच्च वर्णातिरिक्तपदस्फोटसिद्धिः; तत एव न्यायात् पदसङ्घातातिरिक्तवाक्यस्फोटसिद्धिश्चेत्यत्राह गकारादेरिति । गकारादिवर्णानामेव समुदितानां वाचकत्वम् । एकं पदम्, एकं वाक्यमिति प्रत्ययश्च वर्णसमुदायविषयः । शब्दः शब्द इत्यनुवृत्तिबुद्धिश्च श्रोत्रग्राह्यत्वोपाधिनिबन्धना । अतः कल्पकानामन्यथासिद्धत्वान्नैकरूपशब्दसिद्धिरित्यर्थः ॥

ननु न कल्पकान्यथासिद्धिः । तथाहि—न तावदेकैकस्य वर्णस्य वाचकत्वं वर्णान्तरवैयर्थ्यात्; गकारमात्रेण गोगवयगजाद्यप्रतिपत्तेश्च । नापि वर्णसमुदायो वाचकः; क्रमोच्चारितश्रुतानां वर्णानां यौगपद्याभावेन वृक्षादीनामिव समुदायभावानुपपत्तेः । न च पूर्वपूर्ववर्णश्रवणजनितसंस्कारसचिवोऽन्त्यवर्णो वाचक इति युक्तम्; वर्णानुभवजन्यसंस्काराणामनुभूतवर्णविषयस्मरणहेतुतयाऽननुभूतार्थान्तरप्रतीतिहेतुत्वाभावेनाकिञ्चित्करत्वात् । तत्साचिव्यविरहितान्त्यवर्णस्य च अर्थप्रत्यायकत्वायोगात् । तथा वर्णानां भिन्नत्वात् एकं पदमिति प्रत्ययश्च तदतिरिक्तार्थविषयो भवितुमर्हति । न च वनसेनादिप्रत्ययवत् समुदायविषयत्वमेकत्वप्रत्ययस्य युक्तम्, एकप्रदेशसम्बन्धित्वादिवत् एकीकारनिमित्तोपाध्यभावात् ॥ एकस्मृत्यारूढत्वमुपाधिरिति चेन्न—द्वे पदे, त्रीणि पदानि, बहूनि वाक्यानीत्यनेकेषामेकप्रत्ययारूढत्वदर्शनात् । न चैकार्थावच्छिन्नवर्णसमुदाय एकं पदम्; वर्णानां वाचकत्वानुपपत्तेरेवैकार्थप्रतिपादनाभावात् । किञ्च बहुवर्णेषु अयं शब्दोऽयं शब्दोऽयं शब्द इत्यनुवृत्तः शब्दशब्दो वर्णातिरिक्तार्थविषयो युक्तः । घटकरकापवरकादिभेदेऽप्येकार्थविषयस्याकाशशब्दस्य हि घटकरकाद्यतिरिक्तार्थविषयत्वं दृष्टम् । न च श्रोत्रग्राह्यत्वोपाधिना शब्दशब्दानुवृत्तिरिति युक्तम्, श्रोत्रस्य श्रोत्रग्राह्यत्वायोगेन श्रोत्रग्राह्यताया अपि श्रोत्रेण ग्रहीतुमशक्यत्वात् । मानान्तरेण श्रोत्रग्राह्यताप्रतीतौ अविलम्बितशब्दसाक्षात्कारानुपपत्तिः । अतः कल्पकान्यथासिद्ध्यभावाद्वर्णातिरिक्तः शब्दः स्फोट इति ।

अत्रोच्यते । न तावत् वर्णानां वाचकत्वानुपपत्त्या स्फोटसिद्धिः; तेषां स्फोटाभिव्यञ्जकत्वेऽपि चोद्यपरिहारयोस्तुल्यत्वाल्लाघवन्यायेन वर्णानामेव वाचकत्वाश्रयणस्य न्याय्यत्वात् । तथा हि—न तावदेकैकवर्णः स्फोटव्यञ्जकः, द्वितीयवर्णवैयर्थ्यात्; गकारमात्रेण गवयादिपदस्फोटाभिव्यक्तिप्रसङ्गाच्च । नापि वर्णसमुदायो व्यञ्जकः; क्रमोच्चरितश्रुतानां वर्णानां यौगपद्याभावेन समुदायभावानुपपत्तेः । न च पूर्वपूर्ववर्णजनितसंस्कारसचिवोऽन्त्यवर्णो व्यञ्जकः, वर्णानुभवजन्यसंस्काराणामनुभूतवर्णस्मृतिमात्रहेतुतयाऽननुभूतस्फोटप्रतीतिहेतुत्वायोगेन तत्संस्कारानुपकृतस्यान्त्यवर्णस्य च तदभिव्यञ्जकत्वायोगात् । यद्युच्येत—पदं तावत् प्रतीयते । अतस्तत्प्रतीत्यनुरूपं कारणं कल्प्यम् । क्रमभाविनामपि संस्काराणां युगपत्कार्यकरत्वं युक्तम्; क्रमदृष्टयोरपि घटयोः तौ घटाविति स्मरणदर्शनात् । अतो युगपद्भाविपूर्ववर्णस्मरणसचिवोऽन्त्यवर्णो वा

अतोऽसत्यात् शास्त्रात् सत्यब्रह्मविषयप्रतिपत्तिर्दुरुपपादा ।

ननु न शास्त्रस्य गगनकुसुमवदसत्यत्वम्; प्रागद्वैतज्ञानात्सद्बुद्धिबोध्यत्वात् । उत्पन्ने तत्त्वज्ञाने ह्यसत्यत्वं शास्त्रस्य । न तदा शास्त्रं निरस्तनिखिलभेदचिन्मात्रब्रह्मज्ञानोपायः । यदोपायः, तदाऽस्त्येव शास्त्रम्, अस्तीति बुद्धेः ॥ नैवम्; असति शास्त्रे अस्ति शास्त्रमिति बुद्धेर्मिथ्यात्वात् । ततः किम्? इदं ततः । मिथ्याभूतशास्त्रजन्यज्ञानस्य मिथ्यात्वेन तद्विषयस्यापि ब्रह्मणो मिथ्यात्वम्; यथा धूमबुद्ध्या गृहीतबाष्पजन्याग्निज्ञानस्य मिथ्यात्वेन तद्विषयस्याग्नेरपि मिथ्यात्वम् । पश्चात्तनबाधादर्शनञ्चासिद्धम्; शून्यमेव तत्त्वमिति वाक्ये तस्यापि बाधदर्शनात् । तत्तु भ्रान्तिमूलमिति चेत्—एतदपि भ्रान्तिमूलमिति त्वयैवोक्तम् । पाश्चात्य-

---

युगपत्स्मर्यमाणसर्ववर्णसमुदायो वा स्फोटाभिव्यञ्जक इति—एवं तर्हि स्फोटाभिव्यञ्जकतया अभ्युपेतायाः सामग्र्या अर्थाभिव्यञ्जकत्वमास्थीयताम्; चोद्यपरिहारयोस्तुल्यत्वात्; अन्यथासिद्धस्यार्थान्तरकल्पकत्वायोगात्; वर्णानामेव वाचकत्वसंभवे तदतिरिक्तकल्पनानुपपत्तेर्लाघवन्यायस्य बलीयस्त्वाच्च । वर्णानां भिन्नत्वेऽपि युगपद्बुद्धिस्थैकविभक्त्यन्तानेकवर्णसमुदायविषयतया पदैकत्वबुद्धिरपि नार्थान्तरकल्पिका । न चार्थैकत्वात् पदैकत्वं पदैकत्वादर्थैकत्वमित्यन्योन्याश्रयः; एकविभक्त्यन्तवर्णसमुदायस्यैकपदत्वनिश्चयात् । "सुप्तिङन्तं पदम्" इति हि पदनिष्कर्षः । तस्य चोक्ताभिप्रायत्वे सति अव्याप्तिर्न स्यात् । एकव्युत्पत्तिसिद्धैकार्थप्रतीत्युपयुक्तवर्णसमुदायस्य वा पदत्वम् । बहुवर्णेषु अयं शब्दोऽयं शब्दोऽयं शब्द इति प्रत्ययोऽपि श्रोत्रग्राह्यत्वोपाधिनिबन्धनत्वादन्यथासिद्ध इति नार्थान्तरसिद्धिः । न च श्रोत्रग्राह्यतया अपि श्रोत्रेण ग्रहणापेक्षा, यथा चाक्षुषाणां धवलिमनीलिमपीतिम्नां चाक्षुषत्वज्ञाने न चक्षुरपेक्षा । इदं चाक्षुषम्, इदं चाक्षुषमिति व्यवहारश्च चाक्षुषत्वज्ञाननिबन्धन एव । प्रमाणान्तरावगतचक्षुश्श्रोत्राद्यन्वयव्यतिरेकानुविधायिज्ञानगोचरत्वेन चाक्षुषश्रावणत्वादिज्ञानम् । न हि सहसैव शब्दोऽयमिति जानन्ति । प्रथमं गकारादिरूपेणैव शब्देऽवसिते व्युत्पन्नशब्दस्मरणपूर्वकमेव शब्द इत्यवगम्यते । अतः शब्देन स्मरणकृतविलम्बवत् श्रोत्रग्राह्यता(श्रोत्रा)नुमानविलम्बोऽप्यभ्यासपाटवकृतात् शैघ्र्यान्न विविच्यते । अतो वर्णसमुदाय एव पदम्, पदसमुदाय एव वाक्यमिति स्थितम् ।

असत्यात्सत्यप्रतिपत्तिनिराकरणमुपसंहरति अत इति । सत्यप्रतिपत्तिहेतुषु सत्यतया अभिमतेषु यादृशं सत्यत्वम्, तादृशं सत्यत्वं शास्त्रस्याप्यस्तीत्यभिप्रायेण चोदयति नन्विति । गगनकुसुमवदिति युक्तिबाधो ह्युक्तः । न त्विदानीमेव लौकिकपुरुषैर्नास्तीति प्रतिपन्नत्वम् । अतः तादृशमसत्यत्वं नेत्यर्थः । हेतुमाह सद्बुद्धिबोध्यत्वादिति । सदिति बोध्यत्वमेव कार्यकरत्वानुगुणम्; न सत्यत्वमित्यर्थः । तर्हि सदद्वैतभङ्गः स्यादित्यत्राह उत्पन्न इति । तर्हि न बोधकत्वमित्यत्राह न तदेति । परिहरति नैवमिति । नैवम्—उपायकालेऽपि सत्यत्वं नास्तीत्यर्थः । ज्ञानस्य मिथ्यात्वं मिथ्यार्थविषयत्वात् । ज्ञानस्य दोषमूलत्वाद्विषयमिथ्यात्वे निदर्शनमाह यथेति । पूर्वं पश्चात्तनबाधादर्शनमभ्युपेत्य दूषणमुक्तम् । इदानीं तदेव नास्तीत्याह पश्चादिति । तदुपपादयति शून्यमिति । तद्वाक्यं तत्प्रामाण्यमपि भ्रान्तिसिद्धमिति शङ्कते तत्त्विति । तुल्यत्वमाह एतदपीति । पाश्चात्यबाधादर्शनस्य प्रामाण्यहेतुत्ववचनं सर्वशून्यवादिन एव साधकम्; ततः परं निषेध्याभावेन निषेधानुदयादित्याह पाश्चात्येति । प्रामाण्यादीनां दोषमूलत्वं द्वयोरपि तुल्यम्; पाश्चात्यबाधादर्शनं तु शून्यवादिनोऽधिकमित्यर्थः ॥ सर्वशून्यवादिनोऽपि परो निषेधोऽस्ति; सर्वमस्तीति वचनं हि तन्निषेध इति चेत्—तर्हि प्रपञ्चमिथ्यात्ववचनस्यापि प्रपञ्चसत्यतावचनं निषेधः स्यात् । नास्तीति वचनमेव निषेध इति चेत्—तत्तु शून्यवादिन एवेति

बाधादर्शनं तु तस्यैवेत्यलमप्रतिष्ठितकुतर्कपरिहसनेन ॥

यदुक्तम्—वेदान्तवाक्यानि निर्विशेषज्ञानैकरसवस्तुमात्रप्रतिपादनपराणि, "सदेव सोम्येदमग्र आसीत्"

---

भावः । इदञ्च वेदाप्रामाण्यं मृषावादिनां सौगतानां च समानम् । यदाहुः—

"वेदोऽनृतो बुद्धकृतागमोऽनृतः प्रामाण्यमेतस्य च तस्य चानृतम् ।
बोद्धाऽनृतो बुद्धिफले तथाऽनृते यूयं च बौद्धाश्च समानसंसदः ॥" इति ।

ननु विषयसत्यत्वरूपं शास्त्रप्रामाण्य विद्यत इति महदिह(दं) वैषम्यमस्माकमिति चेन्न । किं कतिपयविषयसत्यत्वं विवक्षितम्, उत कृत्स्नविषयसत्यत्वम् । कतिपयविषयसत्यत्वं बुद्धागमस्याप्यस्ति; संवित्स्वयम्प्रकाशत्वादेः सम्प्रतिपन्नत्वात् । कृत्स्नविषयसत्यत्वं तु श्रुतेरपि त्वया न स्वीकृतमिति । किञ्च विषयसत्यत्वं दुर्वचम्; सत्यतयाऽभ्युपेतस्य ब्रह्मणः प्रमाणविषयत्वानभ्युपगमात् ।

यत्तु 'आदित्यो यूपः' इत्यत्र यूपादित्यैक्याप्रतिपादनं तात्पर्यलिङ्गाभावात्, न तु प्रत्यक्षप्राबल्यादित्युच्यते—तत्र तात्पर्यलिङ्गाभावोऽभ्युपेत एव । तेन प्रत्यक्षविरुद्धार्थप्रतिपादनाक्षमत्वमवर्जनीयमापतति । न हि वेदान्तिभिरर्थवादादेरन्यपरत्वात् स्वार्थे प्रामाण्यं त्यज्यते । मन्त्रार्थवादानामपि स्वार्थे प्रामाण्यस्य भवद्भिरेवोपपादितत्वात् । अतः स्तुतिपरत्वात् यूपादित्यैक्याप्रतिपादनमित्यपसिद्धान्तः ॥ अर्थवादानां स्वार्थे प्रामाण्यमस्तीति कथं तद्यूपादित्यैक्याप्रति पादनमितिचेत्—उच्यते । प्रमाणाविरोधश्च तात्पर्यलिङ्गम् । उपक्रमोपसंहारादिष्वपूर्वत्वमपि तात्पर्यलिङ्गतया ह्युक्तम्, "अभ्यासोऽपूर्वता फलम्" इति । अपूर्वत्वं साधकबाधकप्रमाणागोचरत्वम् । यथाऽऽहुः, "असंनिकृष्टवाचा[1] च द्वयमत्र जिहासितम् । ताद्रूप्येण परिच्छित्तिस्तद्विपर्ययतोऽपि वा" इति ।

अतः प्रमाणान्तरागोचरत्वलक्षणं तात्पर्यलिङ्गमत्र नास्तीति यूपादित्यैक्याप्रतिपादनम्; न त्वर्थवादत्वेन स्वार्थे प्रामाण्याभावादिति । अतस्तात्पर्यलिङ्गाभावो नाम प्रत्यक्षादिविरोधे पर्यवसित इति शास्त्रं न तद्विरुद्धार्थप्रतिपादनक्षमम् । शास्त्रप्राबल्यनिरसनं परिसमापयति अलमिति । यद्वा, यत्तु प्रत्यक्षमित्यादिना न्यायमुखेन कृतं परपक्षप्रतिक्षेपमुपसंहरति अलमिति । प्रमाणविरुद्धस्तर्कः कुतर्कः । अत एवाप्रतिष्ठितत्वम् । स्वविरुद्धबौद्धमतोपयुक्तयुक्तिकथनात् परिहसनीयत्वम् ॥

परेण प्रत्यक्षादपि शास्त्रप्राबल्यं वदता प्रबलतयाऽभिमतं शास्त्रं पुरस्कृत्य पश्चात् तर्कः प्रतिपादितः । सिद्धान्ते तु प्रबलतयाऽभिमतलौकिकप्रमाणगतिं प्रथमं निरूप्य परोक्तदुस्तर्कं निरस्य लौकिकप्रमाणविरोधे शास्त्रप्राबल्यं च प्रतिक्षिप्तम् । शास्त्रस्य लौकिकप्रमाणविरुद्धार्थप्रतिपादनासामर्थ्योपपादनेन शास्त्रस्य सविशेषपरत्वं सामान्यतः सामर्थ्यात् सिद्धम् । विशेषेण शब्दस्य पदवाक्यरूपेण प्रवृत्त्या सविशेषपरतोपपादनाच्च शास्त्रस्य सविशेषपरत्वं सामान्येन सिद्धम् । अथापि ये वाक्यविशेषाः परेण निर्विशेषपरत्वेनोदाहृताः, तेषां सविशेषपरत्वं वाक्यतात्पर्यपर्यालोचनया प्रतिपादयितुमारभते यदुक्तमित्यादिना । तत्र निर्विशेषपरत्वं सङ्ग्रहेणानुवदति यदुक्तमिति । ज्ञानैकरसत्वेन शोधकवाक्येषु प्रतिपन्नत्वान्निर्विशेषत्वम् । तच्च कारणवाक्येषु प्रतिपन्नम् । वस्तुमात्रशब्देन अन्यत्र सगुणब्रह्मणि तात्पर्याभावः सूच्यते । इत्यादीनीत्युक्ते तस्यामेवोपनिषदि

---

1 यत् वस्तु यथा प्रमाणप्रतिपन्नम्, यस्याभावश्च प्रतिपन्नः, तथाभूत तदुभयम् असंनिकृष्टवाचा—शास्त्रमसंनिकृष्टेऽर्थे विज्ञानमिति शाबरभाष्ये असंनिकृष्टमिति पदेन व्यावर्त्यते । तदुभयातिरिक्तेऽर्थे शास्त्रं प्रमाणमित्यर्थः ।

इत्येवमादीनीति। तदयुक्तम्; एकविज्ञानेन सर्वविज्ञानप्रतिज्ञोपपादनमुखेन सच्छब्दवाच्यस्य परस्य ब्रह्मणो

---

पर्यवस्यतीति तद्व्यावृत्त्यर्थमित्येवमादीनीत्युक्तम्। तत् दूषयति तदयुक्तमिति। कुत इत्यत्राह एकविज्ञानेनेति। येनाश्रुतमित्यादिवाक्येन एकविज्ञानेन सर्वविज्ञानं प्रतिज्ञायते।

अस्यायमर्थः, येन श्रुतेन मतेन विज्ञातेन अश्रुतममतमविज्ञातं श्रुतं मतं विज्ञातं भवतीति — न तु ब्रह्मणस्सत्तया सर्वं ज्ञातं भवतीति — दार्ष्टान्तिकसामर्थ्यात्, मृद्दृष्टान्तसामर्थ्याच्च। न हि ब्रह्मसत्तया मृत्पिण्डसत्तया वा तत्तत्कार्यं ज्ञायते। 'कस्मिन्नु भगवो विज्ञाते सर्वमिदं विज्ञातं भवति' इति मुण्डकोपनिषदि, 'आत्मनि खल्वरे दृष्टे श्रुते मते विज्ञात इदं सर्वं विदितम्' इति बृहदारण्यके च श्रवणाच्च। अतो यथोक्त एव प्रतिज्ञावाक्यार्थः। न हि घटज्ञानेन पटज्ञानसंभव इत्येकविज्ञानेन सर्वविज्ञानं न संभवतीति शङ्कायां कार्यकारणयोस्तद् दृष्टमित्याह यथा सोम्येति। तत्राप्यसत्कार्यवादमुखेन एकविज्ञानेन सर्वविज्ञानानुपपत्तिशङ्कां परिहरति — वाचारम्भणमिति। वाचा। वाक्शब्दोऽजहल्लक्षणया वाक्पूर्वव्यवहारपरः। वाचेति तृतीयया प्रयोजनतया हेतुत्वं विवक्षितम्। आरम्भणमिति कर्मणि ल्युट्; आरभ्यते आलभ्यते इत्यारम्भणम्। 'आलम्भः स्पर्शहिंसयोः'। मृत्पिण्डेनेत्यर्थसिद्धम्। विकारः घटत्वद्रव्यत्वाद्यवस्था। वाक्पूर्वकहानादिव्यवहारार्थं मृत्पिण्डेन नामरूपे स्पृश्येते, मृत्पिण्डो नामरूपभाग् भवतीत्यर्थः। कार्यकारणयोरेकद्रव्यत्वे प्रमाणमाह — मृत्तिकेत्येव सत्यमिति। मृदयं घट इति प्रत्यभिज्ञया मृन्मयं घटादिकमपि मृद्द्रव्यत्वेनैव प्रामाणिकमित्यर्थः। बुद्धिशब्दादिभेदाः घटपटादिषु द्रव्यभेदेऽपि दृष्टाः; आस्ते शेते सुख्यहं दुःख्यहमित्यादिषु द्रव्यैक्येऽपि दृष्टाः; अतस्ते साधारणाः। तत्र आस्ते शेते सुख्यहं दुःख्यहमित्यादिषु द्रव्यैक्यनियामिका या प्रत्यभिज्ञा, सैवात्रापि द्रव्यैक्यनियामिकेति भावः। अत्र मृत्तिकामात्रस्य पारमार्थ्यं विकारासत्यत्वं च विवक्षितं चेत् इतिशब्दवैयर्थ्यं स्यादिति। तदा मृत्तिकैव सत्येति हि वाच्यम्; विकारासत्यत्वे दृष्टान्तः साध्यविकलः; सत्यत्वप्रतिपत्तेः॥ घटादिसत्यत्वं व्यावहारिकमिति चेत् — मृत्पिण्डस्यापि सत्यत्वं व्यावहारिकमिति न कारणसत्यत्वसिद्धिः॥ कारणस्य व्यावहारिकमेव सत्यत्वमभिमतं चेत् — तद् घटादेरपि तुल्यं स्यात्। कार्यकारणद्रव्यैक्यात् कारणविज्ञानेन कार्यविज्ञानमुपपन्नमस्तु; तथाऽपि लोके विविधकार्यवर्गस्य विविधोपादानकत्वदर्शनादेकविज्ञानेन सर्वविज्ञानमनुपपन्नमिति शङ्कायां जगतो ब्रह्मैककारणतामाह — सदेव सोम्येदमग्र आसीदिति। श्रुतिगत-सच्छब्दार्थमभिप्रेत्यात्र सच्छब्दवाच्यस्येत्युक्तम्। सगुणब्रह्मपरमिदमित्यन्यथासिद्धिर्दुर्वचेत्यभिप्रायेण परस्य ब्रह्मण इत्युक्तम्। अग्रे — सृष्टेः पूर्वमित्यर्थः; अनन्तरं सृष्टेर्वक्ष्यमाणत्वात्। विजातीयसजातीयस्वगतनानात्व-व्यावृत्तिः अत्र विवक्षिता चेत्, अग्र इति वक्तुमयुक्तम्। न हि ब्रह्मणः कालविशेषे निर्विशेषत्वम्; वैषम्यनैर्घृण्यपरिहाराय जीवबहुत्वतत्कर्मप्रवाहतदनादित्वानामभ्युपगम्यत्वाच्च॥ तद्बहुत्वमपारमार्थिकमिति चेत् — पारमार्थिकबहुत्वस्य इदानीमप्यभावादग्रशब्दवैयर्थ्यात्। न चाग्रशब्दस्याविवक्षितार्थता; अनन्तरं सृष्ट्युक्तेः। अतः कालरूपविजातीयभेदश्चेतनरूपसजातीयभेदः सार्वज्ञ्यादिसृष्ट्यनुगुणगुणरूपस्वगतभेदश्च तदानीमस्तीति विजातीयादित्रिविधभेदनिरासपरत्वं विरुद्धम्; कारणवाक्यत्वात्। न चेदिदं कारणवाक्यम्, ईदृशानां कारणवाक्यानां सर्वशाखाप्रत्ययनयात् विजातीयादिभेदनिरासपरत्वेन कारणपरत्वाभावात्

जगदुपादानत्वं जगन्निमित्तत्वं सर्वज्ञता सर्वशक्तियोगः सत्यसङ्कल्पत्वं सर्वान्तरात्मत्वं सर्वनियमनमित्याद्यनेक-

ब्रह्मकारणत्वमप्रमाणं स्यात् । अवधारणवाचिन एवकारस्य स्वयं व्यावर्त्यविशेषोपस्थापनासमर्थस्य समभिव्याहृतपदान्तरार्थविरोधिव्यावर्तकत्वनियमदर्शनात् सदेवेत्यवधारणमसत्कार्यवादव्युदासपरम् । न हि अयं विद्वानेवेत्यवधारणं ब्राह्मणत्वं व्यावर्तयति; अपि त्वविद्वत्त्वमेव । अतः शब्दस्वारस्यात् सदेवेति निरसनीयमसत्त्वमेव; न तु विजातीयभेदः । यद्यपि सद्विजातीयमसत्—तथाऽपि तस्य व्यावर्त्यत्वं न विजातीयत्वाकारेण; अपि तु सद्विरोधित्वरूपेण । सदेव; न तु कदाचिदपि असदित्यर्थः । सच्छब्दो हि मानसंबन्धयोग्यतालक्षणं सत्त्वं प्रवृत्तिनिमित्तीकृत्य परमात्मनि वर्तते । अयं सच्छब्दो विशेष्यभूतपरमात्मवाचकोऽपि कारणविषयत्वसामर्थ्यात् कारणत्वौपयिकगुणविशिष्टं प्रकृतिपुरुषकालशरीरकं परमात्मानमुपस्थापयति । एकमेवेति अविभक्तनामरूपकारणावस्थं ब्रह्मोच्यते । कारणत्वावस्थायामेकत्वावधारणस्य बहु स्यामिति वक्ष्यमाणकार्यबहुत्वप्रतियोग्येकत्वपरत्वात्; 'एकेन मृत्पिण्डेन सर्वं मृन्मयम्' इत्युक्तदृष्टान्तसामर्थ्यात् । 'तद्धेदं तर्ह्यव्याकृतमासीत् । तन्नामरूपाभ्यां व्याक्रियत' इति श्रुत्यन्तरैक्यार्थ्याच्चायमेवार्थः । वैशेषिकादिभिर्नित्यतयोक्तानामाकाशादीनामपि संहाराभिप्राय एवकारः । एवमविभक्तनामरूपत्वाद्ब्रह्मण उपादानत्वं सिद्धम् । भाव्यवस्थाविशेषवतः प्रागवस्थायोगो ह्युपादानत्वम् । अद्वितीयमिति निमित्तान्तरनिषेधः; उपादानस्य प्रस्तुतत्वेन निमित्तस्य बुद्धिस्थत्वात्; परतन्त्ररूपविशेषाणां विहितत्वात् निषेधस्य च विहितव्यतिरिक्तविषयत्वात्; उपरितनवाक्यसङ्गतेरपेक्षितत्वाच्च । एकमेवेति शब्दस्याविभक्तनामरूपतापरत्वं बहु स्यामित्यनेनावगम्यते । 'तदैक्षत....तत्तेजोऽसृजत' इत्यनेन अद्वितीयपदस्य निमित्तान्तराभावपरत्वमवगम्यते । परस्य ब्रह्मणः सर्वदा सत्त्वेन सदेवेत्यवधारणमसत्कार्यवादव्युदासपरमिति उपरितनेन, 'कथमसतः सज्जायेत' इत्यादिवाक्येनावगम्यते । 'कथमसतः' इत्यादिवाक्यं वैशेषिकमतनिरासपरम्; न तु क्षणिकवादिनिरासपरम्, न शून्यवादिनिरासपरं च; क्षणिकशून्यवादिनिरासे कृतेऽप्येकविज्ञानेन सर्वविज्ञानस्य वैशेषिकमतनिरासापेक्षत्वात्; 'तद्धैक आहुः असदेवेदमग्र आसीत्' इत्यारब्धत्वाच्च । न हि क्षणिकत्वं शून्यत्वं च कालविशेषे भवति । अतोऽसत्कार्यवादनिरासपरं तद्धैक आहुरित्यादि वाक्यम् । 'कुतस्तु खलु सोम्यैवं स्यात्' इति—मृद उत्पन्नस्य मृदात्मकत्ववत् असत उत्पन्नस्यासदात्मकत्वप्रसङ्ग इति भावः । उत्पत्तिर्नाम द्रव्यस्यावस्थान्तरापत्तिरित्ययमर्थो वाचारम्भणमित्यनेन शिक्षितः । तदु(मु?)पजीव्योच्यते, कथमसतः सज्जायेतेति । कथं निराश्रयावस्थासंभव इत्यर्थः ।

तदैक्षतेति सर्वज्ञत्वम्, असृजतेति निमित्तत्वम्, बहु स्यामित्युपादानत्वम्, तदुभयानुगुणं सर्वशक्तित्वं सत्यसङ्कल्पत्वञ्च, अनेन जीवेनात्मनाऽनुप्रविश्येति सर्वान्तरत्वं चोक्तं भवति । जीवेनात्मना—जीवशरीरकेण मयेत्यर्थः; '[1]सिंहेन भूत्वा बहवो मयात्ता व्याघ्रेण भूत्वा बहवो मयात्ताः' इतिवत् । सर्वज्ञत्वादिगुणकस्य तद्विपरीताकारजीवैक्यासंभवात्, 'यस्यात्मा शरीरम्' इत्यादिवचनात्, 'तदनुप्रविश्य' इति अचेतन इव जीवेऽप्यनुप्रवेशश्रवणाच्च । शरीरवाचिशब्दस्य शरीरिपर्यन्तत्वमुख्यतया उपपन्नत्वाच्चायमेवार्थः । सदायतनाः

1 ननु जीवेनेत्यस्य परमात्मपर्यन्तार्थकत्वे तस्य कर्तुः क्त्वाप्रत्ययाभिहितत्वात् कथं तृतीयेत्यत्राह- सिंहेनेति । आत्मनः सिंहदेहभवनायोगात् सिंहेनेत्यस्य सिंहदेहकेनेत्यर्थस्य वाच्यतया तत्र कथं तृतीया । करणे भवत्विति चेत्—तुल्यमित्यादि भाव्यम् ।

कल्याणगुणविशिष्टतां कृत्स्नस्य जगतस्तदात्मकतां च प्रतिपाद्य एवम्भूतब्रह्मात्मकस्त्वमसीति श्वेतकेतुं प्रत्युप-

इत्यनेन सर्वाधारता, तत एव सर्वनियमनश्च सिद्धम् । 'एतस्य वा अक्षरस्य प्रशासने गार्गि! द्यावापृथिव्यौ विधृते तिष्ठतः' इति प्रशासनेन धारकत्वश्रवणात् । एवं सर्वाधारत्वसर्वनियमनसर्वान्तरत्वैः शरीरिलक्षणैर्जगच्छरीरकत्वं ब्रह्मण उक्तम् । आदिशब्देन सृष्ट्युपयोगिनः श्रुत्यन्तरसिद्धा गुणा गृह्यन्ते । ऐतदात्म्यमित्यनेन कृत्स्नस्य जगतः तदात्मकता चावगम्यते ; तत्सत्यमिति तदात्मकत्वेनैव जगतः प्रामाणिकत्वम् । जगतः स्वनिष्ठत्वेन प्रतीतिर्भ्रान्तिरित्यर्थः । अतः कृत्स्नस्य जगतः स आत्मा । 'ऐतदात्म्यमिदं सर्वं स आत्मा' इति निर्देशः 'रामानुजं लक्ष्मणपूर्वजं च' इतिवत् अन्योन्यसम्बन्धित्वतात्पर्यातिशयकृतः । यद्वा, 'स त आत्माऽन्तर्याम्यमृतः' इतिवत् कृत्स्नजगदन्तर्यामित्वात् तवात्मा स इत्यर्थः । तस्मात् त्वंशब्दतदर्थतद्बुद्धयः तत्पर्यन्ता इति [1]तत्त्वमसीत्यस्यार्थ इत्याह एवम्भूतेति । एवम्भूतशब्देन तत्पदस्य प्रकृतपरामर्शित्वं सूचितम् ।

अस्याः सद्विद्यायाः सविशेषवस्तुन्येव षड्विधतात्पर्यलिङ्गं विद्यते—उपक्रमे तावत्, 'उत तमादेशमप्राक्ष्यः' इत्यत्र आदेशशब्देन प्रशासिताऽभिधीयते । अत्र श्लोकावाचार्यपादैरुक्तौ—

"छान्दोग्ये केचिदाहुर्दिशतिः 'उत तमादेशमप्राक्ष्य' इत्य-
त्राऽऽङ्पूर्वस्तूपदेशं प्रकटयति सतो न प्रशास्तिं घञन्तः ।
नो कर्तर्यस्ति कर्मण्यगणि घञिह सत् कर्तृ शास्तौ न कर्म
स्यात् स्या(त)त्कर्मोपदेशो तदिदमुदित (तदिदम् उतत)मादेशवाचोपदेश्यम् ॥
अत्र ब्रूमः प्रशास्तिं वदति दिशिरसौ आङ्मुखो नोपदेशं
शास्तौ (शास्ता) सोऽतिप्रसिद्धो न हि परः इह चापेक्षितार्थप्रसङ्गः ।
युक्तोऽसाधारणोक्त्या घञणि करणेऽप्यत्र वैवक्षिकत्वं
शाब्दोक्तं कारकाणां ननु करणतया कर्तरि स्याद्विवक्षा ॥" इति ।

आदेशशब्देनोपदेश्यमुच्यते । प्रकृत्यर्थ उपदेशः; 'अकर्तरि च कारके संज्ञायाम्' इति कर्तृव्यतिरिक्तकारके घञो विहितत्वात् । उपदेशो ब्रह्मणः कर्मत्वोपपत्तेश्च; प्रशासने तु ब्रह्म न कर्म । अपि तु कर्तृ । कर्तृव्यतिरिक्तकारके हि घञ्प्रत्ययविधिः । नात्र कर्तरि क्तप्रत्यय उपपद्यते; 'क्ङिति च' इति गुणप्रतिषेधादादेशशब्दरूपासिद्धेः । नापि पचाद्यच्प्रत्यय उपपद्यते; दिशिधातोरिगुपधत्वेन 'इगुपधात्कः' इत्यपवादसूत्रेण कप्रत्ययप्राप्तेर्गुणाभावात् । अतो घञ्प्रत्ययान्त एवायमादेशशब्दः । स च प्रत्ययः कर्तर्यविहित इति कर्मार्थत्वस्यैव युक्तत्वादुपदेश्यमेवाऽऽदेशशब्दवाच्यमिति ॥ अत्रोच्यते—प्रकृत्यर्थः शासनम्; प्रसिद्धिप्राचुर्यात् । अन्यथा स्वारस्यभङ्गात् । "आङ्पूर्वो दिशतिर्नियोक्तृप्रयोजनवचनः, उपपूर्वस्तु नियोज्यप्रयोजनवचनः" इति हि न्यासकारः । नियोक्तरि प्रयोजनं यस्य, तस्यार्थस्य वाचक इत्यर्थः । एवमन्यत्रापि । किञ्च उपदेश्यत्वं लौकिकालौकिककर्मब्रह्मभागार्थसाधारणम्; शासितृत्वं तु ब्रह्मणोऽसाधारणम्; "अन्तः प्रविष्टः शास्ता जनानाम्", "एतस्य वा अक्षरस्य प्रशासने गार्गि" इत्यादिश्रुतिभिर्निरुपाधिकप्रशासनस्य ब्रह्मासाधारणत्वश्रवणात् ॥ निरुपाधिकोपदेश्यत्वं ब्रह्मणोऽसाधारणमिति चेन्न—इष्टप्राप्त्यनिष्टनिवृत्तितत्साधनेषु साधारण्यात् । यद्यप्य-

1 न तु त्वंशब्दस्य जीवमात्रपरत्वं भाष्येष्टमिति यथाश्रुतग्रहणं युक्तम् । उपर्यन्यथोक्तेरिति भावः ।

देशाय प्रवृत्तत्वात् प्रकरणस्य। प्रपञ्चितश्चायमर्थो वेदार्थसंग्रहे। अत्राप्यारम्भणाधिकरणे निपुणतरमुपपादयिष्यते॥

"अथ परा, यया तदक्षरम्" इत्यत्रापि प्राकृतान् हेयगुणान् प्रतिषिद्ध्य नित्यत्वविभुत्वसूक्ष्मत्वसर्वगतत्वा-

---

परिमितसुखप्राप्तिदुःखनिवृत्त्यादि साक्षादुपदेश्यं स्यात्—तथापि संसारनिवृत्तिब्रह्मतदुपासनानामुपदेश्यत्वं साधारणम्। प्रष्टव्यस्योपदेश्यत्वमर्थसिद्धम्। अत उपदेश्यत्वकथनवैयर्थ्यञ्च। ननु 'येनाश्रुतं श्रुतम्' इत्यनेनैक-वाक्यत्वात्स्वज्ञानेनान्यज्ञानहेतुताविशेषितमुपदेश्यत्वमसाधारणमिति चेत्—तथापि तादृशमुपदेश्यत्वं प्रतिज्ञा-वाक्येन, प्रष्टव्यत्वोक्त्या चार्थसिद्धमित्यनपेक्षितोपदेश्यत्वकथनादप्यपेक्षितं प्रशासितृत्वमेव वाच्यमिति युक्तम्। 'येनाश्रुतम्' इत्युपादानत्वे सिद्धे प्रशासितृत्वेन हि निमित्तत्वं सिध्येत्। निमित्तान्तरे सति एकविज्ञानात् सर्वविज्ञानं नोपपद्यते। अतः प्रतिपिपादयिषितवस्तुनो विवक्षितासाधारणाकारविशिष्टतयैव प्रतिपादनमुचितम्। घञ्प्रत्ययस्य तु करणे व्युत्पन्नत्वात्, "विवक्षातः कारकाणां प्रवृत्तिः" इति शाब्दोक्तन्यायेन कर्तर्येव करणा-न्तरनैरपेक्ष्येण साधकतमत्वविवक्षया तथा प्रयोग उपपद्यते, अकर्तरीतिसूत्रस्य प्रयोजनं करणत्वविवक्षया विना कर्तर्यसाधुत्वेन प्रयोगनिवृत्तिः। उपदेशपक्षे प्रकृत्यर्थास्वारस्यं प्रत्ययस्वारस्यं च, प्रशासनपक्षे तु प्रत्यया-स्वारस्यं प्रधानभूतप्रकृत्यर्थस्वारस्यमर्थौचित्यं चेति वैषम्यम्। अतः प्रशासितैवाऽऽदेशशब्दाभिधेय इति स्वीकर्तुं युक्तम्। एवमुपक्रमे निरुपाधिकप्रशासनगुणयोग उक्तः। तथा जगदुपादानत्वं निमित्तत्वं तदनुगुणसार्वज्ञ्यसर्वशक्तित्वादिकञ्चावगतम्।

उपसंहारे च तत्त्वमसीति सामानाधिकरण्येन जीवान्तर्यामित्वं नाम गुणविशेष उक्तः। अस्यैवार्थस्य बहुश आवर्तितत्वादभ्यासोऽप्यस्ति। एवं ब्रह्मणो जगत्कारणत्वजगदन्तरात्मत्वादिगुणानां प्रमाणान्तराप्रति-पन्नत्वादपूर्वता सिद्धा। एवमुपासकस्य, "तस्य तावदेव चिरं यावन्न विमोक्ष्ये अथ सम्पत्स्ये" इति शरीरपातानन्तरं मोक्षश्रवणात् फलमपि विद्यते। पितुः पुत्रं प्रति प्रतिवचनरूपत्वादर्थवादश्च लब्धः। मृत्पिण्डादिदृष्टान्तोपपादनादुपपत्तिश्चेति।

अस्मिन् दृष्टान्तत्रयेऽपि विवर्तपक्षानुगुणः कोऽपि दृष्टान्तो न दृश्यते; अपि तु परिणामपक्षानुगुण एव दृश्यते। दार्ष्टान्तिकविषयवाक्येऽपि तत्तजोऽसृजतेत्युक्तम्, न तु तदभ्रमदिति। अतोऽस्यां श्रुतौ विवर्त-पक्षप्रसङ्गोऽपि नास्ति। श्रुत्यन्तरेषु च 'तदात्मानं स्वयमकुरुत' इत्यादिकं श्रूयते; न तु, व्यवर्ततेति। सूत्रं च "परिणामात्" इति; न तु, विवर्तादिति। स्मृतिषु च, 'कटकमकुटकर्णिकादिभेदैः कनकमभेदमपीष्यते यथैकम्। क्षितितलपरमाणवोऽनिलान्ते" इत्यादिषु परिणामपक्षा(क्ष?) एव दृश्यन्ते(ते?)। अतः श्रुतिस्मृतिसूत्रस्वारस्यात् परिणाम एवाभ्युपगन्तव्यः। स च परिणामः सद्वारक एव भवितुमर्हति; निर्विकारत्व-निर्दोषत्व-अनुप्रवेश-शरीरशरीरिभावादिविषयानेकश्रुतिस्वारस्यात्। अन्यथा तद्विरोधप्रसङ्गाच्चेति।

एकविज्ञानेन सर्वविज्ञानप्रतिज्ञावाक्यं किम्; कथं तदुपपादनमित्याशङ्कायामेतद्विस्तरो वेदार्थसङ्ग्रह इत्याह प्रपञ्चित इति। अत्र अपेक्षितार्थः कथं ज्ञास्यत इत्यत्राह अत्रापीति। निपुणतरम्—तस्याधिकरणस्यै-तदर्थैकविषयत्वादिति भावः॥

अनन्तरोदाहृतायाः परविद्यायाः सविशेषपरत्वमाह अथ परेत्यादिना। अपाणिपादमित्यन्तानां पदानां विषयमाह प्राकृतानिति। प्राकृताः प्रकृतिसंबन्धिनः। अनेन, 'क्वचित्सिद्धस्य हि क्वचिन्निषेधः' इति

कल्याणगुणविशिष्टतां कृत्स्नस्य जगतस्तदात्मकतां च प्रतिपाद्य एवम्भूतब्रह्मात्मकस्त्वमसीति श्वेतकेतुं प्रत्युप-

इत्यनेन सर्वाधारता, तत एव सर्वनियमनश्च सिद्धम्। 'एतस्य वा अक्षरस्य प्रशासने गार्गि! द्यावापृथिव्यौ विधृते तिष्ठतः' इति प्रशासनेन धारकत्वश्रवणात्। एवं सर्वाधारत्वसर्वनियमनसर्वान्तरत्वैः शरीरिलक्षणैर्जगच्छरीरकत्वं ब्रह्मण उक्तम्। आदिशब्देन सृष्ट्युपयोगिनः श्रुत्यन्तरसिद्धा गुणा गृह्यन्ते। ऐतदात्म्यमित्यनेन कृत्स्नस्य जगतः तदात्मकता चावगम्यते; तत्सत्यमिति तदात्मकत्वेनैव जगतः प्रामाणिकत्वम्। जगतः स्वनिष्ठत्वेन प्रतीतिर्भ्रान्तिरित्यर्थः। अतः कृत्स्नस्य जगतः स आत्मा। 'ऐतदात्म्यमिदं सर्वं स आत्मा' इति निर्देशः 'रामानुजं लक्ष्मणपूर्वजं च' इतिवत् अन्योन्यसम्बन्धित्वतात्पर्यातिशयकृतः। यद्वा, 'स त आत्माऽन्तर्याम्यमृतः' इतिवत् कृत्स्नजगदन्तर्यामित्वात् तवात्मा स इत्यर्थः। तस्मात् त्वंशब्दतदर्थतद्बुद्धयः तत्पर्यन्ता इति [1]तत्त्वमसीत्यस्यार्थ इत्याह एवम्भूतेति। एवम्भूतशब्देन तत्पदस्य प्रकृतपरामर्शित्वं सूचितम्।

अस्याः सद्विद्यायाः सविशेषवस्तुन्येव षड्विधतात्पर्यलिङ्गं विद्यते—उपक्रमे तावत्, 'उत तमादेशमप्राक्ष्यः' इत्यत्र आदेशशब्देन प्रशासिताऽभिधीयते। अत्र श्लोकावाचार्यपादैरुक्तौ—

"छान्दोग्ये केचिदाहुर्दिशतिः 'उत तमादेशमप्राक्ष्य' इत्य-
त्राऽऽङ्पूर्वस्तूपदेशं प्रकटयति सतो न प्रशास्तिं घञन्तः।
नो कर्तर्यस्ति कर्मण्यगणि घञिह सत् कर्तृ शास्तौ न कर्म
स्यात् स्या(त)त्कर्मोपदेशे तदिदमुदित (तदिदम् उतत)मादेशवाचोपदेश्यम्॥
अत्र ब्रूमः प्रशास्तिं वदति दिशिरसौ आङ्मुखो नोपदेशं
शास्तौ (शास्ता) सोऽतिप्रसिद्धो न हि परः इह चापेक्षितार्थप्रसङ्गः।
युक्तोऽसाधारणोक्त्या घञणि करणेऽप्यत्र वैवक्षिकत्वं
शब्दोक्तं कारकाणां ननु करणतया कर्तरि स्याद्विवक्षा॥" इति।

आदेशशब्देनोपदेश्यमुच्यते। प्रकृत्यर्थ उपदेशः; 'अकर्तरि च कारके संज्ञायाम्' इति कर्तृव्यतिरिक्तकारके घञो विहितत्वात्। उपदेशे ब्रह्मणः कर्मत्वोपपत्तेश्च; प्रशासने तु ब्रह्म न कर्म। अपि तु कर्तृ। कर्तृव्यतिरिक्तकारके हि घञ्प्रत्ययविधिः। नात्र कर्तरि क्तप्रत्यय उपपद्यते; 'क्ङिति च' इति गुणप्रतिषेधादादेशशब्दरूपासिद्धेः। नापि पचाद्यच्प्रत्यय उपपद्यते; दिशिधातोरिगुपधत्वेन 'इगुपधात्कः' इत्यपवादसूत्रेण कप्रत्ययप्राप्तेर्गुणाभावात्। अतो घञ्प्रत्ययान्त एवायमादेशशब्दः। स च प्रत्ययः कर्तर्यविहित इति कर्मार्थत्वस्यैव युक्तत्वादुपदेश्यमेवाऽऽदेशशब्दवाच्यमिति॥ अत्रोच्यते—प्रकृत्यर्थः शासनम्; प्रसिद्धिप्राचुर्यात्। अन्यथा स्वारस्यभङ्गात्। "आङ्पूर्वो दिशतिर्नियोक्तृप्रयोजनवचनः, उपपूर्वस्तु नियोज्यप्रयोजनवचनः" इति हि न्यासकारः। नियोक्तरि प्रयोजनं यस्य, तस्यार्थस्य वाचक इत्यर्थः। एवमन्यत्रापि। किञ्च उपदेश्यत्वं लौकिकालौकिककर्मब्रह्मभागार्थसाधारणम्; शासितृत्वं तु ब्रह्मणोऽसाधारणम्; "अन्तः प्रविष्टः शास्ता जनानाम्", "एतस्य वा अक्षरस्य प्रशासने गार्गि" इत्यादिश्रुतिभिर्निरुपाधिकप्रशासनस्य ब्रह्मासाधारणत्वश्रवणात्॥ निरुपाधिकोपदेश्यत्वं ब्रह्मणोऽसाधारणमिति चेन्न—इष्टप्राप्त्यनिष्टनिवृत्तितत्साधनेषु साधारण्यात्। यद्यप्य-

1 न तु त्वंशब्दस्य जीवमात्रपरत्वं भाष्येष्टमिति यथाश्रुतग्रहणं युक्तम्। उपर्यन्यथोक्तेरिति भावः।

देशाय प्रवृत्तत्वात् प्रकरणस्य। प्रपञ्चितश्चायमर्थो वेदार्थसंग्रहे। अत्राप्यारम्भणाधिकरणे निपुणतरमुपपादयिष्यते॥ "अथ परा, यया तदक्षरम्" इत्यत्रापि प्राकृतान् हेयगुणान् प्रतिषिद्ध्य नित्यत्वविभुत्वसूक्ष्मत्वसर्वगतत्वा-

परिमितसुखप्राप्तिदुःखनिवृत्त्यादि साक्षादुपदेश्यं स्यात्—तथापि संसारनिवृत्तिब्रह्मतदुपासनानामुपदेश्यत्वं साधारणम्। प्रष्टव्यस्योपदेश्यत्वमर्थसिद्धम्। अत उपदेश्यत्वकथनवैयर्थ्यञ्च। ननु 'येनाश्रुतं श्रुतम्' इत्यनेनैक-वाक्यत्वात्स्वज्ञानेनान्यज्ञानहेतुताविशेषितमुपदेश्यत्वमसाधारणमिति चेत्—तथापि तादृशमुपदेश्यत्वं प्रतिज्ञा-वाक्येन, प्रष्टव्यत्वोक्त्या चार्थसिद्धमित्यनपेक्षितोपदेश्यत्वकथनादप्यपेक्षितं प्रशासितृत्वमेव वाच्यमिति युक्तम्। 'येनाश्रुतम्' इत्युपादानत्वे सिद्धे प्रशासितृत्वेन हि निमित्तत्वं सिध्येत्। निमित्तान्तरे सति एकविज्ञानात् सर्वविज्ञानं नोपपद्यते। अतः प्रतिपिपादयिषितवस्तुनो विवक्षितासाधारणाकारविशिष्टतयैव प्रतिपादनमुचितम्। घञ्प्रत्ययस्य तु करणे व्युत्पन्नत्वात्, "विवक्षातः कारकाणां प्रवृत्तिः" इति शाब्दोक्तन्यायेन कर्तर्येव करणा-न्तरनैरपेक्ष्येण साधकतमत्वविवक्षया तथा प्रयोग उपपद्यते, अकर्तरीतिसूत्रस्य प्रयोजनं करणत्वविवक्षया विना कर्तर्यसाधुत्वेन प्रयोगनिवृत्तिः। उपदेशपक्षे प्रकृत्यर्थास्वारस्यं प्रत्ययस्वारस्यं च, प्रशासनपक्षे तु प्रत्यया-स्वारस्यं प्रधानभूतप्रकृत्यर्थस्वारस्यमर्थौचित्यं चेति वैषम्यम्। अतः प्रशासितैवाऽऽदेशशब्दाभिधेय इति स्वीकर्तुं युक्तम्। एवमुपक्रमे निरुपाधिकप्रशासनगुणयोग उक्तः। तथा जगदुपादानत्वं निमित्तत्वं तदनुगुणसार्वज्ञ्यसर्वशक्तित्वादिकञ्चावगतम्।

उपसंहारे च तत्त्वमसीति सामानाधिकरण्येन जीवान्तर्यामित्वं नाम गुणविशेष उक्तः। अस्यैवार्थस्य बहुश आवर्तितत्वादभ्यासोऽप्यस्ति। एवं ब्रह्मणो जगत्कारणत्वजगदन्तरात्मत्वादिगुणानां प्रमाणान्तराप्रति-पन्नत्वादपूर्वता सिद्धा। एवमुपासकस्य, "तस्य तावदेव चिरं यावन्न विमोक्ष्ये अथ सम्पत्स्ये" इति शरीरपातानन्तरं मोक्षश्रवणात् फलमपि विद्यते। पितुः पुत्रं प्रति प्रतिवचनरूपत्वादर्थवादश्च लब्धः। मृत्पिण्डादिदृष्टान्तोपपादनादुपपत्तिश्चेति।

अस्मिन् दृष्टान्तत्रयेऽपि विवर्तपक्षानुगुणः कोऽपि दृष्टान्तो न दृश्यते; अपि तु परिणामपक्षानुगुण एव दृश्यते। दार्ष्टान्तिकविषयवाक्येऽपि तत्तेजोऽसृजतेत्युक्तम्, न तु तद्भ्रमदिति। अतोऽस्यां श्रुतौ विवर्त-पक्षप्रसङ्गोऽपि नास्ति। श्रुत्यन्तरेषु च 'तदात्मानं स्वयमकुरुत' इत्यादिकं श्रूयते; न तु, व्यवर्ततेति। सूत्रं च "परिणामात्" इति; न तु, विवर्तादिति। स्मृतिषु च, 'कटकमकुटकर्णिकादिभेदैः कनकमभेदमपीष्यते यथैकम्। क्षितितलपरमाणवोऽनिलान्ते" इत्यादिषु परिणामपक्षा(क्ष?) एव दृश्यन्ते(ते?)। अतः श्रुतिस्मृतिसूत्रस्वारस्यात् परिणाम एवाभ्युपगन्तव्यः। स च परिणामः सद्वारक एव भवितुमर्हति; निर्विकारत्व-निर्दोषत्व-अनुप्रवेश-शरीरशरीरिभावादिविषयानेकश्रुतिस्वारस्यात्। अन्यथा तद्विरोधप्रसङ्गाच्चेति।

एकविज्ञानेन सर्वविज्ञानप्रतिज्ञावाक्यं किम्; कथं तदुपपादनमित्याशङ्कायामेतद्विस्तरो वेदार्थसङ्ग्रह इत्याह प्रपञ्चित इति। अत्र अपेक्षितार्थः कथं ज्ञास्यत इत्यत्राह अत्रापीति। निपुणतरम्—तस्याधिकरणस्यै-तदर्थैकविषयत्वादिति भावः॥

अनन्तरोदाहृतायाः परविद्यायाः सविशेषपरत्वमाह अथ परेत्यादिना। अपाणिपादमित्यन्तानां पदानां विषयमाह प्राकृतानिति। प्राकृताः प्रकृतिसंबन्धिनः। अनेन, 'क्वचित्सिद्धस्य हि क्वचिन्निषेधः' इति

व्ययत्वभूतयोनित्वसार्वज्ञ्यादिकल्याणगुणयोगः परस्य ब्रह्मणः प्रतिपादितः ।

'सत्यं ज्ञानमनन्तं ब्रह्म' इत्यत्रापि सामानाधिकरण्यस्यानेकविशेषणविशिष्टैकार्थाभिधानव्युत्पत्त्या न

---

निषेध्यानां क्वापि सिद्धिर्दर्शिता भवति । प्रकृतिगताः, प्रकृतिसंसर्गप्रयुक्ताः जीवगता दोषाश्च प्राकृताः । अद्रेश्यमग्राह्यम्—प्रत्यक्षागोचरमनुमानाद्यगोचरम ; यद्वा चक्षुरगोचरमिन्द्रियान्तरागोचरम । अगोत्रमवर्णम्—प्राकृतनामरूपरहितम् । अचक्षुःश्रोत्रम्—इन्द्रियाधीनज्ञानं न भवति ; अपाणिपादम्—इन्द्रियाधीनचेष्टं न भवति ; "अपाणिपादो जवनो ग्रहीता पश्यत्यचक्षुः स शृणोत्यकर्णः" इति श्रुतेः । अनेन पदद्वयेन जीवगतहेयनिषेधः । इन्द्रियाधीनज्ञानत्वं तदधीनप्रवृत्तित्वमपि हि जीवधर्मः । सर्वगतं सुसूक्ष्ममिति पाठक्रमः ; तथाऽप्यर्थक्रमेण व्याख्यातम सूक्ष्मत्वसर्वगतत्वेति । सूक्ष्मतया हि व्याप्तिः । नित्यत्वेन कालापरिच्छेदः । विभुम्—प्रभुम् । प्रभुत्वं नियन्तृत्वम् । जगच्छरीरकत्वं फलितम् । अनेन वस्त्वपरिच्छेदसिद्धिः । सर्वगतत्वेन देशापरिच्छेदः । अव्ययत्वं व्ययशब्दोपलक्षितदोषविरोधित्वं नाम गुण इत्यभिप्रायेण कल्याणगुणैः सह तन्निर्देशः । यद्वा अव्ययत्वम एकरूपत्वम् ; पूर्णत्वं वा । भूतयोनित्वम्—जगत्कारणत्वम् । एतत्प्रकरणस्थेन "यस्सर्वज्ञः सर्ववित्" इत्यनेन वाक्येन सार्वज्ञ्यमुक्तम् । सर्वज्ञस्सर्ववित्—सर्वं स्वरूपतो वेत्ति, सर्वं प्रकारतश्च वेत्तीत्यर्थः । परस्य ब्रह्मण इत्यस्य पूर्ववदर्थः ।

अथ शोधकवाक्येषु सत्यज्ञानादिवाक्यस्याखण्डार्थत्वं निरस्यति—सत्यं ज्ञानमित्यादिना । स खल्वेवमुपन्यस्तः प्रतिपत्तिसौकर्यायाचार्यपादैः[1] । तथा हि—सत्यादिवाक्यं सत्यत्वादिगुणविशिष्टमेव ब्रह्म प्रतिपादयति ; नीलमुत्पलमित्यादिषु समानाधिकरणवाक्येषु विशिष्टैकार्थपरत्वव्युत्पत्तेः, सत्यादिवाक्यस्य च समानाधिकरणत्वाच्च । तथा च सामानाधिकरण्यलक्षणं भिन्नप्रवृत्तिनिमित्तानामित्यादिनोक्तं शाब्दैः । तत्र—

यदुक्तम्—सामानाधिकरण्यस्यैकार्थ(र्थ्य)परत्वव्युत्पत्तेः ऐकार्थ्यस्य च पदानां विशेषणमात्रपरत्वे विशिष्टपरत्वे चासिद्धेः स्वरूपमात्रैक्यपरत्वं सत्यादिसमानाधिकरणपदानामास्थेयमिति—तदयुक्तम् ; विकल्पासहत्वात् । किं सत्यादिपदानि तत्तत्पदार्थविरोधिव्यावृत्तिमात्रपराणि, उत स्वरूपमात्रपराणि, उत विरोधिव्यावृत्त्यवच्छिन्नस्वरूपपराणीति विवेचनीयम् । न तावत् विरोधिव्यावृत्तिमात्रपराणि ; व्यावृत्तीनामनेकत्वेनैकार्थत्वासिद्धेः । व्यावर्त्यानेकत्वात् व्यावृत्तयो ह्यनेकाः स्युः । नापि स्वरूपपराणि ; तथासति पर्यायत्वप्रसङ्गात, प्रवृत्तिनिमित्तभेदाभावेन सामानाधिकरण्यलक्षणहानिप्रसङ्गात्, एके(क)तरपदवैयर्थ्यप्रसङ्गाच्च । नापि तदवच्छिन्नस्वरूपपराणि ; विकल्पासहत्वात् । किं विरोधिव्यावृत्तीनां स्वरूपावच्छेदकत्वमुपलक्षणतया, विशेषणतया वा । न तावदाद्यः कल्पः, एकोपलक्षणेन स्वरूपे प्रतिपन्नमिति उपलक्षणान्तरवैयर्थ्यात् । उपलक्ष्याद्बहिर्भूत उपलक्ष्यप्रतीत्युपायो धर्मः उपलक्षणमिति ह्यलक्षणविदः । तथा च शास्त्रादिषु दृश्यते । अत एके(क)तरवैयर्थ्यम् । प्रवृत्तिनिमित्तभेदाभावेन सामानाधिकरण्यलक्षणहानिश्च ॥ कथं तर्हि भवत्पक्षे जन्मादिवद्रूपलक्षणत्वमेकस्यैव ब्रह्मणोऽभ्युपगम्यते इति चेत्—उच्यते । तत्र ह्युपलक्ष्यस्य धर्मिणो ब्रह्मण एकत्वेऽपि प्रत्युपलक्षणमुपलक्ष्यधर्मभेदो जन्मस्थित्याद्यनुगुणज्ञानशक्त्यादिरूपोऽस्माभिरभ्युपगम्यते । अन्यथा

---

1 महापूर्वपक्षे 89. पुटे प्रमेयमालायामाचार्यपादैरुपन्यस्तः पूर्वपक्षप्रकारो दर्शितः । तदत्र तत्खण्डनप्रकारः तत्रत्य एव यथाक्रमं प्रदर्श्यते ।

तत्राप्यनेकोपलक्षणवैयर्थ्यं प्रसज्यत एव । त्वत्पक्षे अनेकोपलक्षणोपलक्ष्यधर्मभेदानभ्युपगमादुक्तदोषो दुर्वारः । तदभ्युपगमे हि ब्रह्मणः सविशेषत्वप्रसङ्गः । नापि द्वितीयः; विशेषणभूतानां व्यावृत्तीनामनेकत्वेनैकार्थत्वासिद्धेः । विशेष्यान्तर्भूतो विशेष्यप्रतीत्युपायो धर्मो विशेषणम् ॥ विशेष्यान्तर्भावो नाम ज्ञाप्यान्तर्भावः ॥ विशेषणभूतार्थभेदेऽपि विशेष्यभूतप्रधानार्थैक्यादेकार्थ[त्व?] सिद्धिरिति चेत्—तत् सखण्डवाक्यार्थवादिनोऽपि समानम् ॥ कस्तर्हि विशेष आवयोरिति चेत्—अयमेव विशेषः—यदेकस्य मते पदानां लाक्षणिकत्वम् , इतरस्य पक्षे तेषां मुख्यत्वमिति ।

यच्चोक्तम्—विशेषणान्तरविशिष्टे वस्तुनि विशेषणान्तरान्वयात् विशेषणानामन्योन्यसमवायप्रसङ्ग इति—तदसत् ; विकल्पासहत्वात् । "पदजातं श्रुतं सर्वं स्मारितानन्वितार्थकम् । न्यायसंपादितव्यक्ति पश्चाद्वाक्यार्थबोधकम् ॥" इत्युक्तप्रक्रियया हि वाक्यमर्थमवबोधयति । तत्र किं पदानां पदार्थस्म(स्मा)रणदशायामन्योन्यसमवायप्रसङ्गः, उत परामर्शदशायाम , आहोस्वित् वाक्यार्थाभिधानदशायाम् । न तावत् प्रथमः कल्पः; स्मरणदशायां पृथक्पृथक् पदार्थस्मरणेन मिथोऽन्वयप्रसङ्गाभावात् । नापि द्वितीय ; एकस्मिन् वस्तुन्यविरुद्धानेकविशेषणसमवायस्य प्रत्यक्षाद्यवगतस्य यथावस्थितवस्तुपरामर्शदशायां परामृश्यमानत्वात् । नापि तृतीयः ; वाक्यार्थाभिधानदशायां [वाक्यस्य?] सर्वैः पदैर्युगपदनेकविशेषणविशिष्टैकवस्तुविषयैकज्ञानजनकत्वेन क्रमाभिधानप्रयुक्तान्योन्यसमवायप्रसङ्गाभावात् । यथैव हि द्वे चक्षुषी जातिगुणाद्यनेकविशेषणविशिष्टैकवस्तुविषयामेकां धियं युगपज्जनयतः, तथैवानेकपदानि युगपदेव तत्तद्विशेषणविशिष्टैकवस्तुविषयैकज्ञानजनकानि भवन्ति[1] । क्रमेणाभिधानेऽपि नान्योन्यसमवायप्रसङ्गः ; पदान्तरोपात्ते विशिष्टे विशेष्यांशस्यैव पदान्तरोपात्तविशेषणेन विशेष्यमाणत्वात् । तच्च यथादृष्टविषयत्वात् पदानां व्युत्पत्तेः । अन्यथा भवत्पक्षे व्यावृत्तिरूपविशेषणानामन्योन्यविशेषणविशेष्यभावः क्रमाभिधानप्रयुक्तो दुर्वारः । अतो यथोक्त एव परिहारस्तवापि शरणम् ॥ क्रमेणाभिधानानभ्युपगमे कथमुद्देश्योपादेयविभागसिद्धिरिति चेत्—उच्यते । ज्ञाताज्ञातविभागो ह्युद्देश्योपादेयविभागः । स च युगपत्प्रतिपादनेऽपि नापैति । एकेन वाक्येनैकवस्तुनोऽनेकविशेषणान्वये युगपत्प्रतिपाद्ये, तत्र एकविशेषणान्वयः प्रागेव ज्ञातः, विशेषणान्तरान्वयस्त्वज्ञात इति ज्ञाताज्ञातविभागपरामर्शः परामर्शदशायां संभवत्येव ।

यदप्युक्तम्-विशिष्टैक्यप्रतिपादने विशेष्यैक्यवत् विशेषणैक्यं प्रसज्यत इति—तदपि न साधीयः ; विशेष्यमात्रैक्यपरत्वात् समानविभक्तेः । तच्च व्युत्पत्तिसिद्धम् । व्युत्पत्तिश्च प्रत्यक्षमूला । प्रत्यक्षञ्च विशेष्यैक्यमवगमयति ; न तु विशेषणानामैक्यम् ; यथा गौरित्याद्येकपदप्रयोगेऽपि प्रातिपदिकावगतविशेषणविशेष्यैक्यं तद्गतमेकवचनं नावगमयति, किन्तु विशेष्यैक्यमेवावगमयति । प्रत्यक्षमूला व्युत्पत्तिरेव हि तत्र कारणम् । तथा समानाधिकरणपदसङ्घातस्थसमानविभक्तेरपि विशेष्यैक्यमात्रपरत्वे सैव नियामिका । अन्यथा भवत्पक्षेऽप्यसत्यादिप्रतियोगिव्यावृत्तिरूपविशेषणैक्यप्रसङ्गात् ॥ प्रातिपदिकानां तत्तत्प्रतियोगिव्यावृत्तिविशिष्टस्वरूपपरत्वेऽपि

---

2 व्युत्पत्तिवादे आख्यातखण्डे, एकः द्वौ बहवः इत्यादिषु एकत्वादिवाचिप्रकृतिप्रत्ययरूपानेकपदसत्त्वेऽपि यथा सकृदेवैकत्वादिभानम् , तथा करोतीत्यत्र सकृदेव कृतिभानमित्युक्तम् । तथाऽत्र सकृदेव विशेष्यभानम्; विनिगमकाभावाच्च सर्वत्र कारकविभक्तिरिति ।

समानविभक्तेः प्रातिपदिकार्थैकदेशभूतविशेष्यमात्रैक्यपरत्वव्युत्पत्त्या न विशेषणैक्यं प्रसज्यत इति चेत्—तदस्मत्पक्षेऽपि समानम् । आवयोर्विशेषस्तु प्रागेवोक्तः ।

यच्चोक्तम्—विशेषणभेदे विशेष्यभेदप्रसङ्ग इति—तदयुक्तम्; विशेषणभेदमात्रस्य विशेष्यभेदकत्वाभावात् । तच्च, देवदत्तः श्यामो युवेत्यादिषु विशेषणभेदेऽपि विशेष्यैक्यदर्शनात् ॥ विशेषणभेदस्य स्वतःप्राप्तविशेष्यभेदकत्वं प्रत्यक्षेण तत्रापोद्यत इति चेत्-तन्न; धर्मिवाचकपदैक्यात् समानविभक्तिनिर्देशाच्चैक्यप्रतीतेः ॥ खण्डो मुण्डः पूर्णशृङ्गो गौरित्यत्र धर्मिवाचकपदैक्ये समानविभक्तिनिर्देशे सत्यपि विशेषणभेदे विशेष्यभेदः प्रतीयत इति चेत्—नै(मै)वम्; यतः स्वतः प्राप्तं तयोर्विशेष्यैक्यप्रत्यायकत्वं प्रत्यक्षेण तत्रापोदितम् ॥ परोक्षविषये खण्डो मुण्डः पूर्णशृङ्गो गौरित्यादिवाक्ये प्रयुक्ते खण्डत्वादिविशेषणभेदे विशेष्यभेदप्रतीतिर्दृश्यत इति चेत्—परोक्षविषयेऽपि देवदत्तः श्यामो युवेत्यादिवाक्ये प्रयुक्ते विशेषणभेदेऽपि विशेष्यैक्यप्रतीतिर्दृश्यत इति समानश्चर्चः ॥ को निर्णायक इति चेत्—यज्जातीयविशेषणानां नियमेन भिन्नाश्रयत्वं दृष्टं प्रत्यक्षेण, तज्जातीयविशेषणानां परोक्षत्वेऽपि विशेष्यभेदापादकत्वम्, यथा खण्डत्वादीनाम्; यज्जातीयविशेषणानां भिन्नाश्रयत्वनियमो न दृष्टः, तज्जातीयविशेषणानां धर्मिवाचिपदैक्ये समानविभक्तिनिर्देशे चैकविशेष्यनिष्कर्षकत्वं युक्तम्, यथा नीलत्वादीनामिति ।

यच्चोक्तम्—समानविभक्त्यवगतैक्यविरोधाद्विशेषणपरित्याग इति—तदप्ययुक्तम्; प्रातिपदिकाभिहितविशेषणान्वयविरोधादैक्यपरित्यागापत्तेः । तथा हि—यदि समानविभक्त्यन्वयावगतत्वा(त्त्यन्वया)दैक्यं न हातुं शक्यते, तर्हि प्रातिपदिकावसितविशेषणान्वयः कथमिव हातुं शक्यते, यथा नीलमुत्पलमित्यादौ ॥ तत्र प्रत्यक्षसिद्धत्वादङ्गीक्रियत इति चेत्—तत्रैक्यप्रतीतिरपि तथैवेति किं न स्यात् ॥ समानविभक्तिनिर्देशे परोक्षेऽप्यैक्यप्रतीतिर्दृश्यते इति चेत्—तथैव, प्रयोगे परोक्षेऽपि प्रातिपदिकावगतविशेषणान्वयप्रतीतिर्दृश्यत एव ॥ तस्मादैक्यप्रतीतिः शाब्दीति चेत्—विशिष्टप्रतीतिरपि शाब्दीति न कश्चिद्विशेषोऽन्यत्राभिनिवेशात् । किञ्च प्रातिपदिकावगतविशेषणान्वयपरित्यागहेतुभूतसमानविभक्त्यवगतमैक्यं किं स्वरूपम्, उत तदतिरिक्तम्? अतिरिक्तपक्षे सविशेषत्वप्रसङ्गः । अनतिरिक्तपक्षे हेत्वसिद्धिः । प्रातिपदिकावगतस्वरूपातिरेकेण समानविभक्त्या कस्यचिदैक्यस्याप्रतिपादनात् । न हि स्वरूपमात्रे विरोधाद्विशेषणपरित्यागः; व्यधिकरणवाक्येष्वपि तत्त्यागप्रसङ्गात् । प्रातिपदिकावगतं स्वरूपं निर्विशेषमिति प्रतिज्ञाय समानविभक्तेरैक्यावगमादित्युक्ते, स्वरूपावगमादित्युक्तं स्यात् । ततश्चैक्यावगमविरोधरूपहेत्वसिद्धिः । स्वरूपं तु विशेषणान्वयाविरुद्धं व्यधिकरणवाक्येषु विशेषणान्वयादित्युक्तम् । किञ्च समानविभक्त्यवगतमैक्यं प्रातिपदिकार्थैकदेशभूतविशेष्यमात्रस्येत्युक्तत्वात् तस्य च विशेषणभेदाविरोधित्वान्न तद्विरोधनिबन्धनविशेषणत्यागो युक्तः । अतो न निर्विशेषत्वं वस्तुनः ।

कार्ष्ण्यव्यावृत्तं पीतिमव्यावृत्तं शौक्ल्यमित्यादिषु प्रतियोगिभेदस्य तत्तद्व्यावृत्तस्वरूपस्य च शब्दोपात्तत्वान्न लक्षणाप्रसङ्गः, सत्यादिवाक्येषु न तथेति विशेषः । एवं शौक्ल्यादिदृष्टान्तवाक्यात् सत्यादिदार्ष्टान्तिकवाक्यस्य शब्दद्वारकं वैषम्यमुक्तम् । अर्थद्वारकं च वैषम्यं पूर्वोक्तं द्रष्टव्यम् । कथमिति चेत्; इत्थम् । शौक्ल्यादेः

निर्विशेषवस्तुसिद्धिः। प्रवृत्तिनिमित्तभेदेनैकार्थवृत्तित्वं हि सामानाधिकरण्यम्। तत्र सत्यज्ञानादिपदमुख्यार्थैर्गुणैः, तत्तद्गुणविरोध्याकारप्रत्यनीकाकारैर्वा एकस्मिन्नेवार्थे पदानां प्रवृत्तौ निमित्तभेदोऽवश्याश्रयणीयः। इयांस्तु विशेषः,—एकस्मिन् पक्षे पदानां मुख्यार्थता, अपरस्मिंश्च तेषां लक्षणा। न चाज्ञानादीनां प्रत्यनीकता वस्तुस्वरूपमेव; एकेनैव पदेन स्वरूपं प्रतिपन्नमिति पदान्तरप्रयोगवैयर्थ्यात्। तथा सति सामानाधिकरण्यासिद्धिश्च; एकस्मिन् वस्तुनि वर्तमानानां पदानां निमित्तभेदानाश्रयणात्। न च एकस्यैवार्थस्य विशेषणभेदेन विशिष्टताभेदादनेकार्थत्वं पदानां सामानाधिकरण्यविरोधि; एकस्यैव वस्तुनोऽनेकविशेषणविशिष्टताप्रतिपादनपरत्वात् सामानाधिकरण्यस्य, "भिन्नप्रवृत्तिनिमित्तानां शब्दानामेकस्मिन्नर्थे वृत्तिः सामानाधिकरण्यम्" इति हि शाब्दाः।

---

कस्यचिद् द्रव्यस्य द्रव्यान्तराद्व्यावर्तकधर्मतया धर्मान्तरानपेक्षत्वं युक्तम्; ब्रह्मणस्तु न तथात्वमिति स्वरूपातिरिक्तव्यावर्तकधर्मा[न्तरा]पेक्षाऽस्त्येव। न हि परनिर्वाहकत्वानभ्युपगमे स्वनिर्वाहकत्वसंभवः। किञ्च शौक्ल्यादिस्वरूपस्फुरणे सति न कार्ष्ण्याद्यध्यासप्रसङ्गः। अतस्तत्र स्वरूपमेव व्यावृत्तिरिति युक्तमभ्युपगन्तुम्। ब्रह्मणः स्वरूपस्फुरणेऽपि तदितराध्यासाभ्युपगमात् रजतादिव्यावर्तकाधिष्ठानस्वरूपातिरिक्तशुक्तित्वादिवत् सर्वाध्यासाधिष्ठानब्रह्मस्वरूपातिरिक्तसकलेतरव्यावृत्तिरूपधर्मोऽवश्याभ्युपगमनीयः।

यच्चोक्तम्—वाच्ये प्रधानांशस्य प्रतिपादनान्न लक्षणेति—तदप्यसत्; विशेषणद्वारेण विशेष्यपर्यवसायिनः शब्दस्य द्वारानभिधाने द्वार्यभिधानासिद्धेः। अलाक्षणिकत्वेऽपि, विशिष्टाभिधानस्वरसस्य शब्दस्य विशेष्यमात्रपरत्वे स्वारस्यहानिरवर्जनीया। सा च न विरोधाभावे युक्ता। यच्च—विषं भुङ्क्ष्वेत्यादिषु सर्वपदलक्षणा दृष्टेति—तच्च विधिप्रत्ययांशस्य मुख्यत्वादयुक्तम्। तत्र विधिप्रत्ययव्यतिरिक्तशब्दलक्षणा च मुख्यार्थत्वे प्रमाणान्तरविरोधात् स्वीक्रियते। प्रस्तुते विरोधाभावान्न सा युक्ता॥

विमतं वाक्यमखण्डार्थं समानाधिकरणवाक्यत्वात् संप्रतिपन्नवदिति ईदृश्यनुमानोक्तिरनुपपन्ना, वाक्यमखण्डार्थमिति पदयोरर्थभेदोऽस्ति, न वा। अस्ति चेत्–प्रतिज्ञावाक्य एव हेतोरनैकान्त्यम्। न चेत्–अखण्डार्थत्वं प्रतिज्ञातमेव[1] न स्यात्। दृष्टान्तस्य च साध्यवैकल्यमवर्जनीयम्; प्रकृतिप्रत्ययात्मकपदपुञ्जरूपत्वात् सर्ववाक्यानाम्। यदि भावरूपखण्डार्थप्रतिपादनासमर्थमिति प्रतिज्ञा, तर्हि साध्यधर्मवचनान्तर्गतयोः समानाधिकरणयोर्भावरूपखण्डशब्दयोरनैकान्त्यम्। तस्मात् सत्यादिवाक्यं सत्यत्वादिविशिष्टमेव ब्रह्म प्रतिपादयतीति सिद्धम्। तदिदमुच्यते—**सत्यं ज्ञानमनन्तमित्यादिना**। तत्र निर्विशेषपरत्वाभावं सोपपत्तिकं प्रतिजानीते **सत्यं ज्ञानमिति**। सामानाधिकरण्यलक्षणप्रत्यभिज्ञापकैः शब्दैर्हेत्वंशं विवृणोति **प्रवृत्तीति**। ततः किमित्यपेक्षायामन्वयमुखेन व्यावृत्तिमुखेन वा प्रवृत्तिनिमित्तभेदस्यावश्याश्रयणीयत्वमाह **तत्रेति**। तत्र को विशेष इत्यत्राह **इयानिति**। **अवश्याश्रयणीय** इत्यत्राभिप्रेतं व्यावृत्तीनां स्वरूपमात्रत्वे दूषणमाह **नचेति**। सामानाधिकरण्यासिद्धिमुपपादयति —**एकस्मिन्निति**। पर्यायत्वं दूषणं स्पष्टमिति न कण्ठोक्तम्। विशेषणभेदेनानेकार्थत्वात् सामानाधिकरण्यलक्षणहानिं निरस्यति **न चैकस्येति**। **विशिष्टताभेदात्**—तत्तद्विशेषणान्वयभेदात्। तथाविधमनेकार्थत्वं न विरोधि; प्रत्युतानुकूलमेवेत्यर्थः। कुत इत्यत्राह **भिन्नप्रवृत्तीति**। विशेषणतो भिन्नार्थत्वे विशेष्यतश्चैकार्थत्वे सति हि सामानाधिकरण्यलक्षणसाद्गुण्यमित्यर्थः। 'समानाधिकरणं वाक्यं किं विशेषणविशेष्य-

---

1 अखण्डार्थत्वस्य साध्यत्वं न भवतीत्यर्थः।

यदुक्तम्—एकमेवाद्वितीयमित्यत्राद्वितीयपदं गुणतोऽपि सद्वितीयतां न सहते; अतः सर्वशाखाप्रत्यय-न्यायेन कारणवाक्यानामद्वितीयवस्तुप्रतिपादनपरत्वमभ्युपगमनीयम्, कारणतयोपलक्षितस्याद्वितीयस्य ब्रह्मणो लक्षणमिदमुच्यते, 'सत्यं ज्ञानमनन्तं ब्रह्म' इति; अतो लिलक्षयिषितं ब्रह्म निर्गुणमेव। अन्यथा 'निर्गुणम्', 'निरञ्जनम्' इत्यादिभिर्विरोधश्चेति—तदनुपपन्नम्, जगदुपादानस्य ब्रह्मणः स्वव्यतिरिक्ताधिष्ठात्रन्तरनिवारणेन विचित्रशक्तियोगप्रतिपादनपरत्वादद्वितीयपदस्य। तथैव विचित्रशक्तियोगमेवावगमयति, "तदैक्षत बहु स्यां प्रजायेयेति; तत्तेजोऽसृजत" इत्यादि। अविशेषेण अद्वितीयमित्युक्ते निमित्तान्तरमात्रनिषेधः कथं ज्ञायत इति चेत् —सिसृक्षोर्ब्रह्मण उपादानकारणत्वम् "सदेव सोम्येदमग्र आसीदेकमेव" इति प्रतिपादितम्। कार्योत्पत्ति

---

सम्बन्धपरम्; उत विशेष्यैक्यपरम्, उतोभयपरम्। प्रथमे विशेष्यैक्ये प्रमाणं न स्यात्। द्वितीये विशेषणान्वयो निष्प्रमाणकः स्यात्। तृतीये संबन्धद्वयस्यैकवाक्येन बोधयितुमशक्यत्वात् वाक्यभेदप्रसङ्गः' इति केचिच्चोदयन्ति। तन्न; प्रातिपदिकेनैव विशेषणान्वयस्य बोध्यतया समानविभक्तिनिर्देशेन विशेष्यैक्य-प्रतिपादने वाक्यभेदप्रसङ्गाभावात्।

एवं सामानाधिकरण्यस्यान्यथैवोपपत्त्या सत्यज्ञानादिवाक्यस्य निर्विशेषपरत्वं निरस्तम्; अथ कारण-वाक्यैकार्थ्यान्निर्विशेषपरत्वं निराकर्तुं तदनुवदति यदुक्तमित्यादिना। सदेव एकमेवेति विजातीयसजातीयभेदव्या-वर्तकावधारणद्वयसमभिव्याहृतमद्वितीयपदं पारिशेष्यात् स्वगतभेदाभावपरमिति गुणतोऽपि सद्वितीयतां न सहत इत्यर्थः। "यः सर्वज्ञः सर्ववित् यस्य ज्ञानमयं तपः। तस्मादेतत् ब्रह्म नाम रूपमन्नं च जायते" इत्यादिसगुण-विषयकारणवाक्यैकार्थ्यमस्तीत्यत्राह अत इति। सर्वशाखाप्रत्ययन्यायान्निर्गुणकारणवाक्येषु सगुणत्वं सगुणकारण-वाक्येषु निर्गुणत्वञ्चोक्तं स्यात्। तत्रापच्छेदन्यायेन निर्गुणवाक्यप्राबल्यात् सर्वकारणवाक्यानि निर्गुणपराणीत्यर्थः। कारणवाक्यैकार्थ्यं कुतोऽपेक्षितमित्यत्राह कारणतयोपलक्षितस्येति। जगत्कारणत्वं तटस्थलक्षणम्; न तु स्वरूपलक्षणमित्यभिप्रायेण उपलक्षितस्येत्युक्तम्। कारणत्वशङ्कितदोषव्यावर्तकत्वादैकार्थ्यमवर्जनीयमित्यर्थः। अथ शोधकवाक्यान्तरैकार्थ्यान्निर्विशेषपरत्वं निराचिकीर्षुरनुवदति अन्यथेति। अनूदितमर्थं दूषयति तदनुपपन्न-मित्यादिना। तत्र प्रथमं कारणवाक्यैकार्थ्यं सविशेषविषयत्वे सतीत्याह जगदिति। तथैवेति। अद्वितीयपदं यथा अधिष्ठात्रन्तरनिवारणपरमेव भवति, तथैवेत्यर्थः। विचित्रशक्तियोगमेवेति। उत्तरवाक्यमुपादानभूतस्यैव ब्रह्मणोऽधिष्ठातृत्वशक्तियोगमेवावगमयति; न तु निर्गुणत्वमित्यर्थः। शङ्कते अविशेषेणेति। सर्वनिषेधस्य निमित्तान्तरनिषेधस्य च साधारणमद्वितीयपदम्, निरुपपदत्वात्। किञ्च उपक्रमे सदेवैकमेवेति सजातीय-विजातीयभेदयोर्निषिद्धत्वादेकविज्ञानेन सर्वविज्ञानप्रतिज्ञायाः सजातीयविजातीयभेदमात्रमिथ्यात्वेऽनुपपन्नत्वाच्च अद्वितीयपदमुपक्रमानुगुण्येन स्वगतभेदनिषेधपरं स्यात्; न तूत्तरवाक्यानुगुणं स्यात् उपक्रमप्राबल्यादिति साक्षात्पूर्वपक्षि चोद्यम्। निमित्तत्वोपादानत्वे उभे अप्युत्तरत्र श्रूयेते; तत्रोपादानान्तरमद्वितीयपदेन निषेध्यम्; न तु निमित्तान्तरमिति पार्श्वस्थचोद्यम्। तत्राह सिसृक्षोरिति। अनेन शङ्काद्वयं परिहृतं भवति। तदैक्षतेत्यनन्तरो-क्तत्वादस्य वाक्यस्य कारणपरत्वं नापलपनीयमित्यभिप्रायेण सिसृक्षोरित्युक्तम्। कारणपरत्वे च सति अग्रशब्देन विजातीयकालसद्भावसिद्धेः, जीवानादित्वश्रुतेः, अकृताभ्यागमकृतविप्रणाशादिश्रुत्यर्थापत्त्या, वैषम्यनैर्घृण्यपरिहाराय जीवानां कर्मसूक्ष्मभेदस्य प्रलयदशायामभ्युपगमात् एकत्वावधारणस्य जीवसूक्ष्मभेदसहत्वस्य परैरभ्यु-पगन्तव्यत्वात् सार्वज्ञ्यसर्वशक्तित्वादीनां सर्गौपयिकत्वाच्च विजातीयसजातीयस्वगतभेदाभावस्य दुर्वचत्वात्

स्वाभाव्येन बुद्धिस्थं निमित्तान्तरमिति तदेव अद्वितीयपदेन निषिध्यते इत्यवगम्यते। सर्वनिषेधे हि स्वाभ्युपगताः सिषाधयिषिता नित्यत्वादयश्च निषिद्धाः स्युः । सर्वशाखाप्रत्ययन्यायश्चात्रभवतो विपरीतफलः, सर्वशाखासु कारणान्वयिनां सर्वज्ञत्वादीनां गुणानामत्रोपसंहारहेतुत्वात् । अतः कारणवाक्यस्वभावादपि 'सत्यं ज्ञानन्तं ब्रह्म' इत्यनेन सविशेषमेव प्रतिपाद्यत इति विज्ञायते ॥ न च निर्गुणवाक्यविरोधः, प्राकृतहेयगुणविषयत्वात् 'तेषां 'निर्गुणं 'निरञ्जनं', 'निष्कलं निष्क्रियं शान्तम्' इत्यादीनाम् । ज्ञानमात्रस्वरूपवादिन्योऽपि श्रुतयो ब्रह्मणो ज्ञानस्वरूपतामभिदधति; न तावता निर्विशेषज्ञानमात्रमेव तत्त्वम्; ज्ञातुरेव ज्ञानस्वरूपत्वात् ।

ज्ञानस्वरूपस्यैव तस्य ज्ञानाश्रयत्वं मणिद्युमणिदीपादिवत् युक्तमेवेत्युक्तम् । ज्ञातृत्व-

---

एकविज्ञानेन सर्वविज्ञानप्रतिज्ञायाश्चोक्तार्थाविरोधेन निर्वाह्यत्वात्, परतन्त्रभेदस्य विहितत्वात् निषेधस्य च विहितव्यतिरिक्तविषयत्वात्, स्वतन्त्ररूपभेदविशेषस्य 'न तत्समश्चाभ्यधिकश्च दृश्यते' इत्यादिभिर्निषिद्धत्वात्, सामान्यनिषेधस्य च तत्पर्यवसानस्य न्याय्यत्वाच्च अद्वितीयपदस्य स्वतन्त्रभेदनिषेधपरत्वे प्राप्ते सति अविभक्तनामरूपताप्रतिपादकेन एकमितिपदेनोपादानत्वस्य सिद्धत्वात् निमित्तान्तरस्य बुद्धिस्थत्वाच्च निमित्तान्तररूपस्वतन्त्रवस्तुनिषेधपरमद्वितीयपदमित्यर्थः। सर्वनिषेधेऽनिष्टमाह सर्वेति। सर्वशाखाप्रत्ययन्यायस्य निर्विशेषत्ववादविपरीतत्वमाह सर्वशाखेति । अत्र—निर्गुणवादे । अत्रभवत इत्युपालम्भो वा । सर्वशाखाप्रत्ययन्यायोऽनुक्तगुणस्वीकारफलः, न तूक्तगुणत्यागफल इति त्वत्पक्षविपरीतफल इत्यर्थः। सविशेषपरत्वे कारणवाक्यैकार्थ्यं निगमयति अत इति । न केवलं सामानाधिकरण्यान्यथानुपपत्त्या; कारणवाक्यैकार्थ्याच्च सविशेषपरत्वमित्यपिशब्दस्य भावः ॥

अथ शोधकवाक्यान्तरैकार्थ्यं निर्विशेषपरत्वहेतुं निरस्यति नचेति । परेणापच्छेदन्यायेन हि निर्गुणसगुणवाक्यविरोधः परिहृतः । अत्र भिन्नविषयत्वात् विरोध एव नास्तीत्याह प्राकृतेति । निर्गुणमिति गुणसामान्यनिषेधः; निष्कलमिति शरीरसामान्यनिषेधः; निष्क्रियमिति क्रियासामान्यनिषेधः ॥ न गुणनिषेधः सङ्कोचयितव्य; आर्थगुणनिषेधबलेन सर्वगुणविरहावगमात् । ज्ञानस्य ज्ञानादिगुणाश्रयत्वादर्शनात् ब्रह्मणो ज्ञानमात्रत्वप्रतिपादनेन निर्गुणत्वं हि फलितम्—इति शङ्कायामार्थगुणनिषेधं परिहर्तुं श्रुतिप्रतिपन्नमर्थमनुभाषते ज्ञानमात्रेति । ततः किमित्यत्राह न तावतेति । कुत इत्यपेक्षायाम्—किं ज्ञानत्वात् ज्ञानानाश्रयत्वमुच्यते, किमेकजातीयद्रव्ययोर्नियतधर्मधर्मिभावानुपपत्तेरिति विकल्पे, प्रथमं प्रतिवक्ति ज्ञातुरेव ज्ञानस्वरूपत्वादिति । अयमर्थः—ज्ञानस्य ज्ञानादिगुणाश्रयत्वाभावः किं व्याप्त्या कथ्यते, उत श्रुतिबलात् । व्याप्त्या चेत्—ज्ञानानाश्रयभूतं विषयप्रकाशकं ज्ञानं कस्यचिद्धर्मभूतमेव दृष्टमिति धर्मत्वेनाङ्गीक्रियताम् । यदि श्रुतिबलात् स्वतन्त्रत्वेनाङ्गीक्रियते—तर्हि श्रुतिबलादेव ज्ञानाश्रयत्वमप्यङ्गीक्रियतामिति । ज्ञानानाश्रयत्वं धर्मभूतज्ञानत्वप्रयुक्तम्; न तु ज्ञानत्वमात्रप्रयुक्तमिति सोपाधिकत्वम् । अतो व्याप्तिविरोधश्च नास्ति । यद्वा जडस्य घटादेरिव ज्ञातृत्वायोगात् ज्ञातृत्वेनैव ज्ञानस्वरूपत्वमर्थसिद्धम् । द्वितीयं प्रतिवक्ति ज्ञानस्वरूपस्येति । एकजातीयद्रव्ययोर्नियतधर्मधर्मिभाव उपपद्यत इत्यर्थः । श्रुत्या ज्ञानाश्रयत्वे सिद्धे हि तथाभ्युपगम इत्यत्राह ज्ञातृत्वमेव हीति । यद्वा ज्ञातुरेव ज्ञानस्वरूपत्वादिति—ज्ञातुर्ज्ञानस्वरूपत्वाविरोधादित्यर्थः । एकजातीयद्रव्ययोर्नियतधर्मिधर्मभावानुपपत्त्या विरोधं परिहरति ज्ञानस्वरूपस्यैवेति । ज्ञानत्वात् ज्ञानानाश्रयत्वं परिहरति—

मेव हि सर्वाः श्रुतयो वदन्ति ॥ 'यः सर्वज्ञः सर्ववित्', 'तदैक्षत', 'स ईक्षत लोकान्नु सृजा इति', 'नित्यो नित्यानां चेतनश्चेतनानामेको बहूनां यो विदधाति कामान्', 'ज्ञाज्ञौ द्वावजावीशनीशौ', 'तमीश्वराणां परमं महेश्वरं तं देवतानां परमं च दैवतम्। पतिं पतीनां परमं परस्ताद्विदाम देवं भुवनेशमीड्यम् ॥ न तस्य कार्यं करणं च विद्यते न तत्समश्चाभ्यधिकश्च दृश्यते । पराऽस्य शक्तिर्विविधैव श्रूयते स्वाभाविकी ज्ञानबलक्रिया च', "एष आत्माऽपहतपाप्मा विजरो विमृत्युर्विशोको विजिघत्सोऽपिपासः सत्यकामः सत्यसङ्कल्पः" इत्याद्याः श्रुतयो ज्ञातृत्वप्रमुखान् कल्याणगुणान् ज्ञानस्वरूपस्यैव ब्रह्मणः स्वाभाविकान् वदन्ति; समस्तहेयरहितताञ्च ।

**ज्ञातृत्वमेव हीति** । पूर्ववदभिप्रायः । ज्ञातृत्वं यथा फलितं भवति, तादृशगुणपराश्च ज्ञातृत्वकण्ठोक्तिमत्यश्च श्रुतयः सर्वशब्दविवक्षिताः । बहुवचनेन बहूपनिषद्वाक्यानि वा विवक्षितानि । एवकारेण ज्ञातृत्वस्यानन्यथासिद्धिरभिप्रेता । हिशब्दो हेतौ । ज्ञातृत्वस्य श्रुतिसिद्धत्वान्न काचिदप्यनुपपत्तिरित्यर्थः । काः पुनः श्रुतय इत्यपेक्षायाम्—आर्थगुणनिषेधपरिहारार्थं निर्गुणश्रुतिसङ्कोचसिद्ध्यर्थं सगुणश्रुतीनामाविद्यकगुणविषयत्वशङ्कापनोदार्थं च श्रुतीर्दर्शयन् ताभिरेतत्प्रयोजनत्रयसिद्धिं च दर्शयति **यः सर्वज्ञ** इत्यादिना । **यः सर्वज्ञः सर्ववित्**—सर्वं स्वरूपतः प्रकारतश्च जानातीत्यर्थः । ज्ञानस्य सर्वविषयत्वम्, तस्य समष्टिव्यष्टिसृष्ट्युपयोगित्वम्, आत्मसंबन्धित्वं च दर्शयति तदैक्षतेत्यादित्रयेण । नित्यो नित्यानामित्यत्र चेतनबहुत्वमुक्तम्; कामप्रदत्वञ्च । ज्ञाज्ञौ द्वावजावित्यत्र ज्ञातृत्वमीश्वरत्वं च । तमीश्वराणामित्यत्र ईश्वरत्व-देवतात्व-पतित्वानि; **ईश्वरत्वम्**—नियन्तृत्वम् । नियाम्यविषयज्ञानवत एव नियन्तृत्वात् नियमनस्य ज्ञानविशेषरूपत्वाच्च नियन्तृत्वेन ज्ञातृत्वसिद्धिः । **देवतात्वम्** कर्माराध्यत्वम्। **पतित्वम्** शेषित्वम् । **न तस्येति** । **कार्यम्** शरीरम् । **करणमिन्द्रियादि**; "कार्यकारणकर्तृत्वे" इति प्रयोगात । समाभ्यधिकनिषेधश्चात्र श्रूयते । तेन अद्वितीयमिति सामान्यनिषेधस्य, "छागो वा मन्त्रवर्णात्" इति न्यायादीश्वररूपाद्वितीयविशेषपर्यवसायित्वं सूचितम् । पराऽस्येति ज्ञानशक्त्यादीनां स्वाभाविकत्वमुक्तम् । क्रिया[1]—नियमनम् । **एष आत्मेति** विशेषविधानम्; विशेषनिषेधश्च । आर्थगुणनिषेधस्य परिहर्तव्यतामभिप्रेत्य **ज्ञानस्वरूपस्यैवे**त्युक्तम् । आविद्यकत्वनिराकरणाय **स्वाभाविकानि**त्युक्तम् । **समस्तहेयरहिततां** चेत्यनेनापि आविद्यकत्वशङ्का अर्थात् परिहृता ।

किञ्च **ज्ञातृत्वप्रमुखान् कल्याणगुणान् समस्तहेयरहिततां** चेत्यनेन निर्गुणवाक्यस्य सङ्कुचितवृत्तित्वं चोपपादितं भवति । तथा हि—कल्याणगुणानित्यस्यायमभिप्रायः—गुणविशेषविधानं गुणसामान्यनिषेधो न बाधितुं प्रभवति; अपि तु तद्व्यतिरिक्तविषय एव भवति; अन्यथा "न हिंस्यात् सर्वा भूतानि" इति सामान्यनिषेधेन, "अग्नीषोमीयं पशुमालभेत" इति हिंसाविशेषविधानबाधप्रसङ्गादिति । **समस्तहेयरहिततां** चेत्यस्यायमर्थः—यथा "पशुना यजेत", "छागस्य वपायाः" इत्यादिषु, "छागो वा मन्त्रवर्णात्" इति सूत्रोक्तन्यायात् सामान्यशब्दो विशेषदर्शने सति तत्र पर्यवस्यति, तथा गुणसामान्यनिषेधो विशेषगुणनिषेधे पर्यवस्यतीति । किञ्च सामान्यशब्दानां विशेषपर्यवसायित्वं व्युत्पत्तिसिद्धम्; यथा गामानय, गां बधानेत्यादिषु सामान्यशब्दो विशेषकटाक्षेण प्रयोजकवृद्धेन प्रयुज्यते । तत एव हि तत्र प्रयोज्यवृद्धश्च न सर्वा गोव्यक्तीरानयति, किं तु विवक्षितव्यक्तिविशेषमेवानयति । तथैव हि तत्र व्युत्पत्तिः । एवं **ज्ञातृत्वप्रमुखान् कल्याणगुणा**नित्यनेन

1 विभोरात्मनः स्पन्दरूपक्रियाया अयोगादाह नियमनमिति ।

निर्गुणवाक्यानां सगुणवाक्यानां च विषयम्—अपहतपाप्मेत्याद्यपिपासइत्यन्तेन हेयगुणान् प्रतिषिध्य, 'सत्यकामः सत्यसङ्कल्पः' इति ब्रह्मणः कल्याणगुणान् विदधती इयं श्रुतिरेव विविनक्तीति सगुणनिर्गुणवाक्ययोर्विरोधाभावादन्यतरस्य मिथ्याविषयताश्रयणमपि नाशङ्कनीयम् ॥

समस्तहेयरहिततां चेत्यनेन च उत्सर्गापवादन्यायः सामान्यविशेषन्यायश्च अभिप्रेतः। उपात्तविशेषव्यतिरिक्तविषये सामान्यशब्दस्य विरोधपरिहाराय सङ्कोच उत्सर्गापवादन्यायः, अविरोधेऽपि वैयर्थ्यपरिहाराय सङ्कोचश्चेत्—गोबलीवर्दन्यायः, उपात्तविशेषविषये तस्य सङ्कोचः सामान्यविशेषन्याय इति भिदा।

किञ्च अध्यात्मशास्त्रेषु गुणशब्दः सत्त्वरजस्तमस्सु प्रसिद्धः। "न हि तस्य गुणाः सर्वे सर्वैर्मुनिगणैरपि। वक्तुं शक्या वियुक्तस्य सत्त्वाद्यैरखिलैर्गुणैः॥", "सत्त्वं रजस्तम इति गुणाः प्रकृतिसंभवाः।" "निर्गुणस्याप्रमेयस्य", "गुणा गुणेषु वर्तन्ते", "कारणं गुणसङ्गोऽस्य", "निर्गुणं गुणभोक्तृ च", "नान्यं गुणेभ्यः कर्तारम्", "दैवी ह्येषा गुणमयी मम माया दुरत्यया", "विना हेयैर्गुणादिभिः", "गुणादिदोषांश्च मुने व्यतीतः", "गुणकलुषस्य सदातनेन तेन" इत्यादिषु। एवं केवलगुणशब्दस्य सत्त्वादिपरत्वेन प्रसिद्धिप्राचुर्यात् निर्गुणशब्दाः सत्त्वादिनिषेधपराः।

अयं विषयविभागो न केवलम् अस्माभिः भिन्नोपनिषद्वाक्येषु गुणविशेषविधान-गुणविशेषनिषेधदर्शनान्निश्चीयते, एकस्मिन्नेव वाक्ये विषयविभागो दृष्ट इत्याह निर्गुणेति। गुणसामान्यनिषेधवत् गुणसामान्यमात्रविधानाभ्युपगमेन निर्गुणवाक्यानां सगुणवाक्यानां चेत्युक्तम्। न हि श्रुतिषु गुणसामान्यविधानं[1] क्वचिद्दृश्यते। गुणविशेषा एव हि श्रूयन्ते। दोषसमभिव्याहृतगुणशब्दस्तूपादेय[तम]गुणपरः। "वर्षायुतैर्यस्य गुणा न शक्याः", "स ते गुणानामयुतैकदेशम्", "नान्तं गुणानां गच्छन्ति" इत्यादिस्मृतिवचनाभिप्रायेण [वा] सगुणवाक्यानामित्युक्तम्। तत्र गुणशब्दो दोषप्रतिपक्षवचनः; लोके तथा प्रसिद्धेः; प्रकरणवशाच्छागपशुन्यायेन कल्याणगुणरूपविशेषपर्यवसानस्य न्याय्यत्वाच्च। उक्तन्यायद्वयेन विरोधाभावादपच्छेदन्यायस्याविषयत्वमाह इति सगुणनिर्गुणवाक्ययोरिति। इतिशब्देन पूर्वोक्तसर्वहेतवो विवक्षिताः। उत्सर्गापवादन्यायात् सामान्यविशेषन्यायात् अध्यात्मशास्त्रेषु गुणशब्दस्य सत्त्वादिषु प्रसिद्धिप्राचुर्याच्चेत्यर्थः। सगुणनिर्गुणवाक्ययोरिति। अत्र तु विषयविभागान्न विरोध इति नापच्छेदनयः प्रवर्तत इति भावः। अन्यतरस्य मिथ्याविषयताश्रयणमपि नाशङ्कनीयमिति। सगुणवाक्यस्येति न ह्युक्तम्; किंतु अन्यतरस्येत्युक्तम्। सगुणेन निर्गुणवाक्यस्य वा निर्गुणेन सगुणवाक्यस्य वा बाधाश्रयणमनुपपन्नमित्यर्थः।

अत्रायमभिप्रायः—पूर्वं विरोधो नास्तीति परिहृतम्। इदानीं विरोधाभ्युपगमेऽपि नायमपच्छेदन्यायविषयः, अपि तु विरोधाधिकरणन्यायविषय एवेति। तथाहि—अपच्छेदन्यायो ह्यनियतविरोधपौर्वापर्यविषयः, उद्गातृप्रतिहर्त्रोरुभयोरपच्छेदनियमो नास्ति। तत्रापि क्रमेणापच्छेदोऽप्यनियतः। तन्नियमे सति हि सर्वस्वदक्षिणाकत्वादक्षिणाकत्वविरोधनियमः। उभयोरप्यपच्छेदे तस्य क्रमभावित्वे, 'उद्गात्रपच्छेदः पूर्वभावी, इतरस्तु चरमभावी' इति वा विपर्ययेणेति वा नियमो [ऽपि] नास्ति। अतोऽपच्छेदन्यायविषयः प्रयोगाबाधिकविरोधः।

---

1 'यः कौलकाले गुणी सर्वविदः' इत्यादौ न गुणसामान्यविधानम्, पृथक्बहुगुणोक्त्या 'वशी वदान्यो गुणवान्' इत्यादाविव विशेषपर्यवसानादिति भावः।

सगुणनिर्गुणवाक्यविरोधस्तु स्वरूपप्रयुक्तः; विधिनिषेधरूपतया नियतपौर्वापर्यश्च। अतो विरोधाभ्युपगमेऽप्यनियतविरोधपौर्वापर्यविषयोऽपच्छेदनयो नात्र प्रवर्तते; अपि तु विरोधाधिकरणन्याय एव प्रवर्तते। तद्विषये हि पौर्वापर्यनियमो विरोधनियमश्च विद्यते। तथाहि—"औदुम्बरीं स्पृष्ट्वोद्गायेत्" इति प्रत्यक्षश्रुतिः। "औदुम्बरी सर्वा वेष्टयितव्या" इति स्मृतिः। तत्र श्रुतिः प्रथमत एव प्रमितिं जनयति, निरपेक्षप्रमाणत्वात्। स्मृतिस्तु स्वमूलभूतश्रुत्यनुमानसापेक्षतया विलम्बितप्रवृत्तिः। अतस्तत्र पौर्वापर्यं नियतम्। औदुम्बरीस्पर्शतद्वेष्टनयोर्विरोधश्च नियतः। तत्र पूर्वमेव प्रमित्यां जातायां तद्विरुद्धार्थः कालात्ययापदिष्टः स्यात्। अतः, 'विलम्बितधीहेतोः शीघ्रधीहेतुर्बलीयान्' इति न्यायात् पूर्वस्याः श्रुतेर्बलीयस्त्वमित्युत्तरशास्त्रानुदय एव ॥ नन्वत्रार्थीतमेव ह्युत्तरशास्त्रमिति चेत्—ततः किम्? प्रमित्यनुदयो ह्यनुदयः; न तु शब्दानुदयः। आदित्यो यूप इतिवत् ॥ ननु तत्र स्मृतित्वश्रुतित्वे बाध्यबाधकभावप्रयोजके ॥ नैवम्; स्मृतित्वश्रुतित्वयोः पौर्वापर्यहेतुत्वात्। तेन सिद्धं पौर्वापर्यमेव बाध्यबाधकभावहेतुरिति न्यायसाम्यात् सगुणवाक्यबलीयस्त्वमिति।

यद्वा मा भूत् विरोधाधिकरणन्यायः; अत्र उपक्रमाधिकरणन्याय एव प्रवर्तते; विरोधपौर्वापर्यनियमात्। अतः सगुणवाक्यप्रतिबद्धत्वात् निर्गुणशास्त्रानुदय एवेति ॥ 'ननु प्रथमप्रवृत्तं विलम्बितस्योत्पत्तिप्रतिबन्धकं चेत्—नेदं रजतमिति ज्ञानोदयम्, इदं रजतमिति धीः प्रतिबध्नातु' इति चेत्—न; सत्तया ज्ञायमानतया च ज्ञापकयोरत्यन्तवैषम्यात्। सत्तया ज्ञापकं हि प्रमाणं पूर्वापरपरामर्शनिरपेक्षं ज्ञानं जनयति। तत्रोत्पन्नं ज्ञानम्, "पूर्वाबाधेन नोत्पत्तिरुत्तरस्य हि सिध्यति" इति न्यायात् पूर्वं बाधित्वैवोदेति। ज्ञायमानतया ज्ञापकं तु योग्यतापरामर्शादिसापेक्षं प्रमितिं जनयति। तत्र परामर्शदशायां पूर्वप्रमाणेन विरुद्धप्रमितिश्चेत्, सा प्रमितिरुत्तरोत्पत्तिं प्रतिबध्नातीति वैषम्यमिति ॥ एवं तर्हि, नेदं रजतमिति ज्ञानस्य इदं रजतमिति परामर्शसापेक्षत्वात् पूर्वज्ञानेन प्रतिबद्धस्य नेदं रजतमिति ज्ञानस्यानुदयप्रसङ्ग इति चेन्न—इन्द्रियस्य प्रत्यभिज्ञेतरज्ञानजनने पूर्वपरामर्शनिरपेक्षत्वात्। इहापि शुक्तिरियमिति शुक्तित्वविषया ह्युत्तरप्रमितिः। शुक्तित्वप्रतीतेश्च न रजतप्रतिपत्तिसापेक्षत्वम्। शुक्तित्वे गृहीते सति तद्ग्रहणफलभूतः नेदं रजतमिति व्यवहारो नञुल्लिखितत्वात् प्रतियोगिसापेक्षः प्रवर्तते। तत्सापेक्षत्वं च शब्दस्वभावाधीनम्। अतः शुक्तिज्ञानं रजतज्ञाननिरपेक्षमुदयमानं पूर्वं बाधित्वैवोदेति।

अतो नियतविरोधपौर्वापर्यविषयः उपक्रमाधिकरण (विरोधाधिकरण) न्याय एवात्र (विरोधाधिकरण न्याय उपक्रमधिकरणन्याय एव वा अत्र?) प्रवर्तते; न त्वपच्छेदनयः। स चेदशस्थले यदि प्रवर्तते, पश्वालम्भनमकर्तव्यं स्यात्; चरमभाविनः, न हिंस्यादिति निषेधस्य प्रबलत्वात्। ततश्चानुष्ठानविरोधः। सगुणनिर्गुणवाक्ययोर्विरोधपौर्वापर्यनियमः परेणैवोक्तः। अतोऽपि विरोधाधिकरणन्यायविषयत्वेनात्र अपच्छेदन्यायानवकाशात् सगुणवाक्यानां बलीयस्त्वं सिद्धमिति। एतदभिप्रायेण अन्यतरस्येत्युक्तम्।

उपाध्यनुक्तिपूर्वकश्रुत्युक्तानां गुणानां निरुपाधिकत्वस्य स्वतःप्राप्तत्वात्, स्वाभाविकत्वश्रुतेः, 'नान्यो हेतुर्विद्यत ईशनाय' इति ईशनस्याहेतुकत्वश्रवणेन तदौपयिकगुणानामपि निरुपाधिकत्वसिद्धेः, ज्ञानशक्त्यादितारतम्योपाधिभूतकर्मसंबन्धनिषेधपूर्वकसत्यकामत्वाद्युक्तेः, "त इमे सत्याः कामाः" इति स्वरूपवत् सत्यत्वश्रुतेः, "पराऽस्य शक्तिः', 'ते ये शतम्' इत्यादिभिर्गुणानामपरिच्छिन्नत्वप्रतिपादनेन कर्मसंबन्धव्यापक-

"भीषाऽस्माद्वातः पवते" इत्यादिना ब्रह्मगुणान् आरभ्य, "ते ये शतम्" इत्यनुक्रमेण क्षेत्रज्ञानन्दाति-

परिच्छेदनिवृत्त्या व्याप्यकर्मसंबन्धनिवृत्तेरर्थसिद्धत्वात्, स्वाभाविकत्वकण्ठोक्तिरहितगुणपरवाक्येष्वपि सर्वशाखा-प्रत्ययन्यायेन गुणानां स्वाभाविकत्वसिद्धेः, 'आनन्दं ब्रह्मणः' इत्यादितात्पर्यलिङ्गप्राचुर्यात्, उत्सर्गापवादन्याय-सामान्यविशेषन्यायाभ्यां विषयविभागात् एकस्यां श्रुतावेव विषयविभागस्य दृष्टतया च विरोधाभावात्, अपच्छेदन्यायाविषयत्वात्, विरोधे सत्यपि विरोधाधिकरणन्यायेन सगुणवाक्यप्राबल्यात्, 'यस्सर्वज्ञः' इत्यादिषूपासनविधिरहितेषु वाक्येषु स्वरूपवत् प्रतिपन्नत्वात्, मानान्तरागोचरतया अनुवादविषयत्वासंभवेन निषेद्धुमशक्यत्वात्, 'आत्मा वा अरे द्रष्टव्यः', 'सत्यं ज्ञानमनन्तं ब्रह्म यो वेद', 'आत्मानमनुविद्य व्रजन्त्येतांश्च सत्यान्' इति क्वचिदुपास्यत्वश्रवणस्य स्वरूपेऽपि तुल्यत्वात्, अध्यात्मशास्त्रेषु सत्त्वादौ(दिषु) गुणशब्दस्य प्रसिद्धिप्राचुर्याच्च निर्गुणवाक्यविषयत्वाभावात्, बाह्यतर्काणां कालात्ययापदिष्टत्वात्, अवधारणद्वयसहिताद्वितीय-श्रुति-ज्ञानानन्दस्वरूपत्व-वाङ्मनसनिवृत्ति-ज्ञेयत्वनिषेधरूपार्थगुणनिषेधानां परिहृतत्वाच्च निरुपाधिकाः ब्रह्मगुणा इत्युक्तवक्ष्यमाणार्थसङ्ग्रहः प्रवृत्ति(प्रतिपत्ति?)सौकर्याय दर्शितः।

सत्यं ज्ञानमिति ज्ञानपदेन सिध्यन् आर्थगुणनिषेधः पूर्वं परिहृतः। अथैतदनुवाकोपसंहारे च, "यतो वाचो निवर्तन्ते अप्राप्य मनसा सह" इति वाङ्मनसनिवृत्त्यभिधानान्निर्गुणत्वं फलितम्। अतस्तदैकार्थ्याच्च सत्यज्ञानादि-वाक्यस्य निर्विशेषपरत्वमिति शङ्कायाम्, आर्थगुणनिषेधपरतया परोक्तस्यास्य वाक्यस्योक्तार्थानुगुण्यमुपपादयति-**भीषाऽस्मादित्यादिना**। भीषाऽस्मादित्यनेन आज्ञापयितृत्वमुच्यते। **क्षेत्रज्ञानन्दातिशयमुक्त्वेति**। अत्र निर्विशेषत्वं प्रतिपिपादयिषितं चेत्—गुणानां क्रमेण न्यूनतां प्रतिपाद्य सर्वाभावे पर्यवसितं युक्तम्। अत्र तु क्रमेण गुणानामा-धिक्यमुक्त्वा वाङ्मनसनिवृत्त्यभिधानमानन्त्यादेवेत्यभिप्रायः। यथा, "संख्यातुं नैव शक्यन्ते गुणा दोषाश्च शार्ङ्गिणि। आनन्त्यात् प्रथमो राशिरभावादेव पश्चिमः॥" इति। प्रथमं मनुष्यानन्द मारभ्य क्रमेणातिशयो दर्शितः।

**साधु युवाध्यायकः**। **साधु**—यथाविधि सम्यक्संप्रदायसिद्धतया स्वरवर्णादिभ्रंशरहितं वा। **युवशब्देन** प्रत्यग्रत्वं विवक्षितम्। अविस्मरणान्नित्यनवं यथा भवति, तथा अध्ययनवानित्यर्थः। यद्वा स्वसमवयस्कानां सर्वेषामध्यापकः। तदधिकज्ञान इत्यर्थः। **आशिष्ठः**—आशुतरक्रियः। यद्वा अशनक्षमः; अरोग इत्यर्थः। यद्वा आशीर्वादविषयभूतः; सर्वानुरञ्जक इत्यर्थः। 'सर्वान् देवान् नमस्यन्ति' इतिवत्। **बलिष्ठः**—मनोबलवान्; **द्रढिष्ठ** इति शरीरबलस्योक्तत्वात्। यद्वा **द्रढिष्ठः**—दृढतरः; न त्वव्यवस्थितस्वभाव इत्यर्थः। **बलिष्ठः**—शारीरमानससर्वविधबलवान्। **वित्तस्य पूर्णा**—वित्तेन पूर्णा। "पूरणगुणसुहितार्थ-सदव्ययतव्यसमानाधिकरणेन" इति षष्ठ्यनुज्ञानात्। **स एको मानुष आनन्दः**। एवं गुणसमुदायं विभूतिपौष्कल्यं चोक्त्वा, 'स एको मानुष आनन्दः' इति श्रुत्या स्वरसतः तस्यैवानन्दत्वमुक्तम्। अनुकूलत्वं ह्यानन्दत्वम्। निवर्त्यानिष्टत्वेष्टसाधनत्वानपेक्षमिष्टत्वमनुकूलत्वम्। उक्तलक्षणयोगात् गुणविभूत्योरानन्द-त्वमुपपद्यते। तद्विषयज्ञानस्याप्यनुकूलत्वं विषयानुकूलत्वकृतमित्यन्वयव्यतिरेकसिद्धम्। एवञ्च सति श्रुतिस्वारस्यञ्च सिद्ध्यति। गुणविभूतिप्रकर्षमुक्त्वा, 'स आनन्द' इति ह्युक्तम्; न तु तद्विषयज्ञानमिति। युवत्वाद्यनेकगुणान् विभूतिमप्युक्त्वा तत्समुदायमानन्दशब्देन निर्दिश्य तस्यानन्दस्य निरतिशयत्वप्रतिपादनात्

शयमुक्त्वा, "यतो वाचो निवर्तन्ते अप्राप्य मनसा सह आनन्दं ब्रह्मणो विद्वान्" इति ब्रह्मणः कल्याण-गुणानन्त्यमत्यादरेण वदतीयं श्रुतिः। "सोऽश्नुते सर्वान् कामान् सह ब्रह्मणा विपश्चिता" इति ब्रह्मवेदन-

---

सर्वगुणानां विभूतेश्चानवधिकातिशयत्वं प्रतिपादितं भवति। अनुकूलज्ञानत्वमेवानन्दत्वमिति गुणविभूति-विषयज्ञानस्यानन्दत्वेऽपि तस्यानन्दस्य निरवधिकातिशयत्वोक्त्या गुणविभूत्योरप्यनवधिकातिशयत्वमर्थादुक्तं भवति; तदानन्त्यस्य गुणविभूत्यानन्त्यनिबन्धनत्वादिति। आरभ्येति—उपक्रमानुगुणमुपसंहृत(ति?) (संहार)वाक्यं नेयमिति भावः। श्रोत्रियस्य चाकामहतस्येति वाक्यैर्मुक्तानन्दस्य भगवदानन्दसाम्यमुक्तं भवति; बद्धदशायां निरतिशयानन्दासंभवात्। श्रोत्रियः—ब्रह्मनिष्ठः। अकामहतः—निवृत्ताविद्यत्वात् समस्तसांसारिकभोगानुपहतः। 'स एकः प्रजापतेरानन्दः' इत्यन्तेन क्षेत्रज्ञानन्दातिशय उक्तः। 'स एको ब्रह्मण आनन्दः' इति भगवदानन्द उच्यते। चतुर्मुखानन्दपरत्वे ब्रह्मशब्दास्वारस्यात् (ब्दस्वारस्यहानिः); 'परं जैमिनिर्मुख्यत्वात्', 'स्याच्चैकस्य ब्रह्मशब्दवत्' इति ब्रह्मशब्दस्य तत्रैव मुख्यवृत्तत्वस्य सूत्रितत्वात्; भाष्ये प्रथमसूत्रस्थब्रह्मशब्दव्याख्यानावसरे प्रपञ्चितत्वाच्च। 'ब्रह्मविदाप्नोति', ['अनन्तं ब्रह्म'] 'ब्रह्मणा विपश्चिता', 'आनन्दं ब्रह्मणः', 'असद्ब्रह्मेति वेद चेत्', 'अस्ति ब्रह्मेति चेद्वेद' इति प्रकरणस्थब्रह्मशब्दानां ब्रह्मपरत्वात् प्रकरणविरोधश्च। आनन्दं ब्रह्मणो विद्वानिति पूर्वत्रोत्तरत्र च आनन्दप्रतियोगिषष्ठ्यन्तब्रह्मशब्दस्वारस्यविरोधश्च। 'सैषाऽऽनन्दस्य' इति प्रक्रान्तब्रह्मानन्दस्य चतुर्मुखानन्देनोपसंहारानुपपत्तिश्च। 'तदप्येष श्लोको भवति' इति ब्रह्मानन्दं प्रकृत्य वक्ष्यमाणस्य श्लोकस्य उक्तविषयत्वविरोधश्च। 'स एकः प्रजापतेः' इति निरुपपदैकवचनान्तप्रजापतिशब्दस्वारस्यभङ्गश्च। न च तत् जात्येकबचनम्; बहुत्वैकत्वविवक्षायां बहुवचनैकवचननिर्देशप्रकरणत्वात्। देवानां, देवगन्धर्वाणां, मनुष्यगन्धर्वाणाम्, इन्द्रस्य, बृहस्पतेः, प्रजापतेरिति हि निर्दिश्यते। अतः प्रजापतिशब्दश्चतुर्मुखपरः। 'स एको ब्रह्मणः' इत्यत्र ब्रह्मशब्दो भगवत्परः॥ 'ते ये शतम्' 'स एक' इति भगवदानन्दस्य कथं परिच्छिन्नत्वमिति चेत्—न परिच्छिन्नत्वम्। एकक्षणार्धे बहूनि योजनानि गच्छतो रवे, "क्षिप्तेषुरिव सर्पति" इत्यादिषु साम्यकथनं यथा गतिमान्द्यनिवृत्तिपरम्, न तु परिच्छिन्नत्वपरम्—तद्वत् 'ते ये शतं-स एकः' इति निर्देशोऽपि चतुर्मुखानन्दाधिक्याभिप्रायः, न तु परिच्छेदपर इति। यद्वा ते ये शतमिति स एक इत्यस्य निर्देशस्य संख्याविशेषपरत्वेऽप्यानन्दस्यापरिच्छिन्नत्वं फलितम्। "अण्डानां तु सहस्राणां सहस्राण्ययुतानि च। ईदृशानां तथा तत्र कोटिकोटिशतानि च॥", "रोमकूपेष्वनन्तानि ब्रह्माण्डानि भ्रमन्ति ते" इत्यादिवचनैरण्डानामनन्तत्वेन तत्रतत्र चतुर्मुखानामप्यानन्त्यात् कालत्रयवर्ति-समस्तब्रह्माण्डगतचतुर्मुखानन्दापेक्षया शतगुणत्वात्, "मेरोरिवाणुर्यस्यैतद्ब्रह्माण्डमखिलं मुने" इत्युक्तत्रिपाद्वि-भूतिमत्तया च भगवदानन्दस्यात्यन्तमानन्त्यसिद्धेरिति। कल्याणगुणानन्त्यमिति। न हि क्रमेण गुणापकर्ष उक्तः; किन्तु गुणानां प्रकर्ष एवोक्तः। अतो गुणप्रकर्षस्य निरतिशयत्वाद्वाङ्मनसनिवृत्तिरिति भावः। अत्यादरेणेति ब्रह्मस्वरूपादपि तद्गुणेष्वादरातिशय उक्तः। 'आनन्दं ब्रह्मणो विद्वान्' इति हि श्रुतिः; न त्वानन्दान्वितं ब्रह्म विद्वानितीति भावः। इयं श्रुतिरिति। निर्गुणपरत्वेन त्वयोक्तैतत्प्रकरणस्था श्रुतिरप्य-स्मदुक्तार्थानुगुणैवेति भावः। एवमार्थगुणनिषेधनिरासद्वारा प्रकरणगतवाक्यान्तरेण गुणानन्त्यपरेणैकार्थ्यात् सत्यज्ञानादिवाक्यस्य सविशेषविषयत्वमुक्तम्। अथ स्ववाक्यैकदेशेनापि सविशेषपरत्वमुपपादयति सोऽश्नुत

फलमवगमयत् वाक्यं परस्य विपश्चितो ब्रह्मणो गुणानन्त्यं ब्रवीति। विपश्चिता ब्रह्मणा सह सर्वान् कामान् समश्नुते। काम्यन्त इति कामाः कल्याणगुणाः। ब्रह्मणा सह तद्गुणान् सर्वानश्नुत इत्यर्थः। दहरविद्यायाम्, "तस्मिन् यदन्तस्तदन्वेष्टव्यम्" इतिवत् गुणप्राधान्यं वक्तुं सहशब्दः। फलोपासनयोः प्रकारैक्यम्, "यथाक्रतुरस्मिन् लोके पुरुषो भवति, तथेतः प्रेत्य भवति" इति श्रुत्यैव सिद्धम् ॥

"यस्यामतं तस्य मतम्...अविज्ञातं विजानताम्" इति ब्रह्मणो ज्ञानाविषयत्वमुक्तञ्चेत्, "ब्रह्मविदाप्नोति

---

इत्यादिना। फलमवगमयद्वाक्यमिति। 'ब्रह्मविदाप्नोति परम्' इति ब्राह्मणे ब्रह्म तद्वेदनं प्राप्तिः प्राप्यं चेति चतुष्टयमुक्तम्। एतद्विवरणं सत्यज्ञानमित्यादिमन्त्रेण क्रियत इति श्रुतिरेवाह तदेषाभ्युक्तेति। तदेव ब्रह्माभिमुखीकृत्य ऋगेषाऽध्येतृभिरुक्तेत्यर्थः। मन्त्राणां ब्राह्मणविवरणरूपत्वदर्शनात् उपक्रमाधिकरणविषयवाक्ययोरिव आपातविरोधप्रतीत्यभावात् मन्त्रब्राह्मणयोर्नित्यनिर्दोषत्वाविशेषाच्च मन्त्रापेक्षया ब्राह्मणप्राबल्यवादोऽनुपपन्नः। स्फुटप्रतिपत्तिहेतुत्वतदभावावेव प्राबल्यदौर्बल्यशब्दविवक्षितौ चेत्—न विरोधः। "सत्यं ज्ञानमनन्तं ब्रह्म" इति ब्रह्मशब्दो विवृतः, "यो वेद निहितं गुहायाम्" इति विच्छब्दः, "परमे व्योमन् सोऽश्नुते" इति प्राप्तिः, "सर्वान् कामान्" इत्यादिना प्राप्यम्; तत्र परशब्दार्थविवरणमेतदिति दर्शयितुं परस्य विपश्चितो ब्रह्मण इत्युक्तम्। विपश्चित्त्वमपि भोग्यगुणत्वेनोक्तम्। वाक्यस्यार्थं वक्तुं पदानामन्वयं दर्शयति विपश्चितेति। किमत्र गुणवाचिपदमिति शङ्कायाम्, "यदा सर्वे प्रमुच्यन्ते कामा येऽस्य हृदि स्थिताः" इति त्याज्यतयोक्तकामव्यावृत्त्यर्थमवयवशक्त्या व्याचष्टे काम्यन्त इति। ब्रह्मवेदनफलतया मुक्तानुभाव्यत्वादिह त्याज्यकामपरत्वानुपपत्तेः, काम्यत्वस्य ब्रह्मस्वरूपेऽपि संभवे सत्यपि व्यतिरेकनिर्देशात् बहुवचनान्तत्वात् अवयवशक्तेः तदुक्तभोग्यत्वस्य च गुणेषु संभवात् 'स वा एतेन दिव्येन चक्षुषा मनसैतान् कामान् पश्यन् रमते य एते ब्रह्मलोके', 'य इहात्मानमनुविद्य व्रजन्त्येतांश्च सत्यान् कामान्', 'त इमे सत्याः कामाः' इत्यादिश्रुत्यन्तरैकार्थ्याच्च कामशब्दवाच्याः कल्याणगुणा इत्यर्थः। कस्येमे गुणाः? सहभावश्च ब्रह्मणः, पुत्रेण सहौदनं भुङ्क्ते इत्यत्र पुत्रस्येव किं भोक्तृतया, उत 'क्षीरेण सहौदनं भुङ्क्ते' इत्यत्र क्षीरस्येव भोग्यतया? इति शंकां च परिहरन् वाक्यार्थमाह ब्रह्मणेति। अस्य वाक्यस्य प्राप्यवाचिपरशब्दविवरणरूपत्वात्, सर्वान् कामान् सह ब्रह्मणेति भोग्यवाचिपदेनाव्यवहितप्रयोगस्वारस्याच्च सहशब्दो भोग्यसाहित्यपरः। सन्निहितं ब्रह्मैव च गुणानामाश्रयः। अतोऽनन्तगुणविशिष्टं ब्रह्मानुभवतीत्यर्थः। "सह युक्तेऽप्रधाने" इति शब्दानुशासनवशात् सहशब्देनाप्राधान्यं ब्रह्मण आशङ्क्य तत्परिहाराय सहशब्दप्रयोजनमाह दहरेति। 'यो वेद' इति विहिते वेदने गुणानां प्राधान्यसूचकः सहशब्दः। दहरविद्यायामुपासने हि गुणप्राधान्यमुक्तम्। तथा अत्राप्युपासने गुणप्राधान्यं वक्तुं सहशब्द इत्यर्थः। फलदशायां गुणप्राधान्यश्रवणादुपासने गुणप्राधान्यं कथं सिध्यतीत्यत्राह—फलोपासनयोरिति। फलोपासनयोरुभयोरपि सगुणत्वं गुणप्राधान्यं च तुल्यप्रकारमित्यर्थः। गुणप्राधान्यं वक्तुमित्यनेनापि सहशब्दस्य भोग्यसाहित्यपरत्वं सिद्धम्। अन्यथा भोक्तृप्राधान्यं हि सिध्येत्, न तु भोग्यगुणप्राधान्यमिति। श्रुत्यैवेत्येवकारेण उक्तन्यायस्य पुरुषबुद्ध्युत्प्रेक्षानिरपेक्षं श्रुत्या कण्ठोक्तत्वमभिप्रेतम् ॥

अथ सगुणानामेव ज्ञेयत्वं दृष्टमिति ज्ञेयत्वनिषेधे निर्गुणत्वं फलितमिति ज्ञेयत्वनिषेधपरत्वेन परोक्तं वाक्यमुपादत्ते। यस्येति। किं ज्ञानमात्राविषयत्वम्, उत उपासनात्मकज्ञानाविषयत्वम्, उत सगुणोपास-

परम्", "ब्रह्म वेद ब्रह्मैव भवति" इति ज्ञानान्मोक्षोपदेशो न स्यात्। "असन्नेव स भवति, असद्ब्रह्मेति वेद चेत्। अस्ति ब्रह्मेति चेद्वेद, सन्तमेनं ततो विदुः" इति ब्रह्मविषयज्ञानासद्भावसद्भावाभ्यामात्मनाशमात्मसत्ताञ्च वदति; अतो ब्रह्मविषयवेदनमेवापवर्गोपायं (गोय) सर्वाः श्रुतयो विदधति। ज्ञानञ्चोपासनात्मकम्, उपास्यञ्च ब्रह्म सगुणमित्युक्तम्। "यतो वाचो निवर्तन्ते अप्राप्य मनसा सह" इति ब्रह्मणोऽनन्तस्यापरिच्छिन्नगुणस्य वाङ्मनसयोः एतावदिति परिच्छेदायोग्यत्वश्रवणेन ब्रह्म एतावदिति ब्रह्मपरिच्छेदज्ञानवतां ब्रह्माविज्ञातममतमित्युक्तम्, अपरिच्छिन्नत्वाद्ब्रह्मणः। अन्यथा 'यस्यामतं तस्य मतम्', 'विज्ञातमविजानताम्' इति मतत्वविज्ञातत्ववचनं तत्रैव विरुद्ध्यते।

---

नात्मकज्ञानाविषयत्वं विवक्षितमिति विकल्पत्रयमभिप्रेत्य, प्रथमं ज्ञानमात्राविषयत्वं दूषयति ब्रह्मविदिति। ब्रह्मणो वेद्यत्वे श्रुतेरादरातिशयं दर्शयति असन्नेवेति। न ब्रह्मवेदनमपवर्गोपायः, अपि तु प्रपञ्चमिथ्यात्वज्ञानमेव तदुपाय इति परैरुच्यते। "विद्ययाऽमृतमश्नुते", "तथा विद्वान्नामरूपाद्विमुक्तः", "ततो ज्ञानं प्रवर्तते", "ज्ञानाग्निः सर्वकर्माणि" इत्यादिष्वनिर्दिष्टविशेषविषयेषु वाक्येष्वपवर्गोपायतया श्रूयमाणस्य ज्ञानस्य ब्रह्मविषयत्वप्रपञ्चमिथ्यात्वविषयतासाधारण्यात् तदाशङ्क्याह अत इति। अतः—केषुचिद्वाक्येष्वपवर्गोपायज्ञानस्य ब्रह्मविषयत्वदर्शनात्। सर्वाः श्रुतयः—अनिर्दिष्टविषयविशेषाः, 'विद्ययाऽमृतमश्नुते' इत्यादिकाः श्रुतयोऽपि सर्वशाखाप्रत्ययन्यायेन ब्रह्मविषयमेव वेदनमपवर्गोपायतया विदधतीत्यर्थः। यद्वा केषुचिद्ब्रह्मविषयत्वे श्रुते ज्ञानमात्रोपायपराः श्रुतयश्च सामान्यविशेषन्यायात् तत्रैव पर्यवस्यन्तीत्यभिप्रायः। अथोपासनात्मकज्ञानाविषयत्वपक्षं दूषयति ज्ञानं चेति। "तदेव ब्रह्म त्वं विद्धि नेदं यदिदमुपासते" इति श्रुतिरुपासनात्मकज्ञानाविषयत्वशङ्काबीजम्। वाक्यार्थज्ञानस्योपायत्वानुपपत्त्युपपादनात् परिहृतमित्यर्थः। 'नेदं यदिदमुपासत' इत्यस्यायमर्थः—यदिदं प्रतीकमुपासते, तन्न; तदेव परं ब्रह्म त्वमुपास्स्वेति। अथ सगुणोपासनाविषयत्वपक्षं प्रतिक्षिपति उपास्यञ्चेति। निर्गुणपरत्वेन परोक्तायाः सद्विद्याया एव सगुणविषयत्वोपपादनादिति भावः। यद्वा ज्ञानं चोपासनात्मकम्' इति। ज्ञानविशेषविषयत्वकण्ठोक्त्या ज्ञेयत्वमात्रनिषेधो दूरनिरस्त इति भावः। उपास्यं चेति। ज्ञेयत्वनिवृत्त्या सिषाधयिषिता गुणनिवृत्तिर्गुणविधानबाधिता। ततश्चाज्ञेयत्वं बाधित्वा ज्ञेयत्वमाक्षिपतीति भावः। तर्ह्यविज्ञातत्वामतत्वश्रुत्योः कोऽर्थ इत्यत्राह यतो वाच इति। अनन्तशब्देन सत्यं ज्ञानमित्यादिवाक्यं स्मारितम्। अनन्तस्येति स्वरूपानन्त्यमुक्तम्। अपरिच्छिन्नगुणस्येति गुणानन्त्यम्। अस्मिन्नर्थे—"न हि तस्य गुणाः सर्वे सर्वैर्मुनिगणैरपि। वक्तुं शक्या वियुक्तस्य सत्त्वाद्यैरखिलैर्गुणैः", "नान्तं गुणानां गच्छन्ति तेनानन्तोऽयमुच्यते", "तवानन्तगुणस्यापि षडेव प्रथमे गुणाः", "वर्षायुतैर्यस्य गुणा न शक्या वक्तुं समेतैरपि सर्वलोकैः। महात्मनः शङ्खचक्रासिपाणेर्विष्णोर्जिष्णोर्वसुदेवात्मजस्य", "चतुर्मुखायुर्यदि कोटिवक्त्रो भवेन्नरः क्वापि विशुद्धचेताः। स ते गुणानामयुतैकदेशं वदेन्न वा देववर प्रसीद", "यथा रत्नानि जलधेरसंख्येयानि पुत्रक। तथा गुणा ह्यनन्तस्य असंख्येया महात्मनः। इषुक्षयान्निवर्तन्ते नान्तरिक्षक्षितिक्षयात्। मतिक्षयान्निवर्तन्ते न गोविन्दगुणक्षयात्" इत्यादि द्रष्टव्यम्। परिच्छिन्नत्वज्ञाने कथं धर्मिणो ब्रह्मणोऽज्ञातत्वमित्यत्राह अपरिच्छिन्नत्वात् ब्रह्मण इति। ब्रह्मशब्दवाच्यस्य स्वरूपतो गुणतश्चापरिच्छिन्नत्वादित्यर्थः। न केवलं श्रुत्यन्तराविरोधार्थमेवमर्थ उक्तः, इतरथा स्ववाक्यव्याहतिप्रसङ्गाच्चेत्याह अन्यथेति। तत्रैव—स्ववाक्य एव।

यत्तु 'न दृष्टेर्द्रष्टारं.....न मतेर्मन्तारम्' इति श्रुतिः दृष्टेर्मतेर्व्यतिरिक्तं द्रष्टारं मन्तारं च प्रतिषेधतीति—तत् आगन्तुकचैतन्यगुणयोगितया ज्ञातुरज्ञानस्वरूपतां कुतर्कसिद्धां मत्वा, न तथाऽऽत्मानं पश्येः, न मन्वीथाः, अपि तु द्रष्टारं मन्तारमप्यात्मानं दृष्टिमतिरूपमेव पश्येरित्यभिदधातीति परिहृतम्। अथवा दृष्टेर्द्रष्टारं मतेर्मन्तारं जीवात्मानं प्रतिषिद्ध्य सर्वभूतान्तरात्मानं परमात्मानमेवोपास्स्वेति वाक्यार्थः। अन्यथा, "विज्ञातारमरे केन विजानीयात्" इत्यादिज्ञातृत्वश्रुतिविरोधश्च॥ 'आनन्दो ब्रह्म' इत्यानन्दमात्रमेव ब्रह्मस्वरूपं प्रतीयत इति यदुक्तम्; तत् ज्ञानाश्रयस्य ब्रह्मणो ज्ञानं स्वरूपमिति वदतीति परिहृतम्। ज्ञानमेव ह्यनुकूलमानन्द इत्युच्यते। "विज्ञानमानन्दं ब्रह्म" इति, आनन्दरूपमेव विज्ञानं ब्रह्मेत्यर्थः। अत एव भवतामेकरसता।

---

ज्ञेयत्वनिषेधे परिहृते ज्ञातृत्वनिषेधं परिहरति यत्त्वित्यादिना। दृष्टेर्मतेरिति पञ्चम्यन्तत्वाभिप्रायेण व्यतिरिक्तपदाध्याहारेण किं योजना, उत षष्ठ्यन्ततया व्यतिरिक्तपदानध्याहारेण योजना त्वया क्रियते इति विकल्पमभिप्रेत्य प्रथममध्याहारपक्षमनुवदति न दृष्टेरिति। परिहरति तदिति। प्रसक्तस्य हि प्रतिषेध इति शङ्कायां प्रसङ्गं दर्शयति कुतर्कसिद्धामिति। कुतर्कः कथमुपन्यस्तः इत्यपेक्षायां स्वरूपजडत्वे परोक्तं हेतुद्वयं सङ्ग्रहेणोपपादयति आगन्तुकचैतन्यगुणयोगितयेति। आगन्तुकत्वाद्गुणत्वाच्चेति हेतुद्वयम्। आगन्तुकत्वात्—अनित्यत्वात् ज्ञानं नित्यस्यात्मनो न स्वरूपं भवितुमर्हति; गुणत्वाच्च न स्वरूपमिति। यद्वा चैतन्यं नाम विषयप्रकाशः; तन्नित्यं स्वरूपं चेत्, सर्वदा विषयप्रकाशप्रसङ्ग इति भावः। दृष्टिश्रुतिमतिनिदिध्यासनानां ज्ञानविशेषाणां कर्तुरात्मनः स्वरूपस्य दृष्ट्यादिरूपत्वे विधीयमाने आत्मनः स्वरूपस्य न ज्ञानावान्तरभेदः शङ्कनीयः। तेषां ज्ञानविशेषरूपाणां स्वयम्प्रकाशत्वलक्षणं ज्ञानत्वमविशिष्टमिति तावन्मात्रमेव स्वरूपस्य विवक्षितं भवति। अयं परिहारः परपक्षेऽपि समानः। साक्षाद्योजनामाह अथवेति। दृष्टिश्रुतिमतिनिदिध्यासनानां कर्तारं जीवात्मानं प्रतिषिध्य परमात्मानमुपास्स्वेत्ययमर्थ उक्त इत्यर्थः। यद्वा अभिदधाती (तीती[1]?)त्यनुषङ्गः। जीवात्मानं प्रतिषिध्य परमात्मानमुपास्स्वेत्यभिदधाति श्रुतिः। इति वाक्यार्थ इति वाक्यान्तरम्। यद्वा प्रतिषिध्य—परित्यज्येत्यर्थः। अतः समानकर्तृकत्वोपपत्तिः। "यः प्राणेन प्राणिति योऽपानेनापानिति एष त आत्मा सर्वान्तरः" इति प्रस्तुतत्वात् प्राणेन प्राणितृत्वादि जीवात्मनः संभवतीति तदुपास्यत्वशङ्काव्यावृत्त्यर्थम्, न दृष्टेर्द्रष्टारं पश्येरित्याद्युच्यत इति अयमेवार्थः। अन्यथा श्रुत्यन्तरविरोधमाह अन्यथेति। गुणत्वमसिद्धम्, ज्ञानस्य स्वरूपत्वेन श्रुतिप्रतिपन्नत्वात्। ज्ञानं चेत्, आगन्तुकमिति न वाच्यम्; ईश्वरज्ञाने व्यभिचारात्। अस्मदादिज्ञानस्याप्यागन्तुकत्वं कालात्ययापदिष्टम्, 'न विज्ञातुर्विज्ञातेर्विपरिलोपो विद्यते' इति श्रुतेः—इति हेतुद्वयपरिहारः। विषयप्रवणत्वं धर्मभूतज्ञानस्यैव; सर्वसाधारणं ज्ञानत्वं स्वप्रकाशत्वम्। अतो न सर्वदा विषयप्रकाशप्रसङ्गश्च॥

ज्ञेयत्वनिषेधपरिहारानन्तरं बुद्धिस्थत्वात् ज्ञातृत्वनिषेधः परिहृतः। अथ आर्थगुणनिषेधान्तरं परिह्रियते आनन्द इत्यादिना। पूर्वोक्तं परिहारमत्रातिदिशति तत् ज्ञानाश्रयस्येति। कथं तेनेदं परिहृतमित्यत्राह ज्ञानमेव हीति। तर्हि श्रुतिषु विज्ञानानन्दशब्दयोः समभिव्याहारो नोपपद्यत इत्यत्राह विज्ञानमिति। स्वयंप्रकाशत्वानुकूलत्वरूपप्रवृत्तिनिमित्तभेदादुपपद्यत इति भावः। तथैव भवद्भिरभ्युपगतमित्याह अत एवेति। अत एव—ज्ञानानन्दशब्दयोरेकविषयत्वादेवेत्यर्थः। आनन्दस्य

---

1 इतिशब्दस्याप्यननुषङ्गे एक इतिशब्दोऽध्याहर्तव्यः स्यात्।

अस्य ज्ञानस्वरूपस्यैव ज्ञातृत्वमपि श्रुतिशतसमधिगतमित्युक्तम्। तद्वदेव, "स एको ब्रह्मण आनन्दः", "आनन्दं ब्रह्मणो विद्वान्" इति व्यतिरेकनिर्देशाच्च नानन्दमात्रं ब्रह्म; अपि त्वानन्दि; ज्ञातृत्वमेव ह्यानन्दित्वम्।

यदिदमुक्तम्, 'यत्र हि द्वैतमिव भवति', 'नेह नानास्ति किञ्चन। मृत्योः स मृत्युमाप्नोति य इह नानेव पश्यति', 'यत्र त्वस्य सर्वमात्मैवाभूत् तत् केन कं पश्येत्" इति भेदनिषेधो बहुधा (शो) दृश्यत इति—तत्—

आनन्दाश्रयत्वानभ्युपगमः किं श्रुत्या, उत व्याप्त्या? व्याप्त्या चेत्, कस्यचिद्धर्मः स्यात्। श्रुतिबलात् स्वतन्त्रत्वमिति चेत्—तत एवानन्दाश्रयत्वमभ्युपगम्यताम्। धर्मभूतानन्दस्य हि आनन्दाश्रयत्वाभावो दृष्टः। अतो व्याप्तिविरोधश्च नास्ति। अतः स्वतन्त्रत्ववत् गुणाश्रयत्वमपि श्रुतिसिद्धत्वात् स्वीकार्यमिति भावः। उभयत्र प्रमाणे सति हि न्यायसञ्चार इत्याशङ्कायां दृष्टान्तभूमौ प्रमाणस्य दर्शितत्वमाह अस्येति। दार्ष्टान्तिकेऽपि कण्ठोक्तिं दर्शयति तद्वदिति। ज्ञातृत्ववत् आनन्दित्वमपि कण्ठोक्तमित्यर्थः। ज्ञातृत्वश्रुतिरप्यानन्दित्वे प्रमाणमित्यभिप्रेत्याह ज्ञातृत्वमेव ह्यानन्दित्वमिति। ज्ञातृत्वातिरिक्तानन्दित्वव्युदासपर एवकारः। हिशब्दस्तदुपपत्तिसूचकः। अनुकूलज्ञानाश्रयत्वमेव ह्यानन्दित्वमित्यर्थः। ज्ञातृत्वश्रुतिर्ज्ञानाश्रयत्वनिषेधस्य आनन्दाश्रयत्वनिषेधस्य च विरोधिनीति भावः। अथ भेदनिषेधपरत्वेन परोक्ताः श्रुतीर्योजयितुमनुवदति यदिदमिति। यत्र हीत्यादिवाक्याभ्यां भेदनिषेधः कृतः। भेदप्रतिपत्तावनर्थं दर्शयति मृत्योरिति। "तमसो वा एष तमः प्रविशति" इतिवत्। नित्यानुवृत्तस्य भेदस्य कथं भ्रान्तिसिद्धत्वमित्यत्राह—यत्र त्विति। उक्तवाक्येषु वचनभङ्गीवैविध्याभिप्रायेण बहुधेत्युक्तम्। बहुश इति पाठे निषेधक्रियाऽऽवृत्तिरर्थः[1]। परिहरति तदिति। तच्छब्दस्य परिहृतमित्यत्रान्वयः। समस्तहेयप्रत्यनीकत्वेन समस्तकल्याणगुणात्मकत्वेन च श्रुत्यन्तरप्रसिद्धस्य ब्रह्मणो विकारास्पदक्लेशकर्मादिहेयपरवशजगदैक्यं व्याहतत्वाच्छ्रुतिर्न प्रतिपादयति॥ न व्याहतिः; हेयानामपारमार्थिकत्वादिति चेत्—अपारमार्थिकत्वे तत् निरसनीयम्, न वा? न चेत्—तन्निवृत्त्यर्थं शास्त्रमनर्थकं स्यात्। निरसनीयं चेत्—निरसनीयसंबन्ध एव हेयसंबन्ध इति तत्प्रत्यनीकस्य तत्सम्बन्धित्वे व्याहतम्। किञ्च, बहु स्यामिति सङ्कल्पपूर्वकं बहुभवनं श्रूयते। सर्वज्ञस्य स्वेच्छया स्वस्मिन् हेयापाद(योपादा)नमनन्वितमिति तत्प्रतिपादनमशक्यम्। असर्वज्ञत्वे, 'पश्यत्यचक्षुः स शृणोत्यकर्णः', 'स्वाभाविकी ज्ञानबलक्रिया च', 'यः सर्वज्ञः' इत्यादिश्रुतिविरोधः। हेयस्यापारमार्थ्येऽपि स्वसङ्कल्पेन स्वस्यानन्तापुरुषार्थभ्रमापादनं सर्वज्ञस्य नोपपद्यते। सार्वज्ञ्यस्याविद्यापरिकल्पितत्वाभ्युपगमात् अविद्यापूर्वकमेव बहुभवनभ्रमरूपं सार्वज्ञ्यमिति न वाच्यम्; स्वाभाविकीति श्रुतेः; "त इमे सत्याः कामाः" इति सत्यत्वश्रुतेश्च। स्वसार्वज्ञ्यमाविद्यिकत्वेन मिथ्येति न जानातीति चेत्—सार्वज्ञ्यं न स्यात्। जानातीति चेत्—तेनैव ज्ञानेन बाधितत्वात् सार्वज्ञ्यं न स्यात्। ततश्च पूर्वजगदाकारपर्यालोचनेन स्वसङ्कल्पपूर्वकं जीवकर्मानुगुणसृष्टिर्नोपपद्यते। अतः सार्वज्ञ्यस्याविद्यकत्वमनुपपन्नमिति सर्वज्ञस्य तस्य स्वगतहेयापादनं (योपादानं) न घटते। किञ्च हेयं स्वगतत्वेन जानतः सर्वशक्तेस्तस्य सत्यसङ्कल्पस्य सहसैव स्वगतहेयानिरासकत्वमपि नोपपद्यते। अशक्तत्वे, "पराऽस्य शक्तिर्विविधैव श्रूयते स्वाभाविकी" इत्यादिश्रुतिविरोधः॥ ईदृशविरोधो नास्ति; श्रुतिबलादविरुद्धत्वस्याभ्युपगन्तव्यत्वादिति चेत्—तर्हि 'विज्ञानघन एवैतेभ्यो भूतेभ्यः समुत्थाय तान्येवानुविनश्यति', 'न जायते म्रियते वा विपश्चित्', 'वायुश्चान्तरिक्षं चैतदमृतम्', 'आत्मनः आकाशः

---

1 बहुशः-बहुषु स्थलेषु। बह्वल्पार्थाच्छस्कारकादिति शस्। आवृत्तिलाभोऽर्थादिति भा॰ प्र॰।

सम्भूतः', 'न नभो न भूमिर्नेमे द्यावापृथिवी', 'अन्तवदेवास्य तद्भवति', 'नास्येष्टापूर्तं क्षीयेत' इत्यादिश्रुत्युक्तस्यात्मादीनां नित्यत्वानित्यत्वादेरपि श्रुतिप्रतिपन्नतया विरोधाभावादुभयमभ्युपगन्तव्यम् । ततश्च सर्वत्र यथाप्रतिपन्नस्वीकारे हि मीमांसारम्भवैयर्थ्यं स्यात् । प्रस्तुतभेदाभेदश्रुत्योरपि पारमार्थिकापारमार्थिकविषयत्वेन सोपाधिकनिरुपाधिकविषयत्वेन वा विभागकल्पनमनुपपन्नम्; तस्य विरोधपरिहारार्थत्वात्; विरोधस्य चाभावात् । ततश्च भेदपारमार्थ्यसिद्धिः । अतो विरोधोऽभ्युपगन्तव्यः । इह च विरोधोऽवगम्यते, 'मृत्योस्स मृत्युमाप्नोति य इह नानेव पश्यति' इति भेदप्रतिपत्तेः संसारहेतुत्वं श्रूयते । 'पृथगात्मानं प्रेरितारं च मत्वा जुष्टस्ततस्तेनामृतत्वमेति', 'जुष्टं यदा पश्यत्यन्यमीशमस्य महिमानमिति वीतशोकः' इति भेदज्ञानस्य मोक्षोपायत्वं श्रूयते । "द्वैतिनोऽतथ्यदर्शिनः" इत्यादिस्मृतिविरुद्धम्, "द्वाविमौ पुरुषौ", "आविश्य बिभर्त्यव्यय ईश्वरः.... यस्मात् क्षरमतीतोऽहमक्षरादपि चोत्तमः" इत्यारभ्य, "यो मामेवमसंमूढो जानाति पुरुषोत्तमम्" इति भेदज्ञानवतोऽसंमूढत्वं स्मर्यते । एवमादिवचनप्रतिपन्नस्य भेदस्य लोकसिद्धत्वाभावात्, निषेधार्थं भेदोऽनूद्यत इति वादोऽनुपपन्नः । किञ्च यदि भेदमात्रस्य लोकसिद्धत्वात्, अप्राप्ते हि शास्त्रमर्थवदिति न्यायात्, अभेद एव शास्त्रवेद्य इत्युच्यते—तर्हि सोऽयं देवदत्त इत्यादावभेदमात्रस्य च लोकसिद्धत्वात् अप्राप्ते शास्त्रस्यार्थवत्त्वाच्च शास्त्रेणाभेदप्रतिपादनमयुक्तम् ॥ देवदत्ताद्यैक्यं हि लोकसिद्धम्, न जीवपरयोः । अतस्तयोरभेदः शास्त्रप्रतिपाद्य इति चेत्—तर्हि घटपटादिभेद एव लोकसिद्धः, न तु जीवपरयोः । नियाम्यत्वनियन्तृत्वधार्यत्वधारकत्वशेषत्वशेषित्वव्याप्यत्वव्यापकत्वादिलक्षणभेदो न लोकसिद्ध इति स भेदः शास्त्रप्रतिपाद्य एव । यथोक्तमाचार्यपादैः—

"न द्वैतं प्रतिपादयन्त्युपनिषद्वाचः प्रसिद्धं हि तत् नित्यद्वैतमनन्यगोचरतया तद्वेद्यमास्थीयताम् ।

अप्राप्ते खलु शास्त्रमर्थवदिति व्यर्थः प्रयासो यतः प्रख्यातादपरस्तु शास्त्रविषयो भेदस्त्वदद्वैतवत्" ॥ इति । अयञ्चार्थोऽनन्तरमेव भाष्ये वक्ष्यते । अतः, अनुवाद इति निर्वाहो नोपपद्यते ।

भेदश्रुतिरुपासनार्था, न तु तत्त्वपरा, "पृथगात्मानं प्रेरितारं च मत्वा", "जुष्टं यदा पश्यत्यन्यमीशम्" इत्युपासनवाचिपदश्रवणादिति चेत्—तथापि तात्त्विक एव भेदः; तज्ज्ञानस्य मोक्षोपायत्वोक्तेः । तत्त्वज्ञानेन हि मोक्षः । न च फलविशेषायोपासनार्थत्वात् भेदश्रुतीनां भेदस्यातात्त्विकत्वं वाच्यम्; ऐक्यस्य चोपासनार्थत्वादसत्यत्वप्रसङ्गात् । श्रूयते ह्यभेदस्योपासनार्थत्वम्—"अथ योऽन्यां देवतामुपास्ते अन्योऽसावन्योऽहमस्मीति न स वेद", "आत्मेत्येवोपासीत" इति । ऐक्यस्योपासनार्थत्वे भेदस्य च तात्त्विकत्वं युक्तम् । वैनतेयध्यानेन ह्यैक्यमारोपितं दृष्टम्; भेद एव हि [1]नरेन्द्रवैनतेययोस्तात्त्विकः ॥ विधिशेषभूतव्यतिरिक्तेष्वपि वाक्येष्वभेदः प्रतीयत इति तस्य तात्त्विकत्वमिति चेत्—तर्हि "क्षरं प्रधानममृताक्षरं हरः", "प्रधानक्षेत्रज्ञपतिर्गुणेशः", "ज्ञाज्ञौ द्वौ", "ऋतं पिबन्तौ", "द्वा सुपर्णा", "नित्यो नित्यानाम्" इत्यादि-अविधिशेषभूतवाक्यावगतत्वाद्भेदस्यापि तात्त्विकत्वमवर्जनीयम् । उपास्तिफलभूतमुक्तिदशायामभेदात् अभेदपारमार्थ्यं चेत्—मुक्तिदशायां भेदश्रवणाद्भेदतात्त्विकत्वसिद्धिः । अत उपासनार्थत्वादपरमार्थविषयत्वेन भेदश्रुतिनिर्वाहो नोपपद्यते ।

---

1 नरेन्द्रः=विषवैद्यः ।

'कृत्स्नस्य जगतो ब्रह्मकार्यतया तदन्तर्यामिकतया च तदात्मकत्वेनैक्यात् तत्प्रत्यनीकनानात्वं प्रतिषिध्यते।

भेदाभेदयोर्नियतपौर्वापर्यविरोधवत्त्वादपच्छेदन्यायविषयत्वं सगुणत्वनिर्गुणत्वयोरिव न संभवतीति विरोधनयादुपक्रमनयाद्वा परभूतभेदनिषेधोत्पत्तिप्रतिबन्ध एव स्यात्। इदं च पूर्वमेव प्रपञ्चितम्।

एवं न्यायानुगृहीतश्रुत्यन्तरविरोधस्यावर्जनीयत्वम्, एषां निर्वाहाणामनुपपन्नत्वं च प्रदेशान्तरोक्तमिहाभिप्रेत्य, समीचीननिर्वाहं दर्शयति तदिति। जगत इति पदं ब्रह्मपर्यन्तम्। तस्य ब्रह्मकार्यतयेति पदेन ऐक्यादिति पदेन चान्वयः। तदन्तर्यामिकतयेत्यत्र सामर्थ्याज्जगत इत्यध्याहारः; तेन सकृत्प्रयुक्तस्य च (?) जगच्छब्दस्य निष्कर्षकत्वानिष्कर्षकत्वविरोधपरिहारः। 'सर्वं खल्विदं ब्रह्म तज्जलान्' इत्युक्तं जगतस्तज्जत्वं तल्लत्वं चोपजीव्याह ब्रह्मकार्यतयेति। ब्रह्मशब्दः कारणावस्थचिदचिद्विशिष्टपरः। तदनत्वमुपजीव्याह — तदन्तर्यामिकतयेति। तच्छब्दो विशेष्यपरामर्शी; विशिष्टे प्रकृते विशेष्यांशस्यापि प्रकृतत्वात्। यथा "सन्मूलाः, सदायतनाः" इत्यत्र सच्छब्दस्य विशिष्टपरत्वं विशेष्यपरत्वञ्च, तद्वत्। तत् ब्रह्म अन्तर्यामि यस्य, तत् तदन्तर्यामिकम्; तद्भावेनेत्यर्थः।

कथं तदनत्वेन तदन्तर्यामिकत्वसिद्धिः? उच्यते। अननं स्थितिः। ब्रह्मणो जगत्स्थितिहेतुत्वञ्च अन्तः प्रविश्य प्रशासनेन धारकत्वम्. "सन्मूलास्सोम्येमास्सर्वाः प्रजास्सदायतनास्सत्प्रतिष्ठाः" इत्यत्र सन्मूलाः सत्प्रतिष्ठाः इति पदद्वयं सच्छब्दवाच्यब्रह्माधीनोत्पत्तिलयपरम्। प्रतिष्ठा — निष्ठा — पर्यवसानम् — लयः; न तु सदाधारत्वम्; सदायतना इति पुनरुक्तिप्रसङ्गात्; एवं ब्रह्मण उत्पत्तिलयहेतुत्ववाचिपदद्वयमध्यगतेन स्थितिहेतुत्ववाचिना सदायतना इति पदेन धारकत्वसिद्धेः, "एतस्य वा अक्षरस्य प्रशासने गार्गि! द्यावापृथिव्यौ विधृते तिष्ठतः" इत्यत्र तिष्ठतिधातूक्तस्थितेः प्रशासनेन धारणाधीनत्वावगमात्, "अन्तःप्रविष्टः शास्ता जनानाम्" इति धारणहेतुभूतप्रशासनस्यान्तःप्रविश्यक्रियमाणत्वश्रवणात्, "तद्यथा अरेषु नेमिरर्पिता नाभावरा अर्पिताः, एवमेवैता भूतमात्राः प्रज्ञामात्रास्वर्पिताः प्रज्ञामात्राः प्राणे अर्पिताः", "मयि सर्वमिदं प्रोतं सूत्रे मणिगणा इव" इति श्रुतिस्मृतिभ्याम् अरनाभिमणिगणसूत्रदृष्टान्ताभ्यामन्तःस्थितस्य धारकत्वावगमात्, "तत् सृष्ट्वा तदेवानुप्राविशत्" इत्युक्तानुप्रवेशस्य सृष्ट्यनन्तरभावित्वादुदाहृतश्रुत्यैकार्थ्याच्च स्थित्यर्थत्वात्, "सप्त प्राणाः प्रभवन्ति" इत्यादिवाक्योक्तप्रक्रियया सृष्टस्य च जगतः "तेनेदं पूर्णं पुरुषेण सर्वम्" इति वाक्येन स्थितिवेलायां व्यापकेन परमपुरुषेण पूर्णत्वावगमात्, सर्वशाखाप्रत्ययन्यायेन व्यापननियमनधारणेष्वन्यतमोक्तावन्यतमस्य सिद्धत्वाच्च अनुप्रविश्य प्रशासनेन धारकत्वं स्थितिहेतुत्वमिति ह्यवगम्यते। एवं तज्जलानिति वाक्यमुपजीव्योक्तं जगतो ब्रह्मकार्यतया तदन्तर्यामिकतया चेति तदन्तर्यामिकत्वमुभयलिङ्गस्य ब्रह्मणः परमार्थजगदुपादानत्वान्यथानुपपत्तिसिद्धम्, घटकश्रुतिसिद्धञ्च।

चशब्दस्योत्तरत्रान्वयः, तदन्तर्यामिकतया तदात्मकत्वेन चेति। स आत्मा यस्य तत् तदात्मकम्; तदन्तर्यामिकत्वरूपेण तदात्मकत्वेनेत्यर्थः। अन्तःप्रविश्य नियन्ता ह्यात्मा। ब्रह्मकार्यतया तदन्तर्यामिकतया तदात्मकत्वेन चेत्युक्ते हेतुत्रयशङ्का स्यादिति तद्व्युदासार्थः चशब्दस्य प्राक्प्रयोगः। एवमुभयविधैक्यस्य विहितत्वादित्यर्थः।

ननु ऐक्यस्य कार्यकारणभावनिबन्धनत्वे कार्यावस्थजगद्विशिष्टस्य कारणावस्थचिदचिद्विशिष्टब्रह्मणा स्वरूपैक्यं युक्तम्। तदन्तर्यामिकत्वनिबन्धनत्वे तु न ब्रह्मणा ऐक्यम्, किन्तु प्रकारिणो ब्रह्मण एकत्वसंख्यान्वय एवेति ऐक्यशब्दस्यार्थभेदः स्यात्। ततश्च जगतस्तदात्मकत्वेनैक्यादिति वक्तुमयुक्तम्, प्रकारप्रकारिणोर्भिन्नत्वात्॥ नैवम्; जगद्ब्रह्मणोर्भिन्नत्वेऽप्यत्र जगच्छब्दो जगद्विशिष्टब्रह्मपर इत्युक्तत्वात्। ऐक्यशब्दस्य च नार्थभेदः; उभयथाऽपि विशिष्टैक्यपरत्वात्। तथाहि—कार्यकारणभावनिबन्धनमैक्यं नाम अवस्थाद्वयापन्नचिदचिद्विशिष्टवस्त्वेकत्वम्; यथा रूपस्पर्शादिविशिष्टघटस्य तादृशमृद्द्रव्येणैक्यम्। चिदचिदात्मकजगद्विशिष्टस्य स्वरूपेण गुणैश्च निरतिशयबृहत्त्वविशिष्टस्य चैक्यं प्रकार्यैक्यम्; यथा नैल्यविशिष्टस्य उत्पलत्वविशिष्टस्य चैक्यम्। न च विशेषणांशैक्याभावाद्वस्त्वैक्यहानिः; मृद्घटादावपि स्वरूपस्य रूपस्पर्शादीनां कार्यत्वकारणत्वावस्थयोश्चैकत्वाभावात्। इयान् विशेषः—कार्यकारणभावे भिन्नकालीनावस्थारूपसद्वारकविशेषणाश्रयधर्म्यैक्यम्, यथा स एवायं तरुणोऽभूदिति। अन्यत्र समकालसंबन्ध्यद्वारकानेकविशेषणाश्रयधर्म्यैक्यम्, यथाऽयं वेदविद्ब्राह्मण इति। बाल्ययौवने भिन्नकालीनसद्वारकावस्थे। वेदनं ब्राह्मणशरीरं च समकालवर्त्यद्वारकविशेषणम्। एवमुभयविधविशेषणविशिष्टधर्म्यैकत्वमैक्यशब्दार्थः। अतो जगच्छब्दवाच्यधर्म्यैक्यात् जगत ऐक्यादिति निर्देश उपपन्नः।

यद्वा कृत्स्नस्य जगत इति निष्कर्षकः शब्दः; ब्रह्मशब्दोऽपि विशेष्यमात्रपरः; कार्यावस्थां प्रति आधारत्वात्। आधारत्वं च साक्षाद्वा परम्परया वा मुख्यमेव। अतो ब्रह्मकार्यं जगत्। तदन्तर्यामिकशब्दो व्याख्यातः। एवं ब्रह्मकार्यतया तदन्तर्यामिकतया च जगत् तदात्मकम्। तदात्मकत्वं नाम जगतस्तत्प्रकारतैकस्वभावतया पृथगवस्थानाभावात् तदन्तर्गतत्वम्। तेन प्रकारेणैक्यम्; न तु स्वरूपैक्यम्। विशिष्टान्तर्भाव एवैक्यमित्यर्थः। तत्प्रत्यनीकनानात्वमिति। विहितोभयविधैक्यप्रत्यनीकनानात्वं निषिध्यत इत्यर्थः। कार्यकारणभेदः कुतर्कमूलभ्रान्तिविषयः। स्वनिष्ठभेदो लौकिकप्रतीतिमूलभ्रान्तिविषयः। अतो भ्रान्तिमूलत्वाविशेषात् विहितैक्यप्रत्यनीकत्वाविशेषाच्च तेनाकारेणोभयविधं भेदं नानाशब्देन परामृश्य निषिध्यत इति न वाक्यभेदः। तत्प्रत्यनीकेति। ऐक्यविधिशेषभूतो भेदनिषेधः; अन्वयमुखेनोक्तार्थस्थिरीकरणार्थत्वाद्व्यतिरेकोक्तेः। ऐक्यविधिश्च, 'नेह नानास्ती'ति प्रकरणे श्रूयते, एकधैवानुद्रष्टव्यमिति। एकधा—एकतया परमात्मशरीरतयैकप्रकारेणेत्यर्थः। तथा "अहमेकः प्रथममासं वर्तामि च भविष्यामि च। नान्यः कश्चिन्मत्तो व्यतिरिक्तः", "आत्मा वा इदमेक एवाग्र आसीत्। नान्यत्किञ्चन मिषत्", तथा "परमार्थस्त्वमेवैको नान्योऽस्ति जगतः पते", "अहं हरिः सर्वमिदं जनार्दनो नान्यत्ततः कारणकार्यजातम्", "तदच्युतो नास्ति परं ततोऽन्यत्" इत्यादिषु चैक्यविधिशेषतया भेदनिषेधो दृश्यते। शेषत्वं च विहितैकत्वस्थिरीकरणलक्षणकिञ्चित्कारेण भवति। यादृशमैक्यं विहितम्, निषेधस्य तादृशैक्यविरोधिभेदविषयत्वे सति तत्स्थिरीकरणार्थत्वं सिद्ध्येत्। न त्वविरोध्यर्थान्तरनिषेधस्तदुपयुक्तः। न हि मृदेव घट इत्युक्ते घटद्वित्वनिषेधो मृद्घटैकत्वोपकारकः; घटद्वित्वस्य मृद्घटैकत्वाविरोधित्वात्। नाप्येको घट इत्युक्ते घटगतरूपपरिमाणादिभेदनिषेधो घटाख्यधर्म्यैक्यविधेरुपकारकः, रूपपरिमाणादिभेदस्य घटव्यक्त्यैक्याविरोधित्वात्। विधेयविरोध्यर्थनिषेध एव हि विध्युपकारकः। किञ्च न केवलमुपकाराभावः; ऐक्यविधिविरुद्धं

न पुनः, बहु स्यां प्रजायेयेति बहुभवनसङ्कल्पपूर्वकं ब्रह्मणो नानात्वं श्रुतिसिद्धं प्रतिषिध्यत' इति परिहृतम्।
नानात्वनिषेधादियमपरमार्थविषयेति चेत्—न; प्रत्यक्षादिसकलप्रमाणानवगतं नानात्वं दुरारोहं ब्रह्मणः प्रतिपाद्य तदेव बाध्यत इत्युपहास्यमिदम्।

---

च कृत्स्नभेदनिषेधपरत्वम्; समानाधिकरणवाक्येनैक्यविधानात्। भिन्नविशेषणाभिधायिशब्दानामेकविशेष्यवृत्तित्वं हि सामानाधिकरण्यम्। न च प्रकारभेदे तिष्ठति कृत्स्नभेदनिषेध उपपद्यते। अतो भेदनिषेधस्यैक्यविधिशेषत्वात् कार्यकारणभेदः स्वनिष्ठभेदश्च निषिध्यत इत्यभिप्रायः। किञ्च, "न चास्य कश्चिज्जनिता न चाधिपः", "न तत्समश्चाभ्यधिकश्च दृश्यते', "तेनार्हति ब्रह्मणा स्पर्द्धितुं कः", "न त्वत्समोऽस्त्यभ्यधिकः कुतोऽन्यो लोकत्रयेऽप्यप्रतिमप्रभाव" इत्यादिभिः स्वतन्त्ररूपवस्तुविशेषविषयनिषेधदर्शनात् सामान्येनावगतो भेदनिषेधः तत्र छागपशुन्यायेन पर्यवस्यतीत्यर्थसिद्धम्। तत्प्रत्यनीकनानात्वमित्युक्तत्वात्; केषुचिद्वाक्येषु तस्य कण्ठोक्तत्वाच्च।

अथ उत्सर्गापवादन्यायमभिप्रयन्नाह न पुनरिति। ब्रह्मणः कार्यरूपेण नानात्वविषयश्रुतिवाक्योदाहरणं प्रकारनानात्वविषयवाक्यानामपि प्रदर्शनार्थम्। 'एकः सन् बहुधा विचचार', 'एको देवो बहुधा निविष्टः' 'त्वमेकोऽसि बहूननुप्रविष्टः', 'योऽव्यक्तमन्तरे सञ्चरन् यस्याव्यक्तं शरीरम् योऽक्षरमन्तरे सञ्चरन् यस्याक्षरं शरीरम् यो मृत्युमन्तरे सञ्चरन् यस्य मृत्युः शरीरम् एष सर्वभूतान्तरात्मा अपहतपाप्मा दिव्यो देव एको नारायणः' इति प्रकारनानात्वं प्रकार्यैकत्वं च हि स्पष्टं श्रूयते। यद्वा छान्दोग्ये तैत्तिरीये च बहु स्यामिति प्रकरणे, 'अनेन जीवेनात्मनाऽनुप्रविश्य', 'तदनुप्रविश्य सच्च त्यच्चाभवत् निरुक्तञ्चानिरुक्तं च निलयनं चानिलयनं च विज्ञानं चाविज्ञानञ्च' इति चिदचिदनुप्रवेशपूर्वकनामरूपभाक्त्वश्रवणात् उभयलिङ्गस्या[प्य]व्यवधानेन जगदुपादानत्वानुपपत्तेश्च बहु स्यामित्यत्रापि ब्रह्मणो बहुनामरूपभाक्त्वस्य सद्वारकत्वसिद्धेः शरीरतया प्रकारभूतचिदचिन्नानात्वमर्थसिद्धमित्यभिप्रायेण बहुस्यामिति वाक्यमुदाहृतम्। एवं कार्यनानात्वस्य प्रकारनानात्वस्य च विहितत्वात्, सामान्यनिषेधस्य च विहितव्यतिरिक्तविषयत्वाच्च कुतर्कसिद्धकार्यकारणभेदविषयाः लौकिकप्रतीतिसिद्धस्वनिष्ठभेदविषयाश्च भेदनिषेधश्रुतय इत्यर्थः।

नानात्वनिषेधादपरमार्थविषयत्वं शङ्कते नानात्वेति। इयम्—श्रुतिः। भेदस्तु निषेधार्थमनूद्यत इति भावः। परिहरति नेति। अप्राप्तस्यानुवादायोगात्। अतो विषयविभागादविरोध एव न्याय्यः। एतदुक्तमाचार्यपादैः,

"यद् ब्रह्मणो गुणशरीरविकारभेदकर्मादिगोचरविधिप्रतिषेधवाचः।
अन्योन्यभिन्नविषया न विरोधगन्धमर्हन्ति तन्न विधयः प्रतिषेधबाध्याः॥" इति।

समस्तहेयरहितस्य हेयाकारवस्त्वैक्यासंभवात्, हेयस्यापारमार्थ्येऽपि तस्य निरसनीयतया हेयत्वस्यावर्जनीयत्वात्, तत्प्रतिभटतयोक्तस्य तत्संबन्धार्हवस्त्वैक्यस्याव्याघातात्, सर्वज्ञस्य ब्रह्मणः स्वसङ्कल्पेन स्वगतहेयतद्विषयभ्रमापादनायोगात्, असर्वज्ञत्वे सार्वज्ञ्यश्रुतिविरोधात्, सर्वशक्तेः स्वगतहेयानिवारकत्वायोगात्, अशक्तत्वे सर्वशक्तिश्रुतिविरोधात्, श्रुतिबलादीदृशविरोधाभावे 'तान्येवानुविनश्यति' 'न जायते म्रियते वा' इत्यादिवाक्यप्रतिपन्ननित्यत्वानित्यत्वनिर्गुणत्वसगुणत्वादेः श्रुतिबलाद्विरोधाभावेन क्वचिदपि न्यायसञ्चारानपेक्षतया मीमांसानैरर्थक्यात्, भिन्नत्वाभिन्नत्वयोश्च विरोधाभावेन पारमार्थिकापारमार्थिकत्वेन विभागस्यानभ्युपगन्तव्यत्वात्,

"यदा ह्येवैष एतस्मिन्नुदरमन्तरं कुरुते । अथ तस्य भयं भवति" इति ब्रह्मणि नानात्वं पश्यतो भयप्राप्तिरिति यदुक्तम्—तदसत्; "सर्वं खल्विदं ब्रह्म तज्जलानिति शान्त उपासीत" इति तन्नानात्वानु-

"पृथगात्मानं प्रेरितारं च मत्वा जुष्टस्ततस्तेनामृतत्वमेति", "जुष्टं यदा पश्यत्यन्यमीशम्" इति पृथक्त्वज्ञानस्य मोक्षोपायत्वश्रवणात्, "यस्मात् क्षरमतीतोऽहम्" इत्यादिना भेदज्ञानवतोऽसम्मूढत्वस्मरणात्, जीवपरयोर्नियन्तृत्वनियाम्यत्वादिलक्षणभेदस्य घटपटभेदवत् प्रमाणान्तरागोचरत्वेनानुवादासम्भवाद्विहितस्य निषेधायोगात् उपासनार्थत्वाश्रयणस्य "अथ योऽन्यां देवताम्" इत्यादिवाक्यप्रतिपन्नैक्येऽपि प्रसङ्गात्, ऐक्यस्याविधिशेषवाक्यप्रतिपन्नत्वे भेदस्य च तुल्यत्वात्, नियतपौर्वापर्यविरोधतया अपच्छेदन्यायाविषयत्वात्, विरोधाधिकरणन्यायेन भेदश्रुतेः परभूतनिषेधोत्पत्तिप्रतिबन्धकत्वात्, ऐक्यविधिशेषस्य भेदनिषेधस्य विहितैक्यविरोधिभेदनिषेधकत्वोपपत्तेः, अन्यथा समानाधिकरणवाक्यप्रतिपन्नस्वशेषिभूतैक्यविरोधित्वप्रसङ्गात्, उत्सर्गापवादन्यायेन निषेधस्य विहितभेदव्यतिरिक्तविषयत्वात्, छागपशुन्यायेन भेदनिषेधस्य सामान्येन स्वतन्त्रभेदविशेषनिषेधपर्यवसायित्वाच्च भेदनिषेधश्रुतयोऽब्रह्मात्मकनानात्वनिषेधपराः; न तु भेदमात्रनिषेधपरा इति सङ्ग्रहः।

यत्रहीत्यादिवाक्यानामयमर्थः—यत्र यदा द्वैतमिव भवति—स्वनिष्ठभेद इव भवति । इवशब्दः स्वनिष्ठभेदस्यातात्त्विकत्वद्योतकः । कथमिवेतिवत् वाक्यभङ्गिरित्यविवक्षितार्थो वा । तत्—तदा । इतर इतरमितरेण पश्यति । केनेति वक्ष्यमाणत्वादितरेणेत्यध्याहारः । इतरः—स्वनिष्ठो द्रष्टा । इतरम्—स्वनिष्ठं द्रष्टव्यम्. स्वनिष्ठदर्शनसाधनेन पश्यति । यत्र तु-यदा । अस्य-उपासकस्य । सर्वमात्मैवाभूत्—परमात्मसामानाधिकरण्येन सर्वं साक्षात्कृतम् । न हि पूर्वमनात्मभूतमिदानीं सर्वमात्मा भवति । अतः साक्षात्काराभिप्रायः अभूदिति निर्देशः, अस्येत्युक्तेः । तत्—तदा । क इत्यध्याहारः; इतर इत्युक्तत्वात् । स्वनिष्ठः को द्रष्टा स्वनिष्ठेन केन दर्शनसाधनेन स्वनिष्ठं कं द्रष्टव्यमर्थं पश्येत् । ज्ञातृज्ञेयज्ञानसाधनेषु स्वनिष्ठं किञ्चिदपि नास्तीत्यर्थः । प्रमितनिषेधायोगादापातप्रतीतिसिद्धस्यैव निषेध्यत्वाल्लौकिकप्रतीतेश्च स्वनिष्ठताविषयत्वात् तेन रूपेणैव निषेधविषयत्वोपपत्तेः । यदि द्रष्टृदृश्यादिमात्रं निषिध्यते, तदानीं "तद्धैतत् पश्यन् ऋषिर्वामदेवः प्रतिपेदे अहं मनुरभवं सूर्यश्च" इति परमात्मसाक्षात्कारदशायाम् अहमिति द्रष्टुरात्मनो मनुसूर्यादिदृश्यपदार्थानां च साक्षात्कारश्रवणं विरुध्यते । तस्मात् लौकिकप्रतीतौ द्रष्टृदृश्यादिकं प्रकारिभूतपरमात्माप्रतिपत्तेस्तत्सामानाधिकरण्यमन्तरेण स्वनिष्ठतया भाति । योगदशायां तु प्रकारिणः परमात्मनः प्रतीयमानत्वादहंशब्दवाच्यपरमात्मसामानाधिकरण्येन प्रकाशत इति वैषम्यम् । न तु द्रष्टृदृश्यादीनि प्रतिषिध्यन्त इत्यभ्युपगन्तव्यम्; अन्यथा वामदेवादिदर्शनस्य भ्रान्तित्वप्रसङ्गात् ।

नेह नानेति । इह—प्रपञ्चे । लोकदृष्टप्रकारेण नानाभूतं स्वनिष्ठतया भिन्नं किञ्चिदपि नास्तीत्यर्थः । स्वनिष्ठदर्शनेन प्रत्यवायमाह मृत्योरिति । 'तमसो वा एष तमः प्रविशति' इतिवन्निर्देशः । नानेव—स्वनिष्ठमिव । अज्ञानादज्ञानमाप्नोतीत्यर्थः । देहातिरिक्तविषयाज्ञानं प्रागेव सिद्धम्; ततोऽप्यतिशयितमज्ञानं स्वनिष्ठतया तद्वस्तुदर्शनमित्यभिप्रायः ।

यदा ह्येवैष इत्यादिश्रुतिमुपादाय तत्र ब्रह्मणीत्यादिना पूर्वपक्षिणोक्तमर्थमनूद्य दूषयति तदसदिति । तदसत्—भयप्राप्तिहेतुत्वं नेत्यर्थः । कुत इत्यत्राह सर्वमिति । ब्रह्मणः कार्यजगद्रूपेण नानात्वानुसन्धानं

सन्धानस्य शान्तिहेतुत्वोपदेशात्। तथा हि सर्वस्य जगतः तदुत्पत्तिस्थितिलयकर्मतया तदात्मकत्वानुसन्धानेनात्र शान्तिर्विधीयते। अतो यथावस्थितदेवतिर्यङ्मनुष्यस्थावरादिभेदभिन्नं जगत् ब्रह्मात्मकमित्यनुसंदधानस्य शान्तिहेतुतया अभयप्राप्तिहेतुत्वेन न भयहेतुत्वप्रसङ्गः॥ एवं तर्हि, 'अथ तस्य भयं भवति' इति किमुच्यते॥ इदमुच्यते; 'यदा ह्येवैष एतस्मिन्नदृश्येऽनात्म्येऽनिरुक्तेऽनिलयनेऽभयं प्रतिष्ठां विन्दते। अथ सोऽभयं गतो भवति' इत्यभयप्राप्तिहेतुत्वेन ब्रह्मणि या प्रतिष्ठा अभिहिता; तस्याः विच्छेदे भयं भवतीति। यथोक्तं महर्षिभिः—

"यन्मुहूर्तं क्षणं वाऽपि वासुदेवो न चिन्त्यते। सा हानिस्तन्महच्छिद्रं सा भ्रान्तिः सा च विक्रिया"

इत्यादि। ब्रह्मणि प्रतिष्ठाया अन्तरम्—अवकाशः विच्छेद एव।

---

मुक्तिहेतुरिति सिद्धान्तार्थः। इदानीं परोक्तं शान्तिहेतुत्वमभ्युपगम्योक्तम्। कथं तत्र नानात्वानुसन्धानप्रतीतिः, कथं वा तस्य भयप्राप्तिहेतुताविरोधित्वमिति शङ्कायामेतद्विवृणोति तथाहीति। अत्र नानात्वानुसन्धानप्रतीतिं दर्शयति सर्वस्येति। न हि केवलं ब्रह्मेत्युक्तम; अपितु इदं सर्वं ब्रह्मेत्युक्तम्। सर्वशब्दश्च विविधभेदप्रपञ्चपरः। अतो नानात्वविशिष्टब्रह्मानुसन्धानं प्रतीतमित्यर्थः। ततः किमित्यत्राह अत इति। नानात्वानुसन्धानस्य शान्तिहेतुत्वद्वारा समस्तभयनिवृत्तिरूपमोक्षोपायत्वात् भेदबुद्धेर्भयप्राप्तिहेतुत्वोक्तिस्तद्विरुद्धेत्यर्थः॥ ननु मणिकृपाणदर्पणादिगतप्रतिबिम्बेष्विव देहेषु रागद्वेषादिनिवृत्त्यर्थं सर्वस्य ब्रह्मण्यध्यस्ततानुसन्धानाविधिः किं न स्यात्। नैवम्; प्रवृत्तिनिमित्तभेदेनैकार्थवृत्तित्वं हि सामानाधिकरण्यमित्युपपादितत्वात् बाधार्थत्वस्य वक्ष्यमाणदूषणोपहतत्वाच्च। अथ चोद्यपूर्वकमेतच्छ्रुत्यर्थमाह इदमुच्यत इति। अदृश्य इत्यचिद्व्यावृत्तिः। अनात्म्य इति बद्धव्यावृत्तिः; स हि परमात्मना व्याप्यः। यद्वा आत्म्यम्—व्याप्यं कर्मकृतशरीरम; तद्रहितोऽनात्म्यः। अनिरुक्त इति मुक्तव्यावृत्तिः; स हि बद्धावस्थायां देवादिशब्दैरुक्तः। अनिलयन इति नित्यमुक्तव्यावृत्तिः; तेषामपि हि भगवान् आधारः। स्वोक्तार्थविषयमुपबृंहणं दर्शयति यथोक्तमिति। हानिः—इष्टहानिः। छिद्रम्—अनिष्टप्राप्तिरन्ध्रम्। भ्रान्तिः—तत्कृतचित्तस्खलनम। विक्रिया—तेनाङ्गानाम् अवशात् अयथायथव्यापारः। "एकस्मिन्नप्यतिक्रान्ते मुहूर्ते ध्यानवर्जिते। दस्युभिर्मुषितेनेव युक्तमाक्रन्दितुं भृशम्॥", "वरं हुतवहज्वालापञ्जरान्तर्व्यवस्थितिः। न शौरिचिन्ताविमुखजनसंवासवैशसम्॥" इत्यादिवचनानि आदिशब्दविवक्षितानि। भेदवाचिनोऽन्तरशब्दस्य विच्छेदार्थकत्वं कथमित्यत्राह—ब्रह्मणीति। अविच्छिन्नं हि ध्यानं निरन्तरमित्युच्यते। अतोऽन्तरं विच्छेद एव। स कस्येत्यपेक्षायां प्रतिष्ठायाः प्रकृतत्वात् तस्याः विच्छेदः। प्रकृतब्रह्मविषये, 'तदप्येष' इत्युदाहृते, भीषाऽस्मादित्यनन्तरश्लोके वायुसूर्यादिसर्वचेतनप्रशासितृत्वकथनादन्तरशब्दस्योपासनविच्छेदपरत्वमेव युक्तम्; न तु भेदपरत्वम्। अतोऽयमर्थः पूर्वापरवाक्य-श्रुत्यन्तरानुगुणः उपबृंहणानुगुणश्च; परोक्तस्तु तदुभयविरुद्ध इति भावः॥

ननु यदा ह्येवैष इत्यत्र प्रतिष्ठाविच्छेदोऽर्थश्चेत्, एतस्यामिति स्त्रीलिङ्गता स्यात्॥ अदितिः पाशानिति न्यायात् विभक्त्यवगतनपुंसकत्वाविवक्षेति चेत्—तथाप्यस्वारस्यमवर्जनीयम्। तच्च स्वरसार्थे संभवति नोपपद्यते। सप्तमी चास्वरसा। तस्या विच्छेद इति ह्युक्तिः स्वरसा; न तु तस्यां विच्छेद इति। प्रातिपदिकास्वारस्यं च प्रतिष्ठापरत्वे स्यात्। पूर्ववाक्ये, 'यदा ह्येवैष एतस्मिन्नदृश्येऽनात्म्ये' इति ब्रह्मपरतया प्रयुक्तस्य एतस्मिन्निति पदस्यानन्तरवाक्येपि बुद्धौ विपरिवृत्तेः॥ उच्यते। न तावल्लिङ्गसप्तम्योः प्रातिपदिकस्य चास्वारस्यम्, ब्रह्मपरामर्शित्वादेतच्छब्दस्य। अन्तरशब्दश्चावकाशपरः; निरन्तरं सान्तरमिति प्रयोगात्। अन्तरञ्च

यदुक्तम् "न स्थानतोऽपि" इति सर्वविशेषरहितं ब्रह्मेति च वक्ष्यतीति—तन्न। सविशेषं ब्रह्मेत्येव हि तत्र वक्ष्यति। "मायामात्रं तु" इति च स्वाप्नानामप्यर्थानां जागरितावस्थानुभूतपदार्थवैधर्म्येण मायामात्रत्वमुच्यत इति जागरितावस्थानुभूतानामिव पारमार्थिकत्वमेव वक्ष्यति॥

स्मृतिपुराणयोरपि निर्विशेषज्ञानमात्रमेव परमार्थः; अन्यदपारमार्थिकमिति प्रतीयत इति यदभिहितम्—

तदसत्;—"यो मामजमनादिं च वेत्ति लोकमहेश्वरम्।",

---

देशतः कालतश्च भवति। कालकृतं चान्तरं विच्छेद एव॥ नन्वेवंसति कस्य विच्छेद इत्यपेक्षायाम्, प्रतिष्ठाया अन्तरमित्यध्याहारः स्यात्। तच्चायुक्तम्, अनध्याहारेण निर्वाहसंभवादिति चेत्—न; संनिधिलब्धस्यार्थस्याध्याहारनिरपेक्षत्वात्॥ अथाप्यस्वारस्यमिति चेत्, तद्वरम्। पक्षान्तरे बह्वस्वारस्यसंभवात्। तथाहि—भयहेतोरभयहेतुप्रतियोगित्वादभयहेतुपरप्रतिष्ठापदस्यैक्यवाचित्वाभावाद्वाक्यवृत्तेरसामञ्जस्यम्। तत्सामञ्जस्याय प्रतिष्ठाशब्दस्यैक्यपरत्वे मुख्यार्थहानिः। दृढसंबन्धो हि प्रतिष्ठा; यथा राज्ये प्रतिष्ठित इति। प्रथमप्रतिपन्नप्रतिष्ठापदस्यार्थभङ्गश्चानुपपन्नः। पूर्वसिद्धैक्यावगतिपरत्वात् विन्दतिधात्वर्थस्यास्वारस्यञ्च। सप्तमी चास्वरसा; भेदप्रतियोगित्वावधित्वसम्बन्धविवक्षायां तृतीयापञ्चमीषष्ठीनामेव स्वारस्यात्। करोतेः प्रतिपत्त्यर्थत्वादस्वारस्यञ्च। मनसि कुरुत इति योजनायामध्याहारः। एष ह्येवानन्दयातीति पूर्ववाक्यप्रतिपन्नभेदविरोधश्च। अनन्तरं च भीषास्मादिति प्रशासितृत्वेन भेद उच्यते। अतो मध्ये भेदनिषेधश्चानुपपन्नः। "आनन्दं ब्रह्मणो विद्वान्न बिभेति कुतश्चन", "कदाचन" इति पूर्वापरवाक्ये गुणविशिष्टवेदनस्याभयहेतुत्वोक्तेः ब्रह्मणि भेदनिषेधस्याभयहेतुत्वकथनं च विरुद्धम्। ब्रह्मविदाप्नोतीति विद्युपक्रमत्वाच्च ब्रह्मणि प्रतिष्ठाया वेदनरूपत्वमेव युक्तम्; न त्वैक्यरूपत्वम्। न ह्यैक्यतद्बुद्ध्योरुभयस्य च प्रतिष्ठाशब्दवाच्यत्वम्। दृढसम्बन्धवाचिनः प्रतिष्ठाशब्दस्य तु उपास्यं ब्रह्म प्रत्युपासकतया सम्बन्धे पर्यवसानं युक्तम्॥

ब्रह्मणो निर्विशेषत्वे व्यतिरिक्तमिथ्यात्वे च परोक्तं सूत्रद्वयं परिहरति यदुक्तमिति।

अथ स्मृतिपुराणयोः सविशेषपरत्वमुपपादयति। स्मृतीत्यादिना। स्मृतिपुराणयोरिति। सामान्येन प्रमाणस्य तदवान्तररूपस्य शब्दस्य च सविशेषवस्तुपरत्वोपपादनात्, शास्त्रस्य प्रत्यक्षविरुद्धार्थप्रतिपादनासामर्थ्योपपादनात् विशेषेण वेदान्तवाक्यानां सविशेषपरत्वोपपादनेन स्मृतिपुराणयोः श्रुतिविरुद्धार्थे प्रामाण्यासम्भवाच्च तयोः सविशेषपरत्वं सिद्धम्। इदानीं स्मृतिपुराणयोरपि परोदाहृतवचनानां पूर्वापरपर्यालोचनया सविशेषपरत्वमुपपाद्यते। यथा लौकिकप्रमाणश्रुतिविरुद्धान् अर्थान्नेदं शास्त्रं प्रतिपादयति, एवमेव पूर्वापरवाक्यविरुद्धमप्यर्थं न स्मृतिपुराणानि प्रतिपादयितुं शक्नुवन्तीत्यभिप्रायः। परेण सर्वस्याऽऽविद्यिकत्वाविशेषेण स्वाभाविकवक्तृवैषम्यानभ्युपगमादद्वैतस्पष्टताभ्रमाच्च पूर्वं पुराणवचनान्युपन्यस्य पश्चाद्भगवद्गीतावचनान्युदाहृतानि। अत्र तु स्वाभाविकवक्तृवैषम्याभ्युपगमादनन्तगुणविभूतिमत्त्वस्य स्पष्टतया च भगवद्गीतावचनानि पूर्वमुपन्यस्य पश्चात् पुराणवचनानि प्रदर्श्यन्ते; अतः स्मृतिपुराणयोरित्युक्तम्। परेण स्वोदाहृतवचनप्रतिपाद्यतया योऽर्थोऽभिहितः, तद्विपरीतार्थपरत्वेन स्पष्टतमानि वचनानि प्रथमं प्रदर्श्यन्ते, पश्चात्तदविरोधेन परोक्तवचनानामर्थप्रतिपादनार्थम्। यो मामिति। अत्र अजमिति पदेन अचित्संसृष्टचेतनव्यावृत्तिः। अनादिमिति मुक्तव्यावृत्तिः। तस्याजत्वं हि आदिमत्। लोकमहेश्वरमिति नित्यमुक्तव्यावृत्तिः। लोक्यत इति लोकः

"मत्स्थानि सर्वभूतानि न चाहं तेष्ववस्थितः। न च मत्स्थानि भूतानि पश्य मे योगमैश्वरम्।
भूतभृन्न च भूतस्थो ममात्मा भूतभावनः॥", "अहं कृत्स्नस्य जगतः प्रभवः प्रलयस्तथा।
मत्तः परतरं नान्यत् किञ्चिदस्ति धनञ्जय!। मयि सर्वमिदं प्रोतं सूत्रे मणिगणा इव",
"विष्टभ्याहमिदं कृत्स्नमेकांशेन स्थितो जगत्।", "उत्तमः पुरुषस्त्वन्यः परमात्मेत्युदाहृतः।
यो लोकत्रयमाविश्य बिभर्त्यव्यय ईश्वरः॥ यस्मात् क्षरमतीतोऽहमक्षरादपि चोत्तमः।

---

प्रमाणसिद्धत्रिविधचेतनाचेतनवर्गः, अत्रोत्तरार्द्धो[1](द्धार्थो)ऽप्यनुसन्धेयतया अभिप्रेतः, "असम्मूढः स मर्त्येषु" इति। चेतनाचेतनविलक्षणत्वेन जानन्नसम्मूढ इति कथनात् सर्ववैलक्षण्यं तात्त्विकमित्युक्तं भवतीत्यभिप्रायः। धारकत्वादिभिर्वैलक्षण्यं वैशद्यार्थमुपादत्ते **मत्स्थानी**ति। अत्र शरीरलक्षणं सूचितं भवति। सर्वभूतानि मदायत्तस्थितीनि; नाहं तदायत्तस्थितिरित्यर्थः। लोकदृष्टप्रकारेण नाहमाधारः, अपि तु सङ्कल्पमात्रादित्याह **नचे**ति। निषेधस्य विहितव्यतिरिक्तविषयत्वादयमेवार्थः। **योगमैश्वरम्**—ईश्वरासाधारणं सर्वशक्तियोगमित्यर्थः। न च मत्स्थानीति धारकत्वपारमार्थ्यनिषेधश्चेत्–योगमैश्वरं पश्येति विरुद्धम्। मम भ्रान्तिं पश्येति हि तदा वक्तव्यम्। योगमैश्वरमित्येतद्विवृण्वन् इममेवार्थमाह **भूतभृदि**ति। **ममात्मा**—मम सङ्कल्प इत्यर्थः। आत्मशब्दो हि मतिवाची, "यत्नेऽर्केऽग्नौ मतावात्मा" इति। अतोऽत्र आत्मशब्दः सङ्कल्परूपज्ञानवाची। 'ममात्मा भूतभावनः' इत्यनेन 'न च मत्स्थानि भूतानि' इत्यस्यार्थः स्पष्टीकृतः। **भूतभावनः**—भूतानां सत्तानुवर्तकः। अर्वाचीनस्येश्वरस्य हि सगुणत्वमिति शङ्कायां कारणातिरिक्तवस्तुनिषेधप्रदर्शनार्थं लक्षणप्रदर्शनार्थं च जगत्कारणत्वमाह—**अह**मिति। प्रभवः प्रलयश्चोक्तः; स्थितिस्तु धारकत्वकथनेन सिध्यतीति धारकत्वं विशिनष्टि **मयी**ति। **विष्टभ्याह**मित्यनेन नियन्तृत्वमुक्तम्। **विष्टभ्य**—अधिष्ठाय। **एकांशेन**—सङ्कल्पैकदेशेन। तच्च शरीरित्वलक्षणम्। योमामजमित्यादिनाऽभिप्रेतचिदचिद्वैलक्षण्यकण्ठोक्तिं दर्शयति **उत्तम** इति। पूर्वस्मिन् वचने **क्षराक्षर**शब्दोक्तौ बद्धमुक्तौ। **कूटस्थः**—निर्विकारः; ज्ञानसङ्कोचरूपविकाराभावान्मुक्तस्य। कूटस्थशब्दः साधारणवाची वा; सर्वेषु लोकेषु कामचारो भवतीति मुक्तात्मनः उभयविभूतिसाधारणत्वात् कूटस्थत्वम्। **परमात्मेत्युदाहृत** इत्यनेन 'परमात्मा व्यवस्थितः' इत्येतद्वाक्यान्वितो नारायणानुवाकः स्मारितः; **अक्षरादपि चोत्तम** इत्यनेन च। तत्रैव हि, 'सोऽक्षरः परमः स्वराट्' इत्युक्तम्। ज्ञानसङ्कोचरूपक्षरणाभावादक्षरो मुक्तः। **स्वराट्**—स्वतन्त्रः, अकर्मवश्यः। **परमः**—जीवगतावस्थासु अतःपरमुत्कृष्टावस्थान्तराभावात् पारम्यम्। [2]**सर्वाणी**ति पदं ब्रह्मशिवाद्यभिप्रायम्। तस्मिन्ननुवाके हि, "स ब्रह्मा स शिवः सेन्द्रः सोऽक्षरः परमः स्वराट्" इति बद्धमुक्तजीववाचिपदैः समानाधिकृतैर्भगवानुक्तः। तत्र 'विश्वमेवेदं पुरुषः' इति च सामानाधिकरण्यवाक्यं श्रूयते। सामानाधिकरण्यहेतुश्च तस्मिन्ननुवाके स्पष्टः। 'तद्विश्वमुपजीवति', 'पतिं विश्वस्यात्मेश्वरम्', 'व्याप्य नारायणः स्थितः' इति च वाक्यजाते धार्यत्वधारकत्वनियन्तृत्वनियाम्यत्व-शेषित्वशेषत्व-व्याप्यत्वव्यापकत्वादिकमेव सामानाधिकरण्यनिबन्धनम्, न तु तदै(द्रव्यै)क्यमिति स्पष्टम्। तदत्राप्युच्यते। आविश्येति 'व्याप्य नारायणः स्थितः' इत्यस्यार्थ उक्तः। 'पतिं विश्वस्ये'त्यस्यार्थः **ईश्वरशब्देनोक्तः**। ईश्वरशब्दो हि शेषिवाचकः। अत एव हि, 'पतिं विश्वस्यात्मेश्वरम्' इत्यत्र पत्यन्तररहित्य-

---

1 अर्धं इति पाठे अर्धशब्दः तृतीयपादरूपशकलपरः। 2 'क्षरः सर्वाणि' इत्यत्रेदम्।

अतोऽस्मि लोके वेदे च प्रथितः पुरुषोत्तमः", "स सर्वभूतप्रकृतिं विकारान् गुणादिदोषांश्च मुने! व्यतीतः।
अतीतसर्वावरणोऽखिलात्मा तेनाऽऽस्तृतं यद् भुवनान्तराले ॥
समस्तकल्याणगुणात्मकोऽसौ स्वशक्तिलेशाद्धृ(द्धृ)तभूतसर्गः ।

---

विवक्षायामात्मेश्वर इत्युक्तम् । 'तद्विश्वमुपजीवती'त्यस्यार्थो बिभर्तीत्युक्तः । तथा (तथा च?) "व्यापनाद्भरणात्स्वाम्यादन्यः पञ्चदशोदितः" इति । 'यो मामेवमसंमूढः' इति कृत्स्नवैलक्षण्यज्ञानवतोऽसम्मूढत्वमुक्तम् । 'इति गुह्यतमं शास्त्रम्' इति तस्यार्थस्य गुह्यतमत्वमुक्तम् । अतोऽस्मिन्नर्थे तात्पर्यमिति स्पष्टम् । पुरुषोत्तमशब्दस्य समासासाधुत्वमशङ्कनीयम्; "नागोत्तमादि च सिद्धं भवति" इति महाभाष्यवचनात् । पाणिनिवत् पुरुषोत्तमशब्दनिर्वाहकृतामृषीणामाप्ततमत्वाच्च । पुरुषोत्तम इति पञ्चमीसमासो वा; अक्षरादपि चोत्तम इति ह्युक्तम् । पूर्वनिपातस्तु सामानाधिकरण्यविवक्षायामेव, न तु तदविवक्षायामपीनि नानुशासनविरोधशङ्काप्रसङ्गः । एवमेभिर्वचनैश्चिदचिद्वैलक्षण्यस्य प्रतिपादितत्वात् 'क्षेत्रज्ञं चापि मां विद्धि' इत्यादेस्तदविरोधेनार्थो वर्णनीयः । 'यो लोकत्रयमाविश्य बिभर्ति' इत्यादिना कृत्स्नस्य भगवच्छेषत्वधार्यत्वनियाम्यत्वव्याप्यत्वशरीरत्वादेर्विहितत्वात् तस्य च निषेद्धुमयुक्तत्वात्, 'न तदस्ति विना यत् स्यात्' इत्यादिना अतदात्मकस्य नास्तित्वमुच्यते । अविनाभावशब्दस्य मिथ्यात्वपरत्वेन प्रसिद्ध्यभावाच्च तथाभ्युपेत्यमित्यभिप्रायः । विनाशब्दो हि सम्बन्धविरहपरः; अविनाभावशब्दस्य सम्बन्धनियमवाचित्वात् ।

अथ पुराणवचनान्युपन्यस्यन्ते । तत्र प्रत्यस्तमितभेदमित्यस्य वचनस्यार्थं व्याचिख्यासुः तदुपयोगित्वेन तदुपक्रमोपसंहारयोः सविशेषपरत्वं दर्शयिष्यन् उपक्रमवचनान्युपादत्ते स सर्वेति । तत्र प्रथमग्रन्थो हेयप्रत्यनीकत्वपरः । सर्वभूतप्रकृतिम् प्रधानम् । विकारान् महदादीन् । गुणादिदोषान् सत्त्वरजस्तमोहेतुकान् दोषान् । ते दोषाः क्लेशादयः । व्यतीतः—विशेषेणातीतः; नियमेन [अ]तत्परवशतया सम्बन्धानर्ह इत्यर्थः । अतीतसर्वावरणः । आवरणम्—प्रकृतिसंबन्धकर्मवासनादिकम् । तत् सर्वमतीतं येन, स इत्यर्थः । यद्वा सर्वविषयज्ञानावरणं सर्वावरणम् । सर्वविषयज्ञानसङ्कोचम(चा)तीत इत्यर्थः; ज्ञानशक्त्यादिसर्वगुणसङ्कोचकातीत इति वाऽऽर्थः । अखिलात्मत्वं विवृणोति तेनेति । न तु मृदात्मको घट इतिवदित्यर्थः । भुवनान्तराले—उभयविभूत्यन्तराले । अथ दिव्यात्मस्वरूपस्य मङ्गलैकतानत्वमाह समस्तेति । समस्तकल्याणगुणात्मक इति कल्याणगुणवत्त्वमुच्यते चेत्, आत्मशब्दः स्वभाववाची स्यात् । एवं संक्षिप्तार्थस्य तेजोबलैश्वर्येत्यादिना विस्तरः क्रियत इति विभागः (निर्वाहः) । अस्मादपि निर्वाहात् दिव्यात्मस्वरूपपरत्वं युक्तम्; अपेक्षितविधेरनपेक्षितविधानं दुर्बलमिति न्यायात् । तदा कल्याणशब्दो भावप्रधानः । समस्तकल्याणत्वं गुणः स्वभावो यस्य स समस्तकल्याणगुणः; यथा "द्व्येकयोर्द्विवचनैकवचने" इति सूत्रस्थद्व्येकयोरितिपदं द्वित्वैकत्वपरं व्याख्यातम् । अन्यथा द्व्येकेष्विति वाच्यम्; न तु द्व्येकयोरिति । तच्च भावप्रधाननिर्देशस्य साधुत्वज्ञापनाय कृतम् । तत एव हि, "गुणाः सत्यज्ञानप्रभृतयः" इत्यभियुक्तैरुक्तम् । समस्तकल्याणगुणः आत्मा=धर्मिस्वरूपं यस्य, स समस्तकल्याणगुणात्मकः । बहुव्रीहिरौपचारिकः; शिलापुत्रकस्य शरीरमिति निर्देशवत् । दिव्यात्मस्वरूपमेव स्तौति स्वशक्तीति । स्वांशलेशात् धृतभूतसर्गः । यद्वा शक्तिः—सामर्थ्यम्, स्वगुणलवधृतभूतजात इत्यर्थः । भूतसर्गः—भूतसमूहः । यद्वा सृज्यत इति सर्गः कार्यवस्तुजातमित्यर्थः ।

इच्छागृहीताभिमतोरुदेहः संसाधिताशेषजगद्धितोऽसौ ॥
तेजोबलैश्वर्यमहावबोधसुवीर्यशक्त्यादिगुणैकराशिः ।
परः पराणां सकला न यत्र क्लेशादयः सन्ति परावरेशे ॥
स ईश्वरो व्यष्टिसमष्टिरूपोऽव्यक्तस्वरूपः प्रकटस्वरूपः ।
सर्वेश्वरः सर्वदृक् सर्ववेत्ता समस्तशक्तिः परमेश्वराख्यः ॥
स (सं)ज्ञायते येन तदस्तदोषं शुद्धं परं निर्मलमेकरूपम् ।

---

अभिप्रायविशेषेण षाड्गुण्यं पश्चाद्वक्ष्यन् प्रथमं दिव्यविग्रहमाह इच्छेति । अभिमतत्वम्—अभिमत्यर्हत्वम्; स्वानुरूपत्वमिति यावत् । अर्हार्थे निष्ठा, यथा 'अदृष्टो द्रष्टा अश्रुतः श्रोता' इति । तत्र ह्यर्हार्थीयः क्तः; अद्रेश्यमग्राह्यमित्याद्यैकार्थ्यात् । अभिमतस्याननुरूपत्वम्, अनुरूपस्यानभिमतत्वं च लोके दृश्यते । तद्व्यावृत्त्यर्थम् इच्छागृहीताभिमतशब्दौ । निरुपपदेच्छाशब्दो नित्येच्छाया अवतारसमयजन्येच्छायाश्च साधारणः; असङ्कोचात् । अथावतारद्वारेण साध्यं विग्रहप्रयोजनमाह संसाधितेति । अथ षाड्गुण्यवत्तामाह तेज इति । नात्र क्रमविवक्षा । महाशब्दसुशब्दौ सर्वगुणसाधारणौ । महत्त्वमपरिच्छिन्नत्वम् । यथा 'महोत्साहो महाबलः महाबुद्धिर्महावीर्यो महाशक्तिर्महाद्युतिः'' इति । यथा "प्रकृष्टं विज्ञानं बलमतुलम्" इत्यादि । सुशब्देन तेषां मङ्गलत्वमुच्यते । एवं स्वरूपतो विग्रहतो गुणतश्च पर इत्याह पर इति । गुणादिदोषानित्यत्र दोषशब्दार्थं विवृणोति न यत्रेति । क्लेशादयः—क्लेशकर्मविपाकाशयाः । अविद्याऽस्मितारागद्वेषाभिनिवेशाः क्लेशाः । कर्म पुण्यापुण्यात्मकम् । जात्यायुर्भोगाः विपाकाः । आशयः—वासना, संस्कारः । "क्लेशकर्मविपाकाशयैरपरामृष्टः पुरुषविशेष ईश्वरः" इति योगसूत्रं स्मारयति स ईश्वर इति । योगशास्त्रादपि वेदान्तार्थवैषम्यमाह व्यष्टीति । पूर्वं भेदश्रुत्यर्थ उक्तः, अथैक्यश्रुतिनिर्वाहार्थं घटकश्रुत्यर्थ उच्यते—व्यष्टीति । व्यष्टिसमष्टिशब्दाभ्यां कार्यकारणा(णभावा)-वस्थश्चेतनवर्ग उच्यते । रूपम्—शरीरम् । स्वरूपम्—स्वासाधारणं शरीरम् । शरीरिलक्षणं सूचयति सर्वेश्वर इति । ईश्वरः—नियन्ता । अनेन नियाम्यत्वं शरीरत्वं सिद्धम्; नियाम्यविशेषो हि शरीरम् । सर्वदृक् सर्ववेत्ता—स्वरूपतः प्रकारतश्च सर्वं जानातीत्यर्थः । यद्वा विश्वतश्चक्षुरित्यादिश्रुतिप्रक्रियया सर्वतोदृग्भवन् सर्वं वेत्तीत्यर्थः । यद्वा सर्वेषां दृक् सर्ववेत्ता च; "चक्षुर्देवानामुत मर्त्यानाम्" इति श्रुतेः । चक्षुः—ज्ञानप्रदः । सर्वं विन्दतीति वा सर्ववेत्ता; अवाप्तसमस्तकाम इत्यर्थः । समस्तशक्तिः । शक्तिः—कार्योपयोग्यपृथक्सिद्धविशेषणम् । उक्तप्रकारेण सर्वशरीरकत्वादस्य सर्वमपृथक्सिद्धविशेषणमित्यर्थः । परमेश्वराख्य इति परमशब्देन अनन्येश्वरत्वं सिद्धम् (अन्येश्वरत्वं निषिद्धम्) । परो मा अस्येति हि परमः । एवंविधेश्वरविषयज्ञानस्यैवापवर्गोपायवेदनत्वमाह स ज्ञायत इति । संज्ञायत इति पाठे अस्तदोषमित्यादि ब्रह्म-विशेषणम् । येन शास्त्रजन्यज्ञानेन विज्ञायते, येनोपासनात्मकेन संदृश्यते, येन परमभक्तिरूपेणानुभवरूपेण च प्राप्यते—अनुभूयत इत्यर्थः । "भक्त्या त्वनन्यया शक्य अहमेवंविधोऽर्जुन । ज्ञातुं द्रष्टुं च तत्त्वेन प्रवेष्टुं च परन्तप'' इति वचनात् । स ज्ञायत इति पाठे अस्तदोषमित्यादि ब्रह्मज्ञानविशेषणम् । "अर्थेनैव विशेषो हि निराकारतया धियाम्'' इति वचनात् ज्ञानस्यास्तदोषत्वादिकं विषयद्वारा । अस्तदोषमिति दोषास्पदाचिद्विषय-ज्ञानाद् व्यावृत्तिः । शुद्धमिति 'अशुद्धास्ते समस्तास्तु' इत्याद्युक्तकर्मवश्याशुद्धबद्धजीवविषयज्ञानाद्व्यावृत्तिः । परं निर्मलम्—अत्यन्तनिर्मलम्; अनेन कदाचित्कर्मसंबन्धार्हतारूपमलान्वितमुक्तविषयज्ञानाद्व्यावृत्तिः ।

संदृश्यते वाऽप्यधिगम्यते वा तज्ज्ञानमज्ञानमतोऽन्यदुक्तम् ॥" "शुद्धे महाविभूत्याख्ये परे ब्रह्मणि शब्द्यते । मैत्रेय ! भगवच्छब्दः सर्वकारणकारणे ॥ संभर्तेति तथा भर्ता भकारोऽर्थद्वयान्वितः ।

---

एकरूपमिति [1]नित्यमुक्तविषयानेकरूपज्ञानाद्व्यावृत्तिः । अनया दिशा ब्रह्मविशेषणत्वेऽपि व्यावृत्तिर्द्रष्टव्या । ब्रह्मविशेषणत्वे एकरूपमित्याश्रयणीयत्वोपयोगिविशेषणं च भवति; स्थिरस्वभावम् ; आश्रितसंरक्षणादिप्रतिज्ञायां दृढतरमित्यर्थः । अज्ञानम्—मोक्षोपायज्ञानादन्यत् तद्विरोधि वा; "सा विद्या[2] या विमुक्तये" इति वचनात् । यद्वा अज्ञानम्—ज्ञानाभावः; ब्रह्मपर्यन्तत्वाभावेन अयथावस्थितवस्तुविषयत्वात् । ब्रह्मविशेषणत्वे एकवाक्यम्; ज्ञानविशेषणत्वे वाक्यद्वयम् ।

'प्रत्यस्तमितभेदम्' इत्यादिश्लोके प्रत्यस्तमितभेदपदं हृदि निधाय सविशेषत्वे वचनानि दर्शितानि ॥ अथ अगोचरं वचसामित्येतद्व्याचिख्यासया शब्दागोचरत्वे वचनानि दर्शयति शुद्ध इत्यादिना । तत्र अशब्दगोचरस्येत्यादिके पूर्वश्लोके मुक्तात्मनि भगवच्छब्द औपचारिक इत्युक्तम्; तत् कथमित्यपेक्षायां मुक्तात्मव्यावर्तकं भगवच्छब्दप्रवृत्तिनिमित्तमाह—शुद्ध इति । यत्र प्रवृत्तिनिमित्तपौष्कल्यम् तत्रैव हि मुख्यत्वम्, नान्यत्रेति भावः । शुद्धे । 'सिद्धे शब्दार्थसम्बन्धे' इत्यत्र सिद्धशब्दवच्छुद्धशब्दोऽवधारणगर्भः । शुद्ध एव—नित्यशुद्धे इत्यर्थः । 'अब्भक्षः' इतिवत् सिद्धशब्दस्यावधारणगर्भत्वात् सिद्धशब्दो नित्यपरत्वेन हि व्याख्यातः; तद्वत् । अनेन नित्यशुद्धत्वेन सकलचेतनव्यावृत्तिः; नित्यसिद्धानामपि नित्यशुद्धत्वस्य भगवन्नित्येच्छायत्तत्वात् । महाविभूत्याख्ये । विभूतिभूतस्य महाविभूतित्वायोगात् उभयविभूतिशेषित्वं समस्तचेतनव्यावर्तकम् । परे ब्रह्मणीत्यनेन च चेतनव्यावृतिः सिद्धा । अप(व ?)रात्मा हि केवलब्रह्मशब्देनोक्तः, 'अशब्दगोचरस्यापि तस्य वै ब्रह्मणो द्विज' इति । उत्तरत्र तु(?) 'परमब्रह्मभूतस्य' इति हि परमात्मा वक्ष्यते । प्रदेशान्तरेऽपि परब्रह्मशब्दः परमात्मपर एव दृश्यते । अतोऽपरमात्मव्यावृत्त्यर्थं, 'महाविभूत्याख्ये परे ब्रह्मणी'त्युक्तम्। सर्वकारणकारणत्वञ्च भगवत एव । जगद्व्यापाररहितो हि मुक्तात्मा । एवमुक्तप्रवृत्तिनिमित्तपौष्कल्यात् सर्वेश्वर एव भगवच्छब्दो मुख्यवृत्तः, नान्यत्रेत्यर्थः ।

इममर्थं विवृण्वन्नक्षरशः समुदायशश्च भगवच्छब्दार्थमाह—संभर्तेत्यादिना । शुद्धत्वम्, विना हेयैः इति विवृतम् । भोग्यसम्पद्वाचकेन ऐश्वर्यस्येतिश्लोकस्थश्रीशब्देन भोगविभूतेः, सम्भरणाद्युक्त्या लीलाविभूतेश्च दर्शितत्वान्महाविभूतित्वं विवृतम् । सर्वकारणकारणत्वं चोपरि स्पष्टम् । अत एव ज्ञानशक्त्यादिभिश्च निरतिशयबृहत्त्वात् परब्रह्मत्वं स्फुटम् । अत उत्तरग्रन्थानां शुद्ध इत्यादिश्लोकविवरणरूपत्वं युक्तम् । भश्च गश्च भगश्च वश्चेति विभज्यार्थ उच्यते । एतेषां पदानां तत्तद्धातुषु 'अन्येष्वपि दृश्यते' इति डप्रत्यये टिलोपे च कृते एवं रूपं भवतीति । भार्थमाह संभर्तेत्यर्द्धेन । सम्भर्ता । संभरणम्—उपकरणसंविधानम् । प्रकृतिपुरुषकालान् कार्योत्पत्तियोग्यान् करोतीत्यर्थः । महदादिसृष्टिः अण्डरूपकार्योत्पत्त्युपयुक्ता सम्भरणमिति वा विवक्षा । भर्ता—स्वामी; धारणस्य वकारवाच्यत्वात् पोषकत्वस्य गकारवाच्यनेतृत्वान्तर्भावात् अपेक्षितविधेरनपेक्षितविधानदौर्बल्याच्च स्वामित्वमिह विवक्षितम् । यद्यपि प्रत्ययविशेषयुक्तस्य भरतेः स्वामिनि रूढत्वम्, तथापि

---

1 नित्यानामनेकत्वात् तद्विषयकं ज्ञानं नैकरूपं भवति । 2 तत् कर्म यन्न बन्धाय सा विद्या या विमुक्तये । आयासायापरं कर्म विद्याऽन्या शिल्पनैपुणम् इति पूर्णश्लोकः ।

नेता गमयिता स्रष्टा गकारार्थस्तथा मुने ! ।।
ऐश्वर्यस्य समग्रस्य वीर्यस्य यशसः श्रियः । ज्ञानवैराग्ययोश्चैव षण्णां भग इतीरणा ।।
वसन्ति तत्र भूतानि भूतात्मन्यखिलात्मनि । स च भूतेष्वशेषेषु वकारार्थस्ततोऽव्ययः ।।''
''ज्ञानशक्तिबलैश्वर्यवीर्यतेजांस्यशेषतः । भगवच्छब्दवाच्यानि विना हेयैर्गुणादिभिः ।।''
''एवमेष महाशब्दो मैत्रेय ! भगवानिति । परमब्रह्मभूतस्य वासुदेवस्य नान्यगः ।।

पूर्वोक्तयुक्तिसाचिवार्षवचनवलात् धातुमात्रस्य स्वामि(त्व ?)वाचित्वं निश्चीयते । [1] इतिकरणेन संभर्तृत्वभर्तृत्वे प्रवृत्तिनिमित्ते निष्कृष्योच्येते । अत एव अर्थद्वयान्वित इत्युक्तम् । उत्तरत्र तु प्रवृत्तिनिमित्तत्रये सत्यपि इतिकरणेन तेषामनिष्कृष्टत्वात् प्रवृत्तिनिमित्तत्रयविशिष्टो धर्मी एक एवार्थ उक्तः । गकारार्थमाह नेतेति । उपसर्गस्फुटीकृतानामर्थानां धातुलीनत्वात् उद्गमयिता सङ्गमयितेत्येवंरूपपदानामर्थमाह नेतेति । स्रष्टेत्यनेन उद्गमयितृशब्दार्थ उक्तः । नेतेति गमयितृशब्दार्थ उक्तः । स्थितिकर्तेत्यर्थः । गमयितृशब्देन सङ्गमयितृ-शब्दार्थ उक्तः । स च संहारः । यथा ''यस्मिन्निदं सञ्च विचैति सर्वम्'' इत्यत्र व्येति समेतीति सर्गसंहारा-वुच्येते, तद्वत् । यद्वा कारणभूतं स्वात्मानं गमयिता; स्वस्मिन् कार्यवर्गस्य लयकर्तेत्यर्थः । उपसर्गाप्रयोगेऽपि अर्थानां धातु[2]लीनत्वादेवं व्याख्यातं भगवता पराशरेण । अथ वकारव्याख्यानात्पूर्वमेव भकारगकार-समुदायस्यार्थमाह ऐश्वर्यस्येति । समग्रशब्दः सर्वत्रान्वेति । परिच्छिन्नचतुर्मुखाद्यैश्वर्यव्यावृत्त्यर्थः समग्रशब्दः । यशः गुणवत्ताप्रथा । श्रीः भोग्यसंपत् । वैराग्यं विरक्तिः; परिपूर्णत्वादनादरतेत्यर्थः । यथा 'अवाक्यनादरः' इति । मतुप्प्रत्ययस्य प्रसिद्धार्थत्वाद् न तद् व्याख्यातम् । अथ वकारार्थमाह वसन्तीति । ''अन्येष्वपि दृश्यते'' इति डप्रत्ययस्यानेकार्थत्वादधिकरणे कर्तरि च व्युत्पत्तिः । भूतात्मनि भूतानामात्मनि । अखिलात्मनि अखिलशरीरके । यद्वा—भूतशब्देन कार्यमुच्यते ; तस्यात्मनि, अखिलात्मनि कार्यान्तर्भूतानां नित्यमुक्तानामात्मनीत्यर्थः । अथ समुदायशक्तिविषयमर्थमाह ज्ञानशक्तीति । पाठक्रमे तु 'एवमेष' इत्यादि-श्लोकद्वयानन्तरं ज्ञानशक्तिबलैश्वर्येत्यादिश्लोकः पठ्यते । तथापि प्रवृत्तिनिमित्तवाचित्वसङ्गतिवशात् 'एवमेष' इत्यादिश्लोकद्वयात्पूर्वं ज्ञानशक्तीत्यादिश्लोक इहोपात्तः । 'उत्पत्तिं प्रलयं चैव' इत्यादिश्लोकस्य प्रस्तुतानुपयुक्तत्वाच्च एवमुपादानं कृतम् । भगवच्छब्दवाच्यानि—प्रवृत्तिनिमित्तत्वेन वाच्यानीत्यर्थः । अशेषतः । न प्रत्येकं प्रवृत्तिनिमित्तानि ; अपितु समुच्चित्येत्यर्थः । अशेषशब्देन षाड्गुण्यावान्तरभिदारूपं शीलादिगुणजातं च क्रोडीकृतम् । यद्यप्यैश्वर्यवीर्यज्ञानानि पूर्वं कण्ठोक्तानि, तथापि कतिपयसमुदाय्यात्रापो-द्वापप्रयुक्तसमुदायभेदादपुनरुक्तिः । न चात्र समुदायशक्तिः कल्प्यते, येनानुक्तगुणमात्रगोचरता स्यात् । वचनबलादेव शक्तिस्वीकारः । पूर्वमक्षरार्थकथनेन भकारगकारवकाराः व्याख्याताः ; अथ अन् इत्यस्यार्थमाह विनेति । कश्यपः पश्यको भवतीति न्यायात् अन्नित्यनेन नेत्युक्तं भवति; निषेध्यं च हेयमित्यर्थः । एवं प्रवृत्तिनि-मित्तपौष्कल्याद्भगवत्येव मुख्यवृत्तत्वमाह एवमिति । महार्थगर्भत्वान्महाशब्दत्वम् । मुक्तात्मव्यावृत्त्यर्थं परमब्रह्मे-

---

1 ननु संभर्तुरेव भर्तृत्वादर्थद्वयं कथमित्यत्राह इतिकरणेनेति । अत्रार्थपदं प्रवृत्तिनिमित्तपरम् । उत्तरत्र गकारार्थ इत्येकवचनं धर्म्यैक्यात् । अर्थद्वयान्वितत्वं नाम धर्मद्वयप्रवृत्तिनिमित्तकत्वमिति भावः ।

2 धातुलीनत्वात्—उचितपदाध्याहारेण धातुगम्यत्वात् । अर्थत्रयमपि उपसर्गं विनैव सुवचमिति एतद्वाक्यार्थः । अतः पूर्वोक्तात् भेद इति न वाक्यवैयर्थ्यम् ।

तत्र पूज्यपदार्थोक्तिपरिभाषासमन्वितः । शब्दोऽयं नोपचारेण अन्यत्र ह्युपचारतः ॥"
"समस्ताः शक्तयश्चैता नृप! यत्र प्रतिष्ठिताः । तद्विश्वरूपवैरूप्यं रूपमन्यद्धरेर्महत् ॥
समस्तशक्तिरूपाणि तत् करोति जनेश्वर! । देवतिर्यङ्मनुष्याख्याचेष्टावन्ति स्वलीलया ॥
जगतामुपकाराय न सा कर्मनिमित्तजा। चेष्टा तस्याप्रमेयस्य व्यापिन्यव्याहतात्मिका ॥" "एवम्प्रकारममलं नित्यं

---

ह्युक्तम् । कथं तत्रैव मुख्यवृत्तत्वम् ; अन्यत्रापि तत्प्रयोगो दृश्यत इत्यत्राह तत्रेति । पूज्यपदार्थोक्तिः पूज्यानामवयवार्थानामुक्तिः; परिभाषा रूढिः; ताभ्यां समन्वितः । योगरूढिभ्यां विशिष्टः । अत एव नोपचारेण । मुख्यवृत्त इत्यर्थः । अन्यत्रामुख्यत्वमुक्तमित्याह अन्यत्र हीति । मुक्तात्मन्यौपचारिकत्वोक्त्या अर्थान्तरप्रयोगेष्व-प्यौपचारिकत्वमर्थात् दर्शितमिति हिशब्दाभिप्रायः । भगवच्छब्दप्रयोगविषयेषु सर्वेषु प्रयोगे अन्यथासिद्धेऽपि न हि शक्तिभेदकल्पनं युक्तम् । यत्र ज्ञानादयो निरङ्कुशाः, स एव मुख्यार्थः । गुणलेशयोगादपि प्रयोगसंभवादन्यत्र वृत्तिरौपचारिकीत्यर्थः ।

अथ तस्मिन्नेव योगप्रकरणे उपसंहारेऽपि सविशेषपरवाक्यानि दर्शयन् दिव्यविग्रहवत्त्वं चाह समस्ता इति । बद्धो मुक्तः कर्मरूपाविद्या च शक्तयः । तत्तदभिमानिदेवताद्वारेण तत्र तासां प्रतिष्ठितत्वम् ; यत्रेत्यनुवादस्य पुरोवादसापेक्षत्वात् ; अस्त्रभूषणाध्याये यथोक्तप्रकारेण पुरोवादाच्च । तद्विश्वरूपवैरूप्यमिति संनिवेशवैलक्षण्यमुक्तम् । अन्यदिति द्रव्यान्तरत्वमुक्तम । महदित्यपरिच्छेद्यत्वम् । विलक्षणसंनिवेशस्य सकलेतरविसजातीयस्य कथं चिन्तयितुं शक्यत्वमित्यत्राह समस्तेति । केन हेतुनेत्यत्राह स्वलीलयेति । लीलायाः प्रयोजनत्वात् तदभिसन्धिर्हेतुः । न तु कर्मणेत्यर्थः । किं प्रयोजनमित्यत्राह जगतामिति । न तु स्वकर्मफल-भोगायेत्यर्थः । एतद्विवृणोति न सेति । व्यापिनी देशनियमरहिता ; यथा वैदिकपुत्रानयनादिषु । व्यापन-शक्तत्वेऽपि प्रतिबन्धः संभवतीत्यत्राह अव्याहतात्मिका । न तस्याः प्रतिहतिरस्तीत्यर्थः । यद्वा व्यापिनी— सर्वावतारानुगुणा । अव्याहता[त्मिका ?] देशकालवस्तुकृतप्रतिबन्धरहिता ।

एवं प्रत्यस्तमितेति श्लोकस्य परमात्मपरत्वाभ्युपगमेऽपि निर्विशेषपरत्वनिराचिकीर्षया उपक्रमोपसंहारयोस्त-स्मिन्नेव प्रकरणे सविशेषपरत्वं दर्शितम् । अथास्य श्लोकस्य परिशुद्धजीवात्मस्वरूपविषयत्वं प्रत्यस्तमितभेदादिपदानां कतिपयविषयत्वं च विवक्षुः, तदर्थं परमात्मविषयभेदनिषेधादीनां कतिपयविषयत्वाभिधायीनि वाक्यानि दर्शयिष्यन्, परमात्मविषयकतिपयभेदनिषेधपरवचनोदाहरणेन मुक्तात्मविषये किमायातमिति शङ्कायां मुक्तस्य परमात्मसाम्यप्रति-पत्तये मुक्तगुणान् परमात्मन्यतिदिशन्तं श्लोकं दर्शयति एवम्प्रकारमिति । एतच्छ्लोकोदाहरणेन प्रत्यस्तमितेत्यादि-श्लोकानन्तरं पूर्वपक्षे पठितस्य 'ज्ञानस्वरूप'मित्यादेः प्रथमांशोपक्रमश्लोकस्य चतुःश्लोक्याश्च सविशेषपरत्व-प्रतिपादनाय प्रथमांशोपसंहारेऽपि सविशेषपरत्वं दर्शितं भवति । उपसंहारवचनोपादानमुपसंहारस्य बुद्धिस्थ-त्वात् क्रियते । एवम्प्रकारम् । मुक्तात्मानं प्रति 'निर्व्यापारमनाख्येयम्' इत्यादिना यः प्रकार उक्तः तदुपेत-मित्यर्थः । एवं भगवति मुक्तात्मगुणातिदेशः कृतः । भेदराहित्यस्य सत्तामात्रत्वस्य वचसामगोचरत्वस्य च मुक्तगुणस्य निर्व्यापारमित्यादिनोक्तस्य भगवत्यतिदिष्टत्वात् भगवति च तेषां निषेधानां कतिपयविषयत्वस्य प्रामाणिकत्वाच्च ते निषेधा मुक्तात्मन्यपि तथाविधा इति कतिपयविषयत्वं सिद्धमिति भावः । अथ परमात्मनोऽ-धिकान् गुणानाह । अमलम्—मलप्रतिभटम् । सोपाधिकहेयविरोधिनमित्यर्थः । नित्यम्—उक्ताकारेण

व्यापकमक्षयम् । समस्तहेयरहितं विष्णवाख्यं परमं पदम् ॥''
''परः पराणां परमः परमात्माऽऽत्मसंस्थितः । रूपवर्णादिनिर्देशविशेषणविवर्जितः ॥

---

नित्यम् । मलप्रतिभटत्वं नित्यमित्यर्थः । व्यापकम् - स्वरूपेण व्यापकम् । अक्षयम् - स्वत एव धर्मतोऽपि विकाररहितम् । मुक्तस्य हि पूर्वावस्थायां ज्ञानसङ्कोचविकासरूपविकारो विद्यते । नित्यसिद्धानामपि तथात्वं परा(तदा)यत्तमिति तद्व्यवच्छेदः । समस्तहेयरहितम् । पूर्वं हेयप्रत्यनीकत्वमुक्तम्; अत्र हेयराहित्यमुक्तम् । स्वतो हेयाभावोऽपि मुक्तस्य नास्ति; परमात्मप्रसादाधीनत्वात् तस्य । पद्यत इति पदम् । दिव्यात्मस्वरूपम्—परमपद-शब्दस्य दिव्यलोके मुक्तात्मनि च प्रयोगात् तद्व्यावृत्त्यर्थं विष्णवाख्यमित्युक्तम् ।

अथ प्रथमांशोपक्रमेऽपि सविशेषपरत्वं दर्शयति परः पराणामिति । अनेन शास्त्रोपक्रमस्यापि सविशेष-परत्वमुक्तं भवति, अनेन प्रत्यस्तमितभेदमित्यादिपदानां कतिपयभेदनिषेधपरत्वं च सिद्धमिति त्रिविधं प्रयोजनम् । अनेन परःपराणामित्यादिग्रन्थजातस्य अविकारायेत्यादिसंग्रहश्लोकविवरणरूपत्वात् ज्ञानस्वरूपमित्यादिश्लोकं प्रति उपक्रमत्वमर्थक्रमेण सिद्धमिति तस्यापि सविशेषपरत्वसिद्धिः । यद्वा प्रथमांशोपक्रमोपसंहारयोः सविशेषपरत्वादुपक्रमोपक्रमभूतस्यापि ज्ञानस्वरूपमिति श्लोकस्य महावाक्यस्वारस्यविरोधो न न्याय्य इति तस्यापि सविशेषपरत्वं सिध्यति । यद्वा नमस्कारश्लोकस्य शास्त्रोपक्रमशेषभूतत्वात् तच्छेषभूतस्तदनुगुणार्थो वर्णनीय इति सिध्यति ॥ उपक्रमोपक्रमभूतनमस्कारश्लोकार्थानुगुणं 'परः पराणाम्' इत्यादेरर्थो वर्णनीय इति चेत्, न; तस्याप्युपक्रमभूतप्रश्नोत्तरवरलाभकथनश्लोकानुगुणं तदर्थस्य वाच्यत्वादित्यभिप्रायः ।

अत्र ब्रह्मणः कृत्स्नजगत्कारणत्वसिद्ध्यर्थं वेदान्तेषु 'सत्यं ज्ञानमनन्तं ब्रह्म' इत्यादिवाक्यैरानन्त्यमुक्तम् । तच्च त्रिविधपरिच्छेदराहित्यम् । न हि देशकालादिभिः परिच्छिन्नानां घटादीनां कृत्स्नस्य सर्वविधकारणत्वं दृष्टम् । कालत्रयवर्तिकार्यजातकारणत्वे सर्वदेशगतकार्यकारणत्वे च देशतः कालतोऽप्यपरिच्छेदावपेक्षितौ । उपादानत्वसिद्ध्यै वस्त्वपरिच्छेदोऽपेक्षितः । न हि वस्तुतःपरिच्छिन्नः कुलाल उपादानं भवति; मृत्पिण्डकुला-लयोः सामानाधिकरण्यासंभवात् । अतः कृत्स्नकारणत्वसिद्ध्यर्थं त्रिविधपरिच्छेदराहित्यं विस्तरेण विवक्षुः 'परः पराणामि'त्यर्धेन तत् सङ्ग्रहेण प्रतिजानीते परः पराणां परम इति । अनेन कालानवच्छेदः सिद्धः; अधिक-कालवर्तित्वस्य परशब्दवाच्यत्वात् । परमात्मेति देशापरिच्छेद उक्तः । आप्नोतीति ह्यात्मशब्दव्युत्पत्तिः । आत्मसंस्थितः—सर्वेषामात्मत्वेन सर्ववस्तुभिर्विशिष्टः । यद्वा आत्मत्वेन संस्थिततया सर्वशरीरकत्वात् स्वस्मिन् पर्यवस्थितः—स्वनिष्ठः । अन्यत् सर्वं तन्निष्ठम्; शरीरतया विशेषणत्वात् । अतः सर्वपर्यवसान-भूमिः स्वनिष्ठः इति वस्त्वपरिच्छेद उक्तः । सर्ववस्तुसामानाधिकरण्यार्हत्वं हि वस्त्वपरिच्छेदः । इदमिदं न भवतीति हि वस्तुपरिच्छेदः । यद्वा नित्यत्वविभुत्वव्यतिरिक्तगुणैः समाभ्यधिकरहितत्वं वस्त्वपरिच्छेदः । स्वनिष्ठं परमात्मानमपेक्ष्य तन्निष्ठानामन्येषां समत्वाभ्यधिकत्वासंभवादात्मसंस्थित इत्यनेन वस्त्वपरिच्छेदसिद्धिः । एवं संक्षिप्तमर्थमुपपादयति-रूपेत्यादिना । तत्र कालापरिच्छेदं प्रथमं विवक्षुः कालपरिच्छिन्नेषु वर्तमानं पञ्चकल्पनान्वितत्वं ब्रह्मणि नास्तीत्याह-रूपेति । रूपशब्देन जातिरुच्यते । ''जातिगुणौ च रूपिणां रूपे'' इति हि नीतिविदः । वर्णशब्दो रूपाद्यगुणविशेषपरः । आदिशब्देन गन्धरसादिः, आसनशयनादिक्रिया, विषाणाद्यवयववत्त्वं च विवक्षितम् । रूपवर्गादीति पाठे रूपशब्दो नीलपीतत्वादिगुणपरः, वर्गशब्दो

अपक्षयविनाशाभ्यां परिणामर्द्धिजन्मभिः । वर्जितः शक्यते वक्तुं यः सदाऽस्तीति केवलम् ॥
सर्वत्रासौ समस्तं च वसत्यत्रेति वै यतः । ततः स वासुदेवेति विद्वद्भिः परिपठ्यते ॥
तद्ब्रह्म परमं नित्यमजमक्षरमव्ययम् । एकस्वरूपं च सदा हेयाभावाच्च निर्मलम् ॥
तदेव सर्वमेवैतद्व्यक्ताव्यक्तस्वरूपवत् । तथा पुरुषरूपेण कालरूपेण च स्थितम् ॥'',

---

देवमनुष्यादिवर्गपरः; जातिपरः । इति अर्थः । तन्निबन्धनस्तद्विषयो निर्देशः शब्दः । शब्दवाच्यास्त एव विशेषणानि । तैर्विवर्जितः । यद्वा रूपवर्णादि-तद्वाचिशब्दरूपैर्विशेषणैर्विवर्जितः । एवमनित्यत्वव्यापकं कर्मकृतं रूपादिमत्त्वं ब्रह्मणि नास्तीति कर्मकृतरूपादिनिवृत्त्या तद्व्याप्यकालपरिच्छेदनिवृत्तिरित्यर्थः । यद्वा अनित्यत्वव्याप्यकर्मकृतरूपाद्यभावान्नानित्यत्वं ब्रह्मण्यनुमातुं शक्यमित्यर्थः । अनेन 'प्रत्यस्तमितभेदम्' इत्यस्य पदस्य विषयो दर्शितः ।

अथानित्यत्वव्यापकत्वाद्विकाराणामनित्यत्वनिवृत्तये तद्व्यापकविकाररहित्यमाह अपक्षयेति । जायते, अस्तीत्यवस्थाद्वयं जन्मशब्देन विवक्षितम् । उत्पत्तिस्थितिनाशानामेकैकत्र विधाद्वयेन विकारषट्कसिद्धिः । तद्विवर्जितत्वात् सदाऽस्तीति वक्तु शक्यते । सदाशब्देन कादाचित्कास्तित्वव्या(नि)वृत्तिः । [1]न तु उत्पद्यत इत्यादिशब्दैरिति केवलशब्दाभिप्रायः । अनेन सत्तामात्रमित्यस्य विषयो दर्शितः । अगोचरं वचसामित्यस्य च विषयो दर्शितो भवति; रूपवर्णादिप्रवृत्तिनिमित्ताभावादुत्पत्त्यादिप्रवृत्तिनिमित्ताभावाच्च कल्पनाविकारवाचि-शब्दैर्न वक्तुं शक्यत इति तस्य पदस्यार्थ इत्यभिप्रायः । अगोचरं वचसामिति सर्वशब्दागोचरत्वमुच्यते चेत्, वचसामगोचरं, सत्तामात्रमित्यपि वक्तुं न शक्यते ।

अथ देशापरिच्छेदं नामनिर्वचनमुखेनाह सर्वत्रेति । ब्रह्मण ईश्वरातिरिक्तत्वनिषेधार्थं देवतान्तरव्युदासार्थं च नामनिर्वचनमुखेन तदुक्तिः । औणादिकप्रत्ययस्यानेकार्थत्वादधिकरणे कर्तरि च व्युत्पत्तिर्वासुदेवशब्दस्योच्यते सर्वत्रेति । वेदान्तेषु परब्रह्मणो हि निर्विकारत्वादिकमुक्तम्; तत् कथं वासुदेवस्योच्यत इत्यत्राह तद्ब्रह्मेति । "शैत्यं हि यत् सा प्रकृतिर्जलस्य" इतिवत् तदिति निर्देशः । 'निर्दिश्यमानप्रतिनिर्दिश्यमानयोरैक्यमापादयन्ति सर्वनामानि पर्यायेण तल्लिङ्गमुपाददते' इति हि शाब्दाः । नित्यमिति कार्यमात्रव्यावृत्तिः । अजमक्षरमव्ययम् एकस्वरूपमिति सविकारनित्यप्रधानव्यावृत्तिः । एकस्वरूपशब्देन वृद्धिपरिणामराहित्यं विवक्षितम् । हेयाभावाच्च निर्मलमिति बद्धव्यावृत्तिः । सदेति मुक्तव्यावृत्तिः । परममिति नित्यसिद्धव्यावृत्तिः । यद्वा एकस्वरूप-मिति बद्धव्यावृत्तिः, सदेत्यादिना मुक्तव्यावृत्तिरिति । एवं स्वव्यतिरिक्तसमस्तवस्तुविलक्षणत्वेनोपनिषत्सूक्तं ब्रह्म वासुदेव एवेत्यर्थः । त्रिविधापरिच्छेदवाचिनी श्रुतिरपि देवताविशेषं निरचिनोदनन्तमिति । अनन्तशब्दो योगरूढः । अतो नारायणादिशब्दपर्यायः त्रिविधानन्त्ययोगिनि भगवति मुख्यो वर्तते । सत्यज्ञानादिवाक्ये अनन्तमिति पदं पुल्लिङ्गं द्वितीयान्तम्; यो वेदेति वेदनशब्देनान्वयात् । प्रथमान्तत्वे तद्यो वेदेति तत्पदाध्या-हारः स्यात्; वाक्यभेदश्च स्यात् । अतस्तत्र यथोक्त एवार्थः । तस्मात् तदनुसारेणापि अपरिच्छेदकथनसमये देवताविशेषो निर्णीतः ।

वस्त्वपरिच्छेदमाह तदेवेति । सर्वमेवैतदिति व्यक्ताव्यक्तपुरुषकालसमुदाय उच्यते । व्यक्ताव्यक्त-

---

1 नेति । वक्तुं शक्यत इति शेषः ।

"प्रकृतिर्या मयाऽऽख्याता व्यक्ताव्यक्तस्वरूपिणी । पुरुषश्चाप्युभावेतौ लीयेते परमात्मनि ॥
परमात्मा च सर्वेषामाधारः परमेश्वरः । विष्णुनामा स वेदेषु वेदान्तेषु च गीयते ॥"
"द्वे रूपे ब्रह्मणस्तस्य मूर्तं चामूर्तमेव च । क्षराक्षरस्वरूपे ते सर्वभूतेषु च स्थिते ॥
अक्षरं तत् परं ब्रह्म क्षरं सर्वमिदं जगत् । एकदेशस्थितस्याग्नेर्ज्योत्स्ना विस्तारिणी यथा ॥
परस्य ब्रह्मणः शक्तिस्तथेदमखिलं जगत् ॥",

---

[पुरुषकाल?] स्वरूपमेतत् सर्वं तद् ब्रह्मेत्यर्थः । अनेन वस्त्वपरिच्छेद उक्तः । सर्ववस्तुसामानाधिकरण्यार्हत्वं हि वस्त्वपरिच्छेदः । सर्ववस्तुसामानाधिकरण्यार्हत्वेनैव चिदचिच्छरीरकत्वहेतुभूतव्यापनभरणादिगुणतः समाभ्यधिकराहित्यसिद्धेश्च वस्त्वपरिच्छेदसिद्धिः । न हि ब्रह्मव्यतिरिक्तस्य कस्यचित् समस्तचिदचिच्छरीरकत्वसंभवः ।

एवं शास्त्रोपक्रमे वासुदेवाद्वयमुभयलिङ्गं वस्तु प्रतिपाद्यमुक्तम् । शास्त्रोपसंहारे च तथोक्तमिदं दर्शयति **प्रकृतिर्येति** । परमात्मशब्दस्य क्वचिज्जीवेऽपि प्रयोगदर्शनात् तद्व्यावृत्त्यर्थं साक्षात्परमात्मलक्षणं जगत्कारणत्वमुक्तं **लीयेते परमात्मनीति** । स चेश्वरानतिरिक्त इति ज्ञापनार्थः **परमेश्वरशब्दः** । ईश्वरश्च न देवतान्तरमिति ज्ञापनाय **विष्णुनामे**त्युक्तम् । अत्र **परमात्मा आधारः परमेश्वरः** इति पदैः शरीरिलक्षणं स्पष्टम् । एवं शास्त्रोपक्रमोपसंहारयोरवान्तरप्रकरणोपक्रमोपसंहारयोश्च हेयप्रत्यनीककल्याणगुणास्पदं नारायण एव परं ब्रह्मेति प्रतिपाद्यत इति दर्शितम् ।

अथ अविद्यासम्बन्धादयश्च ब्रह्मण एव हि प्रतिपाद्यन्ते । तत् कथं यथोक्तस्वरूपस्य ब्रह्मण उपपद्यत इति शङ्कायाम्—'काठिन्यवान् यो बिभर्ति' इतिवत् द्वारद्वारिभावेनोपपद्यत इति वक्तुं परमात्मनो जीवानाञ्च आत्मशरीरभावेन सम्बन्धं तेषामविद्यासम्बन्धादिकं च वक्ष्यन् प्रथमं जीवब्रह्मणोः शरीरशरीरिभावरूपसम्बन्धं दर्शयति **द्वे रूपे** इत्यादिना । **मूर्तं चामूर्तमेव चेति** । बद्धश्च मुक्तश्चेत्यर्थः । एतद्विवृणोति **क्षराक्षरस्वरूप** इति । ज्ञानसङ्कोचात्मकक्षरणवत् असङ्कुचितज्ञानं चेत्यर्थः । **सर्वभूतेषु च स्थिते** । अर्हार्थे क्तः । सर्वभूतस्थित्यर्हे—सूक्ष्मतरतया व्यापनक्षमे इत्यर्थः । यद्वा बद्धस्य स्वरूपेण सर्वभूतस्थितिः, मुक्तस्य तु धर्मभूतविभुज्ञानद्वारेणेति । **अक्षरं तत्परं ब्रह्मेति** । तत् मुक्तस्वरूपमक्षरम् । **क्षरं सर्वमिदं जगत्**—इदं बद्धस्य रूपं क्षरमित्यर्थः । रूपत्वं विशिनष्टि **एकदेशेति** । **शक्तिः**—अपृथग्भूतं कार्योपयोगि विशेषणम् । **एकदेशस्थितस्य, विस्तारिणीति** विशेषणद्वयेन असङ्कीर्णस्वभावत्वमुक्तम् । अस्मिन् श्लोके **अखिलं जगदिति** चिदचिदात्मकं जगदुच्यते । तुल्यन्यायत्वादक्षरस्यापि शक्तित्वसिद्धिः । यद्वा अखिलजगच्छब्देनाक्षरस्यापि क्रोडीकारः । त्रिपाद्विभूतेरपि लोकशब्दवाच्यत्वात् तत्समानार्थत्वाज्जगच्छब्दस्य ; अखिलशब्दस्य सङ्कोचकाभावाच्च । क्षरं सर्वमित्यत्र क्षरसामानाधिकरण्यमपवादः; इह तदभावादक्षरस्याप्यभिधानमुपपद्यते । इदंशब्दस्य प्रकृतवाचित्वात् क्षराक्षरपरत्वं युज्यते ॥

नन्वत्र क्षराक्षरशब्दौ कार्यकारणरूपेणावस्थितपरब्रह्मपरौ ; परब्रह्मशब्दमुख्यार्थसिद्धेः । अन्यथा ब्रह्मशब्दानामेकप्रकरणस्थानामर्थवैरूप्यं च स्यात् । जगतो ज्योत्स्नास्थानीयत्वञ्चोपपद्यते ; प्रभाया शीर्णावयवत्वेन अग्निकार्यत्वोपपत्तेः ॥ नैवम् ; ब्रह्मणो रूपे इति व्यतिरेकनिर्देशस्वारस्यभङ्गप्रसङ्गात् । स च कार्यकारणयोर्ब्रह्मव्यतिरिक्तत्वाभावात् । यदि षष्ठीस्वारस्याय मूर्तत्वामूर्तत्वे विवक्षिते, तदा **मूर्तामूर्तशब्दस्वारस्यभङ्गः** । भावप्रधानत्वा-

"विष्णुशक्तिः परा प्रोक्ता क्षेत्रज्ञाख्या तथाऽपरा । अविद्या कर्मसंज्ञाऽन्या तृतीया शक्तिरिष्यते ॥
यया क्षेत्रज्ञशक्तिः सा वेष्टिता नृप ! सर्वगा । संसारतापानखिलान् अवाप्नोत्यतिसंततान् ॥
तया तिरोहितत्वाच्च शक्तिः क्षेत्रज्ञसंज्ञिता । सर्वभूतेषु भूपाल ! तारतम्येन वर्तते ॥",

---

विवक्षायां रूपशब्दसामानाधिकरण्यायोगः । यद्युच्येत—ब्रह्मणो द्वे रूपे—ब्रह्म हि मूर्तममूर्तं चेति—तदा प्रथमान्तब्रह्मशब्दाध्याहारदोषः स्यात्; षष्ठ्यन्तब्रह्मशब्दस्य मूर्तामूर्तशब्दसामानाधिकरण्यायोगात् । [1]किञ्च 'सर्वभूतेषु च स्थिते' इति चानुपपन्नम्; सर्वभूतशब्दस्य कार्यवाचितया तत्र कार्यस्थितावुच्यमानायां स्वस्मिन् स्ववृत्तिप्रसङ्गात्; कारणस्यापि कार्यादनन्यतया स्ववृत्तिप्रसङ्गाच्च । अवस्थाद्वयस्य सर्वभूतस्थितिरिति च न वाच्यम्; धर्मिपर्यन्तक्षराक्षरशब्दसामानाधिकरण्यायोगात्; तयोरप्यवस्थापरत्वे स्वारस्यभङ्गात् । अवस्थावद्वाचिजगच्छब्दब्रह्मशब्दसामानाधिकरण्यायोगाच्च । तस्मिन् सोढेऽपि कारणावस्थायाः कार्ये विद्यमानत्वायोगाच्च शक्तिशब्दस्य कार्यवाचित्वायोगाच्च श्लोकस्य नायमर्थः । उपचारतोऽपि कार्योपयोगिविशेषणं [हि] शक्तिशब्देन व्यपदेशमर्हति; कार्योपयोगिविशेषणत्वस्य सामान्यात् । शक्तिर्हि शक्तं प्रत्यपृथग्भूतं कार्योपयोगिविशेषणम्, कार्यं तु न कारणस्यापृथग्भूतं विशेषणं कार्योपयोगि च भवति; कार्यकारणयोरनन्यत्वात् स्वस्य स्वयमेव विशेषणत्वायोगात् ॥ कार्यत्वं विशेषणमिति चेत्, सत्यम्; तथापि धर्मिवाचिनो जगच्छब्दस्य कार्यतावाचित्वाभावात् शक्तिशब्दसामानाधिकरण्यमुपचारतोऽपि नोपपद्यते । कार्योपयोग्यपृथग्भूतविशेषणं शक्तिरिति मुख्यत्वमस्मन्मते संभवेत् । क्षरशब्दस्य कार्यपरत्वे दृष्टान्तवैषम्यञ्च स्यात्; तच्च ज्योत्स्नाया विशीर्णावयवत्वाभावेनाग्निकार्यत्वाभावात् । न च "क्षरं प्रधानममृताक्षरं हरः" इति प्रयोगानुसारेण चेतनाचेतनपरत्वं युक्तम् । अचिदंशस्य स्वस्मिन् स्ववृत्तिप्रसङ्गेन सर्वभूतस्थित्यनुपपत्तेः ॥ चिदचित्सङ्घातरूपेषु भूतेषु द्वयोरवस्थानमुपपन्नमिति चेन्न; समुदायिनोः समुदायनिष्ठत्वानुपपत्तेः । समुदायो हि समुदायिनिष्ठः । उपरितनग्रन्थवैरूप्यं च स्यात् । उत्तरत्र हि, "भूप मूर्तममूर्तञ्च" इति मूर्तामूर्तशब्दाभ्यां रूपद्वयं प्रस्तुत्य हिरण्यगर्भादीन् निर्दिश्य, "मूर्तमेतद्धरेः रूपं भावनात्रितयान्वितम्" इति मूर्तशब्दवाच्यरूपस्य भावनात्रयान्वयकथनात् । न ह्यचेतनस्य कर्मब्रह्मभावनान्वयः । "सोऽक्षरः परमः स्वराट्" इत्यत्र हीन्द्रादिबद्धविलक्षणवाचित्वात्, 'स स्वराड् भवति' इतिवत् मुक्तवाचिस्वराट्छब्दसामानाधिकरण्याच्च अक्षरशब्दो मुक्तात्मपरः । अतस्तदनुरोधेनाक्षरशब्दोऽत्रापि मुक्तात्मपरः । ब्रह्मशब्दार्थवैरूप्यं तु, "तपसा चीयते ब्रह्म', 'तस्मादेतत् ब्रह्म नामरूपमन्नं च जायते' इति श्रुताविव अनेकोपपत्तिबलात् युज्यते । अतो यथोक्त एवार्थः । ब्रह्मणोऽविद्यासम्बन्धद्वारभूते जीवात्मनि अविद्यान्वयं दर्शयति विष्णुशक्तिरित्यादिना । सर्वगा—चतुर्मुखादिपिपीलिकान्तसर्वशरीरस्था । जातावेकवचनम् । यद्वा धर्मभूतज्ञानेन स्वतः सर्वं व्याप्तुं क्षमा, [यया ?] कर्मणा वेष्टिता—कर्मणा सङ्कुचितज्ञानेत्यर्थः । तर्हि सर्वे अज्ञाः स्युरित्यत्राह तयेति । कर्मतारतम्यानुगुणं ज्ञानतारतम्यवती क्षेत्रज्ञशक्तिरित्यर्थः । सर्वेषां ज्ञाननित्यत्वस्य मुक्तौ सर्वविषयकत्वस्य च प्रामाणिकत्वात् बद्धावस्थायां सङ्कोचविकासौ सिद्धौ । तत्तारतम्यञ्च, "पुंसः

---

1 वृक्षस्वरूपमित्यादाविव ब्रह्मणो रूपे इत्यस्य ब्रह्मगतधर्मविशिष्टधर्मिपर्यन्तपरत्वे दोषान्तरमाह किञ्चेति ।

"प्रधानं च पुमांश्चैव सर्वभूतात्मभूतया । विष्णुशक्त्या महाबुद्धे ! वृतौ संश्रयधर्मिणौ ।
तयोः सैव पृथग्भावकारणं संश्रयस्य ॥
यथा सक्तं जले वातो बिभर्ति कणिकाशतम् । शक्तिः सापि तथा विष्णोः प्रधानपुरुषात्मनः ॥",

"तदेतदक्षयं नित्यं जगन्मुनिवराखिलम् । आविर्भावतिरोभावजन्मनाशविकल्पवत् ॥"

इत्यादिना परं ब्रह्म स्वभावत एव निरस्तनिखिलदोषगन्धं समस्तकल्याणगुणात्मकं जगदुत्पत्तिस्थिति-संहारान्तःप्रवेशनियमनादिलीलं प्रतिपाद्य, कृत्स्नस्य चिदचिद्वस्तुनः सर्वावस्थावस्थितस्य पारमार्थिकस्यैव परस्य ब्रह्मणः शरीरतया रूपत्वम्, शरीररूपतन्वंशशक्तिविभूत्यादिशब्दैः तत्तच्छब्दसामानाधिकरण्येन चाभिधाय,

---

शक्त्युपलक्षितः", "तच्छक्त्या पशवोऽधिकाः" इति स्पष्टीकृतम् । जातीनामप्यपृथक्सिद्धधर्मत्वेन रूप-शब्दवाच्यत्वाच्च तद्व्यावृत्त्यर्थं प्रस्तुतं रूपत्वं नियाम्यत्वलक्षणमित्याह प्रधानञ्चेति । चिदचितोः परमात्मनियाम्यत्व-धार्यत्वव्याप्यत्वनित्यत्वादेः प्रमाणान्तरागोचरतया विहितत्वान्निषेध्यत्वमयुक्तमिति नियाम्यत्वादिधर्माणां पारमार्थ्येन तदाश्रयभूतयोश्चिदचितोश्च पारमार्थ्यात् नित्यत्वोक्त्या च तयोर्भ्रमविषयत्वासंभवश्च दर्शितो भवति । न हि धर्मिसत्यत्वेन विना धर्मसत्यत्वं युक्तम् । नापि बाध्यस्य नित्यत्वं युक्तम् । सर्वभूतात्मभूतया—सर्वभूतव्यापि-कयेत्यर्थः । विष्णुशक्त्या—विष्णोर्नियमनशक्त्या । अन्यथा, "शक्तिः साऽपि तथा विष्णोः" इत्यनन्तरोक्ति-विरोधात् । तया वृतौ—व्याप्तौ । नियमनेन च धारणं श्रुतिसिद्धम् । "एतस्य वा अक्षरस्य प्रशासने गार्गि ! द्यावापृथिव्यौ विधृते तिष्ठतः" इति हि श्रूयते । अतो बिभर्तीत्युत्तरश्लोकसामञ्जस्यम् । संश्रयधर्मिणौ—भगवदपृथक्स्थितिधर्मकौ । पृथग्भावः—उपकरणोपकरणित्वलक्षणसंबन्धविशेषराहित्यम्; संहारः । तत्र हि करणकलेवरं नास्ति । संश्रयः—करणकरणित्वेन सम्बन्धः; सृष्टिरित्यर्थः । यद्वा संश्रयः—तयोः सम्बन्धः, संसारः । पृथग्भावो मोक्षः । तत् सर्वं भगवन्नियमनाधीनमित्यर्थः । अत्र दृष्टान्तमाह यथेति । कारणात् कार्यस्य विभागे दृष्टान्तः । जलस्य कणिकाः तस्माद्वेगेन बिभर्ति वायुः । संयोजकत्ववियोजकत्वयोर्वा दृष्टान्तः । परस्परं सङ्कलिता असङ्कलिताश्च बिभर्ति वायुः । यद्वा प्रकृतिपुरुषगतदोषलेशराहित्ये दृष्टान्तः । वायुर्हि कणिकाशतं तत्स्वभावास्पृष्टो बिभर्ति । प्रधानपुरुषात्मनः—प्रधानपुरुषयोरात्मनः । समस्तचिदचिद्वस्तुजातमिति कर्म अध्या-हर्तव्यम् । यद्वा प्रधानशब्दानन्तरपुरुषशब्दो बद्धपरः । आत्मशब्दः प्रकृतिसंसर्गरहितमुक्तात्मपरः । तान् बिभर्तीति । एवंविधस्य जगतः परमार्थत्वमाह तदेतदिति । मिथ्या हि बाध्यत्वेनानित्यम् । पारमार्थ्ये सति हि नित्यत्वसंभवः । उदाहृतवचनार्थान् सङ्क्षेपेणाह इत्यादिनेति । निरस्त-निखिलदोषत्वं कल्याणगुणात्मकत्वञ्च 'स सर्वभूतप्रकृतिम्', 'समस्तकल्याण' इत्यादिश्लोकार्थः । जगदुत्पत्त्यादि-लीलत्वं भगवच्छब्दनिर्वचनसिद्धम् । अन्तःप्रवेशनियमनादीत्यादिशब्देन अध्यक्षत्वानुमन्तृत्वे उच्येते । इत्यादिनेत्यादिशब्देन 'क्रीडतो बालकस्य' इत्यादिवचनं विवक्षितम् । तदर्थो लीलाशब्देन विवक्षितः । सर्वावस्थावस्थितस्य—कार्यकारणावस्थितस्य, बद्धमुक्तावस्थितस्य चेत्यर्थः । प्रमाणान्तरगोचरस्यार्थस्य हि निषेधार्थं भ्रान्तिसिद्धत्वेनानुवादसंभवः; परमात्मनियाम्यत्वादिकं तु प्रमाणान्तरागोचरत्वात् विधित्सितमेवेति विहितस्य निषेधोऽनुपपन्न इत्यभिप्रायेण पारमर्थिकस्यैवेत्युक्तम् । नियन्तृत्वनियाम्यत्वादिप्रतिपादनसिद्धोऽर्थः शरीरतया रूपत्वम् । तदेव सर्वमेवैतदित्यत्र तच्छब्दसामानाधिकरण्यम् । द्वे रूपे ब्रह्मणस्तस्येत्यादि-

तद्विभूतिभूतस्य चिद्वस्तुनः स्वरूपेणावस्थितिमचिन्मिश्रतया क्षेत्रज्ञरूपेण स्थितिं चोक्त्वा, क्षेत्रज्ञावस्थायां पुण्यपापात्मककर्मरूपाविद्यावेष्टितत्वेन स्वाभाविकज्ञानरूपत्वाननुसन्धानमचिद्रूपार्थाकारतयाऽनुसन्धानञ्च प्रतिपादितमिति, 'परं ब्रह्म सविशेषम् ; तद्विभूतिभूतं जगदपि पारमार्थिकमेव' इति ज्ञायते ॥

'प्रत्यस्तमितभेदम्' इत्यत्र देवमनुष्यादिप्रकृतिपरिणामविशेषसंसृष्टस्याप्यात्मनः स्वरूपं तद्गतभेदरहितत्वेन तद्भेदवाचिदेवादिशब्दागोचरं ज्ञानसत्तैकलक्षणं स्वसंवेद्यं योगयुङ्मनसो न गोचर इत्युच्यत इति

~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~

नोक्तमर्थमाह शरीररूपतन्वंशेति । प्रतिपादितमितीति । एवं शास्त्रोपक्रमोपसंहारेष्ववान्तरप्रकरणोपक्रमोपसंहारेषु च प्रतिपादितत्वादित्यर्थः । ज्ञायत इत्यन्तेनोक्तवचनार्थसङ्ग्रहः कृतः । उदाहृतवचनैर्वस्तुनः सविशेषत्वं जगतः सत्यत्वञ्च स्थितम् ॥ .... .... ....

अथ परोदाहृतवचनानि पूर्वोदाहृतवचनार्थानुगुण्येन व्याचिख्यासुः प्रथमं प्रत्यस्तमितभेदमित्यादिश्लोकं व्याचष्टे प्रत्यस्तमितेति । "दुःखाज्ञानमला धर्माः प्रकृतेस्ते न चात्मनः" इति, "पुमान्न देवो न नरो न पशुर्न च पादपः । शरीराकृतिभेदास्तु भूपैते कर्मयोनयः" इत्यादिषु प्रकृतिर्देवादिशरीरं चोपाधित्वेन प्रतीयत इत्युभयविधवचनार्थं संघटयितुं देवमनुष्यादिप्रकृतिपरिणामविशेषेत्युक्तम् । प्रकृतेरित्यत्र प्रकृतिशब्दनिर्देशः शरीरस्य प्रकृतिपरिणामरूपत्वादित्यभिप्रायः । देवमनुष्यादिशब्देन प्रतिषेध्यभेदस्य शरीरे विद्यमानता दर्शिता ॥ ननु मुक्तानामुपास्यत्वाभावात् उपासकस्वरूपस्य अचित्संसृष्टतया प्रत्यस्तमितभेदत्वायोगाच्च तादृक्त्वोपदेशायोगादस्य श्लोकस्य परिशुद्धात्मविषयत्वानुपपत्तेः परमात्मविषयत्वं स्यादिति शङ्कापरिहाराय चोक्तं देवमनुष्यादिप्रकृतिपरिणामविशेषसंसृष्टस्यापीति । इदानीं संसरतोऽपि स्वाभाविकाकारस्य तिरोहितस्य विद्यमानत्वादाविर्भविष्यतस्तस्य तथा(तथात्वा)नुसन्धानायोपदेश इति भावः । 'तस्यात्मपरदेहेषु सतोऽपि' इत्येतत् स्मारयितुं संसृष्टस्यापीत्युक्तम् । अपिर्विरोधे । पातकिसंसर्गात् पातकित्वं भवति; रुमासंसर्गात् पदार्थानां लवणत्वं भवति; अतो विरोधः । तद्गतभेदराहित्येन । भेदो रूपवर्णादिः । अनेन प्रत्यस्तमितभेदशब्दो व्याख्यातः । प्रत्यस्तमितभेदशब्देन भेदस्यापुनरुदयविनाशोऽभिप्रेतः । ततश्च प्रलयकालव्यावृत्तिः । तद्भेदवाचिदेवादिशब्दागोचरमित्यनेन अगोचरं वचसामिति पदं व्याख्यातम् । ज्ञानसत्तैकलक्षणमिति ज्ञानपदं सत्तामात्रमिति च पदं व्याख्यातम् । सत्तैकलक्षणमित्यत्र एकशब्देन सत्तामात्रमिति पदगतमात्रजर्थं विवृण्वता जायतेऽस्तीत्यादिविकारा व्यावृत्ताः । सत्तामात्रमित्युक्ते केनाकारेण सत्तेत्यपेक्षायां ज्ञानसत्तैकलक्षणमित्युक्तम् । ज्ञानत्वाकारेण सत्तेत्यर्थः । वचसामगोचरत्वे सत्ताव्याघातपरिहारार्थं न्यायवैशेषिकोक्तजडस्वरूपताव्युदासार्थं च आत्मसंवेद्यमिति पदस्यार्थमाह स्वसंवेद्यमिति । यद्वा अगोचरं वचसामित्यन्तैः पदैः कल्पनाविकारराहित्ये तद्वाचिशब्दागोचरत्वे चोक्ते भेदकधर्माभावात् कथं स्वव्यावृत्तिग्रहणमिति शङ्कायामाह आत्मसंवेद्यमिति । प्रत्यक्त्वेन भासमानत्वं स्वव्यावर्तकम् । अन्ये हि इदन्तया भासन्त इत्यर्थः । ज्ञानपदं धर्मधर्मिणोरविशेषेणाजडत्वमाह—धर्मभूतज्ञानस्य बृहत्तया परिशुद्धात्मस्वरूपस्य ब्रह्मशब्दवाच्यत्वम्, 'ब्रह्मणो हि प्रतिष्ठाऽहम्' इत्यादिष्विवोपपद्यते । योगयुक्—प्रक्रान्तयोगः । एवंप्रकारममलमिति वचनेन परमात्मनि मुक्तस्वभावस्यातिदिष्टत्वेन मुक्तस्य परमात्मसाम्यप्रतिपत्तेः, परमात्मनश्च 'अपक्षयविनाशाभ्याम्', 'रूपवर्णादिनिर्देश' इत्यादिवचनैः कतिपयभेदराहित्यस्य षड्भावविकारराहित्यस्य च स्पष्टत्वात् तदानु-
~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~

अनेन न प्रपञ्चापलापः। कथमिदमवगम्यत इति चेत्—तदुच्यते—अस्मिन् प्रकरणे संसारैकभेषजतया योगमभिधाय योगावयवान् प्रत्याहारपर्यन्तांश्चोक्त्वा, धारणासिद्ध्यर्थं शुभाश्रयं वक्तुं परस्य ब्रह्मणो विष्णोः शक्तिशब्दाभिधेयं रूपद्वयं मूर्तामूर्तविभागेन प्रतिपाद्य तृतीयशक्तिरूपकर्माख्याविद्यावेष्टितम् अचिद्विशिष्टं क्षेत्रज्ञं मूर्ताख्यविभागं भावनात्रयान्वयादशुभमित्युक्त्वा, द्वितीयस्य कर्माख्याविद्याविरहिणोऽचिद्वियुक्तस्य ज्ञानैकाकारस्यामूर्ताख्यविभागस्य निष्पन्नयोगिध्येयतया योगयुङ्मनसोऽनालम्बनतया स्वतश्शुद्धिविरहाच

~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~

गुण्येन।नतिविस्तरं श्लोको व्याख्यातः। अस्य श्लोकस्य मुक्तात्मविषयत्वं तस्य च प्रक्रान्तयोगस्यागोचरत्वं च कथं ज्ञायत इत्यभिप्रायेणाह कथमिदमिति। प्रकरणादेवावगम्यत इति परिहरति तदुच्यत इत्यादिना। अस्मिन् प्रकरणे। न ह्ययं मुक्तकश्लोकः, अपि तु प्रबन्धस्थः। अतः "पूर्वापरा(पौर्वापर्या?)परामृष्टः शब्दोऽन्यां कुरुते मतिम्" इति तत्परिहाराय पूर्वापरपरामर्शेनैवार्थो वर्णनीय इति भावः। संसारैकभेषजतया योगमभिधायेति एकशब्देन 'क्लेशानां च क्षयकरं योगादन्यन्न विद्यते' इत्यस्यार्थोऽभिप्रेतः। वाक्यार्थज्ञानमात्रस्यापवर्गोपायत्वनिरासश्च स्फोरितः। योगावयवान् प्रत्याहारपर्यन्तानिति, 'प्राणायामेन पवने प्रत्याहारेण चेन्द्रिये। वशीकृते ततः कुर्यात् स्थितं चेतः शुभाश्रये' इत्यादिवचनार्थः संक्षिप्तः। परस्य ब्रह्मणो विष्णोः शक्तिशब्दाभिधेयमिति। 'विष्णुशक्तिः परा प्रोक्ता' इत्यत्र विष्णुरेव शक्तिर्ब्रह्म इति केचिद्वदन्ति; तद्व्यावृत्तये विष्णोरिति व्यासः कृतः 'परस्य ब्रह्मणः शक्तिः', "परमब्रह्मभूतस्य वासुदेवस्य', 'ततः स वासुदेवेति', 'तद्ब्रह्म परमं नित्यम्', 'परमात्मा च सर्वेषाम्', 'विष्णुनामा स वेदेषु वेदान्तेषु च', 'परब्रह्मस्वरूपस्य विष्णोः शक्तिसमन्वितम्', 'शक्तिः साऽपि तथा विष्णोः' इत्यादिभिर्विष्णोरेव परब्रह्मत्वं जगतस्तच्छक्तित्वं तच्छक्तिनि(तन्नि?)याम्यत्वं चोक्तमिति तत्प्रतिपादकतत्तद्वचनविरोधात् तदयुक्तमित्यभिप्रायः। शक्तिशब्दाभिधेयम्। अपृथक्सिद्धविशेषणं हि शक्तिः। ब्रह्म च न कस्यचिद्विशेषणम्। अतो विष्णोरेव शक्तिः। स हि ब्रह्मशब्दवाच्य इत्यभिप्रायः। अत्र 'नारायणः परं ब्रह्म', 'विष्णुस्तदाऽऽसीद्धरिरेव निष्कलः', 'पतिं विश्वस्यात्मेश्वरम्', 'न तस्येशे कश्चन', 'न तत्समश्चाभ्यधिकश्च दृश्यते', 'यस्मात् परं नापरमस्ति किञ्चित्' 'न त्वत्समोऽस्त्यभ्यधिकः कुतोऽन्यो लोकत्रये' इत्यादिश्रुतिस्मृतयोऽनुसन्धेयाः। शक्तित्रयाश्रयो दिव्यविग्रह उपास्यत्वेनोच्यते। विष्णुरेव शक्तिश्चेत्—कथं विष्णोर्विग्रहैकदेशो विष्णोरेवाश्रयः। तदाश्रयभूतो विग्रहो न हि ब्रह्मणोऽस्तीतीदं च दूषणं फलितम्। शक्तिशब्दाभिधेयं रूपद्वयमिति। परापरसंज्ञस्यास्य रूपद्वयस्योत्तरत्र परापरशब्दसमानाधिकरणशक्तिशब्देन परामर्शात् परसंज्ञरूपगोचरः शक्तिशब्दो न परमात्मविषय इत्यभिप्रायः। 'तच्च विष्णोः परं रूपम्', 'विष्णुशक्तिः परा प्रोक्ता' इति ह्युच्यते। 'भूप मूर्तममूर्तञ्च' इत्यादिवचनार्थमभिप्रेत्याह मूर्तामूर्तविभागेनेति। 'अविद्याकर्मसंज्ञाऽन्या तृतीया शक्तिरिष्यते' इत्यस्यार्थमाह तृतीयेति। मूर्तामूर्तविभागेनेत्युक्तत्वात् मूर्ताख्यविभागमिति विभज्य निर्देशः कृतः। निष्पन्नयोगिध्येयतयेति। न विध्यर्थे कृत्यप्रत्ययः, अपितु शक्यत्वाभिप्रायः। योगिध्येयं परं पदमित्यत्रापि स एवार्थः। निष्पन्नयोगिध्येयतया प्रक्रान्तयोगस्य ध्यातुमशक्यत्वं फलितम्। स्वतश्शुद्धिविरहादिति। अत्र न शुद्धेरस्वाभाविकत्वमुच्यते; अपि त्वौपाधिकदोषनिरासे स्वयमशक्तत्वेन भगवत्प्रसादसापेक्षत्वं विवक्षितम्। शुभाश्रयत्वं प्रतिषिध्येति। स्वतःशुद्धिविरहादित्यनेन शुभत्वं प्रतिषिद्धम्, अनालम्बनतयेत्यनेनाश्रयत्वं
~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~

शुभाश्रयत्वं प्रतिषिध्य, परशक्तिरूपमिदममूर्तमपरशक्तिरूपं क्षेत्रज्ञाख्यमूर्तञ्च परशक्तिरूपस्यात्मनः क्षेत्रज्ञतापत्तिहेतुभूततृतीयशक्त्याख्यकर्मरूपाविद्या चेत्येतच्छक्तित्रयाश्रयो भगवदसाधारणम्, 'आदित्यवर्णम्' इत्यादिवेदान्तसिद्धं मूर्तरूपं शुभाश्रय इत्युक्तम्। अत्र परिशुद्धात्मस्वरूपस्य शुभाश्रयतानर्हतां वक्तुम्, 'प्रत्यस्तमितभेदं यत्' इत्युच्यते। तथाहि—

"न तद्योगयुजा शक्यं नृप! चिन्तयितुं यतः। द्वितीयं विष्णुसंज्ञस्य योगिध्येयं महामते (परं पदम्) ॥
समस्ताः शक्तयश्चैता नृप! यत्र प्रतिष्ठिताः। तत् विश्वरूपवैरूप्यं रूपमन्यद्धरेर्महत् ॥"

इति च वदति। तथा चतुर्मुखसनकसनन्दनादीनां जगदन्तर्वर्तिनामविद्यावेष्टितत्वेन शुभाश्रयतानर्हतामुक्त्वा, तेषामेव पश्चात् योगेनोद्भूतबोधानां स्वस्वरूपापन्नानाञ्च स्वतःशुद्धिविरहात् भगवता शौनकेन शुभाश्रयता निषिद्धा—"आब्रह्मस्तम्बपर्यन्ताः जगदन्तर्व्यवस्थिताः। प्राणिनः कर्मजनितसंसारवशवर्तिनः ॥

"यतस्ततो न ते ध्याने ध्यानिनामुपकारकाः। अविद्यान्तर्गताः सर्वे ते हि संसारगोचराः ॥
पश्चादुद्भूतबोधाश्च ध्याने नैवोपकारकाः। नैसर्गिको न वै बोधस्तेषामप्यन्यतो यतः ॥"

"तस्मात् तदमलं ब्रह्म निसर्गादेव बोधवत् ॥" इत्यादिना परस्य ब्रह्मणो: विष्णोः स्वरूपं स्वासाधारणमेव शुभाश्रय इत्युक्तम्। अतोऽत्र न भेदापलापः प्रतीयते।

---

प्रतिषिद्धमिति शुभाश्रयत्वप्रतिषेधः। शुभत्वम्—हेयविरोधित्वम्; न तु हेयराहित्यमात्रम्। "चिन्त्यमात्मविशुद्ध्यर्थं सर्वकिल्बिषनाशनम्' इत्युक्तत्वात्। शक्तित्रयाश्रयत्वकथनाय शक्तित्रयमनुवदति परेति। अत्र, "समस्ताः शक्तयश्चैताः" इति वचनार्थो विवक्षितः। एताः शक्तय इति बहुवचने सत्यपि समस्तपदं बहुव्यक्तिक्रोडीकारार्थम्। परशक्तिरेव परमात्मनो रूपमिति परशक्तिरूपम्; परशक्त्यात्मकं वा। एवमुत्तरत्रापि। भगवदसाधारणमिति चतुर्मुखादिशरीरव्यावृत्तिः; भगवदधिष्ठितत्वेऽपि तत्तज्जीवविशेषाभिमानविषयत्वात् तेषां शरीराणाम्। श्रुतिमूलतां दर्शयति आदित्येति। मूर्तरूपमित्यनेन "मूर्ते भगवतो रूपे" इति वचनार्थ उक्तः। उक्तेऽर्थेऽन्वयं श्लोकः किंविषय इत्यत्राह अत्रेति। शुभाश्रयतानर्हत्वकथनार्थमुच्यते चेत्, अन्यत्रास्यानर्हत्वकथनं वस्त्वन्तरस्य तदर्हत्वकथनं च द्रष्टव्यमित्यत्राह तथाहीति अस्मिन्नर्थद्वये वचनद्वयमुपादत्ते न तदिति। योगयुजा—प्रक्रान्तयोगेन। अनालम्बनत्वमनेन ग्रन्थेनोक्तम्; स्वतःशुद्धिविरहश्च प्रकरणसिद्ध इत्यभिप्रेतः। "अन्ये तु पुरुषव्याघ्र! चेतसो ये व्यपाश्रयाः। अशुद्धास्ते समस्तास्तु देवाद्याः कर्मयोनयः" इत्यादिना भगवद्विग्रहव्यतिरिक्तानां हि शुद्धिविरह उक्तः। अन्यस्य रूपस्यार्हताकथनं चास्य रूपस्यानर्हत्वविवक्षासूचकमिति चशब्दार्थः। अन्येत्विति ग्रन्थेन कर्मसंबन्धलक्षणाशुद्धिकथनात् कर्मसंबन्धविनिर्मुक्तानामपि स्वतःशुद्धिविरहः सूचितः। तेषामपि शुभाश्रयपदस्थशुभशब्देन व्यवच्छेद्यत्वं स्पष्टयितुमाह तथेति। पश्चादुद्भूतबोधाश्चेत्येतत् व्याचष्टे स्वस्वरूपापन्नानामिति पदेन। आब्रह्मस्तम्बपर्यन्ता इत्यत्र आङ् अभिविधौ; स्तम्बसमभिव्याहारात्। स्तम्बो हि कर्मवश्यः। "पुमान्न देवः" इत्यारभ्य "भूतेते कर्मयोनयः" इत्युक्तेः। "तेषामप्यन्यतो यतः" इत्येवमन्तस्य ग्रन्थस्यार्थः पूर्वमुक्तः। अथ, तस्मात्तदमलं ब्रह्मेत्यादेरर्थमाह परस्येति। स्वासाधारणमित्यस्य पूर्ववदर्थः। प्रत्यस्तमितेत्यादिश्लोकस्य भेदनिषेधपरत्वाभावं निगमयति अत इति।

'ज्ञानस्वरूपम्' इत्यत्रापि ज्ञानव्यतिरिक्तस्यार्थजातस्य कृत्स्नस्य न मिथ्यात्वं प्रतिपाद्यते; ज्ञानस्वरूपस्याऽऽत्मनो देवमनुष्याद्यर्थाकारेणावभासो भ्रान्तिरित्येतावन्मात्रवचनात्। न हि शुक्तिकाया रजततयाऽवभासो भ्रान्तिरित्युक्ते जगति कृत्स्नं रजतजातं मिथ्या भवति॥ जगद्ब्रह्मणोः सामानाधिकरण्येनैक्यप्रतीतेः, ब्रह्मणो ज्ञानस्वरूपस्यार्थाकारता भ्रान्तिरित्युक्ते सति अर्थजातस्य कृत्स्नस्य मिथ्यात्वमुक्तं स्यादिति चेत्—तदसत्; अस्मिन् शास्त्रे परस्य ब्रह्मणो विष्णोर्निरस्ताज्ञानादिनिखिलदोषगन्धस्य समस्तकल्याणगुणात्मकस्य महाविभूतेः प्रतिपन्नतया तस्य भ्रान्तिदर्शनासंभवात्। सामानाधिकरण्येनैक्यप्रतिपादनञ्च बाधासहमविरुद्धञ्चेत्यनन्तरमेवोपपादयिष्यते। अतोऽयमपि श्लोको नार्थस्वरूपस्य बाधकः॥

---

अथ ज्ञानस्वरूपमित्यादिश्लोकस्य भेदमिथ्यात्वपरत्वाभावमाह ज्ञानस्वरूपमितीति। अपिः समुच्चये। कृत्स्नमिथ्यात्वप्रतिपादनाभावमुपपादयति ज्ञानेति। ज्ञानस्वरूपस्यार्थाकारतयाऽवभासे भ्रमे सति अर्थाकारस्य तथात्वेनावभासो न भ्रमो भवतीत्यर्थः। तमेव दृष्टान्तेनोपपादयति नहीति। दृष्टान्तात् वैषम्यमुखेन चोद्यं शङ्कते जगद्ब्रह्मणोरिति। तत्र हि सर्वं रजतजातं न शुक्तिकाशकलेन समानाधिकरणं दृष्टम्; अपि तु व्यधिकरणत्वेन प्रमाणप्रतिपन्नम्। अतो न कृत्स्नस्य रजतजातस्य शुक्तित्वेन विरोधः; अपि तु समानाधिकरणरजतस्यैव विरोधः। तत्र विरोधात् समानाधिकृतरजतस्य मिथ्यात्वम्, अविरुद्धस्यासमानाधिकृतरजतस्यामिथ्यात्वञ्च। अत्र तु ब्रह्मव्यतिरिक्तं कृत्स्नं ब्रह्मसमानाधिकरणं प्रतीयते। अतो ज्ञानाकारस्यार्थाकारस्य च विरोधे कृत्स्नस्यार्थजातस्य मिथ्यात्वं फलितमिति। एतत् परिहरति तदसदिति। तत्र प्रथमं परोक्तार्थस्य प्रबन्धवाक्यार्थविरोधमाह अस्मिन्निति। ब्रह्मणोऽविद्यान्वयो जगतो मिथ्यात्वं चात्र विरुद्धम्। 'समस्तहेयरहितं विष्ण्वाख्यं परमं पदम्', 'ततः स वासुदेवेति', 'तद् ब्रह्म परमं नित्यम्', 'हेयाभावाच्च निर्मलम्', 'तानि सर्वाणि तद्वपुः', 'विभूतयो हरेरेताः' इत्यादिवचनादित्यर्थः॥ 'भ्रान्तिदर्शनतः स्थितम्', 'विष्णुं ग्रसिष्णुम्' इति विष्णोः सगुणस्य भ्रमाश्रयत्वमुच्यते। अतस्तत् युक्तम्; परब्रह्म हि निर्दोषमिति शङ्काव्यावृत्त्यर्थं परस्य ब्रह्मणो विष्णोरित्युक्तम्. निरस्ताज्ञानादिनिखिलदोषगन्धस्य समस्तकल्याणगुणात्मकस्येत्याभ्यां पदाभ्यामविद्यान्वयानुपपत्तिरुक्ता। अविद्यासंबन्धे सति निरस्तसमस्तहेयत्वं समस्तकल्याणगुणात्मकत्वमपि ह्यनुपपन्नं स्यात्। महाविभूतेरिति जगन्मिथ्यात्वानुपपत्तिरुक्ता। जगतो भगवद्विभूतित्वं हि न प्रमाणान्तरसिद्धम्, येन निषेधार्थमनुवादः स्यात्। अतो विधीयत एव। विधिस्तु न भ्रमं जनयति; तथा सति निषेधवचनस्यापि सतो भेदस्यासत्त्वविषयबुद्धिरूपभ्रमपरत्वस्यानिवार्यत्वात्। प्रामाण्यं हि वाक्यद्वयस्य समानम्। तस्माद्विहितोऽर्थः परमार्थ एवेति न जगन्मिथ्यात्वमित्यर्थः। सामानाधिकरण्येनैक्यप्रतीतौ सत्यां ज्ञानाकारार्थाकारयोर्विरोधादन्यतरमिथ्यात्वं स्यात्, यथा शुक्तिरेव रजतमित्यत्रेति शङ्कायामाह सामानाधिकरण्येनेति। बाधासहम्—न केवलमाकारद्वये; अन्यतरबाधनिरपेक्षमपि सामानाधिकरण्यं संभवति; किन्तु बाधं न सहते; आकारद्वयासिद्धौ सामानाधिकरण्यलक्षणासिद्धेरित्यर्थः। तर्ह्येकस्मिन् वस्तुन्याकारद्वयविरोधः कथं परिह्रियत इत्यत्राह अविरुद्धञ्चेतीति। आकारद्वयाङ्गीकारेऽप्यैक्यप्रतिपादनमविरुद्धम्; सद्वारकत्वादिति भावः। अनन्तरमेव—न त्वधिकरणान्तरे इत्यर्थः। प्रथमश्चशब्दः शङ्कानिवृत्तिपरः; द्वितीयः समुच्चयपरः। मिथ्यात्वपरत्वाभावं निगमयति अतोऽयमिति। एवं ज्ञानस्वरूपमिति श्लोकस्य प्रपञ्चमिथ्यात्वपरत्वमनुपपत्त्युद्घाटनेन निरस्तम्। अथ श्लोकं स्वपक्षे व्याख्यातुमुपक्रमते तथा हीति।

तथा हि—"यतो वा इमानि भूतानि जायन्ते, येन जातानि जीवन्ति, यत् प्रयन्त्यभिसंविशन्ति, तद्विजिज्ञासस्व, तद्ब्रह्म" इति जगज्जन्मादिकारणं ब्रह्मेत्यत्रसिते सति—

"इतिहासपुराणाभ्यां वेदं समुपबृंहयेत् । बिभेत्यल्पश्रुताद् वेदो मामयं प्रतरिष्यति ॥"

इति शास्त्रेण अर्थस्य इतिहासपुराणाभ्यामुपबृंहणं कार्यमिति विज्ञायते । उपबृंहणं नाम विदितसकलवेद-तदर्थानां स्वयोगमहिमसाक्षात्कृतवेदतत्त्वार्थानां वाक्यैः स्वावगतवेदवाक्यार्थव्यक्तीकरणम् । सकलशाखागतस्य

---

अत्र किमर्थं प्रश्नश्लोकव्याख्यानम्? ॥ उच्यते—ज्ञानस्वरूपमिति श्लोके द्वितीयान्तपदानां विशेष्यो विष्णुरिति न प्रतीयते; तेषां प्रणम्येति पदेनान्वयश्च न ज्ञायते; श्लोकस्य विशिष्टार्थ(विशिष्ट)परत्वं च प्रकरणस्य विशिष्टपरत्वेन विना नावगम्यते; अतो नमस्कारश्लोकाः व्याख्यातव्याः । तेषु व्याख्यातव्येषु, द्वितीयाध्यायारम्भे नमस्कारकरणं किंनिबन्धनम्; प्रथमत एव हि कर्तव्यमिति शङ्का जायते । शास्त्रस्य प्रश्नप्रतिवचनरूपेणावतीर्णत्वात् प्रथमं प्रश्नानां सङ्क्षेपेण प्रतिवचनं कृत्वा विस्तारविवक्षायां द्वितीयाध्यायारम्भे नमस्कारः कृतः । अन्यथा प्रश्नानन्तरमेव नमस्यायां क्रियमाणायाम् अस्मत्प्रश्नस्य किमुच्यत इति शिष्यबुद्धेर्व्याकुलता स्यादिति पूर्वोक्तशङ्कानिरसनमुखेन नमस्कारश्लोकसङ्गतिप्रदर्शनार्थं प्रश्नश्लोका व्याख्याताः । 'ज्ञानस्वरूपम्' इत्यस्मिन् उपक्रमग्रन्थे निर्विशेषवस्तुव्यतिरिक्तस्य भ्रान्ति-सिद्धत्वदर्शनात् तदनुगुण एवार्थः उत्तरत्र वर्णनीय इति शङ्कापरिहाराय उपक्रमोपक्रमभूतैः प्रश्नोत्तरवरलाभश्लोकैः शास्त्रप्रतिपाद्यः सविभूतिकदेवताविशेषः, न तु ज्ञप्तिमात्रमिति शास्त्रतात्पर्यज्ञापनार्थं च प्रश्नश्लोकव्याख्यानम् । व्याचिख्यासितश्लोकोक्तभ्रान्त्यन्वयस्य सद्वारकत्वसिद्धये सामानाधिकरण्यं शरीरशरीरिभावनिबन्धनमिति यन्मयमिति मयट्प्रत्ययेन ज्ञापनार्थश्च प्रश्नश्लोका व्याख्यायन्ते ।

तत्र किमयं श्रुतवेदान्तप्रश्नः; उताश्रुतवेदान्तप्रश्नः इति विकल्पे अश्रुतवेदान्तस्य विशेषप्रश्नानुपपत्तिः, श्रुतवेदान्तस्य श्रोतव्याभावात् प्रश्नानुपपत्तिरिति शङ्कायां श्रुतवेदान्तप्रश्न इत्याह यतो वा इमानीत्यादिना । अवसिते सतीत्यनेन ब्रह्ममीमांसाश्रवणं कृतमित्युक्तम् ॥ श्रुतवेदान्तस्य कथं प्रश्नोपपत्तिरिति शङ्कायां श्रुतवेदान्तस्येतिहासपुराणश्रवणविधिं दर्शयति इतिहासेति । इतिहासेत्यादिश्लोके वेदशब्दो वेदान्तपरः । वेदोपबृंहणभूतेषु धर्मशास्त्रेतिहासपुराणेषु धर्मशास्त्राणि पूर्वभागोपबृंहणानि; इतिहासपुराणानि उपरितन-भागोपबृंहणपराणीति विभागः । स च स्मृत्यधिकरणे व्यक्तीभविष्यति । तत्र धर्मशास्त्रेषु ब्रह्मप्रतिपादनं कर्मणां तदाराधनरूपत्वज्ञापनार्थम्; इतिहासपुराणेषु कर्मप्रतिपादनं कर्मणां ब्रह्मोपासनाङ्गत्वप्रतिपादनार्थम् । इतिहासस्य पुराणेभ्योऽभ्यर्हितत्वं विशेषः । अल्पाच्तरमिति पुराणशब्दस्य पूर्वनिपाते प्राप्ते, अभ्यर्हितं पूर्वं प्रयोक्तव्यमिति पूर्वनिपातितस्येतिहासस्याभ्यर्हितत्वप्रतीतेः । अस्य श्लोकस्य प्रथमार्धं व्याचष्टे उपबृंहणं नामेति । षष्ठ्यन्तविशेषणद्वयेन आगमोत्थं विवेकजं च ज्ञानमस्तीत्युक्तम् । तत्त्वार्थानामिति बहुवचनं कपिलमतादपि इतिहासादीनां प्राबल्यद्योतनार्थम् । व्यक्तीकरणम्—अज्ञातविशेषैः सह स्वावगतार्थनिष्कर्षः । यथा वेदेन कर्तव्यतया विहितस्य संध्योपासनादेः शरीरशुद्धिप्रकारदन्तधावनस्नानादिविशेषैः सह निष्कर्षः, एवमुपनिषद्भागेऽप्यर्थनिष्कर्षः सम्पाद्यः । उपनिषदर्थनिष्कर्षो ब्रह्मविचारसिद्ध इति नोपबृंहणापेक्षेति शङ्काया-मुत्तरार्धं व्याचष्टे सकलेति । पूर्वार्धविहितोपबृंहणकार्यतोपपादकमुत्तरार्धम् । उपबृंहणं नाम अनधीत-

शाखान्तरार्थैः सह अधीतशाखार्थनिष्कर्षः । अतो नोपबृंहणविचारनैरपेक्ष्यमित्यर्थः ।

ननु यथा आपातप्रतीत्या फलवदर्थावगमात् कर्मविचारे, तदनन्तरं ब्रह्मविचारे च रागतः प्रवृत्तिः— तथा अधीयमानशाखान्तर्गतेन, "अनन्ता वै वेदाः" इति वाक्येन वेदानामानन्त्यावगमादधीतशाखानवगतानां तदविरुद्धानां विरुद्धानां चार्थानां सम्भवात, "स्मृतेश्च", "अपि स्मर्यते" इत्यादिसूत्रेषु वेदान्तार्थनिर्णयस्योपबृंहणसापेक्षत्वदर्शनाच्चोपबृंहणश्रवणे रागतः प्रवृत्तिरुपपद्यते । तत्र पूर्वभागोपबृंहणेषु धर्मशास्त्रेषु श्रुतेषु उपनिषद्भागोपबृंहणरूपेतिहासपुराणेष्वपि रागात्प्रवृत्तिरिति विधिवैयर्थ्यम् । अप्राप्ते हि शास्त्रस्यार्थवत्त्वम् । न च गुरोरेव श्रोतव्यमिति नियमविधिः; अस्मिन् वचने तद्वाचिशब्दाभावात् । इतिहासपुराणयोः श्रवणप्रवृत्तस्य एतद्वचनार्थज्ञानम्, तस्मादितिहासपुराणश्रवणे प्रवृत्तिरित्यन्योन्याश्रयश्च । अतः उपबृंहयेदिति विधिरनुपपन्न इति ॥ सत्यम्; भारतादिप्रबन्धविशेषश्रवणाय तन्मध्यगतेनानेन न्यायसिद्धं सामान्यत उपबृंहणस्यापेक्षितत्वमनूद्यते । उपबृंहणं कार्यमिति विज्ञायत इत्यस्यायमर्थः,—न्यायसिद्धमुपबृंहणस्य करणीयत्वमनेन वचनेनापि ज्ञायत इति । उपबृंहणंनामेत्यादिभाष्येण न्यायप्राप्तिरेव प्रदर्श्यते । यद्वा समन्वय-विरोधपरिहारलक्षणाभ्यामेव तत्त्वस्थितेर्निश्चितत्वात्, वस्तुनि विरुद्धाकारासंभवादधीयमानश्रुतिनिर्णीतविरुद्धार्थप्रतिपादकप्रदेशान्तरसंभवे वेदस्य भ्रान्तिजल्पितायमानत्वप्रसङ्गाच्च निर्णीततत्त्वविरुद्धार्थप्रतिपादकप्रदेश[प्रसङ्ग]संभवात्, ब्रह्मण्यनवगतगुणविभूतिविशेषसद्भावेऽप्युपबृंहणसहस्रैरपि तदियत्ताप्रतिपादनायोगात्, अवगतकतिपयगुणविशेषोपासनेऽप्यनेनैव पुरुषार्थसिद्ध्युपपत्तेश्च उपबृंहणश्रवणनिरपेक्षं प्रति उपबृंहयेदिति विधानं युज्यते ॥

नन्वेवं तर्हि न्यायानुगृहीतवाक्यावगतेष्वर्थेषूपबृंहणनिष्कृष्टव्याभावात् निष्कृष्टव्यांशस्य सूत्रोदाहृतवचनैरेव निष्कृष्टत्वाच्चोपबृंहणविधिरदृष्टार्थः स्यात् । न च दृष्टे संभवति अदृष्टकल्पनं न्याय्यम् । दृष्टार्थत्वञ्च वचनं दर्शयति 'मामयं प्रतरिष्यति' इति । वेदस्य प्रतारणं नाम तदभिप्रेतविपरीतार्थवर्णनमेव । अतस्तन्निवृत्तिरूपं दृष्टफलं वाचनिकम् । इति तस्मिन् अदृष्टकल्पनमयुक्तम् । तर्हि तदेव दृष्टं फलमिति चेत्— तदप्ययुक्तम्; तत्त्वविपर्यासप्रतिपादनासंभवस्य त्वयैवोक्तत्वात्; साकल्येन ब्रह्मविभूत्यनवगमस्य समस्ततदवान्तरविशेषानवगमस्य च वेदप्रतारणरूपत्वाभावेन तन्निवृत्तेः फलत्वायोगाच्च ॥

उच्यते । यद्यपि परतत्त्व-तदुपासनप्रतिपादनेषु विपर्यासासंभवः—तथापि, "किं ते कृण्वन्ति[1] कीकटेषु गावो नाशिरं दुह्रे न तपन्ति घर्म(र्म्य)म् । आ नो भर प्रमगन्दस्य वेदो नैचाशाखं मघवन् रन्धयानः" इत्यादिवाक्यप्रतिपन्नप्रमगन्दादिवृत्तान्तस्येव परमात्मसृज्यसुरनरतिर्यगादिविशेषतदुत्पत्तितद्वृत्तविशेषाणां श्रुति[2]-

---

1 हे मघवन्! कीकटाख्यदेशे धेनवः तुभ्यं किं कुर्वन्ति ? न हि सोमप्रवर्ग्यार्थं दुहते; न च तदर्थं घृतं तापयन्ति । अतः प्रमगन्दनाम्नो राज्ञो धनं (वेदः) नः आहर; रन्धय-वर्धय चेत्यर्थः प्रतीयते । अत्र नीचाशाखनगरस्य प्रमगन्दस्य च न ग्रहणम्, अनित्यत्वात् । अतः प्रमगन्दस्य-वार्धुषिकस्य नैचाशाखम असत्कार्योपयुक्तं धनमाहरेत्यर्थ इति कर्ममीमांसकाः ।

2 'परं तु श्रुतिसामान्य[मात्र]म्' इति पूर्वमीमांसासूत्रेण शब्दसाम्यदर्शनात् प्रवाहणिनामा कश्चिदुच्यत इति न भ्रमितव्यम् । प्रकर्षेण वाहनकर्तेत्यादिसामान्य-योगार्थपरत्वादित्युक्तम् । तदत्र विवक्षितम् ।

सामान्यप्रतीतत्वेन वाक्याविवक्षितत्वं मन्यमानः अहल्याजारादिवाक्यानां पण्डितमानिभि[1]रितरैरुक्तमर्थमिव वेदपूर्वभागोपनिषद्भागगतानां मन्त्रार्थवादानामन्यथार्थत्वं मन्यते चेत्, अश्रुतोपबृंहणतया वेदं प्रतारयत्येवायमिति तत्परिहारायोपबृंहणविधिरुपपद्यत इति। न चान्योन्याश्रयः; स्वाध्यायविधिवाक्यस्य स्वाध्यायान्तर्भावेऽपि, अध्ययनाद्विध्यवगमः विध्यवगमादध्ययनमिति यथा नान्योन्याश्रयः, तद्वत्। तत्र हि विध्यभिज्ञपुरुषप्रेरणात्, तदनुष्ठानदर्शनाद्वा माणवकप्रवृत्तिः। एवमुपबृंहणविध्यभिज्ञशिष्टजनवादप्रसिद्ध्या, तदभिज्ञस्वगुरुवचनेन वा, तेनोपबृंहणाधिगमप्रवृत्तपुरुषान्तरदर्शनाद्वा उपबृंहणज्ञानस्य संपाद्यनाज्ञानात् शिष्यस्य प्रश्नः उपपद्यते। अत उपबृंहणविधिरुपपन्नः।

तत्र स्वगुरोः पराशरस्य सार्वज्ञ्यप्रसिद्धेः तेनैव सर्वविद्यास्थलेषु स्वस्य कृतशिक्षत्वाच्च मैत्रेयस्य तत्प्रणीतपुराणश्रवणप्रवृत्त्युपपत्तिः।

पुराणान्तरेभ्योऽस्य पुराणस्य वैषम्यं वदन् प्रश्नान् अवतारयति तत्रेति। अस्य तावत् पुराणरत्नस्य प्राच्योदीच्यादिसर्वविद्वज्जनविदितस्य पुराणान्तरेभ्योऽपि प्रसिद्धिप्राचुर्यात्, धर्मशास्त्रेषु मानवस्येव, व्याकरणेषु पाणिनीयस्येव च सजातीयप्रबन्धेभ्यः प्रकर्षातिशयो नापह्नोतुं शक्यते। तत एव प्रसिद्धिप्राचुर्यात् कौर्मादेरिव नष्टकोशत्वशङ्का दूरोत्सारिता। अनतिविस्तरत्वाच्च प्रक्षेपशङ्का नावतरति। [2]अन्यपरोक्तिप्रसिद्धपरिग्रहातिशयं चेदम् "पढइ परासरसद्दम्" (पठति पराशरशब्दम्) इति।

"अग्नेः शिवस्य माहात्म्यं तामसेषु प्रकीर्त्यते। राजसेषु च माहात्म्यमधिकं ब्रह्मणो विदुः॥ सात्त्विकेष्वथ कल्पेषु माहात्म्यमधिकं हरेः। तेष्वेव योगसंसिद्धा गमिष्यन्ति परां गतिम्॥ यस्मिन् कल्पे तु यत् प्रोक्तं पुराणं ब्रह्मणा पुरा। तस्य तस्य तु माहात्म्यं तत्स्वरूपेण वर्ण्यते' इति सम्यग्ज्ञाननिष्पादकसत्त्वमूलत्वात्, अन्यथाज्ञानविपरीतज्ञानहेतुभूतरजस्तमोमूलत्वाभावात् दुष्टकारणपुराणान्तरसाम्यं न संभावनीयम्। सत्त्वस्य यथार्थज्ञानहेतुत्वं रजस्तमसोश्चान्यथाज्ञानविपरीतज्ञानहेतुत्वम्, "सत्त्वात् सञ्जायते ज्ञानम्', 'अयथावत्प्रजानाति बुद्धिः सा पार्थ! राजसी', 'सर्वार्थान् विपरीतांश्च बुद्धिः सा पार्थ! तामसी' इति च वचनात् प्रसिद्धम्। "सत्त्वं लघु प्रकाशकमिष्टम् उपष्टम्भकं चलं च रजः। गुरु वरणकमेव तमः" इति, "सर्वास्ता निष्फलाः प्रेत्य तमोनिष्ठा हि ताः स्मृताः" इति च प्रसिद्धम्॥

ननु चतुर्मुखशिवादिप्रतिपादकपुराणानां रजस्तमोमूलत्वपरवचनस्य रजस्तमोमूलत्वेन प्रामाण्याभावात् सात्त्विकपुराणप्राबल्यासिद्धिः। अस्य वचनस्य सत्त्वमूलत्वे प्रमाणं नास्ति। अत एव तद्वचनमात्रस्याप्रामाण्यं वक्तुं युक्तम्, न बहूनां पुराणानाम्; भूयसां बलीयस्त्वात्॥ उच्यते। न तावदस्य वचनस्य प्रामाण्ये विमतिर्न्याय्या; बाधकादर्शनात् स्वतस्सिद्धप्रामाण्यस्यानपोदितत्वात्। "यो ह खलु वाऽस्य

1 अह्नि लीयते इत्यहल्या=रात्रिः। तां जरयतीति जारः=सूर्यः। अर्वाचीना तु गौतमपत्नी नापौरुषेयवेदार्थो भवितुमर्हतीति कर्ममीमांसकाः। 2 असत्काव्यलोले स्वोपपतौ कालवशात् विष्णुपुराणसक्ते सति तं विहाय स्वं पतिमेव प्राप्तायाः कस्याश्चिद् गाथेयम्। अत एव एतदर्थप्रवृत्ततयाऽन्यपरत्वम्। गाथासप्तशतीस्थगाथेयं काव्यमालायाम् अमुद्रिताऽपि अन्यत्र मुद्रिता। भावप्रकाशिकायां पूर्णगाथा द्रष्टव्या।

राजसोंशः, सोऽसौ ब्रह्मचारिणो योऽयं ब्रह्मा । यो ह खलु वा अस्य सात्त्विकोंशः, सोऽसौ ब्रह्मचारिणो योऽयं विष्णुः । यो ह खलु वा अस्य तामसोंऽशः, सोऽसौ ब्रह्मचारिणो योऽयं रुद्रः" इति, "महान् प्रभुर्वै पुरुषः सत्त्वस्यैष प्रवर्तकः" इति च श्रुत्यानुगुण्येन तत्तद्गुणमयत्वेनावगतस्य तत्तत्तत्त्वस्य तत्तत्कल्पे तत्तद्गुणमयेन ब्रह्मणा तेषु तेषु पुराणेषु प्रतिपादितत्वपरस्य वचनस्योपपन्नार्थत्वाच्च । सकलशास्त्रार्थव्यवस्थापके महाभारते च मोक्षधर्मे, "जायमानं हि पुरुषं यं पश्येन्मधुसूदनः । सात्त्विकः स तु विज्ञेयः स वै मोक्षार्थचिन्तकः (निश्चयः)" इत्यादिना भगवत्कटाक्षेण सत्त्वगुणमूलसम्यग्ज्ञाननिश्चयमुक्त्वा, "पश्यत्येनं जायमानं ब्रह्मा रुद्रोऽथवा पुनः । रजसा तमसा चास्य मानसं समभिप्लुतम्" इति चतुर्मुखशिवयोः कटाक्षेण रजस्तमोमूलकालुष्यप्रतिपादनाच्च चतुर्मुखशिवप्रतिपादकप्रबन्धानां रजस्तमोमूलत्वमुपपद्यते । अस्य वचनस्य रजस्तमोमूलपुराणस्थत्वेऽपि नाप्रामाण्यं शङ्कनीयम्, ब्रह्मशिवादिप्रतिपादनाभिनिविष्टस्य प्रबन्धस्य भगवत्प्रकर्षोक्तौ आग्रहासंभवेनास्य वचनस्य तत्त्वपरत्वोपपत्तेः । स्वप्रतिपाद्यदेवतायामेव हि वक्तुराग्रहसंभवः, न त्वन्यत्र । तस्मान्नास्य वचनस्य कारणदोषसंभवः ।

यदुक्तमनेकपुराणाप्रामाण्यात् एतद्वचनमात्राप्रामाण्यं युक्तम्; भूयसां बलीयस्त्वादिति—तदयुक्तम्; साक्षादर्थविरोधाभावात् । न हि विधिशिवप्रतिपादकप्रबन्धानां रजस्तमोमूलत्वं नेति तेषु पुराणेष्ववगम्यते ॥ तत्तत्प्रबन्धेष्वेव प्रमाणतया प्रतिपन्नानां तेषां प्रामाण्यं रजस्तमोमूलत्वं च विरुद्धमिति परम्परया विरोधः फलितः; तत्र भूयसां बलीयस्त्वमिति चेत्—यदि केवलमेतद्वचनमात्रविरोधेन तेषामप्रामाण्यम्, तदा स्यादयं दोषः । पुराणानां परस्परविरोधेन सर्वेषामविशेषेण प्रामाण्येऽनुपपन्ने, सर्वाप्रामाण्यादपि कतिपयप्रामाण्यसिद्ध्यनुगुणनिर्वाहे न्याय्ये सति, कस्याप्रामाण्यं कस्य च प्रामाण्यमित्यपेक्षायां विषयव्यवस्थामात्रपरत्वादस्य वचनस्य । अतोऽनेन सत्त्वादिमूलत्वे ज्ञापिते सति अदुष्टमूलैः प्रबन्धैर्दुष्टमूलप्रबन्धबाधः । अतो न भूयसांबलीयस्त्वनयेन तद्वचनबाधः ॥ भगवत्प्रतिपादकपुराणेभ्यो विधिशिवप्रतिपादकपुराणबाहुल्यात् तत्प्रामाण्यमिति चेत्,— इदं तावत् वचनमबाधितम्; इह भूयसांबलीयस्त्वनयानवतारात् । एवं बाधकरहितेनानेन वचनेन सत्त्वादिमूलत्वे पुराणानामवगते सति दुष्टमूलपुराणबाहुल्यमदुष्टमूलमेकमपि पुराणं न बाधितुं प्रभवति । न हि भ्रान्तपुरुषसहस्रवचनैरेकस्याभ्रान्तस्य वचनं बाध्यते । अतो भगवत्प्रतिपादकत्वेन सत्त्वमूलत्वान्न कारणदोषः ।

तथा पुराणान्तराणामिवास्य बाधकप्रत्ययो न दृश्यते; नारायणस्यैव परमकारणत्वप्रतिपादनात् । प्रत्यक्षश्रुतिषु हि नारायणस्यैव सामान्यशब्दविशेषशब्दाभ्यां कारणत्वमुक्त्वा, "न चास्य कश्चिज्जनिता न चाधिपः", "न तत्समश्चाभ्यधिकश्च दृश्यते", "न ह्येतस्मादिति नेत्यन्यत्परमस्ति", "यस्मात्परं नापरमस्ति किञ्चित्" इति कारणभूतात् तस्मादन्यस्य परत्वं च निषिध्यते । "न ब्रह्मा नेशानः", "तत्र ब्रह्मा चतुर्मुखोऽजायत", "त्र्यक्षः शूलपाणिः पुरुषोऽजायत", "ततो जज्ञ उग्रस्त्वेष नृम्णः", "विरूपाक्षाय....ब्रह्मणः पुत्राय", "अजस्य नाभावध्येकमर्पितम्", "स प्रजापतिरेकः पुष्करपर्णे समभवत्", "यन्नाभिपद्मादभवन्महात्मा प्रजापतिः" इति ब्रह्मशिवयोश्च नारायणादुत्पत्तिः श्रूयते । लैङ्गे तु ब्रह्मविष्णू प्रति, "युवां प्रसूतौ गात्रेभ्यो मम पूर्वं सनातनौ" इति रुद्रोक्त्या रुद्रात् हरिचतुर्मुखयोरुत्पत्त्यवगमात् पुराणान्तराणां श्रुतिविरोधः स्फुटतरः । यद्यपि कैश्चित् त्रयाणां देवानां साम्यमैक्यं चाभ्युपगतम्, तथाप्ययं विरोधो दुष्परिहरः;

तुल्यानामेकीभूतानामपि तेषामुत्पत्तिप्रतिपादने भगवतश्चतुर्मुखशिवयोरुत्पत्तिश्रवणात् रुद्रादितरयोरुत्पत्तेः क्वचिदपि वाक्ये श्रवणाभावाच्च । कारणवाचिशिवादिशब्दानामाकाशादिशब्दानामिव कार्यतयाऽवगतप्रसिद्धरुद्रादिपरत्वाभावाच्च । "सर्वे विष्णुमया वेदाः सर्वे विष्णुमया ग(गु)णाः । न हि विष्णुसमा काचिद्गतिरन्या विधीयते । इत्येवं सततं वेदा गायन्ते नात्र संशयः ॥" इति लैङ्गादावपि वेदानां भगवत्परत्वप्रतिपादकत्वाभ्युपगमाच्च । अतो नारायणस्यैव परमकारणत्वपराभिः प्रत्यक्षश्रुतिभिर्बाधकप्रत्ययवद्भ्यः पुराणान्तरेभ्यो वैलक्षण्यं स्फुटम् ।

तथा नारायणमेव परमकारणं प्रतिपादयद्भिर्मानवादिधर्मशास्त्रैरप्यैकार्थ्यं स्पष्टम् । "आपो नारा इति प्रोक्ताः', 'तद्विसृष्टः स पुरुषो लोके ब्रह्मेति कीर्त्यते', 'विद्यात्तु पुरुषं परम्', 'नारायणः परोऽव्यक्तात्" इत्यादिभिर्नारायणस्यैव हि कारणत्वं तेषूच्यते । पुराणान्तराणि तु धर्मशास्त्रविरुद्धानि च । तथा वक्तृवैलक्षण्यं च प्रत्यक्षश्रुतिसिद्धम्, "स होवाच व्यासः पाराशर्यः" इति । अत्र पराशरात्मजत्वेन हि व्यासोत्कर्ष उच्यते । तथा लैङ्गेऽपि पराशरवैलक्षण्यं प्रतीयते; यथा तत्र द्वितीयेऽध्याये, "पराशरस्यावतारो व्यासस्य च शुकस्य च । विनाशं राक्षसानां तु कृतं वै शक्तिसूनुना" इति । अत्र पराशरस्यावतारः इत्युक्तिर्हि प्रकर्षातिशयार्था । अन्यथा 'पराशरस्य चोत्पत्तिर्व्यासस्य च शुकस्य च' इत्यपि हि वक्तुं शक्यते ।

पुलस्त्यवसिष्ठवरदानलब्धपरदेवतापारमार्थ्यज्ञानवत्त्वं च महत् वैलक्षण्यम् । वरदाने सति एतत्पुराणप्रमाण्यम् तत्प्रामाण्ये सति तत्प्रतिपन्नवरलाभसत्यत्वमित्यन्योन्याश्रय इति न वाच्यम्; वरलाभवचनस्य 'पराशरो न लब्धवरः' इति बाधकप्रत्ययाभावेन स्वतस्सिद्धप्रामाण्यस्यानपोदितत्वात् । लैङ्गे च देवतापारमार्थ्यज्ञानलाभः पराशरस्यावगम्यते । यथा तत्र द्वितीयेऽध्याये, "देवतापारमार्थ्यं च विज्ञानं च प्रसादतः । पुराणकरणं चैव पुलस्त्यस्याज्ञया गुरोः" इति । तत्रैव त्रिषष्टितमेऽध्याये, "अथ तस्य पुलस्त्यस्य वसिष्ठस्य च धीमतः । प्रसादाद्वैष्णवं चक्रे पुराणं वै पराशरः" इति च । तदनन्तरं च, "षट्प्रकारं समस्तार्थसाधकज्ञानसंश्रयम् । दशसाहस्रममितं सर्ववेदार्थसंयुतम्" इत्यनेनास्य पुराणरत्नस्य सर्ववेदार्थसंयुतत्वम्, अत एव समस्तपुरुषार्थसाधकज्ञानप्रसाधकत्वं चोच्यते । अतो वक्तृवैलक्षण्यं प्रबन्धवैलक्षण्यं च पुराणान्तरसिद्धमिति तत् दुरपह्नवम् ।

इदं चापरं सुमहत् वैलक्षण्यम्—यत् सामान्यप्रश्नपूर्वकविशेषनिष्ठप्रतिवचनरूपत्वम्, "सोऽहमिच्छामि धर्मज्ञ ! श्रोतुं त्वत्तो यथा जगत् । बभूव भूयश्च यथा महाभाग ! भविष्यति । यन्मयं च जगत् ब्रह्मन् ! यतश्चैतच्चराचरम् ॥" इत्यादिना सामान्येन पृष्टे, "विष्णोः सकाशादुद्भूतम्" इति विशेषनिष्ठंप्रतिवचनं ह्यवगम्यते । विशेषे पृष्टे सति, प्रतिवचनस्य पृष्टविशेषपक्षपातेन तदुत्कर्षकथनं प्रशंसामात्रम्, न तत्त्वपरमिति शङ्कनीयं स्यात् । सामान्येन पृष्टे सति प्रतिवचनमर्थवशाद्विशेषपर्यवसितमिति तत्त्वपरत्वमेव स्यात् । अतश्च, "तस्माद्भवन्तं पृच्छामः सूत ! पौराणिकाद्य तु । पुराणसंहितां पुण्यां लिङ्गमाहात्म्यसंयुताम्" इति विशेषनिष्ठप्रश्नोपक्रमतत्प्रतिवचनरूपपुराणान्तरेभ्यः प्रकर्षातिशयः स्पष्टतमः ।

एतत्पुराणार्थश्च लैङ्गादिषु क्वचित् क्वचिदङ्गीक्रियते । यथा लैङ्गे द्वितीये पुराणार्थानुक्रमणे, "सर्वावर्तेषु विष्णोश्च जननं लीलयैव तु । विष्णोः प्रसादाज्जिष्णोश्च विष्णोश्चैव तु सम्भवः ॥",

वाक्यार्थस्य अल्पभागश्रवणाद्दुरवगमत्वेन तेन विना निश्चयायोगादुपबृंहणं हि कार्यमेव । तत्र—पुलस्त्यवसिष्ठवरप्रदानलब्धपरदेवतापारमार्थ्य[1]ज्ञानवतो भगवतः पराशरात् स्वावगतवेदार्थोपबृंहण-

[1]

तत्र "लीलया चैव कृष्णेन स्वकुलस्य च संहृतिः । जरकाख्यच्छलेनैव गमनं स्वेच्छयैव तु" इति । भगवदवतारस्य भूलोकपरित्यागस्य च लीलामात्रनिबन्धनत्वं हि तत्रोच्यते । अत एव एतत्पुराणार्थस्य अन्यत्राभ्युपगतत्वादप्रकम्प्यत्वमवगम्यते ॥ तर्हि एतदैकार्थ्यात् तान्यपि पुराणानि प्रमाणानि स्युरिति चेन्न; कार्त्स्न्येनाविरुद्धत्वाभावात् । भगवदुत्कर्षप्रतिपादकांशस्तु आग्रहासंभवादादरणीय इति पूर्वमेवोक्तम् । अस्य च पुराणरत्नस्य कार्त्स्न्येनाऽनाग्रहमूलत्वं चोपक्रमगतप्रश्नस्वाभाव्यादवगतमिति चोक्तम् । अतोऽन्यत्र बद्धाग्रहैरप्यादरणीयस्त्वेतोक्तार्थत्वमप्रकम्प्यताहेतुः ।

किञ्च पुराणान्तरेभ्योऽस्य पुराणस्य न स्वव्याहतार्थप्रतिपादकत्वं दृश्यते; कार्त्स्न्येन भगवत्प्रकर्षस्यैवावगमात् । पुराणान्तरेषु व्याघातः प्रतीयते; यथा लैङ्गे, "युवां प्रसूतौ गात्रेभ्यो मम पूर्वं सनातनौ । अयं मे दक्षिणे पार्श्वे ब्रह्मा लोकपितामहः । वामपार्श्वे च मे विष्णुर्विश्वात्मा हृदयोद्भवः" इति । तत्र, "ततः प्रहृष्टः सुमनाः प्रणिपत्य महेश्वरम् । प्राह नारायणो देवः सलिङ्गं लिङ्गवर्जितम् । यदि प्रीतिः समुत्पन्ना यदि देयो वरश्च नौ । भक्तिर्भवतु नौ नित्यं त्वयि चाव्यभिचारिणी" इति हरिविरिञ्चयोः शिवादुत्पत्तितदाराधन-वरवरणादिकमुक्तम् । तत्र क्वचित्, "त्वत्कोपसम्भवो रुद्रस्तमसा च समावृतः । त्वत्प्रसादाज्जगद्धाता रजसा च पितामहः" इति चतुर्मुखशिवयोर्भगवत्प्रसादकोपसम्भवत्वमुक्तमिति स्वव्याघातः । न च वसुदेवादेरुपरिचरवत् कैलासयात्रादिवच्च रुद्रादुत्पत्तितदाराधनरूपलीलोक्तिरित्यविरोधः; पुराणरत्न-भारतादौ, "मनसैव जगत्सृष्टिं संहारं च करोति यः । तस्यारिपक्षक्षपणे कियानुद्यमविस्तरः । तथापि यो मनुष्याणां धर्मस्तदनुवर्तनम् । कुर्वन् बलवता सन्धिं हीनैर्युद्धं करोत्यसौ । साम चापि प्रदानं च तथा भेदप्रदर्शनम् । करोति दण्डपातं च क्वचिदे(वं?) पलायनम् । मनुष्यदेहिनां चेष्टामित्येवमनुवर्तते । लीला जगत्पतेस्तस्य च्छन्दतः संप्रवर्तते । ईशन्नपि महायोगी सर्वस्य जगतः प्रभुः । कर्माण्यारभते कर्तुं कीनाश इव दुर्बलः । तेन वञ्चयते लोकान् मायायोगेन केशवः । ये तमेव प्रपद्यन्ते न ते मुह्यन्ति मानवाः ॥" इत्यादिभिरिव तत्र तत्र प्रसक्तापकर्षपरिहारग्रन्थादर्शनात्; भारतादिषु दशरथवसुदेवादीनां रामकृष्णाद्यपेक्षया परत्वस्य जगत्कारणत्वादिमुखेन प्रतिपादनाभावात्, इह च भगवदपेक्षया रुद्रपरत्वस्य प्रतिपादनाच्च । अतः स्वव्याघातो दुष्परिहरः । न च तथा अत्र स्वव्याहतिः प्रतीयत इति इदञ्च महद्वैलक्षण्यम् । उक्तलक्षणप्रकर्षवतो वैष्णवपुराणस्य कारणदोषबाधकप्रत्ययस्वव्याहतिमत्प्रबन्धान्तरस्य च विरोधे सति पुराणरत्नस्य प्राबल्यम्, अन्येषां दौर्बल्यं च सुस्पष्टम् ।

एवं प्रसिद्ध्यतिशयलब्धसजातीयप्रबन्धप्रकर्षवत्त्वात्, तत एव नष्टकोशत्वाभावात्, अनतिविस्तृततया प्रक्षेपशङ्कारहितत्वात्, अन्यपरोक्ति[प्र]सिद्धपरिग्रहातिशयवत्त्वात्, सामान्यप्रश्नपूर्वप्रतिवचनरूपत्वेन अनाग्रहमूलत्वात्, अत एवेदशवैलक्षण्यरहितकारणदोषबाधकप्रत्ययस्वव्याहतिमत्प्रबन्धान्तराणामेतद्विरोधे सति दौर्बल्यस्यावर्जनीयत्वाच्च श्रीमद्वैष्णवमिदं पुराणं प्रमाणतमम् । एतत् सर्वं हेतुजातमभिप्रेत्य प्रधानभूतयुक्तिं कण्ठोक्त्या प्रदर्शयन् तन्मुखेन प्रबन्धवैलक्षण्यं वदन् प्रश्नमवतारयति—तत्रेति । पुलस्त्यवसिष्ठवरप्रदानलब्धपरदेवता-

मिच्छन् मैत्रेयः परिपप्रच्छ—

"सोऽहमिच्छामि धर्मज्ञ! श्रोतुं त्वत्तो यथा जगत् । बभूव भूयश्च यथा महाभाग! भविष्यति ॥

"यन्मयं च जगद्ब्रह्मन् यतश्चैतच्चराचरम् । लीनमासीत् यथा यत्र लयमेष्यति यत्र च ॥" इत्यादिना ।

---

[1]पारमार्थ्यज्ञानवत इत्यत्र देवतापारमार्थ्यशब्देन तमःकार्यं धर्म्यन्तरत्वेन धर्म्यन्तरस्य प्रतीतिरूपं विपरीतज्ञानं व्यावर्तितम् । अनेन देवतापारमार्थ्यं चेति वचनं स्मा(स्फो)रितम् । प्रशंसार्थेन मतुप्प्रत्ययेन रजःकार्यं प्रकारान्तरोपेतस्य तद्विरुद्धप्रकारान्तरविशिष्टताप्रतीतिरूपमन्यथाज्ञानं व्यावर्तितम् । अनेन यथावदित्यस्यार्थः सूचितो भवति । देवताशब्देन कर्मणा उपासनेन वा आराध्यत्वं फलप्रदत्वं च विवक्षितम् । अनेन सविशेषत्वसिद्धिः । यथावदिति प्रकारकथनेनापि सविशेषत्वसिद्धिः—इति वरलाभकथनं सविशेषत्वोपपादकमित्यभिप्रायः । भगवच्छब्देन ज्ञानवत्त्वमुक्तम् । वरलाभात् तदतिशयसिद्धिः । सोऽहमित्यादि । सोऽहम्—त्वयैव सर्वविद्यासु शिक्षितपूर्वोऽहमिति भावः । धर्मज्ञ—"विशेषोऽस्ति न सतां शिष्यपुत्रयोः" इत्येवंरूपधर्मज्ञ । यद्वा "आनृशंस्यं परो धर्मः" इति धर्मज्ञ । आनृशंस्यम्—आश्रितसंरक्षणपरत्वम् । "आश्रितेत्यानृशंस्यतः" इति वचनात् । महाभाग । परिपूर्णकल्पं हि परसंरक्षणम् । किञ्चित्कारमप्यनपेक्ष्य रक्षकत्वमेवेति भावः । यथा यतो बभूव । ब्रह्मरुद्रादिषु कः कारणमिति ज्ञातुं यत इति प्रश्नः । किं विवर्ताधिष्ठानत्वं कारणत्वम्, उत परिणामित्वम्? तत्रापि किं सद्वारकपरिणामित्वम्, उताद्वारकपरिणामित्वमिति प्रकारभेदजिज्ञासया यथेति प्रश्नः । कल्पभेदेन सृष्टिवैषम्यशङ्कया भविष्यतीति प्रश्नः । वृश्चिकस्य गोमयवृश्चिकोपादानकत्वदर्शनात् कल्पभेदेन उपादानादिभेदशङ्का ह्युपपद्यते । तत्रापि यतो यथेति पदयोः पूर्ववदर्थः । यतो यथा बभूवेति एकप्रश्नत्वशङ्का यन्मयमिति प्रश्नान्तरव्यवधानेन निरस्यते । [तच्च?] यथा कारणं ज्ञातव्यम्, तथा सृष्टिप्रकारोऽपि पृथग् ज्ञातव्य इति ज्ञापनार्थम् । ज्ञातव्यत्वेऽपि प्राधान्यद्योतनाय प्रकारप्रश्नः पूर्वमेव कृतः । यत इति हेतौ पञ्चमी । अतो निमित्तोपादानयोस्तन्त्रेण प्रश्नः । अन्तस्स्थित्याद्युपयुक्तात्मशरीरभावप्रश्नः यन्मयमिति । मयट्प्रत्ययः प्राचुर्यार्थः । अनेन व्याप्तिर्दर्शिता । व्याप्यात् व्यापकप्राचुर्यं हि घटाकाशादौ दृष्टम् । आत्मतया हि व्याप्तिः । आत्मत्वञ्च धारकत्वम् । अतोऽन्तर्यामिकृतसत्तानुवृत्तिलक्षणस्थितिप्रश्नः फलितः । यन्मयम् । येनान्तर्यामिणा धारकेण प्रचुरं जगत् स्थितमित्यर्थ उक्तो भवति । अन्तः प्रविश्य प्रशासनेन धारकत्वं स्थितिहेतुत्वमिति हि प्रागेव विशदीकृतम् । चशब्दात् बहिर्भूतपोषकादिकृता पोषणादिलक्षणा स्थितिः, मातापित्रादिभिः कार्या इष्टप्रापणानिष्टनिवारणलक्षणा स्थितिश्च पृष्टा भवति । यत इत्युपादानस्यापि पृष्टत्वात् मयट् प्राचुर्यार्थ एव । न च गोबलीवर्दन्यायेन यत इति पञ्चम्यर्थः सङ्कोचयितव्यः, बलीवर्दशब्दवत् मयटोऽनन्यथासिद्धत्वाभावात् सङ्कोचकत्वानुपपत्तेः । पदान्तरवैयर्थ्यपरिजिहीर्षया पदान्तरार्थसङ्कोचो गोबलीबर्दनय इति हि न्यायविदः । अत्र तु मयटोऽर्थान्तरसंभवात् नायं सङ्कोचकः । यत इति पदं निमित्तमुपादानं च बोधयितुं शक्तम् । स्थितिप्रश्नोऽपेक्षितश्च । अतोऽपेक्षितविधेरनपेक्षितनिधानं दुर्बलम् ।

---

1 परदेवतायाः पारमार्थ्यम्—अवैपरीत्यम् । वस्तुतो या परदेवता, तस्यामेव परदेवतात्वज्ञानवतः ।

**अत्र ब्रह्मस्वरूपविशेष-तद्विभूतिभेदप्रकार-तदाराधनस्वरूप-फलविशेषाश्च पृष्टाः । ब्रह्मस्वरूपविशेषप्रश्नेषु यतश्चैतच्चराचरमिति निमित्तोपादानयोः पृष्टत्वात्, यन्मयमित्यनेन सृष्टिस्थितिलयकर्मभूतं जगत् किमात्मकमिति पृष्टम्। तस्य चोत्तरम्, जगच्च स इति। इदञ्च तादात्म्यमन्तर्यामिरूपेणाऽऽत्मतया व्याप्तिकृतम्; न तु व्याप्य-व्यापकयोर्वस्त्वैक्यकृतम्; यन्मयमिति प्रश्नस्योत्तरत्वात् जगच्च स इति सामानाधिकरण्यस्य। यन्मयमिति मयडत्र न विकारार्थः; पृथक् प्रश्नवैयर्थ्यात्।**

---

'यतो वा इमानि' इत्यादिश्रुतावपि यत इति पदेनैव निमित्तोपादानयोरुक्तत्वात् श्रुतिच्छायानुविधानाच्च **यत** इति तन्त्रेण प्रश्न इति, **यन्मयमिति** स्थितिप्रश्न एव क्रियते। अर्थान्तरस्वीकारे अपेक्षितावचनमनपेक्षितवचनं च स्यात्। नापि स्वार्थिको मयट्; प्रत्ययस्यार्थवत्त्वे संभवति तत्परित्यागस्यान्याय्यत्वात्। अतो यथोक्त एवार्थः। **लयस्थानप्रश्नो** लयप्रकारप्रश्नश्च अनधीतशाखान्तरेषु स्थानभेदप्रकारभेदशङ्कया कृतः। देवतान्तरस्य लयस्थानत्वं तत्रापि[1] सद्वारकत्वाद्वारकत्व-कार्यभ्रमनिवृत्तिरूपताख्यप्रकारभेदश्च हि शङ्कास्पदं भवति। **भूतभविष्यत्प्रश्नश्च** कल्पभेदेन लयस्थानप्रकारभेदशङ्कया कृतः। चकारात् लयकर्तृप्रश्नश्च सूचितः। स च कर्तृभेदशङ्कानिबन्धनः। स्वरूपप्रश्नश्लोकद्वयं व्याचिख्यासितश्लोकापेक्षितत्वेनोदाहृत्य **आदिशब्देन** प्रश्नानन्तरश्लोकाः क्रोडीकृताः। विष्णोस्सकाशादिति श्लोकस्यार्थान्तरप्रश्नोत्तररूपत्वशङ्काव्युदासार्थं तेषां श्लोकानामर्थं संग्रहेणाह **अत्रेति**। **ब्रह्मस्वरूपेति** स्वरूपशब्दो विभूत्यादिव्यावर्तकः। **स्वरूपविशेषशब्दो** ब्रह्मादिव्यावर्तकः। विभूतिभेदानां प्रकारो **विभूतिभेदप्रकारः**। स च ज्योतिश्चक्रभुवनकोशादिप्रश्नेऽन्तर्गतः। वर्णाश्रमधर्मादिप्रश्नेन **तदाराधनस्वरूपं पृष्टम्**; प्रतिवचने फलविशेषोक्तिदर्शनात्। 'प्रतिवचनप्रकारेण प्रश्नार्थो विज्ञायते' इति नीत्या फलविशेषश्चात्र पृष्टो भवतीति पूर्वोक्तेषु प्रश्नेष्वन्तर्भावित इत्यभिप्रायेण **फलविशेषाश्च पृष्टा** इत्युक्तम्। सप्रयोजनमाराधनं पृष्टमिति तत्र तदन्तर्भावः। अयमेवार्थः सकलश्रुतीति-हासपुराणानां प्रतिपाद्य इति भावः। ततः किं प्रस्तुतश्लोकार्थस्येत्यपेक्षायां **यन्मयमिति** पदस्यार्थं सोपपत्तिकमाह **ब्रह्मस्वरूपेति**। **सृष्टिस्थितिलयकर्मभूतमिति** पदं सृष्टिप्रलययोरुक्तत्वेन स्थितिकथनस्या-पेक्षितत्वज्ञापनार्थम्। स्थितिलयशब्दाभ्यां रक्षासंहारौ विवक्षितौ; स्थितिलययोः प्रयोज्यव्यापारत्वेन तदा-श्रयत्वेन तत्कर्मत्वाभावाज्जगतः। सृष्टिस्थितिलयकर्मभूतं जगत् स्थित्यर्थं किमात्मकं भवतीति प्रश्नार्थः। ततः किमित्यत्राह **तस्य चेति**। **जगच्च स इति** सामानाधिकरण्यप्रतिपन्नं तादात्म्यं स्वरूपैक्यलक्षणमाशङ्क्य परिहरति **इदं चेति**। **इदम्**—सामानाधिकरण्यप्रतिपन्नमित्यर्थः। गगनादौ व्याप्तिमात्रेण तादात्म्यं न दृष्टमिति तद्व्यावृत्त्यर्थमात्मत्वं विवृणोति **अन्तर्यामिरूपेणेति**। अन्तःप्रविश्य नियन्तृत्वं ह्यात्मत्वम्। **व्याप्यव्यापकयोरिति**। जगद्ब्रह्मणोर्व्याप्यत्वेन व्यापकत्वेन च श्रुतिसिद्धत्वादिति भावः। **न तु वस्त्वैक्यकृतमिति** प्रतिज्ञामुपपादयति **यन्मयमिति**। विकारार्थत्वमाशङ्क्य परिहरति **यन्मयमिति मयडिति**। विकारार्थत्वे उपादानं पृष्टं स्यात्। न च तत् प्रष्टव्यम्; यत इति पञ्चम्यन्तपदेन उपादानस्यापि पृष्टत्वात्। अतः

---

1 **लयस्थानत्वं सद्वारकं वा अद्वारकं वा, लयः कार्यस्य वास्तवतया तन्निवृत्तिरूपो वा, उत कल्पिततया भ्रमनिवृत्तिरूप एव वेति प्रकारेत्यर्थः।**

नापि प्राणमयादिवत् स्वार्थिकः; 'जगच्च स' इत्युत्तरानुपपत्तेः। तदा हि, विष्णुरेवेत्युत्तरमभविष्यत्। अतः प्राचुर्यार्थ एव। "तत्प्रकृतवचने मयट्" इति मयट्। कृत्स्नं च जगत् तच्छरीरतया तत्प्रचुरमेव। तस्मात् यन्मयमित्यस्य प्रतिवचनं जगच्च स'इति सामानाधिकरण्यं जगद्ब्रह्मणोः शरीरात्मभावनिबन्धनमिति निश्चीयते।

---

पृथक्प्रश्नवैयर्थ्यम्। न च गोबलीवर्दन्यायः, अर्थान्तरसंभवादिति। अपेक्षितविधेरनपेक्षितविधानं दुर्बलमिति न्यायश्चाभिप्रेतः। ब्रह्माज्ञानवादिनोऽभिमतं स्वार्थिकत्वपक्षं दूषयति नापीति। न तु भेदाभेदपक्षाभ्युपगतम्। तत्तु दूषयिष्यते। न ह्यर्थे संभवति निरर्थकत्वाश्रयणमुपपन्नमिति भावः। श्रुतार्थस्वीकारेणाश्रुतकल्पनं ह्युचितम्; न तु श्रुतपरित्यागः। ब्रह्माज्ञानवादिनाऽभ्युपगतस्य स्वार्थिकत्वस्य असाधारणं दूषणमाह—जगदिति। स्वार्थिकत्वपक्षे यदिदं जगत् तत्किमित्युक्तं स्यात्। यदिदं जगत् तत्किमित्युक्ते ज्ञातस्य जगद्रूपमात्रस्य प्रष्टव्यत्वायोगात् प्रश्नवैयर्थ्याय, तत् किं सत्यम् उत मिथ्या इति पृष्टं भवतीत्यभ्युपेतव्यम्। तत्र मिथ्येत्युत्तरं वक्तव्यम्। तत्रान्यतराकारोपस्थापके आकारान्तरनिषेधके च शब्दे वक्तव्ये आकारद्वयोपस्थापकं सामानाधिकरण्यमनुपपन्नमित्यर्थः। बाधार्थं सामानाधिकरण्यमिति चेत्—तन्नास्ति, माता मे वन्ध्येतिवत् 'सामानाधिकरण्यं बाधार्थम्' इति व्याहतत्वादिति भावः। तर्हि कथमुत्तरं स्यादित्यत्राह तदा हीति। विष्णुरित्यन्यतराकारोपस्थापकः शब्दः, आकारान्तरनिषेधकशब्द एवकारः। साक्षादर्थमाह अत इति। अतः—स्वार्थिकत्वविकारार्थत्वयोरनुपपन्नत्वादित्यर्थः। शब्दानुशासनानुमतिं दर्शयति तदिति। प्रकृतम्—प्रकर्षेण कृतम्; प्रभूतम्; प्रचुरमित्यर्थः। 'अन्नमयो यज्ञः', 'शकटमयी यात्रा' इति हि तस्योदाहरणम्। किमत्र प्राचुर्यमस्तीत्यत्राह कृत्स्नञ्चेति। अन्तर्बहिश्च व्याप्येत्यादिश्रुतेस्तदुपपन्नमिति भावः। सामानाधिकरण्यस्य शरीरात्मभावनिबन्धनत्वं प्रतिपिपादयिषितमुपसंहरति तस्मादिति॥ यन्मयमित्यस्य प्राचुर्यार्थत्वेन तस्योत्तरत्वात् जगच्च स इति सामानाधिकरण्यस्य शरीरात्मभावनिबन्धनत्वम्; तेन स्वार्थिकत्वनिवृत्त्या यन्मयमिति मयट्प्रत्ययस्य प्रचुर्यार्थत्वमित्यन्योन्याश्रय इति चेत्—नैवम्; मयट्प्रत्ययस्य स्वार्थिकत्वनिवृत्तेः प्राचुर्यार्थत्वनिर्णयस्य च सामानाधिकरण्यस्य शरीरात्मभावनिबन्धनत्वानपेक्षत्वात्। स्वार्थिकत्वं तावत् अर्थवत्त्वे सम्भवति निरर्थकत्वस्वीकारायोगादपास्तम्; जगच्च स इति सामानाधिकरण्येन च अपास्तम्। स्वार्थिकत्वे सति आकारद्वयोपस्थापक[1]सामानाधिकरण्यस्योत्तरत्वायोगात्; न तु शरीरात्मभावनिबन्धनत्वायोगात्। न च सामानाधिकरण्यस्य प्रवृत्तिनिमित्तभूताकारद्वयोपस्थापकत्वं मयट्प्रत्ययस्य स्वार्थिकत्वनिवृत्तिसापेक्षम्, सामानाधिकरण्यलक्षणस्वभावादेव तस्याकारद्वयोपस्थापकत्वसिद्धेः। अतो मयट्प्रत्ययस्य स्वार्थिकत्वनिवृत्तिः सामानाधिकरण्यस्याकारद्वयोपस्थापकत्वादित्यत्र नान्योन्याश्रयः। एवं स्वार्थिकत्वे व्युदस्ते, पृथक्प्रश्नवैयर्थ्येन विकारार्थत्वेऽनुपपन्ने, परिशेषाच्च स्थितेः प्रष्टव्यत्वे सति, स्थितिस्वाभाव्यात् अनुशासनानुरोधाच्च मयट्प्रत्ययस्य प्राचुर्यरूपार्थविशेषपरत्वसिद्धिः। ततो जगच्च स इति सामानाधिकरण्यस्य शरीरात्मभावरूप-

---

1 सामानाधिकरण्यस्य उत्तरत्वं-समानाधिकरणस्य जगच्च स इति वाक्यस्योत्तरत्वं न स्यात् एकार्थवाचित्वाभावादित्यर्थः। यदि स्वार्थिकत्वं स्यात्, शरीरात्मभावनिबन्धनत्वं न स्यादिति नोच्यते। किं तर्हि? यदि स्वार्थिकत्वं स्यात्, प्रत्ययवैयर्थ्यं स्यात्, जगच्च स इत्यस्य भिन्नार्थवाचितया सामानाधिकरण्यरूपोत्तरत्वं च न स्यात्। न जगत् किं तु स एवेति हि वक्तव्यमिति भावः।

[1]अन्यथा-निर्विशेषवस्तुप्रतिपादनपरे शास्त्रेऽभ्युपगम्यमाने, सर्वाण्येतानि प्रश्नप्रतिवचनानि न सङ्गच्छन्ते; तद्विवरणरूपं कृत्स्नं च शास्त्रं न सङ्गच्छते। तथा हि सति, प्रपञ्चभ्रमस्य किम् अधिष्ठानमित्येवंरूपस्यैकस्य प्रश्नस्य निर्विशेषज्ञानमात्रमित्येवंरूपमेकमेवोत्तरं स्यात्।

जगद्ब्रह्मणोरेकद्रव्यत्वपरे च सामानाधिकरण्ये सत्यसङ्कल्पत्वादिकल्याणगुणैकतानता निखिलहेयप्रत्यनीकता च बाध्येत; सर्वाशुभास्पदं च ब्रह्म भवेत्। आत्मशरीरभाव एवेदं सामानाधिकरण्यं मुख्यवृत्तमिति स्थाप्यते। अतः, "विष्णोः सकाशादुद्भूतं जगत् तत्रैव च स्थितम्। स्थितिसंयमकर्ताऽसौ जगतोऽस्य जगच्च सः॥"

---

प्रवृत्तिनिमित्तविशेषसिद्धिरिति नान्योन्याश्रयः। एवं सामानाधिकरण्यस्य मृषावाद्यभिमतैक्यपरत्वे मयडानर्थक्यं सामानाधिकरण्यानुपपत्तिश्चेति दूषणद्वयम्, स्वरूपैक्यपरत्वेऽर्थविरोधः यन्मयमित्युक्तप्रश्नोत्तरत्वानुपपत्तिश्चेति दूषणद्वयं च दर्शितं भवति। स्वोक्तार्थपरत्वानभ्युपगमे दूषणमाह **अन्यथेति**। अन्यथा कथं प्रश्नप्रतिवचने स्यातामित्यत्राह **तथा हि सतीति**।

सामानाधिकरण्यस्य भेदाभेदवाद्यभ्युपगतैकद्रव्यतापरत्वं दूषयति **जगदिति**। अस्मिन्नपि पक्षे जगत् **यन्मयं**-जगत् यद्द्रव्यमिति पृष्टं स्यात्। तदानीं मयड्वैयर्थ्यमस्तीति द्रष्टव्यम्; यत इत्युपादानस्य पृष्टत्वात्। अधिकं दूषणमाह **सत्येत्यादिना**। सत्यसङ्कल्पेत्यादिना जीवगतदोषः, **सर्वाशुभेत्यादिना** प्रकृतिगतदोषश्च ब्रह्मणि प्रसज्यत इत्युक्तम्। यद्वा उभयलिङ्गकत्वहानिर्विपरीताकारप्राप्तिश्चेत्यर्थः। शरीरवाचिपदस्य शरीरिपरत्वे मुख्यत्वं न स्यादित्यत्राह **आत्मशरीरेति**। **स्थाप्यते**—स्थापयिष्यत इत्यर्थः। अनन्तरभावित्वात् स्थाप्यत इत्युक्तम्।

एवं प्रकृतश्लोकव्याख्यानौपयिकार्थः प्रपञ्चितः। अथ शास्त्रार्थसंग्रहानन्तरं विस्तरोपक्रमे [2]सप्तश्लोकीं नमस्कारविषयामवतार्य व्याख्येयश्लोकस्य नमस्कारश्लोकान्तरैः सङ्गतिं दर्शयितुम् **अविकारायेत्यादीनां** षण्णां वाक्यार्थमाह **अत इति**। **अतः**—प्रश्नप्रतिवचनादिभिः शास्त्रस्य सविभूतिकसगुणवस्तुपरत्वावगमात्, सामानाधिकरण्यस्य विशिष्टवस्तुनि मुख्यवृत्तत्वं चेति भावः। **अत** इत्यस्य व्यष्टिरूपेणावस्थितं च **नमस्करोतीत्यनेनान्वयः**। यद्वा शास्त्रवाक्यार्थस्यैवंरूपत्वात् 'विष्णोः सकाशात्' इत्यस्य सङ्ग्रहरूपत्वम्, 'परः पराणाम्' इत्यादीनां विस्ताररूपत्वं च सिद्धमित्यर्थः। विष्णोः सकाशादित्यत्र **सकाशादिति** पदं षष्ठ्याः पञ्चम्यर्थत्वसंपादनार्थम्। यथा अस्य कृते इत्युक्ते, कृते इति शब्दस्य चतुर्थ्यर्थत्वसंपादनपरत्वम्—तद्वत्। यद्वा **सकाशात्**—ससङ्कल्पात्। काशनम्—प्रकाशनम्, सङ्कल्परूपज्ञानम्; तद्वत इत्यर्थः। अनेन निमित्तत्वसिद्धिः। यद्वा **सकाशशब्दः** पार्श्ववचनः। तेन शरीरमुपलक्षितम्। "सोऽभिध्याय शरीरात्स्वात्" इतिवत् शरीरादित्यर्थः। **तत्रैव च स्थितमिति** लयस्थानप्रश्नोत्तरम्। तत्र स्थितमिति **स्थितम्**—निष्ठां गतम्। अनेन जगतो नित्यत्वम् अवस्थानामागमापायित्वं च सूचितम्। लयस्थानप्रश्नस्योत्तरमुक्तम्; अथ लयकर्तृप्रश्नस्य बाह्यस्थितिप्रश्नस्य चोत्तरमाह **स्थितीति**। **जगच्च स इति**, यन्मयमिति फलितस्य कृत्स्नान्तर्यामिरूपकृतसत्तानुवृत्तिलक्षणस्थितिप्रश्नस्योत्तरम्। यद्वा यन्मयमिति फलितस्थितिप्रश्नस्यापि **स्थितिसंयमकर्तेत्येवोत्तरम्**। **जगच्च स इति** तु यन्मयमिति कण्ठोक्तस्यार्थस्योत्तरम्। **इदं** सामानाधिकरण्यमात्मतया व्याप्तिनिबन्धनमिति पूर्वमेवोपपादितम्॥

---

1 अन्यथेतिपदं जगद्ब्रह्मणोरिति वाक्येऽप्यनुषज्यते। 2 सप्तश्लोकी स्मृतिपुराणविचारावसाने द्रष्टव्या।

इति संग्रहेणोक्तमर्थं 'परः पराणाम्' इत्यारभ्य विस्तरेण वक्तुं परब्रह्मभूतं भगवन्तं विष्णुं स्वेनैव रूपेणावस्थितम् 'अविकाराय' इति श्लोकेन प्रथमं प्रणम्य, तमेव हिरण्यगर्भ-स्वावतार-शङ्कररूपत्रिमूर्ति-प्रधान-काल-क्षेत्रज्ञसमष्टि-व्यष्टिरूपेणावस्थितञ्च नमस्करोति।

---

ननु निष्कर्षकशब्दानां शौक्ल्यादीनां धर्मिपर्यन्तत्वं न दृष्टम् । यन्मयं जगदित्यनेन जगच्छब्दस्य निष्कर्षकशब्दत्वं दृष्टमिति धर्मिपर्यन्ताभिधायित्वाभावात् जगच्च स इति सामानाधिकरण्यमनुपपन्नमिति चेत्—उच्यते । निष्कर्षकशब्दा हि द्विविधाः, नियतनिष्कर्षकाः[1] वैवक्षिकनिष्कर्षकाश्च । तत्र शौक्ल्यादिशब्दा नियतनिष्कर्षकाः; मनुष्यशुक्लादिशब्दा वैवक्षिकनिष्कर्षकाः; प्रयोगस्य नियामकत्वात् । अन्यथा निष्कर्षकानिष्कर्षकविभागोऽपि नोपपद्येत । तथा जगच्छब्दोऽपि वैवक्षिकनिष्कर्षक इति । अत एव यन्मयमिति वैयधिकरण्येन प्रश्नस्य जगच्च स इति सामानाधिकरण्येनोत्तरमर्थभेदाभावादुपपन्नम् ; शुक्लगुणस्य आश्रयः कः इति प्रश्नस्य शुक्लः पटः इत्युत्तरवत् । एवं सङ्क्षेपेणोक्तस्य वक्ष्यमाणमहाविस्तरस्यार्थस्येषद्विस्तररूपेण श्लोकैर्नमस्कारः क्रियत इति नमस्कारश्लोकसङ्गतिः । स्वेनैव रूपेणावस्थितम्—न तु प्रकृत्यादिविशिष्टमित्यर्थः । परब्रह्मणो हि हेयसंबन्धाभावः, न तु विष्णोरिति शङ्कायाम् 'विष्णुनामा स वेदेषु,' 'समस्तहेयरहितं विष्ण्वाख्यं परमं पदम्' इति वचनात् ब्रह्मण एव विष्णुशब्दवाच्यत्वात् विष्णोरेव भगवच्छब्दवाच्यत्वाच्च विष्णोर्हेयसम्बन्धोऽनुपपन्न इत्यभिप्रायेण परब्रह्मभूतमित्यादिविशेषणमुक्तम् ।

अविकाराय । विकारशब्दो धर्मिपरो धर्मपरश्च; "षोडशकश्च विकारः" इत्यादिप्रयोगात् । स्वयं कस्यचिद्विकारभूतः—कार्यभूतो न भवतीत्यविकारः । अनेन कार्यचिद्व्यावृत्तिः । यद्वा विकारः—अवस्था महत्त्वाहङ्कारत्वादिः; नित्यं तत्सम्बन्धविरहादविकारः । अतो विकारवती प्रकृतिरविकारपदेन व्यावर्त्यते । एवं तत्पुरुषबहुव्रीहिभ्याम् अविकारायेति पदेन कार्यकारणरूपोभयावस्थाचिद्व्यावृत्तिः । शुद्धायेति बद्धव्यावृत्तिः । नित्याय शुद्धत्वेन नित्याय । अन्यथा अविकारायेत्यनेन पुनरुक्तिः स्यात् । नित्यपदं[नित्य] शुद्धिं विशिषदेव शुद्धिमद्वस्तुविशेषणम्; यथा महोदार इत्यत्र महच्छब्द औदार्यं विशिषन्नेव दातुर्विशेषणम्, तद्वत् । अतो मुक्तव्यावृत्तिः । परमात्मने इति नित्यमुक्तव्यावृत्तिः । ते हि परवन्तः । न तु परमाः । 'प्रधानपुरुषव्यक्तकालानां परमम्' इति वक्ष्यमाणत्वात् । अविकारायेत्यादिना पदचतुष्टयेन प्रधानपुरुषव्यक्तकालव्यावृत्तिरिति केचित् । निमेषाद्यवस्थकालस्य व्यक्तस्याप्यविकारपदव्यावर्तितत्वात् पुरुषत्रैविध्यस्यैव प्रामाणिकत्वात् विशेषणानां तद्व्यावर्तनसमर्थत्वाच्च यथोक्तानामेवार्थानां व्यावर्तितत्वमुचितम् । विलक्षणविग्रहवत्तयाऽपि समस्तवैलक्षण्यमाह सदैकरूपरूपायेति । प्रथमो रूपशब्दः स्वभाववाची; एकस्वभावमित्यर्थः । परव्यूहविभवादिसर्वावस्थासु सकलहेयप्रत्यनीकत्वमङ्गलास्पदत्वध्येयत्वादिस्वभावोऽप्रच्युत इत्यर्थः । यद्वा एकरूपम्—दिव्यात्मस्वरूपेण समानस्वभावम् । तेनापि हेयप्रत्यनीकत्वादिसिद्धिः । एभिः पदैरीक्षत्यानन्दमयाधिकरण-अन्तरादित्यविद्यार्था विवक्षिताः । पूर्वोक्तमात्मत्वं न 'मृदात्मको घट'इतिवद्भवतीति तद्वैशद्यमनयवशक्त्या क्रियते विष्णुशब्देन, सर्वजिष्णव इति पदेन च । पदद्वयेन नृपनभोग्यावृत्तिः, । अन्तःप्रविश्य नियन्तृत्वं हि शरीरित्वम् । अत एवमात्मत्वं

---

1 नियतेत्यादिपदद्वये निष्कर्षशब्दात् बहुव्रीहिकप्रत्ययः ।

विवृतं भवति । विष्णुशब्दस्य रूढत्वाद्देवताविशेषनिर्णयश्च सिद्धः । यद्वा विष्णुशब्देनैव नियमनपर्यन्तव्याप्तिरुक्ता, व्याप्तिकृततद्गतदोषस्पर्शशङ्कां व्युदस्यति सर्वजिष्णव इति ।

कथं विष्णोः कारणत्वम्; हिरण्यगर्भादीनां हि सृष्ट्यादिकारणत्वमवगम्यत इत्यत्राह नम इति । तत्तच्छरीरको विष्णुरेव सृष्ट्यादिकं करोतीत्यर्थः । 'रक्षार्थं सर्वभूतानां विष्णुत्वमुपजग्मिवान्' इत्युक्तविष्ण्वाख्यावताराविग्रहद्वारा भगवत्पर्यन्तो हरिशब्दः । हिरण्यगर्भशङ्करशब्दौ जीवद्वारा भगवत्पर्यन्ताविति—"ब्रह्माद्याः सकला देवा मनुष्याः पशवस्तथा । विष्णुमायामहावर्तमोहान्धतमसावृताः" इति, 'हिरण्यगर्भादिषु च ब्रह्मकर्मात्मिका द्विधा' इति 'हिरण्यगर्भो भगवान्' इत्यारभ्य 'मूर्तमेतद्धरेः रूपं भावनात्रितयात्मकम् । अशुद्धास्ते समस्तास्तु देवाद्याः कर्मयोनयः" इत्याद्येतत्प्रबन्धस्थश्लोकतात्पर्यानुरोधात, "एतौ द्वौ विबुधश्रेष्ठौ प्रसादक्रोधजौ स्मृतौ । तदादर्शितपन्थानौ सृष्टिसंहारकारकौ", "तवान्तरात्मा मम च ये चान्ये देहिसंज्ञिनाः । सर्वेषां साक्षिभूतोऽसौ न ग्राह्यः केनचित् क्वचित्" इति भारतादिवचनैकार्थ्याच्च निश्चीयते । हिरण्यगर्भादिसामानाधिकरण्यं व्याप्तिकृतमिति सूचयति वासुदेवायेति । ब्रह्मशिवमध्यस्थोऽप्यप्रच्युतस्वभाव इत्याह तारायेति । यद्वा तेषु त्रिष्वप्ययमेव मोक्षप्रद इत्यर्थः । "अथ कस्मादुच्यते तारम्? यस्मादुच्चार्यमाण एव गर्भजन्मजरामरणसंसारमहाभयात् तारयति, तस्मादुच्यते तारम्" इति श्रुतेः । "ब्रह्मविष्णुशिवाः ब्रह्मन्! प्रधानाः ब्रह्मशक्तयः" इत्यादिभिः विष्णोः परं तत्त्वं विष्णोश्चतुर्मुखादिसाम्यं च न शङ्कनीयम् । शक्तिरपृथक्सिद्धविशेषणम् । तत्र धर्मिण्यसमानविभक्तिनिर्दिष्टे धर्मिपर्यन्तस्यापि शब्दस्य धर्ममात्रपरत्वं दृष्टम्, पटस्य शुक्ल इत्यादिषु । तथा विष्णुशब्दो विशेषणभूतविग्रहमात्रपरः; असमानविभक्तिना ब्रह्मशब्देन धर्मिणः पृथङ्निर्दिष्टत्वात् । ब्रह्मणः शक्तयो हि ब्रह्मशक्तयः । अतोऽसमानविभक्तिनिर्दिष्टत्वमिति । यद्वा भगवतो देवमनुष्यादिशब्दव्यपदेशवत् शक्तिविभूत्यादिशब्दव्यपदेशोऽपि विभूतिसाजात्यात् । यथाऽऽहुः श्रीवत्साङ्कमिश्राः, "सजातीयस्तेषामिति तु विभवाख्यामपि भजन्" इति । अतो यथोक्त एवार्थः ।

अथ केवलप्रकृतिकारणव्यावृत्त्यर्थं प्रकृतिविशिष्टं परमात्मानं नमस्करोति एकानेकेति । कारणावस्थायामेकः, कार्यावस्थायामनेकः । अथ धीस्थां कार्यावस्थामाह स्थूलेति । तथा बुद्धिस्थां कारणावस्थामाह अव्यक्तेति । तत्राप्यप्रच्युतस्वभावत्वमाह मुक्तिहेतव इति ।

अथ कालविशिष्टमाह—सर्गेति । कालस्य वक्ष्यमाणविशेषणोपपत्तेः प्रकरणस्य विशिष्टपरत्वाद्विशेषणान्तरविशिष्टतायाः प्रतिपादितत्वेन कालविशिष्टताकथनपारिशेष्यात् तदप्रतिपादने अपेक्षितविध्यभावप्रसङ्गात् केवलं ब्रह्मस्वरूपकारणपरत्वे अण्डान्तर्गतसर्गादेरुक्तत्वादण्डबहिर्भूततत्त्वसर्गादेर्वक्ष्यमाणत्वाच्च पौनरुक्त्यप्रसङ्गात्, विस्तरे च "प्रधानपुरुषव्यक्तकालानाम्", "व्यक्तं विष्णुस्तथाऽव्यक्तं पुरुषः काल एव च", "तथा पुरुषरूपेण कालरूपेण च स्थितम्", "ब्रह्मा दक्षादयः कालः" इत्यादिभिर्व्यक्ताव्यक्तादिभिः सह वक्ष्यमाणत्वादयं श्लोकः कालपर एव । अचिद्विशिष्टवाचिश्लोकानन्तर्यादस्य श्लोकस्य कालपरत्वमुचितम् । उत्तरश्लोकः समष्टिजीवपरः, व्यष्टिजीवपरश्लोकसाहचर्यात् । कालस्य सर्गस्थितिविनाशमूलभूतत्वं 'ब्रह्मा दक्षादयः कालः' 'विष्णुर्मन्वादयः कालः', "रुद्रः कालोऽन्तकाद्याश्च" इत्यादिषु सिद्धम् । जगन्मयः—अवच्छेदकतया अवच्छेद्यतया च जगत्प्रचुरः ।

तत्र 'ज्ञानस्वरूपम्' इत्ययं श्लोकः क्षेत्रज्ञव्यष्ट्यात्मनाऽवस्थितस्य परमात्मनः स्वभावमाह। तस्मान्नात्र निर्विशेषवस्तुप्रतीतिः।

यदि निर्विशेषज्ञानरूपब्रह्माधिष्ठानभ्रमप्रतिपादनपरं शास्त्रम, तर्हि,—

"निर्गुणस्याप्रमेयस्य शुद्धस्याप्यमलात्मनः। कथं सर्गादिकर्तृत्वं ब्रह्मणोऽभ्युपगम्यते" इति चोद्यम्,

"शक्तयः सर्वभावानामचिन्त्यज्ञानगोचराः। यतोऽतो ब्रह्मणस्तास्तु सर्गाद्या भावशक्तयः।

भवन्ति तपतां श्रेष्ठ! पावकस्य यथोष्णता।" इति परिहारश्च न घटते।

तथा हि सति 'निर्गुणस्य ब्रह्मणः कथं सर्गादिकर्तृत्वम्', 'न ब्रह्मणः पारमार्थिकः सर्गः, अपितु भ्रान्तिपरिकल्पितः' इति चोद्यपरिहारौ स्याताम्। उत्पत्त्यादिकार्यं सत्त्वादिगुणयुक्तापरिपूर्णकर्मवश्येषु दृष्टमिति सत्त्वादिगुणरहितस्य परिपूर्णस्याकर्मवश्यस्य कर्मसंबन्धानर्हस्य कथं सर्गादिकर्तृत्वमभ्युपगम्यत इति चोद्यम्।

---

अथ क्षेत्रज्ञसमष्ट्यात्मनाऽवस्थितं नमस्यति आधारभूतमिति। अचेतनस्य चेतनः स्वरूपेणाधारभूतः "एवमेवैता भूतमात्राः प्रज्ञामात्रास्वर्पिताः", "जीवभूतां महाबाहो! ययेदं धार्यते जगत्" इति वचनात्। अणीयस्त्वम् – प्रकृतेरपि व्यापनयोग्यसूक्ष्मत्वम्। यद्वा 'विकासाणुस्वरूपैश्च' इत्युक्तप्रकारेण सर्गदशायामिव ज्ञानविकासाभावादणीयस्त्वमेवेत्यर्थः। सर्वभूतस्थम्— भवतीति भूतम्; पृथिव्यन्तेषु सर्वतत्त्वेष्ववस्थितम्। अनन्तरं क्षेत्रज्ञव्यष्टिविशिष्टं नमस्करोति ज्ञानेति।

हिरण्यगर्भेत्यादिभाष्ये निर्दिष्टेष्वर्थेष्वयं श्लोकः किंविशिष्टपरमात्मपर इति शङ्कायां समासान्तर्गतं प्रस्तुतश्लोकार्थं विविच्य दर्शयति तत्रेति। परमात्मनः सद्वारक एव भ्रमान्वय इत्यर्थः। ततः किमित्यत्राह तस्मादिति।

निर्विशेषज्ञानपरत्वे प्रश्नोत्तरवरलाभकथनानुपपत्तिमुखेनोपक्रमविरोध उक्तः। अथोपरितनाध्यायगतचोद्यपरिहारानानुगुण्यमुच्यते यदीति। यद्वा शास्त्रारम्भोपयोगिप्रश्नोत्तरानुपपत्तिरुक्ता। इदानीमेतत्प्रश्नोत्तरविशेषानुपपत्तिरुच्यते यदीति। पूर्वाध्याये, 'जुषन् रजोगुणम्' इत्यादिना गुणान्वये कथितेऽपि निर्गुणस्येति चोदयतोऽयमभिप्रायः—गुणान्वयस्य सद्वारकत्वात् स्वयं निर्गुण इति। निर्विशेषपक्षे अप्रमेयस्येत्यादिपदवैयर्थ्यम्; निर्गुणस्येति पदेनैव निर्विशेषत्वसिद्धेः; परिपूर्णत्वादिगुणानभ्युपगमाच्च। अप्रमेयादिपदान्तरसमभिव्याहार एव निर्गुणपदोपस्थापितनिषेधस्य सङ्कुचितविषयत्वसाधकः। न घटत इति। 'सर्गाद्या भावशक्तयः' इति सर्वशक्तियोगेन चोद्यस्य परिहारात् निर्विशेषपक्षाननुगुणत्वमिति भावः। तर्हि कथं चोद्यपरिहारौ स्यातामित्यत्राह तथा हि सतीति। निर्गुणस्य ब्रह्मण इत्यनेन पदान्तरवैयर्थ्यमभिप्रेतम्। निर्विशेषस्य कर्तृत्वानुपपत्तिचोद्ये कृते, 'कर्तृत्वस्य पारमार्थ्ये सति हि तदनुपपत्तिः, अपरमार्थत्वाद्दुर्घटत्वमेव भूषणम्' इति परिहारो वक्तव्य इत्यर्थः। किमर्थाविमौ चोद्यपरिहारौ, यद्ययमर्थो न प्रतिपाद्यत इति शङ्कायाम्—स्वयमेव तच्चोद्यपरिहारशरीरमाह उत्पत्त्यादीति। निर्गुणस्येत्यादिविशेषणानां विपरीताकारैः कर्तृत्वस्य व्याप्तिं कथमित्यनेनाभिप्रेतां दर्शयति सत्त्वादिगुणयुक्तेत्यादिना। सत्त्वादिगुणयुक्तापरिपूर्णकर्मवश्यत्वानि निर्गुणत्वादीनां यथाक्रमं विपरीताकाराः। अमलात्मन इत्यस्य विपरीताकारोऽपि कर्मवश्येत्यनेनार्थसिद्धः। अमलात्मत्वम्—अमलस्वभावत्वम्, कर्मसम्बन्धानर्हत्वम्; तद्विपरीताकारः कर्मसम्बन्धार्हत्वम्। तच्च कर्मवश्यशब्देनार्थसिद्धम्। कर्मसम्बन्धार्हत्वकार्यं हि कर्मवश्यत्वम्। निर्गुणस्ये-

दृष्टसकलविसजातीयस्य ब्रह्मणो यथोदितस्वभावस्यैव जलादिविसजातीयस्याग्न्यादेरौष्ण्यादिशक्तियोगवत् सर्वशक्तियोगो न विरुध्यत इति परिहारः ।

'परमार्थस्त्वमेवैकः' इत्याद्यपि न कृत्स्नस्यापारमार्थ्यं वदति; अपि तु कृत्स्नस्य तदात्मकतया तद्व्यतिरेकेणावस्थितस्यापारमार्थ्यम् । तदेवोपपादयति, "तवैष महिमा येन व्याप्तमेतच्चराचरम्" इति । येन त्वयेदं चराचरं व्याप्तम्, अतस्त्वदात्मकमेवेदं सर्वमिति त्वदन्यः कोऽपि नास्ति । अतः सर्वात्मतया त्वमेवैकः परमार्थः ।

---

त्यादिपदानां यथाक्रममर्थमाह सत्त्वादिगुणरहितस्येत्यादिपदैः । कर्मसंबन्धानर्हस्येत्यनेन अमलात्मन इति पदं व्याख्यातं भवति । अकर्मवश्यत्वं मुक्तस्यापि विद्यते । स पूर्वावस्थायां कर्मसंबन्धित्वात् तदर्हः । अतस्तद्व्यावर्तकं कर्मसंबन्धानर्हत्वममलात्मत्वम् । अकर्मवश्यत्वम्—कर्मकृतसुखदुःखभाक्त्वाभावः । कर्मवश्यविसजातीयत्वं कर्मसम्बन्धानर्हत्वम् । सर्गादिकर्तृत्वे गुणत्रयवश्यत्वसापेक्षत्वकर्माधीनफलभाक्त्वकर्मसंबन्धार्हत्वप्रसङ्ग इति विशेषविरोधप्रसञ्जनेन चोद्यम् । अग्नेर्द्रव्यत्वेऽनुष्णत्वप्रसङ्ग इतिवत् अयं तर्को धर्मिग्राहकप्रमाणबाधितः । अतो विसजातीयधर्मिणो विसजातीयधर्मवत्त्वं युक्तम्; अग्नित्वे सत्यपि वैद्युताग्नेर्जलनिर्वाप्यत्वाभाववत् । अतः सर्वविसजातीयस्य ब्रह्मणः सर्वशक्तियोग उपपद्यत इति परिहार इत्यर्थः । शक्तयः सर्वभावानाम् इत्यस्य ग्रन्थस्यायमक्षरार्थः—अचिन्त्यज्ञानगोचराः—अतर्क्यप्रमितिसिद्धाः सर्गाद्याः सर्गादिगोचराः, भावशक्तयः—वस्तुशक्तयः । ब्रह्मणः वस्तुशक्तय इति निर्देशो ब्रह्मतादात्म्यमितिवत्[1] । यद्वा ब्रह्मणो भावशक्तयः—वस्तुशक्तयः । ब्रह्मणो वस्तुत्वप्रयुक्ताः सत्ताप्रयुक्ता निरुपाधिकाः शक्तय इत्यर्थः । यद्वा भावशब्दः स्वभावपरः; स्वाभाविक्यः शक्तय इत्यर्थः ।

अथ चतुःश्लोकीं व्याचष्टे परमार्थ इति कृत्स्नस्य ब्रह्मपर्यन्तत्वेन तच्छरीरत्वात् कृत्स्नशरीरं ब्रह्मैव परमार्थः; अतत्पर्यन्तो मिथ्येत्यर्थः । जगतः पते इत्याकाशव्यावृत्तिः येन व्याप्तमिति नृपव्यावृत्तिः । अनेन जगतः शरीरलक्षणं दर्शितं भवति । नियाम्यत्वधार्यत्वशेषत्वेष्वन्यतमं व्याप्यत्वसहचरं हि शरीरलक्षणद्योतकम् । जगच्छरीरक! त्वदन्यो मिथ्येत्युक्ते अतत्पर्यन्तस्वतन्त्रवस्त्वन्तरस्यैव मिथ्यात्वं स्यात्; न तु जगतस्तच्छरीरभूतस्य । यथा हे भूपते! त्वदन्यो नास्तीत्युक्ते, न भूर्मिथ्या भवति; तत्तुल्यराजान्तरस्यैव तु मिथ्यात्वम्—तद्वत् । यद्वा एकशब्दः प्राधान्यपरः । "एकादाकिनिच्चासहाये" इत्यत्रासहायपदव्यवच्छेद्यं हि [2]प्राधान्यम् । ब्रह्मणश्च प्राधान्यं जगत्प्रति विशेष्यत्वरूपम् । तदानीं नान्योऽस्तीति प्रधानभूतोऽन्यो निषिध्यते; न त्वप्रधानमर्थान्तरम् । उक्तार्थस्योपपादकं व्याप्यत्वप्रतिपादकमुत्तरार्द्धमित्याह तदेवेति । तत्र फलितमर्थमाह येनेति । येन—यस्मादित्यर्थः । त्वदन्यः—अत्वदात्मकः । त्वया आत्मतया व्याप्तत्वात् सर्वं त्वदात्मकं त्वच्छरीरमिति त्वदन्यः—अत्वदात्मको नास्ति । तस्मात् सर्वशरीरस्त्वमेव परमार्थ इत्यर्थः । तवैष महिमेति श्लोकार्धैकदेशश्लोकार्थोपपादकं

---

1 इतिवदिति । ब्रह्मतादात्म्यमित्यत्रैकदेशतच्छब्देन ब्रह्मग्रहणवत् अत्र वस्तु (भाव) शब्देन ब्रह्मग्रहणमित्यर्थः । 2 ननु 'एकादाकिनिच्चासहाये' इति सूत्रे असहायरूपार्थे एकशब्दात् आकिनिच् कन् वा भवति । तस्य लुक् च । तेन एकाकी, एककः, एक इति रूपत्रयमिति कथनात् एकशब्दस्य संख्येव असहायत्वमप्यर्थः प्रतीयते; प्राधान्यरूपार्थे किं मानमित्यत्राह एकादिति । असहाये इति पदं नसंख्यान्यवच्छेदाय; एकाकिनाविति द्विबहुवचनप्रयोगबलादेव तदर्थकत्वाभावसिद्धेः । अतः प्रधान्याद्यर्थवारणार्थमेव तदिति, सिद्धः तेनैव सूत्रेण प्रधानादिरूपोऽर्थोपीति भावः ।

अत इदमुच्यते—तवैष महिमा या सर्वव्याप्तिरिति । अन्यथा तवैषा भ्रान्तिरिति वक्तव्यम्; जगतः पते त्वमित्यादीनां पदानां लक्षणा च स्यात् । लीलया महीमुद्धरतो भगवतो महावराहस्य स्तुतिप्रकरणविरोधश्च ।

यतः कृत्स्नं जगत् ज्ञानात्मना त्वयाऽऽत्मतया व्याप्तत्वेन तव मूर्तम्, तस्मात् त्वदात्मकत्वानुभवसाधनयोगविरहिण एतत् केवलदेवमनुष्यादिरूपमिति भ्रान्तिज्ञानेन पश्यन्तीत्याह 'यदेतद्दृश्यते' इति ।

न केवलं वस्तुतस्त्वदात्मकं जगत् देवमनुष्याद्यात्मकमिति दर्शनमेव भ्रमः; ज्ञानाकाराणामात्मनां देवमनुष्याद्यर्थाकारत्वदर्शनमपि भ्रम इत्याह 'ज्ञानस्वरूपमखिलम्' इति ।

ये पुनर्बुद्धिमन्तो ज्ञानस्वरूपात्मविदः सर्वस्य भगवदात्मकत्वानुभवसाधनयोगयोग्यपरिशुद्धमनसश्च, ते देवमनुष्यादिप्रकृतिपरिणामविशेषशरीररूपमिदमखिलं जगत् शरीरातिरिक्तज्ञानस्वरूपात्मकं त्वच्छरीरञ्च पश्यन्ती-

---

इत्याह अत इति । [1]महिम्नो व्याप्तिरूपत्वात्, या सर्वव्याप्तिरित्युक्तम् । न तु व्याप्तौ तात्पर्यात् । व्याप्तेर्महिमत्व एव तात्पर्यम् । यद्वा व्याप्तेरुक्तार्थोपपादकत्वं महिमसमभिव्याहारादित्याह अत इदमुच्यत इति । तस्य परप्रातिकूल्यं दर्शयति अन्यथेति । व्याप्यव्याप्त्यादेर्मिथ्यात्वे, 'सर्वव्याप्तिस्तव महिमा' इति न वाच्यम्, अपि तु भ्रान्तिरिति वक्तव्यमित्यर्थः । कृत्स्नापारमार्थ्यपरत्वे दूषणान्तरद्वयमाह—जगतः पत इति । लक्षणा—अधिष्ठानलक्षणा ।

अब्रह्मात्मकत्वेन स्वतन्त्रतायाः प्रत्यक्षसिद्धत्वात् तद्विरुद्धं ब्रह्मपर्यन्तत्वं न शास्त्रं प्रतिपादयति, "आदित्यो यूपः" इतिवदिति शङ्कायाम्, अन्यथासिद्धाया अपरोक्षरूपाया[2] अपि स्वतन्त्र्यप्रतिपत्तेः परोक्षरूपाप्यनन्यथासिद्धा पारतन्त्र्यप्रतिपत्तिर्बलीयसीत्यभिप्रायेण द्वितीयश्लोकमवतारयति यत इति । पारतन्त्र्यप्रतिपत्तिः परमात्मप्रतिपत्तिसापेक्षा, तदभावात् तत्प्रतिपत्त्यभाव इत्यन्यथासिद्धा स्वातन्त्र्यप्रतिपत्तिरित्यर्थः । केवलदेवमनुष्यादिरूपमिति । परमात्मशरीरत्वरहितजगद्रूपमात्रमित्यर्थः । अयमर्थः—यथा देहात्मभ्रमोऽपरोक्षोऽपि परोक्षशास्त्रज्ञानेन बाध्यते, तथा स्वातन्त्र्यभ्रमोऽपीति ।

देहातिरिक्तं स्वात्मानमप्यजानतः परमात्मपारतन्त्र्याप्रतिपत्तिः किम्पुनर्न्यायसिद्धेति च दर्शयितुं तृतीयश्लोकारम्भः । तं व्याचष्टे न केवलमिति । चिदाचिदात्मके जगति चेतनरूपं जगद्विवक्षितं ज्ञानस्वरूपमखिलं जगदिति जगच्छब्देन; यथा, "त्रिभिर्गुणमयैर्भावैरेभिः सर्वमिदं जगत् । मोहितं नाभिजानाति मामेभ्यः परमव्ययम्" इति । अत्र ज्ञानस्वरूपस्य जडरूपार्थस्वरूपत्वबुद्धिर्भ्रम इत्युक्ते अर्थस्वरूपस्यार्थस्वरूपत्वबुद्धिर्न भ्रमः स्यादिति च सिद्धम् । देहात्मभ्रमश्च संसर्गकृतः, जलमुष्णमितिवत् । आत्मासाधारणधर्मज्ञानस्फुरणेऽपि तस्यासाधारणत्वाज्ञानात् भ्रमोपपत्तिः ।

चतुर्थं व्याचष्टे ये पुनरिति । विज्ञानञ्चाविज्ञानं चेति विज्ञानशब्दस्यात्मवाचित्वात् ज्ञानस्वरूपात्मविद इत्युक्तम् । अबुद्धय इति पूर्वश्लोकोक्तार्थप्रतियोगित्वेन ज्ञानविद इत्युक्तमिति स्मारयति बुद्धिमन्त इति अयोगिन इत्यस्य प्रतियोगित्वेन शुद्धचेतस इत्युक्तमिति सूचयति योगयोग्यपरिशुद्धमनस इति । योगयोग्यत्वे

---

1 पूर्वार्धार्थोपपादकत्वमुत्तरार्धोक्तमहिम्न एव । व्याप्तिकथनं विवरणमात्रम् । सर्वाध्यासाधिष्ठानत्वार्थेऽपि व्याप्तिकथनसंभवात् तस्यां अमुख्यत्वादिति प्रथमपक्षः । महिमशब्दविशदीकृतव्याप्तिरूपार्थविशेष एव पूर्वार्धार्थोपपादक इति द्वितीयः पक्षः । श्लोकभाष्ययोरर्थो भाष्यार्थदर्पणे ।

2 अपिशब्देन स्वातन्त्र्योहमात्रम्; न तु तदापरोक्ष्यमिति ज्ञाप्यते ।

त्याह 'ये तु ज्ञानविदः' इति। अन्यथा श्लोकानां पौनरुक्त्यम्, पदानां लक्षणा, अर्थविरोधः प्रकरणविरोधः, शास्त्रतात्पर्यविरोधश्च ॥

'तस्यात्मपरदेहेषु सतोऽप्येकमयम्' इत्यत्र, सर्वेष्वात्मसु ज्ञानैकाकारतया समानेषु सत्सु—

---

हेतुः परिशुद्धत्वम्। मनसा तु विशुद्धेन हि भगवत्साक्षात्काररूपोपासननिष्पत्तिः श्रूयते। मनोविशुद्धिश्च कर्मयोगेन। योगेन योग्यता परिशुद्धिरिति वाऽर्थः। पूर्वश्लोके अखिलजगच्छब्देन चेतनरूपं जगत् विवक्षितम्; अस्मिन् श्लोके अखिलजगच्छब्देन अचिद्रूपं जगत् विवक्षितम्। कृत्स्नापारमार्थ्यं विवक्षितमिति पक्षे प्रथमश्लोकसङ्क्षिप्तदूषणमनुक्तदूषणेन सह विस्तरेण सर्वश्लोकसाधारणमाह अन्यथेति। स्वान्त्यभ्रमो देहात्मभ्रमश्चेति विभागाभावे पौनरुक्त्यमित्यर्थः। लक्षणा—परमेश्वर, जगतः पते, तव, महिमा, त्वमित्यादिशब्दानां लक्षणा। त्वंशब्दो हि स्वाभिमुखाऽहमर्थान्तरवाची। अतस्तस्य लाक्षणिकत्वम्। अर्थविरोधः—प्रत्यक्षादिभिरबाध्यत्वेन सिध्यतोऽसत्यत्वे प्रमाणविरोधः; तिरोधानानुपपत्त्यादिस्तर्कविरोधः, उभयलिङ्गत्वविरोधश्च। प्रकरणविरोधः—स्तुतिविरोधः "रोमान्तरस्था मुनयः स्तुवन्ति" इति हि प्रकृतम्। स्तोतॄणामद्वैतज्ञानवत्त्वे स्तुत्यनुपपत्तिः; तदभावे च नितराम्। शास्त्रतात्पर्यविरोधः—उपक्रमोपसंहारावान्तरप्रकरणोपक्रमोपसंहारादिविरोधः ॥

अथादिभरतचतुःश्लोकीं परस्परव्यवहितां व्याचष्टे तस्येत्यादिना। ब्रह्माद्वैतं जीवाद्वैतञ्चेत्यद्वैतं द्विविधं शास्त्रप्रतिपाद्यम्। तत्र ब्रह्माद्वैतं प्रकार्यद्वैतम्। जीवाद्वैतं [1]प्रकाराद्वैतम् ॥ कोऽत्र नियामक इति चेत्—उच्यते। ब्रह्मप्रकरणेषु सामानाधिकरण्येन ब्रह्माद्वैतप्रतिपादनात् सामानाधिकरण्यस्य च प्रकारभेदविशिष्टप्रकार्येकत्वपरत्वात्, "एकः सन् बहुधा विचार" इति प्रकारबहुत्वस्य कण्ठोक्तत्वात्, ऐक्यविधिशेषस्य, 'नेह नानास्ति' इत्यादिभेदनिषेधस्य विहितैक्यविरोधिभेदविषयत्वात्, सामान्यनिषेधस्य च विहितव्यतिरिक्तविषयत्वेन प्रकारिबहुत्वनिषेधपरत्वात्, "न तत्समश्चाभ्यधिकश्च दृश्यते" इति ब्रह्मतुल्यप्रकार्यन्तरनिषेधकण्ठोक्त्या च प्रकार्यद्वैतमेव ब्रह्माद्वैतम्। जीवात्मबहुत्वस्य श्रुतिसिद्धत्वात् अन्यथा बद्धमुक्तव्यवस्थानुपपत्तेः उपदेशानुपपत्तेः सुखादिव्यवस्थानुपपत्तेः "पुमान्न देवो न नरो न पशुर्न च पादपः", "चतुर्विधोऽपि भेदोऽयं मिथ्याज्ञाननिबन्धनः। देवादिभेदेऽपध्वस्ते" इत्यादिभिर्भेदविशेषनिषेधस्य कण्ठोक्तत्वात् मुक्तानां साम्यवचनात्, "अहं त्वं च तथाऽन्ये च", 'तत्र त्वमहमप्यत्र', 'तन्मनः समतालम्बि' इत्यादिप्राकरणिकवचनानुरोधात् एको व्रीहिरितिवत् एकशब्दस्यैकजातीयपरत्वोपपत्तेः वक्ष्यमाणश्लोकस्य शब्दस्वभावाच्च जीवाद्वैतं प्रकाराद्वैतमेव ॥ "नित्यो नित्यानां चेतनश्चेतनानामेको बहूनां यो विदधाति कामान्" इत्यस्य वाक्यस्य कामविधानपरत्वान्न नित्यत्वबहुत्वयोस्तात्पर्यमस्ति; अस्ति चेत् वाक्यभेदप्रसङ्गादिति चेत्—न; "यदाग्नेयोऽष्टाकपालः" इत्यत्र अष्टाकपालत्वविशिष्टाग्नेयपुरोडाश[यागः]विधिवत् विशिष्टविधिपरत्वाद्वाक्यस्य, नित्यबहुचेतनविशिष्टकामप्रदानविधिपरं हीदं प्रतीयते। अनित्यानामल्पानां कामप्रदानादपि नित्यानां बहूनां कामप्रदाने कथिते हि कामप्रदानस्यातिशयो भवति ॥ जीवबहुत्वस्य लोकसिद्धत्वान्न तत्र शास्त्रस्य तात्पर्यम्; अप्राप्ते हि शास्त्रमर्थवदिति चेन्न—संसृष्टस्य हि बहुत्वप्रतीतिर्लोकसिद्धा। परिशुद्धात्मस्वरूपबहुत्वस्य लोकसिद्धत्वाभावात् तत्र हि शास्त्रतात्पर्यं

---

1 प्रकार्यद्वैतम् प्रकारिणः ऐक्यम्। प्रकाराद्वैतम्—प्रकारेणाद्वैतम् ऐक्यम्—एकप्रकारकत्वमिति यावत्।

देवमनुष्यादिप्रकृतिपरिणामविशेषरूपपिण्डसंसर्गकृतमात्मसु देवाद्याकारेण द्वैतदर्शनमतथ्यमित्युच्यते । पिण्डगतमात्मगतमपि द्वैतं न प्रतिषिध्यते । देवमनुष्यादिविविधविचित्रपिण्डेषु वर्तमानं सर्वमात्मवस्तु सममित्यर्थः ; —यथोक्तं भगवता, "शुनि चैव श्वपाके च पण्डिताः समदर्शिनः", "निर्दोषं हि समं ब्रह्म" इत्यादिषु । —'तस्यात्मपरदेहेषु सतोऽपि' इति देहातिरिक्ते वस्तुनि स्वपरविभागस्योक्तत्वात् ।....'यद्यन्यो-

---

संभवति । औपाधिकाकारस्यानित्यत्वात् निष्कृष्टस्वरूपस्य नित्यत्वात् नित्यत्वसमानाधिकरणबहुत्वेऽभिहिते परिशुद्धात्मस्वरूपबहुत्वं ह्युक्तं भवति । उपदेशोऽपि न संभवति । गुरुर्भ्रान्तश्चेत्—नोपदेशः ।अभ्रान्तश्चेत्—द्वैतप्रतीत्यभावान्नतराम् । द्वैतप्रतीतावपि दर्पणस्थं स्वात्मनः प्रतिबिम्बं प्रति विवक्षितस्य नोपदेशः संभवतीति । सुखदुःखादिव्यवस्थया चात्मभेदसिद्धिः ॥ ननु सुखदुःखव्यवस्था नाम किं सुखदुःखव्यक्तिबहुत्वम्, उत तदाश्रयबहुत्वम् । एकस्यैवानेकसुखदुःखव्यक्तिदर्शनात् सुखादिस्वरूपबहुत्वं नात्मैक्यविरोधीति न व्यवस्था । आश्रयभेदश्चेत्, साध्याविशिष्टो हेतुरिति चेत्—न ;—त्वदुक्तोभयप्रकारविलक्षणत्वाद्व्यवस्थायाः । संप्रतिपन्नैकाश्रयेषु सुखदुःखादिषु प्रतिसंधानं दृष्टम् ; प्रतिबन्धकाभावे सति एकाश्रयत्वेन सुखदुःखप्रतिसन्धानाभावो व्यवस्थेति परिहारः । एकमयमित्यत्र मयट् स्वार्थिकः । यद्वा एकशब्दो भावप्रधानः, ऐक्यम् ; तत्प्रचुरमेकमयम् । शुद्धावस्थात्मनो ह्यैक्यप्राचुर्यम् ; न तु संसृष्टस्य; तस्य बुद्धिसुखदुःखाद्यवान्तरभेदेन देवत्वादिबाह्यभेदेन चैक्यप्राचुर्याभावात् । एकशब्दः समानवाची; "एको व्रीहिः सुनिष्पन्नः सुपुष्टं(ष्टाः) कुरुते प्रजाः" इत्यादिषु तथा प्रयोगदर्शनात् । देवमनुष्यादिप्रकृतिपरिणामविशेषरूपेत्यनेन 'दुःखाज्ञानमला धर्माः प्रकृतेस्ते न चात्मनः', 'पुमान्न देवो न नरो न पशुर्न च पादपः । शरीराकृतिभेदास्तु भूपैते कर्मयोनयः' इति वचनयोरैकार्थ्यं दर्शितम् । "पिण्डः पृथक् यतः पुंसः शिरःपाण्यादिलक्षणः" इति प्राकरणिकवचनं स्मारयति पिण्डशब्दः ॥ एकमयमित्यात्मन्येकत्वं विधाय भेदे निषिध्यमाने आत्मस्वरूपभेद एव निषेध्यः स्यादिति चेत्—स्यादेवम्, यदि विधीयमानमेकत्वं व्यक्त्यैक्यं स्यात् । तत्तु प्रकारैक्यम् । अतो भेदनिषेधो वैजात्यनिषेध एवेति भावः ॥ 'द्वैतिनोऽतथ्यदर्शिनः' इति सामान्येनोक्ते कथं देवादिद्वैतनिषेध इत्युच्यत इति चेत्—कथं सामान्येन द्वैतनिषेधे प्रतीते आत्मद्वैतनिषेध इत्युच्यते ; न पिण्डात्मनोर्भेदनिषेधः ॥ पिण्डात्मनोर्भेदस्य प्रामाणिकत्वादिति चेत्—आत्मभेदस्यापि प्रामाणिकत्वान्न तद्भेदनिषेधः; अपितु देवादिभेदनिषेध इति भावः । आत्मगतद्वैतमप्रतिषिद्धं चेत्—"आत्मा शुद्धोऽक्षरः शान्तः', 'विज्ञानं यज्ञं तनुते' इत्येकवचनं नोपपद्यते ; जातावेकवचनं चेत्—देहशब्देऽप्येकवचनं स्यादिति शङ्का च देवमनुष्यादिपदेन परिहृता । देवादिष्ववान्तरभेदविवक्षया विविधशब्दः । तत्राप्यनेकविधत्वविवक्षया विचित्रशब्दः । आत्मसु जात्येकत्वादेकवचनम्, पिण्डेष्ववान्तरजातिबहुत्वाद्बहुवचनमित्यभिप्रायः । साम्ये प्रमाणमाह यथोक्तमिति । बहुत्वस्य विहितत्वात् साम्यप्रतिपादनाच्चाऽऽत्मव्यक्तिभेदनिषेधोऽनुपपन्न इत्यर्थः । हेत्वन्तरं चाह तस्येति । अन्यथाऽर्थश्चेत्, एतच्छ्लोकस्थपदानां व्याघातः स्यादित्यर्थः । उक्तत्वादिति । सममित्यर्थ इत्यन्वयः ।

एकवचनोक्तौ हि जातावेकवचनमिति निर्वाहः; अन्यनिषेधपरस्य वचनस्यान्यथानिर्वाहायोगादात्मैकत्वसिद्धिरिति शङ्कायां यद्यन्योऽस्तीत्यादि(देः)श्लोकस्यार्थमाह यदीति । एकस्मिन्नर्थे

ऽस्ति' परः कोऽपि' इत्यत्रापि नात्मैक्यं प्रतीयते; 'यदि मत्तः परः कोऽप्यन्यः' इति एकस्मिन्नर्थे परशब्दान्यशब्दयोः प्रयोगायोगात्। तत्र परशब्दः स्वव्यतिरिक्तात्मवचनः, अन्यशब्दस्तस्यापि ज्ञानैकाकारत्वादन्याकारत्वप्रतिषेधार्थः। एतदुक्तं भवति—यदि मद्व्यतिरिक्तः कोऽप्यात्मा मदाकारभूतज्ञानाकाराद-न्याकारोऽस्ति—तदा, 'अहमेवमाकारः, अयञ्चान्यादृशाकारः' इति शक्यते व्यपदेष्टुम्। न चैवमस्ति; सर्वेषां ज्ञानैकाकारत्वेन समानत्वादेवेति।

वेणुरन्ध्रविभेदेन इत्यत्रापि—आकारवैषम्यमात्मनां न स्वरूपकृतम्, अपि तु देवादिपिण्डप्रवेशकृतमि-त्युपदिश्यते; नात्मैक्यम्। दृष्टान्ते चानेकरन्ध्रवर्तिनां वाय्वंशानां न स्वरूपैक्यम्; अपि त्वाकारसाम्यमेव। तेषां वायुत्वेनैकाकाराणां रन्ध्रभेदनिष्क्रमणकृतो हि षड्जादिसञ्ज्ञाभेदः; एवमात्मनां देवादिसंज्ञाभेदः।

---

द्वौ द्वौ शब्दौ प्रयुक्तौ स्थानत्रये; तेषामन्यतरशब्दस्याकारपरत्वान्नात्मभेदनिषेध इति परिह्रियते। तत्र द्वयोः शब्दयोः कोऽर्थ इत्यत्राह तत्रेति। परशब्देन धर्मिणमनूद्य तस्य शब्दान्तरोपस्थापिताकारान्तरान्वयो निषिध्यत इत्यर्थः॥ एषोऽहम् अयञ्चान्य इति वक्तुमशक्यत्वं कथम्, प्रत्यक्त्वपराक्त्वे भेदकधर्मौ हि विद्येते इति चेत्—नैवम्; प्रत्यक्त्वपराक्त्वयोः स्वपरापेक्षया सर्वात्मनां(न।) साधारणतया व्यावर्तकत्वाभावात्। पूर्वं देवादिष्वन्यतमोऽयमित्यभिप्रायेण तद्विशेषबुभुत्सया हि सौवीरराजेन आदिभरतः पृष्टः॥ अतो देवाद्या-कारनिषेधपरा इमे शब्दा इति भावः। एवं पदार्थे सति श्लोकेन किमुक्तं भवतीति शङ्कायां वाक्यार्थं योजयति एतदुक्तमिति। एष इति शब्दस्यार्थमाह एवमाकार इति। अन्यशब्दार्थमाह अन्यादृशाकार इति। आकारैक्यं नाम आकाराणां सौसादृश्यमित्यभिप्रायेण एवमाकारः अन्यादृशाकार इत्युक्तम्। अन्यथा स्वरूपमात्रप्रतिपत्तिरेकेनैव पदेन सिद्धेति पदान्तरवैयर्थ्यप्रसङ्गात् पदान्तरमाकारपरमित्यर्थः। अस्यार्थस्य विपर्यये पर्यवसानमुत्तरश्लोकोक्तम्। सोऽनुदाहृतः। तदर्थमाह न चैवमिति। अयं हि स श्लोकः, "यदा समस्तभूतेषु पुमानेको व्यवस्थितः। तदा हि को भवान् सोऽहमित्येतत् विफलं वचः" इति। अत्रैकशब्द आकारैक्यपरः। स्वयम्प्रकाशत्वनित्यत्वाणुत्वादिः सर्वात्मसाधारणः। व्यावर्तकदेवाद्याकारस्तु नात्मन्यस्ति। व्यावर्तकाभावात् तद्वाचिशब्देन निर्देशोऽनुपपन्नः। प्रत्यक्त्वपराक्त्वपरोक्षत्वापरोक्षत्वादीनि न व्यावर्तकानीति को भवानिति प्रश्नस्तदतिरिक्ताकाराभिप्रायः। न हि, भवानिति[1] प्रश्नः। भवच्छब्दो धर्मिमात्रपरः। किंशब्दो व्यावर्तकदेवाद्याकारपरः। तस्मात् तदतिरिक्ताकाराभावेन न तद्वाचिशब्देन निर्देश उपपद्यत इत्यर्थः। ज्ञानैकाकारत्वेन समानत्वादेवेति।

पूर्वोक्तादेवेति भावः। उक्तनिर्वाहागोचरदृष्टान्तमुखेनाद्वैतपरत्वेन परोक्तस्य श्लोकस्यार्थमाह वेणुरन्ध्रेति। स्वत एकाकाराणामुपाधिवशादवान्तरभेदसद्भावमात्रे दृष्टान्तोपन्यासः। अन्यथा सर्वथा साधर्म्याभ्युपगमे हि आत्मनोऽचिरत्वाकाशकार्यत्वादिकमपि स्यात्। तद्धि प्रमाणान्तरविरोधात् त्यज्यते; तथा दृष्टान्तगतमाकारान्तरमपीति भावः। तथाऽसौ परमात्मन इत्युक्ते षड्जादि-सञ्ज्ञाभेदो मा भूदित्यभिप्रायेणाह[2] एवमात्मनां देवादिसञ्ज्ञाभेद इदि। भेदष्षड्जादिसञ्ज्ञित इति पाठे

---

1 नहीति। धर्मिमात्रप्रश्नो न संभवतीत्यर्थः।

2 तथा इत्युक्तत्वात् आत्मनोपि षड्जादिसंज्ञाभेद इष्ट इति न मन्तव्यमित्याशयेनान्यसंज्ञाभेदमाहेत्यर्थः।

[यथा] तैजसाप्यपार्थिवद्रव्यांशभूतानां पदार्थानां तत्तद्द्रव्यत्वेनैक्यमेव; न स्वरूपैक्यम् । तथा वायवीयानामंशानामपि स्वरूपभेदोऽवर्जनीयः ।

'सोऽहं स च त्वम्' इति सर्वात्मनां पूर्वोक्तं ज्ञानाकारत्वं(रं) तच्छब्देन परामृश्य तत्सामानाधिकरण्येन अहंत्वमित्यादीनामर्थानां ज्ञानमेवाऽऽकार इत्युपसंहरन् देवाद्याकारभेदेनात्मसु भेदमोहं परित्यजेत्याह ।

---

सत्यपि षड्जादिसञ्ज्ञाभेद[1] इति व्याख्यातम्, दुरवगमषड्जादिरूपभेदप्रतिपत्तिसौकर्यस्य सञ्ज्ञाभेदाधीनत्वादिति[1] भावः(?) दार्ष्टान्तिकेऽपि तथैव । दृष्टान्ते व्यक्तिबहुत्वं किमस्तीति शङ्कायां वाय्वंशानामनेकत्वं तर्केण साधयति तैजसेति । स्पर्शवद्द्रव्यत्वादिति भावः । यत्र त्वाकाशदृष्टान्त उक्तः, तत्राप्येकस्यात्मनो दृष्टान्तत्वेनाकाशमुक्त्वा[2] आत्मान्तरे तथात्वमिति मन्तव्यम्—'सितनीलादिभेदेन यथैकं दृश्यते नभः । भ्रान्तदृष्टिभिरात्मापि तथैकस्सन् पृथक् पृथक्" इति । नभसः सितनीलादिभेदः शरत्प्रावृट्सन्ध्यासमयेषु मेघोपश्लिष्टस्य तस्य यथा क्रमभावी—तथैकस्यात्मनोऽपि देवादिभेदः क्रमभावीति । यद्वा तत्रापि प्रदेशभेदाङ्गीकारेण सर्वात्मनां दृष्टान्तः स्यात्. आकाशस्य प्रदेशभेदानभ्युपगमे घटादेर्विभुत्वमाकाशस्याल्पत्वं वा प्रसजेत् । किं घटादेः कृत्स्नाकाशेन सम्बन्धः, उत प्रदेशभेदेन? पूर्वस्मिन् पक्षे घटादेर्विभुत्वमाकाशस्याल्पपरिमाणत्वं वा । द्वितीये प्रदेशभेदाङ्गीकार इति । वेदान्तिभिर्नभसो निरवयवत्ववादोऽपसिद्धान्त ; वेदान्तेषु तस्यांशभेदेन पञ्चीकरणोपदेशात्; एकांशेन वायुत्वेन परिणामवादात्; उत्पत्तिलयदर्शनाच्चेति । अत एव, "घटध्वंसे घटाकाशो न भिन्नो नभसो यथा । ब्रह्मणा हेयविध्वंसे विष्ण्वाख्येन तथा पुमान्" इति शौनकवचनमपि, नभस्यंशभेदाभिप्रायेण जीवस्य परस्मादात्मन औपाधिकवैषम्यविरहे दृष्टान्तसमर्पणपरं वेदितव्यम्; 'यथाऽग्निरग्नौ संक्षिप्तः समानत्वमनुव्रजेत्' इति तत्रैव साम्यदृष्टान्ताभिधानात् ।

अथाऽऽदिभरतनिगमनश्लोकमाह सोऽहमिति । पूर्वोक्तम्—अध्यायचतुष्टयोक्तम् । स इति पदस्य ज्ञानाकारविशिष्टवस्तुवाचित्वेऽपि विशेषणांशे तात्पर्यं दर्शयितुं सर्वात्मनां ज्ञानाकार(त्व)मिति विशेषणांशस्य निष्कृष्य निर्देशः । अन्यथा तत्सामानाधिकरण्येनेत्यनन्तरोक्तिविरोधात् । ज्ञानमेवाकार इत्युपसंहरन्निति । सोऽहमित्यादिश्लोकानन्तरपूर्वश्लोके, "एकः(कं) समस्तं यदिहास्ति किञ्चित् तदच्युतो नास्ति परं ततोऽन्यत्" इत्यर्धेन सर्वात्मनां भगवच्छरीरत्वस्योक्तत्वात् सोऽहमित्यादिश्लोकस्य भगवदात्मकत्वनिगमनपरत्वशङ्का स्यात् । तच्चायुक्तम्; प्रकरणस्य शरीरात्मविवेकपरत्वात् । तन्निगमनस्य चापेक्षितत्वात् तन्निगमनपरश्लोकान्तराभावादपेक्षितविधेरनपेक्षितविधानायोगाच्च आत्मनां देहव्यावर्तकैकाकारत्वनिगमनपरोऽयं श्लोक इत्यभिप्रायः । त्यज भेदमोहमित्यंशस्यार्थमाह देवाद्याकारभेदेनात्मसु भेदमोहं परित्यजेति । देवादिशब्दो भेदशब्दविवरणरूपः । देहगतदेवत्वाद्याकारभेद आत्मनि भेदमोहहेतुः ; तं भेदमोहं परित्यजेत्यर्थः । कृत्स्नभेदनिषेध-

---

1 पुराणे भेदशब्देनार्थभेदस्यैवोक्तत्वात् भाष्ये संज्ञाभेद इति कथमुच्यत इत्याशंक्य परिहरति भेद इति । तथा च संज्ञाभेद इत्यस्य संज्ञानामपर्यायत्वमित्यर्थ इति भावः । टीकायाम् 'इति भाव' इति पदद्वयं व्यर्थम् । किञ्चित्पाठभ्रंशो वा । ननु षड्जादिपदस्य कथं वायुवाचित्वम्—न; तदुत्पन्नशब्दवाचित्व एव तात्पर्यात् ।

2 उक्त्वेति । एकैकस्मिन्नप्यात्मनि पृथक् आकाशवत् नानात्वमुपपादनीयमित्यर्थः ; तदाह सितेत्यादिना ।

**अन्यथा देहातिरिक्तात्मोपदेश्यस्वरूपे अहं त्वं सर्वमेतदात्मस्वरूपमिति भेदनिर्देशो न घटते । अहंत्वमादिशब्दानामुपलक्ष्येण सर्वमेतदात्मस्वरूपमित्यनेन सामानाधिकरण्यादुपलक्षणत्वमपि न सङ्गच्छते । सोऽपि यथोपदेशमकरोदित्याह, 'तत्याज भेदं परमार्थदृष्टिः' इति । कुतश्चैष निर्णय इति चेत्— देहात्मविवेकविषयत्वादुपदेशस्य । तच्च "पिण्डः पृथग् यतः पुंसः शिरःपाण्यादिलक्षणः" इति प्रक्रमात् । विभेद-**

---

परत्वेऽनिष्टमाह अन्यथेति । न च अहंत्वमादिशब्दाः देहपराः । न हि तच्छब्देनात्मानं परामृश्य तेनाऽऽत्मना देहानामैक्यमुपदिश्यते । नाप्यन्तःकरणपराः । न ह्यन्तःकरणानां परमात्मनैक्यं परस्परैक्यं वोपदिश्यते । नापि देहविशिष्टान्तःकरणपराः । न हि देहविशिष्टानामन्तःकरणानामैक्यमुपदिश्यते (पद्यते ?) । अतोऽहंत्वमादिशब्दाः देहातिरिक्तात्मपरा इत्यभिप्रायेण देहातिरिक्तेत्युक्तम् । अहंत्वमित्यादिपदानामुपलक्षणत्वादुपलक्ष्ये वस्तुनि न भेद इत्याशङ्क्य परिहरति अहमिति । अहंत्वमादीति आदिशब्देन सर्वशब्दो विवक्षितः । उपलक्ष्येणेत्यौपचारिकनिर्देशः ; उपलक्ष्यवाचिपदेनेत्यर्थः । सर्वमेतदात्मस्वरूपमित्यनेनेति । अहं त्वं सर्वमिति त्रयाणामपि पदानामात्मस्वरूपशब्देन सामानाधिकरण्यं फलितम् ; तेष्वन्यतमेन अहंत्वमर्थसजातीयार्थवाचिना सर्वमेतदिति पदेन आत्मस्वरूपशब्दस्य सामानाधिकरण्यनिर्देशात् इति ज्ञापनार्थं सर्वमेतदात्मस्वरूपमित्युपादानं कृतं भाष्ये । श्लोके सर्वमेतदात्मस्वरूपमिति प्रदर्शनार्थमुक्तम् । अतोऽहंत्वमादिशब्दानामुपलक्ष्यवाचकाभिमतात्मस्वरूपशब्देन सामानाधिकरण्यादहंत्वमादिशब्दवाच्यानामर्थानामुपलक्षणत्वमसङ्गतम् । न हि, चन्द्रः शाखा, सारसः केदार इत्युपलक्षणोपलक्ष्यवाचिशब्दानां सामानाधिकरण्यं मुख्यतया दृष्टमित्यर्थः । लक्षणयाऽस्त्विति चेत्—लक्षणैव दोष इति भावः । यद्वा अनेनेति पदमुपलक्ष्यविशेषणम् । सर्वमेतदात्मस्वरूपमित्यात्मशब्दनिर्दिष्टेनानेनोपलक्ष्येणाहंत्वमादिशब्दानां सामानाधिकरण्यादुपलक्षणत्वमसङ्गतमित्यर्थः । अस्यां योजनायामहंत्वमादिसजातीयार्थवाचिसर्वपदसामानाधिकरण्यनिर्देशस्य हेतुत्वमर्थसिद्धम् । यदि अहंत्वमादिशब्दा उपलक्ष्यपर्यन्तवृत्तयः, तदानीमेवमर्थतया उपलक्ष्यवाचिना आत्मस्वरूपमिति पदेन स इति पृथक्सामानाधिकरण्यदर्शनादुपलक्षणवाचकाहंत्वमादिसामानाधिकरण्यवैयर्थ्यमिति । ∵ अहशब्दस्यापेक्षिकप्रत्यक्त्वं प्रवृत्तिनिमित्तम् ; त्वंशब्दस्य च चेतनत्वे सति अभिमुखत्वम् ; आत्मशब्दस्य च व्यापनक्षमत्वम् ; स इति पदस्य प्रकृतज्ञानाकारः ॥ ननु स च सर्वमेतदात्मस्वरूपमित्यत्र कथमात्मस्वरूपविशेषणस्य तच्छब्दस्य पुँल्लिङ्गत्वम् ॥ उच्यते । "आत्मा शुद्धोऽक्षरः शान्त(न्तो निर्गुणः प्रकृतेः परः ?)" इत्यादिषु [प्रकृति ?] परज्ञानमयत्वेन प्रकृत आत्मा हि तच्छब्देन परामृश्यते । अतो न विरोध इति । अचित्संसृष्टं देवादिरूपेण प्रतीयमानं सर्वमेतदात्मस्वरूपं ज्ञानैकाकारः स आत्मेत्यर्थः । चतुर्थपादं व्याचष्टे सोपीति । न जीवब्रह्माद्वैतपरमिदं प्रकरणम् ; न चात्मस्वरूपबहुत्वनिषेधपरम् ; प्रकारैक्यपरम्—इति कथं ज्ञायत इत्यभिप्रायेणाह कुतश्चेति । परिहरति देहात्मेति । तदपि कुत इत्यत्राह तच्चेति ।

देहात्मविवेकपरत्वोपपादनेन जीवपरैक्यपरत्वमात्मबहुत्वनिषेधपरत्वं च दत्तोत्तरमेव । अथ शास्त्रोपसंहारगतस्य विभेदजनक इत्यादिश्लोकस्यार्थं वक्ष्यन् अर्थान्तरपरत्वं व्युदस्यति विभेदेत्यादिना । प्रथमं किम् आत्मस्वरूपैक्यपरम उत जीवपरैक्यपरमिति विकल्प्य दूष्यते । अत्र चशब्दाभावादात्मब्रह्मशब्दयोः सामानाधिकरण्यं सम्भावितम् । तथासति ब्रह्मशब्दः शुद्धावस्थपरः स्यात् । एवं शुद्धावस्थ(स्थात्)जीवस्य

अनवकेऽज्ञाने' इति च नाऽऽत्मस्वरूपैक्यपरम्; नापि जीवपरयोः। आत्मस्वरूपैक्यमुक्तरीत्या निषिद्धम्। जीवपरयोरपि स्वरूपैक्यं देहात्मनोरिव न संभवति; तथा च श्रुतिः—"द्वा सुपर्णा सयुजा सखाया समानं वृक्षं परिषस्वजाते। तयोरन्यः पिप्पलं स्वाद्वत्त्यनश्नन्नन्यो अभिचाकशीति",

---

भेदो नास्तीति जीवस्वरूपैक्यमुक्तं स्यात्। अतः शङ्कास्पदीभूतमात्मैक्यपरत्वं दूषयति आत्मेति। उक्तरीत्या—श्रुतिस्मृत्यर्थापत्तिलौकिकार्थापत्त्यादिभिरित्यर्थः। द्वितीयं पक्षं दूषयति जीवेति। देहात्मनोरिवेति। विरुद्धधर्मत्वादित्यर्थः। प्रत्यक्त्वपराक्त्वाजडत्वजडत्वनित्यत्वपरिणामित्वादिभिर्विरुद्धधर्मैर्यथा देहात्मनोर्भेदः, तथा जीवपरयोरपि हेयार्हत्वोभयलिङ्गत्वनियाम्यत्वनियन्तृत्वादिविरुद्धधर्मैरैक्यं हि नोपपद्यते। विरुद्धधर्मत्वे प्रमाणमाह तथाचेति तथा—विरुद्धधर्मत्व इत्यर्थः। चो ह्यर्थः हेतुवाची। वक्ष्यमाणहेतूनां पञ्चमी प्रयुक्ता; तत्स्थानीयोऽयं चशब्दः। समानं वृक्षम्—शरीरम्। पिप्पलम्—कर्मफलम्। अभिचाकशीति—स्वयमनश्नत्वादाशयितृत्वाच्च भृशं भातीत्यर्थः॥

ननु कथमस्य मन्त्रस्य जीवपरमात्मभेदपरत्वम्? अन्तःकरणजीवपरो ह्ययं मन्त्रः, पैङ्गिरहस्यब्राह्मणेन अस्य मन्त्रस्य तथा व्याख्यातत्वात्। यथा—"तयोरन्यः पिप्पलं स्वाद्वत्तीति सत्त्वम्। अनश्नन्नन्यो अभिचकशीति अनश्नन्नन्योऽभिपश्यतीति [क्षेत्र]ज्ञः[1]। तावेतौ सत्त्वक्षेत्रज्ञौ" इति। स्वाद्वत्तीत्यन्तेन सत्त्वमुक्तम्. अभिचाकशीतीत्यन्तेन वाक्येन अनश्नन्नन्यो....ज्ञ इति क्षेत्रज्ञोऽभिपश्यतीत्युक्तमिति व्याख्यातत्वमवगम्यते। न च--सत्त्वशब्दो जीवपरः, क्षेत्रज्ञशब्दः परमात्मपरः--इति वाच्यम्; सत्त्वक्षेत्रज्ञशब्दयोरन्तःकरणजीवपरतया प्रसिद्धत्वात्, "तदेतत् सत्त्वं येन स्वप्नं पश्यति। अथ योऽयं शारीर उपद्रष्टा स क्षेत्रज्ञः। तावेतौ सत्त्वक्षेत्रज्ञौ" इति सत्त्वक्षेत्रज्ञशब्दयोरन्तःकरणजीवपरत्वेन तत्रैव व्याख्यातत्वाच्च। येन पश्यतीति करणत्वप्रतीतेः सत्त्वं ह्यन्तःकरणम्; स्वप्नद्रष्टृत्वादितरः क्षेत्रज्ञो हि जीवः। अतः द्वा सुपर्णा इति मन्त्रोऽयमन्तःकरणजीवपरः; न तु जीवपरमात्मपर इति॥

उच्यते। न तावत् जीवपरमात्मपरत्वमस्य मन्त्रस्यापवदितुं शक्यते। अनेन मन्त्रेण तुल्यार्थतया प्रत्यभिज्ञायमाने, 'समाने वृक्षे पुरुषो निमग्नः' इत्यनन्तरमन्त्रे जीवपरमात्मनोः प्रतिपन्नत्वात्; अस्य मन्त्रस्य तदैकार्थ्याच्च। 'समानं वृक्षं परिषस्वजाते', 'समाने वृक्षे पुरुषो निमग्नः' इति तयोरैकार्थ्यं हि प्रतीयते। समाने वृक्षे' इति मन्त्रे च पुरुषो जीवः। अन्तःकरणस्य पुरुषशब्दवाच्यत्वाभावात्। 'शोचति मुह्यमानः', 'पश्यति वीतशोकः' इति पदानामस्वारस्यप्रसङ्गाच्च। अन्यश्च परमात्मा; ईशशब्दवाच्यत्वात्; स्वविषयज्ञानेन वीतशोकत्वहेतुत्वाच्च। न केवलमुत्तरमन्त्रैकार्थ्यात् द्वासुपर्णेतिमन्त्रस्य जीवपरमात्मपरत्वम्; किन्तु तस्मिन्नेव, 'स्वाद्वत्ति', 'अनश्नन्नन्यः' इति भोक्तृत्वाभोक्तृत्वश्रवणाच्च तदवसीयते। चक्षुःश्रोत्रादीनां द्रष्टृत्वश्रोतृत्वादिवत् अन्तःकरणस्यापि करणत्वादेव भोक्तृत्वं न संभवति। जीवस्य च वृक्षशब्दोक्तदेहपरिष्वङ्गदशायामेव अनश्नत्वमपि नोपपद्यते॥ तर्हि पैङ्गिरहस्यब्राह्मणस्य कोऽर्थः॥ उच्यते। सत्त्वं बद्धजीवः; "द्रव्यासुव्यवसायेषु सत्त्वमस्त्री तु जन्तुषु" इति नैघण्टुकपाठात् जन्तुपरत्वावगतेः। जन्तुः—चेतनः; "प्राणी

**"ऋतं पिबन्तौ सुकृतस्य लोके गुहां प्रविष्टौ परमे परार्ध्ये । छायातपौ ब्रह्मविदो वदन्ति पञ्चाग्नयो ये च त्रिणाचिकेताः", "अन्तःप्रविष्टः शास्ता जनानां सर्वात्मा" इत्याद्या; अस्मिन्नपि शास्त्रे, "स सर्वभूतप्रकृतिं विकारान् गुणादिदोषांश्च मुने व्यतीतः । अतीतसर्वावरणोऽखिलात्मा तेनाऽऽस्तृतं यद् भुवनान्तराले ॥", 'समस्तकल्याणगुणात्मकोऽसौ...परः पराणां सकला न यत्र क्लेशादयः सन्ति परावरेशे", "अविद्या कर्मसंज्ञाऽन्या तृतीया शक्तिरिष्यते । यया क्षेत्रज्ञशक्तिः सा वेष्टिता नृप! सर्वगा" इति**

---

तु चेतनो जन्मी जन्तुजन्यशरीरिणः" इति पाठात् । "न तदस्ति पृथिव्यां वा दिवि देवेषु वा पुनः । सत्त्वं प्रकृतिजैर्मुक्तं यदेभिः स्यात् त्रिभिर्गुणैः" इति प्रयोगात्, "वन्यान् विनेष्यन्निव दुष्टसत्त्वान्" इत्यर्वाचीनप्रयोगाच्च । क्षेत्रज्ञशब्दश्चात्र परमात्मपरः, अर्थान्तरप्रसिद्धाकाशप्राणशब्दवत् अर्थानुपपत्त्या परमात्मपरत्वोपपत्तेः; "विष्णोर्नामसहस्रं मे' इत्युपक्रम्य—'क्षेत्रज्ञोऽक्षर एव च" इति प्रयोगात्; क्षेत्रं जानातीत्यवयवार्थस्य तस्मिन्नेव पुष्कलत्वाच्च । मोक्षधर्मे, "ततस्त्रैगुण्यहीनास्ते परमात्मानमञ्जसा । प्रविशन्ति द्विजश्रेष्ठ! क्षेत्रज्ञं निर्गुणात्मकम् ।", "सर्वावासं वासुदेवं क्षेत्रज्ञं विद्धि तत्त्वतः", "विश्वमूर्द्धा विश्वभुजो विश्वपादाक्षिनासिकः । एकश्चरति क्षेत्रेषु स्वैरचारी यथासुखम् ॥ क्षेत्राणि च शरीराणि बीजानि च शुभाशुभे । तानि वेत्ति स योगात्मा ततः क्षेत्रज्ञ उच्यते" इति प्रयोगात्; "योऽस्याऽऽत्मनः कारयिता तं क्षेत्रज्ञं प्रचक्षते । यः करोति च कर्माणि स भूतात्मेति चोच्यते" इति प्रयोगाच्च । येन स्वप्नं पश्यतीत्यत्र येनेतीत्थम्भावे तृतीया । येन विशिष्टः परमात्मा स्वप्नं पश्यतीत्युच्यते । ततश्च "काठिन्यवान् यो बिभर्ति" इति पृथिवीद्वारा काठिन्यवत् स्वप्नद्रष्टृत्वं जीवात्मद्वारा परमात्मविशेषणं भवतीति न विरोधः । शारीरशब्दश्च, 'तस्यैष एव शारीर आत्मा' इतिवत् स्वव्यतिरिक्तसमस्तचिदचिद्वस्तुशरीरके परमात्मन्युपपद्यते । उपद्रष्टेति निरुपाधिकद्रष्टृत्वं च सर्वज्ञस्य तस्यैवोपपद्यते । अतो द्वासुपर्णेति मन्त्रो जीवपरमात्मपरः ॥

ऋतं पिबन्ताविति । पानक्रियायां जीवपरयोः प्रयोज्यप्रयोजकभावेनान्वयः । पिबन्ताविति शतृप्रत्ययः कर्तृमात्रपरः; न तु कर्तृविशेषपरः । तेन प्रयोज्यप्रयोजकौ द्वावपि कर्तृविशेषाविति तावविशेषेण क्रोडीकृतौ भवतः । अन्यथा अनश्नन्नित्यादिविरोधः स्यात् । यद्वा छत्रिणो गच्छन्तीतिवदजहल्लक्षणा । सुकृतस्य ऋतम्—फलम् । यद्वा सुकृतस्य लोक इत्यन्वयः, तदा सुकृतम् ऋतम् । तत्फलमुच्यते लक्षणया, "एवं पुण्यस्य कर्मणो दूराद्गन्धो वाति" इत्यत्र "एवमनृतादात्मानं जुगुप्सेत्" इति पुण्यप्रतियोगित्वेन अनृतशब्दप्रयोगात् । गुहाम्—हृदयगुहाम् । परमे परार्ध्ये इति लोकविशेषणम् । जीवपरविशेषणं वा; छान्दसत्वात् लिङ्गव्यत्ययः । छायातपौ—अज्ञसर्वज्ञौ, "ज्ञाज्ञौ द्वावजावीशनीशौ" इत्यनेनैकार्थ्यात्—ब्रह्मविदः—अध्यात्मविदः । पञ्चाग्नयः त्रिणाचिकेताश्च कर्मविशेषनिष्ठाः । ते वदन्ति; यथा, "ये च वेदविदो विप्रा ये चाध्यात्मविदो जनाः । ते वदन्ति महात्मानं कृष्णं धर्मं सनातनम्" इति ।

ऋतं पिबन्तावित्येतद्विशदयत्याह अन्तःप्रविष्ट इति । इत्याद्या श्रुतिरित्यन्वयः । न केवलं श्रुतिस्वारस्यात्; अस्मिन्नपि प्रबन्धे दृश्यते इत्याह अस्मिन्नपीति । स सर्वभूतेत्यादिना हेयप्रत्यनीकत्वकल्याणगुणाकरत्वे कथिते । जीवस्य हेयास्पदत्वमविद्येत्यादिना उक्तम् । सर्वगेति भेदव्यपदेशादिति पूर्वेण सम्बन्धः ।

भेदव्यपदेशात् । "उभयेऽपि हि भेदेनैनमधीयते", "भेदव्यपदेशाच्चान्यः", "अधिकं तु भेदनिर्देशात्" इत्यादिसूत्रेषु च, "य आत्मनि तिष्ठन् आत्मनोऽन्तरो यमात्मा न वेद यस्यात्मा शरीरं य आत्मानमन्तरो यमयति", "प्राज्ञेनात्मना संपरिष्वक्तः", "प्राज्ञेनाऽऽत्मनाऽन्वारूढः" इत्यादिभिरुभयोरन्योन्यप्रत्यनीकाकारेण स्वरूपनिर्णयात् ॥

नापि साधनानुष्ठानेन निर्मुक्ताविद्यस्य परेण स्वरूपैक्यसंभवः, अविद्याश्रयत्वयोग्यस्य तदनर्हत्वासंभवात् । यथोक्तम्—

"परमात्मात्मनोर्योगः परमार्थ इतीष्यते । मिथ्यैतदन्यद्द्रव्यं हि नैति तद्द्रव्यतां यतः ॥" इति ।

---

न[1] तु सूत्रोपादानम्; उपर्यस्य सूत्रस्य विषयवाक्यानुपादानात्; उदाहृतपुराणवचनानां हेतुत्वकथनसापेक्षत्वाच्च । श्रुतिवाक्यस्य हेतुत्वं हि चशब्देनोक्तम् । उभयेऽपीत्याद्युपात्तसूत्रद्वयस्य विषयवाक्यं य आत्मनीति । अधिकं त्वित्यादिसूत्रस्य विषयवाक्यं प्राज्ञेनेति । सूत्रैरेभिः श्रुतिभिरेवमर्थनिर्णयादित्यर्थः ।

एवमुपनिषत्पुराणसूत्रैर्जीवपरयोर्विरुद्धधर्मत्वमुपपादितम् । अथ, ब्रह्म वेद ब्रह्मैव भवतीत्यादिवाक्यानि हृदि निधाय अस्यान्यथासिद्धिं शङ्कते नापीति । तत् दूषयति अविद्याश्रयत्वेति । अविद्याश्रयत्वयोग्यत्वम् । अविद्याशब्दः समस्तहेयप्रदर्शनार्थः; आश्रयत्वशब्दः सम्बन्धपरः; हेयसंबन्धात्यन्ताभावानधिकरणत्वं तद्योग्यत्वम् । हेयसम्बन्धात्यन्ताभावाधिकरणत्वं तदनर्हत्वम् । 'अनश्नन्नन्यः' इति श्रुत्या परमात्मनस्तदनर्हत्वं सिद्धम् । देशकालसन्निकर्षे सत्यपि तदस्पर्शो हि स्वभावसंनिकर्षाभावात् । स्वभावसंनिकर्षाभाव एव ह्ययोग्यत्वम् । यथा नभसः क्लेदनदहनाद्यनर्हत्वम् । अतो हेयार्हतदनर्हयोर्हेयापगमेऽपि न स्वरूपैक्यं संभवति । निग्राह्यस्य पश्चादनुगृहीतस्य हि निग्राह्यत्वापगमेऽपि निग्रहानुग्रहकर्त्रा पुरुषेण नैकत्वसंभव इत्यर्थः (?) कारागृहनिर्मुक्तस्य नियन्त्रा नरपतिना स्वरूपैक्यं न संभवतीत्यर्थः ।

अस्मिन्नर्थे पुराणवचनमाह यथोक्तमिति । योगशब्दं ऐक्यपरः । अन्यथा, अन्यद्द्रव्यं हि तद्द्रव्यतां नैतीति प्रतिक्षेपानुपपत्तेः । ननु मिथ्यैतदित्युत्तरत्रान्वयः, परमात्मात्मनोर्योगः परमार्थः, अन्यद्द्रव्यं तद्द्रव्यतां नैतीत्येतत् मिथ्येत्यर्थ इति चेत्—नैवम्; अन्यस्यान्यद्रव्यतानापत्तेस्सत्यत्वात् । इतरथा जडाजडयोस्तादात्म्यप्रसङ्गः । 'ऋग्यजुस्सामनिष्पाद्यं यज्ञकर्म मतं तव' इतिवत् इष्यत इत्यनेन पूर्वार्धोक्तार्थस्य परमतत्वद्योतनात् । अन्यथा इष्यत इति पदवैयर्थ्यात् । किञ्च "परमार्थस्तु भूपाल ! सङ्क्षेपाच्छ्रूयताम्" इति वक्ष्यमाणपक्षव्यतिरिक्तपक्षाणां निराकरणपरत्वाच्च प्रकरणस्य, एतच्छ्लोकपूर्वार्धोक्तैक्यसमर्थनपरत्वमुत्तरार्धस्य नोपपद्यते । "धर्माय त्यजते" इत्यादिग्रन्थैस्तत्तदर्थानां परमार्थत्वं हि निरस्यते । स्वतः प्रकृतार्थे स्वरसस्य एतच्छब्दस्य प्रकृतार्थे सत्यपि वक्ष्यमाणपरत्वाश्रयणमप्ययुक्तम् । किञ्च अन्यद्द्रव्यं तद्द्रव्यतां नैतीति यत्, एतन्मिथ्येति हि तदानीमर्थः । तथासति यतश्शब्दस्वारस्यभङ्गः । यतश्शब्दस्य हि हेतुपरत्वं स्वरससिद्धम्, न तु यच्छब्दवत् प्रकृतार्थशरीरमात्रपरामर्शित्वम् । अन्यद्द्रव्यं तद्द्रव्यतां नैतीत्येतन्मिथ्येति यतः, तत ऐक्यं परमार्थ इत्यन्वये इतिशब्दद्वयाध्याहारपसङ्गः । स चानध्याहारेण निर्वाहे

---

1. सर्वगेतीत्यत्र वाक्यं छित्वा भेदव्यपदेशादिति सूत्रोपादानम् उपर्यनेकसूत्रपाठवत् इति न मन्तव्यमित्यर्थः ।

मुक्तस्य तु तद्धर्मतापत्तिरेवेति भगवद्गीतासूक्तम्,—

"इदं ज्ञानमुपाश्रित्य मम साधर्म्यमागताः । सर्गेऽपि नोपजायन्ते प्रलये न व्यथन्ति च ॥" इति ।

इहापि—"आत्मभावं नयत्येनं तद्ब्रह्म ध्यायिनं मुने! । विकार्यमात्मनः शक्त्या लोहमाकर्षको यथा" इति ।

---

सति नोपपद्यते ॥ यदुच्येत—पूर्वं पृथग्भूतयोः परमात्मात्मनोरैक्यं परमार्थ इतीष्यत इति चेत्—मिथ्यैतत्; अन्यद्द्रव्यं हि तद्द्रव्यतां नैतीति यतः । तस्मात् पूर्वमपि परमात्मात्मनोर्भेदो नास्तीति—नैवम्; पूर्वं भ्रान्त्या पृथग्भूतयोरित्यस्याश्रुतत्वेनाध्याहारप्रसङ्गात् । स चानध्याहारेण निर्वाहे संभवति नोपपद्यते । किञ्च 'तस्मात् पूर्वमपि भेदो नास्ति' इत्यश्रुतवाक्यान्तराध्याहारेण वाक्यस्य पूरणीयत्वं स्यात् । तच्च तन्निरपेक्षनिर्वाहे संभवति नोपपद्यते । तस्मात् प्रागपि भेदो नास्तीति वाक्यं नाध्याहर्तव्यम् ॥ [नाध्याहर्तव्यम्; ?] पूर्वं भिन्नयोः परमात्मात्मनोः पश्चादभेद इति पक्षनिराकरणमात्रपरत्वाद्ग्रन्थस्य इति चेत्—किं तेन प्रयोजनम् ॥ पूर्वमप्यैक्यसिद्धिरिति चेत्—न; पूर्वं पृथग्भूतयोः पश्चादैक्यायोगेऽभिहिते सति पश्चादपि भेदसिद्धेः । अतः स्वरससिद्ध एवार्थः स्वीकार्यः ।

अथ—ब्रह्म वेद ब्रह्मैव भवतीत्यादिवाक्यनिर्वाहं बहुश्रुत्यन्तराविरोधेन वक्ष्यन् मुक्तस्य साम्यापत्तिमाह मुक्तस्येति । तत्रैक्यश्रुतेः प्रतिकूलार्था साम्यश्रुतिर्दर्शयिष्यत इति मत्वा, व्याख्येयतया प्रकृतस्योपबृंहणवचनस्य सजातीयं पराभिमतार्थप्रतिकूलार्थं स्मृतिवचनं दर्शयति इदमिति । मुक्तपरत्ववैशद्यायोपादानं सर्गेऽपीति । न केवलं शास्त्रान्तरे, अत्रापि मुक्तस्य भेदप्रतिपत्तिरस्तीत्याह इहापीति । इह—योगप्रकरणे योगसङ्क्षेपकथनारम्भ इत्यर्थः । "सङ्क्षेपविस्तराभ्यां तु; किमन्यत् क्रियतां तव" इति ह्युक्तम् । आत्मनः शक्त्या विकार्यम्—अवस्थान्तरं नेयम्, ध्यायिनमेनं तद्ब्रह्म आत्मभावं नयति, आत्मनः शक्त्या विकार्यं लोहमाकर्षको यथेत्यन्वयः ।

आकर्षको वह्निः; दोषमाकर्षतीति व्युत्पत्त्या । "यथाऽग्निरुद्धतशिखः कक्षं दहति सानिलः । तथा चित्तस्थितो विष्णुर्योगिनां सर्वकिल्बिषम्" इति ह्युत्तरत्र वक्ष्यते; श्रीविष्णुधर्मे च, "यथाग्निसङ्गात् कनकमपदोषं प्रजायते" इति । सोऽग्निः आत्मभावम्—आत्मनः स्वभावम्—निर्दोषत्वं लोहं नयति; तयेत्यर्थः । अयं सम्यगर्थः । यद्वा आत्मशब्दः स्ववाची सन् अन्ययोगव्यतिरेकपरः । यथाऽग्निर्लोहम् आत्मभावम्—स्वभावम्-स्वतः सिद्धरूपं नयति, तद्वदित्यर्थः । यद्वा आकर्षकः अयस्कान्तः, लोहमात्मभावं नयति—स्वव्यापारं लोहं कारयति; स्वमनुकारयति. "स्थितः स्थितामुच्चलितः प्रयाताम्" इतिवत् । अयस्कान्तस्तिष्ठति चेत्, लोहस्तिष्ठति; धावति चेत्; तमनुधावति; एवं 'कामान्नी कामरूप्यनुसञ्चरन्', 'सर्वेषु कामचारो भवति' इत्यादिश्रुत्यनुगुणं परमात्मा उपासकं स्वचेष्टामनुकारयति; समानचेष्टितं करोतीत्यर्थः । यद्वा आत्मशब्दः स्ववाची निष्कृष्टस्वरूपपरः । उपासकं परमात्मा आत्मभावं नयति—प्रकृतिसंबन्धराहित्येन शुद्धतां नयति, केवलतां नयति । यथा अयस्कान्तो दारुनिमग्नं लोहं तस्मात् दारुण उद्धृत्य केवलतां नयति तद्वदित्यर्थः । यद्वा—'भूः प्राप्तावात्मनेपदी' इति वचनात् भावशब्दः प्राप्तिवचनः । आत्मप्राप्तिं नयति, यथा लोहमयस्कान्तः स्वप्राप्तिं नयतीत्यर्थः । प्राप्तिं नयतीति निर्देशः ओदनपाकं पचतीतिवत् । जीवस्य परमात्मशक्त्या विकार्यत्वं युक्तम्; जीवस्य बन्धमोक्षयोर्ज्ञानसङ्कोचविकासरूपविकारार्हत्वात् ।

**आत्मभावम्—आत्मनः स्वभावम् । न ह्याकर्षकस्वरूपापत्तिराकृष्यमाणस्य । वक्ष्यति च, "जगद्व्यापारवर्जं प्रकरणादसंनिहितत्वाच्च", "भोगमात्रसाम्यलिङ्गाच्च", "मुक्तोपसृप्यव्यपदेशाच्च" इति । वृत्तिरपि, "जगद्व्यापारवर्जं समानो ज्योतिषा" इति । द्रमिडभाष्यकारश्च, "देवतासायुज्यादशरीरस्यापि देवतावत् सर्वार्थसिद्धिः स्यात्" इत्याह । श्रुतयश्च, "य इहात्मानमनुविद्य व्रजन्त्येतांश्च सत्यान् कामान्, तेषां सर्वेषु लोकेषु कामचारो भवति", "ब्रह्मविदाप्नोति परम् ....सोऽश्नुते सर्वान् कामान् सह ब्रह्मणा विपश्चिता", "एतमानन्दमयमात्मानमुपसङ्क्रम्य, इमाँल्लोकान् कामान्नी कामरूप्यनुसञ्चरन्", "स तत्र पर्येति", "रसो वै सः । रसं ह्येवायं लब्ध्वाऽऽनन्दी भवति", "यथा नद्यः स्यन्दमानाः समुद्रे अस्तं गच्छन्ति नामरूपे विहाय । तथा विद्वान्नामरूपाद्विमुक्तः परात्परं पुरुषमुपैति दिव्यम्", "तदा विद्वान् पुण्यपापे विधूय निरञ्जनः परमं साम्यमुपैति" इत्याद्याः ।**

---

अत्र श्लोके तादात्म्यप्रतिपत्त्यभावं दर्शयति **न हीति** । **आकर्षकस्वरूपापत्तिराकृष्यमाणस्येति** निर्देशः उक्तसर्वार्थसाधारणः । अग्निसुवर्णदृष्टान्तविवक्षायामाकृष्यमाणशब्दो विकार्यपरः । **समानो ज्योतिषेति** । **ज्योतिः**—परं ब्रह्म; "परं ज्योतिरुपसम्पद्य", "अथ यदतः परो दिवो ज्योतिर्दीप्यते" इति श्रुतेः । **द्रमिडेति** । **अशरीरः**—मुक्तः; कर्मकृतशरीराभावात् । **सिद्धिः**—अनुभवः । मुक्तौ जीवपरयोर्भेदश्रुतीर्दर्शयति **श्रुतयश्चेति** । **आप्नोति**—परमनुभवतीत्यर्थः । एतद्विवरणरूपं वाक्यं दर्शयति **सोऽश्नुत इति** । **अनुसञ्चरन्नित्यनेन** भेदो दर्शितः । **रसो वै स इत्यनेन** साम्यम् आनन्दित्वाकारेणेत्युक्तं भवति । परमसाम्योपयोगिनीं वैधर्म्यनिवृत्तिं दर्शयति **यथा नद्य इति** । नदीनां नदीत्वाकारप्रहाणेन समुद्रसंसर्गात् वैधर्म्यप्रहाणेन संसर्गो दृष्टान्ते उपजीव्यः । प्राकृतनामरूपप्रहाणपूर्विका हि परमात्मप्राप्तिः । न च तावता भेदनिवृत्तिः, '**पुरुषमुपैती**'ति कर्मकर्तृभावावगमात् । साम्यापत्तिं दर्शयति **तदेति** ।

ननु **परमं साम्यमुपैती**त्यैक्यापत्तिरुच्यते, समशब्दस्य समानशब्दपर्यायत्वात्; समानशब्दवदैक्ये प्रयोगाच्च । समशब्दस्यैक्ये प्रयोगो दृश्यते, समकालवर्तीत्यादिषु । तथा समशब्दपर्यायतयाऽवगतसमानशब्दोऽप्यैक्ये प्रयुज्यते, "समानं वृक्षं परिषस्वजाते" इति; "एकस्मिन्नर्थे वृत्तिः सामानाधिकरण्यम्" इति च । ऐकाधिकरण्यं हि सामानाधिकरण्यम्; एकस्मिन्नर्थ इत्युक्तेः । तत्पर्यायश्च समशब्दः । यद्यपि सादृश्यस्यापि समशब्दो वाचकः, तथापि मुक्तिवाक्यस्थसाम्यशब्द ऐक्यपरः, 'ब्रह्म वेद ब्रह्मैव भवति' इत्यादिश्रुत्यन्तरैकार्थ्यात्; लय-सायुज्यशब्दश्रवणात्; नदीसमुद्र-घटाकाशमहाकाशादिदृष्टान्तश्रवणाच्च । "साधर्म्यमागताः" इति स्मृतिस्तु सगुणप्राप्तिविषया । अन्यथा प्रत्यक्षश्रुतिविरोधे स्वरूपैक्यविषयबहुश्रुतिविरोधे च तद्दौर्बल्यात् । अत ऐक्यापत्तिरेव अनेन वाक्येन प्रतिपादिता । ऐक्यस्य च पारम्यं नाम पुनर्भेदभ्रमप्ररोहविरहितत्वमिति ॥

अत्रोच्यते । अत्र साम्यशब्दः सादृश्यमेवाभिधत्ते, न त्वैक्यम्; ऐक्यस्य मुख्यार्थत्वेऽभ्युपगतेऽपि स्वारस्याभावात् । सादृश्य एव हि (च?) समशब्दस्य प्रसिद्धिप्राचुर्यम् । तस्य चापवादाभावे सति अस्वरसार्थस्वीकारोऽनुपपन्नः । अपवादहेतवश्च त्वदुक्ता अनन्तरमेव परिह्रियन्ते । न च समादिशब्दानामैक्यं मुख्यार्थः; एकत्वविवक्षायामेको घट इत्यादौ समो घट इत्यादिप्रयोगाभावात्; मुख्यत्वे हि एकशब्दस्येव प्रतियोगिनिरपेक्षप्रयोगः प्राप्नोति । यस्तु-'सामानाधिकरण्यं' 'समकालवर्ती'त्यादिषु समादिशब्दप्रयोगः, स तु साधारण्यार्थः,

न त्वैक्यार्थः। साधारण्येऽपि प्रयोगो न मुख्यः, प्रयोगेऽन्यथासिद्धे शक्तिकल्पनानुपपत्तेः। तथा हि— अनेकप्रतियोगिकैकरूपसम्बन्धवत्त्वं साधारण्यम्। यथा—धनं देवदत्तयज्ञदत्तौ प्रति शेषत्वेन सम्बन्धितया साधारणम्। तयोश्च धनं प्रति शेषितयाऽऽस्ते सादृश्यम्। ताभ्यां सम्बन्धि धनम्। तथा नीलत्वोत्पलत्वे अपेक्ष्य आधारतया संबन्धि द्रव्यं साधारणम्। तयोश्च द्रव्यं प्रति आधेयतयाऽऽस्ते सादृश्यम्। ताभ्यां सम्बन्धि द्रव्यम्। तथा द्वाभ्यां संयोगित्वेनावच्छेद्यावच्छेदकभावेन वा सम्बन्धी कालस्तयोः साधारणः, तत्काल-सम्बन्धित्वाकारेण तयोरपि सादृश्यमस्ति। ताभ्यां संबन्धी कालः। अतो मिथस्सदृशपदार्थसंबन्धितया द्रव्यकालादिषु समसमानादिशब्दा लक्षणया वर्तन्त इति न मुख्याः। अत ऐक्ये प्रयोगाभावात् समशब्दस्यैक्यं न मुख्यार्थः। मुख्यार्थे संभवति लाक्षणिकार्थस्वीकारो नोपपद्यते। अतः साम्यशब्दः सादृश्यमेवाभिधत्ते। मुक्तात्मगोचर-सामानाधिकरण्योपपत्तिश्चानन्तरमेव भाष्ये वक्ष्यते।

यदुक्तं सायुज्यशब्देन मुक्तावभेद इति—तदयुक्तम्; सायुज्यशब्दस्य समानगुणयोगवाचित्वात्। युज्यत इति युक्छब्दो गुणपरः। धर्मिणि हि गुणः संबध्यते। समानगुणकः सयुक्, तस्य भावः सायुज्यमिति हि व्युत्पत्तिः।

प्रयोगविरोधाच्च नैक्यं सायुज्यम्; "एतासामेव देवतानां सायुज्यं सार्ष्टितां समानलोकतामाप्नोति" इति बह्वीभिर्देवताभिरेकस्य सायुज्यापत्तिः श्रूयते। न ह्येकस्य निरवयवस्याच्छेद्यस्यात्मनो बह्वीभिर्देवताभिरैक्यं संभवति। क्रमभावित्वादविरोध इति चेत्, तर्ह्यग्निनैकीभूतस्य वरुणसायुज्यापत्तौ अग्नित्वोपाधेः प्रहाणादग्नेर्देवताया अभावः स्यात्। अग्नित्वोपाधौ स्थिते, वरुणैक्यापत्त्यनुपपत्तिः। औपाधिकभेदप्रहाणं ह्यैक्यापत्तिः। न तु पूर्वमविद्यमानमैक्यमुत्पद्यते॥ अग्नौ स्थित एव ततः पृथग्भूतस्य वरुणसायुज्यमिति चेत्, एकीभूतस्य पृथग्भावो ह्युपाधितः स्यात्। उपाधिश्च देहान्तःकरणादिः। तत्सम्बन्धस्याहेतुकत्वेऽतिप्रसङ्गात् हेतुर्वाच्यः॥ कर्मैव हेतुरिति चेत्, अग्निसायुज्यापत्तिदशायां तत् कर्म नष्टं न वा? नष्टं चेत्—पुनरुपाध्यनुदयेनाग्नितः पृथग्भावायोगात् अग्नित्वोपाधेश्चाप्रहाणात् पूर्वोपाधिप्रहाणरूपवरुणसायुज्यापत्तिः क्रमेणापि नोपपद्यते। अनष्टं चेत्—तत्कृतोपाधेरनष्टत्वात् नाग्निनैक्यापत्तिसंभवः; औपाधिकभेदस्य तत्प्रहाणरूपैक्यापत्ति-विरोधित्वात्॥ अनष्टमपि तत्कर्म अग्निसायुज्यापत्तिदशायां ततो भेदकमुपाधिं न जनयति. कर्मणां कार्यकारित्वस्य कालविशेषनियतत्वादिति चेत्—तथापि व्यवस्थितकर्मविशेषपरिष्वक्तस्य जीवस्य तत्कर्मापरिष्वक्तादग्नितस्तदेव कर्म भेदकमिति नाग्निनैक्यापत्तिरुपपन्ना। किञ्च पृथिव्या एकीभूतपृथग्भूतघटस्येव अग्निना एकीभूतपृथग्भूतजीव-स्याजत्वनित्यत्वानुपपत्तिश्च। अतो भेदे स्थित एव अग्न्यादिसायुज्यम्।

समानलोकतासाहचर्याच्च नैक्यं सायुज्यम्, न ह्येकस्य स्वेन समानलोकत्वसंभवः। अतः समानलोकत्ववत् भेदे सिद्ध एव सायुज्यं भवति॥ समानलोकताप्राप्त्यनन्तरं सायुज्यापत्तिः, न तु युगपदेव; अतस्तयोरविरोध इति चेन्न, 'सायुज्यं सार्ष्टितां समानलोकताम्' इति सायुज्यस्य पूर्वश्रुतत्वात्॥ अर्थक्रमेण पाठक्रमबाध इति चेन्न; अवयवशक्त्युपस्थापितार्थस्य पाठक्रमानुगुणत्वात्, अर्थान्तर-कल्पनस्याहेतुकत्वाच्च। यदि पाठक्रमबाधार्थं सायुज्यशब्दस्य ऐक्यापत्तिलक्षणार्थविषया रूढिशक्तिः कल्प्यते, तदाऽन्योन्याश्रयः स्यात्—सायुज्यस्यैक्यापत्तिलक्षणत्वनिश्चये पाठक्रमबाधः, पाठक्रमबाधे सति सायुज्य-

स्यैक्यापत्तिलक्षणत्वनिश्चय इति ॥ 'एतेषामेव सलोकतां सायुज्यमश्नुते' इति वाक्यात् पूर्वोदाहृतवाक्यस्थक्रमबाधः इति चेत्, न; विरुद्धार्थविषयाया रूढिशक्तेरकल्पनतया विरोधास्फुरणात् ।

किञ्च "अग्नेर्वा एतानि नामधेयानि । अग्नेरेव सायुज्यं सलोकतामाप्नोति ... वायोरेव-इन्द्रस्यैव-बृहस्पतेरेव प्रजापतेरेव-ब्रह्मण एव सायुज्यं सलोकतामाप्नोति" इति भूयसां वाक्यानां बलीयस्त्वात् त्वदुक्तक्रम एव बाध्यः । किञ्च "एतेषामेव सलोकतां सायुज्यमश्नुते । अग्नेरेव सायुज्यं सलोकतामाप्नोति" इत्यादिवाक्यानि कर्मविधिशेषार्थवादरूपाणि । कर्मफलत्वाच्चाग्न्यादित्यादिदेवतासायुज्यमनित्यम् । अतः कर्मफलावसानेऽग्न्यादिभ्यः तत्सायुज्यं प्राप्तानां पृथग्भावस्यावर्जनीयत्वात् आमोक्षाज्जीवभेदस्थितेर्भवतामपीष्टत्वात् अग्न्यादिसायुज्यदशायामपि भेदस्थितिरवर्जनीया ॥ अग्न्यादिसायुज्यं गतानां ततः पृथग्भावः पुनरप्युपाधित इति चेत्—दत्तमुत्तरम् । न चाग्न्यादिसायुज्योक्तिरर्थवादत्वादनादरणीयेति वाच्यम्; वेदान्तिभिरर्थवादानां प्रतीयमानार्थे प्रामाण्याभ्युपगमात् । अतो न सायुज्यमैक्यम्, अपि तु समानगुणयोग एव ।

लयोऽपि न स्वरूपैक्यम्; लयशब्दस्य तदर्थत्वाभावात् । प्रयोगानुगुणं शब्दार्थव्यवस्थापनं कार्यमिति । नित्यनैमित्तिकमहाप्रलयेष्वपि लयशब्दः प्रयुज्यते ; न तत्र स्वरूपैक्यापत्तिः । न तावन्नित्यप्रलये ; स्वर्गनरकादिगमनागमनशास्त्रात् । नापि नैमित्तिके; पूर्वकल्पप्रलीनानां नारदादीनां प्राग्जन्मप्रत्यभिज्ञानवतामेव पुनरुत्पत्त्यवगमात् । नारदेन पूर्वकल्पे स्वजन्मवृत्तादिकमिह कल्पेऽभिहितमिति पुराणेष्ववगम्यते । नापि महाप्रलये; वैषम्यनैर्घृण्यपरिहाराय जीवनित्यत्वबहुत्वकर्मवासनानांतदानीं विद्यमानतया अभ्युपगन्तव्यत्वात् । तथा "प्रकृतिर्या मयाऽऽख्याता व्यक्ताव्यक्तस्वरूपिणी । पुरुषश्चाप्युभावेतौ लीयेते परमात्मनि" इति वदता भगवता पराशरेणैव, "हिंस्राहिंस्रे मृदुक्रूरे धर्माधर्मावृतानृते । तद्भाविताः प्रपद्यन्ते तस्मात् तत् तस्य रोचते", "प्रधानकारणीभूता यतो वै सृज्यशक्तयः", "तेषां ये यानि कर्माणि प्राक् सृष्ट्याः प्रतिपेदिरे" इत्यादिभिस्तदानीं सवासनकर्मान्वितजीवबहुत्वं च दर्शितम् । अत एव भेदप्रहाणं च न लयशब्दार्थः । न च प्राकृतप्रतिसञ्चरमोक्षविषयप्रलयशब्दयोरर्थवैरूप्यं वक्तुमुचितम्; शक्तिभेदकल्पन-अमुख्यत्वयोरन्यतरप्रसङ्गात् । न च तत्रापि महाप्रलयादिषु लयशब्दस्यामुख्यत्वं वाच्यम्; बहुष्वर्थेष्वमुख्यत्वाश्रयणादपि मुक्तिमात्रविषयप्रलयशब्दस्यैवामुख्यत्वाश्रयणोपपत्तेः । अतः सर्वप्रयोगानुगुणोऽर्थः स्वीकार्यः । अतो विसदृशावस्थाप्रहाणेन कारणत्वधर्मिणा द्रव्येण विभागस्यापादानभूतेन संश्लेषो लयः ॥ तस्मात् ऐक्यं न लयशब्दार्थः ।

घटाकाशादिदृष्टान्तोपन्यासश्चौपाधिकवैषम्याभावनिबन्धनः । आकाशादितत्त्वानामपि सांशत्वात् । तेषां पञ्चीकरणवचनेन प्रदेशभेदवत्ता हि वेदान्तिभिरभ्युपेत्या । अतो मोक्षविषयासु श्रुतिषु स्वरूपैक्यं क्वचिदपि नावगम्यते । निर्गुणप्राप्तिविषया श्रुतिः काचिदपि नास्तीत्ययमर्थः अनन्तरमेवोपपाद्यते । अतः, 'साधर्म्यस्मरणस्य सगुणप्राप्तिविषयत्वान्न परममोक्षविषयत्वम्; अन्यथा निर्गुणप्राप्तिविषयश्रुतिविरोधे स्मृतेर्दौर्बल्यप्रसङ्गात्' [1] इत्यपि दुरुक्तम् ।

1. दौर्बल्यप्रसंगादिति । अप्रामाण्यापत्तेरिति शेषः । तत्रान्यथेत्यस्यान्वयः । 149. पुटेऽप्येवम् ।

'परविद्यासु सर्वासु सगुणमेव ब्रह्म उपास्यम् ; फलं चैकरूपमेव । अतो विद्याविकल्पः' इति सूत्रकारेणैव 'आनन्दादयः प्रधानस्य', 'विकल्पोऽविशिष्टफलत्वात्' इत्यादिषूक्तम् । वाक्यकारेण च सगुणस्यैवोपास्यत्वं विद्याविकल्पश्चोक्तः, "युक्तं तद्गुणकोपासनात्" इति । भाष्यकृता व्याख्यातञ्च, "यद्यपि सच्चित्तः" इत्यादिना[1] । 'ब्रह्म वेद ब्रह्मैव भवति" इत्यत्रापि, "नामरूपाद्विमुक्तः परात्परं पुरुषमुपैति दिव्यम्", "निरञ्जनः परमं साम्यमुपैति", "परं ज्योतिरुपसंपद्य स्वेन रूपेणाभिनिष्पद्यते" इत्यादिभिरैकार्थ्यात् प्राकृतनामरूपाभ्यां

---

तस्मात् यदा पश्यः इति वाक्ये साम्यशब्दः सादृश्यपरः । येनाकारेण साम्यम्, तस्याकारस्य निरवधिकत्वं परमशब्दाभिप्रेतम् । अत इदं वाक्यं परब्रह्मप्राप्तिरूपं परममोक्षं तत्साम्यापत्तिलक्षणमेव प्रतिपादयति ।

अथ गुणोपासकस्य सगुणब्रह्मप्राप्तिं वदन्त्येताः श्रुतयः, न तु [पर]ब्रह्मविदः परब्रह्मप्राप्तिमिति शङ्कायामाह परविद्यास्विति । परविद्यासु—ब्रह्मविद्यास्वित्यर्थः । सर्वासु—परेण सगुणविषयत्वेन निर्गुणविषयत्वेन चोक्तासु दहरविद्यासद्विद्याक्षरविद्यादिष्वित्यर्थः । 'अदृश्यत्वादिगुणकः' इति परविद्यावाक्यविषयसूत्रस्वारस्यात् तस्याः सगुणविषयत्वं प्रतीयते । आनन्दादयः प्रधानस्य इति सूत्रमुपास्यस्य सगुणत्वायोदाहृतम् । विकल्पोऽविशिष्टफलत्वात् इति सूत्रं प्राप्यस्य सगुणत्वायोपात्तम् । अयमर्थः—परेण निर्गुणविषयत्वेनाभिमतानां 'सत्यं ज्ञानम्', 'आनन्दो ब्रह्म' इत्यादिवाक्यानामानन्दादिगुणविशिष्टविषयत्वं तेषां च गुणानां सर्वविद्यानुयायित्वं चोक्त्वा, तास्वेकैव विद्या फलायालमिति विद्याविकल्पश्चोक्तः । अतः परेण निर्गुणसगुणविषयत्वेनाभिमतासु सद्विद्यादहरविद्यादिषूपास्यं फलं च सगुणमिति सगुणप्राप्त्यतिरेकेण निर्गुणप्राप्तिः प्रमाणशून्या । अतो मुक्तौ भेदपराणां श्रुतीनामन्यथासिद्धिर्नोपपद्यते, प्राप्यवैषम्याभावादिति ।

सूत्रकाराभिप्रायविदामुक्तिं दर्शयति वाक्येति । युक्तं तद्गुणकोपासनादिति । युक्तम्—गुणयुक्तमेव प्राप्यम्; कुतः? तद्गुणकोपासनादित्यर्थः । विद्याविकल्पश्च तत्रैव द्रष्टव्यः । सच्चित्तः सद्विद्यानिष्ठः । तर्हि मुक्तावभेदश्रुतेः कोऽर्थ इत्यत आह ब्रह्मेति । "स यो ह वै तत्परमं ब्रह्म वेद ब्रह्मैव भवति" इति, प्रकृतस्य वेदितुर्ब्रह्मपर्यन्तस्वरूपाविर्भावपरमिदं वाक्यमिति[2] यथा सेत्स्यति, तथा वक्ष्यते[3] । इह त्वर्थान्तरमुच्यते । प्राकृतनामरूपप्रहाणज्ञापनाय नामरूपाद्विमुक्त इति श्रुतिरुदाहृता । साम्यप्रतिपत्त्यर्थं निरञ्जन इति वाक्यमुपात्तम् । तस्यैव साम्यस्य स्वाभाविकत्वज्ञापकं परं ज्योतिरिति वाक्यम् । तर्ह्यमुख्यत्वं स्यादित्यत्राह प्रकारैक्ये चेत ॥

---

1. वेदार्थसंग्रहे इदं पूर्णं लिखितम् । अत्राप्युपोद्घाते द्रष्टव्यम् ।

2 सेत्स्यतीति । पूर्वं परममिति ब्रह्मणो विशेषणात् ब्रह्मैवेत्यत्राविशेषणात् ब्रह्मपदमिदं जीवपरमिति ज्ञायते । तथाच ब्रह्मैव भवति—देहात्मभ्रमादिसामग्रीरहितशुद्धब्रह्मैव भवतीति अद्वैतिमते इव एवकारेण विपरीतसामग्रीराहित्योक्तौ ब्रह्मपर्यन्तस्वरूपाविर्भावः सेत्स्यति । अत्र पक्षे ब्रह्मशब्दः जीवसाधारण्यात् जीवव्यक्तिपर एव । ब्रह्मशब्दस्य परमात्मपरत्वेऽपि एवकारस्य सादृश्यार्थकत्वानुशासनात् ब्रह्मैव-ब्रह्मसदृशं नित्यप्रत्यक्षितस्वरूपमिति प्रकृतार्थः सेत्स्यतीत्यर्थः । अत्र तु भाष्ये सेयं गौरिति एवकाररहितवाक्योदाहरणात् परमात्मपरे ब्रह्मशब्द एव प्रवृत्तिनिमित्तान्तर्गतगुणकृतबृहत्त्वविवक्षा ज्ञायते । एवमप्यप्रवृत्तिनिमित्तधर्मपरं सिंहश्छात्र इति वाक्यमिव नामुख्यमिति ।

3 वक्ष्यत इति । अदृश्यत्वादिगुणकाधिकरणब्राह्माधिकरणादाविति भाष्यम् ।

विनिर्मुक्तस्य निरस्ततत्कृतभेदस्य ज्ञानैकाकारतया ब्रह्मप्रकारतोच्यते । प्रकारैक्ये च तत्त्वव्यवहारो मुख्य एव, यथा, सेयं (सोऽयं) गौरिति ।

अत्रापि,—"विज्ञानं प्रापकं प्राप्ये परे ब्रह्मणि पार्थिव । प्रापणीयस्तथैवात्मा प्रक्षीणाशेषभावनः" इति—परब्रह्मध्यानादात्मा परब्रह्मवत् प्रक्षीणाशेष[कर्म]भावनः—कर्मभावनाब्रह्मभावनोभयभावनेति भावनात्रयरहितः प्रापणीय इत्यभिधाय—

"क्षेत्रज्ञः करणी ज्ञानं करणं तस्य वै द्विज ! (तेन तत्) । निष्पाद्य मुक्तिकार्यं हि (वै) कृतकृत्यं निवर्तयेत् (र्तते)" इति करणस्य परब्रह्मध्यानरूपस्य प्रक्षीणाशेषभावनात्मस्वरूपप्राप्त्या कृतकृत्यत्वेन निवृत्तिवचनात् 'यावत्सिद्ध्यनुष्ठेयम्' इत्युक्त्वा—

"तद्भावभावमापन्नस्तथाऽसौ परमात्मना । भवत्यभेदी भेदश्च तस्याज्ञानकृतो भवेत्" इति

---

सोऽयं व्रीहिरित्यादेरुपलक्षणमिदमुदाहरणम् । 'यथर्तुष्वृतुलिङ्गानि नानारूपाणि पर्यये । दृश्यन्ते तानि तान्येव तथा भावा युगादिषु' इत्यादिप्रयोगो भारतादिषु द्रष्टव्यः । दृष्टान्ते प्रकारैक्येऽपि तत्त्वव्यवहारो मुख्योऽप्यस्वरस', पूर्वदृष्टे गवि व्यक्त्यंशप्रहाणादस्वारस्यम्, जात्यंशस्य सौसादृश्यलक्षणैक्यान्मुख्यत्वम्; दार्ष्टान्तिके तु गङ्गायां घोष इति गङ्गापदवत् कार्त्स्न्येन प्रवृत्तिनिमित्तप्रहाणाभावात् परमात्मनीव प्रवृत्तिनिमित्तपौष्कल्याभावाच्च प्रवृत्तिनिमित्तैकदेशान्वयिनि मुक्तात्मनि मुख्यकोटिरित्यभिप्रायेण मुख्य एवेत्युक्तम् । लाक्षणिकगङ्गापदवन्नात्यन्तामुख्य इत्यर्थः । न हि मुक्तस्यापरिच्छिन्नज्ञानानन्दत्वेऽपि जगत्कारणत्वानुगुणगुणबृहत्त्वं स्वरूपबृहत्त्वं चा(वाऽ)स्ति । आकारैक्येऽपि तत्त्वव्यवहारस्यात्यन्तामुख्यत्वाभावे सेयं(सोऽयं) गौरिति दृष्टान्तः ।

न केवलं योगसङ्ग्रहारम्भे; विस्तरेऽप्यव्यवहितेषु पूर्वश्लोकेषु भेदप्रतिपत्तिरस्तीत्याह अत्रापीति । न केवलं मुक्तविषयप्रकरणान्तरेषु; अस्मिन् प्रकरणेऽपीति वाऽर्थः । अस्मिन् श्लोके तथैवेति ब्रह्मसाधर्म्योपदेश उपयुज्यते । तथैवेत्येतद्व्याख्यानं परब्रह्मवदित्यादि । प्रक्षीणाशेषभावनशब्दं व्याचष्टे कर्मभावनेति । परब्रह्मवत् प्रक्षीणाशेषकर्मभावन इति पाठे कर्मशब्दो यागादिक्रियोपासनसाधारणानुष्ठेयमात्रपरः । तदा कर्मशब्देन 'त्रिविधा भावभावना' इत्यत्र भावशब्दो व्याख्यातो भवति । अत्रायमर्थः—प्राप्यपरब्रह्मविषयज्ञानस्य प्रापकत्वात् शुद्धस्वस्वरूपमपि प्राप्यमिति तदनुसन्धेयमिति । अयं च, 'व्यतिरेकस्तद्भावभावित्वात्' इत्यधिकरणार्थः । तत्र बद्धस्वरूपं चिन्त्यमिति पूर्वपक्षीकृत्य मुक्तस्वरूपं चिन्त्यमिति हि सिद्धान्तितम् । अस्य श्लोकस्यैकप्रकरणत्वज्ञापनायानन्तरश्लोकोऽपि व्याख्यायते क्षेत्रज्ञ इति । यावत् क्षेत्रज्ञावस्थः तावत् करणी उपासकः, तस्य करणं ज्ञानम्, करणभूतं ज्ञानं मुक्तिकार्यं निष्पाद्य निवर्तयेत्, न तु मुक्तेः पूर्वमेव निवर्तयेदित्यर्थः । न हि मुक्तस्योपासननिवृत्तिर्विधेया; अतो यावन्मोक्षमनुष्ठेयत्वमुक्तमिति भावः । तद्भावभावशब्देन ब्रह्मसाम्यापत्तिज्ञापनार्थम्, 'विभेदजनकेऽज्ञाने' इत्यत्र ज्ञाने इति पदच्छेदशङ्काव्युदासार्थं च तद्भावभावमिति श्लोको व्याख्यायते । तद्भावेतिश्लोके तद्भाव इत्युपमानबहुव्रीहिः । तद्भाव इति पदान्तर्गतौ तच्छब्दभावशब्दौ व्याख्यातुमाह तद्भाव इति । भाष्यस्थस्तद्भावशब्दो न बहुव्रीहिः; किन्तु तत्पुरुषः, समासे व्याचिख्यासिते सति हि बहुव्रीहिविशिष्टरूपेण पदोपादानम्; तच्छब्द-भावशब्दमात्रस्य व्याचिख्यासितत्वात् बहुव्रीहिविशिष्टरूपेण पदस्यानुपादानम् । तच्छब्देन ब्रह्मोच्यते, प्रथमभावशब्देन स्वभाव उच्यत इत्यर्थः । "भावो लीलाक्रियाचेष्टाभूत्यभिप्रायजन्तुषु । पदार्थमात्रे सत्तायामात्मयोनिस्वभावयोः" इति नैघण्टुकाः ।

मुक्तस्य स्वरूपमाह । तद्भावः—ब्रह्मणो भावः, स्वभावः; न तु स्वरूपैक्यम्; 'तद्भावभावमापन्नः' इति द्वितीयभावशब्दानन्वयात्; पूर्वोक्तार्थविरोधाच्च । यत् ब्रह्मणः प्रक्षीणाशेषभावनत्वम्, तदापत्तिः तद्भावभावापत्तिः । यदैवमापन्नः, तदाऽसौ परमात्मना अभेदी भवति—भेदरहितो भवति । ज्ञानैकाकारतया परमात्मनैकप्रकारस्यास्य तस्माद्भेदो देवादिरूपः; तदन्वयोऽस्य कर्मरूपाज्ञानमूलः, न स्वरूपकृतः; स तु देवादिभेदः परब्रह्मध्यानेन मूलभूताज्ञानरूपे कर्मणि विनष्टे हेत्वभावात् निवर्तत इत्यभेदी भवति । यथोक्तम्—

"एकस्वरूपभेदस्तु बाह्यकर्मवृतिप्रजः । देवादिभेदेऽपध्वस्ते [1]नास्त्यना (नास्त्येवा) वरणो हि सः॥" इति।

---

यद्वा भाष्यस्थः तद्भावशब्दोऽपि बहुव्रीहिविशिष्टः । तद्भावः—ब्रह्मणो भावः स्वभाव इति । तद्भाव इति पदे तच्छब्दवाच्यब्रह्मसम्बन्धितया प्रतिपन्नो भावः स्वभाव इत्यर्थः । अथवा श्लोकेऽपि तद्भावशब्दस्तत्पुरुषः । द्वितीयभावशब्दः सत्तावाची । व्यावर्त्यमाह न त्विति । कुत इत्यत्राह तद्भावेति । हेत्वन्तरमाह पूर्वोक्तार्थविरोधाच्चेति । हेयप्रत्यनीकत्वहेयार्हत्वादिविरोधोऽर्थविरोधः । एवं शब्दपर्यालोचनया अर्थपर्यालोचनया च भावशब्दस्य स्वभाववाचित्वमुपपादितम् । स्वभावशब्दवाच्यञ्च पूर्वश्लोकोक्तं प्रक्षीणाशेषभावनत्वमित्याह यदिति । तच्छब्दसामर्थ्यात् यद्वृत्तमाक्षिप्य व्याचष्टे यदैवमिति । अभेदीत्यत्र भेदशब्दव्याख्यानार्थं भेदशब्दं नञ्प्रत्ययाभ्यां विभज्य निर्दिशति भेदरहितो भवतीति । यद्वा भेदरहितो भवति—न तादात्म्यवानिति भावः । अन्यथा भेदश्च तस्याज्ञानकृतः इत्यनन्तरनिर्देशो न घटते । देवादिभेदाभावः कथमिति शङ्कायां भेदश्च तस्येत्यादि व्याचष्टे ज्ञानैकाकारतयेति । 'परमात्मना भवत्यभेदीति परमात्मनः प्रस्तुतत्वात् आत्मनो ब्रह्मण इत्यत्रापि पञ्चमीविवक्षया च तस्माद्भेद इत्युक्तम् । ब्रह्मणो मुक्तात्मनश्चाकारान्तरेण भेदस्य प्रमाणसिद्धत्वात् निरसनीयभेदविशेषस्य वचनान्तरसिद्धत्वाच्च भेदो देवादिरूप इत्युक्तम् । कर्मरूपशब्देन अज्ञानशब्दो व्याख्यातः । ज्ञानविरोधीति व्युत्पत्तिरित्यर्थः । 'अविद्यया मृत्युं तीर्त्वा' इति हि श्रुतिः । अत्रापि, 'अविद्या कर्मसंज्ञाऽन्या' इति हि पठ्यते । ततः किं भेदराहित्यस्येति शङ्कायां भेदश्च तस्याज्ञानकृतो भवेदित्यनेनार्थसिद्धमभिप्रेतं कारणाभावं विशदयन् कार्याभावमुपपादयति स त्विति । भेदस्य देवादिरूपत्वे अज्ञानशब्दस्य च कर्मपरत्वे प्रमाणमाह यथोक्तमिति । आदिभरतचरितेऽयं श्लोकः । तत्र पूर्व देहेन्द्रियादिबाह्यभेदरहितत्वमात्मन उक्तं सितनीलादीत्यादिना । अस्मिन् श्लोके बुद्धिसुखदुःखेच्छाद्यान्तरभेदोऽपि नास्तीत्युच्यते । एकस्वरूपेति । कर्मैव वृतिः कर्मवृतिः । बाह्यमान्तरं च कर्म द्विविधम् । आन्तरमात्मप्रावण्यहेतुः कर्म । बाह्यं बहिर्विषयप्रावण्यहेतुः कर्म । यद्वा बाह्यम्-अस्वाभाविकं कर्म । तदेव वृतिः । तया प्रकर्षेण जातः एकस्वरूपभेदः । बाह्यकर्म शरीरद्वारकमेकस्वरूपस्यात्मन आन्तरं भेदं करोतीत्यर्थः । द्वारभूतदेवादिशरीरभेदे नष्टे सति आन्तरो भेदो नास्ति ॥ कथं वा देवादिभेदे नष्टे कर्मवृतिहेतुकान्तरभेदनाश इत्यत्राह अनावरणो हि स इति । सः—निवृत्तदेवादिभेद आत्मा, कर्मावरणरहितो

---

1 श्रीभाष्यस्वारस्य-श्रीविष्णुचित्तीयानुरोधेन क्षेत्रज्ञ इति पूर्वश्लोके, एकस्वरूपेत्यस्मिन् श्लोके च पाठभेदार्थभेदविचारो भाष्यार्थदर्पणे द्रष्टव्यः ।

एतदेव विवृणोति, "विभेदजनकेऽज्ञाने नाशमात्यन्तिकं गते । आत्मनो ब्रह्मणो भेदमसन्तं कः करिष्यति" इति । विभेदः—विविधो भेदः, देवतिर्यङ्मनुष्यस्थावरात्मकः । यथोक्तं शौनकेनापि, "चतुर्विधोऽपि भेदोऽयं मिथ्याज्ञाननिबन्धनः" इति । आत्मनि ज्ञानरूपे देवादिरूपविविधभेदहेतुभूतकर्माख्याज्ञाने परब्रह्मध्यानेनात्यन्तिकनाशं गते सति हेत्वभावादसन्तं परस्मात् ब्रह्मणः आत्मनो देवादिरूपभेदं कः करिष्यतीत्यर्थः । 'अविद्या कर्मसंज्ञाऽन्या' इति ह्यत्रैवोक्तम् ।



हीत्यर्थः । यद्वा कर्मवृतिः—कर्मजन्या वृतिः, देवादिशरीरम्; तत्संबन्धजः आन्तरभेदः । देवादिभेदेऽपध्वस्ते स नास्ति । कथं कर्मजन्यवृतिहेतुकान्तरभेदो देवादिभेदापध्वंसे नास्तीत्यत्राह—अनावरणो हि स इति । कर्मजन्यवृतिर्देवादिशरीरभेदरूपेत्यर्थः । एतदेव—भेदश्च तस्याज्ञानकृतो भवेदित्युक्तमेवार्थम् । 'विभेदजनक' इत्यादिश्लोकेन 'अनावृत्तिः शब्दात्' [1]इत्यधिकरणार्थ उच्यते; परस्माद्ब्रह्मण आत्मनो देवादिभेदस्य प्रनष्टस्य पुनरावृत्तिं कः करिष्यतीत्युच्यते । विभेदशब्दं व्याचष्टे विभेदो विविधो भेद इति । भेदस्य देवादिरूपत्वे प्रमाणान्तरमाह यथोक्तमिति । मिथ्याज्ञाननिबन्धनः—मिथ्याज्ञानम् आत्मविषयभ्रान्तिज्ञानम् । तत् कर्मद्वारा उत्तरोत्तरदेवादिभेदहेतुरित्यर्थः । अस्योत्तरार्द्धम्, 'देवतिर्यङ्मनुष्याख्यस्तथैव नृप! नारकः' इति । व्याख्येयश्लोकस्य वाक्यार्थमाह आत्मनीति । ब्रह्मण इति पदस्य पञ्चम्यन्तत्वसूचनाय परस्मादित्युक्तम् । उभयोरपि पदयोर्वैयधिकरण्येन षष्ठ्यन्तत्वमयुक्तम्; चशब्दाभावात् । अनन्तरपूर्वश्लोके परमात्मना भवत्यभेदीति परमात्मनः प्रतियोगितया निर्देशाच्च । अत एव समानाधिकरणषष्ठ्यन्तत्वमप्ययुक्तम्; पूर्वप्रपञ्चितार्थविरोधाच्च ॥ पञ्चम्यन्तत्वं षष्ठ्यन्तत्वं च विपर्ययेण स्यादिति चेन्न; परब्रह्मणोऽपि हेयार्हत्वापत्तेः स्वाभाविकत्वप्रसङ्गात् । अतः परस्मात् ब्रह्मण इत्युक्तम् । असन्तम्—सच्छब्दः परमार्थपर्यायः, 'अनाशी परमार्थश्च' इति अत्रैव ह्युक्तम्—अनित्यमित्यर्थः । तेन स्वाभाविकानित्यभेदव्यावृत्तिः । अनित्यत्वं कादाचित्कत्वम् । अनित्यत्वात् हेत्वपेक्षो देवादिभेदः । तं कः करिष्यति; न कश्चिदपि । हेत्वभावात्—कर्मरूपहेत्वभावादित्यर्थः । न केवलमेकार्थविषये 'बाह्यकर्मवृतिप्रजः', 'अज्ञानकृतो भवेत्' इत्यज्ञानकर्मशब्दयोः प्रयोगादज्ञानशब्दस्य कर्मार्थत्वम्; अस्मिन् प्रकरणे च कण्ठोक्तमित्याह अविद्या कर्मसंज्ञाऽन्येति ह्यत्रैवोक्तमिति । आत्मन औपाधिकभेदः उपाध्यपगमे नश्यतीति श्लोकार्थः । उपाध्यभावादविद्यमानं भेदं क उत्पादयेदिति वाऽर्थः । अयं श्लोको मृषावादिनामत्यन्तास्वरसः, तथा हि—विभेदजनक इत्यत्र जनकशब्द उत्पादके स्वरसः; न त्वध्यासहेतौ । अज्ञानशब्दस्य अनिर्वचनीयपरत्वं लोकतः शास्त्रतश्च न व्युत्पन्नम् । कर्मवाचित्वव्युत्पत्तिरस्मिन् प्रबन्ध एव दर्शिता । नाशशब्दस्य बाधवाचित्वमनुदयम् । असन्तमिति पदञ्च व्यवच्छेद्याभावादफलम्; सतो भेदस्यानभ्युपगमात् । तदभ्युपगमे हि तत्साफल्यम् । करिष्यतीति पदमप्यस्वरसम्; अध्यासवाचित्वाभावात् ।



1 अधिकरणार्थः अधिकृतसूत्रार्थ इत्यर्थः । सिद्धान्ते तस्य पृथगधिकरणत्वाभावात् । अस्य पृथगधिकरणत्वपक्षोऽप्यस्तीति तत्रत्यटीकावाक्यादेव ज्ञायते ।

क्षेत्रज्ञं चापि मां विद्धि' इत्यादिना अन्तयामिरूपेण सर्वस्यात्मतयैक्याभिधानम् । अन्यथा, "क्षरः सर्वाणि भूतानि कूटस्थोऽक्षर उच्यते, उत्तमः पुरुषस्त्वन्यः" इत्यादिभिर्विरोधः । अन्तर्यामिरूपेण सर्वेषामात्मत्वं तत्रैव भगवताऽभिहितम्, "ईश्वरः सर्वभूतानां हृद्देशेऽर्जुन ! तिष्ठति", "सर्वस्य चाहं हृदि संनिविष्टः" इति च । "अहमात्मा गुडाकेश ! सर्वभूताशयस्थितः" इति च तदेवोच्यते । भूतशब्दो ह्यात्मपर्यन्त-देहवचनः। यतः सर्वेषामयमात्मा, तत एव सर्वेषां तच्छरीरतया पृथगवस्थानं प्रतिषिध्यते, "न तदस्ति विना यत् स्यात्" इति। भगवद्विभूत्युपसंहारश्चायमिति तथैवाभ्युपगन्तव्यम् । तत इदमुच्यते—

"यद्यत् विभूतिमत् सत्त्वं श्रीमदूर्जितमेव वा । तत्तदेवावगच्छ त्वं मम तेजोंशसंभवम् ॥

विष्टभ्याहमिदं कृत्स्नमेकांशेन स्थितो जगत्" इति ।

अतः शास्त्रेषु न निर्विशेषवस्तुप्रतिपादनमस्ति; नाप्यर्थजातस्य भ्रान्तत्वप्रतिपादनम्; नापि चिदचिदीश्वराणां स्वरूपभेदनिषेधः ॥

(इति महासिद्धान्ते निर्विशेषब्रह्मनिराकरणम्)

---

अथाद्वैतपरत्वेन परोक्तं भगवद्गीतावचनं व्याचष्टे क्षेत्रज्ञं चापीति । पराभिमतार्थस्य पूर्वापरविरोधं दर्शयति अन्यथेति । न केवलम् 'उत्तमः पुरुषस्त्वन्यः' इति भेदप्रतिपादनात् तद्विरोधेन स्वरूपैक्यपरत्वाभावः, सामानाधिकरण्योपपादकमन्तर्यामित्वं कण्ठोक्तमपीत्याह अन्तर्यामीति । "ईश्वरः सर्वभूतानां हृद्देशेऽर्जुन! तिष्ठति" इत्यत्र भूतशब्दस्यात्मपर्यन्तदेहपरत्वम् 'भ्रामयन् सर्वभूतानि' इति अस्योत्तरार्धेनावगम्यते; 'न हिंस्यात् सर्वा भूतानि' इत्यादिप्रयोगाच्च । "सर्वस्य चाहं हृदि संनिविष्टः" इत्यत्रापि सर्वशब्दस्यात्मपर्यन्तत्वं "मत्तः स्मृतिर्ज्ञानमपोहनं च" इत्यनेनावगम्यते । हृद्देशे — हृद्देशस्थे आत्मनीत्यर्थः । 'सर्वस्य चाहं हृदि' इत्यपि तथा । 'अहमात्मा गुडाकेश' इत्यत्राप्यन्तर्यामित्वपरतामाह अहमिति । कुत इत्यत्राह भूतशब्दो हीति । पूर्वदर्शितसर्वशब्दैकार्थ्याच्चेति भावः । अन्वयरूपेणोक्तस्य सर्वेषां भगवदात्मकत्वस्य शेषभूतोऽयं 'न तदस्ती'ति व्यतिरेकनिर्देशस्तदनुगुण एवेत्यभिप्रायेणाह यतः सर्वेषामिति । अविनाभावशब्दस्य संबन्धनियमवाचित्वादिति भावः । हेत्वन्तरश्चाह भगवदिति । "एतां विभूतिं योगं च" इति प्रक्रमात् विभूतिपरत्वमवगम्यते । अतः उपक्रमानुगुण एव उपसंहार इत्यर्थः । न हि विभूतित्वं विधाय तदेव निषेद्धुं शक्यमिति भावः । प्रकरणस्य विभूतिपरत्वं दर्शयति यद्यदिति । विभूतिमत्—नियाम्यवत् । श्रीमत् —भोग्यसमृद्धिमत् । ऊर्जितम्—बलवत्; कल्याणगुणारम्भेषु उद्युक्तम् । तेजः—पराभिभवनसामर्थ्यम्—प्रशासनम् । तेजोंशसंभवम्—नियमनशक्तिमदाज्ञालवाधीन-मित्यर्थः । शास्त्रस्य परोक्तार्थपरत्वाभावमुपसंहरति अत इति । अतः—श्रुतियोजनाप्रभृति प्रतिपादितैर्न्यायैरित्यर्थः । भ्रान्तत्वं भ्रान्तिसिद्धत्वम् । जगद्ब्रह्मणोरेकद्रव्यत्वपक्षे ब्रह्मणः सविशेषत्वं जगत्सत्यत्वञ्चोपपन्नमिति शंकायां तद्व्युदासार्थमाह नापीति । चेतनेष्वचिद्धर्मबुद्धिः, परतन्त्रेषु स्वतन्त्रबुद्धिश्च भ्रमः; न तु स्वरूपभेदधीरित्यभिप्रायेण न स्वरूपभेदनिषेध इत्युक्तम् । अथवा मृषावादिनमेवोद्दिश्य जीवपरयो स्वरूपभेदनिषेधाभावमाह नापीति । अचिदुपादानं दृष्टान्ततया ॥

## महासिद्धान्ते अविद्याभङ्गभाग उत्तरः

यदप्युच्यते — निर्विशेषे स्वयम्प्रकाशे वस्तुनि दोषपरिकल्पितमीशे(श्वरे)शितव्याद्यनन्तविकल्पं सर्वं जगत्। दोषश्च स्वरूपतिरोधान-विविधविचित्रविक्षेपकरी सदसदनिर्वचनीयाऽनाद्यविद्या। सा चावश्याभ्युपगमनीया, "अनृतेन हि प्रत्यूढाः" इत्यादिभिः श्रुतिभिः, ब्रह्मणः तत्त्वमस्यादिवाक्य-सामानाधिकरण्यावगतजीवैक्यानुपपत्त्या च। सा तु न सती; भ्रान्तिबाधयोरयोगात्। नाप्यसती; ख्यातिबाधयोश्चायोगात्। अतः कोटिद्वयविनिर्मुक्तेयमविद्येति तत्त्वविद इति।

तदयुक्तम्;—सा हि किमाश्रित्य भ्रमं जनयति? न तावत् जीवमाश्रित्य, अविद्यापरिकल्पितत्वाज्जीवभावस्य। नापि ब्रह्माश्रित्य; तस्य स्व[यं]प्रकाशज्ञानस्वरूपत्वे ऽविद्याविरोधित्वात्। सा हि ज्ञानबाध्याऽभिमता—

"ज्ञानरूपं परं ब्रह्म तन्निवर्त्यं मृषात्मकम्। अज्ञानं चेत् तिरस्कुर्यात् कः प्रभुस्तन्निवर्तने॥
ज्ञानं ब्रह्मेति चेत् ज्ञानमज्ञानस्य निवर्तकम्। ब्रह्मवत् तत्प्रकाशत्वात् तदपि ह्यनिवर्तकम्॥
ज्ञानं ब्रह्मेति विज्ञानमस्ति चेत्, स्यात् प्रमेयता। ब्रह्मणोऽननुभूतित्वं त्वदुक्त्यैव प्रसज्यते॥"

---

अथाविद्यां दूषयितुं तद्विषये परोक्तमर्थमनुवदति। **यदपीति**। निर्विशेषस्य कथं भ्रमसंभव इत्यत्राह **दोषेति**। ब्रह्मव्यतिरिक्तदोषोऽस्ति चेत्, अद्वैतहानिरित्यत्राह **दोषश्चेति**। अस्मिन्नर्थे परोक्ताः श्रुतिस्मृत्यर्थापत्तीर्दर्शयति **अनृतेनेति**। सदसद्विलक्षणत्वमुपपादयति **सा त्विति**। **भ्रान्तिबाधयोरयोगात्**— भ्रान्तिविषयत्वबाधविषयत्वयोरयोगात्। प्रमितिभ्रान्तिबाधान्यथानुपपत्त्या सदसदनिर्वचनीयत्वमित्यर्थः। 'राद्धाव एवं भवतो मयोक्तः' इतिवत्, न परमतमिति दर्शयितुं **तत्त्वविद** इत्युक्तम्।

दूषयति **तदयुक्तमिति**। आश्रयानुपपत्ति-तिरोधानानुपपत्ति-स्वरूपानुपपत्ति-अनिर्वचनीयत्वानुपपत्ति-प्रमाणानुपपत्ति-निवर्तकानुपपत्ति-निवृत्त्यनुपपत्तिभिर्दूषयिष्यन् प्रथममाश्रयानुपपत्तिमाह **सा हीति**। **किमाश्रित्य**। न किञ्चिदपीत्यर्थः। किं जीवमाश्रित्य, उत ब्रह्म इति विकल्पाभिप्रायेणाह **न तावदिति**। जीवे सिद्धे अविद्यासिद्धिः, अविद्यासिद्धौ जीवसिद्धिरित्यन्योन्याश्रय इत्यर्थः। जीवाज्ञानवादनिरासः उत्तरत्र विस्तरेण वक्ष्यत इति अत्र संक्षेपः। अथ ब्रह्माश्रयत्वपक्षं दूषयति **नापीति**। विरोधित्वं कथमित्यत्राह **सा हीति**। ब्रह्मविषयाज्ञानस्य तत्प्रकाशबाध्यत्वात् विरोधः।

अत्र **नाथमुनिभिरुक्तान्** श्लोकानाह **ज्ञानरूपमिति**। स्वप्रकाशत्वं विवक्षितम्। ज्ञाननिवर्त्यत्वे हेतुमाह **मृषात्मकमिति**। न हि स्वरूपज्ञानमज्ञानविरोधि, अपि तु प्रमाणज्ञानमेवेति पक्षमनूद्य दूषयति **ज्ञानमिति**। **ब्रह्मवत् तत्प्रकाशत्वात्**— स्वरूपानतिरिक्तप्रकाशत्वादित्यर्थः। न हि शुक्लभास्वरद्रव्ये गृहीते, आप्तवाक्यादिभिः शुक्लभास्वरद्रव्यमित्येतावति शतशः प्रतिपन्नेऽपि भ्रमनिवृत्तिः। दूषणान्तरञ्चाह **ज्ञानमिति**। ततः किमित्यत्राह **ब्रह्मण** इति। एषु श्लोकेषु प्रथमश्लोकस्यार्थः पूर्वं

**ज्ञानस्वरूपं ब्रह्मेति ज्ञानं तस्या अविद्याया बाधकम् ; न स्वरूपभूतं ज्ञानमिति चेत्—न ; उभयोरपि ब्रह्मस्वरूपप्रकाशत्वे सति अन्यतरस्याविरोधित्वमन्यतरस्य नेति विशेषानवगमात् ।**

**एतदुक्तं भवति—ज्ञानस्वरूपं ब्रह्मेत्यनेन ज्ञानेन ब्रह्मणि यः स्वभावोऽवगम्यते ; स ब्रह्मणः स्वयम्प्रकाशत्वेन स्वयमेव प्रकाशत इति अविद्याविरोधित्वे न कश्चिद्विशेषः स्वरूपतद्विषयज्ञानयोरिति ।**

**किञ्च अनुभवस्वरूपस्य ब्रह्मणोऽनुभवान्तराननुभाव्यत्वेन भवतो न तद्विषयं ज्ञानमस्ति । अतो ज्ञानमज्ञानविरोधि चेत्, स्वयमेव विरोधि भवतीति नास्या ब्रह्माश्रयत्वसंभवः। शुक्त्यादयस्तु स्वयाथात्म्यप्रकाशे स्वयमसमर्थाः स्वाज्ञानाविरोधिनः, तन्निवर्तने च ज्ञानान्तरमपेक्षन्ते । ब्रह्म तु स्वानुभवसिद्धस्वयाथात्म्यमिति स्वाज्ञानविरोध्येव, तत एव निवर्तकान्तरं च नापेक्षते ॥**

---

**ज्ञानबाध्याभिमते**त्यन्तेन भाष्येणोक्तः । द्वितीयश्लोकं व्याचष्टे **ज्ञानस्वरूप**मिति । **ब्रह्मस्वरूपप्रकाशत्वे सति**—स्वरूपविषयज्ञानत्वे सतीत्यर्थः । **विशेषानवगमात्**—विषयवैषम्याभावादित्यर्थः ॥ कथं विशेषानवगमः ; प्रमाणजन्यत्वं विशेषोऽस्तीति चेत्—किं तेन ? विषयवैषम्यं हि न विद्यते । किं स्वरूपभूतज्ञाननिवर्तकज्ञानस्य विषयवैषम्यम् ? अस्ति वा । न वा । अस्ति चेत्—सविशेषत्वम् । नो चेत्—स्वरूपमेव निवर्तकं स्यात् । प्रमाणजन्यज्ञानमनिवर्तकं वा स्यात्, पुरोऽवस्थितभास्वरवस्तुविषयज्ञानवत् । प्रमाणजन्यज्ञानत्वं न निवर्तकत्वे प्रयोजकम् ; इदं शुक्लभास्वरद्रव्यमिति वाक्यजन्यस्य ज्ञानस्य निवर्तकत्वाभावात् । तस्मात् भ्रमसहकारादतिरिक्ताकारविषयत्वं निवर्तकत्वे प्रयोजकम् ॥

ननु विषयवैषम्याभावेऽपि कस्यचित् ज्ञानस्य भ्रमाविरोधित्वं कस्यचिद्भ्रमविरोधित्वं च दृष्टमभिज्ञाप्रत्यभिज्ञयोः । अयमेको देवदत्त इत्यभिज्ञाया एकविषयत्वेऽपि, पूर्वदृष्टादयमन्य इति पुरुषद्वित्वभ्रमो दृष्टः ; प्रत्यभिज्ञायास्तु सोऽयमेको देवदत्त इति देवदत्तैक्यविषयत्वेऽपि द्वित्वविरोधित्वं दृष्टम्—इति विषयवैषम्याभावेऽपि प्रमाणज्ञानस्य भ्रमनिवर्तकत्वं युक्तमिति शङ्कायामाह **एतदुक्त**मिति । सत्यत्वज्ञानत्वादिस्वभावोऽस्तीति चेत्—स च स्वरूपानतिरिक्त इति दर्शयितुं **स्वभाव**शब्दः । अनेनाभिज्ञाप्रत्यभिज्ञयोरपि विषयवैषम्यमुक्तं भवति । अभिज्ञायामेकस्य धर्मिण एकदेशकालसंबन्धित्वं प्रतिपन्नम्, न तु कालद्वयदेशद्वयसंबन्धित्वम् । तत्तु प्रत्यभिज्ञायां प्रतिपन्नम् । एकदेशकालसंबन्धित्वप्रतीतिर्न द्वित्वविरोधिनी । एकस्य धर्मिणः कालद्वयदेशद्वयसंबन्धित्वं द्वैविध्यम् । तत्तु द्वित्वविरोधीति तत्प्रतिपत्तिर्द्वित्वभ्रमं निवर्तयति । अतस्तत्रापि विषयवैषम्यमस्तीति फलितम् ।

अथ तृतीयश्लोकार्थस्य विपर्यये पर्यवसानमाह **किञ्चे**ति । प्रमाणज्ञानत्वं निवर्तकत्वव्यापकम् । अतोऽधिष्ठानभूतब्रह्मस्वरूपस्य प्रमाणज्ञानत्वाभावान्न भ्रमनिवर्तकत्वम् । अधिष्ठानत्वात् शुक्त्यादिवत् ब्रह्मस्वरूपं न भ्रमविरोधीति प्रमाणान्तरज्ञानमपेक्षत इति शङ्कायामाह **शुक्त्यादयस्त्वि**ति । अधिष्ठानत्वस्य ज्ञानान्तरविषयत्वं व्यापकम् । अतो व्यापकनिवृत्त्या अधिष्ठानत्वनिवृत्तिरिति, अधिष्ठानत्वादेव ब्रह्म स्वरूपस्फुरणेऽपि प्रमाणान्तरमपेक्षेत ॥ नैवम् । जडत्वादेव हि शुक्त्यादेः स्वरूपस्फुरणेऽपि प्रमाणान्तरापेक्षा, नाधिष्ठानत्वात् । अतोऽधिष्ठानत्वं सोपाधिकम् । अत्र त्वजडत्वात् स्वरूपस्फुरणे प्रमाणान्तरापेक्षा नास्तीति चेत्—तर्हि जडत्वादेव भ्रमनिवृत्तौ शुक्त्यादेर्ज्ञानान्तरापेक्षा, नाधिष्ठानत्वात् ।

अथोच्येत—ब्रह्मव्यतिरिक्तस्य मिथ्यात्वज्ञानमज्ञानविरोधीति—न। इदं ब्रह्मव्यरितिक्तमिथ्यात्वज्ञानं किं ब्रह्मयाथात्म्याज्ञानविरोधि, उत प्रपञ्चसत्यत्वरूपाज्ञानविरोधि इति विवेचनीयम्। न तावत् ब्रह्मयाथात्म्याज्ञानविरोधि; अतद्विषयत्वात्। ज्ञानाज्ञानयोरेकविषयत्वे(त्वेन) हि विरोधः। प्रपञ्चमिथ्यात्वज्ञानं तत्सत्यत्वरूपाज्ञानेन विरुध्यते। तेन प्रपञ्चसत्यत्वरूपाज्ञानमेव बाधितमिति ब्रह्मस्वरूपाज्ञानं तिष्ठत्येव॥ ब्रह्मस्वरूपाज्ञानं नाम तस्य सद्वितीयत्वमेव। तत्तु तद्व्यतिरिक्तस्य मिथ्यात्वज्ञानेन निवृत्तम्। स्वरूपं तु स्वानुभवसिद्धमिति चेत्—न; ब्रह्मणोऽद्वितीयत्वं स्वरूपं स्वानुभवसिद्धमिति तद्विरोधि सद्वितीयत्वरूपाज्ञानं तद्बाधश्च न स्याताम्। अद्वितीयत्वं धर्म इति चेत्-न; अनुभवस्वरूपस्य ब्रह्मणोनुभाव्यधर्मविरहस्य भवतैव प्रतिपादितत्वात्। अतो ज्ञानरूपस्य ब्रह्मणो विरोधादेव नाज्ञानाश्रयत्वम्॥

किञ्चाविद्यया प्रकाशैकस्वरूपं ब्रह्म तिरोहितमिति वदता स्वरूपनाश एवोक्तस्स्यात्। प्रकाशतिरोधानं नाम प्रकाशोत्पत्तिप्रतिबन्धः, विद्यमानस्य विनाशो वा। प्रकाशस्यानुत्पाद्यत्वाभ्युपगमेन प्रकाशतिरोधानं प्रकाशनाश एव॥ —×—

---

अतस्तत् सोपाधिकम्। तस्मादजडे तु प्रमाणान्तरापेक्षा भ्रमनिवृत्तौ च न स्यादित्यभिप्रायः। **शुक्त्यादयस्त्वि**त्यत्र **तु**शब्दो ब्रह्मणः शुक्त्यादिव्यावृत्तिपरः।

द्वयी **ह्यद्वैतिनां** गतिः—ब्रह्मविषयप्रमाणज्ञानं भ्रमनिवर्तकम्, प्रपञ्चमिथ्यात्वविषयज्ञानं भ्रमनिवर्तकमिति च। तत्र प्रथमपक्षो दूषितः। अथ द्वितीयपक्षं दूषयितुं शङ्कते **अथोच्येते**ति। दूषयति **नेत्यादिना**। **इदमि**ति॥ ननु कथं प्रपञ्चसत्यत्वमज्ञानमित्युच्यते? अज्ञानं हि ज्ञानप्रतिबन्धकम्। न हि प्रपञ्चसत्यत्वं कस्यचित् ज्ञानं प्रतिबध्नाति॥ सत्यम्; आच्छादकाज्ञानमेवम्भूतम्। प्रपञ्चसत्यत्वं तत्प्रतिभासश्च विक्षेपरूपाज्ञानमिति **पराभ्युपगमादेवमुक्तम्**। प्रथमं शिरो दूषयति **अतदि**ति। कथमतद्विषयत्वात् ब्रह्मस्वरूपाज्ञानाविरोधित्वमित्यत्राह **ज्ञानाज्ञानयो**रिति। विरोधे हि निवृत्तिरित्यर्थः। द्वितीयं शिरो दूषयति **प्रपञ्चे**ति। प्रपञ्चमिथ्यात्वज्ञानेन ब्रह्मस्वरूपाज्ञाननिवृत्तेः फलितत्वमाशङ्कते **ब्रह्मस्वरूपे**ति। **सद्वितीयत्वम्**—सद्वितीयत्वज्ञानमित्यर्थः। न हि सत्तया सद्वितीयत्वं ब्रह्मस्वरूपाज्ञानं भवति, अपारमार्थ्यात्। सद्वितीयत्वविशिष्टब्रह्मगोचराज्ञाने निवृत्ते विशेष्यांशगोचरमपि ज्ञानं निवृत्तमिति स्वरूपसिद्धिः कथमित्यत्राह **स्वरूपं त्वि**ति। दूषयति **ने**ति। अद्वितीयत्वं किं स्वरूपम्, उत धर्मः इति विकल्पाभिप्रायेण प्रथमं स्वरूपपक्षं दूषयति **ने**ति। धर्मपक्षे अपसिद्धान्तमाह **अद्वितीयत्वमि**ति। आश्रयानुपपत्तिं निगमयति **अत** इति। **विरोधादेव**—पूर्वोक्तादेवेत्यर्थः। **एवमाश्रयानुपपत्तिरुक्ता**॥

अथ **तिरोधानानुपपत्ति**माह **किञ्चे**ति। ननु भवत्पक्षेऽपि क्षेत्रज्ञानां नित्यं स्फुरणमस्ति। तथापि तेषां स्वरूपतिरोधानेन विना न देहात्मभ्रम इति तुल्या अनुपपत्तिः॥ सत्यम्। स्वरूपस्फुरणमस्त्येव। न तस्य तिरोधानमभ्युपगम्यते। न च स्वरूपस्फुरणं भ्रमविरोधि; किं तु नित्यत्वाणुत्वनिरवयवत्वादीन्येव भ्रमविरोधीनि। तान्यागमगम्यानि। तेषां तिरोधिः तद्विषयज्ञानप्रसराभावरूपः सङ्कोचः। अतः स्वरूपातिरिक्ताकारान्तरतिरोधानाभ्युपगमात् 'नाऽऽत्मनो नाशप्रसङ्गः॥ ज्ञानस्यात्मासाधारणाकारस्य स्फुरणाद्भ्रमानुपपत्तिरिति' चेन्न; तस्यासाधारणत्वास्फुरणात्। असाधारणतया

अपिच—निर्विषया निराश्रया स्वप्रकाशेयमनुभूतिः स्वाश्रयदोषवशादनन्ताश्रयमनन्तविषयमात्मानमनुभवतीत्यत्र किमयं स्वाश्रयदोषः परमार्थभूतः, उतापरमार्थभूत इति विवेचनीयम् । न तावत् परमार्थः ; अनभ्युपगमात् । नाप्यपरमार्थः, तथा सति हि द्रष्टृत्वेन वा दृश्यत्वेन वा दृशित्वेन वाऽभ्युपगमनीयः । न तावद्दृशिः ; दृशिस्वरूपभेदानभ्युपगमात् । भ्रमाधिष्ठानभूतायास्तु साक्षाद्दृशेर्माध्यमिकपक्षप्रसङ्गेनापारमार्थ्यानभ्युपगमाच्च । द्रष्टृदृश्ययोस्तदवच्छिन्नाया दृशेश्च काल्पनिकत्वेन मूलदोषान्तरापेक्षयाऽनवस्था स्यात् । अथैतत्परिजिहीर्षया परमार्थसती अनुभूतिरेव ब्रह्मरूपा दोष इति चेत्—ब्रह्मैव चेद्दोषः, प्रपञ्चदर्शनस्यैव तत् मूलं स्यात् ; किं प्रपञ्च-

---

स्फुरतो हि धर्मस्य भ्रमविरोधित्वं दृष्टम् । यथा शुक्तित्वादेः । शुक्तित्वं हि शुक्त्यसाधारणतया पूर्वं ज्ञातं पश्चात् भ्रमं निवर्तयति । न तावत् ज्ञानं देहातिरिक्तात्मासाधारणधर्मत्वेन क्वचिद्दृष्टचरम् । अतो भ्रमः संभवति । आत्मासाधारणधर्मत्वादर्शनादध्यासः, अध्यासादसाधारणधर्मत्वाग्रहणमित्यन्योन्याश्रयोऽनादितया परिहृतः ॥ धर्मभूतज्ञानस्य नित्यत्वं तिरोधानं च भवद्भिरभ्युपगम्यते, तदा ज्ञाननाशप्रसङ्ग इति चेन्न । ज्ञानं हि द्रव्यम् । तस्य स्वरूपातिरेकेण सङ्कोचविकासात्मकमवस्थाद्वयमभ्युपेतम् । अतस्तत्तिरोधानं कर्मणा तत्सङ्कोचः । तन्निवृत्तिस्तु प्रसरः । स एव प्रकाशः । स चानित्यः । तस्यानित्यत्वेऽपि नित्यस्य ज्ञानद्रव्यस्य स्वप्रकाशत्ववादः स्वप्रकाशनरूपप्रसरणार्हत्वनिबन्धनः । अतोऽवस्थाद्वयस्याऽऽगमापायित्वात् द्रव्यं नित्यमेव । अस्मदवस्थास्थानीयो हि भवतः प्रकाशः । स एव स्वरूपम् । तस्मात् तिरोधानं तन्निवृत्तिरेव—इतीममर्थमभिप्रेत्य **प्रकाशैकस्वरूपं** ब्रह्मेत्युक्तम् । अतः स्वरूपातिरेकिप्रकाशतिरोधानाख्यावस्थाद्वयानभ्युपगमात् स्वरूपनाश एव तिरोधानं स्यादित्यर्थः ॥

अथ **स्वरूपानुपपत्तिमाह अपिचेति** । ज्ञातृत्वादीनामपरमार्थतया हि दोषान्तरापेक्षा ॥ तद्वदिहापीति दृष्टान्ततया वक्ष्यमाणानवस्थोपयोगित्वेन **निर्विषयेत्यादि**परिपाटीप्रकटनं कृतम् । यद्वा विषयाश्रयभेदानामसत्त्वप्रतिभासयोरुक्तिर्दोषकल्पनाकारणत्वेन कृता । **अनभ्युपगमा**दिति । परमार्थत्वे ह्यद्वैतहानिप्रसङ्ग इति भावः । अपरमार्थपक्षं दूषयितुं कोटित्रयमेव संभावितमित्याह **तथासती**ति । अपरमार्थत्वात् मूलदोषान्तरापेक्षयाऽनवस्थेति दूषणं कोटित्रयस्यापि साधारणम् । दृशित्वपक्षे अधिकं दूषणमस्तीति दर्शयति **न तावदि**ति । किमनवच्छिन्ना दृशिः, उतावच्छिन्ना ? दृशेरनवच्छिन्नत्वे किं स्वरूपातिरिक्ता, उत स्वरूपमेवेति विकल्पमभिप्रेत्य, अनवच्छिन्नपक्षे स्वरूपातिरिक्तपक्षं दूषयति **दृशिस्वरूपभेदानभ्युपगमा**दिति । अनवच्छिन्नदृशिद्वयानभ्युपगमादित्यर्थः । अनवच्छिन्नपक्षे स्वरूपदृशिपक्षं दूषयति **भ्रमे**ति । अवच्छिन्नदृशिदूषणत्वेन वक्ष्यमाणानवस्था अनवच्छिन्नपक्षेऽपि समाना ; अत्राधिकदूषणद्वयसद्भावात् सा नोक्ता । अवच्छिन्नदृशित्वेन द्रष्टृत्वेन दृश्यत्वेन चाभ्युपगमं दूषयति **द्रष्टृदृश्ययो**रिति । **काल्पनिकत्वेन**—अपरमार्थत्वेनेत्यर्थः । दोषान्तरापेक्षाहेतुरिदं काल्पनिकत्वम् । अवच्छिन्नदृशिपक्षेऽपि स्वरूपतद्व्यतिरिक्तविकल्पे स्वरूपपक्षेपि तुल्यमनभ्युपगमदूषणम् ; ब्रह्मस्वरूपस्यावच्छिन्नत्वापारमार्थ्यानभ्युपगमात् । अतोऽवच्छिन्नपक्षे न विकल्पितम् ; स्वरूपातिरिक्तपक्षेऽनवस्थोक्ता । **अथैत**दिति । अपरमार्थत्वेऽनवस्था, परमार्थत्वे अद्वैतहानिरित्येतद्दोषपरिजिहीर्षयेत्यर्थः । अनुभूतेरेव दोषत्वान्नाद्वैतहानिः, तस्याः पारमार्थ्यात् नानवस्थेति च भावः । एतद्दूषयति **ब्रह्मैवे**ति । अपारमार्थ्याद्दोषान्तरसापेक्षत्वसाम्य-

तुल्याविद्यान्तरपरिकल्पनेन? ब्रह्मणो दोषत्वे सति तस्य नित्यत्वेनानिर्मोक्षश्च स्यात्। अतो यावत् ब्रह्मव्यतिरिक्तपारमार्थिकदोषानभ्युपगमः, न तावत् भ्रान्तिरुपपादिता भवति॥

---

मभिप्रेत्य प्रपञ्चतुल्यशब्द उक्तः। अतः—प्रतिशिरोऽभिहितैर्दूषणैरित्यर्थः। अनिर्मोक्षप्रसङ्गपरिहाराय ब्रह्मव्यतिरिक्तत्वम्, अनवस्थापरिहाराय पारमार्थिकत्वम्।

परैरनवस्था त्रि[1]धा परिहृता। जीवाज्ञानवादिना बीजाङ्कुरन्यायात् प्रवाहानादित्वेन परिहृता; अविद्यया जीवः जीवादविद्येति हि तन्मतम्। ब्रह्माज्ञानवादिना स्वरूपानादित्वेन परिहृता। उभाभ्यां च दुर्घटत्वेन परिहृता—दुर्घटत्वमविद्याया भूषणम्, न तु दूषणमिति। परमार्थस्य ह्युपपत्त्यपेक्षा। प्रासादनिगरणादिष्वल्पास्येन विपुलप्रासादनिगरणमनुपपन्नमिति युक्तिर्न प्रवर्तते। अत उपपत्तिनिरपेक्षत्वमपारमार्थ्यसाधकम्। दोषस्य स्वपरनिर्वाहकत्वेन दोषान्तरनैरपेक्ष्याच्च नानवस्थेति॥

अत्रोच्यते—प्रवाहानादित्वं ब्रह्माज्ञानवादिनैव दत्तोत्तरम्, जीवनित्यत्वश्रुतिभिरकृताभ्यागमकृतविप्रणाशादिरूपश्रुतार्थापत्त्या च आमोक्षाज्जीवस्य स्थायित्वमिष्टं हीयेतेति। अपारमार्थ्ये स्वरूपानादित्वमपि नानवस्थापरिहारः; तथासति माध्यमिकपक्षविजयप्रसङ्गात्। तत्र, 'अधिष्ठानस्य भ्रान्तिसिद्धत्वे तस्याः भ्रान्तेरधिष्ठानान्तरापेक्षा स्यात्, तस्यापि भ्रान्तिसिद्धत्वे अनवस्था स्यात्' इत्यनवस्थया ह्यधिष्ठानपारमार्थ्यं साधितम्। माध्यमिकेनापरमार्थाधिष्ठानस्य स्वरूपानादित्वे स्वीकृते अनवस्था परिहृतेत्यधिष्ठानापारमार्थ्यमेव स्यात्। किञ्च स्वरूपानादित्वेऽपि मूलदोषापेक्षाऽस्त्येव, जीवस्यानादित्वेऽप्यविद्यापरिकल्पितत्वस्य भवद्भिरङ्गीकृतत्वात्।

दुर्घटत्वं चानुपपन्नम्। दुर्घटत्वं नाम उपपत्तिनिरपेक्षत्वम्। तत् अपारमार्थ्यसाधकं चेत्—अपरमार्थस्य प्रपञ्चस्य दुर्घटत्वेनोपपत्तिनिरपेक्षत्वान्मूलदोषापेक्षा च न स्यात्। निवर्तकज्ञाने सत्यपि साऽवतिष्ठेत॥ विरोधान्न तिष्ठतीति चेत्; तर्ह्युपपत्त्यनुवर्तिन्यविद्या स्यादिति॥ परमार्थत्वप्रयुक्तोपपत्तिरपरमार्थत्वप्रयुक्तोपपत्तिरिति द्विविधा उपपत्तिः; तत्र दुर्घटत्वं नाम परमार्थत्वप्रयुक्तोपपत्तिनिरपेक्षत्वम्; अपरमार्थत्वप्रयुक्तोपपत्तिर्हि दोषापेक्षा; अतः प्रपञ्चस्य मूलदोषपरिकल्पनं युक्तमिति चेत्—तर्ह्यपरमार्थत्वप्रयुक्तोपपत्तिरूपदोषापेक्षा अपरमार्थभूतदोषस्यापि स्यात्। ततोऽनवस्था तदवस्थैव। दुर्घटत्वमनवस्थापरिहारश्चेत्—अधिष्ठानापारमार्थ्येऽप्यनवस्था परिहृता स्यात्। तत्रापारमार्थ्यप्रयुक्तोपपत्तिरवर्जनीयेति अधिष्ठानापेक्षा स्यादेवेत्यनवस्थितिरिति वक्तव्यम्। तदत्र दोषेऽपि तुल्यमित्यनवस्था दुष्परिहरा। प्रवाहानादित्वपक्षेऽप्यधिष्ठानापारमार्थ्येऽप्यनवस्था सुपरिहरा; पितृपुत्रादिपरम्परावदधिष्ठानपरम्परानादित्वाभ्युपगमात्।

जीवाज्ञानवादिनं प्रति ब्रह्माज्ञानवादिना यत् दुर्घटत्वे दूषणमुक्तम्, तद् ब्रह्माज्ञानवादेऽपि तुल्यम्। यथा—अविद्याया दुर्घटत्वं चेत्—मुक्तान् परं ब्रह्म चाश्रयेदविद्या॥ शुद्धस्वरूपं ब्रह्म अशुद्धस्वरूपा अविद्या विरोधान्नाश्रयतीति चेत्—तर्ह्युपपत्तिमती अविद्या। तस्मादुक्तान्योन्याश्रयणादिदूषणानि आपतेयुरिति ह्युक्तम्। तत् तवापि तुल्यम्। मोक्षेऽपि ब्रह्माश्रयेदविद्या। न हि

---

[1] त्रिधा—स्वरूपानादित्वप्रवाहानादित्वान्यतररूपमनादित्वं, दुर्घटत्वं, स्वपरनिर्वाहकत्वञ्चेति।

**अनिर्वचनीयत्वञ्च किमभिप्रेतम्? सदसद्विलक्षणत्वमिति चेत्; तथाविधस्य वस्तुनः प्रमाणशून्यत्वेनानिर्वचनीयतैव स्यात् । एतदुक्तं भवति—सर्वं हि वस्तुजातं प्रतीतिव्यवस्थाप्यम् । सर्वा च प्रतीतिः सदसदाकारा । सदसदाकारायास्तु प्रतीतेः सदसद्विलक्षणं विषय इत्यभ्युपगम्यमाने सर्वं सर्वप्रतीतेर्विषयः स्यात्—इति ॥**

---

बाधकज्ञाने सति अपरमार्थभूता अविद्या तिष्ठतीति चेत्—बाधकसंनिधौ न बाध्यसिद्धिरित्येवंरूपोपपत्तिमत्त्येवाविद्येति अस्मदुक्तानि अनवस्थादिदूषणान्यापतेयुरिति हि वक्तुं शक्यते ॥

दोषस्य स्वपरनिर्वाहकत्वे अधिष्ठानमपि तथा स्यात् ॥ परं प्रत्यधिष्ठानत्वे सिद्धे हि स्वनिर्वाहकत्वमिति चेत्—परं प्रति दोषत्वे सिद्धे हि स्वनिर्वाहकत्वम्, तदेव नास्तीति तुल्यं स्यात् ॥ अधिष्ठानारोप्ययोर्भेदो दृष्टः । तत्राधिष्ठानस्य स्वपरनिर्वाहकत्वे अधिष्ठानाध्यस्तयोरैक्यप्रसङ्ग इति चेत्—दोषतत्कार्ययोरपि तिमिरचन्द्रद्वित्वयोर्भेदो दृष्टः । दोषस्य स्वपरनिर्वाहकत्वे दोषाध्यस्तयोरैक्यप्रसङ्ग इति तुल्यमिति । एतदभिप्रायेण **यावद्ब्रह्मव्यतिरिक्तपारमार्थिकदोषानभ्युपगमः, न तावद्भ्रान्तिरुपपादिता भवतीत्युक्तम्** । यथोक्तमाचार्यपादैः—

"स्वरूपानादित्वस्वपरघटने दुर्घटनता प्रवाहानादित्वं पुनरिति चतस्रो हि गतयः ।
असत्याविद्याया गदितुमनवस्थापरिहृतौ मतास्त्वेतास्तुल्याः स्फुटमसदधिष्ठानसरणौ ॥" इति ॥

**अथानिर्वचनीयत्वानुपपत्तिमाह** अनिर्वचनीयत्वञ्चेति । **अनिर्वचनीयता**—विद्वत्सन्निधौ दुरुपपादत्वम् । कथं प्रमाणशून्यत्वमित्यत्राह **एतदुक्तमिति । सर्वं सर्वप्रतीतेर्विषयः स्यादिति** । सदसद्विलक्षणमिति या प्रतीतिः; तत्रापि सदसदेव विषयः स्यादित्यर्थः । प्रतीत्यनुगुणं हि नीलपीतादि व्यवस्थाप्यते । तस्मात् सदसदाकारायाः प्रतीतेः सदसदाकार एव विषयः, न सदसद्विलक्षणः । यथा ख्यातिविवेके, "न ह्यन्यत् अवभास्यम्, अन्यो विषयः; अवभासनव्यवस्थाप्यत्वाद्विषयस्य" इति ॥ एकस्य विषयस्य सदसदाकारत्वमनुपपन्नम्, व्याप्तिविरोधादिति चेत्—सदसद्विलक्षणत्वं च व्याप्तिविरोधादनुपपन्नम् । सतोऽसद्विलक्षणत्वमसतस्सद्विलक्षणत्वञ्च हि दृष्टम्, न त्वेकस्योभयवैलक्षण्यं दृष्टमिति व्याप्तिविरोधः । अयं विशेषः—सदसद्विलक्षणत्वं क्वचिदपि न दृष्टम्; सदसदात्मकत्वं दृष्टमिति । यथा संवित्सिद्धौ—

"नासत् प्रतीतेर्बाधाच्च न सदित्यपि यन्न तत् । प्रतीतेरेव सत् किं न बाधान्नासत् कुतो जगत् ॥"

इति । अर्थस्थितौ सत्त्वमसत्त्वं वा स्यात्; न तद्विलक्षणत्वम् ॥ सतो घटादेः सदसद्विलक्षणत्वं दृष्टमिति चेत्--न; तथासति ब्रह्मणोऽपि सदसद्विलक्षणत्वप्रसङ्गात् ॥ अन्यतरत्वसहं सदसद्विलक्षणत्वमिष्टमेवेति चेत्—तुल्यम् । ईदृशं सदसद्वैलक्षण्यं वदता, शब्दान्तरेण सत्त्वमेवाङ्गीकृतं भवति । अतस्त्वदभिमतं सदसद्विलक्षणत्वं विरोधादपास्तम् ॥ अस्तीति प्रतिपन्नत्वं सत्त्वम्, नास्तीति धीविषयत्वं बाधितत्वमित्येकस्यैव सत्त्वासत्त्वविरोधः सदसद्विलक्षणत्वकल्पकश्चेत्—सर्वत्र पूर्वपक्षसिद्धान्तप्रतीत्योः परस्परविरुद्धाकारविषयत्वादुभयाकारविलक्षण एवार्थः साध्यत इति सिद्धान्तसमर्थनवैयर्थ्यं स्यात् । तत्तथा भेदः सुनिरूप इति पूर्वपक्षीकृत्य दुर्निरूप इति त्वया सिद्धान्तिते प्रतीतिद्वयविरोधात्

**अथ स्यात्—वस्तुस्वरूपतिरोधानकरमान्तरबाह्यरूपविविधाध्यासोपादानं सदसदनिर्वचनीयमविद्याऽज्ञानादिपदवाच्यं वस्तुयाथात्म्यज्ञाननिवर्त्यं ज्ञानप्रागभावातिरेकेण भावरूपमेव किञ्चिद्वस्तु प्रत्यक्षानुमानाभ्यां प्रतीयते । तदुपहितब्रह्मोपादानश्च अविकारे स्वप्रकाशचिन्मात्रवपुषि**

---

सुनिरूपदुर्निरूपविलक्षणः स्यात् । एवं संवित्सत्यत्वमिथ्यात्वजडत्वाजडत्वनित्यत्वानित्यत्वादिवादेषु पूर्वपक्षसिद्धान्ताकारविलक्षणत्वं संविदः स्यात् । तच्चानभिमतम् । अतः परस्परविरुद्धाकारप्रतीत्योः प्रतिपन्नाकारवैलक्षण्यकल्पकत्वं व्याप्तिविरुद्धमिति न सदसद्वैलक्षण्यसिद्धिः ॥

तर्हि ख्यातिबाधान्यथानुपपत्तेः कः परिहार उक्त इति चेत्—अन्यथैवोपपत्तिरुक्ता भवति; सत्त्वे सति **अन्यथाख्यानादिभि**स्तत्तद्वाद्यभिमतैरेव ख्यातिबाधोपपत्तेः ॥ सतः कथं बाधः ॥ अन्यत्र[1] ख्यातत्वाद् ॥ नन्वन्यत्र सच्चेत्, न बाधः; न सच्चेत्, असत्ख्यातिप्रसङ्ग इति चेन्न—अन्यत्र सत्त्वात् । अन्यत्र सतोऽन्यत्र ख्यातत्वं ह्यन्यथाख्यातत्वम् । अन्यत्र सतोऽन्यत्र ख्यातिर्दोषवशात् ॥ दोषस्यान्यत्र ख्यातिहेतुत्वं न दृष्टमिति चेत्—दोषस्यानिर्वचनीया(यतया)वभासहेतुत्वं च न क्वचिद्भिमतिपदादन्यत्र दृष्टमिति तुल्यम् । मिथो विरुद्धप्रतिपन्नाकारद्वयवैलक्षण्यमेकस्याविरुद्धमित्येतत् त्वाधिकम् । **अख्यातिपक्षे** सत्त्वे सति भेदाग्रहेण ख्यातिबाधोपपत्तिः । [2]सत एवागृहीतभेदतया ख्यातिः । भेदग्रहश्च बाधः । बाध्यत्वं च प्रवृत्तेः । **यथार्थख्यातिपक्षे** तु शुक्तिरजतस्याप्यार्थादौ सत्त्वात् प्राचुर्याभावात् स्थिरत्वतदेकानुभाव्यत्वाग्रहाच्च ख्यातिबाधोपपत्तिः । पुरोवर्तिनि सत एव रजतस्य ख्यातिः । शुक्तिप्राचुर्यग्रहो बाधः । तेन प्रवृत्तिर्बाध्या । तद्बाधश्च प्रवृत्त्यनुपपत्तिः । [3]अलातचक्रादौ तु अख्यातिपक्ष इव तदुपपत्तिः । अतोऽन्यथैवोपपत्तिः सिद्धेत्यनिर्वचनीयत्वकल्पनमयुक्तम् ।

एवमाश्रयतिरोधानस्वरूपानिर्वचनीयत्वानुपपत्तय उक्ताः । अथ 'न हि दृष्टेऽनुपपन्नं नाम' इति न्यायात् प्रमाणसिद्धार्थस्य तर्केण बाधो न युक्त इत्यभिप्रायवता परेण प्रमाणप्रतिज्ञा शङ्क्यते । **अथ स्या**दिति । पूर्वदूषिताकारान् साधयितुमाह **वस्तुस्वरूपे**ति । अनेन तिरोधानमुक्तम् । **आन्तरबाह्ये**ति स्वरूपमुक्तम् । अध्यासोपादानत्वेन हि मिथ्यात्वं फलितम् । **सदसदि**ति अनिर्वचनीयत्वमुक्तम् । शास्त्रेष्वेतत्प्रतिपादकशब्दप्रत्यभिज्ञानार्थम् **अविद्याज्ञानादिपदवाच्य**मित्युक्तम् । सिद्धान्तिना दूषयिष्यमाणमाकारान्तरमपि साध्यत्वेनाह **वस्तुयाथात्म्यज्ञाने**ति । तदुपहितेति आश्रयश्च । आन्तराध्यासः कः, बाह्यः कः, कथं चाविद्योपादानत्वे ब्रह्मण उपादानत्वमित्यत्राह **तदुपहिते**ति । निष्कृष्टब्रह्मण उपादानत्वानुपपत्तिं सूचयति **अविकारे स्वप्रकाशचिन्मात्रवपुषि प्रत्यगात्मनी**ति । अविकारत्वात् स्वप्रकाशत्वात् प्रत्यक्त्वाच्च विकारास्पदजडपराग्रूपपरिणामो नोपपद्यत इत्यर्थः । स्वप्रकाशस्य कथमध्याससंभव इत्यत्राह **तिरोहितस्वरूप** इति । तिरोधायकं किमित्यत्राह

---

1 अन्यत्र—तद्रहितस्थले तस्य ख्यातत्वात् बाधः इति समाधानम् ।

2 ननु पृथक्पृथक् इदमर्थग्रहे रजतप्रतीतौ च भेदाग्रहस्य कारणत्वाभावात् बाधं प्रति सुतरां तस्याकारणत्वात् कथं भेदाग्रहेणख्यातिबाधोपपत्तिरुच्यत इत्यत्राशयमाह सत एवेति । भेदाग्रहविशिष्टरजतप्रतीतिरेव ख्यातिरित्यादौ तात्पर्यम् ।

3 अलातचक्रादौ परमार्थचक्राभावेन यथार्थख्यात्यसंभवात् अख्यातिपक्ष एवेत्यर्थः ।

**तेनैव तिरोहितस्वरूपे प्रत्यगात्मनि अहङ्कारज्ञानज्ञेयविभागरूपोऽध्यासः । तस्यैवावस्थाविशेषेणाध्यासरूपे जगति ज्ञानबाध्यसर्परजतादिवस्तु-तत्तज्ज्ञानरूपाध्यासोऽपि जायते । कृत्स्नस्य मिथ्यारूपस्य तदुपादानत्वं च मिथ्याभूतमेव कारणं भवितुमर्हतीति हेतुबलादवगम्यते ॥**

कारणाज्ञानविषयं प्रत्यक्षं तावत्—अहमज्ञः मामन्यं च न जानामीत्यपरोक्षावभासः । अयं तु न ज्ञानप्रागभावविषयः । स हि षष्ठप्रमाणगोचरः; अयं तु, अहं सुखीतिवदपरोक्षः । अभावस्य प्रत्यक्ष[गोचर]त्वाभ्युपगमेऽप्ययमनुभवो नात्मनि ज्ञानाभावविषयः; अनुभववेलायामपि ज्ञानस्य विद्यमानत्वात्; अविद्यमानत्वे ज्ञानाभावप्रतीत्यनुपपत्तेश्च । एतदुक्तं भवति-अहमज्ञ इत्यस्मिन्ननुभवे अहमित्यात्मनोऽभावधर्मितया ज्ञानस्य च प्रतियोगितयाऽवगतिरस्ति वा? न वा?। अस्ति चेत्, विरोधादेव न ज्ञानाभावानुभवः संभवः । नो चेत्, धर्मिप्रतियोगिज्ञानसव्यपेक्षो ज्ञानाभावानुभवः

---

**तेनैवे**ति । **तेनैव**—अध्यासहेतुनैवेत्यर्थः । अहङ्कारोऽज्ञानं चान्तराध्यासः, ज्ञेयं बाह्याध्यासः । **अध्यासरूपे**—अध्यस्तरूपे—कर्मणि घञ्—**तस्यैव**—दोषस्यैव **अवस्थाविशेषेण**—कादाचित्कावस्थाविशेषेण रज्जुसर्पाद्यध्यासः [इत्यन्वयः?] । एवं निष्कृष्टब्रह्मण उपादानत्वानुपपत्तिरुक्ता । दोषस्योपादानत्वे उपपत्तिमाह **कृत्स्नस्ये**ति । सुवर्णजातीयस्य भूषणस्य स्वर्णमेव ह्युपादानं दृष्टम्, तद्वदिति भावः । **हेतुबलात्**—कार्यकारणयोः सजातीयत्वदर्शनलक्षणात् ॥ अथ प्रत्यक्षमाह **कारणे**ति । **अहमज्ञ** इत्यस्य विवरणम् **मामन्यं च न जानामी**ति । **अहमज्ञ** इत्यज्ञानस्वरूपकीर्तनम् । तस्य **मामन्यं च न जानामी**त्याच्छादनरूपकार्यकथनम् । **कारण**शब्देन कार्यरूपाज्ञानव्यावृत्तिः । तस्मात् सौषुप्तिकमज्ञानं विवक्षितम् । जागरितावस्थायां घटाद्यवच्छिन्नमज्ञानं प्रतीयते सविकल्पकप्रत्यक्षेण; सुषुप्तौ तु अनवच्छिन्नकारणाज्ञानप्रतीतिरिति **तत्त्वशुद्धिकारा**दिभिरुक्तम् । जागरितावस्थायामेवाज्ञानानुभवोऽयमिति **सम्प्रदायः**; **अन्यं च न जानामी**त्युक्तेः । न हि स्वापेऽन्यपरामर्शः । **न जानामी**त्याच्छादकतया प्रतीयमानस्याज्ञानस्य कारणत्वात् **कारणाज्ञानविषय**मित्युक्तम् । **अपरोक्षावभास** इति परोक्षरूपानुमानादिप्रमाणव्यावृत्त्यर्थमुक्तम् । ज्ञानप्रागभावविषयत्वमाशङ्क्य परिहरति **अयंत्वि**ति । भवत्वयमपि षष्ठप्रमाणविषय इत्याशङ्क्याह **अयं त्वि**ति । परोक्षप्रमाणानि प्रत्यक्षव्यतिरिक्तानि । तस्मात् परोक्षप्रमाणविषयः प्रागभावो नापरोक्षप्रमाणविषयभूतमज्ञानं भवितुमर्हतीत्यर्थः । भावग्राहिप्रमाणेनाभावस्य वेद्यत्वेऽपि दूषणमाह **अभावस्ये**ति । हेतुमाह **अनुभवे**ति । अभावस्यानुभववेलायां ज्ञानं विद्यते, न वा ? विद्यते चेत्, ग्राह्याभावान्नाभावप्रतीतिः । न चेत्, ग्राहकाभावान्न तदभावप्रतीतिरित्यर्थः । भावाभावयोरेकविषयत्वे हि विरोधः । अत्र विरोधो नास्ति । अभावविषयकज्ञानस्य विद्यमानस्य ग्राहकत्वात् इतरविषयज्ञानस्याभावप्रतियोगित्वेनाविद्यमानत्वादिति शङ्कां परिहरन्—अनुभववेलायां ज्ञानस्य विद्यमानत्वम्, अविद्यमानत्वे ज्ञानाभावप्रतीत्यनुपपत्तिम्, भावरूपत्वे विरोधाभावं च विवृणोति **एतदुक्तं भवती**ति । ज्ञानप्रागभावस्य ग्राह्यत्वे अनिच्छयापि भावाभावयोरेकविषयत्वमापतितमित्यभिप्रायेणाह **अह**मिति । **ज्ञानस्य चे**ति । **ज्ञान**शब्द आत्मविषयघटादिविषयज्ञानसाधारणः । इह भूतले घटो नास्तीत्यादिषु अभावग्रहणे प्रतियोगिधर्मिणोर्ज्ञानापेक्षा दृष्टा । तस्मादत्राप्यभावधर्मितया आत्मनो ज्ञानमस्तीति वक्तव्यम् ।

सुतरां न संभवति । ज्ञानाभावस्यानुमेयत्वे अभावाख्यप्रमाणविषयत्वे चेयमनुपपत्तिः समाना। अस्याज्ञानस्य भावरूपत्वे धर्मिप्रतियोगिज्ञानसद्भावेऽपि विरोधाभावादयमनुभवो भावरूपाज्ञानविषय एवाभ्युपगन्तव्यः— इति ।

ननु च भावरूपमप्यज्ञानं वस्तुयाथात्म्यावभासरूपेण साक्षिचैतन्येन विरुध्यते॥ मैवम्। साक्षिचैतन्यं न वस्तुयाथात्म्यविषयम्, अपि त्वज्ञानविषयम्; अन्यथा मिथ्यार्थावभासानुपपत्तेः। न ह्यज्ञानविषयेण ज्ञानेनाज्ञानं निवर्तत इति न विरोधः॥ ननु चेदं भावरूपमप्यज्ञानं विषय-

---

अभावव्यतिरिक्तो ह्यात्मा। अतः तद्विषयज्ञाने सत्यपि अभावव्यतिरिक्तविषयज्ञानमभावप्रतियोगी[1]ति वचनं व्याहतं स्यात् । अभावधर्मिप्रतियोगिरूपत्रितयव्यतिरिक्तविषयज्ञानमभावप्रतियोगीति चेत्—तदानीमभाव-प्रतियोगितया ज्ञानस्यापि प्रतीतिरस्तीति वक्तव्यम् । प्रतीयमानं ज्ञानं स्वविषयावच्छिन्नं प्रतीयत इति विषयाणामपि प्रतीतिरस्ति। एवमभावप्रतियोगिज्ञानावच्छेदकतया विषयेषु ज्ञायमानेषु तद्विषय-ज्ञानाभावोऽनुपपन्न इति भावः । अभावस्य प्रमाणान्तरविषयत्वेऽप्युक्तदूषणमतिदिशति **ज्ञानाभावस्येति**। प्रमाणान्तराणां विद्यमानविषयत्वनियमाभावेऽपि विद्यमानतया दर्शयितुमशक्यमिति (?) भावः। अहमज्ञ इति वर्तमानतया ह्यज्ञानं प्रतीयते । अस्मिन् पक्षे अधिकं दूषणान्तरं पूर्वमुक्तम् अपरोक्षस्य परोक्षरूपप्रमाण-विषयत्वानुपपत्तिरूपमर्थसिद्धम् । भावरूपत्वे उक्तदूषणं नास्तीत्याह **अस्येति** । धर्मिप्रतियोगिविषयज्ञानं **धर्मिप्रतियोगिज्ञानम्।** न तेन भावरूपाज्ञानस्य विरोधः, घटाच्छादकमज्ञानं घटज्ञानेन [2]हि विरुध्यते, न तु घटज्ञानविषयज्ञानेन, धर्मिज्ञानेन चेत्यर्थः ।

वस्तुयाथात्म्यज्ञाननिवर्त्यमज्ञानं वस्तुयाथात्म्यावभासरूपेण साक्षिचैतन्येन विरुध्यत इति चोदयति **ननु चेति**। परिहरति **मैवमिति**। **याथात्म्य**शब्देन निष्कृष्टमद्वितीयत्वलक्षणं स्वरूपं विवक्षितम्। प्रपञ्च-मिथ्यात्वसिद्धवत्कारेण हेतुमाह **अन्यथेति** । **अन्यथा**—स्वसाक्षिस्वरूपप्रकाशमात्रस्यैव वस्तुयाथात्म्य-विषयत्वे इत्यर्थः। [अज्ञानविषयत्वाभावे इति वा[3]] अज्ञानविषयत्वमस्तु; ततः किमित्यत्राह **नहीति**। न हि रजतविषयज्ञानेन रजतं निवर्त्यमित्यर्थः। दृश्यविशेषणस्य रूपादेरपि दृश्यत्वं दृष्टम्। दृश्याज्ञानावच्छेदकस्या-सदर्थस्य दृश्यत्वानभ्युपगमात् असदर्थावच्छिन्नमज्ञानं न विषयीक्रियत इत्यभिप्रायेण पुनश्चोदयति **ननु चेद-**

---

1 अभावप्रतियोगीतीति। नास्तीतीत्यर्थः।

2 ननु भावस्याभावेन साकमेव विरोधात् धर्मिज्ञानप्रतियोगिज्ञानाभ्यामिव घटज्ञानेनापि न विरोधः। किं तु घटाज्ञानाभावेन सहैवेति चेत्—अत एवात्र भावप्रकाशिकायां घटज्ञान इति सप्तम्यन्तं छित्वा नेति पृथक्कृत्य अविरोध एव वाक्यार्थत्वेन दर्शितः। यदि रजतत्वं प्रति शुक्ति-त्वस्येव भावस्यापि विरोधित्वमिष्टमावश्यकञ्च, तदाऽस्यैवं भावः—अभावात्मकाज्ञानस्य ज्ञान-सामान्याभावरूपत्ववत् सामान्यरूपं भावरूपमज्ञानं किञ्चिन्नास्ति; किं तु घटपटात्मादिविशेषा-ज्ञानमेव। तस्य च न ज्ञानसामान्यं विरोधि: किं तु घटादिज्ञानमेवेति। ननु घटज्ञानज्ञानमपि घटरूपविषया वलीढमेवेति तदपि घटज्ञानमेवेति चेत्-तादृशविचारोऽत्रैवोपरि समाधाने भविष्यति।

3 स्थितमप्यविहाय भावप्रकाशिकानुसारादेवं पाठोल्लेखः।

विशेषव्यावृत्तमेव साक्षिचैतन्यस्य विषयो भवति। स विषयः प्रमाणा[न]धीनसिद्धिरिति कथमिव साक्षिचैतन्येनास्मदर्थव्यावृत्तमज्ञानं विषयीक्रियते ॥ [1]नैष दोषः। सर्वमेव वस्तुजातं ज्ञाततया अज्ञाततया वा साक्षिचैतन्यस्य विषयभूतम्। तत्र जडत्वेन ज्ञाततया सिध्यत एव प्रमाणव्यवधानापेक्षा। अजडस्य तु प्रत्यग्वस्तुनः स्वयं सिध्यतो न प्रमाणव्यवधानापेक्षेति सदैवाज्ञानस्य व्यावर्तकत्वेनावभासो युज्यते। तस्मात् न्यायोपबृंहितेन प्रत्यक्षेण भावरूपमेवाज्ञानं प्रतीयते।

तदिदं भावरूपमज्ञानमनुमानेनापि सिध्यति- विवादाध्यासितं प्रमाणज्ञानं स्वप्रागभाव-

---

मिति। **विषयविशेषः**—अवच्छेदकविशेषः। **स** इति स एव परामृश्यते। परिहरति **नैष दोष** इति। अस्मदर्थोऽपि सर्वशब्दवाच्यान्तर्भूतः। **ज्ञाततया अज्ञाततया वा**—ज्ञानान्तरसापेक्षं तन्निरपेक्षं वा। **साक्षिचैतन्यस्य विषयभूतम्**—साक्षिचैतन्येन प्रतिभातीत्यर्थः। अस्मदर्थस्य साक्षिचैतन्यविषयत्वमौपचारिकम्; स्वयम्प्रकाशस्य स्वस्य[2] विषयत्वायोगात्। जडस्य स्वयम्प्रकाशत्वायोगात् प्रमाणाधीनसिद्धि सत् [तत् ?] दृश्यविशेषणं भवति। अस्मदर्थस्तु स्वयम्प्रकाशतया स्वयमेव सिध्यन् अज्ञानावच्छेदक इत्यर्थः। दृश्यावच्छेदकत्वाद्दृश्यमिति चोद्यम्; तत् जडत्वप्रयुक्तमिति सोपाधिकमिति परिहारः। **तस्मात्**—अभावरूपत्वपक्षे उक्तविरोधात्, भावरूपत्वपक्षे तदभावाच्चेत्यर्थः। **न्यायोपबृंहितेने**ति। पक्षद्वयेऽपि विरोधतदभावरूपन्यायानुगृहीतेनेत्यर्थः। एवं प्रत्यक्षेण न्यायानुगृहीतेनाज्ञानस्य भावरूपत्वम्, न जानामीत्यनेनात्माश्रयत्वं च सिद्धम्। शास्त्रेष्वज्ञानशब्दवाच्यतया पराभिमतकर्मव्यावृत्तिः [3]प्रत्यक्षतया सिद्धा। अस्य च शास्त्रेष्वज्ञानादिशब्दवाच्यत्वं ज्ञानविरोधित्वात्, अहमज्ञ इति प्रतिपन्नतया च सिद्धम्।

अथ स्वविषयावरणत्वस्वनिवर्त्यत्वाभ्यां सह उपपादिताकारविशिष्टं चाज्ञानमनुमानेनापि साध्यते **विवादाध्यासित**मित्यादिना। ज्ञानमित्युक्ते ब्रह्मस्वरूपस्य वस्त्वन्तरपूर्वकत्वासंभवात् तद्व्यावृत्त्यर्थं **प्रमाणज्ञान**मित्युक्तम्। तथाऽपि धारावाहिकज्ञाने उत्तरोत्तरविज्ञानानां सिषाधयिषितवस्त्वन्तरपूर्व-

---

1 अयं भाष्यग्रन्थः शतदूषणीभावप्रकाशिकानुसारेण पञ्चपादिकाद्यद्वैतग्रन्थानुगुणतया भाष्यार्थदर्पणे द्वेधाऽस्माभिर्व्याख्यातः। यथाश्रुतश्रुतप्रकाशिकानुसारात्तु अयमर्थः—अज्ञानस्य सविषयकत्वात् विषयसिद्धेश्च प्रमाणाधीनत्वात्; अज्ञानकाले च विषयः प्रमाणाधीनसिद्धिर्नेति कथं विषयाभाने विषयविशिष्टाज्ञानग्रहणम्। अतोऽस्मदर्थभूतात्मस्वरूपाज्ञानप्रत्यक्षं दुर्वचमिति शंका। परिहारस्तु—घटादिकं जडत्वात् मानाधीनज्ञाने सति साक्षिभास्यम्। अस्मदर्थस्तु अजडत्वात् ज्ञानं विनाऽपि। एवञ्चाज्ञानविशेषणत्वमपि तस्य घटते इति। एतावान् भाष्यार्थः। एतदुपरि जडभूतघटाद्यज्ञानभानं कथमिति शंका स्यात्। तत्र जडविषयं अज्ञानं नेष्यत इति परिहारो निगूढः टीकेष्ट इव। टीकायां ज्ञानान्तरसापेक्षमितीदं जडविषयकम्। तन्निरपेक्षमितीदम् आत्मविषयकम्। पूर्णाद्वैत्यभिप्रायप्रदर्शित्वेन भाष्यव्याख्याने तु ज्ञाततयेत्यस्य ज्ञानविशेषणतयेति, अज्ञाततयेत्यस्य अज्ञानविशेषणतयेति चार्थः, इत्यलम्।

2 विषयविषयिभावो विभिन्नयोरेव भवति; न तु स्वं प्रति स्वस्येत्यर्थः।

3 पुण्यापुण्यरूपकर्मणोऽप्रत्यक्षत्वादिति भावः।

व्यतिरिक्त-स्वविषयावरण-स्वनिवर्त्य-स्वदेशगतवस्त्वन्तरपूर्वकम्; अप्रकाशितार्थप्रकाशकत्वात्; अन्धकारे प्रथमोत्पन्नप्रदीपप्रभावत्--इति ॥ आलोकाभावमात्रं वा रूपदर्शनाभावमात्रं वा तमः;

---

कत्वाभावात् तद्व्यावृत्त्यर्थं **विवादाध्यासित**मित्युक्तम्। तज्ज्ञानं किमित्यपेक्षायां व्यक्त्यर्थं **प्रमाणज्ञान**मित्युक्तम्। अयं (एवं?) धर्मी दर्शितः। अथ साध्यधर्ममाह **स्वप्रागभावे**त्यादिना। **वस्त्वन्तरपूर्वक**मित्युक्ते घटादिस्वविषयपूर्वकत्वेन सिद्धसाधनं स्यादिति तद्व्यावृत्त्यर्थमाह **स्वदेशगते**ति। **स्वाश्रयगते**त्युक्ते दृष्टान्तस्य साध्यवैकल्यं स्यात्। न हि तमो दीपगतम्। अतः **स्वदेशगते**त्युक्तिः। धर्माधर्मव्यावृत्त्यर्थमाह **स्वनिवर्त्ये**ति॥ ननु कथं स्वनिवर्त्यशब्देन धर्माधर्मव्यावृत्तिः? ज्ञानोत्पत्तिहेतुभूतमदृष्टं ज्ञानोत्पत्त्या हि नश्यति॥ मैवम्; सर्वेषां धर्माधर्माणां ज्ञानफलकत्वाभावात् ज्ञानोत्पादकव्यतिरिक्तधर्मादीनां पूर्वक्षणे स्वदेशे विद्यमानत्वाच्च। यद्वा **स्वनिवर्त्य**पदेन संस्कारव्यावृत्तिः; न हि संस्कारो ज्ञानेन निवर्त्यः। भयादिव्यावृत्त्यर्थमाह **स्वविषयावरणे**ति। प्रागभावस्यैवंविधत्वात् तद्व्यावृत्त्यर्थमाह **स्वप्रागभावव्यतिरिक्ते**ति। इयं प्रतिलोमव्यावृत्तिः। **वस्त्वन्तरपूर्वक**मित्युक्ते अभावस्यापि पदार्थत्वेन वस्तुशब्दवाच्यत्वात् तद्व्यावृत्त्यर्थमाह **स्वप्रागभावव्यतिरिक्ते**ति। घटादिस्वविषयव्यावृत्त्यर्थमाह **स्वविषयावरणे**ति। कुड्यादिव्यावृत्त्यर्थमाह **स्वनिवर्त्ये**ति। वेद्यगतवित्त्यभिव्यक्तिप्रागभावव्यावृत्त्यर्थमाह **स्वदेशगते**ति। प्रमाणज्ञानेनाज्ञाने निरस्ते वेद्यगतचैतन्यमभिव्यक्तं भवतीति हि तत्परिपाटी। अभिव्यक्तिप्रागभावस्य विषयावरणत्वं प्रकाशविरोधित्वम्; न तु तत्प्रतिबन्धकत्वम्। इत्यनुलोमव्यावृत्तिः।

हेतुमाह **अप्रकाशिते**ति। साक्षाद्वा परम्परया वा अबाध्यव्यवहारानुगुण्यहेतुत्वं प्रकाशकत्वमिह विवक्षितम्। साक्षाद्वा परम्परया वेत्युक्ते हि दीपप्रभायां ज्ञाने च हेत्वनुगमसिद्धिः। इदं रजतमिति ज्ञानेऽतिव्याप्तिपरिहाराय अबाध्यव्यवहारानुगुण्यहेतुत्वमित्युक्तम्। **प्रकाशकत्वा**दित्युक्ते धारावाहिकज्ञाने उत्तरोत्तरज्ञानानां प्रकाशकत्वेऽपि सिषाधयिषितधर्माभावात् हेतोरनैकान्तिकत्वं स्यादिति तद्व्यावृत्त्यर्थमाह **अप्रकाशितार्थप्रकाशकत्वा**दिति। इन्द्रियेष्वनैकान्तिकत्वव्यावृत्त्यर्थं भासमानत्वे सतीति हेतुर्विशेष्यत इति मन्तव्यम्। दृष्टान्तमाह **अन्धकार** इति। **प्रदीप्रभाव**दित्युक्ते उत्तरोत्तरप्रभाणामप्रकाशितार्थप्रकाशकत्वाभावात् साधनविकलता स्यात्, स्वनिवर्त्यवस्त्वन्तरपूर्वकत्वाभावात् साध्यविकलता च स्यात् इति तद्व्युदासार्थं **प्रथमोत्पन्नप्रदीपप्रभाव**दित्युक्तम्। तथापि दिवा दीपप्रभायास्तथाविधत्वादर्शनात् तद्व्यावृत्त्यर्थ**मन्धकार** इत्युक्तम्॥

दृष्टान्तस्य साध्यविकलतामाशङ्क्य परिहरति **आलोके**त्यादिना। आलोके सति उलूकादीनामन्धकारसंभवादनुयायिनमाकारमाह **रूपदर्शनाभावमात्रं** वेति। यद्वा निमीलिताक्षस्य तमःप्रतिपत्तिनिर्वाहार्थमाह **रूपदर्शने**ति। अत्र नैयायिकादिभिरुक्तं दूषणमनुसंधत्ते—तत्र उत्पादकज्ञापकानुपपत्त्या द्रव्यान्तरत्वं दूषितम्। रूपवत्त्वेऽपि परमाणूनामेव अनुत्पाद्यत्वम्। तमसस्तु रूपवत्त्वादवयवत्त्वाच्चोत्पाद्यत्वं स्यात्। तत्र रूपवत्त्वात् तद्रहितानि वाय्वाकाशादीनि नोत्पादकानि भवन्ति। स्पर्शरसगन्धविरहात् नान्यान्यपि द्रव्याणि। कारणगुणप्रक्रमेण हि कार्ये वैशेषिकगुणारम्भः। इयमुत्पत्त्यनुपपत्तिः। आलोकाननुगृहीतत्वात् चक्षुर्न ग्राहकम्। आलोकसंनिधौ अनवस्थानान्नास्य ग्राह्यत्वम्। रूपवत्त्वप्रतीतिस्तु भ्रान्तिरेव, निमीलने नीलप्रतिभासवदिति **ज्ञप्त्यनुपपत्तिः**[1]। अत्र परिहारो **वार्त्तिककारै**रुक्तः, "तमः खलु चलं

---

1 इति ज्ञप्त्यनुपपत्तिरितीदं 'नास्यग्राह्यत्व' मित्येतदनन्तरं स्थातुमर्हम्।

न द्रव्यान्तरम् (द्रव्यम्)। तत् कथं भावरूपाज्ञानसाधने निदर्शनतयोपन्यस्यत इति चेत्—उच्यते। बहुलत्वविरलत्वाद्यवस्थायोगेन रूपवत्तया चोपलब्धेर्द्रव्यान्तरमेव तमः--इति निरवद्यम्--इति॥

अत्रोच्यते--'अहमज्ञो मामन्यं च न जानामि' इत्यत्रोपपत्तिसहितेन केवलेन च प्रत्यक्षेण

---

नीलं परापरविभागवत्। प्रसिद्धद्रव्य(धर्म)वैधर्म्यान्नवभ्यो भेत्तुमर्हति'' इति। स एवात्रोच्यते। तत्र परापरशब्दार्थो **बहुलत्वविरलत्व**शब्देनोक्तः: **आदि**शब्देन चलत्वम्; **रूपवत्तये**ति नीलशब्दार्थ उक्तः; [1]**द्रव्यान्तर**शब्देन दशमद्रव्यत्वमुक्तम्। नवद्रव्यस्वीकारो हि तेषां पृथिव्यादीनां द्रव्याणामन्योन्यवैधर्म्यात् [2]स्त्री(?)क्रियते। अन्यथा पृथिव्येव द्रव्यं नान्यत् गन्धवत्त्वाभावादिति वक्तुं शक्यते। एवं द्वे द्रव्ये इत्यादि। तच्चानभिमतम्; द्रव्याणां परस्परवैधर्म्यात्—एवं नवद्रव्यवैधर्म्यात् दशममङ्गीकार्यमिति वार्तिकार्थः॥ निमीलने नीलप्रतिभानं बाधितविषयम्; इदं त्वबाधितत्वान्न तथा भवितुमर्हति॥ तथापि रूपोपलब्धिवेलायामनुपलब्धेर्निमीलनवदपि संभवतीति शङ्कितं[3] प्रत्यक्षमिति चेत्—न; उलूकादीनामस्मदादिरूपोपलब्धिवेलायां रूपानुपलब्धौ तद्रूपोपलब्धेरपि शङ्कितत्वापातात्; उलूकादिरूपोपलब्धिवेलायामस्मदादेः रूपानुपलब्ध्या अस्मदादिरूपोपलब्धेरपि शङ्कितत्वप्रसङ्गात्। आगमस्वारस्याच्च शङ्काया निरस्तत्वात् तमसो दशमद्रव्यत्वमवसीयते—'तमः ससर्ज भगवान्', 'नाहो न रात्रिर्न नभो न भूमिर्नासीत् तमो ज्योतिरभून्न चान्यत्'', 'यस्य तेजः शरीरम्'', ''यस्य तमः शरीरम्'' इति सृज्यत्वसंहार्यत्वशरीरत्वादीनि हि श्रूयन्ते। आलोकनैरपेक्ष्यं यथा ज्ञातृविशेषप्रयुक्तं दृश्यते. तथा ज्ञेयविशेषप्रयुक्तमप्युपपद्यते। कार्यं हि यथा लोके प्रतीतं तथा कारणकल्पनायां प्रमाणम्; न पुनः स्फुटावधारितं कार्यं कारणनिरूपणायापह्नवमर्हतीति न्यायादबाधितप्रतीतिसिद्धस्य तमस उत्पादकं कल्प्यमिति नोत्पादकानुपपत्तिर्ज्ञापकानुपपत्तिर्वा। यथा [आहुरस्मदाचार्याः ?]

"तमो नाम द्रव्यं बहुलविरलं मेचकचलं प्रतीमः(तं) केनापि क्वचिदपि न बाधश्च ददृशे।

अतः कल्प्यो हेतुः प्रमितिरपि शाब्दी विजयते निरालोकं चक्षुः प्रथयति हि तत् दर्शनवशात्॥''

तमो द्रव्यमित्येव भाष्यकारमतम्; सिद्धान्ते तस्यादूषितत्वात्; सृज्यत्वसंहार्यत्वशरीरत्वश्रवणाच्च। स्वच्छद्रव्यत्वादाकाशकार्यं तमः। रूपवत्त्वं पञ्चीकरणादुपपद्यते। यद्वा तेजःकार्यं तमः; रूपवत्त्वात्; स्पर्शानुपलम्भः स्वच्छद्रव्यत्वादिति।

**इति निरवद्य**मिति। प्रमाणसिद्धत्वेन तर्कबाधानुपपत्त्या निरवद्यमित्यर्थः॥

अथ सिद्धान्तं वक्तुमुपक्रमते **अत्रोच्यत** इति। **केवलेन च प्रत्यक्षे**णेति दृष्टान्ततयोक्तम्। उपपत्तिदूषणे कृते केवलप्रत्यक्षं न साधकमित्यर्थः। उपपत्तिर्हि ज्ञानप्रागभावविषयत्वे विरोधः; स

---

1 वार्तिके नवभ्यो भेद एवोक्तः। स तमस्यभावरूपे तार्किकेष्ट एव। अतस्तस्य गुणकर्मवत्त्ववचनात् दशमद्रव्यत्वे तात्पर्यमिति विशेषो भाष्यस्थद्रव्यान्तरपदेन ज्ञापित इत्यर्थः। वेदान्ते तु द्रव्यत्वेऽपि न दशमत्वम्।

2 स्वी इति न स्यात्। तैरिति स्यान्नाम। 3 भ्रमत्वेन शङ्कितमित्यर्थः।

**न भावरूपमज्ञानं प्रतीयते। यस्तु ज्ञानप्रागभावविषयत्वे विरोध उक्तः, स हि भावरूपाज्ञानेऽपि तुल्यः। विषयत्वेनाश्रयत्वेन चाज्ञानस्य व्यावर्तकतया प्रत्यगर्थः प्रतिपन्नो वा अप्रतिपन्नो वा। प्रतिपन्नश्चेत्--तत्स्वरूपज्ञाननिवर्त्यं तदज्ञानं तस्मिन् प्रतिपन्ने कथमिव तिष्ठति। अप्रतिपन्नश्चेत्—व्यावर्तकाश्रयविषयज्ञानशून्यमज्ञानं कथमनुभूयेत॥ अथ विशदस्वरूपावभासोऽज्ञानविरोधी; अविशदस्वरूपं तु प्रतीयत इत्याश्रयविषयज्ञाने सत्यपि नाज्ञानानुभवविरोधः इति—हन्त तर्हि ज्ञानप्रागभावोऽपि विशदस्वरूपविषयः आश्रयप्रतियोगिज्ञानं तु अविशदस्वरूपविषयमिति न कश्चिद्विशेषो ऽन्यत्राभिनिवेशात्।**

---

भावरूपत्वेऽपि तुल्य इत्याह **यस्त्विति**। तुल्यत्वमुपपादयति **विषयत्वेनेति**। प्रतिपन्नशब्देन भासनमुच्यते। **तत्स्वरूपज्ञाननिवर्त्यमिति**। **स्वरूपज्ञानम्**—स्वरूपावभासः। स्वतो वा प्रमाणान्तरेण वा स्वरूपावभासनिवर्त्यमित्यर्थः। इदं रजतमित्यत्र इदं शुक्लभास्वरमित्येवंरूपप्रमाणज्ञानशते जातेऽपि भ्रमानिवृत्तिदर्शनात् प्रमाणज्ञानत्वमप्रयोजकमिति सिद्धवत्कारेण **तत्स्वरूपज्ञाननिवर्त्यमित्युक्तम्। व्यावर्तकाश्रयविषयज्ञानशून्यम्**—आश्रयतया विषयतया च व्यावर्तकः प्रत्यगर्थः; तदवभासशून्यम्। **विषयत्वेनेत्यादिना** भाष्येण स्वात्मविषयाज्ञानप्रतिपत्तौ विरोधतुल्यत्वं दर्शितम्। [1]घटादिविषयाज्ञानप्रतीतावपि अज्ञानस्य विषयत्वेन व्यावर्तकतया घटः प्रतिपन्नः, न वा। प्रतिपन्नश्चेत्, घटस्वरूपज्ञाननिवर्त्यं घटाज्ञानं तस्मिन् घटे प्रतिपन्ने कथमिव तिष्ठति; घटोऽप्रतिपन्नश्चेत्, व्यावर्तकविषयज्ञानशून्यमज्ञानं कथमनुभूयेतेत्यर्थसिद्धो विरोधो द्रष्टव्यः।

एवं परेण भावाभावयोर्विरोधे दर्शिते तत्प्रतिबन्दीत्वेन निवर्त्यनिवर्तकविरोध उक्तः। अथ विशदाविशदविभागादविरोधं शङ्कते **अथेति**। प्रत्यगर्थस्य प्रमाणज्ञानेनावभासो **विशदावभासः**; स स्वपक्षेऽपि तुल्य इत्याह—**हन्त तर्हीति**। विशदस्वरूपमवच्छेदकं यस्य स **विशदस्वरूपविषयः**। विशदस्वरूपस्य प्रागभावावच्छेदकत्वं स्वविषयज्ञानद्वारा। ज्ञानप्रागभावोऽपि विशदस्वरूपज्ञानावच्छिन्न इत्यर्थः। ज्ञानस्य चाभावावच्छेदकत्वं प्रतियोगितया। विशदस्वरूपज्ञानं प्रागभावप्रतियोगीति यावत्। अविरोधसिद्धये विद्यमानज्ञानस्य ततोऽर्थान्तरत्वमाह—**आश्रयेति**। आश्रयप्रतियोगिनोर्ज्ञानमा**श्रयप्रतियोगिज्ञानम्। अविशदस्वरूपविषयमिति**। आश्रयज्ञानस्या**विशदस्वरूपविषयत्वम्** अविशदप्रत्यगर्थविषयत्वम्। [2]प्रतियोगिज्ञानस्या**विशदस्वरूपविषयत्वम्** अभावप्रयोगिभूताविशदज्ञानविषयत्वम्। स्व(स)विषयं निवर्तकज्ञानम् अभावप्रतियोगित्वेनेदानीं ज्ञानमवलम्बते। तत्र

---

[1] भात इत्यनुक्त्वा प्रतिपन्नशब्दप्रयोगेण भाष्ये सूचितं दर्शयति घटादीति।

[2] प्रतियोगिभूतज्ञानस्य विशदस्वरूपविषयकत्वे तज्ज्ञानविषयकज्ञानस्याविशदस्वरूपविषयकत्वं कथमित्यत्रोपपादयति प्रतियोगीति। अविशदज्ञानेति अवर्तमानज्ञानेत्यर्थः। समाधानस्यास्पष्टत्वात् विवृणोति सविषयमिति। यथा विषयस्याविशदभानमात्रेण विशदविषयस्वरूपावच्छिन्नभावरूपाज्ञानभानम्, तथा विशदविषयावच्छिन्नज्ञानस्याभावप्रतियोगितया भानमविशदविषयभानमात्रेऽपीतीष्यताम्। तत् सिद्धं प्रतियोगिभूतनिवर्तकज्ञानस्याविशदस्वरूप विषयत्वम्। अत एव संभवादविद्यमानत्वरूपमवैशद्यं ज्ञानगतमप्याह।

निवर्तकज्ञानविषयस्य प्रत्यगर्थस्येदानीमविशदत्वात् निवर्तकज्ञानस्येदानीमविद्यमानत्वाच्च प्रतियोगिनो ज्ञानस्याविशदत्वम् । विद्यमानं हि साश्रयं ज्ञानमपरोक्षावभा[1]सरूपम् । अतस्तस्याविशदत्वमविद्यमानतया भवति । एवमाश्रयतया भासमानं स्वरूपमविशदम्, प्रतियोगितया स्मर्यमाणं ज्ञानमिदानीमविशदविषयत्वादविद्यमानत्वाच्च अविशदमिति तदुभयविषयं ज्ञानम**विशदस्वरूपविषयम्** । तच्च विद्यते । विशदज्ञानं त्वविद्यमानमभावप्रतियोगीति न विरोध इत्यर्थः । अयमर्थः—अज्ञाननिवर्तकाभिमतप्रमाणज्ञानाभावस्तावत् त्वयाऽभ्युपगन्तव्यः ; अन्यथा प्रमाणज्ञाननिवर्त्याज्ञानानुभवासंभवात् । ततश्च त्वदभ्युपगतः प्रमाणज्ञानाभाव एव अहमज्ञ इति प्रतिपत्तेर्विषयो भवितुमर्हतीति नाभावग्रहणानुपपत्त्या भावरूपत्वं कल्प्यमिति ॥ [2]पूर्वपक्षोक्तविरोधः कथं परिहृतो भवतीति चेत्—इत्थम् ।—तत्र हि यदर्थावच्छिन्नं ज्ञानमभावप्रतियोगितयोच्यते, अभावप्रतियोगिज्ञानावच्छेदकतदर्थप्रतिपत्तौ सत्यां तज्ज्ञानाभावोऽनुपपन्न इति हि विरोधः । तत्रायं परिहारः—अभावप्रतियोगिज्ञानं स्मृत्यारूढं प्रतिषिध्यते । यथा घटसाक्षात्कारो नास्तीति निषेधे घटसाक्षात्कारः स्मर्यते । स्मर्यमाणस्य स्मृतिसमकालवर्तित्वनियमाभावान्निषेधवेलायां स्मर्यमाणस्य नाभावप्रतियोगित्वविरोधः । त्वया च स्मृत्यारूढस्य निवर्तकज्ञानस्य स्मृतिसमकालवर्तित्वाभावादज्ञानावच्छेदकतया[3] प्रतिपत्तावपि स्मृत्यारूढनिवर्तकज्ञानं नाज्ञानविरोधीति वक्तव्यम् ; तस्मादात्मविषयं घटादिविषयकञ्च प्रमाणज्ञानं स्वविषयेणात्मना घटादिभिश्च सह स्मृत्यारूढमविशदतया प्रतिपन्नमभावप्रतियोगि भवतीत्युपपन्नतरमिति ॥ अनुभूतस्य हि स्मरणसंभवः, प्रमाणज्ञानं [4]केनानुभूतमिति चेत्—भवतो वा निवर्तकज्ञानं केनानुभूतम् ॥ आगमादिति चेत्—अस्माकमप्यात्मसाक्षात्कारस्तद्विधायकवाक्यावगतः । घटादिसाक्षात्कारस्तु प्रत्यक्षादिषु येन केनाप्यनुभूतः ॥ मेरुसाक्षात्कारः कथं निषिध्यते ? स हि न केनापि मानेन पूर्वमनुभूतः ॥ उच्यते । इहादृष्टचर(दृष्टचत्वर)द्विरदेन पुरुषेण कथमिह चत्वरे गजो [5](चत्वरगजो ?) नास्तीत्युच्यते । संसर्गाननुभवेपि संसर्गिणोरनुभवमात्रेणान्यत्रान्यतरनिषेध उपपद्यत इति चेत्—एवं तर्हि सुमेरुसाक्षात्कारसंसर्गाननुभवेऽपि मेरुसाक्षात्कारयोः केनाप्यवगमात् तत्संसर्गनिषेध उपपद्यते ॥ [6]प्रमाणज्ञानानामभावप्रतियोगित्वादभावस्य

---

1 प्रत्यगर्थतत्त्वज्ञानस्य साक्षात्काररूपत्वात् प्रकृताभिप्रायेणेदम् । अभावप्रतियोगिभूतज्ञानस्य नापरोक्षत्वनियमः । तस्य विशदस्वरूपविषयकत्वात् अज्ञानकाले अविद्यमानत्वं परं नियतम् । 2 भावरूपाज्ञानवादिमार्गेणैव प्रतिबन्द्या समाधानं भाष्योक्तम् । स्वयमन्यदपि संभवत् वक्तुं पृच्छति पूर्वपक्षेति । 3 अज्ञानावच्छेदकतया—अभावविशेषणतया ।

4 केनेति । प्रत्यक्षेणानुभूतत्वे निवर्तकज्ञानस्य वर्तमानत्वध्रौव्यादज्ञानायोग इत्याशयः ।

5 चरद्विरदेनेत्यत्र चत्वरद्विरदेनेति पाठं दृष्ट्वा चत्वरीयद्विरदेनेति भा० प्र० । तदोपर्यपि तथा स्यात् ।

6 ननु घटाज्ञानं नाम घटविषयकसर्वप्रमाणज्ञानाभावः ; न तु साक्षात्कारमात्राभावः । स कथं गृह्येतेत्यत्राह प्रमाणेति । विस्तरोऽन्यत्र ।

**भावरूपस्याज्ञानस्यापि ह्यज्ञानमिति सिध्यतः प्रागभावसिद्धाविव सापेक्षत्वमस्त्येव । तथा हि—अज्ञानमिति ज्ञानाभावः, तदन्यः, तद्विरोधी वा । त्रयाणामपि तत्स्वरूपज्ञानापेक्षा अवश्याश्रयणीया । यद्यपि तमःस्वरूपप्रतिपत्तौ प्रकाशापेक्षा न विद्यते ; तथापि प्रकाशविरोधीत्यनेनाऽऽकारेण प्रतिपत्तौ प्रकाशप्रतिपत्त्यपेक्षाऽस्त्येव । भवदभिमताज्ञानं न कदाचित् स्वरूपेण सिद्ध्यति ; अपि त्वज्ञानमित्येव ; तथा सति ज्ञानाभाववत् तदपेक्षत्वं समानम् ।**

---

तदानीं ग्राहकं नास्तीति यदुक्तम्—तत् सर्वप्रमाणज्ञानाभावानां युगपदनुभवासंभवात् कतिपयमानज्ञानाभावस्य मानान्तरेण ग्रहणोपपत्तेश्च परिहृतम् । एवं भावरूपपक्षे विरोधपरिहारसाम्यं दर्शितम् ।

ननु विरोधसाम्यं वक्तुमशक्यम् । अज्ञानस्य नञर्थप्रतियोग्यवच्छिन्नतयैवावगन्तव्यत्वे सति हि नञर्थप्रतियोगिनस्तस्य ज्ञानस्य स्वविषयाश्रयभूतप्रत्यगर्थावच्छिन्नत्वेन भातत्वात् विषयाश्रयभूतप्रत्यगर्थज्ञाने सति तन्निवर्त्याज्ञानस्थितिविरोधः । न हि भावरूपस्याज्ञानस्य ज्ञानप्रतिपत्त्यपेक्षा ; स्वरूपेणैव प्रतिपत्तिसंभवात् न हि भावरूपस्य घटस्य आश्रयप्रतियोगिज्ञानसापेक्षत्वं दृष्टम्—इत्यत्राह **भावरूपस्येति** । कथं सापेक्षत्वमित्यत्राह **तथा हीति** । अभावस्य नञर्थत्वसंभवात् तदुक्तिः । प्रमाणज्ञानादन्यत् प्रमाणज्ञानविरोधीति वा तत्प्रतिपत्तिः । तदा तस्य ज्ञानस्य च विषयावच्छिन्नत्वेन प्रतिपन्नत्वात् प्रत्यगर्थस्य घटादेर्वा ज्ञाने सति तन्निवर्त्यमज्ञानं न गृह्येतेत्यर्थः । यथा प्रकाशविरोधित्वेऽपि तमसः तत्प्रतिपत्तौ न प्रकाशापेक्षा, तद्वदिहापीत्यत्राह **यद्यपीति** । भावरूपमज्ञानमपि स्वरूपेण सिध्यतीत्यत्राह **भवदभिमतेति** ॥ मुग्धोऽस्मि, मूढोऽस्मीति स्वरूपेण सिद्धिरिति चेन्न ; कस्यचित्पुरुषस्य कस्मिंश्चिद्विषये हि मोहः । "स विमलमतिरेति नात्ममोहम्", "दिङ्मोहालातचक्रादिभ्रान्तयश्च कथं पुनः" इत्यादिषु विषयाश्रयावच्छिन्नत्वेन हि मोह उपलभ्यते । मुग्धोऽस्मीत्यनेनाश्रयावच्छिन्नत्वं प्रतीयते । विषयोऽप्यर्थवशात् सिद्धः । इदं दूषणं "संवित् सिध्यति वा न वा" इत्यत्रोक्तया दिशा फलितम् । ततश्च स्वात्मविषयमज्ञानं विषयाश्रयभूतप्रत्यगर्थप्रतिपत्तिसद्भावहतम् । घटाद्यज्ञानं तु विषयभूतघटाद्यवगमविरुद्धम् ॥ मायाशब्दादिभिरज्ञानप्रतिपत्तौ विषयाश्रयापेक्षा नेति चेन्न, मायादिशब्दानामपि व्युत्पत्तिनैरपेक्ष्येण बोधकत्वासंभवादज्ञानादिपदपर्यायत्वेन च व्युत्पन्नत्वात् स्वरूपेण सिद्धिर्दुर्वचा—इत्यभिप्रायेण **न कदाचित्स्वरूपेण सिध्यतीत्युक्तम्** । ननु स्वरूपावच्छिन्नाज्ञानप्रतीतौ नञर्थप्रतियोगिज्ञानावच्छिन्नतया सिद्धावपि न निवर्त्यनिवर्तकविरोधः; स्वरूपभूतज्ञानादन्यतया [1]तत्सिद्धेः । स्वरूपज्ञानं हि नाविद्यानिवर्तकम्, किंतु प्रमाणज्ञानमेव ; अतो न विरोध इति ॥ नैवम् ; मामहं च न जानामीति विषयाश्रयसंबन्धिज्ञानावच्छिन्नतया प्रतीतेः । न हि स्वरूपभूतज्ञानं साश्रयं सविषयं च तव मतम् । [2]स्वरूपं किम् आश्रयतयैवाज्ञानस्यावच्छेदकम्, उत विषयतयापि ? आद्ये, न त्वदभिमतसिद्धिः । तदानीं प्रत्यगर्थस्य स्वसादन्येन केनापि विशिष्टत्वमेव हि सिध्यति । विषयतयाऽवच्छेदकत्वे प्रत्यगर्थस्याज्ञानमावरणं स्यात् । आवरणत्वं च तद्विषयकज्ञानप्रतिबन्धकत्वम् । अतस्तद्विषयप्रमाणज्ञानप्रतीत्यवश्यम्भावादुक्तविरोधोऽनतिवृत्तः । अतः स्वरूपभूतज्ञानावच्छिन्नप्रतीत्यभ्युपगमोऽनुपपन्नः ।

---

1 **अन्यतयेति । प्रत्यगर्थाज्ञानमित्यस्य प्रत्यगर्थरूपज्ञानान्यदित्यर्थ इति भावः ।**

2 **दोषान्तरमाह स्वरूपमिति ।**

**ज्ञानप्रागभावस्तु भवताऽप्यभ्युपगम्यते, प्रतीयते चेत्युभयाभ्युपेतो ज्ञानप्रागभाव एव 'अहमज्ञो मामन्यं च न जानामि' इत्यनुभूयत इत्यभ्युपगन्तव्यम् ॥ नित्यमुक्तस्वप्रकाशचैतन्यैकस्वरूपस्य ब्रह्मणोऽज्ञानानुभवश्च न संभवति ; स्वानुभवस्वरूपत्वात् ॥**

---

उभयत्र साधनदूषणयोस्तुल्यत्वाद्भावरूपमज्ञानं परिगृह्यतामित्याशङ्क्य लाघवन्यायेन परिहरति **ज्ञानप्रागभावस्त्विति । अभ्युपगम्यते ।** अहमज्ञ इति प्रतिपन्नस्य अभावरूपत्वे हि विप्रतिपत्तिः ; न त्वभावानभ्युपगमः । अन्यथा प्रमाणज्ञानस्य प्रागभावाभावादनादित्वेन तन्निरसनीयभावरूपाज्ञानानुदयप्रसङ्गात् । अतो ज्ञानाभावस्त्वयाऽभ्युपगत इत्यर्थः । **प्रतीयते च ।** लोके तत्तज्ज्ञानाभावविवक्षया ज्ञानं नास्तीति व्यवहारदर्शनात् अप्रतिपन्ने च विवक्षानुपपत्तेः ज्ञानाभावप्रतीतिरस्त्येवेत्यर्थः । अतः संप्रतिपन्नेन ज्ञानाभावेनैव अहमज्ञ इति प्रतीत्युपपत्तेरतिरिक्तकल्पने हेत्वभावाल्लाघवेन स एव अहमज्ञ इति प्रतीतेर्विषयतयाऽभ्युपगन्तव्य इत्यर्थः ॥ ननु उभयाभ्युपगतोऽभावो नाम कश्चिन्नास्ति । भावान्तरमभावः स्वमते ; परमते तु भावातिरिक्तः । तत्र कथमुभयाभ्युपगतेन अहमज्ञ इति प्रतीत्युपपत्तिः ॥ उच्यते । न ह्युभयाभ्युपगत इत्युक्तम् ; किन्तु **भवताऽभ्युपगम्यत** इत्युक्तम् । [1]अभावशब्दवाच्यत्वेन कश्चिदर्थ उभाभ्यामभ्युपगतः । स च भावरूपस्तदतिरिक्त इति इयदेव विमतम् । अत्र भावत्वेन यः स्वाभिमतः यश्च तदतिरिक्तत्वेन अभावशब्दवाच्यतया पराभिमतः, तयोरन्यतरेणाहमज्ञ इति प्रतीत्युपपत्तेस्तदुभयातिरिक्तार्थकल्पनमनुपपन्नमित्युक्तं भवतीति न विरोधः ॥ ननु भावान्तरमभावमिच्छता त्वया ज्ञानप्रागभावशब्देन भावरूपाज्ञानमङ्गीकृतं स्यात् ॥ मैवम् ; सिद्धान्तद्वयानभिज्ञानकृतं हीदं चोद्यम् । स्वयंप्रकाशस्यैव ज्ञानस्य सङ्कोचरूपमवस्थान्तरं प्रागभावशब्दवाच्यतयाऽस्मदभिमतम् ; स्वप्रकाशज्ञानव्यतिरेकेण भावरूपमज्ञानं पराभिमतम् ; अतस्तयोः कथमैक्यम् ॥ तर्हि ज्ञानसङ्कोचरूपावस्थां परित्यज्याज्ञानशब्दवाच्यत्वेन परोक्तं भावरूपमज्ञानं स्वीक्रियताम्, भावरूपत्वाविशेषादिति चेत्—प्रामाणिकं परित्यज्य अप्रामाणिकं स्वीक्रियतामितीदमनुपपन्नम् । "न विज्ञातुर्विज्ञातेर्विपरिलोपो विद्यते", 'सर्वं ह पश्यः पश्यति', 'तया तिरोहितत्वाच्च शक्तिः क्षेत्रज्ञसंज्ञिता । सर्वभूतेषु भूपाल ; तारतम्येन वर्तते', 'अप्राणिमत्सु स्वल्पा सा' इत्यारभ्य—'हिरण्यगर्भोऽतितरां पुंसः शक्त्युपलक्षितः' इति श्रुतिस्मृतिसिद्धत्वात् ज्ञाननित्यत्वं तत्सङ्कोचादिकञ्च प्रामाणिकं कथं त्यज्येत ? भावरूपाज्ञानं तु कल्प्यम् । कल्पकं चान्यथासिद्धमिति तदप्रामाणिकं कथं स्वीक्रियते । कल्पनायां हि लाघवन्यायश्च प्रवर्तते, न तु प्रमाणप्रतिपन्नेऽर्थे । अतोऽहमज्ञ इति ज्ञानप्रागभाव एव प्रतीयते ।

एवमहमज्ञ इति प्रत्यक्षस्य भावरूपाज्ञानविषयत्वे भावरूपपक्षोपपत्ति-अभावरूपपक्षानुपपत्तिरूपानुकूलतर्काभाव उक्तः; अथ प्रतिकूलतर्कपराहतिरुच्यते **नित्येति । नित्यमुक्तस्वप्रकाशचैतन्यैकस्वरूपस्ये**ति पदं हेतुगर्भम् । **नित्यमुक्तत्वम्** परमार्थतो दोषासंस्पृष्टत्वम् । अतः परमार्थदोषो न संभवति । स्वानुभवस्वरूपत्वादपरमार्थपरानुभवो न संभवतीत्यर्थः । अन्यानुभवरूपप्रदेशभेदाभावाच्चेति **एक**शब्दाभिप्रायः । **एक**शब्देन ज्ञेयत्वाभावश्च विवक्षितः । अभिप्रेतं हेतुगर्भत्वं विवृणोति **स्वानुभवस्वरूपत्वादि**ति । अविद्यानिवृत्तिदशायामनुवर्तमानम् अविद्यावभासप्रत्यनीकं स्वानु-

---

1 नन्वनन्तरवाक्ये उभयाभ्युपेत इत्युक्तमित्यत्र तदाशयमाह-अभावेति ।

स्वानुभवस्वरूपमपि तिरोहितस्वरूपमज्ञानमनुभवतीति चेत्—किमिदं तिरोहितस्वरूपत्वम्? अप्रकाशितस्वरूपत्वमिति चेत्—स्वानुभवस्वरूपस्य कथमप्रकाशितस्वरूपत्वम्? स्वानुभवस्वरूपस्याप्यन्यतोऽप्रकाशितस्वरूपत्वमुपपद्यत इति चेत्—एवं तर्हि प्रकाशाख्यधर्मानभ्युपगमेन प्रकाशस्यैव स्वरूपत्वात् अन्यतः स्वरूपनाश एव स्यादिति पूर्वमेवोक्तम् ॥

किञ्च—ब्रह्मस्वरूपतिरोधानहेतुभूतमेतदज्ञानं स्वयमनुभूतं सत् ब्रह्म तिरस्करोति। ब्रह्म तिरस्कृत्य स्वयं तदनुभवविषयो भवतीत्यन्योन्याश्रयणम् ॥

अनुभूतमेव तिरस्करोतीति चेत्—यद्यतिरोहितस्वरूपमेव ब्रह्म अज्ञानमनुभवति, तदा तिरोधानकल्पना निष्प्रयोजना स्यात्, अज्ञानस्वरूपकल्पना च; ब्रह्मणोऽज्ञानदर्शनवत् अज्ञानकार्यतयाऽभिमतप्रपञ्चदर्शनस्यापि संभवात् ॥ किञ्च—ब्रह्मणोऽज्ञानानुभवः किं स्वतः, अन्यतो वा? स्वतश्चेत्—अज्ञानानुभवस्य स्वरूपप्रयुक्तत्वेनानिर्मोक्षः स्यात्। अनुभूतिस्वरूपस्य ब्रह्मणोऽज्ञानानुभवस्वरूपत्वेन, मिथ्यारजतबाधकज्ञानेन रजतानुभवस्यापि निवृत्तिवत् निवर्तकज्ञानेनाज्ञानानुभूतिरूपब्रह्मस्वरूपनिवृत्तिर्वा। अन्यतश्चेत्—किं तदन्यत्? अज्ञानान्तरमिति चेत्—अनवस्था स्यात्।

ब्रह्म तिरस्कृत्यैव स्वयमनुभवविषयो भवतीति चेत्—तथा सति इदमज्ञानं काचादिवत् स्वसत्तया ब्रह्म तिरस्करोतीति ज्ञानबाध्यत्वमज्ञानस्य न स्यात् ॥

अथेदमज्ञानं स्वयमनादि, ब्रह्मणः स्वसाक्षित्वं ब्रह्मस्वरूपतिरस्कृतिं च युगपदेव करोति।

---

भवैकस्वभावत्वं हेतुतया विवक्षितम्; न तु भ्रमवेलायामपि विद्यमानं स्वयंप्रकाशत्वमात्रम्; अतः स्वानुभवैकस्वभावत्वस्य प्रागपि विद्यमानत्वादित्यर्थः। स्वानुभवस्वरूपस्यापि तिरोधानादज्ञानानुभवः संभवतीति शङ्कते **स्वानुभवे**ति। अभिप्रेतं विवरीतुं तिरोधानशब्दस्यार्थान्तरं नास्तीति ज्ञापनार्थं प्रश्नपूर्वकं तिरोधानशब्दार्थमाह **किमिदं तिरोहितस्वरूपत्वम्? अप्रकाशितस्वरूपत्वमिति चे**दिति। स्वानुभवस्वरूपस्याप्रकाशितत्वं व्याहतमिति बुद्ध्या दूषयति **स्वानुभवे**ति। अन्यत इति परिहारं शङ्कते **स्वानुभवे**ति। अन्यतोऽप्रकाशितस्वरूपत्वे पूर्वोक्तदूषणमतिदिशति **एवं तर्ही**ति। दूषणान्तरमाह **किञ्चे**ति। अपरमार्थत्वान्न सत्तया तिरस्कारकम्, अपि तु प्रतीयमानतया तिरस्कारकमिति अनुभवपूर्वकस्तिरस्कारः; तिरस्कारपूर्वकोऽनुभवः अतिरस्कृतस्य स्वानुभवस्वरूपस्य ब्रह्मणोऽज्ञानानुभवासंभवात् इत्यन्योन्याश्रयणमित्यर्थः। एतत्परिजिहीर्षया अनुभवपूर्वकं तिरस्कारं शङ्कते **अनुभूतमेवे**ति। तत्र दूषणमाह **यदी**ति। अतिरोहितस्याप्यज्ञानानुभवसंभवात् तदर्थतिरोधानकल्पना तदर्थमाच्छादकाविद्याकल्पना च निष्फलेत्यर्थः। तदुपपादयति **ब्रह्मण** इति। यथा अतिरोहितस्वरूपस्यापि अपरमार्थभूताज्ञानानुभवसंभवः, तथा अपरमार्थभूतप्रपञ्चानुभवोऽप्यतिरोहितस्य संभवतीति तदर्था तिरोधानकल्पना तदर्थाच्छादकाविद्याकल्पना च निष्फलेत्यर्थः। अनुभवपूर्वकतिरस्कारपक्ष एव विकल्पमुखेन दूषणमाह **किञ्चे**ति। **स्वतःपक्षे** दूषणद्वयम् अनिर्मोक्षो ब्रह्मस्वरूपनिवृत्तिश्च। **रजतानुभवस्यापी**त्यपिशब्देन रजतस्य च निवृत्तिः सूचिता। **अन्यतःपक्षे**ऽनवस्था। तिरस्कारपूर्वकानुभवपक्षं शङ्कते **ब्रह्मे**ति। तिरस्कृत्यानुभवविषय इत्युक्ते सत्तया तिरस्कारकमित्युक्तं स्यात्, न तु प्रतीयमानतया। तदानीं काचादिवत् परमार्थत्वेन ज्ञाननिवर्त्यत्वं न सिध्यतीत्यर्थः। अथ तिरस्कारानुभवयोर्यौगपद्यं शङ्कते **अथेद**मिति। **नैतदि**त्यादिना

अतो नानवस्थादयो दोषा इति ॥ नैतत्; स्वानुभवस्वरूपस्य ब्रह्मणः स्वरूपतिरस्कृतिमन्तरेण साक्षित्वापादनानुपयोगात् ॥ हेत्वन्तरेण तिरस्कृतमिति चेत्—तद्धेत्वनादित्वमपास्तम्; अनवस्था च पूर्वोक्ता। अतिरस्कृतस्वरूपस्यैव साक्षित्वापादने ब्रह्मणः स्वानुभवैकतानता च न स्यात् ॥

अपिच—अविद्यया ब्रह्मणि तिरोहिते तद्ब्रह्म न किञ्चिदपि प्रकाशते; उत किञ्चित्प्रकाशते? पूर्वस्मिन् कल्पे, प्रकाशमात्रस्वरूपस्य ब्रह्मणोऽप्रकाशे तुच्छतापत्तिरसकृदुक्ता। उत्तरस्मिन् कल्पे, सच्चिदानन्दैकरसे ब्रह्मणि कोऽयमंशः तिरस्क्रियते, को वा प्रकाशते? निरंशे निर्विशेषे प्रकाशमात्रे वस्तुन्याकारद्वयासंभवेन तिरस्कारः प्रकाशश्च युगपन्न सङ्गच्छेते ॥ अथ सच्चिदानन्दैकरसं ब्रह्म अविद्यया तिरोहितस्वरूपमविशदमिव लक्ष्यत इति ॥ प्रकाशमात्रस्वरूपस्य विशदताऽविशदता वा किंरूपा? एतदुक्तं भवति -यः सांशः सविशेषः प्रकाशविषयः, तस्य सकलावभासो विशदावभासः, कतिपयविशेषरहितावभासश्च अविशदावभासः। तत्र य आकारोऽप्रतिपन्नः, तस्मिन्नंशे प्रकाशाभावादेव प्रकाशवैशद्यं न विद्यते। यश्चांशः प्रतिपन्नः, तस्मिन्नंशे तद्विषयप्रकाशो विशद एव। अतः सर्वत्र प्रकाशांशे अवैशद्यं न संभवति। विषयेऽपि स्वरूपे प्रतीयमाने तद्गतकतिपय-

---

दूषयति। **स्वानुभवस्वरूपस्ये**ति हेतुगर्भविशेषणम्। स्वानुभवस्वरूपत्वं स्वाभाविकमिति परानुभवो हेतुना विना नोपपद्यत इत्यर्थः। हेत्वन्तरेण तिरस्कृतिमाशङ्क्य दूषयति **हेत्वि**ति। यौगपद्यपक्षे पूर्वोक्तपक्षद्वय-दूषणमप्यापततीत्यभिप्रायेणाह **अनवस्था च पूर्वोक्ते**ति। ज्ञानानिवर्त्यत्वदूषणस्याप्युपलक्षणमियमनवस्था; अनन्तरपूर्वोक्तेः। स्वरूपतिरस्कृतिमन्तरेण साक्षित्वापादनेऽनिष्टमाह **अतिरस्कृते**ति। पूर्वं विशदाविशदावभासमभ्युपगम्य दूषणमुक्तम्, इदानीं तु तमेव दूषयितुमुपक्रमते **अपिचे**ति। विकल्पयति **अविद्यये**ति। पूर्वोक्तं दूषणमतिदिशति **पूर्वस्मिन्नि**ति। **उत्तरस्मिन्नि**ति। **किं**शब्दः क्षेपे। अनुपपन्नमित्यर्थः। सच्चिदानन्दादिशब्दानामपि स्वरूपमात्रपरत्वेनाभ्युपगमात् तिरस्कृतातिरस्कृतविभागोऽनुपपन्न इति भावः। **कोऽयमंशः तिरस्क्रियते को वा प्रकाशत** इति। 'को वा विशेषस्तिरस्क्रियते को वा प्रकाशते' इत्यस्याप्युपलक्षणार्थमिदम्; **निरंशे निर्विशेषे** इत्यनन्तरोक्तेः। **कोऽयमंश** इति। अंशभेदो वक्तुमशक्य इत्यभिप्रायः। तदुपपादयति **निरंश** इति। **प्रकाशमात्रे**। मात्रचा अविषयत्वं विवक्षितम्। अविषयभूत इत्यर्थः। **युगपन्न सङ्गच्छेते** इति। न हि त्वया कालभेदेन प्रकाशतिरस्कारावुच्येते; अपि तु युगपदेव। तदानीमंशभेदाभावादाकारभेदाभावाच्च तौ न सङ्गच्छेते इति भावः। एवं प्रकाशतिरस्कारयोर्यौगपद्यानुपपत्तौ सत्यामप्यविशदशब्देन[1] प्रत्यवतिष्ठते **अथे**ति। अथशब्दोऽ[2]नुमतिप्रदाने वर्तते। दूषयति **प्रकाशे**ति। **किंरूपा**। अनुपपन्नेत्यर्थः। कथमनुपपत्तिरिति शङ्कायां वैशद्यावैशद्यस्वरूपं शिक्षयितुम् अत्र तदनुपपत्तिञ्च दर्शयितुमाह **एतदुक्तमि**ति। वैशद्यावैशद्यस्वरूपं शिक्षयति **यस्सांश** इत्यादिना। ज्ञाने तदनुपपत्तिमाह **तत्रे**ति। **प्रकाशाभावादेव प्रकाशवैशद्यं न विद्यत** इति। धर्म्यभावाद्धर्माभाव इत्यर्थः। ज्ञेयेऽपि ज्ञातांशस्य विशदत्वादज्ञातांशस्याज्ञातत्वाच्च कचिदप्यवैशद्यं न संभवतीत्याह **विषयेऽपी**ति। एकस्मिन्

---

**1, 2. अंशभेदाभावस्योक्तत्वात् विशदाविशदविचारस्य न प्रसक्तिः। विशदशब्दार्थाज्ञानात् अविशदशब्दमादायाथ शंका। एवमुत्थितस्यानर्हस्यानुमतिर्दीयते खण्डनार्थमित्यर्थः।**

विशेषाप्रतीतिरेवावैशद्यम्। तस्मादविषये निर्विशेषे प्रकाशमात्रे ब्रह्मणि, स्वरूपे प्रकाशमाने कतिपयविशेषाप्रतिपत्ति(तीति)रूपावैशद्यं नाम अज्ञानकार्यं न संभवति -इति॥ अपिच--इदम-विद्याकार्यमवैशद्यं तत्त्वज्ञानोदयान्निवर्तेत, न वा। अनिवृत्तौ अपवर्गाभावः। निवृत्तौ च वस्तु किंरूपमिति विवेचनीयम्। विशदस्वरूपमिति चेत्--तत् विशदस्वरूपं प्रागस्ति, न वा। अस्ति चेत्--अविद्याकार्यमवैशद्यं तन्निवृत्तिश्च न स्याताम्। नो चेत्--मोक्षस्य कार्यतया अनित्यता स्यात्।

अस्याज्ञानस्याश्रयानिरूपणादेवासंभवः पूर्वमेवोक्तः। अपिच—अपरमार्थदोषमूलभ्रमवादिना निरधिष्ठानभ्रमासंभवोऽपि दुरुपपादः; भ्रमहेतुभूतदोषदोषाश्रयत्ववत् अधिष्ठानापारमार्थ्येऽपि भ्रमोपपत्तेः। ततश्च सर्वशून्यत्वमेव स्यात्॥

---

वस्तुनि कतिपयांशस्य कतिपयाकारस्य वा अनवभासः समुदितरूपस्यावैशद्यम्; न तु तत्रापि प्रकाशमानांशस्येत्यर्थः। **तस्मादिति**। **स्वरूपे प्रकाशमान** इत्यस्य **न ब्रह्मणी**ति पूर्वत्रान्वयः; अपि तूत्तरत्र। वस्तुस्वरूपे प्रकाशमाने कतिपयविशेषाप्रतिपत्तिरूपमवैशद्यं ब्रह्मणि न संभवतीत्यर्थः। **कतिपयविशेषाप्रतिपत्तिशब्दः** कतिपयांशाप्रतिपत्तेरप्युपलक्षणार्थः। मुखान्तरेण दूषणमाह **अपिचेति**। **अविद्याकार्यं ....तन्निवृत्तिश्च न स्याता**मिति। विशदस्वरूपस्याविद्याविरोधित्वादिति भावः। **मोक्षस्य कार्यतयेति**। मोक्षस्य—[1]मुक्तस्वरूपस्य। भावरूपत्वे सति कार्यं ह्यनित्यम्।, वैशद्यं च भावरूपम्। अतः परमते त्वयोक्तं दूषणं तवैवापततीत्यर्थः॥ प्रागसतः पश्चादुत्पन्नस्य वैशद्यस्यानित्यत्वप्रसङ्गः कालात्ययापदिष्टः, शास्त्रेण तस्य नित्यतया प्रतिपादितत्वादिति चेत्—तदा ब्रह्मणः सविशेषत्वं स्यादित्यभिप्रायः।

पूर्वोक्तामाश्रयानुपपत्तिं परोक्तप्रत्यक्षप्रमाणस्य प्रतिकूलतर्कत्वेनाह **अस्येति**। स्वरूपानादित्वादिमुखेन (सं-२-६) परिहाराणां प्रतिबन्दीत्वं हृदि निधाय दूषणान्तरमाह **अपिचेति**। यथा दोषदोषाश्रयत्वादेरपारमार्थ्येऽपि भ्रमसंभवः, तद्वदधिष्ठानापारमार्थ्येऽपि भ्रमः संभवति॥ अधिष्ठानापारमर्थ्ये तस्यापि प्रपञ्चवदपारमार्थ्येन अधिष्ठानान्तरापेक्षयाऽनवस्था स्यादिति चेत्—तर्हि दोषस्यापि प्रपञ्चवदपारमार्थ्येन दोषान्तरापेक्षयाऽनवस्था स्यात्॥ दोषस्यापारमार्थ्येपि स्वरूपानादित्वान्नानवस्थेति चेत्—तर्हि अधिष्ठानापारमार्थ्येऽपि स्वरूपानादित्वान्नानवस्थेति। प्रवाहानादित्वेन दुर्घटत्वेन च परिहारोऽपि तुल्यः॥ दोषः प्रपञ्चदर्शनस्य स्वदर्शनस्य च स्वयमेव निर्वाहक इति न दोषान्तरापेक्षया अनवस्थेति चेन्न—अपरमार्थस्यास्य स्वपरनिर्वाहकत्वासंभवात्। न हि स्वप्ने द्विचन्द्रज्ञानहेतुभूतोऽङ्गुल्यवष्टम्भः स्वकल्पने दोषनिरपेक्षः। अपरमार्थस्य स्वपरनिर्वाहकत्वं संभवतु; तथासति अधिष्ठानापारमार्थ्येऽपि स्वपरनिर्वाहकत्वादनवस्था न स्यात्॥ अपरमार्थस्य परं प्रति अधिष्ठानत्वे सिद्धे हि स्वनिर्वाहकत्वसिद्धिरिति चेत्—अपरमार्थस्य परं प्रति दोषत्वे सिद्धे हि स्वनिर्वाहकत्वमिति तुल्यम्॥ मिथ्याभूतजगदवभासात् दोषत्वं सिद्धमिति चेत्—तर्हि तत एवाधिष्ठानत्वमपि सिद्धमिति स्वपरनिर्वाहकत्वमधिष्ठानस्य सिध्यति॥ अधिष्ठानापारमार्थ्ये भ्रमो न दृष्ट इति चेत्—दोषदोषाश्रयत्वापारमार्थ्येऽपि भ्रमो न दृष्ट इति तुल्यश्चर्च इत्यभिप्रायः। ततः किमित्यत्राह **ततश्चेति**। एवम् अहमज्ञो मामन्यं च न जानामीति प्रत्यक्षस्य प्रतिकूलतर्कपराहतिरुक्ता।

---

1 मुक्तस्वरूपस्येति। विशदस्वरूपस्येत्यर्थः।

अत्र केचिदाहुः—सुप्तोत्थितस्य न किञ्चिदवेदिषमिति परामर्शान्यथानुपपत्तिः भावरूपाज्ञाने प्रमाणम् ॥ कथमन्यथानुपपत्तिः ॥ इत्थम् । न किञ्चिदवेदिषमिति परामर्शो न ज्ञानाभावविषयः ; स्वापे ज्ञानाभावस्याननुभूतत्वात् । ज्ञानाभावानुभवे हि प्रतियोगिभूतज्ञानस्य विषयावच्छिन्नस्यावभासोऽभ्युपगन्तव्यः । तदभ्युपगमे सुषुप्तिव्याघातः । न चास्मरणलिङ्गजन्यं ज्ञानाभावविषयमनुमितिरूपज्ञानमिदमिति वाच्यम् ; अस्मरणस्याननुभवव्याप्यत्वाभावात् । पथि गच्छता स्पृष्टं हि तृणादिकं न स्मर्यते । अतः सुषुप्तावननुभूतं भावरूपमज्ञानं स्मर्यते, न किञ्चिदवेदिषमिति । अतस्तदन्यथानुपपत्त्या भावरूपाज्ञानसिद्धिरिति ॥

नैतदुपपद्यते—भावरूपत्वेऽप्यज्ञानस्य प्रतियोग्यपेक्षत्वोपपादनात् प्रतियोगिनश्च सुषुप्तावनवभासात् अज्ञानानुभवाभावेन तत्स्मरणानुपपत्तेः । प्रतियोग्यवभासे सुषुप्तिव्याघातस्त्वयैवोक्तः । न च तदन्यवाचिनर्थप्रतियोगिस्वरूपभूतं ज्ञानं तदानीमवभातमिति वाच्यम्, न किञ्चिदवेदिषम् मामन्यं च न जानामीति विषयावच्छिन्नज्ञानस्य प्रतियोगित्वावगमात् । अतस्तदनवभासे अज्ञानानुभवायोगात् तत्स्मरणानुपपत्तिः । किञ्च सुषुप्तौ निर्विकल्पकेन[1] वा सविकल्पकेन मनोव्यापारेण वा भावरूपाज्ञानानुभवः ? प्रथमे, स्वाभिमतनिर्विकल्पकस्य साक्षिचैतन्यावभासरूपस्य संस्काराधायकत्वानभ्युपगमात् प्रतिसन्धानमनुपपन्नम् । न द्वितीयः ; सुषुप्तिविरोधेन तदा मनोव्यापारासंभवात् । अतः, न किञ्चिदवेदिषमिति ज्ञानं न स्मरणम् ; किन्तु अस्मरणलिङ्गकं ज्ञानाभावविषयमनुमितिरूपम् । न च पथि गच्छता स्पृष्टतृणाद्यस्मरणेन व्यभिचारः ; अन्यध्यासङ्गादि-संस्कारविरोध्यभावविशेषितस्यास्मरणस्य व्यभिचाराभावात् ।

"तदन्यधीरतात्पर्यं पटुत्वविरहो धियः । दुःखादि तीव्रमुन्मादोऽनभ्यासो दीर्घकालता ॥
एतैश्चादृष्टवैगुण्यं कल्प्यं संस्काररोधिषु । एतेष्वसत्स्वस्मरणात् ज्ञानाभावोऽनुमीयते ॥"

पथि[2] गच्छता स्पृष्टतृणादिकं पटुतरसंस्कारोदयविरोधिसद्भावान्न स्मर्यते, पथि गच्छन् हि गन्तव्यदेशकार्यचिन्तादिव्यासक्तो भवति । तृणादावादरश्च नास्ति ; प्रयोजनाभावात् । तदभावेऽपि गजादिदर्शनस्येव न पटुतरत्वं तृणादिज्ञानस्य ; विषयवैपुल्यवैचित्र्याद्यभावात् । जन्मान्तरानुभवजसंस्कारस्तु [3]प्रायण-नरक-प्रसूतिजन्यतीव्रदुःखाभिभवादनुद्बुद्धः । उन्मादश्च संस्कारोद्बोधविरोधी । अनभ्यासश्च तथा ; तस्य विस्मरणहेतुत्वदर्शनात् । कालदैर्घ्यमपि तत्प्रमोषकं दृष्टम् ; बाल्येऽनुभूतानां वृद्धावस्थायामस्मरणात् । न चैते हेतवः सुषुप्तौ सन्ति । न च किमप्यदृष्टं संस्कारोद्बोधविरोधि कल्प्यम् ; कल्पकाभावेन सौषुप्तिकाज्ञानस्य तद्विषयार्थस्मरणविरोध्यदृष्टस्य च कल्पनायोगात् । यदि किञ्चित्कल्पकतयोत्प्रेक्ष्येत, तदाप्यक्लृप्त्या निर्वाहे संभवति न कल्पनमुपपद्यते । एवमन्यपरत्वादिसंस्कारनिरो-

---

1 उपरि मनोव्यापारेणेत्युक्त्या मनोव्यापारभिन्नं ज्ञानं निर्विकल्पत्वेन विवक्षितम् । स्वमते हि सप्रकारकमपि संस्कारानधीनं निर्विकल्पकम् । मनोव्यापारपदं संस्कारापेक्षपरम् ।

2 उक्तकारिकाद्वयार्थमाह पथीत्यादिना ।

3 उक्तं हि, प्रायणान्नरकक्लेशात् प्रसूतिव्यसनादपि......न स्मृतिगोचराः इति ।

यदुक्तम्—अनुमानेनापि भावरूमज्ञानं (प) सिद्ध्यतीति । तदयुक्तम्; अनुमानासंभवात् ॥ ननूक्तमनुमानम् ॥ सत्यमुक्तम्; दुरुक्तं तु तत्; अज्ञानेऽप्यनभिमताज्ञानान्तरसाधनेन विरुद्धत्वात् हेतोः। तत्राज्ञानान्तरासाधने हेतोरनैकान्त्यम। साधने च, तदज्ञानमज्ञानसाक्षित्वं निवारयति। ततश्चाज्ञानकल्पना निष्फला स्यात् ।

---

धकहेतुविरहविशेषितास्मरणलिङ्गेन ज्ञानाभावानुमितिरूपमिदम्, 'न किञ्चिदवेदिषम्' इति ज्ञानम्। त्वयाऽपि ज्ञानाभावः सुषुप्तावभ्युपगतः । स चोक्तलिङ्गानुमेय एवेत्यभ्युपगन्तव्यम् । तदस्माकमपि तुल्यम् । अतः स्मृतित्वानुपपत्तेरनुमितिरूपत्वोपपादनाच्च न किञ्चिदवेदिषमिति ज्ञानमन्यथैवोपपन्नमिति न ततो भावरूपाज्ञानसिद्धिरिति ।

ईदृशदुर्वादानामनुपपन्नत्वं भावरूपाज्ञानविषयप्रत्यक्षप्रतिक्षेपतः सिद्धम् ॥

अथानुमानं दूषयति यदुक्तमित्यादिना । अनुमानासंभवादिति । त्वदुक्तमनुमानमाभास इति भावः । कथं दुरुक्तत्वमित्यत्राह अज्ञानेऽपीति । कथमज्ञानान्तरसाधनमवश्यम्भावि ; तस्य कथमनभिमतत्वम् इत्याशङ्कायां तदवश्यम्भावमुपपादयति तत्रेति । अज्ञानस्यानभिमतत्वमुपपादयति साधने चेति। ततः किमित्यत्राह ततश्चेति। अस्य प्रमाणज्ञानस्य अप्रकाशितार्थप्रकाशकत्वात् स्वविषयावरणाज्ञानान्तरसाधकत्वे सति तदज्ञानं ब्रह्मस्वरूपाच्छादकं सिषाधयिषितमज्ञानमावृणोति । तेनाऽऽवृतत्वात् तदज्ञानं ब्रह्मणा न साक्षात्क्रियते। अपरमार्थस्याप्रतीयमानस्य कार्यकरत्वायोगादज्ञानकल्पना निष्फला [स्यात्] । तिरोधानरूपकार्यार्थं हि तत्कल्पना । यदि असाक्षात्कृतमेव कार्यकरम् ; तदा सत्तया कार्यकरमिति काचादिवत् सत्यत्वात् ज्ञाननिवर्त्यं न स्यात्। एवमज्ञानस्य ज्ञानानिवर्त्यत्वनिष्फलत्वे, कारणतयाऽनभिमताज्ञानान्तरसाधकत्वम्, तदसाधने चानैकान्त्यमुक्तम् ॥

ननूक्तहेतुजन्यं ज्ञानं सम्यङ्निश्चयरूपं चेत्—तद्विरोधादेव न हेतोरनैकान्त्यम् । यदि न सम्यक्, तथापि न हेत्वनैकान्त्यम्, अप्रकाशितार्थप्रकाशकत्वहेतोस्तत्र वृत्त्यभावात् ॥ [1]उच्यते । [2]हेत्वनैकान्त्यपरिहारः साध्यविषयज्ञानस्य प्रमितिरूपत्वं प्रतिक्षिपति ; ज्ञानसम्यक्त्वं तु हेत्वनैकान्त्यपरिहारं प्रतिक्षिपति । अतो ज्ञानस्य सम्यक्त्वे तस्योक्तहेतुजन्यत्वं व्याहतम् ; हेतोरनैकान्त्यात् । न हि सम्यग्ज्ञानं दुष्टहेतुजन्यम् । उक्तहेतोरनैकान्त्यं न चेत् तस्यासम्यङ्निश्चयरूपज्ञानजनकत्वं व्याहतम् ; अदुष्टहेतोरसम्यग्ज्ञानजनकत्वायोगात् । एवं हेत्वनैकान्त्यपरिहार-ज्ञानसौष्ठवयोः परस्परविरोधेन तयोरिह समुच्चित्यासिद्धेरन्यतराभावेऽपि साध्यसिद्ध्यभावादनुमानमसमञ्जसमित्यभिप्राय इति ॥ ननु न हेत्वनैकान्त्यम् ; साध्यविषयज्ञाने हेतोरवृत्तेः । न ह्यप्रकाशितमज्ञानमनेन प्रकाश्यते ॥ किं तर्हि ? साक्षिचैतन्यसिद्धस्यैवाज्ञानस्य, अभावाद्विवेचनमात्रं क्रियते ॥ नैवम् ; अहमर्थधर्मभूत-

---

1 ज्ञानस्य सम्यक्त्वे तस्य प्रकृतहेतुजत्वात् हेतोरनैकान्त्यं नेति यदुच्यते, तन्न, ज्ञानस्य सम्यक्त्वे प्रकृतहेतुजत्वमेव न, अनैकान्त्यादित्युच्यमानत्वादित्याशयः ।

2 प्रकृतानुमितिरूपज्ञानस्य साध्यरहितत्वं स्थिरम् अज्ञानावरणभूताज्ञानाभावात् । तत्रास्य प्रमात्वे हेतोरनैकान्त्यं दुष्परिहरम्। अनैकान्त्याभावे ज्ञानस्यास्य प्रमात्वं दुःसाधमिति ।

दृष्टान्तश्च साधनविकलः; दीपप्रभाया अप्रकाशितार्थप्रकाशकत्वाभावात् । सर्वत्र ज्ञानस्यैव हि प्रकाशकत्वम् । सत्यपि दीपे ज्ञानेन विना विषयप्रकाशाभावात् । इन्द्रियाणामपि ज्ञानोत्पत्तिहेतुत्वमेव ; न प्रकाशकत्वम् । प्रदीपप्रभायास्तु चक्षुरिन्द्रियस्य ज्ञानमुत्पादयतो विरोधितमोनिरसनद्वारेणोपकारकत्वमात्रमेव । प्रकाशकज्ञानोत्पत्तौ व्याप्रियमाणचक्षुरिन्द्रियोपकारकहेतुत्वमपेक्ष्य दीपस्य प्रकाशकत्वव्यवहारः ॥ नास्माभिर्ज्ञानतुल्यप्रकाशकत्वाभ्युपगमेन दीपप्रभा निदर्शिता ; अपि तु ज्ञानस्येव(स्यैव) स्वविषयावरणनिरसनपूर्वक(ज्ञानस्येव स्वविषयावरणनिरसनरूप) प्रकाशकत्वमङ्गीकृत्येति चेत्—न; न हि विरोधिनिरसनमात्रं प्रकाशकत्वम्; अपि त्वर्थपरिच्छेदः; व्यवहारयोग्यतापादनमिति यावत् । तत्तु ज्ञानस्यैव । यदि उपकारकाणामप्यप्रकाशितार्थप्रकाशकत्वमङ्गीकृतम्, तर्हीन्द्रियाणामुपकारकतमत्वेनाप्रकाशितार्थप्रकाशकत्वमङ्गीकरणीयम् । तथा सति तेषां स्वनिवर्त्यवस्त्वन्तरपूर्वकत्वाभावात् हेतोरनैकान्त्यमित्यलमनेन ॥

---

प्रकाशोत्तीर्णेन स्वरूपचैतन्येनाज्ञानसिद्धावनुमानप्रामाण्यम्, तत्प्रामाण्येन भावरूपाज्ञानसिद्धिः, तत्सिद्धौ ज्ञातुरपि तत्कल्पितत्वात् तदुत्तीर्णसाक्षिचैतन्येनाज्ञानानुभवसिद्धि[1]रिति चक्रकापत्तेर्दुस्तरत्वात् ।

दूषणान्तरमाह **दृष्टान्तश्चे**त्यादिना । तत्र किं साक्षात्प्रकाशकत्वम्, उत परम्परया, उत साक्षाद्वा परम्परया वा प्रकाशकत्वमात्रम्, उत स्वविषयावरणनिरासकत्वे प्रकाशकत्वमिति चत्वारः कल्पाः । तत्र प्रथमे कल्पे दृष्टान्तः साधनविकलः । द्वितीये तु, पक्षे असिद्धिः । तृतीये तु, इन्द्रियेष्ववैकान्त्यम् । तेषां स्वनिवर्त्यवस्त्वन्तरपूर्वकत्वाभावात्; साक्षाद्वा परम्परया वा प्रकाशकयोरन्यतरत्वात् तेषाम् । इन्द्रियाण्यपि पक्षीकृत्य तेषामपि तथाविधवस्त्वन्तरपूर्वकत्वकल्पनमयुक्तम् । आहङ्कारिकाणामिन्द्रियाणामुत्पत्तेः स्वविषयावरणस्वदेशगतवस्त्वन्तरपूर्वकत्वाभावात् । आलोक एव हि तादृशः । चतुर्थपक्षे तु, साध्याविशिष्टता इत्यभिप्रेत्य पथमकल्पे दूषणमाह **दृष्टान्तश्च साधनविकल** इति । कथं ज्ञानस्यैव साक्षात्प्रकाशकत्वमिति शङ्कायां तदुपपादयति **सत्यपी**ति । **ज्ञानस्यैव हि प्रकाशकत्व**मित्यनेन द्वितीयकल्पे हेतोः पक्षे असिद्धिः फलिता । **इन्द्रियाणा**मित्यनेन तृतीयपक्षे इन्द्रियेष्वनैकान्त्यं विवक्षितम् । दीपप्रभायाः परम्परयाऽपि प्रकाशकत्वं दूरत इत्याह **प्रदीपे**ति । प्रकाशकत्वव्यवहारः कथमित्यत्राह **प्रकाशके**ति । चतुर्थपक्षं शङ्कते **नास्माभि**रिति । **निरसनपूर्वके**ति । [2]निरसनद्वारकेत्यर्थः । साध्याविशिष्टत्वमाह **न ही**ति । ज्ञानस्य विषयावरणनिरसनरूपं प्रकाशकत्वं न ह्यस्ति । तद्धि साध्यम्; न संप्रतिपन्नमित्यर्थः । **मात्र**चाऽर्थपरिच्छेदव्युदासः । **हि**शब्देन विषयावरणनिरासकत्वस्य साध्यत्वं फलितम् । तत्र संप्रतिपन्नं प्रकाशकत्वमाह **अपित्वि**ति । **परिच्छेद**शब्दस्य परिमितिपरत्वशङ्काव्यावृत्त्यर्थमाह **व्यवहारे**ति । **व्यवहारयोग्यता**—व्यवहारप्रतिसंबन्धित्वम् ॥ ननु न साध्याविशिष्टत्वं हेतोः । स्वप्रागभावनिरासकत्वं स्वविषयावरणनिरसनशब्देन विवक्षितम् । तेन भावरूप-

---

1 सिद्धिरिति । ज्ञातुरिति शेषः । अतश्चक्रकसंपत्तिः ।

2 निरासकत्वं नाम निरासजनकत्वम् । तस्य निरासघटितत्वात् निरासपूर्वकमित्युच्यते । एवमेव निरासकत्वं प्रकाशकत्वम् । किमर्थमेवं क्लिष्टार्थवर्णनमिति चेत्—निरसनमात्रं प्रकाशकत्वमित्युपरितनभाष्यैकरस्याय । पाठान्तरे तु न क्लेशः । शेषं भाष्यार्थदर्पणे ।

प्रतिप्रयोगाश्च—विवादाध्यासितमज्ञानं न ज्ञानमात्रब्रह्माश्रयम्, अज्ञानत्वात्, शुक्तिकाद्यज्ञानवत्; ज्ञात्राश्रयं हि तत्॥ विवादाध्यासितमज्ञानं न ज्ञानमात्रब्रह्मावरणम्, अज्ञानत्वात्, शुक्तिकाद्यज्ञानवत्; विषयावरणं हि तत्॥ विवादाध्यासितमज्ञानं न ज्ञाननिवर्त्यम्, ज्ञानविषयानावरणत्वात्, यत् ज्ञाननिवर्त्यम् अज्ञानम्, तत् ज्ञानविषयावरणम्; यथा शुक्तिकाद्यज्ञानम्॥ ब्रह्म नाज्ञानास्पदम्, ज्ञातृत्वविरहात्; घटादिवत्॥ ब्रह्म नाज्ञानावरणम्, ज्ञानाविषयत्वात्। यत् अज्ञानावरणं तत् ज्ञानविषयभूतम्, यथा शुक्तिकादि॥ ब्रह्म न ज्ञाननिवर्त्याज्ञानम्; ज्ञानाविषयत्वात्। यत् ज्ञाननिवर्त्याज्ञानम् तत् ज्ञानविषयभूतम्, यथा शुक्तिकादि॥

विवादाध्यासितं प्रमाणज्ञानं स्वप्रागभावातिरिक्ताज्ञानपूर्वकं न भवति, प्रमाणज्ञानत्वात्, भवदभिमताज्ञानसाधनप्रमाणज्ञानवत्॥ ज्ञानं न वस्तुनो विनाशकम्, शक्तिविशेषोपबृंहणविरहे सति ज्ञानत्वात्। यत् वस्तुनो विनाशकम्, तत् शक्तिविशेषोपबृंहितज्ञानमज्ञानं च दृष्टम्, यथैश्वरयोगिप्रभृतिज्ञानम्, यथा च मुद्गरादि॥

---

निरसनीयपूर्वकत्वं साध्यमिति॥ न; स्वप्रागभावनिरासकत्वस्य हेतोरिन्द्रियसंप्रयोगे अनैकान्तिकत्वात्। भासमानत्वे सति अप्रकाशितार्थप्रकाशकत्वादिति हेतौ विशेषितेऽपि पूर्ववद्विकल्पः स्यात्। तत्र साक्षात्पक्षे दृष्टान्तः साधनविकलः। प्रणाड्येति पक्षे हेत्वसिद्धिः। तृतीये लिङ्गादौ व्यभिचारः। चतुर्थे साध्याविशिष्टता; भासमानत्वविशेषितस्य विषयावरणनिरासकत्वस्यासंप्रतिपत्तेः।

अथास्यानुमानस्य प्रतिकूलतर्कपराहतिमाह **प्रतिप्रयोगाश्चे**ति। तर्कस्यापि व्याप्तिमूलत्वात् **प्रयोगा** इत्युक्तम्। स्वदेशगतत्वस्वविषयावरणत्वस्वनिवर्त्यत्वानां प्रतिकूलं यथाक्रममनुमानत्रयम् अज्ञानं पक्षीकृत्योच्यते। **विवादाध्यासितम्**—ब्रह्माश्रयमतदाश्रयमिति विवादध्यासितमित्यर्थः। ततश्च शुक्त्याद्यज्ञानव्यावृत्तिः। तद्धि जीवाश्रयम्, अप्रामाणिकमपि भावरूपमज्ञानम्, ज्ञानमात्रं ब्रह्म चाभ्युपगम्य प्रतिकूलतर्का उच्यन्ते। शुक्त्याद्यज्ञानस्य ज्ञानानाश्रयत्वं कथमित्यत्राह **ज्ञात्राश्रय**मिति। एवं व्याप्तिर्दर्शिता। अज्ञानत्वे ज्ञानानाश्रयत्वप्रसङ्ग इत्युक्तं भवति। प्रतिकूलतर्कान्तरमाह **विवादे**ति। व्याप्तिं दर्शयति **विषयावरण**मिति। अज्ञानत्वे ज्ञानानावरणत्वप्रसङ्ग इत्यर्थः। तृतीयेपि प्रयोगे, ज्ञेयानावरणत्वे ज्ञानानिवर्त्यत्वप्रसङ्ग इत्यर्थः॥ अथ ब्रह्म पक्षीकृत्य प्रतिकूलतर्कत्रयमुच्यते **ब्रह्मे**त्यादिना। अज्ञानाश्रयत्वे ब्रह्मणो ज्ञातृत्वप्रसङ्ग इत्यर्थः। द्वितीयेऽपि प्रयोगे, ब्रह्मणोऽज्ञानवरणत्वे ज्ञेयत्वप्रसङ्ग-इत्यर्थः। तृतीयेऽपि, ब्रह्मणो ज्ञाननिवर्त्याज्ञानत्वे ज्ञेयत्वप्रसङ्ग इत्यर्थः।

अथ प्रमाणज्ञानं पक्षीकृत्य प्रागभावव्यतिरिक्तत्वस्य प्रतितर्कमाह **विवादाध्यासित**मिति। प्रमाणज्ञानत्वे प्रागभावातिरिक्ताज्ञानपूर्वकत्वाभावप्रसङ्ग इत्यर्थः। यद्वा अनुमानमेवेदम्। धारावाहिकज्ञानेषु प्रथमस्य पक्षत्वमुत्तरज्ञानानां सपक्षत्वमपि ह्युपपद्यते। **ज्ञानं न वस्तुनो विनाशक**मित्यादिना व्यतिरेक्यनुमानमुक्तम्; व्यतिरेकव्याप्तिं द्विधा दर्शयति **यद्वस्तुन** इति। शक्तिविशेषोपबृंहणविरहे सति ज्ञानत्वादिति विशिष्टो हि हेतुः। तत्र शक्तिविशेषानुपबृंहितज्ञानव्यतिरिक्तत्वाविशेषात् शक्तिविशेषोपबृंहितं ज्ञानं शक्तिविशेषानुपबृंहितमज्ञानं च द्वयमपि व्यतिरेकव्याप्तिभूमिरित्युभयत्र व्याप्तिर्दर्शिता।

भावरूपमज्ञानं न ज्ञानविनाश्यम्, भावरूपत्वात्, घटादिवदिति। अथोच्येत—बाधकज्ञानेन पूर्वज्ञानोत्पन्नानां भयादीनां विनाशो दृश्यते--इति—नैवम्; न हि ज्ञानेन तेषां विनाशः, क्षणिकत्वेन तेषां स्वयमेव विनाशात्, कारणनिवृत्त्या च पश्चादनुत्पत्तेः। क्षणिकत्वं च तेषां ज्ञानवदुत्पत्तिकारणसंनिधान एवोपलब्धेः, अन्यथाऽनुपलब्धेश्चावगम्यते; अक्षणिकत्वे च भयादीनां भयादिहेतुभूतज्ञानसन्ततावविशेषेण सर्वेषां ज्ञानानां भयाद्युत्पत्तिहेतुत्वेनानेकभयोपलब्धिप्रसङ्गाच्च ॥

---

भावरूपमज्ञानं पक्षीकृत्याह **भावरूप**मिति। भावरूपत्वे ज्ञानमात्रनिवर्त्यत्वं न स्यादित्यर्थः। भावरूपत्वज्ञाननिवर्त्यत्वयोर्न व्याप्तिः; भयादेर्भावरूपस्य ज्ञाननिवर्त्यत्वदर्शनादिति व्याप्तिभङ्गमाशङ्कते **अथोच्येते**ति। **पूर्वज्ञानोत्पन्नानाम्**—पूर्वभ्रान्तिज्ञानोत्पन्नानामित्यर्थः। बाधकज्ञानोदयात् प्राक् भयानुवृत्तेः, तदुत्पत्तेः पश्चाद्भयादिनिवृत्तेश्चेति भावः। परिहरति **नैव**मिति। फलविनाश्यानि हि स्वाश्रयविनाशाधीननश्वर(धीननाशवद् ?)व्यतिरिक्तक्षणिकानि। उक्तविशेषणेन ज्वालाव्यावृत्तिः। तथा भयाद्यपि कम्पादिकार्यं जनयित्वा [1]स्वयं नश्यतीत्यर्थः॥ न भयादेः क्षणिकत्वम्, चिरोपलब्धेरिति चेन्न; कारणभूतभ्रान्तिज्ञानाद्यनुवृत्त्या भयादिसंतत्युत्पत्तेर्हि चिरोपलब्धिः॥ तर्हि सदा भयसन्ततिरुपलभ्येतेति चेदत्राह **कारणनिवृत्त्या च पश्चादनुत्पत्ते**रिति। कारणभूतभ्रान्तिज्ञानादिनिवृत्त्या कार्यभूतभयादिसन्तत्यनुत्पत्तेर्न सदोपलब्धिरित्यर्थः। पश्चादनुत्पत्तेरिति पञ्चम्याः **क्षणिकत्वेने**ति पूर्वत्रान्वयः। कारणनिवृत्त्या च पश्चादनुत्पत्तेः सिद्धेन क्षणिकत्वेन स्वयमेव विनाशादित्यर्थः। यद्वा न क्षणिकत्वमिति शङ्कायाम् उपपन्नं क्षणिकत्वमित्यर्थवशादाकृष्टेन वाक्येनान्वयः। एवं क्षणिकत्वानुबन्धिचोद्यपरिहारः कृतः। यद्वा—**नैव**मिति दूषणप्रतिज्ञामुपपादयितुम्,[2] यावद्बाधं भयस्वरूपानुवृत्तेरसिद्धिमाह **क्षणिकत्वेने**ति, बाधकज्ञानानन्तरनिवृत्तेरन्यथासिद्धिमाह **कारणनिवृत्त्या चे**ति। तत्क्षणिकत्वं कुतः सिद्धमिति शङ्कायां तदुपपादयति **क्षणिकत्वं चे**ति। स्थायिनो हि घटादयो दण्डचक्रादिकारणनिवृत्तावप्युपलभ्यन्ते; न तथा ज्ञान-दीपज्वालादिः। तथा भयादेरपि कारणसंनिधान-तन्निवृत्त्यनुविधायिसद्भावासद्भावतया क्षणिकत्वं निश्चितमित्यर्थः। विपक्षे बाधमाह **अक्षणिकत्वे चे**ति। स्थायिनो हि घटादयः प्रतिक्षणमुत्पद्यमाना बहवो युगपदुपलभ्यन्ते; तथाऽत्रापि प्रसजेदिति भावः। अतो न भयादिकं ज्ञाननिवर्त्यम्; स्वयमेव क्षणिकतया नश्यति। भयसन्तत्युच्छेदो भ्रान्तिज्ञानपरम्परारूपकारणनिवृत्त्या। तन्निवृत्तिश्च दोषनिवृत्त्या। नायं सर्पो रज्जुरेषेति ज्ञानं स्वविषयव्यवहारहेतुः; न तु साक्षाद्भयादिनिवृत्तिहेतुः। रज्जुत्वं हि सर्पव्यावृत्तिः। अतः सर्पव्यावृत्तिरूपरज्जुत्वज्ञानाभावेन सर्पबुद्ध्यनुवृत्त्या पाश्चात्यभयानुवृत्तिः, सर्पव्यावृत्तिरूपरज्जुत्वज्ञानेन सर्पपारमर्थ्याभिमाननिवृत्त्या भयनिवृत्तिरिति [3]**सर्वाभ्युपगत**प्रकारेण दूषणमुक्तम्। **स्वपक्षे** तु ज्ञानविशेष एव भयादिः क्षणिकतया स्वयं नश्यति। भयादिरूपज्ञानानुवृत्तिस्तु दोषात् सर्पादिभ्रमानुवृत्तिमूला; तन्निवृत्त्या च तत्संततिनिवृत्तिरिति परिहारः।

---

[1] स्वयमिति। फलभूतकम्पाद्यतिरिक्तकारणानपेक्षमित्यर्थः। [2] उपपादयितुमित्यस्य द्वितीयेनापि आहेत्यनेनान्वयः। तथा च नैवमित्यत्रैव अनुत्पत्तेरित्यस्यान्वयात् नाध्याहारादिक्लेश इति।

[3] भयं नाम दुःखविशेष इति स्वस्वेतर सर्वसंमतम्। दुःखं ज्ञानातिरिक्तमिति स्वेतरे।

स्वप्रागभावव्यतिरिक्तवस्त्वन्तरपूर्वकमिति व्यर्थविशेषणोपादानेन प्रयोगकुशलता चाऽऽविष्कृता। अतोऽनुमानेनापि न भावरूपाज्ञानसिद्धिः।

श्रुतितदर्थापत्तिभ्यामज्ञानासिद्धिरनन्तरमेव वक्ष्यते।

मिथ्यार्थस्य मिथ्यैवोपादानं भवितुमर्हतीत्येतदपि "न विलक्षणत्वात्" इत्यधिकरणन्यायेन परिह्रियते। अतोऽनिर्वचनीयाज्ञानविषया न काचिदपि प्रतीतिरस्ति। प्रतीतिभ्रान्तिबाधैरपि न तथाभ्युपगमनीयम्। प्रतीयमानमेव हि प्रतीतिभ्रान्तिबाधविषयः। आभिः प्रतीतिभिः प्रतीत्यन्तरेण चानुपलब्धमासां विषय इति न युज्यते कल्पयितुम्॥

शुक्त्यादिषु रजतादिप्रतीतेः, प्रतीतिकालेऽपि तन्नास्तीति बाधेन च, अन्यस्यान्यथाभानायोगाच्च सदसदनिर्वचनीयमपूर्वमेवेदं रजतं दोषवशात् प्रतीयत इति कल्पनीयमिति चेत्—

---

एवमर्थदूषणमुक्तम्; अथ प्रयोगदूषणमाह **स्वप्रागभावे**ति। **स्व**शब्दः **प्राक्**शब्दोऽ**भावव्यतिरिक्त**शब्दोऽन्तरशब्दश्च निरर्थकाः। **वस्तु**शब्दो हि भाववाची। अनुमानेन भावरूपाज्ञानासिद्धिं निगमयति **अत** इति। श्रुत्यर्थापत्तिभ्यां तत्सिद्धिमाशङ्क्याह **श्रुती**ति।

अनिर्वचनीयत्वे परोक्तहेतुं विस्तरेण दूषयति **प्रतीती**ति। **प्रतीतिः** भ्रान्त्यभ्रान्तिसाधारणरूपा। **भ्रान्तिः** विद्यमानभेदाग्रहणपूर्वकसाधारणाकारग्रहणजन्या स्वविषयान्यथात्वविशेषिता प्रवृत्त्यादिहेतुभूता। **बाधः** आरोपितविरुद्धाधिष्ठानाकारावगाहिनी बुद्धिः। **न तथाभ्युपगमनीयम्**—नानिर्वचनीयत्वेनाभ्युपगमनीयमित्यर्थः। प्रतीतिभ्रान्तिबाधानां स्वविषयोल्लेखमात्रेण वा अन्यथानुपपत्त्या वा अनिर्वचनीयसिद्धिरिति विकल्पमभिप्रेत्य प्रथमं दूषयति **प्रतीयमान**मिति। **प्रतीयमानं** प्रतीत्युल्लिख्यमानम्। न हि नीलोल्लेखः पीतोल्लेखतया अङ्गीकार्यः; तथा सति सर्वोपप्लवप्रसङ्गादिति भावः। द्वितीयं दूषयति **आभिरि**ति। **आभिः**—प्रतीतिभ्रान्तिबाधशब्दोपात्ताभिः प्रत्यक्षप्रतीतिभिः। **प्रतीत्यन्तरेण**—प्रमाणान्तरजन्येन। यद्वा **आभिः**—लौकिकप्रतीतिभिः। **प्रतीत्यन्तरेण**—आगमजन्येन। यद्वा **आभिः प्रतीतिभिः**। एकाधिष्ठाने सर्पभूदलनाम्बुधारादिबहुत्वाभिप्रायं बहुवचनम्। **प्रतीत्यन्तरेण**—बाधज्ञानेन। सङ्क्षिप्तस्य दूषणस्य विस्तरार्थं परमतमनुवदति **शुक्त्यादिष्वि**ति। **अन्यस्यान्यथाभानायोगा**च्चेति॥

ननु कथमन्यथाभानायोगः॥ उच्यते। न तावत् धर्मधर्मिणोर्मिथस्तादात्म्यभानमन्यथाख्यानम्। पुरोऽवस्थितशुक्लभास्वरशकलं न रजतत्वजातितया प्रतीयते। रजतत्वञ्च न भास्वरशकलतयां प्रतीयते। शकलं च शकलत्वेन, जातिश्च जातित्वेन प्रतीयते। तस्मान्नानयोरन्यतरस्य तदितरत्वभानमिति। नापि धर्म्यन्तरस्य 'धर्म्यन्तरतादात्म्य**मन्यथात्वम्**। तत् किं विषयगतम्, उत ज्ञानगतम्। विषये तदन्यथात्वमस्ति चेत्—यथार्थैव प्रतीतिः। नास्ति चेत्—असत्ख्यातिप्रसङ्गः। यदि ज्ञानगतम्, विषयोऽन्यः ज्ञानमप्यन्यदेवेति नोपपद्यते। न हि घटज्ञानस्य पटज्ञानत्वसंभवः। आत्मख्यातिप्रसङ्गश्च, ज्ञानाकारत्वाद्रजतादेः॥ स्वस्मिन् असता आकारेण ख्यानमन्यथाख्यानमिति चेन्न; असत्ख्यातिप्रसङ्गात्॥ अन्यत्र सतोऽन्यत्र ख्यानं ख्यानस्यान्यथात्वमिति चेन्न; खण्डे दृष्टस्य गोत्वस्य मुण्डे दर्शनस्यापि भ्रमत्वापातात्। अन्यत्रैव सतोऽन्यत्र ख्यानमन्यथात्वमिति चेत्—अन्यत्रैव सत्त्वं कथं निश्चीयते॥

न; तत्कल्पनायामप्यन्यस्यान्यथाभानस्यावर्जनीयत्वात्; अन्यथाभानाभ्युपगमादेव ख्यातिप्रवृत्ति-बाधभ्रमत्वानामुपपत्तेरत्यन्तापरिदृष्टाकारणकवस्तुकल्पनायोगात्।

कल्प्यमानं ह्यीदमनिर्वचनीयम्, न तावदनिर्वचनीयमिति प्रतीयते; अपि तु परमार्थरजत-मित्येव। अनिर्वचनीयमित्येव प्रतीतं चेत्, भ्रान्तिबाधयोः प्रवृत्तेरप्यसंभवः। अतोऽन्यस्यान्यथा-

---

इह बाधादिति चेन्न; भ्रान्तिज्ञानबाधितस्य सत्यरजतस्याप्यत्रासत्त्वनिश्चयप्रसङ्गात्॥ प्रवृत्तिबाधादन्यत्रैव सत्त्वनिश्चय इति चेन्न; मन्त्रौषधादिप्रतिबद्धस्याग्नेरपि स्फोटजननादिप्रवृत्तिबाधेन मिथ्यात्वनिश्चयप्रसङ्गात्॥ दुष्टकारणजन्यज्ञानविषयत्वादिह बाध्यत इति चेत्—कथं दुष्टकारणजन्यत्वनिश्चयः॥ बाधक-ज्ञानोदयादिति चेत्—पूर्वज्ञानमेव बाधकं स्यात्। परत्वस्याकिञ्चित्करत्वं हि दर्शितम्। पूर्वज्ञानस्य दुष्टकारणजन्यत्वे निश्चिते पाश्चात्यज्ञानस्य बाधकत्वनिश्चयः, तस्य बाधकत्वे निश्चिते पूर्वस्य दुष्टकारणजन्यत्वनिश्चयः इत्यन्योन्याश्रयश्च स्यात्। किञ्च यत् तावत् रजतं पुरोवर्तिनि भातम्, तस्यैवान्यत्र सत्त्वे किं प्रमाणम्? न तावत् पूर्वज्ञानम्; अत्र सत्त्वेन हि तदवगमयति। न बाधकज्ञानञ्च; तद्धि पुरोवर्तिन्यसत्त्वमवगमयति। नापि रजतग्राहकप्रमाणम्; तत् खल्वापणे रजतसत्तामवगमयति; न तु तस्य, पुरतः ख्यातस्य चैक्यम्॥ क्वचिदप्यसतः ख्यानायोगात् अन्यत्र सत एव ख्यातत्वं निश्चीयत इति चेन्न; असतः ख्यानायोगस्य संबन्धे परित्यक्तत्वात्। न हि पुरोवर्तिनि रजतधर्मिसंबन्धो रजतत्वजातिसंबन्धो वा अन्यत्र विद्यते॥ ननु—अन्यत्र संबन्धमात्रमस्ति; तदिह प्रकाशते—इति अन्यत्र सत एवान्यत्र ख्यानमिति चेन्न—संबन्धद्वयानवभासात्। अन्यत्र सतः संबन्धस्यान्यत्र ख्याने सम्बन्धिन इव संबन्धान्तरमपेक्षितम्। संबन्धान्तरावभासे चान्यत्र सतः ख्यानं न स्यात्; द्वितीयसंबन्धस्य कचिदप्यसत्त्वात्॥ संबन्धस्य संबन्धान्तरानपेक्षत्वात् संबन्धान्तराभावेऽपि पुरोवर्तिनि भानं युक्तमिति चेत्—एवं तर्हि संबन्ध्यन्तरसंबन्धः पुरोवर्ति च निरन्तरं भातमिति यथार्थख्यातिरेवोक्ता स्यात्; ख्यातांशस्य सत्त्वात् असतः कस्यचित् ख्यातत्वाभावाच्च। किञ्च शुक्तिशकलस्यैव रजतज्ञानविष-यत्वं रजतोपायान्यत्वे सति रजतार्थिप्रवृत्तिविषयत्वादिति साधयितुमप्ययुक्तम्। तथा हि—इदमर्थस्य रजतत्वजातिविशिष्टताज्ञानविषयत्वं हि साध्यम्, तत् अबाधितप्रवृत्तिविषयत्वप्रयुक्तमिति हेतोस्सोपाधि-कत्वम्। शुक्तिर्न रजततया भाति शुक्तित्वात् सम्प्रतिपन्नवदिति च बाधः। एवमादिदूषणाभिप्रायेण अन्यस्यान्यथाभानायोगाच्चेत्युक्तम्।

दूषयति नेति। अन्यत्रैव सता आकारेण पुरोवर्तिनो विशिष्टताज्ञानम् अन्यथाभानम्। प्रतिपन्नाकारस्य पुरोवर्तिन्यभावनिश्चयश्च प्रवृत्तिबाधसचिवात् नास्तीति[1] प्रत्ययात्। न हि प्रतिबद्धाग्ने-रग्नित्वं नास्तीति प्रत्यय इति प्रसिद्धम्॥ कथं तत्कल्पनायामप्यन्यथाभानस्यावर्जनीयत्वमित्यपेक्षायामाह कल्प्यमानं हीति। अनिर्वचनीयमित्येव प्रतीत्यभ्युपगमे प्रतीतेर्भ्रमरूपत्वं बाधः प्रवृत्तिश्च न स्युः। अनिर्वचनीयं निर्वचनीयत्वेन प्रतीतं चेत्—अन्यस्यान्यथावभासोऽवर्जनीयः स्यादित्यर्थः।

---

1 नास्तीतिप्रत्ययात्—बाधकप्रमाणादित्यर्थः। अतो न कार्याविशिष्टता। प्रवृत्तिवैफल्यमात्रं नाभावनिश्चायकम्; मण्यादिप्रतिबद्धेऽग्नौ दाहप्रवृत्तिवैफल्येऽप्यग्नित्वाभावानिश्चयात्।

भानविरहे प्रतीतिप्रवृत्तिबाधभ्रमत्वानामनुपपत्तेः तस्यापरिहार्यत्वाच्च, शुक्त्यादिरेव रजताद्याकारेणावभासत इति भवताऽभ्युपगन्तव्यम् ॥

ख्यात्यन्तरवादिनाञ्च सुदूरमपि गत्वाऽन्यथावभासोऽवश्याश्रयणीयः—असत्ख्यातिपक्षे सदात्मना; आत्मख्यातिपक्षे अर्थात्मना; अख्यातिपक्षेऽपि अन्यविशेषणमन्यविशेषणत्वेन, ज्ञानद्वयमेकत्वेन च; विषयासद्भावपक्षेऽपि विद्यमानत्वेन ॥

किञ्च--अनिर्वचनीयमपूर्वरजतमत्र जातमिति वदता तस्य जन्मकारणं वक्तव्यम्; न तावत् तत्प्रतीतिः, तस्यास्तद्विषयत्वेन तदुत्पत्तेः प्रागात्मलाभायोगात्। निर्विषया जाता तदुत्पाद्य तदेव

---

**तस्यापरिहार्यत्वाच्चे**ति। **तस्य**—अन्यथाभानस्य। अयमभिप्रायः—'नान्यस्यान्यथाभानम्; विद्यमानस्यैव प्रतीतेः। अलौकिकं सत् लौकिकं सच्चेति द्विविधं सत्। अनिर्वचनीये चालौकिकं सत्त्वमस्ति। अत्र तदलौकिकं सत् रजतं प्रतीयते' इति चेत्—किमलौकिकं सत् अलौकिकसत्त्वेन प्रतीयते, उत लौकिकसत्वेन? प्रथमे भ्रमत्वबाधप्रवृत्त्यसंभवः। अलौकिकं लौकिकं सदिति प्रतीतं चेत्—अन्यस्यान्यथाख्यानं स्यात्॥ अलौकिकसतो लौकिकसता भेदाग्रहात् प्रवृत्त्यादिसंभव इति चेत्—तर्हि तत्रानिर्वचनीयं वस्तु कल्पयित्वा तत्र भेदाग्रहेण प्रवृत्तिबाधभ्रमत्वोपपादनादपि प्रथमत एव संप्रतिपन्नरजताच्छुक्तित्वरूपभेदाग्रहेण प्रवृत्तिबाधभ्रमत्वोपपादने कल्पनालाघवादनिर्वचनीयं वस्त्वनुपपन्नम्----इत्यादिपदकपरम्परामभिप्रेत्य **तस्यापरिहार्यत्वाच्चे**त्युक्तम्॥ यथार्थख्यातिव्यतिरिक्तपक्षेष्वन्यथाख्यातिपक्षः प्रबल इत्यभिप्रायेणाह **ख्यात्यन्तरे**ति। **सुदूरमपि गत्वा**—पदकपरम्परामुक्त्वाऽपीत्यर्थः। तदुपपादयति **अस**दिति। अयं माध्यमिकपक्षः। किमसदित्येव प्रतीयते, उत सदिति॥ असदितीति चेत्, भ्रमत्वबाधप्रवृत्त्यसंभवः। सदितीति चेत्, अन्यस्यान्यथाभानं स्यादित्यर्थः। **आत्मे**ति। अयं **योगाचार**पक्षः। **आत्मशब्दो** ज्ञानपरः। किं ज्ञानमित्येव प्रतीतम्, उतार्थ इति। प्रथमे प्रवृत्तिबाधभ्रमत्वासंभवः। द्वितीयेऽन्यस्यान्यथाभानमित्यर्थः। **अख्यातिपक्ष** इति। इदं रजतमिति[1] किमेक[2]ज्ञानम्; उत ज्ञानद्वयमिति विकल्पमभिप्रेत्य एकज्ञानमिति पक्षे[3] ज्ञेये अन्यथाख्यातिं प्रसञ्जयति **अन्यविशेषणमन्यविशेषणत्वेने**ति। इदं रजतमित्येकत्वेन[1] संप्रतिपन्नसम्यग्रजतवत् आरोप्यलिङ्गानुविधायिप्रयोगानुगुणसामानाधिकरण्येन प्रतीतत्वादन्यविशेषणमन्यविशेषणत्वेन प्रतीयत इत्यापादितम्; न तु तत्पक्ष उपन्यस्तः। ज्ञानद्वयमितिपक्षे ज्ञानेऽन्यथाख्यातिं प्रसञ्जयति **ज्ञाने**ति। ज्ञानद्वयं किं ज्ञानद्वयमित्येव प्रतीतम्; उतैकमिति इति विकल्पे पूर्ववद्दूषणम्। **विषयासद्भावे**ति। किमविद्यमानत्वेन प्रतीयते; उत विद्यमानत्वेन प्रतीयते? प्रथमे प्रवृत्त्याद्यसंभवः। द्वितीयेऽन्यथाभानमित्यर्थः॥

अथ अकारणत्वमुपपादयति **किञ्चे**ति। **तस्याः**—प्रत्यक्षप्रतीतेः। **तद्विषयत्वेन**—विद्यमान-

---

1 एकत्वेन—अभिन्नत्वेन। आरोप्यलिङ्गं रजतपदक्लीबत्वादि। सामानाधिकरण्येन—समानविभक्तिकत्वेन। 2 ग्रहणस्मरणरूपतया प्राय एकज्ञानत्वासंभववादितन्मतेऽपि हस्ते निगूह्य इदं रजतमिति स्मृत्वा व्यवहारे उभयविषयकैकस्मरणं सुवचमित्याशयः। 3 ज्ञानद्वित्वपक्षेऽपि ज्ञानद्वयैकत्वग्रहाधीनः अन्यविशेषणत्वेनावभासो भवति, न तु स एकत्वावभासात् प्रागिति विशेषः।

विषयीकरोतीति महतामिदमुपपादनम्। अथेन्द्रियादिगतो दोषः, तन्न; तस्य पुरुषाश्रयत्वेनार्थगतकार्यस्योत्पादकत्वायोगात्। नापीन्द्रियाणि, तेषां ज्ञानकारणत्वात्। नापि दुष्टानीन्द्रियाणि, तेषामपि स्वकार्यभूते ज्ञान एव हि विशेषकरत्वम्। अनादिमिथ्याज्ञानोपादानत्वं तु पूर्वमेव निरस्तम्॥ किञ्च—अपूर्वमनिर्वचनीयमिदं वस्तुजातं रजतादिबुद्धिशब्दाभ्यां कथमिव विषयीक्रियते, न घटादिबुद्धिशब्दाभ्याम्। रजतादिसादृश्यादिति चेत्; तर्हि तत्सदृशमित्येव प्रतीतिशब्दौ स्याताम्। रजतादिजातियोगादिति चेत्; सा किं परमार्थभूता, अपरमार्थभूता वा?

---

विषयकारणकत्वेन। कारणं हि नियतपूर्वभावीति भावः। **महतामिदमुपपादन**मिति। तस्य वृत्तिज्ञानस्य विषयरहितावस्थास्वीकारेण कारणत्वाभ्युपगमेऽपसिद्धान्तापातात्, निर्विषयख्यातिवादिनामिव तत्प्रभावेन प्रवृत्त्यादिसिद्धौ अनिर्वचनीयक्लृप्तिवैयर्थ्यात्, विषयरूपकारणेन विनोत्पत्तिवचनात्, विरम्यव्यापारवचनाच्चात्यन्तमनुपपन्नमित्यर्थः। **अथेन्द्रियादी**ति। **आदि**शब्देन विषयगतदोषः, पुरुषस्यानवधानं वा गृह्यते। **तस्य पुरुषाश्रयत्वेने**ति। दूरत्वादिदोषस्य विषयगतत्वेऽपि पुरुषगतत्वस्यापि संभवादुभयत्र कार्यमुत्पाद्यम्; न विषयमात्रे; नियामकाभावात्। अतः पुरुष इव विषयेऽपि न संभवतीत्यभिप्रायः॥ ननु चक्षुषः पुरुषाश्रयत्वेऽपि चाक्षुषरश्मेः प्रसृतस्य विषयसंबद्धस्य तत्र कार्यकरत्वं दृष्टम्॥ न; तत्कार्यस्य ज्ञानस्य पुरुषाश्रितत्वात् दोषांशस्याकार्यकरत्वात्॥ ननु विषयमात्रगताः सादृश्यादयो दोषाः सन्ति। तेषां तत्रैव कार्यकरत्वमुपपद्यते॥ मैवम्; सादृश्यादेर्यावद्द्रव्यभाविनः सदोत्पादकत्वप्रसङ्गात्। आगन्तोरन्यस्य तत्रादृष्टेः। इन्द्रियसंयोगस्य पुरुषगतज्ञानातिरिक्तहेतुत्वासिद्धेः। [1]दृष्टिविषादिन्यायस्यात्रासंभवात्। संभवेऽपि सर्वैरुपलम्भप्रसङ्गाच्च। नन्विन्द्रियाणि यथा पुरुषविशेषसंबन्धात् तत्रैव कार्यविशेषमुत्पादयन्ति, एवं विषयविशेषसंबन्धात् तत्रैव किञ्चिज्जनयन्तु। तत्राह **नापीन्द्रियाणी**ति। पुरुषगतज्ञानाख्यकार्यकरत्वमन्वयव्यतिरेकावसितम्। विषये त्विन्द्रियजन्यं कार्यान्तरं न दृष्टम्। तत्क्लृप्तिरन्यथैवोपपत्त्या निरस्तेति भावः। तथापि दुष्टपुरुषसंनिधानात् यथा देशादिषु दोषाः प्रादुष्युः, तथा दुष्टेन्द्रियसंनिधानाद्विषये कार्यविशेषः स्यादित्यत्राह **नापि दुष्टानी**ति। अन्वयव्यतिरेकादिकमतिलङ्घ्य दृष्टान्तमात्रेण न किञ्चित् साधयितुं शक्यमिति भावः। किमत्र हेत्वन्तरगवेषणया? अनादिभावरूपाज्ञानमेव विश्वोपादानभूतं शुक्तिरजताद्यपि विचित्रकार्यं जनयेदित्यत्राह **अनादी**ति। तस्य स्वरूपानादित्वात्। कार्यमपि प्रागेव स्यात्। सहकारित्वेन शङ्कनीयमिन्द्रियादिकं तु निरस्तम्। मिथ्याभूतस्य चार्थक्रियाकारित्वमयुक्तम्। आश्रयानुपपत्त्यादयश्च पूर्वमेवोक्ता इति भावः॥

एवमनिर्वचनीयस्य रजतादेरुत्पादकानुपपत्तिमुक्त्वा तदुत्पत्तावपि रजतादिबुद्धिशब्दान्वयनियमानुपपत्तिमाह **किञ्चे**ति। तद्व्यवस्थापकं शङ्कते **रजतादी**ति। प्रातिभासिकस्य रजतादेरर्थक्रियाकारिव्यावहारिकरजतादिसादृश्यादित्यर्थः। उक्तस्य व्यवस्थापकत्वाभावमभिप्रेत्य सादृश्यस्य यथादर्शनं साध्यान्तरमाह **तर्ही**ति। यदि तत्सदृशे तद्बुद्धिः, तदा गवये गोबुद्धिवदन्यथाख्यातिः स्यादित्येवकाराभिप्रायः। सादृश्यस्यानिर्वाहकत्वेऽपि तज्जातियोगस्य तद्बुद्धिनिर्वाहकत्वं दृष्टमिति शङ्कते

---

[1] दृष्टिविषाः सर्पाः दृष्टिविषये विषमुत्पाद्य घ्नन्तीति भावप्रकाशिका। एवं केषाञ्चित् दृष्टौ पतितायां सम्यञ्चि वस्तूनि आभासीभवन्तीत्यप्यत्र ग्राह्यम्।

न तावत् परमार्थभूता, तस्या अपरमार्थान्वयायोगात्। नाप्यपरमार्थभूता, परमार्थान्वयायोगात्। अपरमार्थे परमार्थबुद्धिशब्दयोर्निर्वाहकत्वायोगाच्चेत्यलमपरिणतकुतर्कनिरसनेन॥..अथ वा—

यथार्थं सर्वविज्ञानमिति वेदविदां मतम्। श्रुतिस्मृतिभ्यः सर्वस्य सर्वात्मत्वप्रतीतितः॥
"बहु स्या"मितिसङ्कल्पपूर्वसृष्ट्याद्युपक्रमे। "तासां त्रिवृतमेकैका"मिति श्रुत्यैव चोदितम्॥

---

**रजतादी**ति। **सा**—रजतादिजातिः। **अपरमार्थान्वयायोगात्**—अपरमार्थव्यक्त्यन्वयायोगादित्यर्थः। व्यक्तिबाधेऽपि जातेरबाधितत्वप्रसङ्ग इति भावः। जातिरपि हि बाध्यते। न हि, व्यक्तिर्नास्ति जातिरस्तीति प्रतीतिः। जातिरपि नास्तीत्येव हि प्रतिपत्तिः। न च प्राक्प्रतिपन्नाया अपि जातेः पश्चादप्रतीतिरभिव्यञ्जकव्यक्त्यभावात्; न तु जात्यभावादिति वाच्यम्; अभिव्यञ्जकवति पूर्वकाले प्रतिपन्नाया अपि जातेस्तत्कालसंबन्धितयैव नास्तितागोचरत्वाद्बाधकप्रत्ययस्य। प्रतिपन्नोपाधौ नास्तीति प्रत्ययो हि बाधः। अपरमार्थपक्षं दूषयति **नापी**ति। **परमार्थान्वयायोगात्**—आपणस्थरजतव्यक्त्यन्वयायोगादित्यर्थः। व्यवस्थानेऽपि जातेः कदाचिद्बाधितत्वप्रसङ्ग इति भावः। न हि कदाचिदप्यापणस्थरजते रजतत्वं बाध्यते। परमार्थव्यक्त्यनन्वये बाधकमाह **अपरमार्थ** इति। **परमार्थबुद्धिशब्दयोः**। परमार्थव्यक्तौ जातिरनन्विता चेत्—तस्याः क्वचिदपि परमार्थबुद्धिशब्दहेतुत्वादर्शनात् भ्रान्तिस्थलेऽपि परमार्थबुद्धिशब्दनिर्वाहकत्वं न स्यादित्यर्थः। यद्वा जात्यपारमार्थ्य एव दूषणान्तरं बुद्धिशब्दान्वयानुपपत्तिमाह **अपरमार्थ** इति। तदानीम् **परमार्थबुद्धिशब्दयोः**—परमार्थभूतबुद्धिशब्दयोरित्यर्थः। असत्यात् सत्योत्पत्तिनिरासमुपजीव्येदं दूषणमुच्यते। व्यक्तेस्तन्निर्वाहकत्वायोगं दर्शयितुम**परमार्थ** इत्युक्तिः। अपरमार्थजातेः परमार्थभूतबुद्धिशब्दनिर्वाहकत्वायोगात् जात्यपारमार्थ्यमयुक्तमित्यर्थः। बुद्धिशब्दयोश्च पारमार्थ्यं तद्बाधकादर्शनादेव सिद्धम्॥

अथ वक्ष्यमाणाया यथार्थख्यातेः स्वसिद्धान्तत्वं दर्शयति **अथ वे**ति। तस्याः साम्प्रदायिकत्वं दर्शयन् तां प्रतिजानीते **यथार्थ**मिति। **वेदविदाम्**—भगवद्बोधायननाथमुनि[यामुन ?]मिश्रादीनामित्यर्थः। कुत इत्यत्राह **श्रुतिस्मृतिभ्य** इति। श्रुतिं दर्शयति **बहु स्यामि**तीति। **आदि**शब्देन नामरूपव्याकरणमुच्यते। यद्वा सन्मूला इत्यादिवाक्योक्तं स्थितिप्रलयादिकं गृह्यते। सृष्ट्यादिरुपक्रमो यस्य प्रकरणस्य तस्मिन् **सृष्ट्याद्युपक्रमे**।

इदं श्लोकार्द्धं किमर्थमिति चेत्—उच्यते। पाठक्रमेणाण्डसृष्टेः पश्चात् त्रिवृत्करणमिति ज्ञायते[1]। अण्डसृष्टेः प्रागपि त्रिवृत्करणमस्ति; अण्डसृष्ट्यर्थत्वात् त्रिवृत्करणस्य। त्रिवृत्करणमुपायः; अण्डसृष्टिः फलम्। [2]उत्पत्तौ तत्फलं पश्चाद्भवति; संकल्पे तु पूर्वभावि। उपायस्तूत्पत्तौ पूर्वभावी, संकल्पे

---

1 ज्ञायत इति। तन्न युक्तमिति शेषः।

2 उत्पत्तिक्रमादरणे, फलोक्तिः पश्चात् उपायोक्तिः पूर्वम्। इच्छारूपसंकल्पक्रमादरणे तु फलोक्तिः पूर्वम्, उपायोक्तिः पश्चात्। किमितिफलाकाङ्क्षानन्तरमेव केनेत्युपायाकांक्षा लोके इत्यत एव किल मीमांसकैस्तथोक्तिरित्यर्थः।

**त्रिवृत्करणमेवं हि प्रत्यक्षेणोपलभ्यते । यदग्ने रोहितं रूपं तेजसस्तदपामपि ॥**
**शुक्लं कृष्णं पृथिव्याश्चेत्यग्नावेव त्रिरूपता । श्रुत्यैव दर्शिता तस्मात् सर्वं सर्वत्र सङ्गतः ॥**
**पुराणे चैवमेवोक्तं वैष्णवे सृष्टयुपक्रमे । "नानावीर्याः पृथग्भूतास्ततस्ते संहतिं विना ।**
**नाशक्नुवन् प्रजाः स्रष्टुमसमागम्य कृत्स्नशः ॥**
**समेत्यान्योन्यसंयोगं परस्परसमाश्रयाः । महदाद्या विशेषान्ता ह्यण्ड"मित्यादिना ततः ॥**

पश्चाद्भावीति लोकसिद्धम्, किं केन कथमित्यादौ । अतः, "नामरूपे व्याकरवाणि । तासां त्रिवृतं त्रिवृतमेकैकां करवाणि" इत्यस्मिन् व्यष्टिसृष्टिसङ्कल्पवाक्ये पश्चान्निर्दिष्टमण्डसृष्टयुपायभूतं त्रिवृत्करणम् । "नामरूपे व्याकरोत् तासां त्रिवृतं त्रिवृतमेकैकामकरोत्" इत्युत्पत्तिवाक्ये पूर्वनिर्दिष्टस्यापि नामरूपव्याकरणस्य फलभूतत्वात् त्रिवृत्करणस्य फलरूपसृष्टेः पूर्वभावो निश्चीयते; अर्थक्रमेण पाठक्रमबाधस्य न्याय्यत्वात् । "अग्निहोत्रं जुहोति यवागूं पचति" इतिवत् । अस्मिन्नर्थे निदर्शनम्, उपक्रमे 'बहु स्यां प्रजायेय' इति वाक्यम् । अत्र, बहु स्यामिति फलसङ्कल्पः; प्रजायेयेति तदुपायसङ्कल्पः अनेन, न केवलम् किं केन कथमित्यादिलोकप्रसिध्या अत्र त्रिवृत्करणस्य फलभूतसृष्टेः पूर्वभावित्वनिश्चयः, उपक्रमभूतसङ्कल्पवाक्यानुगुण्याच्चेति ज्ञापितम् । एवं त्रिवृत्करणस्याण्डसृष्टेः प्राक् सद्भावं ज्ञापयितुमुपक्रमगतसङ्कल्पवाक्यस्य तदनुगुणत्वज्ञापनाय **बहु स्या**मित्याद्यर्धमुपात्तम्[1] ।

अण्डान्तर्वर्त्यग्न्यादिषु त्रिवृत्करणस्य प्रदर्शनादण्डसृष्टेः पश्चात् त्रिवृत्करणमिति शङ्कायां श्रुतेरर्थमाह **एवं हि प्रत्यक्षेणोपलभ्यत** इति । अग्न्यादिषु कतिपयव्यक्तिषु त्रिरूपत्वप्रदर्शनं नैयत्याबुद्ध्या; अपित्वण्डान्तर्भूतस्यैव प्रत्यक्षयितुं योग्यत्वात् पूर्वोक्तत्रिवृत्करणसंभावनाप्रदर्शनार्थमिति भावः । अण्डसृष्टेः प्रागेव त्रिवृत्करणमस्तीति स्पष्टं ज्ञापयति **पुराणे** चेति । अस्यामुपनिषदि भूतत्रयसृष्टेरुक्तत्वात् सृष्टतयोक्तानां मिश्रणमुक्तम् । इदं तत्त्वान्तरसृष्टिप्रतिपादनप्रकरणेषु तेषामपि मिश्रणस्य प्रदर्शनार्थमिति ज्ञापनाय [च] पुराणवचनोदाहरणम् । **वैष्णव** इत्यनेन सात्त्विकत्वात् प्रामाण्यं, सूचितम्; "सात्त्विकेषु च सर्वेषु विष्णोर्माहात्म्यमिष्यते" इति वचनात्[2] । संहतत्वं समागतत्वञ्चेति अवस्थाद्वयमस्ति । संहतत्वं नाम पृथक्स्थित्यर्हसंयोगमात्रम्; **समागतत्वं** पृथक्स्थित्यनर्हसंश्लेषविशेषः, एतद्द्वयाभावात् स्रष्टुं नाशक्नुवन्नित्याह **नानावीर्या** इति । एतदुभयप्राप्त्या असृजन्नित्याह **समेत्ये**ति । एकैकस्मिन् भूते सर्वभूतानि सन्ति चेत्, सर्वे शब्दाः सर्वत्र प्रयुज्येरन्नित्यत्राह **परस्परसमाश्रया** इति । अन्येषां भूतानां समाश्रितानामेकं भूतं समाश्रयः । आश्रिताश्रयभावश्च न्यूनाधिकभावनिबन्धनः । तत्कृता शब्दव्यवस्थेति भावः । उपात्तवचनानन्तरं 'सम्प्राप्यैक्यमशेषतः' इति कृत्स्नशः समागतत्वमुक्तम् । **महदादय** इति पाठे सत्यपि वृत्तभङ्गपरिहाराय स्वसन्दर्भे **महदाद्या**

1 नामरूपव्याकरणत्रिवृत्करणयोः पाठक्रमदर्शनात् तत्तत्संकल्पयोरपि स एव क्रमोऽस्तु । एवञ्च व्याकरणानन्तरं त्रिवृत्करणमग्न्यादिकतिपयमात्रविषयमिति न शुक्त्यादौ रजतादिसंकरप्रसक्तिरिति पूर्वपक्ष्याशयः । लोके फलसंकल्पस्योपायसंकल्पपूर्वभावित्वप्रसिद्ध्या बहुस्यामिति वाक्ये फलोपाययोः क्रमेण निर्देशः सिद्धः; पाठक्रमादिबाधकादर्शनात् । तदनुसारेण व्याकरणत्रिवृत्करणसंकल्पवाक्येऽपि तथात्वमुचितम् । उपक्रमानुरोधात् पाठक्रमबाधः । अतो व्यष्टौ सर्वं त्रिवृत्कृतमिति सिद्धम् । 2 अतो वैष्णवत्वात् सात्त्विकत्वमिति ।

सूत्रकारोऽपि भूतानां त्रिरूपत्वं तथाऽवदत्। 'त्र्यात्मकत्वात्तु भूयस्त्वा'दिति तेनाभिधाभिदा ॥
सोमाभावे च पूतीकग्रहणं श्रुतिचोदितम्। सोमावयवसद्भावादिति न्यायविदो विदुः ॥
व्रीह्यभावे च नीवारग्रहणं व्रीहिभावतः। तदेव सदृशं तस्य यत् तद्द्रव्यैकदेशभाक् ॥
शुक्त्यादौ रजतादेश्च भावः श्रुत्यैव बोधितः। रूप्यशुक्त्यादिनिर्देशभेदो भूयस्त्वहेतुकः ॥
रूप्यादिसदृशश्चायं शुक्त्यादिरुपलभ्यते। अतस्तस्यात्र सद्भावः प्रतीतेरपि निश्चितः ॥
कदाचिच्चक्षुरादेस्तु दोषाच्छुक्त्यंशवर्जितः। रजतांशो गृहीतोऽतो रजतार्थी प्रवर्तते ॥
दोषहानौ तु शुक्त्यंशे गृहीते तन्निवर्तते। अतो यथार्थं रूप्यादिविज्ञानं शुक्तिकादिषु ॥
बाध्यबाधकभावोऽपि भूयस्त्वेनोपपद्यते। शुक्तिभूयस्त्ववैकल्यसाकल्यग्रहरूपतः ॥

---

इत्युक्तं [1]भाष्यकारैः। अयमेव श्रुत्यभिप्राय इति स्थापयितुं सूत्रकारोक्तिं दर्शयति **सूत्रेति**। **ततः सूत्रकारोऽप्यवद**दित्यन्वयः। **ततः**—अस्यार्थस्य श्रुतिस्मृतिसिद्धत्वादित्यर्थः। एवं प्रथमं भूते भूतान्तरसद्भाव उक्तः, वक्ष्यमाणस्य सदृशे सदृशान्तरसद्भावस्योपयोगित्वात्। **तेनाभिधाभिदा**—भूयस्त्वेनाभिधानव्यवस्थेत्यर्थः। सदृशे सदृशान्तरसद्भावमाह **सोमेति**। **न्यायविदः**—परीक्षकाः। "सोमाभावे पूतीकानभिषुणुयात्" इत्ययं विधिर्नियमार्थः। सोमाभावे तत्सदृशद्रव्यान्तरेषु स्वतः [2]प्रवृत्तेः। एतत्तुल्यन्यायसिद्धार्थमाह **व्रीहीति**। **व्रीहिभावतः**—व्रीह्यवयवसद्भावतः। ततः कथं सदृशे सदृशान्तरसद्भाव इत्यत्राह **तदेवेति**। अनेन शुक्त्यादौ रजताद्यवयवसद्भावः फलित इत्याह **शुक्त्यादाविति**। **श्रुत्यैव बोधितः**—प्रतिनिधिश्रुत्यैवाभिहितत्वेन फलितः। यद्वा त्रिवृत्करणश्रुत्यैव बोधितत्वं फलितम्। तेन प्रचुररूप्यांशः शुक्तौ त्रिवृत्करणात् सिध्यतीत्यर्थः। कथं शब्दव्यवस्थेत्यत्राह **रूप्येति**। शुक्तिरूप्ययोः सादृश्ये सति हि शुक्तौ रूप्यसद्भावसिद्धिः, शब्दव्यवस्थाया भूयस्त्वहेतुकत्वसिद्धिश्चेत्यत्राह **रूप्यादीति**। यद्वा शुक्तौ रजतैकदेशसद्भावे प्रमाणान्तरमाह **रूप्यादीति**। ततः किमित्यत्राह **अत इति**। **प्रतीतेः**—रूप्यसदृशतया प्रतीतेः। शुक्त्यादौ रजताद्यवयवसद्भावश्चेत्, सदा गृह्येत; प्रवृत्तिश्च सदा स्यात्; बाधश्च नोपपद्येतेत्यत्राह **कदाचिदिति**। दोषः शुक्त्यंशाग्रहहेतुः। प्रचुरग्रहणाभिभूतत्वाभावाददृष्टवशाच्च रजतग्रहणम् ॥ **अदृष्टवशाच्चाम्बुनो ग्रहणा**दिति हि वक्ष्यते। उदाहरणान्तरेष्वप्युपजीव्यत्वाय हि तत्र तदुक्तिः। **भूयस्त्वेन बाध्यबाधकभाव** इति। शुक्तिभूयस्त्वेन तज्ज्ञानस्य बाधकत्वम्। तत एव रजतात्पत्वं सिद्धम्। तेन रजतज्ञानस्य बाध्यत्वमित्यर्थः। **भूयस्त्वेने**त्युक्ते भ्रान्तिज्ञानस्य रजतभूयस्त्वात् तेन शुक्तिज्ञानस्य बाध्यत्वशङ्काव्यावृत्त्यर्थं भूयस्त्वेन बाध्यबाधकत्वमुपपादयति **शुक्तीति** ॥ ननु साकल्ये सत्यपि वैकल्यं गृहीतं चेत्—अन्यथाख्यातिरिति ॥ नैवम्। न हि वैकल्यस्य ग्रहो **वैकल्यग्रहः**; किन्तु[3] शुक्तिभूयस्त्ववैकल्येन ग्रहः—तत्सहिततया ग्रहः। तयोर्ग्रहयोः **रूपात्** स्वभावात्—तथाविध-

---

1 अनेन कारिका इमाः भाष्यकृतामेवेत्याशयः स्पष्टः।

2 सोमाभावे पूतीकविधिर्नापूर्वविधिः। तदभावे तत्सदृशद्रव्यग्रहणस्य न्यायसिद्धतया वचनं विनैव प्राप्तेरित्यर्थः। एवं वदन्तो मीमांसकाः एकत्रान्यावयवं संमन्यन्त इति सिद्धमिति।

3 अत्र भाष्यार्थदर्पणगतिरन्या।

**नातो मिथ्यार्थसत्यार्थविषयत्वनिबन्धनः। एवं सर्वस्य सर्वत्वे व्यवहारव्यवस्थितिः॥**

ग्रहणात्मकत्वादित्यर्थः। बहुव्रीहिर्वा। भावप्रधानो निर्देशः। पूर्वोत्तरज्ञानयोस्तथारूपत्वात् बाध्यबाधकभाव इत्यर्थः। ज्ञानस्य बाध्यत्वं न स्वरूपतः; न च विषयतः; किन्तु बाध्यप्रवृत्तिकत्वम्। उत्तरज्ञानस्य च बाधकत्वं—पूर्वज्ञानजन्यप्रवृत्तिनिवारकत्वम्। अन्यथाख्यातिवादेऽपि ज्ञानस्य स्वरूपेण बाध्यत्वमनभिमतम्; किन्तु विषयबाध्यत्वमेवाभिमतम्। अस्माकं तु ज्ञानफलभूतप्रवृत्तेर्बाध्यत्वमिति भिदा। प्रवृत्तेश्च बाधितत्वं प्रतिबद्धोत्पत्तिकत्वं विफलत्वं वा। **नात** इति। **मिथ्यार्थसत्यार्थ**शब्दाभ्यां पराभिमतमिथ्यात्वसत्यत्वे विवक्षिते। **एव**मिति। सर्वस्य सर्वत्वेऽपि **व्यवहारव्यवस्थितिः**—हानोपादानादिनियमः **एवम्**—भूयस्त्वमाकल्यवैकल्याभ्यामित्यर्थः।

साधारणाकारग्रहण-भेदाग्रह-दोषादृष्टानि सर्ववादिभिरभ्युपेतव्यानि। तावता प्रवृत्त्यादिसंभवेऽपि अधिककल्पनायामन्येषां गौरवं स्यात्। तत्रेष्टरूपरूपिनिरन्तरभानात्प्रवृत्तिः; द्विष्टरूपरूपिनिरन्तरभानान्निवृत्तिः। रूपरूपिणोर्धर्म्यन्तरनिष्ठत्व-विरोधिधर्मान्तराश्रितत्वभानविरहेण भानं **निरन्तरभानम्**; अत एव, 'भेदाग्रहात्प्रवृत्तिश्चेत्, रज्जुसर्पभेदाग्रहे निवृत्तिर्न स्यात्' इत्यादीनि चोद्यानि नावकाशं लभन्ते। यः परमते ख्यात्यन्तरहेतुरभ्युपेतः, स एवास्माकं प्रवृत्त्यादिहेतुः। **प्राभाकरै**र्मन्त्रार्थवादार्थतात्पर्यानभ्युपगमात् केवलभेदाग्रहेणैव निर्वाहः कृतः। अत्र तु मन्त्रार्थवादयोः प्रतीयमानार्थे प्रामाण्याभ्युपगमादुपनिषद्भागावगतं त्रिवृत्करणं तत्प्रदर्शितं पञ्चीकरणम् ईश्वरकर्तृकं सर्गविशेषं तथा प्रतिनिधिन्यायं भेदाग्रहमप्युपजीव्य निर्वाहः कृत इति वैषम्यम्।

तत्र भूते भूतान्तरभ्रमस्य त्रिवृत्करणेन निर्वाहः स्फुटतरः। सदृशे सदृशान्तरभ्रमस्य तु प्रतिनिधिन्यायेनैव निर्वाहः, न तु त्रिवृत्करणेनोपयोग इति **केचिदाचार्याः**। त्रिवृत्करणमपि विजातीयभूतारब्धे सदृशे विजातीयभूतारब्धसदृशान्तरभ्रमनिर्वाहोपयिकमिति च **सम्प्रदायः**। **श्रुतिस्मृतिभ्यः सर्वस्ये**त्यादिग्रन्थानां स्वारस्यात् तथाऽवगम्यते। अतस्त्रिवृत्करणश्रवणपञ्चीकरणस्मरणाभ्यां प्रतिनिधिन्यायाच्च सदृशे सदृशान्तरबुद्धियाथार्थ्यं निरूप्यते॥ ननु कथं सदृशे सदृशान्तरभ्रमस्य त्रिवृत्करणेनोपयोगः। न हि त्रिवृत्करणात्पूर्वं रजताद्यवयवाः सन्ति। तथासति हि त्रिवृत्करणनिबन्धनं शुक्तौ रजतादिसंमिश्रणं स्यात्। न च तदस्ति; त्रिवृत्करणस्याण्डसृष्टेः पूर्वभावित्वात्॥ उच्यते; पाञ्चभौतिकेष्वपि पदार्थेषु किञ्चित्कार्यं केनचित्प्रचुरेण भूतेन परिणामविशेषवता आरब्धम्। तत्र यादृशपरिणामयुक्तयद्भूतप्रचुरं यत् कार्यम्, तस्य तादृशपरिणामवतो भूतस्य कार्यान्तरेष्वपि विद्यमानत्वात् तेषु तथाविधतद्भूतप्रचुरतत्कार्यविषयबुद्धिरुपपद्यते। यद्यप्यवान्तराकारविशेषस्त्रिवृत्करणदशायां नास्ति, तथापि त्रिवृत्करणेन कार्यानुप्रविष्टस्य तस्य भूतस्य कार्यान्तरावयवसमानपरिणामसंभवाद्भौतिकान्तरे भौतिकान्तरबुद्धेर्याथार्थ्यं घटते। तथा (तथा च?) त्रिवृत्करणेन शुक्त्यावन्तर्गतस्य तेजोंशस्य शुक्लभास्वररूपेण परिणामवतो रजतसौसादृश्यात् रजतावयवत्वमुपपन्नम्। तादृशाकारयुक्ततत्तद्भूतविशेषवन्त एव हि सम्यग्रजतादयो निरीक्ष्यन्ते। अतः शुक्त्यादौ रजताद्यवयवसद्भाव उपपद्यते॥ ननु कथं शुक्त्यादिषु प्रतीयमानानामवयवानां रजताद्यवयवत्वम्। न हि ते रजतादिभ्य आनीय निवेशिताः॥ उच्यते। सम्प्रतिपन्नरजताद्यवयवसुसदृशाकारत्वमेव

तेषां रजताद्यवयवत्वम्; न तु रजतादिभ्य आनीय निवेशितत्वम्। यथा संप्रतिपन्नरजताद्यवयवानाम्। न ह्यापणस्थरजताद्यवयवाः कुतश्चिद्रजतान्तरादेरानीय निवेशिताः। एवमेव पूतीकादिषु प्रतीयमानानां सोमलताद्यवयवानामपि सोमाद्यवयवत्वं नाम सम्प्रतिपन्नसोमलताद्यवयवसुसदृशत्वमेव। तच्च स्फुटतर-प्रतीतिसिद्धमबाधितञ्च। न हि शुक्तिशकलपूतीकादिषु रजतसोमलतादिसादृश्यं नास्तीति बाधकप्रत्यय उदेति। तेषामवयवानां विजातीयावयवप्राचुर्यादकार्यकरत्वम्, प्रचुरक्षीरनिविष्टाल्पसलिलस्येव प्रचुर-कनकसंसृष्टाल्परजतस्येव च संभवति॥

नन्वेवं शुक्तितयाऽभिमतपुञ्जस्य शुक्तित्वमपुष्कलं स्यात्, विजातीयावयवसंसर्गात्; पुरुषमृगे पुरुषत्ववत्॥ पुरुषमृगत्वं नाम पुरुषत्वमृगत्वविलक्षणं जात्यन्तरम्, न तु विकलं पुरुषत्वं मृगत्वं चेति चेत्—तर्हि शुक्तितयाऽभिमतपुञ्जस्यापि शुक्तित्वरजतत्वविलक्षणजात्यन्तरवत्त्वं स्यात्। ततश्च पुरुषमृगे पुरुषव्यवहारवत् शुक्तिव्यवहारो न मुख्यः स्यात्। विजातीयसंसृष्टायाः भ्रमाधिष्ठानभूतायाः शुक्तेः, पुरुषेण पुरुषमृगस्येव, शुक्त्यन्तरेण सौसादृश्याभावात्। सौसादृश्ये सति हि तत्तद्व्यवहारस्य मुख्यत्वम्। तदभावाद्धि सिंहो देवदत्त इत्यस्यामुख्यत्वम्॥ शुक्त्यवयवप्राचुर्याच्छुक्तित्वं पुष्कलम्; तत एव तद्व्यवहारश्च मुख्य इति चेत्—तर्हि रजतांशस्याप्रचुरत्वादेव रजतत्वं नास्तीति रजतबुद्धेर्याथार्थ्यं न स्यात्॥

उच्यते। पुरुषत्ववत् शुक्तित्वस्यावयवसंघातविशेषवृत्तित्वाभावादणुमात्रेऽपि शुक्तित्वं पुष्कलम्। पुरुषत्वस्य तु सङ्घातविशेषवृत्तितया सङ्घातवैकल्यात् तदपौष्कल्यम्; जात्यन्तरं वा तत्र स्यात्; शुक्तित्वं तु न तथेत्युक्तम्। अतः शुक्त्यवयवेषु शुक्तित्वतद्व्यवहारावुपपन्नौ। तत्र विरुद्धजात्यन्वया-भावात्। शुक्तितयाऽभिमतसङ्घाते तु शुक्त्यवयवप्राचुर्यादर्थक्रियाव्यवस्था शब्दव्यवस्था चोपपद्यते। प्रचुरशुक्त्यभिभूतत्वेन रजतांशस्याग्रहीतत्वात् गृहीतशुक्तिविवक्षया तद्विषयत्वेन प्रयुक्तः शब्दो मुख्य इत्युपपन्नम्। न च भ्रमाधिष्ठानभूतायाः शुक्तेर्विजातीयावयवयोगितया शुक्त्यन्तरसौसादृश्यहानिः; शुक्त्यन्तरस्याप्यल्परजतांशमिश्रत्वात्। रजतांशाभिभवेन शुक्त्यन्तरसौसादृश्यप्रतीतिरुपपद्यते। शुक्त्यवयवानां तु परस्परसौसादृश्यमुपपन्नतरम्। उक्तरीत्या रजतांशस्य च रजतत्वं मुख्यम्। तस्मिन्नंशे विरुद्धजात्यन्वयाभावात् रजतान्तरावयवसौसादृश्यं च। भ्रमदशायां गृह्यमाणस्य तस्य प्रचुरशुक्तिग्रहणा-भिभूतत्वाभावाद्रजतान्तरावयवसौसादृश्यप्रतीतिरुपपद्यते। अत एव रजतव्यवहारश्च मुख्यः। अतः शुक्त्यादौ रजतादिबुद्धेर्याथार्थ्यमुपपन्नम्॥

अल्पस्य रजतस्य प्रचुरतया ग्रहणेऽन्यथाख्यातिप्रसङ्ग इति चेन्न; प्राचुर्यग्रहणाभावात्, अल्पत्वाग्रहणमेव हि तत्र विद्यते। प्राचुर्यस्य प्रतियोग्यपेक्षत्वात् प्रतियोगिभूतशुक्त्यग्रहणात् तद्ग्रहणे प्रवृत्त्यसंभवाच्च शुक्त्यपेक्षया रजतांशस्य प्राचुर्यं न गृहीतमिति नान्यथाख्यातिः॥ नन्वल्पत्वाग्रहणं नाम प्रचुरत्वग्रहणं स्यात्। भवन्मते हि भावान्तरमभावः। अतोऽन्यथाख्यातत्वमिति चेत्—न; अल्पत्वाग्रहणं नाम न प्राचुर्यग्रहणम्, अपि तु अल्पत्वविषयज्ञानसङ्कोच इति अन्यथाग्रहाभावात्॥ नेदं रजतमित्यत्र नञर्थः कः इति चेत्—शुक्तित्वमेवेति ब्रूमः। यदाकारग्रहणेन पूर्वज्ञानोत्पन्नायाः

स्वप्ने च प्राणिनां पुण्यपापानुगुणं भगवतैव तत्तत्पुरुषमात्रानुभाव्यास्तत्तत्कालावसानास्तथाभूताश्चार्थाः सृज्यन्ते। तथा हि श्रुतिः स्वप्नविषया, "न तत्र रथा न रथयोगा न पन्थानो भवन्ति। अथ रथान् रथयोगान् पथः सृजते। न तत्राऽऽनन्दा मुदः प्रमुदो भवन्ति। अथाऽऽनन्दान् मुदः प्रमुदः सृजते। न तत्र वेशान्ताः पुष्करिण्यः स्रवन्त्यो भवन्ति। अथ वेशान्तान् पुष्करिण्यः स्रवन्त्यः सृजते। स हि कर्ता" इति। यद्यपि सकलेतरपुरुषानुभाव्यतया तदानीं न भवन्ति—तथापि तत्तत्पुरुषमात्रानुभाव्यतया तथाविधान् अर्थान् ईश्वरः सृजति। स हि कर्ता। तस्य सत्यसङ्कल्पस्याऽऽश्चर्यशक्तेस्तथाविधं कर्तृत्वं संभवतीत्यर्थः। "य एषु सुप्तेषु जागर्ति कामं कामं पुरुषो निर्मिमाणः। तदेव शुक्रं तद्ब्रह्म तदेवामृतमुच्यते। तस्मिँल्लोकाः श्रिताः सर्वे तदु नात्येति कश्चन" इति च। सूत्रकारोऽपि— "सन्ध्ये सृष्टिराह हि", "निर्मातारं चैके पुत्रादयश्च" इति सूत्रद्वयेन, 'स्वाप्नेष्वर्थेषु जीवस्य स्वाभाविकसत्यसङ्कल्पत्वादेः कृत्स्नस्य संसारदशायामनभिव्यक्तस्वरूपत्वात् ईश्वरस्यैव तत्तत्पुरुष-

---

प्रवृत्तेर्निवृत्तेर्वा निवारणम्, स एवाऽऽकारो नञर्थः। स चाऽऽकारः प्रतियोगिसापेक्षैः नेदं रजतमित्यादिशब्दैः, तदनपेक्षैः शुक्त्यादिशब्दैश्च व्यवह्रियते॥

एवं भूते भूतान्तरसद्भावात्, सदृशे सदृशान्तरसद्भावाच्च शुक्तिरूप्यादिबुद्धेर्याथार्थ्यमुपपादितम्; न हि स्वप्नार्थानां सदृशे सदृशान्तरसद्भावो वा भूते भूतान्तरसद्भावो वक्तुं शक्य इत्यत्राह स्वप्ने चेति। कथं केचित् सुखरूपाः केचित् दुःखरूपा इत्यत्राह पुण्यपापानुगुणमिति। भगवतैव—जगत्स्रष्ट्रैव। तर्ह्यन्यैरप्युपलभ्येत, सदा चोपलभ्येतेत्यत्राह तत्तदिति। कथं दृष्टविसजातीयाः इत्यत्राह तथाभूता इति। श्रुतिं दर्शयति-तथाहीति। स्वप्नविषयत्वमस्य वाक्यस्य कथमिति शङ्कायां स्वप्नं पश्यतीति पूर्ववाक्यं स्मारयति स्वप्नविषयेति। रथयोगाः—अश्वादयः। न भवन्ति—दृष्टसजातीया न भवन्तीत्यर्थः। आनन्दा मुदः प्रमुद इति। साधारणभोग्यदर्शनजा प्रीतिर्मुत्; असाधारणभोग्यत्वज्ञानजा प्रीतिः प्रमुत्; विनियोगजा प्रीतिरानन्दः। यद्वा विलक्षणविषयदर्शनजा प्रीतिर्मुत्; तस्य स्वविनियोगार्हत्वज्ञानजन्या प्रीतिः प्रमुत्; विनियोगजा प्रीतिरानन्द इति। एतैः शब्दैर्विषयाः लक्ष्यन्ते। मुख्यार्थत्वे दृष्टविसजातीयत्वायोगात्। वेशान्ताः—गृहाः। यद्वा वेशान्ता—[वेशन्ताः?] पल्वलानीत्यर्थः। कथमुपपद्यत इत्यत्राह-स हि कर्तेति। सर्वशक्तिर्हि कर्ता; किमनुपपन्नमिति भावः। तच्छब्दो न प्रकृतजीवपरः; अपि तु प्रसिद्धपरमात्मपरः। व्याघातपौनरुक्त्यशङ्कापरिहारार्थमस्याः श्रुतेरर्थमाह यद्यपि सकलेति। सृजत इति पदविरोधपरिहाराय, न भवन्तीति निषेधस्य सङ्कोचो हि उत्सर्गापवादन्यायेन कृतः। अतः कालान्तरस्थायित्वपुरुषान्तरानुभाव्यत्वाकारविषयो निषेधः; न तु तत्कालतत्पुरुषमात्रानुभाव्यत्तया स्वरूपनिषेधः। अतो जाग्रदवस्थानुभूतवस्तुसजातीयाः अनेकपुरुषानुभाव्याः कालान्तरस्थायिनश्च न भवन्तीत्यर्थः। स हि कर्तेत्येतत्खण्डम् उक्तार्थोपपादकत्वेन व्याचष्टे तस्येति। स्वाप्नार्थसृष्टेरीश्वरकर्तृकत्वस्फुटीकरणार्थं श्रुत्यन्तरमाह य एषु सुप्तेष्विति। स्वाप्नार्थानां पारमार्थ्यं पूर्वपक्षीकृत्यापारमार्थ्यं सूत्रकारेण सिद्धान्तितमिति व्याख्यातृमतभेदेन अस्याः श्रुतेर्नायमर्थ इति शङ्काव्युदासार्थमुक्तार्थस्य सूत्रकाराभिमतत्वमाह सूत्रेति। सूत्रार्थमाह स्वाप्नेष्विति। जीवस्यापि

मात्रानुभाव्यतया आश्चर्यभूता सृष्टिरियम्। "तस्मिन् लोकाः श्रिताः सर्वे तदु नात्येति कश्चन" इति परमात्मैव तत्र स्रष्टेत्यवगम्यते' इति परिहरति। अपवरकादिषु शयानस्य स्वप्नदशः स्वदेहेनैव देशान्तरगमनराज्याभिषेकशिरश्छेदादयश्च पुण्यपापफलभूताः शयानदेहसरूपसंस्थानदेहान्तरसृष्ट्योपपद्यन्ते ॥

पीतशङ्खादौ तु नयनवर्तिपित्तद्रव्यसंभिन्नाः नायनरश्मयः शङ्खादिभिः संयुज्यन्ते। तत्र पित्तगतपीतिमाभिभूतः शङ्खगतशुक्लिमा न गृह्यते। अतः सुवर्णानुलिप्तशङ्खवत्, पीतः शङ्ख इति प्रतीयते। पित्तद्रव्यं तद्गतपीतिमा चातिसौक्ष्म्यात् पार्श्वस्थैर्न गृह्यते। पित्तोपहतेन तु स्वनयननिष्क्रान्ततयाऽतिसामीप्यात् सूक्ष्ममपि गृह्यते। तद्ग्रहणजनितसंस्कारसचिवनायनरश्मिभिर्दूरस्थमपि गृह्यते ॥

जपाकुसुमसमीपवर्तिस्फटिकमणिरपि तत्प्रभाभिभूततया रक्त इति गृह्यते। जपाकुसुमप्रभा विततापि स्वच्छद्रव्यसंयुक्ततया स्फुटतरमुपलभ्यते इत्युपलब्धिव्यवस्थाप्यमिदम्। मरीचिकाजलज्ञानेऽपि तेजःपृथिव्योरप्यम्बुनो विद्यमानत्वादिन्द्रियदोषेण तेजःपृथिव्योरग्रहणात् अदृष्टवशाच्चाम्बुनो ग्रहणात् यथार्थत्वम्। अलातचक्रेऽप्यलातस्य द्रुततरगमनेन सर्वदेशसंयोगादन्तरालाग्रहणात् तथाप्रतीतिरुपपद्यते। चक्रप्रतीतावप्यन्तरालाग्रहणपूर्वकतत्तद्देशसंयुक्ततत्तद्वस्तु-

---

स्वप्नदशायां सत्यसङ्कल्पत्वाद्याविर्भावः कल्प्यत इत्यत्राह—**तस्मिंल्लोका** इति। अनन्यथासिद्धस्यैव हि कल्पकत्वम्। परमात्मलिङ्गश्रवणेन स्वाप्नार्थसृष्टेः परात्मनैवोपपन्नत्वात् न जीवस्य स्वरूपाविर्भावः कल्प्यत इत्यर्थः। कथमपवरके शयानस्य देशान्तरगमनादेः पारमार्थ्यमुपपद्यत इत्यत्राह **अपवरकादिष्विति**। स्वयमेव स्वदुःखावहवस्तुसृष्ट्यनुपपत्तेश्च न तदा जीवस्य स्वरूपाविर्भावः कल्प्यत इति चार्थसिद्धम्; **शिरश्छेदादय** इत्युक्तत्वात्। सरूपे देहान्तरे शयानदेहव्यवहारो भेदाग्रहकृतः; न त्वन्यथाख्यातिकृतः। एवं स्वाप्नार्थेषु तत्तदेकपुरुषानुभाव्यत्वतत्तत्कालावसायित्वरूपभेदाग्रहात् प्रवृत्त्यादिर्भवति ॥

पीतशङ्खादावीश्वरसृष्टत्वश्रुतिर्दर्शयितुं न शक्यत इत्यत्राह **पीतेति**। पीतिमवत् शौक्ल्यमपि प्रतीयेतेत्यत्राह **तत्रेति**। तर्हि पार्श्वस्थैरपि पित्तद्रव्यं ग्राह्यमित्यत्राह **पित्तेति**। तर्हि सूक्ष्मत्वात् तेनापि न पित्तं ग्राह्यमित्यत्राह **पित्तोपहतेन** त्विति। दूरस्थशङ्खस्यातिसामीप्याभावात् कथं तत्रस्थं पित्तद्रव्यं गृह्यत इत्यत्राह **तद्ग्रहणेति**। यथा अतिदूरमुत्पतितः पतगो न द्रष्टुं शक्यते, तथापि संनिकर्षोत्पतनकालादारभ्य निरन्तरमवेक्ष्यमाणस्तज्जनितसंस्कारवद्भ्यां चक्षुर्भ्यां दूरेऽपि गृह्यते—तद्वदित्यर्थः। **प्राभाकरैः** पित्तपीतिमा शङ्खद्रव्यं च निरन्तरं गृह्येते इत्युक्तम्; अत्र तु रूपवद् द्रव्ये चक्षुषः सामर्थ्यात् पित्तद्रव्यं गृह्यत इत्युक्तमिति विशेषः। **सुवर्णानुलिप्तशङ्खवदि**ति दृष्टान्ते चायं भावः। ननु यदि पित्तद्रव्यशङ्खयोर्भेदाग्रहात् पीतशङ्खव्यवहारः, तर्हि पटे पीतव्यवहारः कथं न स्यात्॥ अन्यथाख्यातौ वा कथं पटे पीतव्यवहाराभावः॥ भ्रमे सति तन्मूलनिरूपणा कार्या। न तु सर्वत्र भ्रमेण भवितव्यमिति चेत्—तुल्यम्॥

जपाकुसुमस्फटिकादौ चाक्षुषदोषसंसर्गो दुर्वच इत्यत्राह-**जपेति**। जपाकुसुमस्फटिक-मरीचिका-जल-अलातचक्र-दिङ्मोहेषु द्रव्यान्तरेण संबन्धात् यथार्था प्रतीतिरिति निर्वाहः। जपाकुसुमप्रभासंबन्धात् रक्तप्रतीतिश्चेत्, तत्संबन्धात् पाषाणादिष्वपि तथा स्यादित्यत्राह-**स्वच्छेति**। **मरीचिकेति**। **अदृष्टं**

ग्रहणमेव। क्वचिदन्तरालाभावादन्तरालाग्रहणम्, क्वचिच्छैघ्र्यादग्रहणमिति विशेषः। अतस्तदपि यथार्थम्। दर्पणादिषु निजमुखादिप्रतीतिरपि यथार्था। दर्पणादिप्रतिहतगतयो हि नायनरश्मयो दर्पणादिदेशग्रहणपूर्वकं निजमुखादि गृह्णन्ति। तत्राप्यतिशैघ्र्यादन्तरालाग्रहणात् तथा[1] प्रतीतिः॥ दिङ्मोहेऽपि दिगन्तरस्यास्यां दिशि विद्यमानत्वाददृष्टवशेनैतद्दिगंशवियुक्तो दिगन्तरांशो गृह्यते। अतो दिगन्तरप्रतीतिर्यथार्थैव।

द्विचन्द्रज्ञानादावपि अङ्गुल्यवष्टम्भतिमिरादिभिर्नायनतेजोगतिभेदेन सामग्रीभेदात् सामग्रीद्वयमन्योन्यनिरपेक्षं चन्द्रग्रहणद्वयहेतुर्भवति। तत्रैका सामग्री स्वदेशविशिष्टं चन्द्रं गृह्णाति। द्वितीया तु किञ्चिद्वक्रगतिः चन्द्रसमीपदेशग्रहणपूर्वकं चन्द्रं स्वदेशवियुक्तं गृह्णाति। अतः सामग्रीद्वयेन युगपद्देशद्वयविशिष्टचन्द्रग्रहणे ग्रहणभेदेन ग्राह्याकारभेदादेकत्वग्रहणाभावाच्च द्वौ चन्द्राविति भवति प्रतीतिविशेषः। देशान्तरस्य तद्विशेषणत्वं देशान्तरस्य अगृहीतस्वदेशचन्द्रस्य च निरन्तरग्रहणेन भवति। तत्र सामग्रीद्वित्वं पारमार्थिकम्। तेन देशद्वय-

---

नियामकत्वं सर्वैरपि ख्यात्यन्तरवादिभिरभ्युपेतव्यम्, अन्यथा सर्वेषां सर्वदा सर्वत्र सर्वविषयभ्रमप्रसङ्गात्; कदाचिदपि भ्रमाभावप्रसङ्गाच्च। **अलातेति**। **अन्तरालाग्रहणात्**—पूर्वोत्तरकालभाविनोः तत्तत्प्रदेशविशेषालातसंयोगयोरन्तरालाग्रहणात् क्रमाग्रहणादित्यर्थः। अन्तरालाग्रहणे सति कथं याथार्थ्यमित्यत्राह **चक्रेति**। **चक्रप्रतीतिः**—सम्यक्चक्रप्रतीतिः। को विशेष इत्यत्राह-**क्वचिदिति**। **दर्पणादिष्विति**। सव्यदक्षिणविपर्यासः कथमिति चेत्—उच्यते। आपेक्षिको हि सव्यदक्षिणभावः। तत्र स्वाभिमुखतया विपर्यस्तसव्यदक्षिणभावस्य दर्पणस्य, मुखस्य चान्तरालाग्रहणमेव। विपर्यासो दर्पणदेशगतः। तेनागृहीतान्तरालं मुखमिति अभिमुखस्य दर्पणस्य मुखस्य चान्तरालाग्रहणादाभिमुख्यप्रतीतेर्याथार्थ्यम्[2], एवं मलिनत्वाल्पत्वादि(दे?)श्च। **दिङ्मोहेऽपीति**। सर्वदिक्सद्भावेऽपि प्राच्यादिव्यवहारः प्रतियोग्यपेक्षया। तत्र दिगन्तरप्रतियोगिनो दिगन्तरस्य च निरन्तरभानम्। अतो यथार्थविषयत्वमिति। दिशां बहुत्वं च, "पद्भ्यां भूमिर्दिशः श्रोत्रात्" इत्यवगम्यते।

**द्विचन्द्रेति**। ततः किमित्यत्राह-**तत्रैकेति**। स्वतः ऋजुप्रसारिणोऽपि चाक्षुषतेजसो वक्रत्वं संभवति। दर्पणादिना तद्दर्शनात्। इहाप्यङ्गुल्यवष्टम्भादृष्टादिना तदुपपत्तिः। ततः किमित्यत्राह-**अत इति**। चन्द्रदेशौ द्वाविति प्रतीत्यभावहेतुश्चन्द्रैकत्वाग्रहणम्। देशान्तरगतस्य तद्विशेषणत्वं कथमित्यत्राह **देशेति**। ततः किं प्रतीतेर्याथार्थ्यस्येत्यत्राह-**तत्र सामग्रीति**। **तेन देशद्वयविशिष्टचन्द्रग्रहणद्वयं च पारमार्थिकमिति**। ग्रहणद्वयमतिशैघ्र्यादगृहीतक्रमम्, अत एवागृहीतपरस्परभेदं चेति भावः।

---

1 तथा प्रतीतिः दर्पणस्थत्वेनप्रतीतिः। नन्वन्तरालमियदस्तीति ज्ञानवतामपि दर्पणस्थत्वप्रतीतिः कथमिति चेत्--बिम्बातिरिक्तं बिम्बजन्यं प्रतिबिम्बमिति भ्रान्तिवासनाबलात्। तत्रापि रश्मिप्रतिघातशैघ्र्यात् मुखदर्पणग्राहकज्ञानेन तदन्तरालाग्रहणमित्यपि भाव्यम्। मुखदर्पणनिरन्तरभानं शैघ्र्यरूपदोषवशात् भ्रान्तिव्यवहारहेतुः। भेदाग्रहस्थाने असंबन्धाग्रहरूपकारणनिरूपणार्थं सर्वत्र अन्तरालाग्रहणवचनम्।

2 न चाभिमुख्यस्य सव्यदक्षिणभावस्य च प्रतिबिम्बे वास्तवत्वान्न दोष इति वाच्यम्-बिम्बादन्यस्य प्रतिबिम्बस्याभावात् बिम्बस्य दर्पणगतसव्यत्वादीनाञ्चान्तरालाग्रहणस्यैव वक्तव्यत्वात्।

विशिष्टचन्द्रग्रहणद्वयं च पारमार्थिकम्। ग्रहणद्वित्वेन चन्द्रस्यैव ग्राह्याकारद्वित्वं च पारमार्थिकम्। तत्र विशेषणद्वयविशिष्टचन्द्रग्रहणद्वयस्यैक एव चन्द्रो ग्राह्य इति ग्रहणे, प्रत्यभिज्ञानवत् केवलचक्षुषः सामर्थ्याभावात् चाक्षुषज्ञानं तथै(स्यै)वावतिष्ठते। द्वयोः चक्षुषोरेकसामग्र्यन्तर्भावेऽपि तिमिरादिदोषभिन्नं चाक्षुषं तेजः सामग्रीद्वयं भवतीति कार्यकल्प्यम्। अपगते तु दोषे स्वदेशविशिष्टस्य चन्द्रस्यैकग्रहणवेद्यत्वात् एकश्चन्द्र इति भवति प्रत्ययः। दोषकृतं तु सामग्रीद्वित्वं तत्कृतं ग्रहणद्वित्वं तत्कृतं ग्राह्याकारद्वित्वं चेति निरवद्यम्।

अतः सर्वं विज्ञानजातं यथार्थमिति सिद्धम्। ख्यात्यन्तराणां दूषणानि तैस्तैर्वादिभिरेव प्रपञ्चितानीति न तत्र यत्नः क्रियते।

[अथवा किमनेन बहुनोपपादनप्रकारेण? प्रत्यक्षानुमानागमाख्यं प्रमाणजातम् आगमगम्यं च निरस्तनिखिलदोषगन्धमनवधिकातिशयासङ्ख्येयकल्याणगुणगणं सर्वज्ञं सत्यसङ्कल्पं परं ब्रह्माभ्युपगच्छतां किं न सेत्स्यति, किं नोपपद्यते? भगवता हि परेण ब्रह्मणा क्षेत्रज्ञपुण्यपापानुगुणं तद्भोग्यत्वा-

---

विशेषणद्वयविशिष्टविषयग्रहणद्वयेऽपि विशेष्यैक्यं कथं न प्रतीयत इत्यत्राह-**तत्रे**ति। न हि केवलं चक्षुः ऐक्यप्रतिपत्तिसमर्थं दृष्टं देवदत्तादिषु, अपि तु संस्कारसंस्कृतमेव समर्थं दृष्टम्। संस्कारस्य विलम्बितभावित्वान्न तदानीमैक्यप्रतिपत्तिरित्यर्थः। **चाक्षुषज्ञानं तथैवावतिष्ठत** इति। अगृहीतैकत्वचन्द्रमात्रविषयमवतिष्ठत इत्यर्थः। **तस्यैवे**ति पाठे चन्द्रमात्रस्यैव ग्राहकतया तिष्ठतीत्यर्थः। एकसामग्रीभूतयोश्चक्षुषोः कथं द्विसामग्रीत्वमित्यत्राह-**द्वयोश्चक्षुषो**रिति। स्वतो निर्दोषस्येन्द्रियस्य सदोषत्वं हि कार्यकल्प्यम्। तथा सामग्रीद्वित्वमपीति भावः। तर्हि सदैव चन्द्रद्वित्वं गृह्येतेत्यत्राह-**अपगते त्वि**ति। कथं दोषापगमे ऐक्यप्रतिपत्तिरिति शङ्कायां द्वित्वप्रतिपत्तेरौपाधिकत्वमाह—**दोषकृत**मिति। **ग्राह्याकारद्वित्व**मिति। स्वदेशविशिष्टत्वमेक आकारः। अगृहीतान्तरालं प्रदेशान्तरमेक आकारः। तस्याऽऽकारत्वं विशेषणत्वम्। न चानाकारस्याऽऽकारत्वेनान्यथाख्यानम्। अगृहीतान्तरालत्वे सत्यप्रधानतया भातस्यैव विशेषणत्वात्। नेत्रवृत्तिर्विसिगतद्वित्वं चन्द्रं चागृहीतभेदं गृह्णातीति **प्राभाकराः**। यथा **संवित्सिद्धौ** प्राभाकरमतोपन्यासे, "नेत्रवृत्तिर्द्विधाभूता द्वे तु वित्ती वितन्वती। द्वित्वं चन्द्रं च युगपत् निर्भासयति तत्र नः" इति। देशगतद्वित्वं चन्द्रं चागृहीतभेदं गृह्णातीति ततोऽत्र वैषम्यम्। चाक्षुषतेजोगतिभेदरूपसामग्रीद्वयजन्यम् अतिशैघ्र्यादगृहीतक्रममगृहीतभेदं[1] च ज्ञानद्वयम् अगृहीतैकत्वं चन्द्रमगृहीतान्तरालं देशान्तरं च निरन्तरं गृह्णाति। अतो द्विचन्द्रव्यवहार इत्यर्थः। **इति निरवद्यं** यथार्थख्यातिसमर्थनमित्यर्थः। ख्यात्यन्तरदूषणानामन्योन्यम् उक्तानां स्वाभिमतत्वात् तत्र यत्नाभावमाह-**ख्याती**ति।

**अथवा किमनेनेत्या**दिपाठो बहुषु कोशेषु दृश्यते। व्याख्यातृभिर्व्याख्यातश्च। तत्र [2]परागर्थविषयापरोक्षभ्रमेष्वेकेनैवोत्तरेण परिहारः कृतो भवति। **किं न सेत्स्यती**त्यनेन प्रमाणेऽस्तित्वमुक्तम्। **किं नोपपद्यत** इत्यनेन उपपत्तिरुक्ता। किं प्रमाणम्, कथमुपपत्तिरित्यत्राह-**भगवताही**ति। अखिलं

---

1 प्रत्येकं वित्तेः स्वयम्प्रकाशत्वेपि तदुभयग्राहकप्रमाणानैयत्यात् भेदो द्वित्वं च न गृह्येतेति, नियतभातग्राह्यदेशद्वित्वमेव बाह्यचन्द्रे द्वित्वभ्रमविषयो भवितुमर्हतीति भावः।

2 परागिति। इन्द्रियसंनिकृष्टविषयभ्रमेष्वेवानिर्वचनीयस्य परकल्पिततया तत्रैवमेव निर्वाहः। प्रत्यर्थविषयस्थूलत्वादिभ्रमेषु ह्रदो वह्निमानित्यादिपरोक्षे चाख्यातिरेवेति।

याखिलं जगत् सृजता सुखदुःखोपेक्षाफलानुभवानुभाव्याः पदार्थाः सर्वसाधारणानुभवविषयाः; केचन तत्तत्पुरुषमात्रानुभवविषयाः तत्तत्कालावसानाः तथातथाऽनुभाव्याः सृज्यन्ते । तत्र बाध्यबाधकभावः सर्वानुभवविषयतया तद्रहिततया चोपपद्यत इति सर्वं समञ्जसम् ॥]

यत्पुनः सदसदनिर्वचनीयमज्ञानं श्रुतिसिद्धमिति ; तदसत्— "अनृतेन हि प्रत्यूढाः" इत्यादिष्वनृतशब्दस्यानिर्वचनीयानभिधायित्वात् । ऋतेतरविषयो ह्यनृतशब्दः । ऋतमिति कर्मवाचि, "ऋतं पिबन्तौ" इति वचनात् । ऋतम्—कर्मफलाभिसन्धिरहितं परमपुरुषाराधनवेषं तत्प्राप्तिफलम् । अत्र (तः) तद्व्यतिरिक्तं सांसारिकफलं कर्म अनृतं ब्रह्मप्राप्तिविरोधि । "एतं ब्रह्मलोकं न विन्दन्ति अनृतेन हि प्रत्यूढाः" इति वचनात् ॥

---

**जगत् सृजते**त्यनेनास्यार्थस्य श्रुतिमूलत्वं सूचितम्; कृत्स्नकार्यकारणत्वाद् ब्रह्मणः । 'इदं सर्वमसृजत' इति हि श्रुतिः । प्रतीयमानत्वाविशेषादिदमपि तत्सृष्टमित्यर्थः । तर्हि बाध्यबाधकभावव्यवस्था कथमित्यत्राह **तत्रे**ति । न हि तत्तदेकपुरुषानुभाव्यानां तत्तत्कालावसायिनाञ्च सुखादीनां मिथ्यात्वमिति भावः ॥

अथ श्रुतिश्रुतार्थापत्तिभ्यामनिर्वचनीयसिद्धिं दूषयितुं प्रथमं श्रुतिवाक्यानि योजयति **यत्पुनरि**ति । **अनृतेने**त्यादिश्रुतिं व्याचष्टे —**अनृतेने**ति । पूर्वनिरस्तप्रकारेणानिर्वचनीयस्याप्रामाणिकत्वात् तत्र व्युत्पत्तिर्नास्तीति भावः । अनृतशब्दं व्याचष्टे **ऋतेतरविषयो ह्यनृतशब्द** इति । हिशब्देन ऋतेतरविषयत्वसम्प्रतिपत्तिः सूचिता । ऋताभावस्य [1]ऋतविरोधिनश्च ऋतभूतब्रह्माश्रयत्वानुपपत्त्या तदन्य एव नञर्थस्त्वयापि वक्तव्य इति भावः । अनृतशब्दार्थं निष्कष्टुम् ऋतशब्दार्थमाह **ऋतमिती**ति । **कर्मवाचि**—पुण्यकर्मवाचीत्यर्थः ; न तु सत्यवाचीति भावः । कुत इत्यत्राह **ऋतं पिबन्ता**विति । अस्मिन् वाक्ये, 'सुकृतस्य लोके' इति ह्युक्तमिति भावः । एवंविधवाक्यान्तरेषु प्रसिद्धिश्चाभिप्रेता, "यथा वृक्षस्य संपुष्पितस्य दूराद्गन्धो वाति, एवं पुण्यस्य कर्मणो दूराद्गन्धो वाति" इत्युक्त्वा, "एवमनृतादात्मानं जुगुप्सेत्" इति पुण्यप्रतियोगिनि अनृतशब्दः प्रयुक्तः । तस्मात् ऋतशब्दः पुण्यवाची । पुण्यमपि हि मोक्षविरोधि ; तत् कथमनृतशब्दोक्तपापमात्रप्रत्यूढत्वमिति शङ्कायां मोक्षप्रकरणोक्तं पुण्यं विविनक्ति **ऋतं कर्मे**ति । मुमुक्षोः सुकृतं दुष्कृतमुभयं हि विरोधीत्यतस्तद्द्वयं पापम् । अतो नञ्समासान्तर्गत ऋतशब्दोऽनभिसंहितफलकर्मपर इत्यर्थः । **परमपुरुषाराधनवेषं तत्प्राप्तिफल**मित्यनेन, "स्वकर्मणा तमभ्यर्च्य सिद्धिं विन्दति मानवः" इत्येतत् सूचितम् । अनृतशब्दस्य ब्रह्मप्राप्तिविरोधिपरत्वे सति ऋतशब्दस्य बन्धकेतरकर्मवाचित्वसिद्धिरिति तदर्थं तत्पूर्ववाक्येनोपपादयति **एत**मिति । ऋतानृतशब्दयोः, 'एवमनृतादात्मानं जुगुप्सेत्' इत्यादिषु श्रुतिषु पुण्यपापपरत्वेन प्रसिद्धत्वात्, "न सुकृतं न दुष्कृतं सर्वे पाप्मानोऽतो निवर्तन्ते', 'क्षीयन्ते चास्य कर्माणि' इत्यादिषु सुकृतदुष्कृतयोरपि मोक्षविरोधित्वश्रवणात् मोक्षप्रकरणेषु मुमुक्षोः संसाराख्यानिष्टफलप्रदत्वेनोभयोरपि पापशब्दाभिधेयत्वात् अस्यानृतशब्दस्यास्मिन् वाक्य एव ब्रह्मप्राप्तिविरोधित्वश्रवणात् "तस्यान्तरायो मैत्रेय" इत्यादिषु पुण्यपापकर्मणोः मोक्षविरोधिफलत्वश्रवणात्, अनृतशब्दस्यानिर्वचनीयवाचित्वेन व्युत्पत्त्यभावाच्चानृतशब्दस्तदन्यव्युत्पत्त्या मोक्षविरोधिकर्मपर इत्यर्थः ।

---

अनृतमपिधानमिति पिधानत्वेनोक्तस्यानृतस्यैतद्रूपत्वे पिधाननिवृत्तौ ब्रह्मणि ऋताश्रयत्वमिदं स्यात् । निर्विशेषे तदनुपपन्नमिति भावः ।

"नासदासीन्नो सदासीत् तदानीम्" इत्यत्रापि सदसच्छब्दौ चिदचिद्व्यष्टिविषयौ। उत्पत्तिवेलायां सत्त्यच्छब्दाभिहितयोश्चिदचिद्व्यष्टिभूतयोर्वस्तुनोरप्ययकाले अचित्स(चिदचित्स)मष्टिभूते तमश्शब्दाभिधेये वस्तुनि प्रलयप्रतिपादनपरत्वादस्य वाक्यस्य। नात्र कस्यचित् सदसदनिर्वचनीयतोच्यते; सदसतोः कालविशेषेऽसद्भावमात्रवचनात्। अत्र तमश्शब्दाभिहितस्याचित्समष्टित्वं श्रुत्यन्तरादवगम्यते—"अव्यक्तमक्षरे लीयते। अक्षरं तमसि लीयते" इति॥

सत्यम्; तमश्शब्देनाचित्समष्टिरूपायाः प्रकृतेः सूक्ष्मावस्थोच्यते। तथास्तु, "मायां तु प्रकृतिं विद्यात्" इति मायाशब्देनाभिधानादनिर्वचनीयत्वमिति चेत्—नैतदेवम्; मायाशब्दस्यानिर्वचनीयवाचित्वं न दृष्टमिति॥ मायाशब्दस्य मिथ्यापर्यायत्वेनानिर्वचनीयवाचित्वमिति चेत्; तदपि नास्ति; न हि सर्वत्र मायाशब्दो मिथ्याविषयः। आसुरराक्षसास्त्रादिषु सत्येष्वेव मायाशब्दप्रयोगात्। यथोक्तम्—"तेन मायासहस्रं तत् शम्बरस्याशुगामिना। बालस्य रक्षता देहमैकैकश्येन सूदितम्॥" इति। अतो मायाशब्दो विचित्रार्थसर्गकराभिधायी। प्रकृतेश्च

---

**नासदासी**दित्यादि। अत्र, "अनादि मत्परं ब्रह्म न सत्तन्नासदुच्यते" इति ब्रह्मशब्दवाच्यशुद्धात्मस्वरूपविषयः सदसच्छब्दप्रयोगः प्रतिबन्दीत्वेनानुसन्धेयः। सदसच्छब्दयोश्चिदचिद्व्यष्टिविषयत्वमुपपादयति[1] **उत्पत्ती**ति। उत्पन्नस्य हि प्रलयः उत्पत्तिश्च चिदचिद्व्यष्ट्योः श्रुतिसिद्धा। अतस्तयोरत्र प्रलय उच्यत इत्यर्थः। **सत्त्यच्छब्दाभ्यां** 'सच्च त्यच्चाभवत्' इति वाक्यं स्मारितम्। कार्यावस्थचेतनस्य सच्छब्दोक्तत्वादिह सच्छब्देन, तदन्यवाचकेनासच्छब्देन च कार्यावस्थचेतनाचेतननिषेधः कृतः; वाक्यान्तरैकार्थ्यादित्यर्थः। 'तम आसीत् तमसा गूढम्' इति तदनन्तरवाक्याभिप्रायेणा**चित्समष्टिभूते तमश्शब्दाभिधेये वस्तुनी**त्युक्तम्। हेत्वन्तरं चाह **सदसतो**रिति। न हि कालविशेषे अनिर्वचनीयमभ्युपगम्यते। अचित्समष्टेस्तमःशब्दवाच्यत्वमुपपादयति **अत्रे**ति। 'तम आसीत्', 'मायां तु प्रकृतिम्' इत्यनयोर्वाक्ययोः पूर्वं क्रमेणोपादान[2]विवक्षां चोद्यरूपेण दर्शयति **सत्य**मिति। प्रकृतिशब्दवाच्या मायेत्यभिप्रायः। परिहरति **नैतदेव**मिति। कुत इत्यत्राह **माये**ति। **इति**र्हेतौ। मायाशब्दवाच्या प्रकृतिरित्यभिप्रायः। ऐन्द्रजालिकादिषु मायावित्वप्रयोगदर्शनात् मायामिथ्याशब्दयोः पर्यायत्वात् अनिर्वाच्यस्य च मिथ्यात्वाच्च मायाशब्दवाच्यत्वमित्यभिप्रायेण शङ्कते **माये**ति। परिहरति **तदपि नास्ती**ति। मायाशब्दस्य मिथ्यापर्यायत्वमेव नास्ति। [3]तथाऽभ्युपगमेऽपि अन्यथाख्यातिभेदाग्रहयोरन्यतरेणैवोपपन्नत्वात् न तद्विषयत्वं युक्तमित्यनिर्वचनीयवाचित्वं नास्तीति भावः। तदुपपादयति-**नही**ति। मायाशब्दप्रयोगविषयेषु सर्वेषु मिथ्यात्वाननुवृत्तेरित्यर्थः। सत्येषु मायाशब्दप्रयोगं दर्शयति—**यथोक्त**मिति। न हि ज्ञानबाध्यानामेकैकशः शस्त्रच्छेद्यत्वमस्ति। तस्मादेकैकशो मायानां छेद्यत्ववचनान्मायाशब्दस्य सत्यपरत्वमिति। अनुयायिन एव प्रवृत्तिनिमित्तत्वात् मायाशब्दप्रयोगविषयेषु सर्वेष्वनुगतमाश्चर्यत्वमेव मायाशब्दप्रवृत्तिनिमित्तमित्याह **अत** इति। **आश्चर्यत्वम्** विस्मयनीयत्वम्। तच्च विचित्रार्थ-

---

1 उपपादयतीत्युक्त्या वाक्यस्येत्यत्र भाष्ये वाक्यच्छेद इति ज्ञायते। अतस्तयोरिति वाक्यानुसारेणास्य अभिहितयोरित्यन्तमात्रावतरणरूपत्वे तु न तत्र वाक्यच्छेदः। अत एव हेत्वन्तरञ्चाहेति टीका स्वरसा। 2 पूर्वं महापूर्वपक्षोपन्यासावसरे अनयोरुपादानं यादृशविवक्षया, तामाविष्कुर्वन् चोदयतीत्यर्थः। 3 तदपीत्यत्र अपिशब्दाभिप्रेतमाह तथेति।

मायाशब्दाभिधानं विचित्रार्थसर्गकरत्वादेव "अस्मान्मायी सृजते विश्वमेतत् तस्मिंश्चान्यो मायया संनिरुद्धः" इति मायाशब्दवाच्यायाः प्रकृतेर्विचित्रार्थसर्गकरत्वं दर्शयति। परमपुरुषस्य च तद्वत्तामात्रेण मायित्वमुच्यते ; नाज्ञत्वेन। जीवस्यैव हि मायया निरोधः श्रूयते, "तस्मिंश्चान्यो[1] मायया संनिरुद्धः" इति। "अनादिमायया सुप्तो यदा जीवः प्रबुध्यते" इति च। "इन्द्रो मायाभिः पुरुरूप ईयते" इत्यत्रापि विचित्राः शक्तयोऽभिधीयन्ते ; अत एव हि "भूरि त्वष्टेव राजति" इत्युच्यते। न हि मिथ्याभिभूतः कश्चिद्विराजते। "मम माया दुरत्यया" इत्यत्रापि गुणमयीति वचनात् सैव त्रिगुणात्मिका प्रकृतिरुच्यत इति न श्रुतिभिः सदसदनिर्वचनीयाज्ञानप्रतिपादनम्॥

नाप्यैक्योपदेशानुपपत्त्या। न हि "तत्त्वमसि" इति जीवपरयोरैक्योपदेशे सति सर्वज्ञे सत्यसङ्कल्पे सकलजगत्सर्गस्थितिविनाशहेतुभूते तच्छब्दावगते प्रकृते ब्रह्मणि विरुद्धाज्ञानपरिकल्पनाहेतुभूता काचिदप्यनुपपत्तिर्दृश्यते। ऐक्योपदेशस्तु त्वंशब्देनापि जीवशरीरकस्य ब्रह्मण एवाभिधानादुपपन्नतरः। "अनेन जीवेनात्मनाऽनुप्रविश्य नामरूपे व्याकरवाणि" इति सर्वस्य वस्तुनः परमात्मपर्यन्तस्यैव हि नामरूपभाक्त्वमुक्तम्। अतो न ब्रह्माज्ञानपरिकल्पनम्॥

---

सर्गकरत्वात्। विचित्रशब्दो नानाविधवाची। नानाविधकार्यकरत्वात् प्रकृतेर्विस्मयनीयत्वम्। मायाशब्दो ह्याश्चर्यवाचीति वक्ष्यते॥ तस्मादाश्चर्यत्वमेव प्रवृत्तिनिमित्तम्। असत्येषु सत्येष्वपि मायाशब्दप्रयोगविषयेष्वाश्चर्यत्वं विद्यते॥ प्रकृतेराश्चर्यत्वमेव मायाशब्दाभिधेयत्वनिबन्धनमित्याह–**प्रकृते**रिति। तदुपपादयति **अस्मा**दिति। विचित्रकार्यकरत्वात् प्रकृतेराश्चर्यरूपत्वमिति न मायामात्रसूत्रविषयभाष्यविरोधः। एवं मायाशब्दार्थ उक्तः। अथ भगवतो मायासंबन्धश्रवणात् तद्वश्यत्वशङ्काव्युदासाय **मायी**तिपदगतमत्वर्थीयप्रत्ययार्थमाह **परमपुरुषस्य चे**ति। मायीतिपदोक्तो मायासंबन्धो न तत्तिरोभाव्यत्वम् ; अपि तु तच्छेषित्वम्। जीवस्यैव तु तत्तिरोधेयत्वम्, तस्यैव तथात्वश्रवणादित्यर्थः। मायाभिभवो जीवस्यैवेत्येतस्मिन्नर्थे परोक्तमेव वचनमाह **अनादी**ति। 'इन्द्रो मायाभिः' इत्यत्र अनेकविचित्रशक्त्यभिधायित्वं बहुवचनादवगम्यते। **ममे**ति। स्पष्टम्। निगमयति **इती**ति। मायाशब्दस्य मिथ्याभूतविषयेषु प्रयोगो दृश्यते चेत्, तत्र लाक्षणिकः स्यात् ; अर्थस्य सत्यत्वाभावेन तस्याश्चर्यत्वाभावात्। प्रतिभासस्तु द्वित्वादिविषयत्वादाश्चर्यरूपः, मन्त्रौषधादिश्चाश्चर्यरूप इति तत्संबन्धाल्लाक्षणिकत्वम्।

अथ श्रुत्यर्थापत्त्या अनिर्वचनीयसिद्धिं दूषयति–**नापी**ति। प्रतिज्ञातमुपपादयति–**नही**ति। अज्ञानापरिकल्पने अनुपपत्तिर्नास्ति ; तत्कल्पन एवानुपपत्तिः, विरुद्धधर्मश्रवणादित्यभिप्रायेण तच्छब्दावगतविशेषणानि उक्तानि। समानविभक्तिश्रुतिसिद्धतया ह्यैक्यापरित्यागः, तथा श्रुतहानस्यान्याय्यत्वात् तच्छब्दावगतविशेषाः स्वीकार्या इति भावः। ऐक्योपदेशानुपपत्तिरिति चेत्—तत्राह **ऐक्ये**ति। जीवपरयोर्हेयसंबन्धतदनर्हत्वाभ्यां ह्यैक्यविरोधः। जीवशरीरकस्य परमात्मन ऐक्याभिधाने हेयसंबन्धस्य जीवद्वारकतया विरोधः परिहृत इत्यर्थः। **उपपन्नतरः**—मुख्यतयोपपन्न इति भावः। जीववाचिशब्देन तच्छरीरकपरब्रह्माभिधानममुख्यमिति चेत्—तत्राह **अनेने**ति। श्रुत्यर्थापत्त्यसिद्धिं निगमयति-**अत** इति॥

---

1 अन्यशब्दोऽत्र मायिभिन्न इत्याशयेनापि प्रयुक्त इति भावः।

इतिहासपुराणयोरपि न ब्रह्माज्ञानवादः क्वचिदपि दृश्यते ।

ननु "ज्योतींषि विष्णुः" इति ब्रह्मैकमेव तत्त्वमिति प्रतिज्ञाय, "ज्ञानस्वरूपो भगवान् यतोऽसौ" इति शैलाब्धिधरादिभेदभिन्नस्य जगतो ज्ञानैकस्वरूपब्रह्माज्ञानविजृम्भितत्वमभिधाय, "यदा तु शुद्धं निजरूपि" इति ज्ञानस्वरूपस्यैव ब्रह्मणः स्वस्वरूपावस्थितिवेलायां वस्तुभेदाभाव-[प्र]दर्शनेनाज्ञानविजृम्भितत्वमेव स्थिरीकृत्य, "वस्त्वस्ति किम्", "मही घटत्वम्" इति श्लोकद्वयेन जगदुपलब्धिप्रकारेणापि वस्तुभेदानामसत्यत्वमुपपाद्य, "तस्मान्न विज्ञानमृते" इति प्रतिज्ञातं ब्रह्मव्यतिरिक्तस्यासत्यत्वमुपसंहृत्य, "विज्ञानमेकम्" इति ज्ञानस्वरूपे ब्रह्मणि भेददर्शननिमित्ताज्ञान-

---

इतिहासपुराणयोर्ब्रह्माज्ञानपरत्वाभावं प्रतिजानीते-**इतिहासे**ति ।

**नन्वि**त्यादि । **ब्रह्मैकमेव तत्त्वमिति प्रतिज्ञाये**ति । जडाजडयोः स्वरूपैक्यायोगेन सामानाधिकरण्यस्य बाधार्थत्वात् उत्तरश्लोकेषु तद्व्यतिरिक्तस्य मिथ्यात्वकथनाच्चेत्यभिप्रायः । **विज्ञानविजृम्भितानि** । विविधं ज्ञायते येन, विपरीतं ज्ञायते येनेति वा करणे व्युत्पत्तिः । **विज्ञान**मविद्या । **यदा तु शुद्ध**मित्यादिना तस्य हि व्यतिरेको वक्ष्यते । विज्ञाने [1](विज्ञानेन) विजृम्भितानीति योजना त्वयुक्ता ; अस्वारस्यात् । **विजृम्भितानी**ति नपुंसकस्य (नपुंसकान्तपदस्य) पुंल्लिङ्गभेदशब्दविशेषणत्वायोगेन विजृम्भितशब्दस्य भावार्थप्रत्ययान्तत्वस्य युक्तत्वेन षष्ठीसमासस्य युक्तत्वाच्च । ब्रह्मव्यतिरिक्तस्याविद्यापरिकल्पितत्वं व्यतिरेकमुखेन स्थिरीकरोतीत्याह **यदा त्वि**ति । **शुद्धम्**—अविद्यारहितम् । **निजरूपि**—तत्कृतभेददर्शनरहितम् । **अपास्तदोषम्**—रागादिदोषरहितम् । **सङ्कल्पतरोः** । समन्तात्कल्प्यतेऽनेनेति **सङ्कल्पः** दोषः । **वस्तुषु वस्तुभेदा** इत्यत्र वस्तुष्विति बहुवचने न तात्पर्यम् । जडोपलक्षिते वस्तुनि जडगतभेदा न संभवन्तीत्यर्थः । यद्वा एको **वस्तुशब्द** आकारपरः, । जडगताकार[रूप ?]भेदा न भवन्तीत्यर्थः । **वस्त्वस्ति किम्, महीघटत्व**मिति श्लोकद्वये प्रथमेनार्थस्वभाव उक्तः, द्वितीयेनोदाहरणं दर्शितमिति भिदा । **तत्र कुतो हि तत्त्वम्**—एवं सति कुतः परमार्थ इत्यर्थः । कृत्स्नमपरमार्थत्वेनोपलब्धं चेत्, कथं तत्र प्रामाण्यमिति शङ्कायामुच्यते **स्वकर्मस्तिमितात्मनिश्चयै**रिति । तत्त्वार्थनिश्चयविरोधिकर्मवशादित्यर्थः[2] । यद्वा न केवलमात्मविद्भिरेवासत्यत्वमुपलभ्यते, अपि त्वज्ञैरपीति भावः । न केवलं शास्त्रप्रमाणेन, लौकिकजडग्राहिप्रमाणेनापि तस्य मिथ्यात्वं सिध्यतीत्युक्तं भवति । **तस्मान्न विज्ञानमृते** इति श्लोकार्धमनात्मभूतविजातीयभेदनिषेधमुपसंहरतीत्याह — **तस्मा**दिति । **विज्ञानमेक**मित्यर्धं सजातीयरूपात्मभेदनिषेधपरम् । **भेददर्शननिमित्ताज्ञानमूलं निजकर्मैवे**तीति । **भेददर्शनम्**—सजातीयभेददर्शनम् । [3]तत् उत्तरोत्तरभाविकार्याज्ञानहेतुः ; तस्यापि पूर्वकर्मैवेत्यर्थः । यो देवादिशरीरभेदहेतुः, स एवेत्येवकाराभिप्रायः । यद्वा देवादिशरीरभेदप्रतीतिहेतुकाज्ञानमात्मनि

---

1 'विज्ञाने ब्रह्मणि विजृम्भितानीति श्रीधरीयं निरस्यति ।' भा० प्र० । 2 अत्रार्थे श्लोके टीकोक्तं प्रामाण्यमित्यादि आलक्ष्यत इत्यत्र कर्म । उत्तरस्मिन्नर्थे असत्यत्वमिति वा पूर्वार्धोक्तं वा कर्म ।

3 भाष्ये भेददर्शननिमित्तेत्यत्र षष्ठीतत्पुरुषेण अज्ञानपदेन धर्मियाथात्म्यज्ञानाभावग्रहणे तस्य ध्वंसरूपत्वे पूर्वं मुक्तत्वं स्यात् । प्रागभावरूपत्वे तस्यानादित्वात् न कर्म मूलम् । भावरूपाज्ञानग्रहणेऽपि तथैव न मूलं किञ्चित् । अतो बहुव्रीहिं विवक्षति-तदुत्तरेति ।

**मूलं निजकर्मैवेति स्फुटीकृत्य, 'ज्ञानं विशुद्धम्' इति ज्ञानस्वरूपस्य ब्रह्मणः स्वरूपं विशोध्य, "सद्भाव एवं (एषो) भवतो मयोक्तः" इति ज्ञानस्वरूपस्य ब्रह्मण एव सत्यत्वम्, नान्यस्य; अन्यस्य चासत्यत्वमेव; तस्य भुवनादेः सत्यत्वं व्यावहारिकम्' इति तत्वं तवोपदिष्टमिति ह्युपदेशो दृश्यते ॥**

**नैतदेवम् ; अत्र भुवनकोशस्य विस्तीर्णं स्वरूपमुक्त्वा**

---

देवत्वाद्याकारारोपणरूपम् ; तस्य हेतुः कर्मैवेत्यर्थः। अनात्मनि आत्मबुद्धेरप्यज्ञानशब्दवाच्यत्वं युक्तम् ; तस्या अपि मूलाज्ञानकार्यत्वात् ; "श्रूयतां चाप्यविद्यायाः स्वरूपं कुलनन्दन । अनात्मन्यात्मबुद्धिर्या" इति तस्या अज्ञानपर्यायाविद्याशब्दवाच्यत्वाच्च । **ज्ञानं विशुद्धमिति** स्वगतभेदनिषेधः । **विशुद्धं विमलमिति**—अविद्यातत्कृतभेददर्शनरहितमित्यर्थः । तत्कृतशोकादिरहितमित्याह **विशोकमिति** । **एकं सदैकमिति** सजातीयविजातीयभेदविरहानुवादः । यद्वा **एकमिति** सजातीयविजातीयभेदनिषेधानुवादः, **सदैकमिति** उक्तप्रकारेण स्वगतभेदराहित्यमुच्यते । **परमपरेशादि**-शब्दवाच्यं चिन्मात्रमेवेत्याह -**परम** इति। नेदं परमतम्, तत्त्वमेवोक्तमित्याह **सद्भाव** इति। **संव्यवहारभूतम्**—समन्ताद्व्यवहारार्हमेदम् । **भुवनाश्रितम्**—भुवनेनाधिष्ठानतया श्रितमेवैतद्वर्त्तते [इति यत् ?] तत्रापि हेतुरज्ञानमेवोक्तमित्यर्थः । यद्वा **भुवनाश्रितम्**—भुवनमाश्रितम्, **संव्यवहारभूतम्**—व्यावहारिकम्, **एतत्**—लोकसिद्धं सत्यत्वं **यत्**, **तत्रापि** कारणमविद्येत्युक्त-मित्यर्थः। एतदभिप्रायेण हि **तस्य भुवनादेः सत्यत्वं व्यावहारिकमितीत्युक्तम्** । इति **ह्युपदेशो दृश्यत** इति । **तस्मादितिहासपुराणयोर्ब्रह्माज्ञानवादो न दृश्यत** इति वक्तुं न शक्यमित्यर्थः।

एतत् प्रतिक्षिपति **नैतदेवमित्यादिना। नैतत्**—चिन्मात्रब्रह्मणोऽविद्यासंबन्धित्वमविद्याकल्पितत्वेन प्रपञ्चस्य मिथ्यात्वं च यदुक्तम्, न तत् प्रामाणिकमित्यर्थः । तथासति अर्थविरोधात् प्रकरणविरोधात् शास्त्रतात्पर्यविरोधात् **अशेषमूर्तिर्भगवानित्यादि**पदानां लाक्षणिकत्वात् प्रपञ्चधर्मिग्राहकप्रमाणविरोधात् श्रुतेः सविशेषवस्तुपरत्वोपपादनेन स्मृतेस्तद्विरुद्धार्थपरत्वापातात् पूर्वोक्ततर्कविरोधाच्च तदभावः । अत्रार्थविरोधो नाम—सर्वज्ञत्वादिगुणस्याज्ञानादिप्रसक्तिविरोधः, अविद्याया आश्रयतिरोधानाद्यनुपपत्तिश्च । प्रपञ्चस्य विस्तरेण प्रतिपादनवैयर्थ्यं प्रकरणविरोधः । अन्यत्तु स्पष्टम् । [1]**दशश्लोक्यामस्तिनास्तिसत्यासत्यज्ञानाज्ञानादिशब्दा** आत्मानात्मविषया इति नात्र विगानम् । तत्र **नास्त्यसत्यशब्दयोः** किं ज्ञानबाध्यत्वं प्रवृत्तिनिमित्तम्, उत परिणामित्वमिति विचारे—परिणामित्वपक्षे स्वारस्यमस्ति ; **मही घटत्वमित्युपपादनात्** । **अज्ञानशब्दस्य च** नानिर्वचनीयपरत्वम्; अपि तु कर्मपरत्वमेव; **यज्ञः पशुरित्यादिस्वारस्यात्** । अन्यत्र, "शरीराकृतिभेदास्तु भूपैते कर्मयोनयः", "अविद्याकर्मसंज्ञाऽन्या", "बाह्यकर्मवृतिप्रजः" इत्यादिवचनाच्च ।

चिदचिद्विवेकोऽत्र क्रियत इत्यभिप्रेत्य तदनुगुणसङ्गतिमाह **अत्रेति** । **अत्र**—अस्मिन् द्वितीयांशे । **विस्तीर्णमिति** स्वरूपविशेषणम् । **विस्तीर्णशब्देन** स्थौल्यं विवक्षितम् । संसृष्टस्थूलरूपमुक्त्वा वियुक्तं सूक्ष्मरूपमुच्यत इति भावः । यद्वा **विस्तीर्णमिति** क्रियाविशेषणम् । उत्तरत्र मिथ्यात्वं विवक्षितं

---

1. दशश्लोकी (वि. पु. २. १२) यदम्बु वैष्णव इत्यादिः, फलानि तेषामित्यन्ता ।

**पूर्वमनुक्तं रूपान्तरम्, "संक्षेपः श्रूयताम्" इत्यारभ्याभिधीयते। चिदचिन्मिश्रे जगति चिदंशो वाङ्मनसागोचरस्वसंवेद्यस्वरूपभेदो ज्ञानैकाकारतया अस्पृष्टप्राकृतभेदः अविनाशित्वेन अस्तिशब्द-वाच्यः। अचिदंशस्तु चिदंशकर्मनिमित्तपरिणामभेदो विनाशीति नास्तिशब्दाभिधेयः। उभयं तु परब्रह्मभूतवासुदेवशरीरतया तदात्मकमित्येतद्रूपं संक्षेपेणात्राभिहितम्। तथा हि—**

**"यदम्बु वैष्णवः कायस्ततो विप्र वसुन्धरा। पद्माकारा समुद्भूता पर्वताब्ध्यादिसंयुता॥"**

---

चेत्—पूर्वं विस्तरेण कथनमनुपपन्नम्। न हि, पूर्वमेव भ्रान्तस्य भ्रमान्तरापादनं कार्यम्। तस्मात् पूर्वं विस्तरेण भुवनकोशस्य कथितत्वान्न मिथ्यात्वं वक्ष्यत इति भावः। वक्ष्यमाणमादिभरतचरितं हृत्स्थं विस्तररूपम्। तत्सङ्क्षेपश्चायम्। वक्ष्यमाणसङ्क्षेप उक्तसंक्षेपश्च दृश्यते; अत उक्तसंक्षेपशङ्काव्यावृत्त्यर्थमाह **अनुक्तमिति**। अनुक्तं संसृष्टरूपान्तरं कथ्यत इति शङ्काव्यावृत्त्यर्थमाह-**रूपान्तरमिति**। वियुक्तमित्यर्थः। मिथ्यात्वव्यतिरेकेण वक्तव्यं [रूपान्तरं] सकलमुक्तम्। तस्मादनुक्तं वक्तव्यं रूपान्तरं नाम मिथ्यात्वम्, नान्यदिति शङ्कायाम्, मिथ्यात्वं विनाऽनुक्तं रूपान्तरमाह-**चिदचिन्मिश्र** इति। **चिदचिन्मिश्रे जगतीत्यनेन, सङ्क्षेपः श्रूयतां पुनरित्यत्र पुनः**शब्दो व्याख्यातो भवति। चिदचिदात्मके जगति स्थूलरूप[त्व]मुक्तम्; तत्रैव जगतीदमपि रूपान्तरं पुनरुच्यत इति तस्यार्थः। 'सत्तामात्रमगोचरम्। वचसामात्मसंवेद्यम्' इत्यादिवाक्योक्तं विशेषणमाह **चिदंशो वाङ्मनसेति**। 'द्वैतिनोऽतथ्यदर्शिनः' इत्यादिवाक्यानां भेदनिषेधपराणामर्थं हृदि निधायाह **अस्पृष्टेति**। यदि चिदंशस्य ज्ञानैकाकारत्व-मचिदंशस्य परिणामास्पदत्वं च विवक्षितम्, तर्ह्यस्तिनास्तिसत्यासत्यादिशब्दप्रवृत्तिनिमित्तत्वेन किमर्थमुच्यत इति चेत्—उच्यते। शाखाविशेषेषु "सच्च त्यच्चाभवत्", 'विज्ञानं चाविज्ञानं च', 'सत्यं चानृतं च सत्यमभवत्' इत्यादिवाक्येषु अस्तिनास्तिसत्यासत्यादिशब्दानां श्रूयमाणानाम् अनधीतशाखागतानां च किं ज्ञानबाध्यत्वाबाध्यत्वे प्रवृत्तिनिमित्तभूते; उत परिणामित्वापरिणामित्वे इति शङ्कां निराकर्तुम्—'परिणामित्वापरिणामित्वे एव नास्त्यसत्यादिशब्दार्थः, न तु ज्ञानबाध्यत्वाबाध्यत्वे' इत्यधीतानधीतशाखार्थ-ज्ञापनार्थमिति॥ पृथिव्यादितत्त्वानां सङ्घातविशेषावस्थायामेव जीवं प्रति शरीरत्वं दृष्टम्; न त्वेकैकस्य। मनुष्यादिशरीराणामपि तादृशपिण्डावस्थायामेव शरीरत्वं दृष्टम्; न भस्माद्यवस्थायाम्—इति चिदचितोः प्रत्येकमवस्थाविशेषेषु भगवच्छरीरत्वाभावशङ्काव्यावृत्त्यर्थमाह **उभयमिति**। चिदचि-द्रूपमन्योन्यसंसृष्टं निष्कृष्टं च भगवच्छरीरमित्यर्थः। निष्कृष्टस्य भगवच्छरीरत्वप्रतिपादनात् भगवन्तं प्रति शरीरत्वस्य निरुपाधिकतया स्वरूपप्रयुक्तत्वं फलितमिति मुक्तावस्थायामपि जीवस्य भगवच्छरीरत्व-सिद्धिः। **एतद्रूपम्**—अयमाकार इत्यर्थः। एतदुपपादयति **तथाहीत्यादिना** दशश्लोक्यां न भगवदात्मकत्वमसाधारणं प्रतिपाद्यम्। तत्तु सर्वप्रकरणसाधारणम्। असाधारणप्रतिपाद्यं तु प्रकृति-पुरुषविवेक एव। शास्त्रस्योपनिषदर्थोपबृंहणपरत्वात् साङ्ख्यादिमतव्यावृत्त्यर्थं सर्वप्रकरणेषु भगवदात्म-कत्वमुच्यते। अत्रासाधारणप्रतिपाद्यः प्रकृतिपुरुषविवेक एवेत्यभिप्रायेण हि पूर्वमनुक्तं रूपान्तर-मित्युक्तम्। भगवदात्मकत्वस्य सर्वप्रकरणसाधारण्यं हि, पूर्वमप्येतदसकृदुक्तमिति उत्तरत्र च वक्ष्यते। दशश्लोकीस्थसामानाधिकरण्यं शरीरात्मभावनिबन्धनमिति ज्ञापयितुं पूर्वश्लोकमुपादत्ते **यदम्ब्विति**।

इति, अम्बुनो विष्णोः शरीरत्वेनाम्बुपरिणामभूतं ब्रह्माण्डमपि विष्णोः, कायः, तस्य च विष्णुरात्मेति सकलश्रुतिगततादात्म्योपदेशोपबृंहणरूपस्य सामानाधिकरण्यस्य 'ज्योतींषि विष्णुः' इत्यारभ्य वक्ष्यमाणस्य शरीरात्मभाव एव निबन्धनमित्याह। अस्मिन् शास्त्रे पूर्वमप्येतदसकृदुक्तम्, "तानि सर्वाणि तद्वपुः", "तत् सर्वं वै हरेस्तनुः", "स एव सर्वभूतात्मा विश्वरूपो यतोऽव्ययः" इति। तदिदं शरीरात्मभावायत्तं तादात्म्यं सामानाधिकरण्येन व्यपदिश्यते, "ज्योतींषि विष्णुः" इति। अत्र अस्त्यात्मकं नास्त्यात्मकं च जगदन्तर्गतं वस्तु विष्णोः कायतया विष्ण्वात्मकमित्युक्तम्। इदमस्त्यात्मकम्, इदं नास्त्यात्मकम्, अस्य च नास्त्यात्मकत्वे हेतुरयमित्याह "ज्ञानस्वरूपो

---

ऋषिणाऽभिप्रेतं फलितमर्थमाह **अम्बुनो विष्णोरिति**। न हि बाल्यावस्थायां शरीरभूतस्य वस्तुनोऽवस्थान्तरे चेतनेन स्वरूपैक्यमस्ति, अपि तु सर्वावस्थमपि तद्वस्तु **शरीरमेवेति** भावः। **तस्य च विष्णुरात्मेतीति**। अभिप्रेत्येत्यर्थः। एवंरूपशरीरात्मभाव इति वार्थः। **सकलश्रुतिगततादात्म्योपदेशोपबृंहणरूपस्येति**। अनधीतशाखास्वपि तादात्म्योपदेशोऽस्ति, तस्यायमेवार्थ इति ज्ञापनं **तादात्म्योपदेशस्योपबृंहणम्**। यद्वा प्रत्यक्षसकलश्रुतिगततादात्म्योपदेशोपबृंहणं नाम अनधीतशाखासु तद्विरुद्धार्थप्रतिपादनं नास्तीति ज्ञापनम्। अत्र **इतिशब्दत्रयस्य** [1]अनेन श्लोकेन भगवानिममर्थमभिप्रेत्याऽयमर्थ इत्याहेत्यन्वयप्रकारः। न केवलमत्र समष्टिसृष्टिश्लोकगतव्यधिकरणनिर्देशेन व्यष्टिश्लोकगतसामानाधिकरण्यं शरीरशरीरिभावनिबन्धनमिति विज्ञायते, अपि तु प्रदेशान्तरेषु व्यष्टयवस्थानां भगवन्तं प्रति शरीरत्वं सामानाधिकरण्यस्य शरीरशरीरिभावनिबन्धनत्वं चासकृत् कण्ठोक्तमित्याह **अस्मिन्निति**। शरीरात्मभावस्य सामानाधिकरण्यहेतुत्वं कण्ठोक्तम् **विश्वरूपो यतोऽव्ययः** इति। तथा अन्यत्रापि, "सर्वगत्वादनन्तस्य स एवाहम्", "सर्वं समाप्नोषि ततोऽसि सर्वः" इत्यादि द्रष्टव्यम्। **तदिदमित्यादिना ज्योतींषीत्यादिश्लोके** पादत्रयस्यार्थ उच्यते॥ संसृष्टस्य भगवदात्मकत्वमुक्तमित्यर्थः। प्रधानादिविशेषान्तं चेतनाचेतनात्मकमित्युक्तत्वात् **ज्योतिरित्यादिशब्दाः** संसृष्टजीववाचिनः। अथ उत्तरश्लोकसङ्गत्यर्थं विशिष्टवाक्यार्थानुवादेन चतुर्थपादार्थं दर्शयति **अत्रास्त्यात्मकमिति**। **यदम्बु** इत्यादिश्लोकेन वैयधिकरण्येन समष्टयवस्थचिदचितोर्भगवदात्मकत्वमुक्तम्। **व्यष्टयवस्थयोरसंसृष्टयोः** संसृष्टयोरपि (स्वयोः संसृष्टयोः, **असंसृष्टयोरपि ?**) तयोः सामानाधिकरण्येन भगवदात्मकत्वमुच्यते **ज्योतींषीत्यादिना** श्लोकेन। तत्र पादत्रयेण व्यष्टयवस्थयोः संसृष्टयोस्तदात्मकत्वमुक्तम्; चतुर्थपादेन तु निष्कृष्टयोरपि तदात्मकत्वमुक्तमित्यर्थः। अनन्तरश्लोकमवतारयति **इदमिति**॥ अचिदंशस्य नास्त्यात्मकत्वनिबन्धनमेव तात्पर्यविषयः। अचिदंशस्य हि मिथ्यात्वशङ्का व्युदसनीया। अतस्तस्य परिणामित्वात् नास्त्यात्मकत्व एव तात्पर्यम्। चिदंशस्य त्वपरिणामित्वादस्त्यात्मकत्वं फलितं स्यादित्यभिप्रायेण **अस्य च नास्त्यात्मकत्वे हेतुरयमित्याहे**त्युक्तम्। व्याख्येये प्रतीकमुपादत्ते **ज्ञानस्वरूप** इति। अत्र **ज्ञानस्वरूपो भगवानिति** सामानाधिकरण्यस्य शरीरशरीरिभावनिबन्धनत्वं न

---

1 प्रथम इतिः इत्यनेनेत्यर्थकः; द्वितीय इतिः इत्यभिप्रेत्येत्यर्थकः। तृतीयस्य तु कर्मसमर्पकत्वं स्पष्टम्। इति श्लोकेन इत्यभिप्रेतार्थेन इत्येतत् सूचयतीत्युक्तं भवति। श्लोकवाच्यार्थः अम्बुनः कायत्वम्; तत्कार्यस्य कार्यत्वमभिप्रेतार्थः।

भगवान् यतोऽसौ" इति। अशेषक्षेत्रज्ञात्मनाऽवस्थितस्य भगवतो ज्ञानमेव स्वाभाविकं रूपम्; न देवमनुष्यादिवस्तुरूपम्। यत एवम्, तत एवाचिद्रूपदेवमनुष्यशैलाब्धिधरादयश्च तद्विज्ञानविजृम्भिताः। तस्य ज्ञानैकाकारस्य सतो देवाद्याकारेण स्वात्मवैविध्यानुसन्धानमूलाः। देवाद्याकारानुसन्धानमूलं कर्ममूला इत्यर्थः। यतश्चाचिद्वस्तु क्षेत्रज्ञकर्मानुगुणपरिणामास्पदम्, ततः तत् नास्तिशब्दाभिधेयम्, इतरदस्तिशब्दाभिधेयमित्यर्थादुक्तं भवति। तदेव विवृणोति, "यदा तु शुद्धं निजरूपि" इति। यदा एतज्ज्ञानैकाकारमात्मवस्तु देवाद्याकारेण स्वात्मनि वैविध्यानुसन्धानमूलसर्व-

---

केवलं पूर्वश्लोके 'यदम्बु वैष्णवः कायः' इत्युक्तत्वादवगम्यते, अस्मिन्नपि श्लोके अशेषमूर्तिरित्यनेनापि ज्ञायत इत्यभिप्रायेण व्याचष्टे अशेषेति। अशेषशब्देनाचितोऽपि विवक्षितत्वे भगवन्तं प्रति तस्य मूर्तित्वं विहितं स्यात्, अप्राप्तत्वात्। ततश्च 'न तु वस्तुभूत' इति देवमनुष्यशैलाब्धिधरादिवस्तुभावनिषेधोऽनुपपन्नः। अतोऽशेषशब्दः क्षेत्रज्ञविषय इत्यभिप्रायेणाशेषक्षेत्रज्ञात्मनेत्युक्तम्। अत्र ज्ञानस्वरूपादिशब्दानां परमविशेष्यपर्यन्ताभिधायित्वेऽपि विशेषणविशेषणे वाक्यस्य तात्पर्यम्। अतो ज्ञानस्वरूपत्वं विशेषणभूतजीवस्यैव विधीयते। यथा "लोहितोष्णीषा ऋत्विजः प्रचरन्ति" इत्यत्र विशेषणगतं लौहित्यमेव विधेयं[1] परम्पराया ऋत्विक्प्रचारकर्मविशेषणम्—तद्वत्। "काठिन्यवान् यो बिभर्ति", "नृसिंहमूर्तिर्भगवान् श्वेतः" इत्याद्युदाहरणं द्रष्टव्यम्॥ ज्ञानस्वरूप इत्यत्र दिव्यात्मस्वरूपस्य ज्ञानस्वरूपत्वमुच्यत इति न शङ्कनीयम्; 'सर्वकर्मक्षये ज्ञानमपास्तदोषम्' इति विवरणानुपपत्तेः। न हि दिव्यात्मस्वरूपस्य कर्मतत्कृतरागद्वेषादिहेयसंबन्धप्रसङ्गः। न तु वस्तुभूत इत्यस्यार्थमाह न देवमनुष्यादीति। शैलादिस्थावरोक्तिः सर्वशरीराणामुपलक्षणमिति ज्ञापनार्थो देवमनुष्यादिशब्दः। उत्तरार्द्धं व्याचष्टे यत एवमिति। शैलाब्धिधरादिभेदान् विज्ञानविजृम्भितानि जानीहीत्यनेन फलितं हेतुहेतुमद्भावं विवृणोति तद्विज्ञानेत्यादिना। विज्ञानशब्दं व्याचष्टे तस्येति। विज्ञानम्—विविधज्ञानम्। कथं शैलाब्धिधरादिभेदस्य वैविध्यानुसन्धानमूलत्वम्; 'निजकर्मभेदविभिन्नचित्तैः' 'सर्वकर्मक्षये' इति कर्ममूलत्वेन वक्ष्यमाणत्वात् कर्मैव हि मूलमित्यत्राह देवादीति। वैविध्यानुसन्धानस्य देवादिभेदहेतुत्वं सद्वारकम्; उपरितनश्लोकार्थात्; 'अविद्यासञ्चितं कर्म' 'बाह्यकर्मवृतिप्रजः', 'भूपैते कर्मयोनयः' इत्यादिवचनान्तरादित्यर्थः। पूर्वम् इदमस्त्यात्मकमित्यादिनोक्तश्लोकवाक्यार्थः कथं घटत इत्यत्राह यतश्चेति। ज्ञानस्वरूपः, विज्ञानविजृम्भितानीत्यनेन तथा फलितमित्यर्थः। तदेवेति। पूर्वपक्षयोजनायामुक्तेष्वर्थेष्वपेक्षितांशोपजीवनेन[2] सिद्धान्तयोजना क्रियते। विज्ञानविजृम्भितत्वमेव व्यतिरेकमुखेन विवृणोतीत्यर्थः। पूर्वश्लोके देवादिभेदानां स्वात्मवैविध्यानुसन्धानमूलत्वं सद्वारकमिति व्याख्यानमनन्तरश्लोके व्यतिरेकमुखेन विवरणे कर्महेतुत्वश्रवणनिबन्धनमिति स्पष्टयन्नाह देवाद्याकारेणेति। निर्दोषमित्यादिपदानामर्थविभागः 'ज्ञानं विशुद्ध'मित्यादिश्लोकव्याख्याने विशदयिष्यत इति ग्रन्थलाघवार्थमत्र न विस्तृतः। निर्दोषम्

---

1 'लोहितोष्णीषा'इत्यत्रोष्णीषोद्देशेन लौहित्यविधाने एकप्रसरताभंगः स्यादिति ऋत्विक्प्रचारोद्देशेन लौहित्यस्यैवाप्राप्तस्य विधानेऽपि तल्लौहित्यमुष्णीषद्वारकमेव; तद्वदित्यर्थः।

2 पूर्वोक्तविवरणरूपरवांश उभयसंमत इत्यर्थः। विवरणप्रकारे वैषम्यमुपपादनभाष्यावसेयम्।

कर्मक्षयान्निर्दोषं परिशुद्धं निजरूपि भवति, तदा देवाद्याकारेणैकीकृत्याऽऽत्मकल्पनामूलकर्मफलभूतास्तद्भोगार्थाः वस्तुषु वस्तुभेदा न भवन्ति । ये देवादिषु वस्तुष्वात्मतयाऽभिमतेषु भोग्यभूता देवमनुष्यशैलाब्धिधरादिवस्तुभेदाः, ते तन्मूलभूतकर्मसु विनष्टेषु न भवन्ति इत्यचिद्वस्तुनः कादाचित्कावस्थाविशेषयोगितया नास्तिशब्दाभिधेयत्वम्, इतरस्य सर्वदा [1]निजसिद्धज्ञानैकाकारत्वेन अस्तिशब्दाभिधेयत्वमित्यर्थः ।

प्रतिक्षणमन्यथाभूततया कादाचित्कावस्थायोगिनोऽचिद्वस्तुनो नास्तिशब्दाभिधेयत्वमेवेत्याह 'वस्त्वस्ति किम्' इति । अस्तिशब्दाभिधेयो ह्यादिमध्यपर्यन्तहीनस्सततैकरूपः पदार्थः ; तस्य कदाचिदपि नास्तिबुद्ध्यनर्हत्वात् । अचिद्वस्तु किञ्चित् क्वचिदपि तथाभूतं न दृष्टचरम् । ततः किमित्यत्राह "यच्चान्यथात्वम्" इति । यद्वस्तु प्रतिक्षणमन्यथात्वं याति, तत् उत्तरोत्तरा-

---

शरीरसम्बन्धरहितम् । **परिशुद्धम्** तत्कृतरागद्वेषसुखदुःखादिरहितम् । **निजरूपि** आविर्भूतस्वरूपम् । **सङ्कल्प**शब्दं व्याचष्टे **एकीकृत्यात्मकल्पना**शब्देन । 'समित्येकीकारे' इति हि शाब्दाः । पूर्ववत् सद्वारकमिति व्याचष्टे **आत्मकल्पनामूलकर्मफलभूता** इति । देहात्मनोरेकीकृत्यानुसन्धानफलं देवाद्याकारेण स्वात्मवैविध्यानुसन्धानम् । तयोरैकैकं विज्ञानशब्दे सङ्कल्पशब्देऽप्यर्थसिद्धम् । सुखदुःखे हि कर्मफलम् । तत् कथं वस्तुभेदस्य कर्मफलत्वमिति शङ्कायां **तद्भोगार्था** इत्युक्तम् । सुखादिभोगद्वारभूतत्वात् देवादिभेदाः कर्मफलमित्यर्थः । "भोक्ता भोग्यं प्रेरितारं च मत्वा" इत्यादिषु **भोग्य**शब्दार्थः स्पष्टीकृतो भवति **तद्भोगार्था** इत्यनेन । भोगस्थानभोगोपकरणानां भोगसिद्धिप्रयोजकत्वमेव **भोग्यत्व**मित्यर्थः । सप्तम्यन्त**वस्तु**शब्दो जीवपर्यन्तदेहपरः ; द्वितीय**वस्तु**शब्दो देवादिशरीरमात्रपरः । **वस्तुभेदाः**— देवादिशरीरभेदाः । अत्र **वस्तुभेद**शब्देन भेदस्य वस्तुरूपत्वात् पारमार्थ्यमपि फलितम् । अनान्वितेषु पदेषु व्याख्येयपदव्याख्यानार्थमाह **ये देवादिष्विति** ॥ **देवादिषु वस्तुषु आत्मतयाऽभिमतेषु** । प्रथम**वस्तु**शब्दो जीवपर्यन्तदेहपर एवेत्यभिप्रायः । संसृष्टाकारे ह्यात्माभिमानः । **तद्भोगार्था** इति पूर्वोक्तस्य पदस्य व्याख्येय[2] पदमुदाहरति **भोग्यभूता** इति । **भोग्यभूता** इत्यनेन वस्तुभेदा इति पदस्याचिदंशमात्रपरत्वमुक्तम् ; **न तु वस्तुभूत** इत्युक्तत्वात् । पूर्वश्लोकोक्तभेदा एवात्र विवक्षिता इत्याह **देवमनुष्ये**ति । कारणाभावात्कार्याभावो हि व्यतिरेकः ; तं स्पष्टयति **तन्मूलभूते**ति । परमप्रकृतार्थस्य फलितत्वमाह **इत्यचिद्वस्तुन** इति । पूर्वश्लोकफलितार्थकथने आत्मनोऽस्तिशब्दवाच्यत्वे हेतुरनुक्तः ; अत्र तु तस्यापि फलितत्वमाह **इतरस्ये**ति ।

जगदुपलब्धिप्रकारेणापि वस्तुभेदानां परिणामित्वमुपपाद्यते श्लोकद्वयेन । तत्र प्रथमस्य वाक्यार्थमाह **प्रतिक्षण**मिति । श्लोकस्य नास्तिशब्दाभिधेयतापरत्वं **यदस्ति यन्नास्ती**त्युपक्रमावगतम् । अस्मिन् श्लोके प्रयोजकशिक्षा । **वस्त्वस्ति** किमित्यर्थप्रयोजनौपयिकतयाऽत्राभिधेयं **यदस्ति यन्नास्ती**त्युपक्रमवशात्सिद्धमर्थमाह **अस्तिशब्दे**ति । सततैकरूपतया अस्तिशब्दवाच्यत्वे सति हि पूर्वार्द्धोक्तस्य तदभावस्य नास्तिशब्दाभिधेयताहेतुत्वसिद्धिः । पूर्वार्धं व्याचष्टे **अचिद्वस्त्वि**ति । किमनेन नास्तिशब्दाभिधेयत्वस्येति शङ्कायामुत्तरार्द्धमवतारयति **ततः किमित्यत्राहे**ति । **याती**ति वर्तमाननिर्देशस्याभिप्रायमाह **प्रतिक्षण**मिति । **भूयो न तत्तथे**त्यस्यार्थमाह **तदि**ति । **उत्तरोत्तरावस्थाप्राप्त्ये**ति

---

1. निजं सिद्धं निजसिद्धम्—स्वाभाविकम् । 2. भोक्ता भोग्यमिति श्रुतिगतं पदम् ।

वस्थाप्राप्त्या पूर्वपूर्वावस्थां जहातीति तस्य पूर्वावस्थस्योत्तरावस्थायां न प्रतिसंधानमस्ति ; अतः सर्वदा तस्य नास्तिशब्दाभिधेयत्वमेव ।

तथा ह्युपलभ्यत इत्याह—"मही घटत्वम्" इति । स्वकर्मणा देवमनुष्यादिभावेन स्तिमितात्मनिश्चयैः स्वभोग्यभूतमचिद्वस्तु प्रतिक्षणमन्यथाभूतमालक्ष्यते—अनुभूयत इत्यर्थः । एवं सति किमप्यचित् वस्तु-अस्तिशब्दार्हमादिमध्यपर्यन्तहीनं सततैकरूपमालक्षितमस्ति किम् ? न ह्यस्तीत्यभिप्रायः । यस्मादेवम्, तस्मात् ज्ञानस्वरूपात्मव्यतिरिक्तमचिद्वस्तु कदाचित् क्वचित् केव-

---

भूयःशब्दार्थः । **न तत्तथे**त्यस्यार्थमाह **पूर्वपूर्वावस्थां जहाती**ति । तत्रेत्यस्यार्थमाह **पूर्वावस्थस्योत्तरावस्थाया**मिति । कुतस्तत्त्वमित्यस्यार्थमाह **न प्रतिसन्धान**मिति । **तत्त्वम्**—तस्य भावः । तदिदमिति प्रतिसन्धानानर्हत्वं फलितमित्यर्थः । ननु **तत्त्वं कुतः**—पूर्वावस्थत्वं कुत इत्युक्तम् । कथं प्रतिसन्धाननिषेधः ॥ उच्यते । कुतश्शब्दः प्रमाणप्रतिक्षेपपरः । पर्वतोऽग्निमानित्युक्ते कुत इति प्रमाणाकाङ्क्षा हि द्योत्यते । अतः प्रतिक्षेपपरः कुतश्शब्दोऽपि प्रमाणप्रतिक्षेपपरः । कुतः प्रमाणादित्यर्थः । पूर्वावस्थस्य भूयस्तथात्वे प्रमाणं च प्रत्यभिज्ञा । अतः प्रमाणे प्रतिक्षिप्ते प्रतिसंधानं निषिद्धं भवतीति भावः । अन्यथा **न तत्तथे**त्यनेन पौनरुक्त्यं स्यात् । हिशब्देन फलितमर्थमाह **अत** इति ।

**नास्ति**शब्दवाच्यत्वे प्रयोजकशिक्षा कृता । शिक्षितमर्थमुदाहरणेन दर्शयत्यनन्तरश्लोक इत्यभिप्रायेणाह **तथा ही**ति । **मही घटत्व**मिति श्लोकं व्याचष्टे **स्वकर्मणे**त्यादिना । **मही घटत्व**मित्यत्र **याती**ति पूर्वश्लोकादनुषङ्गः । कर्मण आत्मनिश्चयविरोधित्वे सद्वारकमित्याह **देवमनुष्यादिभावेने**ति । देवादिदेहसंसर्गेणेत्यर्थः । **स्तिमितम्**—प्रतिबद्धम् । अस्थिरे भोग्यत्वबुद्धिः स्थिरतरसुखरूपात्मनिश्चयस्तैमित्यादिति भावः । यद्वा आत्मज्ञानरहितैरप्यचिद्वस्तुनोऽस्थिरत्वमालक्ष्यत इत्याह—**तथाही**ति । **आलक्ष्यत** इति चाक्षुषज्ञाने प्रयोगप्राचुर्यात् तद्व्यावृत्त्यर्थ**मनुभूयत** इत्युक्तम् ।[1] श्लोकव्याख्यानपरिसमाप्तिं द्योतयति **इत्यर्थं** इति । ब्रूहीत्यादेरर्थमाह **एवं सती**ति । अनेन अत्रेतिपदं व्याख्यातम् । **अचिद्वस्त्वि**तिपदेन श्लोकस्थ**वस्तु**शब्दो व्याख्यातः । **अस्तिशब्दार्ह**मित्यादिविशेषणं सामर्थ्यसिद्धतयोक्तम् । अथवा (?) श्लोकद्वयाभिप्रायमाह—**एवं सती**ति । **न तु वस्तुभूतः** इति पुराणग्रन्थे, **किमप्यचिद्वस्तु, अचिद्वस्तु किञ्चि**दिति भाष्ये च अचिद्विषय (ये ?) वस्तुशब्दप्रयोगात् "**तद्वस्तु नृप तच्च किम्**" इति ग्रन्थस्थवस्तुशब्दतुल्यत्वं न शङ्कनीयम् । **अस्ति किमि**त्यनेन श्लोकस्थस्यास्तिशब्दस्य भवत्यर्थत्वमुक्तम् । अत एव **यदस्तीत्यस्ति**शब्दवत् नात्मस्वरूपपरत्वं शङ्कनीयम् । फलितमाह **न ही**ति । एवं **अस्ति किं न ह्यस्ति**—इति भाष्यस्वारस्येन श्लोकद्वयोपक्रमगतस्य **अस्ति किमि**ति वाक्यस्य प्रत्यभिज्ञानस्य भवत्यर्थतया व्याख्यातत्वं प्रतीयते । यद्वा **अस्तिशब्दाभिधेये** इत्यनेन **वस्त्वस्ति कि**—मित्यत्रास्तिशब्दो व्याख्यातः । **'यदस्ति' 'तस्मान्न विज्ञानमृतेऽस्ति'** इत्यादिनैकरूप्यात् । **वस्त्वस्ति किम्, मही घटत्व**मिति श्लोकद्वयस्य प्रत्येकमुक्तो वाक्यार्थः पूर्वपक्षयोजनायामुपजीव्यः । उत्तरश्लोकस्य प्रथमार्धं व्याचष्टे **यस्मा**दिति । **यस्मादेवं तस्मात्** परिणामित्वादेव, न तु ज्ञानबाध्यत्वादित्यर्थः ।

---

1 (?) 'श्लोकव्याख्यानपरिसमाप्तिं द्योतयति इत्यर्थं इति' इति वाक्यस्य अथवेति पदानन्तरं पाठो युक्तः । उपरि कतिपयपदव्याख्यानेन पूर्वं परिसमाप्त्यभावात् ।

लास्तिशब्दवाच्यं न भवतीत्याह-'तस्मान्न विज्ञानमृते' इति। आत्मा तु सर्वत्र ज्ञानैकाकारतया देवादिभेदप्रत्यनीकस्वरूपोऽपि देवादिशरीरप्रवेशहेतुभूतस्वकृतविविधकर्ममूलदेवादिभेदभिन्नात्मबुद्धिभिः तेन तेन रूपेण बहुधाऽनुसंहित इति तद्भेदानुसन्धानं नात्मस्वरूपप्रयुक्तमित्याह "विज्ञानमेकम्" इति॥ आत्मस्वरूपं तु कर्मरहितम्, तत एव मलरूपप्रकृतिस्पर्शरहितम्। ततश्च तत्प्रयुक्तशोकमोहलोभाद्यशेषहेयगुणारूङ्गि, उपचयापचयानर्हतयैकम्, तत एव सदैकरूपम्। नच

---

**अचिद्वस्तु**शब्देन **वस्तुजात**शब्दार्थ उक्तः। **जात**शब्दशिरस्को **वस्तु**शब्दो न नित्यवाचीति भावः। **केवलास्तिशब्दवाच्य**मिति। एतच्छ्लोकस्थास्तिशब्दो न भवत्यर्थः; ज्ञानव्यतिरिक्तस्य **तदेतदक्षयं नित्यम्** इत्यादिना नित्यत्वेनोक्तस्य निषेध्यत्वायोगात्, यदस्तीत्युपक्रान्तस्योपसंहारौचित्याच्चेति भावः॥ प्रागभावप्रध्वंसाभाववतोऽचिद्वस्तुनो नास्तिशब्दाभिधेयत्वमवच्छिन्नास्तिशब्दवाच्यत्वं चेति तद्व्यावृत्त्यर्थं **केवल**शब्दः।

एवमात्मव्यतिरिक्तवस्तुनो नास्तिशब्दाभिधेयत्वमुपसंहृतम्। **विज्ञान**मित्यादि व्याचष्टे **आत्मा त्विति**। तुशब्दोऽचिद्वैषम्यपरः। **सर्वत्र**—सर्वशरीरेषु। **एक**शब्दं व्याचष्टे **ज्ञानैकाकारतये**ति। "एको व्रीहिस्सुनिष्पन्नस्सुपुष्टं कुरुते प्रजाः" इतिवत् **अयमेक**शब्द आकारैक्यपरः। स चाकारो विज्ञानशब्दोक्तं ज्ञानत्वमित्यभिप्रायेणोक्तं **ज्ञानैकाकारतये**ति। भावप्रधानो निर्देशः; ज्ञानत्वैकाकारतयेत्यर्थः। स्वरूपतो धर्मतश्चाविशेषेण ज्ञानत्वं सद्वारकमद्वारकं चाऽऽकारो हि भवति। **ज्ञानैकाकारतये**त्यत्र **एक**शब्देन सङ्कोचविकासदुःखरूपत्वादिभ्युदासश्च। **देवादिभेदप्रत्यनीकस्वरूपोऽपी**ति एकरूपत्वाद्भेदप्रत्यनीकत्वम्। **निजकर्मादि**पदं व्याचष्टे **देवादी**ति। भेदशब्दार्थमाह **विविधे**ति। **बुद्धि**शब्देन **चित्त**शब्दार्थ उक्तः। बुद्धेर्भेदश्च आत्मन्यारोप्यमाणदेवाद्याकाररूपविषयभेदात्। **बहुधा**—देवत्वादिबहुप्रकारविशिष्टतयाऽभ्युपेतमित्यर्थः। **बहुधा**शब्दस्याकारैक्यपरत्वं स्पष्टम्। फलितमर्थमाह **नात्मस्वरूपप्रयुक्त**मिति। औपाधिकमित्यर्थः। उपाधिविमोक्षे कीदृशं स्वरूपमित्यत्र अनन्तरश्लोकं व्याचष्टे **आत्मेति**। **विशुद्ध**पदं व्याचष्टे **कर्मरहित**मिति। **विमल**पदं व्याचष्टे **तत एवे**ति। विमलपदव्याख्यानमिति स्पष्टीकर्तुं **मलरूप**शब्दः। **मलरूपप्रकृतिस्पर्शरहितमित्यनेन**, 'सर्वकर्मक्षये ज्ञानमपास्तदोषम्' इत्यस्यार्थोऽवगतः; कर्मक्षयवाचिपदानन्तरपदस्य शरीरसंबन्धरहितपरत्वेन व्याख्यातत्वात्। तथा च श्रुतिः, "अश्व इव रोमाणि विधूय पापं चन्द्र इव राहोर्मुखात् प्रमुच्य। धूत्वा शरीरमकृतं कृतात्मा ब्रह्मलोकमभिसम्भवामि" इति। अत्र हि पापं विधूयेत्युक्त्वा, धूत्वा शरीरमित्युक्तम्। उपरितनपदानि व्याचष्टे **ततश्चे**ति। तत एवेत्यर्थः। हेतोर्नैरपेक्ष्यसूचकश्चशब्दः। [1]निरस्ताशेषलोभादिसङ्गमित्यर्थः। **एक**मिति पदं व्याचष्टे **उपचयापचयानर्हतयैक**मिति। **उपचयापचयौ**—वृद्धिक्षयौ; तदर्हत्वम् सावयवत्वम्; सावयवत्वाभावादेव एकशब्दवाच्यत्वम्। निरवयवत्वमेकत्वमित्यर्थः। **तत एव सदैकरूप**मिति। निरवयवत्वात्सावयवत्वप्रयुक्तवृद्धिक्षयरहितमित्यर्थः। सामानाधिकरण्यं व्याचष्टे **तच्चे**ति। 'यदम्बु वैष्णवः कायः', 'अशेषमूर्तिः' इत्युक्तत्वादयमेवार्थः।

---

1 मध्यगतं निरस्तपदमादौ निवेश्य अर्थं स्पष्टयति। अशेषलोभादिभिः स्वयमेव यदात्मस्वरूपसंगः निरस्तः तादृशम्—इत्यर्थो भवितुमर्हति।

वासुदेवशरीरमिति तदात्मकम्; अतदात्मकस्य कस्यचिदप्यभावादित्याह 'ज्ञानं विशुद्धम्' इति। चिदंशः सदैकरूपतया सर्वदाऽस्तिशब्दवाच्यः। अचिदंशस्तु क्षणपरिणामित्वेन सर्वदा नाशगर्भ इति सर्वदा नास्तिशब्दाभिधेयः। एवंरूपचिदचिदात्मकं जगत् वासुदेवशरीरं तदात्मकमिति जगद्याथात्म्यं सम्यगुक्तमित्याह "सद्भाव एवम्" इति। अत्र सत्यमसत्यमिति, 'यदस्ति यन्नास्ति' इति प्रक्रान्तस्योपसंहारः। एतत् ज्ञानैकाकारतया समम् अशब्दगोचरस्वरूपभेदमेवा-चिन्मिश्रं भुवनाश्रितं देवमनुष्यादिरूपेण सम्यग्व्यवहारार्हमेदं यद्वर्तते, तत्र हेतुः कर्मेत्युक्तमित्याह "एतत्तु यत्" इति। तदेव विवृणोति, "यज्ञः पशुः" इति।

---

न यतोऽन्यस्तीत्येतद्व्याचष्टे **अतदिति**। **यतः** यस्माद्वासुदेवात्। **अन्यत्** स्वपर्यवसितं वस्तु, नास्तीत्यर्थः। यद्वा वासुदेवादिति पदमध्याहृत्य योजना; वासुदेवादन्यन्नास्तीति यतः, तत इत्यर्थः। अस्यां योजनायां [1]तच्छब्दः प्रसिद्धपरामर्शी। अतोऽपि पूर्वयोजना साधीयसी; तद्वृत्तस्य यद्वृत्तप्रतिनिर्देशरूपत्वस्वारस्यात्; पञ्चम्यन्ताध्याहारानपेक्षत्वाच्च। **ज्ञानस्वरूपः, यदा** त्विति श्लोकौ चिदचित्साधारणौ, **वस्त्वस्तीत्यादि**-सार्धश्लोकद्वयमचिदसाधारणम्, **विज्ञान**मित्यादिसार्धश्लोकश्चिदसाधारण इति विभागः॥ न परमतमुक्तम्, तत्त्वमेवोक्तमित्यभिप्रायेण **सद्भाव** इत्याद्यर्धमुक्तम्। तत्र **यथा**शब्दार्थमाह **चिदंश** इति। **यथा**—येन प्रकारेण। परिणामित्वापरिणामित्वरूपेण; न ज्ञानबाध्यत्वाबाध्यत्वरूपेणेत्यर्थः। **एवंरूपेति**। शरीरशरीरिभावरूपेण येन [3]प्रकारेण भगवदात्मकत्वम्; न तु स्वरूपैक्येनेत्यर्थः। श्लोके **यथा**शब्द-प्रतियोगी **एवं**शब्दः। सत्यं ज्ञानमसत्यमन्यच्च यथा अवस्थितम्, एवं सद्भाव उक्त इत्यन्वयोऽभिप्रेतः। अतः सत्यासत्यशब्दवाच्यत्वनिर्वाहकापरिणामित्वपरिणामित्वे भगवदात्मकत्वञ्च **यथा**शब्दविवक्षितं भवति। अन्यदुपक्रान्तम्, अन्यदुपसंहृतं भवति; अस्तिनास्तिशब्देनोपक्रम्य सत्यासत्यशब्देनोपसंहारादित्यत्राह **अत्रेति**। उपक्रमोपसंहारयोः शब्दान्तरनिर्देशस्यायमभिप्रायः—अन्येष्वपि शब्देषु क्वचिदेवं श्रुतेषु तेषामपि प्रवृत्तिनिमित्तमिदमेवेति। उत्तरार्द्धस्यार्थमभिप्रेत्याह **एतदिति**। **प्रत्यस्तमितभेदम्, अगोचरं** वचसामित्यनयोरर्थमभिप्रेत्याह **ज्ञानैकाकारतया समम् अशब्दगोचरस्वरूपभेद**मिति। **एव**कारेण विरोधः सूचितः। भुवनाश्रितत्वस्य घटकं पदमाह **अचिन्मिश्र**मिति। **भुवनाश्रितम्**—अण्डान्तर्गतम्, भोगस्थानगतमित्यर्थः। **संव्यवहार**शब्दं व्याचष्टे **सम्यग्व्यवहारार्हभेदमिति**। **सम्यक्**छब्दः स्पष्टत्वपरः। तत् कर्म किमित्याकाङ्क्षायामुत्तरश्लोकस्य तद्विवरणपरत्वमाह **तदेव विवृणोतीति**। **स्वर्गमयश्च कामः**। स्वर्गविषयेच्छेत्यर्थः। फलस्य वक्ष्यमाणत्वात्। देवतायाः फलस्य च यष्टव्यत्वेन साध्यत्वेन च कर्मान्तर्भावः। इत्यादिशब्देन दानहोमादिकं च पापं चोक्तं भवति। **भूरादि**शब्देन पापफलमप्युक्तं भवति। पश्वादिपरिकरयुक्तो यज्ञ एव[2](कं) कर्म। एवंविधयज्ञात्मकं दानहोमाद्यात्मकं च कर्म तत्र हेतुः। **आश्रितमार्गदृष्टम्**। तैस्तैराश्रिता मार्गा वर्णाश्रमाः। तेषु दृष्टमित्यर्थः।

---

1 तच्छब्दः—स इति शब्दः श्लोकस्थः। 2 एवेति पाठे यज्ञ एव कर्म, न पश्वादिः स तु परिकर इति भावः। एकमिति पाठे पूर्वार्धोक्तमेकम्, अन्यदुपरीत्यर्थः। तत्र हेतुरिति। भूरादिफले हेतुरित्यर्थः। तत्रहेतुरितिभाष्यविवरणार्थमिदम्। 3 यथाशब्दस्यार्थान्तरमिदम्।

जगद्याथात्म्यज्ञानप्रयोजनं मोक्षोपाययतनमित्याह "यच्चैतत्" इति।

अत्र निर्विशेषे परे ब्रह्मणि, तदाश्रये सदसदनिर्वचनीये चाज्ञाने, जगतस्तत्कल्पितत्वे च (वा) अनुगुणं किञ्चिदपि पदं न दृश्यते। अस्तिनास्तिशब्दाभिधेयं चिदचिदात्मकं कृत्स्नं जगत् परमस्य परेशस्य परस्य ब्रह्मणो विष्णोः कायत्वेन तदात्मकम्। ज्ञानैकाकारस्याऽऽत्मनो देवादिविविधाकारानुभवे अचित्परिणामे च हेतुर्वस्तुयाथात्म्यज्ञानविरोधि क्षेत्रज्ञानां कर्मैवेति प्रतिपादनात्; अस्तिनास्तिसत्यासत्यशब्दानां च सदसदनिर्वचनीयवस्त्वभिधानासामर्थ्याच्च। नास्त्यसत्यशब्दावस्तिसत्यशब्दविरोधिनौ। अतश्च ताभ्यामसत्त्वं हि प्रतीयते; नानिर्वचनीयत्वम्। अत्र चाचिद्वस्तुनि नास्त्यसत्यशब्दौ न तुच्छत्वमिथ्यात्वपरौ प्रयुक्तौ; अपि तु विनाशित्वपरौ। 'वस्त्वस्ति किम्', 'मही घटत्वम्' इति अत्रापि विनाशित्वमेव ह्युपपादितम्; न निष्प्रमाणकत्वम्, ज्ञानबाध्यत्वं वा; एकेनाऽऽकारेणैकस्मिन् कालेऽनुभूतस्य कालान्तरे परिणामविशेषेणान्यथोपलब्ध्या नास्तित्वोपपादनात्। तुच्छत्वं हि प्रमाणसंबन्धानर्हत्वम्। बाधोऽपि यद्देशकालादिसंबन्धितया यत् अस्तीत्युपलब्धम्; तस्य तद्देशकालादिसंबन्धितया नास्तीत्युपलब्धिः; न तु कालान्तरेऽनुभूतस्य

---

अनन्तरश्लोकार्थमाह जगदिति। **कर्मवश्यः सर्वत्र व्रजति हि**। यद्वा—कर्मवश्यो हि सर्वत्र व्रजति। तस्मादेवं कुर्यादित्यर्थः। निगलित एव हि सर्वत्र कारागृहे चरति, अतस्तन्मोचनाय यतेतेति भावः। **ध्रुवमचलं सदैकरूपम्**—स्वरूपतो गुणतश्चैकरूपमित्यर्थः। यद्वा स्वरूपतो गुणतो रूपतश्चैकरूपमित्यर्थः। तस्मान्नैतदेवमिति पूर्वेणान्वयः।

एवं श्लोकानां स्वोक्तार्थानुगुण्यमुपपाद्य परोक्तार्थाननुगुणत्वमुपपादयति अत्रेत्यादिना॥ **किञ्चिदपि पदं न दृश्यत** इति न वाच्यम्; **नास्त्यादिशब्दाः**, सामानाधिकरण्यम्, अज्ञानवाचिपदजातं चानुगुणमिति चेत्—तत्राह अस्तीति। **परमस्येत्यादि**। **परमपरेशा**दिशब्दानां भवत्पक्षे मुख्यार्थासिद्धिरिति भावः। हेत्वन्तरं चाह **अस्तिनास्तिसत्यासत्येति**। प्रथमश्चः त्वर्थः। स्वोक्तयोजनायामनुगुणस्य शब्दस्य परपक्षाननुगुणत्वरूपं वैषम्यमस्तीति भावः। **अस्तिसत्यशब्दौ** दृष्टान्तार्थौ। यथा अस्तिसत्यशब्दौ न सद्विलक्षणपरौ, तथा नास्त्यसत्यशब्दावपि नासद्विलक्षणपरावित्यर्थः। कथमनिर्वचनीयवस्त्वभिधानासामर्थ्यमित्यत्राह **नास्तीति**। अर्थद्वारको विरोधः॥ ततः किमित्यत्राह **अतश्चेति** यद्वा—**अनिर्वचनीयवस्त्वभिधानासामर्थ्या**दिति व्युत्पत्त्यभाव उक्तः। परस्परविरुद्धार्थत्वमत्र हेत्वन्तरतयोक्तम्। **चः** समुच्चये॥ तथापि सत्त्वाभावात् तुच्छत्वं मिथ्यात्वं वा उक्तं भवतीति चेत्—तत्राह **अत्रेति**। कथं विनाशित्वपरावित्यत्राह **वस्त्विति**। [1]विनाशित्वमेव हि मिथ्यात्वमिति शङ्कायां विनाशित्वस्वरूपं शोधयति **एकेनेति**। एकेनाकारेण कालान्तरेऽनुभूतस्य कालान्तरे आकारान्तरेणोपलब्धिरस्तु; ततः कथं [2]विनाशित्वं तुच्छत्वमिथ्यात्वव्यावृत्तमिति शङ्कायां तुच्छत्वादिस्वरूपं शोधयति **तुच्छत्वं हीति**।

---

1 विनाशीत्यस्य मिथ्येत्येवार्थः। अतो मिथ्यात्वविनाशित्वयोर्न भेद इति धिया मिथ्यात्वपरत्वशंकायामित्यर्थः।

2 कालान्तरे आकारान्तररूपविनाशित्वात् तुच्छत्वादेर्न भेद इति शंकायामित्यर्थः। अत्र भावप्रकाशिकायां विचारः।

कालान्तरे परिणामादिना नास्तीत्युपलब्धिः; कालभेदेन विरोधाभावात्। अतो न मिथ्यात्वम्॥ एतदुक्तं भवति—ज्ञानस्वरूपमात्मवस्तु आदिमध्यपर्यन्तहीनं सततैकस्वरूपमिति स्वत एव सदा अस्तिशब्दवाच्यम्। अचेतनं तु क्षेत्रज्ञभोग्यभूतं तत्कर्मानुगुणपरिणामि विनाशीति सर्वदा नास्त्यर्थगर्भमिति नास्त्यसत्यशब्दाभिधेयम्—इति। यथोक्तम्—

"यत्तु कालान्तरेणापि नान्यसंज्ञामुपैति वै। परिणामादिसंभूतां तद्वस्तु नृप तच्च किम्॥",

"अनाशी परमार्थश्च प्राज्ञैरभ्युपगम्यते। तत्तु नास्ति (नाशि) न सन्देहो नाशिद्रव्योपपादितम्"

इति। देशकालकर्मविशेषापेक्षया अस्तित्वनास्तित्वयोगिनि वस्तुनि केवलास्तित्वबुद्धिबोध्य-

---

**परिणामादिने**ति। **परिणाम**शब्दः परिणामसामान्यपरः तद्विशेषपरश्च। [1]यथा वादशब्दः सर्वकथासाधारणः वीतरागकथामात्रपरश्च, तद्वत्। अत्रायं परिणामशब्दो वर्धमानावस्थावाची; 'परिणामर्द्धिजन्मभिः' इति प्रयोगात्। "यत्तु कालान्तरेणापि नान्यसंज्ञामुपैति वै। परिणामादिसंभूताम्" इति वक्ष्यमाणवचनकटाक्षेणैवमुक्तम्। **परिणाम**शब्दस्य विकारमात्रपरत्वे **आदि**शब्दः प्रदेशान्तरगमनपरः। कालान्तरानुभूतस्य कालान्तरे नास्तीत्युपलब्धिः कथं न बाध इत्यत्राह **कालभेदेने**ति। विरोधे हि बाधः, बाध्यत्वं हि मिथ्यात्वमित्यभिप्रायेणाह **अत** इति। परिणामित्वापरिणामित्वयोरर्थयोर्न हि नास्त्यसत्यादिशब्दाः पारिभाषिकाः; तत् कथं तदभिधानप्रकारः? परिणामास्पदस्यापि वस्तुनो नित्यत्वात् नास्तिशब्दाभिधेयत्वं चानुपपन्नमित्यत्राह **एतदुक्तं भवती**ति। सदैकरूपत्व**मस्ति**शब्दप्रवृत्तिनिमित्तम्। विनाशगर्भत्वं **नास्ति**शब्दप्रवृत्तिनिमित्तमित्यर्थः। घटावस्थायां पिण्डो नास्ति, कपालावस्थायां घटो नास्ति, चूर्णावस्थायां न कपालसत्तेति सदा नाशगर्भत्वम्। उत्तरावस्थाप्राप्तिर्हि पूर्वावस्थस्य विनाशः। तदवस्थस्य सैवोत्पत्तिः। तस्मात् **नास्ति**शब्दाभिधेयत्वमचिद्वस्तुनः। चिद्वस्तुनस्तु अवस्थान्तरापत्त्यवस्थान्तरप्रहाणाभावेनैकरूपत्वात्र विनाशगर्भत्वम्। अतस्त**दस्ति**शब्दवाच्यमेव। यत् सदाऽस्त्येव, तदस्तिशब्दवाच्यम्। "सिद्धे शब्दार्थसंबन्धे" इत्यत्र सिद्धशब्दवत् अवधारणगर्भोऽयं शब्दः। तत्र हि सिद्ध एवेति व्याख्यातम् 'अब्भक्षः, वायुभक्षः' इत्यादि दृष्टान्तीकृत्य। तथा अत्रापीत्यर्थः। अस्तिनास्तीतिशब्दानां प्रवृत्तिनिमित्तमिदमेवेत्यस्मिन्नर्थे प्रमाणमाह **यथोक्त**मिति। असदसत्यसत्सत्यादिशब्दानां मिथ्यात्वामिथ्यात्वयोः प्रसिद्धिस्वारस्यमस्तीति शङ्कायां [2]मिथ्यागर्भितत्वमपि[3] दर्शयति **देशे**ति। **कर्मविशेषापेक्षये**ति। पालनरञ्जनादिसद्भावासद्भावाभ्यां

---

[1] वादप्रतिवादविषये आहृताः न्यायाः कथा इत्युच्यन्ते। तास्तिस्रो वादो जल्पो वितण्डा चेति। तत्र वादशब्दः कथासामान्ये विशेषे च प्रयुज्यते।

[2] मिथ्याभूतमसत्यमित्युच्यत इति चेत् अस्तु एवं मिथ्याभूतविशिष्टत्वादेव विनाशिनोऽप्यसत्यत्वम्। केवलास्तित्वतद्बुद्धिबोध्यत्वादिकं हि तत्र मिथ्येति।

[3] अपिशब्दः अर्थान्तरसमुच्चये। देशेत्यादिभाष्येणान्यदपि दर्शयतीत्यर्थः। लौकिकैः कादाचित्कानामेव दर्शनात् तत्रार्थे सत्यादिशब्दप्रयोग इति, कादाचित्कास्तित्वमपि यत्र नास्ति तत्रार्थभिन्ने मिथ्याभूते असत्यादिशब्दप्रयोगः। शास्त्रे तु निरुपाधिकास्तित्वशालिनो ज्ञातव्यया तदन्यस्मिन् असत्यपदप्रयोगः। स चाविशेषात् विनाशिन्यपि भवतीति अत्यन्तनास्तित्वनिरसनमेवेह पुराणेन क्रियत इति। बोध्यत्वमपरमार्थ इति भाष्यस्य बोध्यत्वमारोपितमिति, बोध्यत्वं नास्तीति चार्थः। निरुपाधिकास्तित्वरूपार्थः परमार्थपदे स्पष्टं प्रतीयेतेति सत्यासत्यादिपर्यायशब्दत्यागेन परमार्थापरमार्थपदप्रयोगः।

त्वमपरमार्थ [1]इति ह्यपरमार्थ इत्युक्तम् । आत्मन एव केवलास्तित्वबुद्धिबोध्यत्वमिति स परमार्थ इत्युक्तम् । श्रोतुश्च मैत्रेयस्य—

"विष्ण्वाधारं यथा चैतत् त्रैलोक्यं समवस्थितम् । परमार्थश्च मे प्रोक्तो यथा ज्ञानं प्रधानतः ॥" इत्यनुभाषणाच्च—'ज्योतींषि विष्णुः' इत्यादिसामानाधिकरण्यस्य आत्मशरीरभाव एव निबन्धनम्, चिदचिद्वस्तुनोश्चास्तिनास्तिशब्दप्रयोगनिबन्धनं ज्ञानस्याकर्मनिमित्तस्वाभाविकरूपत्वेन [2]प्राधान्यम्, अचिद्वस्तुनश्च तत्कर्मनिमित्तपरिणामित्वेनाप्राधान्यमिति—प्रतीयते ॥

यदुक्तम्—निर्विशेषब्रह्मविज्ञानादेवाविद्यानिवृत्तिं वदन्ति श्रुतय इति—तदसत्—"वेदाहमेतं पुरुषं महान्तमादित्यवर्णं तमसः परस्तात् । तमेवं विद्वानमृत इह भवति नान्यः पन्था विद्यतेऽयनाय", "सर्वे निमेषा जज्ञिरे विद्युतः पुरुषादधि", "न तस्येशे कश्चन तस्य नाम

राजत्वपितृत्वादिरूपेण अस्तित्वं नास्तित्वं च कर्मापेक्षम् । औपाधिकास्तित्वयोगिनि वस्तुनि स्वाभाविकास्तित्वयोगित्वबुद्धिविषयत्वं न परमार्थ इत्यर्थः । [3]अपरमार्थत्वगर्भास्त्यर्थोपेतत्वादचितो नास्त्यसत्यादिशब्दवाच्यत्वमित्युक्तम् । आत्मनः स्वाभाविकास्तित्वयोगात् तत्र तद्धीविषयत्वं परमार्थ इत्याह **आत्मन एवेति** । पदशो दशश्लोक्यामुक्तमर्थं श्रोतुरनुवादप्रकारेण द्रढयति **श्रोतुश्चेति** । **प्रधानतः** । 'द्व्येकयोः' इतिवत् भावप्रधानो निर्देशः ; प्राधान्येनेत्यर्थः । **प्राधान्यम्** उत्कर्षः । अनुभाषणश्लोकपूर्वार्धफलितमर्थमाह **ज्योतींषीति** । तदेकधार्यद्रव्यत्वं हि शरीरलक्षणम् । अतो **विष्ण्वाधार**मित्यनेनाऽऽत्मशरीरभावः सिद्धः । उत्तरार्धफलितमर्थमाह **चिदचिदिति** । ज्ञानप्राधान्यं कण्ठोक्तम् ; तेनाचिद्वस्तुनोऽप्राधान्यस्यार्थसिद्धत्वादाह **अचिद्वस्तुनश्चेति** । **प्राधान्याप्राधान्ये**—उत्कर्षापकर्षौ । तौ चापरिणामित्वपरिणामित्वलक्षणौ ; नामिथ्यात्वमिथ्यात्वलक्षणौ । धर्मिणि सति हि प्राधान्याप्राधान्ये । प्रतीतिमात्रसिद्धं हि मिथ्या । अतो न तत्राप्राधान्यशब्दः स्वरस इत्यभिप्रायः ॥

अथ निर्विशेषब्रह्मात्मैक्यज्ञानस्य निवर्तकत्वपरत्वेन परोक्तश्रुतीनाम् अतदर्थत्वं वक्तुं परोक्तमनुवदति **यदुक्तमिति** । परिहरति **तदसदिति** । तत्र ज्ञानस्य निर्विशेषवस्तुविषयत्वं तेनात्मैक्यविषयत्वं च परिहरिष्यन् प्रथमं निर्विशेषवस्तुविषयत्वं व्युदसितुमुपादत्ते **वेदाहमिति** । अनेन विग्रहादिविशिष्टविषयज्ञानमेवोपायः, नान्य इत्युक्तम् । एतत्समानार्थत्वादाह **सर्वे निमेषा** इति । तत्र हि, "अद्भ्यः संभूतो हिरण्यगर्भ इत्यष्टौ" इति प्रतीकोपादानं कृतम् । [विशेषणेन] अनेन विद्युच्छब्दश्च व्याख्यातो भवति । **विद्युतः**—विद्युद्वर्णादित्यर्थः ; आदित्यवर्णमित्यनेनैकार्थ्यात् । 'न तस्येशे कश्चन' इत्यनेन उपायभूतं

[1] शुद्धतालकोशानुसारात्, अन्वयौचित्यात्, टीकानुरोधाच्च 'इति ह्यपरमार्थः' इति भागो भाष्येऽस्तीति ध्येयम् ।

[2] प्रतीतिविशेष्यत्वातिशयरूपप्राधान्यमण्येकमस्ति । तद्रूपपारमार्थ्यं परमात्मन एव मुख्यमितीह तदुक्तिः ।

[3] अपरमार्थत्वगर्भास्त्यर्थोपेतेत्यस्य अरोपितत्वविशिष्टास्तित्वाश्रयेत्यर्थः । शाब्दिकैः तत्पुरुषे उत्तरपदार्थप्राधान्यावश्यकत्वपरिशीलनेन नञ्तत्पुरुषे अनश्व इत्यादौ आरोपिताश्वत्ववानित्यर्थवर्णनात् तद्रीत्या नास्त्यसत्यापरमार्थादिपदानामारोपितास्तित्वविशेषवदित्यर्थं इत्याशयेनेदं सर्वमिति ध्येयम् ।

महद्यशः", "य एनं विदुरमृतास्ते भवन्ति" इत्याद्यनेकवाक्यविरोधात् । ब्रह्मणः सविशेषत्वादेव सर्वाण्यपि वाक्यानि सविशेषज्ञानादेव मोक्षं वदन्ति । शोधकवाक्यान्यपि सविशेषमेव ब्रह्म प्रतिपादयन्तीत्युक्तम् ॥

तत्त्वमस्यादिवाक्येषु सामानाधिकरण्यं न निर्विशेषवस्त्वैक्यपरम्; तत्त्वम्पदयोः सविशेषब्रह्माभिधायित्वात् । तत्पदं हि सर्वज्ञं सत्यसङ्कल्पं जगत्कारणं ब्रह्म परामृशति; "तदैक्षत बहु

---

ज्ञानान्तरं नास्तीति फलितम्; अधिकज्ञेयान्तराभावात् । उक्ताकारविशिष्टपुरुषवेदनस्योपायत्वं दर्शयति **य एनं विदुरिति** । एषामन्येषामप्यादिशब्दगृहीतानाञ्च वाक्यानामुपादानम् अनेकवाक्यविरोधप्रदर्शनाय ॥ ननु 'सदेव...एकमेव' इत्यादिकारणवाक्येषु निर्विशेषस्य प्रतिपन्नत्वात् तज्ज्ञानमेव साक्षान्मोक्षोपाय इति सगुणज्ञानस्योपायत्वं तद्व्यवधानेन स्यात् । यद्वा सगुणज्ञानोपायत्वपरवाक्येऽपि न सगुणत्वे तात्पर्यम्; वस्तुमात्रमेव लक्ष्यत इति चेत्—तत्राऽऽह **ब्रह्मण** इति । सद्विद्यादिष्वपि सगुणविषयत्वोपपादनात् यथावस्थितस्वरूपविषयज्ञानस्यैव मोक्षोपायत्वात् तान्यपि सविशेषज्ञानोपायत्वपराणीत्यर्थः । तर्हि शोधकवाक्यैर्विरोध इत्यत्राह **शोधकेति** । एवं ज्ञानस्य निर्विशेषविषयत्वं तद्विरुद्धवचनोदाहरणेन प्रतिक्षिप्तम् ॥

अथ तत्त्वमस्यादिसामानाधिकरण्यान्यथानुपपत्त्या निर्विशेषज्ञानमेवोपाय इति शङ्कायां तस्य जीवपरैक्यविषयत्वं व्युदस्यति **तत्त्वमस्यादीति** । शोधकवाक्येषु [1]सामानाधिकरण्यमतद्व्यावृत्तिमुखेन वस्त्वैक्यपरम्; तत्त्वमस्यादिषु जीवब्रह्मणोस्सामानाधिकरण्यमन्वयमुखेनोपलक्षितवस्त्वैक्यपरम्; अचिद्ब्रह्मणोस्तु **'सर्वं खल्विदं ब्रह्म'** इत्यादावतात्त्विकरूपारोपणेन[2] सामानाधिकरण्यम्; 'ज्योतींषि विष्णुः' इत्यादौ बाधार्थम् इति चतुर्धा हि **परैः** सामानाधिकरण्यं तत्रतत्राभ्युपेतम् । तत्र तत्त्वमस्यादिवाक्ये अन्वयमुखेन वस्तुमात्रपरत्वं गत्यभावे बाधार्थत्वं चाशङ्क्य निराक्रियते । तत्र प्रथमं वस्त्वैक्यपरत्वं दूषयितुमाह **न निर्विशेषवस्त्वैक्यपरमिति** । कुत इत्यत्राह **तत्त्वमिति** । तच्च कथमित्यत्राह **तत्पदं हीति** । **हिर्हेतौ** । सर्वज्ञत्वादिगुणकप्रतिपादनं कथमित्यत्राह—**तदैक्षतेति** । तच्छब्दस्य प्रकृतसर्वाकारविशिष्टवस्तुपरामर्शित्वं व्युत्पत्तिसिद्धम्, यथा शुक्ला शोभनाक्षी मदीया पूर्णशृङ्गा घटोध्नी गौः; तामानयेति ॥ ननु गौस्तिष्ठति तामानयेत्यादौ आनयनादिक्रियानर्हस्थित्यादिविशेषणविधुरवस्तुपरामर्शित्वं दृश्यते; तच्च मुख्यम् ॥ नैवम्, आनयनसमकालान्वययोग्येनापि स्थित्यादिविशेषणेन पूर्वकालवैशिष्ट्यस्य विवक्षितत्वात् । अन्यथा धावतोऽपि गोपिण्डस्यानयनप्रसङ्गः । विशेषणं विशेष्यवस्तुनि यथान्वयार्हम्, तथाऽन्वितस्य तस्यापरित्यागो हि विवक्षितत्वम् । प्रकृतसर्वविशेषणेषु एकस्यापि परित्यागे प्रकृतत्वमेव हीयेत । शुक्ला शोभनाक्षी मदीया पूर्णशृङ्गा घटोध्नी गौः, तामानयेत्युक्ते शौक्ल्येतरसमस्तविशेषणान्वितव्यक्त्यानयनेऽपि प्रकृतव्यक्तेरानीतत्वाभावात् । अतः सविशेषे प्रकृते निर्विशेषस्य प्रकृतत्वं दूरोत्सारितम् । न च प्रकृतसर्वविशेषणपरित्यागेऽपि धर्म्यैक्येन प्रकृतत्वसिद्धिः; सर्वाकारप्रहाणे प्रतिसन्धानानर्हत्वात् । न ह्यपवरके घटोऽस्ति, तमानयेत्युक्ते घटत्वाविवक्षायां मृन्मात्रस्य सिद्धिः प्रकृतत्वसिद्धिः । कथमेकाकार-

---

1 ब्रह्मवाचिपदसामानाधिकरण्यं चतुर्धेत्यर्थः । अर्थान्तरवाचिपदसामानाधिकरण्यमपि स्वीकृत्य, 'व्याप्तेश्च समञ्जसम्' इति सूत्रे तैरुक्तमप्यन्यत् ।

2 सृष्टिनिरूपणान्वयौचित्याय अविद्याशबलत्वेनारोपिते प्रपञ्चरूपत्वारोप इति भावः ।

**स्याम्" इत्यादिषु तस्यैव प्रकृतत्वात्। तत्समानाधिकरणं त्वम्पदञ्च अचिद्विशिष्टजीवशरीरकं ब्रह्म प्रतिपादयति; प्रकारद्वयावस्थितैकवस्तुपरत्वात् सामानाधिकरण्यस्य। प्रकारद्वयपरित्यागे प्रवृत्तिनिमित्तभेदासंभवेन सामानाधिकरण्यमेव परित्यक्तं स्यात्। द्वयोः पदयोर्लक्षणा च। 'सोऽयं देवदत्तः' इत्यत्रापि न लक्षणा; भूतवर्तमानकालसंबन्धितयैक्यप्रतीत्यविरोधात्। देशभेदविरोधश्च कालभेदेन परिहृतः। 'तदैक्षत बहु स्याम्' इत्युपक्रमविरोधश्च। एकविज्ञानेन सर्वविज्ञानप्रतिज्ञानं**

---

परित्यागेऽप्यसंभवत् प्रकृतत्वं सर्वाकारपरित्यागे संभवति॥ अङ्गुलीयकत्वप्रहाणेऽपि कनकं प्रतिसंधीयत इति चेत्—सत्यम्, प्रत्यक्षेण। तच्छब्दस्तु प्रकृताकारप्रहाणे प्रतिसन्धानमेव जनयितुं न शक्नोति। अत एव हि, यदङ्गुलीयकं तदानयेत्युक्ते कनकमात्रं नानीयते। अतः प्रकृतसर्वाकारप्रहाणे प्रतिसन्धानानर्हस्य वस्तुनः प्रकृतत्वमेव नास्तीति तच्छब्दस्य वस्तुमात्रपरत्वं लाक्षणिकं स्यात्॥ तत्पदोपस्थापितसार्वज्ञ्यादीनां त्वम्पदोपस्थापिताज्ञत्वादीनां च विरोधान्निर्विशेषपरत्वमिति चेत्—तत्राह **तत्समानाधिकरण**मिति। घटस्य शुक्ल इत्यादिव्यधिकरणवाक्येषु धर्मवाचिपदस्य धर्मिपर्यन्तत्वाभावात् तद्व्यावृत्त्यर्थं **तत्समानाधिकरण**मित्युक्तम्। **अचिद्विशिष्टजीवशरीरक**मिति। अज्ञत्वादिगुणानां सर्वज्ञत्वादिगुणके परमात्मनि विरोधः सद्वारकतया परिहृत इत्यर्थः। त्वम्पदप्रवृत्तिनिमित्तसंबोधनीयार्थत्वरूपाभिमुख्यविशेषप्रयोजकोपलक्षणाभिप्रायेण **अचिद्विशिष्टजीवे**त्युक्तम्। समानाधिकरणत्वे सति कथं त्वम्पदं जीवविशिष्टब्रह्मपरमित्यत्राह **प्रकारद्वये**ति। **प्रकारद्वयावस्थितम्**—प्रकारद्वयविशिष्टम्। प्रकृततत्त्वम्पदप्रवृत्तिनिमित्तपरः **प्रकारद्वयशब्दो** न्यूनत्वनिवर्तकः; न तु प्रकारत्रित्वादिव्यवच्छेदपरः। तदुपपादयति **प्रकारद्वयपरित्याग** इति। दूषणान्तरमाह **द्वयो**रिति। अविरोधेन मुख्यतया निर्वाहे संभवति एकस्यापि पदस्य लक्षणा न युक्ता; विरोधे सत्यप्येकपदलक्षणयैव अविरोधः सिध्यतीति पदद्वयलक्षणा अनुपपन्नेत्यर्थः॥ ननु पदद्वयलक्षणा न दूषणम्; सोऽयं देवदत्त इत्यादिषु दृष्टत्वात्। तत्र हि देशकालविशिष्टाकारे देशकालान्तरान्वयविरोधाल्लाक्षणिकमेव पदद्वयम्। तत्राह **सोऽय**मिति। किमेकस्य देशद्वयसंबन्धे विरोधः, उत कालद्वयसंबन्धे? इति विकल्पमभिप्रेत्याह—**भूते**ति। न हि विशिष्टाकारे विशेषणान्तरान्वयः, अपि तु विशेष्यमात्रे। अतः कालद्वयसंबन्धो न विरुद्धः। यदि विरुद्धः, तर्हि बौद्धोक्तं क्षणिकत्वमेवाऽऽपद्येत, अनेककालसाध्यधर्मविधानं फलप्राप्तिश्च नोपपद्येयातामिति भावः। **देशभेदे**ति। यद्येकस्य देशद्वयसंबन्धविरोधः, तर्हि विष्णुक्रमणतीर्थस्नानादिविधिर्नोपपद्यते; प्रत्यभिज्ञाविरोधश्चेति भावः॥ यौगपद्यं कथं संभवतीति चेत्—तदुच्यते। देशद्वयसंबन्धस्य कालद्वयसंबन्धस्य वा न युगपद्भावः, तत्प्रतिपत्तेरेव हि यौगपद्यम्। प्रतिपत्तिस्तु देशद्वयकालद्वयसंबन्धं क्रमभाविनमेव दर्शयति। अतो न विरोधः। अन्यथा, अतीतानागतविषयज्ञानेष्वतीतानागतविषययोर्वर्तमानत्वं ज्ञानस्यातीतानागतत्वं वा प्रसज्येतेति। दूषणान्तरमप्याह **तदैक्षते**ति। उपक्रमाधिकरणे ह्युपक्रमप्राबल्यमुक्तमिति भावः। उपक्रमोपक्रमे ऐक्यस्य प्रतिपन्नत्वान्नोपक्रमविरोधः। एकविज्ञानेन सर्वविज्ञानप्रतिज्ञावाक्यं हि 'तदैक्षत बहु स्याम्' इति वाक्यात् पूर्वमित्यत्राह **एकविज्ञानेने**ति। तत्र निमित्तत्वोपादानत्वतदनुगुणसार्वज्ञ्यसर्वशक्त्यादिगुणसिद्धेरित्यर्थः। विशिष्टमेव कारणम्; तदेव स्थूलावस्थं कार्यमिति द्रव्यान्तरत्वाभावात् कारणज्ञानेन कार्यज्ञानमुपपद्यते। मृषावादिनस्तु

च न घटते । ज्ञानस्वरूपस्य निरस्तनिखिलदोषस्य सर्वज्ञस्य समस्तकल्याणगुणात्मकस्याज्ञानं तत्कार्यानन्तापुरुषार्थाश्रयत्वञ्च भवति । बाधार्थत्वे च सामानाधिकरण्यस्य त्वंतत्पदयोरधिष्ठानलक्षणा निवृत्तिलक्षणा चेति लक्षणाद्वयस्त एव दोषाः ॥ इयांस्तु विशेषः—नेदं रजतमितिवत् अप्रतिपन्नस्यैव बाधस्यागत्या परिकल्पनम् ; तत्पदेनाधिष्ठानातिरेकिधर्मानुपस्थापनेन बाधानुपपत्तिश्च ॥ अधिष्ठानं तु प्राक्तिरोहितमतिरोहितस्वरूपं तत्पदेनोपस्थाप्यत इति चेन्न ; प्रागधिष्ठाना-

---

कारणज्ञाने कार्यस्य विषयतयाऽन्तर्भावोऽभिमतश्चेत्—विरोधः ; सत्यविषयज्ञाने मिथ्यार्थस्य विषयत्वायोगात् । मिथ्यात्वेनेत्यध्याहारश्च स्यात् । अनन्तर्भावे तु अज्ञाते ज्ञानत्वव्यवहारो न मुख्यः स्यात् । अतोऽस्मत्पक्ष एव प्रतिज्ञावाक्यं स्वरसम् । श्रुत्यन्तरविरोधमाह **ज्ञानस्वरूपस्येति** । **ज्ञानस्वरूपस्य सर्वज्ञस्येत्यनेन** धर्मिधर्मभूतज्ञाने विवक्षिते । सर्वज्ञस्याज्ञत्वम् निरस्तनिखिलदोषस्य समस्तकल्याणगुणात्मकस्य अनन्तापुरुषार्थाश्रयत्वमिति विरोधः । **ज्ञानस्वरूपस्येत्यनेन** तिरोधानानुपपत्तिश्च सूचिता ।

इत्थं सामानाधिकरण्यस्य निर्विशेषवस्त्वैक्यपरत्वं दूषितम् । अथ बाधार्थत्वं दूषयति **बाधार्थत्वे चेति** । रज्जुः सर्प इत्येवंरूपं बाधार्थं सामानाधिकरण्यमेव नास्ति ; सामानाधिकरण्यस्य एकस्मिन् विशेष्ये प्रकारद्वयोपस्थापकतया बाधार्थत्वविरोधात् । अतः पदद्वयमुख्यार्थत्वेऽभिमते बाधार्थं सामानाधिकरण्यं न सिध्येत् । सर्पशब्देन नञर्थं लक्षयित्वा असर्पो रज्जुरिति निर्वाहे दृष्टान्तवाक्यस्याशङ्क्य दार्ष्टान्तिकवाक्यस्य ततोऽप्यधिकं दूषणमाह—**बाधार्थत्वे चेति** । **त्वंतत्पदयोरित्यत्र** न क्रमविवक्षा । तत्पदमधिष्ठानमात्रं लक्षयति ; त्वम्पदं जीवभावनिवृत्तिं लक्षयति । यद्वा त्वम्पदेनाधिष्ठानलक्षणा; तत्पदेन निवृत्तिलक्षणा । **आदिशब्देन** सामानाधिकरण्यलक्षणहानिः उपक्रमविरोधः एकविज्ञानेन सर्वविज्ञानप्रतिज्ञानुपपत्तिः श्रुत्यन्तरविरोधश्चेति दूषणानि विवक्षितानि । उक्तदृष्टान्तादुपलक्ष्यसामानाधिकरण्याच्च दूषणमत्राधिकमित्याह **इयांस्तु विशेष** इति । बाधार्थत्वे विशेषो न पूर्वोक्तदूषणहानिः, अपि तु तैस्सह वक्ष्यमाणाधिकदूषणद्वयापात एव विशेष इत्यर्थः । अधिकं दूषणमाह **नेदं रजतमितिवदप्रतिपन्नस्यैव बाधस्यागत्या परिकल्पनमिति** । शुक्तिरेव रजतमित्यत्र प्रमाणान्तरेण नेदं रजतमिति बाधस्य प्रतिपन्नत्वाद्बाधकल्पनम्, अत्र बाधस्याप्रतिपन्नत्वेऽप्यगत्या बाधकल्पनमित्यर्थः । **तत्पदेनाधिष्ठानातिरेकिधर्मानुपस्थापनेन बाधानुपपत्तिश्चेति** । शुक्तिरेव रजतमित्यत्र शुक्तित्वरूपं विरुद्धधर्मं शब्द एवोपस्थापयति । अतस्तत्र बाधकल्पनम् । अत्र त्वधिष्ठानमात्रं लक्षयता तत्पदेन शुक्तित्ववत् विरुद्धधर्मानुपस्थापनात् बाधकल्पनमनुपपन्नमित्यर्थः ॥ विरोधपरिहारार्थं लक्षणा चेत्—अन्यतरपदलक्षणैव विरोधपरिहारायालम् । तदा सविशेषत्वप्रसङ्ग इति चार्थसिद्धम् । प्रमाणान्तरेण बाधस्य प्रतिपन्नत्वात् शब्देन विरुद्धधर्मोपस्थापनाच्च बाधकल्पनम् ; अत्र तूभयाभावात् तदनुपपन्नमित्युक्तम् । तत्र विरुद्धाकारोपस्थापनं शङ्कते **अधिष्ठानंत्विति** । तदधिष्ठानमतिरोहितस्वरूपं यथा भवति, तथोपस्थाप्यत इति क्रियाविशेषणम् । अप्रकाशितविरोधिप्रकाशनं हि बाधकल्पनम् ; न तु धर्मोपस्थापनमेव बाधकल्पनमिति नियमोऽस्ति । अतस्तत्पदेन प्रागप्रकाशितविरोध्यधिष्ठानस्वरूपप्रकाशनाद्बाधकल्पनमित्यर्थः । अत्राह **नेति** । किं विरोधिरूपमधिष्ठानं प्रकाशते, उत नेति विकल्प्य, अप्रकाशपक्षे दूषणमाह **अधिष्ठानेति** ।

**प्रकाशे तदाश्रयभ्रमबाधयोरसंभवात् । भ्रमाश्रय[भूत?]मधिष्ठानमतिरोहितमिति चेत्; तदेवाधिष्ठानस्वरूपं भ्रमविरोधीति तत्प्रकाशे सुतरां न तदाश्रयभ्रमबाधौ । अतोऽधिष्ठानातिरेकिपारमार्थिकधर्मतत्तिरोधानानभ्युपगमे भ्रान्तिबाधौ दुरुपपादौ ।**

---

**तदाश्रये**त्याश्रयशब्दो विषयपरः । यद्वा, तदधिष्ठानकभ्रमबाधयोरित्यर्थः । प्रकाशपक्षं शङ्कते **भ्रमेति** । **भ्रमाश्रयमधिष्ठान**मित्यत्र पाठो निरीक्षणीयः । आश्रयशब्दो विषयपरः । **भ्रमाश्रय**मित्यत्र भ्रमस्याश्रयणं विषयीकरणम् यत्रेति वैयधिकरण्येन वा, भ्रमः **आश्रयः** आश्रयणीयः संबन्धनीयो येनेति सामानाधिकरण्येन वा कथञ्चिद्बहुव्रीहित्वमपि निर्वोढुं शक्यम् । आरोप्याकाराधिकरणभूतमधिष्ठानमिति वाऽर्थः । भ्रमाश्रयत्वायातिरोहितमिति चेदित्यर्थः । दूषयति **तदेवे**ति । किमिदमधिष्ठानं विरोधिरूपम्, उत्ताविरोधि इति विकल्पाभिप्रायेण विरोधीतिपक्षे दूषणमुक्तम् । अविरोधित्वपक्षे बाधकल्पनानुपपत्तिर्भ्रमानुच्छेदश्चेति दूषणं स्पष्टमिति न तदुक्तम् । **अत** इति । **पारमार्थिक**शब्दस्यायमभिप्रायः—भ्रमविरोध्याकारस्यापारमार्थिकत्वे अध्यस्तरूपमेव सत्यं स्यात्; यथा शुक्तित्वापारमार्थ्ये रजतत्वं सत्यं भवतीति ।

यदिदं चोद्यम्—विरोध्याकारस्यापारमार्थ्येऽपि भ्रमनिवृत्तिरुपपद्यते; यथा पलाशपुष्पविषयदावभ्रमवतो भ्रमरस्य वृन्तविषयभ्रमरभ्रमेण पलाशपुष्पं श्लिष्यतः पलाशपुष्पविषयदावभ्रमो वृन्तविषयभ्रमरभ्रमश्च निवृत्त इति । यथाऽऽहुः, 'भ्रमरी भ्रमरभ्रमेण वृन्ते यद्दावभ्रममाश्लिषत् पलाशम्' इति—तदयुक्तम्; तत्रापि परमार्थविरोध्याकारेणैव भ्रमविषयनिवृत्तेः । दावत्वविरोधिपलाशपुष्पत्वाकारः परमार्थः । भ्रमरत्वविरोधिवृन्तत्वाकारश्च परमार्थः । अपरमार्थत्वे दावत्वं भ्रमरत्वं च सत्यं स्यात् । शुक्तित्वे अपरमार्थे रजतत्वमिव ॥ वृन्तविषयभ्रमरभ्रमेण दावत्वभ्रमनिवृत्तिरिति चेत्—ततः किम्?[1] दावत्वबुद्धिनिवृत्तिर्भ्रमरत्वस्य सत्यत्वप्रतिपत्तिकृता; ततश्चासत्ये सत्यत्वविषयभ्रमान्तरं तिष्ठति; तन्निवृत्तिरप्यसत्य[2]विषयसत्यत्वभ्रमान्तरेणेति भ्रमपरम्परया निरशेषाविद्यानिवृत्त्यनुपपत्तेः । किञ्च दावत्वविषयधीनिवृत्तावपि दावत्वनिवृत्तिर्न भ्रमरभ्रमेण; अपितु परमार्थपुष्पत्वाकारेणैव । अन्यथा परमार्थरजते अपरमार्थशुक्तित्वबुद्ध्या रजतधीनिवृत्त्या रजतस्यापि शुक्तित्वप्रसङ्गात् । भ्रमान्तरेण भ्रमान्तरनिवृत्तावनवस्था च स्यात्, निवर्तकभ्रमान्तरस्यापि निवर्तकान्तरापेक्षत्वात् । यथा रज्जुविषयसर्पभूदलनाम्बुधाराभ्रमपरम्परायाः । किञ्च भ्रमरभ्रमनिवृत्त्यनन्तरं निवर्तकापारमार्थ्यज्ञानाद्दापतद्(न्?) दावभ्रमः परमार्थपलाशपुष्पत्वग्रहणेनैव प्रतिनिवृत्तः ।

अतो निरशेषाविद्यानिवृत्तिलक्षणमोक्षवादिना भ्रमपरम्परापर्यवसानार्थमन्ततो गत्वा परमार्थाकारोऽभ्युपगन्तव्यः, रज्जुत्ववत् ॥ चरमभ्रमः स्वयमेव न स्यादिति चेन्न, ; स्वयं स्वबाधकर्मत्वे कर्मकर्तृविरोध[3]प्रसङ्गात् । किञ्च बाधकस्य सत्यात्मकत्वात् बाध्यस्य मिथ्यात्वात् एकस्यैव निवर्त्यनिवर्तकत्वाभ्युपगमे तस्यैव मिथ्यात्वं सत्यत्वं चेति विरोधः स्यात् । किञ्च प्रपञ्चोऽपि बाधकानपेक्षः स्वयमेव स्वात्मानं निवर्तयेत् । स्वयं नाशे विनाशस्यावस्थान्तररूपत्वादविद्या सूक्ष्मरूपेण स्थिता स्यात् ।

---

1 ततः किमित्येतदनन्तरं दावत्वविषयधीनिवृत्तावपीत्यादेः पर्याप्तत्वेऽपि दार्ष्टान्तिके दोषान्तरदानेनापि पारमार्थिकरूपसाधनार्थं दावत्वबुद्धीत्यादि ।

2 असत्यविषयेति । असत्ययत् सत्यत्वं तद्विषयेत्यर्थः ।

3 कर्मकर्तृविरोधेति पाठान्तरे विरोधादिति युक्तम्, न तु विरोधप्रसंगादिति ।

अधिष्ठाने हि पुरुषमात्राकारे प्रतीयमाने तदतिरेकिणि पारमार्थिके राजत्वे तिरोहिते सत्येव व्याधत्वभ्रमः। राजत्वोपदेशेन च तन्निवृत्तिर्भवति; नाधिष्ठानमात्रोपदेशेन ; तस्य प्रकाशमानत्वेनानुपदेश्यत्वात् भ्रमानुपमर्दित्वाच्च ॥

जीवशरीरकजगत्कारणब्रह्मपरत्वे मुख्यवृत्तं पदद्वयम्। प्रकारद्वयविशिष्टैकवस्तुप्रतिपादनेन सामानाधिकरण्यं च सिद्धम्। निरस्तनिखिलदोषस्य समस्तकल्याणगुणात्मकस्य ब्रह्मणो जीवान्तर्यामित्वमप्यैश्वर्यमपरं प्रतिपादितं भवति। उपक्रमानुकूलता च। एकविज्ञानेन सर्वविज्ञानप्रतिज्ञोपपत्तिश्च। सूक्ष्मचिदचिद्वस्तुशरीरस्यैव ब्रह्मणः स्थूलचिदचिद्वस्तुशरीरत्वेन कार्यत्वात् "तमीश्वराणां परमं महेश्वरम्...पराऽस्य शक्तिर्विविधैव श्रूयते", "अपहतपाप्मा...सत्यकामः सत्यसङ्कल्पः" इत्यादिश्रुत्यन्तराविरोधश्च ॥ तत्त्वमसीत्यत्रोद्देश्योपादेयविभागः कथमिति चेत्—नात्र किञ्चिदुद्दिश्य किमपि विधीयते; "ऐतदात्म्यमिदं सर्वम्" इत्यनेनैव प्राप्तत्वात्। अप्राप्ते हि शास्त्रमर्थवत्।

---

नाशकरूपकाविद्यान्तरं च स्यात् ॥ परमार्थविरुद्धधर्मतत्तिरोधानाभावे भ्रमबाधासंभवं दृष्टान्तेनोपपादयति **अधिष्ठाने** हीति। अत्र **राजकुमारसमाधिर्भगवतो भाष्यकारस्य** [1]

एवं बाधार्थत्वं दूषितम्; अथ स्वपक्षे इमानि दूषणानि न सन्तीत्याह **जीवशरीरके**ति। **मुख्यवृत्त**मित्यनेन लक्षणाहानिरुक्ता; **प्रकारद्वये**त्यनेन सामानाधिकरण्यसिद्धिः। **निरस्तनिखिलदोषस्ये**त्यादिना तत्पदोक्तगुणाविरोधः, **उपक्रमानुकूलता चे**ति, 'सदेव सोम्येदम्', "तदैक्षत" इत्युपक्रमाविरोध उक्तः। **एकविज्ञानेन सर्वविज्ञानप्रतिज्ञोपपत्तिः** कथमित्यत्राह **सूक्ष्मे**ति। विशिष्टं कारणम्, तदेव कार्यमिति, प्रतिज्ञोपपत्तिरित्यर्थः। श्रुत्यन्तराविरोधमाह **तमीश्वराणा**मिति।

वाक्यं चेत् उद्देश्योपादेयविभागवत्। उद्देश्यं ह्यवगतम्; उपादेयं विधेयमनवगतम्। अत्र तत्पदं नोद्देश्यसमर्पणपरम्; सार्वज्ञ्यादिगुणकत्वस्य प्रत्यक्षाद्यगोचरत्वात्। त्वंशब्दस्य चान्तर्यामिपरत्वे सति उद्देश्यसमर्पकत्वमनुपपन्नम्, अन्तर्यामिणः प्रत्यक्षाद्यविषयत्वात्। तस्मात् त्वंशब्देन जीवमात्रमुद्दिश्य तस्य तत्पदेन ब्रह्मभावो विधीयत इत्यभ्युपगन्तव्यम्। तत्र विरोधान्निर्विशेषवस्त्वैक्यपरं सामानाधिकरण्यं संभवतीत्यभिप्रायेण चोदयति **तत्त्वमसीत्यत्रोद्देश्योपादेयविभागः कथमिति चे**दिति। परिहरति **नात्रे**ति। प्रमाणान्तरागोचरार्थस्य कथमविधानमित्यपेक्षायाम्, न केवलं प्रत्यक्षाद्यवगतार्थविषयमेव वाक्यमनुवादकम्, अपितु वाक्यान्तरप्रतिपन्नार्थविषयमप्यनुवादकमित्यभिप्रायेण वाक्यान्तरप्राप्तिं दर्शयति **ऐतदात्म्य**मिति। अस्मिन्नेव प्रकरणे प्रथमप्रतिपन्ननामरूपव्याकरणश्रुत्यैव परमात्मशरीरभूतचिदचिद्वाचकशब्दानां परमात्मपर्यन्ताभिधायित्वं च ज्ञातमिति भावः। ततः किमित्यत्राह **अप्राप्ते हीति**। अप्रतिपन्नार्थविषयं शास्त्रमज्ञातज्ञापनरूपप्रयोजनवदित्यर्थः। अतः तदेवोद्देश्योपादेयविभागवत्; न तु प्रकृतनिगमनरूपं वाक्यम्। अतोऽस्य निगमनवाक्यस्य प्रतिपन्नार्थविषयत्वान्नोद्देश्योपादेयविभागवत्त्वमित्यर्थः ॥ ननु निगमनवाक्यस्याप्युद्देश्योपादेयविभागवत्त्वं प्रतीयते। यथा 'तस्माच्छब्दोऽनित्यः', 'तस्मादयमग्निमान्' इति। अत्र शब्दपर्वताद्युद्देशेन अनित्यत्वाग्निमत्त्वादिकं हि विधेयतया प्रतीयते ॥

---

[1] पूर्वाचार्यादृतो राजव्याधदृष्टान्तः शांकरोपनिषद्भाष्योदाहृत एव 'राजसूनोः स्मृतिप्राप्तौ' इति संबन्धवार्तिकादितदीयग्रन्थानूदितः तेभ्योऽत्र भाष्येऽपि प्रदर्श्यते। विवरणं समन्वयाधिकरणभाष्ये।

**इदं सर्वमिति सजीवं जगन्निर्दिश्य, ऐतदात्म्यमिति, तस्यैष आत्मेति तत्र प्रतिपादितम्। तत्र च हेतुरुक्तः, "सन्मूलाः सोम्येमाः सर्वाः प्रजाः सदायतनाः सत्प्रतिष्ठाः" इति। "सर्वं खल्विदं ब्रह्म**

नैतद्युक्तम्; प्रतिपादितार्थविषयस्य निगमनवाक्यस्याप्रतिपन्नार्थविषयत्वव्याघातात्। प्रतीतिस्तु विधायकवाक्यस्थोद्देश्योपादेयसमर्पकपदप्रत्यभिज्ञानात् निर्देशे प्रथमचरमभावादिसारूप्याच्चोद्देश्योपादेयविभागवत्त्वभ्रान्तिरेव। "यद्वृत्तयोगः प्राथम्यम् इत्याद्युद्देश्यलक्षणम्" इति हि नीतिविदः॥

[1]ननु सर्वत्रोद्देश्यानुगुणा तिङ्विभक्तिः। अत एव हि युष्मदस्मदोः पदान्तरसामानाधिकरण्येन परस्परसामानाधिकरण्येन च प्रयोगेषूद्देश्यानुगुणा मध्यमोत्तमपुरुषव्यवस्था दृश्यते, "त्वं भूतानामधिपतिरसि', 'अहमस्मि प्रथमजा ऋतस्य', तथा 'यदग्ने स्यामहंत्वम्, त्वं वा स्या अहम्—स्युष्टे सत्या इहाशिषः' इत्यादिषु। अग्ने अहं त्वं यदि स्याम्—त्वमिव देवता स्याम्, त्वमहं यदि स्याः—अहमिवार्थी स्याः, तदा ते तवाऽऽशिषः सत्याः स्युरित्यर्थः। तस्मात् तत्त्वमसीत्यत्रापि मध्यमपदप्रयोगात् त्वंपदस्योद्देश्यसमर्पकत्वं तत्पदस्य चोपादेयसमर्पकत्वमकामेनापि स्वीकार्यम्॥ नैवम्; पदद्वयावगतार्थस्य पूर्ववाक्यप्राप्तत्वादेव॥ तर्हि मध्यमनिर्देशः कथमिति चेत्—उच्यते। तत्त्वम्पदयोरुभयोरपि प्रयुक्तत्वादुद्देश्योपादेयविभागाभावाच्च प्रथममध्यमपुरुषयोरविशेषेण प्राप्तौ, निगमनवाक्यस्य प्रापकवाक्यानुरोधित्वस्य न्याय्यत्वात् तत्र च इदं सर्वमिति निर्दिष्टजगदन्तर्गतचिद्विशेषविशिष्ट परमात्मवाचिनस्त्वम्पदस्य प्रापकवाक्यस्थोद्देश्यवाचिपदवाच्यैकदेशविषयत्वात् तदनुरोधेन मध्यमनिर्देश इति।

ननु 'ऐतदात्म्यमिदं सर्वम्' इत्यचेतने ब्रह्मानुप्रवेशमुक्त्वा तत्त्वमसीति जीवब्रह्मणोः स्वरूपैक्यमुच्यत इति शङ्कायामाह **इदं सर्वमिति सजीवं जगन्निर्दिश्येति**। **सर्व**शब्दो नाचेतनमात्रपरः। सङ्कोचकाभावेऽपि [2]स्वारस्यभङ्गायोगात्। 'सन्मूलास्सोम्येमास्सर्वाः प्रजास्सदायतनाः सत्प्रतिष्ठाः' इति पूर्ववाक्ये सर्वशब्देन प्रजानां विशेषितत्वात्। प्रजाशब्दस्याचित्संसृष्टचेतनविशेषपरत्वात्; 'इदं सर्वमसृजत' इत्यादिवाक्यान्तरे विज्ञानाविज्ञानशब्दवाच्यचिदचिदात्मकस्य जगतः सर्वशब्देन निर्देशाच्चेति भावः। ऐतदात्म्यमिति पदं व्याचष्टे **तस्यैष आत्मे**ति। **इदं सर्व**मिति पदद्वयमुद्देश्यसमर्पकम्। **ऐतदात्म्यम्**। एतदात्मकत्वं विधेयम्। विशिष्टस्य ब्रह्मणः कारणतया प्रकृतत्वेपि **एत**च्छब्दः चिदचिद्विलक्षणविशेष्यांशपरः; अर्थवशात्॥ तदात्मकत्वं मृदात्मको घट इतिवत् स्वरूपैक्यकृतं स्यादित्यत्राह **तत्र च हेतुरुक्त** इति। **सदायतना** इत्यनेन आधाराधेयभाव उक्तः। अनेन शरीरशरीरिभावः सिद्धः। चेतनेन यावदात्मभावितया धार्यद्रव्यं हि शरीरम्। अस्मिन् वाक्ये हेतुत्वमप्रकटमिति तद्विशदयाह—**सर्वं खल्वि**ति। अत्रापि प्राणनेन सदायतनत्वं फलितम्; **सन्मूला** इत्यादिवाक्यैनैकार्थ्यात्। तत्र **सन्मूला** इति तज्जत्वम्, **सत्प्रतिष्ठा** इति तल्लत्वम्, **सदायतना** इति तदनत्वं चोच्यते। तच्च अन्तः प्रविश्य प्रशासनेन धारकतया स्थिति-

1 भ्रान्तिरितीदमसहमानस्याक्षेपः। उद्देश्यत्वोपादेयत्वयोर्यथायथमारोपेण व्यवहार इति समाधानाशयः। वक्ष्यति तात्पर्यविवक्षया पुरुषभेद इति 4-1-2-अधिकरणे।

2 अपीत्यन्तस्य भंगेऽन्वयः।

**वज्जलानिति शान्तः" इतिवत् ॥ तथा श्रुत्यन्तराणि च ब्रह्मणस्तद्व्यतिरिक्तस्य चिदचिद्वस्तुनश्च शरीरात्मभावमेव तादात्म्यं वदन्ति, "अन्तःप्रविष्टश्शास्ता जनानां सर्वात्मा", "यः पृथिव्यां तिष्ठन् पृथिव्या अन्तरो यं पृथिवी न वेद यस्य पृथिवी शरीरं यः पृथिवीमन्तरो यमयति स त आत्मा अन्तर्याम्यमृतः", "य आत्मनि तिष्ठन् आत्मनोऽन्तरो यमात्मा न वेद यस्यात्मा शरीरं य**

---

हेतुत्वम् । "अन्तःप्रविष्टः शास्ता जनानाम्", 'एतस्य वा अक्षरस्य प्रशासने गार्गि सर्वमिदं[1] विधृतं तिष्ठति' इत्यादिश्रुतेः । एवं निष्कृष्टब्रह्मस्वरूपस्योपादानत्व-लयस्थानत्वायोगात्, सर्वस्य तदनत्वोक्त्या च चिदचिच्छरीरकत्वं सिद्धम् । अतः सर्वशब्दः कार्यावस्थचिदचिच्छरीरकपरमात्मपरः, ब्रह्मशब्दस्य असङ्कोचेन स्वरूपरूपगुणैर्निरवधिकबृहत्त्ववाचित्वात् निष्कृष्टब्रह्मणः कारणत्वानुपपत्तिरूपार्थसामर्थ्याच्च ब्रह्मशब्दः कारणावस्थचिदचिद्विशिष्टपरः । एवमुभयावस्थचिदचित्प्रकारिणो ब्रह्मण एकत्वं सामानाधिकरण्यप्रतिपाद्यमिति कार्यकारणावस्थप्रकार्यैकत्वमस्य वाक्यस्यार्थः । चिदचित्प्रकारित्वं प्रातिपदिकबोध्यम् । अवस्थाद्वयविशिष्टवस्त्वेकत्वं सामानाधिकरण्यबोध्यमिति न वाक्यभेदः । अतो यथोक्त एवार्थः । अथ सर्वंखल्विति वाक्यप्रतिपन्नस्य तादात्म्यस्य शरीरशरीरिभावनिबन्धनत्वं नियन्तृत्वनियाम्यत्वादिना शरीरशब्देन च विशदयितुं श्रुतिवाक्यानि दर्शयति **तथेति** । 'अन्तः प्रविष्टः शास्ता' इत्येतत् **सर्वात्म**शब्दव्याख्यानरूपम् । अनेन शरीरात्मभावः फलितः [उक्तः] । अन्तः प्रविश्य नियाम्यत्वं हि शरीरत्वम् । तत्स्पष्टीकरणार्थमुदाहरति **यः पृथिव्यामिति** । 'यः पृथिव्याम्', 'य आत्मनि' इति पर्यायद्वयेन चेतनाचेतनयोर्भगवन्तं प्रति शरीरत्वमुक्तम् । **आत्मनि तिष्ठन्**नित्युक्ते वेद्यामग्निस्तिष्ठति, तिले तैलं तिष्ठतीतिवत् बहिरबहिःस्थितिसाधारण्यात् [2]तद्वैशद्यार्थमाह **आत्मनोऽन्तर** इति । **अन्तरो यमयती**त्यनेन शरीरलक्षणमुक्तम् । तस्मात् तन्नियाम्यं तच्छरीरमित्यर्थः । न च शिलापुत्रकस्य शरीरमितिवत् अयं निर्देशः, अपवादकाभावे व्यतिरेकनिर्देशस्वारस्यभङ्गायोगात् । 'यस्य पृथिवी शरीरम्' इति व्यतिरेकनिर्देशस्वारस्यभङ्गाभावस्य प्रकरणसिद्धत्वात् तदपवादा(दका)भावे तत्रा(अत्रा ?)प्यौपचारिकत्वाश्रयणायोगात्; अधिकरणाधिकर्तव्यभाव-व्याप्यव्यापकभावाज्ञप्राज्ञभाव-नियाम्यनियन्तृभावरूपविरुद्धधर्मैः[3] स्वारस्यभङ्गस्यात्यर्थमपोदितत्वाच्च । [4]**यं पृथिवी न वेदे**ति दृष्टान्तार्थम् । यथा अचेतनं न वेत्ति तथा चेतनोऽपीति भावः । **य आत्मनी**ति पर्यायेण परिशुद्धात्मनो भगवच्छरीरत्वमुच्यते;

---

1 सूर्यचन्द्रादिविशेषविषयवाक्यानामेव सत्त्वात् सर्वमिदमिति श्रुत्यभावादयमर्थानुवादः ।

2 वेद्या उपरि स्थितिरग्नेः; तैलं तु तिलेऽन्यथा । बहिः—अभावदेशावच्छेदेन । अबहिः—तद्भिन्नदेशरूपभावदेशावच्छेदेन । अन्तर्बहिश्च तत् सर्वमिति श्रुतिवत् उभयस्य विवक्षितत्वान्नान्यतरवाक्यवैयर्थ्यम् । अन्यथा नोभयलाभवैशद्यमित्येकः पक्षः । पक्षान्तरं तु शरीरात्मभावं प्रति बहिः स्थितेः प्रयोजकत्वाभावात् तिष्ठन् इति अबहिरित्यर्थविवक्षेति ज्ञापनाय अन्तर इति वाक्यमिति । यं न वेदेत्यंशवत् शरीरात्मभावं प्रत्यनुपयुक्तमपि तत्त्वं कथ्यत इति प्रथमपक्षाशयः । श्रुतौ पृथिव्या इत्यादिकं पञ्चम्यन्तम् ।

3 धर्मैरिति । एतद्वाक्येनैवोक्तैरिति शेषः । 4 नन्वचेतनस्य पृथिव्यादेर्वेदनकर्तृत्वप्रसक्त्यभावात् किमर्थमिदं वाक्यमित्यत्राह दृष्टान्तार्थमिति ।

**आत्मानमन्तरो यमयति स त आत्मा अन्तर्याम्यमृतः", "यः पृथिवीमन्तरे सञ्चरन् "—इत्यारभ्य "यस्य मृत्युः शरीरम्, यं मृत्युर्न वेद, एष सर्वभूतान्तरात्माऽपहतपाप्मा दिव्यो देव एको नारायणः", "तत्सृष्ट्वा तदेवानुप्राविशत्। तदनुप्रविश्य सच्च त्यच्चाभवत्" इत्यादीनि॥ अत्रापि—"अनेन जीवेनात्मनाऽनुप्रविश्य नामरूपे व्याकरवाणि" इति ब्रह्मात्मकजीवानुप्रवेशेनैव**

---

नक्षत्रचन्द्रादित्यादीनामचित्संसृष्टचेतनविशेषाणां परमात्मशरीरत्वस्य पृथगुक्तत्वात्; 'यः सर्वेषु भूतेषु तिष्ठन्' इत्यनुक्तानामपि संसृष्टजीवानां परमात्मशरीरत्वस्य पृथगुक्तत्वाच्च। न च **भूतशब्दः** पृथिव्याद्यचिन्मात्रपरः, 'यस्य पृथिवी शरीरम्, 'यस्यापः शरीरम्' इत्यादिना पृथिव्यबादीनां भूतानां पृथगुक्तत्वात्। [1]**यमात्मा न वेदे**ति इयत्तया वेदननिषेधः; भगवत्प्रसादेन विना तज्ज्ञानस्य शक्यत्वनिषेधो वा क्रियते॥ कारणावस्थमपि भगवतः शरीरम्, शरीरी च नारायणाख्यो देवताविशेष इति ज्ञापयितुमाह **यः पृथिवीमन्तरे सञ्चर**न्निति। **मृत्युः**—तमश्शब्दवाच्या प्रकृतिः; तत्रैव तमश्शब्दस्थाने मृत्युशब्दपाठात्। शरीरशरीरिभावस्तत्तन्नामभाक्त्वनिर्वाहक इत्याह **तत्सृष्टे**ति। न केवलं श्रुत्यन्तरानुरोधादे**तदात्म्यशब्दार्थो** निश्चीयते, स्वप्रकरणवाक्यादपीत्याह **अत्रापी**ति। **अनेन** जीववाचकशब्दस्य परमात्मपर्यन्तत्वमपि श्वेतकेतुनाऽवगतमिति सिद्धम्। **जीवेनात्मना**— जीवशरीरकेण मया; 'व्याघ्रेण भूत्वा बहवो मयात्ताः' इतिवत्। **नामरूपे** इति पदं व्याचष्टे **वस्तुत्वं शब्दवाच्यत्वं** चेति। तत्तद्देवादिवस्तुत्वं देवादिशब्दवाच्यत्वं चेत्यर्थः। अचिद्ब्रह्मणो-स्तादात्म्यमनुप्रवेशकृतमस्तु; जीवब्रह्मणोस्तु स्वरूपैक्यकृतमेव स्यात्, **जीवेन** मयेति श्रवणादित्यत्राह **तदनुप्रविश्ये**ति॥

ननु जीवमनुप्रविष्टस्यापि ब्रह्मणो नामवाच्यत्वं न व्याकरणात् सिध्यति; नामरूपव्याकरण-श्रुतेर्नामवाच्यत्वप्रतिपादनपरत्वाभावात्। यथा रूपव्याकरणं रूपनिष्पादनमात्रम्, न तु स्वस्य तद्बोध्यत्वापादनम्। एवं नामव्याकरणमपि शब्दसृष्टिरेव; न तु तद्बोध्यत्वापादनमिति॥

नैवम्; "तद्धेदं तर्ह्यव्याकृतमासीत्। तन्नामरूपाभ्यां व्याक्रियत" इति समानवाक्ये इदंशब्दवाच्यजगदात्मब्रह्मणः प्रलयदशायामुपसंहृतनामरूपस्य सृष्टिदशायां नामरूपाभ्यां व्याकृतत्वश्रवणात्। **नामरूपाभ्या**मिति इत्थम्भावे तृतीया। नामरूपाभ्यां विशिष्टमक्रियतेत्यर्थः। न च नामकर्तृत्वमेव नामविशिष्टत्वम्, न तु नामवाच्यत्वमिति वक्तुं युक्तम्; सञ्ज्ञासञ्ज्ञिसंबन्धव्युत्पादके नामोच्चारयितरि च पुरुषे घटादिनामविशिष्टत्वाप्रसिद्धेः। नामवाच्यस्यैव हि नामविशिष्टत्वप्रसिद्धिः॥ उच्चारयितुः शब्दोपादानत्वाभावात् नामविशिष्टत्वाप्रसिद्धिः। कृत्स्नोपादानस्य तु ब्रह्मणः शब्दोपादानत्वयोगात् रूपविशिष्टत्ववत् नामविशिष्टत्वोपपत्तिरिति चेन्न—नभसि घटादिनामविशिष्टत्वाप्रसिद्धेः। न हि घटादिनामविशिष्टत्वे कथिते नभसो नामित्वं स्वरसतः प्रतीयते। वाच्यत्वेन शब्दसंबन्धिन्येव हि नामित्वप्रतीतिस्वारस्यम्। न च लक्षणादिवृत्त्याऽऽपि तत्तन्नामबोध्यत्वं ब्रह्मणः संभवतीति वाच्यम्; लक्षणागौणवृत्तिगोचरयोः कूलमाणवकयोर्गङ्गापदाग्निपदापेक्षया नामित्वाप्रसिद्धेः॥ ननु श्येनशब्दस्य यागविशेषं प्रति गौणनामत्वं निर्णीतम्॥ सत्यम्, तदगत्याऽऽश्रितम्; प्राणहारित्वगुणसाम्यात्

---

1 **परिशुद्धात्मनः सम्यग्वेदित्वात्, न वेदेति कथमित्यत्राह इयत्तयेति।**

सर्वेषां वस्तुत्वं शब्दवाच्यत्वं च प्रतिपादितम्। "तदनुप्रविश्य सच्च त्यच्चाभवत्" इत्यनेनैकार्थ्यात् जीवस्यापि ब्रह्मात्मकत्वं ब्रह्मानुप्रवेशादेवेत्यवगम्यते। अतश्चिदचिदात्मकस्य सर्वस्य वस्तुजातस्य ब्रह्मतादात्म्यमात्मशरीरभावादेवेत्यवगम्यते। तस्माद्ब्रह्मव्यतिरिक्तस्य कृत्स्नस्य तच्छरीरत्वेनैव वस्तुत्वात् तस्य प्रतिपादकोऽपि शब्दस्तत्पर्यन्तमेव स्वार्थमभिदधाति। अतः सर्वशब्दानां लोक-

---

प्रयोगान्यथासिद्धेः। "यथा वै श्येनो निपत्याऽऽदत्ते" इति हि श्रुतिः। मुख्यस्यैव हि शब्दस्य नामत्वप्रतीतिः स्वतःप्राप्ता। अत्र तु स्वतःप्राप्तस्य मुख्यत्वस्यापवादा(दका)भावान्न तत्प्रहाणं युक्तम्। अतोऽनेन वाक्येन नामवाच्यत्वं शब्दस्वारस्यादवगम्यते। एतदैकार्थ्यात् 'नामरूपे व्याकरवाणि' इत्यत्रापि ब्रह्मपर्यन्तं नामरूपव्याकरणमेव विवक्षितम्।

किञ्च न तावत् वर्णसृष्टिप्रतिपादनशङ्काऽपि भवितुमर्हति; नामशब्दस्य वर्णमात्रपर्यायत्वाभावात्। ब्रह्मव्यतिरिक्तसमस्ततत्तत्पदार्थस्वरूपनिष्पादनस्य रूपव्याकरणोक्तिसिद्धत्वेन गगनासाधारणरूपशब्दनिष्पादनस्यापि रूपव्याकरणोक्त्यैव सिद्धत्वात् तत्प्रतिपादनवैयर्थ्यं च स्यात्। न च रूपशब्दस्य गोबलीवर्दन्यायेन सङ्कोचः, सङ्कोचकस्य नामव्याकरणनिर्देशस्यान्यथासिद्धत्वात्। अतो निष्पाद्यमानतत्तद्रूपवाचकशब्द[1]व्युत्पादनमेव नामव्याकरणं स्यात्।

तत्र **बहु स्याम्** इत्यनेन स्रक्ष्यमाणबहुत्वस्य ब्रह्मविशेषणत्वावगमात्, अस्मिन् वाक्येऽपि व्याकरणस्यानुप्रवेशपूर्वकत्वप्रतिपादनाच्च व्याक्रियमाणरूपस्य ब्रह्मविशेषणत्वमवगम्यते। अतो ब्रह्मविशेषणरूपसमभिव्याहारान्नाम्नोऽपि ब्रह्मविशेषणत्वमवगम्यते। नाम्नो विशेषणत्वं वाचकतयैवेत्युपपादितम्। कृत्स्नस्य रूपस्य ब्रह्मविशेषणत्वावगमात् तत्तद्रूपप्रवृत्तिनिमित्तकत्वाच्च नाम्नां ब्रह्मविशेषणत्वं तस्य वाचकतयैवेत्यवगम्यते; स्रक्ष्यमाणबहुत्वविषयस्य बहुशब्दस्य उपक्रमे ब्रह्मपर्यन्तत्वेन प्रयोगदर्शनादुपक्रमोक्तबहुत्वावान्तरभिदारूपतत्तद्रूपवाचिनां च नाम्नां ब्रह्मवाचकतया तद्विशेषणत्वमवगम्यते 'तत् तेज ऐक्षत', 'ता आप ऐक्षन्त' इति प्रकरणे तेजःप्रभृतिशब्दानां परमात्मविषयतया प्रयोगदर्शनाच्च नाम्नां ब्रह्मविशेषणत्वं तद्वाचकतयेत्यवगम्यते। "वचसां वाच्यमुत्तमम्", "हरिरखिलाभिरुदीर्यते तथैकः", "नताः स्म सर्ववचसां प्रतिष्ठा यत्र शाश्वती" इत्यादिस्मृतिस्वारस्याच्च नामवाच्यत्वमवगम्यते। ततश्च 'नामरूपे व्याकरवाणि' इति श्रुतिः चिदचिद्विशिष्टस्य ब्रह्मणस्तन्नामवाच्यत्वमेव प्रतिपादयतीति सिद्धम्॥

**ऐतदात्म्य**शब्दार्थव्याख्यानं निगमयति **अत** इति। शरीरवाचिशब्दानां शरीरिपर्यन्तत्वं निगमयति **तस्मा**दिति। **तस्मात्**—उदाहृतवाक्यैः शरीरशरीरिभावप्रतिपादनात् तस्य तत्तन्नामसाकूनिर्वाहकत्वाच्चेत्यर्थः। ननु न तत्पर्यन्ताभिधानमुपपद्यते। लोके तत्तद्वस्तुमात्रपर्यन्तत्वेन व्युत्पन्नतया व्युत्पत्तिभङ्गप्रसङ्गात्; ब्रह्मण एकत्वेन द्वित्वबहुत्वानुपपत्तेश्चेत्यत्राह **अतस्सर्वशब्दाना**मिति। **लोकव्युत्पत्ति**शब्दस्यायं भावः,—नात्र व्युत्पत्तिविरोधः, व्युत्पन्नार्थापरित्यागात्। ब्रह्मणो लौकिकप्रमाणागोचरतया तत्पर्यन्तव्युत्पत्त्यभावः, न त्ववाचकतयेति सोऽन्यथासिद्धः। यथा लिङादेरपूर्ववाचित्वं वेदव्युत्पत्त्याऽवगम्य

---

1. शब्दोत्पादनं न व्याकरणम्, किं तु शब्दस्य वाचकत्वाकारेणोत्पादनम्। विशेषेणोत्पादनं व्युत्पादनमीश्वरकार्यम्। ईदृशविशिष्टोत्पत्तिप्रदर्शक[illegible] व्युत्पादकत्वं नामरूपव्याकरणादिश्रुतेः।

[1]व्युत्पत्त्यवगततत्तत्पदार्थविशिष्टब्रह्माभिधायित्वं सिद्धमिति ऐतदात्म्यमिदं सर्वमिति प्रतिज्ञातार्थस्य तत्त्वमसीति सामानाधिकरण्येन विशेषे उपसंहारः॥

अतो निर्विशेषवस्त्वैक्यवादिनो भेदाभेदवादिनः केवलभेदवादिनश्च वैयधिकरण्येन सामानाधिकरण्येन च ब्रह्मात्मभावोपदेशाः सर्वे परित्यक्ताः स्युः। एकस्मिन् वस्तुनि कस्य तादात्म्यमुपदिश्यते? तस्यैवेति चेत्, तत् स्ववाक्येनैवावगतमिति न तादात्म्योपदेशावसेयमस्ति किञ्चित्। कल्पितभेदनिरसनमिति चेत्—तत्तु न सामानाधिकरण्यतादात्म्योपदेशावसेयमित्युक्तम्। सामानाधिकरण्यं तु ब्रह्मणि प्रकारद्वयप्रतिपादनेन विरोधमेवावहेत्। भेदाभेदवादे तु ब्रह्मण्येवो-

---

लोकतो व्युत्पत्त्यभावपरिहारः कार्यवाक्यार्थवादिभिरुच्यते, तद्वत्। तत्तत्पदार्थविशिष्टशब्देन ब्रह्मणोऽपि द्वित्वबहुत्वादिकं सद्वारकमुपपन्नमित्युक्तं भवति।

तत्त्वमसीत्यस्योपसंहारवाक्यतामाह इत्यैतदात्म्यमिति। सामानाधिकरण्येन विशेषे उपसंहार इति। वैयधिकरण्येन प्रतिज्ञातस्य सामानाधिकरण्येनोपसंहारः, सामान्येन प्रतिज्ञातस्य विशेष उपसंहार इत्यर्थः। 'तदैक्षत' इत्यादिना तच्छब्दार्थः प्रतिपन्नः; 'ऐतदात्म्यम्' इत्यादिना जीवस्य ब्रह्मात्मकत्वं प्रतिपन्नम्; 'अनेन जीवेन' इत्यदिना जीववाचिशब्दानां ब्रह्मपर्यन्तत्वं च प्रतिपन्नमिति नात्रोद्देश्योपादेयविभागः। अयं ह्यप्राप्तार्थप्रतिपादकवाक्यानाम्; न तु निगमनवाक्यानाम्, तेषां प्राप्तविषयत्वात्। निगमनं चोक्तार्थप्रतिष्ठार्थत्वादपेक्षितं दृश्यते। तस्मान्निगमनवाक्येऽस्मिन् उद्देश्योपादेयविभागमुखेन चोद्यस्य नावकाश इति परिहार उक्तो भवति। यत्र त्वप्राप्तार्थपरवाक्ये जगद्ब्रह्मणोः सामानाधिकरण्यम्, तत्र ब्रह्मणस्तद्रूपनामभाक्त्वं विधेयं ज्ञातव्यम्।

एवं भेदश्रुतिघटकश्रुत्यविरोधार्थं 'तत्त्वमसि' इति वाक्यसामानाधिकरण्यं शरीरशरीरिभावेनोपपादितम्॥ शरीरवाचिशब्दानां शरीरिपर्यन्ताभिधानं जातिगुणपदयोर्व्यक्तिगुणिपर्यन्ताभिधानवत् संभवतीत्याकृत्यधिकरणन्यायेनोपपिपादयिषुः शरीरवाचिशब्दानामाकृत्यधिकरणन्यायविषयतानिरूपणरूपस्य "अंशो नानाव्यपदेशात्" इत्यधिकरणस्य पूर्वपक्षभूतेष्वर्थेषु दूषणमाह-अत इति। अतः—जगद्ब्रह्मणोः श्रुतिभिः शरीरशरीरिभावप्रतिपादनात् तस्य च तत्तन्नामभाक्त्वनिर्वाहकत्वाच्चेत्यर्थः। भेदाभेदवादिशब्देन औपाधिकस्वाभाविकभेदाभेदवादिनोर्द्वयोरपि तन्त्रेणोक्तिः। केवलभेदशब्देन स्वपर्यवसितभेदो विवक्षितः। तद्वादिनश्च वैशेषिकादयः। वैयधिकरण्यं च, अस्यैष आत्मा इत्येवंरूपत्वादुपदेशस्य। ब्रह्मात्मभावोपदेशपरित्यागः कथमिति शङ्कायां मृषावादिपक्षे तदनुपपत्तिं वक्तुमाह एकस्मिन्निति। शङ्कते तस्यैवेति। प्रतिवक्ति तदिति। स्ववाक्येन—'सत्यं ज्ञानम्' इत्यादिना स्वरूपपरवाक्येन। [2]स्ववाक्येन प्रतिपन्नादधिकार्थप्रतिपत्तिरस्ति वा न वा? प्रथमे सविशेषत्वम्; द्वितीये तादात्म्योपदेशवैयर्थ्यमिति भावः। पुनः शङ्कते कल्पितेति। दूषयति तदिति। प्रकारद्वयोपस्थापकत्वादिति भावः। सामानाधिकरण्यतादात्म्येति। सामानाधिकरण्येन तादात्म्योपदेशावसेयमित्यर्थः। न केवलमसाधकत्वम्, विरुद्धमपीत्याह सामानाधिकरण्यं त्विति। औपाधिकभेदाभेदवादे तदनुपपत्तिमाह भेदाभेदेति।

---

1 "शक्तिग्रहं व्याकरणोपमानकोशाप्तवाक्यात् व्यवहारतश्च। वाक्यस्य शेषात् विवृतेर्वदन्ति सांनिध्यतः सिद्धपदस्य वृद्धाः" इत्युक्तविधा लोकव्युत्पत्तिः।

2 स्ववाक्येन स्वरूपपरवाक्येनेत्येव सर्वत्र दृश्यते। परिवर्तनमत्र युक्तमिति कृतम्।

पाधिसंसर्गात् तत्प्रयुक्ताः जीवगताः दोषा ब्रह्मण्येव प्रादुःष्युरिति निरस्तनिखिलदोषकल्याणगुणात्मकब्रह्मात्मभावोपदेशा हि विरोधादेव परित्यक्ताः स्युः। स्वाभाविकभेदाभेदवादेऽपि ब्रह्मणः स्वत एव जीवभावाभ्युपगमात् गुणवत् दोषाश्च स्वाभाविका भवेयुरिति निर्दोषब्रह्मतादात्म्योपदेशो विरुद्ध एव। केवलभेदवादिनां चात्यन्तभिन्नयोः केनापि प्रकारेणैक्यासंभवादेव ब्रह्मात्मभावोपदेशा न संभवन्तीति सर्ववेदान्तपरित्यागः स्यात्॥

निखिलोपनिषत्प्रसिद्धं कृत्स्नस्य ब्रह्मशरीरभावमातिष्ठमानैः ब्रह्मात्मभावोपदेशाः सर्वे सम्यगुपपादिता भवन्ति। जातिगुणयोरिव द्रव्याणामपि शरीरभावेन विशेषणत्वेन 'गौरश्वो मनुष्यो देवो जातः पुरुषः कर्मभिः' इति सामानाधिकरण्यं लोकवेदयोर्मुख्यमेव दृष्टचरम्। जातिगुणयोरपि [हि] द्रव्यप्रकारत्वमेव 'खण्डो गौः' 'शुक्लः पटः' इति सामानाधिकरण्यनिबन्धनम्। मनुष्यत्वादि-

---

क्लेशकर्माद्यस्पृष्टः सार्वज्ञ्यादिगुणको हीश्वरः। अत ईश्वरस्य निर्दोषस्य तदनर्हानीश्वरतादात्म्यव्याघातादीश्वरतादात्म्योपदेशो विरुद्ध इत्यर्थः। **परित्यक्ताः स्युः**। परित्यागः फलित इत्यर्थः। स्वाभाविकभेदाभेदपक्षे तदनुपपत्तिमाह **स्वाभाविके**ति। **गुणवद्दोषाश्च स्वाभाविका भवेयुरि**ति। ब्रह्मण ईश्वरांशेन सार्वज्ञ्यादिगुणा इव जीवांशेन दोषाश्च स्वाभाविका भवेयुः; "अनादिर्भगवान् कालो नान्तोऽस्य द्विज विद्यते। अव्युच्छिन्नास्ततस्त्वेते सर्गस्थित्यन्तसंयमाः" इति संसारप्रवाहानन्त्येन दोषा नित्याः स्युरित्यर्थः। यद्वा तत्तद्दोषसंबन्धार्हत्वं स्वाभाविकं स्यादित्यर्थः। ततः किमित्यत्राह **इति निर्दोषे**ति। सद्ब्रह्मात्मादिशब्दानां नारायणशब्दपर्यवसायित्वेनेश्वरातिरिक्तवस्तुनिषेधादिभिरीश्वरस्यैव ब्रह्मत्वं सिद्धं कृत्वा, **निरवद्यं निरञ्जन**मित्यादिश्रुत्युक्तं ब्रह्मणो निर्दोषत्वं चाभिप्रेत्य निर्दोषब्रह्मतादात्म्योपदेशविरोध उक्तः। निर्दोषश्रुतिविरोधः फलितः॥ तर्हि निर्दोषश्रुतिविरोध इति वक्तव्ये किमर्थं निर्दोषब्रह्मतादात्म्योपदेशो विरुद्ध इत्युक्तम्॥ उच्यते। हेयानर्हतादात्म्यं हि पुरुषार्थः। स्वरूपैक्ये च ब्रह्मणो हेयार्हत्वाद्धेयार्हब्रह्मतादात्म्यधीर्न हेयापहा[1]। तत्तादात्म्यानुभवोऽप्यपुरुषार्थश्चेत्युपायत्वप्राप्यत्वविरोधात् तादात्म्योपदेशपरवाक्यस्य न प्रयोजनपर्यवसानं स्यात्। न हि असिना छिद्यमानस्य कालाग्निना दह्यमानस्य च पुरुषस्योपासनमुपासकानर्थं परिहरति। न च तत्तादात्म्यधीः कस्यचित्पुरुषार्थः, तद्वदिति ज्ञापयाय **तादात्म्योपदेशो विरुद्ध** इत्युक्तम्। स्वनिष्ठभेदपक्षं दूषयति **केवले**ति। **अत्यन्तभिन्नयोः**—प्रकारप्रकारिभावरहितयोरित्यर्थः। **केनापि प्रकारेण**। विशेष्यांशतोऽप्यैक्यासिद्धिरित्यर्थः॥

एवं पूर्वपक्षचतुष्टयेऽप्यनुपपत्तिमुक्त्वा स्वपक्षे वैषम्यमाह **निखिले**ति। सम्यक्छब्देन मुख्यत्वं विवक्षितम्। कथं मुख्यत्वमित्यत्राह **जातिगुणयो**रिति। दण्डादिव्यावृत्त्यर्थमाह **शरीरभावेन विशेषणत्वेने**ति। कथं **मुख्यमेव दृष्टचर**मित्युच्यते; अमुख्यत्वेऽपि हि प्रयोगः संभवति। अमुख्यत्वं च शरीरस्य द्रव्यत्वात्। न हि दण्डकुण्डलादिशब्दानां विशेष्यपर्यन्ताभिधानं दृष्टम्। तस्माद्द्रव्यत्वे सति विशेषणत्वम्, जातिगुणयोरन्यतरत्वे सति विशेषणत्वं वा मत्वर्थीयप्रत्ययनिरपेक्षसामानाधिकरण्ये प्रयोजकमिति शरीरवाचिशब्दस्य विशेष्यपर्यन्ताभिधानममुख्यमित्यत्राह **जातिगुणयोरपी**ति। एवकारेण जातिगुणयोरन्यतरत्वादेः प्रयोजकत्वव्युदासः। ततः किमित्यत्राह **मनुष्य-**

---

1 हेयापहा। "स्रगियं यदि जीवितापहा" इति रघुवंश इव रूपनिर्वाह इति भा० प्र०.

विशिष्टपिण्डानामप्यात्मनः प्रकारतयैव पदार्थत्वात् 'मनुष्यः पुरुषः षण्डो योषिदात्मा जातः' इति सामानाधिकरण्यं सर्वत्रानुगतमिति प्रकारत्वमेव सामानाधिकरण्यनिबन्धनम्; न परस्परव्यावृत्ता जात्यादयः। स्वनिष्ठानामेव हि द्रव्याणां कदाचित् क्वचिद्द्रव्यविशेषणत्वे मत्वर्थीयप्रत्ययो दृष्टः, दण्डी, कुण्डलीति; न पृथक्प्रतिपत्तिस्थित्यनर्हाणां द्रव्याणाम्। तेषां विशेषणत्वं सामानाधिकरण्यावसेयमेव ॥

यदि "गौरश्वो मनुष्यो देवः पुरुषो योषित् षण्ड आत्मा कर्मभिर्जातः" इत्यत्र 'खण्डो मुण्डो गौः' 'शुक्लः पटः' 'कृष्णः पटः' इति जातिगुणवदात्मप्रकारत्वं मनुष्यादिशरीराणामिष्यते, तर्हि जातिव्यक्त्योरिव प्रकारप्रकारिणोः शरीरात्मनोरपि नियमेन सह प्रतिपत्तिः स्यात्; न चैवं दृश्यते। न हि नियमेन गोत्वादिवत् आत्माश्रयतयैवात्मना सह मनुष्यादिशरीरं पश्यन्ति। अतो मनुष्य आत्मेति सामानाधिकरण्यं लाक्षणिकमेव ॥ नैतदेवम्; मनुष्यादिशरीराणामप्यात्मैकाश्रयत्वं

---

**त्वादीति**। अत्र **प्रकार**शब्दो विशेषणमात्रपरः। **एव**कारेण दण्डकुण्डलादिव्यावृत्तिरभिप्रेता। **सामानाधिकरण्यं...अनुगतमितीति**। सामानाधिकरण्यस्यानुगतत्वादनुगतमेव तत्प्रयोजकं वाच्यमित्यर्थः। जातित्वगुणत्वादेः प्रयोजकत्वं किं न स्यादित्यत आह **न परस्परेति**। **परस्परव्यावृत्ताः**— परस्परानुयायिनः। **जात्यादयः**—जातित्वादयः। अयमभिप्रायः—गङ्गायां घोष इत्यादिषु प्रवाहकूलयोर्गङ्गापदप्रवृत्तिनिमित्तभूतस्यानुयायिनः आकारस्यादर्शनात् तत्र लाक्षणिकत्वं युक्तम्; अत्र तु यत्र यत्र विशेष्यपर्यन्ताभिधायित्वेन प्रयोगो दृष्टचरः, तत्र तत्र प्रयोगविषयेष्वनुवृत्ताकारदर्शनात् अननुगताकारप्रयोजकत्वाश्रयणेन क्वचिल्लाक्षणिकत्वं वक्तुमयुक्तम्। अन्यथा— अद्रव्यत्वे सति विशेषणत्वं विशेष्यपर्यन्ताधाने प्रयोजकमित्यपि न वक्तव्यम्; जातित्वं गुणत्वं वा प्रयोजकमस्तु, अन्यल्लाक्षणिकं स्यात्। न च तथा भवदभिमतम्; जातिगुणवाचिनामुभयेषामपि हि[1] शब्दानां विशेष्यपर्यवसायित्वेन प्रयोगदर्शनात्। तस्मात् शरीरवाचिशब्दानामपि विशेष्यपर्यन्ताभिधायित्वेन प्रयोगदर्शनात् प्रयोगेषु सर्वेष्वनुवृत्तैकाकारदर्शनाच्च अननुवृत्ताकारान्तरस्य प्रयोजकत्वकल्पनेनान्यतरस्यामुख्यत्वकल्पनाया अयुक्तत्वात् इदमपि सामानाधिकरण्यं जातिगुणवाचिशब्दानामिव मुख्यमेवेति। ननु प्रकारभूतद्रव्यवाचिपदानां मत्वर्थीयप्रत्ययनिरपेक्षविशेष्यपर्यन्ताभिधायित्वं दण्डादिशब्दानां तथात्वादर्शनादनुपपन्नमिति शङ्कायां **प्रकारतयैवेति** पूर्वमभिप्रेतं विवृणोति **स्वनिष्ठानामेव हीति**। अपृथक्सिद्धप्रकारवाचित्वमेव मत्वर्थीयप्रत्ययनिरपेक्षसामानाधिकरण्यप्रयोजकमित्यर्थः। यत्र यत्र नियतप्रकारत्वम्, तत्र तत्र सहोपलम्भनियमो दृष्टः। शरीरे तु सहोपलम्भनियमाभावादपृथक्सिद्धविशेषणत्वमनुपपन्नम्। तस्मात् सामानाधिकरण्यं लाक्षणिकमित्यभिप्रायेण चोदयति **यदि गौरश्व इति**। पक्षे व्यापकविपर्ययं दर्शयति **न चैवमिति**। तत् विवृणोति **नहीति**। ततः किमित्यत्राह **अत इति**। परिहरति **नैतदेवमिति**। सहोपलम्भनियमस्य नियतप्रकारत्वप्रयोजकत्वे दूषणं वक्ष्यन् प्रथमं शरीरस्यापृथग्विशेषणत्वं प्रतिपन्नमिति दर्शयति **मनुष्यादीति**। आत्मैकाश्रयत्वतदेकार्थत्वयोरन्यतरान्वितं प्रकारत्वमपृथक्सिद्धविशेषणत्वमित्यर्थः। यद्वा **प्रकारत्व**शब्देन प्रकारतयैव प्रतीतिर्विवक्षिता; उत्तरत्र प्रकारत्वविवरणे **आत्मविशेषणतयैव प्रतीतेरि**ति वक्ष्यमाणत्वात्। तेन

---

1 प्रयोगदर्शनाद्धि न तथा भवदभिमतमित्यन्वयः।

तदेकप्रयोजनत्वं तत्प्रकारत्वञ्च जात्यादितुल्यम्। आत्मैकाश्रयत्वमात्मविश्लेषे शरीरस्य विनाशादवगम्यते। आत्मैकप्रयोजनत्वञ्च त[त्त]त्कर्मफलभोगार्थतयैव सद्भावात्। तत्प्रकारत्वमपि, देवो मनुष्य इत्यात्मविशेषणतयैव प्रतीतेः। एतदेव हि गवादिशब्दानां व्यक्तिपर्यन्तत्वे हेतुः। एतत्स्वभावविरहादेव दण्डकुण्डलादीनां विशेषणत्वे दण्डी कुण्डलीति मत्वर्थीयप्रत्ययः। देवमनुष्यादिपिण्डानामात्मैकाश्रयत्वतदेकप्रयोजनत्वतत्प्रकारत्वस्वभावात् देवो मनुष्य आत्मेति लोकवेदयोः सामानाधिकरण्येन व्यवहारः। जातिव्यक्त्योर्नियमेन सहप्रतीतिरुभयोश्चाक्षुषत्वात्। आत्मनस्त्वचाक्षुषत्वात् चक्षुषा शरीरग्रहणवेलायामात्मा न गृह्यते। पृथग्ग्रहणयोग्यस्य प्रकारतैकस्वरूपत्वं दुर्घटमिति मा वोचः; जात्यादिवत् तदेकाश्रयत्वतदेकप्रयोजनत्वतद्विशेषणत्वैः शरीरस्यापि तत्प्रकारतैकस्वभावत्वावगमात्। सहोपलम्भनियमस्त्वेकसामग्रीवेद्यत्वनिबन्धन इत्युक्तम्।

---

विशेष्यप्रतिपत्तिसंभवे दण्डकुण्डलादिवत् पृथगवस्थितत्वेन प्रतिपन्नत्वाभावः फलितः। तदेकाश्रयत्वं तदेकप्रयोजनत्वं विशेष्यप्रतीतिसंभवे पृथक्स्थितत्वेनाप्रतीतत्वं चापृथक्सिद्धविशेषणत्वे प्रयोजकमित्यर्थः। तेषु त्रिषु आत्मैकाश्रयत्वं पक्षे दर्शयति-**आत्मैकाश्रयत्व**मिति। तदेकप्रयोजनत्वं दर्शयति-**आत्मैके**ति। न च दुःखैकफलनारकशरीरेष्वव्याप्तिः; दुःखस्याप्रयोजनत्वेऽपि तेषां पापक्षयरूपप्रयोजनहेतुत्वात्। न च पत्यादिप्रीतिहेतुषु भृत्यादिदेहेषु तदेकप्रयोजनत्वादतिव्याप्तिः शङ्कनीया; तत्प्रयोजनसाधनत्वेन विना स्थित्यभावस्य विवक्षितत्वात्। क्रयविक्रयाद्यर्हस्य तदेकप्रयोजनत्वं हि न सिध्यति। **तत्कर्मफलभोगार्थतयैव सद्भावा**दिति ह्युक्तम्। अतस्**तदेकप्रयोजन**शब्दस्याप्ययमेवार्थः। अथ तत्प्रकारत्वं दर्शयति-**तत्प्रकारत्वमपी**ति। विशेष्यप्रतीतिसिद्धौ तत्पृथक्सिद्धत्वेन प्रतीत्यभावस्**तत्प्रकारत्व**शब्देन विवक्षित इत्यर्थः। पञ्चमीनिर्देशस्त्वौपचारिकः। यद्वा, तत एव तत्प्रकारत्वेनोक्तमित्यर्थः। अथवा पृथक्स्थितत्वप्रतीत्यभावे प्रतीतिविशेषो हेतुतयोदाह्रियते। एतत् तदेकाश्रयत्वादित्रितयं सपक्षेऽपि दर्शयति **एतदेव ही**ति। विपक्षव्यावृत्तत्वं दर्शयति-**एतत्स्वभावे**ति। ईदृशप्रकारत्वमेव पक्षे मत्वर्थीयप्रत्ययनिरपेक्षसामानाधिकरण्यहेतुरित्याह-**देवमनुष्यादी**ति। सहोपलम्भनियमस्यान्यथासिद्धिमाह-**जातिव्यक्त्यो**रिति। सहोपलम्भनियमस्त्वेकसामग्रीवेद्यत्वप्रयुक्तः, न त्वपृथक्सिद्धविशेषणत्वप्रयुक्त इत्यर्थः। चाक्षुषत्वं प्रदर्शनार्थम्। उपाधेरपक्षस्थत्वं दर्शयति-**आत्मनस्त्वि**ति। एकसामग्रीवेद्यत्वमपृथक्सिद्धविशेषणत्वे प्रयोजकमिति तदभावात् नापृथक्सिद्धविशेषणत्वमित्याशङ्क्याह-**पृथग्ग्रहणे**ति। स्वं रूपं **स्वरूपम्**—धर्मः। प्रकारत्वमेव धर्मो यस्य तत् **प्रकारतैकस्वरूपम्**। **एक**शब्देन कदाचिदप्रकारत्वस्य व्युदासः। ततश्च दण्डकुण्डलादिवैषम्यम्। किमपृथक्सिद्धविशेषणत्वे प्रयोजकान्तराभावादेकसामग्रीवेद्यत्वं प्रयोजकमुच्यते, उतास्यानुयायित्वात् इदमपि प्रजोजकमुच्यते इति विकल्पमभिप्रेत्य प्रथमं शिरः प्रतिवदति **जात्यादी**ति। **प्रकारतैकस्वभावत्वावगमा**दित्यत्र **स्वभाव**शब्देनैव प्रकारत्वनियमे सिद्धेऽप्ये**क**शब्दप्रयोगः एकसामग्रीवेद्यतास्वभावत्वव्यावृत्त्यर्थः। यदि तदेकाश्रयत्वादिरेवापृथग्विशेषणत्वे प्रयोजकः, कथं तर्हि जात्यादौ सहोपलम्भनियम इत्यत्राह-**सहोपलम्भे**ति। अनेन पूर्वं चाक्षुषत्वोक्तिरेकसामग्रीवेद्यत्वप्रदर्शनार्थेति स्पष्टम्।

**यथा चक्षुषा पृथिव्यादेर्गन्धरसादिसंबन्धित्वं स्वाभाविकमपि न गृह्यते, एवं चक्षुषा गृह्यमाणं शरीरमात्मप्रकारतैकस्वभावमपि न तथा गृह्यते; आत्मग्रहणे चक्षुषः सामर्थ्याभावात्। नैतावता शरीरस्य तत्प्रकारत्वस्वभावविरहः। तत्प्रकारतैकस्वभावत्वमेव सामानाधिकरण्यनिबन्धनम्। आत्मप्रकारतया प्रतिपादनसमर्थस्तु शब्दः सहैव प्रकारतया प्रतिपादयति॥**

**ननु च शाब्देऽपि व्यवहारे शरीरशब्देन शरीरमात्रं गृह्यत इति नात्मपर्यन्तता शरीरशब्दस्य॥ नैवम्; आत्मप्रकारभूतस्यैव शरीरस्य पदार्थविवेकप्रदर्शनाय निरूपणान्निष्कर्षकशब्दोऽयम्; यथा गोत्वं शुक्लत्वम् आकृतिः गुण इत्यादिशब्दाः॥**

---

अथ (त्र ?) पूर्वोक्तविकल्पे द्वितीयशिरसि चापृथग्विशेषणत्वप्रयोजकतयोच्यमानमिदं किं मत्वर्थीयप्रत्ययनिरपेक्षसामानाधिकरण्यप्रयोगविषयेषु सर्वेष्वनुयायि, उत भवदभिमतजातिगुणेष्वेवानुयायीति विकल्पोऽभिप्रेतः। तत्र न प्रथमः; देहात्मनोरेकसामग्रीवेद्यत्वाभावात्। ततश्च अनुगतप्रयोजकसद्भावादपृथग्विशेषणत्वस्याप्यनुगतत्वेन सामानाधिकरण्यप्रयोगाणां सर्वेषां मुख्यत्वे संभवत्यपि अननुगतमाकारं प्रयोजकत्वेनाङ्गीकृत्य, अपृथग्विशेषणत्वमपि सङ्कुचितं कृत्वा, तद्द्वारा सामानाधिकरण्यप्रयोगाणाममुख्यत्वाश्रयणमनुपपन्नमित्यर्थसिद्धम्; प्रकारतैकस्वभावत्वावगमादित्यत्रैकशब्देन एकसामग्रीवेद्यतास्वभावत्वस्य व्युदस्तत्वात्। अथ पराभिमतस्थलानुयायित्वरूपे द्वितीयशिरसि गन्धादौ व्यभिचारेण दूषणं वदन् एकसामग्रीवेद्यत्वस्यापृथग्विशेषणत्वाव्यापकत्वमाह **यथे**ति। न ह्यचाक्षुषस्यापि गन्धस्य पृथिवीनियतप्रकारत्वहानिः। **एवं**शब्दो **यथा**शब्दप्रतिनिर्देशरूपः। कस्मादग्रहणमित्यत्राह **आत्मग्रहण** इति। व्यापकत्वाभावफलमाह—**नैतावते**ति। **एतावता**—चक्षुषा ग्रहणाभावमात्रात्। **न तत्प्रकारत्वस्वभावहानिः**। एकसामग्रीवेद्यत्वस्यापृथग्विशेषणताव्यापकत्वाभावात्, तदेकाश्रयत्वादिप्रयोजकान्तरसद्भावाच्चेति भावः। ततः किमित्यत्राह—**तत्प्रकारते**ति। **एक**शब्द एकसामग्रीवेद्यतास्वभावत्वव्युदासपरः। **एव**कारः सहोपलम्भनियमव्युदासार्थः। अपृथग्विशेषणत्वे सति शरीरस्य, केनापि प्रमाणेन तत् तथोपलभ्येतेत्यत्राह-**आत्मे**ति।

शब्दोपि न शरीरिपर्यन्ताभिधायीति चोदयति—**ननु चे**ति। परिहरति—**नैव**मिति। इमौ चोद्यपरिहारौ आकृत्यधिकरणेऽपि समानावित्यभिप्रायेणाह **यथा गोत्व**मिति॥ निष्कर्षकशब्दानां विशेष्यपर्यन्ताभिधायकत्वाभावे चेतनाचेतनवाचिनः शब्दाः न ब्रह्मपर्यन्ताभिधायिनो भवन्ति; "यस्यात्मा शरीरम्", "यस्य पृथिवी शरीरम्" इत्यादिष्वात्मादिशब्दानां निष्कर्षकशब्दत्वावगमादिति चेत्—उच्यते। निष्कर्षकशब्दो द्विविधः, [1]वैवक्षिकनिष्कर्षकः नियतनिष्कर्षकश्चेति। तत्र शरीरादिशब्दाः नियतनिष्कर्षकाः, आत्मादिशब्दा वैवक्षिकनिष्कर्षकाः, गोत्वादिशब्दवत् शुक्लादिशब्दवच्च; प्रयोगस्य व्यवस्थापकत्वात्। निष्कर्षकानिष्कर्षकविभागोऽपि हि प्रयोगाधीनः। तद्द्वयमपि विभागस्तन्मूलः॥ ननु शुक्लादिशब्दाः नियतनिष्कर्षका एव। गुणिपर्यन्तता तु "गुणवचनेभ्यो मतुपो लुग् वक्तव्यः" इति स्मरणात्॥ मैवम्; जातिवाचिशब्दवत् अपृथक्सिद्धविशेषणवाचित्वाविशेषाच्छुक्लादिशब्दानाम्। प्रत्ययस्तु द्विशब्दस्थद्विवचनवत् प्रकृत्यनतिरिक्तार्थः त्रिलिङ्गतया शब्दसाधुत्वाय, स्वरविशेषाय च

---

1 विवक्षितो निष्कर्षः—निष्कर्षकत्वं यस्येति बहुव्रीहिः। एवमुपर्यपि।

**अतो गवादिशब्दवत् देवमनुष्यादिशब्दा आत्मपर्यन्ताः ।**

---

भवति । तत एव हि, "गुणे शुक्लादयः पुंसि गुणिलिङ्गास्तु तद्वति" इति नैघण्टुकाः । यतः स्वतो गुणिपर्यन्तानामेव गुणवाचिपदानां लिङ्गस्वरार्थं मतुब्लोपस्मरणम्; न तु गुण्यभिधानशक्तिविरहिणां गुण्यभिधानार्थम्—अत एव हि रागशब्दस्य रक्तपदतुल्यतया प्रयोगाभावः । अतः शुक्लादिशब्दा वैवक्षिकनिष्कर्षकाः । नियतनिष्कर्षकाणामपि तथात्वं प्रतियोगिविशेषसापेक्षम्; न तु सार्वत्रिकम् । "रसोऽहमप्सु कौन्तेय प्रभाऽस्मि शशिसूर्ययोः । पुण्यो गन्धः पृथिव्यां च" इति [रस ?]गन्धादिशब्दानामपि परात्मपर्यन्ततया प्रयोगात् । अतः पृथिव्याद्यपेक्षयैव गन्धादिशब्दानां नियतनिष्कर्षकत्वम् ।

शरीरवाचिशब्दानां शरीरिपर्यन्ततां निगमयति **अतो गवादीति** । **आत्मपर्यन्ताः**—आत्मपर्यन्तशक्तयः । शरीरवाचिशब्दैरात्मबोधनं शक्तिनिबन्धनतया मुख्यमित्यर्थः ।

[1]ननु यद्यपि शरीरवाचिशब्दा आकृतिनयगोचराः, तथापि तैः शरीरिबोधनं लाक्षणिकम्; गवादिशब्दैरपि व्यक्तिबोधनस्य लाक्षणिकत्वात् । संबन्धानुपपत्तिभ्यां हि लक्षणा । जातिमात्रस्याऽऽनयनाद्यनर्हत्वात् व्यक्तिसंबन्धाच्च गवादिशब्दैर्व्यक्तिर्लक्षणया बोध्यते; प्रयोगे अन्यथासिद्धे शक्तिकल्पनानुपपत्तेः॥ नैवम्; [2]अयुतसिद्धविशेषणवाचिशब्दत्वस्य विशेष्यलक्षणाप्रतिबन्धकत्वात् । अन्यथा जात्यादिशब्दानामपि सम्बन्धानुपपत्त्यविशेषेण क्वचिद्व्यक्तिपर्यन्तप्रयोगप्रसङ्गः ॥

[3]'आकृतिरेव शब्दशक्तिविषयः । व्यक्तिबोधस्त्वर्थसामर्थ्यात् । प्रत्यभिज्ञायां संस्कारसचिवेन्द्रियवत् अर्थसामर्थ्यसचिवा शब्दशक्तिर्विशिष्टबोधसामग्री' इत्यपि न युक्तम्; जात्यादिशब्दश्रवणेऽपि विशिष्टबोधप्रसङ्गादेव । न हि सत्यां सामग्र्यां कार्यानुदय उपपद्यते ॥

ननु गवादिशब्दाः जातेर्व्यक्तिपरतन्त्रतारूपमभिदधति । अतस्तैर्व्यक्तिपर्यन्तबोधः । जात्यादिशब्दास्तु जातिस्वरूपमात्रम् । अतस्तैर्व्यक्तिपर्यन्तबोधाभावः ॥ नैवम्; जात्यादिशब्दैर्द्रव्यपारतन्त्र्याप्रतिपत्तौ द्रव्यविलक्षणतया जातिप्रतीत्यनुपपत्तेः । ननु न जातेर्द्रव्यप्रकारतैकस्वभावत्वरूपपारतन्त्र्याबोधनं विवक्षितम्, किन्तु विशेषणान्तरान्वय-कारकभावानर्हत्वरूपपारतन्त्र्याबोधनमिति ॥ उच्यते । गवादिशब्दैः तादृक्त्वबोधनमेकपदेन विशेष्याभिधाननिबन्धनम् । न हि, कुण्डलीत्युक्ते कुण्डलस्य रुचिरत्वादिविशेषणान्वयः, कुण्डलेन भूषित इतिवत् कारकभावश्च भवति । एवं च सति, पारतन्त्र्याबोधनाद् व्यक्त्यबोधनेऽभ्युपगम्यमाने अन्योन्याश्रयः स्याद्—पारतन्त्र्याबोधनाद्विशेष्याबोधनम्, तदबोधनात् पारतन्त्र्याबोधनमिति । किञ्च गवादिशब्दानां विशेष्यबोधनशक्तिविरहे जात्यादिशब्दानामिव पारतन्त्र्यबोधनासामर्थ्यप्रसङ्गः । धर्मिबोधनासामर्थ्यव्याप्यकतया जात्यादिशब्देषु दृष्टं पारतन्त्र्यबोधनासामर्थ्यं गवादिशब्देभ्यो निवर्तमानं स्वव्याप्यं धर्मिबोधनासामर्थ्यं कथं न निवर्तयेत् ॥ द्रव्यांशे

---

1 जातिवाचकं पदं व्यक्तौ लाक्षणिकमिति भट्टमतं क्षेप्तुमाह नन्विति ।

2 लक्षणारूपसंबन्धो नापृथक्सिद्धविशेष्यत्वमित्यर्थः । 3 जातिवाचिनः पदस्य व्यक्तिविषयेऽनुभावकत्वमिति अन्विताभिधानवादिप्रभाकराशयं क्षेप्तुमनुवदति आकृतिरिति ।

शक्तिर्मा भूत्; जातेर्व्यक्तिपारतन्त्र्यमपि गवादिशब्दा बोधयेयुरिति न वाच्यम्—द्रव्यांशे शक्तिविरहितै-र्जात्यादिशब्दैरपि द्रव्यपारतन्त्र्यबोधनप्रसङ्गात्। अतः शब्दशक्तिनिबन्धनैव गवादिशब्दैर्द्रव्यप्रतीतिः।

किञ्च यदि जातिमात्रमेव मुख्यार्थः, तर्ह्यमुख्यभूतद्रव्यपर्यन्तप्रयोगादपि जातिमात्रे गवादिशब्दानां प्रचुरप्रयोगप्रसङ्गः; [1]मुख्यार्थतद्गतगुणसंबन्धिविषयप्रयोगादपि मुख्यार्थे प्रचुरप्रयोगदर्शनात्। गङ्गाग्निसिंहादिशब्दानां कूलमाणवकादिविषयप्रयोगादपि मुख्यार्थे प्रचुरप्रयोगो दृष्टः। न तु व्यक्तिनिष्ठा गौः, व्यक्तिनिष्ठो महिष इति प्रयोगः। जातिरेव मुख्यार्थश्चेत्—गवादिशब्दानां जातिमात्रविषयप्रयोगे त्वतलादिनैरपेक्ष्यं च स्यात्। न हि गङ्गादिशब्दाः प्रवाहादिविषयप्रयोगे भावप्रत्ययान्ताः प्रयुज्यन्ते॥ प्रचुरप्रयोगाभावो भावप्रत्ययापेक्षत्वं च गवादिशब्दानां व्यक्तौ निरूढलक्षणायोगादिति चेन्न। प्रचुरप्रयोगानुगतिर्हि लक्षणाया निरूढिः। ततश्च प्रचुरप्रयोगाभावात्प्रचुरप्रयोगाभाव इति परिहारो न घटते। प्रसङ्गस्य प्रसञ्जनीयाभावपरिहार्यत्वाभावात्। न ह्यग्निमत्त्वप्रसङ्गोऽग्न्यभावात् परिह्रियते। भावप्रत्ययानपेक्षत्वप्रसङ्गश्च दुष्परिहरः; शुक्लादिशब्दानां गुणिबोधने निरूढलक्षणाभ्युपगमेऽपि पटस्य शुक्ल इति गुणमात्रपरप्रयोगे भावप्रत्ययानपेक्षत्वदर्शनात्। शुक्लादिशब्दानां हि लुप्तमतुबर्थलक्षणा परैरभ्युपगता; यथा समासेषु प्रातिपदिकेनाप्रयुक्तविभक्त्यर्थलक्षणेष्यते॥ लक्षणाया निरूढिर्नाम सर्वप्रयोगानुगतिरिति चेन्न; गोशब्दे तदभावप्रसङ्गात्। अनुवृत्तो गोव्यवहार इति गोत्वमात्रेऽपि हि गोशब्दः क्वापि प्रयुज्यते। किञ्च सर्वप्रयोगानुगता वृत्तिर्लक्षणैव न स्यात्; आकृतिविषयवृत्तिवत्॥ ननु अनन्यथासिद्धा वृत्तिर्मुख्या॥ सत्यम्; अनन्यथासिद्धिश्च दर्शिता; अयुतसिद्धविशेषणवाचिशब्दानां विशेष्यलक्षणासामर्थ्याभावस्योपपादितत्वात्। ननु त्वत्पक्षे धर्मिवाचिपदानां भावप्रधाननिर्देशेषु मुख्यैकदेशे लक्षणाऽभिमता; अस्माकं तु गवादिशब्दानां व्यक्तौ लक्षणा। तत्र शक्तेर्विशेषणविशेष्यगोचरत्वकल्पने भवतां गौरवं स्यात्॥ स्यादेव। स तु नात्र दोषः, लाघवेन निर्वाहायोग्यस्थले गौरवस्य दोषत्वाभावात्। लक्षणाश्रयणानुपपत्तिर्हि दर्शिता।

किञ्च गामानयेत्यादिषु व्यक्तिप्रतीतिरर्थसामर्थ्याद्भवति चेत्-तर्हि विवक्षिताया जातेः प्रतिसंबन्धिभूतं द्रव्यमुपसर्जनतया प्रतीयेत। ततश्च पुत्रः पितेतिवत् खण्डो गौरयमिति सामानाधिकरण्यं न स्यात्। पुत्रमानयेत्यत्र हि ममेत्यनुक्तेऽप्यर्थवशात् विवक्षितपुत्रप्रतिसंबन्धिपितृत्वेन प्रतीयमानो देवदत्तः पुत्रं प्रति गुणतया प्रतीयते; न तु विशेष्यत्वेन प्रधानतया; तदवच्छेदार्थत्वात् तस्य। गवादिशब्देषु तु द्रव्यमेव प्रधानतया प्रतीयते। गङ्गायां घोष इत्यत्र प्रवाहस्याविवक्षितत्वात् कूलस्य तदुपसर्जनतया प्रतीत्यभावः। छत्रिणो गच्छन्तीत्यत्र तु अच्छत्रिणां छत्रिप्रतिसंबन्धितया प्रतीयमानत्वाभावात् छत्रिगुणभावेन प्रतीत्यभावः। अतो विवक्षितार्थप्रतिसंबन्धितया प्रतीयमानत्वेऽपि प्रधानतया प्रतीयमानं द्रव्यं शब्दशक्त्यैव प्रतीयते; अयं पुत्रीत्यत्र पुत्रिशब्देन प्रतीयमानपुत्रिवत्।

---

[1] मुख्यार्थतद्गुणयोः संबन्धिनौ लक्ष्यार्थगौणार्थौ तद्विषयप्रयोगादित्यर्थः। इदमेवाह गंगेत्यादिना।

एवं देवमनुष्यादिपिण्डविशिष्टानां जीवानां परमात्मशरीरतया तत्प्रकारत्वाज्जीवात्मवाचिनः शब्दाः परमात्मपर्यन्ताः । अतः परस्य ब्रह्मणः प्रकारतयैव चिदचिद्वस्तुनः पदार्थत्वमिति तत्सामानाधिकरण्येन प्रयोगः । अयमर्थो वेदार्थसङ्ग्रहे समर्थितः ॥

---

किञ्च विशेष्यांशे शक्तिमता रूपिशब्देन रूपप्रतिपत्तिदर्शनात् तद्रहितेन रूपशब्देन विशेष्यप्रतिपत्तिदर्शनाभावाच्च शब्दविशेषोपश्लिष्टविशेष्यप्रतीतिरन्वयव्यतिरेकाभ्यां शब्दशक्तिनिबन्धनेत्यध्यवसीयते । अतो गवादिशब्दानां विशेष्यबोधकत्वं शक्तिनिबन्धनम् ॥

ननु व्यक्तीनामानन्त्यात् ताभिः संबन्धग्रहोऽनुपपन्नः । एकस्यां व्यक्तौ शब्दवाच्यताव्युत्पत्तिश्चेत्—व्यक्त्यन्तरस्य गोशब्दवाच्यत्वं न स्यात् ॥ नैवम् ; यत्र जातिस्तत्रायं शब्द इत्येवंरूपत्वाद्व्युत्पत्तेः । अतो वाच्यतानिमित्तस्यैकत्वात् प्रत्येकव्युत्पत्त्यनपेक्षा, युगपत्सर्वव्यक्तीनां वाच्यताव्युत्पत्तिः, एकैकव्यक्तौ वाच्यतानिमित्तस्य पुष्कलत्वादेकैकव्यक्तेर्वाच्यत्वसिद्धिश्च घटते । कथमनन्तानां व्यक्तीनां बुद्धावारोपणं शक्यमिति चेत्—व्यक्तीनां शब्दवाच्यत्वं प्रतिषेधता त्वया व्यक्तयः प्रतिपन्नाः, न वा ? न चेत्—तासु शब्दवाच्यत्वविषेधोऽनुपपन्नः । "लब्धरूपे क्वचित् किञ्चित् तादृगेव निषिध्यते" । प्रतिपन्नाश्चेत्—किं कतिपयव्यक्तयः प्रतिपन्नाः उत सर्वाः ? प्रथमे सर्वव्यक्तीनां शब्दवाच्यत्वनिषेधायोगः । द्वितीये त्वमिव सर्वे सर्वा व्यक्तीः प्रतिपद्येरन् व्युत्पद्येरंश्च । अतो गवादिशब्दाः स्वशक्त्यैव व्यक्तिबोधकाः । तद्वत् शरीरवाचिशब्दानामपि स्वशक्त्यैव शरीरिपर्यन्तबोधकत्वं सिद्धम् ।

एवं शरीरवाचिशब्दाः शरीरिपर्यन्ताः स्युः ; ततः किं परमात्मचिदचिद्वाचिशब्दानां सामानाधिकरण्यस्येत्यत्राह एवमिति । प्रयोजकाकारं वदन् निगमयति अत इति । एवं तत्त्वमसीतिवाक्येन चिदचिच्छरीरकस्य कारणावस्थस्य कार्यावस्थस्य च ब्रह्मण एकत्वं प्रतिपादितम् । न च प्रकार्यैक्यं कार्यकारणैक्यं चेत्यर्थभेदाद्वाक्यभेदः शङ्कनीयः ; प्रकारित्वस्य पदावगम्यत्वात् । तत्पदं हि प्रकृतवाचकम्, प्रकृतं हि सार्वज्ञ्यादिगुणकं जगच्छरीरकं कारणम् ; 'तदैक्षत' 'एकमेव' 'बहु स्याम्' 'तत्तेजोऽसृजत' 'अनुप्रविश्य नामरूपे व्याकरवाणि' 'सदायतनाः सत्प्रतिष्ठाः' इत्यादिभिरीक्षितृत्वैकत्वानुप्रवेशपूर्वकनामरूपव्याकरणधारणश्रवणात् । अतस्तत्पदं सार्वज्ञ्यादिगुणकजगच्छरीरकब्रह्मपरम् । त्वम्पदं च कार्याचित्संसृष्टजीवविशेषविशिष्टब्रह्मपरम् । अत उभयावस्थस्य ब्रह्मणः चिदचित्प्रकारवत्त्वं पदावगतम् । पदद्वयस्यसमानविभक्त्या कारणावस्थस्य कार्यावस्थस्य च ब्रह्मण एकत्वमवगम्यते । अतो न वाक्यभेदः । अतः [1]कार्यकारणावस्थप्रकार्यैकत्वं तत्त्वमसीति वाक्येन प्रतिपादितम् ॥

परमात्मानं प्रति जगतः शरीरत्वं कथम् ? अस्मिन् सिद्धे शरीरित्वप्रयुक्ता दोषाः स्युः । उक्तस्यानुग्राहकस्य न्यायस्य किमनुग्राह्यं प्रमाणम् ? कथं व्युत्पत्तिविरोधपरिहार इत्यादिशङ्कायामाह अयमर्थ इति ॥

---

[1] ननु प्रकारवत्त्वस्य पदावगम्यत्वेऽपि प्रकार्यैक्यस्य विभक्त्यवगम्यत्वात् वाक्यभेद एवेति शंकायाम्—अनेकस्याप्येकशब्दोपात्तत्वे वाक्यभेदो न मीमांसकेष्टः । वस्तुतः प्रकारिकार्यकारणभेदाभावात् एकमेवैक्यं विभक्तिगम्यम् । तस्मात् प्रकारवत्त्वमैक्यञ्चेत्यर्थद्वयमित्येव वाच्यम् । तत्र न दोषः विशिष्टान्वयादिति समाधिं मनसिकृत्याह कार्यकारणावस्थप्रकारीति ।

**इदमेव शरीरात्मभावलक्षणं तादात्म्यम्, "आत्मेति तूपगच्छन्ति ग्राहयन्ति च" इति वक्ष्यति; "आत्मेत्येव तु गृह्णीयात्" इति च वाक्यकारः ॥**

---

परेण स्वरूपैक्यपरत्वेनोदाहृतं सूत्रं वाक्यकारवचनञ्च व्याचष्टे-इदमेवेत्यादिना । **अत्रायमर्थः सङ्कलय्यानुसन्धेयः—मृषावादिभिः** सामानाधिकरण्यनिर्वाहाः बहुधा कृताः । तत्र सामानाधिकरण्यस्यातद्व्यावृत्तिमुखेन वस्तुमात्रपरत्वं सत्यादिवाक्यनिरूपणेन निरस्तम्; व्यावृत्तीनामुपलक्षणतापक्षे पदान्तरवैयर्थ्यात्; विशेषणत्वाभ्युपगमे मुख्ये संभवति लाक्षणिकार्थस्वीकारायोगाच्च । तत्त्वमसीति वाक्ये चान्वयमुखेन स्वरूपमात्रपरत्वे—तत्पदस्य प्रकृतपरामर्शित्वभङ्गः, पदद्वयलक्षणा, प्रवृत्तिनिमित्तभेदाभावात्सामानाधिकरण्यलक्षणहानिः, उपलक्षणरूपप्रवृत्तिनिमित्ताश्रयणे पदान्तरवैयर्थ्यम्, 'तदैक्षत' इत्याद्युपक्रमविरोधः, उपक्रमोपक्रमविरोधः, श्रुत्यन्तरविरोधः, तिरोधानाद्युपपत्तिरूपतर्कविरोधश्चेति दूषणान्युक्तानि । बाधार्थत्वे च स्वरूपलक्षणा नञर्थलक्षणा चेति पदद्वयलक्षणादयो दोषाः । प्रत्यक्षेण बाधादर्शनाद्बाधपरत्वानुपपत्तिः, पदान्तरेण विरोधिधर्मानुपस्था[प]नेन विरोधाभावाद्बाधकल्पनानुपपत्तिरित्यधिकं दूषणद्वयञ्चोक्तम् । तथा 'सर्वं खल्विदं ब्रह्म' इत्यत्र सामानाधिकरण्यस्य च अतदाकारारोपणनिबन्धनत्वमयुक्तम्, सर्वत्वब्रह्मत्वयोरेकाश्रयत्वाभावेन सामानाधिकरण्यलक्षणाभावात्; परमार्थत ऐकाधिकरण्ये संभवति अपरमार्थैक्यविषयत्वाश्रयणानुपपत्तेश्च । ऐक्यापारमार्थ्ये हि सामानाधिकरण्यवाक्यप्रामाण्यं हीयते; प्रतिपिपादयिषितस्यैक्यस्य मिथ्यात्वात् । एवमचिद्ब्रह्मणोः सामानाधिकरण्यं सत्यानृतयोरैक्याभावादयुक्तम् ।

अन्तःकरणचिन्मात्रयोरैक्याभावात् 'ब्रह्माहमस्मी'ति सामानाधिकरण्यं न घटते ॥ अहंशब्दस्य अन्तःकरणोपहितज्ञप्तिवाचित्वात् तदुपपत्तिरिति चेन्न; अहंशब्दस्यान्तःकरणोपहितज्ञप्तिवाचित्वाभावात्, [1]यथा अहमिच्छामि द्वेष्मीतीच्छादेरहमर्थविशेषणतया व्यवहारात् अहंशब्दस्य नान्तःकरणोपहितेच्छादिवाचित्वम्, एवमहं जानामीति प्रयोगात् तदुपहितज्ञप्तिवाचित्वमप्यहंशब्दस्यानुपपन्नम् । न हि ज्ञप्तिरेव ज्ञप्त्या विशेष्यते । ज्ञातृज्ञेयतदवच्छिन्नज्ञानातिरिक्तस्य कस्यचित् ज्ञानस्य शशविषाणायमानस्य लौकिकबुद्ध्यगोचरत्वात् न तद्विवक्षयाऽहंशब्दप्रयोगोपपत्तिः । अतः अहं ब्रह्मास्मीति सामानाधिकरण्यमयुक्तम् । अन्तःकरणद्वयैक्याभावात् अहमादिशब्दानां पूर्वोक्तन्यायेन तदुपहितज्ञप्तिवाचित्वाभावाच्च अहं मनुरभवमित्यादिसामानाधिकरण्यञ्चानुपपन्नम् । प्राणाद्यचेतनजीवयोरैक्याभावात्, "प्राणोऽस्मि प्रज्ञात्मा", "अहमेवेदं सर्वम्", "मत्तः सर्वमहं सर्वम्" इत्यादि चायुक्तम् । "अहं हरिः सर्वमिदं जनार्दनः" इति जीवेश्वरवाचिनोः अचिदीश्वरवाचिनोश्च शब्दयोः सामानाधिकरण्यमयुक्तम्; जीवेश्वरयोः पृथिव्यादीनां च चिन्मात्रे कल्पितत्वात् । न हि रज्जुकल्पितसर्पभूदलनाम्बुधारावाचिनां शब्दानां मिथः सामानाधिकरण्यम् ॥

अहं हरिः सर्वमित्यादिशब्दानाम् अध्यस्तवाचिनामधिष्ठानभूतब्रह्मपरत्वादेकार्थवृत्तित्वमिति चेन्न; आकृतिवाचिनां व्यक्तिपर्यन्ततयेव अध्यस्तवाचिनां शब्दानामधिष्ठानवाचित्वेन व्युत्पत्त्यभावात् । न हि

---

1 यदि जानामीति सामानाधिकरण्यनिर्वाहायैवाहंशब्दस्य ज्ञप्तिवाचित्वम्, तर्हीच्छावाचित्वमपि स्यादित्याशयेनाह यथेति ।

रजतशब्दस्य शुक्तित्वाश्रयद्रव्यवाचित्वेन व्युत्पत्तिः । तदभावश्च शुक्तिशकलादौ रजतादिशब्द-प्रवृत्तिनिमित्तभूतरजतत्वादेरभावात् ॥ ननु अध्यस्तवाचिनः शब्दाः अधिष्ठाने मुख्यवृत्ताः, इदं रजतमिति वृद्धव्यवहारमूलव्युत्पत्तिसद्भावादिति चेत्—उच्यते । यदर्थविवक्षया शब्दप्रयोगोऽनन्यथासिद्धः, तस्य तद्वाचित्वनिश्चयः । तत्रेदं वक्तव्यम्—अध्यस्तवाचिनः शब्दस्याधिष्ठानपर्यन्तत्वे किं भ्रान्तप्रयोगो मूलम्, उत प्रबुद्धप्रयोगः?। न प्रथमः, रजतपुरोवर्तिनोरनध्यस्तत्वानधिष्ठानत्वबुद्ध्यैव तत्र रजतशब्दप्रयोग इति तस्याध्यस्तवाचिनोऽधिष्ठानपर्यन्तत्वासाधकत्वात् । न ह्यदेवदत्तत्वाज्ञानात् देवदत्तशब्दप्रयोगो देवदत्त-शब्दस्य यज्ञदत्तवाचित्वे मूलं भवति । द्वितीये च रज्जुः सर्प इति प्रयोगः सर्पशब्दस्य प्रागनारोपित-बुद्धिमूलप्रयोगानुवादरूपत्वात् आरोपितविषयशक्तिकल्पने मूलं न स्यात् ॥ नन्वपृथक्सिद्धविशेषण-वाचिशब्दानां विशेष्यपर्यन्तत्वमिष्टम् । अध्यस्तञ्च अधिष्ठानस्यापृथग्विशेषणम्, तस्मिन् सति अवभासात् तेन विना तदनवभासाच्चेति चेत्—न ; अन्यत्र सतो विशेषणस्य पुरोवस्थितं प्रति अपृथक्सिद्ध्यभावात् । अख्यातिपक्षे चाध्यस्तत्वाधिष्ठानत्वयोरेवाभावात् । मृषावादिपक्षे च मृद्विवर्तस्य घटादेः कनकं प्रतीव अविद्याख्यदोषविवर्तस्य रजतस्य पुरोवस्थितं प्रति अपृथग्विशेषणत्वायोगाच्चेति ।

अतो जीवेश्वरसामानाधिकरण्यमयुक्तम् ।

किञ्च तत्त्वमस्यादिवाक्येषु ब्रह्मवाचकपदसमभिव्याहृतं त्वमादिजीववाचिपदं किं मुख्यार्थप्रहाणेन समानाधिकरणम्, उत तत्प्रहाणेन?। प्रथमे वस्तुनः सविशेषत्वम्, दोषार्हतदनर्हयोरैक्यानुपपत्तिश्च । द्वितीये जीवब्रह्मणोरैक्यं न सिध्येत् । जीवभावस्य मिथ्यात्वेनाधिष्ठानमात्रपारमार्थ्यं च न सिध्येत् । प्रकृत्यंशविवक्षि-तार्थैकत्वपरायाः समानविभक्तेस्तदविवक्षितार्थैकत्वप्रतिपादनासामर्थ्यात् ; तदविवक्षितविशेषणमिथ्यात्वप्रति-पादनासामर्थ्याच्च । न हि प्रहृष्टो जनपदः, अग्निर्माणवक इत्यत्र जनपदप्रहर्षवतोरग्निमाणवकयोश्चैकत्वं जनपदत्वाग्नित्वयोर्मिथ्यात्वेन तदधिष्ठानमात्रपारमार्थ्यं च सिध्यति ॥ जनपदशब्देन वाच्यबहिर्भूतो लक्ष्यते, त्वंशब्देन तु वाच्यैकदेशो लक्ष्यत इति, तस्य तत्त्वाविधानेऽधिष्ठानैक्यं विरोधात् जीवभावमिथ्यात्वं च सिध्यतीति चेन्न—त्वमादिशब्दानां ज्ञातृपदसमानाधिकरणानां ज्ञप्तिवैयधिकरण्येन ज्ञप्तिवाचित्वा-सिद्ध्या वाच्यैकदेशलक्षणाया दुर्वचत्वात् । तत्सिद्धावपि नाधिष्ठानैक्यमितराकारमिथ्यात्वञ्च सिध्येत् । न हि दूरस्थस्य पर्वतस्याग्रे ज्वलन्तमग्निं दृष्ट्वा पर्वतो ज्वलित इत्युक्ते पर्वताग्न्योरेकत्वं सान्वादिप्रदेशान्त-रमिथ्यात्वेनाधिष्ठानमात्रपारमार्थ्यं च सिध्यति । अतो विवक्षितैकत्वजीवभावमिथ्यात्वासिद्धिः । अतः सर्वं सामानाधिकरण्यं **मृषावादिनां** विरुद्धम् ।

**औपाधिकभेदाभेदपक्षेऽपि** मुख्यया वृत्त्या सामानाधिकरण्यमनुपपन्नम् । तथा हि—ईश्वर एव हि ब्रह्म तन्मते । जीवेश्वरयोरचिदीश्वरयोश्च क्लेशकर्माद्यर्हत्वतदनर्हत्वपरिणामित्वापरिणा-मित्वलक्षणविरुद्धस्वभावायोगात् तद्वाचिशब्दानां घटपटादिशब्दानामिव न सामानाधिकरण्यम् ॥ भेदवत् अभेदस्यापि विद्यमानत्वात् तदुपपत्तिरिति चेत्, न; सत्यपि केनाप्याकारेणैक्ये प्रवृत्तिनिमित्तभावाभावलक्षणे विशेष्यांशभेदे प्रतीयमाने समानविभक्तेरेकत्वप्रतिपादनासामर्थ्यात् । यतः प्रथमपदप्रतिपन्नवि-शेष्यात् पदान्तर[प्रतिपन्न?]विशेष्यस्यांशतोऽपि भेदासहमभिन्नत्वमेव सामानाधिकरण्यावबोध्यम्, तत्

एवं हि खण्डमुण्डयोर्व्यक्तिजात्यात्मना, घटशरावयोः कार्यकारणरूपेण, गोपुच्छयोरेकदेशैकदेशिभावेन भिन्नत्ववत् अभिन्नत्वेऽभ्युपगम्यमानेऽपि खण्डो मुण्डः, घटः शरावः, गौः पुच्छमिति सामानाधिकरण्याभावः॥

ननु चिदचितोर्ब्रह्मैकदेशत्वात् शुक्लः कृष्णो रक्तश्चायं पट इतिवत् "व्यक्तं विष्णुस्तथाऽव्यक्तं पुरुषः काल एव च" इत्यादिसामानाधिकरण्यमुपपद्यते ॥ नैवम्; एकदेशैकदेशिभावे सत्यपि अङ्गुलिः पुरुष इति सामानाधिकरण्यादर्शनात् ॥ ननु शुक्लादिशब्दतुल्यत्वं किं न स्यात् ॥ उच्यते; पटस्यांशभेदे शुक्लादिशब्दानां पटशब्दश्रवणात्प्राक् मिथस्सामानाधिकरण्याभावे च सत्यपि शौक्ल्यादीनामपृथक्सिद्धविशेषणतया शुक्लादिशब्दैर्विशेष्यपर्यन्तैस्संहत्य चित्रशब्देनेवाभिहिताद्विशेष्यात् पटशब्दाभिहितविशेष्यस्यांशतोऽप्यनतिरेकात् सामानाधिकरण्यम् । हस्तादीनामेकदेशानां छेदनाद्यर्हाणामेकदेशिनं प्रति अपृथक्सिद्धविशेषणत्वं नास्ति; [1]छेदनादावपीन्द्रियाणामविनाशित्वात् तत्तद्गोलकस्याप्रच्युतस्वरूपत्वाच्च ॥ एवञ्च सति छिन्नहस्तादिवत् मृतशरीरस्यापि अप्रच्युतस्वरूपोपलम्भादात्मानं प्रति तस्य नापृथक्सिद्धिः स्यादिति चेत्——न; शरीराख्यसङ्घातशैथिल्यानन्तरमेव आत्मोत्क्रमणात् । पश्चाच्छरीरबुद्धेर्दग्धपटे पटबुद्धिन्यायेन भ्रान्तिरूपत्वात् । हस्तादीनां तु छेदनदशायामशिथिलस्वांशानां पश्चाच्छैथिल्यमिति विशेषः । अतस्तद्वाचिशब्दानां हस्तादिमात्रवाचित्वाद्धस्ताद्यवयवसङ्घातात्मकस्यैकदेशिनो हस्तादिमात्रातिरेकादनतिरेकलक्षणमेकत्वं प्रमाणविरुद्धतया समानविभक्तिर्न प्रतिपादयितुं शक्नोति ॥

ननु हस्तत्वादयो धर्माः शौक्ल्यादिवदपृथक्सिद्धाः घटस्येव शरीरादेरेकदेशे वर्तन्ते । अतः शुक्लः कृष्णः पट इतिवत् हस्तः पादो मनुष्य इति युक्तं वक्तुम् । युक्त्यनभिज्ञत्वाल्लोको न प्रयुङ्क्ते ॥ उच्यते । युक्त्यनभिज्ञोऽभिज्ञोऽपि (विज्ञोऽपि) लोकः शुक्लादिशब्दान् विशेष्यपर्यन्तान् प्रयुङ्क्ते; न तु हस्तादिशब्दान् एकदेशिपर्यन्तान् । अतोऽभिज्ञानभिज्ञप्रयोगानुगुणव्यवस्थापकं वक्तव्यम् । तद् ब्रूमः । केचिदपृथक्सिद्धधर्माः कस्यचिदेकदेश एव नियमेन वर्तन्ते; एकदेशे वाऽन्यत्र वा केचिदनियमेन वर्तन्ते । तत्र नियतैकदेशवृत्तिधर्मवाचिनः शब्दाः तत्तदेकदेशभूतद्रव्यमात्रे वर्तन्ते; एकदेशत्वप्रतीत्युत्पादननियमात् । एकदेशतयैव हि हस्तादयः प्रतीयन्ते । एकदेशवृत्तिनियमरहितधर्मवाचिनः शब्दा एकदेशत्वप्रतीतिनियममपहाय विशेष्ये वर्तन्ते । अतः शुक्लादिशब्दैरेकदेशत्वं हित्वा तदाश्रयमात्रोपस्थापनात् तदुपस्थापिताश्रयात् पटत्वाश्रयस्यानतिरेकात् पटशब्दस्य सामानाधिकरण्यं युक्तम् । एकदेशमात्रोपस्थापकैर्हस्तादिशब्दैरेकदेशिनोऽनुपस्थापितत्वेन हस्तादिप्रातिपदिकप्रतिपन्नविशेष्यातिरेकात् सामानाधिकरण्यमयुक्तम् । यदि क्वचित् सामानाधिकरण्यं विद्यते, तत्र हस्तादिशब्दस्य तद्वति लक्षणया वा मनुष्यादिशब्दस्य तदेकदेशलक्षणया वा प्राधान्याद्यभिप्रायेणोपचारेण वा स्यात् । छिद्रमाकाश इत्यत्र त्वाकाशशब्दस्य समुदायवृत्तित्वाभावेन छिद्रे पुष्कलतया नैकदेशलक्षणा । जीवत्वाचित्त्वादिधर्माश्च त्वन्मते ब्रह्मणो नियतैकदेशवृत्तय इति न तद्वाचिशब्दैरीश्वरवाचिशब्दानां मुख्यया वृत्त्या सामानाधिकरण्यम् ॥

ननु शिरः पाणिरुदरं पादश्च शरीरमिति दृश्यते प्रयोगः । सत्यम्; प्रभूतकृत्स्नावयवोपादाने-

---

1 हस्तादिपदेन तत्तदिन्द्रियग्रहणे तत्तदिन्द्रियस्थानग्रहणे वा सर्वथा तदेकदेशिभूतात् संघातात् पृथक्सिद्धतैवेत्यर्थः । गोलकपदं तत्तदिन्द्रियस्थानसामान्यपरम् ।

अत्रेदं तत्त्वम्—अचिद्वस्तुनः चिद्वस्तुनः परस्य च ब्रह्मणो भोग्यत्वेन भोक्तृत्वेन चेशितृत्वेन च

ऽवयविनस्तदनतिरेकात् सामानाधिकरण्यसंभवः। प्रत्येकं सामानाधिकरण्यं तु [1]एकदेशलक्षणाप्रसङ्गादमुख्यमेव। एवं चिदचिद्विशेषवाचिशब्देष्वेकैकस्येश्वरवाचिपदसामानाधिकरण्यमयुक्तं स्यात्। एकदेशवाचिशब्दानामेकदेशिनि शक्त्यभावात्, 'व्यक्तं विष्णुस्तथाऽव्यक्तम्', 'ज्योतींषि विष्णुर्भुवनानि विष्णुः', भूतानि विष्णुःभुवनानि विष्णुः' इति हि प्रत्येकं सामानाधिकरण्यम्। 'अहं सर्वम्' इत्यचिज्जीववाचिपदयोरपि तद्वदेव सामानाधिकरण्यमयुक्तम्। सर्वत्रामुख्यया वृत्त्या ब्रह्मोपस्थापनेन सामानाधिकरण्ये स एव दोषः; मुख्यसामानाधिकरण्ये संभवत्यमुख्यवृत्त्याश्रयणस्यान्याय्यत्वात्॥

स्वाभाविकभेदाभेदपक्षेऽपि भोक्तृभोग्यनियन्तॄणां त्रयाणामपि ब्रह्मांशत्वाभ्युपगमादचिज्जीवयोरचिदीश्वरयोर्जीवेश्वरयोश्च सामानाधिकरण्यं घटः शराव इतिवदनुपपन्नमित्येतदवस्थितम्। अंशतोऽपि विशेष्यभेदासहस्यैवाभेदस्य सामानाधिकरण्यबोध्यत्वात् तेषां ब्रह्मसामानाधिकरण्यमपि चिन्त्यम्। ब्रह्मवाचिपदानां सत्त्वद्रव्यत्वादिः साधारणाकारः प्रवृत्तिनिमित्तं चेत्, तत्त्वमसीत्युक्ते, सदसि द्रव्यमसीत्युक्तं स्यात्। तदानीमुपदेशवैयर्थ्यम्। न हि कश्चित् अहमसत्, अहमद्रव्यमिति मन्यते॥ सदन्तरैकत्वमुपदेष्टव्यमिति चेन्न; तस्य सामानाधिकरण्यबोध्यत्वाभावात्। सामानाधिकरण्यं हि पूर्वनिर्दिष्टस्य विशेष्यस्य पदान्तरोपस्थापितविशेषणान्वयमवगमयति; न तु तद्विशेषणान्वितवस्त्वन्तरैक्यम्॥ न हि ब्राह्मणस्त्वमसीत्युक्ते त्वंशब्दनिर्दिष्टस्य ब्राह्मणान्तरैक्यं प्रतिपादितं भवति। किंतु तस्य ब्राह्मणत्वविशेषणवैशिष्ट्यमेव। अतो विवक्षितैकत्वासिद्धेरुपदेशवैयर्थ्यमेव। यदि अंशविशेषासाधारणाकारः प्रवृत्तिनिमित्तम्, तदा ब्रह्मादिशब्दानां तदितरांशवाचिपदसामानाधिकरण्ये विरोधः स्यात्। यदा निरतिशयबृहत्त्वं प्रवृत्तिनिमित्तम्, तदा तत्त्वमसीत्युक्ते निरतिशयबृहदसीत्युक्तं स्यात्। ततश्चाणोर्जीवस्य निरतिशयबृहत्त्वविरोधः। त्वं निरतिशयबृहद्वस्तुनोंश इत्यर्थश्चेत्, एकदेशलक्षणा। न हि ब्रह्मशब्दस्य बृहदेकदेशो मुख्यार्थः। एवमसाधारणाकारान्तरस्य प्रवृत्तिनिमित्तत्वेऽप्यनुपपत्तिर्द्रष्टव्या॥

अतः कुदृष्टित्रयप्रत्यनीकं सामानाधिकरण्यं भाष्यकारपक्ष एव मुख्यम्॥

व्याख्यानान्तरोक्तनिर्वाहात् भवदुक्तनिर्वाहस्य किं वैषम्यम्। किञ्च—आत्मभेदे सिद्धे हि शरीरशरीरिभावः। स एव नास्ति; कालविशेषे ऐक्यप्रतिपादनात्; "पुरुषश्चाप्युभावेतौ लीयेते परमात्मनि", "सकाशादात्मनस्तद्वदात्मानः प्रभवन्ति हि" इत्यादिभिश्चिदचितोरुत्पत्तिप्रलयप्रतिपादनात् कार्यकारणयोरेकद्रव्यत्वाच्च। न ह्येकमेव वस्तु शरीरं शरीरि च भवति तस्मात् स्वरूपपरिणामपक्षेणैव निर्वाहो वरमिति शङ्कापरिहारार्थम्, सकलश्रुतीनां मुख्यार्थत्वज्ञापनार्थम्, तेषु तेषु प्रदेशेषु विप्रकीर्णानामुक्तानामर्थानां सङ्कलय्य प्रदर्शनेन सुग्रहत्वापादनार्थञ्चाऽऽरभते अत्रेदं तत्त्वमिति। भोग्यत्वेन भोक्तृत्वेन चेति चशब्द ईशितव्यत्वेन तयोरेककोटिनिवेशात्। 'अस्मान्मायी' इत्यत्र मायाशब्दार्थं निष्कृष्टु-

[1] एवमेव चित्रघटे शुक्लो घट इति व्यवहारोऽप्यवयवे समुदायशब्दप्रयोगादमुख्य एवेत्युक्तौ न क्षतिः। शुक्लः पट इति तु चित्रे एकदेशस्यापि पटत्वात्।

स्वरूपविवेकमाहुः काश्चन श्रुतयः—"अस्मान्मायी सृजते विश्वमेतत् तस्मिंश्चान्यो मायया संनिरुद्धः", "मायां तु प्रकृतिं विद्यान्मायिनं तु महेश्वरम्", "क्षरं प्रधानममृताक्षरं हरः क्षरात्मानावीशते देव एकः"—अमृताक्षरं हर इति भोक्ता निर्दिश्यते, प्रधानमात्मनो भोग्यत्वेन हरतीति हरः—, "स कारणं करणाधिपाधिपो न चास्य कश्चिज्जनिता न चाधिपः", "प्रधानक्षेत्रज्ञपतिर्गुणेशः", "पतिं विश्वस्यात्मेश्वरं शाश्वतं शिवमच्युतम्", "ज्ञाज्ञौ द्वावजावीशनीशौ", "नित्यो नित्यानां चेतनश्चेतनानामेको बहूनां यो विदधाति कामान्", "भोक्ता भोग्यं प्रेरितारं च मत्वा", "तयोरन्यः पिप्पलं स्वाद्वत्त्यनश्नन्नन्यो अभिचाकशीति", "पृथगात्मानं प्रेरितारं च मत्वा जुष्टस्ततस्तेनामृतत्वमेति"; "अजामेकां लोहितशुक्लकृष्णां बह्वीं प्रजां जनयन्तीं सरूपाम्। अजो ह्येको जुषमाणोऽनुशेते जहात्येनां भुक्तभोगामजोऽन्यः", "समाने वृक्षे पुरुषो निमग्नोऽनीशया शोचति

---

मुपादत्ते **मायां तु प्रकृति**मिति। अन्यशब्दवाच्य आत्मेति स्पष्टयितुमाह **क्षरं प्रधान**मिति। अर्थान्तरभ्रमहेतुत्वात् हरशब्दं व्याचष्टे **प्रधान**मिति। अत्र "व्यक्ताव्यक्तं भरते विश्वमीशः" इति पूर्ववाक्ये श्रवणात् धार्यत्वधारकत्वलक्षणभेदोऽपि सिद्धः। ईश्वरेशितव्यतारूपभेदं दर्शयति **स कारण**मिति। करणाधिपाधिपशब्दव्याख्यानार्थमाह **प्रधाने**ति। **गुणेशः**—गुणानां सत्त्वरजस्तमसां नियन्ता। अनन्येश्वरत्वं दर्शयति **पति**मिति। अनेन शेषशेषित्वलक्षणभेदोऽपि सिद्धः। न च—'पा रक्षणे' इति धातोर्व्युत्पन्नत्वात् पतिशब्दो रक्षकवाची, न शेषित्ववाचीति—वाच्यम्; शेषिणि रूढत्वात्। अन्यथा "गमेर्डोः" इति डोप्रत्ययान्तगमिधातोर्निष्पन्नत्वात् गोशब्दस्य मनुष्यादिवाचकत्वप्रसङ्गः॥ गतिमत्सु सर्वेषु प्रयोगाभावात्, तिष्ठत्यपि गवि प्रयोगात् तत्र रूढिशक्त्याश्रय इति चेत्—एवम्, "वृद्धौ च मातापितरौ साध्वी भार्या सुतः शिशुः। अप्यकार्यशतं कृत्वा भर्तव्या मनुरब्रवीत्" इति न्यायेन पितृसंरक्षके पुत्रे पित्राद्यपेक्षया पतिशब्दप्रयोगाभावात् गृहाद्यरक्षकेऽपि स्वामिनि पतिशब्दप्रयोगाच्च शेषिणि पतिशब्दो रूढः। तथा, "दासभूताः स्वतः सर्वे ह्यात्मानः परमात्मनः" तथा, "नन्तव्यः परमः शेषी शेषा नन्तार ईरिताः। नन्तृनन्तव्यभावोऽयं न प्रयोजनपूर्वकः" इति दासशेषशेषिशब्दप्रयोगो भगवच्छास्त्रेषु दृश्यते। पत्यादिशब्दाभावेऽपि, "व्रीहीन् प्रोक्षति" इत्यादौ द्वितीयाश्रुत्या प्रोक्षणादेर्व्रीह्यादिशेषत्ववत्, "यस्यात्मा शरीरम्" इत्यादिना जगतः परमात्मशरीरत्वावगमात् शरीरपारार्थ्यस्य च "[1]सङ्घातपरार्थत्वात्" इत्यादिभिः प्रसिद्धत्वाच्च जगद्ब्रह्मणोः शेषशेषिभावः सिद्धः। अतो यथोक्त एवार्थः। मुखान्तरेणापि भेदसिद्धिं दर्शयति **ज्ञाज्ञा**विति। उत्पत्तिप्रलयाभावप्रतिपादनं दर्शयति **नित्यो नित्याना**मिति। आकारान्तरेणापि भेदमाह **भोक्ते**ति। भगवतोऽस्पृष्टदोषत्वं दर्शयति **तयो**रिति। भेदज्ञानस्य मोक्षहेतुत्वमाह **पृथ**गिति। मुक्तौ[2] भेदमाह **अजा**मिति। जीवेश्वरयोः स्वतो भेदं प्रविशेषत्वं च स्पष्टयितुमाह **समान** इति।

---

1 इयं सांख्यकारिका। अतः संघातः इति पृथक्पाठो न शुद्धः।

2 चिदचिदीश्वरभेदस्यैव प्रसक्तत्वात् बद्धमुक्तभेदप्रतिपादनं कुत इति न शंक्यम्। अस्यापि मुक्तेश्वरभेदप्रतिपादकत्वात्। यो ह्यनुशेते स एव हि पश्चात् जहाति। अतो मुक्ते बद्धान्यत्वाभावात् भुक्तभोगे मुक्ते भोगप्रसंगरहितेशान्यत्वमेव अन्य इति पदाभिमतमिति भावः।

मुह्यमानः। जुष्टं यदा पश्यत्यन्यमीशमस्य महिमानमिति वीतशोकः" इत्याद्याः॥ स्मृतावपि,—

"अहङ्कार इतीयं मे भिन्ना प्रकृतिरष्टधा। अपरेयमितस्त्वन्यां प्रकृतिं विद्धि मे पराम्।
जीवभूतां महाबाहो! ययेदं धार्यते जगत्॥", "सर्वभूतानि कौन्तेय प्रकृतिं यान्ति मामिकाम्।
कल्पक्षये पुनस्तानि कल्पादौ विसृजाम्यहम्॥ प्रकृतिं स्वामवष्टभ्य विसृजामि पुनः पुनः।
भूतग्राममिमं कृत्स्नमवशं प्रकृतेर्वशात्॥", "मयाध्यक्षेण प्रकृतिः सूयते सचराचरम्।
हेतुनाऽनेन कौन्तेय जगद्धि परिवर्तते॥", "प्रकृतिं पुरुषं चैव विद्ध्यनादी उभावपि।",
"मम योनिर्महद्ब्रह्म तस्मिन् गर्भं दधाम्यहम्। संभवः सर्वभूतानां ततो भवति भारत॥"

इति। जगद्योनिभूतं महद्ब्रह्म मदीयम्, प्रकृत्याख्यं भूतसूक्ष्ममचिद्वस्तु यत्, तस्मिंश्चेतनाख्यं गर्भं यत्[1] संयोजयामि, ततो मत्कृताच्चिदचित्संसर्गात् देवादिस्थावरान्तानामचिन्मिश्राणां सर्वभूतानां संभवो भवतीत्यर्थः॥ एवं भोक्तृभोग्यरूपेणावस्थितयोः सर्वावस्थावस्थितयोश्चिदचितोः परमपुरुषशरीरतया तन्नियाम्यत्वेन तदपृथक्स्थितिं परमपुरुषस्य चात्मत्वमाहुः काश्चन श्रुतयः— "यः पृथिव्यां तिष्ठन् पृथिव्या अन्तरो यं पृथिवी न वेद यस्य पृथिवी शरीरं यः पृथिवीमन्तरो यमयति" इत्यारभ्य, "य आत्मनि तिष्ठन्नात्मनोऽन्तरो यमात्मा न वेद यस्यात्मा शरीरं य आत्मानमन्तरो यमयति स त आत्माऽन्तर्याम्यमृतः" इति। तथा, "यः पृथिवीमन्तरे सञ्चरन् यस्य पृथिवी शरीरं यं पृथिवी न वेद" इत्यारभ्य, "योऽक्षरमन्तरे सञ्चरन् यस्याक्षरं शरीरं यमक्षरं न वेद, यो मृत्युमन्तरे सञ्चरन् यस्य मृत्युः शरीरं यं मृत्युर्न वेद, एष सर्वभूतान्तरात्माऽपहतपाप्मा दिव्यो देव एको नारायणः"—अत्र मृत्युशब्देन तमश्शब्दवाच्यं सूक्ष्मावस्थमचिद्वस्त्वभिधीयते; अस्यामेवोपनिषदि, "अव्यक्तमक्षरे लीयते। अक्षरं तमसि

---

[2]पृथक्त्वज्ञानस्य मोक्षोपायत्वपरस्य वाक्यद्वयस्य मध्ये अजामेकामित्यादिवाक्यमुपात्तम्, 'समाने वृक्षे', 'अजामेकाम्' इति प्रधानप्रसङ्गोपेतत्वसाम्यात्। **जुष्टम्**—प्रीयमाणम्। **स्मृतावपी**ति। **अष्टधा भिन्ना प्रकृतिर्ममे**त्यनेन कारणावस्थायामपि भेदसिद्धिः। **मामिकां प्रकृतिं कल्पक्षये यान्ती**त्यत्रापि तथा। **प्रकृतिं स्वामवष्टभ्य विसृजामी**त्यत्रापि तत्सिद्धिः। **मयाऽध्यक्षेणे**त्यत्र तु स्वभावासङ्करः कारणावस्थायां भेदश्च सिध्यतः। **प्रकृति**मित्यत्रानादित्वकण्ठोक्तिः। **ममे**त्यत्रापि कारणावस्थायां भेदसिद्धिः। उदाहृतस्मृतिवचनेषु व्याख्येयांशं व्याचष्टे **जगद्योनी**ति। **जगद्योनि**शब्देन 'त्रिगुणं तज्जगद्योनिः' इति वचनं स्मार्यते। कार्यावस्थव्यावृत्त्यर्थं **भूतसूक्ष्म**मित्युक्तम्। एवं चिदचिदीश्वरभेदे सति कथमेकत्वावधारणमुपपद्यत इति शङ्कायां घटकश्रुतीरवतारयति **एव**मिति। 'यः पृथिवीमन्तरे सञ्चरन्' इति **सुबालोपनिषदि** श्रूयते। मरणयमादिव्यावृत्त्यर्थं **मृत्युशब्दं** व्याचष्टे **अत्रे**ति।

---

1 गीताभाष्ये 13. 2. सर्वमिदं यथाहम्। तत्र यत् इति पदं नास्ति।

2 पृथक्त्वेत्यादि। अयमर्थः—पृथगात्मानमितिवत् अन्यमीशमित्युपात्तने भेदविषयकत्वप्रतिपादकत्वसाम्यात् समाने इति मन्त्रस्य पृथगितिमन्त्रसमनन्तरं ग्राह्यत्वेऽपि समाने इति मन्त्र इव अजामिति मन्त्रेऽपि, पृथगितिमन्त्रपूर्वार्धे 'सर्वाजीवे सर्वसंस्थे बृहन्ते तस्मिन् जीवो भ्राम्यते ब्रह्मचक्रे' इत्यत्रैव प्रधानप्रसंगसत्त्वात् ब्रह्मचक्रपदस्य अजामित्यादिना विवरणाभिप्रायेण तस्य तदनन्तरोक्तिरिति। ब्रह्मचक्रपदस्य परब्रह्मसंबन्धिनि प्रकृतिचक्र इत्यर्थे एवम्। अन्यथा तत्पूर्वमन्त्रे प्रधानप्रसंगोऽग्राह्यः। तद्विवरणार्थमजामित्येतद्ग्रहणम्। एवञ्च अन्य इत्यस्य अजामजुषमाण इत्येतावन्मात्रं नार्थः; किंतु अन्यं जुषमाणः इति। एवं वैशद्यायोक्तं समान इत्यादीति भावः।

लीयते" इति वचनात्—, "अन्तः प्रविष्टः शास्ता जनानां सर्वात्मा" इति च॥

एवं सर्वावस्थावस्थितचिदचिद्वस्तुशरीरतया तत्प्रकारः परमपुरुष एव कार्यावस्थकारणावस्थ-जगद्रूपेणावस्थित इतीममर्थं ज्ञापयितुं काश्चन श्रुतयः कार्यावस्थं कारणावस्थं च जगत् स एवेत्याहुः, "सदेव सोम्येदमग्र आसीदेकमेवाद्वितीयं तदैक्षत बहु स्यां प्रजायेयेति तत्तेजोऽसृजत" इत्यारभ्य, 'सन्मूलाः सोम्येमाः सर्वाः प्रजाः सदायतनाःसत्प्रतिष्ठाः। ऐतदात्म्यमिदं सर्वं तत् सत्यं स आत्मा तत्त्वमसि श्वेतकेतो" इति। तथा, "सोऽकामयत। बहु स्यां प्रजायेयेति। स तपोऽतप्यत। स तपस्तप्त्वा। इदं सर्वमसृजत" इत्यारभ्य, "सत्यं चानृतं च सत्यमभवत्" इत्याद्याः॥ अत्रापि श्रुत्यन्तरसिद्धश्चिदचितोः परमपुरुषस्य च स्वरूपविवेकः स्मारितः, "हन्ताहमिमास्तिस्रो देवता अनेन जीवेनाऽऽत्मनाऽनुप्रविश्य नामरूपे व्याकरवाणि" इति,—"तत् सृष्ट्वा तदेवानुप्राविशत्। तदनुप्रविश्य सच्च त्यच्चाभवत्।....विज्ञानं चाविज्ञानं च सत्यञ्चानृतं च सत्यमभवत्" इति च। "अनेन जीवेनाऽऽत्मनाऽनुप्रविश्य" इति जीवस्य ब्रह्मात्मकत्वम्, 'तदनु प्रविश्य सच्च त्यच्चाभवत्', 'विज्ञानं चाविज्ञानञ्च' इत्यनेनैकार्थ्यादात्मशरीरभावनिबन्धनमिति विज्ञायते। एवम्भूतमेव नामरूपव्याकरणम्, "तद्धेदं तर्ह्यव्याकृतमासीत् तन्नामरूपाभ्यां व्याक्रियत" इत्यत्राप्युक्तम्।

अतः कार्यावस्थः कारणावस्थश्च स्थूलसूक्ष्मचिदचिद्वस्तुशरीरः परमपुरुष एवेति कारणात्कार्यस्यानन्यत्वेन कारणविज्ञानेन कार्यस्य ज्ञाततया एकविज्ञानेनसर्वविज्ञानं [च]

---

**लीयत इति वचनात्।** क्रमप्रत्यभिज्ञानादित्यर्थः। 'यस्याव्यक्तं शरीरं यस्याक्षरं शरीरं यस्य मृत्युः शरीरम्' इति क्रमो हि 'अव्यक्तमक्षरे लीयते अक्षरं तमसि लीयते' इति क्रमेण सङ्गच्छते। तमस एकीभावमात्रं श्रुतम्, न लयः; तमस्त्वप्रहाणाभावात्। कार्यानुपयुक्ततमश्शरीरके देवे कार्योपयुक्तस्य तस्यैकीभावः। मृत्युसंज्ञस्य तमसः शरीरत्वश्रवणात् विशेषणभूततमसा तमस एकीभावो युक्तः। सर्वात्मत्वविवरणायाह **अन्तः प्रविष्ट इति।** अनेनापि शरीरात्मभावः फलितः। **अन्तः प्रविश्य नियाम्यत्वं हि शरीरत्वम्।** अन्तःप्रवेशशास्तिभ्यां [1]नृपगगनव्यावृत्तिरिति। एतदपि शरीरलक्षणं भाष्यकाराभिप्रेतम्। भेदश्रुतिघटकश्रुत्यविरोधिनैक्यवाक्यानामर्थमाह **एवमिति।** घटकतयोपात्तं **सन्मूला इति। अत्रापीति।** छान्दोग्यप्रकरणे तैत्तिरीयप्रकरणे चेत्यर्थः। **हन्ताहमित्यादि** छादोग्ये। **तत्सृष्ट्वेत्यादि** तैत्तिरीये। **जीवेनात्मनेत्यस्य** व्याख्यानार्थमाह **अनेनेति।** अनुप्रवेशश्रवणाभावेऽपि सामान्येनोक्तं नामरूपव्याकरणमनुप्रवेशपूर्वकनामरूपव्याकरणे पर्यवस्यति सामान्यविशेषन्यायादित्याह **एवम्भूतमेवेति।** यद्वा सर्वशाखाप्रत्ययन्यायेन क्वचिदनुक्तस्यान्यतो ग्राह्यत्वात् क्वचित् ज्ञातोऽनुप्रवेशः कार्योपयोगितया अपेक्षितत्वादन्यत्रापि स्वीकार्य इत्याह **एवमिति। एवम्भूतशब्दो**ऽनुप्रवेशपूर्वकत्वपरः। अनेन नामरूपव्याकरणश्रुत्युपादानेन जीवानामुत्पत्तिप्रलयौ नामरूपव्याकरणतदभावौ; न तु स्वरूपनिष्पत्तिविनाशावित्युक्तं भवति। अनेन पूर्वोक्तशङ्का च परिहृता; कालविशेषोक्तमैक्यं नामरूपव्याकरणाभावमात्रम्; न तु स्वरूपैक्यमित्यवगमात्॥

अथ सर्वश्रुतीनामस्मिन्नर्थे मुख्यत्वं दर्शयन् प्रथममेकविज्ञानेन सर्वविज्ञानं परमतेऽनुपपन्नमिति प्रागुक्तं स्वमत उपपन्नमित्याह **अत इति।** कार्यकारणयोरैक्यप्रतिपादनात् एकविज्ञानेन सर्वविज्ञानप्रतिज्ञानात्

---

1 शासितरि नृपे अन्तः प्रविष्टत्वं न; अन्तःप्रविष्टे गगने शासितृत्वं नेति न तयोरात्मत्वम्।

समीहितमुपपन्नतरम् । "अहमिमास्तिस्रो देवता अनेन जीवेनात्मनाऽनुप्रविश्य नामरूपे व्याकरवाणि" इति, 'तिस्रो देवता' इति सर्वमचिद्वस्तु निर्दिश्य तत्र स्वात्मकजीवानुप्रवेशेन नामरूपव्याकरणवचनात् सर्वे वाचकाः शब्दाः अचिद्विशिष्टजीवविशिष्टपरमात्मन एव वाचका इति कारणावस्थपरमात्मवाचिना शब्देन कार्यवाचिनः शब्दस्य सामानाधिकरण्यं मुख्यवृत्तम् । अतः स्थूलसूक्ष्मचिदचित्प्रकारकं ब्रह्मैव कार्यं कारणं चेति ब्रह्मोपादानं जगत् ।

सूक्ष्मचिदचिद्वस्तुशरीरं ब्रह्मैव कारणमिति ब्रह्मोपादानत्वेऽपि संघातस्योपादानत्वेन चिदचितोर्ब्रह्मणश्च स्वभावासङ्करोऽप्युपपन्नतरः । यथा शुक्लकृष्णरक्ततन्तुसङ्घातोपादानत्वेऽपि चित्रपटस्य तत्तत्तन्तुप्रदेश एव शौक्ल्यादिसंबन्ध इति कार्यावस्थायामपि न सर्वत्र वर्णसङ्करः, तथा चिदचिदीश्वरसङ्घातोपादानत्वेऽपि जगतः कार्यावस्थायामपि भोक्तृत्वभोग्यत्वनियन्तृत्वाद्यसङ्करः । तन्तूनां पृथक्स्थितियोग्यानामेव पुरुषेच्छया कदाचित्संहतानां कारणत्वं कार्यत्वञ्च । इह तु चिदचितोः सर्वावस्थयोः परमपुरुषशरीरत्वेन तत्प्रकारतयैव पदार्थत्वात् तत्प्रकारः परमपुरुषः सर्वदा सर्वशब्दवाच्य इति विशेषः । स्वभावभेदः तदसङ्करश्च तत्र चात्र च तुल्यः । एवञ्च सति परस्य ब्रह्मणः कार्यानुप्रवेशेऽपि स्वरूपान्यथाभावाभावादविकृतत्वमुपपन्नतरम् । स्थूलावस्थस्य नामरूपविभागविभक्तस्य चिदचिद्वस्तुन आत्मतयाऽवस्थानात् कार्यत्वमप्युपपन्नतरम् । अवस्थान्त-

---

सामानाधिकरण्याच्चेति त्रिधा ह्यद्वैतप्रतीतिः । अत्र पूर्वोक्तद्वयमस्मदुक्तप्रकारेणोपपन्नमिति अत इत्यादिभाष्येणोक्तं भवति । विशिष्टं कारणम्, तदेव कार्यमिति कारणात् कार्यस्यानन्यत्वम् । अतः कार्यकारणयोरैक्यपराणां श्रुतीनां तयोरेकद्रव्यत्वमेव प्रतिपाद्यम्; न तु विशिष्टत्वनिषेधः, तस्य विहितत्वात् । एकविज्ञानेन सर्वविज्ञानमपि एवमेव । यथा मृत्पिण्डेन तत्कार्यज्ञानेऽपि पिण्डगतरूपादिनिषेधो न कृतः स्यात्, तद्वत् । उपपन्नतरमिति तरप्प्रत्ययेन मुख्यत्वं सर्वत्रापि विवक्षितम् । एवं सद्विद्योपक्रमगतस्य एकविज्ञानेनसर्वविज्ञानस्य मुख्यत्वमुक्तम् । अथ तदुपसंहारगतस्य तत्त्वमसीति सामानाधिकरण्यस्य मुख्यत्वमाह अहमिमा इति । उपादानत्वस्वभावासङ्करौ कथमुपपद्येते इत्यत्राह अतः स्थूलेति । भाव्यवस्थाविशेषवतः प्रागवस्थायोगो ह्युपादानत्वम् । अतोऽवस्थाविशेषौ स्थूलसूक्ष्मशब्दाभ्यां दर्शितौ । अनेन कालविशेषावच्छिन्नैकत्वावधारणं नामरूपविभागाभावाभिप्रायमिति फलितम् । उपादानत्वेऽपि स्वभावासङ्करमाह सूक्ष्मेति । दृष्टान्तेनेममर्थमुपपादयति यथेति । ननु शुक्लकृष्णादितन्तवः कारणावस्थायामपि भिन्नाः । न च तेष्वन्यतमं प्रति अन्यतमस्य कारणत्वम् । अतस्तत्र स्वभावासङ्करः । अत्र तु विश्वस्य सङ्घातोपादानत्वेऽपि कारणवस्थायां परमात्मैक एव स्वशब्देन श्रूयते; न तु चेतनाचेतनौ । किञ्च परमात्मनः प्रागेकत्वं तस्मादितरयोर्द्वयोरुत्पत्त्यादिकं च श्रूयते । अतो न स्वभावासङ्कर इत्यत्राह तन्तूनामिति । न हि तन्तुष्वन्योन्यगुणप्रधानभावोऽस्तीति न तत्रान्यतमवाचिशब्देन समुदाय उच्यते । अत्र तु सर्वप्रकारस्य भगवतः सर्वशब्दवाच्यत्वमुपपन्नमित्यन्यतमवाचिशब्देनापि विशिष्टमेवोच्यत इति विशिष्टस्यैव कारणत्वात् प्रागपि भेदोऽस्तीति स्वभावासङ्कर उपपन्न इत्यर्थः । केनाकारेण साधर्म्यमित्यत्राह स्वभावेति । रुमागतेतरपदार्थानां लवणत्वापत्तिवत् ब्रह्मणोऽन्यथाभावमाशङ्क्याह एवञ्चेति । तर्ह्युपादानत्वमेवानुपपन्नमित्यत्राह स्थूलावस्थस्येति । आत्मतयाऽवस्थानात् कथं कार्यत्वमित्यत्राह अवस्थेति । अविकारत्वश्रुतीनां प्रकृतिगतस्वरूपान्यथाभावरूपविकारो ब्रह्मणि नास्तीत्यर्थः । कार्यावस्थचिदचिन्निय-

यापत्तिरेव हि कार्यता ॥ निर्गुणवादाश्च परस्य ब्रह्मणो हेयगुणासंबन्धादुपपद्यन्ते । "अपहतपाप्मा विजरो विमृत्युर्विशोको विजिघत्सोऽपिपासः" इति हेयगुणान् प्रतिषिध्य, "सत्यकामस्सत्यसङ्कल्पः" इति कल्याणगुणान् विदधती इयं श्रुतिरेवान्यत्र सामान्येनावगतं गुणनिषेधं हेयगुणविषयं व्यवस्थापयति ॥

ज्ञानस्वरूपं ब्रह्मेति वादश्च सर्वज्ञस्य सर्वशक्तेर्निखिलहेयप्रत्यनीककल्याणगुणाकरस्य ब्रह्मणः स्वरूपं ज्ञानैकनिरूपणीयं स्वयम्प्रकाशतया ज्ञानस्वरूपं चेत्यभ्युपगमादुपपन्नतरः । "यः सर्वज्ञः सर्ववित्", "पराऽस्य शक्तिर्विविधैव श्रूयते स्वाभाविकी ज्ञानबलक्रिया च", "विज्ञातारमरे केन विजानीयात्" इत्यादिकाः ज्ञातृत्वमावेदयन्ति ; "सत्यं ज्ञानम्" इत्यादिकाश्च ज्ञानैकनिरूपणीयतया स्वप्रकाशतया च ज्ञानस्वरूपताम् ॥ 334

सोऽकामयत बहु स्याम्', 'तदैक्षत बहुस्याम्', 'तन्नामरूपाभ्यां व्याक्रियत" इति ब्रह्मैव स्वसङ्कल्पाद्विचित्रस्थिरत्रसरूपतया नानाप्रकारमवस्थितमिति तत्प्रत्यनीकाब्रह्मात्मकवस्तुनानात्वमतत्त्वमिति तत् प्रतिषिध्यते, 'मृत्योः स मृत्युमाप्नोति य इह नानेव पश्यति', 'नेह नानास्ति किञ्चन',

---

मनरूपावस्थान्तरापत्तिर्ब्रह्मणः कार्यत्वमिति कार्यत्ववादिनीनां श्रुतीनामर्थः । न हि कारणावस्थनियमनं कार्यावस्थनियमनं भवति । तत्तदवस्थचिदचिन्नियमनरूपविशेषा एव ब्रह्मणोऽद्वारकावस्थाः । स्वरूपान्यथाभावज्ञानसङ्कोचादिरूपविकारास्तु सद्वारकावस्था इत्यर्थः । यथा [1]ग्राहकग्रहणेन संनिधिसमाम्नातेषु वस्तुषु परमापूर्वशेषतयाऽवगतेषु यागव्रीह्यादेरद्वारकशेषत्वं प्रोक्षणादेः सद्वारकशेषत्वं च मुख्यमेवावगम्यते, तथा बहु स्यामिति ग्राहकग्रहणेन सर्वावस्थासु परमात्मीयतयाऽवगतासु स्वरूपान्यथाभावज्ञानसङ्कोचादिरूपसद्वारकावस्थायाः तत्तन्नियमनरूपाद्वारकावस्थायाश्च परमात्मीयत्वं मुख्यमेवेति भावः । **निर्गुणेति अपहतपाप्मेत्यादि** चात्र किञ्चिद्विवृतम् । **श्रुतिरेवेति** । मतान्तरोक्तनिर्वाहेषु श्रुतहानिरश्रुतकल्पनं चास्ति ; अत्र तु निर्वाहः श्रौत एव, श्रुतानुगुणश्चेति वैषम्यमिति भावः ।

अथ आर्थगुणनिषेधपरत्वेन पराभिमतानां श्रुतीनामर्थमाह **ज्ञानस्वरूपमिति** । **सर्वज्ञस्येत्यादि**पदानि मङ्गलगुणविशेषनिर्धार्यविवक्षयसरणार्थानि । "तद्गुणसारत्वात्" इत्यादिसूत्रसिद्धमेवात्र निर्वाहद्वयमुक्तम् । ईश्वरस्य ज्ञातृत्वात् **ज्ञानैकनिरूपणीयत्वमुक्तम्** । ज्ञातुर्हि ज्ञानं निरूपकम् । तरपो मुख्यत्वमर्थः । ज्ञानस्वरूपत्वज्ञानगुणकत्वपराः श्रुतीर्दर्शयति **यः सर्वज्ञ** इति । **ज्ञानस्वरूपताम्**—उभयथापि ज्ञानव्यपदेशयोग्यताम् । ज्ञानगुणकत्वस्य ज्ञानस्वरूपत्वस्य च विहितत्वादुभयमप्युपपन्नमित्यर्थः । ज्ञानस्य ज्ञानाश्रयत्वानुपपत्तिचोद्यपरिहारः पूर्वमेव कृतः ॥

भेदनिषेधश्रुतीनामर्थमाह **सोऽकामयतेति** । **विचित्रस्थिरत्रसरूपतया**—विचित्रस्थिरत्रसशरीरतया । **अब्रह्मात्मकेति** ब्रह्मान्तर्यामिकत्वरहितत्वमुक्तम् ; विहितव्यतिरिक्तं स्वनिष्ठवस्तुनानात्वमित्यर्थः । यद्वा **स्थिरत्रसरूपतया**—स्थिरत्रसात्मकत्वात् । **अब्रह्मात्मकेति** । अब्रह्मभूतमित्यर्थः । तथा सति कार्यकारणभेदनिषेधः कृतः स्यात् । ऐक्यश्रुतीनां प्रकार्यैक्यपरत्वादैक्यश्रुतिशेषभूतभेदनिषेधोऽपि

---

1 यजेत स्वर्गकाम इति फलवाक्यावगतो नियोगः समीपश्रुताफलवाक्यार्थान् स्वयं गृह्णाति । तेषां द्रव्यादीनाञ्च तत्संबन्धो यथाप्रमाणं साक्षाद्वा परम्परया वा भवति, न तु साक्षादेवेति प्राभाकरोक्तम् । तद्वदिह परमात्मना कार्यावस्थानां गृहीतानां तत्संबन्धः साक्षात् परम्परया वा यथाप्रमाणमित्यर्थः ।

'यत्र हि द्वैतमिव भवति तदितर इतरं पश्यति। यत्र त्वस्य सर्वमात्मैवाभूत्, तत् केन कं पश्येत् तत्केन कं विजानीयादित्यादिना। न पुनः, 'बहु स्यां प्रजायेय' इत्यादिश्रुतिसिद्धं स्वसङ्कल्पकृतं ब्रह्मणो नानानामरूपभाक्त्वेन नानाप्रकारत्वमपि निषिध्यते। 'यत्र त्वस्य सर्वमात्मैवाभूत्' इत्यादिनिषेधवाक्यादौ[1] च तत् स्थापितम्—'सर्वं तं परादात्, योऽन्यत्रात्मनः सर्वं वेद', तस्य ह वा एतस्य महतो भूतस्य [2]निश्वसितमेतत् यदृग्वेदो यजुर्वेदः इत्यादिना॥

एवं चिदचिदीश्वराणां स्वरूपभेदं स्वभावभेदं च वदन्तीनां कार्यकारणभावं कार्यकारणयोरनन्यत्वञ्च वदन्तीनां सर्वासां श्रुतीनामविरोधः, चिदचितोः परमात्मनश्च सर्वदा शरीरात्मभावं शरीरभूतयोः कारणदशायां नामरूमविभागानर्हसूक्ष्मदशापत्तिं कार्यदशायां च तदर्हस्थूलदशापत्तिं वदन्तीभिः श्रुतिभिरेव ज्ञायत इति ब्रह्माज्ञानवादस्य औपाधिकब्रह्मभेदवादस्य अन्यस्याप्यपन्यायमूलस्य सकलश्रुतिविरुद्धस्य न कथञ्चिदप्यवकाशो दृश्यते। चिदचिदीश्वराणां पृथक्स्वभावतया तत्तच्छ्रुतिसिद्धानां शरीरात्मभावेन प्रकारप्रकारितया श्रुतिभिरेव प्रतिपन्नानां पन्नतया) श्रुत्यन्तरेण कार्यकारणभावप्रतिपादनं कार्यकारणयोरैक्यप्रतिपादनं च द्यवि-

---

तदनुरोधेन प्रकारिभेदनिषेध एव भवितुमर्हतीत्यर्थः। निषेधसामान्यं हि विशेषविधाने दृष्टे तद्व्यतिरिक्तविषयं दृष्टम्, 'न हिंस्यात्' इत्यादिषु। विशेषविधानं सामान्यनिषेधो बाधते चेत्—वैधहिंसाया अधर्मत्वप्रसङ्ग इत्यभिप्रायेणाह **न पुन**रिति। उक्तमर्थमुपक्रमेणैवोपपादयति **यत्र त्वस्ये**ति। **योऽन्यत्रात्मन** इति। **अन्यत्रे**त्यव्ययं विनाशब्दपर्यायम्। ब्रह्मणः पृथग्भूतं तदविनाभावरहितं नास्तीत्यर्थः। भेदविशेषनिषेधदर्शनात् सामान्येन भेदनिषेधोऽपि तत्रैव पर्यवस्यति, 'छागो वा मन्त्रवर्णात्' इति न्यायादिति भावः।

इतरव्याख्यातृभिः, भवद्भिरपि निर्वाहप्रकाराः कृताः; तत्र को विशेष इत्यत्राह **एव**मिति। अस्मदुक्तनिर्वाहः श्रुतिभिरेवोक्तः, श्रुत्यनुगुणश्च; तत्कृतनिर्वाहः श्रुतिविरुद्धः, अश्रुतः, तर्काभासमूलश्चेत्यर्थः। **अपन्यायमूलस्य सकलश्रुतिविरुद्धस्ये**ति सर्वत्रान्वेति। **अन्यस्ये**ति स्वाभाविकभेदाभेदं स्वनिष्ठभेदं चाह। इममर्थं वैदिकदृष्टान्तेनोपपादयति **चिदचिदीश्वराणा**मिति। [3]आग्नेयः अग्नीषोमीयोपांशुयाजौ

---

[1] वाक्यादौ—वाक्योपक्रमे।

[2] निश्वसितरूपत्वकथनात् प्राणं प्रत्येव वेदादिकं सर्वं प्रति आधारत्वमुक्तम्।

[3] यदाग्नेय इत्याग्नेयविधायकवाक्यस्यैकत्वेऽपि तत्रोत्पत्तिवाक्य एव कालद्वयश्रवणात् यागद्वयमेव विधीयत इति नवीनमीमांसकसरणिः प्रागेव भाष्यकारैरिह स्वयं निर्धारिता। टीकायां तु प्राचीनपक्षेऽपि निर्वाहार्थं ऐन्द्राग्नमेलनम्। वस्तुसत्त्वमात्रेण षट्त्वकथनेऽपि षण्णामपि फलार्थं मेलने भाष्यस्य न तात्पर्यम्; अनेकसमुच्चयमात्र एव तात्पर्यम्। अतः असंनयतः ऐन्द्राग्नविधानात् तत्काले ऐन्द्रयागामेलनेऽपि न दोष इति टीकाशयः। आग्नेयैकत्वपक्षेऽपि दर्शपौर्णमासीरूपकालभेदावच्छिन्नव्यक्त्योर्द्वित्वेन व्यक्तिषट्कस्यैव फलहेतुत्वात् तावतैव षण्णामिति भाष्यमुपपन्नमिति च ध्येयम्।

रूद्धम् । यथा—आग्नेयादीन् षड् यागान् उत्पत्तिवाक्यैः पृथगुत्पन्नान् समुदायानुवादिवाक्यद्वयेन समुदायद्वयत्वमापन्नान् "दर्शपूर्णमासाभ्याम्" इत्यधिकारवाक्यं कामिनः कर्तव्यतया विदधाति—तथा चिदचिदीश्वरान् विविक्तस्वरूपस्वभावान्, "क्षरं प्रधानममृताक्षरं हरः क्षरात्मानावीशते देव एकः", "पतिं विश्वस्यात्मेश्वरम्", "आत्मा नारायणः परः" इत्यादिवाक्यैः पृथक् प्रतिपाद्य, "यस्य पृथिवी शरीरम्", "यस्यात्मा शरीरम्", "यस्याव्यक्तं शरीरम् । यस्याक्षरं शरीरम् । एष सर्वभूतान्तरात्मा अपहतपाप्मा दिव्यो देव एको नारायणः" इत्यादिभिर्वाक्यैश्चिदचितोः सर्वावस्थावस्थितयोः परमात्मशरीरतां परमात्मनस्तदात्मताञ्च प्रतिपाद्य शरीरिभूतपरमात्माभिधायिभिः सद्ब्रह्मात्मादिशब्दैः कारणावस्थः कार्यावस्थश्च परमात्मैक एवेति पृथक् प्रतिपन्नं वस्तुत्रितयम् 'सदेव सोम्येदमग्र आसीत्', 'ऐतदात्म्यमिदं सर्वम्', 'सर्वं खल्विदं ब्रह्म' इत्यादिवाक्यं प्रतिपादयति । चिदचिद्वस्तुशरीरिणः परमात्मनः परमात्मशब्देनाभिधाने हि नास्ति विरोधः, यथा मनुष्यपिण्डशरीरकस्यात्मविशेषस्य अयमात्मा सुखीत्यात्मशब्देनाभिधाने इत्यलमतिविस्तरेण ॥

---

ऐन्द्रौ द्वौ ऐन्द्राग्नश्चेति षड्यागाः । [1]उत्पत्तिवाक्यैः—"यदाग्नेयोऽष्टाकपालोऽमावास्यायां पौर्णमास्यां चाच्युतो भवति" इत्येवमादिभिः । उत्पत्तिवाक्यमिति प्रथमप्रतिपत्तिजनकं वाक्यम् [उच्यते ? ।] पृथगुत्पन्नान्—पृथक् प्रतिपादितान् । समुदायानुवादिवाक्यद्वयेन—"य एवं विद्वान् पौर्णमासीं यजते', 'य एवं विद्वानमावास्यां यजते" इत्येताभ्याम् । दर्शपूर्णमासाभ्यामिति । स्वर्गसाधनत्वाकारेणैकीकृत्य तत्कर्तव्यतया विदधातीत्यर्थः । तथा अत्रार्थप्रतिपादनं दर्शयति तथेति शरीरिभूतेति । कारणावस्थः कार्यावस्थश्च परमात्मैक एवेति वचनभङ्ग्या पृथक्प्रतिपन्नं वस्तुत्रितयं प्रतिपादयतीत्यर्थः । आग्नेयादिसमुदाये अन्यतमवाचिशब्दैः समुदायाभिधानं न दृष्टम्; अत्र तु परमात्मवाचिशब्देन समुदायाभिधानं कथमित्यत्राऽऽह चिदचिद्वस्त्विति । दृष्टान्तमाह यथेति । तत्र अन्योन्यं प्रकारप्रकारिभावाभावादन्यतमवाचिशब्देन न समुदायाभिधानम्; अत्र तु तथाभावादुपपन्नम् ॥ कथम् । उच्यते; अर्थसामर्थ्यात् शब्दसामर्थ्याच्च । चिदचितोरपृथक्सिद्धप्रकारत्वात् निकृष्टब्रह्मणः कारणत्वानुपपत्त्या च प्रकारिवाचिशब्देन विशिष्टोपस्थापनसिद्धिः । सद्ब्रह्मशब्दौ विशिष्टस्य सत्त्वबृहत्त्वयोगाद्विशिष्टोपस्थापनसमर्थौ । आत्मशब्दश्च व्याप्तिरूपप्रवृत्तिनिमित्तस्य व्याप्यसापेक्षत्वाद्विशिष्टोपस्थापक इति । यद्वा "अक्षरात् संभवतीह विश्वम्", "यः सर्वज्ञः सर्ववित् यस्य ज्ञानमयं तपः । तस्मादेतद्ब्रह्म नामरूपमन्नं च जायते", "आत्मन आकाशः संभूतः" इत्यादिषु परमात्ममात्रवाचिभिः शब्दैः कारणमुच्यते । तेषां विशेषणभूतचिदचिदभिधाने शक्तिर्नास्ति । लक्षणायां स एव दोषः । अतः सर्वत्र स्वरूपपरिणाम एव स्वरसप्राप्त इत्यत्राह—चिदचिदिति । श्रुत्यन्तरबलेन स्वरूपविकारासंभवात् कार्योपयुक्तमनुक्तमपि विशेषणं [2]पृषदाज्यनयादर्थस्वभावेन संनिधापितमनुसन्धेयमिति भावः । तदेव लोकप्रयोगेणापि द्रढयति—यथेति । अयमात्मा सुखीत्यात्मविशेषस्य सुखित्वविधाने शरीररहितस्यात्मनो वैषयिकसुखासंभवात् तादृशसुखोपयुक्तमनुष्यादिपिण्डविशिष्टत्वमर्थतः सिध्यति; तद्वदिति भावः ॥

---

1 अत्र पाठपरिवर्तनं भावप्रकाशिकानुसारात्

२ दधिविशिष्टाज्यरूपपृषदाज्यस्य, 'देवानाज्यपानावह' इति मन्त्रे आज्यपदेनैव ग्रहणादिति भावः ।

यत्पुनरिदमुक्तम्—ब्रह्मात्मैकत्वविज्ञानेनैवाविद्यानिवृत्तिर्युक्तेति—तदयुक्तम् ; बन्धस्य पारमार्थिकत्वेन ज्ञाननिवर्त्यत्वाभावात् । पुण्यापुण्यरूपकर्मनिमित्तदेवादिशरीरप्रवेशतत्प्रयुक्तसुखदुःखानुभवरूपस्य बन्धस्य मिथ्यात्वं कथमिव शक्यते वक्तुम् ।

एवंरूपबन्धनिवृत्तिर्भक्तिरूपापन्नोपासनप्रीतपरमपुरुषप्रसादलभ्येति पूर्वमेवोक्तम् । भवदभिमतस्यैक्यज्ञानस्य यथावस्थितवस्तुविपरीतविषयस्य मिथ्यारूपत्वेन बन्धविवृद्धिरेव फलं भवति ; "मिथ्यैतदन्यद्द्रव्यं हि नैति तद्द्रव्यतां यतः" इति शास्त्रात् ; "उत्तमः पुरुषस्त्वन्यः", "पृथगात्मानं प्रेरितारं च मत्वा" इति जीवात्मविसजातीयस्य तदन्तर्यामिणो ब्रह्मणो ज्ञानं परमपुरुषार्थलक्षणमोक्षसाधनमित्युपदेशाच्च ॥

अपि च भवदभिमतस्यापि निवर्तकज्ञानस्य मिथ्यारूपत्वात् तस्य निवर्तकान्तरं मृग्यम् ॥ निवर्तकज्ञानमिदं स्वविरोधि सर्वं भेदजातं निवर्त्य, क्षणिकत्वात् स्वयमेव नश्यतीति चेत्—न ;

---

**निवृत्त्यनुपपत्तिं** वक्तुमनुवदति **यत् पुनरि**ति । दूषयति **तदयुक्तमि**त्यादिना । प्रपञ्चस्य ज्ञानबाध्यत्वं ज्ञानस्य चैक्यविषयत्वमुभयमपि पराभिमतम् । तत्र प्रथमं ज्ञानबाध्यत्वानुपपत्तिमाह **बन्धस्ये**ति । सर्वप्रमाणानुगुणं पारमार्थ्यमुपपादयति **पुण्यापुण्ये**ति । प्रतीतिमात्रसिद्धस्य हेतुहेतुमद्भावनियमोऽनुपपन्नः; परमार्थस्यैवार्थक्रियाकारित्वादुत्पत्तिमत्त्वाच्च । असत्यस्य हेतुत्वासंभवमुत्पत्त्यसंभवं च प्रागुपपादितमुपजीव्योक्तम् । न हि प्रतीतिमात्रसिद्धमन्यत्र विद्यमानं वस्त्विह किमप्युत्पादयति ; नापि स्वयमिदानीमुत्पाद्यते । किञ्च अपरमार्थस्य भ्रान्तिज्ञानसामग्रीव्यतिरिक्तहेतुसापेक्षत्वं च न दृष्टम् । न चाङ्कुरादिसामग्र्येव भ्रमसामग्री; गिरिशिखरगतमृत्सलिलबीजसंबन्धेन अपवरकगतस्याङ्कुरभ्रमप्रसङ्गात् । न च पदार्थानामर्थक्रियाकारित्वमुत्पत्तिमत्त्वं च मिथ्येति वाच्यम्, ज्ञानबाध्यत्वाभावात् । किञ्च [1]**मिथ्यात्वे पापकरणेऽपि न प्रायश्चित्तापेक्षा, मिथ्येति बुद्धिरेवाल**मिति भावः ।

भवताऽपि ज्ञाननिवर्त्यत्वमविद्याया वक्तव्यम्, तच्च सत्यत्वे कथमुपपद्यत इत्यत्राह **एवंरूपे**ति । परमार्थस्य ज्ञाननिवर्त्यत्वं दृष्टद्वारा नोपपद्यते ; अपि त्वदृष्टद्वारा ; यथा सत्यसर्पदष्टविषस्योपासनप्रीतगरुडप्रसादान्निवृत्तिः ; न तु मिथ्येति ज्ञानात्—तथेत्यर्थः ॥ प्रपञ्चस्य ज्ञानानिवर्त्यत्वमुक्तम् । ऐक्यज्ञानस्योपायत्वानुपपत्तिमाह **भवदभिमतस्ये**ति । तत्त्वज्ञानं हि मोक्षोपायः । भिन्नविषयस्याभेदज्ञानस्यातत्त्वज्ञानरूपत्वाद्विपरीतफलत्वमित्यर्थः । अद्वैतस्यातथ्यत्वे प्रमाणमाह **मिथ्यैतदि**ति । ऐक्यस्याताात्त्विकत्वकण्ठोक्तिर्दर्शिता । ऐक्यस्यासत्यत्वं यथा फलति, तथा भेदज्ञानस्यैव मोक्षहेतुत्वमाह **उत्तम** इति । स्मृतिवचसोः सङ्गत्यर्थं श्रुतेः पश्चादुपादानम् ।

ऐक्यज्ञानस्य निवर्तकत्वे प्रमाणविरोध उक्तः । अथ तर्कविरोधमाह **अपिचे**ति । दावानल-विषनाशकविषदृष्टान्ताभिप्रायेण शङ्कते **निवर्तकज्ञान**मिति । निवर्तकज्ञानं[2] तद्विनाशश्च किं ब्रह्मव्यतिरिक्तम्, उत स्वरूपमिति विकल्पमभिप्रेत्याह **ने**ति । ब्रह्मव्यतिरिक्तत्वाद्घटादेरिव विनाशस्य काल्पनिकत्वम्,

---

1 अपुण्य. कथमिवेत्यादिभाष्यसूचितं भावं दर्शयति किञ्चेति ।

2 निवर्तकज्ञानविनाशस्वीकारे हि वक्ष्यमाणदूषणप्रसक्तिः; निवर्तकज्ञानं ब्रह्मैवेति स्वीकारे विनाश एव नेत्याक्षेपे—तर्हि तस्यानादित्वात् संसार एव न स्यादिति समाधिं सूचयितुं निवर्तकज्ञानमित्यधिकमिह विकल्पे निवेशितम् ।

तत्स्वरूपतदुत्पत्तिविनाशानां काल्पनिकत्वेन विनाशतत्कल्पनाकल्पकरूपाविद्याया निवर्तकान्तरमन्वेषणीयम्। तद्विनाशो ब्रह्मस्वरूपमेवेति चेत्—तथासति निवर्तकज्ञानोत्पत्तिरेव न स्यात्; तद्विनाशे तिष्ठति तदुत्पत्त्यसंभवात्॥

अपिच चिन्मात्रब्रह्मव्यतिरिक्तकृत्स्ननिषेधविषयज्ञानस्य कोऽयं ज्ञाता? अध्यासरूप इति

---

यथा स्वप्नपदार्थस्वरूपतदुत्पत्तिस्थितीनां काल्पनिकत्वान्नाशश्च काल्पनिकः, तथेति भावः। **विनाशतत्कल्पनाकल्पकरूपाविद्याया** इति। विनाशः कल्प्यः, तद्विषयभ्रमबुद्धिः कल्पना, कल्पको भ्रमाश्रयादिः; एवंरूपाविद्याया इत्यर्थः। स्वरूपपक्षं दूषयति **तथा सती**ति।

पूर्वस्मिन् पक्षे दूषणं प्रकारान्तरेणाप्युक्तं **वेदार्थसङ्ग्रहे**, 'भावरूपस्य नाशो ह्युत्तरावस्थाप्राप्तिः। सा चात्रानुपपन्ना; ब्रह्मव्यतिरिक्तस्यावस्थावतोऽन्यस्य स्थित्यभ्युपगमे अद्वैतहानिप्रसङ्गात्' इति। भावान्तरं ह्यभावः। घटस्य प्रागभावः पिण्डत्वादिपूर्वावस्था, प्रध्वंसः कपालत्वाद्युत्तरावस्था, इतरेतराभावोऽपि—अश्वस्य गोत्वाभावोऽश्वत्वम्, गोरप्यश्वत्वाभावो गोत्वम्॥ संसर्गाभावे कथं भावरूपत्वम्। यदि महीमात्रमेव, तर्हि घटसंसर्गे सत्यपि संसर्गाभावः स्यात्। यद्यतिरिक्तः, तर्ह्यभावोऽङ्गीकृत इति॥ उच्यते। [1]भवत्पक्षे अभावाश्रयस्य यत् वैलक्षण्यम्, तदेव संसर्गाभावः। यदि महीमात्रमेव अभावाश्रयः, तर्हि भावाश्रयभूतलेऽप्यभावाश्रयत्वप्रसङ्गः; तत्रापि महीमात्रसद्भावात्। यदि केनचिद्विशेषेण विशिष्टं भूतलमभावाश्रयः, स एव विशेषः संसर्गाभाव इति। कालविशेषविशिष्टत्वे सति देशविशेषत्वमेव स च विशेषः। तदानीमेव घटसहितप्रदेशान्तरव्यावृत्त्यर्थं देशविशेषत्वमित्युक्तम्; तस्यैव देशस्य कालान्तरे घटसहितस्य व्यावृत्त्यर्थं कालविशेषविशिष्टत्वे सतीत्युक्तम्। यथाऽऽहुः—

[2]"संसर्गाभावमेवं विदुरिह सुधियो भावमेव त्वभावं मन्वानाः, कुम्भवद्भूतलत इतरभूभागभेदस्त्वभावः। यस्तत्तत्कालभेदव्यतिकरितगृहप्राङ्गणादिप्रदेशः कुम्भाभावाश्रयोऽन्यैरगणि स इह नः क्वाधिकस्योपलम्भः॥" इति॥ नाशस्यावस्थान्तरत्वात् कर्मनाशं वदतस्तवापि चोद्यं तुल्यमिति चेत्-न। कर्म ह्यस्मत्पक्षे भगवत्प्रीत्यप्रीतिरूपम्। तत्र यः संसारफलानुगुणः सङ्कल्पः, तत् विनाश्यं कर्म; यस्तु मोक्षानुगुणः सङ्कल्पः, स एव पूर्वस्य नाश इत्युपपन्नमेव, "धातुः प्रसादान्महिमानमीशम्" इत्यादिभिः॥

अथ निवर्तकज्ञानस्य ज्ञात्रनुपपत्तिमाह **अपिचे**ति। न हि स्वरूपभूतज्ञानस्य ज्ञात्रन्तरापेक्षा। अतस्तद्व्यावृत्त्यर्थं **कृत्स्ननिषेधविषयज्ञानस्ये**त्युक्तम्। प्रमाणजन्यज्ञानं हि साश्रयमेवदृष्टम्। ज्ञाता किं ब्रह्मव्यतिरिक्तः, उत नातिरिक्तः इति विकल्पाभिप्रायेणाह **चिन्मात्रे**ति। प्रथमं धर्मिप्रश्नः(?)[3] **कोऽयमि**ति।

---

[1] अभावस्य तैर्नित्यत्वस्वीकारात् सर्वदा तदाश्रयत्वापत्तिः। तत्परिहाराय तैः कश्चिद्विशेषो वक्तव्य इति भावः। [2] अभावं भावमेव मन्वानाः संसर्गाभावमेवं विदुः। कथं विदुः। उच्यते। घटाभावाश्रयत्वेन यो देशविशेषः तत्तत्कालावच्छिन्नः परैरगणि, तत्र घटवद्भूतलेतरस्मिन् भूभागे स्थितः भेदः-विशेष एव सः-संसर्गाभावोऽस्माकमिति। अभावस्य टीकास्वारस्यात् धर्मरूपत्वे एवं श्लोकार्थः। धर्मिरूपत्वे त्वर्थः स्पष्टः। [3] प्रतीकक्रमार्थौचित्योभयपरिशीलने अपिचेत्येतदनन्तरं चिन्मात्रेति प्रथमं धर्मिप्रश्न इति वाक्यम्, ततः नहीत्यादि सर्वं स्यादिति भाति। आहेत्येतत् कोऽयमित्यस्यावतरणं स्यात्। चिन्मात्रदलप्रयोजनवर्णन मत्रेति भा० प्र०.

चेत्—न ; तस्य निषेध्यतया निवर्तकज्ञानकर्मत्वात् तत्कर्तृत्वानुपपत्तेः ॥ ब्रह्मस्वरूपमिति चेत्—ब्रह्मणो निवर्तकज्ञानं प्रति ज्ञातृत्वं किं स्वरूपम्, उताध्यस्तम्? अध्यस्तं चेत्—अयमध्यासः तन्मूलाविद्यान्तरं च निवर्तकज्ञानाविषयतया तिष्ठत्येव । निवर्तकज्ञानान्तराभ्युपगमे तस्यापि त्रिरूपत्वात् ज्ञात्रपेक्षयाऽनवस्था स्यात् । ब्रह्मस्वरूपस्यैव ज्ञातृत्वे अस्मदीय एव पक्षः परिगृहीतः स्यात् । निवर्तकज्ञानस्वरूपं स्वस्य ज्ञाता च ब्रह्मव्यतिरिक्तत्वेन स्वनिवर्त्यान्तर्गतमिति वचनम्, 'भूतलव्यतिरिक्तं कृत्स्नं देवदत्तेन छिन्नम्' इत्यस्यामेव छेदनक्रियायामस्य छेत्तुः अस्याश्छेदनक्रियायाश्च छेद्यानुप्रवेशवचनवत् उपहास्यम् । अध्यस्तो ज्ञाता स्वनाशहेतुभूतनिवर्तकज्ञाने स्वयं कर्ता च न भवति ; स्वनाशस्यापुरुषार्थत्वात् । तन्नाशस्य ब्रह्मस्वरूपत्वाभ्युपगमे, भेददर्शन—तन्मूलाविद्यादीनां कल्पनमेव न स्यात्—इत्यलमनेन दिग्धहतमुद्गराभिघातेन ।

तस्मादनादिकर्मप्रवाहरूपाज्ञानमूलत्वात् बन्धस्य तन्निबर्हणम् उक्तलक्षणज्ञानादेव । तदुत्पत्तिश्च अहरहरनुष्ठीयमानपरमपुरुषाराधनवेषात्मयाथात्म्यबुद्धिविशेषसंस्कृतवर्णाश्रमोचितकर्मलभ्या । तत्र केवलकर्मणामल्पास्थिरफलत्वम्, अनभिसंहितफलपरमपुरुषाराधनवेषाणां कर्मणाम् उपासना-

---

ब्रह्मव्यतिरिक्तपक्षे दूषणमाह **नेति** । कर्मकर्तृत्वविरोधादिति भावः । निवर्त्यत्वे सति हि कर्मकर्तृविरोधः । अतस्तत्परिहारार्थं स्वरूपपक्षं शङ्कते **ब्रह्मेति** । ज्ञातृत्वधर्मविकल्पोऽयम् । **किं स्वरूपमिति** । **स्वरूपम्**—स्वाभाविकमित्यर्थः । पाश्चात्यत्वेन बुद्धिस्थतया अध्यस्तपक्षं दूषयति **अध्यस्तं चेदिति** । [1]**निवर्तकज्ञानाविषयतया तिष्ठत्येवेति** । ज्ञातृत्वाध्यासस्य तन्मूलाविद्यान्तरस्य च निवृत्तौ निवर्तकान्तरसापेक्षत्वात्, निवर्तकान्तरस्य च भवद्भिरनभ्युपगमात् तदुभयं तिष्ठत्येवेति निश्शेषाविद्यानिवृत्तिर्न स्यादित्यर्थः । निवर्तकज्ञानान्तराभ्युपगमे तस्यापि कस्यचित् कञ्चित् प्रति सिद्धिरूपतया ज्ञात्रपेक्षयाऽनवस्था स्यादित्याह **निवर्तकेति** । आद्यं शिरो दूषयति **ब्रह्मस्वरूपस्येति** । निरुपाधिकस्यैव ब्रह्मस्वरूपस्याभ्युपगम्यमानं ज्ञातृत्वं स्वाभाविकमिति भवतामपि सिद्धान्तः स्यादित्यर्थः । ब्रह्मव्यतिरिक्तस्य ज्ञातुर्निवर्तकज्ञानस्य च ब्रह्मव्यतिरिक्तस्वरूपोपाधिकोडीकारबलेन प्रपञ्चतन्मूलाविद्यानिवर्तकज्ञानेनैव निवृत्तिर्भविष्यतीत्याशङ्क्य व्याघातेन दूषयति **निवर्तकज्ञानस्वरूपमिति** । ज्ञातुरपि निवर्तकज्ञाननिवर्त्यत्वे निवर्तकज्ञानार्थं श्रवणादौ प्रवृत्तिश्च न स्यादित्याह **अध्यस्तो ज्ञातेति** । ज्ञातृनाशस्य परमपुरुषार्थरूपब्रह्मस्वरूपत्वात् नापुरुषार्थतेत्याशङ्क्याह **तन्नाशस्येति** । पूर्वपक्षनिराकरणमुपसंहरति **इतीति** ।

एवं ब्रह्मव्यतिरिक्तकृत्स्नमिथ्यात्वनिराकरणेन बन्धस्य सत्यत्वसिद्धेस्तन्निवृत्तिः कर्मसापेक्षोपासनात्मकज्ञानादेवेति कर्मविचारपूर्ववृत्तत्वं युक्तमित्याह **तस्मादिति** । **तस्मात्**—साधानचतुष्टयस्य ब्रह्मविचारं प्रति पूर्ववृत्तत्वे वस्तुसामर्थ्यं नाम हेतुरुक्तः ; तच्च निर्विशेषब्रह्माध्यस्तप्रपञ्चस्य कर्मनिरपेक्षज्ञाननिवर्त्यत्वम् ; तच्चानुपपन्नमित्युपपादनेन वस्तुसामर्थ्यासिद्धेरित्यर्थः । स्वरूपानादित्वव्यावृत्त्यर्थं **प्रवाहशब्दः** । अनिर्वचनीयव्यावृत्त्यर्थः **कर्मशब्दः** । **उक्तलक्षणज्ञानादेव**—उपासनात्मकादेव । तदुत्पत्तिर्वर्णाश्रमोचितकर्मलभ्याऽस्तु ; ततः किमुपासनादिस्वरूपज्ञानं प्रति प्रस्तुतकर्मविचारपूर्ववृत्तत्वस्येत्यत्राह **तत्रेति** । कर्मविचारादेव तस्याल्पास्थिरफलत्वज्ञानं फलितमिति भावः । **अनभिसंहितफलेति** । 'यज्ञेन दानेन'

---

1 एतदनन्तरं टीकायां ग्रन्थपातो भा० प्र० कथितः । सांप्रतं ग्रन्थ उपलभ्यत एव ।

त्मकज्ञानोत्पत्तिद्वारेण ब्रह्मयाथात्म्यानुभवरूपानन्तस्थिरफलत्वं च कर्मस्वरूपज्ञानात् ऋते न ज्ञायते, केवलाकारपरित्यागपूर्वकयथोक्तस्वरूपकर्मोपादानं च न संभवतीति कर्मविचारानन्तरं तत एव हेतोर्ब्रह्मविचारः कर्तव्य इति अथात इत्युक्तम् ॥

(इति महासिद्धान्तः)

—०—०—०—

---

इत्यादिकर्मविनियोजकवाक्यार्थज्ञानस्य पदार्थज्ञानपूर्वकत्वात् पदार्थभूतकर्मस्वरूपाख्यविशेष्यज्ञानात् ऋते उपासनद्वारा अनन्तस्थिरफलत्वरूपं विशेषणं च न ज्ञायत इति भावः । ततः किमित्यत्राह **केवलेति** । **केवलाकार**—आत्मयाथात्म्यबुद्धिसंस्कारशून्याकारः । हानार्थमुपादानार्थं च हि कस्यचिज्ज्ञानम् । तत्र फलद्वारा कर्म त्याज्यम् ; स्वरूपेणोपादेयम् ; उभयार्थं ज्ञानं कर्मविचारात् ऋते न सिध्यति । तस्मात् कर्मविचारनिवृत्तौ तज्ज्ञानफलं हानमुपादानं च न भवतीत्यर्थः । **अथात**शब्दार्थं निगमयति **इति कर्मविचारानन्तरमिति** । **ब्रह्मविचारः कर्तव्य** इत्यनेन **ब्रह्मजिज्ञासा**शब्दार्थः उक्तः । विचारस्य कर्तव्यतायां नातीव विवादः, शाब्दः आर्थः इत्येतावदेव हि वैषम्यम् । **अथात**शब्दार्थ एव ह्यतीव विवादः । अतः **अथात** इत्येतावदुपात्तम् ॥

—०—०—०—

(जिज्ञासाधिकरणरचनारम्भः)

एवं सूत्रस्याक्षरयोजना कृता । अथ तात्पर्यार्थ उच्यते—**तत्रे**त्यादिना । अक्षरयोजनायां परेणान्यथोक्तोऽक्षरार्थश्च निरस्तः । तन्निरसनसमय एव परेणान्यथोक्तस्तात्पर्यार्थोऽपि निरस्तः । **परेण** हि प्रपञ्चस्य सत्यत्वेन ज्ञाननिवर्त्यत्वाभावात् ज्ञानाय ब्रह्मविचारो नारम्भणीय इति पूर्वपक्षं कृत्वा, प्रपञ्चस्य मिथ्यात्वेन ज्ञाननिवर्त्यत्वात् ज्ञानाय स आरम्भणीय इति सिद्धान्तितम् । तच्च पूर्वं निरस्तम् । अथ सूत्रकाराभिमेतां निरसनीयशंकामुपन्यस्य तदभिप्रेतं तत्परिहारं च वक्तुमारभते **तत्रे**त्यादिना । कर्मविचारानन्तरं तत एव हेतोर्ब्रह्मविचारः कर्तव्य इत्युक्त्वा, सिद्धवस्तुनि शब्दव्युत्पत्तिसंभवात् ब्रह्मविचारः कर्तव्य इति वचनं व्याहतमिति परिचोदनं पूर्वमीमांसानभिज्ञत्वकृतम् । 'अथातो धर्मजिज्ञासा' इत्यत्र अध्ययनानन्तरं तत एव हेतोर्धर्मविचारः कर्तव्य इत्युक्त्वा **प्राभाकरैः**, अध्ययनस्याचार्यकाधिकारत्वात् न धर्मविचारः कर्तव्यः इति पूर्वपक्षं कृत्वा, अर्थबोधाधिकारत्वात् कर्तव्य इति सिद्धान्तितम् । **भाट्टैस्तु** अध्ययनस्य स्वर्गार्थत्वान्न धर्मविचार इति पूर्वपक्षं कृत्वा अर्थज्ञानार्थत्वात स कर्तव्यः इति सिद्धान्तितम् । तच्च व्याहतं भवत्पक्षे । तत्र हि सूत्राक्षराणि योजयित्वा तात्पर्यार्थ उक्तः ; अत्राप्यक्षरार्थमुक्त्वा तात्पर्यार्थ उच्यत इत्युपपन्नम् ।

अक्षरयोजनायां ब्रह्मविचारारम्भे विशिष्टो हेतुरुक्तः—कर्मणोऽल्पास्थिरफलत्वनिर्णयविशिष्टानन्तस्थिरफलापातप्रतीतिः । अनन्तस्थिरफलापातप्रतीतिर्नास्ति चेत्, अल्पास्थिरफल एव तृप्तः स्यात् ।

तत्र पूर्वपक्षवादी मन्यते वृद्धव्यवहारादन्यत्र शब्दस्य बोधकत्वशक्त्यवधारणासंभवात्,

अल्पास्थिरफलत्वनिर्णयो नास्ति चेत्, न निर्वेदः स्यादिति विशिष्टो हेतुः । अत्राऽऽपातप्रतीतिः संभावितप्रामाण्या विवक्षिता, तादृशी हि सा प्रवृत्तिहेतुः । तत्र ब्रह्मज्ञानस्यानन्तस्थिरफलापातप्रतीतेः प्रामाण्यसंभावनाऽनुपपन्ना, सिद्धवस्तुनि शब्दस्य बोधकत्वनिश्चयाभावादिति विशिष्टहेतौ विशेष्यांशासिद्धिमाशङ्क्य, सिद्धवस्तुनि व्युत्पत्तिसंभवादनन्तस्थिरफलापातप्रतीतिरस्तीति परिह्रियते । अत्र पूर्वपक्षवादी **प्राभाकरः** । सूत्रकारैर्भविष्यद्दर्शनवेदित्वात्, कैश्चिदनुक्तत्वेऽपि संभाव्यानानां प्रतिकूलपक्षाणाम् आशङ्क्य निरसनीयत्वाच्चैवं पूर्वपक्षीकरणं युक्तम् । यद्वा **जैमिनि**मतं हीदम्, चोदनालक्षणोऽर्थ एव वेदप्रतिपाद्य इति । चोदना च क्रियायां प्रवर्तकं वचनम् । [1]तमाशङ्क्य सिद्धवस्त्वपि वेदप्रतिपाद्यमिति सूत्रकारैः साधयितुं युज्यते ।

अक्षरयोजनायां **ब्रह्मविचारः कर्तव्य** इत्युक्तत्वात्, **ब्रह्मविचारारम्भो न युक्त** इति पूर्वपक्षसमाप्तावुक्तत्वात्, **ब्रह्मविचारारम्भो युक्त इति स्थित**मिति सिद्धान्तस्योपसंहृतत्वाच्च **दीपे** कण्ठोक्तौ विषयः संशयश्चेहार्थसिद्धौ । **ब्रह्मविचार** इत्युक्तत्वात् ब्रह्ममीमांसा विषय इति सिद्धम् । **आरम्भो न युक्तः, युक्तः** इति चोक्तत्वात् संशयसिद्धिः । ब्रह्ममीमांसा किमारम्भणीया, उतानारम्भणीयेति ; तदर्थं चिन्त्यते— किं वेदान्ताः ब्रह्मणि प्रमाणम्, उत नेति ; तदर्थं परीक्ष्यते— शब्दस्य सिद्धवस्तुबोधनसामर्थ्यावधारणं संभवति, नेति ; तदर्थं विचार्यते— किं वृद्धव्यवहारादन्यत्र शब्दार्थसंबन्धावधारणं संभवति, नेति ; वृद्धव्यवहारे च शब्दस्य सिद्धवस्तुबोधकत्वावधारणं संभवति, नेति च । न संभवतीति पूर्वः पक्षः । संभवतीति सिद्धान्तः । यदा व्यवहारादन्यत्र न व्युत्पत्तिः, व्यवहारे च शब्दस्य सिद्धरूपार्थबोधकत्वावधारणं न संभवति— तदा शब्दस्य सिद्धवस्तुबोधनसामर्थ्याभावात् वेदान्तानामपि ब्रह्मणि परिनिष्पन्नरूपे प्रामाण्याभावनिश्चयवतः पुरुषस्य अनन्तस्थिरफलापातप्रतीतेः प्रामाण्यसंभावनाया असिद्धेर्विशिष्टहेत्वभावादनारम्भणीयेति पूर्वपक्षे फलफलिभावः । राद्धान्ते तु— यदा व्यवहारादन्यत्र व्युत्पत्तिर्व्यवहारे सिद्धवस्तुपरत्वावधारणं च संभवति, तदा शब्दस्य सिद्धरूपार्थे सामर्थ्यात् वेदान्तानामपि ब्रह्मणि परिनिष्पन्नरूपे प्रामाण्यात् प्रामाण्याभावनिश्चयरहितपुरुषस्य अनन्तस्थिरफलरूपब्रह्मविषयापातप्रतीतिप्रामाण्यसंभावनासिद्धेः विशिष्टहेतुसिद्ध्या ब्रह्ममीमांसा आरम्भणीयेति विचाराणां फलफलिभावः ।

पूर्वपक्षमुपक्षिपति **तत्रे**ति । पूर्वं **मृषावाद्युक्तं** सूत्रतात्पर्यं व्युदस्तम् ; तद्व्यावृत्तिं सूचयति **तत्र**शब्देन । **तत्र**— [2]प्रपञ्चसत्यत्वे स्थिते सतीत्यर्थः । पूर्वपक्षमुपपादयति **वृद्धव्यवहारा**दिति । **वृद्धः**—

1 तमिति । चोदनालक्षणार्थमित्यर्थः ।

2 एवञ्चास्य तत्रेत्यस्य, अधिकरणान्ते, स्थितमिति पदेनान्वयः । प्रपञ्चसत्यत्वे स्थिते सति मृषावाद्युक्ताधिकरणशरीरायोगादेवमधिकरणशरीरं स्थितमित्यर्थः । वस्तुतः तत्रेत्यस्य ब्रह्मविचारविषये इत्यर्थे पूर्वपक्षी मन्यत इत्यत्रैव सुकरोऽन्वयः । ननु कर्मविचारानन्तरमिति अथशब्दार्थः स्यान्नाम । तत एव हेतोरित्यर्थकम् अत इति पदं किमर्थमिति शंकायां सूत्रस्याधिकरणरूपत्वं वर्णयितुं तत्रेत्यादिर्ग्रन्थः । न्यायोपयोग्यनुमानसमर्पकं हि तत्पदमिति ।

व्यवहारस्य च कार्यबुद्धिपूर्वकत्वेन कार्यार्थ एव शब्दस्य प्रामाण्यमिति कार्यरूप एव वेदार्थः । अतो न वेदान्ताः परिनिष्पन्ने परे ब्रह्मणि प्रमाणभावमनुभवितुमर्हन्ति ।

न च, पुत्रजन्मादिसिद्धवस्तुविषयवाक्येषु हर्षहेतूनां कालत्रयवर्तिनामर्थानामानन्त्यात् सुलग्नसुखप्रसवादिहर्षहेत्वर्थान्तरोपनिपातसंभावनया च, प्रियार्थप्रतिपत्तिनिमित्तमुखविकासादिलिङ्गेनार्थविशेषबुद्धिहेतुत्वनिश्चयः । नापि व्युत्पन्नेतरपदविभक्त्यर्थस्य पदान्तरार्थनिश्चयेन प्रकृत्यर्थनिश्चयेन वा शब्दस्य सिद्धवस्तुन्यभिधानशक्तिनिश्चयः; ज्ञातकार्याभिधायिपदसमुदायस्य

---

व्युत्पन्नः, प्रयोज्यः प्रयोजकश्च । तयोर्व्यवहारः—वाचिकः कायिकश्च । व्यवहारादन्यत्र शक्त्यवधारणं मा भूत् । ततः किमित्यत्राह **व्यवहारस्य** चेति । कार्यधीपूर्वकत्वफलमाह **कार्यार्थ एवे**ति । ततः फलितमाह **कार्यरूप** इति । वेदस्य शब्दात्मकत्वात् शब्दस्य च व्युत्पत्त्यपेक्षत्वादिति भावः । ततः किमित्यत्राह **अत** इति । **अतः**—वेदार्थस्य कार्यरूपत्वादित्यर्थः । **न प्रमाणभावमनुभवितुमर्हन्ति ।** प्रामाण्यसंभावना च नास्ति; अयोग्यत्वादित्यर्थः । प्रथमव्युत्पत्तिर्वृद्धव्यवहारादन्यत्र न संभवति । न हि घटोऽस्तीत्युक्ते प्रवृत्त्यभावे सति तस्य बोधकत्वं ज्ञायते । गामानयेत्यादिशब्दप्रयोगानन्तरं प्रयोज्यप्रवृत्तिं दृष्ट्वा, प्रवृत्तेः कार्यबुद्धिपूर्वकत्वं जानन् व्युत्पित्सुः, अयं शब्दः कार्यरूपार्थबोधक इति निश्चिनोति । तत्र बहुषु प्रयोगेष्वनुवृत्तशब्दस्यानुवृत्तार्थेन संबन्धं व्यावृत्तशब्दस्य व्यावृत्तार्थेन संबन्धं गृहीत्वा आवापोद्वापमुखेन अर्थविशेषैः शब्दविशेषसंबन्धं निश्चिनोतीति प्रथमं व्युत्पत्तिः कार्यार्थे एव । न हि प्रथमत एव, अस्य शब्दस्यायमर्थ इत्युक्ते, अस्य शब्दस्यायमर्थ इत्येतद्वाक्यस्थपदानामर्थप्रतीतिः । एवं कार्यार्थे एव व्युत्पत्तिं कृतवतः पुरुषस्य, अस्य शब्दस्य अयमर्थ इति पश्चाच्छिक्षितेऽपि प्रथमं कार्यार्थपरतया व्युत्पन्नकतिपयपदसमभिव्याहारदर्शनात् प्रथमव्युत्पत्त्यविरोधेन तत्तच्छब्दार्थसंबन्धग्रहणात् सर्वे शब्दाः कार्यार्थपरा एवेति गृह्यन्ते । अतः, "य एव लौकिकाः, त एव वैदिकाः" इति न्यायात् वेदान्ताः सिद्धवस्तुनि न बोधका भवन्तीत्यर्थः ॥ वेदान्तानां संस्कृतशब्दत्वात् भाषान्तरेण प्रथमं व्युत्पन्नस्य पुरुषस्य संस्कृते शब्दे अस्य शब्दस्यायमर्थ इति व्युत्पाद्यमाने प्रथममेव सिद्धवस्तुनि व्युत्पत्तिः कृता स्यादिति चेन्न—कार्यार्थपरत्वेन प्रथमव्युत्पन्नभाषान्तरशब्दानां पर्यायत्वेन व्युत्पाद्यमानत्वात् संस्कृतशब्दा अपि कार्यार्थपरत्वेनैव हि व्युत्पन्नाः स्युः ।

सिद्धवस्तुनि व्युत्पत्तेर्भाट्टैरुक्तमुदाहरणं व्युदस्यति **न चे**ति । **कालत्रयवर्तिना**मिति **पञ्चिकाया**मुक्तम्; तदत्राभिप्रेतम् । देशकालयोग्यतादिभिः पुत्रजन्म जानातीत्यत्राह **सुलग्ने**ति । सुलग्नसुखप्रसवादिनाऽन्यथासिद्धिर्**नयविवेको**क्ता । आदिशब्देन पित्राद्यरिष्टाभावो भाविसमृद्ध्यादिकं च विवक्षितम् । **व्युत्पत्ति**र्नाम शब्दस्यार्थविशेषैस्सह संबन्धग्रहणम्, न त्वर्थमात्रेणेति एवं दूषणमुक्तम् । **नैयायिकादि**भिरुक्तमुदाहरणं व्युदस्यति **नापी**ति । **व्युत्पन्नेतर**पदस्य **पदान्तरार्थनिश्चयो**दाहरणमिदम्—कः कूजतीति प्रश्नस्य पिकः कूजतीति केनचिदुक्ते व्युत्पन्न[कः]कूजतिशब्देन व्युत्पित्सुना पिकशब्दार्थो ज्ञायते । व्युत्पन्नेतरपदविभक्त्यर्थस्य प्रकृत्यर्थनिश्चयोदाहरणमिदम्—काष्ठैः स्थाल्यामोदनं पचतीत्युक्ते व्युत्पन्नविभक्तिपचतिशब्दार्थेन व्युत्पित्सुना काष्ठादिप्रकृत्यर्थो ज्ञायत इति । **ज्ञाते**ति । इदानीं श्रुते अस्मिन् वाक्ये पूर्वं कार्यपरतया व्युत्पन्नवाक्यस्थकतिपयपददर्शनात् अयमपि पदसमुदायः कार्याभिधायीति ज्ञायत इत्यभिप्रायेण

तदंशविशेषनिश्चयरूपत्वात् तस्य। न च सर्पाद्भीतस्य नायं सर्पो रज्जुरेषेति शब्दश्रवणसमनन्तरं भयनिवृत्तिदर्शनेन सर्पाभावबुद्धिहेतुत्वनिश्चयः; अत्रापि निश्चेष्टम्, निर्विषम्, अचेतनमिदं वस्त्वित्याद्यर्थबोधिषु बहुषु भयनिवृत्तिहेतुषु सत्सु विशेषनिश्चयायोगात्। कार्यबुद्धिप्रवृत्ति-व्याप्तिबलेन शब्दस्य प्रवर्तकार्थावबोधित्वमवगतमिति सर्वपदानां कार्यपरत्वेन सर्वैः पदैः कार्यस्यैव विशिष्टस्य प्रतिपादनात् नान्यान्वितस्वार्थमात्रे पदशक्तिनिश्चयः। इष्टसाधनताबुद्धिस्तु कार्यबुद्धि-द्वारेण प्रवृत्तिहेतुः, न स्वरूपेण; अतीतानागतवर्तमानेष्टोपायबुद्धिषु प्रवृत्त्यनुपलब्धेः। इष्टोपायो हि, मत्प्रयत्नात् ऋते न सिद्ध्यति, अतो मत्कृतिसाध्यः इति बुद्धिर्यावन्न जायते, तावत् न प्रवर्तते।

अतः कार्यबुद्धिरेव प्रवृत्तिहेतुरिति प्रवर्तकस्यैव शब्दवाच्यतया कार्यस्यैव वेदवेद्यत्वात्

---

ज्ञातकार्याभिधायिपदसमुदायस्येत्युक्तम्। **तदंशविशेषः**—कार्यांशविशेषः। कार्यं ह्यनेककारक-विशिष्टम्। तस्य कार्यस्य विशेषणांशनिश्चयरूपत्वात् **तस्य**—पदान्तरार्थनिश्चयस्य प्रकृत्यर्थनिश्चयस्य चेत्यर्थः। यद्वा—**तदंशविशेषः**—कार्याभिधायिपदसमुदायांशविशेषः। **मृषावादि**भिरुक्तमुदाहरण दूषयति **न चे**ति। **वाचस्पतिनो**क्तमर्थमाशङ्क्य परिहरति **कार्ये**ति। तेन खल्वेवं सिद्धवस्तुनि प्रामाण्य-मुपादितम्—सर्वशब्दानामर्थोऽनुयायी वक्तव्यः। किं कार्यरूपार्थाभिधायित्वमनुयायि, उत कार्यान्वित-स्वार्थाभिधायित्वम्, उत कारकान्वितस्वार्थाभिधायित्वम्? प्रथमे कारकपदेषु व्यभिचारः, तेषां कार्या-भिधायित्वाभावात्। द्वितीये लिङादिषु व्यभिचारः; तेषां कार्यान्वितस्वार्थाभिधायित्वाभावात्। तृतीये च कारकपदेषु व्यभिचारः; तेषां कारकान्वितस्वार्थाभिधायित्वाभावात्। तस्मादन्यान्वितस्वार्थाभिधायित्वं पदानामनुयायीति वक्तव्यम**न्विताभिधायित्व**वादिना। अन्यान्वितत्वं सिद्धवस्तुनोऽपि स्यादिति कार्यरूपार्थ एव व्युत्पत्तिरिति निर्बन्धोऽनुपपन्न इति। इमां शङ्कामभिप्रेत्य परिहरति **कार्यबुद्धी**ति। **कार्यबुद्धिप्रवृत्तिव्याप्तिबलेने**तिं उत्तरत्र **सर्वपदानां कार्यपरत्वेने**त्यनेनान्वयः। शब्दप्रयोगानन्तरं प्रवृत्तिदर्शनात् शब्दस्य प्रवर्तकार्थाववोधकत्वात् कार्यबुद्धेः प्रवृत्तेश्च व्याप्तिबलेन प्रवर्तकस्य च कार्य-रूपत्वात् सर्वैः पदैः कार्यमेव विशिष्टं प्रतिपाद्यते। तस्मात् नान्यान्वितस्वार्थमात्रे पदशक्तिनिश्चयः, अपितु विशिष्टकार्यांशविशेषे पदशक्तिनिश्चय इत्यर्थः। ननु कार्यमेव प्रवर्तकं चेत्, प्रवर्तकस्य शब्दार्थत्वात् सर्वशब्दानां कार्यपरत्वं स्यात्। तत्र; इष्टसाधनताबुद्धेः प्रवर्तकत्वादिति भाट्टोक्तमर्थमाशङ्क्याह **इष्टसाध-नते**ति। स्वप्रयोजनोपायः परेण साध्यते चेत्, तत्रापि न प्रवृत्तिरिति वर्तमानाया अपि इष्टोपायताबुद्धे-रप्रवर्त्तकत्वं दृष्टम्। अतः कार्यबुद्धिः प्रवृत्तिव्याप्येत्यर्थः॥ ननु कार्यबुद्धिरपि प्रवृत्तिं व्यभिचरति, निर्धनस्य द्विजस्य यागकर्तव्यताबुद्धिमत्त्वेपि प्रवृत्त्यभावात्॥ नैवम्; मयैवाद्य साधयितुं शक्यमिति बुद्धिर्हि कार्यबुद्धिः। न तस्याः प्रवृत्तिव्यभिचारः, निर्धनस्य हि नैवंविधा प्रतिपत्तिः, किंतु यागः कदाचित्कर्तव्यः, अर्थादिलाभादनुष्ठाने सति फलप्राप्तिरस्तीति। अतो न दोषः।

ततः किमित्यपेक्षायामुपपादितहेतुशरीरं वदन् शङ्कान्तरं च परिहरन् पूर्वपक्षं निगमयति **अत** इत्यादिना। ब्रह्मविचारारम्भे विशिष्टो हेतुरुक्तः, तत्र विशेष्यांशस्यानन्तस्थिरफलापात प्रतीतिरूपस्यासिद्धिरुक्ता। अत्र चोद्यमापादितम्, मन्त्रार्थवादेषु उपासनविधिशेषभूतेष्वनन्तस्थिरफलापात-

परिनिष्पन्नरूपब्रह्मप्राप्तिलक्षणानन्तस्थिरफलाप्रतिपत्तेः, "अक्षय्यं ह वै चातुर्मास्ययाजिनः सुकृतं भवति" इत्यादिभिः कर्मणामेव स्थिरफलत्वप्रतिपादनाच्च कर्मफलाल्पास्थिरत्वब्रह्मज्ञानफलानन्तस्थिरत्वज्ञानहेतुको ब्रह्मविचारारम्भो न युक्त इति ।

अत्राभिधीयते—निखिललोकविदितशब्दार्थसंबन्धावधारणप्रकारमपनुद्य सर्वशब्दानामलौकिकैकार्थावबोधित्वावधारणं प्रामाणिका न बहु मन्वते । एवं किल बालाः शब्दार्थसंबन्धमवधारयन्ति—मातापितृप्रभृतिभिः अम्बाताताततमातुलादीन् शशिपशुनरमृगपक्षिसर्पादींश्च, 'एनमवेहि' 'इमं चावधारय' इत्यभिप्रायेणाङ्गुल्या निर्दिश्य[निर्दिश्य] तैस्तैश्शब्दैस्तेषु तेष्वर्थेषु बहुशः शिक्षिताः शनैश्शनैस्तैस्तैरेव शब्दैस्तेषु तेष्वर्थेषु स्वात्मनां बुद्ध्युत्पत्तिं दृष्ट्वा शब्दार्थयोः संबन्धान्तरादर्शनात् सङ्केतयितृपुरुषाज्ञानाच्च तेष्वर्थेषु तेषां शब्दानां प्रयोगो बोधकत्वनिबन्धन

---

प्रतीतिसिद्धेः न विशेष्यांशासिद्धिरिति विशिष्ट एव हेतुरिति । एतदाशङ्क्याह **अक्षय्यं ह वा** इति । अयमर्थः—यदि मन्त्रार्थवादेष्वनन्तस्थिरफलप्रतीत्या ब्रह्मविचारारम्भः, तर्हि पूर्वभागेऽपि "अक्षय्यं ह वै चातुर्मास्ययाजिनः सुकृतं भवति" इत्यादिभिरनन्तस्थिरफलप्रतीत्या अल्पास्थिरफलत्वनिर्णयरूपविशेषणांशासिद्धेर्ब्रह्मविचारारम्भो न युक्त इति । विशिष्टहेतौ विशेषणविशेष्ययोरन्यतरांशासिद्ध्यभिप्रायेण कर्मफलाल्पास्थिरत्वब्रह्मज्ञानफलानन्तस्थिरत्वज्ञानहेतुक इत्युक्तम् ॥

**अत्राभिधीयत** इति । अस्मिन् पूर्वपक्षे सूत्रकारैः परिहारोऽभिधीयत इत्यर्थः **निखिलेति** । अन्यथा वदता भवतापि वक्ष्यमाणप्रकारेणैव शब्दव्युत्पत्तिः कृतेति **निखिललोक**शब्दस्य भावः । **प्रामाणिकाः**—प्रमाणेनार्थं स्वीकुर्वन्त इत्यर्थः । कथं संबन्धावधारणमित्यत्राह **एवं किलेति** । **मातापितृप्रभृति**भिरिति । अयं भावः—यदा स्वयमेव बालो व्युत्पत्तिक्षमो भवति, तदानीमप्येनं वृद्धैरुपाध्यायादिभिर्व्युत्पादयितुं श्रद्दधाना मातापित्रादयो न हि स्वयं व्युत्पत्त्यक्षमदशायामुपेक्षन्ते । किन्तु अक्षरशिक्षाद्युपयोगिनीः शिक्षाः प्रथमत एव स्वबुद्धिपूर्वकं कुर्वन्तीति । अम्बाताताप्रभृतिः सप्रतियोगिकः शब्दगणः, शशिपशुप्रभृतिरप्रतियोगिकः शब्दगण इति विभागः । असंबन्धिशब्दव्युत्पत्तेः पूर्वमेवाम्बातातादिशब्दव्युत्पत्तिर्दृश्यते । सा च त्वदभिमतशब्दार्थसंबन्धग्रहणे तु नोपपद्यते । न हि कञ्चित्प्रति पिता अन्यस्यापि पिता भवति । तस्माद्व्युत्पित्सोर्मातापित्रादिषु अन्यैस्तत्तच्छब्दप्रयोगासंभवात् प्रथममम्बादिशब्दार्थव्युत्पत्तिः त्वन्मते न संभवति । अतो बुद्धिपूर्विकैव प्रथमव्युत्पत्तिरिति ज्ञापनार्थं कोटिद्वयं शब्देषु दर्शितम् । यादृच्छिकवृद्धव्यवहारेणानन्तशब्दव्युत्पत्त्यनुपपत्तिश्च । सर्वलोकसंप्रतिपन्नव्युत्पत्तिप्रकारापह्नवश्च । **एनमवेहि इमञ्चावधारयेति** । **एनम्**—बोधकं शब्दम्, **इमम्**—बोध्यमर्थञ्चावेहीत्यर्थः । **बहुश** इति । यावत् अङ्गुलिनिर्देशशब्दप्रयोगसाहचर्यदर्शनजनितवासनाभूयस्त्वोदयेन स्वयमेव तत्तच्छब्दान् प्रयोक्तुम् अर्थमात्रदर्शनेन शब्दं स्मर्तुं शब्दमात्रश्रवणेनार्थं स्मर्तुं च क्षमा भवन्ति, तावदित्यर्थः । **शिक्षिताः**—तैस्तैः शब्दैः तेषु तेष्वर्थेषूत्पादितज्ञानाः । एवं तर्ह्यङ्गुल्या निर्दिष्टेष्वर्थेष्वमी शब्दाः सङ्केतिताः इति मन्येरन्निति चेत्—[1]यद्वा लिङ्गवज्जन्यजनकभावादिसंबन्धान्तराद्बोधका इति मन्येरन्निति चेत्—तत्राह **संबन्धान्तरादर्शनात्सङ्केतयितृपुरुषाज्ञानाच्चेति** । अयमर्थः—यादृच्छिकव्युत्पत्तावपि तुल्यं चोद्यम् ।

---

[1] भाष्ये संबन्धान्तरपदेन धूमजीमूतादिरूपहेतौ वह्निवर्षादिरूपसाध्येन जन्यत्वजनकत्वादिसंबन्धानां संकेतरूपसंबन्धस्य च ग्रहणमिति मनसिकृत्य यद्वेत्युक्तम् । शिक्षकपुरुष

इति निश्चिन्वन्ति। पुनश्च व्युत्पन्नेतरशब्देषु, 'अस्य शब्दस्य अयमर्थः' इति [1]पूर्व[वत्]वृद्धैः शिक्षिताः

---

शब्दप्रयोगानन्तरं प्रयोज्यप्रवृत्तिं दृष्टवतो व्युत्पित्सोरियं शङ्का भवति, एतच्छब्दप्रयोगादनन्तरमस्य प्रवृत्तिः किं जन्यजनकभावादिसंबन्धात्, उत सङ्केतादिति । तत्र संबन्धान्तरशङ्का तु अदर्शनादेव न जायत इति चेत्—बुद्धिपूर्वकव्युत्पत्तावप्ययं परिहारः समानः । सङ्केतबुद्ध्युत्पत्तिश्च नोपपद्यते । किमेते अस्मन्मातापित्रादयः सङ्केतयन्ति, उत पूर्वमेव कश्चित् सङ्केतितवान् इति । न तावत्प्रथमपक्षः; अनेकैः पुरुषैस्तेष्वेवार्थेष्वेकरूपशब्दप्रयोगदर्शनात् । नापि द्वितीयः ; अनेन पूर्वं सङ्केतिताः शब्दा इति सङ्केतयितुः पुरुषस्याज्ञानादिति परिहारस्तवापि वक्तव्यः ; सोऽस्माकमपि समानः । सर्वप्रमाणानां बोधकत्वे अविशिष्टेऽपि प्रत्यक्षस्य वैषम्यं सत्तया ज्ञानजनकत्वम् । अनुमानागमौ तु ज्ञाततया ज्ञापकौ । तत्रानुमानं जन्यजनकभावादिसंबधान्तरज्ञानेन बोध्यविषयबोधजनकम् ; शब्दस्तु बोध्यबोधकभावरूपसम्बन्धज्ञानादेव बोध्यं बोधयति । एवं संबन्धान्तरशङ्का सङ्केतितत्वशङ्का च निरस्ता ॥ सम्बन्धान्तराभावात्सङ्केतयितृपुरुषाज्ञानाच्च बोध्यबोधकभाव एव सम्बन्ध इति न बालैर्ज्ञातुं शक्यमिति चेत्, तत् तवापि तुल्यम् । किञ्च शब्दोच्चारणानन्तरं प्रयोज्यवृद्धस्य प्रवृत्तिं दृष्ट्वा प्रवृत्तेश्च कार्यबुद्धिपूर्वकत्वमनुमाय, यदनन्तरं यद्भवति तत् तस्य कारणमिति न्यायात् शब्दोच्चारणेन कार्यबुद्धिरस्य जातेति कार्यरूपः शब्दार्थ इति बोद्धुं बालैरतीव न शक्यते । अशक्यत्वं दृश्यते च ; न हि बाला उक्तप्रकारेण कार्यार्थपरत्वं शब्दस्य निश्चिन्वन्ति । अतो बालैर्दुरवगमत्वचोद्यं भवत्पक्ष एवातीव प्रसजति ॥ कालपरिपाकात् ज्ञायत इति चेत्—अयं परिहारोऽस्मत्पक्षे सुसङ्गत इति ।

**पुनश्चेति** । अस्य शब्दस्य अयमर्थ इति व्युत्पत्तिश्चेत्—अन्विताभिधानभङ्गप्रसङ्ग इति चेत्—न ; प्रातिस्विकव्युत्पत्तेः समुदायज्ञानार्थत्वात् । न हि काव्यादिषु वाक्यार्थज्ञानोपयोगित्वेन संपाद्यमानं पदार्थज्ञानं वाक्यार्थज्ञानविरोधि । न ह्यक्षरशिक्षा च [2]पदार्थज्ञानविरोधिनी । एवं तैस्तैः पदैः परस्परान्वितस्वार्थाभिधानव्युत्पत्तेः प्रतिपदमर्थव्युत्पत्तिर्न विरोधिनी; अपि तु उपयुक्तैव । यथा भवत्पक्षे आवापोद्वापरूपेण प्रतिपदार्थव्युत्पत्तिर्वाक्यार्थज्ञानोपयोगित्वान्न विरोधिनी, तद्वत् । भवत्पक्षे तु प्रातिस्विकव्युत्पत्तिः पश्चाद्भाविनी, अत्र तु पूर्वभाविनीति विशेषः । वाक्यार्थज्ञानोपयोगित्वं समानम् । शब्देनान्वयपर्यन्ताभिधानं ह्यन्विताभिधानम् । प्रातिस्विकव्युत्पत्तावपि तत्रैव व्युत्पत्तिः क्रियत इति न विरोधः । अभिहितान्वयपक्षे अर्थानां परस्परान्वयबोधनयोग्यत्वं शब्दानां स्वार्थबोधनशक्तिः शब्दैरपि परस्परान्वययोग्यत्वेन स्वार्थाभिधानमिति त्रयमपि कल्पनीयम् ; अन्विताभिधानपक्षे तु शब्दानां स्वार्थबोधनशक्तेरेव अन्वयपर्यन्तत्वाभ्युपगमात् कल्पनालाघवमस्तीति स एवात्र स्वीकृतः ।

---

सङ्केतस्य शीघ्रोपस्थितत्वात् सर्वत्रानुगतत्वसंभावनया च प्रथमं तन्मात्रस्य संबन्धान्तरपदेन ग्रहणेनावतारणम् । संकेतत्वादिरूपेण तदग्रहणादिति तदर्थः । संकेतद्वैधश्च वक्ष्यति । एकैकांशे एकैकांशावतारकत्वविवक्षायां क्रमभंगः, इति चेदिति द्विर्वचनासांगत्यश्चे ति भाति । पाठो वा निरीक्ष्यः ।

[1] पूर्ववृद्धैः—उक्तपूर्वैर्मातापित्रादिभिः । त एव हि, व्युत्पन्नशब्दोऽयम्, नत्वयमिति सुखं जानन्ति । [2] पदात् अक्षरसमुदायादर्थज्ञानं पदार्थज्ञानम् ।

सर्वशब्दानामर्थमवगम्य परप्रत्यायनाय तत्तदर्थावबोधिवाक्यजातं प्रयुञ्जते।

प्रकारान्तरेणापि शब्दार्थसंबन्धावधारणं सुशकम्—केनचित् पुरुषेण हस्तचेष्टादिना। 'पिता ते सुखमास्ते' इति देवदत्ताय ज्ञापयेति प्रेषितः कश्चित् तज्ज्ञापने प्रवृत्तः, पिता ते सुखमास्त इति शब्दं प्रयुङ्क्ते। पार्श्वस्थोऽन्यो व्युत्पित्सुः मूकवत् चेष्टाविशेषज्ञः तज्ज्ञापने प्रवृत्तमिमं ज्ञात्वाऽनुगतः तज्ज्ञापनाय प्रयुक्तमिमं शब्दं श्रुत्वा, अयं शब्दस्तदर्थबुद्धिहेतुरिति निश्चिनोति—इति, कार्यार्थ एव व्युत्पत्तिरिति निर्बन्धो निर्निबन्धनः।

---

अन्विताभिधानभङ्गप्रसङ्गश्च परिहृतः॥ अस्य शब्दस्य अयमर्थ इत्यत्राप्ययमर्थ इति बुध्यस्वेति ह्युक्तं भवति; तस्मात् कार्यार्थ एव व्युत्पत्तिरिति चेत्—एवं तर्हि यादृच्छिकव्युत्पत्तावपि सिद्धवस्तुन्येव व्युत्पत्तिः स्यात्। प्रयोज्यवृद्धस्य कार्यबुद्धिर्जातेति हि व्युत्पित्सुर्जानाति॥ शब्दबोध्यत्वं कार्यस्यैव; न बुद्धेः। बुद्धिर्हि शब्दजन्या; न तु शब्दवाच्येति चेत्—अत्रापि शब्दबोध्यत्वं तत्तत्पदार्थस्यैव; न बुद्धेः। न हि घटबुद्धिर्घटशब्दवाच्या; अपि तु तज्जन्या; वाच्यस्तु घट एव इति तुल्यः परिहारः इत्यभिप्रेत्य **एनमवेहि इमं चावधारयेत्यभिप्रायेणाङ्गुल्या निर्दिश्येत्युक्तम्। तत्तदर्थावबोधिवाक्यजातं प्रयुञ्जत** इति। यादृच्छिकव्युत्पत्तौ कतिपयशब्दानां कार्यार्थपरत्वेन व्युत्पत्तिदर्शनात् व्युत्पादकाः पुरुषा अपि कार्यार्थ एव व्युत्पत्तिं कृतवन्तो गामानयेत्यादिवाक्यं प्रयुञ्जत इति चेत्—अनेकशब्दानां सिद्धवस्तुपरत्वेन, व्युत्पादकाः पुरुषा अपि तथैव व्युत्पत्तिं कृत्वा तत्तदर्थविवक्षया शब्दान् प्रयुञ्जते। व्युत्पत्तिदर्शनं प्रयोगदर्शनमपि ह्युभयमत्रा(भयत्रा ?)विशिष्टमिति भावः।

एवं बुद्धिपूर्वकव्युत्पत्त्या शब्दानां सिद्धवस्तुपरत्वमुक्तम्। [1]यादृच्छिकव्युत्पत्तावपि सिद्धार्थेऽपि व्युत्पत्तिरस्तीत्याह **प्रकारान्तरेणापीति**। शब्दनिरपेक्षं तत्तदर्थज्ञानं चेष्टादिना संभवतीति दर्शयति **मूकवदिति**। परोक्तयादृच्छिकव्युत्पत्तौ व्युत्पित्सुव्यतिरेकेण पुरुषद्वयापेक्षा, गवाद्यपेक्षा च। अस्यां तु व्युत्पित्सुव्यतिरेकेण पुरुषत्रयापेक्षेति वैषम्यम्।

किञ्च—पुत्रस्ते जात इत्यादिवाक्यस्य गामानयेत्यादिवाक्यस्य च वैषम्यं दुरुपपादम्। कालत्रयवर्तिहर्षहेतुबाहुल्यसंभावनया हि पुत्रजन्मवाक्ये व्युत्पत्तेरशक्यत्वमुक्तम्। तन्न; संनिहितं पुत्रजन्म दृष्ट्वा तज्ज्ञापनाय प्रवृत्ते पुरुषे ज्ञाते, पश्चाच्च जातकर्मादौ दृष्टे, ततः पूर्वमनुल्लसितमुखत्वादसंभावितपुत्रजन्मविज्ञानस्य पुरुषस्यैतद्वाक्यश्रवणानन्तरभाविनो मुखविकासस्यातीतागामिहर्षहेत्वन्तरश्रवणमूलत्वशङ्कानुदयात्। न हि संनिहितहेतुपरित्यागेनादृष्टहेतुशङ्का धियमधिरोहति। सुलभसुखप्रसवादिहेत्वन्तरशङ्का स्यादिति चेत्—नैवम्; सुलभादिमात्रस्य हर्षहेतुत्वायोगात्। न खल्वन्यदीयपुत्रजन्माद्यनुबन्धिसुलभत्वादीनां हर्षहेतुत्वम्। अतः स्वपुत्रजन्मविशेषणीभूतानां सुलभत्वादीनामेव हर्षहेतुत्वम्। अतः स्वपुत्रजन्मनि अज्ञाते सुलभत्वादीनां हर्षहेतुत्वायोगादस्य वाक्यस्य स्वपुत्रजन्मज्ञापकत्वमवश्यं विदितं स्यात्॥ प्रागेव पुत्रजन्मज्ञानसंभवादस्य वाक्यस्य सुलभत्वादिपरत्वशङ्का स्यादिति चेत्—नैवम्; ततः पूर्वं मुखविकासविरहेण प्रागेव पुत्रजन्मज्ञानशङ्कानुदयात्। अतः पुत्रजन्मनः संनिहितत्वात् पूर्वं मुखविकासाभावाच्च प्राथमिकमुखविकासहेतोरस्य वाक्यस्य पुत्रजन्मज्ञापकत्वं व्युत्पि-

---

1 पूर्वोदाहरणमभिहितान्वयपक्षस्यानुकूलमिव; इदं तु अन्विताभिधानपक्षस्येत्यपि ध्येयम्।

अतो वेदान्ताः परिनिष्पन्नं परं ब्रह्म तदुपासनं चापरिमितफलं बोधयन्तीति तन्निर्णयफलो ब्रह्मविचारः कर्तव्यः ॥

कार्यार्थत्वेपि वेदस्य ब्रह्मविचारः कर्तव्य एव ॥ कथम् ॥ "आत्मा वा अरे द्रष्टव्यः श्रोतव्यो मन्तव्यो निदिध्यासितव्यः", "सोऽन्वेष्टव्यः स विजिज्ञासितव्यः", "विज्ञाय प्रज्ञां कुर्वीत", "दहरोऽस्मिन्नन्तराकाशस्तस्मिन् यदन्तस्तदन्वेष्टव्यं तद्वा व विजिज्ञासितव्यम्", "तत्रापि दहं गगनं विशोकः तस्मिन् यदन्तस्तदुपासितव्यम्" इत्यादिभिः प्रतिपन्नोपासनविषयकार्याधिकृतफलत्वेन, "ब्रह्मविदाप्नोति परम्" इत्यादिभिर्ब्रह्मप्राप्तिः श्रूयत इति ब्रह्मस्वरूपतद्विशेषणानां दुःखासंभिन्नदेशविशेषरूपस्वर्गादिवत्,

---

सुर्मन्यते। तत्रैवं शङ्का संभवति—किं पुत्रजन्मादिमात्रज्ञापकमिदं वाक्यम्, उत सुलग्नत्वादिविशिष्टपुत्रजन्मादिज्ञापकमिति। ईदृशशङ्काग्रस्तत्वं गामानयेत्यादिवाक्यस्यापि तुल्यम्; किमिदं वाक्यं गवानयनमात्रप्रतिपादकम्; उत पुरोवर्तिनि पिण्डे ये शुक्लत्वादिविशेषा दृश्यन्ते, तैर्विशिष्टगवानयनप्रतिपादकमिति शङ्कोपपत्तेः। प्रयोगभेदेनावापोद्वापमुखेन शङ्कापाकरणमुभयत्र तुल्यम्। पुत्रजन्मवाक्यादपि गवानयनादिवाक्यस्य अनेकार्थान्तरशङ्काग्रस्तत्वं सुतरां दृश्यत इति अर्थविशेषावधारणमतीव कर्तुमशक्यम्; गामनयेति शब्दप्रयोगानन्तरं व्यापारान्तरविधुरं गवि समानीतायामपि, गां संदर्शय, गां पुरः स्थापय, गां देहि, गां [1]क्रीणीहीत्याद्यनेकार्थशङ्काहेतुत्वात् प्रयोज्यवृद्धप्रवृत्तेः। किञ्च गामानयेत्यादिशब्दप्रयोगानन्तरं समानयनात्पूर्वमेव उत्थानोपरिवासआच्छादनदण्डग्रहणयादृच्छिकजनसंभाषणगमनाद्यवान्तरव्यापाराश्च बहवो यस्य पुरुषस्य आद्यव्युत्पत्तावुपलभ्यन्ते, तस्य तेष्वन्यतमार्थवाचकत्वशङ्का गामानयेत्यादिवाक्यस्य जायते। पश्चाद्गवानयनमपि यादृच्छिकं कृतं स्यात्, न तु वाक्यप्रेरितत्वादिति च शङ्का संभवति। अतो नार्थविशेषसंबन्धावधारणसंभव इति ॥ बहुभिः प्रयोगैरर्थविशेषनिश्चयोऽन्वयव्यतिरेकाभ्यामिति चेत्—एवमेव पुत्रस्ते जात इत्यादिवाक्यस्यार्थविशेषनिश्चयः सुतरां संभवति।

एवं सिद्धवस्तुनि शब्दव्युत्पत्त्युपपत्त्युपपादनेन वेदान्तानां परब्रह्मपरत्वमुपपन्नमित्याह **अतो वेदान्ता** इति। अथ कार्यार्थपरत्वमभ्युपगम्य ब्रह्मविचारस्य कर्तव्यतामाह **कार्यार्थत्वेऽपीति**। कार्यार्थत्वाभ्युपगमेऽपि स्तावकत्वसिद्धिहेतुत्वेन फलसाधनत्वेन च प्रकारद्वयेन सिद्धवस्तुनि तात्पर्यमुत्तरत्रोपपादयिष्यते। अत्र तु प्रकारान्तरेणोपपाद्यते। अनन्तस्थिरफलापातप्रतीतेः सिषाधयिषितत्वात फलत्वेन तात्पर्यकथनमत्रोचितमिति फलतया सिद्धिरत्रोच्यते। अनेकवाक्योपादानम् उपासने तात्पर्यातिशयज्ञापनार्थम्, उपसर्गविशेषसन्प्रत्यययोगायोगेऽप्यर्थभेदो नास्तीति ज्ञापनार्थं च। **उपासनविषयकार्याधिकृतेति**। उपासनावच्छिन्नकृतिसाध्यापूर्वाधिकृतस्य। विषिण्वन् (विशिंषन्) हि विषय उच्यते। **ब्रह्मस्वरूपतद्विशेषणानामिति**। **विशेषणानि**—गुणाः विभूतयश्च। विधिवाक्योक्तस्य फलस्यार्थवादोक्तविशेषणे तात्पर्यमस्तीति ज्ञापनार्थं **दुःखासंभिन्नदेशविशेषरूपस्वर्गादिवदित्युक्तम्**। "यस्मिन्नोष्णं न शीतं नारतिः" इति श्रुतिः। स्वर्गाख्यफलं विधिगतम्; विशेषणमन्यत्र। फलस्य विधिवाक्यगतत्वाभावेऽप्यन्यपरार्थवादोक्तफले विध्यपेक्षिते तात्पर्यमस्तीति दर्शयितुं

---

1 अत्र विक्रीणीहीति पाठो न शुद्ध इति भा०प्र०।

**रात्रिसत्रप्रतिष्ठावत्, अपगोरणशतयातनासाध्यसाधनभाववच्च कार्योपयोगितयैव सिद्धेः ॥**

**गामानयेत्यादिष्वपि वाक्येषु न कार्यार्थे व्युत्पत्तिः; भवदभिमतकार्यस्य दुर्निरूपत्वात्। कृतिभावभावि कृत्युद्देश्यं हि भवतः कार्यम्। कृत्युद्देश्यत्वञ्च कृतिकर्मत्वम्। कृतिकर्मत्वञ्च कृत्या प्राप्तुमिष्टतमत्वम्। इष्टतमं च सुखं वर्तमानदुःखस्य तन्निवृत्तिर्वा। तत्रेष्टसुखादिना पुरुषेण स्वप्रयत्नात् ऋते यदि तदसिद्धिः प्रतीता, ततः प्रयत्नेच्छुः प्रवर्तते पुरुष इति न क्वचिदपीच्छाविषयस्य कृत्यधीनसिद्धित्वमन्तरेण कृत्युद्देश्यत्वं नाम किञ्चिदप्युपलभ्यते।**

---

**रात्रिसत्रप्रतिष्ठावदित्युक्तम्।** [रात्रीरुपेयात्[1]] "प्रतितिष्ठन्ति ह वा एते य एता रात्रीरुपयन्ति" इति हि श्रुतिः। प्रतिष्ठाकाम उपेयादिति वचनाभावेऽपि अर्थवादोक्तफले तात्पर्यमङ्गीकृतमित्यर्थः। विधेयोपकारके विरोधिफलेऽपि तात्पर्यमस्तीति ज्ञापनार्थम्—**अपगोरणशतयातनासाध्यसाधनभाववच्चे**त्युक्तम्। "तस्माद्ब्राह्मणाय [2]नापगुरेत....योऽपगुरुते तं शतेन यातयात्" इति हि श्रुतिः। अनेन मोक्षोपायविरोधिफलेऽपि तात्पर्यं सिद्धमित्यभिप्रायः। अनुयायिहेतुः **कार्योपयोगितयैव सिद्धेरि**त्युक्तः। उपासनविषयकार्योपयोगित्वात् फलभूतब्रह्मस्वरूपे, तद्विशेषणगुणादौ, विधिविरोधिनि फले, संसारहेयत्वादौ च विवक्षा कार्येत्यर्थः। ... .... .... .... ....

प्रवर्तकवाक्येऽपि न त्वदभिमतसिद्धिरित्याह—**गामि**ति। **कार्यार्थे** प्राधान्येन त्वदभिमते कृत्युद्देश्यलक्षणकार्यार्थे। कुत इत्यत्राह **भवदभिमते**ति। स्वेदश्रमादावपि कृतिसाध्यत्वात् तद्व्यावृत्त्यर्थं क्रियाकार्येऽप्युद्देश्यत्वमङ्गीकार्यम्; त्वदुक्तोद्देश्यत्वस्य दुर्निरूपतया तल्लक्षणकार्यस्य दुर्निरूपत्वादित्यर्थः। दुर्निरूपत्वं कथमित्यत्राह **कृती**ति। **कृतिभावभावि**। कृतिः आन्तरप्रयत्नः; तत्सद्भावानन्तरभावि। कृतिसाध्यत्वं भावार्थादिष्वप्यस्तीति तद्व्यावृत्त्यर्थं **कृत्युद्देश्य**मित्युक्तम्। **कृत्युद्देश्यत्वं** कृतिप्रधानत्वमित्यर्थः। कार्यस्य कृतिसाध्यत्वमिष्टत्वं कृत्युद्देश्यत्वमिति त्रयमपि तन्मतेऽभ्युपगतम्। इष्टत्वकृतिसाध्यत्वे फलभावार्थसाधारणे। कृतिप्रधानत्वं ह्याकारद्वयविलक्षणं फलभावार्थव्यावर्तकं वर्ण्यते। यथा **टीकायामुक्तम्**, "कार्यमर्थं प्रतिपादयतो वेदस्य प्रामाण्यम्" इति। अत्रार्थशब्देन प्राधान्यं विवक्षितम्। यथा **पञ्चिकायाम्**, "कार्यम् अर्थं प्रधानतया प्रतिपादयतो वेदस्य प्रामाण्यम्; तत्रैव प्रामाण्यशब्दव्युत्पत्तेः व्युत्पत्त्यायत्तत्वात् तस्य" इति। [3]**प्रकरणशालिकायाम्**, "कृतिसाध्यं प्रधानं यत् तत् कार्यमभिधीयते" इति। तत्र तृतीयाकारतयाऽभिमतं कृत्युद्देश्यत्वं कृतिसाध्यत्वेष्टत्वाकारयोरन्यतराकारे पर्यवस्यतीत्यभिप्रायेण दूषयितुमाह **कृत्युद्देश्यत्वं** चेति। पाणिन्युक्तप्रकारेण कर्मत्वं विवृणोति **कृतिकर्मत्वं** चेति। इष्टतमत्वं च कार्ये नास्तीत्याह **इष्टतमं** चेति। कृतिकर्मत्वं नाम प्रवर्तकत्वमित्यत्राह **तत्रे**ति। तदपीष्टस्य स्वप्रयत्नसाध्यत्वमेवेत्यर्थः। आदिशब्देन दुःखनिवृत्तिरुच्यते। **स्वप्रयत्नात् ऋते यदी**त्यादेरयं भावः—कृतिसाध्यत्वातिरिक्तकृतिकर्मत्वं नाम इष्टतमत्वे पर्यवस्यतीति। **प्रयत्नेच्छुः** चिकीर्षुः। **प्रवर्तते**। आन्तरप्रयत्नमिच्छन् स तमुत्पादयतीत्यर्थः।

---

1 उपेयादिति वाक्यासंभवः प्रागेव दर्शितः। 2 नापगुरेत—न वधसंकल्पं कुर्यात्। शतेन यातयात्—शतसंवत्सरव्यापिनरकबाधां यम उत्पादयेत्। 3 प्रकरणशालिकेति पञ्चिकेति च शालिकानाथकृता प्रकरणपञ्चिकैवोच्यते।

**इच्छाविषयस्य प्रेरकत्वं च प्रयत्नाधीनसिद्धित्वमेव ; तत एव प्रवृत्तेः ॥**

**न च पुरुषानुकूलत्वं कृत्युद्देश्यत्वम्। यतः सुखमेव पुरुषानुकूलम्। न च दुःखनिवृत्तेः पुरुषानुकूलत्वम्। पुरुषानुकूलं सुखं तत्प्रतिकूलं दुःखमिति हि सुखदुःखयोः स्वरूपविवेकः। दुःखस्य प्रतिकूलतया तन्निवृत्तिरिष्टा भवति ; नानुकूलतया। अनुकूलप्रतिकूलान्वयविरहे स्वरूपेणावस्थितिर्हि दुःखनिवृत्तिः। अतः सुखव्यतिरिक्तस्य क्रियादेरनुकूलत्वं न संभवति। न सुखार्थतया तस्याप्यनुकूलत्वम् ; दुःखात्मकत्वात् तस्य। सुखार्थतयापि तदुपादानेच्छामात्रमेव भवति।**

---

इष्टत्वमस्यैव रूपद्वयमस्ति इच्छाविषयत्वं प्रेरकत्वञ्चेति। तत्र प्रेरकत्वं कृत्युद्देश्यत्वमित्यत्राह **इच्छाविषयस्येति**[1]। कुत इत्यत्राह **तत एवेति**। पुरुषानुकूलत्वं कृत्युद्देश्यत्वमित्यत्राह **न चेति**। सुखमेव पुरुषानुकूलमिति न वाच्यम्, सुखव्यतिरिक्तस्यापि अनुकूलत्वदर्शनादित्यत्राह **न च दुःखनिवृत्तेः पुरुषानुकूलत्वमिति**। न हि दुःखनिवृत्तिः सुखं भवतीत्यर्थः। एतदुपपादयति **पुरुषानुकूलमिति**। तर्हि दुःखनिवृत्तेरिच्छाविषयत्वं कथमित्यत्राह **दुःखस्येति**। स्वत इष्टत्वमनुकूलत्वम्; न त्विष्टान्तरहेतुतया अनिष्टनिवृत्तिरूपतया वा इष्टत्वम्। एवं स्वतोऽनिष्टत्वं **प्रतिकूलत्वम्**; न त्वनिष्टान्तरहेतुतया इष्टनिवृत्तिरूपतया वाऽनिष्टत्वम्। अतो दुःखनिवृत्तेरिष्टत्वं दुःखस्य प्रतिकूलत्वादित्यर्थः। दुःखनिवृत्तेरनुकूलत्वाभावमुपपादयति **अनुकूलप्रतिकूलेति**। **स्वरूपेणावस्थितिः**— सुखनिवृत्तिरूपा दुःखनिवृत्तिरूपा च। अनुकूलप्रतिकूलान्वयविरहरूपायां स्वरूपेणावस्थितौ दुःखनिवृत्त्यंशस्य [2]सामानाधिकरण्येन व्यपदेशः। दुःखनिवृत्तिरेव सुखं चेत्—दुःखनिवृत्तौ सुखनिवृत्तिर्न स्यात। तदा सुषुप्तावपि सुखान्वयप्रसङ्गः। अन्यतरनिवृत्तिरन्यतरसंयोगश्चेत्—स्वापेऽपि सुखदुःखान्वयः प्रसजेदिति भावः। अपूर्वस्यानुकूलत्वासंभवे दृष्टान्ताभिप्रायेण **क्रियाद्युपादानम्**। **क्रियादेरित्यादिशब्देन** प्रयत्नो विवक्षितः। सुखसाधनत्वादनुकूलत्वमित्यत्राह **नेति**। कुत इत्यत्राह **दुःखात्मकत्वादिति**। **तस्य**—क्रियादेः। प्रतिकूलरूपतया भासमानं वा तद्विषयज्ञानं वा दुःखम्; न तद्व्यतिरिक्तमात्मगुणान्तरमित्यभिप्रेत्य **दुःखात्मकत्वादित्ययं** हेतुरुक्तः। [3]**सुखार्थतयेति**। न हि दण्डचक्रादिर्घटो भवतीत्यर्थः। असुखार्थात् सुखार्थस्य किं वैषम्यमित्यत्राह **सुखार्थतयाऽपीति**।

---

1 भाष्ये कृत्युद्देश्यत्वपदप्रयोगसाहित्येनैव, कृतिकर्मत्वपुरुषानुकूलत्वादिपक्षाणां खण्डनार्थं ग्रहणदर्शनात् अत्र प्रेरकत्वपक्षे तत्साहित्यादर्शनात् प्रेरकत्वं कृतिकर्मत्वप्रभेद इत्येव वक्तुं शक्यम्। तथा एतत्पूर्वग्रन्थस्य प्रवर्तकत्वरूपकृत्युद्देश्यत्वपरत्वं टीकोक्तमपि न भाष्यात् प्रतीयत इति तत् पूर्वोक्तविरणमात्रमिति सुवचम्—तथापि कृतिकर्मत्वं नाम किञ्चिदित्यनुक्त्वा कृत्युद्देश्यत्वंनामकिञ्चिदिति तत्र प्रयोगात् तत् कृत्युद्देश्यत्वप्रकारान्तरं स्यात्। एवं पूर्ववाक्यस्य तथात्वे इदमपि अन्यादृशकृत्युद्देश्यत्वपरमेवास्त्विति टीकाशयः।

2 अयं दुःखरहित इति व्यवहारः सुखदुःखोभयविरहदशायामेव भवति। सुखकाले तु सुखी इत्येव प्रयोगः; न तु दुःखरहित इति। अतो दुःखनिवृत्तिमानयमिति सामानाधिकरण्यं द्वयविरहरूपस्वरूपावस्थितिमानयमिति सामानाधिकरण्यमेवेति। एकाभावस्यापरभावरूपता न भवतीति विशिष्याप्याह दुःखनिवृत्तिरेवेत्यादिना। 3 सुखार्थतयेत्यस्य भावं वर्णयित्वा तदुपरितनम् अपिशब्दं लक्ष्यीकृत्यावतारयति असुखार्थादिति। अत उक्तस्यैव पुनर्ग्रहणम्।

**न च कृतिं प्रति शेषित्वं कृत्युद्देश्यत्वम्, भवत्पक्षे शेषित्वस्यानिरूपणात्॥ न च परोद्देशप्रवृत्तकृतिव्याप्त्यर्हत्वं शेषत्वमिति तत्प्रतिसम्बन्धी शेषीत्यवगम्यते; तथा सति कृतेरशेषत्वेन तां प्रति तत्साध्यस्य शेषित्वाभावात्। न च परोद्देशप्रवृत्त्यर्हतायाः शेषत्वेन परः शेषी; उद्देश्यत्वस्यैव निरूप्यमाणत्वात्; प्रधानस्यापि भृत्योद्देशप्रवृत्त्यर्हत्वदर्शनाच्च। प्रधानस्तु भृत्यपोषणेऽपि स्वोद्देशेन प्रवर्तत इति चेन्न; भृत्योऽपि हि प्रधानपोषणे स्वोद्देशेनैव प्रवर्तते।**

**कार्यस्वरूपस्यैवानिरूणात् कार्यप्रतिसंबन्धी शेषः, तत्प्रतिसम्बन्धी शेषीत्यप्यसङ्गतम्॥**

---

कृतिशेषित्वं कृत्युद्देश्यत्वमिति पक्षं दूषयति **न चेति**। **अनिरूपणात्**—दुर्निरूपत्वादित्यर्थः। परोद्देशप्रवृत्तकृतिव्याप्त्यर्हत्वं शेषत्वमिति पक्षमनूद्य दूषयति **न च परोद्देशप्रवृत्ते**त्यादिना। **न च परोद्देशप्रवृत्त्यर्हताया** इति। उत्पत्तिश्च प्रवृत्तिमद्व्यापारः। अतः **प्रवृत्त्यर्हत्वम्** उत्पत्त्यर्हत्वम्। परोद्देशप्रवृत्त्यर्हतायाः शेषत्वरूपतयेत्यर्थः। **उद्देश्यत्वस्यैव निरूप्यमाणत्वादि**ति। अयमर्थः—कृत्युद्देश्यत्वम्—कृतिशेषित्वम्; शेषित्वञ्च शेषप्रतिसम्बन्धित्वम्; शेषत्वम् परोद्देशप्रवृत्त्यर्हत्वमित्युक्ते सति उद्देश्यत्वं नाम उद्देश्यत्वमित्युक्तं भवतीत्यात्माश्रयः; उद्देश्यत्वनिरूपणोपयुक्तस्य शेषत्वनिरूपणस्य उद्देश्यनिरूपणसापेक्षत्वादिति। किं परोद्देशप्रवृत्त्ययोगव्यवच्छेदो[1] विवक्षितः उतान्ययोगव्यवच्छेदः इति विकल्पे, प्रथमे शिरसि राजनि अतिव्याप्तिमाह **प्रधानस्यापी**ति। अत्रोद्देश्यशब्देन प्रयोजनभावाभिसन्धिर्विवक्षितः; तत्परिहारमुखेन द्वितीयं शिरः शङ्कते **प्रधानस्त्वि**ति। परोद्देशेन प्रवृत्त्यन्ययोगव्यवच्छेदो विवक्षितः। स तु प्रधानस्य नास्ति, स्वोद्देशेनापि तस्य प्रवृत्तेः। अतो नातिव्याप्तिरित्यर्थः। परिहरति **नेति**। भृत्येष्वव्याप्तिमाह **भृत्योऽपि ही**ति। कार्यप्रतिसंबन्धित्वं शेषत्वमिति पक्षं दूषयति **कार्यस्वरूपस्ये**ति। कार्यस्वरूपे निरूप्यमाणे फलभावार्थविलक्षणाकारेण तन्निरूपणार्थं **कार्यत्वं कृत्युद्देश्यत्व**मित्युक्तम्। उद्देश्यत्वं शेषित्वम्; शेषित्वं च शेषप्रतिसम्बन्धित्वम्; शेषत्वं च कार्यप्रतिसम्बन्धित्वम् इत्युक्ते सति आत्माश्रयः स्यात्, कार्यनिरूपणोपयुक्तशेषत्वनिरूपणस्य कार्यनिरूपणसापेक्षत्वादित्यर्थः॥

भाष्यकाराभिमतं शेषत्वलक्षणं स्वीकृत्य कृत्युद्देश्यत्वसमर्थनमपि दुश्शकम्। तथाहि—

"परगतातिशयाधानेच्छयोपादेयत्वमेव यस्य स्वरूपम्, स शेषः; परश्च शेषी" इति भगवान् भाष्यकारो वेदार्थसङ्ग्रहे शेषिलक्षणमभाषिष्ट। "शेषः परार्थत्वात्" इति शेषशेषिभावलक्षणपरस्य **जैमिनीय**सूत्रस्य परैरन्यथाव्याख्यातत्वात् तद्व्यावृत्त्यर्थं तस्य सूत्रस्यार्थोऽनेन लक्षणग्रन्थेन यथावत् प्रदर्श्यते। अस्यार्थ उच्यते—अन्यस्य प्रयोजनमेव यस्य परमप्रयोजनं स शेषः, अन्यः शेषीति वाक्यार्थः। अत्र **पर**शब्दोऽन्यपर्यायः, **पर-अतिशय**शब्दयोः कर्मधारयशङ्कानिवृत्त्यर्थो **गत**शब्दः। तेन स्वगतातिशयाधायके शेषिण्यतिव्याप्तिर्व्युदासः। **अतिशय**शब्दः प्रतिकूलेतराकारपरः। निकृष्टेतराकारपरो वा। तेन परगतविनाशाधायकशस्त्राग्निकण्टकादीनां विनाश्यं प्रति शेषत्वव्युदासः। न च दुःखहेतुषु यातनाशरीरेष्वव्याप्तिः; तेषामपि दुःखजननद्वारा पापक्षयलक्षणातिशयहेतुत्वात्। न चानुत्पन्ने अपूर्वे व्रीह्यादिभिरतिशयाधानायोगात् तेष्वव्याप्तिः, सत्तालाभस्यातिशयरूपत्वात्; निकर्षात्मकधर्मेतराकारो

---

1 अयोगव्यवच्छेदः—कदाचिदेतत्प्रवृत्तेरपि सत्त्वम्।

ह्यतिशयः ॥ ननु मानसंबन्धार्हं व्यवहारार्हं वा यत् स्वरूपं तदेव सदिति भवन्मतम् ; सत्ताजात्यभावात् । तत् कथं स्वरूपमेवाकार इत्युच्यते ॥ न ; स्वरूपस्यैव सत्तारूपत्वेऽपि तल्लाभस्याऽऽकारत्वोपपत्तेः । सत्तालाभो ह्यतिशय इत्युक्तम् । सत्तालक्षणस्वरूपस्य च लाभो नाम प्रथमक्षणसंबन्धः । स्वरूपस्याविद्यमानत्वेऽपि धीस्थतया परातिशयाधानव्यवहार उपपन्नः । इच्छयेतिपदेन परगतातिशयस्य इच्छाविषयतया प्रयोजनत्वमवगम्यते । इच्छापदस्य च निरुपपदत्वात् साक्षादेवेच्छाविषयत्वमभिप्रेतम् । साक्षादिच्छाविषयश्च परमप्रयोजनम् ; अवान्तरप्रयोजनस्य हि तदर्थतयेष्टत्वमिति न साक्षादिच्छाविषयत्वम् । अतः परमप्रयोजनज्ञापकेन इच्छयेति पदेन परार्थत्वादित्यर्थशब्दो व्याख्यातो भवति । अर्थ्यत इति ह्यर्थः ; इष्यत इति यावत् । निरुपपदश्चार्थशब्दः स्वतःपरमप्रयोजनपरः । अनेन स्वातिशयाधायके भृत्यादौ लक्षणस्याव्याप्तिशङ्काव्युदासः । भृत्यो हि स्वालङ्कारादिकमपि स्वाम्यतिशयाय भवतीति हि (?) [स्व] बुद्ध्या स्वातिशयमाधत्ते । अतो भृत्येन स्वातिशयाधानस्य परातिशयः परमप्रयोजनमिति नाव्याप्तिः । उपादेयत्वम्—स्वीकार्यत्वम् ; व्यवहर्तव्यत्वमिति यावत् । इच्छास्वीकारौ यथायोग्यं संभवतः । शेषशेषिणोरुभयोः, अन्यतरस्मिन् वा संभवतश्चेत्, इच्छास्वीकारौ तद्गतौ स्तः । यथा राजभृत्यराजतद्भवनादौ । उभयमचेतनं चेत्, उभयव्यतिरिक्तचेतनगताविच्छास्वीकारौ ; यथा प्रभाप्रभावद्यागतदङ्गादिके । उपादेयत्वम्—उपादातुमर्हत्वम् । तेनाकिञ्चित्कारदशायामव्याप्तिपरिहारः । एवकारेण कदाचित्स्वार्थनिरपेक्षपरप्रयोजनसाधकेषु प्रकृष्टकृपास्नेहान्वितेषु अतिव्याप्तिव्युदासः । अथवा केनचिदाकारेणोपहितस्य शेषत्वे सति तदनुपहितस्य शेषत्वव्यावृत्त्यर्थ एवकारः ; अनुपहितस्य प्रयोजनान्तरसाधकत्वेन परातिशयैकप्रयोजनत्वाभावात् । स्वरूपम्—स्वं रूपम्, असाधारणधर्मः—निरूपकधर्म इत्यर्थः । न च निरूपकशब्दस्य व्युत्पादनार्थत्वात्[1] व्यावर्त्यधर्मापेक्षा । **परातिशय एव परमप्रयोजनं यस्य, स परं प्रति शेष** इति लक्षणमुक्तं भवति ।

यतः परातिशयस्यैव परमप्रयोजनस्याऽऽधायकत्वं लक्षणम्, अत एव परगतातिशयाधानायोगान्ययोगव्यवच्छेदविकल्पेन राजन्यभृत्ययोरतिव्याप्त्यव्याप्तिप्रसञ्जनमस्मत्पक्षे नावतरति ; परातिशयमात्राधायकत्वस्य लक्षणत्वाभावात् । न च द्वारशेषिगतातिशयस्य परमशेषिगतातिशयं प्रति प्रयोजकत्वे सत्यपि[2] तस्य परमप्रयोजनत्वाभावात् द्वारशेषिणं प्रति शेषभूतवस्तुनि लक्षणस्याव्याप्तिः शङ्कनीया; शेषभूतवस्तुगतातिशयापेक्षया शेषिगतातिशयस्य पारम्यमात्रस्य विवक्षिततया परमशेषिगतातिशयरूपपरमप्रयोजनत्वस्य[3] व्युदसनीयत्वाभावात् । ततश्च द्वारशेषिगतातिशयस्य शेषभूतवस्तुगतातिशयान्तराधायकत्वेन[4] प्रयोजनत्वं

---

1 शेषलक्षणे निरूपकशब्दव्यावर्त्यं किमिति न विचार्यम् ; तस्य व्युत्पादनार्थत्वात् लक्षणे निवेशाभावादित्यर्थः । 2 प्रयोजकत्वे सत्यपीति । परमशेषिगतातिशयप्रयोजकतया द्वारशेष्यादौ लक्षणसमन्वयेऽपीत्यर्थः । 3 प्रयोजनत्वस्येति । शेषिगतातिशयो यः परमशेषिभूतकिञ्चिद्गतातिशयप्रयोजनको न भवति, तस्यैव लक्षणनिविष्टत्वमिति नेत्यर्थः ।

4 शेषेण शेषिण्यतिशये आहिते सति शेषे शेष्यतिशयाधायकत्वरूपो महिमा ह्युदासीनव्यावर्तको जायते । तावता न शेषिणः शेषत्वमिति भावः ।

परमशब्दव्युदसीनम् ॥ ननु पुरुषश्च कर्मार्थत्वादिति पुरुषस्य कर्मशेषत्वं कर्ममीमांसायां राद्धान्तितम्। पुरुषश्च स्वर्गकामः इति तस्य[1] परगतातिशयनिष्पादनमेव परमप्रयोजनं न भवतीत्यव्याप्तिरिति चेत्—न; तस्य कर्तृत्वोपहितवेषेण शेषत्वादुपहितस्य कर्मनिष्पादनैकप्रयोजनत्वाच्च कर्मशेषतोपपत्तेः ॥

नन्वेतल्लक्षणमसंभवहतम्। न खलु चेतयमानः कश्चित् परगतातिशयं स्वस्य परमप्रयोजनं मत्वा प्रवर्तते, किन्तु परप्रयोजनमपि स्वप्रयोजनार्थं मत्वा हि प्रवर्तते ॥ उच्यते। नैवमसंभवः; अचेतनेषु परातिशयैकप्रयोजनत्वदर्शनात्। यद्यपि चेतनः स्वारस्येन स्वप्रयोजनमेव परमप्रयोजनं मन्यते—तथाऽपि न लक्षणस्य हानिः, जन्मक्रियाद्यभिज्ञैर्मध्यस्थैः परातिशयनिष्पादनैकप्रयोजनतया प्रतिपत्तुं शक्यत्वात्। इच्छास्वीकारौ यथासम्भवमिति ह्युक्तम्। तथा प्रतिपत्तियोग्यत्वमनिष्टमप्यवर्जनीयं स्वयमपि भृत्यो जानाति।

अपि च परातिशयस्य परमप्रयोजनत्वावगतिः स्वरसतश्चेतनस्यापि संभवति; प्रकृष्टकृपास्नेहान्वितेषु तद्दर्शनात्। दया हि स्वार्थनिरपेक्षा परदुःखासहिष्णुता। अत्रानुकूलेतरजनः पर इति विवक्षितः। अर्थादिकामनया परदुःखं शिशमयिषोस्तद्दुःखानुवृत्तिरनिष्टा स्यादिति तद्व्युदासाय स्वार्थानपेक्षशब्दः। यद्यपि कृपया परं रक्षतः शास्त्रसिद्धमदृष्टम्, तथाप्यदृष्टाभिसन्धिविरहितस्यैव परदुःखदर्शनानन्तरमवशाश्रुपातादिमत्त्वदर्शनात् तद्रक्षणदशायामप्यदृष्टाभिसन्धिराहित्यदर्शनाच्च स्वार्थानपेक्षता युक्ता ॥ परदुःखदर्शनजनिततादात्विकस्वदुःखनिवृत्तिरूपफलात् तत्प्रवृत्तिरिति न स्वार्थानपेक्षत्वमिति चेत्—ईदृशं स्वार्थत्वं शेषस्याप्यस्ति। तद्धि स्वार्थानपेक्षत्वं न विहन्ति; किन्तु तदनुकूलमेव। परदुःखज्ञानरूपदुःखनिवृत्तिं पराभ्युदयज्ञानरूपप्रीतिमत्त्वं च विना स्वार्थानपेक्षत्वस्य विवक्षितत्वात्। तथा मित्रादिषु स्नेहप्रकर्षाच्च स्वार्थानपेक्षा प्रवृत्तिर्बन्धुद्रविणयशोधर्महानिकरी प्राणव्ययकरी च दृश्यते। संबन्धविशेषान्वितेषु प्रीतिः स्नेहः, यस्य विपाकाः अस्थानभयशङ्कित्वं दोषानवभासः दोषेऽपि गुणबुद्धिरित्यादयः। स्निग्धश्च जनः स्वसत्तामनपेक्ष्य पुत्रादिदुःखनिवृत्त्यर्थं प्रवर्तमानो दृश्यते। तच्च तद्गतदुःखासहत्वकृतम्। यस्य दुःखातिशयदर्शनं स्वसत्तानपेक्षतामापादयेत्, स च निरतिशयप्रीतिविषयः; परानर्थनिमित्ताप्रीतितारतम्यस्य तद्विषयप्रीतितारतम्यनिबन्धनत्वात्। यश्च निरतिशयप्रियः, तदभ्युदयोऽपि निरतिशयप्रियः। तत्प्रीतितारतम्यस्य तत्सबन्धिप्रीतितारतम्यहेतुत्वात्। तदभ्युदयश्च परमप्रयोजनं भवति; स्वप्रीतिहेतुभूतस्वगतार्थान्तरसाधनत्वनैरपेक्ष्येण स्वेच्छाविषयत्वात्। अतः कृपया स्नेहेन वा परदुःखासहिष्णुत्वदर्शनात् परप्रयोजनस्य परमप्रयोजनत्वं सिद्धमिति न शेषलक्षणस्यासंभवः। न च परमप्रयोजनरूपपरातिशयाधायकत्वस्य मित्रादिष्वपि संभवात् लक्षणस्यातिव्याप्तिःशङ्कनीया; तेषां परातिशयैकप्रयोजनत्वनियमाभावात्। तद्धि तेषामाकारविशेषोपहितरूपेण वा यावज्जीवं वा पुरुषविशेषं प्रति न नियतम्। पुरुषभेदेनाप्यनियतञ्च। भृत्येषु तु तन्नियतम्; शेषिविशेषनियमाभावेऽपि यं कञ्चित्प्रति पारार्थ्यं भृत्यादेर्यावदात्मभावीति। यदीदृक्त्वं न दृश्यते, तेषां न भृत्यत्वम्। यद्वा यद्यपि गर्भदासादयः स्वेषां परार्थैकप्रयोजनत्वमजानन्तः शेषिण्यतिशयाधानमपि स्वार्थं मन्यन्ते—तथापि स्थूलोऽहमित्यात्मनो देहाद्यभिन्नत्वबुद्धिवत् सा भ्रान्तिरिति न लक्षणाव्याप्तिः, स्वार्थत्वबुद्धेरात्मस्थूलत्वधिय इव प्रमाणबाधितत्वात्।

1 तस्य—पुरुषस्य। परगतेति—कर्मगतेत्यर्थः।

नापि कृतिप्रयोजनत्वं कृत्युद्देश्यत्वम् । पुरुषस्य कृत्यारम्भप्रयोजनमेव हि कृतिप्रयोजनम् । स चेच्छाविषयः ।

तस्मादिष्टत्वातिरेकिकृत्युद्देश्यत्वानिरूपणात् कृतिसाध्यताकृतिप्रधानत्वरूपं कार्यं दुर्निरूपमेव ।

नियोगस्यापि साक्षादिष्टविषयभूतसुखदुःखनिवृत्तिभ्यामन्यत्वात् तत्साधनतयैवेष्टत्वं

---

न च स्वार्थत्वभ्रान्तिमात्रेण पारार्थ्यहानिः । न ह्यात्मनः स्थूलोऽहमिति भ्रान्त्या देहवैलक्षण्यहानिः । एवं चिदचितोरपि स्वातन्त्र्यबुद्धेः श्रुतिबाधितत्वान्न लक्षणाव्याप्तिः । न खलु व्रीह्यादीनां यागीयत्वाज्ञानेऽपि यागशेषत्वहानिः ॥

स्वातन्त्र्याभिमानवतः परमप्रयोजनरूपं परगतातिशयं नियमेनानादधतः कथं लक्षणवत्त्वमिति चेत्—न ; एतद्बुद्ध्या तथात्वानवगमेऽपि वस्तुतः परमात्मलीलोपकरणतया परमात्मनि लीलारसरूपातिशयस्य नियमेन सिद्धेः । तत्त्वज्ञैरीश्वरपरिकरत्वेन नियमेन ज्ञायमानत्वं चास्य किञ्चित्कारः । तेन एतत्परिकरवत्तया ज्ञायमानत्वरूपातिशयः परस्य सिध्येत् । तदुक्तं **नीतिविद्भिः**, [1]"मनागुपकारिता सर्वस्यास्त्येव; तत्परिकरत्वेन ज्ञायमानत्वात्" इति । शेषभूतवस्त्वाहितलीलारसाद्यतिशयभाक्त्वं न परमात्मनोऽवाप्तसमस्तकामत्वविरोधि । इच्छायां सत्यामभिमतविनियोगानुगुणपरिकरसंपत्तिर्ह्यवाप्तसमस्तकामत्वम् । यथाऽऽह भगवान् भाष्यकारो **वेदान्तसारे**, "अस्याऽऽत्मतृप्तस्यावाप्तसमस्तकामत्वं हि सदाऽभिमतसकलभोगोपकरणसद्भावः" इति । अतो यथोक्तशेषलक्षणमुपपन्नम् ।

एवमस्मदुक्तं शेषलक्षणमङ्गीकृत्य कृतिं प्रति शेषित्वं कृत्युद्देश्यत्वमिति परैर्वक्तुं न शक्यते ; विकल्पासहत्वात् । किं त्वया द्वारशेषित्वं कृत्युद्देश्यत्वमभिमतम् , उत परमशेषित्वम् । प्रथमे भावार्थस्यापि कृतिशेषित्वं स्यात्; तस्य कृतिसाध्यत्वात् । द्वितीये स्वर्गस्य कृतिं प्रति शेषित्वं स्यात्; कृतिसाध्यापूर्वस्यापि स्वर्गसाधनत्वात् । अतः कृतिशेषित्वरूपं कृत्युद्देश्यत्वं फलभावार्थविलक्षणाकारेण न सिध्यति ॥

अथ कृतिप्रयोजनत्वं कृत्युद्देश्यत्वमिति पक्षं दूषयति **नापीति** । न हि कृतिर्नाम चेतयमाना काचित् प्रयोजनवती । तस्मात् कृतिप्रयोजनं नाम कृतिमत्पुरुषप्रयोजनमित्यर्थः । ततः किमित्यपेक्षायां तच्चेष्टत्वे पर्यवस्यतीत्याह **स चेति** । **कृतिसाध्यताकृतिप्रधानत्वरूपं कार्यं दुर्निरूपमेवेति** । **कृतिप्रधानत्वशब्देन** स्वेदादिव्यावृत्तिः । **कृतिसाध्यताशब्देन** आत्मव्यावृत्तिः ; तस्य हि कृतिशेषित्वमस्ति । विशिष्टस्य लक्षणत्वात् तत्र विशेष्ये दुर्निरूपे सति विशिष्टमेवासिद्धमित्यर्थः । एवं तृतीयाकाररूपं प्रयोजनत्वं दूषितम् ।

अथ स्वतइष्टत्वरूपं प्रयोजनत्वं तत्प्रयुक्तकृतिसाध्यत्वं च दूषयति **नियोगस्यापीति** । **इषिः**—इच्छा । अत्रेच्छाविषयभूतार्थान्तरसाधनत्वविरहेणेष्टत्वं **स्वतइष्टत्वं** विवक्षितम् । तत् सुखस्य दुःखनिवृत्तेश्च समानम् । स्वत इष्टत्वं स्वत इष्टत्वप्रयुक्तकृतिसाध्यत्वञ्च तयोरेव । तस्मात् स्वतइष्टत्वतत्प्रयुक्त-

---

1 एतत्सच्छायं वाक्यं श्रीरहस्यत्रयसारे अपराधपरिहाराधिकारे उपात्तम्, "तस्येदमितिधीहेतुरप्युपकारी" इति । परंतु तदर्थः--अस्येदमितिबुद्धि हेतुभूतप्रतिपत्तिः--गौरवबुद्धिरपि उपकारकत्वरूपशेषत्वसंपादिकेति । तस्मिन् प्रतिपत्तिमत्त्वात् धीहतुर्योतदीयत्व नरो भवति, सोऽप्युपकारकः अतिशयावहः । शेष इति वा ।

**कृतिसाध्यत्वञ्च । अत एव हि तस्य क्रियातिरिक्तता । अन्यथा क्रियैव कार्यं स्यात् । स्वर्गकामपदसमभिव्याहारानुगुण्येन लिङादिवाच्यं कार्यं स्वर्गसाधनमेवेति क्षणभङ्गिकर्मातिरेकि स्थिरं स्वर्गसाधनमपूर्वमेव कार्यमिति स्वर्गसाधनतोल्लेखेनैव ह्यपूर्वव्युत्पत्तिः । अतः प्रथममनन्यार्थतया प्रतिपन्नस्य कार्यस्यानन्यार्थत्वनिर्वहणायापूर्वमेव पश्चात् स्वर्गसाधनं भवतीत्युपहास्यम् ; स्वर्गकामपदान्वितकार्याभिधायिपदेन प्रथममप्यनन्यार्थतानभिधानात् ; सुखदुःखनिवृत्तितत्साधनेभ्योऽन्यस्यानन्यार्थस्य कृतिसाध्यताप्रतीत्यनुपपत्तेश्च ।**

---

कृतिसाध्यत्वे तत्साधनतयेष्टस्य नियोगस्य न सिध्यत इत्यर्थः । साधनतयेष्टत्वमुपपादयति **अत एव हीति** । साधनत्वेन सिद्धयनङ्गीकारे धात्वर्थ एव कार्यं स्यादित्याह **अन्यथेति** । एतद्विवृणोति **स्वर्गकामेति** । **अत इति** । स्वर्गकामपदान्वयात्पूर्वं धात्वर्थमात्रस्यैव कार्यताप्रतिपत्तेः, तदन्वये तत्साधनतयैव प्रतिपत्तेश्चेत्यर्थः । **प्रथममनन्यार्थतया प्रतिपन्नस्य कार्यस्यानन्यार्थत्वनिर्वहणायापूर्वमेव पश्चात् स्वर्गसाधनं भवतीति** । अयमर्थः—यथा स्वप्राधान्यनिर्वहणाय अनुजीविनामभिमतं प्रभुः प्रददाति, तद्वत् अपूर्वमपि स्वयं प्रधानतया प्रतिपन्नं स्वप्राधान्यनिर्वहणाय स्वं साधयतः पुरुषस्य स्वर्गं ददातीति । यथा **पञ्चिकायाम्**, "आत्मसिद्ध्यनुकूलस्य नियोज्यस्य प्रसिद्धये । कुर्वत् स्वर्गादिकमपि प्रधानं कार्यमेव नः" इति । **उपहास्यम्**—समीपस्थैरपि हास्यम् । **अत** इत्युक्तमर्थं विवृणोति **स्वर्गकामेति** । प्राधान्येन कार्यप्रतिपत्तिः किमेकपदश्रवणवेलायाम्, उत स्वर्गकामपदान्वितवेलायामिति विकल्पमभिप्रेत्य प्रथमे कल्पे दूषणम्, **अन्यथा क्रियैव कार्यं स्यादि**त्यनेनोक्तं भवति । तस्मिन्नेव पक्षे अभ्युपगमेन दूषणान्तरञ्च—एकपदेन कार्यमनन्यार्थं प्रतिपन्नमस्तु; तथाऽप्यन्विताभिधानदशायां प्रतिपन्न एवार्थः सम्यगर्थः । अतो नानन्यार्थत्वमिति । द्वितीयकल्पे दूषणमुच्यते **स्वर्गकामपदान्वितेति** । स्वर्गकामपदान्वितलिङादिना तत्साधनतयैवाभिधानात् प्रथममनन्यार्थतया प्रतिपन्नमिति न वक्तुं युक्तमित्यर्थः । व्युत्पत्तिदशायामपूर्वस्य साधनतया व्युत्पत्तिः ; अभिधानदशायां तु अनन्यार्थं स्थायि कार्यमित्येव प्रतीयत इति शङ्कायाम् , अपूर्वव्युत्पत्तिमतोऽपि पुरुषस्य एकपदश्रवणवेलायामनन्यार्थत्वप्रतीत्यनुपपत्तिमाह **सुखेति** । 'न निर्विशेषं सामान्यम्' इति न्यायात् साध्यमिति सामान्येनाभिधीयमानमपि विशेषनिष्ठतया प्रतीयते । सुखं दुःखनिवृत्तिस्तत्साधनं वा त्रीण्येव कृतिसाध्यानि । तस्मादेषु त्रिष्वन्यतमेन साध्येन भवितव्यम् । तत्र सुखत्वदुःखनिवृत्तित्वायोगाद् तत्साधनतयैव साध्यमिति प्रतीयते । कृतिर्हि त्रिष्वन्यतममेव गोचरयति ; तथा दर्शनात् । दर्शनानुरोधेन चाभ्युपगन्तव्यम् । कृतेः क्रियातिरिक्तगोचरत्वादर्शनेन हि कृत्यपूर्वयोर्घटकत्वेन भावार्थो निवेशितः । तस्मात् त्रिष्वन्यतमत्वाभावे, साध्यमिति प्रतीतिरेव न स्यादित्यर्थः । किञ्च अन्विताभिधानवादिना स्वर्गकामपदान्वित एव लिङादिः कार्यमभिदधातीति वक्तव्यम् । तदानीं तत्संनिधानबलेन तत्साधनतयैव प्रतीतिः स्यादिति नानन्यार्थतया प्रतिपत्तिरिति । **सुखे**त्यादेरेवं वाऽर्थः—सुखदुःखनिवृत्त्यन्यत्वात् स्वत इष्टतया कृतिसाध्यत्वमयुक्तम् । तत्साधनादन्यतया परम्परयेष्टत्वेन कृतिसाध्यत्वमप्ययुक्तमिति ॥

पूर्वं तृतीयाकाररूपं प्रयोजनत्वं निरस्तम् ; अथ स्वतइष्टत्वरूपं प्रयोजनत्वञ्च सुखदुःखनिवृत्त्यन्यत्वान्निरस्तम् ; इदानीं स्वतइष्टत्वसिद्धये अनन्यार्थत्वद्रढिम्ने च सम्भावनीयं सुखरूपप्रयोजनत्वं दूषयितु-

अपि च—किमिदं नियोगस्य प्रयोजनत्वम् ॥ सुखवत् नियोगस्याप्यनुकूलत्वमेवेति चेत्—किं नियोगः सुखम्? सुखमेव ह्यनुकूलम् ॥ सुखविशेषवत् नियोगापरपर्यायं विलक्षणं सुखान्तरमिति चेत्—किं तत्र प्रमाणमिति वक्तव्यम्। स्वानुभवश्चेत्—न। विषयविशेषानुभवसुखवत् नियोगानुभवसुखमिदमिति भवताऽपि नानुभूयते ॥ शास्त्रेण नियोगस्य पुरुषार्थतया प्रतिपादनात् पश्चात्तु भोक्ष्यत इति चेत्—किं तत् नियोगस्य पुरुषार्थत्ववाचि शास्त्रम्? न तावल्लौकिकं वाक्यम्; तस्य दुःखात्मकक्रियाविषयत्वात्; तेन सुखादिसाधनतयैव कृतिसाध्यतामात्रप्रतिपादनात्। नापि वैदिकम्; तेनापि स्वर्गादिसाधनतयैव कार्यस्य प्रतिपादनात्। नापि नित्यनैमित्तिकशास्त्रम्, तस्यापि तदभिधायित्वं स्वर्गकामवाक्यस्थापूर्वव्युत्पत्तिपूर्वकमिति उक्तरीत्या तेनापि सुखादिसाधनकार्याभिधानमवर्जनीयम्। नियतैहिकफलस्य कर्मणोऽनुष्ठितस्य फलत्वेन तदानीमनुभूयमानान्नाद्य(द्या)रोगतादिव्यतिरेकेण नियोगरूपसुखानुभवानुपलम्भेश्च नियोगः सुखमित्यत्र न किञ्चन प्रमाणमुपलभामहे। अर्थवादादिष्वपि स्वर्गादिसुखप्रकारकीर्तनवत् नियोगरूपसुखप्रकारकीर्तनं भवतामपि न दृष्टचरम्।

अतो विधिवाक्येष्वपि धात्वर्थस्य कर्तृव्यापारसाध्यतामात्रं[1] शब्दानुशासनसिद्धमेव

---

मुपक्रमते अपि चेति। किमिदं नियोगस्य प्रयोजनत्वमिति। किं—क्षेपे। शङ्कते सुखवदिति। अनुकूलत्वं सुखेतरस्यानुपपन्नं मन्यमानः पृच्छति किमिति। अभिप्रेतं विवृणोति सुखमेव हीति। पुनः शङ्कते सुखविशेषवदिति। नियोगापरपर्यायम् पर्यायशब्दबाहुल्यसंभवादपरशब्दः। सुखान्तरमिति। यथा भौमसुखाद्विलक्षणं स्वर्गादिसुखं संभाव्यते, तथा ततोऽपि विलक्षणं सुखान्तरमिदमित्यर्थः। प्रमाणाभावं वक्तुमाह किं तत्रेति। चन्दनादिसुखं हि स्वानुभवसिद्धम्। अतः स्वानुभवः लौकिकवाक्यं वेदे च काम्यविधिवाक्यं नित्यनैमित्तिकवाक्यम् अर्थवादाश्च [2]यथाक्रमं नियोगस्य सुखरूपतां प्रति प्रमाणानि न भवन्तीत्युच्यते स्वानुभवश्चेदित्यादिना। तस्य दुःखात्मकक्रियाविषयत्वात् तेन सुखादिसाधनतयैव कृतिसाध्यतामात्रप्रतिपादनादिति। दुःखात्मकस्य सुखादिसाधनभूतधात्वर्थमात्रस्य कर्तव्यताप्रतिपादनादित्यर्थः। नियतैहिकफलस्येत्यादिना योग्यानुपलब्धिरुच्यते। नियतैहिकफलस्य कर्मणः—अप्रस्तुतप्रतिबन्धस्य[2] कर्मण इत्यर्थः। अनेन [3]अन्त्येष्टिसापेक्षपरमापूर्वस्यावृत्तिः।

अथ कृतिसाध्यत्वं दूषयति अतो विधिवाक्येष्वपीति। किं व्युत्पत्तिसिद्धत्वात् धात्वर्थातिरिक्तार्थः स्वीक्रियते, उत पुरुषार्थतासिद्ध्यर्थम्, उत सुखसाधनत्वलक्षणव्यवहितपुरुषार्थत्वसिद्ध्यर्थमिति विकल्पं हृदि निधाय प्रथमद्वितीयकल्पयोरुत्तरमाह अत इति। अयमर्थः—उक्तप्रकारेण धात्वर्थातिरिक्ते व्युत्पत्त्यभावात् तथाविधस्य स्वतः पुरुषार्थत्वाभावाच्चेति। कर्तृव्यापारः—प्रयत्नः। शब्दशास्त्रस्वारस्यमप्यस्मत्पक्षे विद्यत इत्याह शब्दानुशासनसिद्धमेवेति। साधनत्वसिद्ध्यर्थं क्रियातिरिक्तार्थस्वीकार इत्यत्राह

---

1 कृतिसाध्यतामात्रमित्यनेन कृतिसाध्यत्वप्रधानत्वादिविशिष्टं वा केवलं वा अपूर्वं नार्थः। तथा इष्टसाधनत्वबलवदनिष्टाननुबन्धित्वविशिष्ट कृतिसाध्यत्वरूपः तार्किकमतार्थोऽपि नेति ज्ञाप्यते।

2 यथाक्रममित्यस्य उच्यत इत्यत्रान्वयः। 3 अप्रस्तुतेत्यादि। अनेन 'ऐहिकमप्रस्तुतप्रतिबन्धे' इति सूत्रे तत् पदं बहुव्रीहिवृत्तमिति सूचितम्। भाष्ये नियतेत्यस्य अप्रतिबद्धोत्पाद्येत्यर्थः नियोगस्यापूर्वाख्यस्य फलनाश्यत्वात् फलस्य चेह जातत्वात्, एतन्नियोगानुभवो जन्मान्तरे इति दुर्वचम्। अत्र तु जन्मनि तदननुभवः स्पष्ट इति भावः। ३. अन्त्येष्टीति। आहिताग्नेर्मृतस्य संस्काररूपेयमिष्टिः। तज्जन्यापूर्वस्यामुष्मिकफलसाधनकर्ममात्रोपकारकत्वम्।

लिङ्गादेर्वाच्यमित्यवसीयते । धात्वर्थस्य च यागादेरग्न्यादिदेवतान्तर्यामिपरमपुरुषसमाराधनरूपता, समाराधितात् परमपुरुषात् फलसिद्धिश्चेति, "फलमत उपपत्तेः" इत्यत्र प्रतिपादयिष्यते । अतो वेदान्ताः परिनिष्पन्नं परं ब्रह्म बोधयन्तीति ब्रह्मोपासनफलानन्त्यं स्थिरत्वं च सिद्धम् । चातुर्मास्यादिकर्मस्वपि केवलस्य कर्मणः क्षयिफलत्वोपदेशादक्षयफलश्रवणम्, "वायुश्चान्तरिक्षं चैतदमृतम्" इत्यादिवदापेक्षिकं मन्तव्यम् । अतः केवलानां कर्मणामल्पास्थिरफलत्वात् ब्रह्मज्ञानस्य चानन्तस्थिरफलत्वात् तन्निर्णयफलो ब्रह्मविचारारम्भो युक्त इति स्थितम् ॥

इति श्रीभाष्ये जिज्ञासाधिकरणम् ।

---

**धात्वर्थस्य** चेति । "यज देवपूजादौ" इति हि धातुरिति भावः ।

प्रकृतब्रह्मविचारारम्भहेतुः सिद्ध इत्याह **अत** इति । सिद्धवस्तुनि बुद्धिपूर्वकं यदृच्छया च आद्यव्युत्पत्तिसंभवात्, अन्यथाऽपि विधिशेषतया सिद्धेश्चेत्यर्थः । अथ विशेषणांशासिद्धिं परिहरति **चातुर्मास्यादी**त्यादिना । कर्मणामावृत्तिविधानाच्च क्षयिफलत्वमवगतमिति सिद्धमित्यनुसंधेयम् । "तद्यथेह कर्मचितो लोकः क्षीयते" इत्यादिवाक्यमभिप्रेत्याह **क्षयिफलत्वोपदेशा**दिति । अक्षयफलश्रवणनिर्वाहमाह **वायुश्चे**ति । न हि चातुर्मास्यादिवाक्येषु अक्षयफलश्रवणमर्थवादोक्तत्वात् त्यज्यते ; अपि तु कर्मणामावृत्तिविधानात् क्षयिफलत्वोपदेशाच्च । तस्मात् कर्मणां क्षयिफलत्वनिर्णयसिद्धिः । अतो हेतौ विशेषणांशः सिद्धः ।

अधिकरणार्थमुपसंहरति **अत** इति । अस्याधिकरणस्य ब्रह्ममीमांसा विषयः ; सा किम् आरम्भणीया, उत नेति संशयः ; सिद्धवस्तुनि शब्दव्युत्पत्तिर्नास्तीति [1]विचारः ; अस्तीति निश्चयः ; आरम्भः प्रयोजनम् इत्यधिकरणाङ्गपञ्चकम् । यथाऽऽहुः, "विषयः संशयश्चैव [1]विचारो निर्णयस्तथा । प्रयोजनेन सहितमेतत् स्यादङ्गपञ्चकम्" इति । **परीक्ष्य लोकान्** इत्यादिवाक्यं प्रथमसूत्रस्थन्यायसिद्धानुवादपूर्वकं गुरूपसदननियमविधिपरम् ; **गुरुमेवाभिगच्छे**दित्युक्तत्वात् ॥ रागतः प्रवृत्तौ सत्यां विधेयाभावादस्य सूत्रस्य वाक्यत्वं न घटते ; उद्देश्योपादेयविभागवद्धि वाक्यम् ; विधेयं ह्युपादेयम् इति न वाच्यम् ; अज्ञातज्ञापकत्वात् । प्रागज्ञातं वाक्यज्ञाप्यं ह्युपादेयम् । रागतो ब्रह्मविचारे प्रवृत्तस्यापि सिद्धवस्तुनि व्युत्पत्तिर्नास्तीति वाक्येन अनारम्भणीयत्वं ज्ञायते । तं प्रति, सिद्धवस्तुनि व्युत्पत्तिसंभवादारम्भणीयत्वज्ञापनमज्ञातज्ञापनमेवेत्युद्देश्योपादेयविभागवत्त्वं सूत्रस्य । अत्र हि रागतः प्रवृत्तिमतः पूर्वपक्षहेतुना निवृत्तौ प्रसक्तायामप्रतिपन्नस्तत्तत्परिहारो विधीयते[2] ॥ **इति जिज्ञासाधिकरणम्** ॥

---

[1] विचारः—विपरीतकोटिसंभावनारूपोहात्मकस्तर्कः ; पूर्वपक्ष इति यावत् ।

[2] अस्तु पूर्वमनारम्भणीयत्वज्ञानं पश्चादारम्भणीयत्वज्ञानञ्च । पुरुषस्य प्रागेव रागतः प्रवृत्तत्वात् वाक्यविधेयं किमपि नास्तीति प्रश्नस्य कः समाधिरित्यत्रोपपादयति अत्र हीति । प्रवृत्तिविघातपरिहार आरम्भणीयत्वज्ञानफलम् । ब्रह्मापातप्रतीतेः संभावितप्रामाण्यकत्वाभावबुद्ध्या प्रवृत्तिभंगः प्रसक्तः । संभावितप्रामाण्यकत्वस्थापनमिह कृतम् । तेन तादृगापातप्रतीतिमान् सन् स रागतः पुनः प्रवर्तते । अतो वाक्यस्य प्रवृत्त्यर्हत्वबोधकस्य प्रवर्तने पर्यवसानात् वस्तुतः अज्ञातज्ञाप्यांशानपायाच्च विधेयमस्त्येवेति भावः । श्रीः ॥

## जन्माद्यधिकरणम् १-१-२

किंपुनस्तद्ब्रह्म, यज्जिज्ञास्यमुच्यत इत्यत्राह—

अथ शास्त्रकाण्डद्विकाध्यायपादपेटिकाधिकरणरूपसंबन्धिभेदेन सप्तविधासु सङ्गतिषु सङ्गत्यन्तराणां स्पष्टत्वादधिकरणसङ्गतिमाह **किंपुनरिति** । शास्त्रसङ्गतिर्हि वेदार्थविचाररूपतया [1]स्पष्टतरा ; वेदान्तार्थविचाररूपत्वात् काण्डसङ्गतिः ; कारणविषयत्वात् द्विकसङ्गतिः ; कारणविषयवाक्यतर्करूपत्वादध्यायसङ्गतिः ; अयोपव्यवच्छेदविश्रान्तेः पादसङ्गतिः ; शास्त्रारम्भार्थत्वात् पेटिकासङ्गतिः । अतोऽवान्तरसङ्गतिः **किंपुनरित्यादिभाष्येणोच्यते** । **जिज्ञास्यम्**—विचार्यम् । सकलेतरपुरुषार्थतत्साधनपरित्यागपूर्वकं प्राप्यत्वेनोपायत्वेन च यत् जिज्ञास्यमुक्तमित्यर्थः । प्राप्यतया प्रापकतया च हि ब्रह्मैव आपाततः प्रतिपन्नम् । अनेन [2]**जिज्ञास्य**मिति पदेन प्रणववेद-प्रधानाद्यौपचारिकार्वाचीन ब्रह्मशब्दार्थव्यावृत्तिः । तच्च व्यावर्तकस्य लक्षणस्य वक्तव्यतयाऽपि हि सिध्यति । ब्रह्मशब्दवाच्यं स्वरूपेण गुणैश्च निरतिशयबृहत्त्वयोगि ; 'बृहति बृंहयति', ''बृहत्त्वाद्बृंहणत्वाच्च ब्रह्मेति परिपठ्यते' इति श्रुतिस्मृतिनिर्वचनात् । तत्र, 'ब्राह्मणो वै सर्वा देवताः' 'नकिरिन्द्र त्वदुत्तरः', 'अग्निः सर्वा देवताः', 'एक एव रुद्रः', 'सोमः पवते जनिता मतीनां जनिता दिवो जनिता पृथिव्याः । जनिताऽग्नेर्जनिता सूर्यस्य जनितेन्द्रस्य जनितोत विष्णोः', 'आपो वा इदं सर्वम्' इत्यादिभिर्ब्राह्मणाग्नीन्द्रादीनामपि समाभ्यधिकरहितत्वप्रतीतेरर्थतत्त्वं व्याकुलम् । अतस्तेषु तापत्रयातुरजिज्ञास्यं तत् ब्रह्म किंलक्षणकमित्यर्थः । सर्वेषां समाभ्यधिकराहित्ये प्रतीतेऽपि तत् व्याहतम् , अन्यपरवाक्यावगतं चेत्यनादरणीयम् , तत्त्वप्रधानेषु सृष्टिप्रलयप्रकरणेषु यदेव निरतिशयबृहदुक्तम् , तदेव [3]जिज्ञास्यमित्यभिप्रायेणाऽऽह, ''यतो वा इमानि'' इत्यादि[4]श्रुतिरितीममर्थं हृदि निधाय सूत्रकारेण जन्मादिसूत्रं प्रणीतमित्यभिप्रायवतोक्तं **किं पुनस्तद्ब्रह्म यज्जिज्ञास्यमुच्यत** इति । न हि, किं पुनर्ब्रह्मेत्युक्तम् ।

---

1 स्पष्टतरा हीत्यस्य उपरितनवाक्येष्वप्यन्वयः ।

2 अनेन जिज्ञास्यमितिपदेन—प्राप्यत्वप्रापकत्वाकारविशिष्टजिज्ञासाविषयसमर्पकजिज्ञास्यपदेन अचेतनत्वाभोग्यत्वादिना मोक्षप्रदत्वादिरूपप्रापकत्वपरमभोग्यत्वरूपप्राप्यत्वरहितप्रणवादिव्यावृत्तविषयकप्रश्नसिद्धिः । यद्येवं लक्षणवचनात् प्रागेव व्यावृत्तवस्तुसिद्धिः, किमर्थं तर्हि लक्षणमित्यत्राह तच्चेत्यादि । तच्च—उक्ताकारविशिष्टब्रह्म च वक्ष्यमाणलक्षणतोऽपि सिध्यतीत्यर्थः । आशयमुपपाद्याऽऽविष्करोति ब्रह्मशब्देति । अयं भावः—ब्रह्मशब्दनिर्वचनबलात् प्राप्यत्वाद्याकारानर्हप्रणवाद्यचेतनव्यावृत्तिः सिद्धा—अथापि देवतादिरूपवस्त्वन्तरव्यावृत्तये किंतद्ब्रह्मेति प्रश्नः, कारणत्वलक्षणवचनादेव सर्वविलक्षणब्रह्मसिद्धिरिति । किंपुनस्तद्ब्रह्मेत्येतावतैव संगतिसूचनात् यज्जिज्ञास्यमिति भाष्यं कतिपयव्यावृत्तेः प्रागेव सिद्धत्वज्ञापनायेति टीकाशयः । भा० प्र० रीतिस्तावत्—पदेनेत्यत्र पद इति पृथक्पदम् । नेति पृथक् । तच्चेत्यस्य व्यावर्तनमित्यर्थः । वक्तव्यतयाऽपीत्यस्य उक्तयेत्यर्थः । अपिरेवकारार्थः इत्येवम् । 3 तदेव जिज्ञास्यमिति । जगत्कारणत्वविशिष्टमेव रागप्राप्त 'मुमुक्षुकर्तृकजिज्ञासाविषयत्वार्हम् ; निर्णेयमिति' 'यावत् । एतावानेव, यतोवा इति वाक्यार्थ इह टीकाभिमत इत्युक्तावपि नैतद्वाक्यविरोधः ।

4 श्रुतिः इत्यादि आहेतिश्रुतिरेतद्वाक्यं प्रयुंक्ते इत्यर्थः ।

जन्माद्यस्य यतः ॥ १-१-२

जन्मादीति—सृष्टिस्थितिप्रलयम् । तद्गुणसंविज्ञानो बहुव्रीहिः ।

---

सूत्रमुपादत्ते जन्माद्यस्य यत इति । प्रथमपदं व्याचष्टे जन्मादीति-सृष्टिस्थितिप्रलयमिति । अन्यत् पदद्वयं वाक्यार्थयोजनायां व्याख्यास्यते । प्रथमपदव्याख्यानस्य समासार्थनिर्णयार्थं वाक्यान्तरसापेक्षत्वेन वाक्यार्थयोजनायामन्तर्भावयितुमशक्यत्वात् तस्य पृथग्व्याख्यानम् । सृष्टिस्थितिप्रलयमित्यत्र सृष्टिशब्द उत्पत्तिपरः ; 'सृष्टिस्थित्यन्तकालेषु', 'सृष्टिस्थित्यन्तकरणीम्' इत्यादिप्रयोगात् । प्रयोज्यप्रयोजकव्यापारवाचिशब्दानां व्यतिकरेण प्रयोगः ब्रह्मण एव निमित्तोपादानत्वाभिप्रायनिबन्धनः । सृष्टिस्थितिप्रलयमिति समाहारार्थे द्वन्द्वः । एकस्मिन् कार्ये अन्योन्यसापेक्षतया तुल्यनिष्पादकत्वेनान्वय इतरेतरयोगः । यथा दर्शपूर्णमासयोः स्वर्गं प्रति । अत्र समुदितविवक्षा । अयमेव समुदायविवक्षायां समाहारः ; तत्कृतमेकवचनत्वं नपुंसकत्वञ्च । अतोऽत्र सृष्टिस्थितिप्रलयमिति समाहारे द्वन्द्वः कृतः । वाक्यार्थयोजनायां सृष्टिस्थितिप्रलया इति इतरेतरयोगद्वन्द्वः कृतः ; उभयोरपि फलैक्यात् । जन्मादीत्यत्र इतिकरणेन तत्रैकवचने तात्पर्यं गम्यते । तत्र पदार्थयोजनायां सृष्टिस्थितिप्रलयमित्येकवचनान्तपदेन सौत्रपदस्यैकवचनमनुसृतम् । [1]तत्राप्येकवचनम्, सृष्टिस्थितिप्रलयानां समुदायो लक्षणम्, न त्वेकैकमिति ज्ञापनार्थम् ॥

समुदायस्य लक्षणत्वं श्रुतिस्वारस्यादवसीयते, "यतो वा इमानि भूतानि जायन्ते । येन जातानि जीवन्ति । यत् प्रयन्त्यभिसंविशन्ति" इत्यत्र हि न प्रतिवाक्यं तद्ब्रह्मेत्युक्तम् । अन्यथा एकेतरलक्षणवैयर्थ्यं च स्यात् । न च समुदितं लक्षणम्, व्यावर्त्याभावात् । न हि जगदुत्पत्तौ निमित्तोपादानभूतं स्थित्यादिकारणत्वव्यवच्छेद्यं किमपि वस्त्वस्तीति चेत्—सत्यम्, व्यवच्छेद्यं नेष्यते । तथापि श्रुत्यनुरोधात् सूत्रकारेणैवमुक्तम् । श्रुतिश्च, 'तद् विजिज्ञासस्व' इति [2]विधित्सितोपासनोपयोगिनिरतिशयबृहत्त्वविपरीताबृहत्त्वशङ्काव्यवच्छेदार्थं समुदायमाह । शङ्कितव्यवच्छेदेनापि हि सप्रयोजनत्वं स्यात् ; लक्ष्याकारविपरीतशङ्कानिराकरणेन विना लक्ष्याकारनिश्चयायोगात् । न च जन्मादिष्वेकैककारणत्वं लक्ष्याकारविपरीतशङ्कानिराकरणक्षमम् । तथा (दा ?) हि—उत्पत्तिकारणत्वेऽभिहितेऽपि स्थित्यादिकारणत्वं न चेत्, तदनुगुणज्ञानशक्तिविरहात् स्थितिप्रलयकारणभूतवस्त्वन्तरसद्भावाच्च जन्ममात्रकारणस्य निरतिशयबृहत्त्वं न स्यात् ; मुक्तेर्लयान्तर्भावात्, मोक्षप्रदतयोपास्यस्यैव प्राप्यत्वाच्च मोक्षप्रदत्वप्राप्यत्वानुगुणैर्गुणैश्च बृहत्त्वं न सिध्यति । अतो जन्मकारणत्वमात्रस्य समस्तवस्तुव्यवच्छेदक्षमत्वेऽपि जन्मादिसमुदायकारणत्वस्यैव निरतिशयबृहत्त्वौपयिकत्वात् सृष्टिस्थितिप्रलयसमुदायकारणत्वं लक्षणमिति ज्ञापितम् ॥

समुदायस्य लक्षणत्वमिहाविवक्षितम् ; जन्मादीति बहुव्रीहेरन्यपदार्थप्रधानत्वेन जन्मनोऽनन्तर्भूतत्वादित्यत्राह तद्गुणेति । बहुव्रीहिर्द्विविधः, [3]तद्गुणसंविज्ञानोऽतद्गुणसंविज्ञानश्चेति । तत्र

---

1 तत्रापीति । सूत्रेऽपीत्यर्थः । 2 तद्विजिज्ञासस्वेतीत्यत्र विजिज्ञासस्वेति विचारस्य वा उपासनस्य वाऽनुवादमात्रमिति वक्ष्यति । अतः विधित्सितेत्यत्रान्वये विजिज्ञासस्वेत्यत्रोपासनविवक्षा स्वरसा । अस्य समुदायमाहेत्यत्रान्वये तु कारणं तु ध्येय इत्यादिवाक्यान्तरविधित्सितोपासनोपयोगितया अत्रत्यतत्पदेन समुदायबोधनमिति प्रकृतवाक्यार्थः ।

3 तद्गुणसंविज्ञानः—तदीयगुणस्यापि तेन समं ज्ञापक इत्यक्षिप्तोऽर्थः । इदं समित्युपसर्गलभ्यम् ।

अस्य-अचिन्त्यविविधविचित्ररचनस्यनियतदेशकालफलभोगब्रह्मादिस्तम्बपर्यन्तक्षेत्रज्ञमिश्रस्य जगतः।

प्रथमस्योदाहरणम्, "सर्वादीनि सर्वनामानि", 'लम्बकर्णमानय' इत्यादि । द्वितीयस्योदाहरणम्, चित्रगुमानयेति । तच्छब्देन विशेष्यम्, गुणशब्देन विशेषणं च विवक्षितम् । समित्येकीकारे । विशेष्यञ्च एककार्यान्वितत्वेन सह ज्ञापयतीत्यर्थः । एवमपि बहुव्रीहेर्नान्यपदार्थप्रधानत्वभङ्गः ; स्वपदवाच्यविशिष्टसमुदायस्य तत्समुदायिनो वा अन्यपदार्थतया विवक्षितत्वोपपत्तेः । समासस्थपदवाच्यस्यापि विशिष्टसमुदायान्तर्गतत्वाकारेण ह्यन्यपदार्थत्वं युज्यते ; स्वपदमात्रस्य तेनाकारेण तद्वाचकत्वाभावात् ।

**अस्येति** व्याख्येयपदोपादानम् । **अचिन्त्येत्यादिना** तद्व्याचष्टे । **अस्येति** पदस्य **जगत** इत्येतावन्मात्रे [अर्थे ?] वक्तव्ये किमर्थो विस्तर इति चेत्—सूत्रकारविवक्षितार्थकथनार्थः । तद्विवक्षा च श्रुतिविवक्षया । श्रुतिविवक्षा कथं ज्ञायत इति चेत्—उच्यते । "यतो वा इमानि भूतानि जायन्ते" इत्यत्र भूतशब्देन कार्यवर्गेऽभिहितेऽपि **इमानीति** पदं कार्यवर्गस्य धर्मिग्राहकप्रमाणसिद्धाकारविशेषपरम् । तत्र जगत आभासतापरत्वं ब्रह्मणो जिज्ञास्यतानुपयोगीति वैचित्र्यपरम् इमानीतिपदम् ईदृशकार्यनिष्पादनानुगुणगुणोत्कर्षं ब्रह्मेति ज्ञापनार्थम् । श्रुतिवाक्यस्थेदंशब्देन निर्दिशतः सूत्रकारस्यापि इयमेव विवक्षा । जगतः इमानीति श्रुतौ बहुवचने सत्यपि सौत्रमेकवचनं कृत्स्नस्य भुवनस्यैककार्य(यता) विशेषणैककर्तृकत्वज्ञापनार्थम् ; **भूतशब्दस्य** देवादिचतुर्विधभूतमात्रपरत्वव्यावर्तनेन भवनक्रियायोगिकृत्स्नकार्यसमुदायात्मकजगद्विषयत्वज्ञापनार्थञ्च । अत एव हि भाष्ये **जगत** इत्युक्तम् । तत्र कार्यवर्गस्य चिदचिदात्मकत्वात् तत्तत्प्रमाणसिद्धचिदचिद्वैचित्रीम**चिन्त्येत्या**दिपदद्वयेनाऽऽह ।

ननु ग्रहाधिकरणे, "ग्रहं संमार्ष्टि" इत्यत्र उद्देश्यगतविशेषणे विवक्षाभावादेकवचने तात्पर्याभाव उक्तः । तेन न्यायेन प्रसिद्धवन्निर्देशरूपतया [1]अनुवादरूपस्येदंशब्दस्योद्देश्यविशेषणे तात्पर्याभावे (वेन ?)नैवं व्याख्यातव्यम् ॥ मैवम् ; ग्रहाधिकरणे ह्युद्देश्यविशेषणमात्रविवक्षा न निषिद्धा । अपित्वनुवादस्य मूलभूतप्रापकवाक्योक्तार्थविरुद्धविशेषणे हि तात्पर्याभाव उक्तः । उत्पत्तिवाक्यसिद्धस्य ग्रहबहुत्वस्य विरुद्धं ह्येकत्वम् । [2] अन्यथा 'अष्टवर्षं ब्राह्मणमुपनयीत' इत्यत्राप्यष्टवर्षत्वादिविशेषणे तात्पर्याभावप्रसङ्गात् । अत्र तु प्रापकवाक्येषु जगद्वैचित्र्यमेव स्पष्टम् । यद्वा—यत्र प्रयुक्तस्य शब्दस्यार्थविवक्षाया-मन्वयानुपपत्त्याऽऽनर्थक्यम्, तत्रोद्देश्यविशेषणविवक्षा तत्र [2]तत्राङ्गीकृता । तस्मादेवं व्याख्यातुं युक्तम् ।

[1] भूतोद्देशेन इदन्त्वमप्राप्तं विधेयमिति मतिव्युदासाय अनुवादरूपस्येत्युक्तम् । उद्देश्यविशेषणे—भूतरूपोद्देश्यं प्रति विशेषणत्वकथने इत्यर्थः । इदंशब्दो न विशेषकत्वपरः किंतु केवलमनुवाद इति । नन्वथापि इमानीत्यस्य पृथक्पदत्वात् अरुणाधिकरणन्यायेन कारकाणां मिथोऽन्वयाभावात् इदन्त्वविशिष्टभूतोद्देश्यकत्वं दुर्वचमित्यताह अन्यथेति । अयं भावः—मीमांसकैरष्टवर्षत्वादिविवक्षार्थं ब्राह्मणत्वाष्टवर्षत्वविशिष्टे लक्षणेति वा, तमध्यापयीतेत्यत्र तच्छब्देन विशिष्टग्रहणमिति वा क्लेश आश्रीयते । अस्माकं तु भाष्यकारपरिष्कृतारुणाधिकरणसरण्यैव समानाधिकरणस्थले विशिष्टान्वयस्य व्युत्पन्नत्वात् सुस्थमिदन्त्वविशिष्टग्रहणमिति ।

[2] तत्रतत्रेति । 3. 1. 8. अधिकरणे ग्रहाधिकरणसमनन्तरे ग्रहत्वविवक्षा । 6. 4. 8. अधिकरणे अग्न्युभयत्वविवक्षा, अग्नीनादधीतेत्यत्राग्नित्वविवक्षेत्येवं बहु द्रष्टव्यम् ।

यतः—यस्मात् सर्वेश्वरान्निखिलहेयप्रत्यनीकस्वरूपात् सत्यसङ्कल्पात् ज्ञानानन्दाद्यनन्त-

---

तत्राचिदंशवैचित्र्यमाह **अचिन्त्येत्यादिना** पदेन । जीवकर्तृकतया चिन्तयितुमशक्यत्व-मचिन्त्यत्वम् । आकाशवाय्वादिभेदेन **विविधत्वम्** । प्रत्येकं तत्तद्व्यष्टिबाहुल्येन **विचित्रत्वम्** । ईदृशरचनस्येत्यर्थः । अत्र **रचना** संस्थानम् । अथ चिद्वैचित्र्यमाह **नियतेति** । अस्मिन् देशे अस्मिन् काले इदं फलमनेन भोक्तव्यमिति नियमो ब्रह्मादिपिपीलिकान्तानामविशेषेण भवति । ब्रह्मणोऽपि हि स्वमानपरिमितवर्षशतादधिकं जीवितुम्, अण्डान्तरे प्रवेष्टुम्, अण्डाधिपत्यादधिकं फलं भोक्तुञ्चाशक्यम् । एवं चिदचिद्वैचित्रीकथनेन क्षेत्रज्ञमात्रस्य कर्तृत्वानुपपत्तिः सूचिता । तृतीयं पदमुपादत्ते **यत इति** ॥ पूर्वस्य पदस्य श्रुतिविवक्षानुसारेण व्याख्यानं कृतम् ; अत्र तु तादृशपदश्रवणाभावेऽपि कथमनेकविशेषणोक्तिः ॥ उच्यते । **यतः येन यत्** इति प्रसिद्धवन्निर्देशो हि प्रापकवाक्यसापेक्षः । तत्र प्रापकवाक्येषु जगत्कारणत्वजिज्ञास्यत्वोपयोगियादृशविशेषणविशिष्टो यो धर्मिविशेष उक्तः, तादृशविशेषणविशिष्टः स एवात्र श्रुतौ यच्छब्देन विवक्षित इति सूत्रकाराभिप्राय इति कृत्वा तत्तद्विशेषणविशिष्टतद्धर्मिविशेषपरत्वं सौत्रस्य **यतश्शब्दस्योक्तम्** । यत इत्यत्र, तसिप्रत्ययस्य सार्वविभक्तिकत्वात्, विभक्त्यन्तरशङ्का स्यात् । तेन जगज्जन्मादयो यत्र भवन्तीति देशकालादिवम् अधि-करणत्वमेव ब्रह्मलक्षणमित्यपि शङ्कितुं शक्यम् । एवं तसिलोऽप्येकद्विबहुवचनसाधारणत्वात् कारणवा-क्येषु सद्ब्रह्माद्यनेकशब्दैरभिधानाच्च कारणानेकत्वशङ्का स्यादिति तदुभयव्युदासार्थं **यस्मादित्युक्तम्** । उपायतयोपेयतयाऽपि जिज्ञास्यत्वे कारणत्वे चोपयुक्तानि तत्तत्प्रापकवाक्यसिद्धानि एतच्छ्रुतिविवक्षितानि विशेषणानि दर्शयति **सर्वेत्यादिना** । तिस्रो मूर्तयः अंशाः, ब्रह्म अंशीति **यादवप्रकाश**पक्षः । प्रधानपुरुषयोः कारणत्वं केषाञ्चिन्मतम् । ईदृशन्यूनाधिकतत्त्वव्यवच्छेदार्थम्, "तमीश्वराणां परमं महेश्वरम्", "स कारणं करणाधिपाधिपः" इत्यादिश्रुत्यनुसारेण **सर्वेश्वरादित्युक्तम्** । कारणवाक्य-शेषभूतशोधकवाक्यसिद्धं जिज्ञास्यत्वोपयोगिनं चिदचिद्व्यावर्तकाकारमाह **निखिलहेयप्रत्यनीकस्व-रूपादिति** । निखिलशब्देन आचिद्गतहेयाः षड्भावविकाराः, चिद्गतहेयाः क्लेशकर्मविपाकाशयाश्च विवक्षिताः । हेयार्हत्वे सति तद्वियुक्तत्वं व्युदस्यते **प्रत्यनीकशब्देन** । प्रत्यनीकश्चेत्, जगदुपादानत्वं नोपपद्यत इत्यत्राह **स्वरूपादिति** । अद्वारकहेयसंबन्धो व्युदस्तः, ; न तु सद्वारक इत्यर्थः । हेयप्रत्यनीकत्वे विशेषणांशेऽपि हेयासंभवः ; तत्संबन्धविरोधित्वात् स्वप्रतिकूलोत्पादकत्वायोगाच्चेत्यत्राह **सत्यसङ्कल्पादिति** । स्वसङ्कल्पानुरूपं हेयसंबन्धं संश्रितेषु तद्वियोगं च कर्तुं समर्थः । न च हेयं सर्वमीश्वरापेक्षया हेयम्, तत्सङ्कल्पनिवर्त्यत्वेन तल्लीलारसावहत्वादिति भावः । सत्यसङ्कल्पत्वं हेयप्रत्यनीकत्वोपपादकं कारणत्वजिज्ञास्यत्वोपयोगि च । **हेयप्रत्यनीकात् सत्यसङ्कल्पादिति** पदद्वयेन, **अपहतपाप्मेत्यादिवाक्यं स्मारितम्** । जिज्ञास्यत्वोपयोगि धर्मिस्वरूपस्य कल्याणतामाह **ज्ञानेति**, **आनन्दत्वं स्वानुकूलत्वम्** । आदिशब्देन सत्यत्वमानन्त्यं च विवक्षितम् । हेयप्रत्यनीकत्वं पूर्वमुक्तम्, **ज्ञानानन्देति** भावप्रधानर्निर्देशः । "द्व्येकयोर्द्विवचनैकवचने" इतिवत् । ज्ञानत्वानन्दत्वसत्यत्वानि न प्रादेशिकानीति **अनन्तशब्दार्थः** । आदिशब्देनानन्त्यस्य गृहीतत्वेऽपि सर्वव्यापित्वस्य कालानन्त्यकथनं

कल्याणगुणात् सर्वज्ञात् सर्वशक्तेः परमकारुणिकात् परस्मात् पुंसः सृष्टिस्थितिप्रलयाः प्रवर्तन्ते, तद्ब्रह्मेति सूत्रार्थः ॥

---

नित्यत्वस्य सार्वत्रिकत्वकथनं सर्ववस्तुसामानाधिकरण्यार्हत्वस्य च नित्यत्वकृत्स्नप्रदेशवृत्तित्वकथनं ह्यविरुद्धम् । **कल्याण**त्वमन्येषामनुभवितॄणामप्यनुकूलत्वम् । ज्ञानत्वादयः कल्याणगुणाः यस्य, तस्मादित्यर्थः । यथा प्रभाश्रये दीपे प्रभां विना आश्रयांशस्यैव चतुरङ्गुलत्वरूप(स्पर्श ?)वत्त्वोज्ज्वलत्वगुणाः तथा ब्रह्मणोऽपि ज्ञानत्वानन्दत्वसदैकरूपत्वानि स्वरूपस्य गुणाः । धर्मिणो धर्मस्य च ज्ञानत्वे व्यक्तिभेदादविरोधः ; धर्मधर्मिणोः साधारणाकारो ज्ञानत्वानन्दत्वादिः । यथा नरस्यैव सतो राज्ञो नराः परिकरा इत्युक्ते व्यक्तिभेदादविरोधः ; नरत्वं चोभयसाधारणाकारः—तद्वत् । धर्मभूतज्ञानवत्तामाह **सर्वज्ञा**दिति । **सर्वज्ञ**त्वं निमित्तत्वोपयोगि । सर्वशक्तित्वमुपादानत्वोपयोगि । अनेन चिदचिच्छरीरकत्वमप्यभिप्रेतं भवति ; अन्यथोपादानत्वायोगात् । किञ्च सर्वज्ञत्वम् उपासकापेक्षित-तत्प्रतिबन्ध-तन्निरसन-प्रकारज्ञानोपयोगि ; **सर्वशक्ति**त्वं तद्विरोधिनिरसनोपयोगि ; **परमकारुणि**कत्वं च जिज्ञास्यत्वकारणत्वोपयोगि ; प्रलयदशायामसत्कल्पं चेतनजातं निरीक्ष्य दयया हि सृष्टिः । संश्रितसौलभ्यं च दययैव ; यथा "माता पिता भ्राता निवासः शरणं सुहृद्गतिर्नारायणः" इति । ईदृशेश्वर उपायभूतः, उपेयमन्यदित्यत्राह **परस्मा**दिति । अत्र "माता पिता...."इत्यनुसंधेयम् । देवताविशेषनिर्णयार्थमाह **पुंस** इति । कारणवाक्येषु, "छागो वा मन्त्रवर्णात्" इति सूत्रन्यायात् सद्ब्रह्मात्मादिसामान्यशब्दानां पुरुषनारायणादिविशेषपर्यवसायित्वात् सर्वश्रुतीनां नारायण एव पर्यवसानभूमिरिति, 'यतो वा इमानि भूतानि' इत्यादिश्रुतेर्हृदयमिति सूत्रकारस्य भाव इति भाष्यकाराभिप्रायः । **पुंस** इत्यनेन कारणभूतस्य वस्तुनस्त्रिपाद्विभूतिमत्त्वमपि सूचितम् ; **पुरुषसूक्ते** 'त्रिपादस्यामृतं दिवि" इति श्रवणात् । **सूत्रार्थ** इति । अक्षरार्थस्तात्पर्यार्थश्चेत्यर्थः ।

ननु यदीश्वरो लिलक्षयिषितः, तर्हि तदसाधारणसर्वज्ञत्वादिप्रतिपादकसत्यज्ञानादिवाक्यानादरेण जन्मादिकारणत्वं किमर्थं सूत्रितम् । उच्यते । गुणैः स्वरूपस्य लक्ष्यमाणत्वे तदपेक्षया बहिष्ठाया विभूतेरुपास्यानन्तर्भावः प्रतीयेत । सर्गादिविषयभूतया तु विभूत्या स्वरूपे लक्ष्यमाणे तन्नियमनधारणाद्यपेक्षितत्वादेव गुणानन्तर्भावो न शक्यशङ्कः । अतो गुणानामिव विभूतेश्च जिज्ञास्यान्तर्भावज्ञापनार्थं जन्मादिलक्षणं सूत्रितम् । विभूतेश्च[1] जिज्ञास्यान्तर्भावः उपासात्रैविध्यतत्क्रतुन्यायाभ्यां सेत्स्यति ॥ नन्वेवमपि कृत्स्नविभूतेर्जिज्ञास्यान्तर्भावो न सिध्यति, त्रिपाद्विभूतेर्जन्माद्यस्पृष्टत्वात् ॥ मैवम् ; तस्याः जन्माद्यस्पृष्टत्वेऽपि 'यत्प्रयन्ती'तिप्रलयवाक्यस्थयच्छब्दनिर्दिष्टे मुक्तप्राप्ये ब्रह्मण्यन्तर्भावसिद्धेः । तथाहि—प्रयन्तीत्येतत् अविशेषेणात्यन्तिकलयरूपं मोक्षमपि प्रतिपादयतीति यच्छब्देन मुक्तप्राप्यतयाऽपि

---

1 विभूतेश्च जिज्ञास्यान्तर्भाव इति । अत्र संदर्भे उपास्यत्वमिति नोपासनस्यावश्यकर्तव्यत्वमुच्यते । किं तु प्राकृतत्वात् विभूतेर्हेयत्वशंकायामुपासनार्हत्वमुच्यते । उपासात्रैविध्यस्य सूत्रितत्वात् । न ह्युपासितमेव प्राप्यमिति तत्क्रतुनयः ; किंतु यत् अप्राप्यम्, तन्नोपास्यमिति । न च विभूतेरप्राप्यत्वम्, परिपूर्णब्रह्मानुभवविषयत्वात् ' विभूतेर्हेयत्वं ह्यौपाधिकम्, आनकूल्यं नैसर्गिकमिति । तदिदमुपासनार्हत्वमात्रम् । एतद्विभूतेरेवोपास्यत्वे त्रिपदस्तत् कैमुत्यसिद्धमपि ।

ब्रह्म निर्दिष्टं भवति । प्राप्याकारविशिष्टं च ब्रह्म प्रमाणान्तरसिद्धमिहानूद्यते । प्रमाणान्तराणि च विभूतिद्वयविशिष्टं ब्रह्म प्राप्यं वदन्ति । प्राप्याकारस्य चोपास्यत्वं तत्क्रतुन्यायसिद्धम् । तदेवं लक्षणान्तर्भूतेन लयांशेनोपलक्षितायास्त्रिपाद्विभूतेरपि जिज्ञास्यान्तर्भावसिद्धिः सूत्रिता भवति ॥

ननु **यत** इति सूत्रपदस्थायाः पञ्चम्या उपादानार्थत्वात् ब्रह्मोपादानमिति, निमित्तान्तरसद्भावात्, "उपादानं तु भगवान् निमित्तं तु महेश्वरः" इत्युक्तव्योमातीतपक्षावकाशः प्रसजेत् ॥ नैवम्; यत इति पञ्चम्याः हेतुमात्रविषयत्वात् । हेत्वर्थत्वं च जनिस्थितिलयसाधारणत्वादवगम्यते । [1]न तु, "जनिकर्तुः प्रकृतिः" इत्यपादानसंज्ञाविधानवत् स्थितिकर्तुर्लयस्थानस्य च अपादानसंज्ञाविधानं दृश्यते । तस्मादियं हेतौ पञ्चमी । ततश्च निमित्तोपादानयोरुभयोरपि हेतुत्वाविशेषात् यत इति पदेनोभयविधकारणत्वमपि क्रोडीकृतं भवति । **यतो वा इमानी**त्यादिवाक्ये यत इति पदस्योभयविषयत्वात् सौत्रपदस्याप्युभयविषयत्वोपपत्तेः ॥ ननु 'यतो वा इमानि' इति वाक्ये यतो येन यदिति यच्छब्दस्याऽऽवृत्तत्वात् यत इति पदस्य जनिस्थितिलयसाधारण्यं नास्तीति तत्र यत इति पञ्चमी उपादनमात्रविषया; जायन्त इत्यनेनैवान्वयात् । पञ्चम्यर्थो हि, "जनिकर्तुः प्रकृतिः" इत्येव प्रतीयते । किञ्च हेतुमात्रविषयाया अपि सौत्रपदपञ्चम्याः श्रुतिवाक्यस्थपञ्चम्यभिहितोपादानरूपहेतुविशेषे पर्यवसानं स्यात्; सूत्रस्य श्रुत्यैकार्थ्योपपत्तेः । अतः श्रुतिसूत्रयोरुभयोरपि पञ्चम्या उपादानमात्रविषयत्वात् ब्रह्म उपादानम्, न तु निमित्तमिति ॥ नैवम्; श्रुतौ **यत** इति पदस्य जनिस्थितिलयसाधारणत्वाभावेऽपि यच्छब्दस्यानुवादरूपत्वादनुवादस्य च प्रापकवाक्यसापेक्षतया तद्विरुद्धार्थपरत्वासंभवात् प्रापकवाक्येषु च 'एकमेवाद्वितीयं तदैक्षत बहु स्याम्.... तत्तेजोऽसृजत' इत्युपादानभूतस्यैव ब्रह्मणो निमित्तान्तरं निषिध्य, अहमेव जगद्रूपेण बहु स्यामिति सङ्कल्पमुक्त्वा यथासङ्कल्पं तत्कर्तृकसृष्टेश्च प्रतिपादनात् तदनुवादिनि लक्षणवाक्ये **यत** इति पदमुभयविषयम् । श्रुत्यनुविधायित्वात् जन्मस्थितिलयसाधारणत्वाच्च सौत्रे च **यत** इति पदमुभयविषयमेव इति निमित्तान्तरवादो वेदविरुद्धत्वादनादरणीय एवेति ॥ एवं तर्हि प्रकृत्यधिकरणपौनरुक्त्यं स्यादिति चेन्न । तत्र हि निमित्तोपादानैक्यस्य श्रुतिप्रतिपाद्यत्वं समर्थ्यते । अत्र तु निमित्तोपादानैक्यसिद्धवत्कारेण त(अ)स्योभयविधकारणत्वस्य लक्षणत्वानुपपत्तिः परिह्रियत इति वैषम्यात् ॥

नन्वीश्वर एव ब्रह्म चेत्, सत्यज्ञानादि लक्षणत्वेन वक्तव्यम् । न तु जन्मादि; ईश्वरस्य सर्वविधकारणत्वायोगात् । निमित्तकारणमुपादानं चैकमेव हि वेदान्तेषु मतम् । तस्मादीश्वरादतिरिक्तं ब्रह्माभ्युपगच्छतो भेदाभेदवादिनोऽननुकूलमिदं जन्मादिलक्षणकथनम् ॥ नैवम्; चिदचिद्विशिष्टतया सत्यसङ्कल्पतया चेश्वरस्यैव बहु स्यामिति ईक्षणक्षमत्वेन सर्वविधकारणत्वोपपत्तेः । सन्मात्रस्य चिन्मात्रस्य च सत्यसङ्कल्पत्वायोगात् ईश्वरस्य च ब्रह्मांशतया अध्यस्ततया चाभिमतस्य अंशान्तराध्यस्तान्तरसमानाधिकरणशब्दवाच्यत्वायोगाच्च भेदाभेदपक्षे मृषावादिपक्षे च बहु स्यामिति संकल्पपूर्वककारणत्वं न घटत इति एतल्लक्षणं परेषामेवानुपपन्नम् । किञ्च बुभुत्सितस्य लक्षणं वाच्यम् । बुभुत्सितं चोपास्यम् । ईश्वर एवोपास्यः प्राप्यश्च । उपासनं च विशिष्टविषयम्; उपासात्रैविध्यस्य वक्ष्यमाणत्वात् । प्राप्तिश्च

---

1 'अपादाने पञ्चमी' इति सूत्रविहितपञ्चम्यप्रसक्त्या हेतौ पञ्चम्येवेत्याह, 'न तु जनिकर्तुः इति ।

"भृगुर्वै वारुणिः। वरुणं पितरमुपससार। अधीहि भगवो ब्रह्म" इत्यारभ्य, "यतो वा इमानि भूतानि जायन्ते। येन जातानि जीवन्ति। यत् प्रयन्त्यभिसंविशन्ति, तद्विजिज्ञासस्व। तद्ब्रह्म" इति श्रूयते। तत्र संशयः—किमस्माद्वाक्यात् ब्रह्म लक्षणतः प्रतिपत्तुं शक्यते, न वेति।

---

विशिष्टविषया; यथोपासनभावित्वात् तस्याः। जन्मादि चोपास्यलक्षणम्, तद्विजिज्ञासस्वेति प्रतिपादनात्। सत्यज्ञानादि तु विशेष्यांशस्य लक्षणम्; न तु विशिष्टस्य। अतो विशिष्टस्यैवोपास्यत्वात् जिज्ञास्यब्रह्मलक्षणं जन्माद्येव। यत इत्यस्यानुवादरूपत्वात् विजिज्ञासस्वेति जिज्ञास्यत्ववचनाच्च जिज्ञास्यत्वोपयोगिशोधकवाक्यार्थश्च यच्छब्दे गर्भितः। तस्मात् यस्मादित्यादिविशेषणान्युक्तानि॥

अथ जन्मादीनां लक्षणत्वे. तत्र जन्मनोऽन्तर्भावे, तत्रापि समुदितस्य लक्षणत्वे च किं ते प्रमाणमित्याकाङ्क्षायां सूत्रकारैर्विषयत्वेनाभिप्रेतां श्रुतिं दर्शयति भृगुरिति। शास्त्रं प्रणाड्या विषयः। 'यतो वा इमानि' इत्यादिमात्रे उदाहर्तव्येऽपि अर्थवादरूपतात्पर्यलिङ्गज्ञापनार्थं प्रकरणस्य ब्रह्मोपक्रमत्वेनानन्यपरत्वज्ञापनार्थं च भृगुर्वा इत्यादि उदाहृतम्। अग्नीन्द्रादिवस्तुषु सर्वोत्कृष्टतया आपातप्रतीतेषु सर्वेषां सर्वोत्कृष्टत्वस्यानुपपन्नत्वेन तत्त्वस्य दुर्निश्चयतया निरतिशयबृहत्त्वाश्रयव्यक्तिविशेषजिज्ञासया हि, 'अधीहि भगवो ब्रह्म' इति प्रश्नः। तत्र व्यक्तिविशेषस्य लक्षणमुच्यते, 'यतो वा इमानि' इति। यतो येन यदिति यद्वृत्तयोगात् कारणत्वमनूद्यते। तद्ब्रह्मेति कारणस्य ब्रह्मत्वं विधीयते। तेन कारणत्वस्य ब्रह्मलक्षणत्वं सिद्धं भवति। तद्विजिज्ञासस्वेति न विचारस्योपासनस्य वा विधिः। विचारात्मकज्ञानं रागप्राप्तत्वात् न विधेयम्। उपासनात्मकस्य तु ज्ञानस्य 'ब्रह्मविदाप्नोति' इति प्राकरणिकवाक्यान्तरसिद्धत्वात्, उपक्रमे 'अधीहि भगवो ब्रह्म' इति प्रश्नस्य तत्त्वपरत्वेनोपायविषयत्वाभावाच्च नोपासनात्मकज्ञानमिह विधेयम्। अतो विजिज्ञासस्वेति उपदिश्यमानार्थे अवधानार्थं संदेहनिवृत्त्यर्थं वोक्तम्. 'या गन्धवती तां पृथिवीं विद्धि'इतिवत्। अतः कारणत्वस्य ब्रह्मलक्षणत्वमेवास्य वाक्यस्य विधेयम्। यथा—यत्र सारसः स देवदत्तकेदार इत्युक्ते सारससंबन्धस्य देवदत्तकेदारलक्षणत्वमुक्तं स्यात्, तद्वत्। देवदत्तकेदारो बुभुत्सितो धीस्थः; सारससंबन्धश्च दृष्टः। तस्य देवदत्तकेदारलक्षणत्वं त्वज्ञातम्। अतस्तदेव वाक्यस्य विधेयम्। एवं निरतिशयबृहत्त्वं बहुष्वर्थेष्वापाततः प्रतीतम्। कारणत्वं च प्रापकवाक्यावगतम्। तस्य निरतिशयबृहद्वस्तुलक्षणत्वमनवगतमिति तदत्र विधेयम्। लक्षणस्य च सजातीयविजातीयव्यावर्तनस्वभावत्वादन्येषां निरतिशयबृहत्त्वशङ्काव्युदासः फलितः। अतो नारायणादिविशेषशब्दवाच्यवस्तुविशेषस्यैव निरतिशयबृहत्त्वसिद्धिः। अत एव हि परस्मात्पुंस इत्युक्तम्॥

प्रापकवाक्यैरेव कारणभूतवस्तुविशेषस्य निरतिशयबृहत्त्वं ज्ञायत इति किमनेन लक्षणवाक्येनेति चेत्—न; अग्न्यादीनामपि कर्मभागवाक्यैः सर्वोत्कृष्टत्वावगमात् तेषु बृहत्त्वशङ्काव्युदासाय कारणवाक्यानामपि तद्वत् अन्यपरत्वाभावेन तत्त्वपरत्वज्ञापनपरत्वादस्य वाक्यस्य। अथ श्रुतिरेव लक्षणं प्रतिपादयति चेत्, किं सूत्रेणेति शङ्कायाम्, सूत्रतात्पर्यार्थं विवक्षुः संशयं दर्शयितुं श्रुतिगतहेतुनैव संशयोत्पत्तिं दर्शयति तत्रेति। तत्र—तादृश इत्यर्थः। पूर्वपक्षानुगुणेन विशेषणबहुत्वेन सिद्धान्तानुगुणेनैकवचनान्तब्रह्मशब्दैक्येन च विशिष्टत्वं संशयहेतुत्वेनाभिप्रेत्य तत्रेत्युक्तम्। संशयस्वरूपं दर्शयति किमस्मादिति। ब्रह्ममीमांसा किमारम्भणीया, उतानारम्भणीयेति प्रथमविचारः;

किं प्राप्तम् । न शक्यमिति । न तावत् जन्मादयो विशेषणत्वेन ब्रह्म लक्षयन्ति, अनेकविशेषणव्यावृत्तत्वेन ब्रह्मणोऽनेकत्वप्रसक्तेः । विशेषणत्वं हि व्यावर्तकत्वम् ॥ ननु 'देवदत्तः श्यामो युवा लोहिताक्षः समपरिमाणः' इत्यत्र विशेषणबहुत्वेऽप्येक एव देवदत्तः प्रतीयते ।

---

तदर्थं वेदान्ता ब्रह्मणि प्रमाणम्, उत नेति द्वितीयविचारश्च चतुस्सूत्रीसाधारणः । सिद्धस्वरूपं ब्रह्म न शास्त्रं प्रतिपादयतीत्याशङ्क्याह...तच्छास्त्रप्रमाणकत्वं ब्रह्मणः सम्भवत्येव इति समन्वयाधिकरणोपक्रमे तस्याधिकरणस्य शास्त्रारम्भहेतुभूतप्रामाण्यसमर्थनार्थत्वस्य भाष्यकारैरेव वक्ष्यमाणत्वात् । तथा चाहुः—

"व्युत्पत्त्यभावः प्रतिपत्तिदौस्स्थ्यमन्येन सिद्धत्वमथाफलत्वम् ।

एतानि वै सूत्रचतुष्टयेनानारम्भमूलानि निराकृतानि"

इति । अतस्तद्विचारयुगलमत्रार्थसिद्धमित्यभिप्रेत्य एतदधिकरणासाधारणं संशयशरीरं दर्शितं किमस्मादिति । यतोवाइमानीत्यादिवाक्यं ब्रह्म लक्षणतः प्रतिपादयितुं शक्नोति, उत नेति संशयः । तदर्थं संशय्यते—किं सृष्ट्यादीनां विशेषणत्वेनोपलक्षणत्वेन च ब्रह्मलक्षणत्वं संभवति नेति; तदर्थं विशेषणपक्षे किं विशेषणभेदेन विशेष्यभेदोऽस्ति, नेति; तदर्थं किं विशेषणस्य विशेषणत्वं स्वाश्रय[1](?)सर्वधर्मव्यावर्तकतया, उत विरोधिधर्मव्यावर्तकतयेति । उपलक्षणपक्षे किमाकारान्तरप्रतिपत्तिरस्ति, उन नास्तीति । [1]सर्वधर्मव्यावर्तकतया विशेषणत्वम्; आकारान्तरप्रतिपत्तिश्च नास्तीति पूर्वः पक्षः । विरोधिधर्मव्यावर्तकतयैव विशेषणत्वम्; आकारान्तरप्रतिपत्तिश्चास्तीति राद्धान्तः । सर्वधर्मव्यावर्तकतया विशेषणत्वे विशेष्यभेदप्रसङ्गेन जन्मादीनां विशेषणत्वायोगात्, आकारान्तरप्रतिपत्त्यभावेन चोपलक्षणत्वायोगात् उभयथापि लक्षणत्वासंभवादिदं वाक्यं ब्रह्म लक्षणतः प्रतिपादयितुं न शक्नोतीति लक्षणदौस्स्थ्येन ब्रह्मणि शास्त्रप्रामाण्याभावात् तद्विचारोऽनारम्भणीय इति पूर्वपक्षे फलितम् । विरोधिधर्मव्यावर्तकतयैव विशेषणत्वे विशेष्यभेदाभावाज्जन्मादीनां विशेषणत्वोपपत्तेः, आकारान्तरप्रतिपत्तिसद्भावादुपलक्षणत्वोपपत्तेश्च उभयथाऽपि लक्षणत्वसंभवादिदं वाक्यं ब्रह्म लक्षणतः प्रतिपादयितुं शक्नोतीति लक्षणसौष्ठवेन ब्रह्मणि शास्त्रप्रामाण्योपपत्तेः तद्विचारस्यारम्भणीयत्वं सिद्धान्ते फलितम् ।

तत्र पूर्वपक्षमुपपादयितुं प्रतिजानीते न शक्यमिति । जन्मादीनां ब्रह्मलक्षणत्वं किं विशेषणतया उतोपलक्षणतयेति विकल्पमभिप्रेत्य प्रथमं दूषयति न तावदिति । कथं विशेषणत्वेन न लक्षयन्तीत्यत्राह अनेकेति । अनेकत्वप्रसक्तिर्व्यावर्तकत्वं वा कथमित्यत्राह विशेषणत्वं हीति । विशेष्यतेऽनेनेति निर्वचनानुसारेण भेदकं विशेषणम् भेद्यं विशेष्यमिति प्रसिद्धेः, खण्डः मुण्डः पूर्णशृङ्गः, नीलं शुक्लं पीतम्, अजो गजो महिष इत्यादिषु तथा दर्शनाच्चेति भावः । सिद्धान्तिच्छायया चोदयति नन्विति ।

---

[1] स्वाश्रयपदस्थाने स्वाश्रये इति पृथक्पदं स्यात् । स्वान्येति वा । व्यावर्त्यधर्मस्य स्वाश्रयनिष्ठत्वायोगादनन्वयात् । सर्वधर्मेति । विधेयत्वादिना स्वसजातीय—समभिव्याहृतसर्वधर्मेत्यर्थः । अतो ब्रह्मशब्दवाच्यत्वोपास्यत्वविचार्यत्वादिसाधारणासाधारणानेकधर्मसद्भावेऽपि न क्षतिः । व्यावर्तकधर्मान्तरमात्रग्रहण एव भाष्यस्वारस्यात् ।

एवमत्राप्येकमेव ब्रह्म भवति ॥ नैवम् ; तत्र प्रमाणान्तरेणैक्यप्रतीतेरेकस्मिन्नेव विशेषणानामुपसंहारः। अन्यथा तत्रापि व्यावर्तकत्वेनानेकत्वमपरिहार्यम् । अत्र त्वनेनैव विशेषणेन लिलक्षयिषितत्वात् ब्रह्मणः प्रमाणान्तरेणैक्यमनवगतमिति व्यावर्तकभेदेन ब्रह्मबहुत्वमवर्जनीयम्॥ ब्रह्मशब्दैक्यादत्राप्यैक्यं प्रतीयत इति चेत्—न ; अज्ञातगोव्यक्तेः जिज्ञासोः पुरुषस्य, 'खण्डो मुण्डः पूर्णश्रृङ्गो गौः' इत्युक्ते, गोपदैक्येऽपि, खण्डत्वादिव्यावर्तकभेदेन गोव्यक्तिबहुत्वप्रतीतेर्व्यक्त्योऽपि बह्व्यः स्युः।

अत एव लिलक्षयिषिते वस्तुन्येषां विशेषणानां संभूय लक्षणत्वमप्यनुपपन्नम् ॥

नाप्युपलक्षणत्वेन लक्षयन्ति, आकारान्तराप्रतिपत्तेः । उपलक्षणानामेकेनाऽऽकारेण प्रतिपन्नस्य केनचिदाकारान्तरेण प्रतिपत्तिहेतुत्वं हि दृष्टम्, 'यत्रायं सारसः, स देवदत्तकेदारः'

---

परिहरति नैवमिति । उपसंहारः—पर्यवसानम् । अन्यथा—प्रमाणान्तरेणैक्यप्रतीत्यभावे सतीत्यर्थः। तत्रापि—देवदत्तादावपि। पक्षे वैषम्यमाह अत्रत्विति। प्रमाणान्तरेणैक्यमनवगतमिति वदतोऽयं भावः—'एकमेवाद्वितीयम्' इत्यादिभिरपि नैकत्वनिश्चयः, तत्राप्येकत्वादिविशेषणभेदेन बहुत्वापत्तेः। एकमित्यादिपदानाम् ; एको [1]व्रीहिः इत्यादिवन्निर्वाहसंभवाच्चेति। ननु न केवलं प्रमाणान्तरेणैक्यप्रतीतिः ; शाब्दी च विद्यते। तस्यां सत्यां धर्मिबहुत्वं न स्यात्। अत्र चैकवचनान्तधर्मिवाचिपदैक्यं विशेष्यैक्यज्ञापकमिति शङ्कते ब्रह्मशब्देति। तद्ब्रह्म तद्ब्रह्मेति मुहुर्मुहुरुक्तिर्वा, तानि ब्रह्माणीति बहुवचनं वा नास्तीति भावः । परिहरति नेति । तत् कथमित्यत्राह अज्ञातेति । एकवचनान्तधर्मिवाचिपदैक्यं विशेषणबहुत्वाधीनं विशेष्यबहुत्वं न बाधते ; खण्डो मुण्डः पूर्णश्रृङ्गो गौरित्यत्र बहुत्वप्रतीतेः ॥ एकवचनान्तधर्मिवाचिपदैक्यं स्वतो विशेष्यैक्यप्रतिपादकम्, खण्डादिषु प्रत्यक्षबाधात् बहुत्वप्रतीतिरिति चेन्न ; अप्रत्यक्षेष्वपि गोषु खण्ड इत्यादिवाक्ये प्रयुक्ते बहुत्वप्रतीतेः । तस्मात, विशेषणबहुत्वं चेत्, विशेष्यभेदापादकमित्यभिप्रायेणोक्तम् अज्ञातगोव्यक्तेरिति। अज्ञातगोव्यक्तेः—प्रत्यक्षेणादृश्यमानगोव्यक्तेरित्यर्थः। खण्डो मुण्ड इत्यादिवाक्यप्रयोगासंभवव्युदासाय जिज्ञासोरित्युक्तम्। गोसामान्यज्ञाने सति अदृष्टगोव्यक्तित्वाज्जिज्ञासासंभवात् प्रयोगसम्भवः ।

सृष्टिस्थितिप्रलयाः किं प्रत्येकलक्षणानि, उत संभूयेति विकल्पमभिप्रेत्य प्रत्येकपक्षे दूषणमुक्तम् ; संभूयेति पक्षे दूषणमाह अत एवेति। अत एव—विशेषणभेदस्य स्वतो विशेष्यभेदापादकत्वादित्यर्थः ।

उपलक्षणपक्षं दूषयति नापीति । कुत इत्यत्राह आकारान्तरेति । व्यापकनिवृत्त्या व्याप्यनिवृत्तिरिति भावः । व्यापकत्वमेवोपपादयति उपलक्षणानामिति । उपलक्षणेनोपलक्ष्यप्रतिपत्तौ उपलक्षणमुपलक्ष्याकारः पूर्वप्रतिपन्नाकारश्चेत्याकारत्रयमवर्जनीयम् ; संप्रतिपन्नस्थलेषु तद्दर्शनात् । यथा सारससंबन्ध उपलक्षणम् ; देवदत्तसंबन्धित्वमुपलक्ष्यम् ; केदारत्वं पूर्वप्रतिपन्नाकारः । अतोऽत्र तृतीयाकारप्रतिपत्त्यभावादुपलक्षणत्वमनुपपन्नमित्यर्थः ॥ शाखाग्रे चन्द्र इत्यत्र कथमाकारत्रयमिति

---

[1] 'एको व्रीहिः सुनिष्पन्नः सुपुष्टं कुरुते प्रजाः' इतिवक्ष्यमाणवाक्यादाविति भावः।

इत्यादिषु ॥ ननु च, "सत्यं ज्ञानमनन्तं ब्रह्म" इति प्रतिपन्नाकारस्य जगज्जन्मादीन्युपलक्षणानि भवन्ति ॥ न; इतरेतरप्रतिपन्नाकारापेक्षत्वेनोभयोर्लक्षणवाक्ययोरन्योन्याश्रयणात् ।

अतो न लक्षणतो ब्रह्म प्रतिपत्तुं शक्यत इति ॥

एवं प्राप्तेऽभिधीयते—जगत्सृष्टिस्थितिप्रलयैरुपलक्षणभूतैर्ब्रह्म प्रतिपत्तुं शक्यते । न चोपलक्षणोपलक्ष्याकारव्यतिरिक्ताकारान्तराप्रतिपत्तेः ब्रह्माप्रतिपत्तिः । उपलक्ष्यं ह्यनवधिकातिशयबृहत्, बृंहणञ्च; बृहतेर्धातोस्तदर्थत्वात् । तदुपलक्षणभूताश्च जगज्जन्मस्थितिलयाः ।

---

चेत्—उच्यते । कालविशेषे देशविशेषसंबन्धः उपलक्ष्याकारः; शाखाग्रमुपलक्षणम्; शाखाचन्द्रयोश्च ऋजुप्रदेशवर्तित्वं सम्बन्धः । स च संबन्धो वाक्यावगतः । आदित्यादिव्यावर्तकं चन्द्रशब्दबोध्यं चन्द्रसंस्थानं तृतीयाकारः । केदारत्वाद्याकारः प्रत्यक्षप्रतीतः; चन्द्रत्वं तु पूर्वानुभूतत्वात् धीस्थम् । कुत्र चन्द्र इति बुभुत्सायामेवम् । कश्चन्द्र इति बुभुत्सायां शब्दवाच्यत्वमुपलक्ष्यम्; स्वारसिकेन वा शब्दोत्थापितबुभुत्सामूलेन वा प्रत्यक्षेण प्रतीतो वक्रतादिः पूर्वप्रतिपन्नाकारः । अनेन निर्विशेषवस्तुवादे तु उपलक्षणत्वमपि नोपपद्यते इत्युक्तं भवति । तृतीयाकारप्रतिपत्तिरस्तीति चोदयति ननु चेति । दूषयति नेति । सत्यत्वादयः किं विशेषणतया लक्षणभूताः, उत उपलक्षणतया । पूर्वस्मिन् कल्पे दूषणमुक्तम् । अन्यत्र च—आकारान्तरप्रतिपत्त्यपेक्षायाम् वाक्यान्तरेण चेत्, अनवस्था । स्वेन चेत्, आत्माश्रय इति । अतः यतो वा इमानीत्यादिवाक्येन आकारान्तरप्रतिपत्तिर्वक्तव्या । ततश्चान्योन्याश्रय इति भावः । अत इति । विशेषणत्वोपलक्षणत्वायोगादित्यर्थः ॥ ... ... ...

सिद्धान्तमवतारयति एवं प्राप्तेऽभिधीयत इति । एवम्—सूत्रकाराभिप्रेते पूर्वपक्षे प्राप्ते तदभिप्रेतस्तत्परिहार उच्यत इत्यर्थः । ज्ञाप्यबहिर्भूतो ज्ञाप्यप्रतीत्युपाय उपलक्षणम् । ज्ञाप्यान्तर्भूतो ज्ञाप्यप्रतीत्युपायो विशेषणम् । न चैकस्य ज्ञाप्यज्ञापकत्वविरोधः; घटादेरिन्द्रियसंयोगप्रतिसंबन्धित्वेन ज्ञानोत्पत्तिहेतुत्वस्य विषयत्वस्य च दर्शनात् । एवं शब्दतो धीस्थतया स्वविशिष्टप्रतीतौ हेतुभूतं विशेषणम्—इति उभयथापि लक्षणत्वोपपत्तिं वक्ष्यन्, "एकानेकस्वरूपाय स्थूलसूक्ष्मात्मने नमः" इतिवद् चरमोक्तमुपलक्षणपक्षं बुद्धिस्थतया प्रथममुपपादयितुं प्रतिजानीते जगदिति । ननूपलक्षणपक्षे अनुपपत्तिरुक्तेत्यत्राह न चेति । आकारान्तरम्—आकारविशेषः; स चोपलक्षणोपलक्ष्याकारातिरिक्त इत्यपुनरुक्तिः । पृथक् तृतीयाकारं दर्शयितुमाकारद्वयं विवक्षन् पूर्वमुपलक्ष्याकारमाह उपलक्ष्यं हीति । अथर्वशिरसि, "बृहति बृंहयति तस्मादुच्यते परं ब्रह्म" इति । श्रीमति वैष्णवे पुराणे च "बृहत्त्वाद्बृंहणत्वाच्च ब्रह्मेति परिपठ्यते" इत्यादिनिर्वचनप्रसिद्धिद्योतको हिशब्दः । आकारत्रयपृथक्त्वद्योतनार्थाश्चशब्दाः तत्र तत्र ज्ञेयाः । कथं निरतिशयबृहत्त्वबृंहणत्वप्रतिपत्तिरित्यत्राह बृहतेरिति मनिन्प्रत्ययान्तस्य रूढिसहकृतस्य बृहतिधातोस्तदर्थत्वादित्यर्थः । यद्वा ब्रह्मशब्देन बृहत्त्वबृंहणत्वावगतिः कथमित्यत्राह बृहतेरिति । बृहत्त्वस्य स्वरूपतो गुणतश्च विवक्षितत्वात् बृंहणत्वरूपबृहत्त्वमपि धात्वर्थान्तर्गतमिति भावः । उपलक्षणाकारमाह तदुपलक्षणेति । ननु सारसस्य केदारेणेव जन्मादीनां ब्रह्मणा सह संबन्धो वक्तव्यः, किञ्च ब्रह्मण उपादानत्वे बाह्यमत इव

यतः येन यदिति प्रसिद्धवन्निर्देशेन यथाप्रसिद्धि जन्मादिकारणमनूद्यते। प्रसिद्धिश्च, "सदेव सोम्येदमग्र आसीदेकमेवाद्वितीयम्। तदैक्षत बहु स्यां प्रजायेयेति तत्तेजोऽसृजत" इति एकस्यैव सच्छब्दवाच्यस्य निमित्तोपादानरूपकारणत्वेन। तदपि 'सदेवेदमग्र एकमेवासीत्' इत्युपादानतां प्रतिपाद्य अद्वितीयमित्यधिष्ठात्रन्तरं प्रतिषिध्य 'तदैक्षत बहु स्यां प्रजायेयेति। तत्तेजोऽसृजत' इत्येकस्यैव प्रतिपादनात्। तस्मात् यन्मूलाः जगज्जन्मस्थितिलयाः तद्ब्रह्मेति, जन्मस्थितिलयाः स्वनिमित्तोपादानभूतं वस्तु ब्रह्मेति लक्षयन्ति।

जगन्निमित्तोपादानताक्षिप्तसर्वज्ञत्वसत्यसङ्कल्पत्वविचित्रशक्तित्वाद्याकारबृहत्त्वेन प्रतिपन्नं ब्रह्मेति च जन्मादीनां तथा प्रतिपन्नस्य लक्षणत्वेन नाऽऽकारान्तराप्रतिपत्तिरूपानुपपत्तिः।

---

निमित्तान्तराधिष्ठेयताप्रसङ्गेन सत्यसङ्कल्पत्वादिगुणान्वयलक्षणबृंहणत्वासिद्धिश्च स्यादित्येतच्छङ्काद्वयं परिहरन् तृतीयाकारोपस्थापकं वाक्यं चावतारयति **यतो येने**त्यादिना। कुत्र कथं प्रसिद्धिरित्यत्राह **प्रसिद्धिश्चे**ति। तच्च कथमित्यपेक्षायां तत्प्रतिपादनं पदानामन्वयमुखेन दर्शयति **तदपी**ति। **तत्**—निमित्तोपादानत्व-रूपकारणत्वम्। उपादानत्वाधिष्ठात्रन्तरनिवारणयोरुपपादनं कृतं 'तदैक्षत बहु स्याम्', 'असृजत' इति। रामकृष्णादिरूपेण बहुभवनव्यावृत्त्यर्थं जगद्रूपेण बहुभवनमिति दर्शितम्, 'तत्तेजोऽसृजत' इत्यनेन। अत्र फलितं संबन्धमाह **तस्मा**दिति। यथा उपलक्षणेन सारसेनाधिकरणत्वेन संबन्धित्वं केदारस्य, यथा चन्द्रदेशस्य शाखायाश्च ऋजुभावः संबन्धः, तथा ब्रह्मण उपलक्षणभूतजन्मादिभिर्हेतुहेतुमद्भावः संबन्ध इत्युक्तं भवति; यथाप्रसिद्धि अनुवादरूपतया वाक्यस्य। निमित्तान्तरशङ्का चार्थात् परिहृता भवति।

एवं तृतीयाकारस्याऽऽक्षेपकमुपलक्षणसंबन्धात्मकं निमित्तोपादानरूपकारणत्वमुक्तम्। अथ तदाक्षिप्तं तृतीयाकारमाह **जगदि**ति। **यत**श्शब्दस्मारितकारणवाक्येषु हि सार्वज्ञ्याद्यवगमः। अतो **जगन्निमित्तो-पादनताक्षिप्ते**त्युक्तम्। गुणानामपरिच्छिन्नतया तद्विशिष्टस्य ब्रह्मशब्दवाच्यतायोग्यत्वज्ञापनार्थमाकार-**बृहत्त्वेने**त्युक्तम्। 'यः सर्वज्ञः' इत्यादिवाक्यावगतसार्वज्ञ्यादीनामुपलक्षणत्वाभावान्नान्योन्याश्रयः। विशेषणबहुत्वं तु न विशेष्यभेदापादकमिति वक्ष्यत इति न विरोधः। उपलक्षणपक्षानुपपत्तिपरिहार-मुपसंहरति **इति चे**ति। **इति च**—अतश्चेत्यर्थः।

**उपलक्ष्यं** हीत्यादिभाष्यस्यैवं वा योजना—**अनवधिकातिशयशब्दे** तात्पर्यम्। उपलक्ष्य-मनवधिकातिशयबृहत्त्वं बृंहणत्वं च। निरवधिकबृहत्त्वं च स्वरूपतो गुणतो विभूतितश्चानवधिकंबृहत्त्वम्। बृहत्त्वबृंहणत्वविशेषः उपलक्ष्य इत्युक्तं भवति। ततश्चोपलक्ष्याकारैकदेशभूतं बृहत्त्वबृंहणत्वमात्रं पूर्वप्रतिपन्नाकारो भवतीति फलितम्। लोके तथा दर्शनात्। देवदत्तकेदारत्वं ह्युपलक्ष्यम्। न च देवदत्तसंबन्धित्वमात्रम्, घटपटादिष्वतिप्रसङ्गात्। तदेकदेशभूतकेदारत्वमात्रेण च पूर्वप्रतिपत्तिः। तस्मादुपलक्ष्यैकदेशभूतबृहत्त्वबृंहणत्वाकारेण पूर्वप्रतिपत्तिः, अनवधिकातिशयबृहत्त्वं बृंहणत्वमुपलक्ष्य-मित्यभिप्रायेण **ह्यनवधिकातिशयबृहद्बृंहणश्चे**त्युक्तम्। बृहत्त्वबृंहणत्वविशेषस्योपलक्ष्यत्वात् बृहत्त्व-बृंहणत्वमात्रं पूर्वप्रतिपन्नाकार इत्यर्थसिद्धमिति **हि**शब्देन सूचितम्। कथं तत्प्रतिपत्तिरित्यत्राह—**बृहतेर्धातो**रिति। बृहत्त्वमात्रं पूर्वप्रतिपन्नाकार इत्यध्याहृतेन वाक्येन **तदर्थत्वा**दिति पञ्चम्या अन्वयः। यद्वा **न नेत्या**दिना पूर्ववाक्येनान्वयः। उपलणाकारमाह—**तदुपलक्षणे**ति। तृतीयाकारमन्यमपि

जगज्जन्मादीनां विशेषणतया लक्षणत्वेऽपि न कश्चित् दोषः। लक्षणभूतान्यपि विशेषणानि स्वविरोधिव्यावृत्तं वस्तु लक्षयन्ति। अज्ञातस्वरूपे वस्तुन्येकस्मिन् लिलक्षयिषितेऽपि परस्परा-विरोध्यनेकविशेषणलक्षणत्वं न भेदमापादयति ; विशेषणानामेकाश्रयतया प्रतीतेरेकस्मिन्नेवोप-संहारात् । खण्डत्वादयस्तु विरोधादेव गोव्यक्तिभेदमापादयन्ति। अत्र तु कालभेदेन जन्मा-दीनां न विरोधः।

---

विवक्षुः तत्प्रतिपादकं वाक्यमवतारयन् उपलक्षणस्योपलक्ष्येण संबन्धं वदन् निमित्तान्तरशङ्कां च व्युदस्यति **यतो येनेत्यादिना**। पूर्ववदर्थः। विवक्षितमन्यं तृतीयाकारमाह—**जगदिति**। [1]इदानीं **चशब्दः** तृतीयाकारान्तरसमुच्चये। यथा केदारत्वं सारसाधिकरणत्वदेवदत्तसंबन्धित्वोपयोगि, तथा सर्वज्ञत्वादयो-ऽप्यनवधिकातिशयबृहत्त्वबृंहणत्वजन्मादिकारणत्वोपयोगिनः।

अथ विशेषणतया लक्षणत्वमुपपादयति **जगज्जन्मादीनामिति**। कथं न दोषः; अपवादकप्रमाणाभावे विशेषणभेदस्य विशेष्यभेदावहत्वं दोषत्वेन युक्तमित्यत्राह **लक्षणभूतान्यपीति**। **लक्षणभूतानि**—व्यावर्तकभूतानीत्यर्थः। यद्वा लक्षणभूतानां विशेषणानां सजातीयविजातीयव्यावर्तनस्व-भावत्वेऽपीत्यर्थः। **स्वविरोधिव्यावृत्तम्**—नियतभिन्नाश्रयविशेषणाश्रयाद्व्यावृत्तम्; न त्वविरुद्ध-विशेषणाश्रयाद्व्यावृत्तमित्यर्थः। अयं ग्रन्थः पक्षविषयः। बहुत्वापवादकप्रमाणाभावे सति विशेषणत्वमेव विरोधित्वमित्यत्राह **अज्ञातेति**। अयं तु सपक्षविषयः। देवदत्तः श्यामो युवेत्याद्युदाहरणमत्राभिप्रेतम्। अप्रत्यक्षविषयेऽप्येकवचनान्तधर्मिवाचिपदैक्याद्विशेष्यैक्यं प्रतीयत इत्यर्थः। अत्र विशेष्यैक्यव्यवस्थापकं किमित्यपेक्षायां सपक्षे विशेष्यैक्यमुपपादयति **विशेषणानामिति**। शब्दस्वारस्याद्विशेषणानामेका-श्रयान्वयप्रतीतेः अविरुद्धविशेषणानामेकाश्रयवृत्तित्वोपपत्तेरित्यर्थः। अविरुद्धविशेषणत्वं विशेष्यैक्य-व्यवस्थापकमित्युक्तं भवति। यद्वा **अज्ञातस्वरूप** इत्यपि ग्रन्थः पक्षविषयः। पूर्वस्मिन् ग्रन्थे विशेषणानां विरुद्धविशेषणाश्रयात् स्वाश्रयभेदकत्वमुक्तम्। अप्रत्यक्षत्वे सति भिन्नविशेषणत्वमेव भेदकत्वमित्यत्राह **अज्ञातेति**। तत्राप्यविरुद्धविशेषणभेदो न विशेष्यभेदक इत्यर्थः। कुत इत्यत्राह **विशेषणानामिति**। देवदत्तः श्यामो युवा लोहिताक्षः इत्यादावविरुद्धविशेषणानामेकाश्रयत्वदर्शनात् पक्षीकृतेऽप्येकस्मिन्नेव विशेषणानामन्वयोपपत्तेरित्यर्थः। अविरुद्धविशेषणानां विशेष्यभेदानापादकत्वमुक्तम्; विपक्षभूतखण्डादिषु बहुत्वनियामकमाह **खण्डत्वादयस्त्विति**। ततः पक्षस्य वैषम्यमाह **अत्र त्विति**। **कालभेदेने**-त्यस्यायमभिप्रायः—विशेष्यब्रह्मबहुत्वेऽपि जगज्जन्मादीनां यौगपद्यव्याघातात् कालभेदेनाविरोध आश्रयणीयः; विशेष्यैक्येऽपि तथैवाविरोध इति।

अत्रायमर्थोऽनुसंधेयः—विशेषणबहुत्वं स्वत एव विशेष्यभेदापादकम्, खण्डो मुण्ड इत्यादिषु दर्शनात्। देवदत्तः श्यामो युवेत्यादिषु प्रत्यक्षबाधादैक्यप्रतीतिः। तस्मात् प्रत्यक्षागोचरे ब्रह्मणि विशेषण-बहुत्वायत्तं विशेष्यबहुत्वमवर्जनीयमिति चेत्—एकवचनान्तधर्मिवाचिपदैक्यस्य स्वतो विशेष्यैक्यपरत्वं देवदत्तः श्यामो युवेत्यादिषु दृष्टम्। खण्डो मुण्ड इत्यादिषु प्रत्यक्षबाधात् बहुत्वप्रतीतिः। अतः प्रत्यक्षागोचरे

---

1 इदानीमिति। चशब्दोऽयं पूर्वमुपलक्ष्योपलक्षणाकारसमुच्चये। इदानीं बृहत्त्वरूप-पूर्वोक्ततृतीयाकारसमुच्चये।

"यतो वा इमानि भूतानि जायन्ते" इत्यादिकारणवाक्येन प्रतिपन्नस्य जगज्जन्मादिकारणस्य ब्रह्मणः सकलेतरव्यावृत्तं स्वरूपमभिधीयते, "सत्यं ज्ञानमनन्तं ब्रह्म" इति। तत्र सत्यपदं निरुपाधिकसत्तायोगि ब्रह्माऽऽह। तेन विकारास्पदमचेतनं तत्संसृष्टश्चेतनश्च व्यावृत्तः; नामान्तरभजनार्हावस्थान्तरयोगेन तयोर्निरुपाधिकसत्तायोगरहितत्वात्। ज्ञानपदं नित्यासङ्कुचितज्ञानैकाकार-

---

ब्रह्मणि एकवचनान्तधर्मिवाचिपदैक्यादैक्यं सिद्धमेव॥ नैवम्। विशेषणभेदायत्तं विशेष्यबहुत्वमेकवचनान्तधर्मिवाचिपदैक्यं न बाधते, अपि तु प्रत्यक्षमेव बाधते, अदृश्यमानगोव्यक्तेः पुरुषस्य खण्डो मुण्ड इत्यादिवाक्यप्रयोगे सति एकवचनान्तधर्मिवाचिपदैक्येऽपि बहुत्वप्रतीतेरिति हि पूर्वपक्षस्थितिः। तत्रोत्तरमुच्यते—अज्ञातेत्यादिना। एकवचनान्तधर्मिवाचिपदैक्यं बहुत्वं बाधत एव; अदृश्यमानेऽपि देवदत्ते, देवदत्तः श्यामो युवेत्यादिवाक्यप्रयोगे विशेषणबहुत्वे सत्यपि विशेष्यैक्यप्रतीतेः। एवं प्रत्यक्षाप्रत्यक्षविभागविधुरं बहुत्वप्रतीतिरैक्यप्रतीतिश्च भवतः। अत्र तु बहुत्वैकत्वयोः को निर्णायक इति चेत्—नियतभिन्नाश्रयदृष्टविशेषणबहुत्वं विशेष्यैक्यविरोधि, अनियतभिन्नाश्रयदृष्टविशेषणबहुत्वं नैक्यविरोधीति॥

अथ सत्यज्ञानादीनां लक्षणत्वोपपत्तिं पूर्वोक्तान्योन्याश्रयणपरिहारञ्चाह **यतो वा** इति। लक्षणवाक्येनानेन कारणत्वमेव लक्षणत्वेनोक्तमिति अस्य **कारणवाक्यत्वम्**। आदिशब्देन सदेवेत्यादीनि कारणत्वप्रापकवाक्यानि गृह्यन्ते। ननु लक्षणभूतेनैव जन्मादिकारणत्वेन ब्रह्मणः सजातीयविजातीयव्यावृत्तिः सिद्धा; अन्यथा तस्य लक्षणत्वायोगात्। तत् कथं सत्यादिवाक्येन सकलेतरव्यावृत्ताभिधानोक्तिः॥ उच्यते। व्यावृत्तिर्द्विविधा। व्यक्त्यन्तरेष्वसंभावितधर्मयोगरूपा तत्तज्जातीयासाधारणधर्मानन्वयरूपा च। तत्र विलक्षणधर्मयोगे व्यक्त्यन्तरेभ्योऽन्यत्वं सिद्ध्यति; न त्वतज्जातीयत्वम्; तज्जातीयत्वव्यञ्जकधर्मान्वयाधीनतज्जातीयत्वशङ्काया अनपगमात्। तदनन्वये तु तज्जातीयताव्यावृत्तिः सिद्ध्यति। यथा घटस्य संस्थानविशेषेण स्वेतरसमस्तवैलक्षण्ये सिद्धेऽपि पृथिवीत्वव्यवस्थापकगन्धवत्त्वयोगात् पृथिवीजातीयत्वं नापैति, तदयोगादबादिषु तज्जातीयत्वापगमः— एवं जगत्कारणत्वरूपविलक्षणधर्मान्वये सत्यपि ब्रह्मणोऽचिज्जातीयत्वजीवजातीयत्वशङ्काऽवतिष्ठते[1] इति तज्जातीयताव्यावृत्तिः सत्यज्ञानादिवाक्येन प्रतिपाद्यत इति तस्य सकलेतरव्यावृत्तिस्वरूपबोधकतोक्तिर्युक्तेति।

कथं व्यावृत्तस्वरूपाभिधानमित्यत्राह **तत्रेति**। केनापि परिणामविशेषेण तत्तदवस्थस्य सत्ता सोपाधिकसत्ता; अतो **निरुपाधिकसत्ता** निर्विकारत्वम्। सत्यपदव्यावर्त्यमाह **तेनेति**। कथमित्यत्राह **नामान्तरेति**। निरुपपदं **सत्यपदमसङ्कोचात्** स्वरूपतो धर्मतश्चैकरूपत्वं ज्ञापयतीत्यचित्तत्संसृष्टजीवव्यावृत्तिः। **ज्ञानशब्दार्थमाह ज्ञानपदमिति**। इदानीम् अस्मिन् विषये इत्याद्युपपदरहितं ज्ञानपदमसङ्कुचितत्वं नित्यत्वञ्च ज्ञानस्य दर्शयति। नित्यासङ्कुचितज्ञानत्वमेवाकारो यस्य **तत् नित्यासङ्कुचित-**

---

[1] अवतिष्ठत इति। अवस्थाश्रयत्वरूपोपादानत्वसंकल्पाश्रयत्वरूपनिमित्तत्वाभ्युपगमात् अचित इव स्वरूपान्यथाभावः चित इव हेयविकारास्पदत्वं मुक्तस्येव कादाचित्कविकासः नित्यस्येव परिच्छिन्नत्वमित्येवंरूपं हि तत्तज्जातीयत्वम्।

ज्ञानैकाकारम् । तेन ब्रह्मणः कदाचित् क्वचिदपि प्रदेशे जडत्वव्यावृत्तिः । नित्यासङ्कुचितज्ञानत्वमद्वारकं धर्मद्वारकं च परमात्मन आकारो भवति । 'आत्मज्योतिः सम्राडिति होवाच', 'ब्रह्मणा विपश्चिता', "विज्ञातारमरे केन विजानीयात्" इत्यादिभिः स्वरूपस्य धर्मस्य च ज्ञानत्वावगमात् ज्ञानशब्दासङ्कोचेन सद्वारकाद्वारकज्ञानाकारत्वसिद्धिः ।

[1]नन्वस्य ज्ञानशब्दस्य किं प्रवृत्तिनिमित्तम् ? विषयावगाहिज्ञानाख्यद्रव्यत्वं चेत्—अपर्यवसानात् ज्ञानधर्मकत्वमुक्तं स्यात्; न तु ज्ञानस्वरूपता । स्वप्रकाशतारूपं ज्ञानत्वं प्रवृत्तिनिमित्तं चेत्—ज्ञानस्वरूपत्वमुक्तं स्यात्; न तु ज्ञानधर्मकत्वम् । ततश्च 'तद्गुणसारत्वात्' इति सूत्रविरोधश्च । न च गवादिशब्दानां परमात्मपरत्वे गोत्वसंस्थानपिण्डजीवानामिव द्वारद्वारिभावात् ज्ञानाख्यद्रव्य-ज्ञानत्वगुणयोर्द्वयोरपि प्रवृत्तिनिमित्तत्वं घटते । न हि धर्मभूतज्ञानं स्वरूपभूतज्ञानगतज्ञानत्वगुणे समवैति, येन द्वारद्वारिभावः स्यात् ॥ धर्मभूतज्ञाने स्वरूपे चानुगतं ज्ञानत्वमेव प्रवृत्तिनिमित्तं चेत्—गोशब्देन खण्डमुण्डपिण्डद्वयवत् ज्ञानव्यक्तिद्वयमुक्तं स्यादिति द्वारद्वारिभावेनानभिधानात् तयोर्ज्ञानयोर्न धर्मधर्मिभावप्रतीतिः । ज्ञानत्वगुणविशेषितज्ञानद्रव्यविशिष्टतया ज्ञानत्वगुणविशिष्टतया च स्वरूपस्याभिधाने शब्दस्य युगपद्व्यापारभेदः प्रसजेत् । अतो ज्ञानपदेन स्वरूपतो धर्मतश्च ज्ञानाकारत्वमात्मनो न सिद्ध्येत् ॥

उच्यते । ज्ञानशब्दस्य स्वप्रकाशतारूपं ज्ञानत्वं प्रवृत्तिनिमित्तम् । न च तद्गुणसारत्वादिति सूत्रविरोधः; धर्मभूतज्ञानद्रव्याभिधानेऽपि ज्ञानत्वस्य प्रवृत्तिनिमित्तत्वात् । स्वरूपस्य च ज्ञानत्वम्, "प्रकाशवच्चावैयर्थ्यात्" इति सूत्रितम् । न च सद्वारकमद्वारकञ्च स्वरूपस्याभिधानेऽपि शब्दस्य युगपद्व्यापारभेदः; साक्षाद्वा परम्परया वेति विशेषमनपेक्ष्य ज्ञानत्वमात्रस्य प्रवृत्तिनिमित्तत्वे सति शब्दशक्त्यसङ्कोचात् साक्षात् प्रणाड्या च ज्ञानत्वविशिष्टतावगमेन ज्ञानधर्मकत्व-ज्ञानस्वरूपत्वसिद्धेः । न च द्वारद्वारिभावेनानभिधानात् खण्डमुण्डव्यक्त्योरिव धर्मधर्मिभावासिद्धिः; "आत्मज्योतिः सम्राट्", 'ब्रह्मणा विपश्चिता', 'अत्रायं पुरुषः स्वयंज्योतिर्भवति', 'एष हि द्रष्टा श्रोता रसयिता घ्राता मन्ता बोद्धा कर्ता विज्ञानात्मा पुरुषः' इत्यादिभिः परमात्मनो जीवस्य च ज्ञानधर्मकत्वस्य ज्ञानस्वरूपत्वस्य च सिद्धेः ।[2] ज्ञानशब्दस्य चासङ्कोचेन ज्ञानात्मनोर्विशेषणांशे विशेष्यांशे च ज्ञानत्ववैशिष्ट्यबोधनसामर्थ्याच्च । यथा सपरिकरो राजा दृष्टः, सपरिच्छदं गृहं क्रीतम्, सवत्सा गौः क्रीतेत्यादौ विशेषणांशस्य विशेष्यांशस्य च दृष्टत्वक्रीतत्वान्वयः एकव्यापारेण शब्देन बोध्यते, तद्वत् । न च विशेषणांशे विशेष्यांशे वा दृष्टत्वक्रीतत्वान्वय आर्थः;

---

1 ननु जीवात्मनामपि कार्त्स्न्येनाजडत्वसत्त्वात् कथं मुक्तेषु संकुचितज्ञानत्वोक्तिस्तद्व्यावृत्त्युक्तिश्च भाष्ये इति शंकायां धर्मद्वारकत्वमादाय निर्वहति नित्येत्यादिना । ज्ञानपदस्य सर्वसंमतं सविषयकत्वं वा अद्वैतीष्टं स्वयम्प्रकाशत्वं वा प्रवृत्तिनिमित्तमिति पक्षद्वयेऽपि अत्र ज्ञानपदस्य अन्तोदात्ततया अर्शआद्यजन्तत्वात् ज्ञानयुक्तमित्येवार्थ इति भाष्यनिर्वाहः सुकरः । अथापि परमत इव स्वरमुपेक्ष्यापि निर्वाहार्थः उपरितनविस्तर इति ध्येयम् ।

2 सिद्धेरिति । तथाच आत्मनि तद्धर्मे च ज्ञानत्वस्य प्रामाणिकत्वात् ज्ञानमिति पदस्य स्वाश्रयत्वस्वाश्रयाश्रयत्वोभयसंबन्धेन ज्ञानत्वरूपस्वप्रकाशत्वविशिष्टमित्यर्थः स्वीक्रियत इति भावः । अथ परम्परासंबन्धंविहाय ज्ञानत्वाश्रयमात्रार्थकत्वेऽपि धर्मे ज्ञानत्वलाभं दर्शयति ज्ञानशब्दस्येति ।

**माह ; तेन कदाचित्सङ्कुचितज्ञानत्वेन मुक्ता व्यावृत्ताः। अनन्तपदं देशकालवस्तुपरिच्छेदरहितं(त)**

विशेषणांशविशेष्यांशयोरन्यतरेण विनाऽन्यतरस्य दृष्टत्वक्रीतत्वान्वयप्रतीत्युनुपपत्त्यभावात् । न हि प्रवाहस्य घोषं प्रति बासत्ववत् (घोषप्रतिवास[1]त्ववत् ?) विशेषणांशेन विना विशेष्यांशस्य दृष्टत्वक्रीतत्वादिकमनुपपन्नम् । न च दर्शनक्रयादियोग्यतालक्षणेनार्थसामर्थ्येन विशेषणांशस्य तदन्वयप्रतीतिः; मण्डपक्षेत्रगोदोहनादीनां दर्शनक्रयादियोग्यानामपि तदन्वयाप्रतीतेः। तदप्रतीतिश्च बुभुत्सायां सत्यां संदेहोदयात् सिद्धा। न च समभिव्याहारवलात विशेषणांशस्य तदन्वयसिद्धिः, धार्मिको राजा दृष्ट इत्यत्र धर्मस्य दृष्टत्वाप्रतीतेः । न हि धर्मश्चक्षुर्विषयः । योग्यत्वे सति समभिव्याहारवलात् तदन्वयसिद्धिरिति चेत्—तर्हि विशेषणांशेऽपि तदन्वयस्य शाब्दत्वमुक्तं स्यात् । न ह्याकाङ्क्षासंनिधियोग्यतान्वयेन प्रतिपन्नत्वं शाब्दत्वं निवारयति॥ ननु सपरिकरो राजा दृष्ट इत्यादिषु विशेषणांशस्य विशेष्यांशस्य च शब्देनोपस्थापनात् तत्र विशेषणांशेऽपि विधित्सिताकारान्वय उपपन्नः; अत्र तु तदभावादुभयत्र विधित्सिताकारान्वयानुपपत्तिरिति॥ नैवम्; ब्रह्मशब्देनैव विशिष्टवस्तूपस्थापनात्। तथाहि—तद्विजिज्ञासस्वेति मुमुक्षोर्जिज्ञास्यतयोक्तं ब्रह्म तदैक्षतेत्यादीनि वाक्यानि सत्यसङ्कल्पत्वादिविशिष्टं कारणं वदन्ति। तच्छोधनप्रवृत्तसत्यादिवाक्यगतब्रह्मशब्दः सत्यसङ्कल्पत्वादिविशिष्टकारणविषयः। बृंहणत्वमपि हि ब्रह्मशब्दार्थः। तच्च स्वसङ्कल्पेनाचेतनस्य स्थूलपरिणामहेतुत्वम्, चेतनानां 'स चानन्त्याय कल्पते' इत्युक्तज्ञानबृहत्त्वहेतुत्वञ्च। ततश्च सत्यसङ्कल्पत्वादिविशिष्टार्थोपस्थापकब्रह्मशब्दप्रतिपन्नविशिष्टवस्तुविशेषकत्वात्, ज्ञानपदमसङ्कुचितशक्तितया विशेष्यांशे विशेषणांशे च स्वप्रवृत्तिनिमित्तभूतज्ञानत्वान्वयं प्रतिपादयति। सपरिकरो राजा दृष्ट इत्यादिषु पदान्तरसमभिव्याहृतशब्देन विशिष्टोपस्थापनम्, अत्र तु स्वोपजीव्यवाक्यान्तरस्थनिर्वचनसापेक्षब्रह्मशब्देनेति भिदा। विशिष्टवस्तुन्युपस्थापिते सति विशेषणांशस्य विशेष्यांशस्य च विधित्सिताकारान्वयित्वं तुल्यम्। स्वोपजीव्यवाक्यान्तरसापेक्षशब्देन विशिष्टवस्तुनि उपस्थापिते विधित्सिताकारस्योभयान्वयित्वञ्च दृष्टम्, यथा सानुचरो राजा समागतः, मया च स सत्कृत इति; सवत्सा गौः स्थिता, सा च दत्तेति। अतः परमात्मनो ज्ञानशब्देन ज्ञानधर्मकत्वज्ञानस्वरूपत्वाभिधानं युक्तम्। आनन्दादिशब्देष्वप्येष एव न्यायः स्वतः प्रवर्तते। [2]प्रमाणान्तरविरोधे सति तु निवर्तते। अतो यथोक्तार्थ उपपन्नः। अतः साक्षात् प्रणाड्या च नित्यासङ्कुचितज्ञानैकाकारत्वं दर्शयता ज्ञानपदेन मुक्तव्यावृत्तिसिद्धिमाह तेनेति। अनन्तपदस्यार्थमाह **अनन्तेति**। इहेदम्, नान्यत्रेति परिच्छेत्तुमशक्यत्वं देशापरिच्छेदः। इदमिदानीम्, नान्यदेति परिच्छेदायोग्यत्वं कालापरिच्छेदः; न तु देशकालाभावौ। एवं वस्त्वपरिच्छेदोऽपि न वस्त्वन्तराभावः; किंतु इदमिदं न भवतीति परिच्छेदानर्हत्वमेव; सर्ववस्तुसामानाधिकरण्यार्हत्वं वस्त्वपरिच्छेद इति यावत्। ब्रह्मव्यतिरिक्ते भावरूपाज्ञानतत्कार्यजातेऽङ्गीकृते सति वस्त्वन्तराभावरूपो वस्त्वपरिच्छेदः परस्यानुपपन्नः॥ सत्यवस्त्वन्तराभावः स इति चेत्—तर्हि स्वनिष्ठवस्त्वन्तराभावः स

1 'गंगायां घोषः प्रतिवसति' इति प्रयोगानुसारिवाक्यमिदमिति युक्तमिति घोषप्रतीति सनस्तंस्यात्।

2 नन्वेवं ब्रह्मशब्दार्थान्तर्गतशक्त्यादावपि स्वयम्प्रकाशत्वान्वयः स्यात्। सेश्वराद्वौ अविनाशित्वरूपसत्यत्वानन्तत्वान्वयश्च स्यादित्यत्राह प्रमाणान्तरविरोधे सति त्विति।

स्वरूपमाह । सगुणत्वात् स्वरूपस्य, स्वरूपेण गुणैश्चानन्त्यम् । तेन पूर्वपदद्वयव्यावृत्त-कोटिद्वयविलक्षणाः सातिशयस्वगुणाः नित्याः व्यावृत्ताः, विशेषणानां व्यावर्तकत्वात् । ततः 'सत्यं ज्ञानमनन्तं ब्रह्म' इत्यनेन वाक्येन जगज्जन्मादिनाऽवगतस्वरूपं वस्तु (ब्रह्म) सकलेतरवस्तुविसजातीयमिति लक्ष्यत इति नान्योन्याश्रयणम् ।

---

इत्यभ्युपगमो वरम् ; प्रमाणान्तराविरोधात् । सत्यवस्त्वन्तराभावो हि तत्तद्धर्मिग्राहकप्रमाणविरुद्धः । गुणतोऽप्यानन्त्यमाह सगुणत्वादिति । गुणानां देशकालपरिच्छेदौ विद्येते, न तूक्तलक्षणवस्तुपरिच्छेदाभावः । स तु स्वरूपस्यैव । यद्वा प्रकारान्तरेण वस्तुपरिच्छेदाभावमाह सगुणत्वादिति । इदमियदिति वस्तुस्वभावतः परिच्छेदाभावो वस्त्वपरिच्छेदः ; यथा तुल्याकारत्वे (तुल्यकालत्वे) तुल्यपरिमाणत्वेऽपि दशवर्णस्वर्णापेक्षया षड्वर्णस्वर्णं तदपेक्षया कलधौतादि चापकृष्टम् । सोऽपकर्षो वस्तुपरिच्छेदः । तत्तदपेक्षया गुरुत्वोज्ज्वलत्वपवित्रत्वादिभिर्दशवर्णस्वर्णादिकं प्रकृष्टम् । तस्य प्रकर्षस्य निरतिशयत्वं वस्त्वपरिच्छेदः । ईदृशवस्त्वपरिच्छेदः स्वरूपस्य गुणानां च युज्यते ; तेषामपि हेयप्रत्यनीकत्वादिस्वभावोत्कर्षस्य निरवधिकत्वात् । समाभ्यधिकराहित्यनिदानभूतो गुणैर्निरतिशयप्रकर्षो वस्त्वपरिच्छेद इत्युक्तं भवति । सर्ववस्तुसामानाधिकरण्यार्हत्वं चास्मिन्नन्तर्गतम् । तद्धि सर्वशरीरकत्वम् । तच्च नियमनधारणशेषित्वकाष्ठेति । अनन्तपदव्यवच्छेद्यमाह तेनेति । सातिशयस्वरूपस्वगुणा इति । स्वरूपमणुत्वात् सातिशयम् । ज्ञानव्यतिरिक्ता ऐश्वर्यादिगुणाश्च जगद्व्यापारानर्हतया सातिशयाः । ज्ञानं च नित्यं सर्वगतमपि तथात्वस्य परमात्मनित्येच्छाधीनत्वात् सातिशयम् । अपराधीनत्वरूपस्यातिशयस्य परस्मिन् विद्यमानत्वात् स्वाभाविकत्वेऽपि गुणानां सातिशयत्वमिति ज्ञापनार्थः स्वशब्दः । एवं व्यावृत्तिकथनस्य हेतुमाह विशेषणानामिति । अन्योन्याश्रयस्य परिहृतत्वं दर्शयति तत इति । ततः—एवं व्यावृत्तिसिद्धेः । अवगतस्वरूपम्—अवगतासाधारणाकारम् । जन्मादिकारणत्वं ह्यसाधारणाकारः ; तत् लक्षणत्वेनावगतमित्यर्थः । वस्तु—विशेष्यस्वरूपम् । ब्रह्मेति वा पाठः । कारणतया लक्षितस्य ब्रह्मणः कारणत्वशङ्कितदोषव्यावर्तकत्वाच्छोधकवाक्यानां लक्षणवाक्यपूर्वकत्वमस्ति, न तु तस्य शोधकवाक्यपूर्वकत्वमिति नान्योन्याश्रयणमित्यर्थः । सूत्रकारैः सत्यज्ञानादीनां लक्षणत्वेनानुक्तिनिदानं च अनेनैव दर्शितं भवति । विशेष्यांशस्य लक्षणं सत्यज्ञानादि ; न तु विशिष्टस्य । विशिष्टस्यैवोपास्यत्वात् प्राप्यत्वाच्च जिज्ञास्यब्रह्मलक्षणं जन्माद्येवेति सूत्राकाराभिप्रायः । जगत्कारणं ब्रह्म जिज्ञास्यमित्युक्ते कारणत्वशङ्कितदोषव्यावर्तकतया तच्छेषभूतः शोधकवाक्यार्थश्चास्मिन् सूत्रे सूत्रकाराभिप्रेतः । जिज्ञास्यत्वानुगुणस्य कारणत्वस्यैव लक्षणतया विवक्षितत्वात् । स्वरूपेण हेयास्पदस्य जिज्ञास्यत्वानुपपत्त्या जिज्ञास्यतायाः शोधकवाक्यार्थसापेक्षत्वात् । सत्यज्ञानादिवाक्यविषयसूत्रान्तराभावात्, 'प्राज्ञवत्', 'प्रकाशवच्च 'प्रकाशादिवच्च' इति सूत्राणां सत्यादिवाक्यं दृष्टान्ततयोपजीव्य अर्थान्तरोपपादनपरत्वाच्च सत्यज्ञानादिवाक्यार्थश्चेहाभिप्रेतः—इत्यभिप्रायेण भाष्यकारैर्निखिलहेयप्रत्यनीकस्वरूपादित्यादि विशेषणमुक्तम् ।

अतः सकलजगज्जन्मादिकारणं निरवद्यं सर्वज्ञं सत्यसङ्कल्पं सर्वशक्ति ब्रह्म लक्षणतः प्रतिपत्तुं शक्यत इति सिद्धम् ॥

ये तु निर्विशेषवस्तु जिज्ञास्यमिति वदन्ति, तन्मते "ब्रह्मजिज्ञासा", "जन्माद्यस्य यतः" इत्यसङ्गतं स्यात् ; निरतिशयबृहत् बृंहणं च ब्रह्मेति निर्वचनात् । तच्च ब्रह्म जगज्जन्मादिकारणमिति वचनाच्च । एवमुत्तरेष्वपि सूत्रगणेषु सूत्रोदाहृतश्रुतिगणेषु च ईक्षणाद्यन्वयदर्शनात् सूत्राणि सूत्रोदाहृतश्रुतयश्च न तत्र प्रमाणम् । तर्कश्च साध्यधर्माव्यभिचारिसाधनधर्मान्वितवस्तुविषयत्वान्न निर्विशेषवस्तुनि प्रमाणम् । जगज्जन्मादिभ्रमो यतः, तद्ब्रह्मेति स्वोत्प्रेक्षापक्षेऽपि न निर्विशेषवस्तुसिद्धिः ; भ्रममूलमज्ञानम्, अज्ञानसाक्षि ब्रह्मेत्यभ्युपगमात् । साक्षित्वं हि प्रकाशैकरसतयैवोच्यते । प्रकाशत्वं तु जडात् व्यावर्तकं स्वस्य परस्य च व्यवहारयोग्यतापादनस्वभावेन भवति । तथा सति सविशेषत्वम् । तदभावे प्रकाशतैव न स्यात् । तुच्छतैव स्यात् ॥२.

इति जन्माद्यधिकरणम् ।

---

अधिकरणार्थमुपसंहरति **अत** इति । **अतः**—जन्मादीनां विशेषणतया उपलक्षणतया च लक्षणत्वोपपत्तेः । जिज्ञास्यत्वोपयोगिशोधकवाक्यावगताकारविशिष्टमेव कारणवस्तु 'यतो वा इमानि' इत्यादिवाक्ये अर्थलब्धमित्यभिप्रायेणाह **निरवद्य**मिति । सर्वज्ञत्वादिगुणजातं कारणत्वाक्षिप्तं **यत** इति अत्रानूद्यत इत्यभिप्रायेण तदुक्तिः ।

अस्य सूत्रद्वयस्य **निर्विशेषवादि**पक्षासङ्गतिमाह **ये त्वि**ति । आद्यसूत्रासङ्गतिमुपपादयति **निरतिशये**ति । अथर्वशिरसि श्रीविष्णुपुराणे चोक्तनिर्वचनमभिप्रेतम् । न, निर्विशेषं ब्रह्मेति निरुक्तमिति भावः । द्वितीयसूत्रासङ्गतिं विवृणोति **तच्चे**ति । न हि, जगतोऽध्यासो यत इति लिलक्षयिषितमिति भावः । एवं सूत्रासङ्गतिकथनेन तद्विषयवाक्यासंगतिरपि फलिता । **उत्तरेषां सूत्राणां** तत्तद्विषयवाक्यानामपि निर्विशेषपक्षाननुगुणत्वमाह **एव**मिति । **सूत्रगणेष्वि**ति । नैकैकं सूत्रं वाक्यं वा विरुद्धम् ; अपि तु तत्तदधिकरणशरीरं तत्तद्विषयवाक्यजातं च विरुद्धमिति भावः । तर्काननुगुणत्वमाह **तर्कश्चे**ति । तर्कशब्दोऽनुमानपरः, प्रमाणानुग्राहकतर्कपरो वा । पराभिमतयोजनायामपि निर्विशेषवस्त्वसिद्धिमाह **जगज्जन्मादी**ति । **स्वोत्प्रेक्षापक्षेऽपीति** । अयमभिप्रायः—'यथा सोम्यैकेन मृत्पिण्डेन सर्वं मृन्मयं विज्ञातं स्यात्', 'तदात्मानं स्वयमकुरुत', 'कटकमुकुटकर्णिकादिभेदैः', 'आत्मकृतेः', 'परिणामात्' इति श्रुतिस्मृतिसूत्रेषु परिणामवचन-तदनुगुणदृष्टान्त-तदुपपादनानि दृश्यन्ते । न तु विवर्तानुगुणं किमपि दृश्यते. । न हि, यथा सोम्यैकेन शुक्तिशकलेन सर्वं रजतजातं विज्ञातं स्यादिति श्रुतिः, विवर्तादिति सूत्रं वा दृश्यते । तस्माज्जन्मादिभ्रमो यतः तद्ब्रह्मेत्ययमर्थः स्वयमार्जितः, न तु श्रुतिसिद्ध इति । परोत्प्रेक्षितपक्षे तन्निर्विशेषत्वासिद्धिमुपपादयति **भ्रममूल**मिति । ततः किमित्यत्राह **साक्षित्वं हीति** । ततोऽपि किमित्यत्राह **प्रकाशत्वं त्वि**ति । **प्रकाशत्वम्**—प्रकाशशब्दवाच्यत्वम् । **व्यवहारयोग्यतापादनस्वभावेने**ति । व्यवहारयोग्यतापादनमेव स्वभावः, तेन **भवति**—स्वपरव्यवहारयोग्यतापादनरूपस्वभाव एव प्रकाशत्वमित्यर्थः । तथाऽभ्युपगमे सविशेषत्वमाह **तथे**ति । अनभ्युपगमे दूषणमाह **तदभाव** इति ॥ २.

## शास्त्रयोनित्वाधिकरणम् १-१-३

जगज्जन्मादिकारणं ब्रह्म वेदान्तवेद्यमित्युक्तम्; तदयुक्तम्; तद्धि न वाक्यप्रतिपाद्यम्, अनुमानेन सिद्धेरित्याशङ्क्याह—

---

अथावान्तरसङ्गतिमाह **जगज्जन्मादीति** । कथमयुक्तमित्यत्राह **तद्धीति** । सामान्येन शब्दप्रतिपाद्यत्वे सिद्धे हि शब्दविशेषरूपवेदान्तवेद्यत्वसिद्धिरिति भावः । तच्च कुतः ? न हि प्रत्यक्षेण तदीक्ष्यत इत्यत्राह **अनुमानेनेति** ।

ननु ईश्वरानुमाननिरासार्थं नेदमधिकरणमारम्भणीयम् । साधकबाधकप्रमाणान्तरगोचरस्य शास्त्रेण प्रतिपादनायोगाद्धि तन्निरासः । न चायमपेक्षितः । अनुमानेन कर्तृमात्रे सिद्धेऽपि तदप्रतिपन्नस्य निमित्तोपादानैक्यस्य गगनादिसर्गस्य च प्रतिपादनोपपत्तेः ॥ अनुमानविरुद्धांशं न शास्त्रं प्रतिपादयतीति तत्प्रतिपादनायानुमाननिरास इति चेत्—न; आगमविरोधस्यैवानुमानदूषणतयाऽनुमानेनागमप्रतिबन्धायोगादिति ॥ उच्यते ; शास्त्रं हि साधकान्तरसिद्धं बाधकान्तरबाधितं च न प्रतिपादयति । यथाहुः—"असंनिकृष्ट[1]वाचा च (हि) द्वयमत्र जिहासितम् । ताद्रूप्येण परिच्छित्तिस्तद्विपर्ययतोऽपि वा" ॥ इति । तत्र निमित्तत्वोपादानत्वे च शास्त्रेण प्रतीयेते । तत्र निमित्तमात्रस्यानुमानसिद्धत्वात् तदुक्तिरनुवादः स्यात् । अनुवादस्य प्रमाणान्तरसिद्धिसापेक्षत्वान्निमित्तानुवादोऽनुमानसापेक्ष एव भवति । अनुमानं [2]चामूर्तद्रव्येतरनिष्ठोपादानव्यतिरिक्तकर्तृकत्वव्याप्तिमूलमिति धर्मिग्राहकानुमानविरोधेन निमित्तोपादानैक्यं गगनाद्युत्पत्तिं च शास्त्रं न प्रतिपादयितुमलम् । एवं कारणवाक्यानाम् अंशे प्राप्तविषयत्वात् अंशान्तरे बाधितविषयत्वाच्च निमित्तोपादानैक्यादिकं न सिध्येदिति तत्सिद्धये निमित्तमात्रानुमाननिरासार्थमिदमधिकरणमारम्भणीयमिति ॥

नन्वनुमानवादिभिरपि ईश्वरस्यागमगम्यत्वमङ्गीकृतम्, आगमानुग्राहकतया च अनुमानमुच्यत इति न तन्निरासो युक्त इति चेत्—परतःप्रामाण्यवादिभिर्नैवं वक्तुं युक्तम् । अनुमानस्य शास्त्रानुग्राहकत्वे

---

1 असंनिकृष्टवाचा—'असंनिकृष्टेऽर्थे विज्ञानम्' इति शाबरभाष्यस्थतत्पदेन—ताद्रूप्येण परिच्छित्तिः शास्त्रस्य लोकगृहीताकारेणार्थप्रतिपादकत्वम्, तद्विपर्ययतः परिच्छित्तिः—गृहीताकारविरुद्धाकारेणार्थप्रतिपादकत्वञ्च जिहासितम्—वारयितुमिष्टमित्यर्थः ।

2 अमूर्तद्रव्येतरत् सावयवं मध्यमपरिमाणं मूर्तद्रव्यम् रूपादि च । तन्निष्ठं यत् उपादानव्यतिरिक्तकर्तृकत्वम् तेन सह कार्यत्वस्य व्याप्तिरस्ति । अमूर्तद्रव्यावृत्तितद्धर्मव्याप्तौ सत्यां सुतराममूर्तद्रव्येतरत्वेन सह व्याप्तिः। अतः कर्तरीश्वरे उपादानव्यतिरिक्तत्वम्, अमूर्तद्रव्येतरत्वरूपव्यापकाभाववति गगनादावकार्यत्वञ्च प्रागेव सिद्धमिति तदुपजीविना शास्त्रेण न तद्विरुद्धार्थप्रतिपादनमिति भावः । अत्रामूर्तद्रव्येतरनिष्ठेत्युक्तिर्गगनाद्युत्पत्तिवारणार्था । इतरत्वविशिष्टेति सुवचम् । वैशिष्ट्यञ्च सामाधिकरण्यसंबन्धेन । तच्च शोधने इतरनिष्ठेत्येव पर्यवस्यतीति तथैवोक्तम् । प्रत्येकममूर्तद्रव्येतरत्वस्य चोपादानव्यतिरिक्तकर्तृकत्वस्य च व्याप्तिः कार्यत्वे इत्युक्तावपि न क्षतिः । अमूर्तद्रव्येतरनिष्ठा उपादानातिरिक्तकर्तृकत्वस्य व्याप्तिः—कात्स्न्र्येन संबन्धः इत्युक्तावपि वा अमूर्तद्रव्येतरनिष्ठ इत्यस्यामूर्तद्रव्यावृत्तिधर्म इत्यर्थः, तस्य चोपादानातिरिक्तकर्तृकत्वस्य च कार्यत्वेन साहचर्यनियमरूपा व्याप्तिरित्यादिरीत्याऽर्थवर्णनेऽपि वा पर्यवसानमेकमेव ।

शास्त्रयोनित्वात् ॥ १-१-३ ॥

शास्त्रं यस्य योनिः—कारणं प्रमाणम्—तत् शास्त्रयोनि ; तस्य भावः शास्त्रयोनित्वम् ; तस्मात् । ब्रह्मज्ञानकारणत्वात् शास्त्रस्य, तद्योनित्वं ब्रह्मणः । अत्यन्तातीन्द्रियत्वेन प्रत्यक्षादिप्रमाणाविषयतया ब्रह्मणः शास्त्रैकप्रमाणकत्वादुक्तस्वरूपं ब्रह्म, "यतो वा इमानि भूतानि जायन्ते" इत्यादिवाक्यं बोधयत्येवेत्यर्थः ॥

---

शास्त्रमेव प्राधान्येनेश्वरे प्रमाणं भवति। अनुग्राह्यं हि प्रधानम् । ईश्वरप्रोक्ततया च तैर्वेदप्रामाण्यमङ्गीक्रियते । अत ईश्वरे सिद्धे तत्प्रणीतत्वाद्वेदप्रामाण्यसिद्धिः, तत्सिद्धावीश्वरसिद्धिरित्यन्योन्याश्रयः स्यात् ॥ ननु महाजनपरिग्रहाद्वेदप्रामाण्यम्, वेदादीश्वरसिद्धिरिति नान्योन्याश्रय इति चेत्—न । तत्परिग्रहस्य भ्रान्तिमूलत्वव्युदासार्थं निर्दोषत्वज्ञानमूलत्वं वाच्यम् ; निर्दोषत्वज्ञानं च गुणवद्वक्तृकत्वज्ञानादित्यन्योन्याश्रयः स्यादेव ॥ आप्तोक्तत्वमनुमानतः सिद्धमिति नान्योन्याश्रयः इति चेत्—तत एवानुमानाद्वेदवक्तृत्वेनेश्वरसिद्धेः [1]किं वेदेनेति शास्त्रवैयर्थ्यपरिहाराय तन्निरासः कार्य इत्यधिकरणारम्भो युक्तः ।

**शास्त्रयोनित्वात्** ॥ व्याख्यात्रन्तराभिमतषष्ठीतत्पुरुषयोजनाव्यावृत्त्यर्थमाह **शास्त्रं यस्येति** । योनिशब्दस्योपादानपरत्वव्यावृत्त्यर्थं कारणमात्रपरत्वमाह **कारण**मिति । कथं सर्वकारणस्य ब्रह्मणः शास्त्रं कारणमिति शङ्कायामुत्पत्तिकारणपरत्वव्यावृत्त्यर्थमाह **प्रमाण**मिति । कारणवाचिनो योनिशब्दस्य कथं प्रमाणवाचित्वमित्यत्राह **ब्रह्मज्ञाने**ति । उत्पादक इव ज्ञापकेऽपि हेतुशब्दः प्रयुज्यते ; तद्वत् हेत्वभिप्रायेण योनिशब्दप्रयोगसंभव इति भावः । प्रमाणान्तरवेद्यत्वात् ब्रह्म न शास्त्रवेद्यमिति पूर्वपक्षे सति शास्त्रवेद्यत्वादिति सिद्धान्तहेतोः साध्याविशिष्टत्वं स्यादिति शङ्कां परिहरन् पञ्चम्यन्तस्य हेतुवाचिपदस्य साध्यवाचिपदान्वयं च दर्शयति **अत्यन्ते**ति । ब्रह्मणः स्वरूपेणेन्द्रियसंबन्धो नास्ति ; न च तल्लिङ्गस्य, नापि लिङ्गलिङ्गस्य चेत्यभिप्रायेणोक्तम् **अत्यन्तातीन्द्रियत्वेने**ति । अत एव हि **प्रत्यक्षादिप्रमाणाविषयतये**त्युक्तम्[2] । यद्वा व्यक्तिरूपेण दृष्टत्वम्, व्याप्त्यौपयिकं दृष्टसजातीयत्वं च नास्तीति भावः । इन्द्रियप्रत्यक्षशब्दयोः करणतत्फलभूतज्ञानविवक्षया भिन्नार्थता । **शास्त्रैकप्रमाणकत्वा**दिति । अब्भक्ष इतिवत् अवधारणगर्भः **शास्त्रयोनि**शब्द इति भावः । ततश्च प्रमाणान्तराविषयत्वं सिध्यतीति प्रमाणान्तरागोचरत्वेन शब्देन प्रतिपादयितुं योग्यत्वात् ब्रह्म, 'यतो वा इमानी'त्यादिवाक्यविशेषो बोधयतीत्युक्तं भवति । पूर्वस्मिन् सूत्रे यत् साध्यम्, तदेवास्मिन् सूत्रे मुखभेदेन साध्यत इत्येवकाराभिप्रायः ॥ अत्रापि 'यतो वा इमानी'त्यादिवाक्यद्वारा शास्त्रं विषयः । संशयोऽप्यर्थसिद्धः । साधारणविचारद्वयमनुसन्धेयम् । 'यतो वा इमानी'त्यादिवाक्यं किं ब्रह्मणि प्रमाणम्, उत नेति संशयः ; तदर्थं किं ब्रह्म मानान्तरगोचरः, न वेति ; तदर्थं किं सामान्यतोदृष्टमनुमानं जीवविलक्षणमवगमयति, नेति । यदाऽवगमयति, तदा मानान्तरगोचरत्वात् 'यतो वा इमानी' त्यादिवाक्यं न ब्रह्म प्रतिपादयतीति वेदान्तानां ब्रह्मणि प्रामाण्याभावात् तद्विचारानारम्भः पूर्वपक्षे फलितः । राद्धान्ते तु सामान्यतोदृष्टानुमानस्य जीवविलक्षणे प्रमाणत्वाभावेन ब्रह्मणो मानान्तरागोचरत्वात् 'यतो वा इमानि' इत्यादिवाक्यं ब्रह्मणि प्रमाणमिति सर्ववेदान्तवाक्यानां तत्र प्रामाण्यात् विचारस्यारम्भणीयत्वं फलितम् ॥

---

1 किं वेदेनेति । अनुमानगृहीतस्येश्वरस्य वेदेन प्रतिपादनं किमर्थमिति । 2. आदिपदं प्रयुक्तमित्यर्थः ।

**नन्वु शास्त्रयोनित्वं ब्रह्मणो न संभवति, प्रमाणान्तरवेद्यत्वाद्ब्रह्मणः। अप्राप्ते तु शास्त्रमर्थवत्॥**

**किं तर्हि तत्र प्रमाणम्? न तावत् प्रत्यक्षम्। तद्धि द्विविधम्, इन्द्रियसंभवं योगसंभवं चेति। इन्द्रियसंभवश्च बाह्यसंभवमान्तरसंभवं चेति द्विविधम्। बाह्येन्द्रियाणि विद्यमानसंनिकर्षयोग्यस्वविषयबोधजननानीति न सर्वार्थसाक्षात्कारतन्निर्माणसमर्थपुरुषविशेषविषयबोधजननानि। नाप्यान्तरम्; आन्तरसुखदुःखादिव्यतिरिक्तबहिर्विषयेषु तस्य बाह्येन्द्रियानपेक्षप्रवृत्त्यनुपपत्तेः। नापि योगजन्यम्; भावनाप्रकर्षपर्यन्तजन्मनस्तस्य विशदावभासत्वेऽपि पूर्वानुभूतविषयस्मृतिमात्रत्वात् न प्रामाण्यमिति कुतः प्रत्यक्षता? तदतिरिक्तविषयत्वे कारणाभावात्। तथा सति तस्य भ्रमरूपता। नाप्यनुमानं विशेषतोदृष्टं सामान्यतोदृष्टं वा; अतीन्द्रिये वस्तुनि**

---

सूत्राक्षरयोजनायां सङ्ग्रहेणोक्तमर्थमसहमानः पूर्वपक्षी चोदयति **नन्विति**। **शास्त्रयोनित्वम्**—शास्त्रप्रमाणकत्वम्। प्रमाणान्तरवेद्यत्वे कथं शास्त्रयोनित्वानुपपत्तिरित्यत्राह **अप्राप्ते तु शास्त्रमर्थवदि**ति। तुशब्दोऽवधारणे। "स्युरेव तु पुनर्वै चेत्यवधारणवाचिनः" इति हि नैघण्टुकाः। वैषम्ये वा। अबुभुत्सितग्राहित्वेनायत्नसाध्यत्वात् प्रत्यक्षस्य ज्ञाताप्रयोजनबोधकत्वं न दूषणम्; शास्त्रस्य तु बुभुत्सितग्राहित्वेन यत्नसाध्यत्वात् ज्ञाताप्रयोजनबोधकत्वं दूषणम्; तथा सति वह्न्यौष्ण्य-वायसदन्तसङ्ख्यावाक्येष्विव श्रवणादिप्रवृत्त्यनुपपत्तेः॥

अस्मिन् पूर्वपक्षे सिद्धान्त्येकदेशी मीमांसकश्चोदयति **किं तर्ही**ति। ईश्वरानुमाननिरासेन सिद्धान्तित्वम्; [1]ईश्वरमात्रानभ्युपगमेन एकदेशित्वम्। **किं तर्हि**? न किञ्चिदित्यर्थः। कथमित्यत्राह **न तावदि**ति। सर्वस्यापि प्रत्यक्षस्यासामर्थ्यं दर्शयितुं तस्य द्वैविध्यमाह **तद्धी**ति। प्रथमस्यापि द्वैविध्यमाह **इन्द्रियसंभवमि**ति। **आन्तरसंभवं चे**ति। **आन्तरशब्देन** मनो विवक्षितम्। प्रथमे अनुपपत्तिमाह **बाह्येन्द्रियाणी**ति। देशसंनिकर्षं विशिषता **विद्यमान**शब्देन कालसंनिकर्षश्च सिद्धः। **योग्य**शब्देन स्वभावसंनिकर्ष उक्तः। अनेन धर्माधर्मादिव्यावृत्तिः। **स्व**शब्देन चक्षुरादिकं प्रति शब्दादिव्यावृत्तिः। यद्वा **स्वविषय**शब्देनैवातीन्द्रियस्येन्द्रियान्तरविषयस्य च व्यवच्छेदः। **योग्य**शब्देन तु तत्तदिन्द्रियप्रतिनियतरूपादिजातीयेऽप्यनुद्भवादिवशादयोग्यस्य व्यवच्छेदः। द्वितीयं प्रतिवक्ति **नापी**ति। मनश्च न तद्विषयबोधजनकमित्यर्थः। **आन्तरसुखदुःखादि** इत्यत्र **आन्तरशब्दः** आत्मतद्धर्मपरः। तद्ग्राहित्वादेव हि मनसोऽप्यान्तरत्वम्। **सुखदुःखादी**त्यान्तरशब्दविवरणम्। **आदि**शब्देनेच्छाद्वेषादेरात्मनश्च परिग्रहः। **व्यतिरिक्ते**त्यनेन रूपादीनां बहिष्ट्वमेवोपपादितम्। योगजन्यस्यानुपपत्तिं दर्शयितुमाह **नापि योगे**ति। योगिप्रत्यक्षं किं पूर्वानुभूतानधिकविषयं प्रमाणम्, उत अनुभूताधिकविषयमिति विकल्पमभिप्रेत्य अनधिकविषयत्वे दूषणमाह **भावने**ति। अनधिकविषयतया स्मृतिमात्रत्वात् न प्रमाणत्वमिति प्रमाणावान्तरविशेषत्वं दूरोत्सारितमित्यर्थः। अनधिकविषयत्वमुपपादयति **तदतिरिक्तविषयत्वे कारणाभावादि**ति। **कारणम्**—इन्द्रियसंबन्धः। प्रमितिकारणाभावान्न प्रामाण्यमित्यर्थः। अधिकविषयत्वे दूषणमाह **तथा सती**ति। इन्द्रियसंबन्धाभावे-

---

[1] एकदेशिनः सेश्वरत्वे 'आगमादृते कथमीश्वरः सेत्स्यतीति एतच्चोदनानियमनवाक्यं स्वरसम्। निरीश्वरत्वे तस्य वाक्यस्य सर्वनिषेधे तात्पर्यं कल्प्यम्।

संबन्धावधारणविरहात् न विशेषतोदृष्टम्। समस्तवस्तुसाक्षात्कारतन्निर्माणसमर्थपुरुषविशेषनियतं सामान्यतोदृष्टमपि न लिङ्गमुपलभ्यते।

ननु च जगतः कार्यत्वं तदुपादानोपकरणसंप्रदानप्रयोजनाभिज्ञकर्तृकत्वव्याप्तम्। अचेतनारब्धत्वं जगतश्चैकचेतनाधीनत्वेन व्याप्तम्। सर्वं हि घटादिकार्यं तदुपादानोपकरणसंप्रदानप्रयोजनाभिज्ञकर्तृकं दृष्टम्। अचेतनारब्धमरोगं स्वशरीरमेकचेतनाधीनञ्च। सावयवत्वेन जगतः कार्यत्वम् (मिति)॥

उच्यते। किमिदमेकचेतनाधीनत्वम्? न तावत् तदायत्तोत्पत्तिस्थितित्वम्। दृष्टान्तो हि साध्यविकलः स्यात्। न ह्यरोगं स्वशरीरमेकचेतनायत्तोत्पत्तिस्थिति; तच्छरीरस्य भोक्तॄणां भार्यादिसर्वचेतनानामदृष्टजन्यत्वात् तदुत्पत्तिस्थित्योः। किञ्च शरीरावयविनः स्वावयवसमवेततारूपा स्थितिरवयवसंश्लेषविशेषव्यतिरेकेण न चेतनमपेक्षते, प्राणनलक्षणा तु स्थितिः

---

ऽप्यनुभूताधिकविषयत्वे तस्य दोषमूलकत्वेन भ्रान्तितैवेत्यर्थः। द्विविधानुमानागोचरत्वमाह **नापी**त्यादिना। **नियतम्**—व्याप्तम्।

सिद्धान्तिच्छायया चोदयन्तं वादिनं पूर्वपक्ष्येकदेशी चोदयति **ननु चे**ति। नैयायिकैकदेशिभिरुक्तानुमानवक्तृत्वात् पूर्वपक्ष्येकदेशित्वम्; **संप्रदानम्**—भोक्ता। **प्रयोजनम्**—विनियोगः। एककर्तृकत्वसिद्ध्यर्थमनुमानान्तरमाह **अचेतने**ति। उपादानाद्यभिज्ञकर्तृकत्वे दृष्टान्तमाह **सर्वं ही**ति। एकचेतनाधीनत्वे च दृष्टान्तमाह **अचेतने**ति। रुग्णपरशरीरव्यावृत्त्यर्थौ **अरोगस्व**शब्दौ। कार्यत्वे सिद्धे ह्युपादानाद्यभिज्ञकर्तृकत्वसिद्धिरित्यत्राह **सावयवत्वेने**ति। अनेनाचेतनारब्धत्वहेतोश्चासिद्धिशङ्कापरिहारोऽपि फलितः। एवं पूर्वपक्ष्येकदेशिनोक्तमर्थं सिद्धान्त्येकदेशी दूषयति **उच्यत** इत्यादिना। बुद्धिस्थत्वात् पाश्चात्यमनुमानं दूषयति **किमिद**मिति। एकचेतनाधीनत्वं नाम किं तदायत्तोत्पत्तिस्थितित्वम्, उत तदायत्तप्रवृत्तित्वमिति विकल्प्य, प्रथमेऽपि तदायत्तोत्पत्तिस्थितित्वं नाम किं तदिच्छाधीनोत्पत्तिस्थितित्वम्, उत तददृष्टाधीनोत्पत्तिस्थितित्वमिति विकल्पोऽभिप्रेतः। तेषां विकल्पानां क्षेपार्थः **किं** शब्दः। तत्र तदिच्छाधीनोत्पत्तिस्थितित्वं न दृष्टमिति साध्यवैकल्यं दूषणं प्रसिद्धमिति बुद्ध्या (ध्वा) द्वितीयं शिरो दूषयति **दृष्टान्तो ही**ति। साध्यविकलत्वं विवृणोति **न ही**ति। कुत इत्यत्राह **तच्छरीरस्ये**ति। यद्वा **न तावदि**त्यादिग्रन्थस्तदिच्छाधीनोत्पत्तिस्थितित्वतददृष्टाधीनोत्पत्तिस्थितित्वयोः साधारणः। तत्रेच्छाधीनत्वपक्षे साध्यवैकल्यं स्फुटमिति तददृष्टाधीनत्वपक्षे साध्यवैकल्यं विवृणोति **न ही**ति। उत्पत्तिस्थिती हि सह दूषिते। अथ स्थितिं पृथक्विकल्प्य दूषयितुमाह **किञ्चे**ति। **स्वावयवसमवेतता**रूपस्थित्युक्तिर्वैशेषिकादिमतानुसारेण। **न चेतनमपेक्षत** इति। चेतनापेक्षा हि स्वरूपतो वा स्यात्, अदृष्टद्वारेण वा, इच्छाद्वारेण वा। तत्र स्वरूपमात्रमकिञ्चित्करम्; तत्सद्भावेऽपि विनाशदर्शनात्। अदृष्टाधीनत्वे प्रागेवोत्तरं दत्तमिति इच्छाधीनत्वपक्षोऽनेन दूषितः। चेतनेच्छां नापेक्षत इत्यर्थः। आविनाशकालादशिथिलत्वलक्षणा स्थितिरप्यनेन दत्तोत्तरेत्यभिप्रायेण तदनुक्तिः। अथोक्तप्रकारविकल्पदूषणेन निरस्तमपि शिरोऽन्तरं दूषणान्तरसद्भावादुपादाय दूषयति **प्राणने**ति। **प्राणनलक्षणा**—

पक्षत्वाभिमते क्षितिजलधिमहीधरादौ न संभवतीति पक्षसपक्षानुगतामेकरूपां स्थितिं नोपलभामहे । तदायत्तप्रवृत्तित्वं तदधीनत्वमिति चेत्—अनेकचेतनसाध्येषु गुरुतर[रथ]शिलामहीरुहादिषु व्यभिचारः । चेतनमात्राधीनत्वे सिद्धसाध्यता ॥

किञ्च उभयवादिसिद्धानां जीवानामेव लाघवेन कर्तृत्वाभ्युपगमो युक्तः । न च जीवानामुपादानाद्यनभिज्ञतया कर्तृत्वासंभवः; सर्वेषामेव चेतनानां पृथिव्याद्युपादानयागाद्युपकरणसाक्षात्कारसामर्थ्यात् । यथेदानीं पृथिव्यादयो यागादयश्च प्रत्यक्षमीक्ष्यन्ते । उपकरणभूतयागादिशक्तिरूपापूर्वादिशब्दवाच्यादृष्टसाक्षात्काराभावेऽपि चेतनानां न कर्तृत्वानुपपत्तिः; तत्साक्षात्कारानपेक्षणात् कार्यारम्भस्य । शक्तिमत्साक्षात्कार एव हि कार्यारम्भोपयोगी । शक्तेस्तु ज्ञानमात्रमेवोपयुज्यते; न साक्षात्कारः । न हि कुलालादयः कार्योपकरणभूतदण्डचक्रादिवत् तच्छक्तिमपि साक्षात्कृत्य घटमणिकादिकार्यमारभन्ते । इह तु चेतनानामागमावगतयागादिशक्तिविशेषाणां कार्यारम्भो नानुपपन्नः ॥

किञ्च यत् शक्यक्रियं शक्योपादानादिविज्ञानञ्च तदेव [हि] तदभिज्ञकर्तृकं दृष्टम् । महीमहीधरमहार्णवादि तु अशक्यक्रियमशक्योपादानादिविज्ञानं चेति न चेतनकर्तृकम् । अतो घटमणिकादिसजा-

---

पञ्चवृत्तिप्राणसहितत्वलक्षणा । **नोपलभामह** इति । कालात्ययापदेश इत्यभिप्रायः । तदायत्तप्रवृत्तित्वमेकचेतनाधीनत्वमिति पक्षं शङ्कते **तदायत्ते**ति । अचेतनारब्धत्वहेतोरनैकान्त्यमाह **अने**केति । **अनेकचेतनसाध्येषु**—अनेकचेतनप्रवर्त्येष्वित्यर्थः । चेतनैकत्वाविवक्षायां सिद्धसाध्यत्वमाह **चेतनमात्रे**ति । एवमेकचेतनाधीनत्वं निरस्तम् । कार्यत्वहेतोर्लाघवतर्कमुखेन सिद्धसाध्यतामाह **किञ्चे**ति । उभयवादिसिद्धानामिति लाघवस्य हेतुरुक्तः । "क्लृप्तकल्प्यविरोधे तु युक्तः क्लृप्तपरिग्रहः" इति ह्याहुः । संभवन्त्यां गतौ हि लाघवतर्कः, गत्यन्तरासंभवे त्वधिककल्पनं न दोषायेत्यत्राह **नचेति** । कुत इत्यत्राह **सर्वेषामिति** । पूर्वकाले चेतनानां साक्षात्कारसामर्थ्यं दृश्यमाननीत्योपपादयति **यथे**ति । **इदानीमि**ति । एवं पूर्वकालेऽपीति भावः । धर्माधर्मसाक्षात्काराभावात् कर्तृत्वासंभवमाशङ्क्याह **उपकरणे**ति । **यागादिशक्तिरूपे**ति । यागादिजन्यस्वात्मातिशयरूपेत्यर्थः । कुत इत्यत्राह **तत्साक्षात्कारे**ति । तर्हि घटादिनिर्माणे मृदादिसाक्षात्कारनियमः कथमित्यत्राह **शक्तिमदि**ति । **शक्तिम**च्छब्देन शक्तिसंबन्धि उच्यते । जन्यजनकभावस्य च संबन्धविशेषरूपत्वात् शक्तिरूपादृष्टजनकयागादिषु **शक्तिम**च्छब्दप्रयोगः । शक्तेरपि अपेक्षितत्वसाम्यात् तत्साक्षात्कारोऽपेक्षितः । अन्यथा अनवगतवस्तुशक्तयोऽपि पुरुषास्तैस्तत्कार्यं कुर्युरित्यत्राह **शक्तेस्त्वि**ति । **तु**शब्दः शक्तिमत इव शक्तेरपि ज्ञातव्यत्वेऽपि विशेषद्योतनार्थः । शक्तिसाक्षात्कारानुपयोगमुपपादयति **न हीति** । शक्तिसाक्षात्कारानपेक्षत्वेऽपि शक्तिज्ञानमात्रमपेक्षितम्; तच्च दण्डचक्रादिष्वन्वयव्यतिरेकवशात् सिध्यति; यागादौ तु कथमित्यत्राह **इह त्वि**ति । एवं सिद्धसाधनत्वमुक्तम् । अथ कार्यत्वहेतोरुपाधिद्वयेन सोपाधिकत्वमाह **किञ्चे**ति । साधनाव्यापकत्वमाह **महीमहीधरे**ति । [1]साध्यसमव्याप्तत्वमाह **अत इति** ।

---

[1] साध्यसमव्याप्तेति । उपाधिगतव्याप्तेर्हेतावारोपादेव, स्फटिकलौहित्ये जपाकुसुमस्येव, उपाधेरुपाधिशब्दवाच्यत्वमित्याशयेन प्राच्यैरुपाधेः साध्यव्यापकत्वं साधनाव्यापकत्वञ्चेव साध्यव्याप्यत्वमपि स्वीकृतम् । तदभिप्रायेण समव्याप्तेति निर्देशः । नव्यैस्तु हेतुदुष्टत्वोपपादनाय व्यापकत्वादेरेव पर्याप्तत्वात् साध्यव्याप्यत्वांश उपेक्षित इति ध्येयम् ।

तीय-शक्यक्रिय-शक्योपादानादिविज्ञान-वस्तुगतमेव कार्यत्वं बुद्धिमत्कर्तृपूर्वकत्वसाधने प्रभवति।

किञ्च घटादिकार्यमनीश्वरेणाल्पज्ञानशक्तिना सशरीरेण परिग्रहवताऽनासक्रामेन निर्मितं दृष्टमिति तथाविधमेव चेतनं कर्तारं साधयन्नयं कार्यत्वहेतुः सिषाधयिषितपुरुषसार्वज्ञ्य-स(सा?)र्वैश्वर्यादिविपरीतसाधनात् विरुद्धः स्यात्। न चैतावता सर्वानुमानोच्छेदप्रसङ्गः। लिङ्गिनि प्रमाणान्तरगोचरे लिङ्गबलोपस्थापिताः विपरीतविशेषास्तत्प्रमाणप्रतिहतगतयो हि निवर्तन्ते। इह तु सकलेतरप्रमाणाविषये लिङ्गिनि निखिलनिर्माणचतुरे अन्वयव्यतिरेकावगताविनाभावनियमाः धर्माः सर्व एवाविशेषेण प्रसज्यन्ते; निवर्तकप्रमाणाभावात् तथैवावतिष्ठन्ते।

अत आगमात् ऋते कथमीश्वरः सेत्स्यति (सिध्यति)॥

अत्राहुः—सावयवत्वादेव जगतः कार्यत्वं न प्रत्याख्यातुं शक्यते। भवन्ति च प्रयोगाः—विवादाध्यासितं भूभूधरादि कार्यम्, सावयवत्वात्; घटादिवत्। तथा विवादाध्यासितम् अवनि-जलधिमहीधरादि कार्यम्, महत्त्वे सति क्रियावत्त्वात्; घट(टादि)वत्। तनुभुवनादि कार्यम्, महत्त्वे

---

सोपाधिकत्वे सति साध्येन हेतोर्व्याप्यत्वासिद्धिः स्यादित्युपायैर्दूषणत्वम्। अदृष्टवज्जीवकर्तृकत्वव्यावृत्त्यर्थं **बुद्धिमत्कर्तृपूर्वकत्वसाधन** इत्युक्तम्। अथ कार्यत्वहेतोर्विशेषविरुद्धत्वमाह **किञ्चेति**। **अनीश्वरेण**—कर्मवश्येन, **परिग्रहवता**—उपकरणवतेत्यर्थः। सर्वानुमानोच्छेदमाशङ्क्याह **न चेति**। कथमित्यत्राह **लिङ्गिनीति**। पक्षेऽपि तथा स्यादित्यत्राह **इह त्विति**। तुशब्दाभिप्रेतं वैषम्यमाह **निवर्तकेति**। सिद्धान्त्येकदेशिमतमुपसंहरति **अत** इति। सिध्यति चेत्, नागमादृते मानमित्यर्थः।

**अतः**—सिद्धसाधनत्वसोपाधिकत्वविरुद्धत्वैर्दूषितत्वादित्यर्थः॥

अथ साक्षात्पूर्वपक्षिणं प्रस्तौति **अत्राहुरिति**। कार्यत्वहेतोः स्वरूपासिद्धिमाशङ्क्य व्युदस्यति **सावयवत्वादिति**। सावयवत्वादेवेति। पूर्वं प्रस्तुतादेवेत्यर्थः। अनेन हेत्वन्तरसद्भावोऽपि सूचितः। एवं कण्ठोक्त्या अभिप्रायेण च सिद्धान् हेतून् प्रयोगतो विवृणोति **भवन्तीति**। **विवादाध्यासितपद-**विवरणं **भूभूधरादिपदम्**। आदिशब्दोपात्तव्यक्तिसङ्ग्राहकं विवादाध्यासितपदम्। यद्वा पक्षीकृतेष्वेव सम्प्रतिपन्नांशव्यवच्छेदाय **विवादाध्यासितशब्दः**। सन्ति हि खातपूरणनिष्पाद्याः पृथिव्यंशाः, सगरसुतादिनिष्पाद्याः समुद्रांशाः, अस्मादादिनिष्पाद्याः पर्वतादयश्च। प्रलयेऽपि जलधेरवस्थानात् सर्वाभावेऽपि स्रष्टुः शरीरावस्थानाच्च तयोरकार्यत्वशङ्काद्योतनाय प्रतिज्ञावाक्याऽऽवर्तनेन **जलधितनुशब्दोपादानम्**। द्वितीयतृतीयप्रयोगयोर्मध्ये **महत्त्वपदेन** परमाणुव्यावृत्तिः। **क्रियावत्त्वमूर्तत्वशब्दाभ्यां** गगनादिव्यावृत्तिः। **अवनिमहीधरशब्दमध्ये जलधि**निवेशः तद्वत् तयोरपि कम्पसद्भावज्ञापनार्थः। प्रसिद्धो ह्युत्पातादौ भूभूधरकम्पः॥ ननु तनुपक्षीकारो न युक्तः अस्मदादिशरीरे सिद्धसाधनत्वात्; ईश्वरशरीरे स्वाश्रयासिद्धेः॥ नैवम्; तनोर्विशेषतः पक्षीकारनिर्बन्धाभावात्। तदुपादानं तु स्वपक्षसंप्रतिपन्नस्येश्वरशरीरस्यापि कार्यताज्ञापनार्थम्। यद्वा **सावयवत्वादेवे**त्यादेरयमाशयः—न सावयवत्वादुत्पत्तिमत्त्वं प्रसाध्य ततः सकर्तृकत्वं साध्यते; अपि तु सावयवत्वेनैव कृतिसाध्यत्वरूपकार्यत्वं साध्यते; कृतिश्च न निराश्रयेति तदाश्रयः कर्ता सामान्यतः सिध्यतीति॥ नन्वेवं तर्हि कार्यत्वात् सकर्तृकत्वे साध्ये हेतोः साध्याविशिष्टता स्यात्॥ न; कृतिसाध्यत्वं हेतुः, उपादानाद्यभिज्ञकर्तृकत्वं साध्यमिति वैषम्यात्।

सति मूर्तत्वात्; घट(टादि)वदिति। सावयवेषु द्रव्येषु 'इदमेव क्रियते, नेतरत्' इति कार्यत्वस्य नियामकंसावयवत्वातिरेकि रूपान्तरं नोपलभामहे। कार्यत्वप्रतिनियतं शक्यक्रियत्वं शक्योपादानादिविज्ञानत्वञ्चोपलभ्यते इति चेत्—न; कार्यत्वेनानुमतेऽपि विषये ज्ञानशक्ती कार्यानुमेये इति; अन्यत्रापि सावयवत्वादिना कार्यत्वं ज्ञातमिति ते च प्रतिपक्षे एवेति न कश्चिद्विशेषः। तथा हि घटमणिकादिषु कृतेषु कार्यं(त्व)दर्शनानुमितकर्तृगततन्निर्माणशक्तिज्ञानः पुरुषोऽदृष्टपूर्वं विचित्रसंनिवेशं नरेन्द्रभवनमालोक्य अवयवसंनिवेशविशेषेण तस्य कार्यत्वं निश्चित्य तदानीमेव कर्तुस्तज्ज्ञानशक्तिवैचित्र्यमनुमिनोति। अतस्तनुभुवनादेः कार्यत्वे सिद्धे सर्वसाक्षात्कारतन्निर्माणादिनिपुणः कश्चित् पुरुषविशेषः सिध्यत्येव॥

किञ्च सर्वचेतनानां धर्माधर्मनिमित्तेऽपि सुखदुःखोपभोगे चेतनानधिष्ठितयोरचेतनयोस्तयोः फलहेतुत्वानुपपत्तेः सर्वकर्मानुगुणसर्वफलप्रदानचतुरः कश्चिदास्थेयः; वर्धकिनाऽनधिष्ठितस्य वास्यादेरचेतनस्य देशकालाद्यनेकपरिकरसंनिधानेऽपि यूपादिनिर्माणसाधनत्वादर्शनात्।

---

अत एव ह्युत्तरत्र क्रियत इत्युक्तम्, नोत्पद्यत इति। 'कार्यत्वं निश्चित्य तदानीमेव कर्तुस्तज्ज्ञानशक्तिवैचित्र्यमनुमिनोती'त्यादि च। एवञ्च कृतिसाध्यत्वलक्षणे साध्ये शरीरस्यापि विवादपदत्वात् पक्षतोपपत्तिः। अथ सोपाधिकत्वं सामान्येन प्रतिक्षिपति सावयवेष्विति। सावयवत्वमुपलक्षणम्, महत्त्वे सति क्रियावत्त्वं महत्त्वे सति मूर्तत्वं च सावयवत्वसमानाश्रयं तत्समव्याप्तमिति तयोरप्युपाधिपरिहारसिद्धिः। रूपान्तरम् आकारान्तरम्। उपाधिं शङ्कते कार्यत्वेति। परिहरति नेति। कार्यत्वेनानुमते—सपक्षे। अन्यत्र—पक्षे। सपक्षेऽपि घटादौ कार्यत्वानुमेये ज्ञानशक्ती, तद्वत् पक्षेऽपि कार्यत्वस्य प्रतिपन्नत्वात् ज्ञानशक्ती अनुमीयेते इति नाशक्यक्रियत्वम् शक्यज्ञानत्वं चेत्यर्थः। तथैव दर्शयति तथा हीति। किं तदकर्तुरपि शक्यक्रियत्वं शक्योपादानादिज्ञानत्वमुपाधिः, उत तत्कर्तुः शक्यक्रियत्वं शक्योपादानादिज्ञानत्वम्? प्रथमे कल्पे सपक्षानुयायित्वाभावान्नोपाधित्वम्। द्वितीये कल्पे पक्षेऽपि विद्यमानत्वान्नोपाधित्वम्। सर्वसपक्षानुयायी पक्षेष्व(त्व?) विद्यमानो ह्युपाधिरित्यभिप्रायः। कर्तुस्तज्ज्ञानशक्तिवैचित्र्यमित्यनेनाभिप्रेतोऽयं विकल्पः। ततः किमित्यत्राह अत इति। अतः—सावयवत्वादिहेतोर्निरुपाधिकत्वादित्यर्थः। एवं सावयवत्वात् कृतिसाध्यत्वरूपे कार्यत्वे साध्ये शक्यक्रियत्वादिक उपाधिः परिहृतः। अनेनोत्पत्तिमत्त्वात् सकर्तृकत्वे साध्ये उत्पत्तिमत्त्वहेतुरपि निरुपाधिको भवति। सावयवत्वादुत्पत्तिमत्त्वे साध्ये तूपाधेर्दूर्वादौ व्यभिचारश्च सिद्धः। न हि दूर्वादिरुत्पद्यमानोऽसदादेः शक्यक्रियः।

सिद्धसाधनत्वनिरासार्थमनुमानान्तरप्रदर्शनार्थं चाह किञ्चेति। धर्माधर्मनिमित्तेऽपीति सिद्धसाधनत्वशङ्कासूचनम्। अनधिष्ठितयोः---अनुपपत्तेरिति अन्वयव्याप्तिस्थेम्ने व्यतिरेकव्याप्त्युक्तिः। दृष्टान्तमाह वर्धकिनेति। वास्यादेर्यूपाद्यकरणत्वस्य चेतनव्यतिरिक्तसहकार्यन्तराभावप्रयुक्तत्वशङ्काव्यावृत्त्यर्थं देशकालाद्यनेकपरिकरसंनिधानेऽपीत्युक्तम्। धर्माधर्मौ स्वसाक्षात्कारिचेतनाधिष्ठितावेव कार्यकरौ अचेतनत्वात् वास्यादिवदित्यनुमानशरीरम्। जीवैर्धर्माधर्मसाक्षात्कारतत्पूर्वकतदधिष्ठानायोगात् जीवविलक्षणसिद्धिः। अनधिष्ठितस्य कार्यकरत्वायोगात् जीवैः साक्षात्कारतत्पूर्वकाधिष्ठानायोगाच्च सिद्धसाधनं च परिहृतम्। कर्तुरभावे कार्यानुत्पत्तिप्रसङ्गरूपस्य विपक्षे बाधकतर्कस्य पुरुषसुखादिप्रयोजकादृष्टेन कार्योत्पत्त्युपपत्तिरिति

बीजाङ्कुरादेः पक्षान्तर्भावेन तैर्व्यभिचारापादनं श्रोत्रियवेतालानामनभिज्ञताविजृम्भितम्। तत एव सुखादिभिर्व्यभिचारवचनमपि तथैव। न च लाघवेनोभयवादिसंप्रतिपन्नक्षेत्रज्ञानामेव ईश्वराधिष्ठातृत्वकल्पनं युक्तम्; तेषां सूक्ष्मव्यवहितविप्रकृष्टदर्शनाशक्तिनिश्चयात्। दर्शनानुगुणैव हि सर्वत्र कल्पना। न च क्षेत्रज्ञवत् ईश्वरस्याशक्तिनिश्चयोऽस्ति। अतः प्रमाणान्तरतो न तत्सिद्ध्यनुपपत्तिः। समर्थकर्तृपूर्वकत्वनियतकार्यत्वहेतुना सिद्ध्यन् स्वाभाविकसर्वार्थसाक्षात्कारतन्नियमनशक्तिसंपन्न एव सिद्ध्यति।

यत्त्वनैश्वर्याद्यापादनेन धर्मविशेषविपरीतसाधनत्वमुन्नीतम्—तत् अनुमानवृत्तानभिज्ञत्वनिबन्धनम्; सपक्षे सहदृष्टानां सर्वेषां कार्यस्याहेतुभूतानां च धर्माणां लिङ्गिन्यप्राप्तेः। एतदुक्तं भवति—केनचित् किञ्चित् क्रियमाणं स्वोत्पत्तये कर्तुः स्वनिर्माणसामर्थ्यं स्वोपादानोपकरणज्ञानं चापेक्षते; न त्वन्यासामर्थ्यमन्याज्ञानञ्च; हेतुत्वाभावात्। स्वनिर्माणसामर्थ्यस्वोपादानोपकरणज्ञानाभ्यामेव स्वोत्पत्तावुपपन्नायां संबन्धितया दर्शनमात्रेण अकिञ्चित्करस्यार्थान्तराज्ञानादेर्हेतुत्व-

---

या अन्यथासिद्धिः, साऽप्यनेनैव परिहृता भवति। अचेतनस्याप्यनधिष्ठितस्य बीजादेरङ्कुरोत्पादकत्वदर्शनात् व्यभिचार इति शङ्कां परिहरति **बीजाङ्कुरे**ति। कार्यत्वहेतोरङ्कुरादौ व्यभिचारशङ्कापरिहारश्चाङ्कुरशब्दोपादानेन फलितः। चेतनानभिसंहितपुलकाद्युत्पादकैः चेतनानधिष्ठितैः स्वयमचेतनैः सुखादिभिरचेतनत्वहेतोर्व्यभिचारमाशङ्क्य परिहरति **तत एवे**ति। आदिशब्देन दुःखादिकं चेतनानधिष्ठितं सुखाद्युत्पादकं मनःप्रभृति च विवक्षितम्। एतेन स्वेच्छामन्तरेणोत्पद्यमानैः सुखदुःखविशेषैस्तत्कार्यैश्च पुलकाङ्गकम्पादिभिः कार्यत्वहेतोर्व्यभिचारश्च परिहृतो भवति। लाघवन्यायेन हेतोरन्यथासिद्धेः सिद्धसाधनत्वमाशङ्क्य परिहरति **न चे**ति। कुत इत्याकाङ्क्षायामीदृशशब्दाभिप्रेतं हेतुं विवृणोति **तेषा**मिति। एकेन्द्रियकल्पनस्य लाघवेऽपि एकेन्द्रियस्य शब्दादिसकलविषयग्रहणाशक्तेर्द्वीनेकेन्द्रियकल्पनम्। तस्माल्लाघवार्थमशक्तस्य कार्यकरत्वकल्पनमयुक्तमिति भावः। तदेवोपपादयति **दर्शने**ति। उपपन्नमेव हि कल्पनीयम्; न च जीवानां सूक्ष्मव्यवहितादिदर्शनशक्तिर्दृष्टेत्यर्थः। शक्तिमत्साक्षात्कार एवापेक्षितः; न तु शक्तिसाक्षात्कार इतीदमपि प्रत्युक्तं भवति **सूक्ष्मव्यवहिते**त्यादिना। शक्तिमतामपि परमाण्वादीनां क्षेत्रज्ञेन साक्षात्कारासिद्धेः। ईश्वरे न तथाऽनुपपत्तिरित्याह **न चे**ति। अवान्तरानुमानेनेश्वरसिद्धिं निगमयति **अत** इति। व्याप्तिबलात् कार्यानुगुणज्ञानशक्तिमान् कर्ता सिध्यतु; तस्य कथं क्षेत्रज्ञवैलक्षण्यम्; ज्ञानं हि देहेन्द्रियादिसापेक्षमिति शङ्कायां पक्षधर्मताबलसिद्धमर्थमाह **समर्थे**ति। अस्वाभाविकत्वे कर्मानुगुणपरिमितज्ञानशक्तिमत्त्वं स्यादिति तद्व्युदासार्थः **स्वाभाविकसर्वार्थसाक्षात्कार**शब्दः।

अथ कार्यत्वहेतोर्विरुद्धत्वं व्युदस्यति **यत्त्वि**त्यादिना। कथमित्यत्राह **सपक्ष** इति। किं सहदर्शनमात्रात् शरीरादिप्राप्तिः, उत हेतुत्वात्। नाद्यः; अतिप्रसङ्गात्। न द्वितीयः, हेतुत्वासिद्धेरित्यभिप्रायः। **कार्यस्याहेतुभूताना**मिति व्याप्त्यभावोऽप्यभिप्रेतः। ननु सर्वसपक्षेषु सहदृष्टत्वात् कार्यहेतुत्वं च कल्प्यम्, तथा सति कथं कतिपयाप्राप्तिः कतिपयप्राप्तिश्चोच्यते इत्यत्राह **एतदुक्त**मिति। विशेषविरोधं परिहर्तुमपेक्षितानपेक्षितांशविवेकमाह **केनचि**दिति। सपक्षे सहदृष्टत्वादज्ञानादेरपि हेतुत्वं कल्प्यतामित्यत्राह **स्वनिर्माणे**ति। **अकिञ्चित्करस्ये**ति। अनन्यथासिद्धान्वयव्यतिरेकाभ्यां हि **हेतुत्वनिश्चयः**।

कल्पनायोगादिति। किञ्च क्रियमाणवस्तुव्यतिरिक्तार्थाज्ञानादिकं किं सर्वविषयं क्रियोपयोगि, उत कतिपयविषयम्? न तावत् सर्वविषयम्। न हि कुलालादिः क्रियमाणव्यतिरिक्तं किमपि न जानाति। नापि कतिपयविषयम्; सर्वेषु कर्तृषु तत्तदज्ञानाशक्त्यनियमेन सर्वेषामज्ञानादीनां व्यभिचारात्। अतः कार्यत्वस्यासाधकानामनीश्वरत्वादीनां लिङ्गिन्यप्राप्तिरिति न विपरीतसाधनत्वम् ॥

कुलालादीनां दण्डचक्राद्यधिष्ठानं शरीरद्वारेणैव दृष्टमिति जगदुपादानोपकरणाधिष्ठानमीश्वरस्याशरीरस्यानुपपन्नमिति चेत्—न; सङ्कल्पमात्रेणैव परशरीरगतभूतवेतालगरलाद्यपगमविनाशदर्शनात् ॥ कथमशरीरस्य परप्रवर्तनरूपः सङ्कल्प इति चेत्—न शरीरापेक्षः सङ्कल्पः, शरीरस्य सङ्कल्पहेतुत्वाभावात्। मन एव हि संकल्पहेतुः। तदभ्युपगतमीश्वरेऽपि। कार्यत्वेनैव[redacted] ज्ञानशक्तिवत् मनसोऽपि प्राप्तत्वात् ॥ मानसः सङ्कल्पः सशरीरस्यैव, सशरीरस्यैव समनस्कत्वादिति चेत्—न; मनसो नित्यत्वेन देहापगमेऽपि मन[स]स्सद्भावेनानैकान्त्यात्। अतो विचित्रावयवसंनिवेशविशेषतनुभुवनादिकार्यनिर्माणे पुण्यपापपरवशः परिमितशक्तिज्ञानः क्षेत्रज्ञो न प्रभवतीति निखिलभुवननिर्माणचतुरोऽचिन्त्यापरिमितज्ञानशक्त्यैश्वर्योऽशरीरः सङ्कल्पमात्रसाधनपरिनिष्पन्नानन्तविस्तारविचित्ररचनप्रपञ्चः पुरुषविशेष ईश्वरोऽनुमानेनैव सिद्ध्यति।

---

तत्र ज्ञानशक्तिनिर्वर्त्यात् किञ्चित्कारादधिकः कश्चित् तदन्याज्ञानासामर्थ्यनिवर्त्यः किञ्चित्कारो दृष्टश्चेत्, स्यादनन्यथासिद्धिः। न चाधिकः किञ्चित्कारो दृष्टः; न च कल्प्यः; अज्ञानासामर्थ्यहेतुव्यतिरेके कार्यनिवृत्त्यभावात्। स्वविषयसामर्थ्योपादानादिज्ञानाभ्यां विना यथा कार्यानुदयः, तथाऽन्यासामर्थ्याज्ञानाभ्यां विना कार्यानुदयो न दृष्टः। अतो न तस्य हेतुत्वं कल्प्यम्। न हि सति भावमात्रं हेतुत्वम्[1], किंतु सत्येव भाव इति भावः। अकिञ्चित्करत्वमेव विकल्पमुखेनोपपादयति **किञ्चे**ति। **सर्वेष्वि**ति। न हि कुड्यादिनिर्माणानुगुणज्ञानसामर्थ्याभावो घटनिष्पत्तिहेतुः, तदनुगुणज्ञानसामर्थ्यवतोऽपि घटादिनिष्पादकत्वदर्शनादित्यर्थः। यत्तु—सपक्षे सहदृष्टत्वेन लिङ्गिनि प्राप्तविपरीतविशेषाणां धर्मिग्राहकप्रमाणप्रतिहतानां निवृत्तिः, न त्वितरेषामिति—इदमपि **कार्यत्वस्यासाधकाना**मित्यनेन प्रत्युक्तम्। साध्यानुपयोगित्वेनान्यथासिद्धानां सह दृष्टानामपि धर्माणां व्यतिरेकाभावेन व्याप्तिशून्यत्वादप्राप्तेः ॥ सहदृष्टेष्वपि कार्यानुपयोगिनां प्राप्तिर्न स्यात्; शरीरं हि कार्योपयोगीति शङ्कते **कुलालादीना**मिति। परिहरति **ने**ति। कथमित्यत्राह **सङ्कल्पे**ति। शङ्कते **कथ**मिति। परिहरति **ने**ति। को हेतुरित्यत्राह **मन एवे**ति। तत् किमस्तीत्यत्राह **तदि**ति। कुत इत्यत्राह **कार्यत्वेने**ति। ईश्वरस्य मनस्संबन्धोक्तिर्नैयायिकैकदेशिमतेन। पुनः शङ्कते **मानस** इति। परिहरति **ने**ति। **अनैकान्त्यात्**—व्याप्त्यभावात्। अशरीरेऽपि मनस्संबन्धस्य विद्यमानत्वाद्वाऽनैकान्त्यम्। मनसो नित्यत्वेऽपि चेतनस्य कार्यकरत्वे शरीरसंबन्धसापेक्षत्वमस्ति; मनसि नित्ये सत्यपि मुक्तात्मनः कार्यकरत्वाभावात्। न हि मुक्तात्मनो बुद्धिसुखदुःखादिकं मनो जनयतीति चोद्यमस्ति। अत्र मीमांसकं प्रति प्रतिबन्द्या परिहारं हृदि निधाय पक्षधर्मताबलं दर्शयन्नीश्वरसिद्धिं निगमयति **अतो विचित्रावयवे**ति। **अशरीरः सङ्कल्पमात्रसाधनपरिनिष्पन्नानन्तविस्तारविचित्ररचनप्रपञ्च**

---

1 हेतुत्वमिति। भाव इत्यस्य कार्यनिष्ठत्वात् हेतुत्वस्य च कारणनिष्ठत्वादैक्यायोगात् औपचारिकोऽयं निर्देशः, अन्नं वै प्राणा इतिवत्।

अतः प्रमाणान्तरावसेयत्वाद् ब्रह्मणः नैतद्वाक्यं ब्रह्म प्रतिपादयति। किञ्च अत्यन्तभिन्नयोरेव मृद्द्रव्यकुलालयोर्निमित्तोपादानत्वदर्शनेन आकाशादेर्निरवयवद्रव्यस्य कार्यत्वानुपपत्त्या च नैकमेव ब्रह्म कृत्स्नस्य जगतो निमित्तमुपादानञ्च प्रतिपादयितुं शक्नोतीति॥

एवं प्राप्ते ब्रूमः—यथोक्तलक्षणं ब्रह्म जन्मादिवाक्यं बोधयत्येव। कुतः। शास्त्रैकप्रमाणकत्वाद्ब्रह्मणः। यदुक्तम्—सावयवत्वादिना कार्यं सर्वं जगत्; कार्यं च तदुचितकर्तृविशेषपूर्वकं दृष्टमिति निखिलजगन्निर्माणतदुपादानोपकरणवेदनचतुरः कश्चिदनुमेय इति—तदयुक्तम्; महीमहार्णवादीनां कार्यत्वेऽप्येकदैवैकेन (वैकेनैव) निर्मिता इत्यत्र प्रमाणाभावात्। न चैकस्य घटस्येव सर्वेषामेकं कार्यत्वम्, येनैकदैवैकः कर्ता स्यात्। पृथग्भूतेषु कार्येषु कालभेदकर्तृभेददर्शनेन

---

इत्याभ्यां पदाभ्यां प्रतिबन्द्या परिहाराभिप्रायो ज्ञातः। विभुद्रव्यसंयोगिनः परिस्पन्दवतो घटादेः स्पर्शवत्त्वनियमेऽपि, विभुद्रव्यसंयोगिनः परिस्पन्दवतोऽपि मनसो न स्पर्शवत्त्वमङ्गीक्रियते। अयं **प्राभाकरं** प्रति प्रतिहारः। महिमगुणशालिनस्तैजसस्य रूपोपलम्भनियमे दृष्टेऽपि चक्षुषि रूपोपलम्भो नाङ्गीकृतः; कार्यारम्भकस्य सावयवत्वव्याप्तिः परमाणुषु भग्ना; तस्मादनेकविरोधपरिहारायैकव्याप्तिभङ्गो न्याय्यः। अतो मनसः कार्यकरत्वे शरीरसंबन्धसापेक्षत्वं भोगसाधनमनस्त्वप्रयुक्तमित्यङ्गीकार्यमिति भावः। एवं साधकान्तरसिद्धत्वात् जगत्कारणवस्तुनि शास्त्रस्याप्रामाण्यं निगमयति **अतः प्रमाणे**ति।

निमित्तोपादानैक्यस्य गगनादिसृष्टेश्चानुमानाविषयत्वेन शास्त्रस्याधिकविषयत्वाद्ब्रह्मणि प्रामाण्यमाशङ्क्य तत्र बाधकान्तरबाधितत्वात् शास्त्राप्रामाण्यमुच्यते **किञ्चे**ति। निमित्तमात्रमनुवदतः शास्त्रस्यानुमानसापेक्षत्वात् तद्विरुद्धनिमित्तोपादानैक्यं न शास्त्रं प्रतिपादयति। पक्षीकृतेषु क्षित्यादिषु द्रव्येषु सावयवत्वस्यैव कार्यत्वप्रयोजकतया निरवयवद्रव्यस्याकार्यत्वं पूर्वमेव प्रतिपन्नमिति पश्चात् शास्त्रं निरवयवद्रव्योत्पत्तिं न प्रतिपादयति। श्रुतिलिङ्गादिष्वपि पौर्वापर्यं हि प्राबल्यदौर्बल्यहेतुरिति भावः। पूर्वपक्षपरिसमाप्ताविति**शब्दः**॥ .... ... .... .... ...

सिद्धान्तं वक्तुमुपक्रमते **एवं प्राप्त** इति। परमसाध्यं प्रतिजानीते **यथोक्ते**ति। आकाङ्क्षापूर्वकं हेतुमाह **कुत** इति। **शास्त्रैकप्रमाणकत्वात्**—शास्त्रेतरप्रमाणागोचरत्वादित्यर्थः। हेत्वसिद्धिं परिहर्तुं पूर्वपक्षमनुभाषते **यदुक्त**मिति। दूषयति **तदयुक्त**मिति। पक्षधर्मताबलात् क्षेत्रज्ञवैलक्षण्यं वदता किं विपुलकार्याणां कर्तृकालैक्यनियममन्तर्भाव्य तदुच्यते, उत विपुलत्वमात्रेण, उतातीन्द्रियोपादानादिदर्शनवशात्, अथवा शरीरानपेक्षसृष्टिवशात् इति विकल्पमभिप्रेत्य प्रथमं दूषयति **महीति**। एकदैवैकेन निर्मितत्वाभावमुपपादयति **न चैकस्ये**त्यादिना। एकं कार्यत्वं घटादेरिव युगपदेककर्तृकत्वयोग्यमिति शङ्काद्योतकमेक**मि**ति पदम्। कार्यत्वस्यैकत्वं नाम एकसामग्रीपूर्वकत्वम्; तत्सिद्ध्यर्थमेकस्येत्युक्तम्। न ह्येका व्यक्तिरनेकसामग्रीसाध्या, एककार्यावच्छिन्नस्य सर्वस्य हेतोरेकसामग्रीत्वात्। एकत्वेऽप्यनेककर्तृकगोपुरादिव्यवच्छेदार्थमेकदैवैककर्त्रन्वययोग्यत्वं घटशब्देन विवक्षितम्। एकघटस्यैकं कार्यत्वं यादृशं दृश्यते, तादृशं परिमितैकावयवनिष्ठं कार्यत्वमेवैकदैवैककर्तृकत्वसंभावनापादकम्; तच्च महीमहीधरादीनां न दृश्यत इत्यर्थः। स्यादिति संभावितत्वमात्रमुच्यते। न ह्येकघटस्याप्येककर्तृकत्वनियमः, अनेकैरप्येकघटनिष्पादनसंभवात्। ततः किंनिमित्तापेक्षायां बहुषु विपुलेषु च कार्येषु तद्विपर्ययमाह **पृथग्भूतेष्वि**ति। **पृथग्भूतेष्वि**त्यत्र

**कर्तृकालैक्यनियमादर्शनात् ॥ न च क्षेत्रज्ञानां विचित्रजगन्निर्माणाशक्त्या कार्यत्वबलेन तदतिरिक्तकल्पनायामनेककल्पनानुपपत्तेश्चैक एव कर्ता भवितुमर्हतीति; क्षेत्रज्ञानामेवोपचितपुण्यविशेषाणां शक्तिवैचित्र्यदर्शनेन तेषामेवातिशयितादृष्टसंभावनया च तत्तद्विलक्षणकार्यहेतुत्वसंभवात् तदतिरिक्तात्यन्तादृष्टपुरुषकल्पनानुपपत्तेः । न च युगपत् सर्वोत्पत्तिः सर्वोच्छित्तिश्च प्रमाणपदवीमधिरोहतः; अदर्शनात्; क्रमेणैवोत्पत्तिविनाशदर्शनाच्च । कार्यत्वेन सर्वोत्पत्तिविनाशयोः (?) कल्प्यमानयोर्दर्शनानुगुण्येन कल्पनायां विरोधाभावाच्च ।**

---

विपुलत्वमपि गर्भितम् । **घटस्येवे**ति पूर्वमुक्तेः । बहुषु विपुलेषु च कार्येषु कर्तृकालैक्यनियमादर्शनात् मठादयोऽप्येकदैव एकेन निर्मिता इत्यत्र प्रमाणाभावः, प्रमाणाभावात् तदयुक्तमित्यध्याहारेण [1]ग्रन्थान्वयः । **न च** कार्यत्वमेव कर्तृकालैक्ये प्रमाणम्; विकल्पासहत्वात् । किं कार्यत्वमात्रम्, उत विपुलकार्यत्वम्, उतासम्भावितजीवकर्तृकं पक्षासाधारणकार्यत्वम् ? प्रथमे अनैकान्त्यम् । द्वितीये विरुद्धत्वम्; विपुलकार्येषु कालदैर्घ्यकर्तृबहुत्वदर्शनात् । यद्वाऽनैकान्त्यमेव । तृतीये चासाधारणानैकान्त्यमिति भावः । कार्यत्वबलेन कर्तरि कल्पनीये विपुलतरसूक्ष्मतरपक्षधर्मताबलात् क्षेत्रज्ञवैलक्षण्यात् कर्तुरेकत्वं च सिध्यतीत्यत्राह **नचे**ति । **विचित्र**शब्देनासदाद्यशक्यत्वार्थमतिविपुलत्वमतिसूक्ष्यत्वं च विवक्षितम् । कुत इत्यत्राह **क्षेत्रज्ञानामेवे**ति । क्षेत्रज्ञातिरिक्ते कल्प्ये सति ह्यनेककल्पनादेककल्पनस्य न्याय्यत्वम् । क्षेत्रज्ञानामेव कर्तृत्वोपपत्त्या तदतिरिक्तो न कल्पयितव्य इत्यर्थः । **उपचितपुण्यविशेषाणा**मिति सपक्षे शक्तिवैचित्र्योपपादनार्थमुक्तम् । **अतिशयितादृष्टसंभावनये**ति पक्षविषयमुक्तम् । "सर्वेभ्यः कामेभ्यो ज्योतिष्टोमः" इत्यादिभिः क्षित्यादिस्रष्टृत्वानुगुणातिशयितादृष्टसंभावना । क्षेत्रज्ञानामेव योगेन सूक्ष्मव्यवहितादिदर्शनं पराभ्युपेतम् । अस्मदादिषु देवेषु च ज्ञानशक्तिवैचित्री दृश्यते । न च पक्षधर्मताबलमन्वयव्यतिरेकसिद्धान् धर्मान् निवर्तयितुमीष्टे; तस्यान्वयव्यतिरेकसिद्धधर्मप्रकर्षापकर्षमात्रहेतुत्वात् । इतरथा ज्ञानचिकीर्षयोरपि हानप्रसङ्गात् । **तदतिरिक्ते**ति । 'धर्मिकल्पनातो वरं धर्मकल्पने'ति न्यायादीश्वरकल्पनाददृष्टविशेषकल्पनमेव वरमिति भावः । अचेतनत्वात् चेतनाधिष्ठितावेव धर्माधर्मौ कार्यकरौ, वास्यादिवदित्यनुपपन्नम्; ईश्वरज्ञानप्रयत्नादौ व्यभिचारेणान्यतरानैकान्त्यात् । अथ क्षेत्रज्ञस्य सर्गे शरीरसापेक्षत्वात् तस्य सर्वसंहारदशायां शरीराभावात् तदानीं शरीरानपेक्षः कर्ता जीवविलक्षणः स्यादित्यत्राह **नचे**ति । इदानीं क्रमेणोत्पत्तिविनाशौ दृश्येते । [2]तदा तूत्पत्तिविनाशयौगपद्यकल्पनमित्यत्राह **कार्यत्वेने**ति । अत्र **कार्यत्वं**; [3]कृतिसाध्यत्वम् । तृतीया चेत्थम्भावार्था । **विरोधाभावात्**—व्याप्तिविरोधाभावादित्यर्थः । एवं परमतदूषणोपयुक्तार्थशिक्षा कृता ।

---

1 अध्याहारेणेति न स्यात्; अनुषङ्गेणेति वा पूर्वेणेति वा स्यात् ।

2 तदा तु—उत्पत्त्यादेः क्रमिकत्वादर्शनस्थले एवेत्यर्थः ।

3 कृतिसाध्यत्वमित्यादि । अत्र. भावप्रकाशिका— उत्पत्तिमत्त्वस्योत्पत्तिविनाशकल्पकत्वासंभवमभिप्रेत्य कृतिसाध्यत्वेति व्याख्यानम् । तृतीयान्वयिक्रियापदाभावात् इत्थम्भूततृतीयोक्तिः । कल्पने इति वा कल्प्यमानयोरिति वाऽध्याहारेण कारकतृतीयात्वं तु केचिदाहुरिति । एतद्दर्शने भाष्ये कल्प्यमानयोरिति पाठो नास्तीति ज्ञायते । यथा उत्पत्तिमत्त्वेनोत्पत्तिमत्त्वानुमानमसंभवि, तथा कृतिसाध्यत्वस्यापि कृत्यधीनोत्पत्तिमत्त्वरूपत्वात् विशेषेण सामान्यानुमानासंभवः स्यादेव । यदि साध्यत्वं योग्यत्वपर्यन्तमित्याशयः, तर्हि उत्पत्तियोग्यत्वेनेत्यपि सुवचम । अथ सा योग्यतैव कृति-

अतो बुद्धिमदेककर्तृकत्वे साध्ये कार्यत्वस्यानैकान्त्यम्। पक्षस्याप्रसिद्धविशेषणत्वम्; साध्यविकलता च दृष्टान्तस्य; सर्वनिर्माणचतुरस्यैकस्याप्रसिद्धेः। बुद्धिमत्कर्तृकत्वमात्रे साध्ये सिद्धसाधनता।

सार्वज्ञ्यसर्वशक्तियुक्तस्य कस्यचिदेकस्य साधकमिदं कार्यत्वम्, किं युगपदुत्पद्यमानसर्ववस्तुगतम्, उत क्रमेणोत्पद्यमानसर्ववस्तुगतम्? युगपदुत्पद्यमानसर्ववस्तुगतत्वे कार्यत्वस्या-

---

अथ फलितं दूषणं दर्शयति अत इति। तदयुक्तमित्यारभ्योक्तार्थानां हेतुत्वपरोऽतश्शब्दः। चलनादिषु तृणादेरिव क्रियाश्रयत्वमात्रलक्षणकर्तृत्वव्यावृत्त्यर्थो बुद्धिमच्छब्दः। किं बुद्धिमदेककर्तृकत्वं साध्यम्, उत सकर्तृकत्वमात्रम्? प्रथमेऽपि—किं सामान्यतो बुद्धिमदेककर्तृकत्वमात्रं साध्यम्, उत सर्वज्ञसर्वशक्त्येककर्तृकत्वमिति विकल्पमभिप्रेत्य[1] प्रथमे कल्पेऽनैकान्त्यम्, अनेककर्तृकरथगोपुरादिषु कार्यत्वस्य विद्यमानत्वादिति भावः। सर्वज्ञसर्वशक्तिककर्तृकत्वपक्षे दूषणमाह पक्षस्येति। न बुद्धिमत्त्वमिव सर्वज्ञसर्वशक्तिकर्तृकत्वमन्यत्र दृष्टम्। दृष्टान्तस्य साध्यविकलता; कार्येषु घटादिष्वदर्शनात्। अप्रसिद्ध-विशेषणत्वसाध्यवैकल्ये द्वे अप्युपपादयति सर्वेति। सर्वनिर्माणचतुरस्येत्युक्तत्वादिदं दूषणद्वयं सर्वज्ञसर्वशक्तिकर्तृकत्वपक्षस्येति ज्ञायते। पूर्वस्मिन्नेव पक्षे चेत्, अप्रसिद्धविशेषणत्वं न घटते। न ह्येककर्तृकत्वमप्रसिद्धम्। सकर्तृकत्वमात्रपक्षे दूषणमाह बुद्धिमदिति॥ सिद्धसाधनत्वं वेदान्तिना न वक्तव्यम्; क्षेत्रज्ञकर्तृकत्वानभ्युपगमादिति चेन्न; क्षेत्रज्ञानामपि द्वारकर्तृत्वाभ्युपगमात्। समष्टितत्त्वेषु न द्वारकर्तेति चेत्—न च तत्पक्षीकरणम्; लौकिकप्रमाणाविषयत्वात्॥ आगमेन सिद्धानां तेषामपि पक्षीकार इति चेत्—तेन कर्ताऽपि सिद्ध इति सिद्धसाध्यतेति।

मुखान्तरेण दूषयितुं हेतुं विकल्पयति सार्वज्ञ्येति। अयमभिप्रायः—कर्तृमात्रव्याप्येन कार्यत्वमात्रेण न कर्तृविशेषसिद्धिरिति प्रागेवोक्तम्। अतः पक्षविशेषाधीनेन कार्यत्वविशेषेण कर्तृविशेषः साध्यः। कुम्भादिकार्यविशेषेण हि कुलालादिकर्तृविशेषानुमानम्; न तु कार्यत्वमात्रेण। अतः पक्षाधीनः कार्यत्वविशेषो निरूप्यत इति। किं युगपदिति। पक्षप्रकर्षाधीनं हेतुवैशिष्ट्यं द्वेधा संभवेत्—परिदृश्यमान-मह्यादिविपुलकार्याणां युगपदुत्पत्त्या वा, क्रमभाविनां त्रैकाल्यवर्तिनां कार्याणामानन्त्येन वा? तत्र कीदृशेन पक्षप्रकर्षेण हेतुविशेषो विवक्षित इत्यर्थः। प्रथमं दूषयति युगपदिति। कृत्स्नप्रलयासिद्धेः भूधरादीनां युगपदुत्पत्तौ प्रमाणाभावात् तन्निबन्धनं कर्तृवैलक्षण्यसाधकहेतुवैलक्षण्यमसिद्धमित्यर्थः। द्वितीयं दूषयति क्रमेणेति। यद्यप्येकैकेन कुलालादिना जन्मसहस्रेणाप्यनन्तकार्यनिष्पादनसंभवः, तथापि तत्तज्जन्मसमानकालकुविन्दादिकृतानां कार्याणां तत्कर्तृकत्वाभावात् सर्वकार्याणामेककर्तृकत्वं नास्ति। अतस्त्रैकाल्यवर्तिसमस्तवस्तुनिष्ठत्वविशेषितं कार्यत्वं कर्तृभेदेनैव व्याप्तमिति कर्त्रैक्यसाधने

---

संबन्धार्हत्वरूपेति स्पष्टमुक्तमिति निर्वाह्यम्। हेतुत्वविवक्षायां किलैवमसंभवशंकेत्यभिप्रेत्यैव इत्थम्भावे तृतीयेत्युक्तमित्यपि। पुरुषकृत्यैवोत्पत्तिविनाशयोर्वक्तव्यत्वात् सर्ववस्तुयुगपदुत्पत्ति-युगपद्विनाशविषयककृतिसंभावनया सर्वोत्पत्तिविनाशसंभव इति सूचनं कृतिसाध्यत्वमिति व्याख्यातुरिष्टमित्यादि च विमृश्यम्। भाष्यार्थदर्पणे तु भाष्यग्रन्थोऽयं न्यायकुसुमाञ्जलिनिरासकतयाऽस्माभिर्व्याख्यातः। स प्रकारस्तत्रैव द्रष्टव्यः।

1 अभिप्रेत्येति। उक्तमिति शेषः। तत्र ल्यबन्तस्यान्वयः।

सिद्धता। क्रमेणोत्पद्यमानसर्ववस्तुगतत्वेऽनेककर्तृकत्वसाधनाद्विरुद्धता। अत्राप्येककर्तृकत्वसाधने प्रत्यक्षानुमानविरोधः। शास्त्रविरोधश्च; 'कुम्भकारो जायते', 'रथकारो जायते' इत्यादिश्रवणात्।

अपिच—सर्वेषां कार्याणां शरीरादीनां [च] सत्त्वादिगुणकार्यरूपसुखाद्यन्वयदर्शनेन सत्त्वादिमूलत्वमवश्याश्रयणीयम्। कार्यवैचित्र्यहेतुभूताः कारणगता विशेषाः सत्त्वादयः। तेषां कार्याणां तन्मूलत्वापादनं तद्युक्तपुरुषान्तःकरणविकारद्वारेण। पुरुषस्य च तद्योगः कर्ममूल इति कार्यविशेषारम्भायैव ज्ञानशक्तिवत् कर्तुः कर्मसंबन्धः कार्यहेतुत्वेनैवावश्याश्रयणीयः; ज्ञान-

---

विरुद्धमित्यर्थः। **अत्राप्येककर्तृकत्वसाधन** इति। विशिष्टकार्यत्वव्यापकतयाऽभिमतस्य घटपटरथादिदृष्टस्य भिन्नकर्तृकत्वस्य[1] प्रतिक्षेप इत्यर्थः। भिन्नकर्तृकतया प्रत्यक्षसिद्धेषु प्रत्यक्षविरोधः। अन्यत्र—द्वीपान्तरवर्ती घटः एतद्व्यतिरिक्तकुलालकर्तृकः, एतद्व्यापारागोचरहेतुकत्वे सति घटत्वात्, संप्रतिपन्नकुलालान्तरोत्पादितघटवत्। द्वीपान्तरवर्तिघटहेतूनां दण्डादीनामेतद्व्यापारागोचरत्वमेतस्य तत्र गमनाभावनिर्णयात्। अतः—एवमादिभिरनुमानैर्विरोधः। शास्त्रविरोधमुपपादयति **कुम्भकार** इति। कुम्भकारो जायते रथकारो जायत इत्यर्थोपादानम्; न तु पाठक्रमः। न हि कुम्भरथयोरेककर्तृकत्वे कुम्भकाररथकारयोरुत्पत्तिः पृथग्वक्तव्या; एकसञ्ज्ञात्वेन पुनरुक्तिप्रसङ्गादिति भावः।

प्रकारान्तरेण विरुद्धत्वमाह **अपि चेति**। सुखादेः सत्त्वादिगुणकार्यत्वं शास्त्रदृष्टमिति तत् शास्त्रप्रामाण्यवादिनाऽङ्गीकार्यमिति मत्वाऽनिष्टमापादयति; न तु पराभ्युपगमात्, **सुखादि**शब्देन सुखदुःखमोहा विवक्षिताः। शरीरादीनां **सुखाद्यन्वयः** सुखादिहेतुत्वावस्थान्वयः, **सत्त्वादिमूलत्वम्**—सत्त्वादिगुणकद्रव्योपादानत्व[2]मित्यर्थः। के ते सत्त्वादयः, कथं च तेषां सुखादिहेतुत्वमित्यत्राह **कार्यवैचित्र्ये**ति। **कारणगता विशेषाः**। कारणशब्दो निमित्तोपादानसाधारणः। ततः किं कर्तुर्गुणवश्यत्वस्येत्यत्राह **तेषां कार्याणा**मिति। पुरुषेण कार्याणां तन्मूलत्वापादनं सत्त्वादियुक्तस्वकीयान्तःकरणविकारद्वारेणेत्यर्थः। ततः किमित्यत्राह **पुरुषस्य चेति**। कार्यानुपयोगिनो हि धर्माः न प्राप्नुवन्तीति पूर्वपक्षिणोक्तम्। सत्त्वादीनां तु कार्योपयोगित्वात् तदधीनः कर्मसंबन्धोऽवर्जनीय इति भाववानाह **ज्ञानशक्तिवदिति**। सुखदुःखमोहादीनां सत्त्वरजस्तमोहेतुकत्वं शास्त्रसिद्धम्। सुखादिहेतुभूतशरीराद्युपादानस्य, निमित्तस्य च कर्तुः सत्त्वादिगुणान्वयश्च शास्त्रसिद्धः, "निर्गुणस्याप्रमेयस्य शुद्धस्याप्यमलात्मनः। कथं सर्गादिकर्तृत्वं ब्रह्मणोऽभ्युपगम्यते" इत्यादिभिर्दृश्यते। अतः सत्त्वादिगुणकं शरीराद्युपादानं द्रव्यं सत्त्वादिगुणान्वयविकृतान्तःकरणः पुरुषोऽधितिष्ठति। गुणान्वयश्च कर्ममूल इति कर्मवश्यत्वप्रसङ्ग इत्यर्थः। हेत्वन्तरेणापि कर्मसंबन्धमाह **ज्ञानेति**। न ज्ञानशक्तिवैचित्र्यात् विचित्रसर्गः; अपि तु

---

1 प्रतिक्षेपे इति। घटादौ लोकसिद्धविभिन्नकर्तृकत्वे सत्येव क्षित्यङ्कुराद्यर्थं कल्पनीयेश्वररूपैककर्त्रन्तरकृतत्वस्यापि तार्किकेष्टत्वात् एककर्तृकत्वं न प्रत्यक्षादिविरुद्धं स्यादिति मत्वा भिन्नकर्तृकत्वप्रतिक्षेपः साध्यत्वेनोक्तः।

2 तन्मूलत्वापादनं निमित्तभूतकर्तृवैचित्र्यकृतमिति उपरि वर्णनात् तन्मूलत्वमित्यत्र मूलपदमुपादानपरमेव युक्तमिति सत्त्वादिमूलत्वमित्यत्रापि उपादानपरतया व्याख्यानम्।

शक्तिवैचित्र्यस्य च कर्ममूलत्वात्। इच्छायाः कार्यारम्भहेतुत्वेऽपि विषयविशेषविशेषितायास्तस्याः सत्त्वादिमूलत्वेन कर्मसंबन्धोऽवर्जनीयः। अतः क्षेत्रज्ञा एव कर्तारः; न तद्विलक्षणः कश्चिदनुमानात् सिद्ध्यति॥

भवन्ति च प्रयोगाः—तनुभुवनादि क्षेत्रज्ञकर्तृकम्, कार्यत्वात्; घटवत्। ईश्वरः कर्ता न भवति, प्रयोजनशून्यत्वात् मुक्तात्मवत्। ईश्वरः कर्ता न भवति, अशरीरत्वात् तद्वदेव। न च क्षेत्रज्ञानां स्वशरीराधिष्ठाने व्यभिचारः; तत्राप्यनादेः सूक्ष्मशरीरस्य सद्भावात्। विमतिविषयः कालो न लोकशून्यः, कालत्वात्, वर्तमानकालवत्—इति॥

अपिच—किमीश्वरः सशरीरोऽशरीरो वा कार्यं करोति? न तावदशरीरः, अशरीरस्य कर्तृत्वानुपलब्धेः। मानसान्यपि कार्याणि सशरीरस्यैव भवन्ति। मनसो नित्यत्वेऽप्यशरीरेषु

---

इच्छामात्रादिति चेत्—तत्राह **इच्छाया** इति। **विषयविशेषविशेषितायाः**। इच्छायाः सर्गस्थेमादिविषयत्वं तत्रापि विचित्रसर्गादिविषयत्वं च सत्त्वादिमूलत्वेन कर्ममूलमित्यर्थः। एवं कर्तृत्वक्षेत्रज्ञत्वयोर्व्याप्तिदर्शनात् न तद्विलक्षणसिद्धिरित्याह **अत** इति।

प्रतितर्कानाह **भवन्ति चेति**। **तनुभुवनादी**ति। इदं प्रत्यनुमानं प्रतितर्को वा। अन्ये प्रतितर्का एव। कार्यत्वे क्षेत्रज्ञकर्तृकत्वप्रसङ्गः; कर्तृत्वे सापेक्षत्वप्रसङ्गः; कर्तृत्वे सशरीरत्वप्रसङ्ग इत्यर्थः। अशरीरत्वहेतोर्व्यभिचारमाशङ्क्य परिहरति **न चेति**। **अनादेः**—बीजाङ्कुरवत् प्रवाहानादेरित्यर्थः। **अधिष्ठानं** देहेन प्रथमसंबन्धश्चेत्—सूक्ष्मस्थूलशरीरप्रवाहानादितया परिहृतः[1]; यथा बालशरीरविशिष्टेन युवशरीरपरिग्रहः, तद्वदेव। **अधिष्ठानं** प्रेरणं चेत्—स्वपरनिर्वाहकन्यायात् परिहृतः। शरीरव्यतिरिक्तप्रेरणस्य [2]शरीरापेक्षा, न शरीरस्येति [हि] शरीरत्वप्रयुक्तं शरीरान्तरनिरपेक्षप्रेरणत्वम्। तथा जगतः ईश्वरशरीरत्वे सशरीरत्वात् कर्मवश्यत्वप्रसङ्गः। यथा देहः स्वज्ञानोत्पत्तौ करणं कर्म च भवति, यथा च घटः स्वविषयज्ञानोत्पत्तौ स्वसत्तया हेतुः पश्चात्तद्विषयश्च भवति—तथा स्वविषयप्रेरणेऽपि शरीरमिति न कर्मकर्तृविरोधः। न चाङ्कुरादौ शरीरस्य योग्यानुपलब्धिः; पिशाचसिद्धादिशरीरवददृश्यत्वोपपत्तेः; देशान्तरस्थेन वा शरीरेण सङ्कल्पद्वारा विषादेरिव प्रेरणोपपत्तेश्च। प्रतितर्कान्तरमाह **विमतीति**। अत्र सूर्यपरिवृत्तिसङ्ख्याविशेषावच्छेदात् पूर्वत्वेन परत्वेन च कालस्य पक्षीकृतत्वात् नाश्रयासिद्धिरिति। [अनुमानं] मुखान्तरेण दूषयति **अपि चे**त्यादिना। दूषणं वक्तुं विकल्पयति **किमि**ति। धीस्थं चरमशिरो दूषयति **न तावदि**ति। अशरीरस्य मनसा कर्तृत्वं स्यादिति प्रागुक्तं दूषयति **मानसानी**ति। कुत इत्यत्राह **मनस** इति।

---

1 परिहृतइत्यत्रोभयत्र व्यभिचारइत्यनुषञ्जनीयम्। कचित्कोशे परिहृतमिति शोधितमस्ति।

2 ननु मा भूत् स्वपरनिर्वाहकत्वम्। प्रेरणं किञ्चित् शरीरनिरपेक्षमपीत्येवोच्यतामित्यत्राह शरीरेति। लोके शरीरातिरिक्ते सर्वत्र शरीरापेक्षादर्शनात् शरीरमात्रे तददर्शनात् शरीरत्वप्रयुक्तं शरीरान्तरनिरपेक्षत्वमित्येव वक्तव्यम्। एवञ्च सशरीरत्वापत्तिपरिहारः जगतः परमात्मशरीरत्वस्वीकारेणैव कार्यः। तदा च कर्मवश्यत्वापत्तिरित्यर्थः। तथाचैवमुक्तत्रापीष्टासिद्ध्या नियमाभंगाय स्वपरनिर्वाहकत्वमेव युक्तमिति भावः। अथ तत्रानुपपत्तिं पूर्वपक्षिहृद्गतामुदाहरणमुखेन परिहरति यथा देह इति।

मुक्तेषु तत्कार्यादर्शनात् । नापि सशरीरः, विकल्पासहत्वात् । तच्छरीरं किं नित्यम्, उतानित्यम्? न तावन्नित्यम्; सावयवस्य तस्य नित्यत्वे जगतोऽपि नित्यत्वाविरोधादीश्वरासिद्धेः । नाप्यनित्यम्; तद्व्यतिरिक्तस्य तच्छरीरहेतोस्तदानीमभावात् ॥ स्वयमेव हेतुरिति चेत्. न, अशरीरस्य तदयोगात् ॥ अन्येन शरीरेण सशरीर इति चेत्. न, अनवस्थानात् ॥

स किं सव्यापारो निर्व्यापारो वा । अशरीरत्वादेव न सव्यापारः । नापि निर्व्यापारः कार्यं करोति, मुक्तात्मवत् । कार्यं जगत् इच्छामात्रव्यापारकर्तृकमित्युच्यमाने पक्षस्याप्रसिद्धविशेषणत्वम्; दृष्टान्तस्य च साध्यहीनता ।

अतो दर्शनानुगुण्येनेश्वरानुमानं दर्शनानुगुण्यपराहतमिति शास्त्रैकप्रमाणकः परब्रह्मभूतः सर्वेश्वरः पुरुषोत्तमः ॥ शास्त्रं तु सकलेतरप्रमाणपरिदृष्टसमस्तवस्तुविसजातीयं सार्वज्ञ्यसत्यसङ्कल्पत्वादिमिश्रानवधिकातिशयापरिमितोदारगुणसागरं निखिलहेयप्रत्यनीकस्वरूपं प्रतिपादयतीति

---

अपिशब्देन स्वपक्षे नित्यत्वानभ्युपगमः सूचितः । सशरीरत्वपक्षं दूषयति **नापी**ति । विकल्पासहत्वं विवरितुं विकल्पयति **तदि**ति । प्रथमं दूषयति **न ताव**दिति । **जगतः**—भूभूधरादेः । द्वितीयं दूषयति **नापी**ति । हेतुमाह **तद्व्यतिरिक्तस्ये**ति । तच्छरीरहेतोः शरीरान्तरस्याभावादित्यर्थः । दूषणपरिहाराय परोक्तं शङ्कते **स्वयमेवे**ति । **स्वयं**शब्द ईश्वरपरः । परिहरति **ने**ति । **तदयोगात्**—हेतुत्वायोगात् । पुनः शङ्कते **अन्येने**ति । अनवस्थया दूषयति **ने**ति । प्रामाणिकपरम्परा न दोष इति चेत्—शरीरित्वप्रयुक्तकर्मवश्यत्वं स्यादिति भावः । कर्मवश्यत्वप्रसङ्गस्य प्रागुक्तत्वादिहाप्यनवस्थादूषणस्य कर्मवश्यत्वप्रसङ्गपर्यन्तत्वमभिप्रेतमित्यवगम्यते । मुखान्तरेण विकल्प्य दूषयति **स किमि**ति । अशरीरस्य निर्व्यापारत्वे निर्व्यापारस्य कार्याकरणे च दृष्टान्तो मुक्तात्मा । व्यापारश्च प्रयत्नो विवक्षितः । इच्छाविशेषस्य हेतुत्वे हि गुणवश्यताप्रसङ्गः पूर्वमुक्तः । इच्छामात्रमेव व्यापार इत्यत्राह **कार्यं जग**दिति । **मात्र**शब्देन सत्त्वादिगुणान्वय-तन्मूलकर्मसंबन्धव्यावृत्तिः । ननु कर्मवश्यत्वादिकं न कर्तुः प्रसञ्जनीयम्, अव्यापकत्वात् । न हि त्वत्पक्षेण वाऽस्मत्पक्षेण वा व्याप्तिः, ईश्वरे त्वया मयाऽपि तदनभ्युपगमात् ॥ नैवम्; आगमात् ऋतेऽपीश्वरः सिध्यतीति वदन्तं प्रति आगममसन्तं कृत्वाऽस्मदादिभिरुच्यमानत्वात् । यदीश्वरप्रतिपादकागमबलात् मदुक्तव्याप्तिभङ्गेनेश्वरानुमानं स्थाप्यते, तदानीमनुमानस्यागमानपेक्षप्रामाण्यासिद्धिरित्यप्राप्तग्राहित्वमागमस्य सिध्येत् । यद्वा अलौकिकप्रमाणैकवेद्यत्वाभावे सति कर्तृत्वस्य कर्मवश्यत्वादिव्याप्यत्वात्[1] । शास्त्रंयोगिमुक्तेश्वरप्रत्यक्षाण्यलौकिकशब्दोक्तानीति ।

अनुमानदूषणमुपसंहरति **अत** इति । परस्य ब्रह्मण ईश्वरानतिरिक्तत्वज्ञापनार्थः **सर्वेश्वरशब्दः** । अनेन "तमीश्वराणां परमं महेश्वरम्" इति श्रुतिः स्मारिता भवति । देवताविशेषनिर्णयार्थं "महान् प्रभुर्वै पुरुषः सत्त्वस्यैष प्रवर्तकः" इति श्रुतिस्मारणार्थः **पुरुषोत्तमशब्दः** । उक्तदोषास्तदानीमपि प्राप्नुयुरित्यत्राह **शास्त्रं त्वि**ति । सर्वविजातीयत्वं दर्शयति **सार्वज्ञ्ये**ति । **सार्वज्ञ्यसत्यसङ्कल्पत्वादिमिश्र**शब्दो ब्रह्मविशेषणम् । गुणविशेषणं वा; तद्गितिरूपत्वादन्येषां गुणानाम् [2]एकैकमनवधिकातिशया गुणा **अपरिमिताः**—निःसंख्याता इत्यर्थः ॥ इति शास्त्रयोनित्वाधिकरणम् ।

---

1 व्याप्यत्वादिति । नैवमित्यत्रान्वयः । 2 एकैकं—सार्वज्ञ्यादिकम् ।

न प्रमाणान्तरावसितवस्तुसाधर्म्यप्रयुक्तदोषगन्धप्रसङ्गः । यत्तु—निमित्तोपादानयोरैक्यमाकाशादेर्निरवयवद्रव्यस्य कार्यत्वं च अनुपलब्धमशक्यप्रतिपादनमित्युक्तम्—तदप्यविरुद्धमिति, "प्रकृतिश्च प्रतिज्ञादृष्टान्तानुपरोधात्", "न वियदश्रुतेः" इत्यत्र प्रतिपादयिष्यते ।

अतः प्रमाणान्तरागोचरत्वेन शास्त्रैकविषयत्वात्, "यतो वा इमानि भूतानि" इत्यादिवाक्यम्—उक्तलक्षणं ब्रह्म प्रतिपादयतीति सिद्धम् ॥ ३ ॥

इति शास्त्रयोनित्वाधिकरणम् ॥ ३ ॥

—०—०—०—

अथ समन्वयाधिकरणम् १-१-४

यद्यपि प्रमाणान्तरागोचरं ब्रह्म—तथाऽपि प्रवृत्तिनिवृत्तिपरत्वाभावेन सिद्धरूपं ब्रह्म न शास्त्रं प्रतिपादयतीत्याशङ्कयाह—

तत्तु समन्वयात् ॥ १-१-४ ॥

---

यथा मृत्तिकाया घटनिष्पादनशक्तत्वेपि, कुलालस्य च निर्माणशक्तौ सत्यामपि दण्डचक्रादिपरिकारापेक्षाऽस्त्येव—तथा शब्दस्य परिनिष्पन्नब्रह्मप्रतिपादनशक्तत्वेऽपि, ब्रह्मणोऽपि शब्देन प्रतिपत्तुं शक्यत्वेऽपि, बुभुत्साख्यपरिकरापेक्षा प्रमित्युत्पादने विद्यते । यत्नसाध्यत्वात् बुभुत्सा अपेक्षिता । सा चाज्ञातत्वपुरुषार्थत्वप्रयुक्ता । तत्रावान्तरपेटिकारूपेण प्रथमेन सूत्रद्वयेन शब्दद्वारकमर्थद्वारकं च शक्तिमत्त्वं प्रतिपादितम् । अथ सूत्रद्वयान्तरमवान्तरपेटिकान्तरं बुभुत्साहेतुनिरूपणपरम् । तत्र प्रथमेन तृतीयसूत्रेणाज्ञातत्वरूपो बुभुत्साहेतुरुक्तः । अथ प्रयोजनत्वरूपो बुभुत्साहेतुरुच्यते चतुर्थेन । अर्थे प्रतिपन्ने हि प्रयोजनाप्रयोजनत्वचिन्ता । प्रतिपत्तिश्च लक्षणतः इति **जन्मादिसूत्रं** द्वितीयमभूत् । जन्मादिकं लक्षणं चेत्—मानान्तरात् तत्सिद्धिः स्यादिति शङ्कायाः संगतत्वात् **शास्त्रयोनित्वादिति** सूत्रं तृतीयमभूत् । अज्ञातत्वेऽप्यप्रयोजने बुभुत्सानुदयात् प्रयोजनरूपत्वमत्र निरूप्यत इति क्रमोऽयमेव । तत्रावान्तरसङ्गतिमाह **यद्यपीति** । अज्ञातत्वं नाम बुभुत्साहेतुर्यद्यप्यस्तीत्यर्थः । प्रयोजनं सुखं दुःखनिवृत्तिश्च । शास्त्रस्य तत्पर्यवसायित्वं तदुपायप्रवृत्तिनिवृत्तिबोधनद्वारा । तच्च न सिद्धपरत्वेऽस्ति । तस्य प्रवृत्तिनिवृत्तिरूपत्वाभावात् । तस्मात् प्रयोजनपर्यवसायित्वाभावेन बुभुत्साख्यपरिकराभावात् सिद्धे शास्त्रं न प्रमितिं जनयतीत्यर्थः । एवं शङ्कायां सूत्रमुदाहरति **तत्तु समन्वयादिति** । इहापि साधारणविचारद्वयमर्थसिद्धम् ; ब्रह्मणः शास्त्रप्रमाणकत्वं संभवति, नेति द्वितीयविचारः ; तदर्थं प्रवृत्तिनिवृत्तिरूपप्रयोजनशून्यानां वेदान्तवाक्यानां ब्रह्मपरतयाऽन्वयः संभवति, नेति ; तदर्थं किं शब्दस्य प्रामाण्यं प्रवृत्तिनिवृत्तिपरतया, उत पुरुषार्थपरतयेति । शब्दस्य प्रवृत्तिनिवृत्तिपरतयैव प्रामाण्ये ब्रह्मणः सिद्धरूपस्य शास्त्रप्रमाणकत्वाभावात् तद्विचारानारम्भः । शब्दस्य पुरुषार्थपरतयैव प्रामाण्ये पुरुषार्थभूतब्रह्मणः शास्त्रप्रमाणकत्वात् तद्विचारस्यारम्भणीयत्वं फलितम् । एवमर्थसिद्धौ विषयसंशयावभिप्रेत्य सूत्रं व्याचि-

**प्रसक्ताशङ्कानिवृत्त्यर्थः तुशब्दः। तत्—शास्त्रप्रमाणकत्वं ब्रह्मणः संभवत्येव। कुतः। समन्वयात्। परमपुरुषार्थतयाऽन्वयः समन्वयः; परमपुरुषार्थभूतस्यैव ब्रह्मणः अभिधेयतयाऽन्वयात्। एवमिव समन्वितो ह्यौपनिषदः पदसमुदायः—"यतो वा इमानि भूतानि जायन्ते" "सदेव सोम्येदमग्र आसीदेकमेवाद्वितीयम्। तदैक्षत बहु स्यां प्रजायेयेति। तत् तेजोऽसृजत", "ब्रह्म वा इदमेकमेवाग्र आसीत्", "आत्मा वा इदमेक एवाग्र आसीत्",**

---

ख्यासुः तत्र वाक्यार्थयोजनायामेव पदयोजनामन्तर्भावयिष्यन् पृथग्व्याख्येयं तुशब्दं व्याचष्टे **प्रसक्ते**ति। सर्वेषां सूत्राणां तत्तच्छङ्कायामवतरणेऽपि अस्मिन् सूत्रे तुशब्दः [1]प्रदर्शनार्थः। तदिति व्याख्येयं पदम्; तद् व्याचष्टे **शास्त्रप्रमाणकत्वं ब्रह्मण** इति। **संभवत्येवे**त्येतत् तुशब्दफलितम्। हेतुपदस्याकाङ्क्षां दर्शयति **कुत** इति। समन्वयशब्दस्योत्तरत्र विस्तरेण व्याख्यास्यमानत्वादिदानीं सङ्क्षेपेण व्याचष्टे **परमपुरुषार्थतये**ति। कस्य केन कीदृशोऽन्वयः इत्यपेक्षायामाह **परमे**ति। शास्त्रेण परमपुरुषार्थभूतस्य ब्रह्मणोऽभिधेयतयाऽन्वयादित्यर्थः। शास्त्रस्य धीस्थत्वात् शास्त्रेणेति कण्ठोक्त्यभावः। ब्रह्म शास्त्रप्रमाणकमिति प्रतिज्ञाते सति पक्षनिष्ठतया हेतोर्वक्तुमुचितत्वात् समन्वयो ब्रह्मकर्तृकतया व्याख्यातः; न तु शास्त्रकर्तृकतया। कथं तथाविधान्वयः इत्यपेक्षायामेतदुपपादयति **एव**मिति। इवशब्द [2]एवार्थः; एवमेवेत्यर्थः। औपनिषदः पदसमुदायः परमपुरुषार्थभूते ब्रह्मणि प्रतिपादकत्वेन समन्वित एव हीत्यर्थः। **पदसमुदायः** वाक्यमित्यर्थः। औपनिषदवाक्यबहुत्वेऽपि तेषां वाक्यैकवाक्यभावेनैकार्थपरतया एकराशित्वव्यञ्जनायैकवचनम्। **समन्वित** इति वाक्यकर्तृकत्वेनोक्तिः फलितार्थाभिप्राया; न तु सूत्रयोजनाभिप्राया। **ब्रह्मणि समन्वितानामि**त्युत्तरत्राप्येवमेव। प्रतिपत्तिक्रमानुरोधेन प्रथमं लक्षणवाक्यमुपादत्ते **यतो वा** इति। अथ प्रापकं कारणवाक्यमाह **सदेवे**त्यादिना। सच्छब्दस्य बृहदबृहत्साधारणत्वात् विशेषकवाक्यमुपादत्ते **ब्रह्म वा** इति॥ यत् कारणम्, तत् ब्रह्मेति लक्षणवाक्येनोक्ते, सतः कारणत्वे च कथिते, तस्य सतो ब्रह्मत्वं सिध्यतीति न बृहत्त्वनिश्चयः **ब्रह्म वा** इति वाक्याधीन इति चेन्न; लक्षणवाक्यस्य कारणानुवादित्वेन प्रापकवाक्योपजीवित्वादुपजीव्येषु प्रापकवाक्येष्वेव विशेषनिर्धारणज्ञापनार्थं हि **ब्रह्म वा** इति वाक्यमुपात्तम्। सद्ब्रह्मशब्दयोरीक्षणान्वयलिङ्गादचिद्व्यावृत्तवस्तुपरत्वेऽपि तयोः शब्दयोः साधारणतया शब्दसामर्थ्यादचिद्व्यावृत्तिनिश्चयस्तत्र नास्तीति शब्दशक्त्यैव विशेषज्ञापनार्थम् **आत्मा वा** इति वाक्योपादानम्। ब्रह्मशब्दस्य साधारणत्वं नाम बहुष्वर्थेषु प्रयुज्यमानत्वम्; न तु प्रवृत्तिनिमित्तसाधारण्यम्। प्रवृत्तिनिमित्तभूतस्य निरतिशयबृहत्त्वस्य भगवद्व्यतिरिक्तगामित्वसंदेहसहत्वं

---

1 प्रदर्शनार्थः इति। शास्त्रप्रमाणकत्वाभावशंकाः बहुप्रकाराः सन्ति। अत एव ब्रह्मणि समन्वयकरणात् अयमध्यायः समन्वयाध्याय इति व्यवह्रियते। तदत्र सिद्धान्त्यभिमतब्रह्मपरत्वस्वीकारे प्रयोजनपर्यवसानं नेति सामान्येन प्रवृत्तशंकाशमनार्थमिदमधिकरणमिति वक्ष्यमाणवैलक्षण्येन शंकाविशेषशमनाभिप्रायज्ञापनायेह विशिष्य सूत्रकारः तुं प्रायुंक्त। सर्वत्र तुरप्रयुक्तोऽपि स्थितप्राय इति न प्रयोक्तव्यः। तथाच सामान्यविषयत्वादयं शास्त्रोपोद्घातः; उपरि तु सर्वं शास्त्रमेवेति उपोद्घातोपयोग्यंश एक एवावशिष्टः इहाधिकरणे वर्ण्यते इति तुशब्दतात्पर्यम्।

2 एवार्थ इति। इवार्थ एव भवतीत्यपि भाष्यार्थदर्पणे।

"तस्माद्वा एतस्मादात्मनः आकाशः संभूतः", "एको ह वै नारायण आसीत्",

वा। न हि स्वारसिकात्मशब्दैकार्थ्ये प्रतिपन्ने सति निरतिशयबृहत्त्वस्याचिद्गामित्वसंदेहः। सद्विद्यायां 'स आत्मा' इत्यात्मशब्दः उपसंहारस्थ इति उपक्रमस्थेनैवाऽऽत्मशब्देन विशेषनिश्चयार्थम्, 'आत्मा वा' इति वाक्यमुपात्तम्। "यतो वा इमानि" इत्यादिप्रकरण एव, "आनन्दाद्ध्येव खल्विमानि भूतानि जायन्ते" इत्यानन्दशब्देन कारणे निर्दिष्टेऽपि, "यदेष आकाश आनन्दो न स्यात्" इत्याकाशशब्द-सामानाधिकरण्यात् आनन्दशब्देनाचिद्व्यावृत्तिनिश्चयः प्रतिबद्ध इत्यभिप्रायेणाचिद्व्यावृत्तेः सुखेन प्रतिपत्त्यर्थम् **आत्मा वा** इति वाक्योपादानम्। सर्वशाखाप्रत्ययन्यायेन विनाऽपि प्रकरणादेव ब्रह्मशब्द आत्मपर इति ज्ञापनार्थम्, एतदधिकरणापेक्षितानन्दरूपताप्रतिपादकप्रकरणस्थतया तज्ज्ञापनार्थं चोपादत्ते **तस्माद्वा एतस्मादात्मन** इति। "सत्यं ज्ञानमनन्तं ब्रह्म" इति हि तत्र प्रकृतम्। "अन्योऽन्तर आत्मा आनन्दमयः", "आनन्दं ब्रह्मणो विद्वान्" इति च तत्र वक्ष्यते। अत्र (थ) "छागो वा मन्त्रवर्णात्" इति न्यायात् सामान्यशब्दानां देवताविशेषे पर्यवसानं दर्शयति **एको ह वा** इति। "सेयं देवतैक्षत", "यो ब्रह्माणं विदधाति पूर्वं यो वै वेदांश्च प्रहिणोति तस्मै। तं ह देवम्", "स ईशोऽस्य जगतो नित्यमेव नान्यो हेतुर्विद्यत ईशनाय", "ईशानो भूतभव्यस्य", "तमीश्वराणां परमं महेश्वरम्" इत्यादिषु श्रुतानां देवतादिशब्दानां पूर्वपूर्वापेक्षया विशेषशब्दानामपि साक्षात् कारणवाक्यस्थत्वाभावात्, तेषु च, रूढिमतामपि देवतादिशब्दानां व्यक्तिविशेषे रूढत्वाभावात्, ईशादिशब्दानां च, 'जगत ईशो नान्यो हेतुर्विद्यते ईशनाय' इति समभिव्याहृतषष्ठ्यन्तपदनिर्देशादिभिरवयवार्थविवक्षायाः स्फुटतरत्वेन निमग्नरूढितया साधारणत्वाच्च, चरमविशेषशब्दप्रदर्शनेन तेषामपि तत्पर्यवसानमर्थसिद्धं स्यादित्यभिप्रायेण च, 'सेयं देवता' इत्यादिवाक्यानि अनादृत्य एको ह वै नारायणः इत्यादिवाक्यमुदाहृतम्। हिरण्यग-र्भादयः शब्दा आकाशप्राणादिशब्दवदयोग्यार्थाः। शिवादिशब्दाश्च बह्वर्थेषु प्रयोगात् साधारणा इति सदादिशब्दवन्न विशेषोपस्थापनक्षमा इत्यभिप्रायः। "वचनानि त्वपूर्वत्वात्", "विधिस्तु धारणेऽपूर्वत्वात्" इति न्यायेन, "यदाग्नेयोऽष्टाकपालः", "उपरि हि देवेभ्यो धारयति" इति वाक्यवदिदं महोपनिषद्वाक्यमपि अप्राप्तार्थोपस्थापकत्वात् आकाशप्राणादिवाक्यवत् अयोग्यार्थोपस्थापकत्वाभावाच्चानन्यापेक्षं स्वार्थं प्रतिपादयति।

"न सन्न चासच्छिव एव केवलः" इति वाक्यविरोधादिदं वाक्यमयोग्यार्थमिति चेत्—न; "सदेव सोम्येदमग्रे" इति वाक्यविरोधेन, "न सन्न चासत्" इत्यादिवाक्यस्यायोग्यार्थत्वप्रसङ्गात्॥ साधारणस्य सच्छब्दस्य शिवपर्यवसानाद्विरोधात् नात्रायोग्यार्थत्वमिति चेत्—तर्हि शिवशब्दस्य च बहुष्वर्थेषु प्रयोगात् साधारणस्य नारायणपर्यवसानाविरोधात् नात्रायोग्यार्थत्वम्। ब्रह्मशिवादीनां हि कार्यत्वमिन्द्रादीना-मिव बह्वीभिः श्रुतिभिः प्रतिपाद्यते—

**यजुषि**, "अजस्य नाभावध्येकमर्पितं यस्मिन्निदं भुवनमधिश्रितं विश्वकर्मा ह्यजनिष्ट देवः", "स प्रजापतिरेकः पुष्करपर्णे समभवत्", "तस्माद्विराडजायत विराजोऽधि पुरुषः", **महोपनिषदि**, "तत्र ब्रह्मा चतुर्मुखोऽजायत", **सुबालोपनिषदि**, "अद्भ्यः पृथिवी। तदण्डमभवत्। तत संवत्सरमात्र-

मुषित्वा द्विधाऽकरोदधस्ताद्भूमिमुपरिष्टादाकाशं मध्ये पुरुषो दिव्यः; सहस्रशीर्षा पुरुषः" इत्यारभ्य, "सोऽग्रे भूतानां मृत्युमसृजत्। तस्य ब्रह्माऽबिभेत। सो ब्रह्माणमेव विवेश" इति। अत्र परमपुरुषात्मनः पुरुषो ब्रह्मा समुत्पन्न इति श्रुतः; पुरुषशब्दद्वयश्रवणात् मृत्युभयवत्त्वश्रवणाच्च। **श्वेताश्वतरे,** "वेदाहमेतं पुरुषं महान्तम्", "महान् प्रभुर्वै पुरुषः सत्त्वस्यैष प्रवर्तकः", "यो ब्रह्माणं विदधाति पूर्वम्" इति च हिरण्यगर्भोत्पत्तिरवगम्यते।

तथा **महोपनिषदि,** "त्र्यक्षः शूलपाणिः पुरुषोऽजायत", **सुबालोपनिषदि,** "ललाटात् क्रोधजो रुद्रोऽजायत", **बृहदारण्यके,** 'ब्रह्म वा इदमेकमेवाग्र आसीत्। तदेकं सन्न व्यभवत्। तच्छ्रेयोरूपमत्यसृजत क्षत्रम्—यान्येतानि देवत्रा क्षत्राणि इन्द्रो वरुणः सोमो रुद्रः पर्जन्यो यमो मृत्युरीशानः' इति। तथा **शतपथे,** "अभूद्वा इदं प्रतिष्ठा" इत्यारभ्य "भूतानां च प्रजापतिः संवत्सरायादिदीक्षिषत। भूतानांपतिर्गृहपतिरासीदुषाः पत्नी" इत्यादिकमुक्त्वा; "भूतानांपतिः संवत्सर उषसि रेतोऽसिञ्चत्। संवत्सरे कुमारोऽजायत। सोऽरोदीत्। तं प्रजापतिरब्रवीत। कुमार! किं रोदिषि, यत् श्रमात् तपसोऽधि जातोऽसीति। सोऽब्रवीत्। अनपहतपाप्मा वा अहमस्मि अवि(ना)हितनामा। नाम मे धेहि पाप्मनोऽपहत्या इति। तमब्रवीत् रुद्रोऽसीति। तदस्य तन्नामाकरोत्। अग्निस्तद्रूपमभवत्" इत्यारभ्य शर्वपशुपतिप्रभृतिनामकरणं पृथिवीसलिलादिमूर्तिप्रदानं चोक्तम्। रुद्रवाक्यादेवानपहतपाप्मत्वं च तस्य श्रुतम्। **तत्रैव च शतरुद्रीयब्राह्मणे,** "प्रजापतेर्विस्रस्ता देवता उदक्रामन्। तमेक एव देवो न जहान्महामन्युरेव सोऽस्मिन्नन्तर्हितोऽतिष्ठत। सोऽरोदीत्। तस्य यान्यश्रूणि प्रास्कन्दन्, तान्यस्मिन् मन्यौ प्रातिष्ठन्। स एष शतशीर्षा रुद्रः समभवत्" इति। अत्र प्रजापतेः क्रुद्धस्य क्रोधजाश्रुसंभवत्वं मन्युरूपस्य रुद्रस्याभिहितम्। क्रोधस्य चाश्रुहेतुत्वं प्रसिद्धम्, "तस्य क्रुद्धस्य नेत्राभ्यां प्रापतन्नश्रुबिन्दवः। दीप्ताभ्यामिव दीपाभ्यां सार्चिषः स्नेहबिन्दवः" इति। तथा **शैलालिब्राह्मणे,** "प्रजापतिर्वै प्रजाकामः तपोऽतप्यत" इत्यारभ्य अग्निवाय्वादित्यचन्द्राणामुत्पत्तिं तेषां रेतःस्कन्दनं चोक्त्वा, "स प्रजापतिर्हिरण्मयं चमसमकरोदिषुमात्रमूर्ध्वमेवं तिर्यञ्चम्। तस्मिन् रेतः समसिञ्चत्। तत उदतिष्ठत् सहस्राक्षः सहस्रपात्। तत् सहस्रेण प्रतिहिताभिः स प्रजापतिं पितरमभ्यायच्छत्। तमब्रवीत् कथमभ्यायच्छसीति। नाम मे कुर्वित्यब्रवीत्। न वा इदमविहितेन नाम्ना अन्नमत्स्यामि इति। शर्वो वै त्वमित्यब्रवीत्। भव एवेति, यद्भवः" इत्यारभ्य भवशर्वादिनामकरणं सलिलादिमूर्तिप्रदानं चोक्त्वा, "स एषोऽष्टनामाऽष्टधा विहितो महादेवः" इति नामाष्टकमूर्त्यष्टकवत्त्वं प्रजापतिना विहितमिति स्पष्टतरमुक्तम्। **तलवकारिणां कर्मारम्भे,** "इदं कर्म करिष्यामि तन्मे समृध्यतां तन्म उपपद्यतां विरूपाक्षाय दन्ताञ्जये ब्रह्मणः पुत्राय ज्येष्ठाय श्रेष्ठायामोघाय कर्माधिपतये नमः" इति। तथा **छन्दोगानां च कर्मारम्भे,** "तस्मै विरूपाक्षाय दन्ताञ्जये वुद्धाय विश्ववेदाय सहस्राक्षाय ब्रह्मणः पुत्राय नमः" इति च मन्त्रद्वयेन रुद्रस्य ब्रह्मपुत्रत्वमभिहितम्। **घृतसूक्ते** च "यो ब्रह्मा ब्रह्मण उज्जहार प्राणेश्वरः कृत्तिवासाः पिनाकी" इति ब्रह्मण उद्भूतत्वं रुद्रस्योक्तम्। उज्जहार—उद्बभूवेत्यर्थः। अतो हिरण्यगर्भादीनां कार्यत्वावगमेन तद्वाचिशब्दानामयोग्यार्थत्वात् नारायण एव सदादिशब्दाः पर्यवस्यन्ति॥

ननु "हिरण्यगर्भः समवर्तताग्रे", "न सन्न चासच्छिव एव केवलः", "एको ह वै नारायण आसीत्", "ब्रह्मविष्णुरुद्रेन्द्रास्ते सर्वे संप्रसूयन्ते" इति त्रयाणामपि देवानां कारणत्वकार्यत्वयोरविशेषेण श्रवणात्, अयोग्यत्वशङ्कायाः त्रिष्वपि तुल्यत्वात्, जन्मन ऐच्छिकत्वेनायोग्यत्वपरिहारस्य त्रिष्वपि सुवचत्वात्, कारणैकत्वावधारणस्यानुरोद्धव्यत्वात्, रूढेरपरित्यागस्य स्वतः प्राप्तत्वाच्च त्रयाणामप्यैक्याश्रयणेन परमकारणत्वमभ्युपगन्तव्यम् ॥ नैवम्; त्रयाणाम् अविशेषेणकार्यत्वश्रवणाभावादेव त्रिष्वप्ययोग्यत्वशङ्कायाः तुल्यत्वाभावात्। तस्य हि प्रकरणस्योपक्रमे, "कश्च ध्येयः" इति ध्येयविधिपरत्वमवगतमिति कार्यत्वमनूद्यते। अनुवादश्च प्रापकानुरोधेन स्यात्। लक्ष्मीपतिविषय उत्तरनारायणानुवाके भगवदुत्पत्तिरवताररूपा श्रूयत इति अस्मिन् वाक्ये भगवदवतारानुवादः। ब्रह्मशिवयोस्तु अवतारश्रुत्यभावादिन्द्रवरुणादितुल्योत्पत्तिरनूद्यते इति नाविशेषेण कार्यत्वश्रवणम्। किञ्चोत्पत्तिश्चेत्, कर्माधीनदेहसङ्गतिरित्युत्सर्गसिद्धम्। तच्च ब्रह्मशिवयोरनपोदितम्। नारायणे त्ववतारश्रुत्याऽपोदितम्। "प्रजापतिर्देवानसृजत। ते पाप्मना सन्दिता अजायन्त" इति प्रजापतिसृष्टदेवानां सामान्येन पाप्मसंबन्धः श्रुतः; विशेषतो रुद्रस्यानपहतपाप्मत्वं शतपथे स्ववाक्यादेव दर्शितम्। "एष सर्वभूतान्तरात्माऽपहतपाप्मा दिव्यो देव एको नारायणः", "तस्य यथा कप्यासं पुण्डरीकमेवमक्षिणी। तस्योदिति नाम। एष हि सर्वेभ्यः पाप्मभ्यः उदितः", "अपहतपाप्मा विजरो विमृत्युः", "स उत्तमः पुरुषः" इति पुण्डरीकाक्षस्याकर्मकृतविग्रहवत्त्वंचोक्तम्।

एवं वैषम्यस्य स्फुटत्वेन उत्पत्तिसाम्यशङ्काया दूरविध्वस्ततया योग्यार्थनारायणादिशब्दानामिव अयोग्यार्थब्रह्मशिवादिशब्दानां रूढिपरित्यागाभावोऽनुपपन्नः। यदि रुद्रस्य परमकारणत्वं तदुत्पत्तेरवताररूपत्वं च आस्तिकतमैर्भवद्भिरुच्यते, तर्हि भवतामिन्द्रे कः प्रद्वेषः? "इन्द्रो मायाभिः पुरुरूप ईयते", "ब्रह्मविष्णुरुद्रेन्द्रास्ते सर्वे संप्रसूयन्ते" इति कार्यत्वकारणत्वे हि ब्रह्मशिवयोरिवेन्द्रस्यापि श्रूयेते। अत इन्द्रस्य परमकारणत्वं तदुत्पत्तेः परमकारणभूतेन्द्रावताररूपत्वं चाश्रित्य इन्द्रशब्दस्य योग्यार्थत्वं किमिति नाभ्युपगम्यते॥ "प्रजापतिरिन्द्रमसृजत" इति तस्य सृज्यत्वश्रवणात् त्वाष्ट्रवधरूपब्रह्महत्याभिभूतत्वश्रवणात् तत्प्रायश्चित्तादिश्रवणाच्चेति चेत्—इन्द्रस्य जन्मवृत्तापकर्षयोगः कृष्णस्य वसुदेवगृहजन्मकालयवननिमित्तपलायनवत् लीला किं न स्यात्॥ इन्द्रस्य परमकारणवस्त्वैक्ये सति उत्तरनारायणप्रतिपाद्यत्वम्, तस्मिन् सति जन्मवृत्तापकर्ष[सं]योगस्य लीलात्वम्, तस्मिन् सति इन्द्रशब्दस्य योग्यार्थत्वम्, तस्मिन् सति इन्द्रस्य परमकारणवस्त्वैक्यमिति चक्रकाश्रयप्रसङ्गात्, एकस्मिन्नेव वाक्ये सोमवरुणयमादिवत् सृज्यत्वप्रतीतेश्च नैवमिति चेत्—तर्हि रुद्रस्य परमकारणवस्त्वैक्ये सति उत्तरनारायणप्रतिपाद्यान्तर्भावः, तेन जन्मकर्मापकर्षस्य लीलात्वम्, तेन शिवादिशब्दानां योग्यार्थत्वम्, तेन परमकारणवस्त्वैक्यमिति चक्रकप्रसङ्गात्, सोमवरुणादिवत् तस्मिन्नेव वाक्ये सृज्यत्वसंहार्यत्वश्रवणाच्च शिवादिशब्दानामयोग्यार्थत्वं दुष्परिहरम्। भगवज्जन्मनोऽवताररूपत्वे तु न चक्रकप्रसङ्गः; 'तस्माद्विराडजायत' इति कारणतयोक्तस्य परमपुरुषस्य महापुरुषशब्देनोत्तरनारायणे प्रत्यभिज्ञातस्य लक्ष्मीपतेः, 'अजायमानः' इत्यादिवाक्येनावतारस्य प्रतिपादितत्वात्॥

"सत्यं ज्ञानमनन्तं ब्रह्म", "आनन्दो ब्रह्म" इत्येवमादिः। न च व्युत्पत्तिसिद्धपरिनिष्पन्न-

कार्यकारणविषयशिवादिशब्दानां भिन्नार्थत्वात् नायोग्यार्थत्वमिति चेत्—किं कार्यविषयशिवादि-शब्दानां प्रसिद्धरुद्रपरत्वम् उत कारणविषयाणाम्? प्रथमे प्रसिद्धरुद्रस्याऽऽकाशादिवत् सृज्यत्वात् तद्व्यतिरिक्तविषयशिवादिशब्दानां योग्यार्थनारायणपदोपस्थापितविशेषपरत्वमवर्जनीयम् ॥ कारणविषय-शिवादिशब्दाः प्रसिद्धरुद्रपराः, कार्यविषयास्तु तदतिरिक्तविषया इति चेत्—कारणे(णविषये?)न्द्रशब्दः प्रसिद्धेन्द्रपरः, कार्यविषयेन्द्रशब्दस्तदतिरिक्तपर इति किं न स्यात् ॥ वृत्रवधादिकर्तरि इन्द्रशब्द-व्युत्पत्तिरिति चेत्—त्र्यक्षशूलपाण्यादिपर्यायत्वेन शिवादिशब्दव्युत्पत्तेः, "त्र्यक्षः शूलपाणिः पुरुषोऽ-जायत", "उमापतिः पशुपतिः श्री(शिति)कण्ठो ब्रह्मणः सुतः। उक्तवानिदमव्यग्रो ज्ञानं पाशुपतं शिवः" इति शूलपाण्यादिशब्दानां कार्यविषयतया प्रयोगाच्च कारणविषयशिवादिशब्दानां प्रसिद्धरुद्र-परत्वमयुक्तम्। कारणविषयाणां नारायणादिशब्दानां प्रसिद्धविष्णुपरत्वं तु युक्तम्; अवतीर्णस्य कारणस्य च धर्म्यैक्ये प्रमाणस्य दर्शितत्वादर्थभेदाभावात्। अर्थभेदे सति हि कार्यकारणविषयनारायणादिपरेषु कस्य प्रसिद्धार्थता, कस्य तदतिरिक्तविषयतेति विचारसंभवः। कार्यकारणभूतरुद्रधर्म्यैक्ये त्विन्द्रधर्म्यैक्य इव चक्रकापत्तिरवर्जनीयेत्युक्तम्। अतः कार्यकारणविषयशिवादिशब्दानामर्थभेदाङ्गीकारेण कारणविषय-शिवादिशब्दाः प्रसिद्धेतरार्थविषया इति नारायणमेवाभिदधति। नारायणादिशब्दानां प्रसिद्धार्थस्य योग्यतया अर्थभेदाभावात्, धर्म्यैक्यस्य प्रमाणप्रतिपन्नत्वाच्च। अतो **महोपनिषत्**प्रतिपादिते नारायण एव सद्ब्रह्मादिशब्दाः पर्यवस्यन्तीति भावः।

अथ कारणतया निर्दिष्टस्य ब्रह्मणः शङ्कितदोषव्यावर्तकं शोधकवाक्यमाह **सत्यमिति**। उक्तगुणविभूत्यादिविशिष्टस्य ब्रह्मणः पुरुषार्थत्वज्ञापनायाह **आनन्दो ब्रह्मेति**। आनन्दत्वं अनुकूलत्वम्। अनुकूलत्वं च स्वत इष्टत्वम्; तदपि इष्टसाधनत्व-निवर्त्यप्रातिकूलत्वाभ्यां विनाऽपी-ष्टत्वम्। तच्च विषयगतम्। तद्विषयज्ञानस्याप्यनुकूलत्वादानन्दत्वम्। भगवतः [1]मुक्तानां निरतिशयभोग्य-त्वेनानुकूलतया स्वरूपतो धर्मतश्चानन्दत्वम्। स्वविषयज्ञानस्य स्वरूपस्य च स्वात्मानं प्रत्यनुकूलत्वाच्चानन्दत्वम्। **इत्येवमादिः। औपनिषदः पदसमुदाय** इति पूर्वेणान्वयः।

एवमन्वितेषु वाक्येषु प्रस्तुतपुरुषार्थत्वोपयोगित्वेन कोऽर्थः प्रतिपन्नः; स च किमापातप्रतिपन्नः, उत तात्पर्यभूमिः? न प्रथमः; तस्य तात्त्विकत्वनिश्चयायोगात्। न द्वितीयः; प्रवृत्तिनिवृत्त्यभावेन तदयोगादिति शङ्कायाम्—प्रवृत्तिनिवृत्त्यन्वयः प्रामाण्यव्यापकः, अतस्तद्व्याप्यं प्रामाण्यं तद्विरहे न सिध्यतीति किमुच्यते; किं वा—प्रवृत्तिनिवृत्त्यन्वयः प्रयोजनव्यापकः, प्रयोजनञ्च प्रामाण्यव्यापकमिति प्रवृत्तिनिवृत्त्यन्वयविरहे तद्व्याप्यप्रयोजनाभावात् तद्व्याप्यं प्रामाण्यं न सिध्यतीत्युच्यत इति विकल्पमभिप्रेत्य प्रवृत्तिनिवृत्त्यन्वयस्य प्रामाण्यव्यापकत्वं नास्तीत्याह **नचेति**। **व्युत्पत्तिसिद्धेति** प्रथमसूत्रार्थानुवादः।

1 मुक्तानामिति। तावता अस्मान् प्रति कथं भगवत आनन्दत्वमिति चेत्—स्वर्गस्य प्राप्तिदशायामानन्दत्ववत् अस्माकं मुक्तिदशायामानन्दत्वमित्येतावतैव पुरुषार्थत्वसंभवात्। तत एव हेतोः श्रवणाद्यवसरेऽप्यनुकूलता। अपरोक्षानुभवदशायामत्रापि मुक्ताविव सुखत्वमस्त्येव।

**वस्तुप्रतिपादनसमर्थानां पदसमुदायानामखिलजगदुत्पत्तिस्थितिविनाशहेतुभूताशेषदोषप्रत्यनीकापरिमितोदारगुणसागरानवधिकातिशयानन्दस्वरूपे ब्रह्मणि समन्वितानां प्रवृत्तिनिवृत्तिरूपप्रयोजनविरहादन्यपरत्वम्; स्वविषयावबोधपर्यवसायित्वात् सर्वप्रमाणानाम्। न च प्रयोजनानुगुणा प्रमाणप्रवृत्तिः; प्रयोजनं हि प्रमाणानुगुणम्। न च प्रवृत्तिनिवृत्त्यन्वयविरहिणः प्रयोजनशून्यत्वम्; पुरुषार्थान्वयप्रतीतेः। तथा—स्वरूपपरेष्वपि 'पुत्रस्ते जातः, नायं सर्पः' इत्यादिषु हर्षभयनिवृत्तिरूपप्रयोजनवत्त्वं दृष्टम्॥**

---

सिद्धवस्तुनोऽपुरुषार्थत्वान्न शास्त्रं प्रतिपादयितुं शक्नोति। प्रतिपन्नेऽपि, न तत्र तात्पर्यम्, सिद्धेव्युत्पत्त्यभावादिति न वाच्यम्, सिद्धे वस्तुनि व्युत्पत्त्युपपादनादिति भावः। प्रमाणान्तरगोचरत्वप्रयुक्तान्यपरत्वशङ्काव्युदासाय उदाहृतकारणवाक्यप्रतिपन्नमर्थमाह **अखिलेति**। शोधकवाक्यप्रतिपन्नं कारणवाक्यैश्च सिद्धमर्थमाह **अशेषेति**। साङ्ख्याभिमतप्रकृतिपुरुषपरत्वं दुर्वचमिति भावः। पुरुषार्थपरत्वाभावादन्यपरत्वव्युदासायाह **आनन्दस्वरूप** इति। **अन्यपरत्वम्**—तात्पर्याभावः; ब्रह्मणि प्रामाण्याभाव इत्यर्थः। प्रवृत्तिनिवृत्त्यन्वयविरहे कथं प्रामाण्यमित्यत्राह **स्वविषयेति**। प्रमाणानि हि स्वस्वविषयावबोधे पर्यवस्यन्ति, न तु प्रवृत्तिनिवृत्त्योरित्यर्थः। अथ प्रवृत्तिनिवृत्त्यन्वयस्य प्रयोजनव्यापकत्वमभ्युपगम्य प्रयोजनस्य प्रामाण्यव्यापकत्वाभावमाह **न च प्रयोजनेति**। तदुपपादयति **प्रयोजनं हीति**। हिशब्दो हेतौ। यद्वा प्रयोजनस्य प्रामाण्यव्यापकत्वाभावप्रसिद्धिर्हिशब्दाभिप्रेता; यथा **तन्त्रटीकायाम्**, "न हि लोष्टं पश्यतस्तद्दर्शनं निष्प्रयोजनमिति सुवर्णदर्शनता कल्प्येत" इति। तदा हेतुत्वमर्थसिद्धम्। प्रयोजनव्यापकत्वं प्रवृत्तिनिवृत्त्यन्वयस्यास्तु; तेन तन्निवृत्तौ प्रयोजनमेव निवर्तते; न तु प्रामाण्यम्, प्रयोजनस्य प्रामाण्यव्यापकत्वाभावादित्यर्थः। **न चे**त्यत्र चशब्दो व्यापकद्वयनिषेधसमुच्चये। यथा प्रवृत्तिनिवृत्त्यन्वयस्य प्रामाण्यव्यापकत्वमयुक्तम्, तथा प्रयोजनस्य च प्रामाण्यव्यापकत्वमयुक्तमित्यर्थः। प्रत्यक्षादिषु प्रयोजनस्य प्रामाण्यव्यापकत्वाभावेऽपि शास्त्रे प्रयोजनस्य प्रामाण्यव्यापकत्वमस्तीति शङ्कायां प्रयोजनव्याप्यत्वं शास्त्रप्रामाण्यस्यास्तु, तथापि प्रयोजनस्य प्रवृत्तिनिवृत्त्यन्वयव्याप्यत्वं नास्तीत्याह **न च प्रवृत्तीति**। **वाक्यस्ये**त्यध्याहारः। कुत इत्यत्राह **पुरुषार्थान्वयप्रतीतेरि**ति। इदं पक्षविषयम्। प्रवृत्तिनिवृत्तिरूपत्वाभावेऽपि पुरुषार्थभूतस्यैव ब्रह्मणोऽभिधेयतयाऽन्वयप्रतीतेरित्यर्थः। **न चे**त्यत्र चशब्दो व्याप्यत्वनिषेधद्वयसमुच्चये। यथा प्रामाण्यस्य प्रवृत्तिनिवृत्त्यन्वयव्याप्यत्वं नास्ति, तथा प्रयोजनस्यापि प्रवृत्तिनिवृत्त्यन्वयव्याप्यत्वं नास्तीत्यर्थः। प्रामाण्यस्य प्रवृत्तिनिवृत्त्यन्वयव्याप्यत्वाभावः **स्वविषयावबोधे**त्यादिना सिद्धः। सपक्षत्वाभिमते लौकिकेऽपि सिद्धपरवाक्ये पुरुषार्थान्वयं दर्शयति **तथेति**। यथा प्रवृत्तिपरत्वं निवृत्तिपरत्वं वा न प्रयोजनपर्यवसायित्वम्, किन्तु पुरुषार्थपरत्वमेव—तथा प्रवृत्तिनिवृत्तिपरत्वं सिद्धवस्तुपरत्वं वा न प्रयोजनपर्यवसायित्वम्, अपि तु साध्येन वा सिद्धेन वा पुरुषार्थेनान्वितत्वमेव वाक्यस्य प्रयोजनपर्यवसायित्वमित्युक्तं भवति; **पुरुषार्थान्वयप्रतीतेरि**त्युक्तत्वात्। एवं सूत्राक्षरयोजनार्थं सङ्क्षेपेणार्थ उक्तः॥

अत्राऽऽह—न वेदान्तवाक्यानि ब्रह्म प्रतिपादयन्ति। प्रवृत्तिनिवृत्त्यन्वयविरहिणः शास्त्रस्याऽऽनर्थक्यात्। यद्यपि प्रत्यक्षादीनि वस्तुयाथात्म्यावबोधे पर्यवस्यन्ति, तथाऽपि शास्त्रं प्रयोजनपर्यवसाय्येव। न हि लोकवेदयोः प्रयोजनरहितस्य कस्यचिदपि वाक्यस्य प्रयोग उपलब्धचरः। न च किञ्चित् प्रयोजनमनुद्दिश्य वाक्यप्रयोगः श्रवणं वा संभवति। तच्च प्रयोजनं प्रवृत्तिनिवृत्तिसाध्येष्टानिष्टप्राप्तिपरिहारात्मकमुपलब्धम्, 'अर्थार्थी राजकुलं गच्छेत्', 'मन्दाग्निर्नाम्बु पिबेत्', "स्वर्गकामो यजेत", "न कलञ्जं भक्षयेत्" इत्येवमादिषु।

यत्पुनः सिद्धवस्तुपरेष्वपि, 'पुत्रस्ते जातः', 'नायं सर्पः रज्जुरेषा' इत्यादिषु हर्षभयनिवृत्तिरूपपुरुषार्थान्वयो दृष्ट इत्युक्तम्—तत्र किं पुत्रजन्माद्यर्थात् पुरुषार्थावाप्तिः, उत तज्ज्ञानात् इति विवेचनीयम्। सतोऽप्यज्ञातस्यार्थस्यापुरुषार्थत्वेन तज्ज्ञानादिति चेत्—तर्ह्यसत्यप्यर्थे ज्ञानादेव पुरुषार्थः सिध्यतीत्यर्थपरत्वाभावेन प्रयोजनपर्यवसायिनोऽपि शास्त्रस्य नार्थसद्भावे प्रामाण्यम्।

तस्मात् सर्वत्र प्रवृत्तिनिवृत्तिपरत्वेन ज्ञानपरत्वेन वा प्रयोजनपर्यवसानमिति कस्यापि वाक्यस्य परिनिष्पन्ने वस्तुनि तात्पर्यासंभवान्न वेदान्ताः परिनिष्पन्नं ब्रह्म प्रतिपादयन्ति॥

---

अथ तात्पर्यार्थं वक्तुं पूर्वपक्षं विस्तरेणावतारयति **अत्राहेति**। एतावत्यधिकरणार्थ उक्ते लब्धस्वदूष्यप्रसङ्गः पूर्वपक्षी आहेत्यर्थः। ब्रह्मणः शास्त्रप्रतिपाद्यत्वाभावं प्रतिजानीते **न वेदान्तेति**। सौत्रतच्छब्देन शास्त्रयोनित्वस्य परामृष्टत्वात् पूर्वपक्षिणा तदभावोऽपि प्रतिज्ञात इति हि ज्ञायते। प्रतिज्ञात(ज्ञा)मुपपादयति **प्रवृत्तिनिवृत्त्यन्वयविरहिण** इति। तदन्वयाभावे प्रतिपादनमेव न पूर्येतेति भावः। तथाच **वार्तिकम्**,—

"यावत् खलु प्रमातॄणां प्रवर्तननिवर्तने। शब्दा न कुर्वते तावन्न निराकाङ्क्षबोधनम्"

इति। **शास्त्रस्येति**। शासनाद्धि शास्त्रम्। शासनं च प्रवर्तननिवर्तनात्मकम्। तत्र **वार्तिकम्** —,

"प्रवृत्तिर्वा निवृत्तिर्वा नित्येन कृतकेन वा। पुंसां येनोपदिश्येत तच्छास्त्रं तूपपद्यते॥" इति।

पूर्वोक्तं प्रमाणानां स्वविषयावबोधित्वमाशङ्क्य तत् प्रमाणविशेषे व्यवस्थापयन् शास्त्रस्य प्रयोजनपर्यवसानावश्यम्भावमाह **यद्यपीति**। तदुपपादयति **न हीति**। न केवलमनुपलब्धिरेव, अनुपपत्तिरप्यस्तीत्याह **न च किञ्चिदिति**। **किञ्चित्**—स्वसंबन्धि परसंबन्धि वा, अल्पं प्रभूतं वा। वाक्यप्रयोगादेर्यत्नसाध्यत्वात् यत्नस्य च प्रयोजनेन विनाऽनुपपन्नत्वादित्यर्थः। वाक्यानां प्रयोजनपर्यवसायित्वादेव हि पुनरुक्तेः प्रयोजनाभावात् दूषणत्वम्। निष्प्रयोजनवाक्यप्रयोगः तच्छ्रवणं वाऽनुपपन्नं स्यात्; ततः किं प्रस्तुतस्य प्रयोजनपर्यवसायिनां वाक्यानां प्रवृत्तिनिवृत्तिपरत्वस्य; सिद्धपरत्वेऽपि हि प्रयोजनपर्यवसायित्वमुपपद्यत इत्यत्राह **तच्चेति**। प्रवृत्तिनिवृत्तिपरत्वेन लोकवेदयोः प्रयोगं दर्शयति **अर्थार्थीत्यादिना**। प्रवृत्तिनिवृत्तिपरत्वाभावेऽपि प्रयोजनपरं वाक्यं दृष्टमिति शङ्कायां सिद्धपरत्वेनोक्तं वाक्यं दूषयितुमनुवदति **यत्पुनरिति**। विकल्पयति **तत्रेति**। प्रथमकोट्यनुपपत्त्या द्वितीयशिरोऽभ्युपगमं शङ्कते **सतोऽपीति**। दूषयति **तर्हीति**। तस्मादिति पूर्वपक्षोपसंहारः॥

जगन्मायावादिपक्षौ द्वौ विद्येते। तत्रैको निष्प्रपञ्चीकरणनियोगवादः, अन्यो ध्याननियोगवादः। एतन्मतद्वयम्, ध्याननियोगवादिमुखेन शाङ्करादिमतं च दूषितवन्तमधिकरण-

**अत्र कश्चिदाह—वेदान्तवाक्यान्यपि कार्यपरतयैव ब्रह्मणि प्रमाणभावमनुभवन्ति ॥ कथम् ॥ निष्प्रपञ्चमद्वितीयं ज्ञानैकरसं ब्रह्म अनाद्यविद्यया सप्रपञ्चतया प्रतीयमानं निष्प्रपञ्चं कुर्यादिति ब्रह्मणः प्रपञ्चप्रविलयद्वारेण विधिविषयत्वमिति ॥ कोऽसौ द्रष्टृदृश्यरूपप्रपञ्चप्रविलयद्वारेण साध्यज्ञानैकरसब्रह्मविषयो विधिः॥ "न दृष्टेर्द्रष्टारं पश्येः। न मतेर्मन्तारं मन्वीथाः" इत्यादिः। द्रष्टृदृश्यरूपभेदशून्यं दृशिमात्रं ब्रह्म कुर्यादित्यर्थः। स्वतस्सिद्धस्यापि ब्रह्मणो निष्प्रपञ्चतारूपेण कार्यत्वमविरुद्धमिति ॥**

**तदयुक्तम्—नियोगवाक्यार्थवादिना हि नियोगः नियोज्यविशेषणं विषयः करणम् इति-कर्तव्यता प्रयोक्ता च वक्तव्याः। तत्र हि नियोज्यविशेषणमनुपादेयम्। तच्च निमित्तं फलमिति**

---

पूर्वपक्षिणं प्रति सिद्धान्तं वक्ष्यन् इदानीं **निष्प्रपञ्चीकरणनियोगवादं** प्रस्तौति **अत्र कश्चिदाहे**ति। तं प्रतिजानीते **वेदान्ते**ति। कार्यपरस्य वाक्यस्य सिद्धवस्तुनि प्रमाणभावः कथमित्यभिप्रयन्नाह **कथमि**ति। उत्तरमाह **निष्प्रपञ्च**मिति। **कुर्यादित्यत्र इति**शब्दः प्रकारपरः। निष्प्रपञ्चीकरणविधिना ब्रह्मणः कोऽन्वय इत्यपेक्षायामन्वयमाह **ब्रह्मण** इति। विषयत्वेनान्वय इत्यर्थः। सिद्धस्वरूपस्य ब्रह्मणो विधिविषयत्वानुपपत्तिशङ्कापरिहारार्थं **प्रपञ्चप्रविलयद्वारेणे**त्युक्तम्। अत्र सिद्धस्य साध्यत्वमाकार-भेदादविरुद्धमिति गर्भितम्। इह त्वि**ति**शब्दः समाप्तौ। **कथ**मित्यस्योत्तरत्वेन इत्थमिति वाऽर्थः। विधिं दर्शयितुमाकाङ्क्षामुत्थापयति **कोऽसा**विति। कतिपयनाशेऽप्यशक्तस्य विश्वप्रपञ्चनाशनविधिरशक्य इत्यभिप्रायः। **विधिः**—विधिवाक्यम्। आविद्यकस्य प्रपञ्चस्य बुद्धिनिवृत्तिमात्ररूपो विलयः [1]शक्य इत्यभिप्रायेण वाक्यमुपादत्ते **न दृष्टे**रिति। दृष्टिव्यतिरिक्तत्वाविशेषात् ज्ञेयनिषेधोऽपि फलितः। **आदिशब्दो**पात्तैः श्रुत्यन्तरैः कण्ठोक्तश्च। आत्यन्तिकनिवृत्तेरसिद्धत्वाद्विधेयत्वं च युक्तमिति भावः। **शून्यशब्दे**नाऽऽत्यन्तिकनिवृत्तिर्विवक्षिता। **मात्रशब्देन** द्रष्टृदृश्यकल्पकाविद्यानिवृत्तिः। तत एवात्यन्तिकत्वसिद्धिः। सिद्धस्य ब्रह्मणो विधेयत्वं कथमिति शङ्कायां **प्रपञ्चप्रविलयद्वारेणे**ति पूर्वं विवक्षितमर्थं विस्तरेणाह **स्वतः सिद्धस्यापी**ति। यद्वा पूर्वं भावार्थव्यतिरिक्तस्य विधिविषयत्वानुपपत्तिः परिहृता; इह तु **स्वतःसिद्धस्ये**त्यादिना प्रपञ्चविलयद्वारेण सिद्धरूपस्यापि विधिविषयत्वानुपपत्तिः परिहृतेति भिदा। भावार्थादन्यत्वं स्वर्गादेरप्यस्ति; न तस्य सिद्धत्वम्। साध्यं हि तत् ॥

अधिकरणपूर्वपक्षी मीमांसकस्तं दूषयति **तदयुक्त**मिति। कथमित्यत्राह **नियोगे**ति। विशिषन् (विषिण्वन् ?)हि विषय इति व्युत्पत्त्या विषयो यागादिः। कृतिसाध्यापूर्वप्रतिपत्तिवेलायां कृत्यवच्छेदकत्वेन स विषयः; स एव कार्यनिष्पत्तौ करणम्। **वक्तव्याः**। न त्वया वक्तुं शक्यमिति भावः। प्रथमं नियोज्यविशेषणं दूषयितुमाह **तत्रे**ति। **तत्र**—तेषु वक्तव्येषु। **नियोज्यविशेषण-मनुपादेयम्**। **उपादेयम्**—विधेयम्; तद्व्यतिरिक्तमित्यर्थः। विकल्प्य दूषयितुं विशेषणद्वैविध्यमाह **तच्चे**ति।

---

1 ननु न पश्येरिति बुद्धिनिवृत्तेरेवोक्तत्वात् प्रपञ्चनिवृत्तिपरत्वमस्य वाक्यस्य कथमित्यत्राह आविद्यकस्येति। यत् अविद्याकार्यम्, तत् तज्ज्ञाननिवर्तकसामग्रीनिवर्त्यम्, रजतज्ञाननिवर्तक-शुक्तितत्त्वज्ञानेन रजतनिवृत्तिदर्शनात्। रजतस्य रजतज्ञानकारणभूताविद्याकार्यतया अविद्यानिवृत्त्यैव रजतज्ञाननिवृत्तेर्जायमानतया तद्वदेव रजतनिवृत्त्यवश्यम्भावात्। प्रपञ्चस्य वास्तवत्वे तु न ज्ञाननिवृत्तिमात्रेण विलयः सुवचः। दृष्टिरेव सृष्टिरिति पक्षे तु बुद्धिनिवृत्तिरेव सर्वनिवृत्तिः।

द्विधा। अत्र किं नियोज्यविशेषणम्, तच्च किं निमित्तं फलं वेति विवेचनीयम्। ब्रह्मस्वरूपयाथात्म्यानुभवश्चेत् नियोज्यविशेषणम्—तर्हि न तत् निमित्तम्; जीवनादिवत् तस्यासिद्धत्वात्। निमित्तत्वे च तस्य नित्यत्वेन अपवर्गोत्तरकालमपि जीवननिमित्ताग्निहोत्रादिवत् नित्यतद्विषयानुष्ठानप्रसङ्गः। नापि फलम्; नैयोगिकफलत्वेन स्वर्गादिवदनित्यत्वप्रसङ्गात्॥

कश्चात्र नियोगविषयः? ब्रह्मैवेति चेत्—न; तस्य नित्यत्वेनाभव्यरूपत्वात्, अभावार्थत्वाच्च॥ निष्प्रपञ्चं ब्रह्म साध्यमिति चेत्—साध्यत्वेऽपि फलत्वमेव। अभावार्थत्वान्न विधिविषयत्वम्। साध्यत्वं च कस्य। किं ब्रह्मणः उत प्रपञ्चनिवृत्तेः। न तावत् ब्रह्मणः; सिद्धत्वात्; अनित्यत्व-

---

ततः किमित्यत्राह अत्रेति। अत्र—निष्प्रपञ्चीकरणनियोगे। नियोज्यविशेषणस्वरूपं शङ्कते ब्रह्मस्वरूपेति। निमित्ततां दूषयति—तर्हीति। कुत इत्यत्राह जीवनादिवदिति। 'यावज्जीवमग्निहोत्रं जुहोति' इत्यत्र जीवनस्य सिद्धत्वात् यथा निमित्तत्वम्, न तथेत्यर्थः। पुत्रजन्मादिवत् यदा सिध्येत्, तदा निमित्तं भविष्यतीत्यत्राह निमित्तत्वे चेति॥ अपवर्गोत्तरकालमपि नानुष्ठानप्रसङ्गः; यावन्निमित्तमनुष्ठाननियमाभावात्। परिकरशून्येषु तन्नियमाभावो दृष्टः। तस्मात् करणकलेबरविरहेण न तदानीमनुष्ठानमिति चेत्—हन्त स्वदूषणमेव स्वयमाविष्करोषि। तथाहि—सप्रपञ्चतयाऽनुभवस्य यथार्थानुभवरूपत्वाभावादपवर्गोत्तरभाव्येव याथार्थ्यानुभवः। तदानीं करणकलेबराभावेऽपि विषयानुष्ठानं शक्यम्, न वा? अशक्यत्वे विधेयत्वमेव न स्यात्। अतः शक्यमिति वक्तव्यम्। अतो निमित्तस्य नित्यत्वात् नैमित्तिकस्य नित्यं शक्यत्वाच्च नित्यं तदनुष्ठानप्रसङ्ग इति भावः। फलतया विशेषणत्वे दूषणमाह नापीति।

नियोगविषयानुपपत्तिं वक्तुमाह कश्चेति। शङ्कते ब्रह्मैवेति। दूषयति नेति। हेतुमाह तस्येति। अभव्यरूपत्वात्—असाध्यत्वात्। अभावार्थत्वाच्च—"भावार्थाः[1] कर्मशब्दाः"—क्रियारूपत्वाभावादित्यर्थः। साध्यत्वं फलस्याप्यस्तीति तद्व्यावर्तकं भावार्थत्वम्। तदुभयाभावादिति यावत्। निष्प्रपञ्चताकारेण साध्यत्वं शङ्कते निष्प्रपञ्चमिति। प्रतिवदति साध्यत्वेऽपीति। फलत्वमेवेति। विषयत्वं चेत्—फलव्यतिरिक्तत्वं स्यात्। फलव्यतिरिक्तत्वाभावाद्विषयत्वमयुक्तमिति तात्पर्यम्। हेत्वन्तरं कण्ठोक्त्या दर्शयन् विषयत्वं दूषयति अभावार्थत्वान्न विधिविषयत्वमिति। विशिष्टस्य विषयत्वानुपपत्तिरुक्ता; अथ विशेष्यांशस्य विशेषणांशस्य च विषयत्वानुपपत्तिं वक्ष्यन् विकल्पयति साध्यत्वं चेति। यद्वा—विशिष्टस्य साध्यत्वाभ्युपगमेन विषयत्वं दूषितम्; अथ विशिष्टस्य साध्यत्वं दूषयितुं विकल्पयति साध्यत्वं चेति। विशिष्टस्य साध्यत्वानुपपत्तिर्हि विशेषणस्य विशेष्यस्य उभयस्य च साध्यत्वानुपपत्त्या स्यात्। तत्र उभयस्येति विकल्पानुक्तिः शिरोद्वयेन तुल्यदूषणत्वात्। प्रथमं दूषयति न तावदिति। कुत इत्यत्राह सिद्धत्वादनित्यत्वप्रसक्तेश्चेति। सिद्धत्वान्न साध्यत्वम्,

---

1 भावार्थो धात्वर्थः। एवमेव वक्तव्ये, "भावार्थाः कर्मशब्दाः। तेभ्यः क्रिया प्रतीयेत। एष ह्यर्थो विधीयते" इति जैमिनिसूत्रस्मारणाय भावार्थाः कर्मशब्दा इत्युक्तम्। कर्मेति शब्दो येषां वाचकतयाऽस्ति, ये क्रियापदबोध्याः—तिङन्तबोध्याः, ते भावार्था भावरूपा अर्थाः साध्यावस्थापन्नाः। नामाख्यातमध्ये नामार्थास्तु सिद्धावस्थापन्नाः। भावार्थेभ्य एव क्रिया—फलोत्पादना वाक्येभ्यः प्रतीयेत। एष हि भावार्थो लिङादिविधिविषयी भवतीति सूत्रार्थः टीकाभिमतो भाव्यः। भावो भावना क्रियेति। भावार्थाः भावनान्वय्यर्था इति मीमांसकरीतिः। तत्र [illegible] स्पष्टः लाभः। वैयाकरणानां तु भावपदं धात्वर्थपरमेव।

प्रसक्तेश्च । अथ प्रपञ्चनिवृत्तेः—न तर्हि ब्रह्मणः साध्यत्वम् ॥ प्रपञ्चनिवृत्तिरेव विधिविषय इति चेत्—न ; तस्याः फलत्वेन विधिविषयत्वायोगात् । प्रपञ्चनिवृत्तिरेव हि मोक्षः ; स च फलम् । अस्य च नियोगविषयत्वे—नियोगात्प्रपञ्चनिवृत्तिः, प्रपञ्चनिवृत्त्या नियोगः इतीतरेतराश्रयत्वम् ॥

अपिच—किं निवर्तनीयः प्रपञ्चो मिथ्यारूपः, सत्यो वा । मिथ्यारूपत्वे ज्ञाननिवर्त्यत्वादेव नियोगेन न किञ्चित् प्रयोजनम् ॥ नियोगस्तु निवर्तकज्ञानमुत्पाद्य तद्द्वारेण प्रपञ्चस्य निवर्तक इति चेत्—तत् स्ववाक्यादेव जातमिति नियोगेन न प्रयोजनम् । वाक्यार्थज्ञानादेव ब्रह्मव्यतिरिक्तस्य कृत्स्नस्य मिथ्याभूतस्य प्रपञ्चस्य बाधितत्वात् सपरिकरस्य नियोगस्यासिद्धिश्च । प्रपञ्चस्य निवर्त्यत्वे प्रपञ्चनिवर्तको नियोगः किं ब्रह्मस्वरूपमेव, उत तद्व्यतिरिक्तः । यदि ब्रह्मस्वरूपमेव—निवर्तकस्य नित्यतया निवर्त्यप्रपञ्चसद्भाव एव न संभवति । नित्यत्वेन नियोगस्य विषयानुष्ठानसाध्यत्वं च न घटते । अथ ब्रह्मस्वरूपव्यतिरिक्तः—तस्य कृत्स्नप्रपञ्चनिवृत्तिरूपविषयानुष्ठानसाध्यत्वेन प्रयोक्ता च नष्ट इत्याश्रयाभावादसिद्धिः । प्रपञ्चनिवृत्तिरूपविषयानुष्ठानेनैव ब्रह्मस्वरूपव्यतिरिक्तस्य कृत्स्नस्य निवृत्तत्वान्न नियोगनिष्पाद्यं मोक्षाख्यं फलम् ।

---

साध्यत्वाङ्गीकारे तु भावरूपत्वे सति साध्यत्वादनित्यत्वप्रसक्ते(क्ति ?)श्चेत्यर्थः । द्वितीयं शङ्कते **अथेति** । दूषयति **न तर्हीति** । प्रपञ्चनिवृत्तेः साध्यत्वे ब्रह्मणः साध्यत्वाभावान्न विधिविषयत्वमित्यर्थः । प्रपञ्चनिवृत्तेर्विधिविषयत्वमाशङ्क्य दूषयति **प्रपञ्चेत्यादिना** । तस्याः फलत्वमुपपादयति **प्रपञ्चनिवृत्तिरेव हीति** । प्रपञ्चनिवृत्तिर्मोक्षोऽस्तु, ततः किं विषयत्वानुपपत्तेरित्यत्राह **स चेति** । प्रपञ्चनिवृत्तेर्मोक्षरूपत्वात् मोक्षस्य च फलत्वात् फलभूताया न विषयत्वमित्यर्थः । दूषणान्तरमाह **अस्य चेति** । अस्या इति वक्तव्येऽपि फलत्वविवक्षया अस्येत्युक्तिः । फलत्वं विषयत्वं चेत्याकारद्वयाभ्युपगमे प्रपञ्चनिवृत्तिः फलत्वान्नियोगसाध्या, विषयत्वात् प्रपञ्चनिवृत्त्या नियोगसिद्धिरित्यन्योन्याश्रय इत्यर्थः ॥ निष्प्रपञ्चीकरणपक्षे मुखान्तरेण दूषणमाह **अपि चेति** । यद्वा[1] नियोगविषयदूषणेनान्योन्याश्रयेण नियोगश्च दूषितो भवति ; मुखान्तरेणापि नियोगं दूषयति—**अपि चेति** । दूषयितुं विकल्पयति **किमिति** । प्रथमं दूषयति **मिथ्येति** । साफल्यं शङ्कते **नियोगस्त्विति** । दूषयति । **तदिति** । **स्ववाक्यात्**—प्रपञ्चमिथ्यात्वब्रह्मनिर्विशेषत्वपरवाक्यादित्यर्थः । नियोगस्य निष्फलत्वदूषणोक्त्या नियोज्यविशेषणं च दूषितं भवति ; नियोगसाध्यफलस्यैव फलतया नियोज्यविशेषणत्वात् , इह तदयोगाच्च । दूषणान्तरमाह **वाक्यार्थज्ञानादेवेत्यादिना** । पूर्वं विकल्पितशिरोद्वये द्वितीयं शिरो दूषयितुमाह **प्रपञ्चस्येति** । प्रपञ्चस्य सत्यत्वेन नियोगनिवर्त्यत्व इत्यर्थः । **किमित्यादिना** विकल्प्य प्रथमं दूषयति **यदीत्यादिना** । द्वितीयं दूषयितुं तदभ्युपगमं शङ्कते **अथेति** । दूषयति **तस्येति** । **तस्येत्यादिना नष्ट इत्यन्तेन** प्रयोक्तृदूषणं च कृतं भवति । **प्रपञ्चनिवृत्तीत्यादिना** प्रपञ्चसत्यत्वेऽपि फलाभावोक्तिमुखेन नियोगो

---

1 यद्वेति । अपिचेति ग्रन्थोऽपि नियोगस्यैव दूषणमित्याशयेनैवमवतारिका । कथं विषयदूषकस्य पूर्ववाक्यस्य नियोगदूषकत्वमित्यत्राह नियोगविषयेति । अत्र पूर्वदूषितांशदूषकत्वस्यापि प्रतीयमानत्वेऽपि विषयः करणमितिकर्तव्यतेति प्राङ्निर्दिष्टक्रमेण दूषणैदम्पर्यं यावत्संभवं ग्रहीतुमुचितमिति भाष्यार्थदर्पणगतिः ।

किञ्च प्रपञ्चनिवृत्तेर्नियोगकरणस्य इतिकर्तव्यताऽभावात्, अनुपकृतस्य च करणत्वायोगाच्च करणत्वम् ॥ कथमितिकर्तव्यताऽभाव इति ॥ इत्थम्। अस्येतिकर्तव्यता भावरूपा, अभावरूपा वा। भावरूपा च करणशरीरनिष्पत्ति-तदनुग्रहकार्यभेदभिन्ना। उभयविधा च न संभवति। न हि मुद्गराभिघातादिवत् कृत्स्नस्य प्रपञ्चस्य निवर्तकः कोऽपि दृश्यत इति दृष्टार्था न संभवति। नापि निष्पन्नस्य करणस्य कार्योत्पत्तावनुग्रहः संभवति; अनुग्राहकांशसद्भावेन कृत्स्नप्रपञ्च-निवृत्तिरूपकरणस्वरूपासिद्धेः। ब्रह्मणोऽद्वितीयत्वज्ञानं प्रपञ्चनिवृत्तिरूपकरणशरीरं निष्पादयतीति चेत्—तेनैव प्रपञ्चनिवृत्तिरूपो मोक्षः सिद्ध इति न करणादिनिष्पाद्यमवशिष्यत इति पूर्वमेवोक्तम्। अभावरूपत्वे चाभावादेव न करणशरीरं निष्पादयति। नाप्यनुग्राहकः। अतो निष्प्रपञ्चब्रह्मविषयो विधिर्न संभवति ॥

अन्योऽप्याह—यद्यपि वेदान्तवाक्यानां न परिनिष्पन्नब्रह्मस्वरूपपरतया प्रामाण्यम्, तथापि ब्रह्मस्वरूपं सिद्ध्यत्येव। कुतः। ध्यानविधिसामर्थ्यात्। एवमेव हि समामनन्ति,

---

दूषितः। करणमितिकर्तव्यतां च दूषयति **किञ्चेति**। इतिकर्तव्यताया अभावं विवरितुमाह **कथमिति**। प्रतिवक्ति **इत्थमिति**। भावरूपत्वपक्षे द्वैविध्यमाह **भावरूपा चेति**। करणशरीर-निष्पत्तिः अवघातवत् प्रोक्षणवच्च दृष्टादृष्टार्थतया द्विधेति चाभिप्रेतम्। ततः किमित्यत्राह **उभयविधेति**। **उभयविधा**—निष्पादिका अनुग्राहिका च। निष्पादकपक्षे प्रथमं दृष्टार्थत्वे दूषणमाह **न हीति**। कृत्स्नप्रपञ्चनिवृत्तिरूपकरणशरीरनिष्पादकाभावरूपा दृष्टार्था न संभवतीत्यर्थः। अदृष्टार्था अस्ति चेत्—प्रपञ्चसत्यत्वप्रसङ्गः, अप्रामाणिकत्वं चेति स्फुटमिति न कण्ठोक्तम्। अथानुग्रहं दूषयति **नापीति**। तदसंभवमुपपादयति **अनुग्राहकेति**। अनुग्राहको हि करणानन्तरभावी; कृत्स्नप्रपञ्च-निवृत्तिरूपकरणानन्तरमनुग्राहकस्तिष्ठति चेत्—करणमेव न सिद्धं स्यात्। यदा करणसिद्धिः, न तदानीमनुग्राहको विद्यत इत्यनुग्राहकासंभव इत्यर्थः। इतिकर्तव्यतासद्भावमुखेन करणसिद्धिं शङ्कते **ब्रह्मण इति**। दूषयति **तेनैवेति**। **करणादिनिष्पाद्यम्**—करणनिष्पाद्यो नियोगः, नियोगनिष्पाद्यं फलमिति आदिशब्दार्थः। करणं चेत्—स्वकार्यकरं स्यात्। तदभावात् करणत्वमयुक्तमित्यर्थः। अथाभावरूपेतिकर्तव्यतां दूषयति **अभावरूपत्व इति**। **अभावादेव**—अभावरूपेतिकर्तव्यताया अप्रामाणिकत्वादेवेत्यर्थः। निवृत्तिरूपशमादीनां न अभावरूपेतिकर्तव्यतात्वम्; तेषां ज्ञाननिष्पादकत्वेन प्रपञ्चनिवृत्तिरूपकरणनिष्पादकत्वायोगादिति भावः। अत्र **अभावादेवे**त्येवकारेण पूर्वमदृष्टार्थभाव-रूपेतिकर्तव्यतायाः अप्रामाणिकत्वस्याभिप्रेतत्वं गम्यते। दूषणमुपसंहरति-**अत इति**। **विधिः**—नियोगः; निष्प्रपञ्चीकरणविषयो नियोग इत्यर्थः। अतः प्रवर्तकवाक्येनैव ब्रह्मस्वरूपसिद्धिरिति वक्तुं न शक्यमिति फलितम् ॥

अथ **ध्याननियोगवादि**पक्षमुपक्षिपति **अन्योऽप्याहेति**। ब्रह्मणि वेदान्तवाक्यानां स्वातन्त्र्येण प्रामाण्याभावमङ्गीकृत्याह **यद्यपीति**। तर्हि कथं तत्सिद्धिरित्यत्राह **तथापीति**। व्याघाताभिप्रायेणाह **कुत इति**। हेतुमाह **ध्यानविधीति**। ध्यानविधिः कः? तस्य सामर्थ्यं कथमित्यत्राह **एवमेव हीति**। यथा वाक्यानां ध्यानपरत्वेऽपि परिनिष्पन्नं सिध्यति, तथैवेत्यर्थः। ध्यानविधिवाक्यान्याह

"आत्मा वा अरे द्रष्टव्यः श्रोतव्यो मन्तव्यो निदिध्यासितव्यः", "य आत्माऽपहतपाप्मा—सोऽन्वेष्टव्यः स विजिज्ञासितव्यः", "आत्मेत्येवोपासीत", 'आत्मानमेव लोकमुपासीत" इति। अत्र ध्यानविषयो हि नियोगः स्वविषयभूतं ध्यानं ध्येयैकनिरूपणीयमिति ध्येयमाक्षिपति। स च ध्येयः स्ववाक्यनिर्दिष्ट आत्मा। स किंरूप इत्यपेक्षायां तत्स्वरूपविशेषसमर्पणद्वारेण "सत्यं ज्ञानमनन्तं ब्रह्म", "सदेव सोम्येदमग्र आसीत्" इत्येवमादीनां वाक्यानां ध्यानविधिशेषतया प्रामाण्यमिति विधिविषयभूतध्यानशरीरानुप्रविष्टब्रह्मस्वरूपेऽपि तात्पर्यमस्त्येव। अतः

---

आत्मा वा इति। [1]निदिध्यासितव्य इत्युपासनमुक्तम्; (?) द्रष्टव्य इति तस्य दर्शनरूपत्वम्। विजिज्ञासितव्य इति सामान्यशब्दः। आत्मेत्येवेत्युपासनमुक्तम्। आत्मानमिति स्वस्य जगत्तादात्म्योपासनम्। सामर्थ्यं दर्शयति अत्रेति। ध्येयमाक्षिप्तमस्तु; [2]तत् ब्रह्मेति कथं ज्ञायत इत्यत्राह स च ध्येय इति। आकाङ्क्षायां संनिहितमेव योग्यं चेत्, तत् परित्यक्तुं न युक्तम्; गामानयेत्यादिषु हि तथा दृष्टमिति भावः। स्वरूपमात्रप्रतिपादकानां कारणशोधकवाक्यानामपि विध्यपेक्षितसमर्पकत्वेनैव प्रामाण्यमित्याह स किंरूप इति। शोधितस्वरूपस्य ध्येयत्वात् सत्यादिवाक्यं प्रथममुपात्तम्। तदनुगुणार्थतया सदेवेति कारणवाक्यं पश्चादुदाहृतम्। ध्यानशरीरानुप्रविष्टेति। "अर्थेनैव विशेषो हि निराकारतया धियाम्" इति भावः। अस्त्येवेति। स्ववाक्यप्रतिपन्नस्वर्गादिफलविषयस्य 'यस्मिन्नोष्णम्' इत्यादिवाक्यस्येव विधिशेषतया प्रामाण्यमिति भावः। ध्येयब्रह्मस्वरूपं हि ध्यानशरीरानुप्रविष्टम्। प्रपञ्चमिथ्यात्वस्य ध्यानशरीराननुप्रवेशात् कथं भेदनिषेधे तात्पर्यमित्यत्राह अत इति। अतः—विधिशेषभूतस्य सिद्धार्थे तात्पर्यसद्भावात्। अद्वितीयं ब्रह्म ध्येयम्। भेदनिषेधश्रुतयश्च ब्रह्मणोऽद्वितीयत्वपराः; ब्रह्मणोऽद्वितीयत्वमेव भेदमिथ्यात्वम् इति ध्यानशरीरानुप्रविष्टे

---

1 ध्यानविधित्वेन भाष्यदर्शितेषु वाक्येषु ध्यानविधायिपदानि दर्शयन् वैलक्षण्यमप्याह नीत्यादिना। ननु प्रथमवाक्ये निदिध्यासितव्य इत्यस्यैव विधायकत्वे द्रष्टव्य इति किमुच्यते; तदेवास्तु विधायकमित्यत्राह, 'द्रष्टव्य इति तस्य दर्शनरूपत्वम्' इति। तस्य ध्यानस्य भावनाधेयवैशद्यस्य स्वयमेव संपद्यमानत्वात् तदेवानूद्यत इति भावः। तदुक्तं भामत्याम्—(भा० प्र०) 'न चौपनिषदात्मविषयं भावनाधेयवैशद्यं विधेयम्, तस्य उपासनाविधानादेव वाजिनवत् अनुनिष्पादित्वात्' इति। द्वितीयवाक्ये सन्नन्तत्वसाम्यात् उत्तरत्वाच्च ध्यानमेव ज्ञाधातुनोच्यत इत्याह सामान्यशब्दः इति। दर्शनरूपत्वम्—विशदत्वम्। अथ ध्याननियोगनिर्मलीकृतमनोजन्येनात्मदर्शनेन मोक्षस्यैतत्पक्षे भाष्ये प्रपञ्चयिष्यमाणत्वात् द्रष्टव्य इति पदं तद्दर्शनपरं किं न स्यादिति चेत्—अत एव भावप्रकाशिकायामेतट्टीकावाक्यं प्रक्षिप्तमिति भावितम्। फलभूतसाक्षात्कारपरत्वे तव्यप्रत्ययस्यात्यन्तास्वारस्यात् वैशद्याश्रयध्यानमेव विधानार्हं इत्यर्थस्तन्मतेऽपि युक्त इत्याशयेनेदं वाक्यं प्रवृत्तमिति स्थितस्येह भावो भाव्यः।

2 ध्यानविधिबलात् ब्रह्मसिद्धिः प्रागुक्ता। सा कथम्, आत्मन एवात्रोक्तेति शंकायाम्, ब्रह्मैवायमात्मेत्युपपादनस्य करिष्यमाणस्य शेषतयैव स चेति वाक्यं प्रवृत्तमिति ज्ञापनाय, 'तत् ब्रह्मेति कथं ज्ञायते' इत्यवतरणं कृतम्।

'एकमेवाद्वितीयम्', 'तत् सत्यं स आत्मा तत्त्वमसि श्वेतकेतो', 'नेह नानाऽस्ति किञ्चन' इत्यादिभिर्ब्रह्मस्वरूपमेकमेव सत्यम्, तद्व्यतिरिक्तं सर्वं मिथ्येत्यवगम्यते। प्रत्यक्षादिभिर्भेदावलम्बिना च कर्मशास्त्रेण भेदः प्रतीयते, भेदाभेदयोः परस्परविरोधे सति अनाद्यविद्यामूलत्वेनापि भेदप्रतीत्युपपत्तेः अभेद एव परमार्थ इति निश्चीयते। तत्र ब्रह्मध्याननियोगेन तत्साक्षात्कारफलेन निरस्तसमस्ताविद्याकृतविविधभेदाद्वितीयज्ञानैकरसब्रह्मभावरूपमोक्षः प्राप्यते। न च वाक्यात् वाक्यार्थज्ञानमात्रेण ब्रह्मभावसिद्धिः; अनुपलब्धेः; विविधभेददर्शनानुवृत्तेश्च। तथा च सति [1]श्रवणादिविधानमनर्थकं स्यात्॥

अथोच्येत—'रज्जुरेषा न सर्पः' इत्युपदेशेन सर्पभयनिवृत्तिदर्शनात् रज्जुसर्पवत् बन्धस्य च (स्यापि) मिथ्यारूपत्वेन ज्ञानबाध्यतया तस्य वाक्यजन्यज्ञानेनैव निवृत्तिर्युक्ता, न नियोगेत। नियोगसाध्यत्वे मोक्षस्यानित्यत्वं स्यात्, स्वर्गादिवत्। मोक्षस्य नित्यत्वं हि सर्ववादिसंप्रतिपन्नम्।

---

भेदनिषेधे तात्पर्यमस्तीत्यर्थः। भेदग्राहिप्रमाणविरोधात् न शास्त्रमद्वितीयं ब्रह्म प्रतिपादयति, 'आदित्यो यूपः' इत्यादिवदिति शङ्कां परिहर्तुं प्रत्यक्षादिभिर्विरुद्धप्रतीतिमभ्युपगच्छति **प्रत्यक्षादिभिरिति**। शङ्कां परिहरति **भेदाभेदयोरिति**। भेदप्रतीतेरन्यथासिद्धत्वादनन्यथासिद्धशास्त्रावगतमैक्यं तात्त्विकमित्यर्थः। तर्हि—विषयः करणं प्रयोक्ता फलमित्यादि वक्तव्यम्, नियोगनिवर्त्यत्वे प्रपञ्चसत्यत्वप्रसङ्गः, नित्यप्राप्तत्वात् ब्रह्मभावो न फलमित्यत्राह **तत्रेति**। **ध्याननियोगेनेति** ध्यानस्य विषयत्वमुक्तम्। नियोगान्मोक्षश्चेत्, न ज्ञानान्मोक्ष इति शङ्कां व्युदस्यति **तत्साक्षात्कारफलेनेति**। नियोगस्योपायत्वं ज्ञानद्वारकमित्यर्थः। **निरस्तेत्यादिना** अविद्यानिवृत्तिः फलमित्युक्तम्। तदेव फलतया नियोज्यविशेषणम्, उपासकः प्रयोक्ता, शमादिः इतिकर्तव्यतेत्यादि अस्माकं सिद्धमिति भावः। वाक्यार्थज्ञानमात्रान्मोक्षवादिनं दूषयति **न चेति**। प्रत्यक्षविरोधमाह **अनुपलब्धेर्विविधभेददर्शनानुवृत्तेश्चेति**। शास्त्रविरोधमाह **तथा च सतीति**॥

अथ साक्षान्मायावादिना[2] स्वमतं पश्चाद्विवक्षता प्रथमं ध्याननियोगवादिपक्षप्रतिक्षेपमाशङ्कते **अथोच्येतेति**। बन्धस्य ज्ञानमात्रनिवर्त्यत्वं सोपपत्तिकमाह **रज्जुरेषेति**। निवर्त्यमिथ्यात्वं ह्युभयसंमतम्। अत एव नियोगनैरपेक्ष्यमाह **नेति**। अन्यथाऽनिष्टमाह **नियोगेति**। मोक्षानित्यत्वस्य तदनिष्टतामाह **मोक्षस्येति**।

---

1 श्रवणादीति। ननु ध्यानविधिवैयर्थ्यमस्तु। श्रवणविधिवैयर्थ्यं कथमिति चेन्न; तत्त्वमसिवाक्यार्थज्ञानात् स्वतो जातादेव मुक्तिसिद्ध्या गुरुमुखाच्छ्रवणस्य वैयर्थ्यात्; ज्ञानोदयकाले एव मुक्तया उपदेशौपयिककरणाद्यभावेन कस्मादयं शृणुयादिति विधेरानर्थक्याच्चेति।

2 मायावादिनेत्यस्य प्रतिक्षेपेऽन्वयः। प्रतिक्षेपमाशंकते—प्रतिक्षेपप्रकारमाहेत्यर्थः। साक्षान्मायावादी ध्याननियोगवादिपक्षं प्रतिक्षिप्य स्वमतं वक्ष्यति। तत् भास्करपक्षञ्च खण्डयन् ध्याननियोगवादी स्वपक्षमुपसंहरिष्यति। अथ प्रधानपूर्वपक्षी पूर्वं निष्प्रपञ्चीकरणनियोगवादिनमिव ध्याननियोगवादिनमपि निरस्य स्थास्यति।

किञ्च धर्माधर्मयोः फलहेतुत्वं स्वफलानुभवानुगुणशरीरोत्पादनद्वारेणेति ब्रह्मादिस्थावरान्त-चतुर्विधशरीरसंबन्धरूपसंसारफलत्वमवर्जनीयम् । तस्मान्न धर्मसाध्यो मोक्षः । तथा च श्रुतिः, "न ह वै सशरीरस्य सतः प्रियाप्रिययोरपहतिरस्ति । अशरीरं वा व सन्तं न प्रियाप्रिये स्पृशतः" इति । अशरीरत्वरूपे मोक्षे धर्माधर्मसाध्यप्रियाप्रियविरहश्रवणात् न धर्मसाध्यमशरीरत्वमिति विज्ञायते । न च नियोगविशेषसाध्यफलविशेषवत् ध्याननियोगसाध्यमशरीरत्वम्; अशरीरत्वस्य स्वरूपत्वेनासाध्यत्वात् । यथाहुः श्रुतयः, "अशरीरं शरीरेष्वनवस्थेष्ववस्थितम् । महान्तं विभुमात्मानं मत्वा धीरो न शोचति", "अप्राणो ह्यमनाः शुभ्रः", "असङ्गो ह्ययं पुरुषः" इत्याद्याः । अतोऽशरीरत्वरूपो मोक्षो नित्य इति न धर्मसाध्यः । तथा च श्रुतिः, "अन्यत्र धर्मादन्यत्राधर्मादन्यत्रास्मात् कृताकृतात् । अन्यत्र भूताद्भव्याच्च यत्तत् पश्यसि तद्वद" इति ॥

अपिच—उत्पत्तिप्राप्तिविकृतिसंस्कृतिरूपेण चतुर्विधं हि साध्यत्वं मोक्षस्य न संभवति । न तावदुत्पाद्यः, मोक्षस्य ब्रह्मस्वरूपत्वेन नित्यत्वात् । नापि प्राप्यः, आत्मस्वरूपत्वेन ब्रह्मणो नित्यप्राप्तत्वात् । नापि विकार्यः, दध्यादिवत् अनित्यत्वप्रसङ्गादेव । नापि संकार्यः; संस्कारो हि दोषापनयनेन वा गुणाधानेन वा साधयति । न तावत् दोषापनयनेन; नित्यशुद्धत्वाद्ब्रह्मणः । नाप्यतिशयाधानेन;

---

नियोगो विपरीतफलप्रदश्चेत्याह किञ्चेति । द्वारेणेत्यन्तेन प्रसञ्जनीयप्रसञ्जकयोर्व्याप्तिर्दर्शिता । अवर्जनीयमित्यन्तेन प्रसङ्गः । ततः किमित्यत्राह तस्मादिति । तस्मात्—संसारफलत्वप्रसङ्गात् । व्यापकस्य संसारफलत्वस्य निवृत्त्या व्याप्यं धर्मसाध्यत्वञ्च निवृत्तमित्यर्थः । मोक्षस्याशरीररूपत्वश्रुत्या च नियोगासाध्यत्वमाह तथा चेति । अशरीरत्वरूपे मोक्षे धर्माधर्मफलरूपप्रियाप्रियसंबन्धविरहश्रवणात् मोक्षस्य धर्मसाध्यत्वाभावः फलित इत्याह [1]इत्यशरीरत्वरूप इति । एवं नियोगसाध्यत्वे मोक्षस्य धर्माधर्मफलसंबन्धराहित्यश्रवणानुपपत्तिरिति श्रुत्यर्थापत्तिरुक्ता भवति । यथा नियोगविशेषस्य पापनिवृत्तिः फलमुच्यते, तद्वत् नियोगविशेषस्य बन्धनिवृत्तिफलत्वं संभवतीत्यत्राह न चेति । नियोगविशेष-फलविशेषशब्दाभ्यां प्रायश्चित्तपापक्षपणे विवक्षिते । कुत इत्यत्राह अशरीरत्वस्येति । अशरीरत्वस्य स्वरूपत्वे श्रुतिमाह यथाहुरिति । अप्राण इति । प्राणमनस्संबन्धाभावादशरीरत्वं सिद्धम् । सशरीरस्य हि प्राणमनस्संबन्ध इति भावः । अतः अशरीरत्वस्यात्मस्वरूपत्वावगमादित्यर्थः । न केवलं कर्मफलसंबन्धविरहादशरीरत्वस्य स्वाभाविकत्वाच्च नियोगसाध्यत्वाभावः सिद्धः, अपि तु कण्ठोक्तश्चेत्याह तथा च श्रुतिरिति । अन्यत्रधर्मात्—धर्मादन्यत्र—धर्मेण विना । अनेन धर्मसंबन्धराहित्यमुक्तम् । संबन्धश्च साध्यसाधनभाव इति भावः । अत्र कृताकृतशब्देन क्रियमाणमुच्यते ; भूतभव्यशब्दाभ्यां भूतभविष्यती ।

मुखान्तरेण मोक्षस्य नियोगसाध्यत्वं दूषयति अपि चेति । साध्यत्वस्य वैविध्यं वदन् तदसंभवमाह उत्पत्तीति । मोक्षशब्देन किं निवृत्ताविद्यं स्वरूपं विवक्षितम्, उताविद्यानिवृत्तिरिति विकल्पे, स्वरूपस्य विवक्षितत्वे चतुर्विधसाध्यत्वानुपपत्तिमाह न तावदित्यादिना । निवृत्तेरुत्पाद्यत्वेऽप्यविनाशित्वं प्रध्वंसाभावरूपत्वादिति वक्ष्यते । संस्कारो हीत्यादि । अत्र नित्यशुद्धशब्देन परमार्थदोषानन्वयोऽभिप्रेतः । नित्यशुद्धस्य निर्विशेषस्य वस्तुनो दोषापनयन—गुणाधानरूपसंस्कारविषयत्वं नित्यशुद्धत्वानाधेयाति-

---

1 इत्यशरीरत्वेति । अत्र इतीत्यस्य अधस्तात् श्रुतिरित्यत्रान्वयात् इतिकरणं विना प्रतीकधारणं युक्तम् ; भा० प्र० । अपेक्षितत्वात् मध्यमणिन्यायेन उपर्यप्यन्वयाशयेन वा तथाग्रहणम् ।

**अनाधेयातिशयस्वरूपत्वात्। नित्यनिर्विकारत्वेन[1] स्वाश्रयायाः पराश्रयायाश्च क्रियाया अविषयतया न, निर्घर्षणेन आदर्शादिवदपि, संस्कार्यत्वम्। न च देहस्थया स्नानादिक्रियया आत्मा संस्क्रियते, किंतु अविद्यागृहीतस्तत्सङ्गतोऽहङ्कर्ता। तत्फलानुभवोऽपि तस्यैव। न चाहङ्कर्तैवाऽऽत्मा; तत्साक्षित्वात्। तथा च मन्त्रवर्णः, "तयोरन्यः पिप्पलं स्वाद्वत्ति अनश्नन्नन्यो अभिचाकशीति" इति "आत्मेन्द्रियमनोयुक्तं भोक्तेत्याहुर्मनीषिणः", "एको देवः सर्वभूतेषु गूढः सर्वव्यापी सर्वभूतान्तरात्मा। कर्माध्यक्षः सर्वभूताधिवासः साक्षी चेता केवलो निर्गुणश्च"। "स पर्यगाच्छुक्रमकायमव्रणमस्नाविरं शुद्धमपापविद्धम्" इति च। अविद्यागृहीतादहङ्कर्तुरात्मस्वरूपमनाधेयातिशयं नित्यशुद्धं निर्विकारं निष्कृष्यते। तस्मादात्मस्वरूपत्वेन न साध्यो मोक्षः।**

---

शयत्वाभ्यां नास्तीत्युक्तम्। अथ क्रियाविषयत्वाभावात् संस्कारविषयत्वाभाव उच्यते **नित्येत्यादिना**। निर्विकारत्वेन क्रियाविषयत्वाभाव.[1] कथम्? इत्थम्—यद्यत्क्रियाविषयभूतम्, तद्धि सविकारं दृष्टम् (मिति?)॥ यदा दर्पणो हस्ततले निर्घृष्यते, तदा दर्पणाश्रया क्रिया; यदा दर्पणे पाणिर्निर्घृष्यते, तदा पाण्याश्रया क्रियेति स्वाश्रयपराश्रयक्रिययोर्दर्पणोदाहरणम्। क्रियाविषयत्वाभावेऽपि संस्कार्यत्वं दृष्टमित्यत्राह **न चेति**। तर्हि कः संस्क्रियत इत्यत्राह **किंत्विति**। **अविद्यागृहीतः** अविद्याकल्पितः। तेन अतिशयाधानानुगुणविकारित्वं सूचितम्। यद्वा, **अविद्यागृहीत** इति शुद्ध्यशुद्ध्यादिभ्रमवत्तया शुद्धिसापेक्षत्वं दर्शितम्। अहङ्कर्तुरपि देहाद्विलक्षणत्वात् कथं देहगतस्नानादिभिस्तस्यातिशय इत्यत्राह **तत्संगत** इति। **तत्सङ्गतः—देहसङ्गतः**। आत्मनः फलभोक्तृत्वात् स संस्कार्य इत्यत्राह **तत्फलेति**। फलभोक्ता अहमर्थश्चेत् **स एवात्मेत्यत्राह न चाहमिति**। हेतुमाह **तदिति**। यो यस्य साक्षी, स हि न तद्भवतीति भावः। साक्षित्वे मानमाह **तथा चेति**। **तयोरन्य** इत्यादेरयमर्थः—अहङ्कारज्ञप्त्यात्मनोरेकः फलभोक्ता, अन्योऽनश्नन्निति। अहङ्कर्तैव भोक्तेति स्पष्टं दर्शयति **आत्मेन्द्रियेति**। **आत्मा**—देहः। देहादिसंबद्धस्य भोक्तृत्वादात्मनोऽशरीरत्वाप्राणत्वामनस्कत्वादिश्रवणात् अनश्नन्निति अभोक्तृत्वश्रवणाच्च भोक्तुर्विलक्षण आत्मेत्यभिप्रायः। यद्वा **आत्मशब्दः** संविदात्मपरः। ततश्च तद्युक्तस्य भोक्तृत्वात् तस्य भोक्तृत्वं नास्तीत्यहङ्कारस्यैव भोक्तृत्वमित्यभिप्रायः। [2]**एको देव** इत्यत्र **केवलशब्देन** फलान्वयराहित्यं विवक्षितमिति तस्यात्रोपयोगः। **निर्गुणः**—अगुणवश्यत्वादभोक्तेत्यर्थः। साक्षी—अहङ्कारे व्याप्रियमाणे स्वयं साक्षिमात्रतयाऽवस्थानान्न भोक्तेति भावः। **स पर्यगादिति**। **शुक्रम्**—अविद्यारहितम्, वासनारहितं वा। **शुद्धम्**—**अपापविद्धम्**—कर्मफलरहितं कर्मरहितं च। **पर्यगात्**। गत्यर्थाः बुद्ध्यर्थाः; अमन्यतेत्यर्थः। उदाहृतश्रुतिप्रतिपन्नाकारोपेतमात्मस्वरूपं वदति **अविद्येति**। **अहङ्कर्तुर्निष्कृष्यत** इत्यन्वयः। मुक्तेरसाध्यत्वं निगमयति **तस्मादिति**।

---

1 शांकरभाष्ये स्वाश्रयक्रियाविरहे निर्विकारत्वं हेतुरुक्तम्; परक्रियां प्रत्यविषयत्वमेवोक्तम्; न तु तत्र निर्विकारत्वस्य हेतुत्वमिति शंकितुराशयः। अथापि क्रियाया अविषयत्वं नाम क्रियाजन्यसंयोगाद्यनाश्रयत्वमेव। तत् उभयत्र भवत्येव, तत्र च निर्विकारत्वं हेतुतया वक्तव्यमेवेति अस्मद्भाष्ये संकलय्योक्तमिति समाधिः। यदेत्यादि विषयान्तरम्।

2 अभिचाकशीतिइति इत्यत्र वाक्यासमाप्तिः, इति चेत्यत्र वाक्यसमाप्तिः उपरि तदनन्वयश्च टीकायामवगम्यते। शाङ्करभाष्यगतिर्भाष्यार्थदर्पणे दर्शिता।

यद्येवं किं वाक्यार्थज्ञानेन क्रियत इति चेत्—मोक्षप्रतिबन्धनिवृत्तिमात्रमिति ब्रूमः। तथा च श्रुतयः, "त्वं हि नः पिता योऽस्माकमविद्यायाः परं पारं तारयसीति", "श्रुतं ह्येव मे भगवद्दृशेभ्यः, तरति शोकमात्मविदिति। सोऽहं भगवः शोचामि। तं मा भगवान् शोकस्य पारं तारयतु", "तस्मै-मृदितकषायाय तमसः पारं दर्शयति भगवान् सनत्कुमारः" इत्याद्याः। **तस्मात्** नित्यस्यैव मोक्षस्य प्रतिबन्धनिवृत्तिर्वाक्यार्थज्ञानेन क्रियते,। निवृत्तिस्तु साध्याऽपि प्रध्वंसाभावरूपा न विनश्यति। "ब्रह्म वेद ब्रह्मैव भवति", "तमेव विदित्वाऽति मृत्युमेति" इत्यादिवचनं मोक्षस्य वेदनानन्तर-भावितां प्रतिपादयत् नियोगव्यवधानं प्रतिरुणद्धि। न च विदिक्रियाकर्मत्वेन वा ध्यानक्रियाकर्म-त्वेन वा कार्यानुप्रवेशः; उभयविधिकर्मत्वप्रतिषेधात्। "अन्यदेव तद्विदितादथो अविदितादधि", "येनेदं सर्वं विजानाति तं केन विजानीयात्" इति, "तदेव ब्रह्म त्वं विद्धि नेदं यदिदमुपासते" इति च॥ न चैतावता शास्त्रस्य निर्विषयत्वम्, अविद्याकल्पितभेदनिवृत्तिपरत्वाच्छास्त्रस्य। न हि इदन्तया ब्रह्म विषयीकरोति शास्त्रम्; अपि तु अविषयं प्रत्यगात्मस्वरूपं प्रतिपादयत् अविद्याकल्पितज्ञानज्ञातृज्ञेयविभागं निवर्तयति। तथा च शास्त्रम्, "न दृष्टेर्द्रष्टारं पश्येः" इत्येवमादि।

न च ज्ञानादेव बन्धनिवृत्तिरिति श्रवणादिविध्यानर्थक्यम्; स्वभावप्रवृत्तसकलेतर-विकल्पविमुखीकरणद्वारेण वाक्यार्थावगतिहेतुत्वात् तेषाम्। न च ज्ञानमात्रात् बन्धनिवृत्तिर्न दृष्टेति

---

ज्ञानवैयर्थ्यं शङ्कते **यद्येव**मिति। परिहरति **मोक्षे**ति। प्रतिबन्धनिवृत्तेरेव साध्यत्वं श्रुतिसिद्ध-माह **तथा चे**ति। प्रतिबन्धनिवृत्तेः साध्यत्वं निगमयति **तस्मा**दिति। प्रतिबन्धनिवृत्तेः साध्यत्वेनानित्यत्वं स्यादित्यत्राह **निवृत्तिस्त्वि**ति। अयं परिहारो नियोगसाध्यत्वपक्षेऽपि तुल्य इति चेत्—न; नियोगसाध्यत्वे प्रपञ्चसत्यत्वं स्यादित्यभिप्रेतमित्युक्तत्वात्। नियोगसाध्यत्वपक्षे श्रुतिस्वारस्यहानिमाह **ब्रह्मे**ति। श्रुतिस्वारस्यम् एवंविलम्बं न सहत इति भावः। कथं नियोगव्यवधानप्रतिरोधः; विधिशेषतया हि ब्रह्मणः सिद्धिः; तत्सिद्ध्यर्थं नियोगः स्वीकार्य इति शङ्कायां नियोगशेषत्वं विदिकर्मत्वेन ध्यानकर्मत्वेन चोभयथाऽपि न संभवतीत्याह **न च विदी**ति। वेदनं ज्ञानम्; उपासनम्—ज्ञानविशेषः। अत्र वेदनशब्दो निष्प्रपञ्चीकरणज्ञानविशेषे विश्राम्यति; विवक्षावशात्। अतो निष्प्रपञ्चीकरण-नियोगवादस्यापि दूषणं फलितम्। विद्युपासिकर्मत्वाभावे श्रुतिमाह **अन्यदि**ति। **विदितात्**—ज्ञेयात्; **अविदितात्**—ज्ञातुरित्यर्थः। **अन्यदेवे**ति विदिकर्मत्वनिषेधः। **तदेवे**ति ध्यानकर्मत्वनिषेधः। विदिकर्मत्वाभावे शास्त्रवेद्यत्वासिद्ध्या शास्त्रस्य निर्विषयत्वमाशङ्क्य परिहरति **न चे**ति। 'ब्रह्म वेद'; 'ब्रह्मवित्' इत्यादिभिर्ब्रह्मणो वेद्यत्वं प्रतीयत इत्यत्राह **न हीदन्तये**ति। **इदन्तया**—प्रमेयतया। **अपि त्वि**ति। प्रत्यगात्मस्वरूपं निर्विशेषमविषयतया प्रतिपादयतीत्यर्थः। शास्त्रस्य भेदनिवृत्तिपरत्वं दर्शयति **तथाचे**ति। ज्ञानादेव बन्धनिवृत्तिश्चेत्, शास्त्रप्रत्यक्षविरोधः स्यादित्याशङ्क्य, शास्त्रविरोधं तावत् परिहरति **न च ज्ञाना**दिति। **श्रवणादिविध्यानर्थक्य**मिति। श्रवणमननयोरपि विधेयत्वं पूर्वपक्षिणोक्तमिति न विरोधः। कुत इत्यत्राह **स्वभावे**ति। **स्वभावप्रवृत्त**शब्देन अनादिप्रवृत्तत्वं विवक्षितम्। अथ प्रत्यक्षविरोधं परिहरति **न च ज्ञानमात्रा**दिति। कथमित्यत्राह **बन्धस्ये**ति। कथं स्थित्यनुपपत्तिः? बन्धो ह्यनुवर्तत इति शङ्का, **यस्य तु बन्ध** इत्यादिना परिहरिष्यते। उक्तादेव हेतोः शरीरपातान-

वाच्यम् ; बन्धस्य मिथ्यारूपत्वेन ज्ञानोत्तरकालं स्थित्यनुपपत्तेः । अत एव न, शरीरपातादूर्ध्वमेव बन्धनिवृत्तिरिति वक्तुं युक्तम् । न हि मिथ्यारूपसर्पभयनिवृत्तिः रज्जुयाथात्म्यज्ञानातिरेकेण सर्पविनाशमपेक्षते । यदि शरीरसंबन्धः पारमार्थिकः, तदा हि तद्विनाशापेक्षा । स तु ब्रह्मव्यतिरिक्ततया न पारमार्थिकः । यस्य तु बन्धो न निवृत्तः, तस्य ज्ञानमेव न जातमित्यवगम्यते ; ज्ञानकार्यादर्शनात् । तस्मात् शरीरस्थितिर्भवतु वा, मा वा ; वाक्यार्थज्ञानसमनन्तरं मुक्त एवासौ । अतो न ध्याननियोगसाध्यो मोक्ष इति न ध्यानविधिशेषतया ब्रह्मणः सिद्धिः, अपि तु "सत्यं ज्ञानमनन्तं ब्रह्म', 'तत्त्वमसि', 'अयमात्मा ब्रह्म" इति तत्परेणैव पदसमुदायेन सिध्यतीति ॥

तदयुक्तम् ; वाक्यार्थज्ञानमात्रात् बन्धनिवृत्त्यनुपपत्तेः । यद्यपि मिथ्यारूपो बन्धो ज्ञानबाध्यः, तथापि बन्धस्यापरोक्षत्वात् न परोक्षरूपेण वाक्यार्थज्ञानेन स बाध्यते । रज्ज्वादावपरोक्षसर्पप्रतीतौ वर्तमानायाम्—नायं सर्पो रज्जुरेषेत्याप्तोपदेशजनितपरोक्षसर्पविपरीतज्ञानमात्रेण भयानिवृत्तिदर्शनात् । आप्तोपदेशस्य तु भयनिवृत्तिहेतुत्वं वस्तुयाथात्म्यापरोक्ष्य(क्ष)निमित्तप्रवृत्ति-

---

पेक्षत्वमाह **अत एवेति** । दृष्टान्तेनोपपादयति **न हीति** । दृष्टान्ते दर्शितमर्थं व्यतिरेकमुखेन दार्ष्टान्तिके विवृणोति **यदीति** । पारमार्थिकत्वविपर्ययमाह **स त्विति** । विप्रतिपन्नमपारमार्थिकम् , ब्रह्मव्यतिरिक्तत्वात् शुक्तिरूप्यवदिति भावः । ज्ञानोत्तरकालस्थितिरनुपपन्ना चेत् ; कथं बन्धस्यानुवृत्तिरित्यत्राह **यस्य त्विति** । [1]यस्य त्वनिवृत्तः—अनिवृत्त इति प्रतीतिः, तस्य ज्ञानमेव न जातम् , तत्कार्यादर्शनादिति । कार्याभावस्य कारणाभावमात्रव्याप्यत्वाभावेऽपि सामग्र्यभावव्याप्यत्वात् भ्रमनिवृत्तिं प्रति तत्त्वज्ञानस्य सामग्रीत्वात् तदभावेन ज्ञानाभावः कल्प्यत इति न प्रत्यक्षविरोध इत्यर्थः । ज्ञानोत्पत्त्यनन्तरं बन्धनिवृत्तिं निगमयति **तस्मादिति** । **शरीरस्थितिर्भवतु वा मा वेति** । दग्धपटे पटप्रतिभासवत् शरीरप्रतिभासोऽनुवर्तेत वा, निवर्तेत वेत्यर्थः । **मुक्त एवासाविति** । बन्धस्य च्छिन्नमूलतया दग्धपटवत् अकार्यकर इति भावः । बन्धनिवृत्तेर्नियोगनैरपेक्ष्यसाधकहेतुभिः विधिशेषतया न ब्रह्मणः सिद्धिरित्याह **अत इति** । **अतः**—वाक्यार्थज्ञानमात्रसाध्यत्वात् । तर्हि ब्रह्मणः कथं सिद्धिरित्यत्राह **अपि त्विति** । **तत्परेणैवेति** । भेदनिषेधपरैर्वाक्यैर्निर्विशेषतया सिद्ध्यतीत्यर्थः । यद्वा सिद्धरूपार्थपरेणैवेत्यर्थः । **सिध्यतीति** । ब्रह्मेत्यर्थलब्धम् ॥

एतत् ध्याननियोगवादी दूषयति **तदयुक्त**मित्यादिना । कुत इत्यत्राह **वाक्यार्थेति** । प्रपञ्चमिथ्यात्ववादिना ज्ञानाद्बन्धनिवृत्त्यनुपपत्तिः कथमुच्यत इत्यत्राह **यद्यपीति** । ज्ञाननिवर्त्यत्वोपगमेऽपि वैषम्यमाह **तथापीति** । परोक्षज्ञानस्यापरोक्षभ्रमाबाधकत्वे दृष्टान्तमाह **रज्ज्वादाविति** । आदिशब्देन भूदलनादि गृह्यते । **सर्पविपरीतज्ञानम्**—रज्जुज्ञानम् । तेन भयानिवृत्तिश्चेत्, आप्तोपदेशानर्थकयं स्यादित्यत आह **आप्तोपदेशस्येति** । अनेन प्रथमसूत्रे, "प्रबलप्रमाणबाधितत्वेन भयादिकार्यं तु निवर्तते" इति भाष्यार्थो ज्ञायते । आप्तोपदेशस्य भयादिकार्यनिवृत्तिहेतुत्वं वस्तुयाथात्म्यापरोक्ष्य-

---

1 यस्यत्वनिवृत्त इति अर्थानुवादः ; स्वयमेव पूर्वं यस्य तु बन्ध इत्यनुवदनात् । ननिवृत्त-इत्यस्य अनिवृत्तत्वेनप्रतीतिरिति विवरणार्थमेवमनुवादः । किमर्थं तथाविवरणमिति चेत्—उच्यते । अश्रुतोपनिषत्कस्य बन्धो निर्विवादः । श्रुतोपनिषत्केषु, यस्यतुबन्धो ननिवृत्त इत्युक्तौ कथं परैस्तत् ज्ञेयम् । मुक्तस्यापि सशरीरस्य नानाप्रवृत्तिदर्शनादनिवृत्त्यनुमानायोगात् । यस्य निवृत्त इति प्रतीतिर्नास्ति तस्येत्युक्तौ योगमध्ये भंगः । अतोऽनिवृत्त इति प्रतीतिमान् ज्ञानरहित इत्युच्यते । तज्ज्ञानञ्च तथा सद्व्यवहारादिना ।

हेतुत्वेन । तथा हि रज्जुसर्पदर्शनभयात् परावृत्तः पुरुषः, नायं सर्पः रज्जुरेषेत्याप्तोपदेशेन तद्वस्तुयाथात्म्यदर्शने प्रवृत्तः तदेव प्रत्यक्षेण दृष्ट्वा भयान्निवर्तते । न च शब्द एव प्रत्यक्षज्ञानं जनयतीति वक्तुं युक्तम्; तस्यानिन्द्रियत्वात् । ज्ञानसामग्रीष्विन्द्रियाण्येव ह्यपरोक्षसाधनानि । न चास्यानभिसंहितफलकर्मानुष्ठानमृदितकषायस्य श्रवणमनननिदिध्यासनविमुखीकृतबाह्यविषयस्य पुरुषस्य वाक्यमेवापरोक्षज्ञानं जनयति; निवृत्तप्रतिबन्धे तत्परेऽपि पुरुषे ज्ञानसामग्रीविशेषणा-

निमित्तप्रवृत्तिद्वारकमिति हि तस्य भाष्यस्यार्थः । इममर्थं दृष्टान्ते दर्शयति **तथा हीति** । अस्त्वपरोक्षज्ञानमेव तादृशभ्रमविरोधि; शब्द एवापरोक्षज्ञानं जनयतीत्याशङ्क्याह **न चेति** । हेतुमाह **तस्येति** । व्याप्तिं दर्शयति **ज्ञानेति** । न च अनिन्द्रियत्वेऽप्यालोकादेरपरोक्षज्ञानजनकत्वं दृष्टमिति हेतोर्व्यभिचारः; इन्द्रियप्रधानकज्ञानसामग्र्यननुप्रविष्टत्वस्य [1]विवक्षितत्वात् । एतच्च **ज्ञानसामग्रीष्वित्यनेन** सूचितम् । **ज्ञानसामग्रीषु**—सपरिकरासु इन्द्रियलिङ्गशब्दसदृशानुपपत्त्यनुपलब्धिष्वित्यर्थः । **इन्द्रियाण्येवेति** । आलोकादिसहकृतानीति शेषः । इन्द्रियमेव योगिनो व्यवहितादिकं ज्ञापयति, तथा विवक्षितपुरुषविशेषस्य वाक्यमपरोक्षज्ञानं जनयतीत्याशङ्क्य परिहरति **न चेति** । **अस्य**-पुरुषस्य । हेतुमाह **निवृत्तेति** । अनभिसंहितेत्यादिपदद्वयं हृदि निधाय विशेषणद्वयमाह **निवृत्तप्रतिबन्धे तत्परेऽपीति** । **स्वविषयनियमातिक्रमादर्शनेनेत्यत्र विषय**शब्दः साध्यपरः । स्वसाध्यज्ञानानतिक्रमदर्शनेनेत्यर्थः । शब्दसाध्यं ज्ञानं परोक्षमेव; शब्दस्तु स्वसाध्यं परोक्षज्ञानं नातिक्रामतीति यावत् । मनसः परोक्षापरोक्षज्ञानसाधारणहेतुत्वात् शब्दस्य तु लिङ्गस्येव परोक्षज्ञानमात्रहेतुत्वान्न योगिमनस्साम्यमिति भावः ॥

ननु शब्देनाप्यपरोक्षज्ञानं जायते, दशमस्त्वमसीति वाक्येन दशमोऽहमित्यपरोक्षज्ञानोत्पत्तिदर्शनादिति ॥ तन्न; उपदेशानन्तरं शीघ्रभाविप्रत्यक्षसामग्रीजन्येन ज्ञानेन पूर्वज्ञानस्य भेदाग्रहेण प्रत्यक्षत्वारोपात् । तदा हि [2]उपदेशात्पूर्वभाविनवकपरिसङ्ख्यानजनितसंस्कारवशेनाविलम्बिता ह्यपेक्षाबुद्धिर्जायते । यथा घटोऽयमित्युक्ते घटं पश्यतोऽपरोक्षप्रतीतिरिन्द्रियजन्या; न तु घटोऽयमिति वाक्यजन्या; वाक्यं तु आपरोक्ष्यनिमित्तचक्षुर्व्यापारहेतुः—तथा दशमस्त्वमसीति वाक्यं दशमोऽहमिति बुद्धिनिमित्तस्य पूर्ववासितापेक्षणीयवस्तुप्रतिसन्धानस्य हेतुः; न त्वपरोक्षावभासहेतुः; तत्तत्प्रतीतिसामग्र्यव्यवहितस्य वाक्यस्य तत्तत्सामग्रीत्वाभावात् । विमतं प्रत्यक्षज्ञानं न वाक्यजन्यम्, प्रत्यक्षज्ञानत्वात् अनुपदिष्टवाक्यस्य दशमोऽहमिति प्रत्ययवत् । विमतं वाक्यं न प्रत्यक्षज्ञानजनकम्, वाक्यत्वात् संप्रतिपन्नवदिति । एवं सामग्रीशैघ्र्येणान्यथासिद्ध्या परिहारो **वस्तुयाथात्म्यापरोक्ष्यनिमित्तप्रवृत्तिहेतुत्वेनेति** भाष्येणाभिप्रेतः । न च वाक्यजन्येऽपि ज्ञाने विशेष्यभूताहमर्थप्रत्यक्षतामात्रेण विशिष्टानुप्रविष्टविशेषणांशस्यापि प्रत्यक्षतेति वाच्यम्[3] (!) । अहंसमानाधिकृतशब्दोल्लिखितप्रतीतेरपरोक्षत्वनियमश्च नास्ति; सुखदुःखाद्यनुमितपुण्यपापस्य पुरुषस्य पुण्यकृदहं पापकृदहमित्यादिप्रतीतेः पुण्यपापयोरापरोक्ष्यादर्शनात् । धर्मिप्रत्यक्षतामात्रेण धर्मप्रत्यक्षत्वे, लैङ्गिके पर्वतोऽग्निमानिति ज्ञाने अग्नेरपि

---

1 विवक्षितत्वादिति । अनिन्द्रियत्वादिति हेतुपदेनेति शेषः ।

2 एको हिशब्दो हेत्वर्थकः; अन्यः प्रसिद्धौ ।

3 वाच्यमित्येतदनन्तरं शब्दजन्यज्ञानस्याहमर्थांशेऽपि प्रत्यक्षत्वानंगीकारादिति पूरणीयम् ।

मिन्द्रियादीनां स्वविषयनियमातिक्रमादर्शनेन तदयोगात् ॥

न च ध्यानस्य वाक्यार्थज्ञानोपायता; इतरेतराश्रयत्वात्—वाक्यार्थज्ञाने जाते तद्विषयध्यानम्, ध्याने निर्वृत्ते वाक्यार्थज्ञानमिति । न च ध्यानवाक्यार्थज्ञानयोर्भिन्नविषयत्वम्; तथा सति ध्यानस्य वाक्यार्थज्ञानोपायता न स्यात् । न ह्यन्यध्यानमन्यौन्मुख्यमुत्पादयति । ज्ञातार्थस्मृतिसंततिरूपस्य ध्यानस्य वाक्यार्थज्ञानपूर्वकत्वमवर्जनीयम्; ध्येयब्रह्मविषयज्ञानस्य हेत्वन्तरासंभवात् । न च ध्यानमूलं ज्ञानं वाक्यान्तरजन्यम्, निवर्तकज्ञानं तत्त्वमस्यादिवाक्यजन्यमिति युक्तम् । ध्यानमूलमिदं वाक्यान्तरजन्यं ज्ञानं तत्त्वमस्यादिवाक्यजन्यज्ञानेनैकविषयम्, भिन्नविषयं वा । एकविषयत्वे, तदेवेतरेतराश्रयत्वम् । भिन्नविषयत्वे, ध्यानेन तदौन्मुख्यापादनासंभवः । किञ्च ध्यानस्य ध्येयध्यात्राद्यनेकप्रपञ्चापेक्षत्वात् निष्प्रपञ्चब्रह्मात्मैकत्वविषयवाक्यार्थज्ञानोत्पत्तौ दृष्टद्वारेण नोपयोग इति वाक्यार्थज्ञानमात्रादविद्यानिवृत्तिं वदतः श्रवणमनननिदिध्यासनविधीनामानर्थक्यमेव ॥

यतो वाक्यादापरोक्ष्यज्ञानासंभवात् वाक्यार्थज्ञानेनाविद्या न निवर्तते, तत एव जीवन्मुक्तिरपि दूरोत्सारिता । का चेयं जीवन्मुक्तिः । सशरीरस्यैव मोक्ष इति चेत्—माता मे वन्ध्येतिवत् असङ्गतार्थं वचः; यतः सशरीरत्वं बन्धः, अशरीरत्वमेव मोक्ष इति त्वयैव श्रुतिभिरुपपादितम् ।

---

प्रत्यक्षत्वप्रसङ्गः । तदेतदखिलं **स्वविषयनियमातिक्रमादर्शनेन तदयोगा**दित्यत्राभिप्रेतम् ।

एवं शब्दस्यापरोक्षज्ञानहेतुत्वं दूषितम् । अथ ध्यानस्य वाक्यार्थज्ञानोपायतामन्योन्याश्रयणेन दूषयति **न चे**त्यादिना । अन्योन्याश्रयणपरिहाराय, ध्यानपूर्वभाविज्ञानमर्थान्तरविषयम्, पाश्चात्यज्ञानमर्थान्तरविषयमिति भिन्नविषयताश्रयणमयुक्तमित्याह **न च ध्याने**ति । कुत इत्यत्राह **तथा सती**ति । कथमुपायत्वहानिरित्यत्राह **न ह्यन्यध्यान**मिति । एकविषयत्वेऽपि निवर्तकस्य वाक्यार्थज्ञानस्य ध्यानापेक्षा स्यात्; ध्यानस्य वाक्यार्थज्ञानापेक्षा कथमित्यत्राह **ज्ञातार्थे**ति । ध्यानहेतुभूतं ज्ञानं हेत्वन्तरजन्यम्, न तु ध्यानं पश्चाद्भाविवाक्यजन्यज्ञानमूलमित्येवं ध्यानवाक्यार्थज्ञानयोः सामग्रीभेदेनान्योन्याश्रयणपरिहारमाशङ्क्य सामग्रीभेदो न संभवतीत्याह **ध्येये**ति । **हेत्वन्तरासंभवात्**—ब्रह्मणः प्रत्यक्षाद्यगोचरत्वादिति भावः । तत्परिहाराय वाक्यभेदमाशङ्क्य तथा वक्तुमयुक्तमित्याह **न चे**ति । विकल्प्य दूषयति **ध्यानमूल**मिति । **एकविषयत्वे तदेवेतरेतराश्रयत्व**मिति । वाक्यान्तरेण ज्ञानोत्पत्तौ तस्य तत्त्वमसिवाक्यजन्यज्ञानतुल्यविषयत्वात् तस्यापि ज्ञानस्य निदिध्यासनापेक्षा स्यात्, ध्यानस्य च वाक्यार्थज्ञानापेक्षा स्यादित्यन्योन्याश्रयणमित्यर्थः । वाक्ययोर्भिन्नविषयत्वे दूषणमाह **भिन्ने**ति । ध्यानस्य च वाक्यार्थज्ञानविरोधित्वमेवेत्याह **किञ्चे**ति । **ध्यात्रादी**त्यादिशब्देन शमादिर्गृह्यते । **दृष्टद्वारे**णेति । अदृष्टद्वारेणोपयोगस्तु अत्यन्तभीरुभिः परैर्निरसनीयद्वैतवासनायाः सत्यत्वप्रसङ्गभयात् परित्यक्त इति ध्याननियोगवादिनोऽभिप्रायः ।

वाक्यार्थज्ञानमात्रादविद्यानिवृत्तिनिरासेन जीवन्मुक्तिनिरासः सिध्यतीत्याह **यत** इति । **दूरोत्सारिता** । वाक्यादपरोक्षज्ञानसंभवेऽपि व्याघातादिना जीवन्मुक्तिरुत्सारिता; वाक्यादापरोक्ष्यासंभवात् दूरोत्सारितेति भावः ॥ **का चेय**मिति । किंशब्दः क्षेपे । विकल्पाभिप्रायेण प्रश्नपरो वा । तत्स्वरूपं शङ्कते **सशरीरस्ये**ति । व्याहतिमाह **माते**ति । व्याहतिमुपपादयति **यत** इति । व्याहतिपरिहारार्थं

अथ सशरीरत्वप्रतिभासे वर्तमाने यस्य अयं प्रतिभासो मिथ्येति प्रत्ययः, तस्य सशरीरत्वनिवृत्तिरिति—न। मिथ्येतिप्रत्ययेन सशरीरत्वं निवृत्तं चेत्—कथं सशरीरस्य मुक्तिः। अजीवतोऽपि मुक्तिः सशरीरत्वमिथ्याप्रतिभासनिवृत्तिरेवेति कोऽयं जीवन्मुक्तिरिति विशेषः। अथ सशरीरत्वप्रतिभासो बाधितोऽपि यस्य द्विचन्द्रज्ञानवदनुवर्तते, स जीवन्मुक्त इति चेत्—न; ब्रह्मव्यतिरिक्तसकलवस्तुविषयत्वाद्बाधकज्ञानस्य, कारणभूताविद्याकर्मादिदोषः सशरीरत्वप्रतिभासेन सह तेनैव बाधित इति बाधितानुवृत्तिर्न शक्यते वक्तुम्। द्विचन्द्रादौ तु तत्प्रतिभासहेतुभूतदोषस्य बाधकज्ञानभूतचन्द्रैकत्वज्ञानाविषयत्वेनाबाधितत्वात्, द्विचन्द्रप्रतिभासानुवृत्तिर्युक्ता।

किञ्च, "तस्य तावदेव चिरं यावन्न विमोक्ष्ये। अथ संपत्स्ये" इति सद्विद्यानिष्ठस्य शरीरपातमात्रमपेक्षते मोक्ष इति वदन्ती इयं श्रुतिर्जीवन्मुक्तिं वारयति। सैषा जीवन्मुक्तिः आपस्तम्बेनापि निरस्ता—[1]"...वेदान् इमं लोकममुं च परित्यज्याऽऽत्मानमन्विच्छेत्", "बुद्धे क्षेमप्रापणम्",

---

तन्मतं शङ्कते **अथेति**। **सशरीरत्वनिवृत्तिरिति** निर्देशेन सशरीरत्वस्य छिन्नमूलता जीवन्मुक्तिवादिना अभिप्रेता। दूषयति **नेति**। शरीरस्य सत्यत्वानभ्युपगमात् तस्य प्रध्वंसरूपा स्वरूपनिवृत्तिरनभिमता; अतः प्रतिभासनिवृत्तिर्वा [2]प्रतिभासतात्त्विकताभिमाननिवृत्तिर्वा विवक्षिता स्यादित्यभिप्रायेण प्रथमं कल्पमनूद्य अभिमतासिद्ध्या दूषयति **मिथ्येतीति**। **सशरीरत्वम्**—सशरीरत्वप्रतिभासः। अनन्तरग्रन्थे **प्रतिभास**निर्देशात्। **कथं सशरीरस्य मुक्तिरिति**। न [3]सशरीरस्य मुक्तिरुक्ता स्यादित्यर्थः। तदेवोपपादयति **अजीवतोऽपीति**। **मिथ्याप्रतिभास**शब्देन भ्रान्तिज्ञानं विवक्षितम्। जीवदजीवन्मुक्तयोर्विशेषाभावान्न सशरीरस्य मुक्तिरुक्ता स्यादित्यर्थः। द्वितीयं शिरः शङ्कते **अथेति**। अत्र पूर्वं **सशरीरत्वप्रतिभासे वर्तमान** इत्यादिग्रन्थाभिप्रेतार्थो विवृतो भवति। दूषयति **नेति**। कथमित्यत्राह **ब्रह्मेति**। **अविद्याकर्मादी**ति आदिशब्देन वासना गृह्यते। **तेनैव बाधितः**—बाधकज्ञानेन बाधित इत्यर्थः। द्विचन्द्रज्ञानादौ हि बाधितानुवृत्तिर्दृष्टेत्यत्राह **द्विचन्द्र[ज्ञान]दा**विति। न हि रज्जुयाथात्म्यज्ञानेन शुक्तौ रजतभ्रमो निवर्तत इति भावः। प्रथमसूत्रे बाधितानुवृत्तिनिराकरणे दोषस्य पारमार्थिकत्वेन ज्ञानबाध्यत्वाभावात् भ्रमानुवृत्तिरुक्ता; अत्र तु चन्द्रैकत्वज्ञानाविषयत्वेन दोषस्याबाधितत्वात् द्वि[चन्द्र]त्वज्ञानानुवृत्तिरुक्तेति भिदा। जगन्मायावादिनोऽपि कृत्स्नमिथ्यात्वस्याभ्युपगतत्वात् एवं वैषम्यमुक्तम्॥ जीवन्मुक्तेः श्रुतिविरोधमाह **किञ्चेति**। स्मृतिविरोधमाह **सैषेति**। **वेद**शब्देन त्रिवर्गसाधनकर्माण्युच्यन्ते। तत्फलमुच्यते **इमं लोकममुं चेति**। **बुद्धे**—वाक्यार्थज्ञाने जाते सति। **क्षेमप्रापणम्**—मोक्षः। **तच्छास्त्रैर्विप्रतिषिद्धम्**। **शास्त्रै**रिति बहुवचनस्यायं भावः—वाक्यार्थज्ञानोत्तरभाव्युपासनविधिपरैः, "एवं वर्तयन् यावदायुषम्" इत्याप्रयाणादनुवृत्तिपरैः, मोक्षस्य शरीरपातमात्रसापेक्षत्वपरैः, "तयोर्ध्वमायन् अमृतत्वमेति" इति नाडीविशेषनिष्क्रमणपरैः, अर्चिरादिमार्गेण देशविशेषप्राप्तिपरैश्चानेकैः शास्त्रैर्विरोध इति। **विप्रतिषिद्धमिति**। विशेषेण

---

[1] वेदानिति न सूत्रारम्भः। एतदापस्तम्बीयार्थविमर्शो भाष्यार्थदर्पणे द्रष्टव्यः।

[2] प्रतिभासे वर्तमाने मिथ्येति प्रत्ययो जायताम्। तदनन्तरं पूर्वप्रतिभासो नानुवर्तते, अनुवर्तते वेति विकल्पमभिप्रेत्याह प्रतिभासेति। [3] नञ् तालकोशे।

"तच्छास्त्रैर्विप्रतिषिद्धम्", "बुद्धे चेत्, क्षेमप्रापणम्, इहैव न दुःखमुपलभेत ।", "एतेन परं व्याख्यातम्" इति । अनेन ज्ञानमात्रान्मोक्षश्च निरस्तः । अतः सकलभेदनिवृत्तिरूपा मुक्तिर्जीवतो न संभवति ।

तस्मात् ध्याननियोगेन ब्रह्मापरोक्षज्ञानफलेनैव बन्धनिवृत्तिः । न च नियोगसाध्यत्वे मोक्षस्यानित्यत्वप्रसक्तिः; प्रतिबन्धनिवृत्तिमात्रस्यैव साध्यत्वात् । किञ्च न नियोगेन साक्षात् बन्धनिवृत्तिः क्रियते, किन्तु निष्प्रपञ्चज्ञानैकरसब्रह्मापरोक्ष्यज्ञानेन । नियोगस्तु तदापरोक्ष्यज्ञानं जनयति ॥ कथं नियोगस्य ज्ञानोत्पत्तिहेतुत्वमिति चेत्—कथं वा भवतोऽनभिसंहितफलानां कर्मणां वेदनोत्पत्तिहेतुत्वम् ? ॥ मनोनैर्मल्यद्वारेणेति चेत्—ममापि तथैव ॥ मम तु निर्मले मनसि शास्त्रेण ज्ञानमुत्पाद्यते । तव तु नियोगेन मनसि निर्मले ज्ञानसामग्री वक्तव्येति चेत्—ध्याननियोगनिर्मलं मन एव साधनमिति ब्रूमः ॥ केनावगम्यत इति चेत्. भवतो वा कर्मभिर्मनो निर्मलं भवति । निर्मले मनसि श्रवणमनननिदिध्यासनैः सकलेतरविषयविमुखस्यैव शास्त्रं निवर्तकज्ञानमुत्पादयतीति केनावगम्यते ॥ "विविदिषन्ति यज्ञेन दानेन तपसाऽनाशकेन", "श्रोतव्यो मन्तव्यो निदिध्यासितव्यः", "ब्रह्म वेद ब्रह्मैव भवति" इत्यादिभिः शास्त्रैरिति चेत्—

---

प्रतिषिद्धम् । न तुल्यबलैः प्रतिरुद्धम्; अपितु प्रबलैः पराहतम् । प्राबल्यञ्च, "भूयसां स्यात् बलीयस्त्वम् (सधर्मत्वम्)" इति न्यायादिति भावः । प्रत्यक्षविरोधमपि स्मृतिरेवाह बुद्धे चेदिति । एतेन परं व्याख्यातम् । एतेन शास्त्रप्रत्यक्षविरोधेन, औडुलोमिमतानुसारेणोक्तमन्यदपि व्याख्यातम्; सर्वमप्यपास्तमित्यर्थः । यद्वा—यथेदानीं दुःखोपलब्धिः, तथा प्रेत्यापीत्यर्थः । यद्वा—यथा दुःखनिवृत्तिर्नोपलभ्यते तथा सुखनिवृत्तिरपि नेत्यर्थः । जीवन्मुक्तिनिरासार्थमुदाहृतेन वचनेन वाक्यार्थज्ञानमात्रान्मोक्षश्चार्थान्निरस्त इत्याह अनेनेति । जीवन्मुक्तिनिरासमुपसंहरति अत इति ।

जीवन्मुक्तिनिरासेन स्वमतस्थैर्यसिद्धिमाह तस्मादिति । वाक्यार्थज्ञानमात्रान्मोक्षवादिनोक्तः चोद्यपरिहारो ममापि तुल्य इत्याह न च नियोगेति । नियोगनिवर्त्यत्वे प्रपञ्चसत्यत्वं स्यादित्याशङ्क्याह किञ्चेति । ध्याननियोगपक्षानुपपत्तिपरिहारस्य विवक्षितत्वात् किञ्चशब्दप्रयोगः । नियोगस्य निवर्तकत्वं ज्ञानद्वारकमिति न निवर्त्यसत्यत्वमित्यर्थः । नियोगस्य ज्ञानोत्पत्तौ किञ्चित्कारबुभुत्सया पृच्छति कथमिति । न खलु ज्ञाने दृष्टः किञ्चित्कारो नियोगेन संभवति; अतः स वक्तव्य इति भावः । प्रतिबन्द्या परिहरति कथं वेति । वेदनोत्पत्तिहेतुत्वमिति । इच्छाद्वारा वेदनोत्पत्तिहेतुत्वमभिप्रेतम् । 'विविदिषन्ती'ति ह्युदाहरिष्यते । परिहारं शङ्कते मन इति । तत्साम्यमाह ममापीति । पुनराशङ्कते मम त्विति । मनो हि साधारणकारणम् । तस्मिन् सत्यपि असाधारणकारणमपेक्षितम्; तन्ममास्ति; त्वया तु वक्तव्यमिति चेदित्यर्थः । वैशेषिकाद्यभिमतमानसप्रत्यक्ष इव, प्रकृष्टादृष्टसहकृतमनोमात्रकारणके "तत् सर्वं धर्मवीर्येण यथावत् संप्रपश्यसि" इत्यादिसिद्धे योगिप्रत्यक्ष इव च मन एवासाधारणकारणमिति परिहरति ध्यानेति । मनोमात्रस्य साधारणकारणत्वेऽपि निर्मलतरस्य मनोविशेषस्यासाधारणकारणत्वं युक्तमिति भावः । तज्ज्ञापकप्रश्नं(१)शङ्कते केनेति । ज्ञापकस्वारस्यलक्षणं स्वपक्षे वैषम्यं दर्शयितुं पृच्छति भवतो वेति । निदिध्यासनेन विषयविमुखीकृतमनस्कस्य शास्त्रेण निवर्तकज्ञानोत्पत्तौ प्रमाणतया पराभिमतानि श्रुतिवाक्यानि शङ्कते विविदिषन्तीति । 'ब्रह्म वेद ब्रह्मैव भवति' इति वेदनशब्देन

---

(१) प्रश्नमिति पाठे द्वितीयान्तमिदं शंकाक्रियाविशेषणम् । प्रश्नाभिन्ना शंका ।

तमापि 'श्रोतव्यो मन्तव्यो निदिध्यासितव्यः, 'ब्रह्मविदाप्नोति परम्', 'न चक्षुषा गृह्यते नापि वाचा', 'मनसा तु विशुद्धेन", 'हृदा मनीषा मनसाऽभिकॢप्तः' इत्यादिभिः शास्त्रैः-ध्याननियोगेन मनो निर्मलं भवति; निर्मलं च मनो ब्रह्मापरोक्षज्ञानं जनयतीत्यवगम्यत इति निरवद्यम् ॥

"नेदं यदिदमुपासते" इत्युपास्यत्वं प्रतिषिद्धमिति चेत्—नैवम्। नात्र ब्रह्मण उपास्यत्वं प्रतिषिध्यते, अपि तु ब्रह्मणो जगद्वैरूप्यं प्रतिपाद्यते। यदिदं जगदुपासते प्राणिनः, नेदं ब्रह्म; तदेव ब्रह्म त्वं विद्धि, यद्वाचाऽनभ्युदितं येन वाक् अभ्युद्यत इति वाक्यार्थः। अन्यथा--तदेव ब्रह्म त्वं विद्धीति विरुद्ध्यते। ध्यानविधिवैयर्थ्यं च स्यात्। अतो ब्रह्मसाक्षात्कारफलेन ध्याननियोगेनैवापरमार्थभूतस्य कृत्स्नस्य द्रष्टृदृश्यादिप्रपञ्चरूपबन्धस्य निवृत्तिः ॥

यदपि कैश्चिदुक्तम्—भेदाभेदयोर्विरोधो न विद्यत इति—तदयुक्तम्; न हि शीतोष्णतमः-प्रकाशादिवत् भेदाभेदौ एकस्मिन् वस्तुनि संगच्छेते।

अथोच्येत—सर्वं हि वस्तुजातं प्रतीतिव्यवस्थाप्यम्; सर्वं च भिन्नाभिन्नं प्रतीयते—कारणात्मना जात्यात्मना चाभिन्नम्, कार्यात्मना व्यक्त्यात्मना च भिन्नम्। छायातपादिषु विरोधः

---

वाक्यार्थज्ञानं विवक्षितमिति पराभिप्रायः। मनसो ज्ञानसाधनत्वे प्रमाणं दर्शयति **तमापीति**। न चक्षुषेत्यादिवाक्यं मनस एव साधनत्वे स्वरसम्। ब्रह्म वेदेत्यत्र वेदशब्दस्य वाक्यार्थज्ञानपरत्वं तु न स्वरसतः प्रतीयते। न च श्रुत्यन्तरैकार्थ्येन तत्परत्वावगमः, वाक्यार्थज्ञानस्योपायत्वकण्ठोक्तिमच्छ्रुत्यन्तराभावादित्यभिप्रेतम्। मिथ्यात्वनिबन्धनाः सर्वे चोद्यपरिहाराः समानाः। परोक्षज्ञानस्याप्यपरोक्षभ्रमनिवर्तकत्वं शास्त्रप्रत्यक्षविरोधौ श्रुतिस्वारस्यहानिश्च भवतां पक्षेऽधिकं दूषणमिति वैषम्यज्ञापनाय **कथमित्यादिना** प्रतिबन्दीमुखेन तत्तच्छङ्कापरिहारः कृतः। इतिशब्दो नानन्तरवाक्यशेषः; अपि तु प्रकरणशेषः।

उपास्यत्वप्रतिषेधं शङ्कते **नेदमिति**। परिहरति **नैवमिति**। तस्य वाक्यस्यैवं निर्वाहो न युक्त इत्यर्थः। उपास्यत्वनिषेधः प्रतीयत इत्यत्राह **नात्रेति**। कस्तर्ह्यर्थ इत्यत्राह **अपि त्विति**। कथं वैरूप्यप्रतिपादनमित्यत्राह **यदिदमिति**। 'यदिदमुपासते' इत्यत्र इदमंशे निषेधस्य तात्पर्यमिति भावः। 'मनो ब्रह्मेत्युपासीत' इत्यादिना विहितप्रतीकोपासनोपास्यानि हि परिच्छिन्नानि; नेदं ब्रह्म। किन्त्वपरिच्छिन्नं तदेव परं ब्रह्मेत्यर्थः। अनेन "अन्यदेव तद्विदितात्" इत्यादिकमपि जगद्वैरूप्यपरमिति व्याख्यातं भवति। **यत् वाचा अनभ्युदितम्**—वक्तुमशक्यम्, अपरिच्छिन्नम्। **अन्यथेति** स्ववाक्यविरोध उक्तः। **ध्यानविधिवैयर्थ्यमिति** वाक्यान्तरविरोध उक्तः। स्वपक्षमुपसंहरति **अत इति** ॥

अथायमेव ध्याननियोगवादी भास्करमतं दूषयितुं[1] तदभिमतं भेदाभेदाविरोधमनुवदति **यदपीत्यादिना**। प्रथमं सङ्क्षेपेण दूषयति **तदयुक्तमिति**। नियमेन भिन्नाधारत्वलक्षणः सहानवस्थानलक्षणश्चेति विरोधो द्विधा। आदिशब्देन तृणदहनादेरिव नाश्यनाशकभावो विवक्षितः। तद्वत् भेदाभेदयोरपि विरोधोऽस्तीत्याह **न हीति** ॥ अथ भेदाभेदमतं विस्तरेण प्रस्तौति **अथोच्येतेति**। वक्ष्यमाणौपयिकमर्थं शिक्षयति **सर्वं हीति**। शीतोष्णादिष्वपि विरोधः प्रतीत्यधीन इति भावः। ततः किमित्यत्राह **सर्वं चेति**। कथं भिन्नाभिन्नत्वमित्यत्राह **कारणात्मनेति**। पूर्वोक्तद्विविधविरोधोपलम्भस्थलवैरूप्यं वक्तुमाह **छायेति**।

1 भास्करमतदूषणप्रसक्तिःकेति चेत्—एतन्मतखण्डनारम्भे भाष्य एव 159. पुटे स्पष्टं निर्देक्ष्यते।

सहानवस्थानलक्षणो भिन्नाधारत्वरूपश्च। कार्यकारणयोर्जातिव्यक्त्योश्च तदुभयमपि नोपलभ्यते। प्रत्युत एकमेव वस्तु द्विरूपं प्रतीयते। यथा 'मृदयं घटः'; 'खण्डो गौः मुण्डो गौः' इति। न चैकरूपं किञ्चिदपि वस्तु लोके दृष्टचरम्। न च तृणादेर्ज्वलनादिवत् अभेदो भेदोपमर्दी दृश्यत इति न वस्तुविरोधः; मृत्सुवर्णगवाश्वाद्यात्मनाऽवस्थितस्यैव घटमुकुटखण्डवडबाद्यात्मना चावस्थानात्। न चाभिन्नस्य भिन्नस्य च वस्तुनो भेदोऽभेदश्चैक एवाऽऽकार इतीश्वराज्ञा। प्रतीतत्वादैकरूप्यं चेत्–प्रतीतत्वादेव भिन्नाभिन्नत्वमिति द्वैरूप्यमप्यभ्युपगम्यताम्। न हि विष्फारिताक्षः पुरुषो घटशरावखण्डमुण्डादिषु वस्तुषूपलभ्यमानेषु—इयं मृत् अयञ्च घटः, इदं गोत्वम् इयं च व्यक्तिः इति विवेक्तुं शक्नोति; अपितु मृदयं घटः, खण्डो गौरित्येव प्रत्येति॥ अनुवृत्तिबुद्धिबोध्यं कारणमाकृतिश्च, व्यावृत्तिबुद्धिबोध्यं कार्यं व्यक्तिश्चेति विविनक्तीति चेत्—नैवम्; विविक्ताकारानुपलब्धेः। न हि सुसूक्ष्ममपि निरीक्षमाणैः--इदमनुवर्तमानम्, इदं च व्यावर्तमानमिति पुरोऽवस्थितै वस्तुन्याकारभेद उपलभ्यते। यथा संप्रतिपन्नैक्ये कार्ये, विशेषे चैकत्वबुद्धिरुपजायते—तथैव सकारणे, ससामान्ये चैकत्वबुद्धिरविशिष्टोपजायते। एवमेव देशतः कालतश्चाऽऽकारतश्चात्यन्तविलक्षणेष्वपि वस्तुषु, तदेवेदमिति प्रत्यभिज्ञा जायते। अतो द्व्यात्मकमेव वस्तु प्रतीयते इति कार्यकारणयोर्जातिव्यक्त्योश्चात्यन्तभेदोपपादनं प्रतीतिपराहतम्।

---

ततः किमित्यत्राह **कार्येति**। अविरोधेनोपलब्धिमाह **प्रत्युतेति**। उपलब्धिमभिनयेन दर्शयति **यथेति**। अद्विरूपवस्त्वनुपलब्धिमाह **न चेति**। नाश्यनाशकत्वलक्षणस्तृतीयोऽपि विरोधो नास्तीत्याह **न च तृणादेरिति**। वस्तुविरोधशब्देन नाश्यनाशकलक्षणविरोधो विवक्षितः। तादृशविरोधाभावमुपपादयति **मृत्सुवर्णेति**। जातिगतोऽभेदो व्यक्तिगतश्च भेद इति कथमेकस्य भेदाभेदाविति शङ्कायां जातिव्यक्त्योः परस्परभेदाभेदमुपपादयति **न चाभिन्नस्येति**। **अभिन्नस्य**—जातेः, **भिन्नस्य**—व्यक्तेरित्यर्थः। जातेरभेद एवाकारः, व्यक्तेर्भेद एवाकार इति किमीश्वराज्ञया स्वीक्रियते? न हि प्रमाणतर्कानादरेण हठात् कश्चिदर्थः स्वीकार्य इति भावः। प्रतीतिबलादभ्युपगतिं शङ्कते **प्रतीतत्वादिति**। तथा समतस्याभ्युपगन्तव्यतामाह **प्रतीतत्वादेवेति**। त्वदुक्तादेवेत्येवकाराभिप्रायः। **द्वैरूप्यमपीति**। अनिष्टमपीति **अपि**शब्दस्याभिप्रायः। प्रतीतत्वमेवोपपादयति **न हीति**। इयं जातिः इयं व्यक्तिरिति विविक्ते हि, अत्राभेदः अत्र च भेद इति वक्तुं युक्तम्; न तथा विविच्यत इत्यर्थः। तर्हि कथं प्रतीतिरित्यत्राह **अपि त्विति**। एकमेव वस्तु जात्यात्मना व्यक्त्यात्मना च भिन्नमभिन्नञ्च प्रतीयत इत्यर्थः। मृदयं घट इत्यनेन मत्वर्थीयप्रत्ययनिरपेक्षसामानाधिकरण्यप्रत्ययो भेदाभेदसाधकयुक्तिरुक्ता भवति। अनुवृत्तिव्यावृत्तिभ्यां विवेकं शङ्कते **अनुवृत्तीति**। परिहरति **नैवमिति**। विविक्ताकारानुपलब्धिं विवृणोति **नहि सुसूक्ष्ममपीति**। विविक्ताकारोपलम्भे सति हि अस्मिन्नंशेऽनुवृत्तिबुद्धिबोध्यत्वम् अस्मिन्नंशे व्यवृत्तिबुद्धिबोध्यत्वमिति ज्ञातुं शक्यमित्यर्थः। **आकारभेदः** अंशभेदः। तर्हि कथमुपलम्भ इत्यत्राह **यथा संप्रतिपन्नेति**। **विशेषः** व्यक्तिः। यथा कार्यैकत्वं व्यक्त्येकत्वञ्च संप्रतिपन्नम्, तथा कार्यकारणयोश्च जातिव्यक्त्योश्चैकत्वबुद्धिर्जायत इत्यर्थः। **एकत्वबुद्धिरि**त्यनेन एकशब्दानुविद्धप्रत्यय उक्तो भवति। सहोपलम्भनियमः प्रथमपिण्डग्रहणे अभेदेन ग्रहणं (अंशभेदेनाग्रहणं) च अर्थादुक्तं भवति; **न विवेक्तुं शक्नोती**त्युक्तेः। एवं जातिव्यक्त्योरन्योन्यभेदाभेदः उक्तः; अथ पिण्डानां परस्परभेदाभेद उच्यते **एवमेवेति**। देशकालवैलक्षण्यं स्पष्टम्। नीलत्वखण्डत्वादिराकारवैलक्षण्यम्। **अत्यन्तभेदः** अभे-

अथोच्येत—मृदयं घटः, खण्डो गौरितिवत् देवोऽहं मनुष्योऽहमिति सामानाधिकरण्येनैक्यप्रतीतेरात्मशरीरयोरपि भिन्नाभिन्नत्वं स्यात्; अत इदं भेदाभेदोपपादनं निजसदननिहितहुतवहज्वालायते इति—तदिदमनाकलितभेदाभेदसाधनसामानाधिकरण्यतदर्थयाथात्म्यावबोधविलसितम्। तथा हि—अबाधित एव प्रत्ययः सर्वत्रार्थं व्यवस्थापयति। देवा(हा)द्यात्माभिमानस्तु आत्मयाथात्म्यगोचरैः सर्वैः प्रमाणैर्बाध्यमानो रज्जुसर्पादिबुद्धिवत् नात्मशरीरयोरभेदं साधयति। खण्डो गौः मुण्डो गौरिति सामानाधिकरण्यस्य न केनचित् क्वचिद्बाधो दृश्यते। तस्मान्नातिप्रसङ्गः।

अत एव जीवोऽपि ब्रह्मणो नात्यन्तभिन्नः; अपि तु ब्रह्मांशत्वेन भिन्नाभिन्नः। तत्राभेद एव स्वाभाविकः, भेदस्त्वौपाधिकः॥ कथमवगम्यत इति चेत्—"तत्त्वमसि", 'नान्योऽतोऽस्ति द्रष्टा", "अयमात्मा ब्रह्म" इत्यादिभिः श्रुतिभिः, "ब्रह्मेमे द्यावापृथिवी" इति प्रकृत्य "ब्रह्म दाशाः ब्रह्म दासाः ब्रह्मेमे कितवा उत। स्त्रीपुंसौ ब्रह्मणो जातौ स्त्रियो ब्रह्मोत वा पुमान्" इत्याथर्वणिकानां संहितोपनिषदि ब्रह्मसूक्ते अभेदश्रवणाच्च, "नित्यो नित्यानां चेतनश्चेतनानामेको बहूनां यो विदधाति कामान्", "ज्ञाज्ञौ द्वावजावीशनीशौ", 'क्रियागुणैरात्मगुणैश्च तेषां संयोगहेतुरपरोऽपि दृष्टः", "प्रधानक्षेत्रज्ञपतिर्गुणेशः संसारमोक्षस्थितिबन्धहेतुः', "स कारणं करणाधिपाधिपः", "तयोरन्यः पिप्पलं स्वाद्वत्त्यनश्नन्नन्यो अभिचाकशीति", "य आत्मनि तिष्ठन्", "प्राज्ञेनाऽऽत्मना संपरिष्वक्तो न बाह्यं किञ्चन वेद", "प्राज्ञेनात्मनाऽन्वारूढः उत्सर्जन् याति", "तमेव विदित्वाऽति मृत्युमेति" इत्यादिभिर्भेदश्रवणाच्च जीवपरयोर्भेदाभेदौ अवश्याश्रयणीयौ। तत्र "ब्रह्म वेद ब्रह्मैव भवति" इत्यादिभिर्मोक्षदशायां जीवस्य ब्रह्मस्वरूपापत्तिव्यपदेशात्, "यत्र त्वस्य सर्वमात्मैवाभूत् तत् केन कं पश्येत्" इति तदानीं भेदेनेश्वरदर्शननिषेधाच्च अभेदः स्वाभाविक इत्यवगम्यते।

---

दासहो भेद इत्यर्थः। अत्र चोद्यमाशङ्कते **अथोच्येते**ति। देहात्मनोः सद्द्रव्यात्मनैकत्वेऽभिमतेऽपि देहरूपेण आत्मरूपेण वा तयोरैक्यस्याप्रामाणिकत्वात् तयोर्भिन्नाभिन्नत्वमनिष्टमिति भावः। परिहरति **तदिद**मिति। 'अबाधितं सामानाधिकरण्यं भेदाभेदसाधकम्; अबाधितश्च भेदाभेदस्तत्त्वम्' इत्यज्ञानोक्तमित्यर्थः। तदुपपादयति **तथा ही**ति। परिहारौपयिकमर्थं शिक्षयति **अबाधित** इति। ततः किमित्यत्राह **देवादी**ति। जातिव्यक्त्योरपि तथा स्यादित्यत्राह **खण्ड** इति। एवं लौकिकार्थानां भेदाभेद उक्तः। तदु(मु?)पजीव्य वैदिकेष्वप्यर्थेषु जीवब्रह्मणोर्भेदाभेदमाह **अत एवे**ति। **अतः**—भेदाभेदयोरविरुद्धत्वादित्यर्थः। **ब्रह्मांशत्वेने**त्यत्र "अंशो नानाव्यपदेशात्" इति सूत्रं स्मारितम्। अचिद्ब्रह्मणोर्भेदाभेदः स्वाभाविक इति **भास्करयादवयो**रुभयोरप्यभिमतम्; 'चिद्ब्रह्मणोस्तु भेदाभेदौ स्वाभाविकौ' इति **यादव**मतव्यावृत्त्यर्थमाह **तत्रे**ति। **कथ**मिति। भेदाभेदसद्भावे तत्राभेदस्यैव स्वाभाविकत्वे च किं प्रमाणमित्यर्थः। अभेदस्य स्वाभाविकत्वेन प्राधान्यात् प्रथमम् **अन्यथा**चेति सूत्रांशविषयवाक्यमाह **तत्त्वमसी**ति। **दाशकितवे**त्याद्यंशविषयमाह **ब्रह्मेमे** इति। **नानाव्यपदेशा**दित्यंशस्य विषयमाह **नित्यो नित्याना**मिति। **क्रियागुणैरात्मगुणैश्चे**ति **क्रियागुणाः**—संसारहेतुगुणाः। **आत्मगुणाः**—मोक्षहेतुगुणाः; तैस्संयोगहेतुरित्यर्थः। अत्र भेदस्यौपाधिकत्वं कथमवगम्यत इत्यत्राह **तत्रे**ति। तत्स्वरूपापत्तिव्यपदेशो भेदनिषेधश्चाभेदस्यानौपाधिकत्वज्ञापकावित्यर्थः। **मुक्तौ** भेदनिषेधादेव

नतु च, "सोऽश्नुते सर्वान् कामान् सह ब्रह्मणा विपश्चिता" इति सहश्रुत्या तदानीमपि भेदः प्रतीयते। वक्ष्यति च, "जगद्व्यापारवर्जं प्रकरणादसंनिहितत्वाच्च", "भोगमात्रसाम्यलिङ्गाच्च" इति॥ नैतदेवम्; "नान्योऽतोऽस्ति द्रष्टा" इत्यादिश्रुतिशतैरात्मभेदप्रतिषेधात्। "सोऽश्नुते सर्वान् कामान् सह ब्रह्मणा विपश्चिता" इति सर्वैः कामैः सह ब्रह्माश्नुते; सर्वगुणान्वितं ब्रह्माश्नुते इत्युक्तं भवति। अन्यथा ब्रह्मणा सहेत्यप्राधान्यं ब्रह्मणः प्रसज्येत। जगद्व्यापारवर्जमित्यत्र मुक्तस्य भेदेनावस्थाने सति ऐश्वर्यस्य न्यूनताप्रसङ्गो वक्ष्यते। अन्यथा, "संपद्याविर्भावः स्वेनशब्दात्" इत्यादिभिर्विरोधात्।

तस्मादभेद एव स्वाभाविकः। भेदस्तु जीवानां परस्माद्ब्रह्मणः, परस्परञ्च बुद्धीन्द्रियदेहोपाधिकृतः। यद्यपि ब्रह्म निरवयवं सर्वगतञ्च, तथापि आकाश इव घटादिना बुद्ध्याद्युपाधिना ब्रह्मण्यपि भेदः संभवत्येव। न च--भिन्ने ब्रह्मणि बुद्ध्याद्युपाधिसंयोगः, बुद्ध्याद्युपाधिसंयोगाद्ब्रह्मणि भेद इतीतरेतराश्रयत्वम्; उपाधेस्तत्संयोगस्य च कर्मकृतत्वात् तत्प्रवाहस्य चानादित्वात्। एतदुक्तं भवति--पूर्वकर्मसंबद्धात् जीवात् स्वसंबद्ध एवोपाधिरुत्पद्यते, तद्युक्तात् कर्म, एवं बीजाङ्कुरन्यायेन कर्मोपाधिसंबन्धस्यानादित्वान्न दोष इति। अतो जीवानां परस्परं ब्रह्मणा चाभेद एव स्वाभाविकः। भेदस्त्वौपाधिकः। उपाधीनां पुनः परस्परं ब्रह्मणा चाभेदवत् भेदोऽपि स्वाभाविकः, उपाधीनामुपाध्यन्तराभावात्; तदभ्युपगमे अनवस्थानाच्च। अतो जीवकर्मानुरूपं ब्रह्मणो भिन्नाभिन्नस्वभावा एवोपाधय उत्पद्यन्त इति॥

---

भेदस्यौपाधिकत्वमप्यर्थसिद्धम्। मुक्तौ भेदं दर्शयंश्चोदयति **ननु चेति**। सहशब्दो भोक्तृसाहित्यपर इति चोदयितुरभिप्रायः। भोग्यसाहित्यबुद्ध्या परिहरति **नैतदिति**। भेदप्रतीतिं परिहरिष्यन् मुक्तौ भेदस्य श्रुतिविरुद्धतां दर्शयति **नान्य इति**। भेदप्रतीतिं परिहरति **सोऽश्नुत इति**। **सोऽश्नुत इति** वाक्येनोक्तं भवतीत्यन्वयार्थः। **ब्रह्मणा सह गुणानश्नुते**—गुणांश्च ब्रह्म चानुभवतीति। किं ब्रह्म पृथग्भूतोऽश्नुते, उतापृथग्भूत इत्यपेक्षायाम्—तत् वाक्यान्तरावगम्यम्। अतो नात्र भेदप्रतीतिरिति यावत्। एतदुपपादयति **अन्यथेति**। अप्राधान्यं भोक्त्रन्तरापेक्षया दोषः; भोग्यभूतस्वगुणापेक्षया तु न दोष इति भावः। परोदाहृतसूत्रस्य स्वाभिमतमर्थमाह **जगदिति**। ब्रह्मणो मुक्तस्य च भेदे सति जगद्व्यापारवर्जत्वप्रसङ्गान्न भेद इति सूत्रार्थ इत्यर्थः। तदुपपादयति **अन्यथेति**। अभेदस्य स्वाभाविकत्वं निगमयति **तस्मादिति**। मुक्तौ भेदनिषेधादर्थसिद्धं भेदस्य औपाधिकत्वम् एवकारेणाभिप्रेतम्। उपाधिः क इत्यपेक्षायामाह **भेदस्त्विति**। औपाधिकत्वरूपवैषम्यपरः तुशब्दः; शङ्काद्योतको वा। ब्रह्मणो विभुत्वनिरवयवत्वाभ्यां जीवगत उपाधिर्ब्रह्मण्येवेति तदसंसृष्टप्रदेशाभावात् जीवेश्वरभेदो न संभवतीत्यत्राह **यद्यपीति**। अन्योन्याश्रयमाशङ्क्याह **न चेति**। ईश्वरांशे कर्मकृतबुद्ध्याद्युपाधिसंबन्धाभावादुपाधिसंयोगस्य भेदपूर्वकत्वम्। प्रवाहानादितया परिहरति **उपाधेरिति**। कथमुपाधितत्संयोगकर्मणां प्रवाहानादित्वम्, तेन चान्योन्याश्रयपरिहारः कथम् इति शङ्कायां तद्विवृणोति **एतदुक्तमिति**। **तद्युक्तात्कर्मेति**। कर्मवश्यत्वं हि जीवत्वम्। उपाधिना जीवत्वं जीवभावादुपाध्यन्तरमित्यनादिरित्यर्थः। फलितमर्थमाह **अत इति**। अचिदंशे वैषम्यमाह **उपाधीनां पुनरिति**। पुनः स्वर्थः। वैषम्ये हेतुद्वयमाह **उपाधीनामिति**। भिन्नाभिन्नत्वपक्षमुपसंहरति **अतो जीवकर्मेति**॥

अत्रोच्यते—'अद्वितीयसच्चिदानन्दब्रह्मध्यानविषयविधिपरं वेदान्तवाक्यजातमिति वेदान्तवाक्यैरभेदः प्रतीयते । भेदावलम्बिभिः कर्मशास्त्रैः प्रत्यक्षादिभिश्च भेदः प्रतीयते । भेदाभेदयोः परस्परविरोधात् अनाद्यविद्यामूलतयापि भेदप्रतीत्युपपत्तेरभेद एव परमार्थः' इत्युक्तम् । तत्र यदुक्तम्—भेदाभेदयोरुभयोरपि प्रतीतिसिद्धत्वान्न विरोध इति—तदयुक्तम ; कस्माच्चित् कस्यचिद्विलक्षणत्वं हि तस्मात् तस्य भेदः । तद्विपरीतत्वञ्चाभेदः । तयोस्तथाभावातथाभावरूपयोरेकत्र संभवमनुन्मत्तः को ब्रवीति ॥

कारणात्मना जात्यात्मना चाभेदः, कार्यात्मना व्यक्त्यात्मना च भेद इत्याकारभेदादविरोध इति चेत्—न; विकल्पासहत्वात् । आकारभेदादविरोधं वदतः किमेकस्मिन्नाकारे भेदः आकारान्तरे चाभेद इत्यभिप्रायः, उताकारद्वययोगिवस्तुगतावुभावपि इति । पूर्वस्मिन् कल्पे व्यक्तिगतो भेदः, जातिगतश्चाभेद इति नैकस्य द्व्यात्मकता ॥ जातिर्व्यक्तिरिति चैकमेव वस्त्विति चेत्—तर्ह्याकारभेदादविरोधः परित्यक्तः स्यात् । एकस्मिंश्च विलक्षणत्वतद्विपर्ययौ विरुद्धावित्युक्तम् । द्वितीये तु कल्पे अन्योन्यविलक्षणमाकारद्वयम् अप्रतिपन्नञ्च तदाश्रयभूतं वस्त्विति तृतीयाभ्युपगमेऽपि त्रयाणामन्योन्यवैलक्षण्यमेवोपपादितं स्यात्; न पुनरभेदः । आकारद्वयनिरु(रू)ह्यमाणाविरोधं तदाश्रयभूते वस्तुनि भिन्नाभिन्नत्वमिति चेत्—स्वस्माद्विलक्षणं स्वाश्रयमाकारद्वयं स्वस्मिन्

---

अथ **भेदाभेदपक्षं ध्याननियोगवादी** दूषयति **अत्रोच्यत** इत्यादिना । पूर्वं **यदपि कैश्चिदुक्त**मिति प्रक्रान्तस्य पक्षस्योत्थापकं सङ्गतिस्थलं दर्शयितुमाह **अद्वितीये**ति । तत्सङ्गतिस्थलं दर्शयति **तत्र यदुक्त**मिति । भेदाभेदविषयप्रतीतिं दूषयिष्यन् पूर्वं तयोर्विरोधमुपपादयितुं तत्स्वरूपमाह **कस्माच्चि**दिति । **विलक्षणत्वम्**—अन्यत्वम् । इदमिदं न भवति, इदमिदं भवतीति हि भेदाभेदविषयप्रतीतिः । ततः किमित्यत्राह **तयो**रिति । भेदाभेद इति न कस्यचिद्धर्मस्य संज्ञा । लोकप्रसिद्ध्यनुगुणोऽर्थो भेदाभेदशब्दस्य स्वीकृतश्चेत्-भावाभावयोर्विरोधोऽवर्जनीय इत्यर्थः । किञ्च अनेन क्वचिदपि विरोधो नास्तीति वक्तुं न शक्यम् ; त्रिविधविरोधोपलब्धेः । यदि भावाभावयोर्न विरोधः, तर्हि भिन्नाभिन्नत्वं भवति, न भवतीति स्वपरवचसोरपि विरोधाभावः स्यात् । परोक्तं पिण्डद्वयभेदाभेदस्याऽऽकारभेदादविरोधमनुवदति **कारणात्मनेति** । विकल्प्य दूषयति **नेत्या**दिना । **एकस्मिन् आकार** इति आकारशब्दः पदार्थपरः । **पूर्वस्मिन् कल्प** इति । तत्र जातिव्यक्त्योः किं परस्परं भेदः, उताभेदः, उत भेदाभेदः इति विकल्पत्रयमभिप्रेत्य प्रथमं शिरो दूषयति **व्यक्तिगत** इति । द्वितीयमनुवदति **जाति**रिति । दूषयति **तर्हीति** । विरोधस्तिष्ठत्येवेत्यर्थः । तृतीयं दूषयति **एकस्मिंश्चेति** । जातिर्व्यक्तिर्भवति न भवतीति भावाभावविरोधः स्थित एवेत्यर्थः । कण्ठोक्तपूर्वकल्पे द्वितीयं शिरो दूषयति **द्वितीये तु कल्पे** इति । अत्र तृतीयस्य जातिव्यक्तिव्यतिरिक्तस्य वस्तुनोऽप्रतिपन्नत्वं नामैकं दूषणमधिकम् । तदिद**मप्रतिपन्न**ञ्चेत्यनेनाभिप्रेतम् । प्रतिपन्नत्वाभ्युपगमेऽपि दूषणमाह **तृतीयाभ्युपगमे-ऽपी**ति । **न पुन**रिति । अन्यथा त्रित्वाभावादित्यर्थः । अत्र तृतीये वस्तुनि आकारद्वयेन भेदाभेदयोर्निर्वाह्यत्वेनाविरोधित्वं शङ्कते **आकारद्वये**ति । इदमाकारद्वयं किं स्वाश्रयेण भिन्नम्, उताभिन्नम्, उत भिन्नाभिन्नम् इति विकल्पत्रयमभिप्रेत्य प्रथमं शिरो दूषयति **स्वस्मा**दिति । स्वशब्दत्रयमप्याश्रयपरम् । भेदाभेदयोरेकाश्रयत्वेन हि विरोधः । अविरोधनिर्वाहकाकारद्वयं हि न भेदाभेदयोराश्रयभूतम् ।

विरुद्धधर्मद्वयसमावेशनिर्वाहकं कथं भवेत्? अविलक्षणं तु कथन्तराम्? आकारद्वयतद्वतोश्च द्व्यात्मकत्वाभ्युपगमे निर्वाहकान्तरापेक्षयाऽनवस्था स्यात्। न च संप्रतिपन्नैक्यव्यक्तिप्रतीतिवत् ससामान्येऽपि वस्तुन्येकरूपा प्रतीतिरुपजायते; यतः इदमित्थमिति सर्वत्र प्रकारप्रकारितयैव सर्वा प्रतीतिः। तत्र प्रकारांशो जातिः, प्रकार्यंशो व्यक्तिरिति नैकाकारा प्रतीतिः।

अत एव जीवस्यापि ब्रह्मणो भिन्नाभिन्नत्वं न संभवति। तस्मादभेदस्यानन्यथासिद्धशास्त्रमूलत्वादनाद्यविद्यामूल एव भेदप्रत्ययः॥ नन्वेवं ब्रह्मण एवाज्ञत्वम् तन्मूलाश्च जन्मजरामरणादयो दोषाः प्रादुःष्युः। ततश्च "यः सर्वज्ञः सर्ववित्", "एष आत्माऽपहतपाप्मा" इत्यादीनि शास्त्राणि बाध्येरन्॥ नैवम्; अज्ञानादिदोषाणामपरमार्थत्वात्। भवतस्तु उपाधिब्रह्मव्यतिरिक्तं वस्तु

---

अतो न तत् अविरोधनिर्वाहकम्। अग्निगतं पैङ्गल्यमौज्ज्वल्यञ्चाकारद्वयम् अग्नौ शीतोष्णत्वरूपविरुद्धधर्मद्वयसमावेशनिर्वाहकं न भवतीत्यर्थः। द्वितीयं शिरो दूषयति **अविलक्षणमि**ति। पूर्वमाकारद्वये संभवति तस्य विरुद्धधर्मद्वयनिर्वाहकत्वायोग उक्तः; अत्र त्वाकारद्वयमेव नास्तीति नितरां विरुद्धधर्मसमावेशायोग इत्यभिप्रायेण **कथन्तरा**मित्युक्तम्। तृतीयं शिरो दूषयति **आकारद्वयतद्वतोरि**ति। आकारद्वयस्य तदाश्रयस्य च भिन्नाभिन्नत्वनिर्वाहकमाकारद्वयान्तरमपेक्षितम्; तस्यापि स्वाश्रयेण भिन्नाभिन्नत्वमस्ति चेत्, तदविरोधनिर्वाहकाकारद्वयान्तरमपेक्षितमित्यनवस्था स्यादित्यर्थः। अथ किं दृष्टेऽनुपपन्नं नामेति शङ्कायां भेदाभेदविषयप्रतीतिं दूषयति **न चे**ति। हेतुमाह **यत** इति। तस्यां प्रतीतौ प्रकारप्रकारिणौ विविच्य दर्शयति **तत्रे**ति।

अनेनेदमपि परिहृतम्—मत्वर्थीयप्रत्ययनिरपेक्षसामानाधिकरण्यम्, सहोपलम्भनियमः, एकशब्दानुविद्धप्रत्ययः, प्रथमपिण्डग्रहणे जातिव्यक्त्योरभेदप्रतीतिश्चेति हेतुचतुष्टयम्। अपृथक्सिद्धविशेषणत्वं मत्वर्थीयप्रत्ययनिरपेक्षसामानाधिकरण्यहेतुः। अपृथक्सिद्धिश्च प्रकारप्रकारिणोः संबन्धनियमादेवोपपन्ना। अतः प्रकारप्रकारिभावप्रतिपन्नभेदविरुद्धाभेदकल्पनाया नावकाशः। संबन्धनियम एव सहोपलम्भनियमहेतुश्च। एकोऽयं गौरिति प्रत्ययोऽपि, एको दण्डीतिवत् विशेष्यैक्यविषयः; न तु विशेषणविशेष्यैक्यविषयः। प्रथमपिण्डग्रहणेऽपि प्रकारप्रकारिभावात् भेदेनैव प्रतीतिः। किञ्च सहत्वमपि भेदसाधकम्। द्वयोरेव हि साहित्यम्। सहोपलम्भनियमश्च, संप्रतिपन्ने भिन्ने अभिन्ने च न दृष्ट इत्यसाधारणानैकान्तिकत्वात् नोभयसाधकः। भिन्नेषु अभिन्नेषु चादृष्टस्य भेदाभेदसाधकत्वेऽभ्युपगम्यमाने नित्येभ्योऽनित्येभ्यश्च व्यावृत्तं गन्धवत्त्वं पृथिव्या नित्यत्वानित्यत्वसाधकं स्यात्। किञ्च साधननियमः साध्यनियमहेतुरिति सहत्वनियमो भेदनियमहेतुरेव। अत्र जातिः अत्र व्यक्तिरिति प्रदेशभेदाग्रहणं जातेः पिण्डे व्याप्यवृत्तित्वात्। तच्च सहोपलम्भनियमान्तर्गतम्। देशतः कालतश्चोपलम्भनियमो हि सहोपलम्भनियमः। अतो देशतः कालतश्च संबन्धनियमकृतः सहोपलम्भनियमः। किञ्च सहोपलम्भनियमोऽसिद्धः; इदं रजतमित्यत्र शुक्तित्वजातिव्यतिरेकेणाधिष्ठानभूतव्यक्तिप्रतीतेः। अतो नैक्यसाधकत्वमिति॥

लौकिकवस्तुनि भेदयोर्विरुद्धत्वमुपजीव्य वैदिकेऽपि तत्सद्भावमाह **अत एवे**ति। भेदाभेदयोर्विरोधेनैकस्मिन् वस्तुनि तयोरनुपपन्नत्वादित्यर्थः। भेदाभेदनिरासमुपजीव्याभेदस्यैव तात्त्विकतामाह **तस्मादि**ति। दोषसंबन्धमुखेन चोदयति **नन्वि**ति। अपरमार्थतया परिहरति **नैवमि**ति। परोक्तदोषः परस्यैवेत्याह **भवत**-

अनभ्युपगच्छतो ब्रह्मण्येवोपाधिसंसर्गः तत्कृताश्च जीवत्वाज्ञत्वादयो दोषाः परमार्थत एव भवेयुः। न हि ब्रह्मणि निरवयवे अच्छेद्ये संबध्यमाना उपाधयः तत् छित्त्वा भित्त्वा वा संबध्यन्ते ; अपि तु ब्रह्मस्वरूपे संयुज्य तस्मिन्नेव स्वकार्याणि कुर्वन्ति ॥

यदि मन्वीत—'उपाध्युपहितं ब्रह्म जीवः; स चाणुपरिमाणः। अणुत्वञ्चावच्छेदकस्य मनसोऽणुत्वात्। स चावच्छेदोऽनादिः। एवमुपाध्युपहिते अंशे संबध्यमानाः दोषा अनुपहिते परे ब्रह्मणि न संबध्यन्त' इति--अयं प्रष्टव्यः—किमुपाधिना छिन्नो ब्रह्मखण्डोऽणुरूपो जीवः, उताच्छिन्न एवाणुरूपोपाधिसंयुक्तो ब्रह्मप्रदेशविशेषः, उतोपाधिसंयुक्तं ब्रह्मस्वरूपम्, अथोपाधिसंयुक्तं चेतनान्तरम्, अथोपाधिरेवेति। अच्छेद्यत्वाद्ब्रह्मणः, प्रथमः कल्पो न कल्पते। आदिमत्त्वं च जीवस्य स्यात्। एकस्य सतो द्वैधीकरणं हि छेदनम्। द्वितीये तु कल्पे ब्रह्मण एव प्रदेशविशेषे उपाधिसंबन्धादौपाधिकाः सर्वे दोषास्तस्यैव स्युः। उपाधौ गच्छति उपाधिना स्वसंयुक्तब्रह्मप्रदेशाकर्षणायोगादनुक्षणमुपाधिसंयुक्तब्रह्मप्रदेशभेदात् क्षणे क्षणे बन्धमोक्षौ च स्याताम्। आकर्षणे च अच्छिन्नत्वात् कृत्स्नस्य ब्रह्मण आकर्षणं स्यात्॥ निरंशस्य व्यापिन आकर्षणं न संभवतीति चेत्—तर्हि उपाधिरेव गच्छतीति पूर्वोक्त एव दोषः स्यात्। अच्छिन्नब्रह्मप्रदेशेषु सर्वोपाधिसंसर्गे सर्वेषां च जीवानां ब्रह्मण एव प्रदेशत्वेन, एकत्वेन प्रतिसंधानं स्यात्। प्रदेशभेदादप्रतिसंधाने च, एकस्यापि स्वोपाधौ गच्छति [सति] प्रतिसंधानं न स्यात्। तृतीये तु कल्पे ब्रह्मस्वरूपस्यैवोपाधिसंबन्धेन जीवत्वापातात् तदतिरिक्तानुपहितब्रह्मासिद्धिः स्यात्। सर्वेषु च देहेष्वेक एव जीवः स्यात्। तुरीये तु कल्पे ब्रह्मणोऽन्य एव जीव इति जीवभेदस्यौपाधिकत्वं परित्यक्तं स्यात्। चरमे चार्वाकपक्ष एव परिगृहीतः स्यात्।

---

त्त्विति। तदुपपादयति न हीति। अङ्गुल्यादेरिव छेदो न संभवतीति अच्छेद्यत्वं ब्रह्मणः, तस्य हेतुः निरवयवत्वम्। भित्त्वा—अच्छिन्नत्वेऽपि पाणिपादादिवत् प्रतिनियतप्रदेशभेदेनेत्यर्थः। प्रदेशभेदेन छेदनेन वा ब्रह्मणि संबन्धमुपाधयो नार्हन्ति, निरवयवत्वादच्छेद्यत्वाच्चेत्यर्थः। निरवयवत्वेऽप्यच्छेद्यत्वेऽपि गगनवत् उपहितानुपहितांशभेदेन सदोषत्वनिर्दोषत्वोपपत्तिं शङ्कते यदि मन्वीतेति। उपाध्यवच्छेदाज्जीवभावः जीवभावादुपाध्यवच्छेदः ; कर्मणा जीवभावः तस्मात्कर्मेति चान्योन्याश्रयपरिहाराय अनादिरित्युक्तम्। दूषयितुमाह अयं प्रष्टव्य इति। विकल्पयति किमिति। श्रुतौ अणुशब्दस्य सूक्ष्मपरत्वाभिप्रायसंभवात् तृतीयकल्पोदयः। चतुर्थपञ्चमौ कल्पौ आभ्यां विकल्पाभ्यां विना गतिर्नास्तीत्यभिप्रायेण कृतौ ; न तु पराभ्युपगत्या। ब्रह्मशब्दस्य जीवेऽप्युपचारवृत्तेः चतुर्थः कल्पः। उपाधिब्रह्मणोर्भिन्नाभिन्नत्वाभ्युपगमात् पञ्चमः। प्रथमं शिरो दूषयति अच्छेद्यत्वादिति। दूषणान्तरमाह आदिमत्त्वमिति। तदुपपादयति एकस्य सत इति। द्वितीयं दूषयति द्वितीये त्विति। दूषणान्तरमाह उपाधाविति। आकर्षणेन विना तत्परिहारासंभवात् तदाशङ्क्याह आकर्षणे चेति। अनुपपत्त्या तदनभ्युपगममाशङ्क्य पूर्वोक्तदूषणेन व्युदस्यति निरंशस्येति। दूषणान्तरमाह अच्छिन्नेति। तत्परिहारमाशङ्क्याह प्रदेशभेदादिति। तृतीयं शिरो दूषयति तृतीये त्विति। अनुपहितब्रह्मासिद्धिः स्यादिति। निर्दोषमङ्गलगुणकत्वश्रुतीनामनुपहितब्रह्मविषयत्वं हि पराभ्युपेतम्। जीवेश्वरभेदाभावप्रसङ्गो जीवानां परस्परभेदाभावप्रसङ्गश्चेत्यर्थः। चतुर्थपञ्चमौ दूषयति तुरीये त्वित्यादिना। चरम इति। अचिद्द्रव्यस्यैव चेतनत्ववचनात् तस्य चेतनब्रह्मतादात्म्यानुपपत्तिश्चेत्यभिप्रायः। भेदाभेददूषणमुपसंहरन्

तस्माद्भेदशास्त्रबलेन कृत्स्नस्य भेदस्याविद्यामूलत्वमेवाभ्युपगन्तव्यम् । अतः प्रवृत्तिनिवृत्तिप्रयोजनपरतयैव शास्त्रस्य प्रामाण्येऽपि ध्यानविधिशेषतया वेदान्तवाक्यानां ब्रह्मस्वरूपे प्रामाण्यमुपपन्नमिति ॥—

तदप्ययुक्तम्—ध्यानविधिशेषत्वेऽपि वेदान्तवाक्यानामर्थसत्यत्वे प्रामाण्यायोगात् । एतदुक्तं भवति—ब्रह्मस्वरूपगोचराणि वाक्यानि किं ध्यानविधिनैकवाक्यतामापन्नानि ब्रह्मस्वरूपे प्रामाण्यं प्रतिपद्यन्ते, उत स्वतन्त्राण्येव । एकवाक्यत्वे ध्यानविधिपरत्वेन ब्रह्मस्वरूपे तात्पर्यं न संभवति, भिन्नवाक्यत्वे प्रवृत्तिनिवृत्तिप्रयोजनविरहादनवबोधकत्वमेव । न च वाच्यम्—ध्यानं नाम स्मृतिसन्ततिरूपम्, तच्च स्मर्तव्यैकनिरूपणीयमिति ध्यानविधेः स्मर्तव्यविशेषाकाङ्क्षायाम्, "इदं सर्वं यदयमात्मा", "अयमात्मा ब्रह्म सर्वानुभूः", "सत्यं ज्ञानमनन्तं ब्रह्म" इत्यादीनि ब्रह्मस्वरूपतद्विशेषादीनि समर्पयन्ति; तेनैकवाक्यतामापन्नानि अर्थसद्भावे प्रमाणमिति;—ध्यानविधेः स्मर्तव्यविशेषापेक्षत्वेऽपि, "नाम ब्रह्म" इत्यादिदृष्टिविधिवत् असत्येनाप्यर्थविशेषेण ध्याननिर्वृत्त्युपपत्तेः ध्येयसत्यत्वानपेक्षणात् । अतो वेदान्तवाक्यानां प्रवृत्तिनिवृत्तिप्रयोजनविधुरत्वात् ध्यानविधिशेषत्वेऽपि ध्येयविशेषस्वरूपसमर्पणमात्रपर्यवसानात्, स्वातन्त्र्येऽपि बालातुराद्युपच्छन्दनवाक्यवत् ज्ञानमात्रेणैव पुरुषार्थपर्यन्ततासिद्धेश्च परिनिष्पन्नवस्तुसत्यतागोचरत्वाभावात् ब्रह्मणः शास्त्रप्रमाणकत्वं न संभवतीति प्राप्तम् ॥

---

स्वमतसिद्धिमाह **तस्मा**दिति । ध्यानविधिशेषतया ब्रह्मणः सिद्धिमुपसंहरति **अत** इति ॥

**ध्याननियोगवादिपक्षं मीमांसको** दूषयति **तदप्ययुक्त**मिति । न केवलं **निष्प्रपञ्चीकरणविधिवाद** एवानुपपन्नः, इदमपि मतमनुपपन्नमिति **अपि**शब्दस्य भावः । कुत इत्यत्राह **ध्याने**ति । ध्यानविधिशेषत्वे कथमर्थसत्यत्वे तात्पर्यायोगः; विधिशेषत्वं हित्वा स्वातन्त्र्येण वा ब्रह्मणि प्रामाण्यं स्यादित्यत्राह **एतदुक्त**मिति । दूषयितुं विकल्पयति **ब्रह्मस्वरूपे**ति । प्रथमं शिरो दूषयति **एके**ति । **एकवाक्यत्वम्**—महावाक्यैकत्वम् । द्वितीयं दूषयति **भिन्ने**ति । अनवबोधकत्वं दुःखसाध्यश्रवणादौ प्रवृत्त्ययोगात् । एकवाक्यत्वपक्षे विधिशेषतया ब्रह्मणः सिद्धिमाशङ्क्याह **न च वाच्य**मिति । कुत इत्यत्राह **ध्यानविधे**रिति । "नाम ब्रह्मेत्युपासीत" इत्यादिषु दृष्टिविधिषु विशेष्यसत्यत्वेऽपि विशेषणासत्यत्वेन विशिष्टासत्यत्वमवर्जनीयम्; इह च तथैवेत्यर्थः । सार्थसङ्ग्रहं पूर्वपक्षमुपसंहरति **अत** इति ॥ ननु प्रथमसूत्रे विधिशेषतया ब्रह्मणि प्रामाण्यसमर्थनम् एतदधिकरणपूर्वपक्षे विधिशेषतया तत्सिद्धिप्रतिक्षेपश्च कथं घटते ॥ इत्थम्; तत्र तु फलत्वेन सिद्धिरुक्ता, फलतया सिध्यतः पारमार्थ्याभावे स्वर्गादेरप्यसत्यत्वप्रसङ्गात् तत्पारमार्थ्यं सिध्यतीति फलतया तत्सिद्धिसमर्थनं साधीयः । अत्र तु ध्यानविधिकर्मत्वेनतत्सिद्धिर्व्युदस्ता; न तु फलतया तत्सिद्धिरित्यविरोधः[1] ॥.... .... ....

---

1 अविरोध इति । वस्तुतः प्रथमाधिकरणे विधिशेषतया प्रामाण्यसमर्थनं न सूत्रकारसंमतम् । पूर्वपक्षिमुखपिधानसौकर्याय तत् भाष्यकृद्वचनम् । स चान्वारुह्यवाद इति भा० प्र० । स्यादेतत्—फलतया विधिशेषतया तत्सिद्धौ पूर्वपक्षिणंप्रति उच्यमानायां पूर्वपक्षी स्तम्भित एव स्यादिति । तन्न-प्रवृत्तिनिवृत्त्यन्वयं विनापि ब्रह्मणि प्रामाण्यस्यैव सिद्धान्तीष्टतया तन्निरसनेन पूर्वपक्षिप्रत्यवस्थानस्यापि निवार्यत्वात् । शेषं भाष्यार्थदर्पणे ।

तत्र प्रतिपद्यते--'तत्तु समन्वयात्' इति । समन्वयः--सम्यगन्वयः. पुरुषार्थतयाऽन्वय इत्यर्थः । परमपुरुषार्थभूतस्यानवधिकातिशयानन्दस्वरूपस्य ब्रह्मणोऽभिधेयतयाऽन्वयात् तत्--शास्त्रप्रमाणकत्वं सिद्ध्यत्येवेत्यर्थः । निरस्तनिखिलदोषनिरतिशयानन्दस्वरूपतया परमप्राप्यं ब्रह्म बोधयन् वेदान्तवाक्यगणः प्रवृत्तिनिवृत्तिपरताविरहान्न प्रयोजनपर्यवसायीति ब्रुवाणो राजकुलवासिनः पुरुषस्य कौलेयककुलाननुप्रवेशेन प्रयोजनशून्यतां ब्रूते । एतदुक्तं भवति-अनादिकर्मरूपाविद्यावेष्टनतिरोहितपरावरतत्त्वयाथात्म्यस्वस्वरूपाववोधानां देवासुरगन्धर्वसिद्धविद्याधरकिंनरकिम्पुरुषयक्षराक्षसपिशाचमनुज-पशुशकुनिसरीसृप-वृक्षगुल्मलतादूर्वादीनां स्त्रीपुन्नपुंसकभेदभिन्नानां क्षेत्रज्ञानां व्यवस्थितधारकपोषकभोग्यविशेषाणां मुक्तानां स्वस्य चाविशेषेणानुभवसंभवे स्वरूपरूपगुणविभवचेष्टितैरनवधिकातिशयानन्दजननं परं ब्रह्मास्तीति बोधयदेव वाक्यं प्रयोजनपर्यवसायि । प्रवृत्तिनिवृत्तिनिष्ठं तु यावत्पुरुषार्थान्वयबोधं न प्रयोजनपर्यवसायि ।

---

एवमुपन्यस्तं पूर्वपक्षमभिप्रेत्य सूत्रकारेणैतत्सूत्रं प्रणीतमित्याह **तत्रेति** । **प्रतिपद्यते**—सिद्धान्तः प्राप्नोति । ज्ञायत इति वा अर्थः । समन्वयशब्दं विस्तरेण व्याचष्टे **समन्वय** इत्यादिना । कस्य केनान्वय इत्यपेक्षां पूरयन् वाक्यार्थं योजयति **परमेति** । परमपुरुषार्थत्वोपपादकमनवधिकेति पदम् । पुरुषेणार्थ्यत्वं हि **पुरुषार्थत्वम्** । आनन्दरूपतया पुरुषार्थत्वम् ; तस्यानवधिकातिशयत्वात् परमपुरुषार्थत्वमिति भावः । स्वयमननुकूलस्य सुखसाधनस्यापि पुरुषार्थत्वमस्तीति तद्व्यावृत्तिश्चानवधिकेत्यादिपदेन सिद्धा । तच्छब्दं व्याचष्टे **शास्त्रप्रमाणकत्वमिति** । पूर्वपक्षव्यावर्तकतुशब्दलब्धमर्थमाह **सिध्यत्येवेति** । तत्त्वमस्यादिस्वरूपोपदेशपरवाक्यार्थज्ञानमात्रेणाविद्यानिवृत्तिं तन्मुखेन वाक्यस्य प्रयोजनपर्यवसानञ्च वदतो मृषावादिनो ध्यानविध्यानर्थक्यं स्यात् ; वाक्यार्थज्ञानोपयोगित्वस्य दूषितत्वात् । मीमांसकपक्षे ब्रह्मणोऽसिद्धिः—इत्युभयविधदोषास्पृष्टेनाऽऽकारेण वेदान्तवाक्यानां ब्रह्मणि प्रामाण्यमुपपिपादयिषुः, तत्र प्रथमं ब्रह्मणः स्वतः सर्वेषां सर्वप्रकारभोग्यत्वेन पुरुषार्थत्वाधिक्यं प्रवृत्तिनिवृत्त्योर्दुःखात्मकत्वेन पुरुषार्थत्ववैकल्यं चाभिप्रयन् प्रवृत्तिनिवृत्तिपरत्वविरहवतः पुरुषार्थपर्यवसानाभावनिबन्धनाम् अप्रामाण्यशङ्कां परिहरति **निरस्तेति** । **राजकुलवासी**—राजकुलप्रसूतः, राजकुलान्तरङ्गो वा । **कौलेयकाः**—श्वानः । श्वोपजीविनो म्लेच्छा वा लक्ष्यन्ते । यद्यपि वाक्यगणस्थाने राजकुलवासी पुरुषः प्रतीयते, तथाप्यर्थवशाद्वाक्यार्थप्रतिपत्तृपुरुषस्थाने तन्निर्देशः फलितः । स्वतो निरवधिकपुरुषार्थपरवाक्यस्य प्रयोजनशून्यत्वकथनमनुपपन्नमित्यर्थः । ब्रह्मणः कथमनवधिकानन्दरूपतया पुरुषार्थत्वाधिक्यम् ; कथं च प्रवृत्तिनिवृत्त्योः पुरुषार्थत्ववैकल्यम् ; स्वरूपपरवाक्यस्य पुरुषार्थपर्यवसानं कुत्र दृष्टम् ; तथा सति कथं ध्यानविधिसाफल्यम् इत्याकाङ्क्षायामाह **एतदुक्तमिति** । ब्रह्मणः पुरुषार्थताधिक्यमाह **अनादीत्यादिना** । कर्मभिरनुभवप्रतिबन्धात् क्षेत्रज्ञानां तस्य पुरुषार्थत्वज्ञानाभावः ; न तु तत्र तद्वैकल्यादित्यभिप्रायेणोक्तम् **अनादिकर्मेति** । **देवासुरादि**परिगणनं तेषां व्यवस्थितभोग्यत्वप्रदर्शनार्थम् । योग्यानुपलब्धिशङ्काव्युदासाय **अनुभवसंभव** इत्युक्तम् । तद्विषयज्ञानानुकूलत्वं हि तदनुकूलत्वेन विना न संभवति । अतोऽनवधिकातिशयानन्दजननत्वोक्त्या ब्रह्मणोऽनवधिकातिशयानुकूलत्वं सिध्यतीत्यानन्दत्वमुपपादितं भवति । **स्वरूपेत्यादिना** सर्वप्रकारभोग्यत्वमुक्तम् । तेन पुरुषार्थत्वाधिक्यं सिद्धम् । **प्रवृत्तीत्यादिना** प्रवृत्तिनिवृत्त्योः पुरुषार्थत्ववैकल्यमुक्तम् ; इष्टसुखलवसाधनतयोपादेयत्वात् दुःखात्मकतया स्वतो भोग्यत्वाभावाच्च ।

एवम्भूतं परं ब्रह्म कथं प्राप्यत इत्यपेक्षायाम्, "ब्रह्मविदाप्नोति परम्", "आत्मानमेव लोकमुपासीत" इति वेदनादिशब्दैरुपासनं ब्रह्मप्राप्त्युपायतया विधीयते। यथा, स्ववेश्मनि निधिरस्तीति वाक्येन निधिसद्भावं ज्ञात्वा तृप्तस्सन् पश्चात् तदुपादाने च प्रयतते। यथा च कश्चिद्राजकुमारो बालक्रीडासक्तो नरेन्द्रभवनान्निष्क्रान्तो मार्गात् भ्रष्टो नष्ट इति राज्ञा विज्ञातः स्वयञ्चाज्ञातपितृकः केनचित् द्विजवर्येण वर्द्धितः अधिगतवेदशास्त्रः षोडशवर्षः सर्वकल्याण-गुणाकरस्तिष्ठन्, 'पिता ते सर्वलोकाधिपतिः गाम्भीर्यौदार्यवात्सल्यसौशील्यशौर्यवीर्यपराक्रमादि-

ध्यानादिविध्यानर्थक्यं परिहरति **एवम्भूत**मिति। परोक्षज्ञानस्यापि सुखरूपत्वात् स्वरूपपराणि वाक्यानि पुरुषार्थपर्यवसायीन्येव, तदापरोक्ष्याकाङ्क्षिणस्तत्साधनज्ञापकत्वात् ध्यानविधायीनि वाक्यान्यापि न निष्फलानीत्यर्थः। इममर्थं दृष्टान्तेन दर्शयति **यथे**ति। एवं परोक्षज्ञानजनकस्यैव वाक्यस्य पुरुषार्थ-पर्यवसायित्वेऽपि फलविशेषापेक्षया ध्यानप्रवृत्तिर्युक्ता, यथा "दर्शपूर्णमासाभ्यां स्वर्गकामो यजेत", "ज्योतिष्टोमेन स्वर्गकामो यजेत", "अग्निहोत्रं जुहुयात् स्वर्गकामः" इत्यादिषु दर्शपूर्णमासादीनामे-कैकस्य स्वर्गसाधनत्वेऽपि फलविशेषापेक्षया कर्मान्तरारम्भः, एकस्यैव कर्मण आवृत्तिश्चोपपद्यते, यथा पुत्रजन्मश्रवणसञ्जातहर्षस्यापि पश्चात तन्मुखापरोक्ष्यसुखाशया प्रवृत्तिरुपपद्यते—तथात्रापीत्यभिप्रायः। अत्र निधि-राजकुमारदृष्टान्तद्वयं चिदचिद्विभागादुक्तम् उभयगतं भोग्यत्वं ब्रह्मण्यस्तीति ज्ञापनाय। "तद्यथा हिरण्यनिधिं निहितमक्षेत्रज्ञा उपर्युपरि सञ्चरन्तो न विन्देयुः" इति श्रुतिः। निधिरस्तीति वाक्यस्य पुरुषार्थपरत्वं दर्शयति **तृप्तस्सन्नि**ति। "अविज्ञाताः कुमारकाः", "भगवतोऽहं पुत्रः प्रेष्यः शिष्यश्च", "माता पिता भ्राता", "भूतानां योऽव्ययः पिता", "एक इन्द्रो (इद्राजा) जगतो बभूव", "राजाधिराजः सर्वेषाम्" इत्यादिश्रुतिस्मृत्यनुसारेण सर्वविधभोग्यत्वप्रदर्शनाय **राजकुमार** इति भगवति राजत्वं चेतनेषु पुत्रत्वञ्चोपवर्णितम्। अत्र [1]कुशलवसमाधिर्द्रष्टव्यः। **बालक्रीडासक्त** इत्यनेन चेतनानां बाह्यविषयप्रावण्यं सूचितम्। **नरेन्द्रभवनान्निष्क्रान्त** इत्यनेन भगवत्सकाशबहिष्ठत्वं दर्शितम्, परमव्योमालाभश्च। **मार्गाद्भ्रष्ट** इत्यनेन कर्मज्ञानाद्युपायानन्वयः ख्यापितः। **द्विजवर्येण वर्द्धित** इत्यनेन भगवज्ज्ञाननिष्पत्तियोग्यतासिद्धिहेतुभूताध्ययनादिनिष्पादकाचार्यसंबन्धोऽभिप्रेतः। **षोडशवर्षः**। भोक्तृत्वावस्थो भोग्यतावस्थश्चेति भावः। **सर्वकल्याणगुणाकरः**—"निर्वाणमय एवायमात्मा ज्ञानमयोऽमलः" इत्याद्युक्तैर्भगवदभिमतैर्गुणैः पूर्णता सूचिता। **पिता त** इत्यादिना भगवद्-गुणगणाः सूचिताः। **गाम्भीर्यादय** उपासकं प्रति सौलभ्योपयुक्ता गुणाः; **शौर्यादयः** परत्वान्तर्गताः। **गाम्भीर्यम्**—संप्रदानलाघव-दीयमानगौरवानपेक्षत्वम्। **औदार्यम्**—दातृप्रगृहीतृविभागबुद्धिविरहेण प्राप्तं कृतमिति प्रतिपत्तिमत्त्वम्; आत्मात्मीयं दत्त्वापि, "ऋणं प्रवृद्धमिव मे" इति स्थितिर्वा। **वात्सल्यम्**—दोषेष्वपि गुणत्वबुद्धिः, यथा मातुर्वत्से। सुशीलं हि नाम महतो मन्दैः सह नीरन्ध्रेण संश्लेषस्वभावत्वम्; तद्वत्ता **सौशील्यम्**। **शौर्यम्**—शत्रुमध्ये स्वगृह इव प्रवेशसामर्थ्यम्। 'शूरं भीरुं कविं जडम्' इति भीरुत्वप्रतियोगि हि शौर्यम्। **वीर्यम्**—अश्रान्तिः। **पराक्रमः**—

1 कुशलवौ आदितो रामं पितरं भगवन्तमप्राप्यैव महदनुग्रहेण लब्धज्ञानौ पश्चात् पितर-मुपेत्य राज्यं प्रापतुः। तथा जीवा अनादिसंसारिणो मुच्यन्त इति विशेषत आनुरूप्यमनुसंधेयम्।

गुणसम्पन्नः त्वामेव नष्टं पुत्रं दिदृक्षुः पुरवरे तिष्ठति' इति केनचिदभियुक्ततमेन प्रयुक्तं वाक्यं शृणोति चेत्—तदानीमेव 'अहं तावत् जीवतः पुत्रः; मत्पिता च सर्वसम्पत्समृद्धः' इति निरतिशयहर्षसमन्वितो भवति। राजा च स्वपुत्रं जीवन्तमरोगमतिमनोहरदर्शनं विदितसकलवेद्यं श्रुत्वा अवाप्तसमस्तपुरुषार्थो भवति। पश्चात् तदुपादाने च प्रयतते। पश्चात् तावुभौ संगच्छेते चेति।

यत् पुनः परिनिष्पन्नवस्तुगोचरस्य वाक्यस्य तज्ज्ञानमात्रेणापि पुरुषार्थपर्यवसानात् बालातुराद्युपच्छन्दनवाक्यवत् नार्थसद्भावे प्रामाण्यमिति—तदसत्; अर्थसद्भावाभावे निश्चिते

---

विक्रमणम्। अत्रानुक्तमपि धैर्यमनुसंधेयम्, तच्च शत्रुभिर्धर्षणे तृणवन्मन्यमानत्वम्। दिदृक्षुरिति "स महात्मा सुदुर्लभः" इति भगवदभिप्रायः सूचितः। पुरवर इत्यनेन ब्रह्मपुराख्यशरीरान्तस्स्थितिरभिप्रेता; त्रिपाद्विभूतिसम्बन्धो वा। अभियुक्ततमशब्देन भगवज्ज्ञानप्रदो गुरुर्विवक्षितः। तस्येतरवैलक्षण्यं केनचिदित्यभिप्रेतम्। यदा अध्ययनादिकारयिता गुरुरेव ब्रह्मोपदेष्टा संभवति, तदाऽयमभियुक्ततमशब्दः पूर्वनिर्दिष्टद्विजवर्यमेवाभिधत्ते। तदसंभवे ब्रह्मोपदेष्टृपुरुषमात्राभिप्रायः। अत्र केनचिदित्यनेन पूर्वेणैव वा अन्येनैव वेति च तात्पर्यं ग्राह्यम्। शृणोति चेदित्यनेन भगवज्ज्ञानस्य दुर्लभत्वमभिप्रेतम्। निरतिशयहर्षसमन्वितो भवतीत्यनेन वाक्यस्य पुरुषार्थपरत्वं दर्शितम्। राजा चेति राजस्थानीयोऽप्युपासको विवक्षितः। अनेन सर्वविधभोग्यत्वस्य भगवति पुष्कलत्वात् गुणवत्पुत्रगतभोग्यत्वमपि तत्र विद्यत इति ज्ञापितम्। न हि भगवतो ज्ञानं परोक्षरूपम्। अवाप्तसमस्तपुरुषार्थो भवतीत्यनेन च वाक्यस्य प्रयोजनपर्यवसायित्वं दर्शितम्। [1]राजा चेत्यादिग्रन्थस्याऽऽपातप्रतिपन्नार्थोऽप्यविरुद्धः। ध्यानविधेरवैयर्थ्यं दृष्टान्तद्वयेनापि सिद्धमिति ज्ञापयितुमुक्तं पश्चात्तदुपादाने च प्रयतत इति, पश्चात्तावुभौ सङ्गच्छेते चेति च। अत्र पूर्वमेव, 'अर्थार्थी राजकुलं गच्छेत्' 'मन्दाग्निर्नाम्बु पिबेत्' इति वाक्योदाहरणात् इह निधिदृष्टान्तोपन्यासाच्चायमप्यर्थोऽर्थसिद्धः—किं क्रियोत्तीर्णकार्यपरतयैव वाक्यस्य प्रयोजनपर्यवसायित्वम्, उत क्रियाकार्यं वा तदुत्तीर्णं वा प्रवर्तकमर्थमभिदधत एव तत्पर्यवसायित्वमिति मतम्? । न प्रथमः, अर्थार्थी राजानं सेवेतेत्यादीनां सप्रयोजनत्वात्। न द्वितीयः, निधिमद्भूभागलक्षण-रत्नपरीक्षणपराणां शास्त्राणां प्रयोजनशालि(पर्यवसायि)त्वात्। न च तत्रापि खननधारणादिविधिपरत्वं वाक्यानां कल्प्यम्; तयोः रागप्राप्तत्वात्; खननादिप्रकारस्य लोकसिद्धत्वाच्च। अप्राप्ते हि शास्त्रमर्थवत्। दुष्टरत्नवर्जनमप्यनर्थजिहासाप्राप्तम्। वाक्यानि तु निधिमत्त्वगुणदोषज्ञापनमात्रपर्यवसायीनि। अतः प्रवर्तकार्थपरतयैव प्रयोजनपर्यवसानमिति नियमो भग्न इति।

अथ पूर्वपक्षिणोक्तमनुभाषते यत्पुनरिति वेदान्तवाक्यानां नार्थसद्भावे प्रामाण्यमस्तीति प्रतिज्ञा, तदर्थमर्थसद्भावाभावेऽपि पुरुषार्थपर्यवसानादिति हेतुर्विवक्षितः। दूषयति तदसदिति। कुत इत्यत्राह अर्थसद्भावाभाव इति। इदं वाक्यं पक्षविषयम्, पक्षदृष्टान्तसाधारणं वा। हेतुत्वं गर्भितम्। अर्थसद्भावाभावनिश्चये सति पुरुषार्थपर्यवसानाभावादित्यर्थः। अर्थासद्भावेऽपि पुरुषार्थो दृश्यत

---

1 विरादमिदं भाष्यार्थदर्पणे।

ज्ञातोऽप्यर्थः पुरुषार्थाय न भवति । बालातुरादीनामप्यर्थसद्भावभ्रान्त्या हर्षाद्युत्पत्तिः । तेषामेव तस्मिन्नेव ज्ञाने विद्यमाने यदि अर्थाभावनिश्चयो जायेत, ततस्तदानीमेव हर्षादयो निवर्तेरन् । औपनिषदेष्वपि वाक्येषु ब्रह्मास्तित्वतात्पर्याभावनिश्चये, ब्रह्मज्ञाने सत्यपि पुरुषार्थपर्यवसानं न स्यात् ।

अतः "यतो वा इमानि भूतानि जायन्ते" इत्यादिवाक्यं निखिलजगदेककारणं निरस्तनिखिलदोषगन्धं सार्वज्ञ्यसत्यसङ्कल्पत्वाद्यनन्तकल्याणगुणाकरमनवधिकातिशयानन्दं ब्रह्मास्तीति बोधयतीति सिद्धम् (४) ॥ इति समन्वयाधिकरणम् ॥...चतुस्सूत्री समाप्ता...श्रीः ।

---

इति शङ्कायां तत्रार्थसद्भावनिश्चयाभावमुपाधिमाह[1] **बालातुरादीना**मिति । तदेवोपपादयति **तेषामेवे**ति । ततः किमित्यपेक्षायां सपक्षे दर्शितमर्थं पक्षे स्फुटीकरोति **औपनिषदेष्वपी**ति । बालातुराद्युपच्छन्दनवाक्येष्विवात्राप्यर्थसद्भावभ्रान्त्या पुरुषार्थपर्यवसानं स्यादिति चेत्—'पयः पिब, कषायं पिब, शिखा वर्धिष्यते । पांसुषु लुठसि चेत्, न दन्ता उद्भिद्यन्ते' इत्यादीनां प्रवृत्तिनिवृत्तिपरवाक्यानामिव "स्वर्गकामो यजेत", "न कलञ्जं भक्षयेत्" इत्यादिवाक्यानामप्यर्थसद्भावभ्रान्त्या पुरुषार्थपर्यवसानं किं न स्यात् ॥ अपौरुषेयत्वात् वेदवाक्यस्य विप्रलिप्सामूलत्वाभावस्यैव भ्रामकतया पुरुषार्थपर्यवसानमयुक्तम्; तथा सति शास्त्रस्य निरूपकाधिगन्तव्यत्वात् स्वपुत्रशिष्यादीनामध्यापनादौ प्रवृत्तिर्नोपपद्यत इति चेत्—अपौरुषेयत्वमध्यापनादिप्रवृत्तिवैयर्थ्यं च वेदान्तवाक्येष्वपि तुल्यम् ॥ कर्मविधीनां देहातिरिक्तात्मज्ञानसापेक्षत्वात् वेदान्तवाक्यानां कर्मविधिशेषत्वेन अध्यापनादिप्रवृत्त्युपपत्तिरिति चेत्—न; असत्यपि देहात्मभेदे तत्सद्भावभ्रान्तिहेतुत्वशङ्कायां सत्यां तन्मुखेन प्ररोचनानुपपत्त्या विधिशेषतयाऽध्यापनाद्यनुपपत्तेः ॥ तर्कानुगृहीतनिर्दोषश्रुतिसिद्धदेहात्मभेदस्तात्त्विक इति चेत्—तत् पुरुषार्थभूतस्य परमात्मनः प्रतिपाद्यत्वेऽपि तुल्यम् ॥ देहात्मभेदसाधकहेत्वन्तरसंवादात् न भ्रान्तिहेतुत्वनिश्चय इति चेत्—तर्हि तेनैव हेत्वन्तरेण देहात्मभेदसिद्धिरिति तज्ज्ञापनाय वेदान्तवाक्यानामनपेक्षितत्वाद्विधिशेषतया तदध्यापनादिकं नोपपद्यते; एवं निरूपकाधिकार(र्य ?)स्य शास्त्रस्यार्थसद्भावभ्रान्त्या पुरुषार्थपर्यवसानानुपपत्तौ प्रवर्तकवाक्यानां प्रतिबन्दीत्वमभिप्रेत्य **औपनिषदेष्वपी**त्यादिभाष्यं प्रवृत्तम् ।

उक्तस्य हेतोर्विपर्यये पर्यवसानं दर्शयन्नधिकरणार्थमुपसंहरति **अत** इति । कारणवाक्यानामर्थमाह **निखिले**ति । **निखिल**शब्दः परैर्नित्यतयाऽभिमतानामाकाशादीनामपि कार्यत्वज्ञापनार्थः । **एक**शब्दो निमित्तोपादानैक्यद्योतकः । यतो वा इमानीत्यादिवाक्ये शोधकवाक्यार्थश्च गर्भित इत्यभिप्रायेणाह **निरस्ते**ति । अत्र **निखिल**शब्देन चिदचिद्गताः क्लेशकर्मादयो जन्मादयश्च विवक्षिताः । कदाचिद्दोषसंबन्धार्हत्वव्यावर्तकेन **गन्ध**शब्देन सदा तत्प्रत्यनीकत्वमुक्तं भवति । कारणत्वौपयिकान् गुणानाह **सार्वज्ञ्ये**ति । एतदधिकरणसिद्धमर्थमाह **अनवधिके**ति । **बोधयती**ति । अध्यापनाद्युपपत्तये

---

1 उपाधिमाहेति । वेदान्तवाक्यं अर्थाभावेऽपि प्रयोजनपर्यवसायि तदुद्देशेन प्रवृत्तत्वादिति साध्यस्य प्रयोजनपर्यवसायित्वस्य सदर्थतात्पर्यकत्वाभावेन बाधो न युक्तः । सदर्थतात्पर्यकत्वाभावेऽपि उपच्छन्दनवाक्ये प्रयोजनसत्त्वादिति पूर्वपक्षी । तन्न; प्रयोजनपर्यवसायित्वानुमाने अर्थासत्यत्वनिश्चयाभावस्योपाधित्वात्—पक्षे वेदान्तवाक्ये उपाध्यभावः सिद्धः । उपाधेः साध्यव्यापकत्वमवश्यस्वीकार्यमित्युपपादनार्थं तेषामेवेति भाष्यम् । यत्रार्थासत्यत्वनिश्चयः, तत्र प्रयोजनपर्यवसानाभाव इति हि दृष्टमिति ।

पुरुषार्थपर्यवसानस्यापेक्षितत्वात् प्रेक्षावदधिकार्यस्य शास्त्रस्यार्थसद्भावाभावनिश्चये सति पुरुषार्थपर्यवसानानुपपत्तेस्तदुपपत्त्यर्थं प्रवर्तकवाक्यानामिव अर्थसद्भावे प्रामाण्यमङ्गीकार्यमिति यथोक्तलक्षणं ब्रह्म 'यतो वा इमानि' इत्यादिवाक्यं प्रतिपादयतीत्यर्थः ।

शास्त्रारम्भसिद्ध्यर्थैषा चतुस्सूत्री [1]मृषावादिनां पक्षे न सङ्गच्छते; तत्पक्षे विषयप्रयोजनानुपपत्त्या शास्त्रस्यानारम्भणीयत्वात् । तथा हि—विषयः किं ब्रह्म, उत भेदमिथ्यात्वम्, उत जीवब्रह्मणोरैक्यम् ? ॥

न प्रथमः; ब्रह्मणो वेद्यत्वानभ्युपगमात्, वेद्यत्वे घटादेरिवाननुभूतित्वप्रसङ्गस्य स्वोक्तत्वाच्च । व्यावहारिकं वेद्यत्वमस्तीति चेत्—घटस्यापि वेद्यत्वं व्यावहारिकमिति तद्वदेवाननुभूतित्वप्रसङ्गो दुर्वारः । वास्तववेद्यत्वाभावस्य ब्रह्मणि साध्यत्वे घटस्य व्यतिरेकदृष्टान्तत्वं न घटते; घटस्य वास्तववेद्यत्वाभावविरहाभावात् । अनुभूतिः परमार्थतो न वेद्या; अनुभूतित्वात्; यत् परमार्थतो वेद्यम्, तत् नानुभूतिः, यथा घटः इत्युक्ते व्यतिरेकदृष्टान्तः साध्याव्यावृत्तो हि स्यात् । न हि घटः परमार्थतो वेद्यः । वेद्यत्वेऽननुभूतित्वप्रसङ्गमनादृत्य ब्रह्मणो वेद्यत्वाङ्गीकारेऽपि ब्रह्मणः शास्त्रविषयत्वमयुक्तम्; प्रत्यक्षस्य सन्मात्रग्राहित्वमभ्युपगच्छतस्तव मते शास्त्रानर्थक्यप्रसङ्गात् । "अप्राप्ते हि शास्त्रमर्थवत्" ।

न द्वितीयः; दृश्यत्वादिना लिङ्गेन भेदमिथ्यात्वमभिमन्यमानस्य तव शास्त्रानर्थक्यप्रसङ्गात् । तत्तद्धर्मिग्राहकप्रत्यक्षादिप्रमाणविरुद्धस्य प्रपञ्चमिथ्यात्वस्य यूपादित्यैक्यस्येव शास्त्रेण प्रतिपादनायोगात् शास्त्रस्य निर्विषयत्वं स्यात् । अप्राप्ते हि शास्त्रमर्थवत् । साधकस्येव बाधकस्याप्यगोचरत्वं ह्यप्राप्तत्वम् । ज्वालाभेदानुमानवैषम्यं च त्रिविधं[2] प्रागेव प्रपञ्चितम् । प्रमाणान्तरविरोधश्च तात्पर्यलिङ्गमिति तद्विरुद्धेऽर्थे तात्पर्यासंभवश्च प्रागेवोक्तः । अतो भेदमिथ्यात्वस्य विषयत्वमयुक्तम् ।

तृतीयश्च कल्पोऽनुपपन्नः; ब्रह्मणोऽपि वेद्यत्वप्रसङ्गात् । न हि घटपटयोरैक्यमुच्यते शास्त्रेण । अपि तु जीवब्रह्मणोरैक्यम् । तदानीं ब्रह्मशब्देन ब्रह्मण्यनवबोधिते कथं तस्य जीवस्य चैक्यं वक्तुं शक्यते ? । न हि जीव एक इत्युक्ते जीवब्रह्मणोरैक्यं सिध्यति; घट एक इत्युक्ते घटपटैक्यवत् । यदि ऐक्योपदेशवाक्येषु, 'अयमात्मा ब्रह्म' इत्यादिषु ब्रह्मणः शब्दबोध्यत्वं सोढव्यम्, तर्हि प्राधान्येन ब्रह्मण एव शास्त्रप्रतिपाद्यत्वं किमिति नाभ्युपगम्यते ? 'सर्वे वेदा यत् पदमामनन्ति' इत्यारभ्य 'तद्विष्णोः परमं पदम्' इत्यादिश्रुत्यस्वारस्यमेव तदनभ्युपगमफलम् ।

किञ्च उपदिश्यमानमैक्यं किं ब्रह्मस्वरूपानतिरिक्तम्, उतातिरिक्तम्?। अतिरिक्तत्वे स्वरूपवेद्यत्वपक्ष एव स्यात् । तथा चोपदेशवैयर्थ्यादिदोषप्रसङ्गः । स्वरूपमात्रस्य प्रतिपन्नत्वात् । अतिरिक्तत्वे तत् किं परमार्थभूतम्, उतापरमार्थभूतम्?। प्रथमे निर्विशेषत्वभङ्गः । द्वितीये ज्वालैक्यदेहात्मैक्यापारमार्थ्ये ज्वालाभेददेहात्मभेदपारमार्थ्यवत् जीवब्रह्मभेदपारमार्थ्यं स्यात् ।

---

1 प्रत्यधिकरणं परमतानि निराकरिष्यन् चतुःसूत्र्यां परमधिकरणचतुष्टयानन्तरं तच्चतुष्टयेऽपि तन्मतान्येकत्रैव निराकरोति ।

2 त्रिविधमिति । (भेदवासनायाः) दोषत्वानिश्चयः, बाध्यबाधकयोस्तुल्यदोषत्वं मूलोच्छेदित्वञ्चेति त्रिविधमित्यर्थः । भा० प्र०.

किञ्च जीवब्रह्मणोरैक्यं नाम किमन्तःकरणस्य संविदश्चैक्यम्, उत संविदवच्छिन्नान्तःकरणस्य संविदश्च, उतान्तःकरणावच्छिन्नसंविदः केवलसंविदश्च ? । न प्रथमः ; जडाजडयोरैक्यानुपपत्तेः । नापि द्वितीयतृतीयौ, विशिष्टैक्येऽभ्युपगम्यमाने विशेषणत्वेन विशेष्यत्वेन वा तदन्तर्भूतस्यान्तःकरणस्यापि संविदैक्यप्रसङ्गात् । तयोश्च अजडत्वजडत्वाभ्यां सत्यत्वानृतत्वाभ्यां चैकत्र्यमयुक्तमित्युक्तम् । अन्तःकरणोपलक्षितज्ञप्त्यैक्यं विषय इति चेत्—तदुपलक्षितज्ञप्तेः केनैकत्र्यमुपदिश्यते ? किं [1]स्वात्मनैव ? उत ज्ञप्त्यन्तरेण ? । न प्रथमः ; उपदेशवैयर्थ्यात् । न हि कस्यचिद्वस्तुनः [1]स्वस्मादभिन्नत्वमुपदेष्टव्यम् ; स्वस्माद्भेदप्रसङ्गाभावात् । ज्ञप्त्यन्तरेण चेत्—किं परमार्थतो भिन्नेन न, उताभिन्नेन? न प्रथमः, अनभ्युगमात् अनुपपन्नत्वाच्च । अभिन्नेन चेत्—भेदप्रतीतिरस्ति वा, न वा ? न चेत् ऐक्योपदेशवैयर्थ्यम् । अस्ति चेत् —भेदमिथ्यात्वोपदेश एवैक्योपदेशः स्यात् । भेदमिथ्यात्वस्यानुमानसिद्धत्वाभिमानाच्छास्त्रस्य निर्विषयत्वं स्यात् ॥ भेदपारमार्थ्ये दृश्यत्वानुपपत्तिरित्यादितर्कानुगृहीतं शास्त्रं भेदमिथ्यात्वे प्रमाणमिति न शास्त्रस्य निर्विषयत्वमिति चेत्—न ; धर्मश्चेत्—हिंसात्वं न स्यादिति तर्कानुगृहीतेन, "न हिंस्यात्" इति शास्त्रेण वैधपश्वालम्भनस्याधर्मत्वप्रतिपादनानुपपत्तिवत् शास्त्रसिद्धभेदस्य शास्त्रेण मिथ्यात्वप्रतिपादनानुपपत्तेः, संबन्धिभेदभिन्नानां [2]संयोगेच्छादीनामिव ज्ञप्तीनामपि परस्परभेदस्य प्रत्यक्षादिसिद्धत्वात् तद्विरुद्धत्वादयोग्यस्य ज्ञप्तिभेदमिथ्यात्वस्य शास्त्रेण प्रतिपादनानुपपत्तेश्च । "नाह खल्वयमेवं सम्प्रत्यात्मानं जानात्ययमहमस्मीति", "यदा सुप्तः स्वप्नं न कथञ्चन पश्यति", "प्राणेभ्यो देवा देवेभ्यो लोकाः"—देवाः—इन्द्रियाणि, लोकाः आलोकनानि, संविदः—एवमादिशास्त्रसिद्धः प्रत्यक्षादिसिद्धश्च कालतो विषयत आश्रयतश्च ज्ञप्तीनां परस्परभेदः ॥ अन्तःकरणवृत्तिभेदविषया सा श्रुतिरिति चेन्न ; [3]स्वाप्नश्रुतेर्वृत्तिगोचरत्वे सति संविदैक्यम्, संविदैक्ये सति ज्ञप्तिभेदश्रुतेर्वृत्तिगोचरत्वमित्यन्योन्याश्रयणप्रसङ्गात् । ज्ञातृज्ञेयावच्छिन्नतया प्रतीयमानस्य ज्ञानस्यान्तःकरणक्रियात्वे त्रितयोत्तीर्णज्ञानस्य शशविषाणायमानत्वाच्च तद्भेदमिथ्यात्वप्रतिपादनं शशविषाणभेदमिथ्यात्वप्रतिपादनतुल्यमिति न शास्त्रस्य सविषयत्वसिद्धिः । सम्प्रतिपन्नज्ञानानामेव मिथो भेदस्य मिथ्यात्वं शास्त्रविरोधात् प्रत्यक्षविरोधाच्च पश्वालम्भनाधर्मत्ववत् यूपादित्यैक्यवच्च न शास्त्रं प्रतिपादयितुं शक्नोति ।

अतः शास्त्रस्य विषयाभावादनारम्भणीयत्वम् ।

तथा प्रयोजनञ्च न घटते, तथा हि—प्रयोजनं द्विविधं शास्त्रस्य उपायभूतमवान्तरप्रयोजनम्, तत्साध्यं प्रयोजनं चेति । तत्र बन्धनिवर्तकज्ञानसिद्धिरवान्तरप्रयोजनम् ; मोक्षस्तु परमप्रयोजनम् । तत्रेदानीमुपजायमानं वाक्यजन्यज्ञानमनिवर्तकमित्यविगीतम्, वसिष्ठपराशरकृष्णद्वैपायनादीनामप्यनुत्पन्नं ज्ञानमन्येषामुत्पत्स्यत इत्यत्यन्तासंभावितम् । तेषामुत्पन्नश्चेत्—भेदप्रतिभासो न स्यात् । स निवर्तिष्यत इति चेत्—तत एव तदभिन्नानामन्येषामपि निवर्तिष्यत इति न शास्त्रमारम्भणीयं स्यात् । प्रपञ्चस्य

1 स्वात्मनैव—तज्ज्ञप्तिव्यक्त्या सहैव । स्वस्मात्—तद्वस्तुव्यक्तित एव ।

2 अयमर्थः जिज्ञासाधिकरणपूर्वभागे द्रष्टव्यः ।

3 स्वाप्न श्रुतेः—स्वप्नविषय पूर्वोदाहृत ज्ञप्तिभेदश्रुतेः

सत्यत्वादेव ज्ञाननिवर्त्यत्वाभावादनिवर्तकं ज्ञानं नावान्तरफलमिति न तदर्थं शास्त्रमारम्भणीयम् । परमप्रयोजनं च न सिध्यति ; ज्ञातृज्ञेयभेदस्य सत्यस्य निवृत्तेरसंभावितत्वात् ।

किञ्च शास्त्रश्रवणाधिकारो ज्ञप्तिमात्रस्य वा, ज्ञातुर्वा । न प्रथमः ; ज्ञप्तिमात्रस्य श्रोतृत्वायोगात् । न द्वितीयः ; ज्ञातुः स्वनाशस्यापुरुषार्थत्वेन श्रवणादौ प्रवृत्त्यनुपपत्तेः । यत्सम्बन्धिसुखं दुःखनिवृत्तिश्च पुरुषार्थः, स खल्वहमर्थः । अहं निर्दुःखः सुखी स्यामिति हि प्रतीतिः (प्रवृत्तिः ?) । तस्य पुरुषार्थवतो नाशः कथं पुरुषार्थः ? पुरुषार्थान्तरं वा कथमर्थयितुस्तस्याभावे पुरुषार्थो भवेत् ॥

अथोच्येत—भवत्पक्षे बद्धस्य वा मुक्तस्य वा शास्त्राधिकारः । प्रथमे स्वनाशस्यापुरुषार्थत्वात् अप्रवृत्तिः । उपाधिविशिष्टस्य बद्धस्य तद्रूपनाशो हि स्वनाशः । द्वितीये तु मुक्तस्य शास्त्रानपेक्षत्वादनधिकारः ॥ औपाधिकाकारविनाशो नापुरुषार्थः, दुःखविनिर्मुक्तस्वाभाविकरूपावस्थानादिति चेत्—तर्हि ज्ञातृत्वस्यौपाधिकत्वात् तन्निवृत्तौ स्वरूपं तिष्ठतीति नापुरुषार्थ इति—

नैवम् ; संविदि वास्तवज्ञातृत्वानभ्युपगमात् । तदारोपे त्वन्यत्र तत्सिद्धेरवश्यम्भावात् । अन्यस्य च ज्ञातुर्ज्ञप्तिधर्मत्वाभावात् । यदि ज्ञप्तिः स्वरूपम्, ज्ञाता तद्धर्मः—तदानीमियं प्रतिबन्दी स्यात् । अहं सुखी दुःखीति सुखदुःखवत् अहं जानामीति ज्ञानस्याहमर्थधर्मताप्रतीतेरहमर्थस्य धर्मितया प्रतीतेश्चाविगीतत्वात् सुखदुःखनिवृत्त्योराश्रयस्य तस्य नाशोऽपुरुषार्थ एव । धर्मिणि नष्टे कस्य दुःखनिवृत्तिः पुमर्थस्स्यात् । अचेतनप्रकृतिबद्धत्वमौपाधिकदुःखावहमिति, मलिनोऽहमिति प्रत्ययवतः पुरुषस्य मालिन्यनिवृत्तिवत्, तन्निवृत्तिर्नापुमर्थः ; अत्यन्ताभिमतस्य धर्मिस्वरूपस्य स्थितत्वात् ; अनिष्टबन्धनिवृत्तेरिष्टत्वाच्च ।

ननु लौकिकप्रतीत्या निरूपकप्रतीत्या वाऽहमर्थस्य स्वरूपत्वम् । प्रथमे, स्थूलोऽहं कृशोऽहमिति लोकदृष्ट्या प्रतिपन्नत्वात् स्थूलत्वादिविशिष्टदेहनिवृत्तिरप्यपुरुषार्थस्स्यात् । द्वितीये, स्थौल्यादिवत् अध्यस्तोऽहमर्थो ज्ञाताऽपि न स्वरूपमिति न तन्नाशोऽपुरुषार्थः ॥ नैवम् ; मम हस्तः, मम पादः इति लोकदृष्ट्याऽप्यहमर्थस्य देहव्यतिरेकप्रतीतेः, अहमर्थस्यैवात्मत्वे श्रुतिस्मृतिसूत्राणां प्रागेव दर्शिततया निरूपकप्रतीतावप्यहमर्थस्यैव स्वरूपताप्रतीतेश्चाहमर्थनिवृत्तेर्देहनिवृत्तितुल्यत्वाभावेनापुरुषार्थत्वस्य दुर्निवारत्वात् । अतो विषयप्रयोजनाभावात् शास्त्रस्यानारम्भणीयत्वं **मृषावादिनां** पक्षे स्थितम् ।

पश्चाद्भाविनो नित्यानित्यविवेकादेः पूर्ववृत्तत्वायोगात् **अथशब्दार्थः परोक्तोऽनुपपन्न** इति पूर्वमेवोक्तम् । शास्त्रान्तरजन्यस्य नित्यानित्यविवेकस्य वेदान्तविरुद्धत्वात् तेष्वेव मोक्षोपायोपदेशेन निराकाङ्क्षत्वाच्च ब्रह्मविचारहेतुत्वाभावात्, नित्यानित्यविषयापातप्रतीतेस्तु उभयभागसाधारणत्वादेकान्ततो ब्रह्मविचारहेतुत्वाभावात्, इतिहासपुराणयोः संशयविपर्ययग्रस्ततया तज्जन्यनित्यानित्यादिप्रतीतेः त्रिवर्गजिहासाजनकत्वाभावेन ब्रह्मविचारं प्रति हेतुत्वाभावाच्च **अतश्शब्दार्थोऽनुपपन्नः**। यन्नित्यं तदुपादेयम्, यदनित्यं तद्धेयमिति विवेको नित्यानित्यवस्तुविवेक इत्युत्प्रेक्षणमप्ययुक्तम् ; वेदान्तेषु नित्यपुरुषार्थप्रतिपादनावगमात् तदारम्भः, तदारम्भात् तेषु नित्यपुरुषार्थप्रतिपादनावगम इत्यन्योन्याश्रयप्रसङ्गात् ; शास्त्रान्तरेष्वपि नित्यपुरुषार्थसंभावनया ब्रह्मविचारं प्रति एकान्ततो हेतुत्वाभावात् ; शास्त्रान्तरेषु तदभावस्य वेदान्तेषु तत्सद्भावनिश्चयस्य च **तर्कपादा**धीनत्वेन पूर्ववदन्योन्याश्रयप्रसङ्गात् ; वेदान्ततदितरशास्त्रेषु नित्यपुरुषार्थसद्भावासद्भावयोर्गुरुवचनादवगम्यत्वे, ब्रह्मोपासनस्यापि गुरुवचनादवगम्यत्वेन शारीरकमीमांसा-

नैरपेक्ष्येण तदनारम्भणीयत्वप्रसङ्गाच्च। जीवब्रह्मणोरैक्यस्य शास्त्रविषयत्वाङ्गीकारे ब्रह्मजिज्ञासापदञ्च न सङ्गच्छते। ब्रह्मणो जिज्ञास्यत्वं हि शब्दादगम्यते; न जीवब्रह्मणोरैक्यस्य। यथा धर्मजिज्ञासापदं धर्ममात्रस्य जिज्ञास्यतां वक्ति, न तु धर्माधर्मयोरैक्यस्य जिज्ञास्यत्वम्—तद्वदेव हि ब्रह्मजिज्ञासापदम्।

निर्विशेषस्य वस्तुनो लक्षणोक्तिश्च न घटते, विशेषणतया लक्षणत्वे सविशेषत्वप्रसङ्गात्; उपलक्षणतया लक्षणत्वे पूर्वप्रतिपन्नाकारातिरिक्तस्योपलक्षणज्ञाप्यस्याऽऽकारान्तरस्याभावेनोपलक्षणवैयर्थ्यात्; तदभ्युपगमे सविशेषत्वप्रसङ्गाच्च। स्वरूपमेवोपलक्षणज्ञाप्यमिति चेत्—तत्स्वरूपं प्राक् प्रतिपन्नम्, न वा? प्रतिपन्नं चेत्—उपलक्षणवैयर्थ्यम्। अप्रतिपन्नत्वे, स्वप्रकाशता न स्यात्। उपलक्षयितुमशक्यता च; केदारत्वाकारेणावगतस्य देवदत्तसंबन्धितया सारसेन ज्ञाप्यत्वं ह्युपलक्ष्यत्वम्। प्रागनवगता प्रपञ्चव्यावृत्तिरुपलक्ष्याकार इति चेत्, प्रपञ्चव्यावृत्तेः स्वरूपातिरिक्तत्वे सविशेषत्वप्रसङ्गात्। अनतिरिक्तत्वे तत्स्वरूपं प्रागेव भातमित्युपलक्षणवैयर्थ्यम्। किञ्च कथं कारणत्वे लक्षणे सति प्रपञ्चव्यावृत्तिः?॥ कारणत्वं नाम कार्यजगदध्यासाधिष्ठानत्वम्। अतोऽध्यस्तादनृतात् प्रपञ्चादधिष्ठानस्य ब्रह्मणः सत्यतया व्यावृत्तिरिति चेत्—न; घटाद्यधिष्ठानस्य मृद इव ब्रह्मणोऽप्यनृतत्वेन व्यावृत्तिप्रसङ्गात्॥ घटादिकारणस्यापि मृदादेः कारणान्तरेऽध्यस्तत्वादसत्यत्वम्; कालत्रयवर्तिकृत्स्नकार्याधिष्ठानस्य ब्रह्मणोऽन्यत्राध्यस्तत्वाभावान्नासत्यत्वमिति चेत्—न; 'इदमग्र आसीत्' इतीदंशब्दवाच्यं कार्यमात्रं प्रति अधिष्ठानत्वश्रवणेन ब्रह्मणोऽपि कारणान्तराध्यस्तत्वाविरोधात्; बीजाङ्कुरन्यायेन प्रवाहानादित्वोपपत्तेश्च॥ कृत्स्नकार्यकारणस्य ब्रह्मणः कारणान्तरप्रतिषेधेनाकार्यत्वात् सत्यत्वमिति प्रपञ्चव्यावृत्तिरिति चेत्—तर्ह्यकार्यत्वमात्रेण जगद्व्यावृत्तिसिद्धेः कारणत्वोक्तिवैयर्थ्यादकार्यत्वश्रुतिरेव लक्षणवाक्यत्वेनोदाहर्तव्या स्यात्; न तु 'यतो वा इमानि' इत्यादिश्रुतिः॥ अकार्यत्वश्रुतिरेव विवक्षितेति चेत्—तर्हि, "स कारणं करणाधिपाधिपो न चास्य कश्चिज्जनिता न चाधिपः" इत्यकार्यत्वश्रुतेः करणाधिपाधिपशब्दवाच्येश्वरविषयत्वाल्लक्ष्यवस्तुनो निर्विशेषत्वं न सिध्येत्। किञ्च जगत्कारणस्वरूपलक्षणविशेषो लक्ष्यस्य निर्विशेषत्वविरोधी, सार्वज्ञ्यादिगुणाक्षेपकत्वात् तस्य॥ आक्षिप्तमपि सार्वज्ञ्यादिकं वस्तुमात्रोपलक्षणमिति चेत्--न, सार्वज्ञ्येन वस्तुन्युपलक्षिते सति सर्वशक्तित्वाद्युपलक्षणान्तरवैयर्थ्यात्। न हि शाखया चन्द्रे उपलक्षिते प्रासादाग्रेण प्रयोजनम्। सार्वज्ञ्येन निर्विशेषवस्तूपलक्षणं व्याहतं च; स्वेन सविशेषस्याश्रयस्य निर्विशेषत्व ज्ञापनायोगात्; सर्वशक्तित्वादिविशेषान्तरराहित्यज्ञापनासामर्थ्याच्च। अतो लक्षणसूत्रं निर्विशेषपक्षविरुद्धम्।

तृतीयं सूत्रमपि न घटते; निर्विशेषवस्तुनि तात्पर्यविषये सति कारणत्वाक्षिप्तसार्वज्ञ्यादिसमर्थनं क्वोपयुज्यते? प्रसङ्गादपि न तत्समर्थनं न्याय्यम्; निर्विशेषत्वविरोधात्। किञ्च ऋग्वेदादिशास्त्रं स्वविषयादधिकविषयज्ञानवदुपादानकम् वाक्यत्वादित्यनुमानमप्यसङ्गतम्। तथा हि—किमधिकविषयज्ञानवदुपादानकत्वं साध्यम्, उत तद्वक्तृकत्वम्, उत तदुच्चारितत्वम्। प्रथमे दृष्टान्तः साध्यविकलः, आकाशगुणस्य शब्दस्य कालिदासाद्युपादानकत्वाभावात्। न द्वितीयः, वेदस्य पौरुषेयत्वप्रसङ्गात्। न तृतीयः, अनैकान्तिकत्वात्। न हि वैदिकमन्यद्वा वाक्यमुच्चारयतां बालादीनां तद्विषयादधिकविषयज्ञानमस्ति। शास्त्रप्रमाणकत्वं सूत्रार्थ इति च व्याख्या ब्रह्मणोऽनुमान्यत्वमनभ्युपगच्छतां न घटते।

चतुर्थे च सूत्रे ब्रह्मणः प्राधान्येन शास्त्रयोनिसूत्रनिर्दिष्टत्वाभावात् तच्छब्दस्य ब्रह्मपरत्वं न

स्वारसिकम् । वेदान्तवाक्यानां भ्रमनिवर्तकवाक्यार्थज्ञानजनकतया प्रयोजनपर्यवसायित्वं वाक्यार्थज्ञानमात्रेण बन्धनिवृत्तेः शास्त्रप्रत्यक्षविरोधविध्वस्तत्वादनुपपन्नम् । [1]तदन्यथासिद्धिप्रतिविधानं च पूर्वमेव कृतम् । किञ्च कस्य भ्रमनिवृत्तिः ? किं ज्ञप्तेः, उत चेतनस्य । न तावत् ज्ञप्तेः ; [2]तस्या अचेतनत्वेन भ्रमाश्रयत्वाभावात् । चेतनो हि भ्रान्त्याश्रयः । जडत्वं भ्रमानाश्रयत्वे प्रयोजकमिति चेत्—त्वया जडत्वेनाभिमते ज्ञातरि भ्रमानाश्रयत्वाभावेन साध्यसमव्याप्त्यसिद्धेः । चेतनस्य भ्रमनिवृत्तिरपि भवत्पक्षे न पुरुषार्थः स्यात् ; ज्ञातुरपि निवर्त्यकोटिनिविष्टत्वात् । तं प्रति स्वनाशस्यापुरुषार्थत्वाच्च । राज्ञः शत्रुनिवृत्तिरिव ज्ञानरूपस्यात्मनो ज्ञातृनिवृत्तिः पुरुषार्थ इति चेत्—न ; ज्ञातुरेवात्मत्वात् । ज्ञातृधर्मतयाऽवगतस्य ज्ञानस्येच्छाद्वेषादेरिवात्मत्वाभावात् । आत्मत्वाभ्युपगमेऽपि तस्य पुरुषार्थार्थयितृत्वाभावेन पुरुषार्थप्रतिसंबन्धित्वानुपपत्त्या ज्ञानं प्रति ज्ञातृनिवृत्तेः पुरुषार्थत्वायोगात् । पुरुषेणार्थनीयस्य हि पुरुषार्थत्वम् । ज्ञानस्यात्मत्वपुरुषार्थप्रतिसम्बन्धित्वाभ्युपगमेऽपि, [3]तदपेक्ष्यज्ञातृनिवृत्तेः पुरुषार्थत्वमयुक्तम् ; ज्ञानं प्रति ज्ञातुर्दुःखतद्धेतुष्वन्यतमत्वाभावात् । सुखदुःखभोक्तारं प्रति सुखतद्धेतूनां दुःखतद्धेतुनिवृत्तेरपि हि पुरुषार्थत्वम् । न हि ज्ञाता ज्ञप्तेर्दुःखरूपः, न च दुःखजनयिता ; ज्ञानस्य दुःखानुभवितृत्वायोगात् । प्रवृत्तिनिवृत्तिपरत्वेन प्रयोजनपर्यवसानं त्वयैवापास्तं **ध्याननियोगवाद**प्रतिक्षेपे । अतोऽनुपपन्नं शास्त्रस्य त्वदुक्तं प्रयोजनपर्यवसायित्वम् ॥

[4]**यादवप्रकाशीया**स्तु दुःखत्रयाभिघातज्ञानानन्तरं तदुपशमोपाये पुरुषप्रवृत्तेरेव हेतोर्ब्रह्मैव जिज्ञास्यम्, न तु प्रधानादीनीति प्रथमसूत्रार्थं वर्णयन्ति । अस्तु ब्रह्मणो जिज्ञास्यत्वम् ; नैतावता प्रधानादीनामजिज्ञास्यत्वम् ; तेष्वन्यतमस्यैव ब्रह्मशब्दार्थत्वात्, शास्त्रेण हि ब्रह्मानूद्य तज्ज्ञानं विधीयते । एकेन वाक्येनैकस्यार्थस्य विधानानुवादायोगात् अनुवादः प्रमाणान्तरसापेक्षः । प्रमाणान्तरैश्च वादिभिः संभावितास्तत्त्वप्रकारविशेषाः सर्वे परिकल्पिता इति तत्त्वान्तरोत्प्रेक्षा न शक्या । अतस्तेष्वन्यतमस्यैव ज्ञातव्यत्वविधानाय शास्त्रेणानुवादः क्रियत इति शङ्कापरिहारार्थं **जन्मादिसूत्रम्** । सन्मात्रवपुषोऽनेकशक्तिशालिन एकस्मादद्वितीयात् ब्रह्मणः कृत्स्नस्य चिदचित्प्रपञ्चस्य जन्मस्थितिलयं प्रतिपाद्यम् । अत ईदृशं तत्त्वं वाद्यन्तरैरपरिकल्पितमिति न तत्परिकल्पितार्थेष्वन्यतमस्य ब्रह्मशब्दार्थत्वमिति सूत्रार्थमाहुः । एवं तर्हि प्रमाणान्तरासिद्धत्वात् शास्त्रेणानुवादासम्भव इति शंकायां **शास्त्रयोनित्वा**दित्युच्यते । वेदान्तेष्वेव केनापि वाक्येन प्रतिपादितस्य वाक्यान्तरेणानुवाद उपपन्नः ; प्रमाणान्तरानाघ्रातचरवस्तुप्रतिपादनक्षमत्वं

---

1 तदन्यथासिद्धीति । अद्वैतवाक्यातिरिक्तं भेदशास्त्रं सर्वं प्रत्यक्षादिकञ्चान्यथासिद्धत्वाद्दुर्बलं बाध्यमित्यस्य परिहारश्च जिज्ञासाधिकरण एव कृत इति ।

2 तस्या इति । ज्ञप्तिर्न भ्रमाश्रयः अचेतनत्वात् ; यो भ्रमाश्रयः स चेतनः इति व्यतिरेकव्याप्तिः । न च जडत्वमुपाधिः ; यत्र जडत्वं, तत्र भ्रमाश्रयत्वमिति व्याप्तौ सत्यां किल जडत्वमेव तत्र प्रयोजकं लिङ्गमिति अचेतनत्वं तद्गतव्याप्त्यारोपेण प्रयुक्तम्, न तु वस्तुतोव्याप्यमित्युच्येत । जडत्वं तु न व्याप्यमित्यर्थः । यत्रोपाधेः साध्यप्रयोजकत्वमुच्यते, तत्र तस्य साधनाव्यापकत्वेन सह साध्यव्यापकत्वमिव साध्यव्याप्यत्वमपि वर्णनीयम् ॥ साध्यव्यापकत्वमपि नास्ति । भ्रमानाश्रये ईश्वरचिति जडत्वाभावात् । 3 तदपेक्ष्येति । ज्ञानेनाश्रयतयाऽपेक्ष्यो ज्ञाता ; तन्निवृत्तेरित्यर्थः । यद्वा तत् अपेक्ष्येति पदद्वयम् । ज्ञानं प्रति इत्यर्थः । 4 भास्करीयानिरासस्तु सूत्रार्थरीतेरिष्टत्वात्, अधिकरणरचनाया अस्पष्टत्वात्, विरुद्धांशस्यैतन्निरासेनैव निरासाच्च ।

शब्दमहिमेति सूत्रतात्पर्यं वदन्ति। तथापि सिद्धे व्युत्पत्त्यभावात् प्रवृत्तिनिवृत्तिविरहे वाक्यस्य प्रयोजनाभावाच्च ब्रह्मणः शास्त्रप्रतिपाद्यत्वायोगशङ्कापरिहारपरं समन्वयसूत्रं व्याचक्षते।

तत्र तावत् प्रथमसूत्रे दुःखत्रयाभिघातज्ञानस्य पूर्ववृत्तत्वं प्रागेव प्रतिक्षिप्तम्, प्रत्यक्षादिना तज्ज्ञाने विवक्षिते तत्परिहारस्यायुर्वेदादिसिद्धत्वात्; स्वर्गादेरपि तापत्रयान्तर्भावज्ञानस्य च साङ्ख्यादिशास्त्रान्तराधीनत्वे मोक्षोपायस्यापि तत्रैव सुलभतया वेदान्तनैरपेक्ष्यात्; वेदेन तज्ज्ञानस्य कर्मविचारसापेक्षतया तत्पूर्ववृत्तत्वापाताच्चेति। प्रधानादीनामजिज्ञास्यतापरत्वञ्च पूर्वमेव निरस्तम्; श्रुत्यविरुद्धांशे साङ्ख्यादिशास्त्रस्य भवद्भिरङ्गीकृतत्वात्, विरुद्धांशे चाप्रामाण्यस्य विरोधाधिकरणन्यायसिद्धत्वात् तत्प्रमेयदौस्थ्यस्य तर्कपादे दर्शयिष्यमाणत्वात् वेदान्तवाक्यानामतत्परत्वस्य ईक्षत्यधिकरणादिषु वक्ष्यमाणत्वाच्च सूत्रस्य कृतकरत्वप्रसङ्गादिति।

जन्मादिसूत्रस्य वाद्यन्तरापरिकल्पित[1]प्रकारेणौपनिषदतत्त्ववैलक्षण्यात् ब्रह्मशब्दस्य तत्परिकल्पितप्रधानाद्यन्यतमविषयत्वनिरासपरत्वं चायुक्तम्; विशेषणभेदायत्तविशेष्यबहुत्वपरिहाराभावे सति अद्वितीयवस्तुनः समस्तजगत्कारणत्वप्रतिपादनानुपपत्तेः। चिदचित्प्रपञ्चस्याद्वितीयकारणतया हि वाद्यन्तरक्लृप्ततत्त्वेभ्य औपनिषदतत्त्ववैलक्षण्यं भवद्भिरुक्तम्। वेदान्तवेद्यतत्त्वस्य त्वदुक्तप्रकारेण प्रधानादिवैलक्षण्यञ्च ईक्षत्यधिकरणादिन्यायनैरपेक्ष्येण न सिध्यति। इह वक्ष्यमाणव्यतिरिक्तन्यायान्तरानुक्तेः; वक्ष्यमाणानुपपत्तीनां वक्ष्यमाणन्यायैर्विना परिहारायोगाच्च। वक्ष्यमाणोपजीवने च तत एव तत्त्ववैलक्षण्यं प्रधानादेरजिज्ञास्यत्वं च सिध्यतीति कृतकरत्वं स्यात्।

वाक्यान्तरेण प्रतिपादितस्य वाक्यान्तरेणानुवादसंभवपरत्वञ्च शास्त्रयोन्यधिकरणस्यायुक्तम्, कृतकरत्वादेव। "अग्निहोत्रं जुहोति" इति वाक्यान्तरेण विहितस्य होमस्य, "दध्ना जुहोति" इति वाक्यान्तरेणानुवादः पूर्वकाण्डे प्रसिद्धः। आग्नेयादिषट्कं तदुत्पत्तिवाक्यविहितम्, "य एवं विद्वान् पौर्णमासीं यजते", "य एवं विद्वानमावास्यां यजते" इति वाक्याभ्यामनूद्यत इति च तत्र तत्र प्रसिद्धम्। अतो वाक्यभेदेन विधानानुवादसंभवो नात्र व्युत्पाद्यः।

समन्वयसूत्रस्य च प्रवृत्तिनिवृत्तिपरत्वाभावेऽपि शास्त्रस्य [3]प्रयोजनवत्ताप्रतिपादनपरत्वमिष्टम्। सिद्धे व्युत्पत्तिप्रतिपादनपरत्वं त्वयुक्तम्, प्रथमसूत्रेणैव सिद्धार्थव्युत्पत्तेः समर्थितत्वात्। तत्र च तत्समर्थनाभावेन[2] त्वदुक्तार्थपरत्वे तत्सूत्रवैयर्थ्यस्योपपादितत्वाच्च। सिद्धवस्तुमात्रे शब्दशक्तिसमर्थनाभावे सति सिद्धवस्तुवैलक्षण्यतद्विधानानुवादतत्प्रयोजनादिनिरूपणस्यानपेक्षितत्वेन जन्मादिसूत्रत्रयोत्थानस्य तत्पूर्वकत्वावश्यम्भावात्; वक्ष्यमाणोपजीवनेनोत्थाने प्रतिपत्तिक्रमसामञ्जस्याभावात्; आद्यसूत्रस्यापेक्षितविधेरनपेक्षितविधानपरत्वायोगाच्च। अतो भाष्यकारोक्तार्थपरत्वमेव चतुस्सूत्र्या उपपन्नम्॥ इति समन्वयाधिकरणम्॥

॥ इति श्रुतप्रकाशिकायां चतुस्सूत्री समाप्ता॥

---

1 प्रकारेणेति। प्रकारमूलकं यत् वैलक्षण्यम्, तदधीनो यो निरासः तत्परत्वमित्यर्थः।

2 समर्थनाभावेनेति। समर्थनं विहायेत्यर्थः॥ 3 अस्मद्भाष्यकारैर्हि—

निर्धून्वन् निष्प्रपञ्चीकृतिविषयनियोगोक्तिम्, आत्मैक्यचिन्ताविध्युक्तिर्या निरस्य प्रसृतिमधिगता शांकरं भास्करञ्च।

ताञ्च क्षीवो निरुन्धन् विधिवचनपरस्तान्त्रिकोऽस्मिन् निरस्तो विध्याकांक्षां विनैव प्रबलफलपरत्वेन भेदं प्रदर्श्य॥........शुभमस्तु...।

## ईक्षत्यधिकरणम् १-१-५

## ईक्षतेर्नाशब्दम् १-१-५

"यतो वा इमानि" इत्यादिजगत्कारणवादिवाक्यप्रतिपाद्यं सर्वज्ञं सर्वशक्ति समस्तहेयप्रत्यनीक-कल्याणगुणैकतानं ब्रह्म जिज्ञास्यमित्युक्तम्। इदानीं जगत्कारणवादिवाक्यानामानुमानिकप्रधानादि-प्रतिपादनानर्हतोच्यते ईक्षतेर्नाशब्दमित्यादिना ।

इदमाम्नायते छान्दोग्ये, "सदेव सोम्येदमग्र असीदेकमेवाद्वितीयम्। तदैक्षत बहु स्यां प्रजायेयेति।

---

**ईक्षतेर्नाशब्दम्** ॥ प्रथमे सूत्रे उद्देशः कृतः । द्वितीये लक्षणमुक्तम् । तृतीयचतुर्थाभ्यां लक्ष्यस्य ब्रह्मणः परीक्ष्यत्वसिद्ध्यर्थं लक्षणस्वभावात् सिद्धरूपलक्ष्यस्वभावाच्चोत्थिते ज्ञातत्वाप्रयोजनत्वशङ्के परिहृते ; अथ लक्ष्यं वस्तु किं चिदचिद्विलक्षणम् उताविलक्षणमिति परीक्ष्यते । यद्वा पूर्वं कारणत्वमनूद्य तस्य लक्षणत्वमुक्तम् । लक्षणलक्ष्यस्वभावनिबन्धनं शङ्काद्वयं च परिहृतम् ; अथ लक्षणभूतकारणत्व-प्रापकवाक्यानि निरूप्यन्ते । यद्वा चतुस्सूत्र्या वेदान्तवाक्यानां ब्रह्मणि प्रामाण्यरूपपरीक्ष्यतापरिकरस्थापनं कृतम् ; अथ प्रमेयविशेषपरीक्षा क्रियत इति पेटिकासङ्गतिः ॥

ननु ईक्षत्यधिकरणमनारम्भणीयम् ; समन्वयाधिकरणे पुरुषार्थभूतस्यैव ब्रह्मणः प्रतिपाद्यत्वनिश्चयेन हेयास्पदस्य प्रधानस्य प्रसङ्गाभावादिति ॥ नैवम् । पुरुषार्थभूतस्य ब्रह्मणः प्रतिपाद्यत्वं न संभवति, अपुरुषार्थभूतस्य प्रधानादेः प्रतिपादनादिति समन्वयाधिकरणोक्तार्थस्याऽऽक्षेपेणोत्थानादिति । इयमवान्तर-सङ्गतिरिति । एतदभिप्रायेण पेटिकाभेद तत्सङ्गत्यवान्तरसङ्गतीराह **यतोवाइमानीत्यादीति** । उद्दिष्टस्य ब्रह्मणो लक्षणमुक्तम्. लक्षितस्य परीक्षणं वर्तिष्यत इत्यभिप्रायेण लक्षणवाक्यमुपात्तम् । कारणत्वानुवादेन तस्य लक्षणत्वविधानात् कारणस्य चिदचिद्वैलक्षण्यनिर्णयस्य कारणत्वप्रापकवाक्यनिरूपणसापेक्षत्वात् अस्मिन्नधिकरणे कारणवाक्यानि निरूप्यन्त इति च ज्ञापनार्थं लक्षणवाक्योपादानम् । **आदिशब्देन** कारणत्व-प्रापकवाक्यानि गृह्यन्ते । अत एव ह्यनुवादपुरोवादसाधारण्येन **जगत्कारणवादीत्युक्तम्** । समन्वया-धिकरणार्थाक्षेपहेतुकावान्तरसङ्गत्युपयोगीनि सर्वज्ञत्वादिविशेषणानि । **जिज्ञास्यमित्युक्तमिति** । प्रामाणिकतया परीक्ष्यमित्युक्तमित्यर्थः । तदनन्तरं परीक्षा हि सङ्गतेत्यभिप्रायेणाह **इदानीमिति** । अनेन चतुस्सूत्र्यानन्तर्यं ब्रह्मणः पुरुषार्थताप्रतिपादनपरसमन्वयाधिकरणानन्तर्यमप्युक्तम् । **आनुमानिकप्रधानादी-त्यनेन** अनन्तरोक्तसमन्वयाक्षेपेणोत्थानादवान्तरसङ्गतिरिति सूच्यते । **प्रधानादीत्यादिशब्देन** क्षेत्रज्ञमात्रम्, चिद्विशेषाः, अचिद्विशेषाश्च गृह्यन्ते । **ईक्षतेर्नाशब्दमित्यादिनेति** । पादशेषेणाध्यायशेषेणेति वा अर्थः ।

विषयमुदाहरति **इदमिति** । प्रतिज्ञादृष्टान्तोपेतं संकल्पप्रतिपादकं सामान्यशब्दवत् कारणवाक्यं विषयः । तत्र सद्विद्यावाक्यमेवास्याधिकरणस्य साक्षाद्विषयः । सद्विद्याद्वारेणेतरकारणवाक्यानां विषयत्वम् ; न तु साक्षादेव ; विषयवाक्योपादानसमये वाक्यान्तराणामनुपादानात् । **दीपसारयोश्च** तेषामनु-पात्तत्वात् । प्रतिज्ञाविरोधस्याप्ययोरत्रत्ययोरेव **सूत्रितत्वात्** तदनुग्राहकत्वेनोपनिषदन्तरगतिसामान्यस्य,

**तत्तेजोऽसृजत" इत्यादि। तत्र संदिह्यते—किं सच्छब्दवाच्यं जगत्कारणं परोक्तमानुमानिकं प्रधानम् उतोक्तलक्षणं ब्रह्मेति। किं प्राप्तम्। प्रधानमिति। कुतः। 'सदेव सोम्येदमग्र आसीदेकमेव' इतीदं-**

---

अस्यामुपनिषदि विद्यान्तरेषु श्रुतत्वस्यापि सूत्रितत्वात्। बुद्ध्यवतरणक्रमेण प्रथममुपादानत्वोचिताचेतनत्वशङ्कायाः प्रतिक्षेप्यत्वात्। सद्ब्रह्मात्मादिपदचिह्नितेषु वाक्येषु सामान्यशब्दचिह्नितवाक्यस्य प्रथमनिरूपणीयत्वाच्च। सामान्यद्वारा हि विशेषो बुद्धिमधिरोहति, सामान्यपरिग्रहे प्रतिक्षिप्ते च विशेषविषयसंशयोऽवकाशवान्। विशेषे तु प्रतिपन्ने हि सामान्याकाङ्क्षा न स्वरसवाहिनी।

सन्दिग्धे हि न्यायप्रवृत्तिः; अतः संशयसद्भावमाह **तत्रे**ति। कारणस्य इदंशब्दवाच्यकार्यसालक्षण्यावश्यम्भावेक्षितृत्वाभ्यां संशयः। संशयशरीरं दर्शयति **किमि**ति। **सच्छब्दवाच्य**मिति। धर्मिवाचिपदस्य साधारणतया संशयसहत्वं दर्शितम्। **जगत्कारण**मिति, उपादानत्वात् कार्यसालक्षण्यं दुस्त्यजम्, निमित्तत्वात् मुख्येक्षितृत्वं चेति संशयहेतुस्थिरीकरणम्। **परोक्त**मिति। विप्रतिपत्तिरपि संशयहेत्वोरनुग्राहिकेति भावः। पूर्वपक्षबीजस्मारणपरसौत्रपदद्योतनार्थम्**आनुमानिक**मिति पदम्। **उक्तलक्षणम्**—सर्वज्ञत्वादिलक्षणम्। **आनुमानिक-उक्तलक्षण**पदाभ्यां संशयहेतुद्वयसूचनम्। किं जगत्कारणवादिवेदान्तवाक्यानि प्रधानादिप्रतिपादनपराणि, उत तद्विलक्षणब्रह्मपराणीति पादशेषसाधारणो विचारः। अत्र तु तदर्थम्—सद्विद्यावाक्यानि किं प्रधानप्रतिपादनपराणि, उतोक्तलक्षणब्रह्मपराणीति विचारः; तदर्थं किमत्रेक्षणं गौणम्—उत मुख्यमिति; तदर्थं किमनुमानाकारता, गौणेक्षणसाहचर्यं च विद्यते, नेति; तदर्थं प्रतिज्ञादृष्टान्तौ किं हेतोराक्षेपकौ, नेति; तेजःप्रभृतिशब्दाः किं तेजःप्रभृतिमात्रवाचिनः, उत परमात्मपरा इति च; तदर्थम् आत्मशब्दः तेजःप्रभृतिशब्दानामब्रह्मपरत्वस्याविरोधी, उत विरोधीति; तदर्थमात्मशब्दस्वारस्यभङ्गहेतवोऽनुरोद्धव्याः उत तदनुग्राहकहेतव इति विचारः।

तत्स्वारस्यभङ्गहेतवोऽनुरोद्धव्या इति पूर्वः पक्षः। तदनुग्राहका एव अनुरोद्धव्या इति सिद्धान्तः। यदा स्वारस्यभङ्गहेतोरनुरोद्धव्यत्वेन आत्मशब्दस्य तेजःप्रभृतिशब्दानामब्रह्मपरत्वाविरोधितया तेजःप्रभृतिशब्दाः तेजःप्रभृतिमात्रवाचिनः, प्रतिज्ञादृष्टान्तौ च यदा हेत्वाक्षेपकौ—तदा हेत्वाक्षेपो गौणेक्षणसाहचर्यं चास्तीति प्रथमश्रुतेक्षणस्य गौणत्वेन सद्विद्यावाक्यानां प्रधानपरत्वात् तदेकार्थतया सर्वाणि कारणवाक्यानि प्रधानपराणीति पूर्वपक्षे फलफलिभावः। यदा आत्मशब्दस्वारस्योत्तम्भकहेतोरनुरोद्धव्यत्वेन आत्मशब्दस्य तेजःप्रभृतिशब्दानामब्रह्मपरत्वविरोधित्वेन तेजःप्रभृतिशब्दाः परमात्मपराः, प्रतिज्ञादृष्टान्तौ च यदा न हेत्वाक्षेपकौ—तदा अनुमानाकारत्व-गौणेक्षणसाहचर्ययोरसिद्ध्या प्राथमिकेक्षणस्यागौणत्वात् सद्विद्यावाक्यानि परब्रह्मपराणि। अतः तदैकार्थ्यात् सर्वाणि कारणवाक्यानि परब्रह्मपराणीति सिद्धान्ते फलफलिभावः।

तत्र पूर्वपक्षं वक्तुं अन्यतरशिरसो युक्तिमत्त्वेन निर्धारणाकाङ्क्षां दर्शयति **किं प्राप्त**मिति। **प्राप्तं** युक्तम्। युक्तिमदित्यर्थः। पूर्वपक्षी स्वपक्षं युक्तिमत्त्वेनैव प्रतिजानीते **प्रधानमिती**ति। संशयकोटीकृते शिरोद्वये प्रधानमिति शिरो युक्तिमदित्यर्थः। युक्तिविशेषाकाङ्क्षां दर्शयति **कुत** इति। तदुपपादयति **सदेवे**ति। कारणस्य प्रधानत्वसिद्ध्यौपयिकानि तद्विलक्षणपुरुषविशेषत्वविरोधीनि च विशेषणान्याह **इदंशब्दे-**

शब्दवाच्यस्य चेतनभोग्यभूतस्य सत्त्वरजस्तमोमयस्य वियदादिनानारूपविकारावस्थस्य वस्तुनः कारणावस्थां वदति। कारणभूतद्रव्यस्यावस्थान्तरापत्तिरेव हि कार्यता। अतो यत् द्रव्यं यत्स्वभावं च कार्यावस्थम्, तत्स्वभावं तदेव द्रव्यं कारणावस्थम्। सत्त्वादिमयं च कार्यमिति गुणसाम्यावस्थं प्रधानमेव हि कारणम्। तदेवोपसंहृतसकलविशेषं सन्मात्रमिति, सदेव सोम्येदमग्र आसीदेकमेवाद्वितीयमित्यभिधीयते। तत एव च कार्यकारणयोरनन्यत्वम्। तथासत्येवैकविज्ञानेन सर्वविज्ञानप्रतिज्ञोपपत्तिः। अन्यथा यथा सोम्यैकेन मृत्पिण्डेनेत्यादिमृत्पिण्डतत्कार्यदृष्टान्तदार्ष्टा-

---

त्यादिना। **इदंशब्दवाच्यस्ये**ति। परागर्थे हीदंशब्दस्वारस्यम्; न तु प्रत्यग्रूपे चेतन इति भावः। जगतश्चिदचिदात्मकतया चेतनस्यापि इदंशब्दवाच्यान्तर्भावव्युदासायाह **चेतनभोग्यभूतस्ये**ति। चिदंशस्य कार्यत्वकारणत्वायोगात् न तस्य कार्यान्तर्भाव इति भोक्तृतया अवस्थानमेतस्य; तस्य-भोग्यस्यैव तु कार्यत्वमिति भावः। चेतनस्य ज्ञेयतैकस्वभावजगद्रूपत्वमयुक्तमिति चाभिप्रायः। कार्यस्य भोग्यत्वौपयिकं कारणस्य प्रधानत्वापादकं च विशेषणमाह **सत्त्वरजस्तमोमयस्ये**ति। सत्त्वादिकार्यसुखदुःखमोहान्वयहेतुत्वदर्शनात् जगतः सत्त्वादिमयत्वम्। निर्गुणः कथं गुणमयस्य कारणमिति चाभिप्रायः। भोग्यत्वोपपादनायाह **वियदादी**ति। यद्वा—इदंशब्दवाच्यद्रव्यस्य कारणत्वे कार्यत्वकारणत्वयोः को भेद इत्यत्राह **वियदादी**ति। एकत्वावस्थं कारणं बहुत्वावस्थं कार्यमिति सिद्धेत्यर्थः। एकरूपस्य पुरुषस्य नानारूपकार्यभावोऽनुपपन्नश्चेति भावः। कारणस्य कार्यसालक्षण्यावश्यम्भावे हि चेतनस्य इदंशब्दवाच्यं प्रति कारणत्वानुपपत्तिः—कारणावस्था कार्योपादानभूतद्रव्यान्तरनिष्ठेति कथं सालक्षण्यावश्यम्भाव इति शङ्कायां कार्यकारणयोरेकद्रव्यत्वमाह **कारणभूतद्रव्यस्ये**ति। ततः किमित्यपेक्षायां कार्यकारणसालक्षण्यनियमं फलितमाह **अत** इति। ततोऽपि किमित्याशङ्कायां कार्यस्य प्रधानसालक्षण्यमाह **सत्त्वादिमयंचे**ति। प्रधानस्य कार्यसारूप्यमाह **गुणसाम्यावस्थ**मिति। कार्ये गुणवैषम्यदर्शनात् कारणमपि तथाविधं स्यादिति शङ्कापाकरणार्थं **गुणसाम्यावस्थ**मित्युक्तम्—न तु गुणमयमिति। विषमावस्थस्य सर्वस्य कार्यत्वदर्शनात्, कारणस्यापि तथात्वे कारणान्तरापेक्षया अनवस्थाप्रसङ्गाच्च प्रधानस्य गुणसाम्यावस्थत्वसिद्धिरिति भावः। अनेकगुणसाम्यावस्थस्य प्रधानस्य कारणत्वे एकत्वावधारणमनुपपन्नम्; एकस्यैव ब्रह्मणः कारणत्वे तु उपपन्नमित्यत्राह **तदेवोपसंहृते**ति। **एकमेवे**ति नामरूपविभागव्युदासः, **अद्वितीयमि**ति गुणवैषम्यव्युदास इत्यभिप्रायेण **उपसंहृतसकलविशेष**मित्युक्तम्। **सन्मात्रमिति**। सदेवेति कादाचित्कासत्त्वव्युदास इति भावः। **सन्मात्रमितीत्यत्र इतिशब्दो** हेतौ। प्रधानकारणत्वमेव युक्त्यन्तरेणोपपादयितुमाह **तत एवेति**। इदंशब्दवाच्यं प्रति कारणस्य त्रिगुणात्मकस्य प्रधानस्य सच्छब्दवाच्यत्वादेव हि कार्यकारणयोरनन्यत्वसिद्धिः; न हि विजातीययोरनन्यत्वमिति भावः। अनन्यत्वं मा भूदित्यत्राह **तथासती**ति। अनन्यत्वे सति ह्येकविज्ञानेन सर्वविज्ञानसिद्धिः। तत् चिदचिद्विलक्षणकारणत्वपक्षे न संभवतीति भावः। एवं प्रतिज्ञासिद्धिरूपयुक्तिरुक्ता भवति। यद्वा—इदमग्रे सदिति सामानाधिकरण्यात्, तद्धैक आहुरित्यसत्कार्यवादप्रतिक्षेपाच्चानन्यत्वसिद्धिः पूर्वग्रन्थेऽभिप्रेता। हेत्वन्तरं चाह **तथासती**ति। **तथास**ति—प्रधानकारणत्वे सतीत्यर्थः। कार्यकारणयोरनन्यत्वे प्रतिज्ञावाक्यतात्पर्यात् तत्रैकशब्दोपि गुणसमुदायैक्यात् युक्त इति भावः। युक्त्यन्तरमाह-**अन्यथे**ति।

न्तिकयोर्वैरूप्यं चेति जगत्कारणवादिवाक्येन महर्षिणा कपिलेनोक्तं प्रधानमेव प्रतिपाद्यते। प्रतिज्ञादृष्टान्तरूपेण अनुमानवेषमेव चेदं वाक्यमिति सच्छब्दवाच्यमानुमानिकमेवेति—

एवं प्राप्तेऽभिधीयते—ईक्षतेर्नाशब्दमिति। यस्मिन् शब्द एव प्रमाणं न भवति, तत् अशब्दम्—आनुमानिकम्; प्राधानमित्यर्थः; न तत् जगत्कारणवादिवाक्यप्रतिपाद्यम्; कुतः। ईक्षतेः।

---

अचेतनमृत्पिण्डलोहमण्यादिदृष्टान्तः चेतनकारणस्य दार्ष्टान्तिकत्वे न सङ्गच्छत इत्यभिप्रायः। यद्वा—सरूपमृत्पिण्डघटादिकार्यकारणदृष्टान्तो न विरूपकार्यकारणयोः दार्ष्टान्तिकत्वे घटत इति भावः। कपिलस्मृत्यैकार्थ्यं हेतुत्वेनाभिप्रयन्नाह **जगत्कारणे**ति। उक्तन्यायेन श्रुत्यविरोधात् स्मृतिनिरासो न युक्त इति भावः। **महर्षिणे**ति-पदेन, "ऋषिं प्रसूतं कपिलम्" इति श्रुतिः स्मारिता। हेत्वन्तरमाह **प्रतिज्ञे**ति। **प्रतिज्ञादृष्टान्त**योर्हेत्वाक्षेपकत्वाभिप्रायेणोक्त**मनुमानवेषमेवे**ति। ननु न कारणविषया प्रतिज्ञा; अपित्वेकविज्ञानेन सर्वविज्ञानविषया; अतः अनुमानवेषत्वेपि न प्रधानकारणत्वसिद्धिरिति न वाच्यम्; एकविज्ञानेन सर्वविज्ञानप्रतिज्ञायाः सर्वस्य एकस्य चानन्यत्वेन निर्वाह्यत्वात् अनन्यत्वस्य कार्यकारणभावनिबन्धनत्वाच्च प्रधानकारणत्वप्रतिज्ञानस्य फलितत्वात्। अत्रायं प्रयोगोऽभिमतो वेदितव्यः—जगत् स्वानन्योपादानकं कार्यत्वात् घटवत्। यद्वा—इदं जगत् स्वकारणैकज्ञानेन ज्ञातं भवितुमर्हति—कार्यत्वात् एकमृत्पिण्डाद्यारब्धघटादिवदिति। पूर्वपक्षं निगमयति **इती**ति। इतिर्हेतौ। सुखदुःखमोहोन्वयसत्त्वरजस्तमोमयस्येदंशब्दवाच्यस्य कारणत्वमेकः पूर्वपक्षहेतुः। कार्यकारणानन्यत्वफलभूतमेकविज्ञानेनसर्वविज्ञानप्रतिज्ञानं तदुत्तम्भकम्। अनुमानाकारप्रतीतिश्चान्यो हेतुः। ... ... .... ... ....

अस्मिन् पूर्वपक्षे सिद्धान्तस्थापनाय सूत्रस्यावतीर्णत्वं दर्शयति **इत्येवं प्राप्त** इति। उच्यमानाः विषयसंशयपूर्वपक्षाः अस्याधिकरणस्येति ज्ञापनाय पूर्वं सूत्रोपादानम्; अस्य राद्धान्तसूत्रत्वज्ञापनार्थमक्षरव्याख्यानार्थं चेदानीं तदुपादानमिति **वैषम्यम्**। शब्दवेद्यतया अभिमतस्य कथमशब्दत्वमिति शङ्कयाह **यस्मिन्नि**ति। अब्भक्षः वायुभक्ष इतिवत् अवधारणगर्भितमिति भावः। शब्दैकप्रमाणकत्वं न चेत्, तत्र किमन्यत् प्रमाणमित्यत्राह **आनुमानिक**मिति। तर्हि प्रमाणान्तरप्राप्तं शास्त्रं न प्रतिपादयतीति चेन्न; सामान्यतोदृष्टानुमानेन कारणमात्रे प्रतिपन्नेऽपि तद्विशेषाणामप्रतिपन्नतया तद्विशिष्टेन रूपेण शास्त्रप्रतिपाद्यत्वात्। अप्राप्ते हि शास्त्रमर्थवदिति **मीमांसकानां** मतम्; न तु सांख्यानामिति पूर्वपक्षिणोऽभिप्रायः; तस्यानुपपन्नतां च ज्ञापयितुं **अशब्द**शब्दप्रयोगः आनुमानिकत्वमिन्द्रियाणां परमाणूनामप्यविशिष्टमिति तद्व्युदासार्थं सौत्रमेकवचनमित्य**भिप्रायेणाह प्रधान**मिति। प्रधानं ह्येकं सत् अनेकेषां कारणम्; परमाणवस्तु अनेके सन्त एकैकस्य कार्यस्य कारणम्; इन्द्रियाणि तु बहूनि ज्ञानकारणानि-न त्वर्थकारणानीति तद्व्यवच्छेदसिद्धिः। **ने**ति पदस्य प्रधानस्वरूपप्रतिक्षेपार्थत्वशङ्कां व्युदस्यन् **वाक्यार्थं** योजयति **न तदि**ति। धर्मिनिषेधपरत्वेपि शास्त्रस्य वाक्यनिरूपणपरत्वात् हेतुपदेन धातुस्वरूपोपादानाच्च प्रतिपाद्यतावेषेण निषेध्यत्वं विवक्षितमिति भावः। वाक्यप्रतिपाद्यत्वाभावः प्रमाणान्तरप्रतिपन्नत्वबाधितत्वाभ्याम्, वाक्यस्यान्यपरत्वाद्वा स्यात्, योग्यानुपलम्भाद्यभावादप्रतिपन्नाकारवैशिष्ट्यसद्भावाच्च बाधितत्वप्रतिपन्नत्वासंभवः। अन्यपरत्वं तु पूर्वपक्षयुक्तिभिरेव निरस्तम्। अतो हेतुर्न संभवतीत्यभिप्रायेण हेत्वाकाङ्क्षां दर्शयति **कुत** इति। हेतोरसिद्धिमन्यथासिद्धिञ्च व्युदसितुं

**सच्छब्दवाच्यसंबन्धिव्यापारविशेषाभिधायिन ईक्षतेर्धातोः श्रवणात्, 'तदैक्षत बहु स्यां प्रजायेय' इति। ईक्षणक्रियायोगश्चाचेतने प्रधाने न संभवति। अत ईदृशेक्षणक्षमः चेतनविशेषः सर्वज्ञः सर्वशक्तिः पुरुषोत्तमः सच्छब्दाभिधेयः। तथाच सर्वेष्वेव सृष्टिप्रकरणेष्वीक्षापूर्विकैव सृष्टिः प्रतीयते, "स ईक्षत लोकान्नु सृजा इति। स इमांल्लोकानसृजत", "स ईक्षाञ्चक्रे स प्राणमसृजत" इत्यादिषु।**

---

व्याचष्टे **सच्छब्दवाच्येति** । सच्छब्दवाच्यसंबन्धीति व्यधिकरणासिद्धिव्युदासः। प्रकृतं सदेव हि तदैक्षतेति तच्छब्देन परामृश्यत इति भावः। **व्यापारविशेषशब्देन अभिधायिशब्देन** चान्यथासिद्धिव्युदासः। न हि चेतनाचेतनसाधारणं कार्योन्मुख्यमात्रमीक्षतिधात्वभिधेयम्; अपि तु चेतनरूपकर्त्रसाधारणो व्यापारविशेषः। न च मुख्ये संभवति उपचारो युक्त इति भावः। इकृश्तिपौ धातुनिर्देशे वक्तव्याविति प्रक्रियया ईक्षतिशब्देन धातूपादानम्; नार्थोपादानम्। तथासति ईक्षितेरिति हि वक्तव्यं यात्। अनेन च शब्दस्य विवक्षितार्थे स्वारस्यं सूचितमित्यभिप्रायेणाह **धातोरिति** । **श्रवणादिति** [1]अज्ञानासिद्धिपरिहारः। श्रूयमाणादीक्षतेरिति सूत्रविवक्षितम् । तत्फलितं तु षष्ठ्या निष्कृष्य व्याख्यातम्। ईक्षतिशब्देनेक्षणं लक्षितमिति **वेदान्तदीपे** व्याख्यातमर्थस्वारस्याय; अत्र तु शब्दस्वारस्येन व्याख्यातम् ॥ ननु तत्तेज ऐक्षत, ता आप ऐक्षन्तेति वाक्यद्वयगतमीक्षणमचित्संबन्धितया प्रतीयते । सेयं देवतेक्षतेत्यत्रापि ईक्षणमचिद्गतमुचितम्, देवताशब्दस्य "हन्ताहमिमास्तिस्रो देवताः" इत्यासन्नवाक्यस्थदेवताशब्दविरूपार्थत्वायोगात् । प्रथमेक्षणं च सेयमिति तच्छब्दपरामृष्टसत्संबन्धित्वादचिद्गतमेवेत्याकाङ्क्षायामाह **तदैक्षतेति**। चरमवाक्यानुरोधेनोपक्रमस्वारस्यभङ्गो न युक्त इति इदं तावत् ईक्षणं मुख्यमिति भावः । धात्वर्थानां क्रियात्वादचेतनस्य क्रियायोगसंभवात् नात्रानुपपत्तिरित्यत्राह **ईक्षणक्रियेति** । अयं क्रियाविशेषो न संभवतीत्यर्थः। ततः किमित्यत्राह अत इति। **अतः** अचेतनस्य स्वरसंभावितत्वेन ईक्षणस्य स्वपक्षविरुद्धत्वादित्यर्थः। **ईदृशेक्षणक्षम** इति। अनेनाचिद्व्यावृत्तिरुक्ता। **ईदृशशब्देन चेतनविशेषशब्देन** चेक्षणस्वभावफलितचेतनमात्रादपि व्यावृत्तिरुक्ता। यत चेतनमात्रेऽपि न संभवति—तत् कथमचेतने संभवतीति भावः। **तदैक्षतेति** सिद्धं गुणमाह **सर्वज्ञ** इति। बहु स्यामिति फलितमर्थमाह **सर्वशक्तिरिति** । चिदचिद्व्यावर्तकलिङ्गबलसिद्धं सदिति सामान्यश्रुतेः पर्यवसानस्थलं दर्शयति **पुरुषोत्तम** इति। **सेयंदेवतेति** देवताशब्दोपि ईक्षणविशेषसामर्थ्यात् छागपशुन्यायेन चानुगृहीतः प्रकरणान्तरोक्तदेवताविशेषविषय इति भावः। सद्विद्यावाक्यस्य उक्तार्थपरत्वमनेकश्रुत्यन्तरस्वारस्येनोपपादयति **तथाचेति**। नात्र विषयवाक्यतया श्रुत्यन्तरोपादानम्। **सर्वेष्वेव**—सर्वेष्वपि । अनेन प्राचुर्यम् अभिप्रेतम्। ईक्षणस्य गौणत्वाश्रयणे अनेकश्रुतिस्वारस्यभङ्गप्रसङ्ग इति भावः । **प्रतीयत** इति । प्रतीतिस्तावदविगीतेति भावः।

---

1 अज्ञानासिद्धीति। अत्रेदं बोध्यम्—असिद्धिरित्यत्र सिद्धिर्नाम ज्ञानं सद्भावश्च। तत्र ज्ञानाभावरूपासिद्धिरेवाज्ञानासिद्धिरित्युच्यते। सैवाप्रसिद्धिः; अप्रामाणिकता। पक्षसाध्यहेतुतद्धर्मादिविषया विविधा। आश्रयासिद्धिरत्रान्तर्भवति। असद्भावरूपा चासिद्धिः हेतुरूपधर्मिस्वरूपसंबन्धिनी स्वरूपासिद्धिरिति, सामान्यतः असिद्धिरिति चोच्यते। पूर्वं व्यधिकरणासिद्धिपदेनापि सैवोक्ता। हेतुत्वरूपधर्मासिद्धिरेव व्याप्यत्वासिद्धिः, अप्रयोजकत्वम्, अन्यथासिद्धिरिति।

ननु च कार्यानुगुणेनैव कारणेन भवितव्यम्॥ सत्यम्। सर्वकार्यानुगुण एव सर्वज्ञः सर्वशक्तिः सत्यसंकल्पः पुरुषोत्तमः सूक्ष्मचिदचिद्वस्तुशरीरकः। यथाऽऽह, "पराऽस्य शक्तिर्विविधैव श्रूयते स्वाभाविकी ज्ञानबलक्रिया च", "यस्सर्वज्ञस्सर्ववित् यस्य ज्ञानमयं तपः", "यस्याव्यक्तं शरीरं यस्याक्षरं शरीरं यस्य मृत्युश्शरीरम् एष सर्वभूतान्तरात्मा" इति। तदेतत्, "न विलक्षणत्वात्" इत्यादिषु प्रतिपादयिष्यते। अत्र सृष्टिवाक्यानि न प्रधानप्रतिपादनयोग्यानीत्युच्यते। वस्तुविरोधस्तु तत्रैव परिहरिष्यते।

यत्तूक्तम्—प्रतिज्ञादृष्टान्तयोगादनुमानरूपमेव इदं वाक्यमिति—तदसत्; हेत्वनुपादानात्। येनाश्रुतं श्रुतमिति एकविज्ञानेन सर्वविज्ञाने प्रतिपिपादयिषिते सर्वात्मना तदसंभवं मन्वानस्य तत्संभवमात्रप्रदर्शनाय हि दृष्टान्तोपादानम्। ईक्षत्यादिश्रवणादेव ह्यनुमानगन्धाभावोऽवगतः॥ (५)

---

स्वपक्षसाधकम् उक्त्वा पूर्वपक्षयुक्तिं परिहर्तुं चोद्यमुपक्षिपति ननु चेति। कार्यकारणयोः सालक्षण्यं तावत् अङ्गीकार्यम्; मृत्तत्कार्यादिषु दर्शनात्। तच्च सालक्षण्यं ब्रह्मणस्त्रिगुणात्मकत्वादियोगेन वा जगतस्तद्विधुरत्वेन वा निर्वाह्यम्। आद्ये शब्दान्तरेण प्रधानाङ्गीकारः। द्वितीये सुखदुःखमोहान्वयाद्युपलम्भविरोध इति भावः। परिहरति सत्यमिति। अर्धाङ्गीकारे सत्यशब्दः। कार्यानुगुण्यमङ्गीकृतम्; न तु प्रधानत्वमिति। सर्वेति। प्रधानस्यैव हि सर्वकार्याननुगुणत्वम्, कार्यानुप्रविष्टचिदपेक्षया तस्य कारणत्वौपयिकाकारविरहादिति भावः। कार्यानुगुणनिमित्तोपादानभावसिद्ध्यर्थं सर्वज्ञसर्वशक्तिपदद्वयम्; तदुभयफलितमाह सत्यसंकल्प इति। सर्वशक्तित्वासंकोचान्न तस्य संकल्पप्रतिबन्धसंभावनेति भावः। विकारादीनां संहारकत्वसिद्ध्यर्थं सूक्ष्मेत्यादिपदम्—उक्ताकारविरहे कारणत्वायोगात् तद्वत्त्वे श्रुतिवाक्यानि दर्शयति पराऽस्येति। चिदचितोः शरीरत्वं कथम्; शरीरत्वे च तद्गतः कर्मवश्यत्वादिदोषः स्यादित्यत्राह तदेतदिति। नविलक्षणत्वादित्यादिसूत्रैरेषां सूत्राणां पौनरुक्त्यमाशङ्क्याह अत्र सृष्टीति। वस्तुविरोधः—अर्थसामर्थ्यविरोधः। अत्र वाक्यतर्केणार्थनिष्कर्षः—तत्र त्वाभिमानिक-व्याप्त्याभास-निबन्धनवाह्यतर्कविमर्श-तन्निरासमुखेनार्थनिष्कर्ष इति भिदेत्यर्थः। एवं सत्त्वादिगुणमयस्येदंशब्दवाच्यस्य कारणत्वम्, तदुत्तम्भकमेकविज्ञानेन सर्वविज्ञानप्रतिज्ञानं च परिहृतं भवति।

अथ परोक्तं हेत्वन्तरमनुवदति यत्तूक्तमिति। तस्यानुपपन्नत्वमाह तदसदिति। कथमित्यत्राह हेत्वनुपादानादिति। वक्तुरनुमानविवक्षाऽस्ति चेत्, तत्र प्रधानावयवो हेतुरवश्योपादेयः; तदभावान्न तद्विवक्षेति भावः। प्रतिज्ञादृष्टान्ताभ्यां हेत्वाक्षेपोऽप्ययुक्त इत्याह येनाश्रुतमिति। अनन्यथासिद्धं ह्याक्षेपकम्; सर्वप्रमाणसाधारणत्वात् प्रतिज्ञा अन्यथासिद्धेति सिद्धं कृत्वा दृष्टान्तस्य हेत्वाक्षेपकत्वायोग उच्यते। न केवलं व्याप्तिप्रदर्शनायैव दृष्टान्तोपन्यासः—अपितु असंभवव्यावृत्तिप्रदर्शनायापि संभवतीति अनन्यथासिद्धत्वात् स नाक्षेपक इत्यर्थः। सर्वात्मना तदसंभवमिति। एकविज्ञानेन सर्वविज्ञानं धर्म्यैक्यात्, एकाकारान्वयाद्वा, वस्त्वन्तरव्यतिरेकाद्वा संभवति। घटपटादिषु त्रेधाऽपि तन्न संभवति, घटपटादिषु धर्म्यैक्यस्य अन्वयेनान्यसाद्व्यतिरेकेण वा समानाकारयोगस्य चाभावादिति भावः। अस्तु दृष्टान्तस्यानुमानाङ्गत्वे संभवप्रदर्शनार्थत्वे च साधारण्यम्। तथा सति अस्मन्मतेऽपि संभवः स्यादित्यत्राह ईक्षत्यादीति। आदिशब्देन वक्ष्यमाणहेतवो विवक्षिताः। प्रतिज्ञादृष्टान्तयोः साधारण्येनानुमानत्वं शङ्कितम्; ईक्षत्याद्यसाधारणहेतुसद्भावात् शङ्काऽपि निरस्तेत्यभिप्रायेणोक्तमनुमानगन्धाभाव इति।

अथ स्यात्--न चेतनगतं मुख्यमीक्षणमिहोच्यते ; अपि तु प्रधानगतं गौणमीक्षणम् ; "तत्तेज ऐक्षत", "ता आप ऐक्षन्त" इति गौणेक्षणसाहचर्यात् । भवति चाचेतनेष्वपि चेतनधर्मोपचारः।, यथा 'वृष्टिप्रतीक्षाः शालयः', "वर्षेण बीजं प्रतिसञ्जहर्ष" इति । अतो गौणमीक्षणमिति । इमामाशङ्कामनुभाष्य परिहरति—

गौणश्चेन्नात्मशब्दात् ॥ १-१-६ ॥

यदुक्तम्—गौणेक्षणसाहचर्यात् सतोऽपीक्षणव्यपदेशः सर्गनियतपूर्वावस्थाभिप्रायो गौण इति--तन्न ; "ऐतदात्म्यमिदं सर्वं तत् सत्यं स आत्मा" इति सच्छब्दप्रतिपादितस्य आत्मशब्देन व्यपदेशात् । एतदुक्तं भवति—"ऐतदात्म्यमिदं सर्वम् । स आत्मा" इति चेतनाचेतनप्रपञ्चोद्देशेन सत आत्मत्वोपदेशोऽयं नाचेतने प्रधाने सङ्गच्छत इति । अतस्तेजोबन्नानामपि परमात्मैवात्मेति

---

उत्तरसूत्रमवतारयितुमीक्षणस्य गौणत्वं शङ्कते अथ स्यादिति । चेतनगतम् चेतनत्वानुगुणम् । इहेति । प्रकरणमालोचनीयमिति भावः । प्रधानगतं—अचेतनत्वानुगुणमित्यर्थः । प्रथमेक्षणस्य तेजःप्रभृतिकार्याचिद्गतत्वायोगात् प्रधानशब्दः । हेतुमाह तत्तेज इति । प्रायदर्शनाय वाक्यद्वयमुपात्तम् । अग्रयप्रायन्यायोऽपि (पू. मी. भा. २-२-१२) बाधकाभावे जीवतीति भावः । सेयं देवतेति देवताशब्दोऽप्यनेनैव न्यायेन, इमास्तिस्रो देवता इतिवत् अचिद्विषयत्वौचित्यात् न गौणत्वबाधक इति भावः । गौणप्रयोगं दर्शयति भवतिचेति । ईक्षणतुल्ययोगक्षेमहर्षादिधर्मान्तरसंग्रहाय चेतनधर्मशब्दः । लोके शास्त्रे च प्रयोगद्वयं दर्शितम् । गौणत्वं निगमयन् उक्तशङ्कापरिहाराय सूत्रस्यावतीर्णत्वमाह अत इति । शङ्काया उत्सूत्रत्वाभावात् अनुभाष्येत्युक्तम् । गौणश्चेन्नात्मशब्दात् ॥ केन गुणयोगेन गौणत्वमिति शङ्कां परिहरन् सूत्रं योजयति यदुक्तमिति । पुँल्लिङ्गगौणशब्दविशेष्यः प्रकृत ईक्षतिरित्यभिप्रायेणोक्तमीक्षणव्यपदेश इति । गौण ईक्षतिर्नेत्युक्ते विशेष्यप्रतिक्षेपशङ्काव्युदासाय यत्तच्छब्दाभ्यां विशेषणनिषेधपरत्वेन व्याख्यातम् । यत् गौणत्वमुक्तम्, तन्नेत्यर्थः । सर्गेति । गौणोऽर्थः सर्गप्रागवस्था । तत्र नियतपूर्वत्वलक्षणं कार्यानुरूप्यं गुणयोग इत्यर्थः । आत्मशब्दादिति सौत्रेण पदेन अविशेषेण 'ऐतदात्म्यम्' 'स आत्मा' इति वाक्यद्वयगतात्मशब्दो विवक्षित इत्यभिप्रायेण वाक्यद्वयमुपात्तम् । सच्छब्दप्रतिपादितस्येति । ऐतदात्म्यमित्यत्र एतच्छब्दस्य, स आत्मेत्यत्र स इति पदस्य च प्रकृतपरामर्शित्वादिति भावः । आत्मशब्दोऽपि मृदात्मको घटः, घटस्य मृदात्मेतिवत् स्वरूपानतिरिक्तार्थः स्यादित्यत्राह एतदुक्तमिति । चेतनाचेतनप्रपञ्चोद्देशेनेति । इदं सर्वमिति सर्वशब्दासङ्कोचस्य स्वतःप्राप्तत्वात्, 'सन्मूलाः सर्वाः प्रजाः' इति पूर्ववाक्यैकार्थ्यात्, 'इदं सर्वमसृजत', 'सच्च त्यच्चाभवत्', 'विज्ञानं चाविज्ञानं च' इति श्रुत्यन्तरैकार्थ्याच्च सर्वशब्दश्चिदचिदात्मकजगद्गोचर इति भावः । नाचेतने इति । न हि चेतनस्याचेतनेन स्वरूपैक्यं संभवतीत्यर्थः । एवं गौणेक्षणसाहचर्यमभ्युपगम्य दूषणमुक्तम् ; अथ तदेव नास्तीत्याह अत इति । अतः—चिदचिदात्मकप्रपञ्चस्यात्मत्वादित्यर्थः ॥ किमर्थमीक्षणोपदेशरहितस्यान्नस्योपादानम् ॥ उच्यते । ईक्षणोपदेशविरहनिबन्धनान्नाब्रह्मात्मकत्वशङ्कानिराकरणार्थम् । अन्यथा सर्वस्य कार्यस्य ब्रह्मात्मकत्वानवगमादिदं सदिति सामानाधिकरण्यायोग्यत्वेनैकविज्ञानेन सर्वविज्ञानप्रतिज्ञानं न घटते । अतस्तदुपादानेन प्रतिज्ञासिद्ध्यौपयिकमनुप्रवेशश्रुतिसिद्धमन्नस्य ब्रह्मात्मकत्वमिहानुषङ्गिकं दर्शितम् । न हि किञ्चिदप्यतदात्मकमिति अपिशब्दाभिप्रायः । अतदात्मकत्वेन त्वदभिमतानामपीति

तेजःप्रभृतयोऽपि [1]शब्दाः परमात्मन एव वाचकाः । तथा हि—"हन्ताहमिमास्तिस्रो देवता अनेन जीवेनात्मनाऽनुप्रविश्य नामरूपे व्याकरवाणि" इति[2] परमात्मानुप्रवेशादेव तेजःप्रभृतीनां वस्तुत्वं तत्तन्नामभाक्त्वं चेति, "तत्तेज ऐक्षत", "ता आप ऐक्षन्त" इत्यपि मुख्य एवेक्षणव्यपदेशः, अतः साहचर्यादपि "तदैक्षत" इत्यत्र गौणत्वाशङ्का दूरोत्सारितेति सूत्राभिप्रायः ॥ ६ ॥

इतश्च न प्रधानं सच्छब्दप्रतिपाद्यम्—

**तन्निष्ठस्य मोक्षोपदेशात् ॥ १-१-७ ॥**

---

वा । यदाश्रयतया प्रथममीक्षणं मुख्यम्, स एवेत्येवकाराभिप्रायः । **तेजःप्रभृतयोऽपीति** । सच्छब्दवदिति **अपि**शब्दस्य भावः । लोके तेजःप्रभृतिमात्रपरत्वेन व्युत्पन्ना अपीति वा । **परमात्मन एवेति** । विशेष्यतया प्राधान्येन प्रतिपाद्यः परमात्मैव ; तेजःप्रभृतयस्तु द्वारमात्रमिति भावः । परमात्मवाचित्वमुपपादयति **तथाहीति** । **वस्तुत्वम्**—तद्रूपवस्तुत्वम् । तेजसो **वस्तुत्वं** तेजस्त्वम्, अपां **वस्तुत्वम**प्त्वम्, पृथिव्या **वस्तुत्वं** पृथिवीत्वम्, देवमनुष्यादीनां **वस्तुत्वं** देवत्वमनुष्यत्वादिकम् । तत्तदवस्थाभाक्त्वमित्यर्थः । **नामभाक्त्वम्**—नामवाच्यत्वम् ॥ ननु कथं परस्य नामव्याकर्तृत्वश्रवणात् नामवाच्यत्वसिद्धिः ॥ उच्यते । 'तन्नामरूपाभ्यां व्याक्रियत' इति समानवाक्ये व्याकृतत्वश्रवणात् । नाम्ना विशेषितत्वं हि नामव्याकृतत्वम् । नामविशेषितत्वञ्च नामवाच्यत्वरूपमिति प्रसिद्धम् ; न तु तदुत्पादकत्वमात्रम् । न ह्याकाशस्य वा मातापित्रादेर्वा देवदत्तादिनामविशेषितत्वप्रसिद्धिः । अतो नामव्याकृतत्वं नामवाच्यत्वम् । अतस्तदैकार्थ्यादिहापि नामवाच्यत्वं विवक्षितम् । 'वचसां वाच्यमुत्तमम्' इति चायमर्थ उच्यते । एवं तेजःप्रभृतिशब्दानां परमात्मवाचित्वोपपादनफलमाह **इति तत्तेज ऐक्षतेति** । **इति**शब्दो हेतुपरः । मुख्यत्वफलमाह **अत** इति । **अपि**शब्दो गौणत्वशङ्काहेतुसमुच्चयपरः । **इदं**शब्दवाच्यजगत्कारणत्वादिना गौणत्वशङ्का परिहृता । गौणेक्षणसाहचर्याच्च गौणत्वशङ्का निरस्तेत्यर्थः । यद्वा त्वन्मतसाधकादपि त्वन्मतं निरस्तमिति भावः । **दूरोत्सारितेति** । गौणसाहचर्ये सत्यपि सर्वशब्दतत्प्रतिसंबन्धिवाचकात्मशब्दस्वारस्येन **तदैक्षते**त्यत्र गौणत्वाशङ्का उत्सारिता, गौणसाहचर्यासिद्ध्या दूरोत्सारितेत्यर्थः । गौणेक्षणसाहचर्ये सत्यपि आत्मशब्दात् प्रथमेक्षणमगौणम्, आत्मशब्दादेव गौणेक्षणसाहचर्यमसिद्धं चेत्यर्थद्वयं कथमेकेन वाक्येनोच्यत इत्यत्राह **इति सूत्राभिप्राय** इति । प्रतिज्ञादृष्टान्तयोर्हेत्वनाक्षेपकत्वं मुख्यामुख्यार्थानुग्राहकेषु मुख्यानुग्राहकस्यानुरोद्धव्यत्वं चास्मिन्नधिकरणे व्युत्पाद्यमिति सूत्रद्वये स्पष्टम् ॥ ६ ॥

अवान्तरसाध्यविषयत्वशङ्कां व्युदस्यन् उत्तरसूत्रमवतारयति **इतश्चेति** । कारणत्वौपयिकेक्षणधर्मनिरूपणेन परमात्मत्वं सतः समर्थितम् । अथ "कारणं तु ध्येयः" इति कारणवस्त्वसाधारणमोक्षप्रदत्वधर्मेण परमात्मत्वं साध्यत इति सङ्गतिः । ... ... .... ...

**तन्निष्ठस्य मोक्षोपदेशात्** ॥ **तस्य तावत्** इति श्रुतौ **तस्येति** पदस्य व्याख्यानं सूत्रे

---

1 सृष्टिकर्मतया कर्तृतया च यथायथं निर्दिष्टाः शब्दा इत्यर्थः । अतोऽन्यस्य कर्तृत्वाश्रवणेऽपि न क्षतिः । 2 अनेन वाक्येन आत्मत्वस्य नामवाच्यत्वे प्रयोजकत्वावगमात् तुल्यनयात् समष्टिशब्देष्वपि तदिति भावः ।

मुमुक्षोः श्वेतकेतोः, 'तत्त्वमसि' इति सदात्मकत्वानुसन्धानमुपदिश्य तन्निष्ठस्य, "तस्य तावदेव चिरम्, यावन्न विमोक्ष्ये । अथ सम्पत्स्ये" इति शरीरपातमात्रान्तरायो ब्रह्मसंपत्तिलक्षणो मोक्ष इत्युपदिशति । यदि च प्रधानमचेतनं कारणमुपदिश्येत, तदा तदात्मकत्वानुसन्धानस्य मोक्षसाधनत्वोपदेशो नोपपद्यते । "यथाक्रतुरस्मिन् लोके पुरुषो भवति तथेतः प्रेत्य भवति" इति तन्निष्ठस्याचेतनसंपत्तिरेव स्यात् । न च मातापितृसहस्रेभ्योऽपि वत्सलतरं शास्त्रमेवं-

---

तन्निष्ठस्येति पदमिति दर्शयन् तच्छब्दनिष्ठाशब्दयोरर्थं विवृण्वन् सूत्रार्थमाह मुमुक्षोरिति । अर्वाचीन-फलकदृष्टिविधिसंभवाचेतने कृत्स्नजगदुपादानतयोत्कृष्टप्रधानदृष्टिविधिरयमिति शङ्का मुमुक्षोरिति पदेन निरस्ता । तत्त्वमसीति सदात्मकत्वानुसन्धानमुपदिश्येति । सदात्मकत्वोपदेशवाक्यगतस्तच्छब्दः प्रकृतसद्विषय इति ज्ञापनपरः सूत्रे तच्छब्द इत्यभिप्रायेण सदात्मकत्वेत्युक्तम् । अनुसंधानशब्देन निष्ठाशब्दार्थ उक्तः ॥ इहोपदेशस्यानुसन्धानार्थत्वं कथमवगतम् । उच्यते ॥ उपक्रमे, 'येनाश्रुतं श्रुतं भवति अमतं मतमविज्ञातं विज्ञातम्' इति श्रवणमननसमनन्तरभाविविज्ञानशब्द उपासनपरः ; 'श्रोतव्यो मन्तव्यो निदिध्यासितव्यः' इत्यनेनैकार्थ्यात् । उपसंहारे च 'तद्धास्य विजज्ञौ' इति तत्तुल्यार्थं विजज्ञाविति पदमावर्तितम्[1] । मध्येऽपि, 'आचार्यवान् पुरुषो वेद' इत्याचार्यवत्ताफलत्वेन प्रतिपादि-तार्थविशेषवेदनवचनमाचार्योपदिष्टार्थस्यानुसंधेयत्वे लिङ्गम् । एवमेभिः कारणैः सदात्मकत्वोपदेश-स्योपासनार्थत्वावगमः । शरीरपातमात्रान्तराय इति । अन्तरायशब्देन विलम्बो लक्ष्यते । [2]शरीरपातावधिविलम्ब इत्यर्थः ॥ 'यावन्न विमोक्ष्ये' इत्युक्ते कथं शरीरान्मोक्षसिद्धिः ॥ उच्यते । मोक्ष इत्युक्ते कस्मान्मोक्ष इति बन्धकं किञ्चिदाकाङ्क्षितम् । तच्च किमित्यपेक्षायामस्यामेव विद्यायाम् ; "अथ यदाऽस्य वाङ्मनसि सम्पद्यते" इत्यादिना देहादुत्क्रमणश्रवणात्, अन्यत्र च, "अस्माच्छरीरात् समुत्थाय परं ज्योतिरुपसंपद्य," 'धूत्वा शरीरम्', 'अशरीरं वा व सन्तं न प्रियाप्रिये स्पृशतः' इति श्रवणात्, 'त्यक्त्वा देहं पुनर्जन्म नैति' इत्यादिस्मरणाच्च शरीरमित्यव-गम्यते । ब्रह्मसंपत्तिलक्षण इति । 'अथ संपत्स्ये' इति सम्पत्तेः, 'सता सोम्य तदा संपन्नो भवति' इति वाक्यान्तरप्रतिपन्नं ब्रह्मैव कर्मेति भावः । मोक्ष इति । सौत्रस्य मोक्षशब्दस्य शरीरपातपूर्विका ब्रह्मसं-पत्तिरेवार्थः ; न तु शरीरपातमात्रमित्यभिप्रायः । ततः किं प्रधानवैलक्षण्यस्येत्यपेक्षायां मुमुक्षोरिति पदेनाभिप्रेतं विवृणोति यदि चेति । कथमनुपपत्तिः ? तीर्थक्षेत्रसेवादिवत् अचिदुपासनस्य मोक्षोपयोगित्वं शास्त्रबलात् किं न स्यादिति शङ्कायामाह यथाक्रतुरिति । उपासनानुरूपफलभाक्त्वं श्रुत्यर्थः । ततश्च हेयोपासनात् हेयप्रहाणानुपपत्तिः । अचेतनसंपत्तिः—अचित्प्राप्तिः ; संसारित्वम् । कर्मकृताचित्सम्बन्धो हि संसारः । संपत्तिशब्दस्य प्राप्त्यर्थत्वं तापत्रयाभिहतिहेतुभूतामचित्संपत्तिमित्यनन्तरभाष्येण व्यक्तम् । अचेतनसंपत्तिरस्तु ; ततः किमित्यत्राह न चेति । अत्र, "शास्त्रं हि वत्सलतरं मातापितृ-सहस्रतः" इति पुराणवचनं सारितं मातापितृसहस्रेभ्य इति । मातापितरावेकस्मिन् जन्मनि ऐहिक-

---

1 शब्दावृत्तावप्यर्थावृत्तौ मानाभावात् प्रथमं विजज्ञाविति पदं विशदबोधार्थकम् । अथ इति विजज्ञावित्यनेन श्वेतकेतुरुपासितवानित्युच्यतामिति भावः ।

2 मात्रा—परिच्छेदः । शरीरपातेन परिच्छिन्नः तदवधिकः कालः शरीरपातमात्रः । सोऽन्तरायो यस्येति भाष्यस्थपदार्थ इति भावः । प्रारब्धकर्मफलचरमशरीरपातोऽत्र विवक्षितः ।

विधतापत्रयाभिहतिहेतुभूतामचित्संपत्तिमुपदिशति । प्रधानकारणवादिनोऽपि हि प्रधाननिष्ठस्य मोक्षं नाभ्युपगच्छन्ति ॥ ७ ॥

इतश्च न प्रधानम्—

**हेयत्वावचनाच्च ॥ १-१-८ ॥**

यदि प्रधानमेव कारणं सच्छब्दाभिहितं भवेत्, तदा मुमुक्षोः श्वेतकेतोस्तदात्मकत्वं मोक्षविरोधित्वाद्धेयत्वेनैवोपदेश्यं स्यात् । न च तत् क्रियते । प्रत्युत उपादेयत्वेनैव, "तत्त्वमसि" "तस्य तावदेव चिरम्" इत्युपदिश्यते ॥८॥

इतश्च न प्रधानम्—

**प्रतिज्ञाविरोधात् ॥ १-१-९ ॥**

प्रधानकारणत्वे प्रतिज्ञाविरोधश्च भवति । वाक्योपक्रमे ह्येकविज्ञानेन सर्वविज्ञानं प्रतिज्ञातम् ।

---

पोषणमात्रपरौ; शास्त्रं त्वनेकेषु जन्मसु ऐहिकामुष्मिकसर्वविधरक्षणपरमिति भावः । **तापत्रयेति** । शास्त्रस्य प्रयोजनपर्यवसानं न स्यादित्यभिप्रायः । एवं श्रुतिसिद्धन्यायविरोध-प्रयोजनपर्यवसानाभावाभ्यां मोक्षोपयोगित्वं निरस्तम् । अस्मिन्नर्थे परमतसंवादं दर्शयति **प्रधानकारणे**ति । **प्रधाननिष्ठस्ये**ति । 'व्यक्ताव्यक्तज्ञविज्ञानात्' इति वदताऽपि साङ्ख्येन प्रधानस्य व्याधेरिव परिज्ञानमात्रं विवक्षितम् ; न तूपासनमिति भावः ॥ ७ ॥

ननु तत्त्वमसीति न सदात्मकत्वानुसन्धानोपदेशः, किन्तु स्थूलोऽहमित्यादिदेहात्मभ्रमानुवादः । अतः सच्छब्दवाच्याचेतनस्य मुमुक्षुणा ज्ञातव्यत्वं हानार्थमिति शङ्कया अनन्तरसूत्रसङ्गतिमभिप्रयन्नाह **इतश्चे**ति । **हेयत्वावचनाच्च** ॥ न परं प्रति आनुकूल्याभावमात्रम् ; किन्तु प्रातिकूल्यं चास्तीत्याह **प्रत्युते**ति । स्थूलोऽहमित्याद्यनुसन्धानस्येव न सदात्मकत्वानुसन्धानस्य हेयत्वं प्रतिपाद्यते ; अपि तु उपादेयत्वमेवोच्यते । तच्च प्रधानपरत्वेऽनुपपन्नम् ; "[1]अनादिमायया सुप्तः", "मायया संनिरुद्धः", "अनीशया शोचति मुह्यमानः", "जहात्येनां भुक्तभोगामजोऽन्यः" इत्यादिषु प्रधानप्रस्तावेषु तस्य **हेयत्वेनैव** प्रतिपादनादित्यर्थः । एवं **तदैक्षते**त्यादिवाक्यप्रभृति-तदुपरितनवाक्यावगता हेतव उक्ताः । **तेषां समाप्तौ चशब्दः** प्रयुक्तः । यद्वा उपादेयतोक्त्यनुपादेयतानुक्त्योः सूत्रद्वयप्रतिपादितयोरन्वयव्यतिरेकात्मना परस्परसङ्गतयोरेकीकारार्थ इह चशब्दः । अत एव हि **प्रत्युते**त्यादिना पूर्वसूत्रार्थनिगमनं कृतम् ॥ ८ ॥

अथोपक्रमविरोधे सति उत्तरवाक्यगतहेतूनां दौर्बल्यात् प्रधानमेव प्रतिपाद्यमिति शङ्कां परिहरति **प्रतिज्ञाविरोधात्** ॥ कस्मिन्नर्थे विरोध इत्यपेक्षां पूरयन् व्याचष्टे **प्रधानकारणत्व** इति । त्वन्मतानुगुणत्वेन यदुक्तम्, तदेव त्वन्मतप्रतिकूलमिति सूत्रकारहृदयमिति भावः । कथमित्यत्राह **वाक्योपक्रमे हीति** । प्रतिज्ञावाक्ये सर्वशब्दाभावेऽपि, "कस्मिन्नु भगवो विज्ञाते सर्वमिदं विज्ञातं भवति', 'आत्मनि खल्वरे दृष्टे श्रुते मते विज्ञाते इदं सर्वं विज्ञातम्' इति समानप्रकरणवाक्यैकार्थ्यात् **सर्वाः** प्रजा इति वक्ष्यमाणस्वारस्याच्च **सर्वविज्ञानं प्रतिज्ञात**मित्युक्तम् । न च सर्वं मृण्मयमितिवत्

---

1 अनादीति । अस्य गौडपादीयत्वात् श्रुतिवाक्यत्वाभावेऽपि तदर्थविवरणादुपादानम् । अत एवास्य भाष्ये जिज्ञासाधिकरणे महापूर्वपक्षे श्रुतिस्मृत्युभयानन्तरं ग्रहणम् ।

तच्च कार्यकारणयोरनन्यत्वेन कारणभूतसद्विज्ञानात् तत्कार्यभूतचेतनाचेतनप्रपञ्चस्य ज्ञाततयैवोपपादनीयम्। तत्तु प्रधानकारणत्वे चेतनवर्गस्य प्रधानकार्यत्वाभावात् प्रधानविज्ञानेन चेतनवर्गविज्ञानासिद्धेर्विरुद्ध्यते ॥ ९॥

इतश्च न प्रधानम्—

**स्वाप्ययात् ॥ १-१-१० ॥**

तदेव सच्छब्दवाच्यं प्रकृत्य आह, "स्वप्नान्तं मे सोम्य विजानीहीति। यत्रैतत्पुरुषः स्वपिति नाम, सता सोम्य तदा सम्पन्नो भवति। स्वमपीतो भवति। तस्मादेनं स्वपितीत्याचक्षते। स्वं ह्यपीतो भवति" इति सुषुप्तं जीवं सता सम्पन्नं, स्वमपीतः—स्वस्मिन् प्रलीन इति व्यप-

---

कार्यभूतसर्वाचिद्विज्ञानमेव सर्वविज्ञानमिति वाच्यम्;—'सन्मूलाः सोम्येमाः सर्वाः प्रजाः' इति सर्वशब्दसमानाधिकरणप्रजाशब्दस्वारस्यावगतानां चेतनानामपि सन्मूलतया ज्ञातव्यसर्वकार्यान्तर्भावादिति भावः। ततः किमित्यत्राह तच्चेति। **कार्यकारणयोरनन्यत्वेने**ति। न हि चिदचितोरनन्यत्वमिति भावः। नन्वनन्यत्वेऽपि एकविज्ञानात् सर्वविज्ञानं घटते; पृथिव्यादीनां कार्यतया चिदंशस्याकार्यतया च ज्ञानसंभवादित्यत्राह **तत्कार्यभूतचेतनाचेतनप्रपञ्चस्ये**ति। मृत्पिण्डतत्कार्यादिदृष्टान्तबलात् 'सन्मूलाः सर्वाः प्रजाः' इति वाक्ये प्रजाशब्दस्वारस्याच्च चेतनस्यापि कार्यतयैव ज्ञातत्वं वक्तव्यमिति भावः। **ज्ञाततयैवोपपादनीय**मिति। देवदत्तज्ञानेन ग्रामविज्ञानवत् नात्र सर्वविज्ञानमौपचारिकम्; औपचारिकत्वे सर्वविज्ञानस्य लोकदृष्टत्वेन कथं नु भगव इति प्रश्नायोगात्; अनन्यभूतमृत् तत्कार्यादिदृष्टान्तमुखेन मुख्यतयैव सर्वविज्ञानोपपादनदर्शनाच्चेति भावः। उक्तविपर्ययेण प्रतिज्ञाविरोधं दर्शयति तत्त्विति ॥-९-॥

एकविज्ञानेन सर्वविज्ञानप्रतिज्ञानं कार्यकारणभावनिबन्धनम्, सुषुप्तौ परमात्मनि चेतनस्य प्रलयश्च तन्निबन्धन इति कार्यकारणभावनिबन्धनत्वसाम्यात् सङ्गतं सुषुप्तौ लयं हेतुत्वेनाऽऽहेत्यभिप्रयन्नाह **इतश्चे**ति। **स्वाप्ययात्** ॥ सच्छब्दस्य जीवोपस्थापकस्वशब्दसमानविषयत्वनिबन्धनामर्थान्तरत्वशङ्कां व्युदस्यति **तदेव सच्छब्दवाच्य**मिति। जगत्कारणवस्तुविषय एवात्रापि सच्छब्दः इत्यभिप्रायः। **यत्र**— यदेत्यर्थः। ननु सता संपत्तिः प्रकृतिसंसर्गोऽस्तु; स्वाप्ययोऽपि जीवस्य स्वस्वरूपेऽवस्थानमिति स्वसच्छब्दयोर्भिन्नार्थः स्यादिति नैतद्वाक्यं प्रधानकारणताविरोधीति; तदेतत् परिहरन् व्याचष्टे **सुषुप्त**मिति। **स्वमपीत** इतीदं विवृणोति **स्वस्मिन् प्रलीन** इति। **स्व**मिति द्वितीया, **सते**ति तृतीया च फलतः **सति सम्पद्ये**ति सप्तम्यनुगुणार्थे; व्यपदेशभेदस्तु धातुस्वभावभेदादित्यभिप्रायः। अपीतेः प्राप्तिरूपत्वात् द्वितीयानिर्देशः। "ब्रह्मैव सन् ब्रह्माप्येति", "यत् प्रयन्त्यभिसंविशन्ति" इति हि श्रुत्यन्तरम्। साहित्यसद्भावात् तृतीयानिर्देशः। **सम्पन्न** इति कर्मणि निष्ठा वा; तदानीं संपत्तेः प्राप्तिरूपत्वात् सतः कर्तृत्वविवक्षया तृतीया; "प्राज्ञेनात्मना सम्परिष्वक्तः" इतिवत्। अप्ययस्य स्थानसापेक्षत्वात् सप्तमीनिर्देशः। व्युत्पत्तिवशेन प्रलयवाचिनां शब्दानां स्थानापेक्षाया उत्कटत्वात् सप्तम्यनुरोधेन व्याख्यातम्। एवं संपत्त्यप्ययशब्दयोः प्रलयपरतयैकार्थ्यमुक्तम्। स्वसच्छब्दयोश्च प्रलयस्थानपरतया ऐकार्थ्यमुक्तम्। अयमभिप्रायः—'सता सोम्य तदा संपन्नः', 'सति संपद्य' इति प्रतिज्ञानिगमनवाक्यमध्य-

दिशति। प्रलयश्च स्वकारणे लयः। न चाचेतनं प्रधानं चेतनस्य जीवस्य कारणं भवितुमर्हति।

[स्व[1]मपीतो भवति। आत्मानमेव जीवोऽपीतो भवतीत्यर्थः। चिद्वस्तुशरीरकं तदात्मभूतं ब्रह्मैव जीवशब्देनाभिधीयत इति नामरूपव्याकरणश्रुत्योक्तम्। तत् जीवशब्दाभिधेयं ब्रह्म सुषुप्तिकालेऽपि प्रलयकाल इव नामरूपपरिष्वङ्गाभावात् केवलसच्छब्दाभिधेयमिति 'सता सोम्य तदा सम्पन्नो भवति स्वमपीतो भवति' इत्युच्यते। तथा समानप्रकरणे नामरूपपरिष्वङ्गाभावेन प्राज्ञेनैव परिष्वङ्गात्, "प्राज्ञेनात्मना सम्परिष्वक्तो न बाह्यं किञ्चन वेद नान्तरम्" इत्युच्यते। आमोक्षाज्जीवस्य नामरूपपरिष्वङ्गादेव हि स्वव्यतिरिक्तविषयज्ञानोदयः। सुषुप्तिकाले हि नामरूपे विहाय सता सम्परिष्वक्तः पुनरपि जागरदशायां नामरूपे परिष्वज्य तत्तन्नामरूपो भवतीति श्रुत्यन्तरे स्पष्टमभिधीयते, "यदा सुप्तः स्वप्नं न कथञ्चन पश्यति, अथास्मिन् प्राण एवैकधा भवति", "एतस्मादात्मनः प्राणा यथायतनं विप्रतिष्ठन्ते", तथा "त इह व्याघ्रो वा सिंहो वा वृको वा वराहो वा दंशो वा मशको वा यद्यद्भवन्ति तदाभवन्ति" इति।]

तथा सुषुप्तं जीवं 'प्राज्ञेनाऽऽत्मना सम्परिष्वक्तः' इति च वदति।

---

गतस्य स्वाप्ययवाक्यस्यानपेक्षितार्थान्तरपरत्वेऽन्वयवैघट्यं स्फुटम्। 'अथैतदपियन्त्यन्ततः', 'ब्रह्मैव सन् ब्रह्माप्येति', 'तदा सम्पद्यते ब्रह्म' इत्यादिप्रयोगप्राचुर्यात् अप्ययसम्पत्तिशब्दस्वारस्योपस्थापितस्य प्रलयस्य स्थानप्रतिपादकत्वात् स्वसच्छब्दयोरेकार्थपर्यवसायित्वं तु उचितम्। "जीवेनात्मना", 'तत्त्वमसि' इति जीवात्मशब्दयोः त्वंतच्छब्दयोरिव च स्वसच्छब्दयोरपि जीवरूपेण स्वेन रूपेण चावस्थितकारणवस्तुविषयतयैकार्थपरत्वं प्रकरणवशादप्युचितम्। जीवादर्थान्तरे सति तस्य लयानुपपत्तिशङ्कापरिहारार्थं स्वशब्दाभिधेयस्य तस्य सत्पर्यन्ततताप्रतिपादनस्यापेक्षितत्वाच्च तयोरेकार्थत्वं युक्तमिति॥ अस्तु लयस्थानोपस्थापकयोः स्वसच्छब्दयोरैकार्थ्यम्। तत्तु स्वशब्दस्य स्वीयपरत्वेन स्वसच्छब्दयोरुभयोरपि प्रधानपरत्वेऽप्युपपद्यत इत्यत्राह **प्रलयश्चेति**। कार्यतारूपविसदृशावस्थाप्रहाणेन कारणान्तर्भावो हि लयः। ततः किमित्यत्राह **नचेति**। **अचेतनम्**—अचित्त्वादित्यर्थः। स्थूलावस्थस्य जीवस्य सूक्ष्मावस्थे स्वकारणीभूते सतायोगिनि स्वात्मनि लयोपपत्तेः सच्छब्दस्य तत्परत्वं संभवतीति शङ्कां व्युदसितुमाह **तथा सुषुप्तमिति**। स्वज्यदेहेन्द्रियानपेक्षेक्षणादिगुणकपरमकारणविषयत्वात् तत्संवादिश्रुत्यन्तरानुगुण्याच्च नात्र सच्छब्दोऽतिसङ्कुचितज्ञानसूक्ष्मावस्थजीवमात्रविषय इत्यभिप्रायः॥

ननु नित्यस्य जीवस्य लयोऽनुपपन्नः। कार्यकारणयोरनन्यत्वात्, जीवविलक्षणस्य परस्य तत्कारणत्वायोगात् तस्मिन् जीवस्य लयश्चानुपपन्नः॥ नैवम्; सर्वदा जीवविशिष्टस्य परमात्मनोऽवस्थाविशेषरूपकार्यकारणभावोपपत्तेः। तथा हि—'स्वमपीतः' इत्यत्र स्वशब्दस्तावत् न जीवमात्रपरः; "सता सोम्य तदा संपन्नो भवति स्वमपीतो भवति" इति स्वशब्दस्य सच्छब्दसमानविषयत्वात्; सच्छब्दस्य चास्मिन् प्रकरणे परमात्मविषयत्वात्। नापि [2]निष्कृष्टब्रह्मपरः; नित्यनिर्विकारस्य

---

1 प्रक्षिप्तोऽत्र स्वमपीत इत्यादिः भवन्तीतीत्यन्तः कुण्डलितः, न भाष्यग्रन्थः; अपितु भाष्यकृदनुगृहीतसारग्रन्थः। टीकायामव्याख्यानात्, अत्रत्यस्योपरि सारस्थत्वेनोदाहरणात् पौनरुक्त्यादिप्रसंगाच्चेति संप्रदायः। प्राचीनतालकोशेऽभावाच्च।

2 स्वशब्दः स्वकीयवाचितया स्वसंबन्धिशुद्धब्रह्मपर इति च नेत्यर्थः।

तस्योपादानत्वायोगेन अप्ययस्थानत्वायोगात्। कार्यस्य हि प्रलय उपादान एव। अतो जीवरूपेणावस्थित-परमात्मपरत्वं वक्तव्यम्। तत्रापि न शुक्तौ रजतस्येव लयः; तस्येव जीवस्य स्वरूपनिवृत्तिप्रसङ्गात्। नापि महाकाशे घटाकाशस्येव लयः; देहाद्युपाधेरवस्थितत्वात्। नापि क्षितितले घटस्येव लयः; घटत्वस्येव जीवत्वस्य प्रहाणे जीवनित्यत्वश्रुतिविरोधात् उपाधेरवस्थितत्वेन जीवत्वप्रहाणायोगात्; आमोक्षावस्थायितयाऽभिमतस्य जीवभावस्य स्वापमात्रेण निवृत्तौ मोक्षोपायवैयर्थ्यप्रसङ्गात्; अकृताभ्या-गमादिप्रसङ्गात्। प्रत्यभिज्ञाविरोधात्; 'प्राज्ञेनात्मना संपरिष्वक्तो न बाह्यं किञ्चन वेद, नान्तरम्' इति तदानीमज्ञत्वसर्वज्ञत्वाभ्यां भेदव्यपदेशाच्च जीवत्वे स्थित एव स्वाप्ययस्य सर्वैरभ्युपगन्तव्यत्वात्। अतो भेदादेव स्वशब्दो जीवविशिष्टपरमात्मपरः। अत एव ह्युक्तं सारे,[1] "आत्मानमेव जीवोऽपीतो भवतीत्यर्थः। जीवस्वरूपो हि पर एव; नामरूपव्याकरणश्रुतेः" इति। तस्य संपत्तिर्नाम बहिर्मुखज्ञान-प्रसरविरहितजीवरूपेणावस्थानम्, निर्गमो नाम बहिर्मुखज्ञानप्रसरः॥ ननु कथं देहविशिष्टस्य सतो जीवस्य स्थिते देहे विशेष्यांशलयः॥ नैवम्; विशेष्यांशे रागद्वेषाद्यन्वयवत् तत्रैव प्रलयरूपा-वस्थान्वयोपपत्तेः॥ ननु तर्हि स्वापे ज्ञानेन देहधारणाभावात् स्वरूपेण धारणस्य महाप्रलयेऽपि [2]तुल्यत्वात् देहस्य [3]जीवं प्रति अपृथक्सिद्धिर्देहलक्षणं च न घटते॥ न; जीवस्य [4]देहापरित्यागात् देहस्य तत्सङ्कल्पेन धारणयोग्यत्वाच्चापृथक्सिद्धिदेहलक्षणोपपत्तेः।

अतो मनुष्यादिनामरूपाभिमान-राग-लोभाद्यनुगुणबहिर्मुखज्ञानप्रसरवज्जागरितावस्थजीवविशिष्टः परमात्मा, देवमनुष्यादिनामरूपरागद्वेषलोभमोहाद्यौपाधिकबाह्याभ्यन्तराकाराभिमानकालुष्यविरहितजीव-शरीरकः सन् आत्मन्यन्तर्भूत इति श्रुत्यर्थः। अप्ययस्य प्राप्तिरूपत्वात् सारे आत्मानमिति द्वितीयानिर्देशः[1]। अप्ययस्य स्थानसापेक्षत्वात् स्वस्मिन् प्रलीन इत्युक्तं भाष्ये। एकस्य परमात्मनः स्थानस्थानिभावव्यपदेशश्च अंशभेदाभिप्रायः। घटादेर्लयस्थानस्य घटानुपयुक्तस्यापि पृथिव्यंशस्य हि कारणजातीयत्वात् कारणत्वम्। ब्रह्मणि तु जीवविशेषविशिष्ट-तदितरांशभेदेन स्थानस्थानिभावः। धर्म्यैक्यात् कारणत्वम्। कारणावस्थान्वयिनि धर्मिण्यन्तर्भावः सर्वत्र समानः। औपाधिकाकाराभिमानानु-गुणज्ञानविकासवज्जीवविशिष्टता कार्यावस्था। अतदभिमानजीवविशिष्टता कारणावस्था। तत्र लयस्थानभूतस्य परमात्मनः कारणावस्थापेक्षया लीयमानांशस्य विसदृशावस्था हि नामरूपाद्यौपाधिका-काराभिमानानुगुणज्ञानप्रसरवज्जीवविशिष्टता। तस्मादौपाधिकाकारानभिमानजीवविशिष्टतारूपकारणाव-स्थाश्रये स्वात्मनि अवस्थानं स्वाप्यय इत्युपपन्नम्।

अत एव जीवस्य नित्यत्वाविरोधश्च। ज्ञानसङ्कोचविकासविशेषव्यतिरेकेण जीवत्वप्रहाणाभावात्। आमोक्षाज्जीवभावस्य स्थिरत्वं हि परैरप्यभ्युपेयम्। अतस्तदविरोधेन स्वाप्ययो वर्णनीयः। तदानीं

---

1 अनेन अस्य सारग्रन्थस्थस्यात्रासत्त्वावगमेन कुण्डलितो न भाष्यग्रन्थ इति स्पष्टम्।

2 तुल्यत्वादिति। स्वरूपेण प्रकृतिं प्रत्यपि धारकत्वप्रसंगादित्यर्थः।

3 देहस्यानेकावयवसमुदायरूपतया सर्वावयवापृथक्सिद्धेर्ज्ञानमादायैव वाच्यत्वादिति भावः।

4 विषयग्राहित्वरूपावस्थाराहित्येऽपि अन्यादृशरूपेण ज्ञानं सर्वावयवेषु सौभरिदेहेष्विव वर्ततेत्याशयेनाह देहापरित्यागादिति।

तस्मात् सच्छब्दवाच्यः परं ब्रह्म सर्वज्ञः परमेश्वरः पुरुषोत्तम एव। तदाह वृत्तिकारः, "सता सोम्य तदा संपन्नो भवतीति, संपत्त्यसंपत्तिभ्यामेतदध्यवसीयते। 'प्राज्ञेनाऽऽत्मना संपरिष्वक्तः' इति चाह" इति ॥ १० ॥

इतश्च न प्रधानम्—

## गतिसामान्यात् ॥ १-१-११ ॥

'प्राज्ञेनात्मना संपरिष्वक्तः' इति भेदप्रतिपादनाविरोधश्चैवं सति भवति। एवंविध एव प्रलयो महाप्रलयो(ये ?)ऽपीत्यभ्युपगन्तव्यम्; जीवबहुत्वानादित्वकर्मवासनाविशेषस्थित्युपगमेन वैषम्यनैर्घृण्यादेः परिहर्तव्यत्वात्। न च 'न विज्ञातुर्विज्ञातेर्विपरिलोपो विद्यते' इति ज्ञाननित्यत्वश्रुतिविरोधः, तस्य सङ्कोचमात्रवतः तुच्छत्वाभावात्। न च प्रसरोपलम्भयोरभावात् ज्ञानद्रव्यस्य तुच्छत्वं शङ्कनीयम्; न ह्यनुल्लिखितरत्नप्रभायाः प्रसरोपलम्भाभावान्नास्तित्वम्। "यथा न क्रियते ज्योत्स्ना मलप्रक्षालनान्मणेः। दोषप्रहाणान्न ज्ञानमात्मनः क्रियते तथा" इति हि स्मृतिः। आत्यन्तिकप्रलयेऽपि यथोक्तप्रकार उपपद्यते। तदानीं नामरूपाद्यौपाधिकाकाराभिमानरूपविसदृशदशाप्रहाणेन कारणावस्थे परमात्मन्यवस्थानात्। औपाधिकाकाराभिमानार्हत्वरूपकार्यावस्थाविरहितजीवविशिष्टत्वं हि परस्य कारणावस्थत्वम्; विकृतिविरहितजीवविशिष्टत्वमिति यावत्। तत् महाप्रलये मुक्तौ च समानम् ॥

ननु 'प्राज्ञेनात्मना संपरिष्वक्तो न बाह्यं किञ्चन वेद नान्तरम्' इति सुषुप्तौ प्राज्ञत्वाज्ञत्वरूपवैषम्यावगमात् मोक्षे चेश्वरत्वेशितव्यत्वादिवैषम्यस्थित्यभ्युपगमात् भवदभिमतप्रलयप्रकारोऽनुपपन्न इति ॥ नैवम्; कारणावस्थामपेक्ष्य विसदृशावस्थाया विवक्षितत्वात्, नामरूपाद्यौपाधिकाकाराभिमानविरहितजीवविशिष्टता कारणावस्था, तदपेक्षया विसदृशावस्था च तादृगभिमानवज्जीवविशिष्टता। तत्प्रहाणस्य चात्र विद्यमानत्वात् सुषुप्तौ लय उपपन्नः। मोक्षे चेशितव्यत्वाकारेण वैषम्यं नात्यन्तिकप्रलयविरोधि; ईशितव्यताया अवस्थारूपत्वाभावात्; कादाचित्कधर्मो ह्यवस्था। ईशितव्यत्वादि तु नित्यम्; "स ईशोऽ(शोऽ)स्य जगतो नित्यमेव नान्यो हेतुर्विद्यत ईशनाय", "यस्यात्मा शरीरम्, य आत्मानमन्तरो यमयति" इत्यादिश्रुतेः। अतो नेशितव्यत्वादिकमवस्थेति वैधर्म्यरूपस्यापि तस्याप्रहाणं न दोषः। अतो यथोक्त एव स्वाप्ययः ॥

सौत्रं हेतुं परमसाध्येन सङ्गमयति तस्मादिति। अप्ययस्थानस्य परमकारणत्वायाह परं ब्रह्मेति। जीवव्यावृत्त्यर्थं सर्वज्ञशब्दः। प्राज्ञेनात्मनेति हि श्रुतिः 'तदैक्षत' इत्येतत्संवादिनी। अप्ययेऽपि जीवनियन्तृत्वज्ञापनार्थमीश्वरोत्तीर्णतत्त्वव्युदासार्थं च परमेश्वरशब्दः। सुषुप्तपुरुषवैलक्षण्यपरो देवताविशेषपरश्च पुरुषोत्तमशब्दः। [1]व्याख्यानान्तरव्यावृत्त्यर्थमाह तदाहेति। सम्पत्त्यसम्पत्तिभ्यामिति। 'सति सम्पद्य न विदुः सति संपत्स्यामह इति। सत आगम्य न विदुः सत आगच्छामह इति' इत्युक्ताभ्यां संपत्तिनिर्गमाभ्यामित्यर्थः। यद्वा परमात्मनि संपत्त्या, अन्यत्र असंपत्त्या चेत्यर्थः। स्वाप्ययशब्देनासंपत्तिरप्यभिप्रेतेति वृत्तिकारस्य भावः। एतत्—परब्रह्मकारणत्वमित्यर्थः ॥ १० ॥

पूर्वसूत्रे 'प्राज्ञेनात्मना' इत्यादेः सुषुप्तिविषयस्य श्रुत्यन्तरस्य प्रकृतार्थोपपादकतया बुद्धिस्थत्वात् कारणस्य परमात्मत्वमपि कारणविषयैः श्रुत्यन्तरैरुपपाद्यते गतिसामान्यात् ॥ पूर्वं गौणश्चेन्नात्म-

---

1 व्याख्यानान्तरेति। एतदाशयो भाष्यार्थदर्पणे द्रष्टव्यः।

"आत्मा वा इदमेक एवाग्र आसीत्; नान्यत् किञ्चन मिषत्। स ईक्षत लोकान्नु सृजा इति। स इमाँल्लोकानसृजत", "तस्माद्वा एतस्मादात्मन आकाशः संभूतः। आकाशाद्वायुः। वायोरग्निः। अग्नेरापः। अद्भ्यः पृथिवी", "अस्य महतो भूतस्य निश्वसितमेतत् यत् ऋग्वेदः" इत्यादिसृष्टिवाक्यानां या गतिः—प्रवृत्तिः, तत्सामान्यात्—तत्समानार्थत्वादस्य। तेषु च सर्वेषु सर्वेश्वरः कारणमवगम्यते। तस्मादत्रापि सर्वेश्वर एव कारणमिति निश्चीयते॥ ११॥

इतश्च न प्रधानम्—

श्रुतत्वाच्च ॥ १-१-१२ ॥

श्रुतमेव ह्यस्यामुपनिषदि अस्य सच्छब्दवाच्यस्य आत्मत्वेन नामरूपयोर्व्याकर्तृत्वं सर्वज्ञत्वं सर्वशक्तित्वं सर्वाधारत्वमपहतपाप्मत्वादिकं सत्यकामत्वं सत्यसङ्कल्पत्वञ्च—"अनेन जीवेनात्मनाऽनुप्रविश्य नामरूपे व्याकरवाणि", "सन्मूलाः सोम्येमाः सर्वाः प्रजाः सदायतनाः सत्प्रतिष्ठाः", "ऐतदात्म्यमिदं सर्वं तत् सत्यं स आत्मा", "यच्चास्येहास्ति यच्च नास्ति सर्वं तदस्मिन् समाहितम्। अस्मिन् कामाः समाहिताः। एष आत्माऽपहतपाप्मा विजरो विमृत्युर्विशोको विजिघत्सोऽपिपासः सत्यकामः सत्यसङ्कल्पः" इति। तथा च श्रुत्यन्तराणि, "न तस्य कश्चित् पतिरस्ति लोके न चेशिता नैव च तस्य लिङ्गम्। स कारणं कारणाधिपाधिपो न चास्य कश्चिज्जनिता न चाधिपः", "सर्वाणि रूपाणि विचित्य धीरो नामानि कृत्वाऽभिवदन् यदास्ते", "अन्तः प्रविष्टः शास्ता जनानां सर्वात्मा", "विश्वात्मानं परायणम्", "पतिं विश्वस्यात्मेश्वरम्", "यच्च किञ्चिज्जगत्यस्मिन् दृश्यते श्रूयतेऽपि वा। अन्तर्बहिश्च तत् सर्वं व्याप्य नारायणः स्थितः", "एष सर्वभूतान्तरात्माऽपहतपाप्मा दिव्यो देव एको नारायणः" इत्यादीनि।

---

शब्दादित्युक्तत्वादात्मशब्दवतीः श्रुतीरुदाहरति आत्मा वा इत्यादिना। तस्य ह वा एतस्येत्यत्रापि आत्मशब्दः श्रूयते, "आत्मा वा अरे द्रष्टव्यः", "आत्मनि खल्वरे दृष्टे", "योऽन्यत्राऽऽत्मनः सर्वं वेद" इति च। गतिशब्दं व्याचष्टे प्रवृत्तिरिति। बोधनव्यापारपरः प्रवृत्तिशब्दः, "भिन्नप्रवृत्तिनिमित्तानाम्" इत्यत्र प्रवृत्तिशब्दवत्। समानत्वमर्थद्वारकमित्याह तत्समानेति। ततः किमित्यत्राह तेषु चेति। ततोऽपि किमित्यत्राह तस्मादिति॥ ११॥

न केवलमुपनिषदन्तरेषु, अत्रैव सर्वेश्वरकारणत्वं स्फुटमित्याह—श्रुतत्वाच्च॥ आत्मत्वेन नामरूपव्याकर्तृत्वं दर्शयति अनेन जीवेनेति। सर्वज्ञत्वसर्वशक्तित्वे, "तदैक्षत बहु स्याम्" इत्यादिवाक्येन पूर्वमेव दर्शिते; सन्मूला इति सूचिते च। आधारत्वं दर्शयति सदायतना इति, यच्चास्येति च। धारकत्वं चात्मत्वेनेति दर्शयति ऐतदात्म्यमिति। न ह्यत्र कारणतया कार्याधारत्वमात्रं विवक्षितमिति भावः। यच्चेत्यादिकं सत्यकामत्वप्रतिपादनोपयुक्तञ्च। अपहतपाप्मत्वादिगुणान् दर्शयति एष आत्मेति। उक्तगुणवैशद्यार्थमनुक्तगुणदर्शनार्थं तद्गत ईश्वरत्वदेवताविशेषत्वस्फुटीकरणार्थं च पूर्वसूत्राभिप्रेतानि अनुदाहृतानि श्रुत्यन्तराण्युदाहरति तथा चेति; [1]न त्वेतत्सूत्रविषयवाक्यत्वेन; अस्य सूत्रस्य छान्दोग्योपनिषन्मात्रविषयत्वं दीपसारयोरपि ह्युक्तम्, "श्रुतमेव ह्यस्यामेवोपनिषदि" इति। नात्र क्रमविवक्षा। लिङ्गम्—शरीरम्। नाशब्द-

---

1 भाष्यार्थदर्पणो द्रष्टव्यः।

तस्माज्जगत्कारणवादिवाक्यं न प्रधानादिप्रतिपादनयोग्यम् । अतः सर्वज्ञः सर्वशक्तिः सर्वेश्वरेश्वरो निरस्तनिखिलदोषगन्धोऽनवधिकातिशयासङ्ख्येयकल्याणगुणगणौघ[1]महार्णवः पुरुषोत्तमो नारायण एव निखिलजगदेककारणं जिज्ञास्यं ब्रह्मेति स्थितम् ॥

अत एव निर्विशेषचिन्मात्रब्रह्मवादोऽपि सूत्रकारेण आभिः श्रुतिभिर्निरस्तो वेदितव्यः ; पारमार्थिकमुख्येक्षणादिगुणयोगि जिज्ञास्यं ब्रह्मेति स्थापनात् । निर्विशेषवादे हि साक्षित्वमप्यपारमार्थिकम् । वेदान्तवेद्यं ब्रह्म जिज्ञास्यतया प्रतिज्ञातम् ; तच्च चेतनमिति 'ईक्षतेर्नाशब्दम्' इत्यादिभिः सूत्रैः प्रतिपाद्यते । चेतनत्वं नाम चैतन्यगुणयोगः । अत ईक्षणगुणविरहिणः

---

मित्युपक्रमसूत्रानुरोधेन प्रधानस्याप्रतिपाद्यत्वं निगमयति **तस्मादिति** तेन फलितं ब्रह्मणः प्रतिपाद्यत्वं निगमयति **अत** इति । **सर्वज्ञत्वादयः** सर्गादिकारणत्वोपयोगिगुणाः । शोधकवाक्योक्तगुणाः **निरस्तनिखिले**त्यादिनोक्ताः । **अनवधिके**त्यादिना पुरुषार्थत्वञ्च दर्शितम् । [2]**ओघ**शब्दः, अस्ति चेत्, गुणानामन्यत्रापर्यवसायित्वं दर्शयति । **महार्णव**शब्दो गुणेभ्योऽपि तदाश्रयस्य महत्त्वं दर्शयति । **पुरुषोत्तमनारायण**शब्दौ पुरुषसूक्तनारायणानुवाकसिद्धविशेषपर्यवसायित्वं कारणशोधकवाक्यानां दर्शयन्तौ चिदचिद्विलक्षणत्वं तच्छरीरकत्वं च दर्शयतः । **निखिलजगदेककारण**मिति । **निखिल**शब्देन गगनादिकमपि कबलीकृतम् । **एक**शब्देन निमित्तोपादानत्वे अभिप्रेते ॥

एषां सूत्राणां **ब्रह्माज्ञान**वादिनोऽननुगुणत्वं पूर्वमुक्तं विस्तरेणाऽऽह **अत एवे**ति । **सूत्रकारेणे**ति । न्यायनिबन्धनकृतेत्यभिप्रायः । **आभिरिति** अर्थप्रत्यायकत्वं विवक्षितम् ; न्यायानुगृहीताभिर्विशदार्थाभिः **श्रुतिभिरिति** भावः । किञ्च प्रामाणिकस्याप्रामाणिकत्वाभिमानादपसिद्धान्तता, सिद्धान्तस्यापि भ्रान्तिमूलत्वादप्रामाणिकता च लोके दृष्टेति तदुभयव्यवच्छेदार्थः **सूत्रकार**[1]**श्रुत्योर्निर्देशः** । **निरस्तो वेदितव्य** इति । निरासः फलित इत्यर्थः । **अत एवे**त्युक्तं विवृणोति **पारमर्थिके**ति । ईक्षणस्यापारमार्थिकत्वे साङ्ख्याभिमतं प्रधानमेव ब्रह्म स्यात् ; शुक्तित्वापारमार्थ्ये हि रजतमेव परमार्थः स्यादिति साङ्ख्यनिरासोऽनुपपन्नः स्यादिति **पारमार्थिक**शब्दाभिप्रायः । सच्छब्दोक्तस्वरूपस्य संशयसहत्वात् तदतिरिक्तेन व्यावर्तकेन भाव्यमिति **गुण**शब्दस्य भावः । अतः सदादिशब्दानां साङ्ख्याभिमतप्रधानपरत्वव्यवच्छेदसिद्ध्यर्थमीक्षणादिगुणतत्पारमार्थिकत्वविवक्षावद्भिः सूत्रैर्निर्विशेषनिरासः फलित इत्यर्थः । 'तदैक्षत' इत्यादिवाक्यानि साक्षित्वमात्रपराणि, न तु गुणविशेषपराणि । साक्षित्वमात्रेणापि सूत्राभिमता प्रधानव्यावृत्तिः सिध्यतीत्यत्राह **निर्विशेषे**ति । सच्छब्दोपस्थापित-विमतिपदस्वरूपातिरेकेण साक्षित्वमप्यपारमार्थिकं त्वन्मत इत्यर्थः । ज्ञातृत्वाभावे साक्षित्वमपि न सिध्यतीति प्रागेवोक्तमिति **अपि**शब्दाभिप्रायः । अपारमार्थिकत्वे किं स्यादित्यत्राह **वेदान्ते**ति । न ह्यारोपिताकारः तत्त्वावेदकप्रमाणविषयः ; न चार्वाचीनं ब्रह्म जिज्ञास्यतया प्रतिज्ञातमिति भावः । ततः किमित्यत्राह **तच्चे**ति । ततोऽपि किम् ? न ह्यस्माभिरचेतनमुच्यत इत्यत्राह **चेतनत्वं नाम चैतन्यगुणयोग** इति । ईक्षितृत्वं हि न चिद्रूपतामात्रमित्यभिप्रायः । निर्विशेषनिरासस्य फलितत्वं निगमयति **अत** इति । न

---

1 ओघः प्रवाहः । नदीप्रवाहो ह्यर्णव एव पर्यवस्यति । यद्वा ओघरूपो महार्णव इति टीकाशयः स्यात् । 2 न हि सूत्रकृतो विपरीताभिमानः, न च श्रुत्युक्तस्य भ्रान्तिमूलत्वमिति भावः ।

प्रधानतुल्यत्वमेव। किञ्च निर्विशेषप्रकाशमात्रब्रह्मवादे तस्य प्रकाशत्वमपि दुरुपपादम्। प्रकाशो हि नाम स्वस्य परस्य च व्यवहारयोग्यतामापादयन् वस्तुविशेषः। निर्विशेषस्य वस्तुनस्तदुभयरूपत्वाभावात् घटादिवदचित्त्वमेव॥ तदुभयरूपत्वाभावेऽपि तत्क्षमत्वमस्तीति चेत्—तन्न। तत्क्षमत्वं हि तत्सामर्थ्यमेव। सामर्थ्यगुणयोगे हि निर्विशेषवादः परित्यक्तः स्यात्॥ अथ श्रुतिप्रामाण्यादयमेको विशेषोऽभ्युपगम्यत इति चेत्—हन्त तर्हि तत एव सर्वज्ञता, सर्वशक्तित्वम्, सर्वेश्वरेश्वरत्वम्, सर्वकल्याणगुणाकरत्वम्, सकलहेयप्रत्यनीकतेत्यादयः सर्वेऽभ्युपगन्तव्याः। शक्तिमत्त्वं च कार्यविशेषानुगुणत्वम्। तच्च कार्यविशेषैकनिरूपणीयम्। कार्यविशेषस्य निष्प्रमाणकत्वे तदेकनिरूपणीयं शक्तिमत्त्वमपि निष्प्रमाणकं स्यात्। किञ्च निर्विशेषवस्तुवादिनो वस्तुत्वमपि निष्प्रमाणम्। प्रत्यक्षानुमानागमस्वानुभवाः सविशेषगोचरा इति पूर्वमेवोक्तम्।

तस्मात् विचित्रचेतनाचेतनात्मकजगद्रूपेण बहु स्यामितीक्षणक्षमः पुरुषोत्तम एव जिज्ञास्य इति सिद्धम्॥१२॥ इति ईक्षत्यधिकरणम् (५)

—०—०—०—

अत्र चिद्रूपतामात्रेण प्रधानव्यावृत्तिः सूत्रिता; अपि त्वीक्षणगुणयोगेन। तदनभ्युपगच्छतो व्यावर्तकाभावे व्यावृत्तिरेव न स्यादित्यर्थः। **पारमार्थिके**त्यादिना एतदधिकरणविरोध उक्तः। **वेदान्ते**त्यादिना पूर्वाधिकरणैर्विरोध उक्तः; यद्वा—स्वरूपमेव साक्षित्वम्, न धर्मः; अतो नापारमार्थिकमित्यत्राह **वेदान्ते**ति। स्वरूपमेव चेत् तत्, पूर्वसूत्रैः सिद्धमिति प्रतिपाद्याधिक्याभावात् **ईक्षते**रित्यादिसूत्रवैयर्थ्यमित्यभिप्रायः॥ स्वरूपविशेषोऽप्रतिपन्न इति चेत्—किं स्वरूपमेव विशेषः, उत स्वरूपस्य विशेषः। प्रथमे, प्रागुक्तदोषः। द्वितीये, सविशेषत्वम्॥ पूर्वसूत्रेषु ब्रह्म कारणात्मना सिद्धम्, न तु चेतनरूपेण; अतः ईक्षतेरित्यादिसूत्राणामारम्भणीयत्वमिति शङ्कायाम्, चेतनरूपेण प्रतिपाद्यत्वमभ्युपगच्छन्नाह **तच्चे**ति। चेतनतया प्रधानव्यावृत्तिः चैतन्यगुणविरहे न सिध्यतीति वक्तुं चेतनत्वं शोधयति **चेतनत्वं नामे**ति। **गुणशब्दो** धर्मपरः। ततः किमित्यत्राह **अत** इति। व्यावर्तकाभावात् व्यावृत्त्यसिद्धिरित्यर्थः। चेतनशब्दस्य स्वरूपमात्रपरत्वे अधिकरणारम्भवैयर्थ्यमर्थसिद्धम्।

न प्रधानतुल्यत्वम्, प्रकाशत्वाभ्युपगमात्; यथा आत्मधर्मभूतज्ञानस्य ज्ञानान्तरायोगेऽप्यचिद्व्यावृत्तिस्त्वन्मते, तद्वदित्यत्राह **किञ्चे**ति। कथं दुरुपपादत्वमित्यत्राह **प्रकाशो ही**ति। **व्यवहारयोग्यता**—व्यवहारप्रतिसंबन्धिता। **तदुभयरूपत्वाभावात्**—स्वव्यवहारहेतुत्व-परव्यवहारहेतुत्वाभावादित्यर्थः। अथ तदुभयक्षमत्वं शङ्कते **तदुभये**ति। तत्क्षमत्वमभ्युपगम्य दूषणमाह **तन्ने**ति। परस्यागतित्वं दर्शयितुमाह **अथे**ति। परिहरति **हन्त तर्ही**ति। **तत्क्षमत्वमेव** नास्तीत्याह **शक्तिमत्त्वं चे**ति। **कार्यविशेषस्य निष्प्रमाणकत्वे**—स्वपरव्यवहारयोग्यतापादनाभावे। निरूपकाभावे निरूप्याभाव इत्यर्थः। वस्तुत्वे संभवत्यपि प्रधानतुल्यत्वमुक्तम्; अथ वस्तुत्वमेव न सिध्यतीत्याह **किञ्चे**ति। **वस्तुत्वम्** तुच्छव्यावृत्तत्वम्। कुत इत्यत्राह **प्रत्यक्षे**ति। प्रत्यक्षान्तर्भूतस्यापि स्वानुभवस्य पृथक्प्रमाणत्वं **परमताभ्युपगमेनोक्तम्**। **सविशेषगोचराः**—वस्तुतः सविशेषभूतार्थगोचरा इत्यर्थः। **वस्तुत्वं** चिदचित्साधारणम्। तच्च तुच्छव्यावृत्तत्वम्। तन्न सिध्यतीत्यर्थः। परपक्षदूषणानन्तरं स्वपक्षं निगमयति **तस्मा**दिति॥

[1]परैस्त्वेवं सूत्रयोजना कृता—प्रधानं **न** प्रतिपाद्यम्, **अशब्दं** हि तत्; शब्देन प्रतिपाद-

1 परैरिति न मृषावादिमात्रग्रहणम्; भास्करीयेऽप्येवमेव दर्शनात्। अधिकांशदूषणं विशिष्य यादवप्रकाशीये उपरि।

यितुमशक्यं हि तत्। अशक्यत्वञ्च ईक्षतिश्रवणादिति। नैषोचिता; प्रतिज्ञावाक्ये धर्म्युपस्थापकशब्दस्याध्याहार्यत्वात्; [1]अशब्दं हि तदित्युक्तेऽपि हेत्वन्तरसाकाङ्क्षत्वाच्च। "नानुमानमतच्छब्दात्," "आनुमानिकमप्येकेषाम्" इत्यादिसूत्रेषु आनुमानिकादिशब्दवत् अशब्दशब्दस्याप्यवयवार्थमुखेन धर्म्युपस्थापनक्षमतया अध्याहारनिरपेक्षत्वात् अवयवशक्त्यैवानुमानाकारावगमरूपपूर्वपक्षबीजस्य सूत्रेणैव द्योतमानत्वसिद्धेश्च भाष्यकाराभिमता योजना साधीयसी। गौणश्चेन्नात्मशब्दात् इत्यत्रात्मशब्दस्य स्वरूपपरत्वमाश्रित्य जीवं निर्दिश्य सच्छब्दवाच्यस्य स्वरूपत्वेन व्यपदेशादगौणमीक्षणमित्यप्ययुक्तम्; तस्यामोघेक्षणत्वायोगात्। सूत्रास्वारस्याच्च। न हि, गौणश्चेन्न जीवशब्दादित्युक्तम्। स्वरूपपर[2] आत्मशब्दः सापेक्षः, जीववाचिपदसमभिव्याहारेण विना तस्याचिद्व्यावर्तनासामर्थ्यात्। चेतनपरस्त्वात्मशब्दः 'ऐतदात्म्यमिदं सर्वम्' इति चिदचिदात्मकसमस्तप्रपञ्चं प्रति आत्मत्वं दर्शयन् अचिद्व्यावर्तनेऽतीव निराकाङ्क्षः। अतः साकाङ्क्षहेतुनिर्देशादपि निराकाङ्क्षहेतुनिर्देशो वरमिति तस्यापि सूत्रस्य यथोक्त एवार्थः। चिदचिदात्मकसमस्तजगदन्तरात्मवाचिन आत्मशब्दस्य 'ममात्मा भद्रसेनः' इतिवत् मुख्यार्थानुपपत्त्यभावेन गौणत्वशङ्कानुदयात्, आत्मशब्दो न गौण इति प्रतिज्ञावाक्यान्तरनिरपेक्षत्वाच्च तृतीयं सूत्रमपि परमसाध्यहेतुवाचीति युक्तम्। सर्ववेदान्तानामैककण्ठ्यं दर्शयता गतिसामान्यसूत्रेणैव श्वेताश्वतरवाक्यस्यापि क्रोडीकृतत्वात् श्वेताश्वतरवाक्यस्य श्रुतत्वात् इति सूत्रविषयत्वाश्रयणमयुक्तम्॥

यत्तूक्तं **यादवप्रकाशीयैः**—सता संपन्न इति सत्प्राप्तिमात्रमुक्तम्, न त्वैक्यम्; सच्छब्दस्य प्रधानपरत्वेऽपि, सति संपत्तिर्घटते; स्वाप्ययश्च सर्वेषां जीवानां पृथक् पृथक् स्वस्मिन्नप्ययो भवत्विति शङ्कापरिहाराय सुषुप्तौ सर्वजीवानां गन्तव्यस्य वस्तुन एकत्वम्, तत्र सति तेषामैक्यापत्तिश्च गतिसामान्यसूत्रेणोच्यते। विषयश्च, "यथा सोम्य मधु मधुकृतो निस्तिष्ठन्ति; नानात्ययानां वृक्षाणां रसान् समवहारमेकतां रसं गमयन्ति। ते यथा तत्र न विवेकं लभन्ते, अमुष्याहं वृक्षस्य रसोऽस्मि, अमुष्याहं वृक्षस्य रसोऽस्मीति—एवमेव खलु सोम्येमाः सर्वाः प्रजाः सति संपद्य न विदुः" इति वाक्यमिति। तदप्ययुक्तम्। तथा हि—दृष्टान्तानुगृहीतमेकतामवगमयत् 'सति संपद्य' इत्यादि वाक्यं किं कारणत्वमुपजीव्य सतः प्रधानत्वव्युदासकम्, उत कारणत्वमनुपजीव्य। प्रथमे, गतिसामान्यसूत्रवैयर्थ्यं स्यात्; स्वाप्ययस्य कारणत्वापत्तिरूपतया स्वाप्ययसूत्रेणैव प्रधानत्वव्युदासिद्धेः। दृष्टान्तवैघट्यञ्च; बहूनां रसानामेकस्मिन् कारणे लयस्य निदर्शितत्वाभावात्। रसवतामवयवानां मधुत्वरूपेण समानरसत्वापत्तिरेव हि तत्र दृश्यते। द्वितीये च, जीवानां कीदृशमेकत्वं सतः

1 नन्दसन्मते अशब्दशब्दस्य पक्षपरत्वाय, शब्द एव प्रमाणं न भवतीति एवकारघटिततया व्याख्यानं कार्यम्; अन्यथा अजामेकामित्यादिशब्दगम्यतया विरोधात्। तन्मते प्रकृतसद्विद्यागम्यत्वाभावमात्रकथनाच्च दोष इति चेन्न—एवकारघटितव्याख्याने भाष्यतात्पर्याभावस्यान्यत्रोक्तत्वात्। प्रकृतेर्घटादिकार्यात्मना प्रत्यक्षत्वात् आकारान्तरेणानुमानिकत्वाच्च कतिपयविशेषांशे शब्दगम्यत्वेऽपि धर्म्यंशे अज्ञातज्ञाप्यस्वरूपशब्दगम्यत्वाभावात् अशब्दत्वात्। धर्म्युपस्थापकत्वाभावे 'न प्रतिपाद्यम्' इति साध्यांशस्य अशब्दमित्येतदर्थस्य हेतोश्चाविशिष्टत्वमिति परपक्षे दोषात्; पौनरुक्त्याच्च। 2 जीवेनात्मनेत्यत्रात्मशब्दः अस्मत्पक्षेऽपि स्वरूपपर एव। जीवशब्दस्य जीवविशिष्टपरत्वमित्येव विशेषः।

## आनन्दमयाधिकरणम् १-१-६

एवं जिज्ञासितस्य ब्रह्मणश्चेतनभोग्यभूतजडरूपसत्त्वरजस्तमोमयप्रधानात् व्यावृत्तिरुक्ता; इदानीं कर्मवश्यात् त्रिगुणात्मकप्रकृतिसंसर्गनिमित्तनानाविधानन्तदुःखसागरनिमज्जनेनाशुद्धात् शुद्धाच्च प्रत्यगात्मनोऽन्यत् निखिलहेयप्रत्यनीकनिरतिशयानन्दं ब्रह्मेति प्रतिपाद्यते—

### आनन्दमयोऽभ्यासात् ॥ १-१-१३

तैत्तिरीया अधीयते—"स वा एष पुरुषोऽन्नरसमयः" इति प्रकृत्य, "तस्माद्वा एतस्माद्विज्ञानमयात्। अन्योऽन्तर आत्माऽऽनन्दमयः" इति। तत्र संदेहः, किमयमानन्दमयो बन्धमोक्षभागिनः प्रत्यगात्मनो जीवशब्दाभिलपनीयादन्यः परमात्मा; उत स एवेति ॥ किं युक्तम्? प्रत्यगात्मेति।

---

प्रधानत्वव्युदासकम्? न तावत् जीवत्वप्रहाणेन सैकत्वम्; जीवत्वप्रहाणस्य भवताऽनभ्युपगमात्; जीवनित्यत्वश्रुतिविरोधात; 'प्राज्ञेनात्मना संपरिष्वक्तो न बाह्यं किञ्चन वेद नान्तरम्' इति अज्ञस्य जीवस्य तदा प्राज्ञाधिष्ठितत्वश्रवणविरोधात; पुनरपि व्यवस्थितकर्मफलभोगाद्यनुपपत्तेश्च। न च सद्रूपेणैकत्वम्, तत् जाग्रद्दशायामप्यस्तीति तदानीमिव जीवानां स्वापे स्वस्वरूपावस्थान-प्रधानसंसर्गयोरविरोधादभिमतासिद्धेः। न च देवत्वमनुष्यत्वरागद्वेषादिबाह्याभ्यन्तरविकल्पाभिमानविरहेणैकत्वम्; तस्यापि स्वस्वरूपावस्थानप्रधानसंसर्गयोरविरोधित्वेन संपत्त्यप्ययाधिकरणस्य स्वस्वरूपप्रधानव्यतिरेकासिद्धेः। अतः सूत्रवैयर्थ्य-शङ्कापरिहारासिद्ध्योरन्यतरावश्यम्भावात् परोक्तार्थपरत्वं सूत्रस्यायुक्तम्। यच्च—**श्रुतत्वादिति** सूत्रस्य प्रतिज्ञावाक्यप्रभृति **स एषोऽणिमा, ऐतदात्म्यमि**त्यादिवाक्यजातं विषयतयोपात्तम्—तदप्ययुक्तम्; **प्रतिज्ञाविरोधात्, नात्मशब्दात्** इत्यादिभिः सौत्रपदैरस्य पुनरुक्तिप्रसङ्गात्। अतः सूत्राणां यथोक्त एवार्थः ॥ इति ईक्षत्यधिकरणम् ॥

अथोत्तराधिकरणस्य पूर्वाधिकरणेन सङ्गतिमाह **एवं जिज्ञासितस्येति**। जगत्कारणस्य निरूपणीयत्वे चतुस्सूत्र्या सिद्धे, प्रत्यक्षादिसिद्धतया प्रसिद्ध्यतिशयात् अचेतने प्रथममवतरन्ती बुद्धिः ईक्षणादिभिस्ततो व्यावर्त्य चेतनवस्त्वभिमुखीकृता। इदानीमचेतनापेक्षया प्रसिद्धिमान्द्येऽपि परमात्मापेक्षया प्रसिद्धतरे अहम्प्रत्ययसिद्धे [1]प्रत्यगात्मन्यवतरन्ती बुद्धिर्व्यावर्त्यत इत्यर्थः।

**आनन्दमयोऽभ्यासात्** ॥ कारणविषयस्य 'तस्माद्वा एतस्मादात्मनः'' इति वाक्यस्योत्तरत्र चोद्यपरिहारमुखेन उदाहरिष्यमाणत्वात प्रथमम् आत्मशब्दव्याख्यानोपक्रमभूतं 'स वा एष पुरुषः' इत्यादिकमुपात्तम्। अत एव हि **प्रबन्धान्तरे** 'तस्माद्वा' इत्यादिकमुदाहृतम्। **तत्रेति**। शारीरत्वानन्दप्राचुर्याभ्यां संशय इत्यभिप्रायः। सद्विद्यायां **जीवेनात्मने**ति समानाधिकरण्यमत्र पूर्वपक्षोत्थानबीजमिति सूचनार्थं **जीवशब्दाभिलपनीयादिति** पदम्। किं कारणवादिनः सर्वे वेदान्ताः परिशुद्धप्रत्यगात्मस्वरूपपराः, उत तद्विलक्षणपराः इति प्रथमविचारः; [2]तदर्थमानन्दमयः किं परिशुद्धावस्थः प्रत्यगात्मा;

---

1 प्राय उपनिषद्वचसाम् आन्यपर्यकल्पनया यथाश्रुतापलापेदम्परत्वात् पूर्वपक्षिणाम्, ईक्षत्यात्मशब्दमुख्यत्वायाचेतननिरासे कृते, गतिसामान्यादिहेतुना सर्वेश्वरप्रदर्शनेऽपि, 'अतो न प्रधानम्' इति निगमननिक्षिप्तदृष्टिः पूर्वपक्षी अचेतनव्यावर्तकाकारमात्र एव सिद्धान्तिहृदयमिति स्वयमुत्प्रेक्ष्य जीवग्रहणेनेश्वरापलापे प्रवर्तत इति भावः। एवमयोगव्यवच्छेदपरत्वमस्य पादस्य।

2 अस्य जीवपरत्वे गतिसामान्यादैकरस्याय सर्वं जीवपरमिति ग्राह्यम्।

कुतः। 'तस्यैष एव शारीर आत्मा' इति आनन्दमयस्य शारीरत्वश्रवणात्। शारीरो हि शरीरसंबन्धी जीवात्मा ॥

ननु च जगत्कारणतया प्रतिपादितस्य ब्रह्मणः सुखप्रतिपत्त्यर्थमन्नमयादीन् अनुक्रम्य तदेव जगत्कारणमानन्दमय इत्युपदिशति; जगत्कारणञ्च 'तदैक्षत' इतीक्षणश्रवणात् सर्वज्ञः सर्वेश्वर इत्युक्तम्॥ सत्यमुक्तम्; स तु जीवान्नातिरिच्यते। "अनेन जीवेनात्मनाऽनुप्रविश्य", "तत्त्वमसि श्वेतकेतो" इति कारणतया निर्दिष्टस्य जीवसामानाधिकरण्यनिर्देशात्। सामानाधिकरण्यं ह्येकत्वप्रतिपादनपरम्; यथा 'सोऽयं देवदत्तः' इत्यादौ। ईक्षापूर्विका च सृष्टिः चेतनस्य जीवस्योपपद्यत एव।

---

उत परमात्मेति; तदर्थमिह प्रतिपन्नः शरीरसंबन्धः किं जीवात्मासाधारणः, उत न; तदर्थं मयट् किं स्वार्थिकत्वविकारार्थकत्वयोरन्यतरवान्; उत प्राचुर्यार्थः; तदर्थं किं विकाराद्यर्थानुगुणहेतवोऽनुरोद्धव्याः, उत प्राचुर्याद्यर्थानुगुणहेतवः; विज्ञानमयशब्दः किं विज्ञानमात्रपरः, उत जीवपरः; तदर्थं तत्र मयट् किं स्वार्थिकः, उत न; तदर्थं 'विज्ञानं यज्ञं तनुते' इति विज्ञानशब्दः किं ज्ञानमात्रे वर्तते, उत ज्ञानगुणके प्रत्यगात्मनि इति। पूर्वे कल्पाः पूर्वपक्षाः, इतरे तु राद्धान्ताः। यदा विकारार्थत्वाद्यनुगुणहेतोरनुरोद्धव्यत्वेन मयट् स्वार्थिको विकारार्थो वा भवति, तदा निरतिशयप्राचुर्याप्रतिपत्तेः आनन्दमात्रस्य जीवे संभवात् स्वतो जीवानुगुणतया प्रतिपन्नस्य शरीरसंबन्धस्य जीवासाधारणत्वे विरोधाभावात् आनन्दमयो जीवः; यदा च श्लोकस्थविज्ञानशब्दो विज्ञानमात्रपरः, तदा विज्ञानमयशब्दस्यापि स्वार्थिकमयडन्तत्वेन विज्ञानमात्रपरत्वात् विज्ञानशब्दस्य बुद्धिपरत्वसंभवात् तदन्तर आनन्दमयः प्रत्यगात्मेति पूर्वपक्षे फलफलिभावः। राद्धान्ते तु—यदा प्राचुर्यार्थानुगुणहेतोरनुरोद्धव्यत्वेनानन्दमय इत्यत्र मयट् प्राचुर्यार्थः, तदानीमानन्दप्राचुर्यस्य निरवधिकतयाऽवगतस्य श्रुतिविरुद्धाश्रुतोपाधिकल्पनायोगेन स्वतो निरतिशयस्य जीवात्मन्यसंभवात् तद्विरोधेन शरीरसंबन्धस्य जीवासाधारणकर्ममूलत्वाभावाच्च नानन्दमयः प्रत्यगात्मा; यदा च श्लोकस्थविज्ञानशब्दो विज्ञानगुणके प्रत्यगात्मनि वर्तते, तदा विज्ञानमयशब्दस्यापि प्राचुर्यार्थमयडन्ततया प्रत्यगात्मवाचित्वाच्च तदन्तर आनन्दमयः परमात्मेति फलफलिभावः ॥

पूर्वपक्षोत्थानमाक्षिपति **ननु चेति**। **सुखप्रतिपत्त्यर्थमन्नमयादीननुक्रम्येति**। अनेन जगत्कारणप्रकरणस्याविच्छित्तिर्द्योतिता। **तदेव जगत्कारणमिति**। वक्ष्यमाणपर्यालोचनया विभूतिप्रकर्षाधीनातिशयितानन्दस्याश्रयत्वोपपादकं सकलजगत्कारणत्वमिति भावः। ततः किमित्यत्राह **जगत्कारणञ्चेति**। ज्ञानशक्त्युपयोगज्ञापनाय जगत्कारणमिति पुनरुपादानम्। परिहरति **सत्यमिति**। चेतनत्वादावभ्युपगमः, जीवादतिरेके विवादः। सामानाधिकरण्यनिर्देशोऽस्तु; ततः किं जीवाद्वैलक्षण्यस्येत्यत्राह **सामानाधिकरण्यमिति**। ईक्षतिश्रवणाज्जीवविलक्षणत्वमुक्तमित्यत्राह **ईक्षेति**। **उपपद्यत एवेत्येवकारः** अस्वारस्यसूचकः। साक्षित्वमेव ईक्षितृत्वमिति भावः। **भेदव्यपदेशाच्च** इति भेदव्यपदेशं सिद्धान्तहेतुं वदता सूत्रकारेण ऐक्यव्यपदेशस्य पूर्वपक्षहेतुत्वं विवक्षितमित्यवगम्यते। एवमुत्थानोपपत्तेः सौत्रहेतुवशाच्च ऐक्यव्यपदेशः पूर्वपक्षहेतुतयोपन्यस्तः। एवं पूर्वाधिकरणेन जीवव्यतिरेकासिद्धेरधिकरणान्तरमारम्भणीयमिति भावः। ननु 'ब्रह्मविदाप्नोति परम्' इत्यत्र ब्रह्म प्राप्यं

अतः 'ब्रह्मविदाप्नोति परम्' इति जीवस्याचित्संसर्गवियुक्तं स्वरूपं प्राप्यतयोपदिश्यते। अचिद्वियुक्तस्वरूपस्य लक्षणमिदमुच्यते, "सत्यं ज्ञानमनन्तं ब्रह्म" इति। तद्रूपप्राप्तिरेव हि मोक्षः। "न ह वै सशरीरस्य सतः प्रियाप्रिययोरपहतिरस्ति। अशरीरं वा व सन्तं न प्रियाप्रिये स्पृशतः" इति। अतो जीवस्याविद्यावियुक्तं स्वरूपं प्राप्यतया प्रक्रान्तमानन्दमय इत्युपदिश्यते। तथा हि शाखाचन्द्रन्यायेन आत्मस्वरूपं दर्शयितुम् 'अन्नमयः पुरुषः' इति शरीरं प्रथमं निर्दिश्य, तदन्तरभूतं तस्य धारकं पञ्चवृत्तिप्राणम्, तस्याप्यन्तरभूतं मनः, तदन्तरभूतां च बुद्धिम्, 'प्राणमयः', 'मनोमयः', 'विज्ञानमयः' इति तत्र तत्र बुद्ध्यवतरणक्रमेण निर्दिश्य सर्वान्तरभूतं जीवात्मानम्, 'अन्योऽन्तर आत्माऽऽनन्दमयः' इत्युपदिश्य अन्तरात्मपरम्परां समापयति। अतो जीवात्मस्वरूपमेव 'ब्रह्मविदाप्नोति' इति प्रक्रान्तं ब्रह्म ; तदेवाऽऽनन्दमय इत्युपदिष्टमिति निश्चीयते ॥

---

श्रूयते। अनन्तरं लक्षणं कथ्यते। तत्र सत्यत्वमानन्त्यश्चान्तर्भूतम्। जीवस्य नित्यप्राप्तत्वात् प्राप्यत्वमनुपपन्नम्। ज्ञातत्वाल्लक्षणञ्च न वाच्यम्। सत्यत्वानन्तत्वरूपलक्षणविशेषश्च [1]नैकरूपज्ञानस्य परिच्छिन्नस्य नोपपद्यते। अतः परमात्मैव प्रतिपाद्यत इति शङ्कां परिहरन् पूर्वपक्षमाह **अतो ब्रह्मविदिति**। **अतः** शारीरत्वश्रवणात् सामानाधिकरण्यबलेनैवास्य प्रतिपन्नत्वाचाचिद्वियुक्तस्वरूपप्राप्यतापरत्वं कल्प्यमित्यर्थः। लक्षणकथनं तत्प्रतिपत्त्यर्थं तद्विशेषोक्तिश्च अचिद्वियुक्ते स्वरूपे संभवतीत्याह **अचिद्वियुक्तेति**। न केवलं शारीरत्वसामानाधिकरण्यबलादचिद्वियुक्तस्वरूपस्य प्राप्यत्वम्, किन्तु कण्ठोक्तं चेत्याह **तद्रूपेति**। **हिशब्दः** श्रुतिप्रसिद्धिद्योतकः। यद्वा स्वरूपस्यैवौपाधिकाकारनिवृत्तिमात्रपरमो**क्ष**शब्दस्वारस्यसूचकः। श्रुतिमेव दर्शयति **न ह वा** इति। **इतीति**। श्रवणादिति शेषः। प्राप्यत्वानुगुणपुरुषार्थतां दर्शयन् निगमयति **अत** इति। ननु नात्राचिद्वियुक्तजीवस्वरूपमुपदिश्यते ; 'स वा एष पुरुषोऽन्नरसमयः' इति शरीरसंबन्धश्रवणादपरिच्छिन्नानन्दत्वश्रवणाच्चेत्यत्राह **तथा हीति**। शरीरमुपलक्षणमात्रम्, न तु विशेषणमिति तद्वियोगेनापरिच्छिन्नानन्दत्वादिकमुपदिश्यत इत्यर्थः। **तदन्तरभूतां च बुद्धिमिति**। प्राणमयमनोमययोर्मयट्प्रत्ययस्य स्वार्थिकत्वात् **विज्ञानमय** इत्यत्रापि **मयट्** स्वार्थिकः। 'विज्ञानं यज्ञं तनुते' इति मयडन्तत्वं विना वक्ष्यमाणत्वात्, "विज्ञानसारथिर्यस्तु", "बुद्धिं तु सारथिं विद्धि" इति बुद्धिविज्ञानशब्दयोरेकार्थत्वेन प्रयोगाच्च [2]विज्ञायतेऽनेनेति व्युत्पत्त्या **विज्ञानं** बुद्धिरिति भावः। किमर्थमन्नमयादिनिर्देश इत्यत्राह **तत्रतत्र बुद्ध्यवतरणेति**। अपरिच्छिन्नानन्दत्वमपि परिशुद्धात्मस्वरूपस्य संभवतीत्यर्थसिद्धम्। शारीरत्वश्रवणात्, जीवसामानाधिकरण्यात्, विज्ञानमयशब्दस्यान्तःकरणपरत्वात्, प्राप्यत्वादेः परिशुद्धस्वरूपेऽप्युपपन्नत्वात्, शरीरस्योपलक्षणत्वेन तद्वियुक्तस्वरूपेण प्राप्यत्वादिसंभवात्, मयट्प्रत्ययस्य स्वार्थिकत्वेन विकारपरत्वाभावाच्च परिशुद्धप्रत्यगात्मस्वरूपविषयमिदं वाक्यमिति पूर्वपक्षसङ्ग्रहः। तत्र द्वौ हेतू साधकौ ; अन्ये तु शङ्कितदूषणान्यथासिद्धिरूपाः ॥

---

1 नैकरूपेति सविकारत्वमुक्तम्। 2 आत्मभिन्नज्ञप्तेः परमते द्रव्यत्वाभावात् द्रव्यप्रायकोशमध्ये ज्ञप्तेरद्रव्यस्य विज्ञानशब्देन ग्रहणं पूर्वपक्षिणो नेष्टमित्याशयेन अन्तःकरणपरत्वाय अनेनेति व्युत्पत्तिरुक्ता।

ननु च "ब्रह्म पुच्छं प्रतिष्ठा" इत्यानन्दमयादन्यद्ब्रह्मेति प्रतीयते ॥ नैवम्; ब्रह्मैव स्वस्वभावविशेषेण पुरुषविधत्वरूपितं शिरःपक्षपुच्छरूपेण व्यपदिश्यते। यथा अन्नमयो देहोऽवयवी स्वस्मादनतिरिक्तैः स्वावयवैरेव, 'तस्येदमेव शिरः' इत्यादिना शिरःपक्षपुच्छवत्तया निदर्शितः, तथा आनन्दमयं ब्रह्मापि स्वस्मादनतिरिक्तैः प्रियादिभिर्निदर्शितम्। तत्रावयवत्वेन रूपितानां प्रियमोदप्रमोदानन्दानामाश्रयतया अखण्डरूपमानन्दमयं 'ब्रह्म पुच्छं प्रतिष्ठा' इत्युच्यते। यदि चानन्दमयादन्यद्ब्रह्माभविष्यत्, 'तस्माद्वा एतस्मादानन्दमयादन्योऽन्तर आत्मा ब्रह्म' इत्यपि निरदेक्ष्यत। न चैवं निर्दिश्यते। एतदुक्तं भवति—'ब्रह्मविदाप्नोति परम्' इति प्रक्रान्तं ब्रह्म, 'सत्यं ज्ञानमनन्तं ब्रह्म' इति लक्षणतः सकलेतरव्यावृत्ताकारं प्रतिपाद्य, तदेव "तस्माद्वा एतस्मादात्मनः" इत्यात्मशब्देन निर्दिश्य तस्य सर्वान्तरत्वेनात्मत्वं व्यञ्जयत् वाक्यमन्नमयादिषु तत्तदन्तरतया आत्मत्वेन निर्दिष्टान् प्राणमयादीनतिक्रम्य 'अन्योऽन्तर आत्माऽऽनन्दमयः' इत्यात्मशब्देन निर्देशमानन्दमये समापयति। अत आत्मशब्देन प्रक्रान्तं ब्रह्म आनन्दमय इति निश्चीयत इति।

---

एवमानन्दमयशब्दस्य प्रत्यगात्मपरत्ववादिनं पूर्वपक्षिणं साङ्ख्यं मृषावादिपक्षस्थश्चोदयति **ननु चेति**। **तस्य पुच्छ**मिति षष्ठ्या अवयविसंबन्धप्रतीतेः संबन्धस्य द्विनिष्ठतया, प्रतिष्ठातद्वद्भावेन च व्यतिरेकावगमादन्यत्वमित्यर्थः। परिहरति **नैव**मिति। 'अन्वयं पुरुषविधः' इति श्रुतिवाक्यस्मरणार्थं **पुरुषविधत्वरूपित**मित्युक्तम्। पुरुषविधत्वेन रूपितम्। अनतिरिक्तत्वमुपपादयति **यथेति**। प्रकरणे स्वस्मादनतिरिक्तैः स्वावयवैः पुच्छप्रतिष्ठात्वरूपणदर्शनादत्रापि पुच्छप्रतिष्ठात्वेन रूपितं ब्रह्म आनन्दमयादनतिरिक्तमित्यर्थः। षष्ठीनिर्देशः समुदायतदेकदेशत्वनिबन्धनतयोपपन्न इति भावः॥

ननु 'आनन्द आत्मा' इत्यानन्दोऽवयवित्वेन रूपितः, न त्ववयवत्वेन, तत् कथमुच्यते **अवयवत्वेन रूपितानां प्रियमोदप्रमोदानन्दाना**मिति ॥ नैष दोषः; आत्मशब्दस्य स्ववाचित्वाभावात्। कायस्य मध्यभागो ह्यात्मशब्दवाच्यः। "दश हस्त्या अङ्गुलयो दश पाद्याः, द्वावूरू, द्वौ बाहू, पञ्चविंश आत्मा" इत्यादौ तथा प्रयोगदर्शनात्। अत एव तस्यानन्द आत्मेति षष्ठ्या व्यतिरेकनिर्देशस्वारस्यं सिध्यति। तस्मादानन्दो मध्यभागत्वेन रूपितः॥ नन्वेवमपि पुच्छतया निर्दिष्टं ब्रह्मेत्यङ्गीकृतं स्यात्॥ ततः किम्॥ तर्हि किं निरसनीयम्॥ आनन्दमयस्याब्रह्मत्वम्। अतस्तन्निरासमुखेन पुच्छस्य तदन्तर्भावोऽभिधीयते। हेत्वन्तरमाह **यदि चेति**। ननु—तस्माद्वा एतस्मादानन्दमयादन्योऽन्तर आत्मा ब्रह्मेत्यन्तरात्मतयैव भेदो वक्तव्य इति न ह्यस्ति नियमः, "पृथगात्मानं प्रेरितारम्", "पतिं विश्वस्य" इत्यादिवत् व्यावर्तकाकारान्तरेणाप्यन्यत्वप्रतिपादनसंभवादित्याशङ्क्याह **एतदुक्त**मिति। प्रकरणस्य तत्तदन्तरतयैवान्यत्वप्रतिपादनपरत्वात् तत्प्रकरणस्थेन वाक्येन तादृशेन भवितव्यमित्यर्थः। आत्मशब्दस्य श्रुत्यैव व्याख्यानं कृतमिति कथमवगम्यत इति शङ्कायां स्वोक्तस्य स्वयमेव व्याख्यानं प्रकरणसिद्धमिति दर्शयितुम्, आत्मशब्दनिर्दिष्टस्यैव ब्रह्मत्वोपपादनोपयोगितया च **ब्रह्मविदाप्नो**ति इत्यादि उक्तम्। तत्र ब्रह्मशब्दव्याख्यानं सत्यज्ञानादिवाक्यम्। आत्मशब्दव्याख्यानमानन्दमये समाप्तमस्तु; ततः किमानन्दमयस्यैव ब्रह्मत्वे इति शङ्कायां ब्रह्मशब्देन प्रकृतस्यैव आत्मशब्देन निर्दिष्टत्वं दर्शयति **तदेवे**ति। तस्माद्वा एतस्मात् इति **तदेत**च्छब्दौ प्रकृतपरामर्शिनावित्यभिप्रायः।

ननु च 'ब्रह्म पुच्छं प्रतिष्ठा' इत्युक्त्वा 'असन्नेव स भवति, असद्ब्रह्मेति वेद चेत्। अस्ति ब्रह्मेति चेद्वेद, सन्तमेनं ततो विदुः" इति ब्रह्मज्ञानाज्ञानाभ्यामात्मनः सद्भावासद्भावौ दर्शयति; नानन्दमयज्ञानाज्ञानाभ्याम्। न चानन्दमयस्य प्रियमोदादिरूपेण सर्वलोकविदितस्य सद्भावासद्भावज्ञानाशङ्का युक्ता। अतो नानन्दमयमधिकृत्यायं श्लोक उदाहृतः। तस्मादानन्दमयादन्यद्ब्रह्म॥

नैवम्; 'इदं पुच्छं प्रतिष्ठा', 'पृथिवी पुच्छं प्रतिष्ठा', 'अथर्वाङ्गिरसः पुच्छं प्रतिष्ठा', 'महः पुच्छं प्रतिष्ठा' इत्युक्त्वा तत्रतत्रोदाहृताः, 'अन्नाद्वै प्रजाः प्रजायन्ते' इत्यादिश्लोकाः यथा न पुच्छमात्रप्रतिपादनपराः, अपितु अन्नमयादिपुरुषप्रतिपादनपराः,—एवमत्राप्यानन्दमयस्यायम् 'असन्नेव' इति श्लोकः; नानन्दमयव्यतिरिक्तस्य पुच्छस्य। आनन्दमयस्यैव ब्रह्मत्वेऽपि प्रियमोदादिरूपेण रूपितस्यापरिच्छिन्नानन्दस्य सद्भावासद्भावज्ञानाशङ्का युक्तैव। पुच्छब्रह्मणोऽप्यपरिच्छिन्नानन्दतयैव ह्यप्रसिद्धता॥ शिरःप्रभृत्यवयवित्वाभावाद्ब्रह्मणः, नानन्दमयो ब्रह्मेति चेत्—ब्रह्मणः पुच्छत्वप्रतिष्ठात्वाभावात् पुच्छमपि ब्रह्म न भवेत्। अथाविद्यापरिकल्पितस्य वस्तुनस्तस्याश्रयभूतत्वात् ब्रह्मणः, पुच्छं प्रतिष्ठेति रूपणमात्रमित्युच्येत—हन्त तर्हि तस्यासुखाद्व्यावृत्तस्यानन्दमयस्य ब्रह्मणः प्रियशिरस्त्वादिरूपणं भविष्यति।

---

पुनश्चोदयति **ननु चेति**। पूर्वं प्राधान्येनोक्तानामन्नमयादीनां श्लोकेषु तत्तच्छब्दैरेव निर्देशो दृष्टः; एवमत्राप्यानन्दमयः प्रधानश्चेत्, तद्विषयश्लोकेऽपि तच्छब्देनैव निर्देष्टव्य[1]म्। यद्वा—यद्यानन्दमये आत्मशब्दव्याख्यानपरिसमाप्तिः, तर्ह्यात्मशब्देन निर्देष्टव्य[1]म्। तथा च न कृतम्; अपि तु ब्रह्मशब्देन निर्दिष्टम्। तस्मादानन्दमयस्य न प्राधान्यम्। अतः पुच्छब्रह्मैव प्रधानप्रतिपाद्यमित्यर्थः। ब्रह्मशब्दस्याऽऽनन्दमयविषयत्वे सिद्धे ब्रह्मशब्देन निर्देशो न दोष इति शङ्कामर्थात्परिहरन् युक्त्यन्तरमाह **न चानन्दमयस्येति**। **आशङ्का**शब्देनोदाहृतश्रुतिवाक्यद्वयस्थः चेदर्थो (स्थचेदर्थो ?) व्याख्यातः। सर्वलोकप्रसिद्धस्य दुरपह्नवत्वेनासद्भाव इव सद्भावेऽप्याशङ्कावादो न युक्त इत्यर्थः। परिहरति **नैवमिति**। ब्रह्मात्मानन्दमयशब्दानामैकार्थ्ये निश्चिते आनन्दमयशब्दनिर्देशसमो ब्रह्मशब्दनिर्देश इति स्फुटमिति बुद्ध्वा आनन्दमयप्राधान्ये युक्तिमाह **इदं पुच्छमिति**। प्रकरणस्थपूर्वश्लोकानां पुच्छमात्रप्रतिपादनपरत्वाभावादयमपि श्लोको न पुच्छमात्रप्रतिपादनपर इत्यर्थः। प्रसिद्धानन्दस्य सद्भावासद्भावशङ्कानुपपत्तिं परिहरति **आनन्दमयस्येति**। प्रतिबन्दीमभिप्रेत्याह **पुच्छब्रह्मणोऽपीति**। 'विज्ञानमानन्दं ब्रह्म', 'आनन्दो ब्रह्म' इत्यादिवाक्येन ब्रह्मण आनन्दरूपत्वस्योक्तत्वात् आनन्दस्य च प्रसिद्धत्वात् न तस्य सद्भावासद्भावज्ञानाशङ्का युक्तेति चोदिते, तस्यानन्दरूपस्य ब्रह्मणोऽविदितत्वमपरिच्छिन्नानन्दत्वादेव हि त्वयोपपादनीयम्; तदत्रापि तुल्यमित्यर्थः। शङ्कते **शिरःप्रभृतीति**। परिहरति **ब्रह्मण इति**। **पुच्छत्वम्**—अवयवविशेषत्वम्। **प्रतिष्ठात्वम्**—आधारत्वम्। ब्रह्मणोऽवयवित्वमनुपपन्नमिति चेत्—अवयवत्वमप्यनुपपन्नमित्यर्थः। अवयवत्वं रूपणमात्रमिति शङ्कते **अथेति**। परिहरति **हन्ततर्हीति**। **असुखादिति**। असुखव्यावृत्तिविशेषाः शिरःप्रभृतित्वेन रूपिता इत्यर्थः। सत्यज्ञानादिवाक्येन सकलेतरव्यावृत्तत्वे सिद्धे

---

1 निर्दिष्टेन भाव्यमित्यर्थः। यद्वा सामान्ये नपुंसकम्।

एवञ्च 'सत्यं ज्ञानमनन्तं ब्रह्म' इति विकारास्पदजडपरिच्छिन्नवस्त्वन्तरव्यावृत्तस्य असुखाद्व्यावृत्तिः आनन्दमय इत्युपदिश्यते। ततश्चाखण्डैकरसानन्दरूपे ब्रह्मण्यानन्दमय इति मयट् प्राणमय इव स्वार्थिको द्रष्टव्यः॥ तस्मादविद्यापरिकल्पितविविधविचित्रदेहादिभेदभिन्नस्य जीवात्मनः स्वाभाविकं रूपमखण्डैकरसं सुखैकतानमानन्दमय इत्युच्यत इत्यानन्दमयः प्रत्यगात्मा॥

---

किमत्र क्रियत इत्यत्राह **एवञ्चेति**। सत्यशब्दनिर्दिष्टस्य ब्रह्मणः, कस्यचिद्विकारत्वाभावादानन्दमयशब्दवाच्यत्वमप्ययुक्तमित्यत्राह **ततश्चेति**। **ततः**—उक्तानुपपत्तीनां परिहृतत्वात् उपपत्त्यन्तरसद्भावाच्चेत्यर्थः। किञ्च 'सोऽकामयत' इति वाक्ये स इति पुँल्लिङ्गतच्छब्देन कारणवस्तुनिर्देशाच्च आनन्दमयः परं ब्रह्म॥ 'तस्माद्वा एतस्मादात्मनः' इत्यात्मशब्दनिर्दिष्टात्माभिप्रायोऽयं पुँल्लिङ्गनिर्देश इति चेन्न; व्यवहितादव्यवहितस्य ग्राह्यत्वेनानन्दमयस्य ग्राह्यत्वात्॥ 'ब्रह्म पुच्छं प्रतिष्ठा' इति वाक्यात्पश्चात्पठितस्य 'तस्यैष एव शारीर आत्मा' इतिवाक्यस्थस्यात्मशब्दस्य व्यवधानाभावात् तदभिप्रायः स इति पुँल्लिङ्गनिर्देशः; आनन्दमयस्त्वेतद्वाक्यापेक्षया व्यवहित इति न स परामृश्यत इति चेत्—न; 'तस्यैष एव शारीर आत्मा' इति वाक्यस्थस्यात्मनः सर्वपर्यायसाधारणत्वेन एतत्पर्यायस्य प्रधानप्रतिपाद्यत्वाभावात्। सर्वनामशब्दस्य प्रधानपरामर्शित्वस्वारस्याच्च स इति आनन्दमय एवोच्यते। 'विज्ञानं ब्रह्मेति व्यजानात्', आनन्दो ब्रह्मेति व्यजानात्' इत्यत्र, 'विज्ञानमयमात्मानमुपसङ्क्रम्य,' 'आनन्दमयमात्मानमुपसङ्क्रम्य' इत्यत्र च स्थानप्रमाणेन आनन्दानन्दमयशब्दयोरेकार्थत्वावगमादानन्दशब्दस्य परब्रह्मविषयत्वप्रसिद्धेश्चानन्दमयः परं ब्रह्म। न च 'आनन्दो ब्रह्मेत्यत्रानन्दशब्दोऽप्यानन्दमयशब्दवत् बाह्यकोशपर इति वाच्यम्; 'अन्नं ब्रह्म', 'प्राणो ब्रह्म' इत्यादिविज्ञानानन्तरमिव 'आनन्दो ब्रह्म' इति विज्ञानानन्तरं भृगोर्वरुणोपसत्त्यभावात्। न हि, 'तद्विज्ञाय, पुनरेव वरुणं पितरमुपससार' इति पुनः श्रूयते। एतदुक्तं भवति—'अन्नं ब्रह्मेति व्यजानात्' इत्यत्र किमन्नाद्युपलक्षितब्रह्मवेदनमुक्तम्; उत अन्नमयादौ ब्रह्मबुद्ध्यवतरणम्?। आद्ये, अन्नं ब्रह्मेति ज्ञानानन्तरं वरुणोपसत्तिर्न स्यात्; उपलक्षणभूतेन तेन ब्रह्मणः प्रतिपन्नत्वात्। द्वितीये ह्यानन्दविषयब्रह्मबुद्धेर्यथार्थत्वं स्यात्, पुनर्वरुणोपसत्त्यभावादिति। किञ्च आनन्दो ब्रह्मेत्यत्रानन्दशब्दस्य ब्रह्मपरत्वं युष्माभिरेव व्याख्यातम्, उक्तं हि (शं-भा) "या तु भार्गवी वारुणी विद्या, आनन्दो ब्रह्मेति व्यजानादिति—तस्यां मयटोऽश्रवणात् प्रियशिरस्त्वाद्यश्रवणाच्च युक्तमानन्दस्य ब्रह्मत्वम्" इति। अतश्च आनन्दो ब्रह्मेत्यस्य वाक्यस्य परमात्मपरत्वात् स्थानप्रमाणेन 'आनन्दमयमात्मानम्' इत्यत्र आनन्दमयशब्दोऽपि परमात्मपरः। आनन्दमयस्य शोध्यत्वञ्च तदनुगुणसंसारनिर्हरणादिरूपमिति चानुसन्धेयम्॥

प्रत्यगात्मस्वरूपमेवापरिच्छिन्नानन्दरूपञ्चेत्, कथं जीवानां दुःखित्वं सुखित्वतारतम्यञ्चोपलभ्यत इति शङ्कां च परिहरन् पूर्वपक्षमुपसंहरति **तस्मादिति**।

'तस्य प्रियम्' इति संबन्धवाचिन्या षष्ठ्या व्यतिरेकप्रतीतेः, ब्रह्मविषयस्योपरितनश्लोकस्य आनन्दमयविषयत्वाभावेन पुच्छतयोक्तब्रह्मण एव प्रधानत्वावगमात्, प्रियमोदादिरूपेण लोकविदितस्यानन्दमयस्य सद्भावासद्भावज्ञानाशङ्कानुपपत्तेः, निरवयवस्य परमात्मनोऽवयवित्वानुपपत्तेः, अविकारस्य विकारित्वानुपपत्तेः, 'तस्यैष एव शारीर आत्मा' इत्यानन्दमयविषयवाक्यावगतस्यात्मान्तरस्य परमात्मतया आनन्दमयस्य परमात्मत्वानुपपत्तेः, "अन्नमय-प्राणमय-मनोमय-विज्ञानमयानन्दमया मे शुद्ध्यन्ताम्" इति श्रुतस्य

**एवं प्राप्ते प्रचक्ष्महे—आनन्दमयोऽभ्यासात् । आनन्दमयः परमात्मा । कुतः ? अभ्यासात् ।**

---

शोध्यत्वस्य नित्यशुद्धे परमात्मन्यनुपपत्तेश्च नानन्दमयः परमात्मा ; अपि तु पुच्छतया निर्दिष्टमेव ब्रह्म परमात्मेति **पुच्छब्रह्मवाद**हेतुसङ्ग्रहः ।

प्रकरणस्य स्वसादनतिरिक्तैः स्वावयवैः शिरःपक्षादिरूपणपरत्वात्, तदन्तरतया आत्मशब्द-व्याख्यानस्यानन्दमये पर्यवसितत्वात्, अन्नमयादिविषयाणां प्रकरणस्थश्लोकानां पुच्छवद्विषयत्वात्, कारणत्वप्रतिपादके 'सोऽकामयत' इत्यनन्तरवाक्ये स इति पुँल्लिङ्गान्तेन प्रधानप्रकृतार्थपरामर्शिना तच्छब्देनाव्यवहितस्यानन्दमयस्यैव वक्तुं युक्तत्वात्, 'आनन्दो ब्रह्म' इत्यानन्दशब्दस्य ब्रह्मपरत्वाभ्युप-गमात्, 'आनन्दो ब्रह्मेति व्यजानात्', 'आनन्दमयमात्मानमुपसङ्क्रम्य' इत्यानन्दानन्दमयशब्द-योरेकार्थत्वेनानन्दमयशब्दस्यापि परब्रह्मपरत्वात्, आनन्दमयशब्दतुल्यार्थानन्दशब्दवाच्यब्रह्मज्ञानानन्तरं वरुणोपसत्त्यश्रवणात्, सूत्रस्वारस्यात्, स्वसादनतिरिक्तस्वावयवैरेव शिरःपक्षपुच्छादिरूपणपरप्रकरणानु-गुण्येन षष्ठीनिर्देशस्य समुदायसमुदायिभावनिबन्धनत्वोपपत्तेः, आनन्दमयात्मब्रह्मशब्दानामैकार्थ्येन तेष्वन्यतमेन तद्विषयश्लोके निर्देशस्य युक्तत्वात्, अपरिच्छिन्नानन्दस्याप्रसिद्धत्वेन 'आनन्दो ब्रह्म' इत्युक्ततयाऽभ्युपेतपुच्छब्रह्मण इव सद्भावासद्भावशङ्कासंभवात्, अवयवत्ववत् अवयवित्वेन रूपण-संभवात्, आनन्दमय इत्यत्र मयट्प्रत्ययस्य स्वार्थिकत्वेन प्राचुर्यार्थत्वेन वा विकारपरत्वाभावेन ब्रह्मणो निर्विकारत्वाविरोधात्, 'तस्यैष एव शारीर आत्मा' इति वाक्यस्यानन्यात्मत्वप्रतिपादनपरत्वात्, 'अन्नमयप्राणमयमनोमयविज्ञानमयानन्दमया मे शुद्ध्यन्ताम्' इत्यत्र शोधनं तत्तद्वस्त्वनुगुणं कार्यमिति प्रत्यगात्मत्वपक्षे संसारनिर्हरणेन शोध्यत्वात् अतिरिक्तत्वपक्षे भगवतः कालुष्यशान्तिरूपशोध्यत्वस्य प्रपदनसाध्यस्योपपन्नत्वाच्च आनन्दमयानतिरिक्तं पुच्छब्रह्मेत्यानन्दमय एव परमात्मेति **पुच्छब्रह्मवादनिरा-करणयुक्तिसङ्ग्रहः** । अत्राऽऽद्यं हेतुषट्कं सिद्धान्तसाधकम्, इतरहेतुगणः शङ्कितविपक्षयुक्तिपरिहारपरः ॥

अस्मिन् पूर्वपक्षे प्राप्ते सिद्धान्तसूत्रमवतारयति **एवं प्राप्त** इति । तत्र प्रतिज्ञांशं साध्यसमर्पक-पदेन पूरयन् व्याचष्टे **आनन्दमय** इति । उत्तराधिकरणे, 'भेदव्यपदेशाच्चान्यः' इत्यन्यशब्दः प्रयुक्तः ; इह तदाकर्षणलब्धोऽर्थ उक्तः **परमात्मेति** । यद्वा पूर्वाधिकरणसूत्रस्थयो**र्ना**शब्दमिति पदयोरनुषङ्ग-लब्धार्थमाह **परमात्मेति** । यस्मिन् शब्द एव प्रमाणं न भवति स ह्यशब्दः । स्वयम्प्रकाशप्रत्यक्षानु-मानादिभिः सिध्यतो जीवस्यापि तत् अशब्दत्वमुपपद्यते । यथा **आत्मसिद्धौ** "एवमात्मा स्वतः सिध्यन् आगमेनानुमानतः । योगाभ्यासभुवा स्पष्ट प्रत्यक्षेण प्रकाश्य(श)ते" इति । यद्वा—एतदधिकरणसूत्रस्थ एव **नेतर** इति साध्यांशोऽत्रापि विवक्षित इत्यभिप्रायेणोक्तं **परमात्मेति** । अन्तरात्मपरम्परासमाप्तिद्योतनाय अत्र **परमात्म**शब्देन धर्मिनिर्देशः । अभ्यासादानन्दमयत्वं श्रुतौ प्रतीतम् । अत आनन्दमयत्वापेक्षया हेतुनिर्देशशङ्काव्युदासाय साध्यांशे हेत्वाकाङ्क्षां दर्शयति **कुत** इति ॥ ननु भेदव्यपदेशस्य जीवादन्यत्वे स्फुटतरतया निरपेक्षहेतुत्वात् स्ववाक्यस्थत्वाच्च स एव प्रथमं वक्तव्यः ; न तु वाक्यान्तरस्थोऽनुग्राह-कयुक्त्यपेक्षोऽभ्यासः ॥ नैवम् ; स्ववाक्यस्थात् भेदव्यपदेशादपि स्वपदैकदेशमयड्वाच्यस्य प्राचुर्यस्योपपादन-सापेक्षस्यापि आसन्नतरत्वात् तद्विवरणरूपस्य निरतिशयदशाशिरस्कस्याभ्यासस्यैव प्रथमं हेतुतया वक्तुं

**"सैषानन्दस्य मीमांसा भवति" इत्यारभ्य, "यतो वाचो निवर्तन्ते" इत्येवमन्तेन वाक्येन शतगुणितोत्तरक्रमेण निरतिशयदशाशिरस्कोऽभ्यस्यमानः आनन्दः**

---

युक्तत्वात्। कस्याभ्यासात् इत्याकाङ्क्षां पूरयन् हेतुपदं व्याचष्टे **सैषानन्दस्येति**। **अभ्यासः**—गुणनम्, आवृत्तिः। 'यतो वाचो निवर्तन्ते' इत्यस्यार्थमभिप्रेत्य **निरतिशयदशाशिरस्क** इत्युक्तम्। 'स एको ब्रह्मण आनन्दः' इति वाक्यस्यार्थमभिप्रेत्य **अभ्यस्यमान** इत्युक्तम्। शतगुणितोत्तरक्रमेण गुणितत्वादित्यर्थः।

'स एको ब्रह्मण आनन्दः' इति वाक्यस्य चतुर्मुखानन्दविषयत्वेन, 'यतो वाच' इत्यादिवाक्यस्यैव ब्रह्मानन्दविषयत्वाङ्गीकारे **अभ्यासादिति** हेतोर्व्यधिकरणता स्यात्। किञ्च अयं ब्रह्मशब्दः परमात्मवाचकः, ब्रह्मशब्दस्य भगवत्येव मुख्यत्वात्; 'ब्रह्मविदाप्नोति', 'अस्ति ब्रह्मेति' इत्यादिषु वाक्येषु परब्रह्मपरतयैव ब्रह्मशब्दस्य प्रयोगप्रकरणात्, 'यतो वाचो निवर्तन्ते' इति पूर्वोत्तरयोर्वाक्ययोरानन्दप्रतिसंबन्धिवाचिषष्ठ्यन्त-ब्रह्मशब्दस्य परब्रह्मपरत्वदर्शनात्, 'सैषानन्दस्य मीमांसा' इति प्रकृतब्रह्मानन्दनिगमनस्यापेक्षितत्वात्, 'स यश्चायं पुरुषे' इति प्रकृतपरामर्शिना अनन्तरवाक्यस्थेन कारणपरतच्छब्देन पूर्ववाक्यस्थस्यास्य ब्रह्मशब्दस्य परब्रह्मपरत्वनिश्चयात्, अन्यथा चतुर्मुखस्य सर्वान्तरात्मत्वपरमकारणत्वप्रसङ्गात्, 'तदप्येष श्लोको भवति' इति भगवदानन्दविषयश्लोकोत्थानस्य भगवदानन्दप्रसङ्गसापेक्षत्वात्, निरुपपदप्रजापति-शब्दस्य चतुर्मुखे स्वरसत्वात्, दक्षादिपरत्वे एकवचनस्वारस्याभावात्, देवानाम्, देवगन्धर्वाणाम्, इन्द्रस्य, बृहस्पतेः इति बह्वी(हु)षु व्यक्तिषु बहुवचनस्य, एकैकव्यक्तिषु च एकवचनस्य प्रकरणे प्रयुज्यमानत्वाच्च। तथा 'स एकः प्रजापतिलोक आनन्दः। यश्च श्रोत्रियोऽवृजिनोऽकामहतः। अथ ते ये शतं प्रजापतिलोक आनन्दाः स एको ब्रह्मलोक आनन्दः। यश्च श्रोत्रियोऽवृजिनोऽकामहतः। अथ एष एव पर आनन्दः एष ब्रह्मलोकस्सम्राडिति होवाच" इति बृहदारण्यकवाक्यैकार्थ्याच्च, 'स एको ब्रह्मण आनन्दः' इति वाक्यस्य परमात्मानन्दपरत्वं सिद्धम्।

न च, स एक इति निर्देशात् ब्रह्मानन्दस्य परिच्छिन्नत्वम्; आधिक्यमात्रे वाक्यतात्पर्यात्। यथा 'क्षिप्तेषुरिव सर्पति' इति वाक्यं सूर्यगतिमान्द्यनिवृत्तिपरम्; न त्विषुसाम्यपरम्; सूर्यस्य निमेषमात्रे बहुयोजनातिलङ्घित्वस्य प्रमाणसिद्धत्वात्—तथाऽत्रापि पूर्वापरवाक्यादिभिरपरिच्छिन्नानन्द-त्वसिद्धेः 'स एकः' इति वाक्यस्य चतुर्मुखानन्दादाधिक्ये तात्पर्यमित्यवगम्यते। यद्वा "रोमकूपेष्वनन्तानि ब्रह्माण्डानि भ्रमन्ति ते", "अण्डानां तु सहस्राणां सहस्राण्ययुतानि च। ईदृशानां तथा तत्र कोटिकोटिशतानि च", "गङ्गायाः सिकता धारा यथा (तथा ?) वर्षति वासवे। शक्या गणयितुं लोके न व्यतीताः पितामहाः॥" इत्यादिभिरण्डानां तत्र तत्र चतुर्मुखानां चासङ्ख्येयत्वावगमात् नियाम्यान्नियन्तुः शतगुणानन्दत्वे कथिते चतुर्मुखेभ्योऽसङ्ख्यातेभ्यः शतगुणानन्दतयाऽवगतस्य भगवतो-ऽपरिच्छिन्नानन्दत्वमर्थसिद्धमिति। अतो यथोक्त एवार्थः।

**अभ्यस्यमान** इति। **अभ्यासशब्दः** कर्मार्थघञन्तः इत्यभिप्रायः। यद्वा भावार्थत्वे-ऽप्यानन्दस्याभ्यस्तत्वं फलितमिति तथोक्तम्। तच्च हेतोर्वैयधिकरण्यशङ्काव्युदासार्थम्॥ ननु गुणनम्—वर्द्धनम्। प्राजापत्यानन्दो हि शतगुणत्वेन वर्धते; न तु ब्रह्मानन्दः॥ सत्यम्;

**अनन्तदुःखमिश्रपरिमितसुखलवभागिनि जीवात्मनि असंभवन् निखिलहेयप्रत्यनीकं कल्याणैकतानं स्वेतरविलक्षणं परमात्मानमेव स्वाश्रयमावेदयति । यथाह, "तस्माद्वा एतस्माद्विज्ञानमयात् अन्योऽन्तर आत्मा आनन्दमयः" इति ।**

---

तथापि गुणितः प्रजापत्यानन्द एव ब्रह्मानन्द इत्युपचारेणोक्तिः; व्रीहिचतुष्टयं गुञ्जेतिवत् । गुणितत्तत्तदानन्दसदृशस्त्वेकदेशतया प्रतिपाद्यमानो ब्रह्मानन्द इत्यर्थः । यद्वा मुहुर्मुहुरुक्तिर**भ्यासः**[1] । तेन तात्पर्यलिङ्गवत्त्वं सूचितम् । अस्त्वानन्दस्यापरिच्छिन्नत्वम्; ततः किमित्यत्राह **अनन्तदुःखे**ति । अनेन निरतिशयानन्दविरुद्धधर्मयोग उक्तः । **परिमिते**ति निरतिशयानन्दाभाव उक्तः । विरुद्धधर्मोपलम्भादभावोपलम्भाच्चासंभव इत्यर्थः । कथमसंभवः; मुक्तस्यापरिच्छिन्नानन्दत्वं श्रुतमित्यत्राह **निखिलहेये**ति । **प्रत्यनी**कत्वमत्र निवर्तकत्वं विवक्षितम् । मुक्तस्यापि परमात्मप्रसादादेव हि हेयनिवृत्तिपूर्वकनिरतिशयानन्दप्राप्तिः । इह च स्वत एवापरिच्छिन्नानन्दत्वमवगम्यते; हेत्वश्रवणात्; निरतिशयत्वश्रवणविरोधेन हेतुकल्पनायोगाच्च । न च मुक्तस्य स्वतोऽपरिच्छिन्नानन्दत्वम्, 'अथ सोऽभयं गतो भवति', 'एष ह्येवानन्दयाति', 'रसं ह्येवायं लब्ध्वाऽऽनन्दी भवति' इति परमात्मायत्तत्वश्रुतेः । न ह्येवं परमात्मानन्दस्यान्याधीनत्वं श्रुतम् ।[2] 'श्रोत्रियस्य चाकामहतस्य' इति मुक्तः पृथङ्निर्दिश्यते । **श्रोत्रियः**— श्रुतवेदान्तः । **अकामहतः**— उपासनानिवृत्तसमस्तक्लेशः । 'यश्च श्रोत्रियोऽवृजिनोऽकामहतः' इति श्रुत्यन्तरम् । मुक्तस्य जगद्व्यापाराभावाच्च परस्यैव स्वतो निरतिशयानन्दयोगः । एवं निरतिशयानन्दस्य जीवात्मनि अयोग्यतारूपतर्कानुगृहीत आनन्दमयशब्दः परमात्मविषय इत्युक्तं भवति ।

न केवलं निरतिशयानन्दत्वरूपवस्तुसामर्थ्यानुगृहीतत्वात् वैलक्षण्यमवगतम्; तत् कण्ठोक्तं चेत्याह **यथाऽऽहे**ति ॥ ननु **भेदव्यपदेशा**दिति सूत्रस्य विषयवाक्यं हीदम् । तत्र व्याख्यास्यमानस्यास्य कथमिहोपादानम्, अर्थोपपादनं च ॥ उच्यते । निरतिशयानन्दस्य जीवात्मन्ययोग्यतारूपतर्को ह्यानन्दमयशब्दस्य परमात्मविषयत्वव्यवस्थापक उक्तः । अस्य[3] तर्कस्य अनेन वाक्येन गर्भितत्वात् तत्सूचकत्वेनेदं वाक्यमत्रोपन्यस्तम् । अत्र हि **एतस्मा**दिति पदेन 'विज्ञानं यज्ञं तनुते कर्माणि तनुतेऽपि च' इति पूर्ववाक्यप्रकृतकर्मवश्यत्वादिवैशिष्ट्यं जीवस्याभिप्रेतम् । धर्मिवाचिनाऽपि मयडन्तेन विज्ञानमयशब्देन सर्वोपाधिविनिर्मुक्तं स्वाभाविकरूपमसङ्कुचितज्ञानमित्यवयवशक्त्या दर्शितम् । अनेन वाक्येन स्वभावपरिशुद्धस्यापि जीवस्य कर्मकृतानन्तदुःखभाजनस्य निरतिशयानन्दासंभवात् ततः परमात्मनो विलक्षणत्वं प्रतिपादितमिति अत्रेदमुपात्तम् ।

---

1 अभ्यासानन्तरं 'यतो वाच' इत्यारम्भसिद्धः 'उपर्युपर्यब्जभुवोपि' इति श्लोकोक्तरीत्या ब्रह्मानन्दं मानुषानन्दपदे परिकल्प्य मुहुर्मुहुः शतगुणितोत्तरकथनरूपोऽभ्यास इत्यर्थः । सिद्धमिदानीं निरतिशयानन्दस्यैवाभ्यसनम् ।

2 ननु एको ब्रह्मण आनन्द इत्यत्र ब्रह्मपदं मुक्तजीवपरं भवतु । ब्रह्मणोहिप्रतिष्ठाऽहमित्यादिदर्शनादित्याशंकायाम्, उपरि तत्कथनात् तद्धेतुब्रह्मानन्द एवायमित्याह श्रोत्रियस्येति ।

3 अस्येति । भाष्यार्थदर्पणोक्तमपि द्रष्टव्यम् ।

**विज्ञानमयो हि जीवः ; न बुद्धिमात्रम् ; मयट्प्रत्ययेन व्यतिरेकप्रतीतेः । प्राणमये** त्वगत्या स्वार्थिकता आश्रीयते । इह तु तद्वतो जीवस्य सम्भवाज्ज्ञानधैक्यं न्याय्यम् । बद्धो मुक्तश्च प्रत्यगात्मा ज्ञातैवेत्यभ्यधिष्महि । प्राणमयादौ च मयडर्थसंभवोऽनन्तरमेव वक्ष्यते । कथं तर्हि विज्ञानमयविषयश्लोके, "विज्ञानं यज्ञं तनुते" इति केवलविज्ञानशब्दोपादानमुपपद्यते । ज्ञातुरेवात्मनः स्वरूपमपि स्वप्रकाशतया विज्ञानमित्युच्यत इति न दोषः ; ज्ञानैकनिरूपणीयत्वाच्च ज्ञातुः स्वरूपस्य । स्वरूपनिरूपणधर्मशब्दा हि धर्ममुखेन धर्मिस्वरूपमपि प्रतिपादयन्ति, गवादिशब्दवत् । 'कृत्यल्युटो बहुलम्" इति वा कर्तरि ल्युडाश्रीयते । नन्द्यादित्वं वाऽऽश्रित्य "नन्दिग्रहि" इत्यादिना कर्त्तरि ल्युः । अत एव [च] "विज्ञानं यज्ञं तनुते कर्माणि तनुतेऽपि च"

---

अस्मिन् वाक्ये **विज्ञानमय**शब्दस्य बुद्धिमात्रपरत्वं व्युदस्यति **विज्ञानमयो ही**ति । "योऽयं विज्ञानमयः प्राणेषु हृद्यन्तर्ज्योतिः पुरुषः" इति श्रुतिप्रसिद्धिद्योतको **हि**शब्दः । शब्दस्वारस्यग्राहकप्रत्यक्षप्रसिद्धिद्योतको वा । अहं जानामीति ज्ञातृत्वं ह्यात्मनः प्रतीयते । [1]ज्ञप्तिवाचिनो विज्ञानमयशब्दस्य (विज्ञानशब्दस्य ?) ज्ञायतेऽनेनेति व्युत्पत्त्याऽन्तःकरणपरत्वमस्वरसमित्यभिप्रयन् आह **न बुद्धिमात्र**मिति । **मात्र**चा अभिप्रेतं प्रत्ययवैयर्थ्यं विशदयति **मयट्प्रत्ययेने**ति । प्रकरणवशात् स्वार्थिकत्वमाशङ्क्याह **प्राणमये त्वि**ति । **अगत्या**—विकारप्राचुर्याद्यर्थान्तरासंभवात् । पक्षे तद्वैषम्यमाह **इह त्वि**ति । **तद्वत** इति । प्राचुर्यार्थित्वं संभवतीत्यर्थः । नात्र मयडर्थः संभवति ; ज्ञप्तिमात्रस्वरूपो ह्यात्मा ; ज्ञातृत्वं हि काल्पनिकम् ; मुक्तावस्थायां तदपि नास्तीत्यत्राह **बद्ध** इति । प्राणमयादौ स्वार्थिकत्वमभ्युपगम्य परिहार उक्तः ; अथ तदेव नास्तीत्याह **प्राणमयादा**विति । विज्ञानमयशब्दस्य तद्विषयश्लोकस्थविज्ञानशब्दसमानार्थत्वात् मयट् स्वार्थिक इत्यभिप्रायेण पृच्छति **कथं तर्ही**ति । **उपपद्यते** । न हि विज्ञानस्य विज्ञानान्तराश्रयत्वं संभवतीति भावः । **विज्ञान**शब्दस्य ज्ञातरि प्रवृत्तौ निमित्तं दर्शयति **ज्ञातुरेवे**ति । **एवकारः** शङ्कितविरोधाभावद्योतकः । **अपि**शब्दः स्वरूपधर्मयोर्निमित्तसाधारण्यपरः । ज्ञातृशब्दतुल्यार्थतयाऽपि निर्वाहं दर्शयति **ज्ञानैके**ति । ततः किमित्यत्राह **स्वरूपे**ति । **स्वरूपनिरूपणधर्मशब्दाः**—अयुतसिद्धधर्मवाचिशब्दाः । आकृतिनयविषयतया संप्रतिपन्नं शब्दं निदर्शयति **गवादी**ति । एवं सौत्रन्यायाभ्यां [2]द्विधा निर्वाह उक्तः । अथ शब्दमर्यादया द्विधा निर्वाहमाह **कृत्ये**ति । प्रथमे पक्षे कर्तृपरत्वं कल्पनीयम् । द्वितीये गणान्तर्भावः कल्पनीय इत्युभयत्रा**श्रयण**शब्दप्रयोगः । प्रत्यक्षानुगुण्यात् , श्रुत्यन्तरप्रत्यभिज्ञानात् , प्रथमश्रुतत्वात् , प्रकृतिस्वारस्यात् , प्रत्ययानर्थक्यानुपपत्तेश्च प्रबलविज्ञानमयशब्दानुरोधेन विज्ञानशब्दो निर्वाह्य इति भावः । स्ववाक्यस्थयुक्त्यन्तरमाह **अत एवे**ति । **अत एव**—विज्ञानशब्दस्य चेतनपरत्वादेवेत्यर्थः । यज्ञादिकर्तृत्वे

---

1 ननु न बुद्धिरिति वक्तव्ये मात्रपदप्रयोगो भाष्येऽकथम् ! बुद्धिर्हि अन्तःकरणम् । न ह्यन्तःकरणवानिति विज्ञानमयशब्दार्थः सिद्धान्तीष्ट इति शंकायामवतारयति ज्ञप्तीति । मयडर्थत्यागिना अन्तःकरणरूपार्थापेक्षया ज्ञप्तिरूपार्थग्रहणमेव युक्तम् । अन्यथा बुद्धौ मनोमयभेदस्यापि क्लेशनिर्वाह्यत्वात् । अस्तु कामं ज्ञप्तिग्रहणमिति चेत्—तथा ज्ञानमात्रमपि न युक्तमिति भाष्याशय इति भावः ।

2 सौत्रन्यायाभ्याम्—प्रकाशवच्चावैयर्थ्यात् , यावदात्मभावित्वाच्चेति सूत्रद्वयगतयुक्तिभ्याम् । द्विधा—स्वप्रकाशत्व ज्ञानाश्रयत्वोभयवत्तया ।

इति यज्ञादिकर्तृत्वं विज्ञानस्य श्रूयते। बुद्धिमात्रस्य हि न कर्तृत्वं संभवति। अचेतनेषु हि चेतनोपकरणभूतेषु विज्ञानमयात्प्राचीनेष्वन्नमयादिषु न चेतनधर्मभूतं कर्तृत्वं श्रूयते। अत एव चेतनमचेतनं च स्वासाधारणैर्निलयनत्वानिलयनत्वादिभिर्धर्मविशेषैर्विभज्य निर्दिशत् वाक्यम् "विज्ञानं चाविज्ञानं च" इति विज्ञानशब्देन तद्गुणं चेतनं वदति। तथाऽन्तर्यामिब्राह्मणे, "यो विज्ञाने तिष्ठन्" इत्यस्य काण्वपाठगतस्य पर्यायस्य स्थाने, "य आत्मनि तिष्ठन्" इति पर्यायमधीयानाः माध्यन्दिनाः काण्वपाठगतं विज्ञानशब्दनिर्दिष्टं जीवात्मेति स्फुटीकुर्वन्ति। विज्ञानमिति च नपुंसकलिङ्गं वस्तुत्वाभिप्रायम्। तदेवं विज्ञानमयाज्जीवादन्यस्तदन्तरः परमात्मा

---

श्रुते कथं विज्ञानशब्दवाच्यस्य चेतनत्वमित्यत्राह **बुद्धिमात्रस्ये**ति। बोद्धुरेव हि कर्तृत्वं प्रत्यक्षश्रुतिभिः सूत्रैश्च सिद्धमिति भावः॥ ननु सर्वेषां स्वव्यापारकर्तृत्वमस्ति॥ सत्यम्। नात्र तावन्मात्रं विवक्षितम्; किन्तु चेतनासाधारणः कर्तृत्वविशेषः प्रयत्नाधारत्वलक्षणः। **यज्ञादिकर्तृत्व**मिति ह्युक्तम्। अत्र विज्ञानशब्दास्वारस्यमुभयोरप्यविशिष्टम्। यज्ञादिकर्तृत्वास्वारस्यं तु परस्याधिकम्। ननु 'अद्यतेऽत्ति च भूतानि' इत्यन्नमय इव प्राकरणिकमौपचारिकं कर्तृत्वमुपकरणत्वाविशेषात् बुद्धेरपि स्यादित्यत्राह **अचेतनेषु ही**ति। बाधकाभावे सति उपचार एव दोषः। स च प्रकरणानुवृत्तश्चेत्, सोढव्यः स्यात्। न च तदनुवृत्तिः, प्राणमये मनोमये च तस्य विच्छिन्नत्वादित्यभिप्रायः। विज्ञानशब्दस्य चेतनपरत्वे प्रयोगान्तरं दर्शयति **अत एव चेतन**मिति। **अत एव**—विज्ञानशब्दस्य चेतनपरत्वादेवेत्यर्थः। **चेतनमचेतनं चे**ति। न ह्यन्तःकरणानन्तःकरणविभागोऽत्र क्रियते; किन्तु चिदचिद्विभाग एवेति भावः। कुत इत्यत्राह **निलयनत्वे**ति। अचिद्विकारविशेषस्यान्तःकरणस्य "जीवभूतां महाबाहो ययेदं धार्यते जगत्" इति प्रकारेण चेतनधार्यस्य विश्वनिलयनत्वायोगात्, परेण तस्य सत्यत्वानभ्युपगमाच्चेति भावः। विज्ञानशब्दस्य संवित्परत्वमप्ययुक्तम्; 'अनुप्रविश्ये'ति[1] अनेनानुप्रवेशश्रवणात्। न हि संविद्रूप आत्मा आत्मान्तरव्याप्यतयाऽभिमतः परस्य। विज्ञानशब्दस्य चेतनपरत्वे प्रयोगान्तरं दर्शयति **तथे**ति। विज्ञानशब्दस्यात्मशब्दस्थाने श्रुतत्वादन्तःकरणपरत्वमनुपपन्नम्। न चात्मशब्दोऽप्यन्तःकरणपरः, विज्ञानशब्दवत् तस्यापि तत्रास्वरसत्वात्। यथा ज्ञायतेऽनेनेति व्युत्पत्त्याश्रयणं विज्ञानशब्दस्य क्लिष्टम्, तद्वत् चेतनव्यतिरिक्तेष्वात्मशब्दोऽपि ह्यस्वरसः। अन्तःकरणपरत्वे विज्ञानात्मशब्दयोर्द्वयोरप्यस्वारस्यम्; चेतनपरत्वे तु विज्ञानशब्दमात्रास्वारस्यम्, न तु द्वयोरिति विशेषः। अत्राऽऽत्मशब्दस्य परमात्मतया स्वाभिमतसंवित्परत्वञ्च परेण दुर्वचम्; 'य आत्मनि तिष्ठन्' इति अत्र आत्मान्तरस्थितिश्रवणात् आत्मान्तरव्याप्यस्य परमात्मत्वासिद्धेः। सर्वत्र[2] प्रयुक्तस्य विज्ञानशब्दस्य ल्युट्प्रत्ययान्तत्वे विशेष्यानुगुणलिङ्गत्वादात्मविषयस्य तस्य कथं नपुंसकत्वमित्यत्राह **विज्ञान**मिति। उपपादितमर्थं परमसाध्येन घटयति **तदेव**मिति। **तत्**—उक्तोपपत्तिभिः। **एवम्**—विज्ञानशब्दस्य चेतनपरत्वसिद्धेरित्यर्थः।

---

1 तदनुप्रविश्येति वाक्ये विज्ञानस्य अन्येनाऽऽत्मना अनुप्रविष्टत्वश्रवणादित्यर्थः।

2 ननु सर्वत्रेति किमर्थम्; एकस्थले प्रयोगेपि कथन्तायाः सत्त्वादिति चेत्—सर्वत्रेत्यस्य ज्ञप्ताविवाऽऽत्मन्यपीत्यर्थः। भावे ल्युडन्तमेव ज्ञप्त्यर्थकम् आत्मनि लाक्षणिकं वक्तव्यमिति शंकितुराशयः। सर्वत्र—भावरूपार्थे इव कर्तृरूपार्थेऽपीति वाऽर्थः।

आनन्दमयः। यद्यपि 'विज्ञानं यज्ञं तनुते' इति श्लोकेन ज्ञानमात्रमेवोपादीयते, न ज्ञाता—तथापि "अन्योऽन्तर आत्मा विज्ञानमयः" इति तद्वान् ज्ञातैवोपदिश्यते; यथा 'अन्नाद्वै प्रजाः प्रजायन्ते' इत्यत्र श्लोके केवलान्नोपादानेऽपि, "स वा एष पुरुषोऽन्नरसमयः" इत्यन्नं नान्नमात्रं निर्दिष्टम्; अपि तु तन्मयः—तद्विकारः। एतत् सर्वं हृदि निधाय सूत्रकारः स्वयमेव, "भेदव्यपदेशात्" इति अनन्तरमेव वदति॥

यदुक्तं जगत्कारणतया निर्दिष्टस्य "अनेन जीवेनात्मनाऽनुप्रविश्य", "तत्त्वमसि" इति च जीवसामानाधिकरण्यनिर्देशात् जगत्कारणमपि जीवस्वरूपान्नातिरिच्यत इति कृत्वा जीवस्यैव स्वरूपं "ब्रह्मविदाप्नोति परम्" इति प्रक्रान्तमसुखाद्धयावृत्तत्वेनानन्दमय इत्युपदिश्यत इति—तदयुक्तम्; जीवस्य चेतनत्वे सत्यपि, 'तदैक्षत बहु स्यां प्रजायेयेति। तत्तेजोऽसृजत' इति स्वसङ्कल्पपूर्वकानन्तविचित्रसृष्टियोगानुपपत्तेः। शुद्धावस्थस्यापि हि तस्य सर्गादिजगद्व्यापारासम्भवः "जगद्व्यापारवर्जम्", "भोगमात्रसाम्यलिङ्गाच्च" इत्यत्रोपपादयिष्यते॥ कारणभूतस्य ब्रह्मणो जीवस्वरूपत्वानभ्युपगमे, "अनेन जीवेनात्मना", "तत्त्वमसि" इति सामानाधिकरण्यनिर्देशः कथमुपपद्यत इति चेत्—कथं वा निरस्तनिखिलदोषगन्धस्य सत्यसङ्कल्पस्य सर्वज्ञस्य सर्वशक्तेः

---

श्लोकस्थविज्ञानशब्दस्य ज्ञातृपरत्वोपपादनेन विज्ञानमयशब्दस्य ज्ञातृपरत्वमुक्तम्; अथ श्लोकस्य ज्ञातृपरत्वाभावेऽपि विज्ञानमयशब्दस्य ज्ञातृपरत्वमाह **यद्यपीति**। मयड्रहितवाक्ये तदर्थः परित्यक्त इति तद्वत्यपि वाक्ये स न त्याज्य इत्यर्थः। तर्हि ब्राह्मणस्य श्लोकस्य च कथमैकार्थ्यमित्यत्राह **यथेति**। पूर्ववाक्योक्तार्थैकदेशविषयत्वात् श्लोकस्य तदैकार्थ्यम्, यथा अन्नमयविषयश्लोकस्येत्यर्थः। **तन्मय** इति, श्रुतिवाक्यगतमयड[न्ता ?]र्थानुवादः। **तद्विकार** इति तद्व्याख्यानम्। उक्तार्थजातस्य उत्सूत्रत्वशङ्कां परिहरन् व्याख्यास्यमानसूत्रोपयोगित्वञ्च दर्शयितुमाह **एतत्सर्वमिति**। "तस्माद्वा एतस्माद्विज्ञानमयात्" इति वाक्यं जीवपरयोर्भेदप्रतिपादकं वदन् सूत्रकारो विज्ञानशब्दस्य ज्ञातृपरत्वं तदुपपत्तीश्च हृदि निदधदेव वदतीत्यर्थः।

पूर्वपक्षे जीवसामानाधिकरण्यं शारीरत्वश्रवणं च हेतुद्वयमुक्तम्। तत्र सामानाधिकरण्यस्य भेदावहत्वमुपपादयितुं **यदुक्तमि**त्यादिना **उपदिश्यत** इत्यन्तेनानूदितं पूर्वपक्षहेतुं दूषयति **तदयुक्तमिति**। प्राकरणिकवाक्यैः समानाधिकरणपदप्रातिपदिकांशेन च विरुद्धधर्माध्यासप्रतिपत्त्या भेदसिद्धेः कालात्ययापदिष्टहेतुरिव परोक्तहेतुर्न साध्यसाधक इति दूषणं वक्तुं तत्पदोपस्थाप्यविशेषसमर्पकैः प्राकरणिकवाक्यैः पराभिमतैक्यविरुद्धभेदसिद्धिं दर्शयति **जीवस्येति**। प्रलयदशायामुपसंहृतकरणकलेवरस्य कर्मवश्यस्य सङ्कल्पमात्रेण विचित्रजगत्सर्गायोगात् बद्धस्य स्रष्टृत्वमनुपपन्नमित्यर्थः। शुद्धावस्थस्य संभवतीत्यत्राह **शुद्धेति**। उक्तं विवरीतुं शङ्कते **कारणेति**। समानविभक्तयवगतैक्योपपत्तिः कथमित्यर्थः। **कथं वेति**। प्रातिपदिकावगतविशेषणान्वयः कथमित्यर्थः। **निरस्तेत्या**दिपदैः तत्पदप्रातिपदिकावगतविशेषणान्वयो दर्शितः। "तदैक्षत...असृजत" इति यथासङ्कल्पं जगत्सृष्टिश्रवणेन सत्यसङ्कल्पादिगुणानामतिरोहितत्वावगमात् तिरोधायकहेयसंबन्धानर्हत्वमर्थसिद्धमित्यभिप्रायेण निरस्तनिखिलदोषगन्धत्वमुक्तम्। जगद्व्यापारोपयिकगुणान्तराणाम् अन्यत्र कण्ठोक्तानां सद्विद्यायां गतिसामान्यनयात् अर्थसिद्धत्वमभिप्रेत्योक्त-

अनवधिकातिशयासङ्ख्येयकल्याणगुणगणस्य सकलैकारणभूतस्य ब्रह्मणः नानाविधानन्तदुःखाकरकर्माधीनचिन्तितनिमिषितादिसकलप्रवृत्तिजीवस्वरूपत्वम्? ॥ अन्यतरस्य मिथ्यात्वेनोपपद्यत इति चेत्—कस्य भोः? । किं हेयसम्बन्धस्य? किं वा हेयप्रत्यनीककल्याणैकतानस्वभावस्य? ॥ हेयप्रत्यनीककल्याणैकतान[स्वभाव]स्य ब्रह्मणोऽनाद्यविद्याश्रयत्वेन हेयसम्बन्धमिथ्याप्रतिभासो मिथ्यारूप इति चेत्—विप्रतिषिद्धमिदमभिधीयते, ब्रह्मणो हेयप्रत्यनीककल्याणैकतानत्वम् अनाद्यविद्याश्रयत्वेनानन्तदुःखविषयमिथ्याप्रतिभासाश्रयत्वञ्चेति। अविद्याश्रयत्वं तत्कार्यदुःखप्रतिभासाश्रयत्वञ्चैव हि हेयसम्बन्धः। तत्सम्बन्धित्वं तत्प्रत्यनीकत्वञ्च विरुद्धमेव। तथापि तस्य मिथ्यात्वात् न विरोध इति मा वोचः । मिथ्याभूतमप्यपुरुषार्थ एव; यन्निरसनाय सर्वे वेदान्ता आरभ्यन्त इति ब्रूषे । निरसनीयापुरुषार्थयोगश्च हेयप्रत्यनीककल्याणैकतानतया विरुध्यते ॥ किं कुर्मः? 'येनाश्रुतं श्रुतं भवति" इत्येकविज्ञानेन सर्वविज्ञानं प्रतिज्ञाय, 'सदेव सोम्येदमग्र आसीत्' इत्यादिना निखिलजगदेककारणताम्, 'तदैक्षत बहु स्याम्' इति सत्यसङ्कल्पताञ्च ब्रह्मणः प्रतिपाद्य, तस्यैव ब्रह्मणः "तत्त्वमसि" इति सामानाधिकरण्येनानन्तदुःखाश्रयजीवैक्यं प्रतिपादितम्; तदन्यथानुपपत्त्या ब्रह्मण एवाविद्याश्रयत्वादि परिकल्पनीयमिति चेत्-श्रुतोपपत्तयेऽप्यनुपपन्नं विरुद्धञ्च

---

मनवधिकेति। त्वंपदप्रातिपदिकावगतविशेषणान्वयो दर्शितः नानाविधेति। जीवस्वरूपत्वम्—जीवेन सह स्वरूपैक्यम्। जीवत्वमित्युक्ते जीवशरीरकत्वप्रतिपत्तिश्च संभवतीति तद्व्यावृत्त्यर्थं जीवस्वरूपत्वमित्युक्तम्। साक्षात् पराभिमतं पदद्वयावगतविशेषणपरित्यागपक्षं दूषयिष्यन् संभावितं पक्षद्वयं शङ्कते अन्यतरस्येति। तत्त्वंपदप्रतिपन्नविशेषणयोरन्यतरस्येत्यर्थः। विकल्पयति कस्येति। प्रत्यक्षसिद्धागमसिद्धत्वन्तत्पदावगतविशेषणजातं दुस्त्यजमिति भावः। सहेतुकमविरुद्धं परेण प्रथमशिरःपरिग्रहं शङ्कते हेयप्रत्यनीकेति। हेयम्—दुःखम्। मिथ्याप्रतिभासः—भ्रान्तिज्ञानम्। स्वतश्शुद्धस्य पटस्यौपाधिकमालिन्यवत्, परमार्थतो निर्मलस्य स्फटिकस्याध्यासादरुणिमवच्च ब्रह्मणो निर्दोषकल्याणगुणैकतानत्वं हेयसंबन्धश्च स्वाभाविकौपाधिकविभागेन परमार्थापरमार्थविभागेन वा अविरुद्धम्; उभयोरपि स्वाभाविकत्वसत्यत्वाभ्युपगमे हि विरोध इति शङ्काऽभिप्रेता। दूषयति विप्रतिषिद्धमिति। विप्रतिषेधमुपपादयति अविद्याश्रयत्वमिति। न केवलं दुःखमेव हेयम्, अपि तु तद्धेतुतत्प्रतिभासावपि हेयावित्यर्थः। ततः किमित्यत्राह तत्सम्बन्धित्वमिति। अविद्यातत्कार्यदुःखतत्प्रतिभासरूपहेयानामाश्रयत्वं तत्प्रत्यनीकत्वञ्च विरुद्धमित्यर्थः। संबन्धमिथ्यात्वादविरोधं शङ्कते तथापीति। तथापि—अविद्यादीनां हेयत्वेऽपि। तस्य—आश्रयत्वस्वरूपसम्बन्धस्येत्यर्थः। दूषयति मिथ्याभूतमपीति। आश्रयत्वं मिथ्याभूतमप्यपुरुषार्थ इत्यर्थः। अपुरुषार्थत्वमुपपादयति यन्निरसनायेति। ततः किमित्यत्राह निरसनीयेति। एतदुक्तं भवति—मिथ्यात्वं किम् अत्यन्ताभावः, उत ज्ञानबाध्यत्वम्। प्रथमे, निरसनीयाभावात् तन्निरासाय शास्त्रारम्भो न स्यात्। द्वितीये च मिथ्याभूतस्यापुरुषार्थत्वमस्ति, न वा? न चेत्, निरसनीयत्वाभावात् शास्त्रारम्भवैयर्थ्यम्। अपुरुषार्थत्वमस्ति चेत्, हेयप्रत्यनीकत्वव्याघातो दुष्परिहर इति। तद्विरोधेऽपि हेयसम्बन्धस्य श्रुतिबलादभ्युपगन्तव्यत्वं शङ्कते किं कुर्म इति। परिहरति श्रुतोपपत्तय इति। अनुपपन्नम् तर्कपराहतम्। विरुद्धम् प्रमाणविरुद्धम्। 'अपहतपाप्मा....विशोको विजिघत्सः',

न कल्पनीयम् ॥ अथ हेयसम्बन्ध एव पारमार्थिकः, कल्याणैकस्वभावता तु मिथ्याभूता— हन्तैवं तापत्रयाभिहतचेतनोज्जिजीवयिषया प्रवृत्तं शास्त्रम्, 'तापत्रयाभिहतिरेव तस्य पारमार्थिकी, कल्याणैकस्वभावस्तु भ्रान्तिपरिकल्पितः' इति बोधयत् सम्यगुज्जीवयति ॥ अथैतद्दोषपरिजिहीर्षया ब्रह्मणो निर्विशेषचिन्मात्रस्वरूपातिरिक्तं(क्त)जीवत्वदुःखित्वादिकं सत्यसङ्कल्पत्वकल्याणगुणाकरत्वजगत्कारणत्वाद्यपि मिथ्याभूतमिति कल्पनीयमिति चेत्—अहो भवतां वाक्यार्थपर्यालोचनकुशलता। एकविज्ञानेन सर्वविज्ञानप्रतिज्ञानं सर्वस्य मिथ्यात्वे सर्वस्य ज्ञातव्यस्याभावान्न सेत्स्यति(संपत्स्यते)। यथैकविज्ञानं परमार्थविषयम्, तथैव सर्वविज्ञानमपि यदि परमार्थविषयम्, तदन्तर्गतञ्च—तदा तज्ज्ञानेन सर्वविज्ञानमिति शक्यते वक्तुम्। न हि परमार्थशुक्तिकाज्ञानेन तदाश्रयम[2]परमार्थरजतं ज्ञातं भवति ॥

अथोच्येत—एकविज्ञानेन सर्वविज्ञानप्रतिज्ञायाः अयमर्थः—निर्विशेषवस्तुमात्रमेव सत्यम्, अन्यदसत्यमिति [इति] न तर्हि 'येनाश्रुतं श्रुतं भवति अमतं मतमविज्ञातं विज्ञातमिति श्रूयेत।

---

'एष हि सर्वेभ्यः पाप्मभ्य उदितः', 'अनश्नन्नन्यः', 'अनीशया शोचति मुह्यमानः। जुष्टं यदा पश्यत्यन्यमीशम्', 'अस्मान्मायी सृजते....तस्मिंश्चान्यो मायया संनिरुद्धः', 'तमक्रतुं पश्यति', 'अनार्तां देवतां प्रपद्ये' इत्यादिश्रुतिविरोधः। एकस्मिन् हेयप्रत्यनीकत्व-हेयास्पदत्वादि-विरुद्धधर्मान्वयानुपपत्तिस्तर्कविरोधः। शिरोन्तरं शङ्कते **अथे**ति। दूषयति **हन्तैव**मिति। शास्त्रस्य प्रयोजनपर्यवसायित्वाभावादप्रामाण्यं प्रसजेदित्यर्थः। परस्य सिद्धान्तभूतमुभयप्रहाणं शङ्कते **अथैतद**िति। परिहरति **अहो भवता**मिति। अर्थनिष्कर्षोपयुक्तपदद्वय-वाक्य-एतत्प्रकरण-प्रकरणान्तरोपनिषदन्तर-प्रमाणान्तर-तर्क-सामानाधिकरण्यनिरूपणं पर्यालोचनम्। प्रथममेतत्प्रकरणोपक्रम-विरोधं दर्शयति **एके**ति। सर्वसत्यत्वेऽपि कथं सेत्स्यतीत्यत्राह **यथैके**ति। परमार्थविषयमिथ्याविषयत्वे ज्ञानयोर्वैरूप्यं स्यादिति भावः। **तदन्तर्गतश्चे**ति। परिषद्ज्ञानेन तद्गताः पुरुषा हि ज्ञाता भवन्ति; न तु तद्बहिष्ठा इति भावः। ज्ञानस्य [1]तदन्तर्गतत्वं तद्विषयान्तर्गतत्वम्। यद्वा **तदन्तर्गतम्**। सर्वमिति शेषः। **परमार्थविषयं तदन्तर्गत**मित्युक्तमर्थं व्यतिरेकेणोपपादयति **न हि परमार्थे**ति। न हि शुक्तिरजतयोरेकधीविषयत्वमित्यर्थः[2]। एकत्वसर्वत्वावस्थाभेदे सत्यपि धर्म्यैक्यात् एकविज्ञानेनसर्वविज्ञानमुपपद्यते। ज्ञातत्वसर्वत्वे ह्येकाश्रयवर्तिनी। [3]न हि ज्ञातत्वविशिष्टाकारेण सर्वत्वम्, सर्वत्वविशिष्टाकारेण ज्ञातत्वं वा। प्रागेवायं मया ज्ञात इत्यपि हि धर्मिमात्रस्यैव ज्ञातत्वम्; न त्वेतदवस्थाविशेषविशिष्टस्य; देशकालादिभेदात्। न हि पूर्वमेतत्कालादिविशिष्टतया ज्ञातत्वम् ॥ ब्रह्मैकमेव सत्यमिति ज्ञाते अन्यत् मिथ्यात्वेन ज्ञातं स्यादिति शङ्कते **अथोच्येते**ति। परिहरति **न तर्ही**ति। सर्वं मिथ्यात्वेन ज्ञातं भवतीति वा, सर्वं निवृत्तं भवतीति वा श्रूयेतेत्यर्थः। एवञ्चार्थे सति मिथ्यात्वेनेति पदस्याध्याहारः। धर्म्यन्तरविषयतया ज्ञानशब्दयोर्वैरूप्यम्। स्वरसतः प्राप्तं हि ज्ञानैकरूप्यम्। तच्च भज्यते। **ज्ञातं भवती**ति

---

1 उपादानज्ञाने कार्यज्ञानस्यान्तर्गतत्वम् उपादाने एकस्मिन् कार्याणामनेकेषामन्तर्गतत्वात्। अन्तत इहान्तर्गतत्वं ऐक्यमेव।

2 रजतस्यापि रजतत्वस्येव कल्पितत्वात् शुक्त्याश्रितत्वाच्चैक्याभावात् न ज्ञाततेति भावः।

3 ज्ञानप्रकारीभूतो यः, स घटत्वादिरिति वा, घटत्वादिर्ज्ञानप्रकारीभूत इति वा नेत्यर्थः।

येन श्रुतेनाश्रुतमपि श्रुतं भवतीति ह्यस्य वाक्यस्यार्थः। कारणतयोपलक्षितनिर्विशेषवस्तुमात्रस्यैव सद्भावश्चेत् प्रतिज्ञातः, "यथा सोम्यैकेन मृत्पिण्डेन सर्वं मृन्मयं विज्ञातम्" इति दृष्टान्तोऽपि न घटते। मृत्पिण्डविज्ञानेन हि तद्विकारस्य ज्ञातता निदर्शिता॥ तत्रापि विकारस्यासत्यता अभिप्रेतेति चेत्-मृद्विकारस्य रज्जुसर्पादिवत् असत्यत्वं शुश्रूषोरसिद्धमिति प्रतिज्ञातार्थसंभावनाप्रदर्शनाय 'यथा सोम्य' इति प्रसिद्धवदुपन्यासो न युज्यते। न च तत्त्वमस्यादिवाक्यजन्यज्ञानोत्पत्तेः प्राक् विकारजातस्यासत्यतामापादयत् तर्कानुगृहीतमननुगृहीतं वा प्रमाणमुपलभामह इति। अयमर्थः, "तदनन्यत्वमारम्भणशब्दादिभ्यः" इत्यत्र वक्ष्यते।

तथा "सदेव सोम्येदमग्र आसीदेकमेवाद्वितीयम्" "तदैक्षत बहु स्यां प्रजायेयेति। तत्तेजोऽसृजत", "हन्ताहमिमास्तिस्रो देवता अनेन जीवेनात्मनाऽनुप्रविश्य नामरूपे व्याकरवाणि", "सन्मूलाः सोम्येमाः सर्वाः प्रजाः सदायतनाः सत्प्रतिष्ठाः—ऐतदात्म्यमिदं सर्वम्" इत्यादिनाऽस्य जगतः सदात्मकता, सृष्टेः पूर्वकाले नामरूपविभागप्रहाणम्, जगदुत्पत्तौ सच्छब्दवाच्यस्य ब्रह्मणः स्वव्यतिरिक्तनिमित्तान्तरानपेक्षत्वम्, सृष्टिकाले अहमेवानन्तस्थिरत्रसरूपेण बहु स्याम् इत्यनन्यसाधारणसङ्कल्पविशेषः, यथासंकल्पमनन्तविचित्रतत्त्वानां विलक्षणक्रमविशेषविशिष्टा सृष्टिः, समस्तेष्वचेतनेषु वस्तुषु स्वात्मकजीवानुप्रवेशेनैवानन्तनामरूपव्याकरणम्, स्वव्यतिरिक्तस्य समस्तस्य स्वमूलत्वम्, स्वायतनत्वम्, स्वप्रवर्त्यत्वम्, स्वेनैव जीवनम्, स्वप्रतिष्ठत्वमित्याद्यनन्तविशेषाः शास्त्रैकसमधिगम्याः प्रतिपादिताः। तत्सम्बन्धितया प्रकरणान्तरेष्वप्यपहतपाप्मत्वादिनिरस्तनिखिलदोषतासर्वज्ञतासर्वैश्वरत्वसत्यकामत्वसत्यसङ्कल्पत्वसर्वानन्दकरणनिरतिशयानन्दयोगादयः सकलेतरप्रमाणाविषयाः सहस्रशः प्रतिपादिताः। एवमनन्यगोचरानन्तविशेषविशिष्टप्रकृतब्रह्मपरामर्शितच्छब्दस्य निर्विशेषवस्तुमात्रोपदेशपरत्वम् असङ्गतत्वेनोन्मत्तप्रलपितायेत।

---

ज्ञातृज्ञेयतदवच्छिन्नज्ञानाभावान्निवृत्तिलक्षणा च। इति दोषत्रयमभिप्रेतम्। श्रूयमाणान्वयप्रकारस्य परविरुद्धतामाह **येनेति**। एवं प्रतिज्ञावाक्यास्वारस्यमुक्तम्। अथ दृष्टान्तवाक्यानानुगुण्यमाह **कारणतयेति**। अघटितत्वमुपपादयति **मृत्पिण्डेति**। न हि शुक्तिज्ञानाद्रजतनिवृत्तिवत् मृत्पिण्डज्ञानात् घटादिनिवृत्तिर्निदर्शितेति भावः। दृष्टान्ताविरोधं शङ्कते **तत्रापीति**। प्रसिद्धवदुपन्यासानुपपत्त्या दूषयति **मृद्विकारस्येति**। मृद्विकारासत्यत्वमनुमानादिनाऽवगतमित्यत्राह **न चेति**। **अननुगृहीत**मिति ज्वालैक्यबुद्धिवत् आपातप्रतीतिमात्रजनकत्वं विवक्षितम्। उपरितनवाक्यापर्यालोचनां दर्शयति **तथेति**। **सदायतनत्व**फलितं स्वप्रवर्त्यत्वं स्वेनैव जीवनञ्च। प्रशासनेन हि धारणम्; धृत्या च तज्जीवनम्। निषेधाय गुणानुवाद इति शङ्कायाः व्युदासायाह **शास्त्रैकेति**। न हि विधेरनुवादित्वमिति भावः। श्रुत्यन्तरापर्यालोचनां दर्शयति **तत्सम्बन्धितया प्रकरणान्तरेष्वपीति**। **अपहतपाप्मत्वादि**रूपा **निरस्तनिखिलदोषते**त्यर्थः। अपूर्वतालक्षणं गुणेषु तात्पर्यलिङ्गं दर्शयितुं **सकलेतरप्रमाणाविषया** इत्युक्तम्। ततः किमित्याकाङ्क्षां पूरयन् पदद्वयपर्यालोचनाभावं दर्शयति **एवमिति**। **एवमनन्यगोचरानन्तविशेषविशिष्टप्रकृते**त्यनेन प्राकरणिकवाक्यविरोधो विवक्षितः। **प्रकृतब्रह्मपरामर्शितच्छब्दस्ये**त्यनेन [1]यत्र क्वापि प्रकृताकारविशिष्टपरामर्शितया तच्छब्दव्युत्पत्तिविरोध उक्तः। त्वंपदस्यापि

---

1 यत्रक्वापीत्यस्य सर्वत्रेत्यर्थः। परामर्शितयेत्यस्य व्युत्पत्तावन्वयः।

त्वंपदञ्च संसारित्वविशिष्टजीववाचि । तस्यापि निर्विशेषस्वरूपोपस्थापनपरत्वे स्वार्थः परित्यक्तः स्यात् । निर्विशेषप्रकाशस्वरूपस्य च वस्तुनो ह्यविद्यया तिरोधानं स्वरूपनाशप्रसङ्गादिभिर्न संभवतीति पूर्वमेवोक्तम् । एवञ्च सति समानाधिकरणवृत्तयोः तत् त्वमिति द्वयोरपि पदयोर्मुख्यार्थपरित्यागेन लक्षणा च समाश्रयणीया ॥

अथोच्येत---समानाधिकरणवृत्तानामेकार्थप्रतिपादनपरतया विशेषणांशे तात्पर्यासंभवादेव विशेषणनिवृत्तेर्वस्तुमात्रैकत्वप्रतिपादनाच्च लक्षणाप्रसङ्गः । यथा 'नीलमुत्पलम्' इति पदद्वयस्य विशेष्यैकत्वप्रतिपादनपरत्वेन नीलत्वोत्पलत्वरूपविशेषणद्वयं न विवक्ष्यते । तद्विवक्षायां हि नीलत्वविशिष्टाकारेणोत्पलत्वविशिष्टाकारस्यैकत्वप्रतिपादनं प्रसज्येत । तत्तु न सम्भवति । न हि नैल्यविशिष्टाकारेण तद्वस्तु उत्पलपदेन विशेष्यते, जातिगुणयोरन्योन्यसमवायप्रसङ्गात् । अतो नीलत्वोत्पलत्वोपलक्षितवस्त्वेकत्वमात्रं सामानाधिकरण्येन प्रतिपाद्यते । तथा "सोऽयं देवदत्तः' इति अतीतकालविप्रकृष्टदेशविशिष्टस्य तेनैव रूपेण संनिहितदेशवर्तमानकालविशिष्टतया प्रतिपाद-

---

वस्तुमात्रपरत्वे मुख्यार्थप्रहाणमाह त्वंपदञ्चेति । स्वाभिमुखश्चेतनः त्वंशब्दार्थः । आभिमुख्यं च स्ववाक्यबोध्यत्वम्, बोध्यत्वं चाज्ञस्य संसारिणः स्वतः प्राप्तमिति भावः । तस्माद्बोधनार्हतोपयोग्याकारविशिष्टः त्वमर्थः । अतः स परित्यक्तो भवति । प्रमाणतर्कापर्यालोचना पूर्वोक्तेत्याह निर्विशेषेति । पदद्वयनिमित्तप्रहाणे निर्विशेषत्वस्य बुद्धिस्थत्वात् तदनुपपत्तिरूपतर्कापर्यालोचनं दर्शितम् । सामानाधिकरण्यबलान्निर्विशेषवस्त्वभ्युपगम इति शङ्कायां पदद्वयलक्षणालक्षणं दूषणमाह एवञ्चेति । एवञ्च सति---निर्विशेषस्वरूपोपस्थापनपरत्वे मुख्यार्थसंबन्धितया वस्तुमात्रावबोधनेऽभ्युपगते लक्षणास्वीकार इत्यर्थः ॥

अथ परमतमुपन्यस्यति अथोच्येतेति । समानाधिकरणवृत्तानामित्यादि ग्रन्थः पक्षविषयसङ्ग्रहरूपः । विशेषणांशे तात्पर्यासंभवादिति । अन्यथा विशेषणबहुत्वादेकार्थत्वासिद्धेरिति भावः । पूर्वमप्युक्तादेवेत्येवकाराभिप्रायः । प्रथमसूत्रे हि बहुश उक्तः । यद्वा अन्यनैरपेक्ष्यपर एवकारः । न लक्षणाप्रसङ्ग इति । वाच्याबहिर्भूतप्रतिपादनादिति भावः । एवं पक्षविषये सङ्क्षेपेणोक्तमर्थमुपपादयति यथेत्यादिना । तत्र महाभाष्योक्तेऽप्युदाहरणे विशेषणांशे तात्पर्यासंभवं सिद्धं कृत्वा उदाहृतः[1] (तम्) । कथं तत्र विशेषणांशाविवक्षेत्यत्राह तद्विवक्षायामिति । प्रसक्तस्यानिष्टतां दर्शयति तत्त्विति । युगपदभिधाने उद्देश्योपादेयविभागहानिप्रसङ्गात्, पदद्वयशक्त्युपस्थापितविशिष्टैक्ये समानविभक्त्या प्रतिपाद्यमाने विशेष्यांशस्येव विशेषणभूतजातिगुणांशयोरप्यैक्यप्रसङ्गाच्च क्रमेणाभिधानपक्षोऽभ्युपगन्तव्य इति हृदि निधायाऽऽह न हीति । क्रमपक्षेऽपि पूर्वपदप्रतिपन्नाकारविशिष्टस्य पदान्तरप्रतिपन्नाकारविशिष्टवस्तुतादात्म्यं किं समानविभक्त्या बोध्यम्, उत पूर्वपदप्रतिपन्ने विशिष्टे विशेषणान्तरान्वय इति विकल्पमभिप्रेत्य प्रथमे विशेषणभूतजातिगुणयोरप्यैक्यप्रसङ्गं सिद्धं बुद्ध्वा, द्वितीये शिरसि अन्योन्यसमवायप्रसङ्गमाह जातिगुणयोरिति । तात्पर्यबहिष्ठस्यापि विशेषणस्योपयोगं दर्शयन् फलितमाह अत इति । नीलोत्पलमित्यत्र विशेषणान्वये स्फुटेऽपि तात्पर्याभाव उक्तः ; तत्र विशेषणानन्वयस्यास्फुटत्वाद्विशेषणान्वये स्पष्टतात्पर्याभावमुदाहरणान्तरं दर्शयति तथेति । विशिष्टवाचिनः शब्दस्य विशिष्टपरित्यागेन विशिष्टैकदेशतया

---

1 उक्त इत्यनेन उदाहृत इत्यत्रापि तात्पर्यासंभवस्यैव विशेष्यत्वम् ।

व्युत्पत्तेरुभयदेशकालोपलक्षितस्वरूपमात्रैक्यं सामानाधिकरण्येन प्रतिपाद्यते । यद्यपि नीलं-क्रियाद्येकपदश्रवणे प्रतीयमानं विशेषणं सामानाधिकरण्यवेलायां विरोधान्न प्रतिपाद्यते—तथापि वाच्येऽर्थे प्रधानांशस्य प्रतिपादनान्न लक्षणा ; अपितु विशेषणांशस्याविवक्षामात्रम् । सर्वत्र सामानाधिकरण्यस्यैष एव स्वभाव इति न कश्चिद्दोष इति—

तदिदमसारम् ; सर्वेष्वेव वाक्येषु पदानां व्युत्पत्तिसिद्धार्थसंसर्गविशेषमात्रं प्रत्याय्यम् । तत्र समानाधिकरणवृत्तानामपि नीलादिपदानां नैल्यादिविशिष्ट पदार्थो व्युत्पत्तिसिद्धः पदान्तरार्थसंसृष्टोऽभिधीयते ; यथा नीलमुत्पलमानयेत्युक्ते नीलिमादिविशिष्टमेवाऽऽनीयते,

---

तत्संबन्धिनि विशेष्यस्वरूपमात्रे वृत्तिर्लक्षणैव स्यादित्यत्राह यद्यपीति । परिहरति तथापीति । वाच्येऽर्थे । न हि शक्तिविषयाद्विशिष्टाद्बहिर्भूतं विशेष्यमिति भावः । प्रधानांशस्येति । तात्पर्यविषय-तया धर्मितया च प्रधानस्य विशेष्यांशस्यावर्जनादप्रधानविशेषणत्यागेऽप्यङ्गुल्यादिविकले पुरुषशब्दस्येव न लक्षणेति भावः । मुख्यार्थत्वे तुल्येऽपि विशिष्टप्रतिपादनदशातो वैलक्षण्यं दर्शयति अपि त्विति । अविवक्षामात्रमिति । अशक्ये कश्चिद्व्यापाराभावात् व्यापारविषयांशेऽपि न शक्तिरिति भावः । पूर्वं पक्षे लक्षणाभाव उक्तः इदानीं सपक्षे विशदीकृतो भवति । विशेषणाविवक्षायामस्वारस्यं स्यादित्यत्राह सर्वत्रेति । सामानाधिकरण्यव्युत्पत्तेरीदृशत्वान्नास्वारस्यम् । व्युत्पत्त्यननुरोधे सति ह्यस्वारस्यम् । अत ऐकार्थ्यव्युत्पत्तिविरोधिविशेषणविवक्षायामेवास्वारस्यमिति भावः ।

इमं पूर्वपक्षं प्रतिक्षिपति तदिदमसारमिति । प्रथमं चरमोक्ततया बुद्धिस्थं व्युत्पत्त्यन्तराश्रयणं निरस्यति सर्वेष्वेवेति । सर्वेषु—समानाधिकरणेषु व्यधिकरणेषु च वाक्येष्वित्यर्थः । गामानय, गां बधानेत्यादिव्यधिकरणवाक्येषु न हि प्रतिवाक्यं पदानामर्थभेदव्युत्पत्तिकल्पनम् ; "क्लृप्तकल्प्यविरोधे तु युक्तः क्लृप्तपरिग्रहः" इति न्यायेन क्लृप्तव्युत्पत्त्यैव स्वार्थबोधनसंभवे व्युत्पत्त्यन्तरकल्पनानुपपत्तेः । तथा समानाधिकरणवाक्येष्वपि न पदानां व्युत्पत्त्यन्तरं प्रवृत्तिनिमित्ताविशिष्टार्थविषयं कल्पनीयमिति भावः । व्युत्पत्त्यन्तराभावेऽपि वाक्यानां परस्परवैषम्यसंभवोपपादनपरं व्युत्पत्तिसिद्धार्थसंसर्गविशेष-मात्रमिति पदम् । व्युत्पत्तिसिद्धार्थसंसर्गविशेषाद्वाक्यवैषम्यम् ; न तु प्रकृत्यंशस्य व्युत्पत्त्यनवगतार्थान्तर-कल्पनादित्यभिप्रायः । एवं सर्ववाक्यसाधारणं रूपमुक्तम् ; अनेन समानाधिकरणवाक्येषु फलितमर्थमाह तत्रेति तत्र—तेषु वाक्येषु । समानाधिकरणपदानां विशिष्टैकार्थप्रतीतिहेतुत्वमुदाहरणेन दर्शयति यथेति । प्रत्यक्षविषयं परोक्षविषयञ्चोदाहरणद्वयम् । अत एव हि, आनीयते प्रतीयत इत्युक्तम् । कारक-विभक्त्यन्तत्वं न सामानाधिकरण्यविरोधीत्यभिप्रायेण नीलमुत्पलमानयेत्युक्तम् । नीलिमादिविशिष्ट-मेवानीयत इति । समानाधिकरणपदसमुदायो वस्तुमात्रप्रत्यायकश्चेत्—वस्तुमात्रत्वाविशेषादनीलमप्यानी-येतेत्यभिप्रायः । किञ्च समानाधिकरणपदानां विशेषणपरित्यागे को हेतुः । समानविभक्त्यावगतमैक्यमिति चेन्न । प्रातिपदिकावगतविशेषणान्वयबलात् समानविभक्तिरैक्यं न प्रतिपादयेत् । तदेव युक्तम् ; विभक्त्यर्थादपि प्रातिपदिकार्थप्राधान्यात्, "अदितिः पाशान्" "ग्रहं संमार्ष्टि" इत्यादिषु हि विभक्त्यर्थोऽनादृतः ॥ ऐक्यविषयप्रयोगदर्शनादैक्यविषयमिति चेत् ; विशेषणान्वयेऽपि प्रयोगदर्शनाद्विशेष-णान्वयमपि प्रतिपादयति । शाब्दप्रतीतिर्वस्तुमात्रस्यैव ; विशेषणान्वयस्तु प्रत्यक्षबलात् स्वीक्रियते ।

यथा च, 'विन्ध्याटव्यां मदमुदितो मातङ्गगजस्तिष्ठति' इति पदद्वयावगतविशेषणविशिष्ट पदार्थः प्रतीयते। एवं वेदान्तवाक्येष्वपि समानाधिकरणनिर्देशेषु तत्तद्विशेषणविशिष्टमेव ब्रह्म प्रतिपत्तव्यम्। न च विशेषणविवक्षायामितरविशिष्टाकारं वस्तु अन्येन विशेष्टव्यम्; अपि तु सर्वैर्विशेषणैः स्वरूपमेव विशेष्यम्।

तथा हि—"भिन्नप्रवृत्तिनिमित्तानां शब्दानामेकस्मिन्नर्थे वृत्तिः सामानाधिकरण्यम्'। अन्वयेन निवृत्त्या वा पदान्तरप्रतिपाद्याकारान्तरयुक्ततया तस्यैव वस्तुनः पदान्तरप्रतिपाद्यत्वं सामानाधिकरण्यकार्यम्। यथा 'देवदत्तः श्यामो युवा लोहिताक्षोऽदीनोऽकृपणोऽनवद्यः' इति।

---

प्रत्यक्षागोचरे तु यथाशब्दं न विशेषणप्रतीतिरिति चेन्न। विशेषणान्वयः शाब्दप्रतीतिविषयः, ऐक्यं तु प्रत्यक्षबलादङ्गीक्रियत इति किं न स्यात्॥ प्रत्यक्षागोचरेऽपि देवदत्तः श्यामो युवेत्यादिप्रयोगेष्वैक्य-धीदर्शनादैक्यं शब्दप्रतीतिविषय इति चेत्—तत्रैव परोक्षविषयप्रयोगे विशेषणान्वयस्यापि प्रतीतेर्विशेष-णान्वयः शाब्द एव; न पत्यक्षसिद्ध इति। इत्थं प्रत्यक्षपरोक्षविभागरहितं समानाधिकरणपदानामनेक-विशेषणविशिष्टैकार्थबोधकत्वं दृश्यत इति चरमपर्वाभिप्रायेणोदाहरणद्वयं दर्शितम्। तस्मात्, "य एव लौकिकास्त एव वैदिकाः" इति लोकवेदाधिकरणन्यायेन वेदान्तवाक्येष्वपि पदद्वयावगतविशेषणा-परित्यागेनैवार्थः प्रतिपत्तव्य इत्याह **एवं वेदान्ते**ति। अन्योन्यसमवायप्रसङ्गं परिहरति **न चे**ति। अरुणाधि-करणे विस्तरेण परिहारो वक्ष्यत इति अत्र संक्षिप्तः। न हि, यथाऽनुपपत्तिः स्यात् तथा वक्तव्यमिति भावः। युगपदभिधानं हृदि निधाय **सर्वैर्विशेषणैः स्वरूपमेव विशेष्य**मित्युक्तम्।

सर्वविशेषणैः स्वरूपस्य विशेष्यत्वेऽनुगुणं सामानाधिकरण्यलक्षणमित्याह **तथा ही**ति। न हि विशेषणान्तरविशिष्टाकारे विशेषणान्तरान्वयप्रतिपादनं सामानाधिकरण्यमित्युक्तमित्यर्थः। सामानाधिकरण्य-लक्षणग्रन्थं विवृणोति **अन्वयेन निवृत्त्या वे**ति। अन्वयरूपार्थस्य व्यावृत्तिरूपार्थत्वं न कल्प्यम्, यथाव्युत्पत्ति अन्वयमुखेन व्यावृत्तिमुखेन वा वस्तुनः पदान्तरप्रतिपाद्याकारादाकारान्तरयुक्तताप्रतिपादनं समानाधिकरणपदसमुदायकार्यमित्यर्थः। तत्रोदाहरति **यथे**ति। अन्वयमुखेनानेकप्रवृत्तिनिमित्तवैशिष्ट्यो-दाहरणं **श्यामो युवे**ति। व्यतिरेकमुखेनानेकाकारान्वयोदाहरणम् **अदीन** इत्यादि। **दीनत्वम्**—अभास्वरमनस्कत्वम्। **कृपणत्वम्—निर्धनत्वम्**। अत्रायमर्थः—क्रमेणाभिधाने, व्यधिकरणवाक्येष्वपि करणकारकविशिष्टेऽधिकरणकारकान्वयः स्यात्, तद्विशिष्टे इतरकारकान्वयो वा प्रसजेदिति अन्योन्य-विशेषणविशेष्यभावचोद्यं व्यधिकरणवाक्येऽपि समानम्। तत्र यः परिहारः, स एवात्रापि। तथापि—

"पदजातं श्रुतं सर्वं स्मारितानन्वितार्थकम्। न्यायसंपादितव्यक्ति पश्चात् वाक्यार्थबोधकम्॥"

इत्युक्तप्रकारेण स्मरणदशायां सर्वैः पदैः पृथक् स्वार्थस्मरणान्न विशेषणानामन्योन्यसमवायप्रसङ्गः। परामर्शदशायां च, उपपन्नं भवति यथा, तथा परामर्शान्नायं प्रसङ्गः। पश्चाद्युगपत् सर्वैः पदैर्वाक्यार्थबोधनान्न मिथस्समवायप्रसङ्गः। तस्मात् समानाधिकरणपदैर्युगपत् तत्तत्प्रवृत्तिनिमित्तविशिष्टैकविशेष्यप्रतिपादनेन क्रमाभावान्नान्योन्यसमवाय इति। **सर्वैर्विशेषणैः स्वरूपमेव विशेष्य**मिति ग्रन्थे अयमर्थोऽभिप्रेतः। अत्र सामानाधिकरण्यलक्षणग्रन्थोपादानेन अन्यदपि चोद्यं परिहृतं भवति—युगपदभिधाने विशिष्टयोरैक्यं समानविभक्तिः प्रतिपादयतीति विशेष्यै(शिष्टै)क्यवत् विशेषणैक्यमपि स्यादिति चोद्यम्। अत्र

**यत्र त्वेकस्मिन् वस्तुनि समन्वयायोग्यं विशेषणद्वयं समानाधिकरणपदनिर्दिष्टम्, तत्राप्यन्यतरत् पदममुख्यवृत्तमाश्रीयते, न द्वयम्; यथा 'गौर्वाही(ह्ली)कः' इति। नीलोत्पलादिषु तु विशेषणद्वयान्वयाविरोधादेकमेवोभयविशिष्टं प्रतिपाद्यते॥** ब

**अथ मनुषे—एकविशेषणप्रतिसंन्धित्वेन निरूप्यमाणं विशेषणान्तरप्रतिसंन्धित्वात् विलक्षणमिति घटपटयोरिवैकविभक्तिनिर्देशेऽप्यैक्यप्रतिपादनासंभवात् समानाधिकरणशब्दस्य न विशिष्ट-**

---

परिहारः, 'एकस्मिन्नर्थे वृत्तिः सामानाधिकरण्यम्' इति समानविभक्त्या विशेष्यस्यैवैक्यप्रतिपादनान्न विशेषणैक्यमिति। ननु विशेषणे विशेष्ये चाविशेषेण प्रातिपदिकेनावगते सति समानविभक्तिर्विशेष्यमात्रैक्यपरा, न तु विशेषणैक्यपरेति किं नियामकमिति चेत्—समानविभक्तिरैक्यबोधिका, न तु भेदबोधिकेति किं नियामकम्? व्युत्पत्तिरिति चेत्—साऽत्रापि तुल्या। किञ्च पदान्तरासमानाधिकृते घट इति पदे प्रयुक्ते तत्स्था विभक्तिः प्रातिपदिकावगतानां विशेषणविशेष्यतत्सम्बन्धानामैक्यं न प्रतिपादयति, विशेष्यमात्रैक्यमेव प्रतिपादयतीति किं नियामकम्॥ प्रत्यक्षमूला हि व्युत्पत्तिः; प्रत्यक्षञ्च विशेष्यमात्रैक्यं दर्शयति; न तु विशेषणविशेष्यतत्सम्बन्धानामैक्यम्। अतः प्रत्यक्षमूला व्युत्पत्तिर्नियामिकेति चेत्—सैवात्रापि नियामिकेति तुल्यमिति। एवं सर्वत्र व्युत्पत्तिसिद्धोऽर्थ एव स्वीकार्यश्चेत्, न क्वचिदपि वृत्त्यन्तरकल्पनं व्युत्पत्त्यन्तरकल्पनं वा स्यादित्यत्राह **यत्र त्विति**। **विशेषणद्वयमिति** त्रित्वादेरप्युपलक्षणम्। व्युत्पत्तिसिद्धार्थस्वीकार एव सर्वत्र स्वतः प्राप्तः। तस्य प्रमाणविरोधादन्वयायोग्यत्वे सति वृत्त्यन्तरकल्पनं प्राप्तम्। तदसंभवे व्युत्पत्त्यन्तरकल्पनम्। गोशब्दस्य किरणवाचित्वे वृत्त्यन्तराभावाद्धि शक्तिकल्पनम्। यदा वृत्त्यन्तरकल्पनम्, तदानीमप्यन्यतरपदस्यामुख्यत्वकल्पनम्, तावतैव विरोधशमनात्। न पुनस्सर्वेषां पदानाम्; तात्पर्यनिश्चायकाभावप्रसङ्गात्। गौर्वाह्ली(ही)क इति प्रयोगे गोपदस्यैव ह्यमुख्यत्वम्; न तु वाह्ली(ही)कपदस्यापि। अन्यतरपदस्य वृत्त्यन्तरकल्पनेऽपि न निर्विशेषवस्तुपरत्वम्; मुख्यवृत्त्युपनीतविशेषणानन्वयेऽपि वृत्त्यन्तरोपनीतविशेषणान्वयादित्यभिप्रायः। नीलोत्पलादिवाक्येषु वृत्त्यन्तरकल्पनहेतुरेव नास्तीत्याह **नीलेति**।

विशेषणभेदेन विशेष्यभेदं शङ्कते **अथ मनुष** इति। **विशेषणप्रतिसम्बन्धित्वम्**—विशेषणविशिष्टता। **एकविशेषणप्रतिसम्बन्धित्वेन निरूप्यमाण**मिति भावप्रधाननिर्देशः[1]; निरूप्यमाणत्वं विवक्षितम्। एकविशेषणप्रतिसंबन्धित्वं विशेषणान्तरप्रतिसंबन्धित्वात् विलक्षणमित्यर्थः। यद्वा एकविशेषणप्रतिसम्बन्धित्वेन निरूप्यमाणं वस्तु विशेषणान्तरप्रतिसम्बन्धित्वाद्धेतोः तस्माद्विशेषणान्तरविशेष्यात् पदार्थाद्विलक्षणमित्यर्थः। विशेषणप्रतिसम्बन्धित्वभेदाद्विशेष्यस्वरूपभेदं निदर्शयति **घटपटयोरिवे**ति। यथा घटत्वविशिष्टतायाः पटत्वविशिष्टतायाश्च भेदेन तद्विशिष्टयोर्घटपटयोर्विशेष्ययोर्भेदः, तथा विशेषणान्तरान्वयस्य अन्यविशेषणान्वयस्य च भेदेन तद्विशेष्ययोश्च भेदः समानविभक्तिनिर्देशे सत्यप्यवर्जनीय इति सामानाधिकरण्यं न विशिष्टैक्यप्रतिपादनक्षममित्यर्थः। **न विशिष्टप्रतिपादनपरत्वमिति**। विशेषणान्वयप्रतीतेरवर्जनीयत्वेऽपि न तत्र तात्पर्यमिति भावः। विशेषणत्यागे तत्प्रतिसंबन्धि

---

1 यथाश्रुतोपपत्तये विलक्षणमिति पदस्यार्थे वैलक्षण्यमादृतं भाष्यार्थदर्पणे।

प्रतिपादनपरत्वम्; अपि तु विशेषणमुखेन स्वरूपमुपस्थाप्य तदैक्यप्रतिपादनपरत्वमेवेति—

स्यादेतदेवम्, यदि विशेषणद्वयप्रतिसंबन्धित्वमात्रमेवैक्यं निरुन्ध्यात्। न चैतदस्ति; एकस्मिन् धर्मिण्युपसंहर्तुमयोग्यधर्मद्वयविशिष्टत्वमेव ह्येकत्वं निरुणद्धि। अयोग्यता च प्रमाणान्तरसिद्धा घटत्वपटत्वयोः। 'नीलेमुत्पलम्' इत्यादिषु तु दण्डित्वकुण्डलित्ववत् रूपवत्त्वरसवत्त्वगन्धवत्त्वादिवच्च विरोधो नोपलभ्यते। न केवलमविरोध एव; प्रवृत्तिनिमित्तभेदेनैकार्थनिष्ठत्वरूपं सामानाधिकरण्यमुपपादयत्येव धर्मद्वयविशिष्टता(ताम्)। अन्यथा स्वरूपमात्रैक्ये अनेकपदप्रवृत्तौ निमित्ताभावात् सामानाधिकरण्यमेव न स्यात्। विशेषणानां स्वसंबन्धानादरेण वस्तुस्वरूपोपलक्षणपरत्वे(रूपत्वे) सति एकेनैव वस्तु उपलक्षितमिति उपलक्षणान्तरमनर्थकमेव; उपलक्षणान्तरोपलक्ष्याकारभेदाभ्युपगमे तेनाकारेण सविशेषत्वप्रसङ्गः।

---

विशेष्योपस्थापनायोगात् तदैक्यमपि दुष्प्रतिपादमित्यत्राह **अपि त्विति**। तात्पर्याविषयस्यापि विशेषणस्य परामर्शदशाप्रतीतिमात्रेण तद्विशेष्यप्रतीतिसिद्धेस्तदैक्यप्रतिपादनं संभवतीत्यर्थः। परिहरति **स्यादेत**दिति। यत्रायोग्यत्वमभ्युपगतम्, तत्रापि विशेषणत्वमेव ह्ययोग्यत्वे प्रयोजकम्; अतो नीलत्वादिविशेषणमपि विरुद्धं स्यादित्यत्राह **अयोग्यता चे**ति। **प्रमाणान्तरसिद्धे**ति। न पुनर्विशेषणत्वप्रयुक्तमयोग्यत्वमिति भावः। प्रमाणान्तरमपि घटत्वपटत्वयोर्भिन्नाधिकरणत्वलक्षणं विरोधमवगमयति। नीलत्वोत्पलत्वयोरपि स विरोधस्तुल्यः; षट्पदे कुमुदे च पृथग्दर्शनादित्यत्राह **नीलमुत्पलमित्यादिष्वि**ति। न केवलं भिन्नाश्रयत्वमात्रं विरोधः; अपि तु तन्नियमः। न च नीलत्वोत्पलत्वयोस्तादृशविरोधः; क्वचित् सहप्रतीतत्वादिति भावः। **दण्डित्वे**ति। दण्डादिकं [1]युतसिद्धम्। रूपादिकमयुतसिद्धम्। युतसिद्धत्वायुतसिद्धत्वादिविभागवत् विशेषणत्वमपि विरोधाप्रयोजकमिति भावः। यद्वा दण्डित्वादिकं परस्परपरिहारेण(रेऽपि) वर्तते। रूपं तु रसं परिहृत्य वर्तते। रसस्तु रूपं परिहृत्य न वर्तते। तत्र रूपापरिहारिणो रसस्य रूपस्य चाविरोधो दुरपह्नवः, क्वचित्सहोपलम्भात्। तथा परस्परपरिहारिणोरपि नीलत्वोत्पलत्वयोः क्वचित्सहोपलम्भादविरोध इत्यभिप्रायेणोदाहरणद्वयं दर्शितम्। अविरोधेऽपि विवक्षितैक्यानुपयोगाद्विशेषणाविवक्षेत्यत्राह **न केवल**मिति। [अ]पर्याययोः पदयोरेकार्थवृत्तौ निमित्तसापेक्षत्वात् तेन विना तत्र वृत्त्ययोगाच्चात्यन्तोपयोगात् विशेषणस्य विवक्षितत्वमित्यर्थः। उपपादकत्वमेव विपक्षे बाधदर्शनेन द्रढयति **अन्यथे**ति। **अन्यथा**—विशेषणत्यागे। उपलक्षणतया निमित्तत्वं स्यादित्यत्राह **विशेषणाना**मिति। **अनादरः**—तात्पर्याभावः। यथा उपलक्षणभूतायां शाखायां न तात्पर्यम्. अपि तु चन्द्र एव तात्पर्यम्, तद्वदित्यर्थः। ननूपलक्षणान्तरवैयर्थ्यं तवापि प्रसजेत्, एकस्मिन्नुपलक्ष्ये जन्माद्यनेकोपलक्षणाभ्युपगमादित्यत्राह **उपलक्षणान्तरे**ति। अस्माभिस्तु जन्मादिभिरुपलक्षणैरुपलक्ष्याः तदनुगुणज्ञानशक्त्याद्याकारभेदाः स्वीकृता इति न नैरर्थक्यमिति भावः। **तेनाकारेणे**ति। अन्ततो गत्वाऽप्यपरिवर्जनीयं सविशेषत्वम्। एवञ्च सति उपलक्ष्याकारान्तराभ्युपगमेन तस्योपलक्षणत्वाङ्गीकारादप्युपलक्षणतयाऽभिमतानामेव विशेषणत्वाङ्गीकारो वरमिति भावः। पूर्वं लक्षणाङ्गीकारपक्षेऽन्यतरपदामुख्यत्वादिदूषणान्युक्तानि। यत्तु वाच्ये प्रधानांशस्य प्रतिपादनान्न लक्षणेति—तत्रापि लक्षणा स्यादेव; द्वारभूतप्रवृत्तिनिमित्ताभावेन तद्द्वारकस्याभिधानस्यानुपपत्तेरिति। इदञ्च दूषणं **प्रवृत्तौ निमित्ताभावा**दिति भाष्येण फलितम्।

---

[1] यु-मिश्रणामिश्रणयोः। युतम्—अमिश्रितं—पृथक्सिद्धं युतसिद्धम्।

सोऽयं देवदत्त इत्यत्रापि लक्षणागन्धो न विद्यते, विरोधाभावात्। देशान्तरसंबन्धितयाऽतीतस्य संनिहितदेशसंबन्धितया वर्तमानत्वाविरोधात् । अत एव हि सोऽयमिति प्रत्यभिज्ञया कालद्वयसंबन्धिनो वस्तुन ऐक्यमुपपाद्यते वस्तुनः स्थिरत्ववादिभिः । अन्यथा प्रतीतिविरोधे सति सर्वेषां क्षणिकत्वमेव स्यात् । देशद्वयसंबन्धविरोधस्तु कालभेदेन परिह्रियते ॥

यतः समानाधिकरणपदानामनेकविशेषणविशिष्टैकार्थवाचित्वम्, अत एव "अरुणयैकहायन्या पिङ्गाक्ष्या सोमं क्रीणाति" इत्यारुण्यादिविशिष्टैकहायन्या क्रयः साध्यतया विधीयते ॥

---

अथोभयपदविशेषणाविवक्षायामपि सामानाधिकरण्यं सोऽयं देवदत्त इत्यादिषु दृश्यत इति यदुक्तम्, तत् प्रतिवक्ति **सोऽयमि**त्यादिना । **विरोधाभावात्**—मुख्यार्थभूतविशेषणद्वयसंबन्धे विरोधाभावात् । प्रथमं कालद्वयसंबन्धविरोधाभावमुपपादयति **देशान्तरे**ति । वस्तुविशेषणतया निर्दिष्टावपि देशान्तरसंबन्धसंनिहितदेशसंबन्धौ अतीतवर्तमानकालोपाधितया विवक्षितौ । इदञ्च कालोपाध्यन्तराणामुपलक्षणम् । **अतीतवर्तमान**शब्दौ अतीतवर्तमानकालसंबन्धिपरौ । **देशान्तरसंबन्धितयाऽतीतस्य**—देशान्तरसंबन्धाद्युपाध्यवच्छिन्नातीतकालसंबन्धिनः, संनिहितदेशसंबन्धाद्युपाधिमद्वर्तमानकालसंबन्धाविरोधादित्यर्थः । अतीतत्वञ्चान्यापेक्षया विवक्षितम्; न तूभयकालानुगतवस्त्वपेक्षया । एतदुक्तं भवति—एकस्य कालद्वयासंबन्धं वदतोऽतीतत्ववर्तमानत्वविरोधो विवक्षितः; स किं प्रध्वस्तस्य वर्तमानत्वविरोधो विवक्षितः? स नास्ति, प्रध्वंसानभ्युपगमात् । यदि अतीतोपाधिमत्कालसंबन्धिनो वर्तमानत्वविरोध उच्यते—तत् निरूप्यम्—किं स्वापेक्षयाऽतीतोपाधिमत्कालसंबन्धित्वम्, उतान्यापेक्षयाऽतीतोपाधिमत्कालसंबन्धित्वम्? । न प्रथमः, स्वापेक्षयाऽतीतोपाधिमत्कालसंबन्धित्वाभावात् घटादेः । न द्वितीयः, एकक्षणसंबन्धस्यापि विरोधप्रसङ्गात् । एकस्य वस्तुन एकोऽपि हि क्षणः स्वपाश्चात्ययत्किञ्चिदुपाध्यपेक्षयाऽतीतो भवति । अतोऽन्यापेक्षया अतीतोपाधिमत्कालसंबन्धिनो वर्तमानत्वमविरुद्धम् । एवमेकस्य स्वप्रागभावस्वध्वंसोपहितकालसंबन्धस्यैव विरुद्धत्वात् अन्यापेक्षयाऽतीतागाम्युपाधिमत्कालसंबन्धे तदभावाच्च स्वाभावानुपहितकालद्वयसंबन्ध एकस्य वस्तुन उपपन्न इति । युक्त्यन्तरञ्चाह **अत एवे**ति । **अत एव**—कालद्वयसंबन्धाविरोधादेव । **उपपाद्यते**—सौगतान् प्रतीति शेषः । सौगतमतनिरासकस्य कालद्वयसंबन्धविरोधाभ्युपगमो विरुद्ध इत्यर्थः । तदेवोपपादयति **अन्यथे**ति । **अन्यथा**—कालद्वयसंबन्धविरोधेन । **प्रतीतिविरोधे**—वस्तुस्थिरत्वविषयप्रतीतिविरोधे । **सर्वेषां क्षणिकत्वमेव स्यादिति** । एकस्य देशद्वयकालद्वयान्वयविरोधे देशकालान्तरसाध्यफलसाधनविधानम् आत्मनित्यत्वोपदेशश्चाप्रमाणं स्यादित्यभिप्रायः ॥ देशद्वयसंबन्धविरोधं परिहरति **देशद्वये**ति । परिच्छिन्नस्य वस्तुनः स्वानवच्छिन्नदेशसंबन्धो यौगपद्य एव विरुध्यते; न तु क्रमभावित्वे इत्यर्थः ।

एवं लोकसिद्धस्य नीलोत्पलादिसमानाधिकरणपदप्रयोगस्य विशेषणविवक्षा स्थापिता । एवं प्रवृत्तिनिमित्तभेदेनैकार्थपर्यवसायित्वं समानाधिकरणपदानां वैदिकप्रयोगसिद्धं चेत्याह [1]**यत** इति । अनेन वस्तुमात्रपरत्वे **अरुणाधिकरण**सिद्धान्तन्यायविरोधश्चोक्तः स्यात् । **यतः अत एवे**ति लौकिकप्रयोगसिद्धवत्कारोक्त्या पूर्वोक्तस्वपक्षपरपक्षसाधनदूषणानि अरुणाधिकरणे(ण) विवक्षितानीति भावः[2] ॥

---

1 इत्याहेति । प्रकारान्तरेणावतरणं भाष्यार्थदर्पणे । 2 भाव इति । आविष्क्रियत इति शेषः ।

तदुक्तम्—"अर्थैकत्वे द्रव्यगुणयोरैककर्म्यान्नियमः स्यात्" इति।

तत्रैवं पूर्वपक्षी मन्यते—यद्यप्यरुणयेति पदमाकृतेरिव गुणस्यापि द्रव्यप्रकारतैकस्वभावत्वात् द्रव्यपर्यन्तमेवारुणिमानमभिदधाति, तथापि एकहायन्यन्वयनियमोऽरुणिम्नो न संभवति; एकहायन्या क्रीणाति; तच्चारुणयेत्यर्थद्वयविधानासंभवात्।

---

**अरुणयैकहायन्ये**त्यादिवाक्ये पदानां न सामानाधिकरण्यमित्यत्राह **तदुक्त**मिति। **अर्थैकत्व** इत्यादिसूत्रस्यान्यथा व्याख्यातत्वात् न सामानाधिकरण्यपरत्वमित्यत्राह **तत्रैव**मिति। **एव**मिति। अस्मदुक्तावेव पूर्वपक्षसिद्धान्तौ सूत्रकाराभिप्रेताविति भावः। किमत्र अरुणयेति पदोक्तमारुण्यमेकहायनीमात्रान्वयि, उत प्राकरणिकसर्वद्रव्यान्वयि इति प्रथमो विचारः; तत्रारुणयेति पदं किमेकहायन्येत्यादिपदैरेकवाक्यतया अन्वेति, उत भिन्नवाक्यतया स्थितमिति तदर्थविचारः। इदं विचारद्वयं **पूर्वमीमांसा**व्याख्यातृभिरभ्युपेतम्। अधिकस्तदर्थविचार उच्यते—किमरुणयेत्यादिपदानि व्यधिकरणानि, उत समानाधिकरणनि इति; पुनस्तदर्थविचारः—कारकविभक्त्यन्तत्वं किं सामानाधिकरण्यविरोधि, उताविरोधि इति। विरोधीति पूर्वपक्षः, अविरोधीति सिद्धान्तः। यदा विरोधि, तदा सामानाधिकरण्याभावेनैकवाक्यत्वाभावात् प्राकरणिकसर्वद्रव्यान्वयीति पूर्वपक्षे फलफलिभावः। अविरोधे सामानाधिकरण्येन वाक्यभेदाभावादेकहायन्यन्वयनियम इति सिद्धान्ते फलफलिभावः। अस्माकं तु पूर्वपक्षे सिद्धान्ते च अरुणयेति पदस्य द्रव्यपर्यन्तत्वमनुयायि। परेषां तु गुणमात्रपर्यन्तत्वमुभयत्रानुयायि। **आकृत्यधिकरणे** गुणवाचिशुक्लादिपदानां जातिवाचिगवादिशब्दवत् द्रव्यपर्यन्तत्वं निर्णीतम्। "आक्षिप्तद्रव्ये गुणजाती" इति हि **टीकाकारः**॥ तत्र चात्र च को विशेष इति चेत्—एकैकप्रातिपदिकार्थनिरूपण**माकृत्यधिकरणे**; अत्र त्वनेकप्रातिपदिकस्थसमानविभक्त्यर्थनिरूपणमिति भेदः॥ ननु गुणवाचिपदस्य द्रव्यपर्यन्तत्वे एतदधिकरणपूर्वपक्षोत्थानं न स्यात्। गुणमात्रपर्यन्तत्वे हि गुणस्य कारकतया निर्दिष्टस्य क(क्रि ?)यान्वयस्य द्रव्यान्वयस्य च एकवाक्येन बोधयितुमशक्यत्वेन वाक्यभेदात् प्राकरणिकसर्वद्रव्यान्वयीति पूर्वपक्षोत्थानं स्यात्। द्रव्यपर्यन्तत्वे त्वेकहायनीपदसामानाधिकरण्येन विशिष्टकरणैकत्वात् तस्य क्रयान्वयमात्रस्य एकवाक्येन बोधयितुं शक्यत्वेन वाक्यभेदाभावात् एकहायनीमात्रान्वयीति वाक्यभेदायत्तपूर्वपक्षानुदय इत्याशङ्क्याह **यद्यपी**ति। आकृतेरिव गुणस्यापि द्रव्यप्रकारतैकस्वभावत्वात् तद्वाचिशब्दो यद्यपि द्रव्यमात्रपर्यन्तः, तथाप्येकहायनीत्वाश्रयद्रव्यविशेषपर्यन्तत्वं न सिध्यतीत्यर्थः। कुत इत्यत्राह **एकहायन्या क्रीणाति, तच्चारुणयेत्यर्थद्वयविधानासंभवा**दिति। न च वाच्यम्—अरुणयेति इदं क्रीणातिनाऽन्वेति; द्रव्यविशेषाकाङ्क्षायां स विशेषः स्ववाक्यस्थैकहायनीपदोपस्थापितं द्रव्यं भवतीति; क्रयस्यैकहायन्यवरुद्धतयाऽरुणापदविभागे साकाङ्क्षत्वाभावात्; आकाङ्क्षोत्थापकचशब्दद्वन्द्वाद्यभावाच्च। अत आरुण्यस्य क्रयान्वयद्वारा नैकहायन्यन्वयः। स किं पदयोःसामानाधिकरण्येन उत वैयधिकरण्येन स्ववाक्यस्थतया। न तावत् पदद्वयसामानाधिकरण्येन एकहायन्यन्वयनियम आरुण्यस्य संभवति, कारकविभक्त्यन्तत्वप्रयुक्तानुपपत्त्या विशेषणविवक्षानुपपत्त्या च सामानाधिकरण्यायोगात्। तत्र यद्यपि विशेषणविवक्षायां विशेषणभेदेन विशेष्यभेदो जन्माद्यधिकरणन्यायेन परिहृतः; विशेषणैकयान्योन्यसमवायादयश्च पूर्वमेव परिहृताः—तथापि कारकविभक्त्यन्तत्वप्रयुक्तानुपपत्तिः स्थिता।

ततश्च अरुणयेति वाक्यं भित्त्वा प्रकरणविहितसर्वद्रव्यपर्यन्तमेवारुणिमानमविशेषेणाभिदधाति । अरुणयेति स्त्रीलिङ्गनिर्देशः प्रकरणविहितसर्वलिङ्गकद्रव्याणां प्रदर्शनार्थः । तस्मादेकहायन्यन्वयनियमोऽरुणिम्नो न स्यादिति ।"

अत्राभिधीयते—'अर्थैकत्वे द्रव्यगुणयोरैककर्म्यान्नियमः स्यात्' । "अरुणयैकहायन्या" इत्यारुण्यविशिष्टद्रव्यैकहायनीद्रव्यवाचिपदयोः सामानाधिकरण्येनार्थैकत्वे सिद्धे सति एकहायनीद्रव्यारुण्यगुणयोः अरुणयेति पदेनैव विशेषणविशेष्यभावेन संबन्धितयाऽभिहितयोः क्रयाख्यैककर्मान्वयाविरोधात् अरुणिम्नः क्रयसाधनभूतैकहायन्यन्वयनियमः स्यात् ॥

---

कारकविभक्तिर्हि क्रियान्वयबोधोपक्षीणत्वान्न परस्परान्वयबोधं जनयितुं शक्नोति । परस्परान्वयो(ये ?) हि विशेष्यैक्यम् । एवं विशेषणविवक्षाकारकविभक्त्यन्तत्वप्रयुक्तानुपपत्तिभिर्न सामानाधिकरण्यम् । अतोऽरुणयैकहायन्येति पदद्वयं पृथक्करणवाचीत्येतावत् सिद्धं कृत्वा, वैयधिकरण्ये सति स्ववाक्यस्थतया आरुण्यस्यैकहायन्यन्वयनियमेऽनुपपत्तिरुच्यते । एकहायन्या क्रीणातीति वाक्येन एकहायन्याः क्रयस्य च संबन्धः प्रतिपन्नः । तच्च क्रयणमरुणया कर्तव्यमिति वाक्येनैकहायनीसाध्यत्वविशिष्टरूपेण क्रयणमरुणद्रव्यसाध्यमिति प्रतिपन्नम् । तत्पदं ह्येकहायनीसाध्यत्वविशिष्टक्रयणोपस्थापकम् । तत्र द्रव्यांशस्य तत्साध्यक्रयणस्य च पूर्वप्रतिपन्नत्वेनानूदितत्वात् एकहायनीद्रव्यस्यारुणिमसंबन्ध एव विधेयः । एवञ्चैकहायन्या क्रयः साध्यः, तया चारुणया भवितव्यमित्युक्तं भवति । ततश्चैकहायन्याः क्रयसंबन्धोऽरुणिमसंबन्धश्चेत्यर्थद्वयस्यैकवाक्येन विधानासंभवादित्यर्थः । ततः किमित्यत्राह **ततश्चे**ति । वाक्यभेदे सति स्ववाक्यस्थत्वाभावादवान्तरप्रकरणेन वा महाप्रकरणेन वा द्रव्यविशेषनिश्चये वासोयजमानादिसर्वद्रव्याणां प्रकरणान्वयाविशेषात् क्रीणातीति वाक्यं भित्त्वा अरुणयेति पदं प्राकरणिकसर्वद्रव्यपर्यन्तं स्वार्थमरुणिमानमभिदधातीत्यर्थः । अरुणयेति स्त्रीलिङ्गनिर्देशः कथमित्यत्राह **अरुणयेती**ति । पूर्वपक्षमुपसंहरति **तस्मा**दिति ॥

**अत्राभिधीयत** इति । अस्मिन् पूर्वपक्षे प्राप्ते सूत्रकारः स्वसिद्धान्तमाहेत्यर्थः । सूत्रमुपादत्ते **अर्थैकत्व** इति । सूत्रस्याक्षरार्थमाह **अरुणये**त्यादिना । कयोरर्थैकत्वे इत्याकाङ्क्षायां शब्दस्यार्थप्रतिसम्बन्धित्वात् पदविशेषयोः संनिहितविषयवाक्यस्थत्वाच्च **आरुण्यविशिष्टद्रव्यैकहायनीद्रव्यवाचिपदयो**रित्यध्याहृतम् । पदद्वयसंनिधिज्ञापनार्थम् **अरुणयैकहायन्येती**त्युक्तम् । आरुण्यविशिष्टमेकहायनीत्वविशिष्टं च द्रव्यम्, तद्वाचिपदयोः सामानाधिकरण्येन तत्तद्विशेषणद्वारैकविशेष्यवृत्तित्वादर्थैकत्वे सिद्धे इत्यर्थः । **द्रव्यगुणयोरैककर्म्या**दित्येतत् व्याचष्टे **एकहायनीद्रव्यारुण्यगुणयो**रित्यादिना । गुणान्वयस्य क्रयान्वयस्य च वाक्यबोध्यत्वे वाक्यभेदप्रसङ्गो विरोध उक्तः, गुणान्वयस्य प्रातिपदिकसिद्धत्वान्न वाक्यबोध्यत्वम्, नार्थसिद्धत्वञ्च[1] । अतः क्रयान्वयबोधनमेव वाक्यकृत्यमित्यभिप्रायेणा**रुणयेतिपदेनैवे**त्युक्तम् । **क्रयाख्यैककर्मान्वयाविरोधा**दिति । वाक्यभेदप्रसङ्गरूपविरोधाभावादित्यर्थः । **नियमः स्या**दित्येतद्व्याचष्टे **अरुणिम्न** इत्यादि[2] । सर्वद्रव्यसाधारणप्रकरणानपेक्षत्वाद्वाक्यस्थतयैव नियमसिद्धिरित्यर्थः । अत्र गुणद्रव्ययोर्विशेषणविशेष्यभावः प्रातिपदिकावसेयः, विशेष्यैक्यं सामानाधिकरण्यावसेयम्, क्रयान्वयो वाक्यावसेय इति वाक्यस्य क्रयान्वयबोधनमेव

---

1 अरुणपदस्य गुणमात्रार्थकत्वेऽपि गुणस्य क्रयान्वयः द्रव्यद्वारमन्तरा नेति अर्थाद्द्रव्यान्वयसिद्धिरिति मीमांसकोक्तश्च नेत्यर्थः । 2 इत्यादीत्येतत् व्याख्यानरूपशब्दप्रयोगक्रियाविशेषणम्

**यद्येकहायन्याः क्रयसंबन्धवत् अरुणिमसंबन्धोऽपि वाक्यावसेयः स्यात्, तदा वाक्यस्यार्थ-द्वयविधानं स्यात्। न चैतदस्ति, अरुणयेति पदेनैवारुणिमविशिष्टद्रव्यमभिहितम्। एकहायनीपद-सामानाधिकरण्येन तस्यैकहायनीत्वमात्रमवगम्यते, न गुणसंबन्धः। विशिष्टद्रव्यैक्यमेव हि सामानाधिकरण्यस्यार्थः। 'भिन्नप्रवृत्तिनिमित्तानां शब्दानामेकस्मिन्नर्थे वृत्तिः सामानाधिकरण्यम्' इति हि सामानाधिकरण्यलक्षणम्।**

**अत एव हि 'रक्तःपटो भवति' इत्यादिष्वैकार्थ्यादेकवाक्यत्वम्। पटस्य भवनक्रियासंबन्धे हि**

---

कृत्यम्। तस्मादेकस्मिन् वाक्येऽर्थद्वयविधानप्रसङ्गाभावात्[1] वाक्यभेदाभावेनारुण्यं न प्राकरणिकसर्वद्रव्यान्वयि, अपि त्वेकहायनीमात्रान्वयीति सूत्रार्थः। वैयधिकरण्येन पदयोरर्थभेद इति पूर्वपक्षे प्राप्ते **अर्थैकत्व** इत्युक्तम्। द्रव्यगुणयोः क्रयान्वये द्वारद्वारिभावेन विना तदयोगाद् द्वारान्वयद्वार्यन्वयरूपार्थयोर्भिन्नत्वात् वाक्यभेदप्रसङ्ग-रूपविरोधः स्यादिति शङ्कायाम् **ऐककर्म्या**दित्युक्तम्। एकहायन्यन्वयानियम इति पूर्वपक्षे **नियमः स्या**दित्युक्तमिति ॥ अत्र गुणसंबन्धः प्रातिपदिकावसेयोऽस्तु; ततः किं वाक्यभेदायत्तानियमपरिहारस्येति शङ्कायां सूत्राक्षरयोजनायां सङ्ग्रहेणोक्तमर्थं विवृणोति **यदी**त्यादिना। किमारुण्यस्य द्रव्यमात्रान्वये वा द्रव्यविशेषान्वये वा वाक्यबोध्ये तद्भेद उच्यते इति विकल्पे, द्रव्यमात्रान्वयस्य प्रातिपदिकावसेयत्वमाह **अरुणयेती**ति। यदि गुणगुणिसंबन्धः प्रातिपदिकावसेयः, तर्हि सामानाधिकरण्यस्य किं कृत्यमित्यपेक्षां शमयन् द्वितीयं शिरः प्रतिवक्ति **एकहायनीपदे**ति। **तस्यैकहायनीत्वमात्रम्**—अरुणिमविशिष्टद्रव्य-स्यैकहायनीत्वाश्रयत्वम्; विशेष्यैक्यमित्यर्थः। अनेन आकृत्यधिकरणारुणाधिकरणयोः प्रतिपाद्यभेदश्चोक्तो भवति। प्रातिपदिकस्य धर्मिपर्यन्तत्वम**आकृत्यधिकरणार्थः**, अनेकप्रातिपदिकस्यसमानविभक्तेर्विशेष्यैक्यपरत्व-प्रतिपादक**मरुणाधिकरण**मिति कथं गुणसंबन्धो न सामानाधिकरण्यावसेय इत्यत्राह **विशिष्ट-द्रव्यैक्यमेव हि सामानाधिकरण्यस्यार्थ** इति। विशिष्टैक्यमित्युक्ते विशेषणांशस्यैक्यं मा भूदिति **विशिष्टद्रव्यैक्य**मित्युक्तम्। द्रव्यशब्देन विशेष्यांशो विवक्षितः। एतदुपपादकत्वेन सामानाधि-करण्यलक्षणग्रन्थमाह **भिन्ने**ति। न हि विशेषणविशेष्यवाचिनोः पदयोः विशेषणविशेष्यभावसंबन्धे वृत्तिः सामानाधिकरण्यमित्युक्तमित्यर्थः। एवं प्रातिपदिकेन गुणान्वयः, समानविभक्त्या परस्परान्वयः, वाक्येन क्रयान्वयश्च बोध्यत इति कृत्यत्रयमुक्तम्। एतत् परैर[2]भ्युपेतमित्याह **अत एवे**ति। किञ्च द्रव्यपर्यन्ताभिधानेऽप्येकहायनीपदेन वाक्यस्य निराकाङ्क्षत्वादरुणयेति पदं न तत्रान्वेतीति **शङ्का च** परिहृता भवति। **अर्थवादाधिकरणे**ऽर्थवादनैरपेक्ष्येण विधेरेव प्रवर्तकत्वात् विधिवाक्येनार्थवादस्य नैकवाक्यत्वमिति **शङ्कायाम्**, अर्थवादस्य श्रूयमाणत्वात् तत्रापि विधेराकाङ्क्षाऽस्तीति कल्प्यम्; तस्मादु-त्थापिताकाङ्क्षोऽर्थवादः विधिनैकवाक्यतयाऽन्वित इति निश्चितः। तत्र तैरेवोक्तमुदाहरणमिदम्, रक्तः पटो भवतीति। तत्र हि पटो भवतीत्येतावता निराकाङ्क्षत्वेऽपि वाक्यस्य, प्रयुक्तं रक्तपदं कीदृशः पट इत्युत्थापिताकाङ्क्षमन्वेति। एवमत्रापि अरुणयेतिपदं श्रूयमाणमुत्थापिताकाङ्क्षत्वादेकवाक्यतया-ऽन्वितमिति भावः। **अत एव**—कृत्यत्रयस्यापि यथोक्तप्रकारत्वादेव। रक्तः पटो भवतीति वाक्ये **यथोक्तप्रकारेण** कृत्यत्रयं दर्शयति **पटस्ये**ति। रक्तः पट इत्यादिवाक्ये विशेषणस्यैकत्वात् तदुत्थापि-

---

**1 विशेषणानेकत्वेपि नानाविशेषणविशिष्टरूपैकार्थस्य विध्यन्वयात् पृथक्पृथगनन्व-यादिति भावः। 2 परैः—मीमांसकैः। तत् उपरि विशदयति।**

वाक्यव्यापारः। रागसंबन्धस्तु रक्तपदेनैवाभिहितः। रागसंबन्धिद्रव्यं पट इत्येतावन्मात्रं सामानाधिकरण्यावसेयम्। एवमेकेन गुणेन द्वाभ्यां बहुभिर्वा, तेन तेन पदेन समस्तेन व्यस्तेन वा विशिष्टमुपस्थाप्य सामानाधिकरण्येन सर्वविशेषणविशिष्टोऽर्थ एक इति ज्ञापयित्वा तस्य क्रियासंबन्धाभिधानमविरुद्धम्, 'देवदत्तः श्यामो युवा लोहिताक्षः दण्डी कुण्डली तिष्ठति; शुक्लेन वाससा यवनिकां संपादयेत्; नीलमुत्पलमानय; नीलोत्पलमानय; गामानय शुक्लां शोभनाक्षीम्'; "अग्नये पथिकृते पुरोडाशमष्टाकपालं निर्वपेत्" इति। एवम् 'अरुणयैकहायन्या

---

ताकाङ्क्षमन्वेति। बहूनि विशेषणानि समस्तपदोक्तानि चेत्, अन्वितानि स्युः; न तु व्यस्तपदोक्तानि; अत्र तु पदानि व्यस्तानि। तत्र प्रथमान्तत्वात् सामानाधिकरण्यम्; अत्र तु पदानि कारकविभक्त्यन्तानि। तस्मान्नात्र सामानाधिकरण्यमिति शङ्कात्रयमभिप्रेत्याह **एवमेकेने**ति। **पदेन समस्तेन व्यस्तेन वे**ति। कारकविभक्त्यन्तेन प्रथमान्तेन वेति चात्राभिप्रेतम्। तत्र प्रथमान्तबहुविशेषणान्वये उदाहरणमाह **देवदत्त** इति। **देवदत्तः श्याम** इत्यादिकमुदाहरतोऽयं भावः—रक्तः पट इति पदद्वयमचिद्वाचकम्, अरुणयेतिपदं चेतनवाचकमिति वैषम्यं यथा न प्रयोजकम्, तथा प्रथमान्तत्वकारकविभक्त्यन्तत्ववैषम्यमप्यप्रयोजकमिति। अन्तरङ्गबहिरङ्गविशेषणे अप्येवमित्यभिप्रायेण **दण्डी कुण्डली**त्युक्तम्। कारकविभक्त्यन्तैकपदान्वयोदाहरणमाह **शुक्लेन वाससे**ति। कर्मकारकमुदाहरति **नीलमुत्पलमि**ति। समस्तोदाहरणमाह **नीलोत्पलमि**ति। कारकविभक्त्यन्तानेकपदान्वयोदाहरणमाह **गामि**ति। सम्प्रदानकारकविषयं वैदिकं चोदाहरणमाह **अग्नय** इति। **पुरोडाशमष्टाकपाल**मिति कर्मकारकमपि सिद्धम्। एवमरुणयेत्यादिवाक्येऽपि तुल्यमित्याह **एवमि**ति।

ननु कारकविभक्तेः क्रियान्वयबोधोपक्षीणत्वान्न परस्परान्वयबोधकत्वम्॥ उच्यते। कारकविभक्तिः क्रियान्वयबोधिका स्यात्। किमत्रायोगव्यवच्छेद एव उतान्ययोगव्यवच्छेदश्च। अयोगव्यवच्छेदमात्रं न विरुद्धम्। अन्ययोगव्यवच्छेदश्चेत्—तर्हि क्रियान्वयबोधोपक्षीणा कारकविभक्तिः 'पशुना यजेत' इत्यादिषु सङ्ख्यान्वयमपि न बोधयेत्॥ कारकविभक्तित्वाकारात् क्रियान्वयबोधनम्, एकवचनत्वद्विवचनत्वाकारात् सङ्ख्यान्वयबोधनमित्याकारभेदादविरोध इति चेत्—समानविभक्तित्वाकारविशेषेण तद्वत् परस्परान्वयमपि बोधयेत्॥ नन्वेकपदस्था कारकविभक्तिर्युगपत् सङ्ख्यान्वयं क्रियान्वयञ्च बोधयतीति तुल्यबलत्वान्नान्योन्यासहत्वम्। परस्परान्वयस्तु पदान्तरपरामर्शसापेक्ष इति विलम्बितत्वात् स बाधित इति चेत्—किं विलम्बितत्वाविलम्बितत्वमात्रमेव प्राबल्यदौर्बल्यहेतुः? तर्हि प्रत्यक्षमेकमेव प्रमाणम्; अन्यद्दुर्बलं स्यात्; तत्सापेक्षत्वेन विलम्बितत्वात्। तस्माद्विजयी लोकायतिकः। किञ्च श्रुतिरेव प्रमाणम्, न स्मृतिः, विलम्बात्। श्रुतिलिङ्गादिष्वपि श्रुतिरेव प्रमाणम्, न लिङ्गादि; विलम्बादेव। प्रथमाविभक्त्यन्तेषु चैकपदस्थैकवचनादिना प्रागेव सङ्ख्यान्वयप्रतीतेः, पदान्तरस्थसमानविभक्तिपरामर्शसापेक्षसामानाधिकरण्यासिद्धिः स्यात्। इहापि द्रव्यगुणयोः पराभिमत आर्थः परस्परान्वयो न सिध्येत्; शब्दतः प्रथमावगतक्रियान्वयापेक्षया तस्य आर्थत्वेन चरमावगतत्वाभ्युपगमात्॥ नैवम्; विरोधे सति हि विलम्बिताविलम्बितयोर्बाध्यबाधकभाव इति चेत्—तर्ह्यत्रापि क्रियान्वयसङ्ख्यान्वयवत् परस्परान्वय-

**पिङ्गाक्ष्या सोमं क्रीणाति" इति । एतदुक्तं भवति—यथा 'काष्ठैः स्थाल्यामोदनं पचेत्' इत्यनेककारकविशिष्टैका क्रिया युगपत् प्रतीयते ; तथा समानाधिकरणपदसंघाताभिहितमेकैकं कारकं तत्तत्कारकप्रतिपत्तिवेलायामेवानेकविशेषणविशिष्टं युगपत्प्रतिपन्नं क्रियायामन्वेतीति**

---

स्यापि विरोधाभावात् विलम्बाविलम्बावकिञ्चित्करौ । अत्राविरोधः परैरभ्युपेतः; पश्चादार्थान्वयः सिध्यतीति सिद्धान्तोक्तेः ॥ न केवलमविरोधमात्रात् परस्परान्वयसिद्धिः, प्रयोगस्य नियामकत्वात् कारकविभक्त्यन्तपदानां सङ्ख्यान्वयेन सह क्रियान्वयबोधने हि प्रयोगो दृश्यत इति चेत्—तथा परस्परान्वयबोधनमपि प्रयोगसिद्धमिति चरमयुक्त्यभिप्रायेण प्रथमान्तकारकविभक्त्यन्तबहूदाहरणमुदाहृतं **देवदत्तश्श्याम** इत्यादिकम् । यथैकवचनादीनामेकत्वादिसङ्ख्यान्वयबोधकत्वं प्रथमान्तेषु कारकविभक्त्यन्तेषु चाविशिष्टमङ्गीक्रियते, उभयत्राविशेषेण प्रयोगदर्शनात्—समानविभक्तेरप्यविरुद्धार्थैक्यबोधकत्वमुभयत्राविशेषेण प्रयोगदर्शनादङ्गीकरणीयमित्यर्थः । एवं कारकविभक्तिप्रयुक्तानुपपत्तिः परिहृता । तथा विशेषणविवक्षायां यत् अनुपपत्तित्रयम्, तत्र विशेषणभेदे विशेष्यभेदो जन्माद्यधिकरणन्यायेन परिहृत इति नात्र विवक्षितः, विशेषणैक्यपरिहारः प्रागुक्तोऽत्रानुसन्धेयः । अथान्योन्यसमवायः परिहर्तव्यः, **विशिष्टमुपस्थाप्य', 'विशिष्टोऽर्थ एक इति ज्ञापयित्वा'** इति ल्यबन्त-क्त्वान्तनिर्देशेन कृत्यत्रयस्य क्रमभावित्वं प्रतीयते ततश्चान्योन्यसमवायप्रसङ्ग[1] इति । तद् अपनोद्यम् ; करणकारकविभक्त्यन्तसामानाधिकरण्यं वदतः सूत्रकारस्य तावन्मात्राभिप्रायत्वशङ्का च निवार्या ; अतस्तदर्थमाह **एतदुक्तं भवती**ति । "पदजातं श्रुतं सर्वं सारितानन्वितार्थकम्" इति न्यायेन युगपद्बोधनात् क्रमभावित्वाभावान्न विशेषणान्तरविशिष्टे विशेषणान्तरान्वयविधानेन विशेषणानामन्योन्यसमवायप्रसङ्ग इत्यर्थः । [2]यौगपद्यकथनेन पूर्वं ल्यबन्तनिर्देशः कृत्यत्रयभेदनिर्वाहकपरामर्शक्रमप्रकटनार्थमित्युक्तं भवति । **तत्तत्कारकप्रतिपत्तिवेलाया**मित्य-

---

1 विशिष्टोऽर्थ एक इत्यस्य आरुण्यविशिष्टोऽर्थ एकहायनीत्वविशिष्ट इत्यर्थश्चेत्—आरुण्ये एकहायनत्वसमवायप्रसंगः ; एवं विपरिवर्तोऽपीत्यर्थः ।

2 यौगपद्येति । भाष्ये युगपत्प्रतीयत इति वाक्येन कर्मकरणाधिकरणादिसर्वकारकाणां क्रियान्वये यौगपद्यमुक्तम् । न तु समानाधिकरणपदोपात्तविशेषणविशेष्ययोः क्रियान्वये यौगपद्यम् । नानाविशेषणविशिष्टेऽर्थे समानाधिकरणपदकदम्बज्ञापिते सति तस्य पश्चात् क्रियान्वयः । तत्र विशेष्येऽनेकविशेषणवैशिष्ट्यप्रतीतिर्युगपदित्ययमर्थः युगपत्प्रतिपन्नमिति भाष्येणोक्तः । अतः पदजन्यपदार्थस्मृत्यनन्तरं समानाधिकरणपदबलात् समस्तपद इव सर्वविशेषणविशिष्टैकार्थज्ञप्तिः ततस्तादृशस्य क्रियान्वयबोध इति क्रमस्य ल्यप्क्त्वाप्रत्ययावगतस्य, प्रकृतभाष्यावगतस्य यौगपद्यस्य च भिन्नविषयत्वान्न विरोधः । अत इयं टीका विचार्या । न हि प्रतिपन्नं विशेषणं विशेष्यश्च युगपत् क्रियायामन्वेतीति भाष्येणोक्तम् ; युगपत्प्रतिपन्नमित्येव टीकायामनुवादात् । न च-समानाधिकरणपदान्तरपरामर्शसापेक्षा ऐक्यप्रतीतिः ; कारकप्रतीतिस्तु इतरनिरपेक्षं विभक्तिश्रवण एव भवतीति अरुणाकारकस्यैकहायनीकारकस्य च पृथक्पृथगेव क्रियान्वय इति वाच्यम् ; विभक्तेस्तृतीयादेः नानाकारकाकारकसाधारण्यात् विशेषनिश्चयस्य क्रियापदसापेक्षत्वात् । विशेषणस्य प्रातिपदिकोक्तस्य विभक्त्युपात्तकारकाकांक्षापेक्षया विशेष्याकांक्षाया एव प्राग्भावितया विशिष्टैकार्थप्रतीतेः पूर्वभावित्वौचित्याच्च । अतो भाष्योक्तक्रमः स्मृति-विशिष्टार्थ प्रतीति-क्रियान्वयबोधानां नानुपपन्न इति । टीका तु व्यवहारात् व्युत्पत्तौ अज्ञातपदादिविभागस्य पुंसः समुदायजन्यबोधरीतिशीलनेन ।

न कश्चिद्विरोधः, 'खादिरैः शुष्कैः काष्ठैः समपरिमाणे भाण्डे पायसं शाल्योदनं समर्थः पाचकः पचेत्' इत्यादिष्विति।

यत्तु(यत्तूक्तम्) उपात्तद्रव्यकवाक्यस्थगुणशब्दः केवलगुणाभिधायीति अरुणयेति पदेन केवलगुणस्यैवाभिधानमिति। तन्नोपपद्यते— लोकवेदयोर्द्रव्यवाचिपदसमानाधिकरणस्य गुणवाचिनः क्वचिदपि केवलगुणाभिधानादर्शनात्। उपात्तद्रव्यकवाक्यस्थं गुणपदं केवलगुणाभिधायीत्यप्यसङ्गतम्; 'पटः शुक्लः' इत्यादिषु उपात्तद्रव्यकेऽपि गुणविशिष्टस्यैवाभिधानात्।

---

नेनेदं सूत्रं सर्वकारकविभक्त्यन्तपदप्रदर्शनार्थमिति दर्शितम्। इत्यादिषु न कश्चिद्विरोध इत्यन्वयः। विरोधोऽन्योन्यसमवायादिर्विवक्षितः। युगपत्प्रतिपन्नमित्यनेन तत्र परिहारो विवक्षितः। यथा काष्ठैरित्यादिकं वदता समानाधिकरणपदविषयचोद्यपरिहाराः व्यधिकरणवाक्येऽपि समाना इति प्रतिबन्दी अभिप्रेता। अयमर्थः—व्यधिकरणानि पदानि तत्तत्कारकविशिष्टां क्रियां किं युगपत् क्रमेण वा प्रतिपादयन्ति। यौगपद्ये, उद्देश्योपादेयविभागाभावप्रसंगः। अनेककारकविशिष्टक्रियैकत्वे विशेष्यक्रियैक्यवत् विशेषणभूतकारकैक्यमपि स्यात्। क्रमेण चेत्—कारकान्तरविशिष्टक्रियायां कारकान्तरान्वयविधानं स्यात्। तदा काष्ठस्थाल्यादेरन्योन्यसमवायप्रसङ्गेन काष्ठस्य स्थाली अधिकरणं स्थाल्याः काष्ठमधिकरणं (काष्ठं करणं ?) वा स्यात्॥ न तदस्ति। विशेष्यभूतक्रियाया एवैकत्वं वाक्यप्रतिपाद्यम्; न तु विशिष्टस्य। अतो न विशेषणभूतकारकैक्यप्रसङ्गः। सर्वकारकैः क्रियाया एव विशेष्यत्वेन नान्योन्यसमवायप्रसङ्ग इति चेत्—तथा समानविभक्तेर्विशेष्यांशमात्रैक्यपरत्वान्न विशेषणैक्यम्। प्रत्यक्षमूला व्युत्पत्तिरत्र नियामिका। यथा पट इत्येकपदप्रयोगे तत्स्थमेकवचनं न विशेषणविशेष्यैक्यं प्रतिपादयति, किन्तु विशेष्यैक्यमेव। तत्र नियामिका व्युत्पत्तिः—इहापि तद्वत्। युगपत्[1] सर्वैर्विशेषणैरेकस्यैवार्थस्य विशेष्यत्वेन न विशेषणानामन्योन्यसमवायप्रसङ्गश्चेति। एवं सूत्रकाराभिप्रेतपूर्वपक्षराद्धान्तौ अभिहितौ॥

अथ परोक्तपूर्वपक्षराद्धान्तयोरनुयायिनमर्थं तत्तदसाधारणार्थं च व्युदस्यति यत्त्वित्यादिना। 'कृष्णो गच्छति', 'श्वेतमालभेत' इत्यादिषु गुणवाचिपदानां गुणिपर्यन्तत्वं तैरभ्युपेतमाकृत्यधिकरणन्यायात्। तत्रोपात्तद्रव्यकवाक्यस्थत्वं गुणवाचिपदानां गुणमात्रपर्यन्तत्वे प्रयोजकमभ्युपेतम्; पटस्य शुक्ल इत्यादिषु तथा दर्शनात्। पटः शुक्ल इत्यादिषु उपात्तद्रव्यकवाक्यस्थत्वेऽपि तदपवादकसामानाधिकरण्यात् गुणिपर्यन्ताभिधानमिति चाभ्युपेतम्। तत्र गुणमात्रपर्यन्तत्वे यत् प्रयोजकमुक्तम्, तदभ्युपगम्य प्रकृते गुणमात्रपर्यन्तत्वं दूषयति तन्नोपपद्यत इति। कुत इत्यत्राह लोकवेदयोरिति। कारकविभक्त्यन्तत्वस्य सामानाधिकरण्याविरोधित्वोपपादनमुपजीव्य इदं दूषितम्। गुणिपर्यन्तत्वापवादकमुपात्तद्रव्यकवाक्यस्थगुणवाचिपदत्वं यत्, तस्यापवादरूपसामानाधिकरण्यस्य अरुणयेत्यादिवाक्ये विद्यमानत्वोपपादनात् केवलगुणाभिधायित्वमयुक्तमित्यर्थः। एवं परोक्तप्रयोजकाभ्युपगमेन [2]तत्साध्यप्रयोज्यं गुणमात्रपर्यन्तत्वं दूषितम्। अथ तदुक्तं प्रयोजकं दूषयति उपात्तद्रव्यकेति। तत्र हेतुमाह पटश्शुक्ल इत्यादिष्विति।

---

1 एवं क्रमपक्षेऽपि दोषो नास्त्येव। अथाप्याह युगपदिति। 2 उपात्तद्रव्यकवाक्यस्थत्वरूपं यत् प्रयोजकम्, तेन हेतुना साध्यं तत्प्रयोज्यञ्च यत् गुणमात्रपरत्वम्, तत् दूषितमित्यर्थः।

'पटस्य शुक्लः' इत्यत्र शौक्ल्यविशिष्टपटाप्रतिपत्तिः असमानविभक्तिनिर्देशकृता ; न पुनरुपात्तद्रव्यकत्वकृता । तत्रैव 'पटस्य शुक्लो भागः' इत्यादिषु समानविभक्तिनिर्देशे शौक्ल्यविशिष्टद्रव्यं प्रतीयते ।

यत्पुनः क्रयस्यैकहायन्यवरुद्धतयाऽरुणिम्नः क्रयान्वयो न संभवतीति--तदपि विरोधिगुणरहितद्रव्यवाचिपदसमानाधिकरणगुणपदस्य तदाश्रयगुणाभिधानेन क्रियापदान्वयाविरोधादसङ्गतम् । राद्धान्ते च उक्तन्यायेनारुणिम्नः शाब्दे द्रव्यान्वये सिद्धे, द्रव्यगुणयोः क्रयसाधनत्वानुपपत्त्या अर्थात् परस्परान्वयः सिध्यतीत्यप्यसङ्गतम् । अतो यथोक्त एवार्थः ॥

---

गुणमात्रपर्यन्तत्वे गुणिपर्यन्तत्वेऽपि साधारणमुपात्तद्रव्यकवाक्यस्थगुणवाचित्वं गुणमात्रपर्यन्ततायाः प्रयोजकं न भवतीत्यर्थः । ननु न तस्य प्रयोजकत्वहानिः, अपवादेन हि क्वचित् गुण्यभिधानमित्यत्राह **पटस्येति** । असमानविभक्तिनिर्देशः प्रयोजक इत्यर्थः । **असमानविभक्तिनिर्देशः**—असमानाया विभक्तेर्निर्देशः । न समानविभक्तिनिर्देशाभावः ; श्वेतो यातीत्यादिष्वपि गुणमात्रपर्यन्तत्वप्रसङ्गात् । व्यभिचारिणः प्रयोजकत्वकल्पनं व्यभिचारस्थले तदपवादकल्पनं चायुक्तम् ; अव्यभिचारिप्रयोजकसद्भावादित्यभिप्रायः ॥ गुणमात्रपर्यन्तत्वे, नेदमपि प्रयोजकमसाधारणम्, पटस्य शुक्लो भाग इत्यसमानविभक्तिनिर्देशेऽपि गुणिपर्यन्तत्वादिति चेत्—तत्राह **तत्रैव पटस्येति** । अयमर्थः—पटशब्देन असमानविभक्तिनिर्देशेऽपि शुक्लशब्दस्य विशिष्यवाचिभागशब्देनासमानविभक्तिनिर्देशाभावान्न तस्य गुणमात्रपर्यन्तत्वे प्रयोजकत्वभङ्गः ; यथा त्वत्पक्षे गुणमात्रपरत्वापवादकाभिमतभागशब्दसामानाधिकरण्यात् [1]न तस्य धर्मिपर्यन्तत्वात् प्रयोजकत्वहानिरिति । किञ्च न केवलमुपात्तद्रव्यकवाक्यस्थताया व्यभिचार एव ; कल्पनागौरवमप्यस्ति परमते । 'श्वेतमालभेत' इत्यादिषु गुणवाचिपदस्य गुणिपर्यन्तत्वमुक्तम् । पटस्य शुक्ल इत्यादिषु तदपवादकत्वेन उपात्तद्रव्यकवाक्यस्थत्वमभ्युपेतम् । तस्याप्यपवादकत्वेन पटः शुक्ल इत्यादिषु सामानाधिकरण्यमुक्तमिति प्रयोजकत्रयकल्पनाऽस्ति । अस्मत्पक्षे तु 'श्वेतमालभेत, 'पटः शुक्लः' इत्यादिप्रयोगेषु अपृथक्सिद्धधर्मवाचित्वादेव गुणिपर्यन्तत्वं सिद्धम् ; पटस्य शुक्ल इत्यत्र असमानविभक्तिनिर्देशकृतं गुणपर्यन्तत्वमिति प्रयोजकद्वयमेवेति । इदमर्थसिद्धमिति न कल्पनागौरवं कण्ठोक्तम् ।

एवं परस्य पूर्वपक्षसिद्धान्तानुगतमरुणयेति पदस्य गुणमात्रपरत्वं निरस्तम् ; अथ पूर्वपक्षासाधारणार्थस्य स्वसिद्धान्तयुक्त्या परिहृतत्वं वक्तुमाह **यत्पुनरिति** । **एकहायन्यवरुद्धतया**—एकहायन्या निराकाङ्क्षत्वात् । विभागे साकाङ्क्षत्वे सत्येव ह्येकवाक्यत्वम् ; इह तदभावान्न क्रयान्वय इत्यर्थः । तस्य परिहृतत्वं दर्शयति **तदपीति** । नीलं शुक्लमित्यादिव्यावृत्त्यर्थं **विरोधिगुणरहित**शब्दप्रयोगः । गुणपदस्यैव गुणिपर्यन्तत्वेन गुणविशिष्टमेकं करणमिति अरुणिम्नो द्रव्यद्वारा क्रयान्वयात् क्रयान्वयासंभवोऽनुपपन्न इत्यर्थः । राद्धान्तासाधारणमर्थं दूषयति **राद्धान्ते चेति** । "संभवत्येकवाक्यत्वे वाक्यभेदश्च नेष्यते" इति न्यायेन वाक्यैकत्वे कथञ्चित् संभवति वाक्यभेदाश्रयणायोगात्, "गुणे द्रव्यव्यपेक्षे च द्रव्ये च गुणकाङ्क्षिणि" इति न्यायेन द्रव्यगुणयोः परस्परापेक्षत्वात् नष्टाश्वदग्धरथन्यायेनार्थादन्वय इति तद्राद्धान्तः । तदयुक्तम्, शाब्दान्वयसिद्धेरित्यर्थः । स्वोक्ताधिकरणार्थमुपसंहरति **अतो यथोक्त एवार्थ** इति ।

---

1 नेति । उत्सर्गस्यापवादव्यतिरिक्तविषयकत्वादिति भावः । शुक्लादिशब्दः स्वार्थगुणेऽन्वयिद्रव्यवाचिपदे सति गुणमात्रवाचीति नियमः । भागपदे सति पटस्येति पदं तत्रैवान्वेति, न शुक्ल इति उभयैर्वक्तव्यमिति ध्येयम् ।

**तस्मात् तत्त्वमस्यादिसामानाधिकरण्ये पदद्वयाभिहितविशेषणापरित्यागेनैवैक्यप्रतिपादनं वर्णनीयम् । तत्तु अनाद्यविद्योपहितानवधिकदुःखभागिनः शुद्ध्यशुद्ध्युभयावस्थात् चेतनादर्थान्तरभूतम् अशेषहेयप्रत्यनीकानवधिककल्याणगुणैकतानं परमात्मानमनभ्युपगच्छतो न संभवति ॥ अभ्युपगच्छतोऽपि समानाधिकरणपदानां यथावस्थितविशेषणविशिष्टैक्यप्रतिपादनपरत्वाश्रयणे त्वम्पदप्रतिपन्नसकलदोषभागित्वं परस्य प्रसज्येतेति चेत्—नैतदेवम्; त्वम्पदेनापि जीवान्तर्यामिणः परस्यैवाभिधानात् । एतदुक्तं भवति—**

---

किञ्च 'गुणे शुक्लादयः पुंसि' इति गुणपर्यन्तत्वे पुँल्लिङ्गतायाः प्राप्तत्वादरुणयेति [1]स्त्र्यन्तपदस्य गुणमात्रपरत्वं दुर्वचम् । किञ्च पूर्वपक्षश्चात्यन्ताभासः । भिन्नवाक्यमिति हि पूर्वः पक्षः । तथा सति अरुणयेति पदं नोपात्तद्रव्यकवाक्यस्थं भवति । उपात्तद्रव्यकवाक्यस्थत्वे सिद्धे हि गुणमात्रपर्यन्तत्वसिद्धिरिति ॥ वाक्यभेदेपि 'अरुणयैकहायन्या' इति प्रत्यासत्त्यतिशयादेकवाक्यतुल्यतया उपात्तद्रव्यकवाक्यस्थत्वमिति चेत्—संनिधिविशेषादेकवाक्यस्थत्वफलभूतगुणमात्रपर्यन्तत्वसिद्धिश्चेत्, तत एव एकवाक्यस्थताफलभूतैकहायन्यन्वयनियमोऽपि स्यादिति वाक्यभेदहेतुकस्य पूर्वपक्षस्यानुदय एव स्यादिति । राद्धान्तोऽपि दुस्स्थः ; एकहायन्या आरुण्येन च क्रयः साध्य इत्येकक्रियायाः करणद्वयसाकाङ्क्षत्वकरूपकस्य चशब्दस्य द्वन्द्वसमासस्य चाश्रवणात् । अत इमौ पूर्वपक्षराद्धान्तौ, अतिदुस्स्थतया,[2] सूत्रकाराभिमताविति वक्तुमयुक्तम् । अतोऽस्याधिकरणस्य यथोक्तावेव पूर्वपक्षराद्धान्तौ सूत्रकाराभिमतौ ॥

एवमस्तु ; ततः किं प्रस्तुतसामानाधिकरण्यस्येत्यत्राह **तस्मा**दिति । **तस्मात्**—सामानाधिकरण्यस्य अनेकविशेणविशिष्टैकार्थपरत्वस्य लोकवेदसिद्धत्वात् । ईदृशं सामानाधिकरण्यं परपक्षे न संभवति, पदद्वयावगतगुणहानादित्याह **तत्त्वि**ति । जीवब्रह्मभेदमनभ्युपगच्छतो न संभवतीति प्रतिज्ञाया उपपादनार्थम**नाद्यविद्ये**त्यादिकम् **अशेषहेयप्रत्यनीके**त्यादिकं च विशेषणमुभयत्र प्रवृत्तिनिमित्तफलतयोक्तम् । कर्मवश्यो निग्राह्योऽनुग्राह्यश्च जीवः निग्राहकोऽनुग्राहकश्च परात्मा भवितुं नार्हतीत्येषां विशेषणानामभिप्रायः । मुक्तिदशायामैक्यशङ्काव्युदासार्थं **शुद्ध्यशुद्ध्युभयावस्था**दित्युक्तम् । न हि निग्रहदशायां निग्रहकर्तुर्नरपतेरन्यः पुरुषोऽनुग्रहदशायामनुग्राह्योऽयमनुग्रहकृता तेन नृपेणाभिन्नो भवतीति भावः । स्वेतरवैलक्षण्यं तृणादेरप्यस्तीति तद्व्यावृत्त्यर्थमुभयलिङ्गत्वेन वैषम्यमुक्तम् **अशेषे**त्यादिना । निर्विशेषवादिन इत्येतावता पर्याप्तत्वेऽपि स्वपक्ष**मनभ्युपगच्छतो** दूषणवचनं कुदृष्टिपक्षत्रयेऽपि दूषणसाम्यज्ञापनार्थम् ॥ तच्छब्दावगतविशेषणाभ्युपगमवत् त्वंशब्दावगतविशेषणमभ्युपगन्तव्यम् ; तथा सति ब्रह्मणो दुःखित्वादिप्रसङ्ग इति शङ्कते **अभ्युपगच्छतो**ऽपीत्यादिना । परिहरति **नैत**दिति । कुत इत्यत्राह **त्वमि**ति । **एवे**ति । तत्पदप्रतिपन्नस्य जीवविलक्षणस्यैवेति भावः । जीववाचित्वेन व्युत्पन्नस्य पदस्य तदन्तर्यामिपरत्वं लाक्षणिकम् ; तत् कथं **परस्यैवाभिधाना**दित्युक्तमित्यत्राह **एतदुक्त**मिति । [3]द्वारद्वारिभावविपर्ययशङ्काव्युदासार्थोऽयमारम्भः । वेदव्युत्पत्तिसिद्धं सर्वशब्दानां परमात्म-

---

1 स्त्र्यन्तेति—स्त्रीप्रत्ययान्तेत्यर्थः ।

2 इति वक्तुमयुक्तम्—अतिदुःस्थतयेत्यन्वयार्थः ।

3 तत्पदस्यैव तत्सृज्यत्वपाल्यत्वसंहार्यत्वादिविशिष्टजीवार्थकत्वशंकाव्युदासार्थं इत्यर्थः ।

सच्छब्दाभिहितं निरस्तनिखिलदोषगन्धं सत्यसङ्कल्पत्वमिश्रानवधिकातिशयासङ्ख्येय-कल्याणगुणगणं समस्तकारणभूतं परं ब्रह्म 'बहु स्याम्' इति सङ्कल्प्य तेजोबन्नप्रमुखं कृत्स्नं जगत् सृष्ट्वा, तस्मिन् देवादिविचित्रसंस्थानसंस्थिते जगति चेतनं जीववर्गं स्वकर्मानुगुणेषु शरीरेष्वात्मतया प्रवेश्य, स्वयञ्च स्वेच्छयैव जीवान्तरात्मतयाऽनुप्रविश्य एवम्भूतेषु स्वपर्यन्तेषु देवाद्याकारेषु संघातेषु नामरूपे व्याकरोत्। एवं[स्व]रूपसंघातस्यैव

वाचित्वमप्युपपादयति **सच्छब्दे**त्यादिना। सामानाधिकरण्यबलात् तत्त्वम्पदावगतविशेषाः स्वीकार्याः। ब्रह्मणो निर्दोषत्वमङ्गलास्पदत्वादि श्रुत्यन्तरसिद्धञ्च। अतस्तदविरोधायान्तर्यामिपरत्वं युक्तमिति तत्त्वम्पद-सामानाधिकरण्यमुख्यत्वनिर्दोषत्वश्रुत्यन्यथानुपपत्त्यभिप्रायेण **निरस्तनिखिले**त्यादिविशेषणमुक्तम्। **सच्छब्दाभिहित**[1]मिति कारणवस्तुवाचिसच्छब्दः कारणत्वानुगुणगुणान्वितवस्तुपर इति भावः। **बहु स्यामिती**ति। यथा 'दर्शपूर्णमासाभ्यां स्वर्गकामो यजेत' इत्यत्र लिङ्वाच्येन ग्राहकेण परमापूर्वेण संनिधिस-माम्नातेषु पदार्थेष्वविशेषेण स्वशेषतया गृहीतेषु, तत्र प्रोक्षणावघातगोत्वादेः परमापूर्वं प्रति शेषत्वं व्रीहि-गवादिद्वारकम्, यागादेस्तु तच्छेषत्वमद्वारकं च कैश्चि[2]न्निश्चीयते—तथा, बहु स्यामिति ग्राहकग्रहणेन तेजःप्रभृतिसर्वनामरूपेषु सामान्येन परमात्मीयतयाऽवगतेषु तत्रानुप्रवेशपूर्वकनामरूपव्याकरणश्रुत्यादिभिः सद्वारक[3]मध्यवसीयत इत्यनुसन्धेयम्। यथा **उपबृंहणेषु** 'गुणवान्', 'तमेवङ्गुणसंपन्नम्' इत्यविशेषोक्तेषु भगवद्गुणेषु 'समः समविभक्ताङ्गः स्निग्धवर्णः' इत्युक्तानां स्निग्धवर्णत्वादीनां 'धर्मज्ञस्सत्यसन्धश्च' इत्युक्तानां सत्यसन्धत्वादीनाञ्च गुणानां दिव्यविग्रहद्वारकत्वमद्वारकत्वञ्च दृश्यते—तथेहापि ईश्वरशरीरभूतचिदचिद्द्वा-रकोऽद्वारकश्च गुणान्वयो यथाश्रुति स्वीकार्य इति भावः। **बहु स्या**मिति। बहुनामरूपभाक्भवेयमित्यर्थः। **तेजोबन्नप्रमुख**मिति। **प्रमुख**शब्देन तत्त्वान्तरसृष्टिर्विवक्षिता। **देवादिविचित्रसंस्थानसंस्थित** इति च वक्ष्यमाणचिदचिदंशविभागार्थं जगदाकारकथनम्; न तु जीवानुप्रवेशपूर्वावस्थाकथनम्। परमात्मन एव कृत्स्नजगच्छरीरित्वं चेत्—कथं जीवात्मनः शरीरित्वमिति शङ्का अपनोद्यते **चेतन**मिति शब्देन। चेतनत्वं शरीरित्वे प्रयोजकमित्यर्थः। चेतनमित्यनेन विज्ञानञ्चाविज्ञानं चेत्यत्र **विज्ञान**शब्दस्य ज्ञातृवाचित्वं दर्शितम्। **जीववर्ग**शब्देन 'विज्ञानम्', 'जीवेन' इति चैकवचनम्, 'नित्यो नित्यानां चेतनश्चेतनानामेको बहूनां यो विदधाति कामान्' इत्यादिभिरैकार्थ्यात् जाताविति व्याख्यातं भवति। 'अनेन जीवेन' इत्यत्रानेनेति निर्देशस्याभिप्रायविवरणं **स्वकर्मानुगुणेष्वि**ति। जीवविशिष्टपरमात्मविशेषणेदंशब्दस्य जीवद्वारकवैचित्र्यपरत्वात्। जीववैचित्र्यस्य च कर्मवैचित्र्याधीनत्वात्। जीवकर्तृक[4]प्रवेशव्यावृत्त्यर्थं **स्वेच्छयैवे**त्युक्तम्। पारतन्त्र्यं स्वातन्त्र्यञ्चानुप्रवेशहेतुवैषम्यमित्यर्थः। **एवम्भूतेषु**—द्वारद्वारिभावेन व्यवस्थितेषु चिदचिदात्मकेष्वित्यर्थः। स्वपर्यन्तेषु देवाद्याकारेषु सङ्घातेषु तत्तद्देवाद्यवस्थाः तत्तद्वाचिशब्दांश्चा-करोदित्यर्थः। 'नामरूपे व्याकरोत्' इत्युक्ते नामरूपव्याकरणस्य परमात्मपर्यन्तत्वस्यास्फुटत्वात् तत् विशदयति **एव**मिति। पूर्वं ल्यबन्तनिर्दिष्टानां क्रियाणां क्रमविवक्षाराहित्यं चानेन प्रदर्श्यते। **एवंरूपसङ्घातस्य**—चिदचिदीश्वरात्मकस्य सङ्घातस्येत्यर्थः। **एवं स्वरूपसंघातस्ये**ति पाठे अयमर्थः—स्वं [च ?] **रूपं च**

1 पुनः पश्चात् प्रतीकग्रहणम् उक्तगुणविशिष्टतया अभिहितत्वज्ञापनाय।

2 कैश्चित्—प्राभाकरैः। 3 सद्वारकमिति। नामरूपभाक्त्वमिति शेषः।

4 जीवकर्तृकेति। व्यावृत्तिर्वैलक्षण्यम्। स्वप्रवेशांशे जीवकर्मणोऽकारणत्वज्ञापनार्थमित्यर्थः।

घस्तुत्वं शब्दवाच्यत्वञ्चाकरोदित्यर्थः । अनेन जीवेनात्मना--जीवेन मयेति निर्देशो जीवस्य ब्रह्मात्मकत्वं दर्शयति । ब्रह्मात्मकत्वं च जीवस्य जीवान्तरात्मतया ब्रह्मणोऽनुप्रवेशादित्यवगम्यते; "इदं सर्वमसृजत, यदिदं किञ्च । तत् सृष्ट्वा तदेवानुप्राविशत् । तदनुप्रविश्य सच्च त्यच्चाभवत्" इति । अत्र इदं सर्वमिति निर्दिष्टं चेतनाचेतनवस्तुद्वयं सत्त्यच्छब्दाभ्यां विज्ञानाविज्ञानशब्दाभ्याञ्च विभज्य निर्दिश्य चिद्वस्तुन्यपि ब्रह्मणोऽनुप्रवेशाभिधानात् । अत एवं नामरूपव्याकरणात् सर्वे वाचकाः शब्दा अचिज्जीवविशिष्टपरमात्मवाचिन इत्यवगतमिति ॥

किञ्च "ऐतदात्म्यमिदं सर्वम्" इति चेतनमिश्रं प्रपञ्चम् इदं सर्वमिति निर्दिश्य, तस्यैष आत्मा इति प्रतिपादितम् । एवञ्च सर्वं चेतनाचेतनं प्रति ब्रह्मण आत्मत्वेन सर्वं सचेतनं जगत् तस्य शरीरं भवति । तथा च श्रुत्यन्तराणि, "अन्तः प्रविष्टः शास्ता जनानां सर्वात्मा", "यः पृथिव्यां तिष्ठन् पृथिव्या अन्तरो यं पृथिवी न वेद । यस्य पृथिवी शरीरम् । यः पृथिवीमन्तरो यमयति । स त आत्मा अन्तर्याम्यमृतः" इति प्रारभ्य "य आत्मनि तिष्ठन्नात्मनोऽन्तरो यमात्मा न वेद यस्यात्मा शरीरम् । य आत्मानमन्तरो यमयति । स त आत्मा अन्तर्याम्यमृतः' [इत्यादि], "यः पृथिवीमन्तरे सञ्चरन् यस्य पृथिवी शरीरम् । योऽपोऽन्तरे सञ्चरन् यस्याऽऽपः शरीरम्" इत्यारभ्य 'योऽक्षरमन्तरे सञ्चरन् यस्याक्षरं शरीरम् । यमक्षरं न वेद—एष सर्वभूतान्तरात्माऽपहतपाप्मा दिव्यो देव एको नारायणः" इत्यादीनि सचेतनं जगत् तस्य शरीरत्वेन निर्दिश्य तस्यात्मत्वेन

---

स्वरूपे ; [1]तत्संघातः (स्वम् ; स्वीयं रूपञ्च **स्वरूपम्** । तस्य सङ्घातः) स्वशब्देन शरीरी ईश्वर उच्यते; रूपशब्देन चिदचिद्वस्तुनी । शरीरिशरीररूपसङ्घातस्येत्यर्थः । वस्तुत्वम्—देवादिवस्तुत्वम् । जीवेनात्मनेत्यत्र जीववैलक्षण्यस्यास्पष्टत्वात् आत्मशब्दस्यानेकार्थसाधारण्याच्च तत् विवृण्वन् स्वपरपक्षसाधारणमन्वयार्थं तावदाह **अनेनेति** । **मयेत्यात्म**शब्दव्याख्यानम् । **आत्मश**ब्दस्यासद्वाचित्वे सति हि ब्रह्मात्मकत्वं दर्शितं भवति । स्वरूपैक्यशङ्कां व्युदस्यति **ब्रह्मात्मकत्वं चेति** । **इदं सर्वमिति निर्दिष्टं चेतनाचेतनवस्तुद्वयमिति** । अत्र सर्वशब्दस्यासङ्कोचोऽभिप्रेतः । 'तदनुप्रविश्य सच त्यच्चाभवत्.... विज्ञानञ्चाविज्ञानञ्च' इत्यनन्तरवाक्येन सर्वशब्दस्य स्वतःप्राप्तमसङ्कुचितत्वं स्थापितमित्याह **इदं सर्वमिति** । 'अनुप्रविश्य नामरूपे व्याकरवाणि' इत्यत्र नामरूपव्याकरणस्यानुप्रवेशपूर्वकत्वं गम्यते ; 'तत् सृष्ट्वा तदेवानुप्राविशत्' इत्यनुप्रवेशस्य सृष्टिपूर्वकत्वं गम्यते ; तस्मान्नात्र पौर्वापर्यविवक्षा ; समानकर्तृकत्वमेवात्र विवक्षितम् । "तस्य त्वष्टा विदधत् रूपमेति" इति वाक्ये सृष्ट्यनुप्रवेशयोः समानकालीनत्वावगमात् । तस्मात् भाष्येऽप्यनुप्रविश्येति ल्यबन्तनिर्देशोऽनुप्रवेशसृष्ट्योर्विविच्य ज्ञापनार्थ इत्यवगन्तव्यम् । **सृष्ट्वाऽनुप्राविशदिति** स्थित्यर्थानुप्रवेशो वा । एवं नामरूपव्याकरणप्रकार उक्तः । ततः किं प्रस्तुतस्येत्यत्राह **अत एवमिति** । **अतः**—उदाहृतश्रुतिवाक्यात् । **एवम्**—परमात्मपर्यन्तनामरूपव्याकरणप्रतिपादनात् ॥

सर्वशब्दानां परमात्मपर्यन्तत्वे मानं दर्शितम् । देहवाचिशब्देष्वाकृतिनयसञ्चारणेन परमात्मपर्यन्तत्वमुपपादयिष्यन् शरीरत्वाक्षेपकं वाक्यं दर्शयति **किञ्चेति** । ततः किमित्यत्राह **एवञ्चेति** । न केवलमात्मशब्देन शरीरत्वं गम्यम्, अपि तु शरीरत्वं शरीरलक्षणेन कण्ठोक्तं चेत्याह **तथा च श्रुत्यन्तराणीति** । 'अन्तः प्रविष्टः शास्ता' इति **सर्वात्मश**ब्दविवरणम् । विशेषणद्वयेन नृपनभोव्यावृत्तिः ।

---

1 अत्र भावप्रकाशिकामुद्रणेऽप्यशुद्धिः ।

परमात्मानमुपदिशन्ति । अतश्चेतनवाचिनोऽपि शब्दाश्चेतनस्याप्यात्मभूतं चेतनशरीरकं परमात्मानमेवाभिदधति, यथा अचेतनदेवादिसंस्थानपिण्डवाचिनः शब्दाः तत्तच्छरीरक-जीवात्मन एव वाचकाः, "चत्वारः पञ्चदश रात्राः....देवत्वं [1]गच्छन्ति" इत्यादिषु । देवा भवन्तीत्यर्थः। शरीरस्य शरीरिणं प्रति प्रकारत्वात् प्रकारवाचिनां च शब्दानां प्रकारिण्येव पर्यवसानात्, शरीरवाचिनां शब्दानां शरीरिपर्यवसानं न्याय्यम्। प्रकारो हि नाम इदमित्थमिति प्रतीयमाने वस्तुनि इत्थमिति प्रतीयमानोंऽशः । तस्य तद्वस्त्वपेक्षत्वेन तत्प्रतीतेस्तदपेक्षत्वात् तस्मिन्नेव पर्यवसानं युक्तमिति तस्य प्रतिपादकोऽपि शब्दः तस्मिन्नेव पर्यवस्यति ।

---

भगवतो नियन्तृत्वकथनात् तदेकनियाम्यत्वं शरीरलक्षणमुक्तं भवति । जगत् परमात्मशरीरमस्तु; ततः किं प्रस्तुतस्य सामानाधिकरण्यस्य । शरीरात्मभावो हि भेदरूपतया सामानाधिकरण्यस्य विरोधीत्यत्राह **अतश्चेतनवाचिन** इति । **अतः**—चिदचिदात्मकजगतः परमात्मशरीरत्वात् । शरीरभूतचेतनवाचिपदानां तच्छरीरिपरमात्मवाचित्वं कथमिति शङ्कायां शरीरवाचिपदानां शरीरिपर्यन्ता-भिधायित्वदर्शनादित्याह **यथे**ति । शरीरिपर्यन्तं वैदिकप्रयोगं दर्शयति **चत्वार** इति । देवशब्दस्य शरीरि-पर्यन्तत्वं स्पष्टयति **देवा भवन्ती**ति । **देवत्वं गच्छन्ती**त्युक्तम्; न तु देवं गच्छन्तीति । देवशब्दस्य शरीरमात्रपरत्वे शरीरत्वं गच्छन्तीत्युक्तं स्यात् । ततश्च देहात्मैक्यमुक्तं स्यात् । अतः शरीरित्वं गच्छन्तीत्यभ्युपगन्तव्यम् । अतो भावप्रत्ययान्तत्वं प्रकृतिभूतदेवशब्दस्य शरीरिपर्यन्तत्व-ज्ञापकमित्यर्थः । शरीरवाचिपदानां शरीरिपर्यन्तबोधकत्वमपि लाक्षणिकमित्यत्राह **शरीरस्ये**ति । शरीरवाचिनां प्रकारिपर्यन्तत्वं जातिगुणवाचिपदानामिव आकृत्यधिकरणन्यायसिद्धमित्यर्थः । जातिगुणवाचिनां द्रव्यपर्यन्तवाचित्वं कथमित्यपेक्षायामाकृत्यधिकरणन्यायं विवक्षुः तदर्थं प्रथमं प्रकारप्रकारिणौ विविच्य दर्शयति **प्रकारो हि नामे**ति । तद्वाचिशब्दस्य प्रकारिपर्यन्तत्वमुपपादयति **तस्ये**ति । **तस्य, तद्वस्त्वपेक्षत्वेन**—प्रकारस्य प्रकार्यपेक्षस्वरूपस्थितित्वेन, **तत्प्रतीतेः**—प्रकारस्य यथावस्थितस्वरूपप्रतीतेः, **तदपेक्षत्वात्**—प्रकारिसापेक्षत्वात्, **तस्मिन्नेव पर्यवसानं युक्तमिति,** प्रकारप्रतीतेः प्रकारिण्येव पर्यवसानं युक्तमिति, प्रकारवाचिशब्दः प्रकारिणि पर्यवस्यतीत्यर्थः । "शब्दशक्तेर्विशेषणमात्रविषयत्वेऽप्यर्थसामर्थ्याद्विशेष्यांशबोधनम् । अतोऽर्थसामर्थ्यसचिवा शब्दशक्ति-र्विशिष्टार्थबोधसामग्री । तच्च बोधनं मुख्यकोटिनिविष्टम् । यथा संस्कारसचिवेन्द्रियजन्यमपि प्रत्यभिज्ञानमिन्द्रियप्रसूतत्वात् प्रत्यक्षमेव, न स्मृतिर्भवति—तथात्र मुख्यत्वम् । अतः शब्दशक्तिः प्रवृत्तिनिमित्तमात्रे पर्यवस्यति, विशेष्यबोधनमर्थसामर्थ्यात्" इति केचिदाहुः । तदयुक्तम्; शब्दशक्तेः विशेष्यपर्यन्तत्वाभावे निष्कर्षकशब्देऽप्यर्थसामर्थ्याद्विशेष्यपर्यन्तधीप्रसङ्गात् । रूपग्रहणे नयनशक्तिः, रूपिज्ञानमर्थसामर्थ्यजन्यं (न्यमिति ?) स्यात् । तदभ्युपगमे गन्धशब्दादिग्रहणे सति अर्थसामर्थ्यात् पृथिवीगगनादिप्रतिपत्तिश्च स्यात् । न च तथा प्रतीतिरस्ति ॥ जात्यादिशब्दशक्तिर्जात्यादि-स्वरूपमात्रविषया, गवादिशब्दशक्तिर्द्रव्यपरतन्त्रजात्यादिविषयेति निष्कर्षकानिःकर्षकशब्दविभाग इति चेत्—तर्हि शब्दशक्तेः प्रकारिविषयत्वमभ्युपगतं स्यात् । धर्मिपरतन्त्ररूपतावगतेर्धर्मिप्रतिपत्तिसापेक्षत्वात्;

---

[1] चत्वारः पञ्चदशरात्रा इत्युपक्रमवाक्यम् पञ्चदशरात्रसंज्ञक चतुर्विधकर्मविधायकम् । तद्विशदीकरणानन्तरमुपसंहारे फलश्रवणम् देवत्वं गच्छन्तीति ।

अत एव 'गौरश्वो मनुष्यः' इत्यादिप्रकारभूताकृतिवाचिनः शब्दाः प्रकारिणि पिण्डे[ऽ]पर्यवस्यन्तः पिण्डस्यापि चेतनशरीरत्वेन तत्प्रकारत्वात् पिण्डशरीरकचेतनस्यापि परमात्मप्रकारत्वाच्च परमात्मन्येव पर्यवस्यन्तीति सर्वशब्दानां परमात्मैव वाच्य इति परमात्मवाचिशब्देन सामानाधिकरण्यं मुख्यमेव ॥

ननु 'खण्डो गौः खण्डः शुक्लः' इति जातिगुणवाचिनामेव पदानां द्रव्यवाचिपदैः सह सामानाधिकरण्यं दृष्टम्, द्रव्याणां तु द्रव्यान्तरप्रकारत्वे मत्वर्थीयप्रत्ययो दृष्टः, यथा 'दण्डी कुण्डली' इति ॥ नैवम् । जातिर्वा गुणो वा द्रव्यं वा नैतेष्वेकमेव सामानाधिकरण्ये प्रयोजकम्; अन्योन्यस्मिन् व्यभिचारात् । यस्य पदार्थस्य, कस्यचित् प्रकारतयैव सद्भावः, तस्य तदपृथक्सिद्धिस्थितिप्रतीतिभिः तद्वाचिनां शब्दानां स्वाभिधेयविशिष्टद्रव्यवाचित्वात् धर्मान्तरविशिष्टतद्द्रव्यवाचिना शब्देन सामानाधिकरण्यं युक्तमेव । यत्र पुनः पृथक्सिद्धस्य स्वनिष्ठस्यैव द्रव्यस्य कदाचित् क्वचित् द्रव्यान्तरप्रकारत्वमिष्यते, तत्र मत्वर्थीयप्रत्यय इति निरवद्यम् ।

---

शब्दशक्तस्तत्प्रतिपत्तिहेतुत्वाच्च । किञ्च "वचसां वाच्यमुत्तमम्", "नताः स्म सर्ववचसां प्रतिष्ठा यत्र शाश्वती" इत्यादिवचनस्वारस्यं च शब्दशक्तेरेव विशेष्यपर्यन्तत्वे सिध्यति । ततो विशेष्यपर्यन्ता शब्दशक्तिरित्यत्र तात्पर्यम् । एवं न्यायशिक्षा कृता । इत्थं प्रमाणोपपत्तिसिद्धत्वात् सर्वशब्दानां परमात्मैव वाच्य इति परमात्मवाचितत्पदेन त्वंपदसामानाधिकरण्यं मुख्यवृत्तमित्याह **अत एवेति** । **पर्यवस्यन्तः** । पूर्वं क्वचिद्व्यापृतस्य तत्रानुपरम्य तदन्वयिनि अन्यत्र व्यापारः पर्यवसानमिह विवक्षितम्; न तु व्यापारोपरमः । व्यापारोपरमवाचित्वे सति अपर्यवस्यन्त इति पदच्छेदः । यद्वा—**पर्यवस्यन्तः** पर्यवस्यातुं प्रवृत्ता इत्यर्थः । **परमात्मप्रकारत्वाच्चे**त्यन्तेन पूर्वोक्तन्यायः सञ्चारितः । नामरूपव्याकरणश्रुतिः प्रमाणत्वेन पूर्वोदाहृता अत्राभिप्रेता ॥ विशेषणवाचिशब्दो विशेष्यपर्यन्तोऽस्तु, न तु विशेषणवाचिशब्दस्य परमविशेष्यवाचिशब्देन सामानाधिकरण्यं दृष्टमिति चेत्—उच्यते । यथा नैल्यगुणगतावान्तरजातिवाचिनीलशब्दो नैल्यगुणद्वारा तद्विशिष्टे पर्यवसितः उत्पलशब्देन समानाधिकरणो दृश्यते, तथा गवादिशब्दा गोत्वादिजातिवाचिनस्तद्विशेष्यपिण्डद्वारा तद्विशिष्टचेतने पर्यवसिताः खण्डादिशब्दैः समानाधिकरणा दृश्यन्ते—तद्वत् । उक्तं प्रयोजकमतिव्याप्त्या दूषयन् चोदयति **नन्विति** । परिहरति **नैवमिति** । प्रयोगदर्शनमविशिष्टमित्यभिप्रायेण **द्रव्यं** वेत्युक्तम् । **सामानाधिकरण्ये** मत्वर्थीयप्रत्ययानपेक्षे इति भावः । हेतुमाह **अन्योन्यस्मि**न्निति । **व्यभिचारात्** । साध्यस्य सामानाधिकरण्यस्य जातिवाचिमात्रे गुणवाचिमात्रे चातिलङ्घ्य वृत्तेरित्यर्थः । जातिर्वा गुणो वा मत्वर्थीयप्रत्ययनिरपेक्षसामानाधिकरण्ये प्रयोजकमिति किमिति नाभ्युपेतम्? ॥ मत्वर्थीयप्रत्ययनिरपेक्षसामानाधिकरण्यस्य जातिगुणवाचिशब्दयोरविशेषेण प्रयोगदर्शनादिति चेत्—तर्हि शरीरवाचिशब्दानामपि मत्वर्थीयप्रत्ययनिरपेक्षसामानाधिकरण्येन प्रयोगदर्शनात् सर्वप्रयोगविषयानुयायि प्रयोजकं वाच्यमिति भावः । जातिगुणयोरन्यतरत्वञ्च अव्याप्तमित्यर्थः । इदमव्याप्तम्; प्रकारत्वञ्चातिव्याप्तम् । तत् किं प्रयोजकमित्यत्राह **यस्येति** । **तदपृथक्सिद्धिस्थितिप्रतीतिभिरिति** । **सिद्धिः**—सत्ता, प्रमाणसंबन्धयोग्यत्वरूपा । **स्थितिः**—तदनुवृत्तिः । **अपृथक्**शब्दः सिद्ध्यादिसाधारणः । **प्रतीति**शब्देनापृथक्प्रतीतेः स्वतः प्राप्तत्वं विवक्षितम् । प्रकारतैकस्वभाववस्तुवाचिशब्दत्वं मत्वर्थीयप्रत्ययनिरपेक्षसामानाधिकरण्ये प्रयोजकमित्यर्थः । निष्कर्षकशब्दान्यत्वे सतीति विशेषव्यम् । मत्वर्थीयप्रत्ययसापेक्षसामानाधिकरण्ये हेतुं पक्षे तदभावज्ञापनाय दर्शयति **यत्र पुनरिति** । **इति निरवद्यमिति** । मत्वर्थीयप्रत्ययसापेक्षदण्डकुण्डलादिव्यावृत्तं

तदेवं परमात्मनः शरीरतया तत्प्रकारत्वादचिद्विशिष्टजीवस्यापि जीवनिर्देशविशेषरूपाः अहं त्वमित्यादिशब्दाः परमात्मानमेवाऽऽचक्षत इति 'तत्त्वमसि' इति सामानाधिकरण्येनोपसंहृतम्। एवञ्च सति परमात्मानं प्रति जीवस्य शरीरतया अन्वयात् जीवगता धर्माः परमात्मानं न स्पृशन्ति, यथा स्वशरीरगता बालत्वयुवत्वादयो धर्माः जीवं न स्पृशन्ति। अतः 'तत्त्वमसि' इति सामानाधिकरण्ये तत्पदं जगत्कारणभूतं सत्यसङ्कल्पं सर्वकल्याणगुणाकरं निरस्तसमस्तहेयगन्धं परमात्मानमाचष्टे, त्वमिति च तमेव सशरीरजीवशरीरकमाचष्ट इति सामानाधिकरण्यं मुख्यवृत्तम्, प्रकरणाविरोधः, सर्वश्रुत्यविरोधः, ब्रह्मणि निरवद्ये कल्याणैकताने अविद्यादिदोषगन्धाभावश्च। अतो जीवसामानाधिकरण्यमपि विशेषणभूताज्जीवादन्यत्वमेवापादयतीति विज्ञानमयाज्जीवादन्य एवाऽऽनन्दमयः परमात्मा॥

यदुक्तम्—"तस्यैष एव शारीर आत्मा" इत्यानन्दमयस्य शारीरत्वश्रवणाज्जीवादन्यत्वं न संभवतीति। तदयुक्तम्; अस्मिन् प्रकरणे सर्वत्र "तस्यैष एव शारीर आत्मा, यः पूर्वस्य" इति

---

मत्वर्थीयप्रत्ययनिरपेक्षसर्वप्रयोगविषयानुयायिप्रयोजकं सिद्धमिति नाव्याप्त्यादिदोष इत्यर्थः। इति निरवद्यमित्यनेन सहोपलम्भनियमादेः प्रयोजकत्वशङ्कापरिहारादिः प्रथमसूत्रोक्तोऽभिप्रेतः। परिहृतचोद्येन शिक्षितेन न्यायेन परमसाध्यसिद्धिमाह तदेवमिति। तत्—चोद्यस्य परिहृतत्वात्। एवम्—पूर्वं शिक्षितप्रकारेण। 'ऐतदात्म्यमिदं सर्वम्' इति पूर्वमेव वैयधिकरण्येन ब्रह्मात्मकत्वं सर्वस्य विहितम्। तस्य सामानाधिकरण्येन जीवविशेषे उपसंहारः। यथा, 'स त आत्मान्तर्याम्यमृतः' इति जीवविशेषे कृत्स्नस्य ब्रह्मशरीरत्वं वैयधिकरण्येनोपसंहृतम्—तद्वदित्यर्थः। अनेन उद्देश्योपादेयविभागनिबन्धनचोद्यपरिहारोऽभिप्रेतः। त्वम्पदप्रतिपन्नदोषभाक्त्वप्रसङ्गस्य परिहृतत्वं दर्शयति—यद्वा अपुरुषार्थस्य ब्रह्मणि अस्पर्शाय हि शरीरशरीरिभाव उक्तः। तथापि तत्संसर्गात् तत्प्रसङ्ग इत्यत्राह एवञ्च सतीति। जीवशरीरगतधर्माः जीवमिव, जीवधर्माः परमात्मानं न स्पृशन्तीत्यर्थः। पूर्वं यानि दूषणानि परमते स्वोक्तानि, तानि स्वपक्षे नायान्तीत्याह अत इत्यादिना। अतः—सामानाधिकरण्यस्य शरीरशरीरिभावनिबन्धनत्वोपपादनात्। अयं हेतुः प्रकरणाविरोधादीनामपि साधारणः। पदद्वयावगतविशेषणापरित्यागेन विशेष्यैक्यात् सामानाधिकरण्यस्य मुख्यत्वसिद्धिः। प्रकरणाविरोध इति। "तदैक्षत", "ऐतदात्म्यमिदं सर्वम्", "अनुप्रविश्य नामरूपे व्याकरवाणि", इत्यादिवाक्याविरोध इत्यर्थः। सर्वश्रुत्यविरोध इति भेदश्रुतिघटकश्रुत्यविरोध उक्तः। अविद्यादिदोषगन्धाभावश्चेति उभयलिङ्गत्वश्रुतिसिद्धार्थविरोधाभाव उक्तः। पूर्वपक्षिणा जीवानतिरेकसाधकतयोक्तस्य जीवसामानाधिकरण्यस्य राद्धान्तानुगुणत्वमाह अत इति। अतः—तत्त्वम्पदयोः प्रवृत्तिनिमित्तस्यावश्याश्रयणीयत्वात् त्वंशब्दावगतधर्माणां ब्रह्मणि साक्षादन्वयविरोधेन जीवद्वाराऽन्वयात् द्वारभूतजीवात् द्वारिणो ब्रह्मणो वैलक्षण्यसाधकं सामानाधिकरण्यमित्यर्थः। उक्तमर्थं परमप्रकृतेन सङ्गमयति इति विज्ञानमयादिति। इतिशब्दो हेतौ॥ पूर्वपक्षे जीवानतिरेकसाधकतयोक्तस्य जीवसामानाधिकरण्यस्य भेदावहत्वादेतदधिकरणसाध्यमानन्दमयस्य जीवादन्यत्वं सुस्थमित्यर्थः॥

अथ शारीरत्वश्रवणं पूर्वपक्षहेतुमनुवदति यदुक्तमिति। परिहरति तदयुक्तमिति। ननु प्राणमयपर्यायस्थशारीरात्मशब्दो मनोमयपरः, मनोमयपर्यायस्थस्तु विज्ञानमयपरः, तत्तदन्तरसद्भावज्ञापन-

परमात्मन एव शारीरात्मत्वाभिधानात् ॥ कथम् ॥ "तस्माद्वा एतस्मादात्मन आकाशः संभूतः" इत्याकाशादिसृज्यवर्गस्य परमकारणत्वेन प्रज्ञातजीवव्यतिरेकस्य परस्य ब्रह्मणः आत्मत्वेन व्यपदेशात् तद्व्यतिरिक्ताकाशादीनामन्नमयपर्यन्तानां तच्छरीरत्वमवगम्यते । "यस्य पृथिवी शरीरम्... यस्यापश्शरीरम्...यस्य तेजश्शरीरम्...यस्य वायुः शरीरम्...यस्याकाशः शरीरम्....यस्याक्षरं शरीरम्...यस्य मृत्युः शरीरम्, एष सर्वभूतान्तरात्मा अपहतपाप्मा दिव्यो देव एको नारायणः" इति सुबालश्रुत्या सर्वतत्त्वानां परमात्मशरीरत्वं स्पष्टमभिधीयते। अतः 'तस्माद्वा एतस्मादात्मनः' इत्यत्रैवान्नमयस्य परमात्मैव शारीर आत्मेत्यवगतः। प्राणमयं प्रकृत्याह, "तस्यैष एव शारीर आत्मा, यः पूर्वस्य" इति। पूर्वस्यान्नमयस्य यः शारीर आत्मा श्रुत्यन्तरसिद्धः परमकारणभूतः परमात्मा, स एष(व) तस्य प्राणमयस्यापि शारीर आत्मेत्यर्थः। एवं मनोमयविज्ञानमययोर्द्रष्टव्यम्। आनन्दमये तु 'एष एव' इति निर्देशः तस्यानन्यात्मत्वं दर्शयितुम् ॥ तत् कथम् ॥ विज्ञानमयस्यापि पूर्वोक्तया नीत्या परमात्मैव शारीर आत्मेत्यवगतः। एवं सति विज्ञानमयस्य यः शारीर आत्मा स एवानन्दमयस्यापि शारीर आत्मेत्युक्ते, आनन्दमयस्याभ्यासावगतपरमात्मभावस्य परमात्मनः

---

परत्वाच्छारीरात्मशब्दस्य ; अतः सर्वत्र शारीरात्मत्वं परमात्मन एवेति कथमवगतमिति पृच्छति **कथ**मिति। प्रतिवक्ति **तस्माद्वा** इत्यादिना। अन्नमये शारीरात्मत्वकण्ठोक्त्यभावात्, प्राणमये 'तस्यैष एव शारीर आत्मा यः पूर्वस्य' इत्युक्तत्वाच्च तस्य वाक्यस्यार्थं विवक्षुः तत्सङ्घटनायाह **तस्माद्वा** इति। आकाशादिसृष्टेः पश्चाद्धि जीवस्य करणकलेबरसृष्टिः। अतः ततःपूर्वं जीवस्य सृष्ट्यक्षमत्वादाकाशादिस्रष्टृत्वं जीववैलक्षण्यसाधकम्। तस्य जीवविलक्षणस्याऽऽत्मशब्देनाभिधानादात्मशब्दस्य पुत्रादिवत् सप्रतियोगिकत्वात् अन्नमयादीनां परमात्मशरीरत्वमर्थादवगतमित्यर्थः। शरीरत्वं कण्ठोक्तं चेत्याह **यस्य पृथिवी**ति। **अत** इति। श्रुत्यन्तरेषु शरीरत्वस्य कण्ठोक्तत्वात् 'तस्माद्वा' इत्यादिवाक्ये आत्मशब्दनिर्देशेन अन्नमयादीनां शरीरत्वस्यार्थसिद्धत्वाच्च परमात्मैवान्नमयस्यात्मेत्यवगत इत्यर्थः। एवमात्मशब्दनिर्दिष्टः परमात्मैवान्नमयस्यात्मेति 'यः पूर्वस्य' इत्युत्तरत्रानुवादस्य पुरोवादनिर्वाहः कृतः। उपादित्सितस्य तस्यैष इति वाक्यस्य प्राणमयपरत्वज्ञापनायाह **प्राणमयं प्रकृत्ये**ति। तद्व्याचष्टे **पूर्वस्ये**ति। **य** इति प्रसिद्धवन्निर्देशः श्रुत्यन्तरसिद्धिमेतत्प्रकरणसिद्धिञ्च ज्ञापयतीत्यभिप्रायेण **श्रुत्यन्तरसिद्धः परमकारणभूत** इति विशेषणद्वयमुक्तम्। उक्तमर्थं मनोमयादावतिदिशति **एव**मिति। आनन्दमयस्य परमात्मत्वमयुक्तम्, तस्याऽऽत्मान्तरश्रवणादित्यत्राह **आनन्दमये त्वि**ति। **अनन्यात्मत्वं दर्शयितुम्**। "पतिं विश्वस्यात्मेश्वरम्", "न तस्येशे कश्चन", "नान्योऽतोऽस्ति द्रष्टा" इत्यादिवत् अयं निर्देश इत्यर्थः। अत्रोपपत्तिजिज्ञासया पृच्छति **तत् कथ**मिति। अनन्यात्मत्वप्रदर्शनार्थत्वं कथमित्यर्थः। परिहरति **विज्ञानमयस्यापी**ति। आनन्दमयं प्रति श्रूयमाणे 'यः पूर्वस्य' इति वाक्ये पूर्वशब्दविवरणार्थं **विज्ञानमयस्ये**त्युक्तम्। विज्ञानमयशारीरात्मनः परमात्मत्वे सिद्धे ह्यानन्दमयशारीरात्मनः परमात्मत्वसिद्धिरिति शङ्काव्युदासाय **विज्ञानमयस्यापी**त्युक्तम्। **पूर्वोक्तया**—प्राणमयादावुक्तया। ततः किमित्यत्राह **एवं सती**ति। **अभ्यासावगतपरमात्मभावस्ये**ति। 'आनन्दं ब्रह्मणो विद्वान्' इति पूर्वमभ्यस्तस्याऽऽनन्दस्य ब्रह्मसंबन्धित्वनिर्देशात्, ब्रह्मणश्च 'आनन्दो ब्रह्म' इत्यानन्दशब्दवाच्यत्वात्, 'आनन्दो ब्रह्मेति व्यजानात्' इत्यानन्दशब्दवाच्यस्थाने 'एतमानन्दमयमात्मानमुपसङ्क्रम्य'

स्वयमेवात्मेत्यवगम्यते। एवञ्च स्वव्यतिरिक्तचेतनाचेतनवस्तुजातं स्वशरीरमिति स एव निरुपाधिकः शारीर आत्मा। अत एवेदं परं ब्रह्माधिकृत्य प्रवृत्तं शास्त्रं शारीरकमित्यभियुक्तैरभिधीयते। अतो विज्ञानमयाज्जीवादन्य एव परमात्मा आनन्दमयः ॥ १३ ॥

आह—नायमानन्दमयो जीवादन्यः, विकारशब्दस्य मयट्प्रत्ययस्य श्रवणात्॥ "मयड्वैतयो...:" इति प्रकृत्य, "नित्यं वृद्धशरादिभ्यः" इति विकारार्थे मयट् स्मर्यते। वृद्धश्चायमानन्दशब्दः। ननु

---

इत्यानन्दमयशब्दनिर्देशेन आनन्दानन्दमयशब्दयोः पर्यायत्वाच्च आनन्दमयस्य परमात्मभावोऽवगत इत्यभिप्रायः।

अभ्यासावगतपरमात्मभावत्वं पुच्छब्रह्मवादनिरासयुक्तीनामुपलक्षणतयोक्तम्। 'ब्रह्म पुच्छं प्रतिष्ठा' इति पुच्छब्रह्म प्राधान्येन निर्दिष्टं चेत्, 'सोऽकामयत' इत्यनन्तरवाक्येऽपि तच्छब्देन पुच्छब्रह्म परामर्शनीयम्। तदयुक्तम्; स इति पुलिङ्गनिर्देशात्॥ 'आत्मन आकाशः सम्भूतः' इत्यात्मशब्दाभिप्रायः पुँल्लिङ्गत्वनिर्देश इति चेन्न; व्यवहितादव्यवहितस्यानन्दमयस्यैव परामर्शनीयत्वात्॥ "तस्यैष एव शारीर आत्मा' इत्यनन्तरपूर्वोक्तस्यात्मनः पुँल्लिङ्गनिर्देशेन परामर्श इति चेन्न; तस्यान्नमयादि-सर्वपर्यायसाधारणत्वेन एतत्पर्याय[स्य]प्रधानप्रतिपाद्यत्वाभावात्। अतः प्रधानप्रतिपाद्याव्यवहितानन्दमय एव स इति परामृश्यते। अतः कारणभूतः स एव परमात्मेति। एवं विज्ञानमयस्य जीवस्यान्तरतया व्यपदेशात्, अभ्यासावगतपरमात्मभावात्, तदन्तरत्वेनात्मशब्दव्याख्यानपर्यवसानभूमित्वात्, आत्मशब्द-वाच्यस्याऽऽदावेव जगत्कारणत्वेनोक्तत्वात्, अनन्तरकारणवाक्ये 'सोऽकामयत' इति पुँल्लिङ्गनिर्देशात्, पुच्छतया निर्दिष्टब्रह्मणोऽप्यानन्दमयानतिरिक्तत्वात्, वक्ष्यमाणसूत्रस्थहेतुभिश्चाऽऽनन्दमयः परमात्मे-त्यवगतम्। तस्य च परमात्मन आत्मान्तरवत्त्वम्, "आत्मेश्वरम्', 'न तस्येशे कश्चन', 'नान्योऽतोऽस्ति द्रष्टा' इत्येवमादिश्रुतिविरुद्धमुपपत्तिविरुद्धञ्च।

आकाशादिसृज्यवर्गपरमकारणत्वादिना शारीरात्मनः परमात्मत्वमवगतम्। एवमानन्दमयस्य शारीरात्मनश्च परमात्मत्वे सति परमात्मद्वित्वासंभवात् परमात्मन आत्मान्तरवत्त्वव्याघाताच्च, 'तस्यैष एव शारीर आत्मा' इत्युक्तिः आत्मेश्वरमित्यादिवत् तस्यानन्यात्मत्वज्ञापनार्थेत्यर्थसामर्थ्यादवगम्यत इत्यर्थः।

शारीरात्मत्वं परमात्मन एव मुख्यमित्याह **एवञ्चेति**। **निरुपाधिक इति**। कश्चित्कदा-चित्किञ्चित्प्रति कर्मानुगुणं हि कश्चिदात्मा भवति, अयं तु सर्वेषां सर्वदा सर्वत्राकर्मवश्यः स्वत आत्मेति निरुपाधिक इति भावः। तदेवोपपादयति **अत एवेति**। **अभियुक्तैः**—भगवद्बोधायनादिभिः। "संहितमेतच्छारीरकम्" इति वृत्तिकारवचः। सूत्रार्थमुपसंहरति **अत इति** ॥ १३ ॥

मुखान्तरेणानन्दमयशब्दस्य परमात्मपरतामाक्षिप्य प्रतिवक्ति **विकारेत्यादिना** सूत्रेण। तत्र पूर्वपक्षमुपन्यस्यति **आहेत्यादिना**। मयटो विकारवाचित्वमुपपादयति **मयड्वैतयोरित्यादिना**। विकारार्थत्वस्य ज्ञापनार्थं **मयड्वैतयोरित्युक्तम्**। **एतयोः**—"तस्य विकारः", "अवयवे च प्राण्योषधिवृक्षेभ्यः" इति प्रकृतयोर्विकारावयवयोरिति हि तस्यार्थः। अयमर्थः—"प्राग्दीव्यतोऽण्" इत्यधिकारसूत्रम्। अस्मिन्नर्थद्वयेपि वृद्धसंज्ञानां शरादिगणान्तर्गतानां च मयडेव, नाण्प्रत्यय इत्यपवदति, "नित्यं वृद्ध-शरादिभ्यः" इति सूत्रम्। "वृद्धिर्यस्याचामादिस्तत् वृद्धम्" इति सूत्रेण आनन्दशब्दस्य वृद्धसंज्ञकत्वाद्विकारार्थे मयट्प्रत्ययो विहित इति। सिद्धान्तच्छायया चोदयति **नन्विति**। स एवायं

प्राचुर्येऽपि मयडस्ति, "तत्प्रकृतवचने मयट्" इति स्मृतेः। यथा 'अन्नमयो यज्ञः' इति। स एवायं भविष्यति॥ नैवम्; अन्नमय इत्युपक्रमे विकारार्थत्वं दृष्टम्, अत औचित्यादस्यापि विकारार्थत्वमेव युक्तम्। किञ्च—प्राचुर्यार्थत्वेऽपि जीवादन्यत्वं न सिध्यति। तथा हि—आनन्दप्रचुर इत्युक्ते दुःखमिश्रत्वमवर्जनीयम्। आनन्दस्य हि प्राचुर्यं दुःखस्याल्पत्वमवगमयति। दुःखमिश्रत्वमेव हि जीवत्वम्। अत औचित्यप्राप्तविकारार्थत्वमेव युक्तम्। किञ्च—लोके मृन्मयं हिरण्मयं दारुमयमित्यादिषु, वेदे च, 'पर्णमयी जुहूः', 'शमीमय्यः स्रुचः' 'दर्भमयी रशना' इत्यादिषु मयटो विकारार्थे प्रयोगबाहुल्यात् स एव प्रथमतरं धियमाधिरोहति। जीवस्य च आनन्दविकारत्वमस्त्येव, तस्य स्वत आनन्दरूपस्य सतः संसारित्वावस्था तद्विकार एवेति। अतो विकारवाचिनो मयट्प्रत्ययस्य श्रवणात् आनन्दमयो जीवादनतिरिक्त इति॥ तदेतदनुभाष्य परिहरति—

विकारशब्दान्नेति चेन्न प्राचुर्यात्॥ १-१-१४॥

नैतद्युक्तम्; कुतः? प्राचुर्यात्—परस्मिन् ब्रह्मण्यानन्दप्राचुर्यात्; प्राचुर्यार्थे च मयटः

---

भविष्यतीति। विकारार्थत्वेऽपि जीवात्मनि विकारासंभवात् विकारपरत्वं त्वन्मतेऽप्यनुपपन्नमिति भावः। अभ्युपगमन्यायेन परिहरति नैवमिति। अतः—उपक्रमदर्शनात्। औचित्यात्—उपक्रमप्रतिपन्नस्वीकारौचित्यात्। प्राचुर्यार्थत्वेऽप्यभिमतासिद्धिमाह प्राचुर्येति। जीवादनन्यत्वे हेतुमाह तथा हीति। दुःखमिश्रत्वे हेतुमाह आनन्दस्येति। प्राचुर्यार्थस्वभावात् प्रतियोगिन्यपेक्षिते सुखप्रतिसंबन्धितया[1] साहचर्यप्रसिद्धदुःखगताल्पत्वस्य प्रतियोगित्वमिति भावः। ततः किमित्यत्राह दुःखेति। उभयथाऽपि जीवत्वसिद्धौ किमिति विकारार्थत्वमाद्रियत इत्यत्राह अत इति। अतः—प्राचुर्येऽपि जीवान्यत्वासिद्धेः औचित्यस्याधिकत्वाच्च विकारार्थत्वमेव ग्राह्यमित्यर्थः। प्रयोगप्राचुर्यमाह किञ्चेति। अवयवार्थादपि प्राचुर्यार्थे प्रयोगबाहुल्यात् तद्व्यावृत्त्यर्थं प्रथमतरमिति तरपः प्रयोगः। प्रसिद्धमप्ययोग्यं न ग्राह्यमिति शङ्कायां जीवस्य विकारत्वमुपपादयति जीवस्य चेति। तर्ह्यजत्वनित्यत्वादिविरोध इत्यत्राह तस्येति। स्वत आनन्दरूपस्य तस्य दुःखित्वाद्यवस्थायोगो जीवत्वम्। अतः आनन्दविकारो जीवः। आनन्दात्मकस्वरूपापेक्षया नित्यत्वाविवाद इत्यर्थः। शङ्कायाः सूत्रस्थत्वात् अनुभाष्येत्युक्तम्।

सूत्रमुपादत्ते विकारशब्दान्नेति चेन्न प्राचुर्यादिति। द्वितीयस्य नञो निषेध्यं पूर्वपक्षिमतस्योपपन्नत्वमित्यभिप्रायेण नैतद्युक्तमित्युक्तम्। प्रतिज्ञां हेतुपदेन घटयितुमाकाङ्क्षां दर्शयति कुत इति। कस्मिन् कस्य प्राचुर्यमित्यपेक्षायामाह परस्मिन्निति। न केवलं प्राचुर्यरूपार्थसद्भावेनालम्[2], शब्दशक्तिश्चापेक्षितेति शङ्कायां सूत्राभिप्रेतार्थमाह प्राचुर्यार्थे चेति। मयट्प्रत्ययस्य प्राचुर्यार्थत्वमपि

---

1 प्रतिसंबन्धितया—विरोधितया। सहचरितधर्मगताल्पत्वं प्रतियोगि। तत्र द्वेषरागाद्यल्पत्वं विहाय दुःखाल्पत्वग्रहणं दुःखस्य विरोधितया शीघ्रोपस्थितेः।

2 सद्भावमात्रं न पर्याप्तमित्यर्थः।

संभवात् । एतदुक्तं भवति—शतगुणितोत्तरक्रमेणाभ्यस्यमानस्यानन्दस्य जीवाश्रयत्वासंभवाद्ब्रह्माश्रयोऽयमानन्द इति निश्चिते सति, तस्मिन् ब्रह्मणि विकारासंभवात् प्राचुर्येऽपि मयड्विधिसंभवाच्चानन्दमयः परं ब्रह्मेति । औचित्यात् प्रयोगप्रौढ्या च मयटो विकारार्थत्वमर्थविरोधान्न संभवति । किञ्च औचित्यं प्राणमय एव परित्यक्तम्; तत्र विकारार्थत्वासंभवात् । अतस्तत्र पञ्चवृत्तेर्वायोः प्राणवृत्तिमत्तामात्रेण प्राणमयत्वम्; प्राणापानादिषु पञ्चसु वृत्तिषु प्राणवृत्तेः प्राचुर्याद्वा । न च प्राचुर्ये मयट्प्रत्ययस्य प्रौढिर्नास्ति; अन्नमयो यज्ञः, शकटमयी यात्रा इत्यादिषु दर्शनात् ॥

यदुक्तमानन्दप्राचुर्यमल्पदुःखसद्भावमवगमयतीति—तदसत् । तत्प्रचुरत्वं हि तत्प्रभूतत्वम्, तच्चेतरस्य सत्तां नावगमयति; अपि तु तस्याल्पत्वं निवर्तयति । इतरसद्भावासद्भावौ तु प्रमाणान्तरावसेयौ । इह च प्रमाणान्तरेण तदभावोऽवगम्यते 'अपहतपाप्मा' इत्यादिना । तत्र एतावदेव वक्तव्यम्—ब्रह्मानन्दस्य प्रभूतत्वम् अन्यानन्दस्याल्पत्वमपेक्षत इति ।

---

संभवतु, तथाऽपि विकारार्थत्वपरित्यागे को हेतुरित्यत्राह एतदुक्तमिति । अभ्यस्यमानानन्दयोगः उत्तरसूत्रगतानामन्येषामपि हेतूनां प्रदर्शनार्थः । अयोग्यत्वं त्यागहेतुरित्यर्थः । बाधकसद्भावाद्विकारार्थत्वं त्यज्यते चेत्, पूर्वोक्तसाधकसद्भावात् तत् स्वीक्रियतामिति शङ्कायाम्, परेण विकारार्थत्वस्वीकारसाधकतयोक्तमद्वयप्रायन्यायं प्रयोगप्राचुर्यं च परिहरति औचित्यादिति । औचित्यम्—प्रकरणौचित्यम् । तत् लिङ्गबाध्यम् । प्रयोगप्रसिद्धिरपि गङ्गापदादिष्वर्थविरोधेन बाधिता । अतः उभयमपि प्रमाणान्तराबाधितत्वे सत्येवार्थसाधकम् । अत्र त्वर्थविरोधान्न साधकमित्यर्थः । अर्थविरोधात्—आनन्दमये जीवत्वविकारत्वयोः पूर्वोक्तादसंभवादित्यर्थः । प्रकरणरूपमौचित्यमेव नास्तीत्याह किञ्चेति । अर्थात्, मयट्प्रत्ययस्य विकारवाचित्वं प्रकरणविवक्षितमिति शङ्कामपि शमयन् प्राणमयशब्दस्यार्थमाह अत इति । [प्राणवृत्तिमत्तामात्रेण?] प्राणशब्दोऽननरूपवृत्तिमात्रपरः । मयट्प्रत्ययः प्राचुर्येण सह संबन्धमभिदधाति । तत्र संबन्धमात्रपरत्वेन प्रथमयोजनायां प्राणनवृत्तिमानित्यर्थः।[1] कृत्स्नमुख्यार्थत्यागादपि मुख्यार्थैकदेशाङ्गीकारो न्याय्य इति भावः । यद्वा प्राणा(प्राणना ?)ख्यवृत्तिविशेषसंबन्धित्वमात्रेण । प्रत्ययस्यानर्थक्यादमुख्यार्थत्वं वरमिति भावः । उचिततमं योजनान्तरमाह प्राणापानादिष्विति ॥

पूर्वपक्षयुक्त्यन्तरमनुवदति यदुक्तमिति । आनन्दप्राचुर्यप्रतियोगि तत्समानाश्रयं दुःखाल्पत्वमेव, आश्रयान्तरगतस्यानन्दप्राचुर्यस्याश्रयान्तरगतमानन्दाल्पत्वं न प्रतियोगितामर्हति, स्वाश्रयगतदुःखाल्पत्वस्यैवान्तरङ्गत्वेन ग्राह्यत्वादिति पराभिप्रायः । दूषयति—तदसदिति । प्रमाणान्तरविरुद्धप्रतियोग्यपेक्षत्वं न युक्तम्; अपि तु प्रमाणान्तरसिद्धप्रमाणान्तराविरुद्धप्रतियोग्यपेक्षत्वमेव युक्तमिति परिहर्तुं प्रचुरशब्दस्यार्थान्तरसद्भावव्यावृत्त्यर्थमाह तत्प्रचुरत्वं हीति । ततः किमित्यत्राह तच्चेति । तर्हि व्यवच्छेद्याभावे प्रत्ययवैयर्थ्यमित्यत्राह अपि त्विति । यदि प्राचुर्यवाचिमयट्प्रत्ययः स्वयं नार्थान्तरसद्भावे प्रमाणम्, तर्हि तत्सद्भावः केनावगम्यत इत्यत्राह इतरेति । ततः किमित्यपेक्षायां पराभिमतप्रतियोग्यभावो ब्रह्मणि प्रमाणसिद्ध इत्याह इह चेति । तर्हि ब्रह्मणि प्रमाणविरुद्धप्रतियोगिदुःखान्वयद्योतको मयडर्थस्त्यज्यताम्; इतरथा तस्यानन्दप्राचुर्यस्य प्रतियोगि किमित्यत्राह तत्रैतावदिति । प्रमाणान्तरसिद्धार्थान्तरप्रतियोगिकं प्राचुर्यमभिदधतो मयट्प्रत्ययस्य स्वयमर्थान्तरसाधकत्वाभावात् ब्रह्मणि च

---

[1] विकारार्थत्वपक्षे कृत्स्नार्थत्यागः; प्राचुर्यसंबन्धार्थत्वपक्षे एकदेशस्वीकारः । विशेषसंन्धित्वम्—विशेषाश्रयजातीयत्वम् । जातिश्च आनारवायुत्वम् ।

उच्यते च तत्, 'स एको मानुष आनन्दः' इत्यादिना जीवानन्दापेक्षया ब्रह्मानन्दो निरतिशयदशापन्नः प्रभूत इति ॥ यच्चोक्तम्—जीवस्यानन्दविकारत्वं संभवतीति—तदपि नोपपद्यते। जीवस्य ज्ञानानन्दस्वरूपस्य केनचिदाकारेण मृद इव घटाद्याकारेण परिणामः सकलश्रुतिस्मृतिन्यायविरुद्धः। संसारदशायां तु कर्मणा ज्ञानानन्दौ सङ्कुचिताविव्युपपादयिष्यते। अतश्चानन्दमयो जीवादन्यः परं ब्रह्म ॥ १४ ॥

इतश्च जीवादन्य आनन्दमयः परं ब्रह्म—

**तद्धेतुव्यपदेशाच्च ॥ १-१-१५ ॥**

"को ह्येवान्यात् कः प्राण्यात्, यदेष आकाश आनन्दो न स्यात्। एष ह्येवानन्दयाति" इति। एष एव जीवान् आनन्दयतीति जीवानामानन्दहेतुरयं व्यपदिश्यते। अतश्चानन्दयितव्याज्जीवादानन्दयिताऽयमन्य आनन्दमयः परमात्मेति विज्ञायते। आनन्दमय एवात्र आनन्दशब्देनोच्यत इति चानन्तरमेव वक्ष्यते ॥ १५ ॥

---

दुःखसंबन्धस्य प्रमाणबाधितत्वात् जीवानन्दाल्पत्वस्य लोकसिद्धत्वाच्च ब्रह्मानन्दप्राचुर्यप्रतियोगि जीवानन्दाल्पत्वमिति अर्थात्सिद्धमित्यर्थः। जीवानन्दाल्पत्वस्य प्रतियोगित्वं न केवलमर्थसिद्धम्, अपि तु कण्ठोक्तं चेत्याह **उच्यते चेति**। अयमर्थः—यदि सजातीयाल्पत्वं समानाश्रयं प्रतियोगि, तत् व्याहतम्। यदि विजातीयं समानाश्रयम्, तत् प्रमाणान्तराधीनसद्भावासद्भावम्। अन्याश्रयमपि सजातीयं विजातीयं वा प्रतियोगि मानान्तरावसेयम्। तत्र च—यथा तेजःप्रचुरो गभस्तिमानित्युक्ते तेजःप्राचुर्यस्य चन्द्रादिगतं सजातीयतेजोमान्द्यं प्रतियोगि; न तु गभस्तिमद्गततिमिराल्पत्वादि। तद्धि प्रमाणबाधितम्; इतरत् प्रमाणसिद्धम्। तारतम्यवाचिनः शब्दस्य सजातीयप्रतियोगिज्ञापनपरत्वं स्वारसिकम्। बलवत्तर इत्युक्ते पुरुषान्तरबलं हि प्रतियोगितया प्रतीयते; न तु स्वगतं विजातीयं ज्ञानम्। अतोऽन्तरङ्गत्वं विफलम्—एवं ब्रह्मणि समानाश्रयमानन्दविजातीयदुःखाल्पत्वरूपं प्रतियोगि श्रुतिनिषिद्धम्; अन्याश्रयं सजातीयाल्पत्वलक्षणं प्रतियोगि श्रुत्यैव सिद्धमिति ॥... ... ... ....

जीवस्यानन्दविकारत्वमनुवदति **यच्चोक्तमिति**। **आनन्दविकारत्वम्** मयड्वाच्यमित्यर्थः। दूषयति **तदपीति**। स्वरूपान्यथाभावलक्षणविकारार्थत्वमेव मयटो व्युत्पत्तिसिद्धम्। तच्चात्र नास्तीत्यर्थः। ज्ञानानन्दौ जीवस्य स्वरूपञ्चेत्—कथं दुःखाज्ञानसंभव इत्यत्राह **संसारदशायांत्विति**। सूत्रार्थं प्रकृतार्थेन सङ्गमयति **अत इति** ॥ प्रसिद्धतरमुख्यार्थसंभवे तदनुग्राहकहेत्वननुरोधेन संभवदनतिप्रसिद्धमुख्यार्थानुग्राहकहेतूनामनुरोद्धव्यत्वमस्मिन् प्रकरणे व्युत्पाद्यमिति स्फुटम् ॥ १४ ॥

हेत्वन्तरञ्चाह सूत्रकारः **तद्धेतुव्यपदेशाच्च** ॥ पूर्वोक्तमानन्दप्राचुर्यमप्यनेनोपपादितं भवति। अनितरसुकरमोक्षप्रदानक्षमत्वं हि नितरामानन्दहेतुर्भवति। किञ्च धनप्रचुरो हि पुरुषोऽन्यस्मै तदभिप्रेतं धनं ददातीति सूत्रानन्तर्यम्। अस्य सूत्रस्य विषयवाक्यमाह **को ह्येवेति**। श्रुतेरर्थमाह **एष एवेति**। **अन्यात् प्राण्यादिति** भोगापवर्गसुखहेतुत्वमुक्तम्। यद्वा सत्ताहेतुत्वं सुखहेतुत्वं चोक्तम्। पूर्वोक्त एव सम्यगर्थः। फलितहेतुमाह **अतश्चेति**। कर्मकर्त्रैक्यं न संभवतीति हेतुः। आनन्दशब्दवाच्यस्यानन्दयितृत्वमुक्तम्, न त्वानन्दमयस्येत्यत्राह **आनन्दमय एवेति** ॥ १५ ॥

इतश्च जीवादन्य आनन्दमयः—

मान्त्रवर्णिकमेव च गीयते ॥ १-१-१६ ॥

"सत्यं ज्ञानमनन्तं ब्रह्म" इति मन्त्रवर्णोदितं ब्रह्मैवानन्दमय इति गीयते। तच्च जीवस्वरूपादन्यत् परं ब्रह्म। तथा हि—"ब्रह्मविदाप्नोति परम्" इति जीवस्य प्राप्यतया ब्रह्म निर्दिष्टम् ॥ "तदेषाऽभ्युक्ता" इति। तत्—ब्रह्म, अभिमुखीकृत्य—प्रतिपाद्यतया परिगृह्य, ऋगेषा अध्येतृभिरुक्ता। ब्राह्मणोक्तस्यार्थस्य वैशद्यमनेन मन्त्रेण क्रियत इत्यर्थः। जीवस्योपासकस्य प्राप्यं ब्रह्म तस्माद्विलक्षणमेव। अनन्तरञ्च, "तस्माद्वा एतस्मादात्मन आकाशः संभूतः" इत्यारभ्य उत्तरोत्तरैर्ब्राह्मणैर्मन्त्रैश्च तदेव विशदीक्रियते। अतो जीवादन्य आनन्दमयः ॥ १६ ॥

अत्राह—यद्यप्युपासकात् प्राप्यस्य भेदेन भवितव्यम्—तथापि न वस्त्वन्तरं जीवात् मान्त्रवर्णिकं

---

एवमानन्दमयपदप्रकृतिप्रत्ययार्थविषयं सूत्रत्रयं प्रवृत्तम्। अथानन्दवल्लीस्थ आदिमध्यान्ततोऽनुसंधाय अर्थं निष्कष्टुकामः प्रथममुपक्रमस्थहेतुमवतारयति इतश्चेति। मान्त्रवर्णिकमेव च गीयते ॥ अक्षरार्थमाह सत्यमिति। शब्द एवार्थः, न तु उच्छब्दः फलित इति ज्ञापयितुं वर्णशब्दः। ततः किमित्यत्राह तच्चेति। ब्राह्मणस्थपरशब्दप्रत्यभिज्ञापनाय पर ब्रह्मेत्युक्तम्। मान्त्रवर्णिकस्य जीवादन्यत्वं कथमित्यत्राह तथा हीति। प्राप्यत्वमस्तु, ततः किं मान्त्रवर्णिकब्रह्मणो जीवादन्यत्वे इत्यपेक्षायां ब्राह्मणमन्त्रयोर्घटकं वाक्यमाह तदेषाभ्युक्तेति। तत् व्याचष्टे तदिति। तत्पदं ब्रह्मवाचि। अभिमुखीकरणं चेतनधर्म इति तद्व्यावृत्त्यर्थमाह प्रतिपाद्यतयेति। एषेति पदस्य विशेष्यमाह ऋगिति। उक्तेति कथिते पौरुषेयत्वशङ्का स्यादिति तद्व्युदासार्थमाह अध्येतृभिरिति। [1]किमुक्तं भवतीत्यत्राह ब्राह्मणेति। श्रुतिषु मन्त्राणां प्राबल्यं केचिद्वदन्ति; तद्व्युदासार्थमाह ब्राह्मणोक्तेति। ब्राह्मणोक्तार्थविशदीकरणरूपो मन्त्र इति प्रयोजकम्[2]। सङ्ग्रहेणोक्तस्य विस्तरेण कथनं विस्तृतस्य प्रतिपत्तिसौकर्याय सङ्ग्रहेण कथनमपि वैशद्यावहम्। नित्यनिर्दोषत्वाविशेषात् मन्त्रब्राह्मणयोः प्राबल्यदौर्बल्यविभागोऽनुपपन्न इति भावः। एवं मन्त्रवर्णेन जीवब्रह्मभेदसिद्धिं फलितां दर्शयति जीवस्येति। प्राप्तुरस्योपासकात्मस्वरूपस्य, प्राप्तव्यस्य परब्रह्मणश्च कथमैक्यमित्यर्थः। मान्त्रवर्णिकं ब्रह्म जीवादन्यदस्तु; अस्यैवानन्दमयत्वं कथमित्यत्राह अनन्तरञ्चेति। पूर्वस्मिन् अस्मिन्नपि सूत्रे चशब्दो हेतुसमुच्चये। विकारशब्दादिति सूत्रे स्वतन्त्रहेत्वन्तराभावान्न चशब्दः। तद्धि 'आनन्दमयोऽभ्यासात्' इति सूत्रशेषम् ॥ १६ ॥

उत्तरसूत्रस्य शङ्कामाह अत्राहेति। अत्र—उपासकप्राप्यभेदेऽभिहिते सतीत्यर्थः।

---

1 किमुक्तं भवतीति। किं संग्रहेणोक्तं भवति, उत विस्तरेणेत्यत्राहेत्यर्थः। भाष्ये ब्राह्मणोक्तस्येति पदस्य फलमाह श्रुतिष्विति। अपूर्वतयाऽर्थबोधकं ब्राह्मणम्, मन्त्रस्तु ज्ञातार्थस्मारक इति मन्त्रस्य पश्चादुत्पत्तिरिति ब्राह्मणप्राबल्यवादः। मन्त्रा एव प्राक्स्थिताः, ब्राह्मणं पश्चादुत्पन्नम्, 'मन्त्रेषु कर्माणि कवयो यान्यपश्यन् तानि त्रेतायां बहुधा संततानि' इति रीत्या मन्त्रप्राबल्यवादः कतिपयाधुनिकलोकप्रसिद्धः। अत्र द्वितीयपक्षदूषणं ब्राह्मणोक्तस्येति पदेन भाष्ये सूचितमिति भावः। अत्र ब्राह्मणोक्तार्थविशदीकरणस्य मन्त्रे दर्शनात् ब्राह्मणस्य प्राच्यत्वं किं न स्यादिति प्रतिबन्ध्या तद्दूषणमिति भावः। भाष्यकृतां वस्तुतः पौर्वापर्यमत्र कस्यापि नेष्टमिति दर्शयति नित्येति ॥

2 प्रयोजकमिति। अत्र मन्त्रप्रदर्शने हेतुरित्यर्थः। एकत्रोक्तस्य वैशद्यचिकीर्षया नान्यस्य वाक्यस्य प्रवृत्तिः। किं तु उभयं स्वतन्त्रम्। अस्माकं तु उभयं शृण्वतां वैशद्यमर्थात् भवतीति तात्पर्यम्।

ब्रह्म, किंतु तस्यैवोपासकस्य निरस्तसमस्ताविद्यागन्धनिर्विशेषचिन्मात्रैकरसं शुद्धं स्वरूपम् । तदेव "सत्यं ज्ञानमनन्तं ब्रह्म' इति मन्त्रेण विशोध्यते । तदेव च, "यतो वाचो निवर्तन्ते । अप्राप्य मनसा सह" इति वाङ्मनसागोचरतया निर्विशेषमिति गम्यते । अतस्तदेव मान्त्रवर्णिकमिति तस्मादनतिरिक्त आनन्दमय इति । अत उत्तरं पठति—

नेतरोऽनुपपत्तेः ॥ १-१-१७ ॥

परमात्मन इतरो जीवशब्दाभिलप्यो मुक्तावस्थोऽपि न भवति मान्त्रवर्णिकः । कुतः? अनुपपत्तेः । तथाविधस्यात्मनः निरुपाधिकं विपश्चित्त्वं नोपपद्यते । इदमेव हि निरुपाधिकं विपश्चित्त्वं 'सोऽकामयत बहु स्यां प्रजायेय' इति सत्यसङ्कल्पत्वप्रदर्शनेन विवरिष्यते । विविधं पश्यच्चित्त्वं हि विपश्चित्त्वम् । पृषोदरादित्वात् पश्यच्छब्दावयवस्य यच्छब्दस्य लोपं कृत्वा व्युत्पादितो विपश्चिच्छब्दः । यद्यपि मुक्तस्य विपश्चित्त्वं संभवति—तथापि तस्यैवात्मनः संसारदशायामविपश्चित्त्वमप्यस्तीति निरुपाधिकं विपश्चित्त्वं नोपपद्यते । निर्विशेषचिन्मात्रतापन्नस्य मुक्तस्य विविधदर्शनाभावात् सुतरां विपश्चित्त्वं न संभवतीति ॥

---

तस्यैवेति । कारणाविद्या आच्छादिका अविद्या, कार्याविद्या विक्षेपिका अविद्या च विवक्षिता समस्तशब्देन । गन्धशब्देनापारमार्थ्यं [1] फलितम् ; अपुनःसंबन्धो वाऽभिप्रेतः । शुद्धम्—कर्मतत्फलान्वयरहितम् । निर्विशेषत्वमेवोपपादयति तदेवेति । ज्ञानपदेन निर्विशेषत्वमर्थसिद्धम् । ज्ञानस्य ज्ञानान्तराश्रयत्वाद्ययोगात् । वाङ्मनसनिवृत्तिवचनाच्च निर्विशेषत्वसिद्धिमाह तदेव चेति । तदेव—शुद्धस्वरूपमेव । उपासकप्राप्यभेदोऽवस्थाभेदेनाप्युपपन्न इति न जीवविलक्षणत्वसिद्धिरित्यर्थः ।

नेतरोऽनुपपत्तेः ॥ इतरशब्दस्य सप्रतियोगिकत्वात् परमात्मन इत्युक्तम् । अनुपपत्तेरित्यस्मिन् पदे पञ्चम्यर्थं पश्चाद्वक्ष्यन् अनुपपत्तिस्वरूपमाह तथेति । निरुपाधिकं विपश्चित्त्वमिति । कर्मविशेषेन्द्रियाद्यनपेक्षत्वं निरुपाधिकत्वम् । इह चोपाधिरस्ति चेत्, स वक्तव्यः । तदभावादेव तदनुक्तिरिति केवलविपश्चिच्छब्दो निरुपाधिकं विपश्चित्त्वमाहेत्यर्थः । न केवलं निरुपपदत्वात् विपश्चित्त्वस्य निरुपाधिकत्वमर्थसिद्धम् ; श्रुतिसिद्धमपीत्याह इदमेवेति । मुक्तस्य निरुपाधिकविपश्चित्त्वं संभवतीति शङ्कायाम्—किं भवदभिमतमुक्तस्य विपश्चित्त्वोपपत्तिः, उतास्मदभिमतमुक्तस्येति विकल्पमभिप्रेत्य स्वाभिमतस्य मुक्तस्य तदनुपपत्तिः इदमेवेत्यादिभाष्येणोच्यते । विपश्चिच्छब्दार्थे ज्ञाते हि, जीवे तदनुपपत्तिर्वाच्येत्यत्राह विविधमिति । तर्हि विपश्यच्चिदिति वक्तव्यमित्यत्राह पृषोदरादित्वादिति । "पृषोदरादीनि यथोपदिष्टम्" इति पाणिनिः । पृषच्छब्दावयवतकारलोपवत् यच्छब्दलोपः । पाणिनिवत् आप्ततममुनिभिः कृतनिर्वाहत्वात् ईदृशशब्दानां साधुत्वस्य पाणिन्यभिमतत्वमनेन ज्ञातं भवति । अतो विविधं पश्यच्चेतनत्वं विपश्चित्त्वमित्यर्थः । चिच्छब्दस्य ज्ञानवाचित्वे विविधंपश्यच्चित्त्वमिति बहुव्रीहिः । स्वपक्षे मुक्तस्य निरुपाधिकविपश्चित्त्वायोग उक्तः ; अथ पराभिमतमुक्तस्य विपश्चित्त्वायोगमाह निर्विशेषेति । विपश्चि(पश्य ?)त्त्व[2]मात्रमेव न संभवतीत्यभिप्रायेण सुतरामित्युक्तम् । न संभवतीतीत्यत्र इतिशब्दः सूत्रस्थपञ्चमीव्याख्यानम् । न केवलं विपश्चिच्छब्दमात्रासङ्गतिः,

---

[1] अपारमार्थ्यमिति । परमार्थत्वे वस्तुनाशेऽपि गन्ध ईषत् शिष्टः कदाचित् स्यात् । अपरमार्थत्वादवशेषासंभव इति ज्ञापनादिति भावः ।

[2] विपश्चित्त्वमात्रमित्यत्र पश्यत्त्वमात्रमिति पश्यच्चित्त्वमात्रमिति वा पाठो युक्तः ।

न केनापि प्रमाणेन निर्विशेषं वस्तु प्रतिपाद्यत इति च पूर्वमेवोक्तम्। "यतो वाचो निवर्तन्ते" इति च वाक्यं यदि वाङ्मनसयोः ब्रह्मणो निवृत्तिमभिदधीत, न ततो निर्विशेषतां वस्तुनोऽवगमयितुं शक्नुयात्। अपि तु वाङ्मनसयोस्तत्राप्रमाणतां वदेत्। तथा च सति तस्य तुच्छत्वमेवापद्यते। 'ब्रह्मविदाप्नोति' इत्यारभ्य ब्रह्मणो विपश्चित्त्वं जगत्कारणत्वं ज्ञानानन्दैकतानताम् इतरान् प्रति आनन्दयितृत्वं कामादेव चिदचिदात्मकस्य कृत्स्नस्य स्रष्टृत्वं सृज्यवर्गानुप्रवेशकृततदात्मत्वं भयाभयहेतुत्वं वाय्वादित्यादीनां प्रशासितृत्वं शतगुणितोत्तरक्रमेण निरतिशयानन्दत्वम् अन्यच्चानेकं प्रतिपाद्य, वाङ्मनसयोः ब्रह्मणि प्रवृत्त्यभावेन निष्प्रमाणकं ब्रह्मेत्युच्यत इति भ्रान्तजल्पितम्। 'यतो वाचो निवर्तन्ते' इति यच्छब्दनिर्दिष्टमर्थम् 'आनन्दं ब्रह्मणो विद्वान्' इत्यानन्दशब्देन प्रतिनिर्दिश्य तस्य ब्रह्मसंबन्धित्वं ब्रह्मण इति व्यतिरेकनिर्देशेन प्रतिपाद्य, तदेव वाङ्मनसागोचरं विद्वान् इति तद्वेदनमभिदधत् वाक्यं जरद्गवादिवाक्यवत् अनर्थकं वाच्यनन्तर्गतञ्च स्यात्।

---

सर्वप्रमाणविरोधश्चेत्याह **न केनापीति**। आर्थगुणनिषेधपरस्य सत्यज्ञानादिवाक्यस्य परिहारः प्रथमसूत्रोक्तोऽनुसन्धेयः। 'यतो वाच' इत्यस्य वाक्यस्य निर्विशेषपरत्वं व्युदस्यति **यतो वाच** इत्यादिना। **यदी**त्यनुज्ञा(न)प्रदर्शनम् (नार्थम्)। तर्हि किमवगमयेदित्यपेक्षायाम्—न केवलमिष्टाबोधकत्वम्, किंत्वनिष्टबोधकत्वं चेत्यभिप्रयन्नाह **अपि त्विति**। कथमस्यानिष्टत्वमित्यत्राह **तथा च सतीति**। मनसोऽप्यगोचरत्वेन सर्वप्रमाणागोचरत्वं सिद्धं कृत्वा प्रमाणान्तरागोचरत्वमप्युजीव्य तुच्छत्वमापादितम्। किं सर्वथा वाङ्मनसनिवृत्तिरुच्यते, उत इयतागोचरवाङ्मनसनिवृत्तिः ?। द्वितीयशिरसोऽभ्युपगमो वक्ष्यत इति प्रथमशिरसि तुच्छत्वमुक्तम्। ब्रह्मविदाप्नोति परमिति पूर्वापरवाक्यविरोधात् ब्रह्मणस्तुच्छत्वं व्याहतमित्यत्राह **ब्रह्मविदिति**। व्याहतार्थं श्रुतिर्न प्रतिपादयतीति चेत्—तत् निर्विशेषपरत्वेऽपि तुल्यमित्यभिप्रायेण तत्तद्वाक्यप्रतिपन्नान् गुणानाह **विपश्चित्त्व**मित्यादिना। 'ब्रह्मणा विपश्चिता', 'आकाशः संभूतः', 'रसो वै सः', 'एष ह्येवानन्दयाति', 'सोऽकामयत बहु स्यां प्रजायेय', 'तदनुप्रविश्य', 'अथ सोऽभयं गतो भवति', 'भीषाऽस्माद्वातः पवते', 'स एको मानुष आनन्दः' इत्येतेषां वाक्यानामर्थो **विपश्चित्त्व**मित्यादिना उक्तः। **शतगुणितोत्तरक्रमेणे**ति। निर्विशेषत्वं विवक्षितं चेत्—गुणापकर्षो वाच्यः, गुणप्रकर्षमुक्त्वा वाङ्मनसनिवृत्त्यभिधानमानन्त्यविवक्षाकृतमित्यभिप्रायः। **अन्यच्चे**ति आदित्यमण्डलान्तर्वर्तित्वादिकं विवक्षितम्। एवम्—पूर्वापरवाक्यव्याहतिपरिहारार्थं स्वरूपमङ्गीक्रियते[1] चेत्, तद्वत् गुणाश्च स्वीकार्या इत्युक्तं भवति। एवं प्रकरणविरोध उक्तः; अथ स्ववाक्यविरोधमाह **यतो वाच** इति। **यच्छब्दनिर्दिष्टमानन्द**मित्यत्र "कश्चै(स्यै)ष मौनः" "यतो न वेदाः" इति **सनत्सुजातो**क्तश्लोकद्वयैकार्थ्यमनुसन्धेयम्। **व्यतिरेकनिर्देशेन**—भेदनिर्देशेन; वैयधिकरण्येनेत्यर्थः। यच्छब्देनानन्दनिर्देशः, **आनन्दशब्देन** प्रतिनिर्देशः, ब्रह्मसंबन्धित्वनिर्देशश्च वागविषयत्वे व्याहताः स्युः; **विद्वानिति** तद्वेदनाभिधानं मनोगोचरत्वाभावे व्याहतं स्यादित्यर्थः। **अनर्थकं वाच्यनन्तर्गतं च स्यादिति**। **अनर्थकम्** व्याहतार्थं स्यात्। व्याहतिपरिहारोऽभिमतश्चेत्, ब्रह्म न शब्दवाच्यमितीदं समुद्रघोषादिवत्

---

1 स्वरूपमङ्गीक्रियते चेदिति। तुच्छत्वं नेष्यते चेदित्यर्थः।

अतः शतगुणितोत्तरक्रमेण ब्रह्मानन्दस्यातिशयेयत्तां वक्तुमुद्यम्य तस्येयत्ताया अभावादेव वाङ्मनसयोस्ततो निवृत्तिः, 'यतो वाचो निवर्तन्ते' इत्युच्यते। एवमियत्तारहितं ब्रह्मण आनन्दं विद्वान् कुतश्चन न बिभेति इत्युच्यते। किञ्च अस्य मान्त्रवर्णिकस्य विपश्चितः 'सोऽकामयत' इत्यारभ्य वक्ष्यमाणस्वसङ्कल्पायत्तजगज्जन्मस्थितिजगदन्तरात्मत्वादेर्मुक्तात्मस्वरूपादन्यत्वं सुस्पष्टमेव॥ १७॥

इतश्चोभयावस्थात्प्रत्यगात्मनोऽन्य आनन्दमयः—

**भेदव्यपदेशाच्च॥ १ १ १८॥**

"तस्माद्वा एतस्मादात्मन आकाशः" इत्यारभ्य मान्त्रवर्णिकं ब्रह्म व्यञ्जयत् वाक्यमन्नप्राणमनोभ्य इव जीवादपि तस्य भेदं व्यपदिशति, "तस्माद्वा एतस्माद्विज्ञानमयात् अन्योऽन्तर आत्माऽऽनन्दमयः" इति। अतो जीवाद्भेदस्य व्यपदेशाच्चायं मान्त्रवर्णिक आनन्दमयोऽन्य एवेति ज्ञायते॥ १८॥

---

वाक्यमेव न स्यादित्यर्थः। वाक्यत्वे व्याहतिरनिवार्येति भावः। ब्रह्मणोऽशब्दगो[1]चरत्वं (त्वे?) 'ब्रह्म न शब्दगोचरः इत्यनेनापि शब्देन व्याहतं स्यादिति चाभिप्रायः॥ **सत्यं ज्ञान**मिति स्वरूपस्य सत्यत्वं कण्ठोक्तम्, न गुणानाम्; अतस्तन्निषेध इति चेत्—न; तत्र सत्यपदेन ह्यविकारित्वमुक्तम्, न तु मिथ्यात्वव्यावृत्तिः। मिथ्यात्वव्यावृत्तिरुक्ताऽस्तु; तथापि गुणानां च सत्यत्वं दुरपह्नवम्, प्रमाणसिद्धत्वात्। प्रामाणिकत्वं हि सत्यत्वम्। किञ्च गुणानां सत्यत्वं कण्ठोक्तम्, [2]"सत्यकामः सत्यसङ्कल्पः", "त इमे सत्याः कामाः", "एतांश्च सत्यान् कामान्" इत्यादिभिः। अतः स्वरूपवत् गुणा अपि स्वीकार्याः; प्रमाणोपपत्तिसाम्यात्। अतो वाङ्मनसनिवृत्तिर्न निर्विशेषत्वनिबन्धना॥ ननु न शब्देन मुख्यवृत्त्या प्रतिपाद्यते ब्रह्म; अपि तु लक्षणया। अतः **यतो वाच** इति मुख्यवृत्तिविषयो निषेध इति विषयविभागान्न व्याहतिरिति चेत्—न; **निवर्तन्त** इत्येकस्य वाक्यस्य मुख्यत्वायानेकवाक्यलक्षणाश्रयणायोगात्। "भूयसां स्यात् बलीयस्त्वम् (सधर्मत्वम्?)" इति न्यायादेकवाक्यस्वारस्यभङ्गेन अनेकवाक्यस्वारस्यं ह्यनुवर्तनीयम्। किञ्च अत्र 'न हिंस्यात् सर्वा भूतानि', 'अग्नीषोमीयं पशुमालभेत' इतिवत् विषयविभागेनोभयमुख्यत्वं सिध्यति चेत्—तदेव हि युक्तम्। लोके च गामानय बलीवर्दं विनेति (बलीवर्दं नेति?) विषयविभागो मुख्यत्वानुरोधी दृश्यते॥ अविरुद्धार्थः क इत्यपेक्षायां विषयविभागं दर्शयति **अत** इति। वाङ्मनसनिवृत्तिरस्ति चेत्—कथं वेदनवचनमित्यत्राह **एव**मिति। इयत्तारहितत्वेन वेदनमुच्यत इत्यर्थः। **अनुपपत्ते**रिति सौत्रपदस्य **विपश्चि**च्छब्दोक्तसर्वज्ञत्वानुपपत्तिरर्थ उक्तः; अथ सर्वशक्तित्वानुपपत्तिमर्थान्तरमाह **किञ्चे**ति। इदं सूत्रं मान्त्रवर्णिकसूत्रोक्तहेत्वन्यथासिद्धिपरिहारपरतया तच्छेषमिति स्वतन्त्रहेतुपरत्वाभावात् चशब्दाप्रयोगः॥ १७॥

एवमनेन सूत्रद्वयेनोपक्रमस्थहेतुरनुसंहितः; अथ मध्यगतं स्फुटतरं हेतुमनुसन्धत्तेऽनन्तरसूत्रेण। आनन्दमयस्य जीवादन्यत्वं स्ववाक्यैकदेशमयडन्तपदवाच्यनिरतिशयानन्दयोगेन प्रथमसूत्रेणोपपादितम्। अतोऽत्र स्ववाक्यस्थहेतुश्चोक्तो भवति॥ **भेदव्यपदेशाच्च**॥ यदि जीवात्मस्वरूपं शुद्धावस्थं ब्रह्म, तर्हि

---

1 अत्र भावप्रकाशिकायाम् इत्यनेनापि इत्यस्य इत्येतत् अनेनापि—स्वेनापि व्याहतं स्यादिति व्याख्यानात् गोचरत्वे इति सप्तम्यन्तपाठ उन्नीयते।

2 कामनासंकल्पयोः सत्यत्वं सत्यविषयकत्वम्। तेन गुणसत्यत्वमपि सिद्धम्। सत्यकामपदस्य नित्यविभूतिपरत्वे बहुव्रीहिणा तद्वत्स्वरूपगुणसत्यत्वमपि सिद्धम्।

2—30

इतश्च जीवादन्यः—

**कामाच्च नानुमानापेक्षा ॥ १ १ १९ ॥**

जीवस्याविद्यापरवशस्य जगत्कारणत्वे ह्यवर्जनीया आनुमानिकप्रधानादिशब्दाभिधेयाचिद्वस्तुसंसर्गापेक्षा । तथैव हि चतुर्मुखादीनां कारणत्वम् । इह च 'सोऽकामयत बहु स्यां प्रजायेय' इत्यचित्संसर्गरहितस्य स्वकामादेव विचित्रचिदचिद्वस्तुनः सृष्टिः, 'इदं सर्वमसृजत, यदिदं किञ्च' इत्याम्नायते । अतोऽस्यानन्दमयस्य जगत् सृजतो नानुमानिकाचिद्वस्तुसंसर्गापेक्षा प्रतीयते ॥ १९ ॥

इतश्च जीवादन्य आनन्दमयः—

**अस्मिन्नस्य च तद्योगं शास्ति ॥ १ १ २० ॥**

अस्मिन्—आनन्दमये अस्य—जीवस्य तद्योगम्—आनन्दयोगम् शास्ति शास्त्रम्, "रसो वै सः । रसं ह्येवायं लब्ध्वाऽऽनन्दी भवति" इति । रसशब्दाभिधेयानन्दमयलाभादयं जीवशब्दाभिलपनीयः आनन्दी भवतीत्युच्यमाने, यल्लाभात् य आनन्दी भवति, स स एवेत्यनुन्मत्तः को ब्रवीतीत्यर्थः ।'

एवमानन्दमयः परं ब्रह्मेति निश्चिते सति, "यदेष आकाश आनन्दः", "विज्ञानमानन्दं ब्रह्म"

---

अन्नमयादेरविकावस्थायां[1] भेदव्यपदेशो न संभवति ; तस्मादन्नमयादिभिरिव जीवेनैक्यं ब्रह्मणो न संभवतीत्यर्थः । विज्ञानशब्दस्यान्तःकरणपरत्वानुपपत्त्यादिकं पूर्वोक्तमिहानुसन्धेयम् ॥ १८ ॥

अथोपसंहारस्थहेतुमाह—**कामाच्च नानुमानापेक्षा ॥** **कैश्चित्** प्रधानव्यावृत्तिपरमिदं सूत्रं व्याख्यातम् । तत्पक्षोऽतिदुस्स्थत्वात् नानूद्य दूषितः । पूर्वाधिकरणे अचिद्व्यावृत्तिः कृता । प्रधानत्वशङ्काहेतुश्चास्मिन्ननुवाके[2] नास्ति ; अपेक्षाशब्दवैयर्थ्यञ्च स्यादिति । **जीवस्येति** । अत्यन्तमचिदनपेक्षत्वे स्वरूपपरिणामप्रसङ्गः । देहातिरिक्ताचिदनपेक्षत्वं देवादिसृष्टौ चतुर्मुखादीनामप्यस्ति । अतस्तत्परिहारार्थमाह **इह चेति** । सङ्कल्पहेतुभूतकरणकलेवरावस्थाचित्संसर्गापेक्षा नास्तीत्यर्थः ॥ १९ ॥

देहानपेक्षं सत्यसङ्कल्पत्वकार्यं स्रष्टृत्वमाविर्भूतगुणाष्टकस्य मुक्तस्यापि श्रूयत इति शङ्कां परिहरन्, 'सोऽकामयत' इति वाक्यादुपरितनहेत्वन्तरमाह । **अस्मिन्नस्य च तद्योगं शास्ति** ॥ कस्मिन् कस्य केन योगं किं शास्तीत्यपेक्षायामक्षरार्थमाह **अस्मिन्—आनन्दमय** इति । **अस्मिन्निति** विषयसप्तमी । ब्रह्मानुभवरूपानन्दस्य [3]ह्यवच्छेदकं ब्रह्म । **शास्तिशब्दार्थः** कः, शास्त्रं किम्, एतत्सूत्रार्थस्य हेतुत्वं कथमित्यत्राह **रसो वै स** इति । 'रसो वै स' इति शास्त्रमुक्तम् । **उच्यमान** इति शास्तिशब्दार्थ उक्तः । हेतुत्वमुपपादयति **यल्लाभादिति** । हेतुत्वस्य स्फुटतरत्वात् सूत्रे हेतुत्वानिर्देश इत्यभिप्रायेण **अनुन्मत्तः को ब्रवीतीत्युक्तम्** । मान्त्रवर्णिकसूत्रेऽपि हेतुत्वानिर्देशस्यायमेवाभिप्रायः ॥

कथमानन्दमये जीवस्यानन्दयोगं वदति शास्त्रम्, आनन्दे ह्यानन्दयोगं वदतीति शङ्कायामानन्दानन्दमयशब्दयोरेकविषयत्वमाह **एवमिति** । कथमानन्दशब्दस्यानन्दमयवाचित्वमित्यपेक्षायां विज्ञानशब्द-

---

1 एकावस्थायाम्—बद्धदशायामेवेति उपरि वक्ष्यते ।

2 वक्ष्यमाणयादवप्रकाशीयरीत्या अनुवाकान्तरे तच्छंकाप्रसक्त्या अस्मिन्ननुवाके इत्युक्तम् ।

3 तद्योगमित्यत्र तच्छब्दार्थे आनन्दे अनुभवरूपे अस्मिन्नित्यस्य विषयतयाऽन्वय इति भावः ।

इत्यादिष्वानन्दशब्देनानन्दमय एव परामृश्यते, यथा विज्ञानशब्देन विज्ञानमयः। अत एव "आनन्दं ब्रह्मणो विद्वान्" इति व्यतिरेकनिर्देशः। अत एव च 'आनन्दमयमात्मानमुपसङ्क्रामति' इति फलनिर्देशश्च। उत्तरे चानुवाके पूर्वानुवाकोक्तानाम् अन्नमयादीनाम् 'अन्नं ब्रह्मेति व्यजानात्', 'प्राणो ब्रह्मेति व्यजानात्', 'मनो ब्रह्मेति व्यजानात्', 'विज्ञानं ब्रह्मेति व्यजानात्' इति प्रतिपादनात् 'आनन्दो ब्रह्म' इत्यप्यानन्दमयस्यैव प्रतिपादनमिति विज्ञायते। तत एव च तत्रापि 'आनन्दमयमात्मानमुपसंक्रम्य' इत्युपसंहृतम्।

अतः प्रधानशब्दाभिलप्यादर्थान्तरभूतस्य परस्य ब्रह्मणो जीवशब्दाभिलपनीयादपि वस्तुनोऽर्थान्तरत्वं सिद्धम् ॥ २० ॥ इति आनन्दमयाधिकरणम् ॥

---

निर्वाहे पूर्वोक्तन्यायमिहातिदिशति **यथा विज्ञानेति**। अत्र पूर्वोक्तहेतवोऽनुसंधेयाः। स्वरूपस्यानुकूलवेदनीयत्वादानन्दशब्दो धर्मिपरः; धर्मपरत्वेऽप्यपर्यवसानाद्धर्मिपर इति भावः। व्यतिरेकनिर्देशं हेतुमाह **अत एवेति**। **अत एव**—आनन्दानन्दमयशब्दयोरेकविषयत्वेनेत्यर्थः। हेत्वन्तरमाह **अत एवेति**। स्थानप्रमाणमाह **उत्तरे चेति**। पूर्वानुवाके एतदनुवाकोर्ध्वभागे च मयडन्तपदनिर्दिष्टानाम् अत्र मयड्रहितपदनिर्देशप्रकरणे आनन्दशब्देन प्रतिपादनात् आनन्दमय एवानन्दशब्दवाच्य इत्यर्थः। आनन्दशब्दवाच्यस्य परमात्मत्वं हि पराङ्गीकृतम्।

**तद्धेतुव्यपदेशाच, अस्मिन्नस्य च तद्योगं शास्ति** इति सूत्रयोरियं भिदा—पूर्वत्र सामान्येन समस्तसुखहेतुत्वम्; उत्तरत्र मोक्षहेतुत्वञ्चोक्तमिति। तदा 'को ह्येवान्यात् कः प्राण्यात्' इत्यत्र अन्यात्प्राण्यादिति पदाभ्यां सत्ताहेतुत्वं सुखहेतुत्वं चोक्तं भवति। यद्वा पूर्वसूत्रमुपायपरम्, एतत्तु उपेयपरमिति भिदा; 'आनन्दयाति', 'रसो वै सः' इति तादृशत्वप्रतीतेः। तदा अन्यात्प्राण्यादिति पदाभ्यां सांसारिकसुखहेतुत्वं मोक्षहेतुत्वं चोक्तं भवति। अथवा अन्यादिति सत्ताहेतुत्वं प्राण्यादित्यविशेषेण त्रैवर्गिकापवर्गिकसकलसुखहेतुत्वम्।

अधिकरणार्थमुपसंहरति **अत इति**। जीवसामानाधिकरण्यं शरीरसंबन्धः शोध्यत्वं विकारश्रवणं प्राप्यत्वानन्त्यादीनामवस्थाभेदेनोपपत्तिः ज्ञानस्वरूपत्ववाङ्मनसनिवृत्त्यभिधानरूपार्थगुणनिषेधश्च आनन्दमयस्य प्रत्यगात्माव्यतिरिक्तत्वे हेतुः। स्वतस्सिद्धनिरतिशयदशाशिरस्कानन्दाभ्यासः आनन्दयितृत्वं भयाभयहेतुत्वं समस्तप्रशासितृत्वं प्राप्यत्वं निरुपाधिकविपश्चित्त्वं बद्धमुक्तयोरसंभावितमाकाशादिसमस्तजगत्कारणत्वं बद्धदशायामेव विज्ञानमयाज्जीवाद्भेदव्यपदेशः करणकलेवराद्यनपेक्षसत्यसङ्कल्पत्वम् मुक्तानां निरतिशयभोग्यत्वं च सिद्धान्तहेतुः। शरीरशरीरिभावः तस्य निरुपाधिकत्वं प्रसाद्यत्वं प्राचुर्यसंभवः बद्धदशायामेव भेदव्यपदेशस्यावस्थाभेदेन निर्वाहानुपपत्तिः, प्रभाप्रभावन्न्यायेन स्वरूपतो धर्मतश्च ज्ञानत्वोपपत्तिः वाङ्मनसनिवृत्तेरियत्taराहित्यनिबन्धनत्वं [च ?] पूर्वपक्षयुक्तिपरिहारहेतवः।

षष्ठ्याऽन्यत्वमवेदि नैनमवदत् श्लोको नचाज्ञातता
ज्ञातस्यास्य तथापि नावयविता तस्यान्य आत्मा श्रुतः।
शोध्यत्वं च विकारवाचकवचः तद् ब्रह्म पुच्छं भवेत्
न त्वानन्दमयः स चान्नमयवत् कोशो बहिः कथ्यते ॥

**पुंल्लिङ्गान्तप्रधानप्रकृतपरवचो रूपणं चाप्यनन्यैः**
**श्लोकाः पुच्छं न चाहुः स्वरसमपि हि नः सूत्रमन्योऽन्तरो न ।**
**षष्ठ्यादिश्चांशभावात् निरतिशयतया रूपणात् आनुरूप्यात्**
**पर्यायत्वात् अनन्यात्मकवचनतया पुच्छहेतुः परास्तः ॥**

इति पुच्छब्रह्मवाद—तन्निरासससङ्ग्रहः ॥

**भास्करीये तु—अभ्यास**ादिति पदस्यानन्दशब्दाभ्यासादित्यर्थ उक्तः । कथमानन्दशब्दाभ्यासस्य परमात्मत्वसाधकत्वमित्यपेक्षायाम् आनन्दशब्दस्य कारणविषयत्वात् निरतिशयानन्दविषयत्वाच्चेति वक्तव्यम् । तत्र हेत्वन्तरसाकाङ्क्षस्य हेतुत्वोक्तेरपि निराकाङ्क्षस्य हेतुत्वपरत्वं युक्तम् । **नेतरोऽनुपपत्ते**रित्यत्र च संसारिजीवादन्यत्वोपपादनमयुक्तम्, निरतिशयानन्दयोगिनो मान्त्रवर्णिकस्य ब्रह्मणः संसारित्वशङ्काया अभावात् । **भेदव्यपदेशा**च्चेति सूत्रस्यापि 'रसं ह्येवायं लब्ध्वाऽऽनन्दी भवति' इति लब्धृलब्धव्यभावेन भेदोपपादकत्वमुक्तम् । ततोऽपि विज्ञानमयादन्य इत्यन्यत्वव्यपदेशस्यैव हेतुत्वोक्तिपरत्वमत्यन्तोचितम् ; **भेदव्यपदेश**शब्दस्वारस्यात् । **कामा**च्चेत्यादिसूत्रं च न प्रधानव्युदासपरम् ; अपेक्षाशब्दवैयर्थ्यात् ; निरतिशयानन्दयोगिनः प्रधानत्वशङ्काया हेत्वभावात् । तृतीयसूत्रचरमसूत्रगतयोस्तच्छब्दयोरानन्दपरतया एकरूपार्थवाचित्वं युक्तम् । 'यदा ह्येवैष' इत्यादिवाक्यविषयतया निर्वाहे तन्न सिध्यति । वक्ष्यमाणमपि दूषणमिहानुसन्धेयम् ॥.... ... ... ... ...

**यादवप्रकाशीये च—अभ्यासा**दिति पदस्य ब्रह्मशब्दभ्यासपरत्व[मुक्त?]मयुक्तम् ; विज्ञानमयपर्यायेऽपि 'ब्रह्म ज्येष्ठमुपासते विज्ञानं ब्रह्म चेद्वेद' इति ब्रह्मशब्दस्य अभ्यस्ततया हेत्वनैकान्त्यात् । **तद्धेतुव्यपदेशा**च्चेत्यस्य प्राचुर्यस्य हेतुव्यपदेशादित्यर्थो न युक्तः, तद्विषयस्य 'एष ह्येवानन्दयाति' इति वाक्यस्यानन्दहेतुत्वप्रतिपादकस्य प्राचुर्यहेतुवाचित्वाभावात् ; प्रथमप्रकृतस्य साध्यस्य हेत्वन्तरवाचित्वाभावेन चशब्दानन्वयाच्च । **नेतरः, भेदव्यपदेशा**दित्यनयोरनुपपत्तिः पूर्ववत् । **कामा**च्चेत्यादिसूत्रे च "अधीहि भगवो ब्रह्म" इति ब्रह्मविषयाया विद्यायाः, "सैषा भार्गवी वारुणी विद्या परमे व्योमन् प्रतिष्ठिता" इति परमव्योमविषयत्वावगमात् परमाकाशस्य चाचेतनस्य प्रधानाविलक्षणत्वात् अचेतनस्य स्वकार्यापेक्षया कारणत्वसंभवाच्च ब्रह्मशब्दवाच्यं प्रधानमित्याशङ्क्य निराक्रियत इति यदुक्तम्—तदयुक्तम् ; परमव्योमप्रतिष्ठितत्वमात्रेण तद्विषयत्वासिद्धेः । न हि ब्राह्मणभूयिष्ठदेशे वेदविद्या प्रतिष्ठितेत्युक्ते तस्यास्तद्देशप्रतिपादकत्वम् ॥ 'परमे व्योमन् सोऽश्नुते सर्वान् कामान् सह ब्रह्मणा विपश्चिता' इति परमाकाशस्य ब्रह्माधारत्वावगमात् तस्य ब्रह्मत्वशङ्कानिराकरणमस्मिन् सूत्रे क्रियत इत्यप्ययुक्तम् । 'मान्त्रवर्णिकमेव च गीयते' इति मन्त्रवर्णं विषयीकुर्वता सूत्रेणैवास्याः शङ्कायाः प्रतिहतोदयत्वात् । नापि सत्यत्वज्ञानत्वत्रिविधपरिच्छेदविरहादयः परमाकाशस्य सामस्त्येन संभवन्ति । अपेक्षाशब्दवैयर्थ्यं च पूर्ववत् । **चरमसूत्र**मप्येवं व्याख्यातम्—**अस्मिन्** ब्रह्मणि प्रतिबुद्धस्यास्य जीवस्य **तद्योगं** परमात्मप्राप्तिं दर्शयति 'सोऽश्नुते सर्वान् कामान् सह ब्रह्मणा विपश्चिता" इति, तथा 'यदा ह्येवैष' इत्यादिवाक्यैश्चास्मिन् निष्ठां गतस्यास्य 'अथ सोऽभयं गतो भवति' इति ब्रह्मप्राप्तिरुच्यत इति ।

**यद्यपि मन्दपुण्यानां जीवानां कामात् जगत्सृष्टिः अतिशयितानन्दयोगो भयाभयहेतुत्वमित्यादि न संभवति--तथापि विलक्षणपुण्यानामादित्येन्द्रप्रजापतिप्रभृतीनां संभवत्येवेतीमामाशङ्कां निराकरोति—**

---

तदनुपपन्नम् ; मन्त्रवर्णोदिताया: परमात्मविदस्तत्प्राप्तेः, मान्त्रवर्णिकमेव च गीयत इति सूत्रेणैव दर्शितत्वात् इह तदुक्त्यनपेक्षणात् । 'यदा ह्येवैष' इत्यादिवाक्योक्ताभयप्राप्तिहेतुत्वञ्च तद्धेतुव्यपदेशाच्चेति सूत्रेणैव दर्शितमिति इह तदुक्तिरनपेक्षिता । तद्विषयभूतवाक्योक्तमानन्दयितृत्वं हि मोक्षानन्दहेतुत्वम् । मोक्षानन्दश्च संसारभयनिवृत्तिपूर्वकः । तस्मादानन्दयितृत्ववाक्यासन्नतरवाक्योक्तमभयप्राप्तिहेतुत्वं मोक्षप्रदत्वान्तर्भूतमिति न पृथग्धेतुः ॥ आनन्दयातीति वाक्ये आनन्दहेतुत्वमुक्तम् । ब्रह्म प्राप्तस्यै वचानन्दः । अतोऽस्मिन् वाक्ये अभयशब्दवाच्यब्रह्मप्राप्तिरुच्यत इति चेत्—न; तस्य ब्रह्मशब्दसामानाधिकरण्याभावात् ; 'अथ तस्य भयं भवति' इत्युक्तभयाभावप्राप्तेरेव 'अथ सोऽभयं गतो भवति' इत्युच्यमानत्वाच्च । अतो भयनिवृत्तिपूर्वकनिरतिशयानन्दहेतुत्वं तद्धेतुव्यपदेशादित्यन्तर्भूतमिति न पृथग्वक्तव्यम् । अतो मोक्षप्रदत्वेऽभिहिते मुक्तप्राप्यत्वकथनं प्राप्तेर्निरतिशयानन्दत्वरूपविशेषकथनं चात्यन्तापेक्षितमिति तदेव वक्तव्यम् । अतः सूत्राणां यथोक्त एवार्थः ॥ इति आनन्दमयाधिकरणम् ॥

अथावान्तरसङ्गतिमाह **यद्यपीति** । कारणवादिवाक्यानां परमात्मपरत्वं हि निरूप्यते ; तत्र कारणवाक्यत्वाभावेऽपि कथमन्तरादित्यविद्याऽत्र निरूप्यत इति चेत्—उच्यते, आनन्दमयाधिकरणशेषतयेति ॥ कथमुपनिषद्भेदे सत्यपि तच्छेषतया निरूपणम् ॥ इत्थम् । आनन्दवल्ल्याम्, "स यश्चायं पुरुषे यश्चासावादित्ये स एकः" इत्यानन्दमयस्यैव आदित्यमण्डलवर्तित्वमुक्तम् । छान्दोग्यप्रतिपादितस्य आदित्यान्तर्वर्तिनो देहसंबन्धेन जीवानतिरेके सति आनन्दवल्ल्यामपि जीवानतिरिक्त आदित्यान्तर्वर्तिपुरुष उक्तः स्यादिति आनन्दमयो जीव एवेति शङ्कायां तच्छेषत्वेन उत्तराधिकरणारम्भ इति । अधिकरणभेदः उक्तन्यायाविषयभूतोपनिषद्भेदहेतुकः ॥ ननु "तस्यैष एव शारीर आत्मा" इति वाक्यप्रतिपन्नशरीरसंबन्धस्य (?) परिहृतत्वात् शारीरत्वश्रवणहेतुकजीवत्वशङ्का नोपपद्यत इति चेत्—उच्यते । तत्र ह्यन्नमयादीनां शरीरत्वमुक्तम् । न हि ते प्रत्येकं करचरणादिसंस्थानवन्तः । तैः संबन्धश्चाधिष्ठात्रधिष्ठेयभावलक्षणः शेषशेषिभावलक्षणो वा येन केनापि प्रकारेणोपपद्यते । अत्र तु, "हिरण्यश्मश्रुर्हिरण्यकेशः" इत्यादिना करचरणादिसंस्थानकं शरीरं श्रूयते । तस्य च कर्मकृतत्वं लोकप्रसिद्धम् । अतः उपकरणोपकरणित्वलक्षणसंबन्धश्चार्थसिद्धः ॥ ननु तत्राप्यन्नमयस्यात्मत्वश्रवणादात्मप्रतिसंबन्धिनः शरीरस्य करचरणादिमत्त्वात् तत्कृतजीवत्वशङ्कापि तत्रैव निरस्तेति चेन्न ; प्राणमयादीनां करचरणादिमत्त्वाभावात् ; अन्नमयस्य तु तथाविधत्वे सत्यपि तं प्रति विज्ञानमयस्यैव शरीरित्वात्, विज्ञानमयं प्रति शरीरिण आनन्दमयस्य करचरणादिमच्छरीरकत्वाभावात् । शरीरमात्रेण संबन्धमात्रनिबन्धनशङ्कैव तत्र निरस्ता । अत्र त्वानन्दमयस्यैव आदित्यान्तर्वर्तिनः करचरणादिमत्त्वं प्रतीयते । अतः पूर्वाधिकरणे शरीरमात्रेण संबन्धमात्रश्रवणादुत्थितायां जीवत्वशङ्कायां निरस्तायां पुनः करचरणादिसंस्थानकदेहविशेषेणोपकरणोपकरणित्वलक्षणसंबन्धविशेषावगमेन जीवत्वशङ्का स्यादिति तन्निरासार्थमानन्दमयाधिकरणशेषत्वेन एतदधिकरणारम्भ इति । अयमर्थो **यद्यपीत्यादिसङ्गतिग्रन्थेऽभिप्रेतः** ॥

## अन्तस्तद्धर्मोपदेशात् ॥ १ १ २१ ॥

**इदमाम्नायते छान्दोग्ये--" य एषोऽन्तरादित्ये हिरण्मयः पुरुषो दृश्यते हिरण्यश्मश्रुर्हिरण्यकेश आ प्रणखात् सर्व एव सुवर्णः । तस्य यथा कप्यासं पुण्डरीकमेवमक्षिणी । तस्योदिति नाम।**

---

**अन्तस्तद्धर्मोपदेशात्** ॥ विषयं दर्शयति इदमिति । 'य एष' इति प्रसिद्धवन्निर्देशात् नानुवादरूपता शङ्क्या ; अस्यार्थस्य प्रमाणान्तराप्राप्तत्वात् , "यदाग्नेयोऽष्टाकपालः" इतिवत् । **आदित्यशब्दः**, "दित्यदित्यादित्यपत्युत्तरपदाण्यः" इति ण्यप्रत्ययान्तो मण्डलवाची । "य एष एतस्मिन् मण्डले पुरुषः, यश्चायं दक्षिणेऽक्षन्" इति बृहदारण्यके, "य एष एतस्मिन् मण्डलेऽर्चिषि पुरुषः" इति तैत्तिरीयके च पुरुषस्य मण्डलवर्तित्वश्रवणात् । **हिरण्मयशब्दो** रमणीयत्वपरः, "हिरण्मय इति [1]रूपसामान्याच्चन्द्रमुखवत्" इति हि **वाक्यकारः** । **दृश्यते** योगिभिरित्यर्थः । "दृश्यते त्वग्र्यया बुद्ध्या सूक्ष्मया सूक्ष्मदर्शिभिः" इति श्रुत्यैकार्थ्यात् । "य एवं वेद' इत्युत्तरत्रोपासनविधानादुपासनार्थमारोपितरूपपरमिदं वाक्यमिति नाऽऽशङ्कनीयम् ; "न संदृशे तिष्ठति रूपमस्य" इत्युक्त्वा, "हृदा मनीषा मनसाऽभिक्लृप्तो य [2]एनं विदुरमृतास्ते भवन्ति" इति, "यदा पश्यः पश्यते रुक्मवर्णम्" इति प्रकरणे "मनसा तु विशुद्धेन" इति च विशुद्धमनोग्राह्यत्वो(त्वेनो)क्तेः ।

आरोपिताकारो हि दुष्टमनोग्राह्यः । न च **रूपमस्येति** स्वरूपमुच्यते, षष्ठीस्वारस्यभङ्गप्रसङ्गात् । अतो विग्रहविशिष्टस्य विशुद्धमनोग्राह्यत्वात् विग्रहपारमार्थ्यम् । किञ्च दृश्यत इति वर्तमानव्यपदेशाच्च उपासनाया आरोपितत्वमयुक्तम् । आत्मन्यारोप्यमाणं हि गरुडत्वं न ततः पूर्वं केनाप्यवगम्यते । इह तूपासनविधानात्प्रागेव विद्यमानताऽनेन वर्तमानव्यपदेशेन प्रतीयते । अतो वास्तवत्वम् ॥ दृश्यत इत्यनेन पूर्वपूर्वोपासकप्रवाहैरारोपेणानुसंधीयमानत्वमुच्यत इति चेत्—न ; अशाब्दत्वात् । न ह्यारोपितं(प्यं) दृश्यत इति श्रूयते ॥ दृश्यत्वमेवारोपितत्वमिति चेत्—न ; व्युत्पत्तिविरोधात् । "दृश्यते त्वग्र्यया बुद्ध्या" इति दृश्यतयोक्तपरमात्मस्वरूपस्याप्यवास्तवत्वप्रसङ्गाच्च ॥ तन्मिथ्यात्वं प्रमाणविरुद्धमिति चेत्—तुल्यम् । "आदित्यवर्णं तमसः परस्तात्" इति तमसः परस्तात् स्थितस्य विग्रहस्य स्वरूपस्येव मिथ्यात्वं हि प्रमाणविरुद्धम् । अतो वास्तवत्वसिद्धिः । अशरीरत्वश्रुतेरवकाशो वक्ष्यते । **तस्य यथेति** । अस्य वाक्यस्य **वाक्यकारेण** षडर्थाः पूर्वपक्षतया(त्वेन) सिद्धान्तत्वेन चोक्ताः । तत्रार्थत्रयस्य पूर्वपक्षत्वं तत्स्वभावादेवावगतम् ।

**कपिः**—आदित्यः । "कपि चलने" इति धातोर्निष्पन्नः कपिशब्दः ; कं पिबतीति च । 'कपिर्बिभर्ति तेजनम्' इति च **वैदिकप्रयोगः** । तस्य **आसं** मण्डलम् **कप्यासम्** । यथा आदित्यमण्डलं हृदयपुण्डरीकं च परमात्मन उपासनस्थानम्—तथा तस्योपासकस्याक्षिणी अप्युपासनस्थानमित्येकोऽर्थः । अयं नोपपद्यते । तथा हि—'अग्निश्चेन्द्रश्च' इतिवत् अपवादकचशब्दाद्यभावेऽपि समानविभक्त्यन्तयोः पदयोः स्वतःप्राप्तसामानाधिकरण्यस्वारस्यभङ्गः । पुण्डरीकसदृशे हृदये पुण्डरीकशब्दो गौणः स्यात् । हृदयपुण्डरीकमिति प्रयोगस्तु पुरुषव्याघ्र इतिवत्, "उपमितं व्याघ्रादिभिः सामान्याप्रयोगे" इति

---

1 हिरण्मयेन सामान्यम्—सादृश्यम् । हितत्वे सति रमणीयत्वम् रूपम् । यद्वा वर्णः ।

2 एनमिति रूपविशिष्टपरमात्मवाचि ।

**स एष सर्वेभ्यः पाप्मभ्य उदितः। उदेति ह वै सर्वेभ्यः पाप्मभ्यो य एवं वेद। तस्यर्क्च साम च**

सूत्रविहितसमासत्वात् उपमानोपमेयवाचकशब्दसद्भावाच्च मुख्य एव। अत्र तु तदभावात् गौणत्वमवर्जनीयम्; उपासनस्थानमिति प्रथमान्तपदाध्याहारः; उपासकस्येति षष्ठ्यन्तपदाध्याहारश्च। तत्परिहाराय **तस्ये**-त्युपासकपरत्वे सति अप्रकृतपरामर्शित्वम्, अनन्तरवाक्यस्थषष्ठ्यन्तशब्दविरूपार्थता च स्यात्। दिव्याङ्गवर्णन-प्रकरणानौचित्यञ्च। नामविधिवाक्यात्पूर्वं रूपकथनं ह्युचितम्। 'य एष एतस्मिन् मण्डले पुरुषो यश्चायं दक्षिणेऽक्षन्' इति दक्षिणस्याक्ष्णः उपासनस्थानत्वश्रवणात् अक्षिणी इति द्विवचनविरोधश्च। ऊर्ध्वमक्षिविद्याया उक्तत्वादिह तदुक्त्यनपेक्षणाद् अस्य वाक्यस्य पुनरुक्तिश्च। अन्तरादित्यविद्यायाम्, 'य एषोऽन्तरादित्ये' इति स्थानस्योक्तत्वात्, अक्षिविद्यायां च 'य एषोन्तरक्षणि' इति स्थानस्योक्तत्वादुभयत्र स्थानविध्यपेक्षा नास्तीत्यनाकाङ्क्षितत्वादिदं वाक्यमनन्वितं स्यात्। 'अन्तरादित्ये' इत्यादित्यमण्डलस्य स्थानतया विहितत्वात् 'एवमक्षिणी' इत्यक्ष्णः स्थानत्वे विहिते सति स्थानभेदाद्रूपभेदेन विद्याभेदात् एकवाक्येन विद्याद्वयस्य विधातुमशक्यत्वाच्च वाक्यभेदः स्यात्। स चैकवाक्यत्वे संभवति नोपपद्यते॥ कप्यासं पुण्डरीकञ्च दृष्टान्ततया अनूद्य 'एवमक्षिणी' इत्यक्ष्णः स्थानत्वस्य विधेयत्वं गम्यत इति चेत्—तथा (दा?)च अन्तरादित्य इत्युपक्रमविरोधः॥ उपक्रमेपि आदित्यमण्डलस्यानुवाद इति चेत्—तथा सति इयमक्षिविद्यैव स्यात्। तथा चान्तरादित्यविद्येत्याख्याविरोधः। अक्षिविद्यायामेतद्विद्योक्तरूपाद्यति-देशानुपपत्तिश्च। न केवलं कप्यासवाक्यमात्रस्य, अपि तु कृत्स्नाया अन्तरादित्यविद्यायाः पुनरुक्तिश्च स्यात्; उभयोरप्यक्षिविद्यात्वाविशेषात्; रूपादिवैषम्याभावाच्च। तस्मादस्य वाक्यस्य उपासनस्थान-विधिपरत्वमनुपपन्नम्॥

**कपिः** मर्कटः; तस्य **आसं** जघनप्रदेशः; मर्कटपृष्ठसाम्यमुच्यत इति यावत् (यत्)—तदप्ययुक्तम्; मर्कटपृष्ठं पुण्डरीकञ्च किमुपमानद्वयम्, उतैकोपमा। तत्रोपमाद्वित्वमयुक्तम्, स्वतः प्राप्तसामानाधिकरण्यपरित्यागप्रसङ्गात्; श्लाघ्यार्थेन निर्वाहे संभवत्यपि हीनोपमाश्रयणायोगाच्च। यद्येकोपमा, तथा सति मर्कटपृष्ठसदृशपुण्डरीकसदृशे इत्युक्तं स्यात्। तदा कप्यासपदस्य गौणता स्यादिति।

**कप्यासम्**—ईषद्विकसितमित्यपरोऽर्थः। तत्रात्यन्तार्थानौचित्यं नास्त्येव; तथाप्यवयवशक्त्या वा रूढ्या वा ईषद्विकासपरत्वं नास्तीति सोऽप्ययुक्तः। एवं शब्दार्थस्वभावपर्यालोचनायामिदमर्थत्रयं पूर्वपक्षतया वाक्यकाराभिप्रेतमित्यवगतम्।

अर्थान्तरत्रयं तूपपन्नम्। कं पिबतीति **कपिः** आदित्यः। तेन **अस्यते** क्षिप्यते विकास्यत इति **कप्यासम्**। तथाऽऽह **वाक्यकारः**, "आदित्यक्षिप्तं वा श्रीमत्त्वात्" इति। कं पिबतीति **कपिः** नालम्; तस्मिन् अस्ति इति कप्यासम्। अपचितादपि पङ्कजात् नालस्थपुण्डरीकस्य शोभातिशयोऽस्तीति सोऽत्र विवक्षितः। कं जलम्। आस उपवेशने इति धातुरपिपूर्वकः। "वष्टि भागुरिरल्लोपमवाप्यो-रुपसर्गयोः" इति वचनात् अपेःअकारलोपः। **कप्यासम्**—सलिलस्थमित्युक्तं भवति। एवमस्यार्थत्रयस्योपपन्नतया वाक्यकारेण सिद्धान्ततयोक्तत्वमभिप्रेत्य हि भगवता भाष्यकारेण **वेदार्थ-सङ्ग्रहे**ऽभिहितम्, "गम्भीराम्भस्समुद्भूत-सुमृष्टनाल-रविकरविकसितपुण्डरीकदलामलायतेक्षणः" इति।

गेष्णौ इत्यधिदैवतम्", "अथाध्यात्मम्,। अथ य एषोऽन्तरक्षणि पुरुषो दृश्यते सैवर्क् तत् साम तदुक्थं तद्यजुस्तद्ब्रह्म। तस्यैतस्य तदेव रूपम्, यदमुष्य रूपम्। यावमुष्य गेष्णौ, तौ गेष्णौ। यन्नाम, तन्नाम" इति ॥

तत्र संदिह्यते—किमयम् अक्ष्यादित्यमण्डलान्तर्वर्ती पुरुषः पुण्योपचयनिमित्तैश्वर्यः आदित्यादिशब्दाभिलप्यो जीव एव, आहोस्वित् तदतिरिक्तः परमात्मेति । किं युक्तम्। उपचितपुण्यो जीव एवेति । कुतः । सशरीरत्वश्रवणात् । शरीरसंबन्धो हि जीवानामेव संभवति । कर्मानुगुणप्रियाप्रियभोगाय हि शरीरसंबन्धः । अत एव हि कर्मसंबन्धरहितस्य मोक्षस्य

---

**गेष्णौ**—[1]गानविशेषौ । **अधिदैवतम्**—देवतायामुपासनम् । **अध्यात्मम्**—आत्मन्युपासनम् । अध्या(त्रा ?)त्मशब्दो देहवचनः । **अमुष्य**—आदित्यस्थस्य । आदित्ये तद्धर्मोपदेशादिति वा अक्षणि तद्धर्मोपदेशादिति वा न सूत्रितम्; अपि त्वन्तःशब्दः सूत्रकारेण प्रयुक्तः । **अन्तः**—शब्दस्य 'अन्तरादित्ये', 'अन्तरक्षणी' इत्युभयत्र श्रवणात् विद्याद्वितयमपि संगृहीतमित्यभिप्रायेणाक्षिविद्यावाक्यमप्युदाहृतम् ॥ संशयं दर्शयति **तत्रेति**। शरीरसंबन्धापहतपाप्मत्वादियोगात् संशयः । **आदित्यादिशब्दाभिलप्यो जीव एवेति** । यत्र यत्र प्रकरणेषु करणकलेवरावस्थशरीरसंबन्धेन जीवत्वशङ्का, तेषां प्रकरणानां सर्वेषां परमात्मपरत्वस्य प्रदर्शनार्थम् अयमधिकरणारम्भ इत्यभिप्रायेण आदिशब्दः प्रयुक्तः । अत एव **हिरण्यगर्भादिजीवेभ्योऽन्य** इति अधिकरणोपसंहारे, मध्येऽपि **आदित्यादिजीवव्यतिरिक्त** इति चोक्तम् । वेदान्तवेद्यं कारणं ब्रह्म किं प्रकृष्टपुण्यो जीवः, उत नेति विचारः ; तदर्थमानन्दमयः किं जीवः, उत परमात्मेति ; तदर्थमन्तरादित्येऽन्तरक्षणि च वर्तमानः किं जीवः, उत परमात्मा ; तदर्थं सशरीरत्वं जीवस्यैव, उत परमात्मनोऽपि संभवतीति ; तदर्थं शरीरसंबन्धस्यैच्छत्वं संभवति, नेति ; तदर्थं पाप्मोदितत्वादिश्रुतिः 'अजायमानः' इत्यादिश्रुतिः आदित्यवर्णत्वादिश्रुतिश्च कथमैच्छत्वं ज्ञापयति, नेति ; तदर्थमिह पाप्मशब्दः किं पापमात्रपरः उत पुण्यपापरूपकर्मपरः, अपहतशब्दः किं प्रध्वंसपरः उतात्यन्ताभावपरः, अजत्वादिश्रुतिः किं कर्मकृतजन्मविषयतया व्यवस्थापयितुं शक्यते नेति, आदित्यवर्णत्वादिश्रुतिः विग्रहस्य प्रकृतिप्राकृतविलक्षणत्वज्ञा(प्रा)पिका न वेति चतुर्धा संशयः । अत्र पूर्वे कल्पाः पूर्वपक्षाः । अपरे तु सिद्धान्ताः । यदा—**पाप्मशब्दः** पापमात्रपरः, अपहतिः प्रध्वंसः, जन्मनिषेधश्च न कर्ममूलजन्मविषयः, विग्रहश्च न प्राकृतविलक्षणः—तदानीं विग्रहसंबन्धस्येच्छामात्रमूलत्वासंभवेन कर्मनिबन्धनतया परस्मिन्नसंभवेन जीवासाधारण्यादादित्यादिवर्ती पुरुषो जीव इति अन्तरादित्यवाक्यैकार्थ्यात् आनन्दवल्लीवाक्येऽपि जीवस्य प्रतिपाद्यत्वात् सर्वाणि कारणवाक्यानि प्रकृष्टपुण्योपचयजीवपराणीति पूर्वः पक्षः । **यदा पाप्मशब्दः कर्ममात्रपरः, अपहतशब्दोऽत्यन्ताभावपरः**, जन्मनिषेधश्च कर्ममूलजन्मविषयः, विग्रहश्च प्राकृतविलक्षणः—तदानीं विग्रहस्यैच्छतया तस्य जीवात्परस्मिन् संभवाच्चाक्ष्यादित्यान्तर्वर्तिपुरुषः पर इति तदैकार्थ्यादानन्दवल्लीप्रतिपाद्यस्य परमात्मत्वमविचाल्यमिति तदैककण्ठ्यात् **सर्वाणि** कारणवाक्यानि परमात्मपराणीति राद्धान्ते फलफलिभावः ।

पूर्वपक्षमाह **उपचितेति** । जीवानामेव शरीरसंबन्धमुपपादयति **कर्मानुगुणेति** । कर्मकृतप्रियाप्रियभोगार्थत्वं व्यतिरेकेणोपपादयति **अत एव हीति** । **अत एव**—शरीरसंबन्धस्य कर्ममूलप्रिया-

---

1 गानविशेषौ गीत्यंशौ । गीयमानायाम् ऋचि गीतिरूपसाम्नः ऋचश्च प्रविष्टत्वादंशत्वम् ।

प्राप्यत्वमशरीरत्वेनोच्यते, "न ह वै सशरीरस्य सतः प्रियाप्रिययोरपहतिरस्ति। अशरीरं वा व सन्तं न प्रियाप्रिये स्पृशतः" इति। संभवति च पुण्यातिशयात् ज्ञानाधिक्यं शक्त्याधिक्यञ्च। अत एव लोककामेशत्वादि तस्यैवोपपद्यते। तत एव चोपास्यत्वं फलदायित्वञ्च; पापक्षपणकरत्वेन मोक्षोपयोगित्वञ्च। मनुष्येष्वप्युपचितपुण्याः केचित् ज्ञानशक्त्यादिभिरधिकतरा दृश्यन्ते; ततश्च सिद्धगन्धर्वादयः; ततश्च देवाः; ततश्चेन्द्रादयः। अतो ब्रह्मादिष्वन्यतम एवैकैकस्मिन् कल्पे पुण्यविशेषेणैवम्भूतमैश्वर्यं प्राप्तो जगत्सृष्ट्याद्यपि करोतीति। जगत्कारणत्वजगदन्तरात्मत्वादिवाक्यम् अस्मिन्नेवोपचितपुण्यविशेषे सर्वज्ञे सर्वशक्तौ वर्तते। अतो न जीवादतिरिक्तः परमात्मा नाम कश्चिदस्ति। एवञ्च सति, 'अस्थूलमनण्वह्रस्वम्' इत्यादयो जीवात्मनः स्वरूपाभिप्राया भवन्ति। मोक्षशास्त्राण्यपि तत्स्वरूपतत्प्राप्त्युपायोपदेशपराणि—इति॥

एवं प्राप्तेऽभिधीयते—अन्तस्तद्धर्मोपदेशात्। अन्तरादित्ये अन्तरक्षणि च यः पुरुषः प्रतीयते, स जीवादन्यः परमात्मैव। कुतः। तद्धर्मोपदेशात्। जीवेष्वसंभवन् तदतिरिक्तस्यैव परमात्मनो धर्मोऽयम् अपहतपाप्मत्वादिः, "स एष सर्वेभ्यः पाप्मभ्य उदितः" इत्यादिनोपदिश्यते। अपहतपाप्मत्वं ह्यपहतकर्मत्वम्; कर्मवश्यतागन्धरहितत्वमित्यर्थः। कर्माधीनसुखदुःखभागित्वेन

---

प्रिययोगार्थत्वादेव हि कर्मसंबन्धरहितो मोक्षोऽशरीरतया प्राप्यत्वेनोच्यत इत्यर्थः। ज्ञानशक्त्यादिकं लोककामेशितृत्वादिकञ्च कथं जीवस्य स्यादित्यत्राह **संभवति चे**ति। तथा दर्शयति **मनुष्येष्वपी**ति। अत्र, 'स एको मानुष आनन्दः' इत्यादि अभिप्रेतम्। आदित्येन्द्रप्रजापतिप्रभृतीनां सर्वेषां कारणत्वश्रवणात् व्याहतिः स्यात्, पुण्यहेतुत्वात् क्षयित्वञ्च स्यादित्यत्राह **अतो ब्रह्मादिष्वि**ति। सर्वविधवाक्यानां जीवपरत्वमाह **जगदि**त्यादिना। अपहतपाप्मत्वादिश्रुतयो नाकर्मवश्यतां वदन्ति, अपि तु केवलपुण्यहेतुकशरीरवतः पापराहित्यम्; पापहेतुकं पुण्यहेतुकं मिश्रहेतुकञ्चेति त्रिविधं शरीरम् इत्यभिप्रायेण **उपचितपुण्यविशेष** इत्युक्तम्। **मोक्षशास्त्राणि**। उपायपराण्युपेयपराणि चेत्यर्थः॥

राद्धान्ते—सौत्रं प्रतिज्ञापरमन्तश्शब्दं व्याचष्टे **अन्तरादित्य** इति। द्वितीयसूत्रस्थान्यशब्दान्वयलब्धं साध्यधर्ममाह **स जीवादन्य** इति। तेन फलितमाह **परमात्मे**ति। हेत्वंशमवतार्य व्याचष्टे **कुत** इत्यादिना। **तद्धर्मोपदेशादि**ति तच्छब्दः परमात्मपरः। परमात्मनि सिद्धे तद्धर्मोपदेशः तद्धर्मोपदेशात्परमात्मत्वसिद्धिरिति परस्पराश्रयशङ्कायामाह **जीवेष्वसंभवन्नि**ति। जीवेष्वसंभवन्नयं धर्मो जीवातिरिक्तस्वाश्रयप्रतिपादकत्वं श्रुतेर्निश्चाययति। योग्यतापरामर्शसहकृतेयं श्रुतिः परमात्मानमभिधत्त इत्यर्थः। अपहतपाप्मत्वं पापहेतुकमिश्रहेतुकशरीरवत्त्वव्यावर्तकमित्यत्राह **अपहते**ति। यद्यपि, 'सर्वेभ्यः पाप्मभ्य उदितः' इति विषयवाक्यम्, तथाप्य**पहतपाप्मशब्द**प्रयोगः श्रुत्यन्तरस्मरणार्थः। **अपहतकर्मत्वमि**ति। **पाप्मभ्य इति पाप्मशब्दः** पुण्यपापरूपोभयविधकर्मपर इत्यर्थः। **हिशब्दः** परमात्मप्रकरणेषु पापशब्दस्य पुण्यपापपरत्वप्रसिद्धिं सूचयति। "नैतं सेतुमहोरात्रे तरतो न जरा न मृत्युर्न शोको न सुकृतं न दुष्कृतं सर्वे पाप्मानोऽतो निवर्त्तन्ते" इति(?) "स न साधुना कर्मणा भूयान्नो एवासाधुना कनीयान्", इत्यादिश्रुतयो ह्यस्मिन्नर्थे प्रमाणम्। "स्युः पाप्मानः कालजरामृत्युशोकादयः सङ्ख्यातत्वात्" इति **वाक्यकारवचः**। [1]अलौकिकत्वे **सति** अनिष्टफलसाधनत्वरूपप्रवृत्तिनिमित्तयोगादुपपन्नं च पुण्यस्यापि

---

[1] अहोरात्रशब्द आयुरर्थकः। आयुरादेः पाप्मानुयायित्वात् पाप्मत्वम्। एवमहोरात्रजरादौ लक्षणविरहात् पाप्मशब्दस्यामुख्यत्वेऽपि पुण्ये मुख्य एवेत्याशयेनाह अलौकिकेति।

**कर्मवश्या हि जीवाः । अतोऽपहतपाप्मत्वं जीवादन्यस्य परमात्मन एव धर्मः ॥**

पापशब्दाभिधेयत्वम् । उक्तं हि मुमुक्ष्वपेक्षया स्वर्गादीनामनिष्टफलत्वम्, "अमूनि यानि स्थानानि देवानां परमात्मनः" इत्यारभ्य, "एते वै निरयास्तात स्थानस्य परमात्मनः" इति, "क्व नाकपृष्ठगमनं पुनरावृत्तिलक्षणम् । क्व जपो वासुदेवेति मुक्तिबीजमनुत्तमम्" इति च । पाप्मशब्दव्याख्यानमुखेन बद्धव्यावृत्तिरुक्ता; अथापहतशब्दव्याख्यानमुखेन मुक्तव्यावृत्तिमाह कर्मेति । जीवव्यावृत्तिं स्फुटयति कर्माधीनेति । अपहतपाप्मशब्दोऽसङ्कोचात् स्वस्मिन् परत्र च पाप्मनामपघातकत्वं [1]स्वतःसिद्धं वदतीति हेयप्रत्यनीकत्वसिद्धिः ॥

नन्वपहतशब्दः प्रध्वंसपरः । उत्पन्नस्यैव प्रध्वंसः । अतः प्रध्वस्तपाप्मत्वश्रवणात् परमात्मनः कर्मसंबन्धस्य प्राग्विद्यमानत्वं गम्यते । अतश्च प्रध्वस्तपाप्मनः परमात्मनो मुक्तादवैलक्षण्यं स्यात् । यदि नित्यासंस्पृष्टपाप्मत्वं विवक्षितम्, तदत्यन्तमशाब्दम्-परस्य कुर्वतो वा अकुर्वतो वा पाप्मासंस्पृष्टत्वम् । प्रथमे व्याघातः, कर्तृसमवेतत्वात् क्रियायाः । द्वितीये त्वसदादेरवैलक्षण्यम् । न ह्यकृतेन कर्मणा कश्चिल्लिप्यत इति ॥ उच्यते । परस्य तावत् पाप्माभावपराणि वाक्यानि विविधानि श्रूयन्ते—"सर्वेभ्यः पाप्मभ्य उदितः" इति पाप्मभ्य उदयः श्रूयते; अपहतपाप्मेति पाप्मनामपहतिः श्रुता; "नैतं सेतुमहोरात्रे तरतो न जरा न मृत्युर्न शोको न सुकृतं न दुष्कृतम्, सर्वे पाप्मानोऽतो निवर्तन्ते" इति तरतेः प्राप्तिवाचित्वादप्राप्तिर्निवृत्तिश्च श्रूयते; "स न साधुना कर्मणा भूयान्नो एवासाधुना कनीयान्" इति कर्मफलास्पर्श उच्यते । तत्र प्रथममुदितशब्दस्य मुख्यार्थोऽनुपपन्नः, विभोः परस्य पाप्मान्वितदेशादूर्ध्वगमनायोगात् । तस्मादश्लेषलक्षणा युक्ता । तत्राकृतकर्माश्लेषस्य सर्वसाधारणस्य प्रतिपादनवैयर्थ्यं स्यात् । अतः कृतानामपि कर्मणामश्लेषपरत्वं तस्य वाक्यस्याभ्युपगन्तव्यम् । क्रियायाः कर्तृसमवेतत्वेन स्वरूपासंश्लेषस्य व्याघातादेव फलासंश्लेषपरत्वमाश्रयणीयम् । तत्र हेत्वकथनात् तिरोधानाविर्भावयोः निष्प्रमाणकत्वाच्च तस्य स्वाभाविकत्वं नित्याविर्भूतत्वञ्च सिद्धम् । अपहतशब्दश्च हिंसारूप[2]धात्वर्थासंभवात् विनाशं लक्षयन् क्रियास्वरूपस्य नश्वरतया स्वरूपनाशप्रतिपादनवैयर्थ्यात् फलजननशक्तिविशिष्टरूपेण नाशं प्रतिपादयति । यथा "सर्वमेकपदे नष्टं दानमश्रोत्रिये यथा" इति नाशशब्दो दानस्य फलजननशक्तिहानिं प्रतिपादयति, तद्वत् । अत ईश्वरेण कृतानि पुण्यपापसजातीयानि कर्माणि न शुभाशुभफलजननशक्तानि स्युः । ईदृशमपहतपाप्मत्वञ्च पूर्वोक्तन्यायान्निरुपाधिकं नित्याविर्भूतञ्चाभ्युपगन्तव्यम् । 'स न साधुना कर्मणा' इत्यत्रापि[3] असाधुकर्मफलास्पर्शः तत्प्रायश्चित्तरूपसाधुकर्मनिबन्धन इति शङ्का च साधुकर्मप्रतिषेधेनैव निरस्ता । न च साधुकर्महतिस्तस्यापि निवर्तकविद्याबलादिति शङ्कनीयम्, ध्यानकर्तृत्वानुक्तेः । 'उदेति ह वै सर्वेभ्यः पाप्मभ्यो य एवं वेद' इति तस्य [4]ध्येयत्वश्रवणाच्च ।

1 मुमुक्ष्वपेक्षितापहतपाप्मत्वापादकस्य तस्यापि तादृशमपहतपाप्मत्वमावश्यकमिति भावः ।

2 पाप्मनोऽचेतनत्वात् न हिंसाकर्मत्वम् . मरणरूपस्य वेदनारूपस्य वा फलस्य पाप्मन्यभावात् ।

3 इत्यत्रापीत्यस्य उपरि प्रतिषेधेनैवेति पदेनान्वयः । अपिशब्दः 'नसुकृतम्' इत्येतत्समुच्चायकः । उपर्येव वा अस्य पाठोऽपि ।

4 ननु यएवंवेदेति वेदनं उन्नामकत्वानुसंधानं वा उद्गीथे आदित्यपुरुषदृष्टिर्वा । सर्वथा तस्य न मोक्षरूपसर्वपाप्मापहतिकरत्वमिति चेत् न; औचित्यादत्र सर्वपाप्मनिवर्तनसमर्थादेव तस्मात्

तत्पूर्वकं स्वरूपोपाधिकं लोककामेशत्वम् सत्यसङ्कल्पत्वादिकम् सर्वभूतान्तरात्मत्वञ्च तस्यैव धर्मः । यथाऽऽह, "एष आत्माऽपहतपाप्मा विजरो विमृत्युर्विशोको विजिघत्सोऽपिपासः सत्यकामः सत्यसङ्कल्पः" इति । तथा, "एष सर्वभूतान्तरात्माऽपहतपाप्मा दिव्यो देव एको नारायणः" इति ।

"सोऽकामयत। बहु स्यां प्रजायेयेति" इत्यादिसत्यसङ्कल्पत्वपूर्वकसमस्तचिदचिद्वस्तुसृष्टियोगः निरुपाधिकभयाभयहेतुत्वम् वाङ्मनसपरिमितिकृतपरिच्छेदरहितानवधिकातिशयानन्दयोगः इत्यादयोऽकर्मसंपाद्याः स्वाभाविका धर्माः जीवस्य न संभवन्ति ॥

---

साधुकर्मनिषेधादेव ध्यानकर्तृत्वमपि निषिद्धं भवति । यज्ञादिकमुपासनात्मकञ्च कर्म हि साधुकर्मशब्दाभिलापार्हम् । अतः प्रायश्चित्तादिभिर्विनैव कर्मफलाश्लेष इति अपहतपाप्मशब्दस्थो हन्तिधातुश्च हानिपरः ; न प्रध्वंसपरः । **नैतं सेतु**मित्यत्रापि कृतानामेव कर्मणां फलजननशक्तिमत्त्ववेषेण प्राप्त्यभाव उच्यते । अतो निरुपाधिकमपहतपाप्मत्वं नाम कर्मवश्यतागन्धरहितत्वम् । न च परमात्मनि फलजननासमर्थस्य तत्कृतकर्मणः तं प्रति न पाप्मत्वमिति श्रुतिवाक्यस्थपाप्मशब्दस्यामुख्यत्वमिति वाच्यम् ; "अनन्तख्याति निर्वीर्यं जरयामास तद्विषम्", "जपन् विषधरो हरः" इत्यादिषु निगीर्णजीर्णविषान् ईश्वरादीन् प्रति विषशब्दस्येव मुख्यत्वोपपत्तेः । क्षेत्रज्ञेषु प्रत्यवायकरपापसजातीयानां कर्मणां स्वलीलाकृतानामपि **फलजननशक्तिप्रतिभटत्वं** नाम कश्चिदयमीश्वरस्य **स्वभावविशेषः** । परिशुद्धात्मस्वरूपविषयस्याप्यपहतपाप्मशब्दस्यायमेवार्थः । स तु तस्य तिरोधानार्हः प्रतिबन्धनिवृत्तावाविर्भवति, ईश्वरस्य तु तिरोधानानर्हो नित्याविर्भूत इति विशेषः । अतोऽपहतपाप्मत्वविषयश्रुतीनां यथोक्त एवार्थ इति तेन धर्मेण अन्तरादित्येऽवस्थितस्य भगवतो जीववैलक्षण्यसिद्धिः ॥

गुणान्तराणामपि जीवेष्वसंभवं दर्शयति **तत्पूर्वकं स्वरूपोपाधिक**मिति । अपहतपाप्मत्वपूर्वकत्वात् **स्वरूपोपाधिकम्** ; स्वाभाविकमित्यर्थः । एवं प्रसिद्धाप्रसिद्धयोरर्थयोरेकनिमित्तसंभवे प्रसिद्धवाचिनैकेनैव शब्देनोपादानार्हत्वमिह व्युत्पादितम् । आदित्यान्तर्वर्तिनोऽपहतपाप्मत्वगुणयोगेन आनन्दवल्लीदहरविद्यासुबालोपनिषत्प्रतिपाद्यस्येह प्रत्यभिज्ञानात् तत्र तत्रोक्ता गुणा अप्यस्यैव हिरण्मयपुरुषस्य धर्मा इत्यभिप्रायेण **सत्यसङ्कल्पत्वादिकं** सर्वभूतान्तरात्मत्वञ्चेत्युक्तम् । अपहतपाप्मत्वपूर्वकसत्यसङ्कल्पत्वादौ श्रुतिं दर्शयति **एष आत्मे**ति । तत्पूर्वकसर्वभूतान्तरात्मत्वे श्रुतिमुदाहरति **एष सर्वभूतान्तरात्मे**ति । तदनन्तरत्वेन आत्मत्वव्याख्यानपरस्यानन्दवल्लीवाक्यस्य नारायणपरत्वज्ञापनार्थं च **एष सर्वभूतान्तरात्मे**ति वाक्योपादानम् । केषुचिद्वाक्येषु अपहतपाप्मत्वपूर्वकगुणविधानात् सर्वशाखाप्रत्ययन्यायेन वाक्यान्तरेष्वपि तत्पूर्वकत्वं विवक्षितमित्यभिप्रायेणाह **सोऽकामयते**ति । जगत्कारणत्वमेव वेदान्तवेद्यस्य ब्रह्मणो लक्षणम् ; कारणञ्चेत्—सत्यसंकल्पम् ; सत्यसङ्कल्पत्वं चेत्—अपहतपाप्मत्वपूर्वकम् ; तच्च नारायणप्रत्यभिज्ञापकं

---

तत्तदपेक्षितपरिमितपापनिवृत्तेरेव विवक्षितत्वात् । एवमपि, तमेवविदित्वाऽतिमृत्युमेतीत्यादिबलात् मोक्षदत्वमेष्टव्यम् । किञ्च पापमात्रग्रहणेऽपि आदित्यादीनां सर्वपापहरत्वमसंभावितम्—दुःखानुभवप्रमाणदर्शनात् । अतः स्वभावतस्तद्राहित्ये सत्येव सर्वपापनिवर्तकता स्या[illegible]ति अपहतपाप्मकमादित्यादितोऽन्यदेव । जीवस्य स्वाभाविकत्वेनोच्य[illegible]मपहतपाप्मत्वमपि [illegible] घटते, न तु ध्वंसार्थकत्वपक्षे ।

यत्तु शरीरसंबन्धान्न जीवातिरिक्त इत्युक्तम्—तदसत्; न हि सशरीरत्वं कर्मवश्यतां साधयति; सत्यसङ्कल्पस्येच्छयाऽपि शरीरसंबन्धसंभवात्। अथोच्येत—शरीरं नाम त्रिगुणात्मकप्रकृतिपरिणामरूपभूतसंघातः, तत्संबन्धश्चापहतपाप्मनः सत्यसङ्कल्पस्य पुरुषस्येच्छया न संभवति, अपुरुषार्थत्वात्। कर्मवश्यस्य तु स्वस्वरूपानभिज्ञस्य कर्मानुगुणफलोपभोगाय अनिच्छतोऽपि तत्संबन्धोऽवर्जनीय इति॥ स्यादेतदेवम्, यदि गुणत्रयमयः प्राकृतोऽस्य देहः स्यात्। स तु स्वाभिमतः स्वानुरूपोऽप्राकृत एवेति सर्वमुपपन्नम्॥ एतदुक्तं भवति—परस्यैव ब्रह्मणो निखिलहेयप्रत्यनीकानन्तज्ञानानन्दैकस्वरूपतया सकलेतरविलक्षणस्य स्वाभाविकानवधिकातिशयासङ्ख्येयकल्याणगुणगणाश्च सन्ति। तद्वदेव स्वाभिमतानुरूपैकरूपाचिन्त्य·दिव्याद्भुत-

---

सुबालोपनिषदैकार्थ्यादिति भावः। **वाङ्मनसेति** परिच्छेदकासिद्धिमाह। पूर्वपक्षमनुवदति **यत्त्विति**। परिहरति **तदसदिति**। शास्त्रैकप्रमाणके वस्तुनि लोकदृष्टव्याप्तिमूलस्तर्को न कर्मवश्यत्वसाधक इत्यभिप्रायेणाह **न हीति**। कल्पकस्यान्यथासिद्धिमाह **सत्यसङ्कल्पस्येति**। सत्यसङ्कल्पस्य कर्मनैरपेक्ष्यम् अपहतपाप्मत्वपूर्वकसत्यसङ्कल्पत्वश्रुत्युपपादनेन समर्थितम्। अत एव, "स एष ये चामुष्मात्पराञ्चो लोकाः तेषां चेष्टे देवकामानां च", "स एष ये चैतस्मादर्वाञ्चो लोकाः, तेषाञ्चेष्टे मनुष्यकामानाञ्च" इति आदित्याक्षिपुरुषविषयवाक्यद्वयेन प्रतिपन्नमैश्वर्यम् अनवच्छिन्नम्; तदवच्छेदे शङ्क्यमानेऽपि सोऽवच्छेदोऽप्यैच्छतयाऽन्यथासिद्ध इति फलितत्वान्न कण्ठोक्तम्।

विग्रहविषयाया असंभवं शङ्कते **अथोच्येतेति**। हेयत्वसूचकस्त्रिगुणात्मकशब्दः; "सत्त्वं लघु प्रकाशकमिष्टमुपष्टम्भकं चलञ्च रजः। गुरु वरणकमेव तमः" इत्युक्तेः। इच्छाया अभावेऽपि कर्मपारवश्याज्जीवस्य तत्संबन्धसंभवमभिप्रेत्याह **कर्मेति**। कर्मावरणहेतुः **स्वस्वरूपानभिज्ञस्येति** विशेषणम्। परिहरति **स्यादिति**। **स्वाभिमतेत्युक्ते**, अभिमतत्वमयोग्येऽपि संभवतीति, तद्व्यावृत्त्यर्थमाह **अनुरूपेति**। कुत इत्यत्राह **अप्राकृत** इति। परमात्मस्वरूपं हि निरतिशयानन्दरूपम्; सर्वज्ञत्वात् तच्च जानात्येवेति स्वस्वरूपादन्यत्र भोग्यत्वज्ञानं न वक्तुं युक्तम्। अतः सर्वज्ञस्य तस्य विग्रहे स्पृहणीये स्वरूपस्य भोग्यतावैकल्यं स्यादित्यत्राह **सर्वमुपपन्नमिति**। कथमुपपन्नमित्यत्राह **एतदुक्तमिति**। स्वतस्सर्वज्ञस्य सर्वशक्तेर्ज्ञानार्थं प्रवृत्त्यर्थञ्च करणानपेक्षत्वात् न देहापेक्षा; रूपादिमत्त्वे च प्राकृतत्वं स्यात्; नित्यत्वे चानित्यबह्ववतारासंभवः; तिर्यगादिरूपपरिग्रहे, "वाचिकैः पक्षिमृगताम्" इत्यादिप्रकारेण तन्मूलकर्मसंबन्धः स्यात्—इति शङ्कापरिहारार्थञ्च **एतदुक्तमि**त्यारम्भः। यथा परस्य ब्रह्मणो धर्मिस्वरूपं स्वाभाविका गुणाश्च प्रामाणिकत्वादङ्गीक्रियन्ते, तथा विलक्षणं शरीरमभ्युपगन्तव्यमित्यभिप्रायेणाह **परस्यैवेति**। **स्वाभिमतेति**। करणानपेक्षज्ञानक्रियस्यापि परस्य भोगार्थो विग्रहः। निरतिशयानन्दस्यापि तस्य प्रीतिविशेषापेक्षा घटते, प्रभूतानन्दानामप्यानन्दान्तरापेक्षादर्शनादिति भावः। **एकरूपेति**। हेयप्रतिभटत्वमङ्गलाकारत्वाद्याकारैरैकरूप्यम्। शरीरत्वादसदादिशरीरवत् दुःखावहमित्यादितर्कागोचरत्वमभिप्रयन्नाह **अचिन्त्येति**। अचिन्त्यत्वे हेतुमाह **दिव्येति**। अनेन **दिव्यशब्देन** विलक्षणद्रव्यत्वमुक्तम्। रूपादिमत्त्वात् प्राकृतत्वं धर्मिग्राहकमानबाधितमिति भावः। **द्वितीयेन दिव्यशब्देन** विलक्षणसंनिवेशत्वम्। यथा, "तद्विश्वरूपवैरूप्यं रूपमन्यत् हरेर्महत्" इति। **अद्भुतत्वम्**

नित्य—निरवद्य—निरतिशयौज्ज्वल्यसौन्दर्यसौगन्ध्यसौकुमार्यलावण्ययौवनाद्यनन्तगुणगणनिधि-दिव्यरूपमपि स्वाभाविकमस्ति । तदेवोपासकानुग्रहेण तत्तत्प्रतिपत्त्यनुरूपसंस्थानं करोति अपारकारुण्यसौशील्यवात्सल्यौदार्यैश्वर्यजलनिधिर्निरस्तनिखिलहेयगन्धोऽपहतपाप्मा परमात्मा परं ब्रह्म पुरुषोत्तमो नारायण इति ॥

"यतो वा इमानि भूतानि जायन्ते", "सदेव सोम्येदमग्र आसीत्", "आत्मा वा इदमेक एवाग्र आसीत्", "एको ह वै नारायण आसीन्न ब्रह्मा नेशानः" इत्यादिषु निखिलजगदेककारण-तयाऽवगतस्य परस्य ब्रह्मणः, "सत्यं ज्ञानमनन्तं ब्रह्म", "विज्ञानमानन्दं ब्रह्म" इत्यादिष्वेवम्भूतं स्वरूपमित्यवगम्यते । 'निर्गुणम्', 'निरञ्जनम्', 'अपहतपाप्मा विजरो विमृत्युर्विशोको विजिघत्सोऽपिपासः सत्यकामस्सत्यसङ्कल्पः', "न तस्य कार्यं करणं च विद्यते न तत्समश्चाभ्यधिकश्च दृश्यते । पराऽस्य शक्तिर्विविधैव श्रूयते स्वाभाविकी ज्ञानबलक्रिया च", "तमीश्वराणां परमं

---

प्रतिक्षणमभिनवत्वम् । **नित्येति** । सावयवत्वादनित्यमित्याद्यनुमानं धर्मिग्राहकप्रमाणबाधितमिति भावः । कल्याणाकरत्वेऽपि हेयमिश्रत्वशङ्काव्युदासार्थो **निरवद्यशब्दः** । **निरतिशयाः**—वक्ष्यमाणसर्वगुणाः । **आदिशब्देन** पराक्रमादयो विवक्षिताः । नित्यत्वे कथमनित्यबह्ववतारसंभवः ; कथञ्च निकृष्टदेवादि-साजात्यमित्यत्राह **तदेवेति** । **तदेव**—अप्रच्युतसंनिवेशमेवेत्यर्थः । संस्थानाशैथिल्येऽपि देवाद्यनेक-देहोत्पादकत्वं चतुर्मुखदेहे दृष्टं परमात्मविग्रहे युज्यत इति भावः । "नित्याऽलिङ्गद्या स्वभावसंसिद्धिरिन्द्रियाकारा अङ्गप्रत्यङ्गव्यञ्जनवती" "उज्जहारात्मनः केशौ सितकृष्णौ", "अंशांशेनावतीर्योर्व्याम्", "समस्तशक्ति रूपाणि तत् करोति जनेश्वर", "कल्पे कल्पे जायमानः स्वमूर्त्या", सोंऽशो विष्णुमयं स्थानम्" इत्यादि अत्रानुसन्धेयम् ।

उपासकानुग्रहोपयुक्ता गुणा उच्यन्ते **अपारेति** । **कारुण्यम्**—परदुःखासहिष्णुत्वम् । **सौशील्यम्**-महतो मन्दैः सह नीरन्ध्रेण संश्लेषस्वभावत्वम् । **वात्सल्यम्**-दोषानादरहेतुः स्नेहः ; यथा मातुः पुत्रे । **औदार्यम्**—दातृप्रतिगृहीतृविभागबुद्धिरहितं दातृत्वम् । एते सौलभ्योपयुक्ता गुणाः । अथ परत्वमुच्यते **निरस्तेति** । परत्वसौलभ्ये अप्युपास्यत्वोपयोगिनी । मनुष्यादिसाजात्येऽपि तत्प्रयुक्त-शोकमोहाद्यस्पृष्टत्वमभिप्रयन्नाह **निरस्तेति** । जीवानुप्रवेशेषु शोकादयो जीवांशगताः । साक्षादवतारेष्वभि-नयमात्रम् । **निखिलशब्देन** चिदचिद्गता दोषा विवक्षिताः । शोकाद्यस्पर्शहेतुमाह **अपहतेति** । अर्वाचीनात्मव्यावृत्त्यर्थः **परमात्मशब्दः** । प्रधानव्यावृत्त्यर्थः तत्समानाधिकृतः **परब्रह्मशब्दः** । **पुरुषोत्तम-शब्दो** वैलक्षण्यपरः । **नारायणशब्दो** घटकः । यथा परमात्मपरब्रह्मशब्दौ सामान्यशब्दावेकविषयौ, यथा पुरुषोत्तमनारायणशब्दौ विशेषशब्दावेकविषयौ—तथा सामान्यविशेषशब्दाः एकविषया इति भावः । अत्र स्वरूपस्य भोग्यत्ववैकल्यशङ्का च परिहृता भवति । स्वसंबन्धिभोग्यत्वं स्वस्य न भोग्यता-विरोधि ; अपि तु स्वभोग्यत्वातिशयावहम् ; यथा स्वसंबन्धिगुणगणभोग्यत्वम् । न हि स्वसंबन्धिनामप्यामोद-करस्य कस्तूरिकादेरामोदवैकल्यम् ; अपि तु तत्पौष्कल्यमेव—तथा स्वसंबन्धाद्विग्रहभोग्यत्वमपि स्वभोग्यत्वातिशयावहमिति ।

**अथोक्तार्थे** प्रमाणान्याह **यतो वा इमानीत्यादि** । जगत्कारणत्वधर्मिस्वरूपविषयप्रमाणोपन्यासो

महेश्वरं तं देवतानां परमञ्च दैवतम्", "स कारणं कारणाधिपाधिपो न चास्य कश्चिज्जनिता न चाधिपः", "सर्वाणि रूपाणि विचित्य धीरो नामानि कृत्वाऽभिवदन् यदास्ते", "वेदाहमेतं पुरुषं महान्तम् आदित्यवर्णं तमसः परस्तात्", "सर्वे निमेषा जज्ञिरे विद्युतः पुरुषादधि" इत्यादिषु परस्य ब्रह्मणः प्राकृतहेयगुणान् प्राकृतहेयदेहसंबन्धं तन्मूलकर्मवश्यतासंबन्धं च प्रतिषिध्य कल्याणगुणान् कल्याणरूपञ्च वदन्ति । तदिदं स्वाभाविकमेव रूपमुपासकानुग्रहेण तत्प्रतिपत्त्यनुगुणाकारं देवमनुष्यादिसंस्थानं करोति स्वेच्छयैव परमकारुणिको भगवान्। तदिदमाह श्रुतिः, "अजायमानो बहुधा विजायते" इति ।

---

दृष्टान्तार्थः । गुणविभागकथनं वादिविवादशमनार्थं दृष्टान्तार्थञ्च । **विद्युतः**—विद्युद्वर्णात् । 'आदित्यवर्णम्', 'रुक्मवर्णम्' इति वाक्यसरूपार्थस्वीकारस्योचितत्वात् । 'आदित्यवर्णो विग्रहश्च न प्राकृतः ; 'तमसः परस्तात्' इति श्रुतेः । अतिसूक्ष्मप्रकृतिर्हि तमः ; अतस्तत्कार्यवैलक्षण्यसिद्धिः । अन्यथा स्वरूपस्य तमसोऽन्यत्वकथनं स्यात्, तदानीं परस्तादिति **अस्ताति**प्रत्ययस्य आदित्यवर्णतोक्तेश्च वैयर्थ्यं स्यात । अतो विग्रहविशिष्टस्यैव तमःस्पर्शाभावोक्तिरिति विग्रहवैलक्षण्यसिद्धिः । **प्राकृतहेये**ति । क्वचित् सतो हि क्वचिन्निषेधः । अतो निषेध्यहेयगुणानां प्रकृतितत्संश्लिष्टजीवेषु विद्यमानत्वं **प्राकृते**त्यादिना शब्देन दर्शितम् । विग्रहविशेषविधानदर्शनात् विग्रहसामान्यनिषेधः तद्व्यतिरिक्तविषयः ; न हिंस्यादितिवत् ; निर्गुणमितिवच्च । विशेषनिषेधदर्शनात् देहसामान्यनिषेधो विशेषे पर्यवस्यति, 'पशुना यजेत' इति [1]पशुशब्दवत्, निर्गुणशब्दवच्चेति तात्पर्यम् । पूर्वोक्तमर्थं वक्ष्यमाणवचनस्यैतदर्थविषयताज्ञापनार्थमनुवदन् पूर्वोक्तसंस्थानशब्दं विवृणोति **तदिदमिति** । **परमकारुणिक** इति । देवादिसाजात्यं न कर्मनिबन्धनम्, उपासकानुग्रहार्थत्वादित्यर्थः । श्रुतिं दर्शयति **तदिदमिति** । **अजायमान** इति कर्महेतुकसुखाद्यर्थप्राकृतदेहसंगतिरूपजन्मनिषेधः । **बहुधा विजायत** इति च इच्छाहेतुकजगद्रक्षणार्थाप्राकृतविग्रहाधिष्ठानरूपजन्मविधिः ॥

ननु **अजायमान** इति परमार्थजन्मनिषेधः, **बहुधा विजायत** इत्यपरमार्थजन्मविधिः स्यात् ॥ न ; कृत्स्नमिथ्यात्ववादिपक्षे प्रयोजनाभावात् । प्रपञ्चमिथ्यात्ववचनेनैव ईश्वररूपमिथ्यात्वमपि हि सिद्धम् ; किं विशेषतोऽभिधानेन ? विहितस्य निषेधायोगाच्चायुक्तम् । मानान्तरागोचरं जन्माभिधाय तदेव कथं निषिध्यते ॥ स्वरूपस्याजत्वम् ; शरीरद्वारा बहुभवनं चोच्यत इति चेत्—न ; स्वरूपनित्यत्वदेहद्वारकजन्मनोः जीवानामपि समानतया, "तस्य धीराः परिजानन्ति योनिम्" इति अनन्तरवाक्यप्रतिपन्नवैलक्षण्यानुपपत्तेः । सर्वसाधारणलोकविदितजन्मप्रकारवैजात्ये सत्येव ह्येवं वक्तुं युक्तम् । न हि देवदत्तस्य जन्म धीरैरेव परिज्ञायत इति वक्तव्यम् ; यज्ञदत्तजन्मनो वैलक्षण्याभावात् ॥ स्वरूपेणाजस्य विचित्रसमस्तजगद्रूपेण बहुभवनमुच्यते ; तद्धि जीवेषु न संभवतीति चेन्न—"सर्वाणि रूपाणि विचित्य धीरो नामानि कृत्वाऽभिवदन् यदास्ते" इति पूर्वानुवाकेऽभिधाय, "तस्य त्वष्टा विदधत् रूपमेति" इत्यस्मिन्नप्यनुवाके जगद्रूपेण बहुभवनस्योक्तत्वात् । एवमर्थान्तर[2]परत्वे सति आनर्थक्यप्रसङ्गात्

---

1 निषेधो वा विधिर्वा भवतु ; वैयर्थ्याप्रसक्तौ विशेषे पर्यवस्यति । विधेरुदाहरणं पशुनेति, निषेधस्य निर्गुणमिति ।

2 अर्थान्तरेति । भवतारातिरिक्तार्थेत्यर्थः ।

स्मृतिश्च, "अजोऽपि सन्नव्ययात्मा भूतानामीश्वरोऽपि सन्। प्रकृतिं स्वामधिष्ठाय संभवाम्यात्ममायया। परित्राणाय साधूनां विनाशाय च दुष्कृताम्" इति। साधवो ह्युपासकाः। तत्परित्राणमेवोद्देश्यम्; आनुषङ्गिकस्तु दुष्कृतां विनाशः; सङ्कल्पमात्रेणापि तदुपपत्तेः। 'प्रकृतिं स्वाम्' इति प्रकृतिः स्वभावः। स्वमेव स्वभावमास्थाय; न संसारिणां स्वभावमित्यर्थः। आत्ममाययेति, स्वसङ्कल्परूपेण ज्ञानेनेत्यर्थः। 'माया वयुनं ज्ञानम्' इति ज्ञानपर्यायमपि मायाशब्दं नैघण्टुका अधीयते। आह च भगवान् पराशरः, "समस्ताः शक्तयश्चैता नृप! यत्र प्रतिष्ठिताः। तद्विश्वरूपवैरूप्यं रूपमन्यद्धरेर्महत्॥ समस्तशक्ति रूपाणि तत् करोति जनेश्वर!। देवतिर्यङ्मनुष्याख्याचेष्टावन्ति स्वलीलया। जगतामुपकाराय न सा कर्मनिमित्तजा" इति। महाभारते चावतारूपस्याप्यप्राकृतत्वमुच्यते—'न भूतसंघसंस्थानो देहोऽस्य परमात्मनः' इति। अतः परस्यैव ब्रह्मणः एवंरूपरूपवत्त्वादयमपि तस्यैव धर्मः। अत आदित्यमण्डलाक्ष्यधिकरणः आदित्यादिजीवव्यतिरिक्तः परमात्मैव। २१।

## भेदव्यपदेशाच्चान्यः ॥ १-१-२२ ॥

आदित्यादिजीवेभ्यो भेदो व्यपदिश्यतेऽस्य परमात्मनः, "य आदित्ये तिष्ठन् आदित्यादन्तरो यमादित्यो न वेद यस्यादित्यः शरीरं य आदित्यमन्तरो यमयति", "य आत्मनि तिष्ठन्नात्मनोऽन्तरो यमात्मा न वेद यस्यात्मा शरीरम् य आत्मानमन्तरो यमयति" इति। "योऽक्षरमन्तरे संचरन्

---

तत्परिहारायास्याः श्रुतेरवतारपरत्वमभ्युपगन्तव्यम्। तथाऽस्याः श्रुतेरवतारविषयत्वे सत्येव, "अजोऽपि सन्' इत्याद्युपबृंहणैकार्थ्यं सिध्येत्। अतोऽस्य वाक्यस्य यथोक्त एवार्थः।

उपबृंहणैकार्थ्यं दर्शयति **स्मृतिश्चेति**। 'अजोऽपि सन्', 'संभवामि' इति विधिनिषेधयोरपि यथोक्त एवार्थः। उपासकानुग्रहार्थत्वं कथमत्रावगम्यत इत्यत्राह **साधव** इति। **आनुषङ्गिक** इति। 'विनाशाय च दुष्कृताम्' इति चशब्दोऽन्वाचयपर इति भावः। समुच्चयः समप्रधानयोः; अन्वाचयः प्रधानानुषङ्गिकयोः। दुष्कृद्विनाशस्यानुषङ्गिकत्वमुपपादयति **सङ्कल्पेति**। प्रकृतिसंबन्धभ्रमनिवृत्त्यर्थं व्याचष्टे **प्रकृतिं स्वामितीति**। **स्वभावः**—निरुपाधिकधर्मः। अनेन विग्रहश्च स्वाभाविक इत्युक्तं भवति। अपारमार्थिकत्वभ्रमनिवृत्त्यर्थं व्याचष्टे **आत्ममाययेति**। **नैखण्टुकाः**—वेदनिघण्टुकाराः। तन्मूलभूतप्रयोगश्च, "यावन्तः पांसवो भूमेः सङ्ख्याता देवमायया" इति। स्वोक्तार्थवैशद्यार्थमाह **आह चेति**। **अयमपि तस्यैव धर्मः**। एवंरूपरूपमपि जीवादन्यत्वसाधकमित्यर्थः। **तद्धर्मोपदेशादिति** सौत्रधर्मशब्देन एवंरूपरूपवत्त्वमपि विवक्षितमिति भावः। सूत्रार्थमुपसंहरति **अत** इति॥

हेत्वन्तरमाह—**भेदव्यपदेशाच्चान्यः**॥ अयमन्यशब्दः पूर्वापरसूत्रेष्वप्यन्वेतव्यः। आदित्याख्यजीवाद्भेदव्यपदेशे श्रुतिमाह **य आदित्य** इति। आदित्यपर्यायोपादानं प्रकरणस्थजीवान्तरविषयपर्यायाणां प्रदर्शनार्थम्। **आदित्यादीत्यत्रादिशब्दोपात्त**देवताविशेषेभ्यो भेदव्यपदेशश्च अत एव दर्शितो भवति। तत्र हि प्रकरणे, "यस्सर्वेषु देवेषु तिष्ठन्" इति पर्याये सर्वदेवताभ्यो भेदो व्यपदिश्यते। आसां देवतानां मुक्तावस्थायामपि ताभ्यः परमात्मनो भेदज्ञापनार्थं निष्कृष्टात्मनः परमात्मनियाम्यत्वादिप्रतिपादकं पर्यायमुदाहरति **य आत्मनीति**। कारणावस्थायामपि भेदज्ञापनार्थमाह **यस्याक्षरमिति**।

यस्याक्षरं शरीरम् यमक्षरं न वेद; यो मृत्युमन्तरे सञ्चरन् यस्य मृत्युश्शरीरं यं मृत्युर्न वेद, एष सर्वभूतान्तरात्माऽपहतपाप्मा दिव्यो देव एको नारायणः" इति चास्यापहतपाप्मनः परमात्मनः सर्वान् जीवान् शरीरत्वेन व्यपदिश्य तेषामन्तरात्मत्वेनैनं व्यपदिशति । अतः सर्वेभ्यो हिरण्यगर्भादिजीवेभ्यो ऽन्य एव परमात्मेति सिद्धम् ॥ २२ ॥ ॥ इति अन्तरधिकरणम् ॥

## आकाशाधिकरणम् ॥ १-१-८ ॥

'यतो वा इमानि भूतानि जायन्ते' इति जगत्कारणं ब्रह्मेत्यवगम्यते । किं तत् जगत्कारणमित्यवे(पे)क्षायाम्, 'सदेव सोम्येदमग्र आसीत्', 'तत्तेजोऽसृजत', 'आत्मा वा इदमेक एवाग्र आसीत्', 'स इमान् लोकानसृजत', 'तस्माद्वा एतस्मादात्मन आकाशः सम्भूतः' इति साधारणैः शब्दैर्जगत्कारणे निर्दिष्टे ईक्षणविशेषानन्दविशेषरूपविशेषार्थस्वभावात् प्रधानक्षेत्रज्ञ[ादि]व्यतिरिक्तं ब्रह्मेत्युक्तम् । इदानीमाकाशादिविशेषशब्दैर्निर्दिश्य जगत्कारणत्वजगदैश्वर्यादिवादेऽप्याकाशादिशब्दाभिधेयतया प्रसिद्धचिदचिद्वस्तुनोऽर्थान्तरमुक्तलक्षणमेव ब्रह्मेति प्रतिपाद्यते-आकाशस्तल्लिङ्गादित्यादिना पादशेषेण—

---

**अक्षरम्**—अचित्समष्टिसंसृष्टा पुरुष(जीव) समष्टिः । **मृत्युः**—चित्समष्टिसंसृष्टाचित्समष्टिः ॥

**देवकामानां चेष्टे** इति वाक्यमस्य सूत्रस्य विषयतयोपात्तं **यादवप्रकाशैः** । तन्नात्यन्तोचितम् ; इन्द्रादीनामपि स्वावरदेवकामनिष्पादकत्वसंभवेन क्षेत्रज्ञवैलक्षण्यसाधकत्वाभावात् देवकामेशनस्य । आदित्यपुरस्कारेणोत्थिते पूर्वपक्षे तमादित्यं कण्ठोक्त्या निर्दिश्य तदितरदेवतानां तस्य च नियाम्यत्वं व्याप्यत्वमज्ञत्वं चोक्त्वा नियन्तृत्वव्यापित्वसार्वज्ञ्यैः परमात्मनस्तेभ्यः स्फुटतरभेदव्यपदेशपरप्रकरणस्य विषयतयोदाहरणं ह्यत्यन्तोचितम् ॥

शरीरसंबन्धावच्छिन्नैश्वर्यश्रवणसिद्धकर्मवश्यत्वात्, लोककामेशत्वादीनां सुकृतप्रकर्षेणोपपत्तेः, पाप्मोदयश्रवणस्य पापसंबन्धनिवर्तकत्वेन पुण्यसंबन्धनिवर्तकत्वाभावाच्च पूर्वः पक्षः । मोक्षप्रकरणेषूभयकर्मविषयपाप्मशब्दप्रयोगश्रुत्यन्तरैकार्थ्यप्रवृत्तिनिमित्तयोगैः पाप्मशब्दस्योभयपरत्वेन कर्मवश्यत्वनिषेधात्, तत्पूर्वकगुणान्तराणामपि जीवेष्वसंभवात्, हेतुतः फलतो द्रव्यतश्च विलक्षणविग्रहयोगस्य जीववैलक्षण्यसाधकत्वात्, आदित्यादिजीवेभ्यो भेदव्यपदेशाच्च परमात्मेति राद्धान्तः । अधिकरणार्थमुपसंहरति **अत** इति ॥ ॥ इति अन्तरधिकरणम् ॥

अथ चिदचिद्विलक्षणस्य वस्तुनो वेदान्तवेद्यत्वनिर्णयात् तदुत्तराधिकरणमनारम्भणीयमिति शङ्कां परिहरन् पेटिकाभेदतत्सङ्गती आह **यतो वा इमानी**त्यादिना । सद्ब्रह्मात्मादिसाधारणशब्दानां जगत्कारणवाचिनामर्थस्वभावादभिमतविशेषपर्यवसानं कृतम् ; वस्त्वन्तरविशेषासाधारणत्वेन व्युत्पन्नैरपि शब्दैर्जगत्कारणे निर्दिष्टे तेषामप्यर्थस्वभावादभिमतविशेषपर्यवसानं क्रियत इत्यर्थः । पूर्वं संशयव्युदासः कृतः ; अथ विपर्ययव्युदासः क्रियत इति यावत् । लिङ्गाच्छ्रुतेर्बलीयस्त्वात् कारणविशेषे आकाशादिपदश्रुत्या निश्चिते सति, लिङ्गात् तद्विरुद्धविशेषनिश्चयोऽनुपपन्न इति पूर्वपक्षोत्थानादधिकरणस्यारम्भणीयत्वं सिद्धमिति भावः । **पादशेषेणे**ति । पादशेषोऽधिकरणचतुष्टयात्मकः । तत्र प्रथमे वस्त्वन्तरप्रसिद्धशब्दविशेषेण प्रत्यवस्थानम् ; अर्थविरोधेन परिहारः । अर्थाविरोधशङ्कया प्रत्यवस्थानं द्वितीये ;

आकाशस्तल्लिङ्गात् ॥ १-१-२३ ॥

इदमाम्नायते छान्दोग्ये, "अस्य लोकस्य का गतिरिति। आकाश इति होवाच, सर्वाणि ह वा इमानि भूतान्याकाशादेव समुत्पद्यन्ते; आकाशं प्रति अस्तं यन्ति । आकाशो ह्येवैभ्यो ज्यायान् आकाशः परायणम्" इति । तत्र संदेहः—किं प्रसिद्धाकाश एवात्राकाशशब्देनाभिधीयते, उतोक्तलक्षणमेव ब्रह्मेति ।

---

विरोधोद्घाटनमुखेन परिहारः । विरोधिलिङ्गाभावेनाल्पानुकूललिङ्गसद्भावेन च प्रत्यवस्थानं तृतीये ; स्ववाक्ये विरोधिलिङ्गाभावेऽप्युपक्रमवाक्यस्थविरोधिलिङ्गप्रदर्शनेन सिद्धान्तः । उपक्रम एवानुकूललिङ्गभूयस्त्वेन प्रत्यवस्थानं चतुर्थे, तन्निरासेन सिद्धान्त इति भिदा । अनेनाधिकरणसङ्गतिश्च फलिता ॥

**आकाशस्तल्लिङ्गात्** । सिद्धान्ते कारणत्वानुवादस्य वक्ष्यमाणत्वात् विधेयं किमित्यपेक्षायां विधेयार्थज्ञापनार्थम्, **अस्य लोकस्य का गति**रित्यादिकमुपात्तम् । **गतिः**—प्राप्यम् ।

संशयमाह **तत्रे**ति । भूताकाशेप्रसिद्ध्यतिशय—परायणात्वाद्यनुपपत्तिभ्यां संशयः । भूताकाशे परमात्मनि च आकाशशब्दप्रयोगात् संशय इत्युक्तं **परैः** । तदयुक्तम् ; अश्रुतवेदान्तस्य 'सर्वाणि ह वा इमानि भूतानि' इति वाक्यस्थाकाशशब्दवत्, "आकाशो वै नाम नामरूपयोर्निर्वहिता' इत्यादिवाक्यस्थाकाशशब्दस्य च परमात्मविषयत्वाप्रतिपत्तेः ; श्रुतवेदान्तस्य संशयाभावाच्च । [1]चिदचिद्विलक्षणकारणास्तित्वायोगव्यवच्छेदो हि प्रथमपादसाध्यः ; न त्वन्ययोगव्यवच्छेदः । स त्रिपादीसाध्य एव ॥ इतः पूर्वैरधिकरणैरेवायोगव्यवच्छेदः सिद्ध इति चेन्न ; 'सदेव', 'ब्रह्मविदाप्नोति', 'आत्मन आकाशस्सम्भूतः' इत्यादिषु कारणविषयाणां सद्ब्रह्मादिशब्दानां साधारणानाम् आकाशप्राणेन्द्रादिविशेषपर्यवसाने सति चिदचिद्विलक्षणकारणास्तित्वासिद्धेः ; आकाशादिपदानामीक्षणानन्दविशेषयोगानुगुणतया नेयत्वे सत्येव तत्सिद्धेश्च । अतो यथोक्तहेतुनिबन्धनः संशयः ॥

जगत्कारणवादिवाक्यप्रतिपाद्यं वस्तु किमाकाशः, उत परमात्मेति विचारः ; तदर्थम् "अस्य लोकस्य का गतिः...आकाशः" इत्यात्राकाशः किं प्रसिद्धः, उत परः ; तदर्थं किमत्राकाशशब्दो रूढ्या वर्तते, उतावयवशक्त्या ; तदर्थं ज्यायस्त्वादिगुणाः किं मुख्यतया नेयाः, उत न ; तदर्थम् "आत्मन आकाशः संभूतः" इत्यात्मशब्दः किं कारणाकाशपरः, उत परमात्मपरः ; तदर्थं किमयम् आत्मशब्दः स्वरूपपरः, उत देहप्रतिसंबन्धिपरः इति विचारः । यदा स्वरूपपरः, तदा 'आत्मन आकाशः' इत्यत्रात्मशब्दस्य कारणाकाशपरतया, ज्यायस्त्वादिगुणानामपि कथञ्चिन्नेयत्वेन रूढिशक्तेः स्थितत्वात् विषयवाक्यस्थाकाशशब्दः प्रसिद्धाकाशपर इति वेदान्तवेद्यं वस्तु प्रसिद्धाकाश इति पूर्वपक्षे फलफलिभावः । यदा आत्मशब्दः शरीरप्रतिसंबन्धिपरः, तदा 'आत्मन आकाशः' इत्यत्रात्मशब्दस्य परमात्मपरतया ज्यायस्त्वादिगुणानामपि मुख्यत्वात् यौगिकवृत्त्या विषयवाक्यस्थाकाशशब्दः परात्मपर इति कारणवाक्यप्रतिपाद्यः परमात्मेति राद्धान्ते फलफलिभावः ।

---

1 नन्वर्थान्तरत्वव्यपदेशाधिकरणेन तत्रत्याकाशशब्दस्य परमात्मपरत्वं सिद्धमिति संशयोपपत्तिरित्यत्राह चिदिति । तत् खल्वेतदाकाशाधिकरणसिद्धब्रह्मोपजीवनेन प्रवृत्तमिति एतदभावे तदभावात् नैतादृशस्थले एकोनसहस्राधिकरणन्याय इति भावः ।

किं प्राप्तम्। प्रसिद्धाकाश इति। कुतः। शब्दैकसमधिगम्ये वस्तुनि य एवार्थो व्युत्पत्तिसिद्धः शब्देन प्रतीयते, स एव ग्रहीतव्यः। अतः प्रसिद्धाकाश एव चराचरभूतजातस्य कृत्स्नस्य कारणम्। अतस्तस्मादनतिरिक्तं ब्रह्म ॥ नन्वीक्षापूर्वकसृष्ट्यादिभिरचेतनात् जीवाच्च व्यतिरिक्तं ब्रह्मेत्युक्तम् ॥ सत्यमुक्तम्; अयुक्तं तु तत्। तथा हि—'यतो वा इमानि भूतानि जायन्ते... तद्ब्रह्म' इत्युक्ते, कुत इमानि भूतानि जायन्त इत्यादिविशेषापेक्षायाम्, "सर्वाणि ह वा इमानि भूतान्याकाशादेव समुत्पद्यन्ते" इत्यादिना विशेषप्रतीतेर्जगज्जन्मादिकारणमाकाश एवेति निश्चिते सति, 'सदेव सोम्येदमग्र आसीत्' इत्यादिष्वपि सदादिशब्दाः साधारणाकाराः तमेव विशेषमाकाशमभिदधति। 'आत्मा वा इदमेक एवाग्र आसीत्' इत्यादिष्वात्मशब्दोऽपि तत्रैव वर्तते। तस्यापि हि चेतनैकान्तत्वं न संभवति; यथा 'मृदात्मको घटः' इति। आप्नोतीत्यात्मेति व्युत्पत्त्या सुतरामाकाशेऽप्यात्मशब्दो वर्तते। अत एवमाकाश एव कारणं ब्रह्मेति निश्चिते सति ईक्षणादयः तदनुगुणा गौणा वर्णनीयाः। यदि हि साधारणशब्दैरेव सदादिभिः कारणमभ्यधायिष्यत,

---

पूर्वपक्षसमर्थनौपयिकं प्रयोजकं शिक्षयति शब्देति। प्रमाणान्तरसिद्धार्थानुवादे सति हि तदनुरोधाय क्लिष्टगत्या अर्थस्य वर्णनीयत्वं स्यात्। 'आदित्यो यूपः' इत्यादिषु यूपादेः प्रमाणान्तरगोचरतया हि तदनुरोधात् ऐक्यहानम्। मानान्तरागोचरे वस्तुनि प्रतिपाद्ये न तथा व्युत्पत्तिसिद्धार्थस्त्याज्यः, अनुरोद्धव्यान्तराभावेन शब्दस्वातन्त्र्यस्याकुण्ठितत्वादिति भावः। ततः किमित्यत्राह अत इति। प्रसिद्धाकाश एवेति। अर्थान्तरपरत्वे हि यौगिकवृत्तिराश्रयणीया। न तत् युक्तम्; रूढिर्हि योगात् प्रबलेति भावः। अर्थविरोधात् व्युत्पत्तिसिद्धार्थः त्यज्यत इति चोदयति नन्विति। परिहरति सत्यमिति। इत्यादीत्यादिशब्देन, किं प्रयन्ति, केन जीवन्ति इत्यपेक्षा विवक्षिता। विशेषप्रतीतेरिति एतद्वाक्यविशेषेण वस्तुविशेषप्रतीतिर्हेतुतयोक्ता। जगज्जन्मादिकारणमाकाश एवेति निश्चिते इति। सद्विद्यादिप्रतिपन्नकारणानुवादिलक्षणवाक्योक्तं ब्रह्म आकाश एवेति निश्चिते इत्यर्थः। यद्वा आपातप्रतीतिः पूर्वमुक्ता; निश्चित इति युक्तितो निर्णय उक्तः ॥ ननु 'यतो वा इमानि' इत्यादिवाक्यप्रकरण एव 'आनन्दो ब्रह्म' इत्यानन्दशब्देन विशेषनिर्णयोऽस्ति ॥ नैवम्; 'यदेष आकाश आनन्दो न स्यात्' इत्याकाशशब्दसामानाधिकरण्यादानन्दशब्दः किमाकाशपरः, आकाशशब्दः किमानन्दपरः इति संशयः स्यात्। तस्मादानन्दशब्दसामानाधिकरण्यरहितात् 'आकाशादेव समुत्पद्यन्ते' इति वाक्यादेव विशेषनिर्णय इत्यभिप्रायेण आकाश एवेति निश्चित इत्युक्तम्। साधारणाकाराः—साधारणरूपाः। "छागो वा मन्त्रवर्णात्" इति न्यायोऽभिप्रेतः। आत्मशब्देन विशेषनिर्णयशङ्कां निरस्यति आत्मा वा इत्यादिना। तत्रैव—आकाशे। आकाशशब्दापेक्षया आत्मशब्दोऽपि [1]साधारण इत्यर्थः। आत्मशब्दस्यावयवशक्त्याऽप्याकाशपरत्वं दर्शयति आप्नोतीति। व्यवस्थितरूढिशक्तेराकाशशब्दस्य रूढिभङ्गादपि नानार्थसाधारणरूढिशक्तेरात्मशब्दस्य रूढिभङ्ग उचित इति भावः। ईक्षणादीनां गौणत्वेन निर्वाह्यत्वमाह अत एवमिति। श्रुतिप्राबल्यात् लिङ्गं तदनुगुणं नेयमित्यर्थः। ईक्षणादिमुख्यत्वानुरोधी सदादिशब्दैरेव विशेषनिर्णय इति शङ्कायां सदादिशब्देभ्यः आकाशादिपदश्रुतेः प्राबल्यमुपपादयति यदि हीति। साधारणशब्दैरेवेति। न तु विशेष-

---

1 आत्मशब्दस्य नियन्तृवाचित्ववत् स्ववाचित्वस्यापि सत्त्वात्, उपादानोपादेययोरभेदात् इदं नानारूपमग्रे एकं स्वमासीदित्यर्थवर्णने तत् स्वमाकाश इति आकाशवाक्यान्निर्णय इति भावः।

ईक्षणाद्यर्थानुरोधेन चेतनविशेष एव कारणमिति निश्चेष्यत। आकाशशब्देन तु विशेष एव निश्चित इति नार्थस्वाभाव्यान्निर्णेतव्यमस्ति ॥

ननु 'आत्मन आकाशः सम्भूतः" इति आकाशस्यापि कार्यत्वं प्रतीयते॥ सत्यम्। सर्वेषामेवाकाशवाय्वादीनां सूक्ष्मावस्था स्थूलावस्था चेत्यवस्थाद्वयमस्ति। तत्राकाशस्य सूक्ष्मावस्था कारणम्; स्थूलावस्था तु कार्यम्। 'आत्मन आकाशस्संभूतः' इति, स्वस्मादेव सूक्ष्मरूपात् स्वयं स्थूलरूपः संभूत इत्यर्थः। 'सर्वाणि ह वा इमानि भूतान्याकाशादेव समुत्पद्यन्ते' इति सर्वस्य जगतः आकाशादेव प्रभवाप्ययादिश्रवणात् तदेव हि कारणं ब्रह्मेति निश्चितम्। यत एवं प्रसिद्धाकाशादनतिरिक्तं ब्रह्म, अत एव [च] 'यदेष आकाश आनन्दो न स्यात्', 'आकाशो वै नाम नामरूपयोर्निर्वहिता' इत्येवमादिनिर्देशोऽप्युपपन्नतरः। अतः प्रसिद्धाकाशादनतिरिक्तं ब्रह्मेति ॥

एवं प्राप्ते ब्रूमः—आकाशस्तल्लिङ्गात्। आकाशशब्दाभिधेयः प्रसिद्धाकाशादचेतनादर्थान्तरभूतो यथोक्तलक्षणः परमात्मैव। कुतः। तल्लिङ्गात्। निखिलजगदेककारणत्वं सर्वस्मात् ज्यायस्त्वं

---

शब्दान्तरे सतीति भावः। यदीत्यभिप्रेतं विपर्ययेण विशेषनिश्चायकसद्भावं दर्शयति **आकाशशब्देन त्विति**। रूढिर्हि योगमपहरतीति न्यायात् विलम्बितप्रतिपन्नात् यौगिकादपि शीघ्रधीविषये रूढ्यर्थ एवाकाशशब्दस्य परिग्राह्ये, सदादिशब्दानामीक्षणादिलिङ्गपरामर्शसापेक्षत्वेन विलम्बितप्रवृत्तितया अतिशीघ्रप्रवृत्तित्वात् प्रबलतराकाशपदश्रुत्याऽपेक्षिते विशेषे लब्धे, अर्थस्वभावनिर्णेतव्यविशेषाभावादीक्षणादयः तदनुरोधेन वर्णनीयाः। अतो न चेतनविशेषकारणत्वसिद्धिरित्यर्थः।

कार्यतयाऽवगतस्य परमकारणत्वानुपपत्तिमुखेन चोदयति **नन्विति**। परिहरति **सत्यमिति**। कार्यत्वेऽभिमतिः, तस्य कारणत्वभञ्जकत्वेऽनङ्गीकारः। वाय्वाद्युपादानं निदर्शनतया। **सूक्ष्मावस्था**शब्देन तन्मात्रावस्था[1] कथ्यते। 'आत्मन आकाशः' इति वाक्ये आत्मशब्दः स्ववाचीत्यर्थः। कुत इत्थमस्वारस्येन अर्थो वर्ण्यत इत्यत्राह **सर्वाणीति**। **प्रभवाप्ययादी**त्यादिशब्देनावकाशप्रदानेन **स्थितिहेतुत्वमुच्यते**। **परायण**मिति ह्यत्रोक्तम्। **नामरूपयोर्निर्वहितेत्येवमादी**त्यादिशब्देन "कं ब्रह्म खं ब्रह्म 'प्राणं चास्मै तदाकाशं चोचुः' 'परमे व्योमन् प्रतिष्ठिता' इति वाक्यान्यभिप्रेतानि। पूर्वपक्षमुपसंहरति **अत इति**।

राद्धान्तमारभते **एवमिति**। पूर्वाधिकरण इव नात्र तद्धर्मोपदेशादित्युक्तम्; अपि तु तल्लिङ्गादित्युक्तम्; वाक्यान्तरप्रसिद्धार्थस्यानूदितस्य[2] हेतुतया विवक्षितत्वात्। लिङ्गिसंबन्धित्वेन प्रमाणान्तरोपलब्धं हि लिङ्गं भवति। लिङ्गं च किमित्यत्राह **निखिलजगदिति**। 'सर्वाणि ह वा इमानि भूतानि' इत्यस्मिन् विषयवाक्ये सर्वशब्दस्यासङ्कोचमभिप्रेत्य **निखिले**त्युक्तम्। **भूतशब्दस्य** वाय्वादिचतुष्टयमात्रपरत्वव्युदासाय **जगच्छब्दः**। महच्छब्द-पञ्चशब्द-पृथिव्यादिशब्द-समभिव्याहाराभावे भूतशब्दस्याचित्संसृष्टचेतनपरत्वं स्वतःप्राप्तम्; "यतो वा इमानि भूतानि जायन्ते येन जातानि जीवन्ति यत्प्रयन्त्यभिसंविशन्ति", "न हिंस्यात् सर्वा भूतानि", "भूतानां प्राणिनः

---

1 तन्मात्रावस्था—शब्दतन्मात्रावस्था। तस्या अप्याकाशशब्दवाच्यत्वमस्तीति भावः। यद्वा तन्मात्रेत्यस्य आकाशमात्रेत्यर्थः। तेन त्रिवृत्कृतकार्याकाशव्यावृत्तिः। स तन्मात्रजन्यः।

2 अनूदितस्येति। लिङ्गपदस्य पूर्वप्रसिद्धत्वोपलक्षितार्थवाचित्वस्वाभाव्यमस्ति। अत्रायं धर्मः ह्वै इति प्रसिद्धत्वेनावगत इति तेन पदेनेयं सिद्धान्तयुक्तिः सूच्यत इति भावः।

परायणत्वमित्यादीनि परमात्मलिङ्गान्युपलभ्यन्ते। निखिलैकारणत्वं ह्यचिद्वस्तुनः प्रसिद्धाकाशशब्दाभिधेयस्य नोपपद्यते; चेतनवस्तुनस्तत्कार्यत्वासंभवात्। परायणत्वं च चेतनानां परमप्राप्यत्वम्। तच्चाचेतनस्य हेयस्य सकलपुरुषार्थविरोधिनो न संभवति। सर्वस्माज्ज्यायस्त्वं च निरुपाधिकं सर्वैः कल्याणगुणैः सर्वेभ्यो निरतिशयोत्कर्षः। तदप्यचितो नोपपद्यते।

यदुक्तम्—जगत्कारणविशेषाकाङ्क्षायामाकाशशब्देन विशेषसमर्पणादन्यत् सर्वं तदनुरूपमेव वर्णनीयमिति—तदयुक्तम्; "सर्वाणि ह वा इमानि भूतान्याकाशादेव समुत्पद्यन्ते" इति प्रसिद्धवन्निर्देशो हि प्रमाणान्तरप्राप्तिमपेक्षते। प्रमाणान्तराणि च, "सदेव सोम्येदमग्र आसीत्" इत्येवमादीन्येव वाक्यानि। तानि च यथोदितप्रकारेणैव ब्रह्म प्रतिपादयन्तीति तत्प्रतिपादितं ब्रह्म आकाशशब्देन प्रसिद्धवन्निर्दिश्यते। संभवति च परस्य ब्रह्मणः प्रकाशकत्वादाकाशशब्दाभिधेयत्वम्, आकाशते आकाशयति चेति।

---

श्रेष्ठाः" इत्यादिप्रयोगस्वारस्यात्। अतः सर्वभूतकारणत्वोक्त्या चिदचिदात्मकसमस्तप्रपञ्चकारणत्वमुक्तं भवतीत्यभिप्रायेण **निखिलजग**दित्युक्तम्। तत्र निमित्तान्तराश्रवणात् वाक्यान्तरैकार्थ्याच्च निमित्तोपादानादिरूपसर्वविधकारणत्वाभिप्रायेणै**ककारणत्व**मित्युक्तम्। आकाशस्य तल्लिङ्गानुपपत्तिमाह **निखिलकारणत्व**मिति। अनेनैककारणत्वानुपपत्तिश्चाभिप्रेता। न ह्याकाशो निमित्तकारणं भवितुमर्हति। हेयत्वात् पुरुषार्थविरोधित्वाच्च प्राप्यत्वं च न संभवतीत्याह **परायणत्वं चे**ति। **अचेतनस्य**। अचेतनत्वेन स्वरूपानन्तर्भूतत्वात् हेयत्वमित्यर्थः। **सकलपुरुषार्थविरोधिनः**। सकलानां पुरुषाणां साक्षात्पुरुषार्थो मोक्षः; बन्धहेतुतया तस्य विरोधिन इत्यर्थः। यद्वा मोक्षविरोधितया हेयस्य, शब्दादिनिषिद्धविषयप्रावण्यजननात् धर्मादिसकलपुरुषार्थविरोधिनः। सर्वविधसुखस्य मोक्षान्तर्भावात् सकलपुरुषार्थरूपो मोक्षः, तद्विरोधिन इति वाऽर्थः। यद्वा कारणावस्थायामत्यन्तज्ञानसङ्कोचहेतुतया चतुर्णामपि पुरुषार्थानां विरोधिन इत्यर्थः। ज्यायस्त्वानुपपत्तिमाह **सर्वस्मा**दिति।

अत्र पूर्वपक्षयुक्तेः कः परिहार उक्तो भवतीत्यपेक्षायां सूत्राभिप्रेतार्थं वक्ष्यन् परोक्तमनुवदति **यदुक्त**मिति। परिहरति **तदयुक्त**मिति। प्रथमं पुरोवादसापेक्षेण अनुवादेन पुरोवादिवाक्यविरुद्धार्थप्रतिपादनायोगं वक्तुमनुवादलिङ्गवत्त्वमाह **सर्वाणी**ति। प्रसिद्धवन्निर्देशोऽस्तु; ततः किमित्यत्राह **प्रसिद्धव**दिति। सापेक्षत्वमस्तु; ततः किमित्यत्राह **प्रमाणान्तराणि चे**ति। कथमाकाशशब्दस्य परब्रह्मवाचित्वमित्यत्राह **संभवति चे**ति। **प्रकाशकत्वात्**—अन्येषां सर्वार्थप्रकाशकत्वात्। **आकाशते**—स्वस्मै प्रकाशते। **आकाशयति**—अन्यं प्रकाशयति स्वात्मने इत्यर्थः। यद्वा **प्रकाशकत्वा**दिति णिजन्तत्वेन च अणिजन्तत्वेन च व्युत्पत्तिद्वयस्य तन्त्रोक्तिः। तस्यैव विवरण**माकाशत** इत्यादि। रूढिप्राबल्यमर्थाविरोधे सतीति अपशूद्राधिकरणनयोपजीवनेनात्रावयवशक्त्या निर्वाहः कृतः; रूढ्यपरित्यागेनापर्यवसानवृत्त्या आकाशशब्दस्य आकाशशरीरकपरमात्मपरतया निर्वाहोऽप्यभिमतः; वैश्वानराधिकरणे वैश्वानरशब्दस्योभयथाऽपि परमात्मपरत्वस्य वक्ष्यमाणत्वात्; आकाशादिशब्दानां तत्तच्छरीरकपरमात्मवाचित्वस्यानन्तरपादेऽनुवदिष्यमाणत्वाच्च[1]। आकाशशब्दस्याव्याकृतशरीरकपरमात्मपरत्वं तु **यादवप्रकाशोक्तं** विलम्बद्वयवत्त्वादुपेक्षितम्।

---

1 अन्तराधिकरणे 'प्राणो ब्रह्म कं ब्रह्म खं ब्रह्म' इत्यत्र, 'प्राणशरीरतया प्राणस्य नियन्तृत्वेन',

किञ्च अनेनाकाशशब्देन विशेषसमर्पणक्षमेणापि चेतनांशं प्रति असंभावितकारणभावमचेतनविशेषमभिदधानेन, "तदैक्षत बहु स्यां प्रजायेय, "सोऽकामयत बहु स्यां प्रजायेय" इत्यादिवाक्य[वि]शेषावधारितसार्वज्ञ्यसत्यसङ्कल्पत्वादिविशिष्टापूर्वार्थप्रतिपादनसमर्थवाक्यार्थान्यथाकरणं न प्रमाणपदवीमधिरोहति । एवमपूर्वानन्तविशेषणविशिष्टापूर्वार्थप्रतिपादनसमर्थानेकवाक्यगतिसामान्यं च एकेनानुवादस्वरूपेणान्यथा कर्तुं न शक्यते ।

यत्तु–आत्मशब्दश्चेतनैकान्तो न भवति; 'मृदात्मको घटः' इत्यादिदर्शनादित्युक्तम्–तत्रोच्यते । यद्यपि चेतनादन्यत्रापि क्वचिदात्मशब्दः प्रयुज्यते, तथापि शरीरप्रतिसंबन्धिनि आत्मशब्दस्य प्रयोगप्राचुर्यात् 'आत्मा वा इदमेक एवाग्र आसीत्', 'आत्मन आकाशः संभूतः' इत्यादिषु शरीरप्रतिसंबन्धिचेतन एव प्रतीयते । यथा गोशब्दस्यानेकार्थवाचित्वेऽपि प्रयोगप्राचुर्यात् सास्नादिमानेव स्वतः प्रतीयते ; अर्थान्तरप्रतीतिस्तु तत्तदसाधारणनिर्देशापेक्षा—तथा स्वतःप्राप्तं शरीरप्रतिसंबन्धिचेतनाभिधानमेव, 'स ईक्षत लोकान्नु सृजा इति', 'सोऽकामयत । बहु स्यां प्रजायेय'

---

न केवलं प्रसिद्धवन्निर्देशमात्रमनुवादकत्वसाधकम्, "यदाग्नेयोऽष्टाकपालः", "उपरि हि देवेभ्यो धारयति" इत्यादौ अदर्शनादिति शङ्कायाम्, अयोग्यत्वे निश्चिते सति प्रसिद्धवन्निर्देशोऽनुवादकत्वसाधक इत्यभिप्रायेणाह **किञ्चेति** । **विशेषसमर्पणक्षमेणापीति** । एकपदश्रवणवेलायां विशेषसमर्पणक्षमेणापि, परामर्शदशायामयोग्यतया निश्चितोऽर्थो न प्रतिपादयितुं शक्यत इत्यभिप्रेत्य **असंभावितकारणभावमित्युक्तम्** । **तदैक्षतेति** सद्विद्यावाक्यशेषः[1] । **सोऽकामयतेति** ब्रह्मविदाप्नोतीत्यनुवाकवाक्यशेषः । ब्रह्मणो योग्यार्थत्वज्ञापनाय सार्वज्ञ्यादिकमुक्तम् । **न प्रमाणपदवीमधिरोहतीति** । अयोग्यार्थेनानुवादरूपेण वाक्येन योग्यापूर्वार्थवाक्यानामन्यथाकरणमयुक्तमित्यर्थः । उक्तवैषम्यद्वयानुवादेन अनेकवाक्यान्येकेन वाक्येन बाधयितु(बाधितु ?)मशक्यानीत्याह **एवमिति** । **गतिसामान्यम्**—प्रवृत्तिसामान्यम् । 'अस्य लोकस्य का गतिः' इत्युपक्रमवशादन्यपरत्वं स्फुटम् । एवमाकाशकारणपक्षे अन्यपरत्वमेकवाक्यत्वमयोग्यार्थत्वमनुवादरूपत्वम्, स्वपक्षे अनन्यपरत्वं वाक्यबहुत्वं योग्यार्थत्वमपूर्वत्वञ्चेति वैषम्यचतुष्टयमुक्तम् । एवं योग्यार्थश्रुतिमूलं लिङ्गम् अयोग्यार्थश्रुतितः प्रबलमिति सिद्धान्तन्याय उक्तो भवति । यथा गङ्गाशब्दः स्वार्थसमर्पणक्षमो भूतलधर्मतया प्रत्यक्षसिद्धघोषाधिकरणत्वलिङ्गविरोधेनान्वयायोग्यः स्वार्थप्रतिपादनक्षमत्वाभावात् श्रुत्याभासः; एवं योग्यार्थश्रुतिमूललिङ्गापेक्षया आकाशश्रुतिः श्रुत्याभास इति ।

आत्मशब्दानैकान्त्यं **यत्त्वित्यादिना**ऽनूद्य परिहरति **तत्रेति** । स्वतःप्राप्त्या आत्मशब्दो विशेषवाचीत्यर्थः । प्रकृतब्रह्मवाचितच्छब्दसामानाधिकरण्याच्च न स्वरूपपरत्वमिति अर्थसिद्धम् । न केवलमर्थान्तरसाधकनिर्देशाभावः, स्वतःप्राप्तार्थसाधकनिर्देशोऽप्यस्तीत्याह–**स ईक्षतेति** ॥

---

'सुखाकाशयोरपि ब्रह्मणः शरीरतया...विशेषणत्वमिति स्वपदप्राणपदयोः विशिष्टपरत्वसंभवभाषणादिति भावः । पाञ्चरात्राधिकरणेऽपि भाषितमनुसंधेयम् । प्रकृतविषयवाक्ये तदयोगेऽपि अधिकरणेऽत्र तस्यापि विवक्षितत्वं नायुक्तम् । प्रकृतविषयवाक्यमपि सर्वत्रप्रसिद्ध्यधिकरण प्रथमसूत्रसिद्धान्ते निर्देक्ष्यति । [1] तदैक्षतेत्यादेः आकाशवाक्यव्यूहनिविष्टत्वाभावात् कथं वाक्यशेषेत्युक्तमित्यत्राह तदिति । वाक्यविशेषेति पाठे तु नैष क्लेशः ।

इत्यादितत्तद्वाक्यविशेषा एव स्थिरीकुर्वन्ति ॥ एवं वाक्य[वि]शेषावधारितानन्यसाधारणानेकापूर्वार्थविशिष्टं निखिलजगदेककारणं 'सदेव सोम्य' इत्यादिवाक्यसिद्धं ब्रह्मैवाऽऽकाशशब्देन प्रसिद्धवत् 'सर्वाणि ह वा इमानि भूतानि' इत्यादिवाक्येन निर्दिश्यत इति सिद्धम् ॥ २३ ॥

॥ इत्याकाशाधिकरणम् ॥

प्राणाधिकरणम् १-१-९

## अत एव प्राणः ॥ १-१-२४ ॥

इदमाम्नायते छान्दोग्ये, "प्रस्तोतर्या देवता प्रस्तावमन्वायत्ता" इति प्रस्तुत्य "कतमा सा देवतेति । प्राण इति होवाच, सर्वाणि ह वा इमानि भूतानि प्राणमेवाभिसंविशन्ति, प्राणमभ्युज्जिहते । सैषा देवता प्रस्तावमन्वायत्ता । तां चेदविद्वान् प्रास्तोष्यः, मूर्द्धा ते व्यपतिष्यत्" इति ॥

अत्र प्राणशब्दोऽप्याकाशशब्दवत् प्रसिद्धप्राणव्यतिरिक्ते परस्मिन्नेव ब्रह्मणि वर्तते, तदसाधारणनिखिलजगत्प्रवेशनिष्क्रमणादिलिङ्गात् प्रसिद्धवन्निर्दिष्टात् ।

अधिकाशङ्का तु कृत्स्नस्य भूतजातस्य प्राणाधीनस्थितिप्रवृत्त्यादिदर्शनात् प्रसिद्ध एव प्राणो

---

अधिकरणार्थमुपसंहरति एवमिति । योगाद्रूढेः प्राबल्यात् प्रसिद्धार्थपरत्वे सति श्रुतिविरोधात् दुर्बलं लिङ्गादि तदनुरोधेन नेयमिति पूर्वपक्षयुक्तिः । योग्यार्थश्रुतिमूललिङ्गादयोग्यार्थस्य पदस्य श्रुत्याभासत्वात् योग्यार्थः स्वीकार्य इति राद्धान्तयुक्तिः ॥ (२३)...

उक्ताधिकरणन्यायमतिदिशति **अत एव प्राणः** ॥ विषयमाह इदमिति । **मूर्द्धा ते व्यपतिष्यत्**—[1]आत्मसत्ता न लभ्येतेत्यर्थः । किं वेदान्तवेद्यः प्रसिद्धः प्राणः, उत परमात्मा ; तदर्थं प्राण इति होवाच, प्राणमेवाभिसंविशन्तीत्युक्तः प्राणः किं प्रसिद्धः, उत परः; तदर्थं किं प्राणशब्दो रूढः, उत यौगिकः ; तदर्थं भूतजातस्य प्रसिद्धप्राणायत्तस्थितिप्रवृत्तित्वमस्ति, उत न—इति विचारः । यदाऽस्ति, तदा रूढत्वात् विषयवाक्यस्थप्राणशब्दः प्रसिद्धप्राणपर इति सर्ववेदान्तवेद्यः प्रसिद्धः प्राण इति पूर्वपक्षे फलितम् । राद्धान्ते तु—यदा प्राणायत्तस्थितिप्रवृत्तित्वं नास्ति, तदाऽवयवशक्त्या विषयवाक्यस्थप्राणशब्दः परमात्मपर इति सर्ववेदान्तवेद्यः परमात्मेति फलफलिभावः । अक्षरार्थमाह **अत्रेति** । **आकाशशब्दवदि**त्यत्र रूढिप्राबल्यतत्परिहारादिकं पूर्वोक्तं सर्वमनुसन्धेयम् । न हि प्रत्युदाहरणं न्यायोऽतिदेष्टव्यः । अतिदेशस्य हि प्रयोजनम् अधिकाशङ्कापरिहारः । अतः सूत्रकाराभिमतामधिकाशङ्कां दर्शयति **कृत्स्नस्येति** । अत्र अविरोधशङ्कया प्रत्यवस्थानं विरोधफुटीकरणं चानुसन्धेयम् । **स्थितिप्रवृत्त्यादी**त्यादिशब्देन निवृत्तिरुच्यते ; प्रवृत्तिहेतुभूतज्ञानचिकीर्षे च । स्थितिप्रवृत्तिहेतुत्वेनोत्पत्तिकारणत्वमर्थसिद्धमिति भावः । यद्वा—"यदा वै पुरुषः स्वपिति प्राणं तर्हि वागप्येति, प्राणं चक्षुः, प्राणं श्रोत्रम् , प्राणं मनः । यदा प्रबुद्ध्यते, प्राणादेवाधि पुनर्जायन्ते" इति प्रसिद्धवन्निर्देशरहितया श्रुत्या प्राणस्य अप्ययोद्गमनहेतुत्वावगमश्च **आदि**शब्देन विवक्षितः । अस्मिन् प्रकरणे उद्गीथप्रतिहारयोर्देवतात्वेन अन्नादित्यावुक्तौ । तयोश्चाब्रह्मत्वात् प्राणोऽपि ब्रह्मव्यतिरिक्तः प्रसिद्ध एव ग्राह्य इतीदं भाष्येऽनादृतम् ; प्रकरणोक्तानाम् अन्नमयादीनामब्रह्मत्वेऽपि कारणस्य परब्रह्मत्वमानन्दवल्ल्यां

---

1 श्रुतेर्यथाश्रुतार्थग्रहणसंभवादिदमेव टीकावाक्यमयथाश्रुतार्थं नेयम्—भा० प्र०

जगत्कारणतया निर्देशमर्हतीति ॥ परिहारस्तु—शिलाकाष्ठादिषु, चेतनस्वरूपे च तदभावात्, "सर्वाणि ह वा इमानि भूतानि प्राणमेवाभिसंविशन्ति प्राणमभ्युज्जिहते" इति नोपपद्यत इति । अतः प्राणयति सर्वाणि भूतानीति कृत्वा परं ब्रह्मैव प्राणशब्देनाभिधीयते । अतः प्रसिद्धाकाश-प्राणादेरन्यदेव निखिलजगदेककारणमपहतपाप्मत्वसार्वज्ञ्यसत्यसङ्कल्पत्वाद्यनन्तकल्याणगुणगणं परं ब्रह्मैवाकाशप्राणादिशब्दाभिधेयमिति सिद्धम् ॥ २४ ॥ ॥ इति प्राणाधिकरणम् ॥

ज्योतिरधिकरणम् १-१-१०

अतः परं जगत्कारणत्वव्याप्तेन येन केनापि निरतिशयोत्कृष्टगुणेन जुष्टं ज्योतिरिन्द्रादि-शब्दैरर्थान्तरप्रसिद्धैरप्यभिधीयमानं परं ब्रह्मैवेत्यभिधीयते ज्योतिश्चरणाभिधानादित्यादिना—

ज्योतिश्चरणाभिधानात् ॥ १-१-२५ ॥

इदमाम्नायते छान्दोग्ये—"अथ यदतः परो दिवो ज्योतिर्दीप्यते विश्वतः पृष्ठेषु सर्वतः पृष्ठेष्वनुत्तमेषूत्तमेषु लोकेषु, इदं वा व तत् यदिदमस्मिन्नन्तःपुरुषे ज्योतिः" इति । तत्र संशयः, किमयं ज्योतिश्शब्देन निर्दिष्टो निरतिशयदीप्तियुक्तोऽर्थः प्रसिद्धमादित्यादिज्योतिरेव कारणभूतं

---

समर्थितमिति प्रकरणमात्रस्य पूर्वपक्षावलम्बनत्वेन बुद्धावनारोहात् । जगत्कारणतयेति । संसृष्टं प्रति कारणत्वं संभवतीति भावः ॥

अधिकं परिहारं दर्शयति परिहारस्त्विति । आदिशब्दोक्त आकाशादिः । 'प्राणं तर्हि वागप्येति' इत्यादिश्रुतिरिन्द्रियव्यापारविषया । प्राणशब्दस्य परब्रह्मवाचित्वं कथमिति शङ्कां परिहरन् अधिकरणार्थमुपसंहरति अत इति ।

वृत्ताधिकरणद्वयस्य अवान्तरपेटिकात्वं दर्शयति अतः प्रसिद्धेति ॥

वर्तिष्यमाणाधिकरणद्वयस्य पेटिकान्तरत्वमाह अतः परमिति । वस्त्वन्तरासाधारणैः शब्दैर्ज-गत्कारणे निर्दिश्यमानेऽपि कारणत्वाभिधायिनां वाक्यानां विशेषपर्यवसानं कृतम् । अथ कारणत्वाक्षे-पकलिङ्ग[विशेष]वाचिनां वाक्यानामभिमतविशेषपर्यवसानमुच्यत इत्यवान्तरपेटिकाभेदस्तत्सङ्गतिश्चेत्यर्थः । ज्योतिश्शब्देनावान्तरसङ्गतिश्च द्योतिता । प्राणः वायुविशेषः ; आदित्यादिज्योतिः तेजोविशेषः; अतः आकाशप्राणज्योतिषां क्रमो युक्त इति ॥ नन्वाकाशादिशब्दत्रयं परमात्मपरमिति सिद्धान्तितम् ॥ सत्यम् ; तथापि प्रसिद्ध्यनुसारिण्या पूर्वपक्षदृष्ट्या सङ्गत्युपपत्तिः । येन केनापीति न लिङ्गानरपरत्वं विवक्षितम् ; किन्तु उदाहृतविषयवाक्यप्रतिपन्नोऽयमेव गुणः कारणत्वाक्षेपक इति गुणविशेषानियम इति भावः । उभयोः पेटिकयोरनुयायिनमाकारं दर्शयति अर्थान्तरप्रसिद्धैरपीति ।

ज्योतिश्चरणाभिधानात् ॥ इदमित्यादि । पृष्ठेषु—उपरितनेषु । 'त्रिपादूर्ध्वः', 'तमसोपरिष्टात्' इत्यादिश्रुतिभ्यः । व्यष्टिसमष्टिविवक्षया विश्वतः, सर्वत इत्युक्तम् । अनुत्तमेषु—यस्मादन्य उत्तमो नास्तीत्यनुत्तमः । विश्वतः—कृत्स्नभूमिप्रदेशात्, सर्वतः—कृत्स्नान्तरिक्षप्रदेशात् पृष्ठेषु—बहिर्भूतेषु, इति योजनासंभवात् पूर्वपक्षोत्थानम् । आदित्यो ह्यूर्ध्वलोकेष्वपि रश्मिद्वारा दीप्यते । तत्रेति । लोकप्रसिद्धि-भूतचरणत्वाभ्यां संशयः । निरतिशयदीप्तियुक्तोऽर्थ इति पूर्वपक्षसिद्धान्तसाधारणनिर्देशः । निरतिशयदीप्तिरेव कारणत्वाक्षेपकं लिङ्गम् ; "न तत्र सूर्यो भाति....तस्य भासा सर्वमिदं विभाति"

**ब्रह्म, उत समस्तचिदचिद्वस्तुजातविसजातीयः परमकारणभूतोऽमितभाः सर्वज्ञः सत्यसङ्कल्पः पुरुषोत्तमः इति । किं युक्तम् । प्रसिद्धमेव ज्योतिरिति । कुतः । प्रसिद्धवन्निर्देशेऽप्याकाशप्राणादिवत् स्ववाक्योपात्तपरमात्मव्याप्तलिङ्गविशेषादर्शनात् परमपुरुषप्रत्यभिज्ञानासंभवात् । कौक्षेय-ज्योतिषैक्योपदेशाच्च प्रसिद्धमेव ज्योतिः कारणत्वव्याप्त[1]निरतिशयदीप्तियोगाज्जगत्कारणं ब्रह्मेति ॥**

---

इति प्रकरणे "तथाऽक्षरात् संभवतीह विश्वम्" इति निरतिशयदीप्तियुक्तस्य वस्तुनः कारणत्वश्रवणात् । तत्प्रकरणस्य कारणविषयत्वं ह्यविगीतम् । परमात्मविषयत्वे हि विमतिः । निरतिशदीप्तियोगात्कारणभूतं ब्रह्म भवन् ज्योतिःशब्दनिर्दिष्टोऽर्थः किं प्रसिद्धमादित्यादिज्योतिरेवेत्यन्वयार्थः । सावान्तरभेदसमष्टि-व्यष्ट्यादिविवक्षया **समस्तचिदचिद्वस्तुजात**शब्दः । व्याप्तिग्रहणस्थानोपनिषत्प्रसिद्धं विशेषणमाह **सर्वज्ञः सत्यसङ्कल्प** इति । "यः सर्वज्ञः सर्ववित् यस्य ज्ञानमयं तपः" इति हि श्रूयते । अस्यामुप-निषदि पुरुषसूक्तप्रत्यभिज्ञानात् **पुरुषोत्तम** इत्युक्तम् ।

"अथ यदतः परो दिवो ज्योतिर्दीप्यते" इत्यत्र **ज्योति**श्शब्दः किं प्रसिद्धादित्यादिज्योति-र्विषयः, उत परमात्मपर इति ; तदर्थं पूर्ववाक्ये द्युसंबन्धितया निर्दिष्टस्य परमात्मनः किमत्र प्रत्यभिज्ञानं नास्ति, उतास्ति ; तदर्थं कौक्षेयज्योतिषैक्योपदेशः उपदेशभेदश्च किं प्रत्यभिज्ञाविरोधिनौ, उताविरोधिनौ; पूर्वस्मिन् ब्राह्मणवाक्ये गायत्रीशब्दः किं प्रसिद्धगायत्रीपरः, उत न—इति विचारः । यदा विरोधिनौ, गायत्रीशब्दार्थश्च प्रसिद्धः—तदाऽस्मिन् वाक्ये परमात्मप्रत्यभिज्ञाऽभावात् द्युसंबन्धिज्योतिः प्रसिद्धादि-त्यादिज्योतिरेवेति पूर्वपक्षे फलफलिभावः । यदा कौक्षेयज्योतिषैक्योपदेशो विभक्तिभेदश्च न परप्रत्यभिज्ञा-विरोधिनौ, गायत्रीशब्दश्च ब्रह्मपरः—तदा पूर्ववाक्योक्तद्युसंबन्धिपरमात्मन इह प्रत्यभिज्ञानात् दिवः परत्वेनोक्तज्योतिः परमात्मैवेति राद्धान्ते फलफलिभावः ॥ [**स्ववाक्ये**ति । १] ननु कथं स्ववाक्ये परमात्मलिङ्गाभावः ; निरतिशयदीप्तियोगाक्षिप्तं कारणत्वं हि परमात्मलिङ्गम् ॥ नैवम् । न हि जगत्कारणत्वमात्रं परमात्मलिङ्गम्, अपि तु कारणत्वविशेष एव तल्लिङ्गम् । कृत्स्नचेतनाचेतनं प्रति सर्वविधकारणं हि परमात्मा । पूर्वाधिकरणद्वयविषयवाक्येऽपि 'सर्वाणि ह वा इमानि भूतानि' इति समस्तचेतनाचेतनं प्रति कारणत्वरूपं परमात्मलिङ्गं स्ववाक्यस्थम् । न तथाऽत्र परमात्मलिङ्गभूत-कारणत्वविशेषः स्ववाक्ये[2] दृश्यत इत्यभिप्रायेणोक्तं **परमात्मव्याप्तलिङ्गविशेषादर्शना**दिति । ततः किमित्यत्राह **परमपुरुषे**ति । हेत्वन्तरमाह **कौक्षेये**ति । प्राकृततेजस्तत्त्वकार्यतया आदित्यादेः कौक्षेयज्योतिषश्च एकजातीयतया सामानाधिकरण्यनिर्देशः ऐक्योपदेशः । कौक्षेयज्योतिषश्च भौतिकत्वम् उष्णत्वघोषगुणकत्वामननात्सिद्धम् । "तस्यैषा दृष्टिः, यत्रैतदस्मिंश्छरीरे संस्पर्शेनोष्णिमानं विजानाति । तस्यैषा श्रुतिः, यत्रैतत्कर्णावपिगृह्य निनदमिव नदथुमिव अग्नेरिव ज्वलतः उपश्रृणोति" इति हि श्रूयते । **प्रसिद्धमेव ज्योतिरि**ति । आदित्यादौ ज्योतिश्शब्दस्य प्रसिद्धत्वादिति भावः । एवं **स्ववाक्ये**त्यादिना **कौक्षेये**त्यादिना च स्ववाक्ये विरोधिलिङ्गाभावास्वपानुकूललिङ्गसद्भावौ दर्शितौ भवतः । [**दीप्ती**ति । १] **दीप्यत** इति श्रूयमाणा दीप्तिश्च रूपवत्पदार्थनिष्ठा भवतीत्यभिप्रेतम् ; अस्यापि हेतोः परिहरिष्यमाणत्वात् ।

---

1 कारणत्वव्याप्तेति । कारणमात्रवृत्तीत्यर्थः । तदितरावृत्तित्वमेव विवक्षितम् । न तु व्यक्तधनेकत्वघटिता व्याप्तिरिह । एवमुत्तराधिकरणेऽपि । 2 तर्हि वाक्यान्तरात् परमात्म-सिद्धौ किं बाधकमिति चेत्—अधिककारणत्वाश्रयवस्त्वन्तरसत्त्वे एतद्दीप्तिनिरतिशयत्वभङ्ग इति स एव बाधकः ।

**एवं प्राप्ते प्रचक्ष्महे—ज्योतिश्चरणाभिधानात्। द्युसंबन्धितया निर्दिष्टं निरतिशयदीप्तियुक्तं ज्योतिः परमपुरुष एव। कुतः। "पादोऽस्य सर्वा भूतानि त्रिपादस्यामृतं दिवि" इत्यस्यैव द्युसंबन्धिनश्चरणत्वेन सर्वभूताभिधानात्॥**

[1]सर्वगतस्य ब्रह्मणो द्युमर्यादत्वासंभवस्तु परैः पूर्वपक्षहेतुतयोक्तो भाष्ये नादृतः; भौतिकज्योतिषोऽपि द्युमर्यादत्वासंभवात। सर्वत्र भौतिकानि ज्योतींषि हि विद्यन्ते। उपासनार्थप्रदेशविशेषपरिग्रहस्तु ब्रह्मणोऽप्युपपद्यते। लोकेष्वित्यधिकरणबहुत्वप्रतीतिश्च सर्वत्र सतो ब्रह्मण उपपन्ना। 'तदेतद्दृष्टं च श्रुतं चेत्युपासीत चक्षुष्यः श्रुतो भवति य एवं वेद' इत्यल्पफलत्वश्रवणं तु ब्रह्मविदामपि विद्यानुकूलसकलफलप्रदत्वात परमात्मन उपपद्यते। एवमेतेषां हेतूनामधिकरणान्तरपरिहार्यत्वादमी पूर्वपक्षेऽनादृताः॥

**एवं प्राप्त** इति। चरणत्वेन सर्वभूताभिधानं कारणस्य जीववैलक्षण्यनिश्चायकम्; जीवमात्रस्य सर्वभूतपादवत्त्वानुपपत्ते। तत एव पुरुषसूक्तप्रत्यभिज्ञापकतया देवताविशेषनिश्चयः। तद्द्वारा, दीप्तियोगस्य भौतिकज्योतिष्ट्वे हेतुतापरिहारश्च भवति॥ पुरुषसूक्तं कस्मात् सूत्रकारेण न निरूपितम्॥ संशयहेत्वभावादिति ब्रूमः। सन्दिग्धे हि न्यायः प्रवर्तते। पुरुषसूक्ते च ज्योतिश्शब्दः छन्दोभिधानादिकं प्रधानक्षेत्रज्ञासाधारणलिङ्गान्तरं वा क्वचिन्न दृश्यते। सर्वभूतपादवत्त्वादिधर्माश्च तयोरसंभाविताः॥ तर्हि चिदचिद्विलक्षणकारणास्तित्वविषयस्य प्रथमपादस्यानारम्भः स्यादिति चेन्न; बहूनां वेदान्तवाक्यानां प्रकृतिपुरुषकारणमात्रवादित्वे तद्विरोधेनात्रापि संशयप्रसङ्गात्, तेषां भूयसां बलीयस्तया विपरीतनिश्चयप्रसङ्गाच्च तद्व्युदासायारम्भणीयत्वात्। तेषु च प्रकृतिपुरुषविलक्षणविषयतया न्यायतो निश्चितेषु संशयविपर्ययाभावात पुरुषसूक्तस्य चिदचिद्विलक्षणे परे ब्रह्मणि प्रामाण्यमप्रतिभटमवतिष्ठते। अतो न तत्र निरूपणीयम्। तस्य च तत्त्वपरत्वं [पुरुषसूक्तस्य भगवत्परत्वम्] तत्रापि महापुरुषसंज्ञदेवताविशेषविषयत्वमप्यविगीतम्; अनेकोपपत्तिसिद्धश्च।

तथा हि—इदं तावत् "अग्निमीडे पुरोहितम्", "अभि त्वा शूर नोनुमः", "स्तौमीन्द्रं नाधितो जोहवीमि", "स्तौम्यग्निं नाधितो जोहवीमि" इत्यादिवत् अस्य स्ववाक्यं न (न स्ववाक्यस्य) (न स्ववाक्येन ?) स्तुतिपरत्वमवगमयति, "अर्हन् बिभर्षि सायकानि धन्वेत्याह; स्तौत्येवैनमेतत्", "ततो देवा ऊर्ध्वबाहवो रुद्रमस्तुवन्" इत्यादेरिव वाक्यान्तरेणास्य स्तुतिपरत्वं नावगम्यते। नापि स्तुतिपरत्वे लिङ्गमुपलभ्यते। न हि, "नमस्ते अस्तु मा मा हिंसीः", "देहि मे ददामि ते" इतिवत् नमस्कारः अनिष्टनिवृत्तीष्टलाभप्रार्थना वा दृश्यते। "विश्वस्मादिन्द्र उत्तरः", "तस्य वज्रमादाय शीर्षाण्यच्छिनत्। तं भूतान्यभ्यक्रोशन् ब्रह्महन्निति", "अग्निस्सर्वा देवताः", "अग्निं वै जातं पाप्मा जग्राह" इत्यादिभिरग्नीन्द्रादीनामिव प्रतिपन्नस्य प्रकर्षस्य बाधकश्च(श्च ?) न दृश्यते। न हि परमपुरुषस्य कार्यत्वकर्मवश्यत्वादिकं क्वचिदनन्यपरवाक्येनावगम्यते "आकाशो ह वै नाम" "यतो वा इमानि" इत्यादिवाक्यानामिवानुवादरूपतया साकाङ्क्षत्वं नास्य प्रतीयते। "तदेषाऽभ्युक्ता", "तदेतदृचाऽभ्यनूक्तम्" इतिवत् स्वोपदिष्टार्थसाक्षित्वेन प्रमाणान्तरानुपस्थानाच्च नैरपेक्ष्यमवगम्यते। "तदेतदृचाऽभ्यनूक्तम्—तावानस्य

1 **भाष्ये परोक्तबहुहेतूनामनुपन्यासे कारणमाह सर्वेति।**

महिमा" इत्यादिभिः साक्षित्वेनोदाहृतत्वाच्च स्वयमन्यानपेक्षस्य प्रमाणान्तरोपजीव्यत्वं च प्रतीयते। "इदं पुरुषसूक्तं हि सर्ववेदेषु पठ्यते। ऋतं सत्यं च विख्यातम् ऋषिसिंहेन चिन्तितम्" इति **मोक्षधर्मे** तत्त्वनिष्कर्षकतया **व्यासेनो**दाहृतम्। अत्र च सर्वेषु वेदेषु पठिततया संनिहितत्वात् तत्तच्छाखागतानां तत्त्वपरवाक्यानामाकाङ्क्षितयोग्यविशेषसमर्पकतयाऽनुरोद्धव्यमिदमित्यवगम्यते।

एवं तत्त्वपरस्यास्य सूक्तस्य देवताविशेषपरत्वं दुरपह्नवम्। "पुरुषो ह वै नारायणोऽकामयत" इति[1] (?) **बृहदारण्यके** पुरुषशब्दस्य नारायणपरत्वदर्शनात्। किञ्च [2]**छान्दोग्ये** (?) "एषा वैष्णवी नाम संहिता एतां प्रयुञ्जन् विष्णुं प्रीणाति" इत्युक्तम्। **आथर्वणे** अष्टादशमहाशान्तिप्रकरणे तत्तद्देवत्यशान्तिषु तत्तद्देवत्यमन्त्रविनियोगावसरे, "वैष्णव्यां पुरुषसूक्तम्" इति वैष्णव्यां शान्तौ पुरुषसूक्तं विनियुज्यते। तथा "आद्ययाऽऽवाहयेद्देवमृचा तु पुरुषोत्तमम्" इत्यादिना **शौनकेन** भगवत्समाराधने, "जितं ते" इत्यादिमन्त्रतुल्यं विनियुज्यते। महापुरुषशब्दश्च **कल्पसूत्र**कारैर्देवताविशेष एव प्रयुक्तः, "महादेवं वा महापुरुषं वाऽर्चयेत्" इति। इह च, "वेदाहमेतं पुरुषं महान्तम्" इत्युच्यते। अतश्च भगवदसाधारण्यम्। तथा "पुरुषस्य हरेस्सूक्तं स्वर्ग्यं धन्यं यशस्करम्" इति च **स्मर्यते**। तथा "योऽनूचानं द्विजं मर्त्यो हतवान् अर्थलोभतः। स पठेत् पौरुषं सूक्तं स्मरन् विष्णुं जले सकृत्" इति **यमस्मृतौ** रहस्यप्रायश्चित्तेषूक्तम्। तथा **योगवासिष्ठे**, "आसीनः प्राङ्मुखः शुद्धः चिन्तयन् मनसा हरिम्। **पौरुषेणैव सूक्तेन** जुहुयाद्धव्यवाहनम्" इत्युक्तम्। लक्ष्मीपतिप्रतिपादकोत्तर-**नारायण**समानप्रकरणं चेदम्। 'सहस्रशीर्षापुरुषः' 'पुरुष एवेदं सर्वम्' इति **नारायणानुवाकै**कार्थ्यञ्च प्रतीयते। 'पुरुष एवेदं सर्वम्' इति वाक्येन **सुबालो**पनिषदैकार्थ्यञ्च प्रतीयते। तत्र हि, "दिव्यो देव एको नारायणः" इति नारायणपरत्वमवगम्यते। तत्र च, 'पुरुष एवेदं सर्वम्' इत्युपसंहृतम्। तथा **पाद्मे पुराणे**, "ब्रह्महत्यादिपापानां सर्वेषामपनुत्तये। पठेत्तु पौरुषं सूक्तमेकान्ते संस्मरन् हरिम्" इत्युच्यते। तथा **स्कान्दे** "यथा भास्करशब्दोऽयमादित्ये प्रतितिष्ठति। यथा चाग्नौ बृहद्भानुर्यथा वायौ सदागतिः॥ यथा पुरुषशब्दोऽयं वासुदेवे प्रतिष्ठते (प्रतिष्ठितः?)। तथा शङ्करशब्दोऽयं महादेवे प्रयुज्यते" इति शंकरशब्ददृष्टान्तत्वेन पुरुषशब्दस्य भगवदसाधारणत्वकथनाच्च पुरुषसूक्तस्य तदसाधारण्यं प्रतीयते। **पाद्मे पुराणे नामनिर्वचनाध्याये**, "पूस्सञ्ज्ञे तु शरीरेऽस्मिन् शयनात् पुरुषो हरिः। शकारस्य षकारोऽयं व्यत्यासेन प्रयुज्यते॥ यद्वा पुरे शरीरेऽस्मिन् आस्ते स पुरुषो हरिः। यदि वा पुरि वासीति पुरुषः प्रोच्यते हरिः। यदि वा पूर्वमेवासमिहेति पुरुषं विदुः। यदि वा बहुदानाद्वै विष्णुः पुरुष उच्यते। पूर्णत्वात् पुरुषो विष्णुः पुराणत्वाच्च शार्ङ्गिणः। पुराणभजनाच्चापि विष्णुः पुरुष ईर्यते। यद्वा पुरुषशब्दोऽयं रूढ्या वक्ति जनार्दनम्" इति च योगरूढत्वमवगम्यते। अतः पुरुषप्रतिपादकं सूक्तं भगवदसाधारणमिति 'चरणाभिधानात्' इति वदता सूत्रकारेण देवताविशेषनिष्कर्षः कृतः। **सारे** चैवं विशदतममुक्तं भगवता भाष्यकारेण। अतो यथोक्तार्थ उपपन्नः॥

अत्र 'पादोऽस्येति मन्त्रे 'त्रिपादस्यामृतं दिवि' इति द्युशब्देन द्योतमानसंविदात्मस्वरूपमुच्यत

---

1 नेदमत्र। 2 भावप्रकाशिकायामेतत्पूर्ववाक्यमप्युपात्तम्, इदं विष्णुरिति। नेदं छान्दोग्ये

एतदुक्तं भवति—यद्यपि 'अथ यदतः परो दिवो ज्योतिः'' इत्यस्मिन् वाक्ये परमपुरुषा-

इति केचि[1]दाहुः । तदानीमस्य दिवीति व्यतिरेकनिर्देशस्य क्लिष्टता स्पष्टा । किञ्च द्युसम्बन्धिप्रत्यभिज्ञापकतया तदेकार्थत्वेन सूत्रकारोदाहृते, "अथ यदतः परो दिवो ज्योतिर्दीप्यते" इति वाक्ये पञ्चम्यन्ततया श्रूयमाणेन द्युशब्देन विरोधश्च स्यात् । न हि द्योतमानमात्मस्वरूपं स्वस्वरूपात्परं भवति । दिवि हृदयाकाशे स्थितमिति भास्करः । तदयुक्तम् ; 'अतः परो दिवो ज्योतिर्दीप्यते विश्वतः पृष्ठेषु सर्वतः पृष्ठेष्वनुत्तमेषूत्तमेषु लोकेषु' इति श्रुतिविरोधात् । न हि हृदयाकाशो दिव उपरितनेषु लोकेषु वर्तते ॥ परमात्मन आदित्यमण्डलेऽप्यवस्थानात् तद्विषयं तद्वाक्यमिति चेन्न ; रविमण्डलस्य भूमेर्योजनलक्षेऽवस्थितस्य विश्वप्रपञ्चबहिर्भावाभावात् ; विश्वसर्वशब्दयोर्भूम्यन्तरिक्षमात्रपरत्वे स्वारस्यभङ्गाच्च । किञ्च सप्तम्यन्तपञ्चम्यन्तयोर्द्युशब्दयोरविरोधेनार्थैकत्वं चतुर्थसूत्रे समर्थितम् ; तच्च तयोर्हृदयाकाशरविमण्डलपरत्वेऽनुपपन्नम् । विश्वसर्वशब्दस्वारस्यभङ्गप्रसङ्गादेव द्युशब्दस्य प्रसिद्धद्युपरत्वं चायुक्तम् ॥ [1]जाग्रत्स्वप्नसुषुप्त्यवस्थासु जीवसञ्चारभूमितया त्रेधा विभक्ताः कार्याकाशप्रदेशविशेषास्त्रयः पादाः, तदुपलक्षणं कारणब्रह्मस्वरूपं त्रिपादमृतमुच्यते इति चायुक्तम् ; अस्य त्रिपादिति व्यतिरेकनिर्देशस्यामुख्यत्वात् । जीवस्य जाग्रदवस्थायां बाह्याकाशः सञ्चारभूमिरिति चायुक्तम् ; तदानीमपि शरीरान्तर्वर्तित्वात् । स्वप्ने शरीराकाशवर्तित्वमप्ययुक्तम् ; ईश्वरसृष्टशरीरैर्बहिरप्यवस्थानात् ; तदनभ्युपगमेऽपि पूर्वसंस्कारसहकृतमनोव्यापारमात्रेण हृदयावस्थानेऽपि जीवस्य स्वाप्नभ्रमोपपत्तेः स्वप्ने जीवस्य हृदयान्निष्क्रमणस्य निष्प्रमाणकत्वाच्च । 'हृदि ह्ययमात्मा' इति जीवस्य स्वतो हृद्यवस्थानं श्रूयमाणं स्वप्नावस्थायां कथं वचनेन विनाऽपोद्यते ।

तस्माद्वचोऽयमर्थः—सर्वा भूतानीति कार्यजगदन्तर्गताचित्संसृष्टचेतना उच्यन्ते । द्युशब्दस्तु समस्तव्यष्टिसमष्टितत्त्वबहिर्भूतस्थानविशेषपरः, "विश्वतः पृष्ठेषु सर्वतः पृष्ठेषु" इति श्रवणात् । विश्वशब्दविवरणं सर्वशब्द इति गत्यभावलिङ्गम् । 'तथाऽक्षरात्संभवतीह विश्वम्' इति जगदन्तर्वर्तिव्यष्टिजाते विश्वशब्दप्रयोगात् विश्वशब्दो व्यष्टिपरः । सर्वशब्दः परिशेषात् समष्टितत्त्वपरः । अत एव गद्येऽपि गदितं भाष्यकारैः, "समस्तं कार्यकारणजातमतीत्य वर्तमाने" इति । पुरुषसूक्ते "ते ह नाकं महिमानः सचन्ते" इति मुक्तप्राप्यदेशस्य नाकशब्देनोक्तत्वात्, मुक्तस्य च दुःखमिश्रकार्यलोकानां हेयत्वात् नास्मा अकं भवतीत्यवयवार्थपौष्कल्योपपत्तेः, तत्रैव 'तमसः परस्तात्' इति विशेषितत्वात्, "क्षयन्तमस्य रजसः पराके" इति निवासशब्दात् 'तदक्षरे परमे व्योमन्', 'विश्वं पुराणं तमसः परस्तात्' इति तमसः परस्य स्थानस्य स्थानिनो ब्रह्मणश्च व्यतिरेकनिर्देशात्, तस्य तमसः परत्वविशेषणेन पुरुषसूक्तप्रत्यभिज्ञानाच्च दिवीत्यप्राकृतं स्थानमुच्यते । त्रिपात्त्वञ्च अप्राकृतैर्भोग्यभोगोपकरणभोगस्थानविशेषैर्वा—भूषणास्त्रादिरूपेण जगदन्तर्गतवस्त्वभिमानिभिर्नित्यैः, भगवदनुभवमात्रपरैश्च नित्यसिद्धैः, मुक्तैश्चात्मभिर्वा संभवति । एवञ्चास्य दिवीति व्यतिरेकनिर्देशोऽमृतत्वं च मुख्यं भवतीति ॥

एवं पूर्ववाक्ये द्युसंबन्धिनश्चरणाभिधाने सति कथमस्य वाक्यस्य परमात्मपरत्वम् ॥ एकविषयत्वादिति चेत्, कथमेकविषयत्वमित्यत्राह एतदुक्तमिति । ज्योतिश्शब्दश्रुत्यपेक्षया स्ववाक्यस्थं पूर्ववाक्य-

1 वाचस्पतिव्याख्यानं दूषयति जाग्रदिति । भा० प्र०

साधारणलिङ्गं नोपलभ्यते—तथापि पूर्ववाक्ये द्युसंबन्धितया परमपुरुषस्य निर्देशादिदमपि द्युसंबन्धिज्योतिः स एवेति प्रत्यभिज्ञायत इति। कौक्षेयज्योतिषैक्योपदेशश्च फलाय तदात्मकत्वानुसन्धानविधिरिति न कश्चिद्दोषः। कौक्षेयज्योतिषश्च तदात्मकत्वं भगवता स्वयमेवोक्तम्, "अहं वैश्वानरो भूत्वा प्राणिनां देहमाश्रितः" इति॥

**छन्दोभिधानान्नेति चेन्न तथाचेतोर्पणनिगमात् तथा हि दर्शनम्** ॥ १-१-२६ ॥

पूर्वस्मिन् वाक्ये, "गायत्री वा इदं सर्वम्" इति गायत्र्याख्यं छन्दोऽभिधाय, "तदेतदृचाभ्यनूक्तम्" इत्युदाहृतायाः "तावानस्य महिमा" इत्यस्या ऋचोऽपि छन्दोविषयत्वान्नात्र परमपुरुषाभिधानमिति चेत्—तन्न; तथाचेतोर्पणनिगमात्। न गायत्रीशब्देन छन्दोमात्रमिहाभिधीयते, छन्दो-

---

प्रत्यभिज्ञापकं द्युसंबन्धित्वलिङ्गं प्रकरणञ्च दुर्बलमिति चेन्न; अनुवादलक्षणयच्छब्दसमभिव्याहारेण अन्यसापेक्षताज्ञापकेन ज्योतिश्शब्दस्य दुर्बलत्वावगमात्; प्रथमप्रतिपन्नयच्छब्दश्रुत्या सहकृतस्य द्युसंबन्धित्वलिङ्गस्य प्रबलत्वाच। इदं ज्योतिश्शब्दस्यादित्याद्यसाधारण्याभ्युपगमेनोक्तम्। तच्च न; अवभासकत्वनिमित्तकत्वात् ज्योतिश्शब्दस्य; 'नारायण परो ज्योतिः' इत्यादिप्रयोगाच्च।

उक्तं पूर्वपक्षहेतुं परिहरति **कौक्षेये**ति। **फलाये**ति। चक्षुष्यः श्रुतो भवतीत्युक्तफलायेत्यर्थः। **तदात्मकत्वे**ति। "तदेतद्दृष्टञ्च श्रुतं चेत्युपासीत" इत्यत्र **तदेत**च्छब्दौ तदात्मकज्योतिर्विषयौ, तदात्मकत्वेन प्रकृतत्वादिति भावः। "अन्नादो वसुदानः", "चतुर्विधा भजन्ते माम्", "सकलफलप्रदो हि विष्णुः" इत्यादिश्रुतिस्मृतिवशात् सकलफलप्रदस्य परमात्मनश्चक्षुष्यत्वादिविद्यानुगुणफलहेतुत्वमत्र युक्तमित्यभिप्रायेणाह **न कश्चिद्दोष** इति। तदात्मकत्वे प्रमाणं दर्शयति **कौक्षेयज्योतिषश्चे**ति। वेदनस्य यथार्थविषयत्वे संभवति अतस्मिंस्तद्दृष्टिरूपताश्रयणं परोक्तमयुक्तमिति भावः॥

द्युसंबन्धिविषयस्य पूर्ववाक्यस्य परमात्मपरत्वमाक्षिप्य समाधत्ते—**छन्दोभिधानान्नेति चेन्न तथाचेतोर्पणनिगमात् तथा हि दर्शनम्**॥ सूत्रे शङ्कोपन्यासपरमंशं व्याचष्टे **पूर्वस्मिन्नि**ति। परिहारखण्डस्थं **ने**ति पदं सपूरकमादत्ते **तन्ने**ति। छन्दोभिधानं नेत्यर्थः। **तथाचेतोर्पणनिगमा**दिति स्वाभिमतनिर्वाहं वदता सूत्रकारेणाभिप्रेतां छन्दोमात्रपरत्वानुपपत्तिमाह **न गायत्री**ति। कुत इत्यत्राह **छन्दोमात्रस्ये**ति। पूर्वसूत्रे **चरणाभिधाना**दिति स्वपक्षसाधकतया कण्ठोक्तस्य हेतोः पूर्वपक्षेऽनुपपत्तिः सूत्रकाराभिप्रेतेति भावः॥ ननु गायत्र्यां ब्रह्मदृष्टिरिति दृष्टिविशेषणभूतब्रह्मणः चरणाभिधानोपपत्तिरिति चेन्न; 'मनो ब्रह्म' इतिवत् दृष्टिविशेषणभूतब्रह्मवाचिपदसामानाधिकरण्याभावात्। दृष्टिविधानाभ्युपगमेऽपि 'तावान्' इति मन्त्रस्य दृष्टिविशेषणब्रह्मपरत्वेनोत्तरवाक्ये ब्रह्मप्रत्यभिज्ञानोपपत्तेस्तदभ्युपगमवैयर्थ्यात्। अतो गायत्र्यां ब्रह्मदृष्टिः चोदयितुरनभिमता।

**यादवप्रकाशै**स्तु 'गायत्री वा' इत्यादिब्राह्मणोक्तसर्वभूतवाक्पृथिवीशरीरहृदयप्राणात्मकत्वाभिधानात् न छन्दोमात्रमिति व्याख्यातम्। ततोऽपीदमुचितम्, अश्रुतं हेतुं कल्पयित्वा तदनुपपत्त्या छन्दःपरत्वप्रतिक्षेपादपि पूर्वसूत्रश्रुतहेतोरेवानुपपत्त्या तत्प्रतिक्षेपोपपत्तेः॥ स्ववाक्यस्थहेतुविवक्षा न्याय्येति चेत्—सत्यम्; स तु हेतुरनन्तरसूत्रे विवक्षितः॥ मन्त्रवर्णोक्तपादवत्त्वं तत्र विवक्षितमिति चेन्न;

मात्रस्य सर्वात्मकत्वानुपपत्तेः। अपि तु ब्रह्मण्येव गायत्रीचेतोर्पणमिह निगम्यते। ब्रह्मणि गायत्रीसादृश्यानुसन्धानं फलायोपदिश्यत इत्यर्थः। संभवति च, "पादोऽस्य सर्वा भूतानि त्रिपादस्यामृतं दिवि" इति चतुष्पदो ब्रह्मणः चतुष्पदया(पदा) गायत्र्या च सादृश्यम्। चतुष्पदा च गायत्री क्वचिद्दृश्यते। तद्यथा "इन्द्रश्शचीपतिः। बलेन पीडितः। दुश्च्यवनो वृषा। समित्सु सासहिः" इति। तथा ह्यन्यत्रापि सादृश्यात् छन्दोभिधायी शब्दोऽर्थान्तरे प्रयुज्यमानो दृश्यते। यथा संवर्गविद्यायाम्, "ते वा एते पञ्चान्ये पञ्चान्ये दश संपद्यन्ते" इत्यारभ्य 'सैषा विराडन्नात्'[1] इत्युच्यते ॥२६॥

---

स्वपक्षसाधनाय तस्य आद्यसूत्रे कण्ठोक्तत्वात् शङ्कापरिहाराय तन्नेत्यत्र तस्यैवाभिप्रेतत्वाश्रयणोपपत्तेः। क्वचिदुक्तस्य ह्यन्यत्रोपजीव्यत्वं न्याय्यम्। अन्यत्रानुक्तस्य च क्वचिदुक्तिरपेक्षिता। सा चेत् सिध्यति, तदनुगुणो निर्वाहो न्याय्यः॥

एवं छन्दःपरत्वेऽनुपपन्ने सति तस्य वाक्यस्य कोऽर्थ इत्यत्राह **अपि त्विति**। **चेतोर्पणशब्दं निगमशब्दं** च विवृण्वन् कस्मिन् किमर्थमित्याकाङ्क्षां च पूरयति। **ब्रह्मणीति**। **अनुसन्धान-उपदेश**-शब्दाभ्यां **चेतोर्पणनिगमशब्दौ** विवृतौ। केनाकारेण सादृश्यमित्यत्राह **संभवति चेति**। गायत्रीसादृश्यं चतुष्पात्त्वलक्षणम्। चतुष्पात्त्वमेवानुध्येयम्॥ नन्विह न अनुसन्धेयत्वं फलं च श्रूयते॥ न; "पूर्णामप्रवर्तिनीं श्रियं लभते, य एवं वेद" इति श्रवणात्। पूर्णत्वम् अपरिच्छिन्नत्वम्। अप्रवर्तित्वम् अचलत्वं स्थिरत्वम्। अनन्तस्थिरा च श्रीः मुक्तैश्वर्यम्। ननु हार्दाकाशविशिष्टपरमात्मोपासनफलं हि तत् श्रूयते, "यद्वै तद्ब्रह्मेति, इदं वा व तद्योऽयं बहिर्धा पुरुषादाकाशः। यो वै स बहिर्धा पुरुषादाकाशः, अयं वाव सः योऽयमन्तःपुरुष आकाशः। यो वै सोऽन्तःपुरुष आकाशः, अयं वाव सः योऽयमन्तर्हृदय आकाशः। तदेतत्पूर्णमप्रवर्ति" इति हि श्रूयते। अतो न गायत्रीसादृश्यानुसन्धानफलमिदमिति॥ उच्यते; स्वतोऽपरिच्छिन्नत्वेऽपि ब्रह्मणः परिच्छिन्नैः पदार्थैः चतुष्पात्त्वोपदेशस्योपासनार्थत्वाभावे वैयर्थ्यात् प्रकरणे तस्य फलान्तराविधानाच्च [तत्फलार्थमेव?] गायत्रीसादृश्यरूपस्य चतुष्पात्त्वस्यानुसन्धेयता प्रतीयते। तत्र भूतपृथिवीशरीरहृदयैश्चतुष्पात्त्वेऽभिहिते ब्रह्मणोऽपूर्णत्वास्थिरत्वशङ्काव्यावृत्त्यर्थं पूर्णत्वाप्रवर्तित्वगुणकतयैव चतुष्पाद्ब्रह्म उपासनं विधीयत इति॥ "त्रिपदा गायत्री" इति हि श्रुतिः, तत् कथं चतुष्पात्त्वमित्यत्राह **चतुष्पदा चेति**। गायत्रीशब्दस्य मुख्यार्थाविवक्षा कथमिति शङ्कायाम्, **तथा हि दर्शनम्** इति सूत्रखण्डं व्याचष्टे **तथा ह्यन्यत्रापी**त्यादिना। वाय्वग्निसूर्यचन्द्रसलिलानि प्राणवाक्चक्षुःश्रोत्रमनांसि च दशसङ्ख्यत्वाद्विराट्। सदृशे सदृशान्तरवाचिशब्दप्रयोगः श्रुतिसमाधिरित्यर्थः। **अन्नात्**-अन्नञ्च तत् अत्ति चेत्यन्नात्॥

ननु ज्योतिर्वाक्ये परमात्मलिङ्गाभावादाद्यं सूत्रं तस्य परमात्मपरत्वसमर्थनार्थमिति सप्रयोजनम्, द्वितीयं तु किमर्थम्। छन्दोमात्रप्रसिद्धस्यापि गायत्रीशब्दस्य परमात्मासाधारणसर्वात्मकत्वलिङ्गबलात् परमात्मविषयत्वं ह्याकाशाधिकरणनयेन सिद्धम्॥ उच्यते; गायत्रीशब्दस्य स्वार्थप्रहाणेन ब्रह्मपरत्वे चतुष्पात्त्वमविवक्षितं स्यात्। तच्चोपदिश्यते। गायत्र्यवच्छिन्नब्रह्मपरत्वे सर्वात्मकत्वमनुपपन्नम्॥ गायत्र्यवच्छिन्नब्रह्मणः सर्वात्मकत्वोक्तिः स्तुतिरिति चेत्—ततोऽपि गायत्र्या एव स्तुतिः सर्वात्मकत्वोक्तिरिति वरमित्यधिकशङ्कापरिहारपरं सूत्रम्। गायत्रीशब्दस्य तत्सदृशब्रह्मपरत्वाच्चतुष्पात्त्वसर्वात्मकत्वोपपत्तिरिति परिहारः॥

---

1 टीकानुसारेण अन्नात् इति पाठः। पाठान्तरं तु अन्नादी इति। तदर्थो भाष्यार्थदर्पणादौ।

इतश्च गायत्रीशब्देन ब्रह्मैवाभिधीयते—

**भूतादिपादव्यपदेशोपपत्तेश्चैवम् ॥ १-१-२७ ॥**

भूतपृथिवीशरीरहृदयानि निर्दिश्य, "सैषा चतुष्पदा" इति व्यपदेशो ब्रह्मण्येव गायत्रीशब्दाभिधेये उपपद्यते ॥ २७ ॥

---

उपक्रमस्थगायत्रीशब्दानुरोधेन मन्त्रगतसर्वात्मकत्वमस्वारस्येन निर्वाह्यम्; न तु सर्वात्मकत्वानुरोधेनोपक्रमस्थगायत्रीपदास्वारस्यं न्याय्यमिति शङ्कायाम्—उपक्रम एव गायत्रीपरत्वे स्वारस्यहानिरुच्यते **भूतादिपादव्यपदेशोपपत्तेश्चैवम्** ॥ पूर्वस्मिन् सूत्रे 'पादोऽस्य' इति मन्त्रोक्तसर्वात्मकत्वानुपपत्तिरुक्ता; अत्र तु 'गायत्री वा' इत्यादिब्राह्मणोक्तचतुष्पात्त्वानुपपत्तिरुच्यते । **भूतम्** आत्मवर्गः । **पृथिवी** अयं लोकः, कर्मार्जितभोगस्थानम् । तदुपकरणं **शरीरम्** । **हृदयम्** आत्मनः स्थित्यनुगुणः प्रदेशविशेषः । एवमुपक्रमस्यैव परमात्मपरत्वं दर्शितम् ।

**यादवप्रकाशै**स्त्विदं सूत्रं पादोऽस्येति मन्त्रवर्णोक्तभूतादिपादानुपपत्त्या ब्रह्मप्रतिपादनसमर्थनपरं व्याख्यातम् । "**गायत्री वा इदं सर्व**मित्यादिब्राह्मणं न चतुष्पात्त्वपरम्, किं तु सर्वभूतवाक्पृथिवीशरीरहृदयप्राणरूपविधाषट्कपरम् । 'सैषा चतुष्पदा षड्विधा' इति वाक्यञ्च षाड्विध्यानुवादेन चतुष्पात्त्वविधानपरम् । चतुष्पात्त्वं च पादोऽस्येति मन्त्रवर्णप्रतिपाद्यम् । तत्र चेतनाचेतनरूपनिखिलविकारात्मा प्रथमः पादः । त्रिपादस्यामृतं दिवीति वाङ्मयप्राणमयमनोमयात्मानः त्रयः पादा उच्यन्ते" इति प्रतिपादितम् । तदनुपपन्नम् । कथम् । उच्यते ।

तत्र मन्त्रवर्णोक्तचतुष्पात्त्वपरत्वादपि ब्राह्मणोक्तार्थविषयत्वोपपत्तिः पूर्वमेव दर्शिता । किञ्च प्राथमिकगायत्रीवाक्यानुरोधेन पश्चादुदाहृतमन्त्रवर्णो नेय इति शङ्का तावदवतरति । सा च मन्त्रवर्णोक्तार्थस्य हेतुतयोपन्यासेऽप्यवतिष्ठते । उपक्रमस्थगायत्रीवाक्य एव परमात्मसाधकहेतुप्रदर्शनेन तु निवर्तते ॥ स तु हेतुः सूत्रे नेत्यनेनाभिप्रेत इति चेत्—न; शङ्कायाः परिहारस्य च उत्सूत्रत्वादपि शङ्कामात्रस्य उत्सूत्रस्य शब्दादेव परिहारसिद्ध्यनुगुणनिर्वाहस्य न्याय्यत्वात् । **गायत्री वा इदं सर्व**मित्यादिवाक्यस्य षाड्विध्य[मात्र?]परत्वमप्ययुक्तम्; 'सैषा चतुष्पदा षड्विधा' इति निगमनवाक्यस्य स्वरसतश्चतुष्पात्त्वषाड्विध्यनिगमनपरत्वप्रतीतेः ॥ ननु सर्वभूतवाक्पृथिवीशरीरहृदयप्राणाख्यपदार्थषट्कप्रतिपादनात् स्वारस्यभङ्गेनापि षाड्विध्यनिगमनपरत्वमास्थेयमिति चेन्न; वाक्प्राणयोर्गानत्राणादिवत् अन्यार्थमुक्ततया भूतपृथिव्यादिवत् प्राधान्यतः प्रतिपाद्यत्वाभावेन पदार्थषट्कासिद्धेः । ब्रह्मणो गानत्राणाभ्यां गायत्रीशब्दवाच्यत्वोपपादनाय वाक् प्रस्तुता, शरीरस्य प्राणप्रतिष्ठात्वोपपादनाय प्राणप्रसङ्गः ।

तथा हि—'गायत्री वा इदं सर्वं भूतम्' इति **गायत्री**शब्दः चतुष्पाद्ब्रह्मपरः । **सर्वभूतशब्दः** आत्मपरः । आत्मवर्गस्य तत्पादत्वं सामानाधिकरण्येनोक्तम् । तस्यैव ब्रह्मणो गानत्राणादिभिः षाड्विध्यञ्च विवक्षुः श्रुतिर्गानत्राणोपपादनाय वाग्रूपत्वमाह—**वाग्वै** गायत्रीति । गायत्रीशब्दवाच्यं चतुष्पाद्ब्रह्म वाग्रूपविशिष्टमित्यर्थः । "रसोऽहमप्सु कौन्तेय" इत्यारभ्योच्यते, "शब्दः खे पौरुषं नृषु" इति । तथा भगवत्पराशरवचनम्, "शब्दमूर्तिधरस्यैतद्रूपं विष्णोर्महात्मनः" इति । ततः किं

विवक्षितषाड्विध्यस्येत्यत्राह—वाग्वा इदं सर्वं भूतं गायति च त्रायते चेति। वाग्विशिष्टं परं ब्रह्म सर्वं भूतं **गायति**—अभिधत्ते, हिताहितविधिनिषेधमुखेन त्रायते चेत्यर्थः। एवमेकः पादः, गानत्राणरूपविधाद्वयञ्चोक्तम्। तदनुवादपूर्वकं द्वितीयं पादं सामानाधिकरण्येनाह—या वै गायत्री इयं वा व सा येयं पृथिवीति। उक्ताकारविशिष्टप्रकृतधर्मिपरौ यत्तच्छब्दौ। या-सर्वभूतरूपैकपादा **गायत्री**—गायत्र्याख्यं ब्रह्म, तदेव पृथिवीत्यर्थः। कथं पृथिव्या ब्रह्मात्मकत्वमित्यत्राह **अस्यां हीति**। ब्रह्मात्मकत्वादेव हि **सर्वभूतप्रतिष्ठात्वम्**; न हि केवलपृथिव्याः सर्वभूतधारणे शक्तिरित्यर्थः। प्रतिष्ठात्वञ्च नियतमित्याह—**एतामेव नातिशीयत** इति। पृथिवीं भूतजातं नातिवर्तते, कर्मवश्यात्मनां नियमेन प्रतिष्ठात्वादशक्यातिक्रमणेत्यर्थः। पृथिवीमयब्रह्माण्डोदरे हि कर्तृभोक्तृवर्गः परिवर्तते। एवं द्वितीयः पादः भूतप्रतिष्ठात्वतदनतिवर्त्यत्वरूपं विधाद्वयं चोक्तम्। अथ तृतीयं पादमाह—या वै सा पृथिवी इयं वाव सा, यदिदमस्मिन् पुरुषे शरीरमिति। **पुरुषशब्दः** शरीरविशिष्टजीवपरः। पृथिवीरूपपादविशिष्टा या, सा **गायत्री**—गायत्र्याख्यं ब्रह्म; सा **शरीरम्**, शरीराख्यपादविशिष्टेत्यर्थः। भूतपृथिव्योर्गायत्रीसामानाधिकरण्येन निर्दिष्टतया पृथिवीशब्दस्य ब्रह्मपर्यन्तत्वेन तदुपस्थापनक्षमत्वात्, अध्र्यप्रायन्यायेन अत्रापि पादान्तरस्य तत्सामानाधिकरण्येन निर्देष्टुं युक्तत्वाच्च। शरीरस्य ब्रह्मात्मकत्वं प्राणप्रतिष्ठात्वतदनतिवर्त्यत्वाभ्याम् उपपादयति—अस्मिन् हीमे प्राणाः प्रतिष्ठिताः एतदेव नातिशीयन्त इति। चतुर्थं पादमाह—यद्वै तत् पुरुषे शरीरम्, इदं वाव तत् यदिदमस्मिन्नन्तःपुरुषे हृदयमिति। शरीराख्यपादविशिष्टं यत् गायत्र्याख्यं ब्रह्म तदेव हृदयमित्यर्थः। पूर्ववद्ब्रह्मात्मकत्वमुपपादयति—अस्मिन् हीमे प्राणाः प्रतिष्ठिताः एतदेव नातिशीयन्त इति। **प्राणाः**—प्राणापानादयः; इन्द्रियाणि वा। तेषां हृदयसंबन्धिनाडीद्वारा हृदयप्रतिष्ठितत्वम्। प्राणशब्दस्य जीवपरत्वं केचिदाहुः। तदयुक्तम्; भूतप्राणशब्दयोरर्थवैषम्याभावेन तदभिमतषाड्विध्यासिद्धेः। भूतपृथिवीशरीरहृदयवाक्प्राणैर्हि ते षाड्विध्यं वदन्ति। एवं तृतीयचतुर्थौ पादौ प्राणप्रतिष्ठात्वतदनतिवर्त्यत्वरूपं विधाद्वयञ्चोक्तम्। एवमुक्तं चतुष्पात्त्वं षाड्विध्यं च निगमयति—सैषा चतुष्पदा षड्विधा गायत्रीति।

नन्वेवं तर्हि ब्रह्मणः परिच्छिन्नत्वं स्यादिति शङ्कायाम्, उक्तस्य महिम्न एतावत्त्वप्रतिक्षेपिकामृचमुदाहरति **तदेतदिति**। ब्रह्माभिप्रायेण नपुंसकत्वम्। **तदेतत्**—चतुष्पात् षड्विधं च ब्रह्मेत्यर्थः। "स भूमिं विश्वतो वृत्वा" इत्युक्त्वा, "एतावानस्य महिमा अतो ज्यायांश्च पुरुषः" इति पुरुषसूक्ते श्रूयते। इह च पृथिव्यां भूतशरीरहृदयानि अन्तर्गतानि। अतस्तावानस्य महिमेत्यनेन पृथिवीतदन्तर्गतपदार्थैश्चतुष्पात्वरूपमहिमानुवादः। तावत्त्वं प्रतिषेधति—**अतो ज्यायानिति**। **पादोऽस्येति**। इहोक्तं पादचतुष्टयमेकपादस्थानीयम्। अतोऽतिरिक्ता त्रिपाद्विभूतिः। तस्मात् **अतो ज्यायानित्युपपन्नमित्यर्थः**। एवमस्या ऋचः परिच्छिन्नत्वशङ्काव्युदासार्थत्वं युक्तम्; अनन्तरमपि 'तदेतत्पूर्णमप्रवर्ति। पूर्णामप्रवर्त्तिनीं श्रियं लभते, य एवं वेद' इति पूर्णत्वादिगुणकतयोपासनविधानात्॥ नन्वेवं सति ब्राह्मणोक्तचतुष्पात्त्वविषयत्वाभावेन ब्राह्मणस्य ऋचश्चैकार्थ्यं न सिध्येत्—न; उभयोर्ब्रह्मविषयत्वात्॥ यदि इयमृक् चतुष्पात्त्वविषया न भवति, तर्हि किमर्थं तदुदाहरणम्॥

परिच्छिन्नत्वशङ्काव्युदासार्थमित्युक्तम् । तथा सत्येवार्थवत्त्वम् । न ह्युक्तमात्रज्ञापने प्रयोजनम् । न चेयमृक् पूर्वोक्तविवरणरूपा दृश्यते । किञ्च ऋचश्चतुष्पात्त्वान्तरपरत्वं परेषामप्यवर्जनीयम् ; [1]जाग्रदाद्यवस्थात्रयोपलक्षितं बाह्यशारीरहार्दरूपेण त्रेधा विभक्तकार्याकाशोपलक्षितं वा कारणस्वरूपं त्रिपादुच्यत इति तत्कृतयोजना । तत्र कथं सर्वभूतैर्जाग्रदाद्यवस्थात्रयत्रिविधाकाशोपलक्षितरूपेण चतुष्पात्त्वं भूतपृथिवीशरीरहृदयैश्चतुष्पत्त्वञ्चैकरूपं भवति । चतुष्पात्त्वं हि बहुविधं श्रूयते, "चतुष्पाद्ब्रह्म—वाक्[2] पादः प्राणः पादः चक्षुः पादः श्रोत्रं पादः" इति । तथा "अग्निः पादो वायुः पाद आदित्यः पादो दिशः पादः" इति च । एवं ज्ञातमात्रज्ञापने प्रयोजनाभावात् . पुरुषसूक्तप्रक्रियानुगुण्यात्, अनन्तरवाक्यानुगुण्यात्, ब्रह्मणो विविधचतुष्पात्त्वसंभवात, चतुष्पात्त्वभेदस्य परपक्षेऽप्यवर्जनीयत्वाच्च यथोक्त एवास्या ऋचोऽर्थः ।

अथ चतुर्थपादत्वेनोक्तहृदयस्थाकाशस्य महत्त्वं वक्तुं बाह्याकाशस्य ब्रह्मतुल्यत्वं सामानाधिकरण्येनाह—"यद्वै तद्ब्रह्मेति इदं वाव तत् योयं बहिर्धा पुरुषादाकाशः" इति । आकाशः स्वकार्यव्यापित्वामूर्तत्वाचलत्वादिभिर्ब्रह्मतुल्य इत्यर्थः । "अयं वाव सः योऽयमन्तःपुरुष आकाशः, अयं वाव स योऽयमन्तर्हृदय आकाशः" इति निर्देशो धर्मैक्याभिप्रायः । एवं हार्दाकाशमाहात्म्येन हृदयं स्तुतं भवति ।

एवं चतुष्पदः षड्विधस्य ब्रह्मणः प्रपञ्चान्तर्भावेन परिच्छिन्नत्वास्थिरत्वशङ्काव्यावृत्त्यर्थं पूर्णत्वाप्रवर्तित्वगुणकतयोपासनं मोक्षफलकं विदधाति—**तदेत**दिति । **तदेतत्**—चतुष्पात् षड्विधमित्यर्थः । नात्र हृदयमात्रे ब्रह्मोपासनविधिः, सप्तम्यश्रवणात् ।

अथ ब्रह्मोपासनाङ्गत्वेन द्वारपोपासनं विधीयते—**तस्य ह वा एतस्य हृदयस्ये**त्यादिना । तत्र च प्राणवृत्तिविशेषाप्यायितचक्षुराद्यनुग्राहकाः आदित्यादय उपास्याः । न च **हृदयस्ये**त्युक्तत्वात् द्वारपोपासनं हृदयोपासनाङ्गमिति वाच्यम् ; किंतु प्रकृतचतुष्पाद्ब्रह्मोपासनाङ्गम् । हृदयस्येति निर्देशस्तु चतुर्थपादत्वेन हृदयस्याव्यवहितप्रकृतत्वात्, नाडीद्वारा चक्षुरादीनां तत्संबन्धित्वाच्च कृतः ।

एवं गायत्रीविद्याप्रकृतस्य सकलफलप्रदस्य द्युसंबन्धिनः परस्य ज्योतिष आभिरूप्यकीर्तिमत्त्वरूपफलविशेषार्थं कौक्षेयज्योतीरूपत्वेनोपासनविधानाय, "अथ यदतः परो दिवो ज्योतिः" इत्यादि आरभ्यते ।

एवं[3] वाक्प्राणयोरन्यार्थमुदाहृतत्वात् निगमनवाक्यस्वारस्याच्च भूतपृथिवीशरीरहृदयान्येव पादाः, गान-त्राण-भूतप्रतिष्ठात्व-तदनतिशय-प्राणप्रतिष्ठात्व-तदनतिशयाः षट् विधाः ॥ ननु 'सैषा' इत्यादिवाक्यस्य षाड्विध्यानुवादेन चतुष्पात्त्वविधानपरत्वे सति ऋचश्चतुष्पात्त्वोपदेशपरत्वं सिध्यति । ततश्च 'तदेतदृचाऽभ्यनूक्तम्' इति घटकवाक्यस्वारस्यं भवेदिति चेत्—तदयुक्तम् ; प्रथमश्रुतस्य ब्राह्मणवाक्यनिगमनस्य स्वारस्यभङ्गेन पाश्चात्यसंदंशकवाक्यानुरोधानुपपत्तेः ; अन्यार्थतया प्रस्तुतयोर्वाक्प्राणयोर्भूतपृथिव्यादितुल्यतापरिकल्पनस्योपक्रमस्वारस्यविरुद्धत्वाच्च । ऋगुपन्यासस्य प्रयोजनं तत्रोपपत्तयश्च दर्शिताः । न ह्येकरूपमेव ब्रह्मणश्चतुष्पात्त्वमिति नियन्तुं शक्यम्, चतुष्पात्त्ववैविध्यस्यान्यत्रापि श्रुतत्वात् ॥

---

1. जाग्रदित्यादिना भामत्युक्तं विवक्षितम् । 2 अत्र भावप्रकाशिका द्रष्टव्या । 'बुद्ध्यर्थः पादवत्' इति सूत्रेऽपि सर्वं द्रष्टव्यम् । 3 एवं तथाहीत्यारब्धां पदार्थषट्कासिद्धिं निगमयन् स्वाभिमतं चतुष्पात्त्वादिकमुपसंहरति एवमिति ।

किञ्च त्रिपाच्छब्दनिर्वाहश्च निरूपणीयः। तथा हि—मनोमयवाङ्मयप्राणमयास्त्रय ईश्वरव्यूहाः। तैस्त्रिप्रकारमवस्थितं ब्रह्म त्रिपादमृतं विवक्षितमित्युच्यते। तत्र तावत् प्रसिद्धमनोवाक्प्राणानामचिद्विकारत्वान्नेश्वरव्यूहत्वममृतत्वं च संभवति। सप्तान्नब्राह्मणोक्तानां मनोवाक्प्राणानुग्राहकाणामग्न्यादित्यचन्द्राणां च कर्मवश्यत्वात् सृज्यत्वाच्च नेश्वरव्यूहत्वममृतत्वं च युज्यते। "चन्द्रमा मनसो जातः। चक्षोः सूर्यो अजायत। मुखादिन्द्रश्चाग्निश्च", "भीषाऽस्माद्वातः पवते। भीषोदेति सूर्यः। भीषाऽस्मादग्निश्चेन्द्रश्च", "असौ योऽपक्षीयति असौ य आपूर्यति" इति तेषां सृज्यत्वकर्मवश्यत्वे हि श्रूयेते॥ मनोवाक्प्राणशब्दवाच्यतयाऽभिमतानां सत्त्वतमोरजसां शक्तिरूपाणां प्रज्ञाशक्तिवाक्छक्तिक्रियाशक्तिशब्दवाच्यानाम्, द्युपृथिव्यप्छब्दवाच्यतयाऽभिमतानां स्थूलानां सविकाराणां सत्त्वतमोरजसां चाधिष्ठातार ईश्वरांशास्त्रय ईश्वरव्यूहा इति चेत्—तैरपि त्रिपात्त्वं दुर्वचम्; वाङ्मयप्राणमययोर्मनोमयादुत्पत्त्यभ्युपगमेन त्रयाणां नित्यत्वायोगेन त्रिपादमृतमिति निर्देशानुपपत्तेः॥ तेषां शक्तिरूपेणामृतत्वमिति चेत्—शक्तिरूपेणामृतत्वम्, 'पादोऽस्य सर्वा भूतानि' इति पादत्वेनोक्तानां सर्वभूतानां सप्रकृतिकानामप्यस्तीति 'त्रिपादस्यामृतं दिवि' इति वचनवैयर्थ्यं स्यात्। किञ्च 'ईश्वरः पर आत्मा तपो ब्रह्म मनोमयः' इत्यारभ्य तस्य द्वौ व्यूहावाकाशशरीरः प्राणशरीरश्च। तयोरन्ये प्रत्येकमसंख्याताः प्रतिजीवमवस्थिता व्यूहाः' इत्युपनिषत्कल्पे भवद्भिरुच्यते। किमसङ्ख्येयानामीश्वरव्यूहानां जीवानामिव स्वत एव स्वरूपगतो भेदः, उताधिष्ठेयगतभेद एवेश्वरव्यूहभेद इत्युपचारादुच्यते ?। प्रथमे, जीवबहुत्वेश्वरैकत्वश्रुतीनां वैयर्थ्यम्; समष्ट्यैक्यस्य व्यष्टिभेदस्य च जीवेश्वरयोस्तुल्यत्वात्। श्रूयते हि, 'त्वमेकोऽसि बहूननुप्रविष्टः', 'अन्तः प्रविष्टः शास्ता जनानाम्', 'एकः सन् बहुधा विचचार', 'एको देवः सर्वभूतेषु गूढः', 'एको वशी निष्क्रियाणां बहूनामेकं बीजं बहुधा यः करोति', 'एको बहूनां यो विदधाति कामान्', 'यः पृथिवीमन्तरे सञ्चरन्' इत्यारभ्य बहुष्ववस्थानमुक्त्वा 'एष सर्वभूतान्तरात्मा अपहतपाप्मा दिव्यो देव एको नारायणः' इत्यादि। द्वितीये च पक्षे, किमीश्वरव्यूहाधिष्ठेयाः गुणाः, उत गुणशक्तयः ?। प्रथमे, सत्त्वतमोरजसामुत्पत्तेः पूर्वं निर्गुणानां तेषामवस्थानवादो न घटते। उक्तं हि तत्त्वविचारणायां भवद्भिः, 'यस्मादेषां प्रलयकालेऽप्यवस्थानमाम्नायते, तस्माद्गुणोत्पत्तेः प्रागप्येषामवस्थानान्निर्गुणा एते' इति। द्वितीये च, गुणप्रलयात्पश्चात् गुणशक्तीनामीश्वराधिष्ठेयत्वं नोपपद्यते। तासामधिष्ठानं हि कार्याभिमुखीकरणलक्षणं प्रेरणम्। तत् तदानीमस्ति चेत्—आसर्गकालात् गुणानुत्पत्तिरनुपपन्ना॥ कार्यानुत्पादनमपि ईश्वराधिष्ठानाधीनमिति चेत्—तर्हि परमात्मनः स्वापे गुणशक्तीनां तदधिष्ठितत्वाभावात् कार्योत्पत्तिप्रसङ्गः। स्वापप्रबोधौ हीश्वरस्य त्वदभ्युपगतौ। अतः कार्यानुत्पादनस्येश्वराधिष्ठानानपेक्षत्वेन गुणशक्तीनामधिष्ठातृत्वाभावेन व्यूहभेदाभावात् गुणोत्पत्तेः प्राक् निर्गुणत्वेन त्रयाणां व्यूहानां कञ्चित्कालमवस्थानमयुक्तम्॥ अधिष्ठेयभेदमनपेक्ष्य स्वत एव भेदश्चेत्—त्रिवस्यानादित्वात् मनोमयात् इतरयोरुत्पत्तिरनुपपन्ना।

किञ्च तिसृष्वपि ईश्वरव्यष्टिषु किं प्रमाणम् ?॥ "एतन्मयो वा अरे अयमात्मा वाङ्मयो मनोमयः प्राणमयः" इति श्रुतिरिति चेत्—न; जीवस्य मनोवाक्प्राणोपकरणित्वप्रतिपादनपरत्वात् तस्याः।

तथा हि[1]—"यत् सप्तान्नानि मेधया तपसाऽजनयत् पिता' इति परमात्मनः सङ्कल्पात् देहिनामुपजीव्यत्वादन्नशब्दवाच्यानां सप्तानामुत्पत्तिमुक्त्वा, तत्र प्रसिद्धान्नं दर्शपूर्णमासौ पयश्चेत्यन्नचतुष्टयस्य मानुषदेवतिर्यक्षु विनियोगमुक्त्वा, 'त्रीण्यात्मनेऽकुरुत' इत्यवशिष्टान्नत्रयस्य सर्वविधप्रवृत्तिहेतुत्वात् सामान्येन सर्वभोक्तृवर्गशेषमकरोदित्युक्त्वा, 'अन्यत्रमना अभूवं नादर्शम्। अन्यत्रमना अभूवं नाश्रौषम्।... कामस्सङ्कल्पो विचिकित्सा श्रद्धाऽश्रद्धा धृतिरधृतिर्ह्रीर्धीर्भीरित्येतत्सर्वँ मन एव' इति प्रसिद्धं मन एव प्रतिपादितम्। कामादीनां मनःकार्यत्वात् सामानाधिकरण्यम्। 'यः कश्च शब्दो वागेव' इति सामानाधिकरण्यमपि शब्दस्य वागिन्द्रियाधीनोच्चारणत्वनिबन्धनम्। अतः शब्दोच्चारणकारणं प्रसिद्धवागिन्द्रियमेवोक्तम्। 'प्राणोऽपानो व्यान उदानस्समानोऽनः इत्येतत्सर्वँ प्राण एव' इति पञ्चवृत्तिप्राण एव स्पष्टमभिहितः। **एतन्मयः** इत्येतच्छब्दश्च प्रकृतमनोवाक्प्राणपरः। 'अयमात्मा' **इत्ययं**शब्दविशेषित आत्मा च प्रसिद्धो जीवः; न तु परमप्रकृतः परमात्मा। तस्य जीवस्य त्रिविधोपकरणवत्त्व**मेतन्मय** इति प्रतिपादितम्। पश्चात् 'त्रयो लोका एत एव' इत्यादिना तेषां प्रशंसा कृता। 'यत्किञ्च विज्ञातं वाचस्तद्रूपं वाग्घि विज्ञाता। वागेवैनं तद्भूत्वाऽवति' इति—यद्वाग्व्यवहाराद्विज्ञातम्, तत् सर्वँ **वाचो रूपम्**—अवच्छेदकम्। **वाक् विज्ञाता**—विज्ञायमानं सर्वँ वागधीनम्। उपचारात् सामानाधिकरण्यम्। **वागेवैनं तद्भूत्वाऽवति**—यद्वाचा विज्ञातं वस्तु पुरुषस्योपकरोति, तद्भूत्वा—तद्रूपेण वागेवोपकरोतीत्यर्थः।....[1]**विजिज्ञास्यम्...**इति—चिन्तनीयम्। पूर्ववद्योजना। यच्चिन्तितं देवतादिकम् उपकरोति, तद्भूत्वा मन एवोपकरोतीत्यर्थः।.... **अविज्ञातम्...**इति। पूर्वसुकृतवशादचिन्तितं यदुपकरोति, तद्भूत्वा प्राण उपकरोतीत्यर्थः। एवं प्रशस्य त्रयाणाम् अधिष्ठानानि अधिष्ठातॄंश्च दर्शयति—"तस्यै वाच" इत्यादिना। **वाचः** वागिन्द्रियस्य पृथिवी **शरीर**मायतनम्। जिह्वागोलकस्थं पार्थिवांशमाश्रित्य वागिन्द्रियं तिष्ठतीत्यर्थः। **ज्योतीरूपमयमग्निः**—ज्योतिर्मयमधिष्ठातृदेवतास्वरूपमग्निरित्यर्थः। **यावत्येव वाक् तावती पृथिवी तावानयमग्निरि**ति। यत्र यत्र वागिन्द्रियं तत्र तत्र तदधिष्ठानतया पृथिव्यस्ति, अधिष्ठातृतया अग्निरप्यस्तीत्यर्थः। **अथैतस्य मनसो द्यौः शरीर**मिति। इह द्युशब्द आकाशमात्रपरः; न तु लोकविशेषपरः, अनुपपत्तेः। न हि स्वर्गलोक एव मनसोऽधिष्ठानम्; मनुष्याणाममनस्कत्वप्रसङ्गात्। द्युशब्दो हि लोकविशेषे नभोमात्रे च वर्तते। "सुरलोको द्योदिवौ द्वे स्त्रियाम्", "द्योदिवौ द्वे स्त्रियामभ्रं व्योम पुष्करमम्बरम्" इति हि **नामानुशासनम्**। अतः आकाशमात्रविवक्षा। तत्रापि सामर्थ्यात् हृदयाकाशे पर्यवस्यति। हृदयच्छिद्ररूपाकाशः आयतनमित्यर्थः। **ज्योतीरूप**मित्यादेः पूर्ववत्। **तौ**—अग्न्यादित्यौ। **मिथुनं समेताम्**—मिथुनीभावमगच्छताम्। **ततः प्राणोऽजायत।** अयमस्याभिप्रायः—आदित्याधिष्ठेयमनःपूर्विका अग्न्यधिष्ठेयवाक्प्रवृत्तिः, तदुभयपूर्विका पञ्चवृत्तिप्राणाधीना शरीरप्रवृत्तिरिति। प्राणस्यासपत्नत्वम् चक्षुरादिषु स्वसदृशस्वप्रतिस्पर्धिविरहितत्वम्। **अथैतस्य प्राणस्याऽऽपश्शरीरमि**ति। 'प्राणा वा आपः' इति हि श्रुतिः। "पानीयं प्राणिनां प्राणा विश्वमेव च

---

1 यादवप्रकाशोक्तमीश्वरव्यूहपरत्वं खण्डयिष्यन् प्रथमतः स्वपक्षेण श्रुतिवाक्यानि विशदं व्याख्याति तथाहीति।

1 प्रायः पूर्वदर्शितवाक्यसरूपत्वात् पूर्णवाक्यानि अगृहीत्वा व्याख्याति।

तन्मयम्'' इत्यायुर्वेदविदः । अतः प्राणस्य आप आयतनम् । ज्योतीरूपमित्यादि । पूर्ववत् । मनःप्राणयोरभिमानिदेवतान्तर[1]श्रवणेऽपि श्रुतित्वाविशेषादेवमपि संभवतीत्यभ्युपगन्तव्यम् । आनन्त्यं प्रतिशरीरं मनआदिव्यष्टिभेदात् । स एष संवत्सर इत्यादिना—'चन्द्रमाः षड्ढोता स ऋतून् कल्पयाति' इति प्रकारेण सर्वर्तुप्रवर्तकतया संवत्सरसंज्ञस्य रात्र्यधीनोपचयापचयान्वितकलामयस्य प्राणाधिदैवस्य चन्द्रस्य प्रजारक्षकत्वम्, "सौम्यो वै देवतया पुरुषः" इति प्रक्रियया पुरुषस्य चन्द्राधीनत्वं तद्वेदन-फलञ्चोक्तम् । पश्चात् मनोवाक्प्राणानां व्यापारस्य परलोकेऽभ्यधिकत्वं वक्तुम्, 'अथ त्रयो वाव लोकाः' इत्यादिना लोकत्रयं प्रस्तुत्य, पुत्रे विन्यस्तभारस्य तन्मुखेनैहलौकिकार्थप्राप्तिं केवलकर्मणाऽन्तरिक्षप्राप्तिं काम्यविद्याविशेषेण देवलोकप्राप्तिञ्चाभिधाय, प्रैष्यतो मनुष्यस्याध्ययनयज्ञादिकं श्रेयः सर्वं पुत्रेण संपाद्यमिति तस्मिन्निहितभरत्वमुक्त्वा, अयं यदैवंविदस्माल्लोकात् प्रैति, अथैभिरेव प्राणैस्सह पुत्रमाविशति इत्युक्तम् । पुत्रो भूत्वा यज्ञादिकम् अयमेव करोति पुत्रकृतं सर्वं परलोकगतस्य पितुः स्वानुष्ठितसुकृतवत् उपकारकं भवतीत्यर्थः । अथैनमेते दैवाः प्राणा अमृता आविशन्तीति—एवं पुत्रे निक्षिप्तभरं परलोकगतं पुण्यकर्माणं पुरुषं दैवाः प्राणशब्दवाच्याः मनआदयः आविशन्तीत्यर्थः । तदेव प्रपञ्चयति—पृथिव्यै चैनमित्यादिना । शापानुग्रहसमर्था वाक् दैवी वाक् । अमोघसङ्कल्पमानन्दैककारणं मनो दैवं मनः । अप्रतिहतगगनगमनादिव्यापारहेतुः प्राणो दैवः प्राणः । एते पृथिवीद्युसलिलरूपाधिष्ठाने-भ्योऽग्न्यादित्यचन्द्ररूपाधिष्ठातृदेवताभ्यश्चास्य संभवन्ति । देवताप्रसादादेवास्य मनोवाक्प्राणा एवंविधा भवन्तीत्यर्थः । एवं जीवोपकरणानां तेषां परलोके शक्त्यतिशयमुक्त्वा, "स एवंवित् सर्वेषां भूतानामात्मा भवति" इति वागिन्द्रियादिदेवताविज्ञानप्रकर्षेणास्य सर्वभूतान्तर्वर्तिज्ञानसामर्थ्यं तस्य दुःखासंस्पर्शञ्चाभि-धायोपसंहृतम् ।

अत्र द्युपृथिव्यप्शब्दानां मनोवाक्प्राणशब्दानाञ्च सत्त्वतमोरजोवाचित्वाभावात् प्रज्ञाशक्तिवाक्-छक्तिक्रियाशक्तिवाचित्वाभावाच्च तदधिष्ठात्रीश्वरव्यूहप्रतिपादनमनुपपन्नम् ॥ शब्दस्वारस्याभावे-ऽप्यर्थानुपपत्त्या तादृगर्थपरत्वमाश्रयणीयमिति चेत्—का पुनरत्रानुपपत्तिः ॥ 'यावती वाक् तावती पृथिवी' इत्यादिवाक्यैः पृथिव्यादीनां व्याप्त्यवगमात् प्रसिद्धपृथिव्यादिपरत्वमनुपपन्नमिति चेन्न; वागिन्द्रियादिभिस्तदधिष्ठानभूतानां पृथिव्यादीनां तुल्यदेशत्वमात्रप्रतिपादनात् । इन्द्रियसमष्टेरपि हि न व्याप्तिमत्त्वम्, कार्याणां तत्त्वानां दशगुणकारणपरिच्छिन्नत्वेनेन्द्रियसमष्टेरहङ्कारतत्त्वपरिच्छिन्नत्वात् ।

ननु तलवकारिणां श्रुतौ "नासदासीन्नो सदासीत् तदानीम्, नासीद् रजो नो व्योमापरो यत् । किमावरीवः कुह कस्य शर्मन् अम्भः किमासीद्गहनं गभीरम्" इति । "तस्मिन्नसति सति न कस्मिंश्चन सति ऋतं ज्योतिष्मदुदप्लवत; तपो ज्योतिष्मदुदप्लवत । तद्यदृतमिति, वाक् सा । यत्सत्यमिति, प्राणः सः । यत् तप इति मनस्तत् । तेषामन्नमेव ज्योतिरासीत् । तान्येकमभवन् । तदेकं भूत्वाऽन्नेन ज्योतिषाऽप्यायत । तद्यथा मध्वष्ठीला वा स्वासिक्तास्या द्युतिर्यैव[म् ?] । तदैक्षत हन्त प्राणं करवै" इत्यादिना तेषामृतसत्यतपश्शब्दवाच्यानां वाक्प्राणमनसां प्रलयेऽप्यवस्थानात् (वस्थानवचनात् ?) सत्त्वाद्यधिष्ठातार ईश्वरव्यूहा एव मनआदिशब्दवाच्या इति चेत्—

1 मनसश्चन्द्र इति सौबाले । प्राणस्य वायुरिति बृहदारण्यक एव प्रसिद्धम् ।

न ; अस्यां श्रुतौ प्रलयेऽप्यवस्थानाप्रतीतेः । उत्प्लवनञ्च न स्थितिः ; किंतु उद्गमनम् ; तेनोत्पत्तिरेवावगम्यते ; यथा अब्धेस्तरङ्गोद्गम इति, कारणात्कार्योदय इति च । न ह्युद्गमनादिशब्दैः क्वचिदप्यवस्थानं प्रतीयते । अत्र प्रसिद्धवागाद्युत्पत्तौ प्रतिपाद्यमानायामाख्यातपदानां कारकपदानां च स्वरसता स्यात् । इतरत्र अस्वारस्यमेव । "तेषामन्नमेव ज्योतिरासीत्" इत्यत्र ज्योतिश्शब्दः ओजश्शब्दवत् [1]प्रवृत्तिसामर्थ्यपरः । त्रिविधकरणानामप्यन्नमेव प्रवृत्तिसामर्थ्यहेतुरित्यर्थः । करणत्रयेणापि हि यज्ञादिकर्मनिष्पत्तिः । अनन्तरं 'तदैक्षत' इति तच्छब्दश्च सृष्टिप्रतिपादनाक्षिप्तकारणब्रह्मपरः । एवं प्रलयदशायामप्यवस्थानश्रवणरूपापवादाभावात् मनआदिशब्दो नेश्वरव्यूहपरः ।

यत एवम्, तस्मात् **सप्तान्नसृष्टौ** 'तौ मिथुनं समेतां ततः प्राणोऽजायत । स इन्द्रः । स एषोऽसपत्नः' इति वाङ्मयव्यूहपत्नीकात् मनोमयादीश्वरात् प्राणमयव्यूहोत्पत्तिरुच्यत इति चानुपपन्नम् ॥

ननु **बृहदारण्यके**[2] एव षष्ठेऽध्याये, "इन्धो ह वै नामैष योऽयं दक्षिणेऽक्षन् पुरुषः । तं वा एतमिन्धं सन्तमिन्द्र इत्याचक्षते परोक्षेणैव । परोक्षप्रिया इव हि देवाः प्रत्यक्षद्विषः । अथैतद्वामेऽक्षणि पुरुषस्य रूपम्, एषाऽस्य पत्नी विराट् । तयोरेष संस्तावो य एषोऽन्तर्हृदय आकाशः" इत्यत्र दक्षिणाक्षिप्रतिष्ठितस्य पुरुषस्य वामाक्षिगतं पुरुषरूपं पत्नीत्वेनोच्यते । अतोऽत्र वाङ्मयपत्नीको मनोमयः प्रतिपादित इति ॥ न ; 'ततः प्राणोऽजायत स इन्द्रः' इति मिथुनोत्पन्नस्येन्द्रशब्दवाच्यत्वावगमात् ; इह च पत्नीवतः पुरुषस्येन्द्रशब्दवाच्यत्वावगमाच्च । ततश्चेन्द्रशब्दवाच्यप्राणमयस्य वाङ्मयः पत्नी प्रसजेत्, न तु मनोमयस्य । मनोमयस्य वाङ्मयपत्नीकत्वं प्राणमयस्य तदुत्पन्नत्वमपि हि भवदभिमतम् ।

तस्मादत्रायमर्थः—दक्षिणाक्षिस्थः **पुरुषोत्तमः**; 'य एष एतस्मिन् मण्डले पुरुषो यश्चायं दक्षिणेऽक्षन्' इति दक्षिणाक्षिस्थस्य आदित्यान्तरवस्थितत्वश्रवणात् तस्य च पुण्डरीकाक्षत्वात् । "इन्द्रं निचिक्युः परमे व्योमन्", "इन्द्रो मायाभिः" इत्यादिषु परमपुरुषस्य इन्द्रशब्दवाच्यत्वं च सिद्धम् । वामाक्षिस्था तत्पत्नी साक्षाल्लक्ष्मीरेव ; इन्द्रशब्दवाच्यस्य पत्नीत्वेन प्रतीतेः । **तैत्तिरीयके** च, "राडसि बृहती श्रीरसीन्द्रपत्नी धर्मपत्नी" इतीन्द्रपत्न्याः श्रीशब्दवाच्यत्वावगमात् । किञ्च हृदयगुहायामवस्थानमनयोरिह श्रूयते, "तयोरेष संस्तावो य एषोऽन्तर्हृदय आकाशः" इति । **संस्तावः**—अधिकरणे घञ्[3] । संस्तावः स्थानम् (संस्तवस्थानम् ?) । **संस्तवः** परिचयः ; सहवासः । 'पद्मकोशप्रतीकाशम्' इत्यारभ्य, 'तस्याश्शिखाया मध्ये परमात्मा व्यवस्थितः' इति नारायणस्य हृदयस्थितिश्रवणादत्रापि श्रियः पतिर्नारायण एव प्रतिपादित इति वाङ्मयपत्नीकपुरुषप्रतिपादनमसङ्गतम् ।

---

1 अत एवैषां वाक्प्राणमनसां भुक्ततेजोजलपार्थिवाप्यायितत्वेन छान्दोग्योक्तानां बृहदारण्यके, त्रीण्यात्मनेऽकुरुतेति अन्नत्रयत्वेन व्यवहारः ।

2 यद्बृहदारण्यकगतं वाङ्मयःप्राणमयोमनोमय इति वाक्यमीश्वरव्यूहपरं न वेति संप्रति विचार्यते ; पूर्वोक्तसप्तान्नवाक्यमपि यत्र, तत्रैव इति एवकाराशयः ।

3. नन्वधिकरणे घञ् इति सत्यम् ; परंतु "यज्ञे समि स्तुवः" इति सूत्रेण छन्दोगकर्तृकस्तोत्राधिकरणयज्ञदेश एव हि तदर्थः ; इह कथमित्यत्र ह्यधाणादौ तस्य तद्विषयकस्तोत्राधिकरण तदाराधनयज्ञदेशत्वविवक्षयेति मनसिकृत्य विस्तरोपेक्षया पर्यवसितमात्रमाहोपरि । तत्र टीकावाक्ये पाठः शोध्यः ।

तलवकारिश्रुतावपि ईश्वरव्यूहत्रयप्रतिपादनाभावात् अघमर्षणसूक्तेऽपि न तत्प्रतिपादनम् [इति[1] वाङ्मयपत्नीकपुरुषप्रतिपादनमसङ्गतम्]; अपि तु तपश्शब्दः परमात्मपरः; 'यस्य ज्ञानमयं तपः' इति तपश्शब्दस्य ज्ञानवाचित्वात् परस्य ज्ञानगुणसारत्वेन ज्ञानशब्दस्येव धर्मिपर्यन्ताभिधानोपपत्तेः। तस्मात् ऋतशब्दसत्यशब्दवाच्ययोर्यज्ञादिकर्मतद्भोक्तृचेतनवर्गयोरुत्पत्तिः; वाक्प्राणयोर्वा, "तद्यदृतमिति, वाक् सा। यत्सत्यमिति प्राणस्सः' इति श्रुतेः। यद्वा ऋतं यथार्थशब्दः, सत्यमबाध्योऽर्थः। नामरूपे उत्पन्ने इत्यर्थः। अतो मिथःकार्यकारणभावेनावस्थितं वाङ्मयादिव्यूहत्रयं निष्प्रमाणकम्।

किञ्च वाङ्मयपत्नीकात् मनोमयात् प्राणमयोत्पत्तिः किं प्रलयदशायां महदादिसर्गात्पूर्वभाविनी, उत महदादिसर्गानन्तरभाविनी ?। तत्र प्रथमशिरो निष्प्रमाणकत्वान्निरस्तम्। द्वितीये तु ब्रूमः— "वाङ्मयः पृथिवीशरीरो लयपरिणामशक्तिमधितिष्ठति। तमः पृथिवीत्युच्यते। लयपरिणामशक्तिः वागिति, मोक्षस्थानमिति च" इत्युक्तमुपनिषत्कल्पे। तत्रैव, "प्राणमयोऽप्छरीरः क्रियाशक्तिमधितिष्ठति। रज आप उच्यन्ते, क्रियाशक्तिः प्राणः" इति चोक्तम्। यदि तमोरजश्शक्त्यधिष्ठातारौ वाङ्मय-प्राणमयौ, तदा वाङ्मयपत्नीकात् मनोमयात् प्राणमयोत्पत्तिं वदता चतुर्मुखोत्पत्तेः पूर्वमेव रुद्रोत्पत्तिरुक्ता स्यात्। तत् श्रुतिविरुद्धम्। महोपनिषदि, 'तत्र ब्रह्मा चतुर्मुखोऽजायत' इति ब्रह्मसृष्टिमुक्त्वा 'अथ पुनरेव नारायणः सोऽन्यं कामं मनसा ध्यायीत। तस्य ध्यानान्तःस्थस्य ललाटात् त्र्यक्षश्शूलपाणिः पुरुषोऽजायत' इति रुद्रसृष्टेः पश्चात्तनत्वश्रवणात्; सुबालोपनिषदि, 'ललाटात् क्रोधजो रुद्रोऽजायत' इति रुद्रस्य चतुर्मुखललाटोत्पन्नत्वश्रवणात्; शैलालिब्राह्मणे रुद्रस्य चतुर्मुखसृष्टाग्न्यादिजीव-वदुत्पन्नत्वश्रवणात्; शतपथे चाष्टमूर्तिब्राह्मणे, संवत्सरशब्दवाच्येन प्रजापतिना रुद्रसृष्टेः श्रुतत्वात्, तद्रोदनपरिहाराय तेन तस्य नाममूर्त्यष्टकप्रदानप्रतिपादनाच्च।

ननु श्वेताश्वतरे, "विश्वाधिको रुद्रो महर्षिर्हिरण्यगर्भं जनयामास पूर्वम्" इति श्रूयत इति चेत्—तदपि भवत्पक्षे विरुद्धम्; अनन्तरमेव, "वेदाहमेतं पुरुषं महान्तम् आदित्यवर्णं तमसः परस्तात्", "महान् प्रभुर्वै पुरुषः सत्त्वस्यैष प्रवर्तकः", "अङ्गुष्ठमात्रः पुरुषोऽन्तरात्मा", "सहस्रशीर्षा पुरुषः" इत्यादिषु वाक्येषु, 'एतं महान्तं पुरुषम्', 'एष [2]महान् पुरुषः इति प्रकृतरुद्रपरामर्शिना एतच्छब्देन महापुरुषशब्दसामानाधिकरण्यात्, "यदेष आकाश आनन्दो न स्यात्" इत्यानन्दशब्द-समानाधिकरणाकाशशब्दस्य प्रसिद्धाकाशप्रहाणेन परमात्मपरत्ववत् रुद्रशब्दस्यापि प्रसिद्धार्थप्रहाणेन महापुरुषपरताया न्याय्यत्वात्, सत्त्वप्रवर्तकविषयस्य वाक्यस्य तमोधिष्ठातृवाङ्मयपरत्वाभावात्, पुरुषसूक्तवाक्योपादानेन पुरुषोत्तमविषयत्वस्य स्फुटत्वाच्च परमपुरुषादेव हिरण्यगर्भोत्पत्तेस्तत्र प्रतिपाद्यमान-तया वाङ्मयपत्नीकत्वप्रसङ्गाभावात्। यथा—"मृत्युनैवेदमावृतमासीत् अशनायया। अशनाया हि मृत्युः। तन्मनोकुरुत, आत्मन्वी स्यामिति। सोऽर्चन्नचरत्। तस्यार्चत आपोऽजायन्त" इत्यारभ्य अशनायालक्षणात् मृत्योरम्बुपृथिव्यग्नीनां सृष्टिप्रतीतावपि न प्रसिद्धमृत्योः क्षुधो वा पृथिव्यादिप्रपञ्च-कारणत्वमभ्युपगम्यते; "भीषास्मादग्निश्चेन्द्रश्च मृत्युर्धावति पञ्चमः", "मृत्युर्यस्योपसेचनम्", "तच्छ्रेयो रूपमत्यसृजत क्षत्रम्, यान्येतानि देवत्रा क्षत्राणीन्द्रो वरुणस्सोमो रुद्रः पर्जन्यो यमो मृत्युरीशानः"

---

1 इतीत्यादिरधिकपाठः। 2 अत्र मुद्रितकोशे अशुद्धिः।

इति परमात्मसृज्यत्वसंहार्यत्वनियाम्यत्वश्रवणात्—एवं ब्रह्मसृष्टस्य रुद्रस्य न ब्रह्माणं प्रति स्रष्टृत्वमिहोच्यत इत्यभ्युपगन्तव्यम् । शैलालिब्राह्मणशतपथसुबालोपनिषदां तु नैवमर्थान्तरपरत्वं वक्तुं शक्यम् ।

नन्वेवमपि कल्पभेदेन सृष्टिप्रकार इत्यास्थेयम् ॥ नैवम्; त्वदभिमतसृष्टिप्रकारस्य स्फुटश्रवणाभावात्; आकाशादीनामपि कल्पभेदेन परमकारणत्वकल्पनाप्रसङ्गात् । श्रुतिविरोधेन कल्पनानुपपत्तेश्च । अतो वाङ्मयरुद्रपत्नीकान्मनोमयात् प्राणमयहिरण्यगर्भोत्पत्तिः श्रुतिविरुद्धा ।

किञ्च वाङ्मयो लयपरिणामशक्तिमधितिष्ठति; लयपरिणामशक्तिश्च वागिति कथ्यते; मोक्षस्थानमिति च । मोक्षस्थानं परमाकाशः । स च प्रकृतेस्तमश्शब्दवाच्याया आद्यावस्था इति च भवद्भिरुच्यते । तथा तत्त्वविचारणायामुक्तम्, "परमाकाशो नाम प्रकृतेराद्यावस्था" इत्युपक्रम्य, "सा च तमोवस्थापन्ना प्रकृतिः परस्मादात्मनो विभागरूपं विकारं प्रतिपद्यते । स एव परमाकाशः । स एव मुक्तानामीश्वरस्य च स्थानं शब्दपरिणामशक्तियुक्तत्वाद्वागिति चोच्यते; अक्षरमिति च" इति । यदि अव्यक्ततमसोर्मध्यपठितमक्षरं परमाकाशः, स तावन्नाद्यो विभागः, "तम एकीभवति", "मृत्युर्वै परे देव एकीभवति", "तस्मात् तमः सञ्जायते" इति तमस एव विभागश्रवणात् । विभक्तात् तमसो ह्यक्षरविभागः । तमस्तस्मादक्षररूपेण जायत इति योजना त्वस्वरसा । [1]'अक्षरं तमसि लीयते' इति लयश्रवणविरुद्धा च ।

तच्चाक्षरं न मुक्तानामीश्वरस्य च स्थानम्; तस्याव्यक्ताद्यपेक्षया अक्षरत्वेऽपि तमसि लयश्रवणेन क्षरत्वात्, 'तदक्षरे परमे व्योमन्' इति परमव्योम्नः क्षरणाभावाच्च ॥ तत्राप्यापेक्षिकमक्षरत्वमिति चेन्न; तत्र स्वारस्यभञ्जकप्रलयश्रवणाभावात् ॥ तमसो विभक्तमक्षरमेव तत्राक्षरशब्देन प्रत्यभिज्ञाप्यत इति चेन्न; वर्णानुपूर्वीसादृश्येऽप्यन्यविशेषणतया प्रयुक्तेनाक्षरशब्देन विशेष्यसमर्पकाक्षरशब्दार्थस्य प्रत्यभिज्ञानाभावात् । न ह्यरुणः पट इति वाक्यस्थोऽरुणशब्दो रविरथस्थमरुणं प्रत्यभिज्ञापयति । किञ्च स्वप्रकरणे, "विश्वं पुराणं तमसः परस्तात्" इति, समानप्रकरणे च, "आदित्यवर्णं तमसः परस्तात्", "ते ह नाकं महिमानस्सचन्ते", "आदित्यवर्णं तमसस्तु पारे" इति मुक्तात्मेश्वरस्थानस्य तमसःपरत्वश्रवणात् तमसोऽर्वाचीनस्याक्षरस्य न तत्र प्रत्यभिज्ञा ॥ 'तमसः परस्तात्' इति परस्वरूपस्य तमोवैलक्षण्यमुच्यत इति चेत्—न; दिग्देशकालेष्वस्तातिप्रत्ययस्य विहितत्वेन वैलक्षण्यमात्रपरत्वस्य क्लिष्टत्वात् स्थानविशेषस्य संनिहितत्वाच्च तमसः परत्वस्य देशविशेषवर्तिपरमात्मविशेषणत्वोपपत्तेः । 'तमसस्तु पारे'इति पारशब्दश्चावधिवाचकः, न तु वैलक्षण्यवाचकः । अतस्तमसः परस्य स्थानस्येह प्रत्यभिज्ञानाभावात् तमोविभागरूपमक्षरं न मुक्तात्मपरमात्मस्थानम् । तमोविभागरूपं चाक्षरं न वाङ्मयाधिष्ठेयम्, तस्याक्षरस्य ब्रह्मरुद्रसृष्टेः पूर्वभावित्वात । 'यः पृथिवीमन्तरे सञ्चरन्' इत्यारभ्य, 'योऽक्षरमन्तरे सञ्चरन् यस्याक्षरं शरीरम्', 'यस्य मृत्युः शरीरम्' इत्युक्त्वा "एष सर्वभूतान्तरात्माऽपहतपाप्मा दिव्यो देव एको नारायणः" इति तस्याक्षरतत्कारणभूतमृत्युशरीरकस्य नारायणत्वप्रतिपादनाच्च । तस्यैवान्तरात्मत्वश्रवणात् वाङ्मयोऽन्तरात्मेति चानुपपन्नम् । अत एव हिरण्यगर्भस्य प्राणमयान्तर्यामित्वं च निरस्तम्; नारायणस्यैव ह्यन्तर्यामित्वं श्रुतम् । हिरण्यगर्भस्य महत्तत्त्वाभिमानित्वं तु ब्रह्माण्डान्तर्गतव्यष्टिशरीरविषयं क्वचिदुक्तमिति

---

[1] ननु तम एव विभक्तं क्षरणाभावादक्षरमित्युच्यते । अतः सैवाऽऽद्यावस्थेत्यत्राह अक्षरमिति। लयश्रवणात् अक्षरत्वमागन्तुकावस्थेति भावः ।

उपदेशभेदान्नेति चेन्नोभयस्मिन्नप्यविरोधात् ॥ १-१-२८ ॥

पूर्ववाक्ये, "त्रिपादस्यामृतं दिवि" इति दिवोऽधिकरणत्वेन निर्देशात् इह च दिवः पर इत्यवधित्वेन निर्देशादुपदेशस्य भिन्नरूपत्वेन पूर्ववाक्योक्तं ब्रह्म परस्मिन्न प्रत्यभिज्ञायत इति चेत्—तन्न, उभयस्मिन्नप्युपदेशे अर्थस्वभावैक्येन प्रत्यभिज्ञाया अविरोधात्; यथा 'वृक्षाग्रे श्येन,' 'वृक्षाग्रात्परतः श्येनः' इति। तस्मात् परमपुरुष एव निरतिशयतेजस्कः, दिवः परो ज्योतिर्दीप्यत इति प्रतिपाद्यते। "एतावानस्य महिमा अतो ज्यायांश्च पुरुषः। पादोऽस्य विश्वा भूतानि त्रिपादस्यामृतं दिवि" इति प्रतिपादितस्य चतुष्पदः परमपुरुषस्य, "वेदाहमेतं पुरुषं महान्तम्

---

मन्तव्यम्; परमकारणत्वाभावात्। अग्नीन्द्रादीनां वाक्पाण्याद्यभिमानित्ववत्। 'सर्वभूतान्तरात्मा' इत्यत्र सर्वभूतशब्देन ब्रह्मरुद्रयोरपि जीवान्तर्भावः, 'तस्माद्विराडजायत। विराजो अधिपुरुषः', 'त्र्यक्षः शूलपाणिः पुरुषोऽजायत', 'इन्द्रो वरुणस्सोमो रुद्रः', 'स ब्रह्मा स शिवः सेन्द्रः' इतीन्द्रवत् कार्यत्वादिश्रवणात्। एवमेव ह्युपबृंहितं **भगवता व्यासेन ब्रह्मरुद्रसंवादे**, "ममान्तरात्मा तव च ये चान्ये देहिसंज्ञिताः। सर्वेषां साक्षिभूतोऽसौ न ग्राह्यः केनचित् क्वचित् ॥", "अहं ब्रह्मा आद्य ईशः प्रजानां तस्माज्जातस्त्वं च मत्तः प्रसूतः। मत्तो जगत् स्थावरजङ्गमं च सर्वे वेदाः सरहस्याश्च पुत्र" इति।

अत एव **मानवे धर्मशास्त्रे**ऽपि, 'योऽस्यात्मनः कारयिता' इत्यादिवचनानि च न भवदभिमतवाङ्मयप्राणमयविषयाणि, श्रुत्यनुसारित्वात् स्मृतिवचनानाम्। अत एव 'मनोमयः प्राणशरीरो भारूपः सत्यसङ्कल्प आकाशात्मा,' 'प्राणो ब्रह्म कं ब्रह्म खं ब्रह्म' इत्यादिश्रुतयश्च न भवदभिमतपरिपाटीप्रतिपादिकाः, स्ववाक्यस्वारस्याभावात् श्रुत्यन्तरविरोधात् अनुपपन्नत्वाच्च। यत ईश्वरस्य न प्रलयकाले व्यूहत्रयं प्रामाणिकम्, अत एव ब्रह्मरुद्रयोर्वाङ्मयप्राणमयव्यूहत्वं च दूरोत्सारितम्। स्मृतयश्च श्रुत्यनुरोधेन वर्णनीयाः; अशक्यवर्णनाश्चेत् अनादरणीयाः ॥

एवं [1]वाङमयादिव्यूहत्रयकल्पनस्य निर्मूलत्वात् 'त्रिपादस्यामृतं दिवि' इति वाक्यस्य यादवप्रकाशैरभिहितार्थोऽनुपपन्नः। तस्मात् **भूतादिपादे**त्यादिसूत्रस्य भाष्यकाराभिमत एवार्थ उपपन्न इति स्थितम् ॥ २७ ॥

**उपदेशभेदान्नेति चेन्नोभयस्मिन्नप्यविरोधात्** ॥ **यथा वृक्षाग्रे श्येन** इति। सप्तमी अन्तर्बहिरधरोर्ध्वभागस्थितिसाधारणी, पञ्चमी तु उपरिस्थित्यसाधारणी। अत उभाभ्यां [1]स्थानावि-(स्थानवि)शेषादुपरि स्थितिरेव विवक्षितेति भावः। सूत्रार्थं परमसाध्येन घटयति **तस्मा**दिति। न खल्वात्मस्वरूपे दीप्तिरस्ति; तत् कथं 'ज्योतिर्दीप्यते' इत्युक्तज्योतिश्शब्दाभिधेयत्वमिति शङ्कां परिहरन् अधिकरणार्थं निगमयति **एतावा**निति। पुरुषसूक्तवाक्योपादानं विग्रहविशेषज्ञापनार्थम् ॥ २८ ॥

---

1 वाङ्मयादिव्यूहत्रयमीश्वरीयमिति त्रिपाच्छब्दार्थवर्णनव्युदासाय यादवप्रकाशदर्शित-बृहदारण्यक-तलवकार-तैत्तिरीय-मानवधर्मशास्त्रादिवाक्यविचारः। मध्ये तद्ग्रन्थदूषणाय अक्षिस्थान रुद्रोत्पत्तिप्रकारविशेषादिविचारश्च।

1 स्थानविशेषादिति पाठ एवानेककोशस्थः! अत एव भा॰ प्रा॰ स्थानविशेषस्येति षष्ठ्यन्तं युक्तमित्युक्तम्। अयमप्युपलभ्यमान इति निवेद्यते। अर्थस्वभावैक्येनेति भाष्यानुगुण्यमप्यस्मिन् पाठे।

आदित्यवर्णं तमसस्तु पारे" इत्यभिहिताप्राकृतरूपस्य तेजोऽप्यप्राकृतमिति तद्वत्तया स एव ज्योतिश्शब्दाभिधेय इति निरवद्यम् ॥ २८ ॥ इति ज्योतिरधिकरणम् ।

## इन्द्रप्राणाधिकरणम् १-१-११.

निरतिशयदीप्तियुक्तं ज्योतिश्शब्दाभिधेयं प्रसिद्धवन्निर्दिष्टं परमपुरुष एवेत्युक्तम् । इदानीं कारणत्वव्याप्तामृतत्वप्राप्त्युपायतयोपास्यत्वेन श्रुतः इन्द्रप्राणादिशब्दाभिधेयोऽपि परमपुरुष एवेत्याह—

### प्राणस्तथाऽनुगमात् ॥ १-१-२९ ॥

कौषीतकिब्राह्मणे प्रतर्दनविद्यायाम्, "प्रतर्दनो ह वै दैवोदासिरिन्द्रस्य प्रियं धामोपजगाम युद्धेन च पौरुषेण च" इत्यारभ्य "वरं वृणीष्व" इति वक्तारमिन्द्रं प्रति, "त्वमेव मे वरं वृणीष्व यं त्वं मनुष्याय हिततमं मन्यसे" इति प्रतर्दनेनोक्ते स होवाच, प्राणोऽस्मि प्रज्ञात्मा तं मामायुरमृतमित्युपास्स्व इति श्रूयते । तत्र संशयः—किमयं हिततमोपासनकर्मतया इन्द्रप्राणशब्द[1] निर्दिष्टो जीव एव, उत तदतिरिक्तः परमात्मेति । किं युक्तम्? जीव एवेति । कुतः । इन्द्रशब्दस्य

---

अवान्तरसङ्गतिमाह **निरतिशयेति**। **ज्योतिश्शब्दाभिधेय**मिति । आकाशप्राणतेजसां क्रमोपपत्तेः 'अत एव प्राणः' इत्यस्यानन्तरं ज्योतिश्चरणाभिधानादित्यधिकरणं सङ्गतमिति भावः । **प्रसिद्धवन्निर्दिष्ट**मिति । अनेनाधिकरणयोः पौर्वापर्यनियम उक्तः । 'सर्वाणि ह वा इमानि भूतानि' इति पूर्वस्मात् पूर्वाधिकरणद्वयविषयवाक्ययोः प्रसिद्धवन्निर्देशो दृश्यते । अत्रापि, 'अथ यदतः' इति यच्छब्देन प्रसिद्धवन्निर्देशो दृश्यते । तस्मात् ज्योतिरधिकरणं पूर्वाधिकरणद्वयेन सङ्गतम् । एवं सति उत्तराधिकरणस्य ज्योतिरधिकरणानन्तरभावित्वं प्राप्तमिति भावः । अवान्तरपेटिकानुगतमर्थमाह **कारणत्वव्याप्ते**ति । पूर्वाधिकरणे परमपुरुषस्य ज्योतिश्शब्दाभिधेयत्वमुक्तम् ; तदयुक्तम् ; परमपुरुषादन्यस्येन्द्रादि[2]शब्दवाच्यस्य वेदान्तप्रतिपाद्यत्वादिति शङ्कया सङ्गतिरित्यर्थः । तत्र कारणत्वाक्षेपकलिङ्गभूयस्त्वमनुसन्धेयम् ॥

**प्राणस्तथाऽनुगमात्** ॥ **तत्रे**ति । [3]'इन्द्रस्य प्रियं धामोपजगाम' इत्युपक्रमे इन्द्रशब्दनिर्दिष्टत्वात् "प्राणोऽस्मि प्रज्ञात्मा", "स एष प्राण एव प्रज्ञात्माऽऽनन्दोऽजरोऽमृतः" इति प्राणशब्देन निर्दिष्टत्वाच्चेन्द्रप्राणशब्दनिर्दिष्ट इत्युक्तम् । [4]प्राणशब्दस्य परमात्मलिङ्गप्रतिपादकवाक्यस्थत्वेन सिद्धान्तहेतुद्योतकत्वात् सूत्रे प्राणशब्देन धर्मी निर्दिष्टः ; न त्विन्द्रशब्देन । इन्द्रशब्दनिर्दिष्टस्य विचारविषयत्वमार्थमिति सूत्रकाराभिप्राय इति भावः । जीवमात्रलिङ्गसद्भावेऽपि विशेषाकाङ्क्षायां जीवधर्मस्य इन्द्रशब्दवाच्यप्रकृतजीवविशेषनिष्ठत्वप्रतीतेः, जीवो वेति शिरोन्तरं **परोक्त**मयुक्तमिति भावः । प्राणलिङ्गे सत्यपि **प्राणोऽस्मी**ति सामानाधिकरण्येन प्राणस्य जीवविशेषणत्वप्रतीतेः प्राधान्येन

---

1 इन्द्रप्राणशब्देति । इन्द्रवाचिप्राणशब्देत्यर्थः ।

2 अत्रोपनिषदि मामिति शब्दस्यार्थविचारः, न त्विन्द्रशब्दस्य । अथापि अत्र मामित्यस्य, इन्द्रमित्यर्थकत्वात् इन्द्रशब्देत्युक्तम् । एवमुपर्यपि ।

3 सूत्रे प्राणमात्रनिर्देशे सति भाष्ये इन्द्रप्राणेति कथं विशेषनिर्देश इत्यत्राह इन्द्रस्येति ।

4 नन्विन्द्रवाची मामिति शब्दोऽपि विचार्यः । एवंसति प्रधानभूतः स कथं न निर्दिश्यत इत्यत्राह प्राणशब्दस्येति । इन्द्रशब्देन—इन्द्रवाच्यसच्छब्देन ।

**जीवविशेष एव प्रसिद्धेः तत्समानाधिकरणस्य प्राणशब्दस्यापि तत्रैव वृत्तेः। अयमिन्द्राभिधानो जीवः प्रतर्दनेन, 'त्वमेव मे वरं वृणीष्व यं त्वं मनुष्याय हिततमं मन्यसे' इत्युक्तः, 'मामुपास्स्व इति स्वात्मोपासनं हिततममुपदिदेश। हिततमश्चामृतत्वप्राप्त्युपाय एव। जगत्कारणोपासनस्यैवामृतत्वप्राप्तिहेतुता, "तस्य तावदेव चिरं यावन्न विमोक्ष्ये अथ संपत्स्ये" इत्यवगता। अतः प्रसिद्धजीवभाव इन्द्र एव कारणं ब्रह्म॥**

**इत्याशङ्कायामभिधीयते—प्राणस्तथानुगमादिति। अयमिन्द्रप्राणशब्दनिर्दिष्टो न जीवमात्रम्, अपि तु जीवादर्थान्तरभूतं परं ब्रह्म। "स एष प्राण एव प्रज्ञात्मा आनन्दोऽजरोऽमृतः" इतीन्द्र-**

---

प्रतिपाद्यत्वशङ्काया असंभवात्, प्राणो वेति चानुपन्यस्तम्। कारणवाक्यप्रतिपाद्यं ब्रह्म किं प्रसिद्धजीवभाव इन्द्रः, उत परमात्मेति विचारः; तदर्थं हिततमोपासनकर्मतयेन्द्रप्राणशब्दनिर्दिष्टः किं प्रसिद्ध इन्द्रः उत परमात्मेति; तदर्थमानन्दादिगुणाः किं गौणाः, उत मुख्याः; तदथ किमुपक्रमावगतत्वाष्ट्रहननादिलिङ्गानुरोधेन आनन्दादिवर्णनम्, उत आनन्दादिलिङ्गानुगुणतया त्वाष्ट्रहननादिवर्णनम्; तदर्थं मामुपास्स्वेति किं स्वोपासनमुच्यते, उत स्वावस्थपरमात्मोपासनम् इति विचारः। यदा स्वोपासनोक्तिः, तदा त्वाष्ट्रवधाद्यनुगुणमानन्दादेर्वर्णनीयत्वेन आनन्दादिगुणानाममुख्यत्वात् हिततमोपासनकर्मतयोक्त इन्द्र इति जगत्कारणं प्रसिद्धजीवभाव इन्द्र इति पूर्वपक्षे फलफलिभावः। यदा स्वावस्थपरमात्मोपासनोपदेशः, तदा आनन्दादिगुणानुगुणं त्वाष्ट्रवधादेर्वर्णनीयत्वादानन्दादिगुणानां मुख्यत्वात् हिततमोपासनकर्म[1]भूतेन्द्रप्राणशब्दनिर्दिष्टः परमात्मेति सर्ववेदान्तवेद्यं जगत्कारणं ब्रह्म परमात्मेति राद्धान्ते फलफलिभावः। **जीवविशेष एव प्रसिद्धेरि**ति। अनेन जीवमात्र[2]पक्षस्यानुदयः सूचितः। प्राणशब्दस्य कथं जीवपरत्वमित्यत्राह **तत्समानाधिकरणस्ये**ति। अनेन प्राधान्येन प्राणपरत्वशङ्कानुत्थानमप्यर्थात् सूचितम्। इन्द्रस्य जीवत्वे कथं कारणस्य जीवानतिरिक्तत्वमित्यत्राह **अयमि**ति। स्वात्मोपासनं हिततममुपदिष्टमस्तु, ततः किम् इन्द्रस्य जगत्कारणत्वे इत्यत्राह **हिततम** इति। ततः किमित्यपेक्षायां मुमुक्षूपास्यत्वस्य कारणत्वव्याप्तिं दर्शयति **जगदि**ति। **अत** इति पूर्वपक्षोपसंहारः॥

राद्धान्तं प्रतिजानीते **अयमि**ति। उपपादयति **स एष** इति। **अनुगमः**—पूर्ववाक्यप्रकृतस्य उत्तरवाक्यसंबन्धः। स्ववाक्यानभिव्यक्तस्य सिद्धान्तहेतोः उत्तरवाक्याभिव्यक्ततया **अनुगमादि**त्युक्तम्। आकाशाधिकरणे ज्योतिरधिकरणे च सिद्धान्तहेतोर्हि स्ववाक्यपू[3]र्ववाक्याभिव्यक्ततयाऽनुगमादित्यनुक्तिः। सौत्रं **तथा**पदं साधकाकारपरामर्शित्वेन व्याचष्टे **आनन्दाजरे**ति। **प्राणः**—परमात्मा; **तथानुगमात्**—परमात्मत्वानुगुण्येनानुगमादिति सूत्रयोजना। **तथा**शब्दस्य साध्याकारपरामर्शित्वमप्यभिप्रयन्नाह

---

[1] भूतपदस्य निर्दिष्टपदेन सह कर्मधारयः। भूतः इति व्यस्तपाठो वा। [2] मात्रेति। सामान्येत्यर्थः। [3] पूर्ववाक्यं प्राणोऽस्मि प्रज्ञात्मेति। उत्तरवाक्यं दूरस्थं प्राण एव प्रज्ञात्मा आनन्दोऽजरोऽऽमृत इति। उपरि स्ववाक्यपूर्ववाक्येत्यत्र कर्मधारयः। स्ववाक्याव्यवहितोत्तरेति वाऽर्थः। यद्वा आकाशविषये स्ववाक्येऽभिव्यक्तिः, ज्योतिर्विषये पूर्ववाक्ये ऋचि अभिव्यक्तिः। न तु कुत्राप्युत्तरवाक्ये इत्यर्थः।

प्राणशब्दाभ्यां प्रस्तुतस्यानन्दाजरामृतशब्दसामानाधिकरण्येनानुगमो हि तथासत्येवोपपद्यते ॥ २९ ॥

**न वक्तुरात्मोपदेशादिति चेदध्यात्मसंबन्धभूमा ह्यस्मिन् ॥ १-१-३० ॥**

यदुक्तम्—इन्द्रप्राणशब्दनिर्दिष्टस्य "आनन्दोऽजरोऽमृतः" इत्यनेनैकार्थ्यादयं परं ब्रह्मेति—तन्नोपपद्यते ; "मामेव विजानीहि", "प्राणोऽस्मि प्रज्ञात्मा तं मामायुरमृतमित्युपास्स्व" इति वक्ता हीन्द्रः, 'त्रिशीर्षाणं त्वाष्ट्रमहनम्' इत्येवमादिना त्वाष्ट्रवधादिभिः प्रज्ञातजीवभावस्य स्वात्मन एवोपास्यतां प्रतर्दनायोपदिशति ; अत उपक्रमे जीवविशेष इत्यवगते सति 'आनन्दोऽजरोऽमृतः' इत्यादिभिरुपसंहारस्तदनुगुण एव वर्णनीय इति चेत्—परिहरति—अध्यात्मसंबन्धभूमा ह्यस्मिन् ।

आत्मनि यः संबन्धः सोऽध्यात्मसंबन्धः । तस्य भूमा—भूयस्त्वम् । बहुत्वमित्यर्थः । आत्मन्याधेयतया संबध्यमानानां बहुत्वेन संबन्धबहुत्वम् । तच्चास्मिन्—वक्तरि परमात्मन्येव हि संभवति । "तद्यथा रथस्यारेषु नेमिरर्पिता नाभावरा अर्पिताः, एवमेवैता भूतमात्राः प्रज्ञामात्रास्वर्पिताः, प्रज्ञामात्राः प्राणेऽर्पिताः । स एष प्राण एव प्रज्ञात्माऽऽनन्दोऽजरोऽमृतः" इति भूतमात्रा-

---

**तथा सत्येवे**ति । **तथा सति**—इन्द्रप्राणशब्दनिर्दिष्टे परस्मिन् ब्रह्मणि सत्येवेत्यर्थः । प्राणः परमात्मा तथाऽनुगमात्—परमात्मतया अनुगमादिति योजना । अनुगमक्रियाविशेषणं **तथा**शब्दः । बुद्धिस्थसाध्यसाधकधर्मवत्तयाऽनुगमो विवक्षित इत्यभिप्रायः । आद्यसूत्रं 'स एष प्राण एव' इत्यादिवाक्यमात्रविषयं व्याख्यातम् ; न तु **परै**रिव वाक्यान्तरस्थहेतवोऽप्यत्र विवक्षितत्वेनोक्ताः । **अध्यात्मसंबन्धभूमे**ति द्वितीयसूत्र एव बहुवाक्यस्थहेतुबाहुल्यस्य विवक्षितत्वावगमात् । आनन्दादिगुणप्रतिपादकवाक्यस्य प्राणशब्दचिह्नितत्वात् तद्गतहेतुपरत्वेन हि प्राणशब्दचिह्नितसूत्रव्याख्यानं युक्तम् । प्राणशब्दचिह्नितस्यापि प्राणोऽस्मीत्यादेरत्रानुदाहरण[1]मन्यविशेषणभूतपरमात्मलिङ्गत्वात् । 'प्राणेऽर्पिताः' इत्यस्यानुदाहरणं तु सूत्रान्तरैकार्थ्यात्[2] ॥

**न वक्तुरात्मोपदेशादिति चेदध्यात्मसंबन्धभूमा ह्यस्मिन्** ॥ निषेध्याध्याहारेण नञर्थमाह **यदुक्त**मिति । त्वाष्ट्रवधादीत्यत्र **आदि**शब्देन सालावृकयतिप्रदान-दैत्यातिसन्धान-पौलोमनिरासेन्द्रशब्दाः[3] विवक्षिताः । ततः किमित्यत्राह **अत** इति । उपक्रमो बलीयानित्यर्थः । 'विकारशब्दान्नेति चेन्न' इतिवत् सूत्रे सिद्धान्तखण्डे निषेधवाचिशब्दाभावात् खण्डान्तरस्य सिद्धान्तपरत्वद्योतनाय **परिहरती**त्युक्तम् ॥ **भूमशब्दो भूयस्त्वशब्देन** व्याख्यातः । भूमशब्दप्रकृतिं दर्शयितुं **बहुत्व**मित्युक्तम् । आपेक्षिकं हि बहुत्वम् । पूर्वपक्षयुक्तिबहुत्वादपि बहुतरमिति भावः । संबन्धबहुत्वनिबन्धनमाह **संबध्यमानाना**मिति । संबन्धः कीदृश इत्यत्राह **आधेयतये**ति । **अस्मि**न्निति पदं व्याचष्टे **तच्चे**ति । आधेयतया संबन्धे श्रुतिमाह **तद्यथे**ति । न केवलमुपसंहारवचनमात्रम्, किंतु पूर्वमप्यस्तीति [4]बहुत्वाभिप्रायेण 'स एष प्राण एव' इत्यादिकमुपात्तम् । पूर्वोपात्तश्रुत्यर्थमाह **भूतमात्रे**ति ।

---

1 तद्वाक्योक्तामृतत्वेन परमात्मत्वास्थापनम् अमृतमित्यस्य परमात्मलिङ्गस्य इतिशब्दघटितोपास्यन्वयितया तात्त्विकत्वनिश्चयायोगादित्यर्थः । 2 ऐकार्थ्यादिति । ऐकार्थ्यप्रसंगादित्यर्थः ।

3 तस्य मे इति इन्द्रवाच्यस्मच्छब्द इत्यर्थः । अस्मच्छब्दस्य सर्ववक्तृवाचित्वात् इन्द्रेति विशिष्योक्तिः । वक्तारमित्यादि-इन्द्रपरशब्दान्तरसंग्रहाय च । 4 पूर्वसूत्रोदाहृतवाक्यात् पूर्वं प्रकृतसूत्रविषयवाक्यमिति ज्ञापयित्वा अस्मिन्नध्यात्म संबन्धबहुत्वप्रदर्शनाभिप्रायेणेत्यर्थः ।

ननु कथं प्रज्ञामात्राशब्देन चेतनवर्गाभिधानम्? वाक्घ्राणचक्षुःश्रोत्रजिह्वाः पाणिपादोपस्थशरीरमनांसि च प्रतिपाद्य, "ता वा एता दशैव भूतमात्रा अधिप्रज्ञम्, दश प्रज्ञामात्रा अभिभूतम्॥ यद्‌ु ह वै (यद्धि) दश भूतमात्रा न स्युः, न प्रज्ञमात्राः स्युः। यद्‌ु ह वै (यद्धि) न प्रज्ञामात्राः स्युः, न भूतमात्राः स्युः" इति भूतमात्राः प्रज्ञामत्राश्च प्रत्येकं दशसङ्ख्याः परस्परसाकांक्षा उक्ताः। तत्र **प्रज्ञामात्राशब्दो** गन्धादिचतुष्टयवागादिव्यापारचतुष्टयशारीरसुखदुःखमन्तव्यविषयज्ञप्तिपरः। यद्वा भोग्या गन्धादयः, शरीरानुप्रविष्टभूतांशाश्च **भूतमात्राः**। दशेन्द्रियाणि **प्रज्ञामात्राः**, प्रत्येकं दशसङ्ख्याश्रवणबलात्। अनुक्ताः पदार्थाश्च अजहल्लक्षणया विवक्षिता इत्यभ्युपेत्यम्। प्रज्ञामात्राशब्दस्य जीवपरत्वे दशसङ्ख्याविरोधात्। एवं ताश्च ताश्च दश दशोक्ताः। "न ह्यन्यतरतो रूपं किञ्चन सिध्येत्; नो एवैतन्नाना" इत्यासामुभयविधानामपि परस्पराविनाभावमुक्त्वा तत्र दृष्टान्तमाह—तद्यथा रथस्येति वाक्येन। न च वाच्यम्, 'यो वै प्राणः सा प्रज्ञा या प्रज्ञा स प्राणः। सह ह्येतावस्मिन् शरीरे वसतः; सहोत्क्रामतः' इतिप्रकृतजीवविषयोऽयं प्रज्ञामात्राशब्द इति। मात्रान्तेन प्रज्ञाशब्देन व्यवहितवाक्यस्थकेवलप्रज्ञाशब्दनिर्दिष्टजीवप्रत्यभिज्ञानाभावात् अनन्तरपूर्ववाक्यप्रकृतदशसङ्ख्यप्रज्ञामात्राणामेव स्वतःप्रत्यभिज्ञायमानत्वाच्चेति—

तदयुक्तम्; अर्थविरोधात् दृष्टान्तदार्ष्टान्तिकभावानुपपत्तेश्च प्रत्यभिज्ञानस्य भग्नत्वात्। न हि वागादीन्द्रियाणि भूतमात्राणामाश्रयः; भूतसङ्घातरूपशरीरमेव हि इन्द्रियाश्रयः इत्यर्थविरोधः स्फुटः। तथा 'दशैव भूतमात्रा अधिप्रज्ञं दश प्रज्ञामात्रा अधिभूतम्' इति परस्परसाकाङ्क्षत्वं पूर्ववाक्योक्तम्। अरनाभिदृष्टान्तवाक्ये तु न परस्परसाकाङ्क्षत्वं प्रदर्श्यते, 'भूतमात्राः प्रज्ञामात्रास्वर्पिताः' इत्युक्त्वा, प्रज्ञामात्रा भूतमात्रास्वर्पिता इति न ह्युक्तम्। तथा सति हि परस्परसाकाङ्क्षत्वे(त्वेन) दृष्टान्तता विवक्षिता स्यात्। अपि तु 'प्राणेऽर्पिताः' इत्येवोक्तम्। **प्राणश्च** परमात्मा; अनन्तरमेव 'स एष प्राण एव प्रज्ञात्माऽऽनन्दोऽजरोऽमृतः' इत्युक्तेः। अतो दृष्टान्तदार्ष्टान्तिकभावानुपपत्तिः। अतः प्रत्यभिज्ञानभञ्जकहेतुसद्भावात् "तपसा चीयते ब्रह्म", "तस्मादेतद्ब्रह्म" इति वाक्यद्वयस्थब्रह्मशब्दयोरिव पूर्वापरवाक्यस्थयोः प्रज्ञामात्राशब्दयोर्नैकार्थ्यम्। किञ्च द्वयोर्वाक्ययोर्मिथस्सन्निकृष्टत्वेऽप्यन्यतरस्य संभवन् मुख्यार्थः तयोरैकार्थ्यश्रद्धया न त्याज्यः; तयोरेव ब्रह्मशब्दयोस्तथा दर्शनात्। प्रज्ञाशब्दश्च इन्द्रियेष्वमुख्यः, जीवेषु तु मुख्यः; तेषां ज्ञानस्वरूपत्वात्। प्रज्ञाशब्दोऽपि तत्तदर्थविषयज्ञानपर इति चेत्—तर्हि दृष्टान्तविरोधः; शरीरगतानां भूतमात्राणां वैषयिकज्ञानैर्धार्यत्वाभावात्। एवमर्थविरोधादिभिर्भिन्नार्थत्वे सति **मात्राशब्दः** सङ्घातैकदेशाभिप्रायः। विशिष्टस्य ब्रह्मण एकदेशभूतानि हि चिदचित्तत्त्वानि॥

किञ्चास्मिन् प्रकरणे प्राणशब्दस्येव प्रज्ञाशब्दस्यापि बह्वर्थविषयप्रयोगदर्शनात् न एकार्थनियतत्वम्। अतश्च जीवविषयत्वं युक्तमाश्रयितुम्। विशेषतो जीवे प्रयुक्तत्वाच्च। प्राणशब्दस्तावत् मुख्यप्राणे प्रयुक्तः, "यावदस्मिञ्छरीरे प्राणो वसति तावदायुः" इति। तथेन्द्रियेषु "प्राणं प्राणन्तं सर्वे प्राणा अनु प्राणन्ति" इति। तथा परमात्मनि, "यत्रैतत्पुरुषः स्वप्नं न कथञ्चन पश्यति अथास्मिन् प्राण एवैकधा भवति" इति। तथा जीवेषु, 'एतस्मादात्मनः प्राणाः यथायतनं विप्रतिष्ठन्ते, प्राणेभ्यो देवाः, देवेभ्यो

**शब्देनाचेतनवस्तुजातमभिधाय प्रज्ञामात्राशब्देन तदाधारतया चेतनवर्गं चाभिधाय तस्याप्याधारतया प्रकृतमिन्द्रप्राणशब्दाभिधेयं निर्दिश्य तमेव, "आनन्दोऽजरोऽमृतः" इत्युपदिशति ।**

लोकाः" इति । न चात्र बहुवचनान्तः प्राणशब्दः पञ्चवृत्तिप्राण(वायु)परः ; तस्य सुषुप्तौ उपरत्यभावान्निष्क्रमणानुपपत्तेः । नापीन्द्रियपरः ; देवशब्देन पृथगुक्तत्वात् । न च देवशब्दः प्रकाशरूपज्ञानवाची ; लोकशब्देन तदुक्तेः ; अस्वारस्याच्च । न च लोकशब्दो लोकनीयविषयपरः ; देवेभ्यो लोका इत्यत्र विषयाणां ज्ञानतो निष्क्रमणाभावात् ॥ ज्ञानैर्ग्राह्या इत्यर्थ इति चेन्न ; पञ्चम्यर्थैकरूप्यभङ्गात् , अस्वारस्यात् , ग्राह्यपदाध्याहारप्रसङ्गाच्च । अतोऽस्मिन् वाक्ये बहुवचनान्तः प्राणशब्दो जीवपरः । प्राणसाहचर्याज्जीवे प्रयोगः । परमात्मनि तु प्राणशरीरकत्वात् । तथा प्रज्ञाशब्दश्च जीवे तावत् प्रयुक्तः 'प्राणोऽस्मि प्रज्ञात्मा' इति । प्रज्ञारूप आत्मा प्रज्ञात्मा । तथा "यो वै प्राणः सा प्रज्ञा, या प्राज्ञा स प्राणः । सह ह्येतावस्मिञ्छरीरे वसतः; सहोत्क्रामतः । तस्यैषैव सिद्धिरेतद्विज्ञानम् , यत्रैतत् पुरुषः स्वप्नं न कथञ्चन पश्यति अथास्मिन् प्राण एवैकधा भवति" इति च । न चायं प्रज्ञाशब्द उपरितनखण्डगतप्रज्ञाशब्दवत् मनोविषयः; 'सहोत्क्रामतः' इति श्रवणात्; 'तमुत्क्रामन्तं प्राणोऽनूत्क्रामति' इति श्रुत्यन्तरैकार्थ्याच्च । तथा उत्तरत्र वागादीन्द्रियाणां जीवोपकरणत्वप्रपञ्चनेन पृथङ्निर्देशाच्चायं प्रज्ञाशब्दो जीवपरः । 'अस्यै प्रज्ञायै सर्वाणि भूतान्येकं भवन्ति' इत्युपक्रम्य 'वागेवास्या एकमङ्गमदूदुहत् घ्राण एवास्या एकमङ्गमदूदुहत्' इत्येवमादिपर्यायैः पादपर्यन्तानां करणानां कृत्यमुक्त्वा 'प्रज्ञैवास्या एकमङ्गमदूदुहत्' इत्युक्तम् । अत्र हि अस्यै इति चतुर्थ्यन्तं पदं प्रज्ञाशब्दनिर्दिष्टजीवपरम् । प्रथमान्तप्रज्ञाशब्दो हि मनोवाची । 'नेत्थां विजिज्ञासीत; एतारं विद्यात्', 'न मनो विजिज्ञासीत; मन्तारं विद्यात्' इति स्थानप्रमाणात् ॥ तस्मात् चतुर्थ्यन्तः प्रज्ञाशब्दः प्रथमान्तप्रज्ञाशब्दवाच्यमनःकरणकजीवविषयः । अतः सहोत्क्रमणपृथगुपदेशाभ्याम् 'यो वै प्राणस्सा प्रज्ञा' इति प्रज्ञाशब्दो जीवविषयः । उत्क्रमणश्रुतिप्रत्यभिज्ञापकत्वात् वागादीनामुपकरणित्वाच्च बुद्धिपरत्वमप्यनुपपन्नम् । अतो जीवविषयत्वं दृष्टम् । तथा मनसि च प्रज्ञाशब्दः प्रयुज्यते, "न हि प्रज्ञापेता वाक् नाम किञ्चन प्रज्ञापयेत् । अन्यत्र मनो मेऽभूदिति नाहमेतन्नाम प्राज्ञासिषम्" इति । तथा इन्द्रियेषु च, "दश प्रज्ञामात्राः" इति । अतः पूर्वं प्रज्ञाशब्दनिर्दिष्टो जीवः इह प्रज्ञामात्राशब्दोक्तः । जात्यभिप्रायेण एकवचननिर्दिष्टस्य व्यक्त्यभिप्रायेण बहुवचननिर्देश उपपद्यते । यथा, "सता सोम्य तदा संपन्नो भवति", "सति संपद्य न विदुः सति संपत्स्यामहे" इति च ।

यद्वा मा भूत् प्रज्ञामात्राशब्दस्यार्थवैरूप्याश्रयणम् ; अरनाभिदृष्टान्तवाक्ये प्रज्ञामात्राशब्दस्य भूतेन्द्रियाभिमानिदेवतारूपदशविधचेतनपरत्वं स्यात्—तदानीमपि तदाधारतय चेतनाधारत्वं परस्यार्थसिद्धम् । एवमेतत्प्रकरणपर्यालोचनासुलभमुपपत्तिजातं सर्वं भाष्य एव व्यक्तीभविष्यति ।

**प्रज्ञामात्राशब्देन तदाधारतयेति** । न हीन्द्रियाणां पृथिव्यादिभूताधारत्वं युक्तमिति भावः । **चेतनवर्गमिति** । प्राकरणिकप्रज्ञाशब्दैकवचनं जात्यभिप्रायमिति भावः । **तस्याप्याधारतया प्रकृतमिन्द्रप्राणशब्दाभिधेयं निर्दिश्येति** । 'ता वा एताः' इत्यादिपूर्ववाक्योक्ते परस्परसाकाङ्क्षत्वे दृष्टान्तत्वं न घटते; प्रज्ञामात्राणामाधारान्तरकथनादिति भावः । तस्य च परमात्मत्वं कथमित्यत्राह **तमेवा-**

तदेतच्चेतनाचेतनात्मककृत्स्नवस्त्वाधारत्वं जीवादर्थान्तरभूतेऽस्मिन्—परमात्मन्येवोपपद्यते इत्यर्थः॥

अथवा, अध्यात्मसंबन्धभूमा ह्यस्मिन्—परमात्मासाधारणधर्मसंबन्धोऽध्यात्मसंबन्धः । तस्य भूमा बहुत्वं हि अस्मिन्[1]—प्रकरणे विद्यते । तथा हि—प्रथमम्, 'त्वमेव मे वरं वृणीष्व यं त्वं मनुष्याय हिततमं मन्यसे' इति, 'मामुपास्स्व' इति च परमात्मासाधारणमोक्षसाधनोपासनकर्मत्वं प्राणशब्दनिर्दिष्टस्येन्द्रस्य प्रतीयते । तथा, 'एष एव साधु कर्म कारयति तम्, यमेभ्यो लोकेभ्य उन्निनीषति । एष एवासाधु कर्म कारयति तम्, यमधो निनीषति' इति सर्वस्य कर्मणः कारयितृत्वं च परमात्मधर्मः । तथा 'तद्यथा रथस्यारेषु नेमिरर्पिता नाभावरा अर्पिताः, एवमेवैता भूतमात्राः प्रज्ञामात्रास्वर्पिताः प्रज्ञामात्राः प्राणेऽर्पिताः' इति सर्वाधारत्वं च तस्यैव धर्मः । तथा 'स एष प्राण एव प्रज्ञात्माऽऽनन्दोऽजरोऽमृतः' इत्येतेऽपि परमात्मन एव धर्माः । 'एष लोकाधिपतिरेष सर्वेशः' इति च परमात्मन्येव संभवति । तदेवमध्यात्मसंबन्धभूम्नोऽत्र विद्यमानत्वात् परमात्मैवात्रेन्द्रप्राणशब्दनिर्दिष्टः ॥ ३० ॥

---

नन्दोऽजर इति । एवमर्थविरोध-दृष्टान्तदार्ष्टान्तिकभाववैघट्य-मुख्यत्व-प्राकरणिकप्रयोगसाधारण्यैरनुगृहीतस्य श्रुतिवाक्यस्यार्थमुपन्यस्य सूत्रार्थमुपसंहरति **तदेत**दिति ।

एवं प्रथमयोजनायां **तद्यथा रथस्यारे**ष्वित्यादिवाक्यमेकमेव विषयः स्यात् । स एष प्राण एवेति एतद्वाक्योदाहरणं वाक्यान्तराण्यपि परब्रह्मपराणि सन्तीति प्रदर्शनार्थम् । तेन उपक्रमस्वारस्यादपि समुदायस्वारस्यं प्रबलमिति फलितम् ॥ एवमवयविस्वारस्यप्राबल्यस्यार्थसिद्धत्वादपि कण्ठोक्तत्वं युक्तमिति मुखान्तरेण योजयति **अथवे**ति । पूर्वयोजनायाम् **अध्यात्म**शब्दस्य आत्मनीत्यर्थः । [1]अस्यां तु आत्मनि वर्तमानपरोऽध्यात्मशब्दः । उपसंहारवाक्यमुपक्रमबाधितमिति पूर्वपक्षिणोक्तम् । तत्रेदमुत्तरमुक्तं भवति—उपक्रमोपसंहारौ वाक्यावयवौ । तयोरवयवभूतयोः परस्परविरोधे उपक्रमप्राबल्यम् । न त्ववयविविरोधे । अत्र त्वनेकावान्तरवाक्यैः पर्यालोचितैः प्रतिपन्नस्य महावाक्यार्थस्य अवयविनो विरोधे अवयवभूतोपक्रमो दुर्बलः, यथा गङ्गायां घोषः प्रतिवसतीत्यादिषु घोषः प्रतिवसतीति पदाभ्यां प्रतिपन्नवाक्यार्थमुपक्रमस्थगङ्गापदं न बाधते, अपि तु स्वयं तदनुगुणार्थं भवति—तद्वदिति । तदेतदभिप्रयन् परमात्मासाधारणधर्मभूयस्त्वं दर्शयति **तथाही**ति । **हिततमं मन्यसे** इति वाक्यं त्वाष्ट्रवधादेरप्युपक्रमगतम् । उपक्रमोपक्रमस्यापि महावाक्यान्तर्भावात् तदुक्तिः ; न तु तावन्मात्रस्य साधकत्वाभिप्रायेण । **लोकाधिपतिः** लोकस्वामी । **सर्वेशः**—सर्वनियन्ता ॥ ननु 'पा रक्षणे' इति धातोः पतिशब्दः; तत् कथमत्र शेषिवाचित्वम् ॥ उच्यते । न हि सर्वत्रावयवशक्तिरेव, रूढिशक्तिरपि ह्यस्ति । अन्यथा 'गमेर्डोः' इति व्युत्पत्त्या गोशब्दस्य सर्वजङ्गमवाचित्वप्रसङ्गात् ; स्थिताया गोरवाचकत्वप्रसङ्गाच्च । अतः शेषिणि पतिशब्दो रूढः । अन्यथा "वृद्धौ च मातापितरौ साध्वी भार्या सुतः शिशुः । अप्यकार्यशतं कृत्वा भर्तव्या मनुरब्रवीत् ॥" इति न्यायेन पितुः संरक्षके पुत्रेऽपि पितरं प्रति पतिशब्दप्रयोगप्रसङ्गादिति । सूत्रार्थं निगमयति **तदेव**मिति ।

**अध्यात्मसंबन्धभूमा ह्यस्मिन्** इति सूत्रांशः **परै**रेवं व्याख्यातः—**अध्यात्मसंबन्धः**—प्रत्यगात्मसम्बन्धः ; तस्य **भूमा** बाहुल्यमुपलभ्यते **अस्मिन्** अध्याये ; आयुषः प्रभुत्वमिन्द्रियाश्रयत्वं

---

1 द्वितीययोजनायां सौत्रमस्मिन्नितिपदं प्रकरणे इत्यर्थकमिति विशेषोऽपि द्रष्टव्यः ।

कथं तर्हि प्रज्ञातजीवभावस्येन्द्रस्य स्वात्मन उपास्यत्वोपदेशः सङ्गच्छते ? तत्राह—

**शास्त्रदृष्ट्या तूपदेशो वामदेववत् ॥ १-१-३१ ॥**

प्रज्ञातजीवभावेनेन्द्रेण, "मामेव विजानीहि", 'मामुपास्स्व' इति उपास्यस्य ब्रह्मणः स्वात्मत्वेनोपदेशोऽयं न प्रमाणान्तरप्राप्तस्वात्मावलोकनकृतः, अपि तु शास्त्रेण स्वात्मदृष्टिकृतः। एतदुक्तं

---

शरीरोत्थापकत्वं विषयेन्द्रियादिविज्ञानप्रतिक्षेपेण प्रत्यगात्मवेदनं चोपदिश्यत इति। अपरैश्च,— प्रज्ञादेहेन्द्रियमनःप्राणात्मनां संबन्धोऽध्यात्मसंबन्धः ; स भूयानिति व्याख्यातम्। तदयुक्तम् ; आयुरधिपतित्वादीनां मनःप्राणसंबन्धित्वादीनां च परमात्मसाधकत्वाभावात् ॥ इन्द्रसंज्ञदेवताविशेषे तात्पर्यनिषेधपरं सूत्रमिति चेन्न ; इन्द्रस्य शरीरेऽपि प्राणेन्द्रियमनःप्रभृतीनां विद्यमानतया तत्प्रतिक्षेपासामर्थ्यात्। 'अस्मिञ्छरीरे' इति निर्देशो हीन्द्रशरीरेऽपि संभवति, "सदेव सोम्येदम्" इतीदंशब्दवत् सर्वनामपदस्य साधारणत्वात् ॥ प्रत्यगर्थविषयस्योपदेशस्य पराचीनदेवताविषयत्वमयुक्तमिति चेन्न, इन्द्रस्यापि स्वात्मानं प्रति अहमिति प्रत्यक्तयाऽवभासात्। 'प्राणोऽस्मि', 'मामुपास्स्व' इति हि तद्वाक्यम् ॥ इन्द्रमात्रस्य प्राधान्यतः प्रतिपाद्यता प्रतिक्षिप्यत इति चेन्न ; प्राणेन्द्रियमनआदिसंबन्धानां तत्प्रतिक्षेपासामर्थ्यात्। सौत्रवचनव्यक्त्यनुगुणता च न स्यात्। प्राणः परमात्मेति प्रतिज्ञातमाद्यसूत्रे। द्वितीयसूत्रस्थेन नञा परमात्मत्वमेव निषेध्यम्। न परमात्मेति पूर्वपक्षिते, तत्प्रतिसमाधानपरेण, परमात्मैव प्राण इति प्रतिज्ञाय समर्थनीयम्। न परमात्मेति वदन्तं प्रति, नेन्द्र इत्युक्ते कः प्रतिक्षेपः ; न घटोऽस्तीत्युक्ते न पट इतिवत् तयोर्विरोधाभावात्। परमात्मत्वे प्रतिज्ञाते मनःप्राणसंबन्धादयस्तु न परमात्मत्वसाधनसमर्थाः ॥ ननु 'नायं परमात्मा, अपि त्विन्द्रः' इति प्रतिज्ञाते सति, नेन्द्र इति प्रतिविधानं युक्तमिति चेन्न ; त्वदुक्तयुक्तेरिन्द्रप्रतिक्षेपकत्वाभावात्। अस्तु वा तत्प्रतिक्षेपः ; ततः किम् ॥ स तु परमसाध्यस्य परमात्मपरत्वस्योपयोगीति चेन्न ; परमसाध्यस्याव्यवहितसाधकहेतूपस्थापकत्वे संभवति परम्परया साधकार्थपरत्वेन निर्वाहानुपपत्तेः ॥ ३० ॥

उत्तरसूत्रं शङ्कयाऽवतारयति **कथं तर्हीति**। **प्रज्ञातजीवभावस्येति**। [1]"इदि परमैश्वर्ये" इत्यादिप्रकृतिप्रत्ययविभागेन परमात्मपरत्वमिन्द्रादिशब्दानामयुक्तम् ; त्वाष्ट्रवधादिलिङ्गनिर्वाहानुपपत्तेः। तत् कथमिन्द्रशब्देन परमात्मनिर्देश इति भावः। पूर्वं परमात्मपरत्वसाधकहेतुरुक्तः। पूर्वपक्षयुक्तेः कः परिहार इत्यपेक्षायां सूत्रावतार इत्यर्थः ॥ **शास्त्रदृष्ट्या तूपदेशो वामदेववत्** ॥ कीदृश उपदेश इत्यत्राह **प्रज्ञातेति**। **शास्त्रदृष्टिशब्दस्य** व्यवच्छेद्यमाह **न प्रमाणान्तरेति**। शास्त्रस्य दृष्टिः, शास्त्ररूपा दृष्टिरिति च (वा) प्रतीतिः स्यादिति तद्व्यावृत्त्यर्थमाह **शास्त्रेणेति**। कस्य दृष्टिरित्यपेक्षायां **स्वात्मशब्दः**। स्वानुभवप्रत्यक्षेण आत्मावलोकने जीवमात्रप्रकाशः; शास्त्रेण तन्मूलयोगेन चात्मानुभवे परमात्मपर्यन्ततया प्रकाश इति भावः। न हि प्रमाणविशेषेण अन्यत् प्रमेयमन्यद्भवति; तच्च शास्त्रं किमित्यत्राह **एतदुक्तमिति**। जीववाचिपदानां परमात्मसामानाधिकरण्योपपादिकाः श्रुतीरुदाजिहीर्षुर्नामरूपव्याकरणश्रुतिमाह

---

1 इन्द्रस्य प्रियंधामोपजगामेत्यत्र आदावेव इन्द्रशब्देन विष्णुः उपेन्द्रो वा योगव्युत्पत्त्या प्रस्तुतमिति सिद्धान्ती न वक्तुमर्हतीत्यर्थः।

भवति—'अनेन जीवेनात्मनाऽनुप्रविश्य नामरूपे व्याकरवाणि', 'ऐतदात्म्यमिदं सर्वम्', 'अन्तः प्रविष्टः शास्ता जनानां सर्वात्मा' 'य आत्मनि तिष्ठन् आत्मनोऽन्तरो यमात्मा न वेद यस्यात्मा शरीरं य आत्मानमन्तरो यमयति'. 'एष सर्वभूतान्तरात्मा अपहतपाप्मा दिव्यो देव एको नारायणः' इत्येवमादिना शास्त्रेण जीवात्मशरीरकं परमात्मानमवगम्य, जीवात्मवाचिनामहन्त्व-मादिशब्दानामपि परमात्मन्येव पर्यवसानं ज्ञात्वा, 'मामेव विजानीहि', 'मामुपास्स्व' इति स्वात्म-शरीरकं परमात्मानमेवोपास्यत्वेनोपदिदेशेति । वामदेववत्—यथा वामदेवः परस्य ब्रह्मणः सर्वान्तरात्मत्वं सर्वस्य तच्छरीरत्वं शरीरवाचिनां शब्दानां च शरीरिणि पर्यवसानं पश्यन्, 'अहम्' इति स्वात्मशरीरकं परं ब्रह्म निर्दिश्य तत्सामानाधिकरण्येन मनुसूर्यादीन् व्यपदिशति, "तद्धै-तत् पश्यन् ऋषिर्वामदेवः प्रतिपेदे अहं मनुरभवं सूर्यश्च", "अहं कक्षीवान् ऋषिरस्मि विप्रः"[1] इत्यादिना । यथा च प्रह्लादः, "सर्वगत्वादनन्तस्य स एवाहमवस्थितः । मत्तः सर्वमहं सर्वं मयि सर्वं सनातने ॥" इत्यादि वदति ॥ ३१ ॥

अस्मिन् प्रकरणे जीववाचिभिः शब्दैरचिद्विशेषाभिधायिभिश्चोपास्यभूतस्य परस्य ब्रह्मणो-ऽभिधाने कारणं चोद्यपूर्वकमाह—

**जीवमुख्यप्राणलिङ्गान्नेति चेन्नोपासात्रैविध्यादाश्रितत्वादिह तद्योगात् ॥ १-१-३२ ॥**

"न वाचं विजिज्ञासीत; वक्तारं विद्यात्", "त्रिशीर्षाणं त्वाष्ट्रमहनम्; अरुन्मुखान् यतीन् सालावृकेभ्यः प्रायच्छम्" इत्यादिजीवलिङ्गात्, "यावद्ध्यस्मिन् शरीरे प्राणो वसति तावदायुः", "अथ खलु प्राण एव प्रज्ञात्मेदं शरीरं परिगृह्योत्थापयति" इति मुख्यप्राणलिङ्गाच्च नाध्यात्म-संबन्धभूमेति चेत्—न; उपासात्रैविध्यात् हेतोः । उपासनात्रैविध्यमुदेष्टुं तत्तच्छब्देनाभिधानम्—निखिलकारणभूतस्य ब्रह्मणः स्वरूपेणा(स्वरूपा?)नुसन्धानम् भोक्तृवर्गशरीरकत्वानुसन्धानम् भोग्य-

---

**अनेनेति** । जीवेऽप्यनुप्रवेशं दर्शयितुमाह **ऐतदात्म्यमिति** । तदेव स्पष्टयति **अन्तःप्रविष्ट इति** । शरीरत्वतल्लक्षणे दर्शयति **य आत्मनीति** । **पर्यवसानं ज्ञात्वेति** नामरूपव्याकरणश्रुतिलब्धार्थः उक्तः । **उपदिदेशेत्यन्तेन शास्त्रदृष्ट्या तूपदेश** इत्यंशो व्याख्यातः । **वामदेववदित्यंशं** व्याचष्टे **यथेति** । **शरीरिणि पर्यवसानं पश्यन्नित्यन्तेन तद्धैतत्पश्यन्** इत्येतत् व्याख्यातम् । उक्तार्थविशदीकरणायाह **यथा च प्रह्लाद इति** ॥ (३१)

उत्तरसूत्रमवतारयति **अस्मिन्निति** । **जीववाचिभिरित्यादि** । त्वाष्ट्रवधादिलिङ्गप्रतिपादनकारणमपि कथनीयमित्यभिप्रेतम्; उपरितनग्रन्थानुगुण्यात् । **कारणं** प्रयोजनरूपम् । **उपदेष्टुमिति** हि वक्ष्यते । **चोद्यपूर्वकमाह** । न तूक्तार्थप्रतिक्षेपार्थकं चोद्यम् । विशेषणांशे तात्पर्यं प्रतीयत इति तस्य प्रयोजनमेव प्रष्टव्यम्; तत् चोद्यरूपेण पृष्टवान् इत्यर्थः ॥

**जीवमुख्यप्राणलिङ्गान्नेति चेन्नोपासात्रैविध्यादाश्रितत्वादिह तद्योगात् ॥ न वाचं विजिज्ञासीत वक्तारं विद्यादिति** । न केवलं मद्वचनमेव विजानीहि, वक्तारं मां च विजानीहीत्यर्थः । **मुख्यप्राणः**—पञ्चवृत्तिः । **मुख्यशब्दः** इन्द्रियादिव्यावृत्त्यर्थः । नञो निषेध्याकाङ्क्षायामनतिविप्रकृष्टं सौत्रपदमध्याहृतम् **अध्यात्मेति** । हेतुत्वं विवृणोति **उपासनेति** । **उपदेष्टुमित्यनेन** प्रयोजनतया हेतुत्वं स्पष्टम् । त्रैविध्यं विवृणोति **निखिलेति** । **स्वरूपेणानुसन्धानम्**—अद्वारकगुणविशिष्टानु-

---

1 एतद्वाक्यविवरणं भाष्यार्थदर्पणे ।

**भोगोपकरणशरीरकत्वानुसन्धानञ्चेति त्रिविधमनुसंधानमुपदेष्टुमित्यर्थः। तदिदं त्रिविधं ब्रह्मानुसन्धानं प्रकरणान्तरेष्वप्याश्रितम् 'सत्यं ज्ञानमनन्तं ब्रह्म', 'आनन्दो ब्रह्म' इत्यादिषु स्वरूपा(पेणा?)नुसन्धानम्; "तत्सृष्ट्वा तदेवानुप्राविशत्। तदनुप्रविश्य सच्च त्यच्चाभवत्, निरुक्तञ्चानिरुक्तञ्च निलयनं चानिलयनञ्च, विज्ञानञ्चाविज्ञानञ्च, सत्यं चानृतञ्च सत्यमभवत्" इत्यादिषु भोक्तृसन्धानम्[1]।**

त्रिविधानुसन्धानस्य प्रमाणमूलत्वे सिद्धे ह्ययं निर्वाह उपपन्नः स्यादिति शङ्कायाम्, आश्रितत्वादित्येतद्व्याचष्टे **तदिदमिति**। कुत्रेत्यपेक्षायां **प्रकरणान्तरेष्वपी**त्युक्तम्। **आश्रितम्**—प्रतिपन्नमित्यर्थः। **तत्सृष्ट्वे**त्यादि। 'सत्यं ज्ञानमनन्तम्' इति देशकालवस्तुपरिच्छेदरहितस्य ब्रह्मणः, 'ब्रह्मविदाप्नोति' इति वेद्यत्वविधानात् प्रकरणस्य वेद्यब्रह्मप्रतिपादनपरत्वात्, "स य एवंवित्" इति निगमनवाक्येऽपि पूर्वोक्तसमस्तप्रकारविशिष्टवेदनप्रतीतेश्च चिदचिच्छरीरकत्वानुसन्धानमत्र विवक्षितमिति भाष्याभिप्रायः॥

ननु 'स यश्चायं पुरुषे यश्चासावादित्ये स एकः' इत्युक्त्वाऽनन्तरम्, 'स य एवंवित्' इति वाक्येन जीवान्तर्यामिण आदित्यान्तर्वर्तिनश्च उपासनमुच्यत इति चेन्न; स्थानभेदेन विद्याभेदप्रसङ्गात्। स चानुपपन्नः; 'एतमानन्दमयमात्मानमुपसङ्क्रामति' इत्यानन्दमयप्राप्तिफलश्रवणेन 'ब्रह्मविदाप्नोति परम्', 'तस्माद्वा एतस्मादात्मनः' इत्यादिना प्रतिपादितानन्दमयविषयविद्यैकत्वावगमात् प्रकरणस्य; संभवत्येकवाक्यत्वे वाक्यभेदानुपपत्तेश्च॥ **स यश्चाय**मित्यादिवाक्ये किमुच्यत इति चेत्—त्रिविधानुसंधानरूपैकविद्याया मोक्षफलकत्वेन विवक्षितत्वे सति तत्र स्वरूपेणावस्थितस्य अनुसंधाने ज्ञानादिगुणवत् दिव्य विग्रहयोगस्याप्यनुसंधेयतासिद्ध्यर्थं पुण्डरीकाक्षमप्राकृतवपुरतिदिश्यते। तत्र 'स यश्चायं पुरुषे' इति विज्ञानमयाऽन्तरस्याऽऽनन्दमयस्यानुवादः, 'यश्चासावादित्ये' इति विग्रहातिदेशः। किञ्च आनन्दमयप्रतिपादनानन्तरं ब्रह्मविदाप्नोतीत्युपक्रमाभिहितप्राप्तिविशदीकारार्थम् 'अथातोऽनु प्रश्नाः' इति प्रश्ना उपक्षिप्ताः। पूर्वप्रतिपादनस्य बुभुत्साहेतुत्वमतशब्देनोच्यते **उता विद्वानिति**। **उत विद्वानिति** पदम्। "निपातस्य च" इति छान्दसो दीर्घः; अथ सपत्नानितिवत्। अविद्वानिति पदे सति ह्याद्युदात्तत्वं स्यात्; "तत्पुरुषे तुल्यार्थ...." इत्यादिस्मरणात्; 'अविद्वान् प्रतिगृह्णाति' इतिवत्। अन्तोदात्तश्चेदं पदम्। तस्मात् विद्वानिति पदम्। **कश्चन**—अविप्रकृष्टहृदयादिस्थानस्थमनवच्छिन्नञ्च ब्रह्मोपासीनो विद्वान् किमतः प्रेत्य **अमुं लोकं**—'परमे व्योमन्' इत्युक्तं लोकं गच्छतीत्येकः प्रश्नः। उत गत्यनपेक्षमिहैव ब्रह्म प्राप्नोतीत्यर्थसिद्धः प्रश्नः। **आहो विद्वानिति**। **समश्नुता** इति भोक्तृत्वं विवक्षितम्। **कश्चित्**—अहङ्ग्रहेणोपासीनोऽपि विद्वान् अमुं लोकं गत्वा किं समश्नुते? भोग्यभूतं ब्रह्मानुभवतीत्येकः प्रश्नः। उत ब्रह्मस्वरूपेणैकीभवतीत्यर्थसिद्धः प्रश्नः। एवं शास्त्रवैविध्यमूलाः गतिविशेषस्वरूपभेदभावाभावविषयाः प्रश्नाः बहुवचनविवक्षिताः। एतान् प्रतिवक्तुं जगत्कारणत्वौपयिकगुणविशिष्टस्यैव विलक्षणस्य ब्रह्मणः प्राप्यत्वादिज्ञापनाय 'सोऽकामयत' इत्यादिना जगत्कारणत्वादिकं निरतिशयानन्दपर्यन्तं महिमानमुक्त्वा, 'स यश्चायम्' इत्यादि वाक्यं वदति। संनिकृष्टहृदयस्थं वा

1 स्वरूपनिरूपकधर्ममात्र-चिदचिद्गुणग्रहणव्यावृत्त्यर्थमाह अद्वारकगुणविशिष्टानुसंधानमिति। दिव्यमङ्गलविग्रहयोगमपि स्वरूपान्तर्भूतं वक्ष्यति।

**शरीरतया भोग्यभोगोपकरणशरीरतया चानुसन्धानम् । इहापि प्रकरणे तत् त्रिविधमनुसंधानं युज्यत एवेत्यर्थः ॥ एतदुक्तं भवति – यत्र हिरण्यगर्भादिजीवविशेषाणां प्रकृत्याद्यचेतनविशेषाणाञ्च परमात्मासाधारणधर्मयोगः, तदभिधायिनां शब्दानां परमात्मवाचिशब्दैः सामानाधिकरण्यं वा दृश्यते ; तत्र परमात्मनः तत्तच्चिदचिद्विशेषान्तरात्मत्वानुसन्धानं प्रतिपिपादयिषितमिति ॥ अतोऽत्रेन्द्रप्राणशब्दनिर्दिष्टो जीवादर्थान्तरभूतः परमात्मैवेति सिद्धम् ॥ श्रीः**

**इति श्रीभगवद्रामानुजविरचिते शारीरकमीमांसाभाष्ये**

**प्रथमस्याध्यायस्य प्रथमः पादः ॥ १-१-१ ॥**

---o---o---o---

विप्रकृष्टरविमण्डलादिस्थानस्थं वा, पूर्वोक्तं सत्यत्वादिलक्षणमानन्दादिगुणकं वा ब्रह्मोपासीनः सर्वोऽपि विद्वान् अस्माल्लोकात् प्रेत्य अन्नमयादिसमष्टिव्यष्टिविभूतिकं निरतिशयानन्दं परमात्मानं भोग्यभूतं भोक्ता सन्ननुभवतीति प्रश्नस्योत्तरमुक्तम् । अतः सर्वेषां विद्याविशेषनिष्ठानामर्चिरादिगतिमत्त्वं भोक्तृ-भोग्यभावेनावस्थानञ्च प्रतिपादयितुं संनिकृष्टविप्रकृष्टस्थानविशेषोपलक्षणार्थम्, 'स यश्चायम्' इत्यादि उक्तम् । तस्मादादित्यान्तर्वर्तितया उपासनमानन्दवल्ल्यां न विधित्सितम् । अत उक्तलक्षणत्रिविधोपासनमेवात्र विवक्षितम् । एवम् "भोक्ता भोग्यं प्रेरितारञ्च मत्वा सर्वं प्रोक्तं त्रिविधं ब्रह्ममेतत्" इत्यादीनि सदृशानि श्रुत्यन्तराणि च विवक्षितानि ; त्रिविधोपासनस्य स्फुटतरत्वात् । भोक्तृभोग्ययोरीश्वरविधात्वं कथमित्य-पेक्षायां चिदचिदनुप्रवेशादीश्वरस्य तत्प्रकारित्वमिति त्रिविधोपासनपरश्रुत्यन्तरार्थविशदीकारहेतुत्वादानन्द-वल्लीवाक्यमिहोदाहृतम् । अन्यत्स्वभिप्रेतम् ।

**इह तद्योगादित्येतद्व्याचष्टे इहापीति ।** 'आनन्दोऽजरोऽमृतः' इति स्वेन रूपेणानुसंधानम्, 'प्राणोऽस्मीत्यचिद्विशिष्टानुसंधानम्, 'मामुपास्स्व' इति चिद्विशिष्टानुसंधानमिति त्रिविधानुसंधान-मिहोपपद्यत इत्यर्थः । 'त्रिविधानुसंधाने कर्तव्येऽप्यत्र चिद्विशेषाचिद्विशेषविशिष्टत्वोक्तिः कथम्, सामान्येन चिदचिद्विशिष्टानुसंधानं हि प्रकरणान्तरोक्तम्' इत्यपेक्षां प्रशमयन्, अस्य न्यायस्य प्रतर्दनविद्या-मात्रविषयत्वं च निवारयन् विशिष्टोपासनपरत्वचिह्नं च दर्शयति **एतदुक्तंभवतीति । यत्रेति ।** अयं न्यायो न प्रतर्दनविद्यामात्रविषयः, अपि त्वीदृशसर्वप्रकरणविषय इति भावः ! सामान्येन चिदचिद्विशिष्टोपासनं हि विहितत्वात् स्वीक्रियते विधेरवैयर्थ्यार्थम् ; तथा चिदचिद्विशेषविशिष्टोपासनं विदितं चेत्, तत्र तत्र चि(तत्र तत्तचि ?) दचिद्विशेषान्तर्यामित्वमनुसंधेयमित्यभिप्रायेणाह **हिरण्यगर्भादीति । हिरण्य-गर्भादिजीवविशेषाणामिति** पदेन **परमात्मशब्देन** च "परमात्मा व्यवस्थितः । स ब्रह्मा स शिवः सेन्द्रः" इति श्रुतिः स्मार्यते । अनन्यपरेण नारायणानुवाकेन सर्वविद्यासूपास्यो नारायण एवेति निर्णीतत्वादि-न्द्राद्युपासनेऽपि तदन्तर्यामी नारायण एवोपास्य इति भावः । पाशुपताधिकरणे तथाऽनुवदिष्यमाणत्वात् । परमात्मपर्यन्तत्वविवक्षाज्ञापकं द्विविधं प्रदर्शयति **परमात्मासाधारणेति ।** परमात्मासाधारणधर्मयोगात् तद्वाचिशब्दसामानाधिकरण्याच्च विशिष्टोपासनपरत्वमवगम्यत इत्यर्थः । अधिकरणार्थमुपसंहरति **अत इति ॥**

अत्र कैश्चिदेवं वर्णितम्—प्राणव्यापारस्यापि परमात्मायत्तत्वात् तत्संकीर्तनम् । जीवसङ्कीर्तनं तु तस्यौपाधिकभेदप्रतिक्षेपेण परब्रह्मरूपताज्ञापनार्थम् । अन्यथा त्रिविधमुपासनं प्रसज्येत । ततश्च

वाक्यभेदः स्यादिति ॥ तदयुक्तम् ; 'नित्योपलब्ध्यनुपलब्धिप्रसङ्गः' 'अपीतौ तद्वत्प्रसङ्गात्' इतिवत् प्रसङ्गशब्दस्या,,तत्वात् वाक्यभेदाभावाच्च। एकवाक्येनैव हि विधीयते, 'तं मामायुरमृतमित्युपास्स्व' इति। अत्र मामिति जीवविशिष्टतोक्ता ; आयुरिति प्राणविशिष्टता—'आयुः प्राणः' इति ह्यनन्तरवाक्यम् ; अमृतमिति स्वेन रूपेणावस्थितिः। अत एवंविधं परमात्मानमुपास्स्वेकवाक्यत्वम्। उपासात्रैविध्यविधानस्य वृत्तिकाराभिमतत्वात् तदनतिक्रमाय परैरेवं त्रिविधोपासनपरत्वेन योजनान्तरं कृतं तत्र—ज्ञानक्रियाशक्तिद्वयाश्रयबुद्धिप्राणरूपोपाधिधर्मेण स्वधर्मेण च त्रिविधं ब्रह्मोपास्यमिति। तदयुक्तम् ; जीवेश्वरभेदस्यान्तःकरण(णाविद्यादि ?)रूपोपाध्यवच्छेदकल्पितत्वाभावात् ; "यस्यात्मा शरीरम्' 'मनोमयः प्राणशरीरः" इति जीवप्राणयोः परमात्मानं प्रति शरीरतया प्रकारत्वस्य श्रुतत्वेन प्रकारान्तरेण त्रैविध्यकल्पनायोगाच्च ॥

अन्ये त्वेवमुपासात्रैविध्येन वाक्यैकत्वमाहुः—प्रज्ञाशरीरो जीवशरीरः प्राणशरीरश्च परमात्मा उपास्यः। तत्र प्रज्ञाशरीरो मनोमयः। जीवशरीरो वाङ्मयः; वाक्शब्दः शब्दपरिणामशक्तियोगात् परमाकाशविषयः; अतो वाङ्मय आकाशशरीरः। आकाशशरीरत्वं च जीवशरीरत्वपर्यन्तम्, "तस्यान्ते सुषिरं सूक्ष्मम्' 'तस्य मध्ये महानग्निः" इति हृदयाकाशमध्ये अग्निशब्देन जाठराग्निपरमात्म(?)ज्वालया संसृष्टं जीवमभिधाय, 'तस्याश्शिखाया मध्ये परमात्मा व्यवस्थितः" इत्याम्नानादिति ॥ तदप्यनुपपन्नम् ; मनोमयादिव्यूहानाम् अप्रामाणिकत्वस्य पूर्वमेव दर्शितत्वात्। किञ्च अस्मिन् प्रकरणे प्रज्ञाशब्दस्य सहोत्क्रमणपृथग्व्यवहाराभ्यां स्थानप्रमाणेन च जीव-प्रसिद्धमनोविषयत्वोपपादनेन ईश्वरप्रज्ञाशक्तिवाचित्वाभावात् ; प्राणशब्दस्य, घटशब्दस्योदकाहरणशक्तिवाचित्वाभाववत्, क्रियाशक्तिवाचित्वाभावाच्च। अतः प्रज्ञाप्राणशब्दौ न मनोमयप्राणमयवाचकौ। यदि प्रसिद्धमनोवाक्प्राणा एतत्कार्यभूताः विवक्षिताः, तर्ह्यस्मिन् प्रकरणे चक्षुःश्रोत्रादीनामपि प्रकृतत्वात् तेषाञ्च परमात्ममयत्वादुपासात्रैविध्यं विरुध्यते। आकाशशरीरत्वं जीवशरीरत्वपर्यन्तमित्यप्ययुक्तम् ; 'तस्य मध्ये महानग्निः' इत्यग्निशब्दस्य जीववाचित्वाभावात्। "तत्र यः संश्रितो नित्यं स्थाण्यामग्निरिवार्पितः। आत्मानं तं विजानीयात्" इति स्मृतिवचनं तु न जीवस्य श्रुतावग्निशब्दवाच्यत्वे प्रमाणम् ; किंतु स्थानस्थानिनोर्वैलक्षण्ये दृष्टान्तमात्रसमर्पकम्। वाङ्मयस्य जीवशरीरकत्वं भवत्प्रक्रियया विरुद्धञ्च ; प्राणमयस्यान्तर्यामित्वाभ्युपगमात्। अन्तर्यामिणो जीवशरीरकत्वश्रवणाच्च। 'यस्याऽऽत्मा शरीरम्', 'स त आत्माऽन्तर्याम्यमृतः' इति हि श्रूयते। तमोधिष्ठातृतयाऽभ्युपगतस्य वाङ्मयस्य जीवशरीरकत्वं श्रुतिविरुद्धञ्च 'यः पृथिवीमन्तरे संचरन् यस्य पृथिवी शरीरम्' इत्यारभ्य 'एष सर्वभूतान्तरात्माऽपहतपाप्मा दिव्यो देव एको नारायणः' इति समानप्रकरणे नारायणस्यैवान्तर्यामित्वश्रवणात् ॥ धर्म्यैक्यात् सर्वमुपपन्नमिति चेन्न ; सर्वेषां व्यूहानां सर्वधर्मसंभवेन व्यूहत्रयतद्व्यापारविभाग व्यवस्थोपन्यासानुपपत्तेः। अतो यथोक्तमेव उपासात्रैविध्यमिति सिद्धम् ॥ इति इन्द्रप्राणाधिकरणम्।

इति श्रीहरितकुलतिलकवाग्विजयिसूनुना श्रीरङ्गराजदिव्याज्ञालब्धवेदव्यासापरनामधेयेन श्रीमद्वरदाचार्यपादसेवासमधिगत भगवद्रामानुजविरचितशारीरकमीमांसाभाष्यहृदयेन श्रीसुदर्शनसूरिणा विलिखितायां श्रुतप्रकाशिकायां प्रथमस्याध्यायस्य प्रथमः पादः ॥

शुभमस्तु

—०—०—०—

श्रीमते रामानुजाय नमः ।

श्रीः

श्रीभगवद्रामानुजविरचिते शारीरकमीमांसाभाष्ये

## प्रथमाध्याये द्वितीयः पादः

प्रथमे पादे अधीतवेदः पुरुषः कर्ममीमांसाश्रवणाधिगतकर्मयाथात्म्यविज्ञानः केवलकर्मणाम-ल्पास्थिरफलत्वमवगम्य, वेदान्तवाक्येषु च आपातप्रतीतानन्तस्थिरफलब्रह्मस्वरूपतदुपासनसमुप-जातपरमपुरुषार्थलक्षणमोक्षापेक्षः अवधारितपरिनिष्पन्नवस्तुबोधनशब्दशक्तिः वेदान्तवाक्यानां पर-स्मिन् ब्रह्मणि निश्चितप्रमाणभावः तदितिकर्तव्यतारूपशारीरकमीमांसाश्रवणमारभेतेत्युक्तं शास्त्रा-

---

### श्रुतप्रकाशिका

**प्रथमे पाद** इत्यादि ॥ किमर्थमत्र प्रथमपादाधिकरणार्थानुक्रमणम् ॥ उच्यते । पादानुयायिनोऽ-र्थस्य प्रत्यधिकरणमनुयायित्वस्फुटीकरणाय ॥ किमर्थमनुयायित्वकथनम् ॥ त्रिपादीसङ्गत्यर्थम् ॥ सङ्गतिः कुतः ॥ सूत्रकाराभिप्रेतत्वात् । पादभेदो ह्यर्थभेदात् । तत्क्रमश्च सङ्गतिविशेषात् । तत्र किं प्रमाणम् ? सम्प्रदायक्रमः । किञ्च अत्राधिकरणार्थानुक्रमणेन त्रिपाद्या अनारम्भणीयत्वशङ्का चार्थात् परिहृता भवति ; त्रिपाद्यामुदाहरिष्यमाणानां श्रुतीनां प्रथमपादाधिकरणोक्तन्यायाविषयत्वज्ञापनार्थत्वादनुक्रमणस्य । अत एव प्रथमपादे वेदान्तवाक्यानां परमात्मपरत्वे दर्शितेऽपि त्रिपाद्या आरम्भणीयत्वं सिद्धम् । प्रथमे पादेऽपि ईक्षत्यानन्दमयाधिकरणयोः कारणस्य चिदचिद्वैलक्षण्ये सिद्धेऽपि पूर्वाधिकरणन्यायाविषय-श्रुतिवाक्यार्थनिर्णयार्थो ह्युत्तरोत्तराधिकरणारम्भः; तद्वदत्रापीति ॥ शास्त्रारम्भप्रयोजनायाश्चतुस्सूत्र्याः कथं प्रथमपादे सङ्गतिः ॥ उच्यते । तस्याः शास्त्रारम्भार्थत्वेन शास्त्रोपोद्घातरूपत्वादर्थतः प्रथमपादान्तर्गतत्वम् ; न तु प्रथमपादस्य प्रथमाध्यायस्य चा(वाऽ)साधारणत्वात् सङ्गतिः प्रथमे पाद इति ।

**अधीतवेदः**—कृतसाङ्गसशिरस्काध्ययनः । तावति अपर्यवसानमाह **कर्मेति** । तत्राप्यपर्यवसाने हेतुमाह **केवलेति** । तथापि ब्रह्मविचारप्रवर्तनक्षमापातप्रतीतिरेव न जायते, सिद्धवस्तुनि व्युत्पत्त्यभावा-दिति शङ्कायां प्रथमसूत्रस्य तात्पर्यमाह **अवधारितेति** । तर्हि वेदान्तवाक्यैरेवालम् , किमर्थो ब्रह्मविचार इत्यत्राह **तदितिकर्तव्यते**ति । ननु चतुस्सूत्री हि शास्त्रारम्भार्था; तत् कथं प्रथमाधिकरणार्थानुक्रमे **शास्त्रारम्भसिद्धय** इत्युक्तम् ॥ जन्मादिसूत्रत्रयस्यापि प्रथमाधिकरणाधीनारम्भत्वात् तथोक्तिः; न तु तेषां सूत्राणां शास्त्रारम्भार्थत्वाभावात् । यद्वा जन्मादित्रिसूत्र्याः शास्त्रारम्भत्वे सत्यपि प्रथमपादे सङ्गतिरप्यस्ति ; चिदचिद्विलक्षणकारणास्तित्वविषयत्वात् तस्याः । प्रथमपादो हि समस्तचिदचिद्विलक्षण-कारणास्तित्वनिरूपणपरः । जन्मादिसूत्रे जन्मादिकारणत्वं लक्षणमुक्तम् । कारणस्य प्रमाणान्तरासिद्धिः प्रयोजनरूपता चानन्तरसूत्रद्वयेनोक्ते । अतः प्रथमाधिकरणार्थानुक्रमे **शास्त्रारम्भसिद्धय** इत्युक्तमिति । **यद्वा शास्त्रारम्भसिद्धय** इति पदमुत्तराधिकरणत्रयेऽनुषज्यत इति चतुस्सूत्र्याः शास्त्रारम्भसिद्ध्यर्थत्वमुक्तं

रम्भसिद्धये। अनन्त-विचित्र-स्थिरत्रसरूपभोक्तृ-भोग्य-भोगोपकरण-भोगस्थानलक्षणनिखिलजगदुदय-विभव-लय-महानन्दैककारणं परं ब्रह्म "यतो वा इमानि" इत्यादिवाक्यं बोधयतीति च प्रत्यपादि। जगदेककारणं परं ब्रह्म सकलेतरप्रमाणाविषयतया शास्त्रैकप्रमाणकमित्यभ्यधाम। शास्त्रप्रमाणकत्वं च ब्रह्मणः प्रवृत्तिनिवृत्त्यन्वयविरहेऽपि स्वरूपेणैव परमपुरुषार्थभूते परस्मिन् ब्रह्मणि वेदान्तवाक्यानां समन्वयान्निरूढात इत्यब्रूम। निखिलजगदेककारणतया वेदान्तवेद्यं ब्रह्म च ईक्षणाद्यन्वयादानुमानिकप्रधानादर्थान्तरभूतश्चेतनविशेष एवेत्युपापीपदाम। स च स्वाभाविकानवधिकातिशयानन्द-विपश्चित्त्व-निखिलचेतनभयाभयहेतुत्व-सत्यसङ्कल्पत्व-समस्तचेतनाचेतनान्तरात्मत्वादिभिर्बद्धमुक्तोभयावस्थाज्जीवशब्दाभिलपनीयाच्चार्थान्तरभूत इति च समार्थयामहि। स चाप्राकृताकर्मनिमित्तस्वासाधारणदिव्यरूप इत्युदैरिराम। आकाशप्राणाद्यचेतनविशेषाभिधायिभिर्जगत्कारणतया प्रसिद्धवन्निर्दिश्यमानः सकलेतरचेतनाचेतनविलक्षणः स एवेति समगरिष्महि। परतत्त्वासाधारणनिरतिशयदीप्तियुक्तज्योतिश्शब्दाभिधेयो द्युसंबन्धितया प्रत्यभिज्ञानात् स एवेत्यातिष्ठामहि। परमकारणासाधारणामृतत्वप्राप्तिहेतुभूतः परमपुरुष एव शास्त्रदृष्ट्या इन्द्रादिशब्दैरभिधीयत इत्यब्रूमहि। तदेवमतिपतितसकलेतरप्रमाणसंभावनाभूमिः सार्वज्ञ्यसत्यसङ्कल्पत्वाद्यपरिमितोदारगुणसागरतया स्वेतरसमस्तवस्तुविलक्षणः परं ब्रह्म पुरुषोत्तमो नारायण एव वेदान्तवेद्य इत्युक्तम्॥

---

भवति। जन्मादिसूत्रार्थमनुक्रामति **अनन्तेति**। सौत्रस्य **अस्येति** पदस्य विवक्षितमर्थमाह **अनन्तविचित्रादिविशेषणैः**। **अनन्तविचित्रशब्दौ** भोक्तृभोग्यसाधारणौ। **महानन्दैककारणत्वं** 'तद्विजिज्ञासस्व' इति वाक्याभिप्रेतम्। तापत्रयातुरजिज्ञासस्य हि लक्षणं निरूपितम्। अतो **महानन्दैककारण**मित्युक्तम्। यद्वा 'यत् प्रयन्ति' इत्यस्य आत्यन्तिकलयपर्यन्तत्वाभिप्रायेणोक्तम्—**महानन्देति**। "येयं प्रेते', 'न प्रेत्य' इति च आत्यन्तिकलयो हि प्रायणं श्रुतम्। अविरुद्धविशेषणभेदो न विशेष्यभेदावह इत्यभिप्रायेण **एक**शब्दप्रयोगः; निमित्तोपादानैकत्वाभिप्रायेण वा। **शास्त्रेति**। **समन्वयात्**—परमपुरुषार्थभूतस्यैव ब्रह्मणः प्रतिपादकतया शास्त्रस्य तेनान्वयात्। **स चेत्यादि**। **स्वाभाविकानवधिकातिशय**शब्दौ प्रतिविशेषणमन्वितौ। आकाशप्राणाधिकरणार्थयोः पृथगनुक्तिर्न्यायस्यानतिभिन्नत्वात्। **परमेति**। परमकारणस्यासाधारणम्—तस्य प्रदेयत्वेन असाधारणम् अमृतत्वम्; तत्प्राप्तिहेतुरित्यर्थः। यद्वा परमकारणस्यासाधारणम्—चिह्नभूतमित्यर्थः। उपासकस्यामृतत्वप्राप्तिः उपास्यस्य परमकारणत्वमावेदयति। यद्वा परमकारणासाधारणम्—तद्धर्मभूतममृतत्वम्, तत्प्राप्तिः—परमसाम्यापत्तिरित्यर्थः। पादार्थमाह **तदेवमिति**। पुरुषत्वादसदादिवदित्यादिकुतर्कपरिहारार्थमाह **अतिपतितेति**। तेषां धर्मिग्राहकमानबाध इति भावः। ज्योतिरधिकरणार्थाभिप्रायः **पुरुषोत्तमशब्दः**। प्रतर्दनविद्याभिप्रायो **नारायणशब्दः**। 'मामुपास्स्व' इत्यस्यापि नारायणानुवाकैक्येन सर्वविद्योपास्यतयोक्तनारायणोपासनपरत्वात् चिदचिद्विलक्षणकारणास्तित्वं पादानुगतार्थं इत्यर्थः। **नारायण एवे**त्यवधारणाक्षेपेण

अतः परं द्वितीयतृतीयचतुर्थेषु पादेषु, यद्यपि वेदान्तवेद्यं ब्रह्मैव तथापि, कानिचिद्वेदान्तवाक्यानि प्रधानक्षेत्रज्ञान्तर्भूतवस्तुविशेषस्वरूपप्रतिपादनपराण्येवेत्याशङ्क्य तन्निरसनमुखेन तत्तद्वाक्योदितकल्याणगुणाकरत्वं ब्रह्मणः प्रतिपाद्यते ॥ तत्रास्पष्टजीवादिलिङ्गकानि वाक्यानि द्वितीये पादे विचार्यन्ते, स्पष्टलिङ्गकानि तृतीये, तत्तत्प्रतिपादनच्छायानुसारीणि चतुर्थे ॥

सर्वत्रप्रसिद्ध्यधिकरणम् १-२-१

## सर्वत्र प्रसिद्धोपदेशात् ॥ १-२-१ ॥

इदमाम्नायते छान्दोग्ये, "अथ खलु क्रतुमयः पुरुषः ; यथाक्रतुरस्मिँल्लोके पुरुषो भवति, तथेतः प्रेत्य भवति । स क्रतुं कुर्वीत—मनोमयः प्राणशरीरो भारूपः" इत्यादि ॥

---

द्वितीयादिपादोत्थानमित्यभिप्रायेणाह **अतः परमिति** । **द्वितीयतृतीयचतुर्थेष्विति** । प्रथमपादस्य न केवलमनन्तरपादेन सङ्गतिः ; अपि तु त्रिपाद्यैवेति भावः । यथा, "चोदनालक्षणोऽर्थो धर्मः" इत्यत्र, चोदनैव प्रमाणम्, प्रमाणमेव चोदनेत्यवधारणद्वयम् ; तत्र प्रमाणमेव चोदनेत्यवधारणम् औत्पत्तिकसूत्रे साधितम्, चोदनैव प्रमाणमित्यवधारणं प्रत्यक्षसूत्रे स्थापितम्—तथा जन्मादिसूत्रेऽपि ब्रह्म कारणमेव, ब्रह्मैव कारणमित्यवधारणद्वयमपि विवक्षितम् ; जन्मादिकारणत्वस्य ब्रह्मलक्षणत्वात् ; लक्षणस्याव्याप्त्यतिव्याप्त्यसंभवपरिहारावश्यम्भावात् । तत्र व्यक्त्यैवयाव्याप्तिः ; असम्भवपरिहाररूपायोगव्यवच्छेदः प्रथमपादे उक्तः ; अतिव्याप्तिपरिहाररूपान्ययोगव्यवच्छेदः त्रिपाद्या क्रियत इति विभागाभिप्रायेण **कानिचिद्वेदान्तवाक्यानीत्यु(त्याद्यु)क्तम्** । **तत्तद्वाक्योदितकल्याणगुणाकरत्वं ब्रह्मणः प्रतिपाद्यत** इति । चिदचिद्विलक्षणस्वरूपं साधितम् ; अथ तस्य गुणविशेषप्रतिपादनं त्रिपाद्यां क्रियत इति च प्रथमपादत्रिपाद्योर्विभाग इति भावः । पादत्रयस्यावान्तरभिदामाह **तत्रेति** । **अस्पष्टेत्यादिवैषम्यं** ब्रह्मलिङ्गगतमिति परैरुक्तम् । अत्र तु जीवादिलिङ्गगतमिति भिदा । द्वितीयतृतीयपादाद्याधिकरणयोर्जीवस्य पूर्वपक्षितत्वाज्जीवादीत्युक्तम् । **तत्तत्प्रतिपादनच्छायानुसारीणि चतुर्थ इति** । **तत्तत्प्रतिपादनम्**—जीवादिलिङ्गिप्रतिपादनम् ; न तल्लिङ्गप्रतिपादनम् । अस्पष्टस्पष्टस्पष्टतरपूर्वपक्षोत्थानहेतुभेदेन भिन्नास्त्रयः पादा इत्यर्थः ।

प्रथमपादचरमाधिकरणे अवयवभूतोपक्रमगतजीवलिङ्गम् अवयविभूतवाक्यार्थस्वारस्येन बाधितमित्युक्तम् ; सर्वतादात्म्यमनःप्राणसंबन्धाभेकौकस्त्वाणीयस्त्वव्यपदेशरूपलिङ्गानामवयविगतत्वेनाबाध्यत्वमिति प्रत्यवस्थानं परिह्रियते द्वितीयपादप्रथमाधिकरणे इत्यवान्तरसङ्गतिः ।

**सर्वत्र प्रसिद्धोपदेशात्** ॥ 'सर्वं खलु' इत्यादेर्द्वितीययोजनायामुदाहरिष्यमाणत्वात् प्रथमयोजनापेक्षितम्—अथ खलु इत्यादिकमुपात्तम् । द्वितीयसूत्रे 'भारूपः' इत्यस्य उपरितनवाक्यस्योपादास्यमानत्वात् अत्र भारूप इत्यन्तमुपात्तम् आदिशब्देनान्यद्गृहीतम् । अत्र रात्रिसत्रन्यायेन मनोमय उपास्यतया संबध्यते ; आर्थवादिकस्यापि विध्यपेक्षितस्य स्वीकार्यत्वात् ॥ ननु 'स क्रतुं कुर्वीत' इत्यादिकमुपादीयताम् ; किमर्थं 'यथाक्रतुरस्मिन्' इत्यादिवाक्योपादानम् ॥ उच्यते । "फलवत्संनिधावफलं तदङ्गम्" इति न्यायेन 'स क्रतुं कुर्वीत' इति विधेः फलाश्रवणनिमित्तं पूर्वविहितोपासनाङ्गत्वं मा भूदिति

**अत्र "स क्रतुं कुर्वीत" इति प्रतिपादितस्योपासनस्योपास्यः 'मनोमयः प्राणशरीरः' इति निर्दिश्यत इति प्रतीयते। तत्र संशयः—किं मनोमयत्वादिगुणकः क्षेत्रज्ञः, उत परमात्मेति। किं युक्तम्? क्षेत्रज्ञ इति। कुतः? मनःप्राणयोः क्षेत्रज्ञोपकरणत्वात्, परमात्मनस्तु "अप्राणो**

---

फलसंबन्धप्रदर्शनार्थं तदुपादानम्। 'शान्त उपासीत' इति विहितोपासनाधिकृतस्यैव[1] उपासनान्तर-विधानमनुपपन्नमिति शंकाव्यावृत्त्यर्थम् 'अथ खलु क्रतुमयः पुरुष' इति वाक्यं घटकत्वेनोपात्तम्। जीवस्य बहुविधोपासनप्रचुरत्वादनेकोपासनविधानं युक्तमिति भावः॥

अत्र व्याख्यात्रन्तरैः[2] सर्वं खल्वित्यादिवाक्यस्य ब्रह्मपरत्वं स्पष्टमिति बुद्ध्वा 'स क्रतुम्' इत्यादिवाक्ययोर्जीवविषयत्वेन पूर्वपक्षं कृत्वा ब्रह्मविषयत्वेन सिद्धान्त उक्तः; इह तु विषयैक्ये स्थित एव पूर्वपक्षसिद्धान्तौ पश्चादभिधास्येते। प्रथमं व्याख्यात्रन्तरोक्तदिशा[3] पूर्वपक्षसिद्धान्तौ उपवर्ण्येते। नन्वत्रोपासनान्तरं[4] न विधित्सितम्; पूर्वविहितोपासनाङ्गभूतक्रतुविधिपरत्वादस्य वाक्यस्य। ततश्च मनोमयादिपदानि उपास्यान्तराभावात् प्रकृतब्रह्मपराणीति निश्चयान्न विचारविषय इति शङ्कां व्युदस्यति अत्रेति। मनोमयादिपदानां प्रकृतोपास्यविषयत्वे प्रमाणाभावात् ब्रह्मपरत्वानिश्चयात्, 'स क्रतुम्' इतिनिर्दिष्टोपासकविशेषणत्वाश्रयणे तस्यानाविर्भूतगुणाष्टकस्य सत्यसङ्कल्पत्वादेरघटमानत्वाच्च पाश्चात्यविद्या-न्तरोपास्यपरत्वनिश्चये सति तद्विशेषनिश्चयाभावात् विचारस्यारम्भणीयत्वमित्यर्थः। **उपासनस्येति** पदेन "तं यथा यथोपासते तथैव भवति", "यथाक्रतुरस्मिन् लोके पुरुषो भवति तथेतः प्रेत्य भवति" इत्यनयोर्वाक्ययो रैकार्थ्यात् 'क्रतुं कुर्वीत' इत्यत्र क्रतुशब्दश्चोपासनपर इति तदुपास्ये मनोमयत्वादिगुणके संशय इति भावः[5]। तत्रेति। 'स क्रतुं कुर्वीत' इत्यत्र उपास्यतया निर्दिष्टो मनोमयत्वादिगुणकः किं जीवः, उत परमात्मेति विचारः; तदर्थं कर्मकर्तृव्यपदेश-शब्दविशेष-उपसंहारगतब्रह्मशब्दादयः किं मुख्याः, उतामुख्याः; तदर्थं मनोमयत्वादिकं जीवस्यैव संभवति, उत परमात्मनोऽपि घटते इति; तदर्थम् 'अप्राणो ह्यमनाः' इति किं मनआदिसंबन्धमात्रनिषेधः, उत संबन्धविशेषनिषेधः इति। यदा संबन्धमात्रनिषेधः, तदा मनोमयत्वादेर्जीवस्यैवासाधारणतया कर्मकर्तृव्यपदेशादीनाममुख्यत्वेन 'स क्रतुं कुर्वीत' इति विहितोपासनस्योपास्यो जीव इति पूर्वपक्षस्थितिः। यदा संबन्धविशेषनिषेधः, तदा मनोमयत्वादेः परस्मिन् संभवेन कर्मकर्तृव्यपदेशादीनां मुख्यत्वात् तत्रोपास्यतया विहितः परमात्मेति सिद्धान्ते फलफलिभावः।

---

1 शान्तउपासीतेति वाक्यस्य प्रथमत्वात् तत्रोपासनविधिः स्वरसः। एवञ्च मध्ये यथा-क्रतुरिति वाक्यस्याभावे सक्रतुमितिवाक्येन स इति तमेव निर्दिश्य पुनः तत्कर्तृकोपासनविधानं किमर्थमिति शंका स्यादिति भावः।

2 व्याख्यात्रन्तरैरिति। अत्र वाक्ये उपासनद्वयं परोक्तमिति न प्रतीयते। अतो न तथा टीकाशयः।

3 मनोमयादिपदानां जीवपरत्वपक्षेऽपि प्रथमं ब्रह्मपदं परब्रह्मपरमेवेति व्याख्यात्रन्तरोक्तमेवानु सृत्येत्यर्थः। कात्स्न्येन तदनुसारो नेति ज्ञापनार्थं दिशेति पदम्। अत एव सौत्रपञ्चम्यन्तस्य तदुक्तादन्य एवार्थो वक्ष्यते। एवञ्च पूर्वपक्षेऽपि वैषम्ये सत्यपि न दोषः।

4 प्रथमं वाक्यं ब्रह्मपरम्; मनोमयवाक्यं जीवपरमिति पक्षे उपासनैक्यनिर्बन्धः कुतः; भेद एव काममस्त्विति पूर्वपक्षी मन्तुमर्हति, तथा परैरनुक्तत्वेऽपि इत्याशयेन उपासनान्तरमित्युक्तम्।

5 भाव इति। सूच्यत इति शेषः। तत्र पदेनेत्यस्यान्वयः।

ह्यमनाः" इति तत्प्रतिषेधाच्च । न च 'सर्वं खल्विदं ब्रह्म' इति पूर्व[वाक्य]निर्दिष्टं ब्रह्मात्रोपास्यतया संबन्धुं शक्यते, 'शान्त उपासीत' इत्युपासनोपकरणशान्तिनिर्वृत्त्युपायभूतब्रह्मात्मकत्वोपदेशायोपात्तत्वात् । न च 'स क्रतुं कुर्वीत' इत्युपासनस्योपास्यसाकाङ्क्षत्वाद्वाक्यान्तरस्थमपि ब्रह्म संबध्यत इति युक्तं वक्तुम्, स्ववाक्योपात्तेन मनोमयत्वादिगुणकेन निराकाङ्क्षत्वात्; "मनोमयः प्राणशरीरः" इत्यनन्यार्थतया निर्दिष्टस्य विभक्तिविपरिणाममात्रेणोभयाकाङ्क्षानिवृत्तिसिद्धेः । एवं निश्चिते जीवत्वे 'एतद्ब्रह्म' इत्युपसंहारस्थब्रह्मपदमपि जीव एव पूजार्थं प्रयुक्तमित्यध्यवसीयत इति ॥

एवं प्राप्ते ब्रूमः— सर्वत्र प्रसिद्धोपदेशात् । मनोमयत्वादिगुणकः परमात्मा । कुतः ? सर्वत्र—वेदान्तेषु परस्मिन्नेव ब्रह्मणि प्रसिद्धस्य मनोमयत्वादेरुपदेशात् । प्रसिद्धं हि मनोमय-

---

पूर्वपक्षमुपपादयति – **कुत** इत्यादिना । ननु कथमस्य पादस्य अस्पष्टजीवलिङ्गकवाक्यविषयत्वम् ? मनोमयत्वादिकं हि स्पष्टं जीवलिङ्गमिति चेत्—न; स्पष्टस्य मनस्संबन्धमात्रस्य जीवलिङ्गत्वाभावात्, जीवलिङ्गमूलस्योपकरणोपकरणित्वलक्षणसंबन्धविशेषस्यास्पष्टत्वाच्च इत्यभिप्रायेण **मनःप्राणयोः क्षेत्रज्ञोपकरणत्वादि**त्युक्तम् । ननु **सर्वंखल्विति** वाक्ये प्रकृतं ब्रह्मैव 'स क्रतुं कुर्वीत' इत्यत्रोपास्यतया संबध्य मनोमयत्वादिगुणानां विशेष्यं स्यादिति शङ्कायाम्—किं ब्रह्मशब्दस्य विधिपदाकाङ्क्षया उत्तरत्रान्वयः, उत क्रतुं कुर्वीतेति विधिपदस्योपास्यसाकाङ्क्षत्वात् संनिहितानां मनोमयादिपदानां विशेष्यसाकाङ्क्षत्वाच्च ब्रह्मशब्दस्योत्तरत्रान्वयः इति विकल्पमभिप्रेत्य प्रथमं शिरो दूषयति **न च सर्वमिति** । अन्यार्थतया निराकाङ्क्षत्वादित्यर्थः । द्वितीयं दूषयति **न च स क्रतुमिति** । **स्ववाक्योपात्तेनेति** । विच्छेदकाभावात् महावाक्यैकत्वं विवक्षितम् । ततश्च 'एष आत्मा' इति स्ववाक्यस्थेनानन्यार्थेन समानलिङ्गेनाऽऽत्मशब्देन विशेष्याकाङ्क्षाशमनात् वाक्यान्तरस्थ-अन्यार्थ-भिन्नलिङ्गब्रह्मशब्दाकर्षो न युक्त इति भावः । प्रथमान्तानां मनोमयादिपदानामुपासनवाचिपदेनान्वयायोगात् ब्रह्मपदमन्वेतव्य[1]मित्यत्राह **मनोमय** इति । क्रतुशब्देन द्वितीयान्तपदस्याप्यनन्वयात् षष्ठ्यन्ततया विभक्तिविपरिणामे कार्ये संनिहितस्य साकाङ्क्षस्यैव पदस्य विभक्तिविपरिणामो न्याय्यः; न तु वाक्यान्तरस्थस्य निराकाङ्क्षस्येत्यर्थः । **उभयाकाङ्क्षा**—मनोमयादिपदस्य, क्रतुं कुर्वीतेत्यस्य चाकाङ्क्षा । **न वक्तुं युक्तमिति** [2]पञ्चम्यन्वयः । मनोमयत्वादि च सत्यसङ्कल्पत्वात्पूर्वमेव प्रतिपन्नम्; अणीयस्त्वञ्च ज्यायस्त्वात् पूर्वं श्रुतम्; व्यतिरेकनिर्देशश्च मनोमयत्वादेः पाश्चात्यः । अतो मनोमयत्वादिस्वारस्यानुगुणमितरन्नेयमित्यभिप्रायेण चोक्तं **मनोमयत्वादिगुणकेनेति** । जीवपरत्वे ब्रह्मशब्दः कथमित्यत्राह **एवमिति** ॥

**एवं प्राप्त** इति । प्रतिज्ञावाक्यमध्याहरति **मनोमयत्वादीति** । सत्यसङ्कल्पत्वादिविशेषितप्राकरणिकात्मशब्दानुरोधेन **परमात्मेत्युक्तम्** । **सर्वत्रेति** व्याख्येयं पदम्; तद्व्याचष्टे **वेदान्तेष्विति** । सामान्यशब्दवत्सु विशेषशब्दवत्सु चेति भावः । हेतुपदं व्याचष्टे **प्रसिद्धस्येति** । ननु सर्ववेदान्तेषु परतत्त्वपरतया प्रसिद्धब्रह्मशब्दश्रवणादिति [3]परैर्व्याख्यातम् । तन्मतेन व्याख्याने सत्यपि तद्विहाय कथं युक्त्यन्तरोक्तिः ॥ उच्यते; पूर्ववाक्यस्थब्रह्मशब्दानन्वयस्योपसंहारस्थब्रह्मशब्ददौर्बल्यस्य च पूर्वपक्षिणो-

---

1 अनुषञ्जनीयमित्यर्थः । 2 सिद्धेरितिपञ्चम्यन्वयः ।
3 इदं भास्करभाष्ये सुस्पष्टम् । शांकरे फलितम् ।

त्वादि ब्रह्मणः । यथा "मनोमयः प्राणशरीरनेता' 'स एषोऽन्तर्हृदय आकाशः । तस्मिन्नयं पुरुषो मनोमयः । अमृतो हिरण्मयः' 'हृदा मनीषा मनसाऽभिक्लृप्तो य एनं विदुरमृतास्ते भवन्ति', 'न चक्षुषा गृह्यते नापि वाचा', 'मनसा तु विशुद्धेन' ; तथा 'प्राणस्य प्राणः', 'अथ खलु प्राण एव प्रज्ञात्मेदं शरीरं परिगृह्योत्थापयति', 'सर्वाणि ह वा इमानि भूतानि प्राणमेवाभिसंविशन्ति प्राणमभ्युज्जिहते' इत्यादिषु । मनोमयत्वम्—विशुद्धेन मनसा ग्राह्यत्वम् । प्राणशरीरत्वम्—प्राणस्याप्याधारत्वं नियन्तृत्वञ्च[1] ॥ एवञ्च सति 'एष म आत्माऽन्तर्हृदये एतद्ब्रह्म' इति ब्रह्मशब्दोऽपि मुख्य एव भवति । "अप्राणो ह्यमनाः" इति मनआयत्तं ज्ञानं प्राणायत्तां स्थितिञ्च ब्रह्मणो निषेधति ॥

अथवा "सर्वं खल्विदं ब्रह्म तज्जलानिति शान्त उपासीत" इत्यत्रैवोपासनं विधीयते,

---

क्तत्वान्न तथोत्तरं वक्तुं युक्तमिति भावः । मनस्सामान्येन संबन्धसामान्यपरं वाक्यमाह **मनोमयः प्राणशरीरनेते**ति । 'अमृतो हिरण्मयः' इति परमात्मपरत्ववैशद्यायोपात्तम् । मनस्सामान्येन सम्बन्धविशेषपरं वाक्यमाह **हृदा मनीषे**ति । हृदिति भक्तिरुच्यते ; मनीषेति धृतिः । "न संदृशे तिष्ठति रूपमस्य न चक्षुषा पश्यति कश्चनैनम्" इति पूर्वार्धमेकरूपं पठित्वा, "भक्त्या च धृत्या च समाहितात्मा ज्ञानस्वरूपं परिपश्यतीह" इति महाभारते उक्तत्वात् । **अभिक्लृप्तः**—ग्राह्यः । मनोविशेषेण संबन्धविशेषवाचिवाक्यमाह **न चक्षुषे**ति । प्राणशरीरत्वे श्रुतिमाह **तथे**ति । **प्राणस्य प्राणः**—आधारः । 'सर्वाणि' इत्यादिवाक्ये प्राणशब्दस्य यौगिकवृत्त्या परमात्मपरत्वं प्रागुक्तम् ; इदानीमपर्यवसानवृत्त्याऽपि परमात्मपरत्वेन तद्वाक्यमुपात्तम् । वैश्वानराधिकरणन्यायेन उभयथापि परमात्मपरत्वं युक्तमिति भावः । अत्र वाक्यजाते प्रतिपन्नं **मनोमया**दिशब्दार्थमाह **मनोमयत्वमि**ति । ग्राह्यग्राहकलक्षणसंबन्धविशेषाभिप्रायेण मनोमय इत्युक्तमित्यर्थः । **प्राणशरीर**शब्दार्थमाह **प्राणे**ति ॥ मनोविकारो **मनोमयः**, सर्वविकाराणां ब्रह्माधिष्ठानत्वात् ब्रह्मसामानाधिकरण्यमिति कैश्चिदुक्तम् ॥ तदा हि मनोविकाराः सुखदुःखेच्छाद्वेषादयो ब्रह्मेत्युक्तं स्यात् । तदयुक्तम् ; सत्यसङ्कल्पत्वादिकल्याणगुणप्रकरणविरोधात् हेयगुणविशेषाणामुपास्यत्वानुपपत्तेश्च । उक्तं हि, 'यथाक्रतुरस्मिंल्लोके पुरुषो भवति, तथेतः प्रेत्य भवति' इति । अतो हेयगुणापत्तिरेव फलं स्यात् । प्राणप्रेर्यं शरीरमस्येत्यर्थश्चेत्—प्राणशब्देन प्राणसंबन्ध्यभिधानं क्लिष्टं स्यात् । प्राणश्च शरीरं चास्येति समासो न घटते । प्राणः शरीरे यस्येति व्यधिकरणबहुव्रीहिश्च क्लिष्टः । अतो यथोक्त एवार्थ इत्यभिप्रायः ॥ उपसंहारस्वारस्यमाह **एवञ्चे**ति । मनःप्रभृतिनिषेधवाक्यार्थमुक्तार्थाविरुद्धमाह **अप्राण** इति । ग्राह्यग्राहकभावनियन्तृनियाम्यत्वादिरूपसंबन्धविशेषो विधेयः, उपकरणोपकरणित्वलक्षणसंबन्धविशेषो निषेध्य इत्यभिप्रायः ॥

अथ स्वाभिमतार्थयोजनां कर्तुमारभते **अथवे**ति । पूर्वस्यां योजनायां सूत्रे प्रतिज्ञावाक्यस्याध्याहार्यत्वात्, उपक्रमोपसंहारगतब्रह्मशब्दैकविषयत्वप्रतीतिस्वारस्येन भिन्नविषयत्वप्रतीतिपूर्वकपूर्वपक्षानुदयेनाधिकरणानारम्भात्, श्रवणमननाभ्यामेव निष्पाद्यायाः शान्तेरुपासननिष्पादकत्वस्य 'एवंविच्छान्तः' इति श्रुतिसिद्धत्वात् अन्यत्रापि शान्त्युपायत्वेनोपासनविधानादर्शनात् शान्तशब्दस्य शान्तिकामपरत्वास्वारस्यात् वृत्त्यनुरोधाच्च इयमेव योजना समुचितेति भावः । **अत्रैवोपासनं विधीयत** इति । अत्र शान्त्यु-

---

1 नियन्तृत्वं प्राणस्य—शरीरे सर्वांशेऽपि यथावत् प्रेरणम् ; इदं जीवावृत्ति ।

सर्वात्मकं ब्रह्म शान्तः सन्नुपासीतेति। "स क्रतुं कुर्वीत" इति तस्यैव गुणोपादानार्थोऽनुवादः। उपादेयाश्च गुणाः मनोमयत्वादयः। अतः सर्वात्मकं ब्रह्म मनोमयत्वादिगुणकमुपासीतेति वाक्यार्थः। तत्र सन्देहः—किमिह ब्रह्मशब्देन प्रत्यगात्मा निर्दिश्यते, उत परमात्मेति । किं युक्तम्? प्रत्यगात्मेति । कुतः ? तस्यैव सर्वपदसामानाधिकरण्यनिर्देशोपपत्तेः । सर्वशब्दनिर्दिष्टं हि ब्रह्मादिस्तम्बपर्यन्तं कृत्स्नं जगत् । ब्रह्मादिभावश्च प्रत्यगात्मनोऽनाद्यविद्यामूलकर्मविशेषोपाधिको विद्यत एव। परस्य तु ब्रह्मणः सर्वज्ञस्य सर्वशक्तेरपहतपाप्मनो निरस्तसमस्ताविद्यादिदोषगन्धस्य समस्तहेयाकरसर्वभावो नोपपद्यते। प्रत्यगात्मन्यपि क्वचित्क्वचिद्ब्रह्मशब्दः प्रयुज्यते। अत एव परमात्मा

---

पायोपासनम्;[1] उत्तरत्र मोक्षोपायोपासनमिति नायमर्थः, अपि तु अत्रैव मोक्षार्थोपासनं विधीयत इत्यर्थः। शान्तशब्दार्थं स्वरसतो वदन् वाक्यार्थमाह **सर्वात्मक**मिति। न क्ताशंसायां क्त इति (ह) विहितोऽयमिति भावः। तर्हि 'स क्रतुं कुर्वीत' इति किमुच्यत इत्यत्राह **स क्रतु**मिति। के पुनर्विधेया गुणा इत्यत्राह **उपादेयाश्चे**ति। **उपादेयाः**—विधेयाः। यथा 'अग्निहोत्रं जुहोति' इति होमे विहिते, 'दध्ना जुहोति' इत्यत्र दध्नो होमसाधनत्वमात्रं विधेयम्, जुहोतीत्यनुवादः—तद्वदिति। ननूपासनविधेरुत्पत्तिशिष्ट-सर्वात्मकत्वगुणावरोधात् मनोमयत्वादीनां नोपास्याकारत्वमिति चेन्न; सर्वात्मकत्वस्य उपासनविधिवाक्य-स्थत्वाभावात्। तज्जत्वतल्लत्वतदनत्वैः सर्वमिदं ब्रह्म खल्विति प्रसिद्धवन्निर्देशः उपासनविध्येकवाक्यत्वं निवारयति। न हि उपासीत खल्विति प्रसिद्धवन्निर्देशवचनव्यक्तिर्घटते। वाक्यार्थमाह **अत** इति। एवमेकविषयत्वमङ्गीकृत्यैव पूर्वपक्षसिद्धान्तौ दर्शयितुं संशयमाह **तत्रे**ति। तत्र—एकविषयत्वे सिद्धे। किमत्रोपास्यतया निर्दिष्टो जीवः, उत परमात्मेति विशयः। तदर्थं किं ब्रह्मशब्दो जीवपरः, उत परमात्मपरः; तदर्थं किं ब्रह्मशब्दकर्मकर्तृव्यपदेशादयो मुख्याः; उत नेति; तदर्थमणीयस्त्वव्यपदेशः किं मुख्यत्वविरोधी, उत न; तदर्थमणीयस्त्वज्यायस्त्वयोः किं स्वाभाविकम्, किमौपाधिकमिति। यदाऽणीयस्त्वं स्वाभाविकम्, ज्यायस्त्वमन्यथासिद्धम्—तदा अणीयस्त्व[व्यपदेश]स्य ब्रह्मशब्दादिमुख्यता-विरोधित्वेन ब्रह्मशब्दस्य जीवपरत्वादुपास्यतया निर्दिष्टो जीव इति पूर्वपक्षस्थितिः। यदाऽणीयस्त्वमौपाधिकम्, ज्यायस्त्वं स्वाभाविकम्—तदा अणीयस्त्वव्यपदेशस्य ब्रह्मशब्दादिमुख्यताविरोधित्वाभावेन ब्रह्मशब्दस्य परमात्मपरत्वेन अत्रोपास्यतया निर्दिष्टः परमात्मेति सिद्धान्ते फलफलिभावः। हेतुं विवृणोति **सर्वशब्दे**ति। ततः किमित्यपेक्षायां जीवस्य सामानाधिकरण्योपपत्तिमाह **ब्रह्मादी**ति। **ब्रह्मादिभावः**—चतुर्मुखादिभावः। **अनादी**ति। अहितकर्मोत्पादनहेतुरविद्या, तद्धेतुः कर्मेति बीजाङ्कुरादिनयात् अनादिः। **तस्यैवे**त्यवधारण-सूचितां परस्य सर्वभावानुपपत्तिं विवृणोति **परस्ये**ति। सर्वज्ञत्वात् हेयं जानाति। सर्वशक्तित्वात् निवारयितुं शक्नोति। न च ज्ञानशक्त्योः सङ्कोचः; अविद्यामूलकर्मविरहात्। अतो न सर्वभावः संभवतीति भावः। ब्रह्मशब्दः कथमित्यत्राह **प्रत्यगि**ति। तदुपपादयति **अत एवे**ति। **परमात्मे**ति दृष्टान्ततयोक्तम्। यथा आत्मशब्दो जीवेश्वरसाधारणः, तद्वत् ब्रह्मशब्द इति भावः। त्रिपाद्याः परब्रह्माभ्युपगमेन वाक्यविशेष-

---

1 ननु शान्त्युपायोपासनमिति न परोक्तम्। सत्यम्। शान्त उपासीतेत्यनेन किं शान्ति-गुणस्योपासनाङ्गत्वमुच्यते, उतोपासनफलत्वम्। आद्ये उक्तं श्रवणेति। अन्त्ये उक्तं शान्त्यु-पायेति। गीतायां २-६१-दृष्टमित्यत्रोक्तं शान्तशब्दस्येत्यादि। एवं पूर्वटीकार्थः। परानुक्तावपि स्वयं विकल्प्यैवं दूषणं न्याय्यम्।

परं ब्रह्मेति परमेश्वरस्य क्वचित् सविशेषणो निर्देशः। प्रत्यगात्मनश्च निर्मुक्तोपाधेर्ब्रह्मत्वं च विद्यते ; "स चानन्त्याय कल्पते" इति श्रुतेः। अविदुषस्तस्यैव कर्मनिमित्तत्वाज्जगज्जन्मस्थितिलयानाम्, तज्जलानिति हेतुनिर्देशोऽप्युपपद्यते। तदयमर्थः—अयं जीवात्मा स्वतोऽपरिच्छिन्नस्वरूपत्वेन ब्रह्मभूतस्सन् अनाद्यविद्यया देवतिर्यङ्मनुष्यस्थावरात्मनाऽवतिष्ठत इति॥

अत्र प्रतिविधीयते—सर्वत्र प्रसिद्धोपदेशात्। सर्वत्र—'सर्वं खल्विदम्' इति निर्दिष्टे सर्वस्मिन् जगति ब्रह्मशब्देन तदात्मतया अभि(वि)धीयमानं परं ब्रह्मैव ; न प्रत्यगात्मा। कुतः? प्रसिद्धोपदेशात्—'तज्जलान्' इति हेतुतः 'सर्वं खल्विदं ब्रह्म' इति प्रसिद्धवदुपदेशात्। ब्रह्मणो जातत्वाद्ब्रह्माणि लीनत्वाद्ब्रह्माधीनजीवनत्वाच्च हेतोर्ब्रह्मात्मकं सर्वं खल्विदं जगदित्युक्ते, यस्माज्जगज्जन्मस्थितिलयाः वेदान्तेषु प्रसिद्धाः तदेवात्र ब्रह्मेति प्रतीयते। तच्च परमेव ब्रह्म ; तथा हि, "यतो वा इमानि भूतानि जायन्ते, येन जातानि जीवन्ति, यत्प्रयन्त्यभिसंविशन्ति, तद्विजिज्ञासस्व ; तद्ब्रह्म" इत्युपक्रम्य, "आनन्दो ब्रह्मेति व्यजानात्। आनन्दाद्ध्येव खल्विमानि भूतानि जायन्ते" इत्यादिना पूर्वानुवाकप्रतिपादितानवधिकातिशयानन्दयोगिनो विपश्चितः परस्माद्ब्रह्मण एव जगदुत्पत्तिस्थितिलया निर्दिश्यन्ते ; तथा "स कारणं करणाधिपाधिपो न चास्य कश्चिज्जनिता न चाधिपः" इति करणाधिपस्य जीवस्याधिपः परं ब्रह्मैव कारणं व्यपदिश्यते। एवं सर्वत्र परस्यैव ब्रह्मणः कारणत्वं प्रसिद्धम्। अतः परब्रह्मणो जातत्वात् तस्मिन् प्रलीनत्वात् तेन प्राणनात् तदात्मकतया तादात्म्यमुपपन्नम्।

---

विचारपरत्वादत्र पूर्वपक्षिणः परमेश्वराभ्युपगमवाद उपपन्नः। आत्मशब्दस्य साधारण्यं युक्तम्, प्रवृत्तिनिमित्तसाधारण्यात्। आप्नोतीति हि तद्व्युत्पत्तिः ; जगत्, देहं व्याप्नोतीति। एवमुभयसाधारणं ब्रह्मशब्दप्रवृत्तिनिमित्तं वक्तव्यमित्यत्राह **प्रत्यगात्मनश्चेति**। कथं जन्मादिकारणत्वं हेतुतयोच्यते ; हेतुनिर्देशो हि पूर्वप्रसिद्ध्यपेक्षः; प्रसिद्धिश्च परमात्मविषयेत्युक्तमित्यत्राह **अविदुष इति**। जन्मादिहेतुत्वं बद्धस्य ; ब्रह्मत्वं तु शुद्धस्य। तस्य सर्वशब्दसामानाधिकरण्यं कथं घटत इत्यत्राह **तदयमर्थ इति**॥

सिद्धान्तमाह **अत्रेति**। यथा 'अन्तस्तद्धर्मोपदेशात्' इत्यन्तश्शब्दः प्रतिज्ञापरः, एवं **सर्वत्रेति** सूत्रपदं प्रतिज्ञापरमित्याह **सर्वत्रेति**। तदेव पदं व्याचष्टे **सर्वमिति**। **सर्वत्रे**तिपदं न वाचकवेदान्तपरम्, अपितु वाच्यजगत्परमित्यर्थः। **नाशब्दमिति** वा, **नेतर** इति वा, **अन्य** इति वा पूर्वपादादनुवर्तते। अतः पर्यवसानलब्धं प्रतिज्ञापदं **परं ब्रह्मैवेति**। **न शारीर** इत्यत्र वक्ष्यमाणमनुसन्धायाह **न प्रत्यगात्मेति**। **प्रसिद्धोपदेशा**दिति पदं व्याचष्टे **तज्जेति**। जगज्जन्मस्थितिलयानां तत्कृततादात्म्यस्य च प्रसिद्धत्वेनोपदेशादित्यर्थः। **इतिशब्देन** हेतुतयोक्तत्वात् जन्मादीनां प्रसिद्धत्वम्। प्रमाणसिद्धस्यैव हि हेतुता। तत्कृततादात्म्यस्य प्रसिद्धत्वं **खलुना** सिद्धम्। तत् स्पष्टयति **ब्रह्मण इति**। कारणत्वनिबन्धनतादात्म्यस्य चात्र प्रसिद्धत्वेनोपदेशः फलितः। प्रसिद्धत्वमस्तु ; ततः किमित्यत्राह **तच्चेति**। प्रसिद्धिं दर्शयति **तथाहीति**। **यतो वा इमानी**ति वाक्यस्य जीवविषयत्वव्यावृत्त्यर्थमाह **आनन्दो ब्रह्मेति**। वाक्यान्तराणामप्युक्तार्थपरत्वात् तेष्वपि तत्प्रसिद्धिमाह **एवमिति**। श्रुत्यन्तरेष्वपि जन्मादिहेतुत्वकृततादात्म्यमप्यर्थसिद्धमित्याह **अत इति**। **तदात्मकतया तदात्म्यमिति**। **तदात्मकतयेति** श्रुत्यन्तरविषयम्। तज्जत्वतदन्त्वतल्लत्वैः श्रुत्यन्तरेषु तदात्मकत्वेनोपपादनादिह प्रतिपन्नमपि तादात्म्यमुपपन्नमित्यर्थः।

अतस्सर्वप्रकारं सर्वशरीरं सर्वात्मभूतं परं ब्रह्म शान्तो भूत्वा उपासीतेति श्रुतिरेव परस्य ब्रह्मणः सर्वात्मकत्वमुपपाद्य तस्योपासनमुपदिशति । परं ब्रह्म हि कारणावस्थं कार्यावस्थं सूक्ष्मस्थूलचिदचिद्वस्तुशरीरतया सर्वदा सर्वात्मभूतम् । एवम्भूततादात्म्यस्य प्रतिपादने परस्य ब्रह्मणस्सकलहेयप्रत्यनीककल्याणगुणाकरत्वं न विरुध्यते ; प्रकारभूतशरीरगतानां दोषाणां प्रकारिण्यात्मन्यप्रसङ्गात् । प्रत्युत निरतिशयैश्वर्यापादनेन गुणायैव भवतीति पूर्वमेवोक्तम् ॥

यदुक्तं जीवस्य सर्वतादात्म्यमुपपद्यत इति—तदसत् ; जीवानां प्रतिशरीरं भिन्नानामन्योन्यतादात्म्यासंभवात् । मुक्तस्या[व्य]नवच्छिन्नस्वरूपस्यापि जगत्तादात्म्यं जगज्जन्मस्थितिप्रलयकारणत्वनिमित्तं न संभवतीति 'जगद्व्यापारवर्जम्' इत्यत्र वक्ष्यते ॥ जीवकर्मनिमित्तत्वात् जगज्जन्मस्थितिलयानां स एव कारणमित्यपि न साधीयः ; तत्कर्मनिमित्तत्वेऽपीश्वरस्यैव जगत्कारणत्वात् । अतः परमात्मैवात्र ब्रह्मशब्दाभिधेयः । इममेव सूत्रार्थमभियुक्ता बहुमन्यते । यदाह वृत्तिकारः "सर्वं खल्विति सर्वात्मा ब्रह्मेशः' इति ॥ १ ॥

विवक्षितगुणोपपत्तेश्च ॥ १-२-२ ॥

वक्ष्यमाणाश्च गुणाः परमात्मन्येवोपपद्यन्ते "मनोमयः प्राणशरीरो भारूपः सत्यसङ्कल्प

---

चिदचिद्विलक्षणस्य कथं तादात्म्योपपत्तिरित्यत्राह **अतस्सर्वेति** । सर्वात्मशब्दवैशद्याय **सर्वशरीरमि**त्युक्तम् । आकृत्यधिकरणन्यायेन प्रकारिपर्यन्ताभिधानसिद्ध्यर्थमाह **सर्वप्रकारमिति** । **श्रुतिरेव**—सर्वं खल्वित्यादिश्रुतिरेव । **उपपाद्य**—तज्जलानित्यंशेन कार्यकारणभावेन शरीरात्मभावेन चोपपाद्येत्यर्थः । तत्र ह्यन्तर्यामिरूपेण कृतस्य प्राणनस्य शरीरात्मभावापेक्षत्वात् तेन च तथोपपादितं भवति । स्थितिदशायां हि शरीरात्मभावः, प्रलयावस्थायां तु **एकमेवाद्वितीय**मिति सर्वभेदशून्यत्वान्न शरीरात्मभावसिद्धिरित्यत्राह **परं ब्रह्म हीति** । स्थितौ शरीरात्मभावोपपादनादुभयलिङ्गकस्य ब्रह्मणः कारणावस्थायामपि विशिष्टत्वमर्थसिद्धम् , श्रुत्यन्तरैः कण्ठोक्तं चेत्यभिप्रायः । सर्वदा विशिष्टं चेत् , कार्यकारणावस्थयोः को भेद इति शङ्कापरिहाराय **सूक्ष्मस्थूलचिदचिद्वस्तुशरीरतये**त्युक्तम् । ततः किमुभयलिङ्गकत्वस्येत्यत्राह **एवंभूतेति** । जीवस्यैव सर्वतादात्म्यं पूर्वपक्षिणोक्तमनूद्य दूषयति **यदुक्त**मित्यादिना । मुक्तस्य तत् संभवतीत्यत्राह **मुक्तस्येति** । **जगज्जन्मस्थितिप्रलयकारणत्वनिमित्त**मिति बहुव्रीहिः ; कारणत्वप्रयुक्तमित्यर्थः । जीवस्य कर्मद्वारा जगत्कारणत्वमनूद्य दूषयति **जीवकर्मेति** । **तत्कर्मनिमित्तत्वेऽपीति** । न हि कर्म जगतः कर्तृरूपनिमित्तमुपादानञ्च । उभयमीश्वर एव । कर्म तु केवलं वैषम्यहेतुः । यथा घटादिनिर्माणस्य भोक्तृकर्मनिमित्तत्वेऽपि भोक्तृकर्मणां न कर्तृत्वमुपादानत्वं वा । कुलालमृत्पिण्डयोरेव हि तदुभयम् । न च **तज्जलानि**त्यत्र तच्छब्दस्य कर्मवाचित्वम् । अतो न जीवस्य जगत्कारणत्वकृतं तादात्म्यमस्तीत्यभिप्रायः । सूत्रार्थमुपसंहरति **अत** इति । द्वितीययोजनोक्तार्थस्यैव साम्प्रदायिकत्वमाह **इममेवेति** । सर्वं खल्वित्यादिवाक्येन सर्वात्मतयोक्तं ब्रह्म **ईशः** परमात्मेत्यर्थः ॥ (१).... ... ...

**विवक्षितगुणोपपत्तेश्च** ॥ **विवक्षितत्वम्**—वक्तुमिच्छाविषयत्वम् । अपौरुषेयवाक्यप्रतिपाद्यगुणानां पुरुषेच्छापूर्वकत्वायोगात् कथं विवक्षितत्वमिति शङ्कायां **विवक्षितपदं** व्याचष्टे **वक्ष्यमाणा इति** । विवक्षितानामेव वक्ष्यमाणत्वाद्विवक्षितशब्देन वक्ष्यमाणत्वं लक्ष्यत इत्यर्थः । सर्वं खल्विति प्रथमवाक्यापेक्षया वक्ष्यमाणं ह्यनन्तरवाक्यगतगुणजातम् । निषेधवाक्यविरोधपरिहाराय सामान्य

आकाशात्मा सर्वकर्मा सर्वकामः सर्वगन्धः सर्वरसः सर्वमिदमभ्यात्तोऽवाक्यनादरः" इति। मनोमयः—परिशुद्धेन मनसैकेन ग्राह्यः। विवेकविमोकादिसाधनसप्तकानुगृहीतपरमात्मोपासननिर्मलीकृतेन हि मनसा गृह्यते। अनेन हेयप्रत्यनीककल्याणैकतानतया सकलेतरविलक्षणस्वरूपतोच्यते; मलिनमनोभिर्मलिनानामेव ग्राह्यत्वात्। प्राणशरीरः—जगति सर्वेषां प्राणानां धारकः; प्राणो यस्य शरीरम्—आधेयं विधेयं शेषभूतश्च स प्राणशरीरः। आधेयत्वविधेयत्वशेषत्वानि शरीरशब्दप्रवृत्तिनिमित्तानी[1]त्युपपादयिष्यते। भारूपः—भास्वररूपः। अप्राकृतस्वासाधारणनिरतिशयकल्याणदिव्यरूपत्वेन निरतिशयदीप्तियुक्त इत्यर्थः। सत्यसङ्कल्पः—अप्रतिहतसङ्कल्पः। आकाशात्मा—आकाशवत् सूक्ष्मस्वच्छस्वरूपः; सकलेतरकारणभूतस्याकाशस्याप्यात्मभूत इति वा आकाशात्मा; स्वयं च प्रकाशते अन्यानपि प्रकाशयतीति वा आकाशात्मा। सर्वकर्मा—क्रियत इति कर्म। सर्वं जगत् यस्य कर्म, असौ सर्वकर्मा; सर्वा वा क्रिया यस्यासौ सर्वकर्मा। सर्वकामः—काम्यन्त इति कामाः—भोग्यभोगोपकरणादयः; ते परिशुद्धाः सर्वविधास्तस्य सन्तीत्यर्थः। सर्वगन्धः सर्वरसः—'अशब्दमस्पर्शम्' इत्यादिना प्राकृतगन्धरसादिनिषेधादप्राकृताः स्वासाधारणा निरवद्या निरतिशयाः

---

मनोमयशब्दं विशेषवाक्यानुगुणं व्याचष्टे **मनोमय** इति। **परिशुद्धेन मनसैकेनेति**। अब्भक्षः, वायुभक्षः इतिवत् अवधारणगर्भ इत्येकशब्दस्य भावः। तच्च, "न चक्षुषा गृह्यते नापि वाचा मनसा तु विशुद्धेन" इति श्रुत्यानुगुण्यात्। तद्विवृणोति **विवेके**ति। फलितार्थमाह **अनेने**ति। कुत इत्यत्राह **मलिने**ति। मलिनमनोग्राह्यत्वं हेयार्हत्वव्यापकम्। अतो व्यापकनिवृत्त्या व्याप्यनिवृत्तिरित्युभयलिङ्गकत्वसिद्धिरिति भावः। मुक्तस्यापि विशुद्धमनोग्राह्यत्वं न संभवति। मुक्तं स्वातन्त्र्येण गृह्णाति चेत्, मनोऽशुद्धम्। ब्रह्मपर्यन्तत्वेन चेत्, विशिष्टस्य ब्रह्मण एव विशुद्धमनोग्राह्यत्वमिति। **प्राणशरीर**शब्दं व्याचष्टे **जगती**ति। **प्राणशरीर**शब्देन प्राणधारकत्वं कथमवगम्यत इत्यत्राह **प्राणो यस्ये**ति। शरीरत्वे सति कथमाधेयत्वादिकमित्यत्राह **आधेयत्वे**ति। **भारूप** इति। ज्ञानस्वरूप इत्यर्थस्त्वतिक्लिष्टः। **रूप**शब्दो हि धर्मवाची; **भा**शब्दो हि दीप्तिपरः। दीप्तिधर्मकत्वं विग्रहद्वारकम्; 'आदित्यवर्णं तमसः परस्तात्' 'रुक्मवर्णम्' इत्यादिश्रुत्यैकार्थ्यादित्यभिप्रायेणाह **भास्वररूप** इति। तत् विवृणोति **अप्राकृते**ति। **सूक्ष्मस्वच्छस्वरूप** इति। **सूक्ष्म**त्वम्—व्याप्त्यर्हत्वम्। **स्वच्छ**त्वम्—निर्मलत्वम्। **सकलेतरकारणभूतस्याकाशस्ये**त्यनेन 'आकाश एव तदोतश्च प्रोतश्च' इति वाक्यं स्मारितम्। "अक्षरमम्बरान्तधृतेः" इत्यधिकरणन्यायादा**काश**शब्दः प्रकृतिवाचीति भावः। **अन्यानपि प्रकाशयति**—स्वस्मै [2]प्रकाशयतीत्यर्थः। **सर्वा वा क्रिये**ति। लौकिकवैदिकसकलक्रियाणां सद्वारककर्ताऽसौ। यद्वा सर्ववैदिकक्रिया आराधनं यस्य, स सर्वक्रिय इत्यर्थः। इच्छाबाहुल्यव्यावृत्त्यर्थं सर्वकामपदं व्याचष्टे **काम्यन्त** इति। भोग्यभोगोपकरणादीनां प्राकृतत्वव्यावृत्त्यर्थमाह **ते परिशुद्धा** इति। अप्राकृता इत्यर्थः। सत्यकामपदैकार्थ्यादित्यभिप्रायः। **सर्वगन्ध** इत्यादि। रूपस्पर्शादिनिषेधपरवाक्यान्तराणामपि तुल्यन्यायत्वद्योतनार्थ **आदि**शब्दः। गन्धरसादीनामव्यवधानेन स्वरूपान्वयित्वाभावात् सद्वारकत्वे सति, प्राकृतानां पृथिव्यादिगतगन्धरसादीनां हेयत्वेन कल्याणगुणप्रकरणविरोधात्, 'भारूप' इति दिव्यविग्रहस्य प्रकृतत्वाच्चाप्राकृतदेहद्वारकगन्धरसादिविधिरित्यर्थः।

---

1 निमित्तानीति बहुवचनात् पृथक्पृथगर्थत्वं ज्ञायते।

2 सर्वप्रकाशफलित्वं तस्यैव, न तद्धर्मभूतज्ञानस्यापि।

कल्याणाः स्वभोग्यभूताः सर्वविधाः गन्धरसास्तस्य सन्तीत्यर्थः । सर्वमिदमभ्यात्तः—उक्तं रसपर्यन्तं सर्वमिदं कल्याणपुणजातं स्वीकृतवान् । 'अभ्यात्तः' इति 'भुक्ता ब्राह्मणाः' इतिवत् कर्तरि क्तः प्रतिपत्तव्यः । अवाकी । वाकः उक्तिः; सोऽस्य नास्तीति अवाकी । कुत इति आह

---

'सं ब्रह्मगन्धः प्रविशति; ब्रह्मरसः प्रविशति' इति मुक्तात्मनि साम्यापन्ने ब्रह्मगन्धरसप्रवेशव्यपदेशश्चास्यार्थस्योत्तम्भकः । सर्वमिदमिति । जगतोऽपि सर्वकर्मादिगुणान्तर्भावात् गुणपरं तत् व्याख्यातम् । अभ्यात्त इत्यत्र स्वीकरण[1]रूपगुणविधिः । ननु नायमादिकर्मणि क्तः; गुणगणादानस्य नित्यत्वात् । न चाभ्याददातिर्गत्यर्थः; स्वीकरणार्थत्वात् । नाप्यकर्मकः; सर्वमिदमिति श्रवणात् । न च शिष्टादिष्वन्यतमः; अपठितत्वात् । तत् कथं कर्तरि क्तः । "तयोरेव कृत्यक्तखलर्थाः" इति भावकर्मणोरेव हि तत्स्मरणम् इत्यत्राह भुक्ता इति । प्रयुक्तानुशासनत्वात् व्याकरणशास्त्रस्य, यथाप्रयोगमनुशासनं कार्यम्; न तु यथानुशासनं प्रयोगान्यथाकरणमिति भावः । [2]ये तु भुक्ता ब्राह्मणा इत्यत्र मत्वर्थीयाकारप्रश्लेषमिच्छन्ति, तेषां भुक्तशब्दस्य अर्शआदिगणान्तर्भावकल्पनम् अकारप्रश्लेषणमिति यत्न(तत्र) गौरवं पश्यतोक्तम् कर्तरीति । कर्त्रर्थतया प्रयोग एव हि भुक्तादीनामाकृतिगणान्तर्भावकल्पननिमित्तम् । तेनैव कर्त्रर्थत्वं क्तप्रत्ययस्य कल्प्यताम्; किमश्रूयमाणाकारप्रश्लेषेणेति भावः । यद्वा (?) कर्तरि क्तप्रतिपत्तिः [यद्वा कर्तरि प्रतीतिः प्रतिपत्तिः] । सा यथा भुक्ता ब्राह्मणा इत्यत्र प्रतिपाद्यते—निरूप्यते, एवमत्रापि निर्वोढव्येत्यर्थः । सोऽस्य नास्तीत्यवाकीति । फलितार्थकथनमेतत् , वाकः—उक्तिः ; अवाकः—तदभावः । अवाकोऽस्यास्तीत्यवाकशब्दात् तद्धितप्रत्ययः । यद्वा वाकी न भवतीत्यवाकी । कुत[3] इत्याह—कुत इत्यत्राहेत्यर्थः । अवाकत्वं वाक्सामर्थ्याभावादिति

---

1 स्वीकरणेति । अनेनोक्तस्य सर्वस्य प्राधान्येन स्वार्थत्वसिद्धिः ।

2 ननु अभ्यात्त इत्यस्य अर्शआद्यजन्ततया भावे क्तप्रत्ययेऽपि सर्वमिदमिति द्वितीया न स्यादिति प्रकृते कर्त्रर्थकत्वकल्पनेऽपि, भुक्ता इत्यत्र शाब्दिकैरुक्तम् अर्शआद्यजन्तत्वं कथं भाष्यकारैरुपेक्ष्य कर्त्रर्थकत्वमुच्यते इत्यत्राह येत्विति । महाभाष्योक्तत्वात् अस्तु कामं भुक्ता इत्यत्र अर्शआद्यजन्तता । अत्र भाष्ये इतिवदित्यत्र पूर्णसादृश्यस्याविवक्षणान्न विरोध इत्याशय्याह यद्वेति । कर्तृत्वोपलक्षितव्यक्तिपरत्वमात्रेण सादृश्यम् । अतः कर्तृत्वस्य भुक्ता इत्यत्र अर्शआद्यजन्ते प्रतीत्यभावेऽपि न क्षतिः । पूर्वयोजनायां कर्तरि क्तः प्रतिपत्तव्य इत्यस्य कर्तृत्वेन तद्बोधकः क्तः इह ग्राह्य इत्यर्थः । यद्वेति पक्षे क्तान्तपदजन्यप्रतिपत्तिः कर्तरि भवति । कथञ्चित् कर्तृभूतव्यक्तिविषयकत्वेन क्तः प्रतिपत्तव्यः—निर्वाह्यः (ग्राह्यः)इत्यर्थः । यद्वेत्यादिटीकापाठो न शुद्धः । 'यद्वा कर्तरि क्तप्रतिपत्तिः' इतिभा०प्र०पाठः । तस्य क्तग्रहणं कर्तृभूतव्यक्तिविषयीकारेणेत्यर्थो युक्तः । उपरि प्रतिपाद्यत इति पदं नावश्यकम् । निरूप्यत इत्यत्र निरुह्यत इति पदसत्त्वे निर्वोढव्येत्युपरितननिर्देशानुरूप्यम् । यदि आत्त इत्यप्यर्शआद्यजन्तमिहेष्यते, तर्हि सर्वमिदमिति द्वितीया अभिशब्देऽन्वयानुरोधेन, तदेषाऽभ्युक्तेतिवदिति स्यात् । अभ्यात्त इत्यत्र अततेः कर्तरि क्त इति छान्दोग्योपनिषच्छाङ्करम् । टीकोक्तपक्षद्वये प्रथमः लक्ष्यप्राबल्यमनुरुध्य लक्षणशास्त्रकल्पनया; द्वितीयः स्थितशास्त्रत एव भुक्ता इति निर्वाहात् ।

3 कुत इति इतीदं पृथक्कृत्य, एवं कुतः इत्यर्थोऽपि सुवचः । तदेदं तात्पर्यकथनम् ।

**अनादर** इति । अवाप्तसमस्तकामत्वेनादर्तव्याभावादादररहितः । अत एव अवाकी—अजल्पाकः । परिपूर्णैश्वर्यत्वाद्ब्रह्मादिस्तम्बपर्यन्तं निखिलं जगत् तृणीकृत्य जोषमासीन इत्यर्थः । त एते विवक्षिता गुणाः परमात्मन्येवोपपद्यन्ते ॥ २ ॥

**अनुपपत्तेस्तु न शारीरः ॥ १-२-३ ॥**

तमिमं गुणसागरं पर्यालोचयतां खद्योतकल्पस्य शारीरसंबन्धेनापरिमितदुःखसंबन्धयोग्यस्य बद्धमुक्तावस्थस्य जीवस्य प्रस्तुतगुणलेशसंबन्धगन्धोऽपि नोपपद्यत इति नास्मिन् प्रकरणे शारीरपरिग्रहशङ्का जायत इत्यर्थः ॥ ३ ॥

---

शङ्काव्यावृत्त्यर्थम् **अनादर** इति पदमिति भावः । तदुपपादयति **अवाप्तेति** । अवाकित्वस्य तत्फलतामाह **अत एवेति** । निषेध्यो वाको हेयरूप इति दर्शयति **अजल्पाक** इति । सापेक्षत्वनिबन्धनबहुप्रलापो निषेध्यः । न तु वाक्सामर्थ्यविरह[1] इत्यर्थः । पदद्वयप्रतिपाद्योऽयमेको गुण इत्याह **परिपूर्णेति** । सूत्रार्थमुपसंहरति **त एत** इति ॥

एवमन्वय उक्तः । कथं परमात्मन्येवेत्यवधारणसिद्धिः, मुक्तेऽपि ह्येते गुणाः शङ्कनीया इत्यपेक्षायां पूर्वसूत्रोक्तान्वयस्थेम्ने व्यतिरेकमाह—**अनुपपत्तेस्तु न शारीरः** ॥ **शारीरशब्देन** मुक्तावस्थस्यापि क्रोडीकारोपपादको **योग्यशब्दः** । अनुपपत्तेस्तु नेतर इति वक्तव्येऽपि मुक्तावस्थजीवस्य प्रतिपाद्यत्वानुपपत्तिस्फोरणार्थं **शारीरशब्दनिर्देश** इति भावः । बद्धोपादानं दृष्टान्ततया । यथा निग्राह्यस्य निग्राहकस्वरूपैक्यानुपपत्तिः, तथाऽनुग्राह्यस्याप्यनुग्राहकस्वरूपैक्यानुपपत्तिरित्यभिप्रायः । प्रस्तुतगुणानुपपत्तिः प्रतिगुणमनुसन्धेया । **पर्यालोचयतां शङ्का न जायत** इत्यन्वयः । [2]न मुक्तपरिग्रहशङ्काहेत्वन्यथासिद्धिः, किन्तु हेत्वसिद्धिरेवेति तुशब्दाभिप्राय इत्याशयवतोक्तं **शारीरपरिग्रहशङ्का न जायत** इति ॥

**अनुपपत्तेस्तु न शारीर** इत्यत्र यदुक्तं **परैः**—जीवपरयोरैक्याज्जीवधर्मैः परस्य विशिष्टत्वानुसन्धानोपपत्तिश्चेत्, तदनन्यत्वादेव परमात्मधर्माः सत्यसङ्कल्पत्वादयोऽपि जीवे उपपद्यन्त इति शङ्कानिरासार्थमिदं सूत्रम् । आरोप्यगतधर्मैरधिष्ठानं विशेष्यते, यथा सर्पगतभीषणत्वादिना तदधिष्ठानम् । न चाधिष्ठानधर्मैरारोप्यं विशेष्यते, यथा रज्जुत्वेन सर्पः । अतो जीवधर्मैर्मनोमयत्वादिभिः परमात्मनो विशेष्यत्वं युक्तम्, न तु परमात्मधर्मैः सत्यसङ्कल्पत्वादिभिर्जीवस्य विशेष्यत्वमिति सूत्रार्थ इति ॥ तदयुक्तम्; सर्पादिव्यावर्तकरज्जुत्वादिधर्मप्रतीतौ सर्पादिधर्मभूतभीषणत्वादिभिरधिष्ठानस्य विशेषणायोगात् । इह च जीवव्यावर्तकाः सत्यसङ्कल्पत्वादयः प्रतीयन्ते । अतोऽध्यस्तजीवधर्मैः परमात्मनो विशेष्यत्वमयुक्तम् । मनोमयत्वादिभिः सत्यसङ्कल्पत्वादिभिश्च पदैर्वस्तुमात्रं लक्ष्यत इति चेत्—तर्हि 'विवक्षितगुणोपपत्तेश्च' इति पूर्वसूत्रं विरुध्यते । उभयविधगुणानामविवक्षितत्वं सूत्रकाराभिमतं चेत्—'अनुपपत्तेस्तु न शारीरः' इतिवत् अनुपपत्तेस्तु नेश्वर इति च सूत्रं वक्तव्यम्; वस्तुमात्रविवक्षायां जीवधर्माणामिवेश्वरधर्माणामप्यनुपपत्त्यविशेषात् । अतः ईश्वरधर्मेषु तात्पर्यमवगम्यते । अतस्तेषु प्रतीयमानेषु रज्जोर्भीषणत्वादिनेव

---

1 वाक्सामर्थ्यमेव नास्तीति नेति भावः इति टीकार्थः । अन्यथा तु वाक्सामर्थ्यरहित-इति नार्थः अवाकीत्यस्येति टीका स्यात् । 2 पूर्वपक्ष्युक्तानां बद्धजीवगुणानां तत्क्रतुनयविरोधादविवक्षणीयतया सिद्धान्त्युक्तगुणा एव ग्राह्याः । तेषां बद्धेष्वसिद्धिः स्पष्टा । मुक्तेषु पुनः स्युरेव; अथापि तदग्रहणमिति न मन्तव्यम्; तत्राप्यसिद्धिरेवेति भावः ।

**कर्मकर्तृव्यपदेशाच्च ॥ १-२-४ ॥**

"एतमितः प्रेत्याभिसंभवितास्मि' इति प्राप्यतया परं ब्रह्म व्यपदिश्यते, प्राप्तृतया च जीवः। अतः प्राप्ता जीव उपासकः, प्राप्यं परं ब्रह्मोपास्यमिति प्राप्तुरन्यदेवेदमिति विज्ञायते ॥ ४ ॥

**शब्दविशेषात् ॥ १-२-५ ॥**

"एष म आत्माऽन्तर्हृदये" इति शारीरः षष्ठ्या निर्दिष्टः, उपास्यस्तु प्रथमया । एवं समानप्रकरणे वाजिनाञ्च श्रुतौ शब्दविशेषः श्रूयते जीवपरयोः । यथा "व्रीहिर्वा यवो वा श्यामाको वा श्यामाकतण्डुलो वा, एवमयमन्तरात्मन् पुरुषो हिरण्मयः, यथा ज्योतिरधूमम्" इति । अत्र 'अन्तरात्मन्' इति सप्तम्यन्तेन शारीरो निर्दिश्यते ; 'पुरुषो हिरण्मयः' इति प्रथमया उपास्यः, अतः पर एवोपास्यः ॥

---

मनोमयत्वादिना परमात्मनो विशेष्यत्वमनुपपन्नम् ॥ मनोमयत्वादिकं न जीवासाधारणमिति चेत्—किं मनोमयादिपदैर्मनःप्राणाद्यधीनज्ञानप्रवृत्तित्वं विवक्षितम् , उत विशुद्धमनोग्राह्यत्वप्राणशरीरकत्वादिकम् ? प्रथमे, जीवासाधारणत्वात् मनोमयत्वादिभिः परमात्मनो विशेष्यत्वानुपपत्तिः । द्वितीये तु, मनोमयत्वादीनामारोपितधर्मत्वाभावादारोप्यगतधर्मैरधिष्ठानस्य विशेष्यत्वसंभवरूपन्यायाविषयत्वं वाक्यस्य स्यात् । किञ्च नित्यस्य जीवस्य परस्मिन्नारोपितत्वाभावादेवोक्तन्यायः सुतरामिह न सङ्गच्छते । तस्मात् परोक्तः सूत्रार्थोऽनुपपन्नः ॥ ३ ॥

अथ परमसाध्यहेतुमाह ॥ **कर्मकर्तृव्यपदेशाच्च** ॥ [1]**अभिसंभविता[स्मि ?]**—प्राप्ता[स्मि ?] । प्राप्यप्राप्तृभेदः सूत्रविवक्षितः । ततः किं 'सर्वं खल्विदं ब्रह्म' इत्युक्तस्योपास्यस्य ब्रह्मणो जीववैलक्षण्यस्येत्यत्राह **अत** इति । प्राप्यप्राप्तारावेव ह्युपास्योपासकौ । अतः उपास्यं ब्रह्म उपासकाज्जीवाद्विलक्षणमित्यर्थः । स्वरूपस्यैव प्राप्यत्वमिति चेत्—श्रुतिस्वारस्यभङ्गः । **प्राप्तुरन्यदेवेदमिति** । अत्र **इदमिति** निर्देशो ब्रह्मशब्दाभिहितवस्त्वभिप्रायः ॥ ४ ॥ ... ... ... .... ....

अवस्थाभेदेन प्राप्यत्वप्राप्तृत्वोपपत्तिरिति शङ्कापरिहारार्थमेकस्यामेवावस्थायां भेदव्यपदेशं दर्शयत्यनन्तरसूत्रद्वयेन । **शब्दविशेषात्** ॥ अस्मिन् सूत्रे असमानविभक्तिकशब्दो विवक्षितः । **एवं समानप्रकरण** इति । तत्रापि[2] शाण्डिल्यविद्यायामित्यर्थः । सौत्रपदशक्तेः सङ्कोचकाभावात् , समानप्रकरणेन प्रकृतोपपादनस्य अन्यत्र दृष्टत्वाच्च न छान्दोग्यवाक्यमात्रविषयमिदं सूत्रमिति भावः । **जीवपरयोरिति** । उपास्योपासकयोरित्यर्थः । जीवपरयोरित्युक्तिः फलितार्थाभिप्रायेण । अतो नान्योन्याश्रयः । अत्र हिरण्मयशब्देन दिव्यविग्रहवत्त्वं च सिद्धम् । उदाहृतवाक्ये शब्दविशेषं दर्शयति **अत्रेति**। **सप्तम्यन्तेनेति**। **अन्तरात्मन्नित्यत्र** नकारलोपाभावात्, "न ङिसंबुद्ध्योः" इति ङिसंबुद्ध्योरेव[3] नकारलोपप्रतिषेधात् , इह संबुद्ध्यन्तत्वेऽनन्वयाच्च "आत्मन् पश्यन् सर्वभूतानि" इतिवत् लुप्तसप्तमीकोऽयं निर्देश इति भावः । एवं स्वप्रकरणे षष्ठीप्रथमात्मकः, समानप्रकरणे सप्तमीप्रथमात्मकश्च शब्दविशेषो विवक्षितः ॥

---

1 लुडन्तत्वं युक्तम् । कृदन्तत्वे एतमिति द्वितीयान्तान्वयेऽपि क्लेशः । अर्थानुवादो वा ।

2 तत्रापि—वाजिश्रुतावपीत्यर्थः ।

3 अत्र नञ्संबुद्ध्योरेवेति पाठोऽत्यन्ताशुद्धः । सूत्रमपि शोधनीयम् । न ङिसंबुद्ध्योरिति हि पाणिनिसूत्रम् । ङि इति सप्तम्येकवचनोक्तिः । सप्तम्यां छन्दसि न पदान्तनकारलोप इति ।

इतश्च शारीरादन्यः—

स्मृतेश्च ॥ १-२-६ ॥

"सर्वस्य चाहं हृदि संनिविष्टो मत्तः स्मृतिर्ज्ञानमपोहनं च", "यो मामेवमसम्मूढो जानाति पुरुषोत्तमम्", "ईश्वरस्सर्वभूतानां हृद्देशेऽर्जुन तिष्ठति । भ्रामयन् सर्वभूतानि यन्त्रारूढानि मायया । तमेव शरणं गच्छ" इति च शारीरकमुपासकं परमात्मानं चोपास्यं स्मृतिर्दर्शयति ॥ ६ ॥

[1]हृदयस्थस्य ईश्वरत्वमुपबृंहणेन विशदयितुमाह—स्मृतेश्च ॥ 'एष म आत्मान्तर्हृदये' इति हृदयशब्दप्रत्यभिज्ञापनार्थमाह सर्वस्येति । उपास्यत्वज्ञापनार्थं तदनन्तरवाक्यम ह यो मामिति । हृत्स्थस्य ईश्वरत्वकण्ठोक्तिं दर्शयति ईश्वर इति । 'तमेव शरणं गच्छ' इत्युपादानं च हृदयस्थस्य भजनप्रदर्शनार्थम् । सर्वस्येति । सर्वशब्दो जीवविषयः, पराधीनस्मृत्याद्याश्रयभूतवस्तुविषयत्वात् । पुरुषोत्तमशब्दवाच्यस्य जीववैलक्षण्यं तत्रैवोक्तम् । सर्वभूतशब्दोऽपि जीवविषयः, भ्रान्त्याश्रयत्वात् देहाख्ययन्त्रारूढत्वाच्च । अत्र चशब्दोऽवान्तरशङ्कापरिहारहेतुद्वयसमुच्चयार्थः अन्वाचये वा ॥

अत्र केचित्—कर्मकर्तृव्यपदेशादयः, घटकरकादिकृतगगनभेदाश्रयणेन बालकक्षतारूपत्वमहत्त्वादिव्यवहारा इव काल्पनिकं भेदमाश्रित्य तत्त्वमसीत्यात्मैकत्वोपदेशग्रहणात्प्राक् प्रवर्तन्ते; ऐक्योपदेशग्रहणानन्तरं सर्वव्यवहारपरिसमाप्तिरित्याहुः ॥ अत्र ब्रूमः—यस्य भ्रमः, स एव भ्रान्तिसिद्धमर्थं व्यपदिशति; तस्यैव उपदेशग्रहणात तन्निवृत्तिः । एवं सति जीवेश्वरभेदभ्रान्त्या तयोः कर्मकर्तृभावादिकं को व्यपदिशति ? किं जीवः, उतेश्वरः, उत वेद एव ? । तत्राश्रुतशास्त्रस्य जीवस्य देहातिरिक्तं जीवमप्यजानतः सत्यसङ्कल्पत्वादिलक्षणेश्वरप्रतीत्यसंभवान्न तद्भ्रान्तिमूलत्वं कर्मकर्तृव्यपदेशस्य संभवति, नापि श्रुतशास्त्रस्य जीवस्य, तस्य जीवेश्वरभेदभ्रान्तौ श्रुतिरेव मूलमिति परमनिःश्रेयसार्थिभिर्वेदान्तानामनुपादेयत्वप्रसङ्गः ॥ स्वनिमित्तामपि भ्रान्तिं श्रुतिः स्वयमेवैक्योपदेशेन निवर्तयतीति चेत्—तथापि 'प्रक्षालनाद्धि पङ्कस्य दूरादस्पर्शनं वरम्' इति न्यायादनुपादेयत्वमेव स्यात् । कर्मकर्तृभावादिव्यपदेशस्य ईश्वरभ्रान्तिमूलत्वमपि न घटते, व्यपदेशवैघट्यात् । तथा सति हि 'एतमितः प्रेत्याभिसम्भवितास्मि' इति व्यपदेशो न स्यात्, अपि तु इतःप्रेतैरभिसम्भाव्योऽहमित्येव स्यात् । किञ्च भ्रमनिवृत्त्यर्थम् ईश्वरं प्रत्युपदेष्टव्यम् । न ह्यन्यस्य भ्रमे सति अन्यं प्रत्युपदेष्टव्यम् । तथा च तत्त्वमसीत्युपदेशो न घटते । किन्तु त्वं जीवोऽसीत्येवं वक्तव्यम् । अतः श्रुतिषु कर्मकर्तृव्यपदेशो नेश्वरभ्रममूलः । यदि वेद एव भ्रान्तो व्यपदिशति, तर्हि वेदस्य तत्त्वोपदेष्टृत्वं न स्यात्, भ्रान्तत्वात् ॥ पश्चात् प्रतिबुद्ध उपदिशतीति चेत्—तदयुक्तम्, स्वस्य भ्रमनिवृत्तेः, अन्येषां जीवेश्वरभ्रमाभावाच्चोपदेशवैयर्थ्यात् ॥ अन्येषां जीवेश्वरभेदभ्रान्त्यभावेऽपि जीवबहुत्वभ्रमनिवृत्त्यर्थमुपदेशः कार्य इति चेत्—न; उपदेशवैघट्यादेव । न हि तदानीं तत्त्वमसीत्युपदेशो घटते । किन्तु सर्वे जीवास्त्वमित्युपदेष्टव्यम् । न चैवमुपदेशो वेदान्तेषु क्वचिदपि दृश्यते । न च 'अहं मनुरभवं सूर्यश्च', 'अहं कक्षीवान् ऋषिरस्मि विप्रः' इत्यानुसंधानदर्शनात् तन्मूलभूत उपदेशः सर्वजीवैकत्वविषयोऽस्तीत्यभ्युपगन्तव्यम्; एकस्य जीवस्य 'सिंहेन भूत्वा बहवो मयाऽत्ताः' इतिवत् कल्पभेदेनातीतस्वीयमनुसूर्यादिजन्मस्मरणपरत्वसंभवात् तस्य वाक्यस्य । यतः शास्त्रेण विना शरीरिणां जीवेश्वरविभागप्रतीतिर्न संभवति, अत एव लोकसिद्धभेदो निषेधार्थं

---

1 शाण्डिल्यविद्योपास्यो न जीवः, किं तु ब्रह्मेति गीतादिस्मृत्या साधनायोगात् अन्यथा अवतारयति हृदयस्थस्येति ।

**अर्भकौकस्त्वात्तद्व्यपदेशाच्च नेति चेन्न निचाय्यत्वादेवं व्योमवच्च ॥ १-२-७ ॥**

अल्पायतनत्वमर्भकौकस्त्वम्; तद्व्यपदेशः—अल्पत्वव्यपदेशः। "एष म आत्माऽन्तर्हृदये" इत्यणीयसि हृदयायतने स्थितत्वात्, "अणीयान् व्रीहेर्वा यवाद्वा" इत्यादिनाऽणीयस्त्वस्य स्वरूपेण व्यपदेशाच्च नायं परमात्मा, अपि तु जीव एव; 'सर्वगतं सुसूक्ष्मं तदव्ययं यद्भूतयोनिं परिपश्यन्ति धीराः' इत्यादिभिः परमात्मनोऽपरिच्छिन्नत्वावगमात्, जीवस्य च आराग्रमात्रत्वव्यपदेशादिति चेत्—नैतदेवम्; परमात्मैव ह्यणीयानित्येवं निचाय्यत्वेन व्यपदिश्यते। एवं निचाय्यत्वेन—एवं द्रष्टव्यत्वेन, एवमुपास्यत्वेनेति यावत्। न पुनरणीयस्त्वमेवास्य स्वरूपमिति। व्योमवच्चायं व्यपदिश्यते—स्वाभाविकं महत्त्वं चात्रैव व्यपदिश्यते, "ज्यायान् पृथिव्या ज्याया-

---

श्रुत्याऽनूद्यत इत्येतन्निरस्तम्। न चेश्वरस्यानुमेयत्वसंभवात् जीवेश्वरभेदप्रत्ययस्य लोकसिद्धत्वसंभव इति वाच्यम्; (?)[1]तर्क(र्का ?)वश्यपुरुषानुमानस्य दूषितत्वात्। अनुमानसंभवेऽपि भारूपत्व-सत्यसङ्कल्पत्व-मुक्तप्राप्यत्वादीनामनुमातुमशक्यत्वाच्च। कर्मकर्तृव्यपदेशोऽपि ह्युपास्यत्वादिनिबन्धनः॥ तत्तत्फलविशेषार्थिनां कर्मकर्तृसापेक्षोपासनसिद्ध्यर्थं जीवेश्वरभेदं श्रुतिः कल्पयतीति चेत्--[न?] तथा सति तत्त्वनिरूपणदशायाम्, 'अत्ता चराचरग्रहणात्', 'अनुपपत्तेस्तु न शारीरः' इति जीवविलक्षणं वस्तु प्रतिज्ञाय कर्मकर्तृव्यपदेशस्य हेतुतयोपन्यासायोगात्। कथमुपासनार्थमपरमार्थभेदव्यपदेशं विजानन् सूत्रकारः तत्त्वार्थहेतुतया तं ब्रूयात्? न ह्यतात्त्विकभेदः प्रतिज्ञातः; ब्रह्मजिज्ञासेत्युपक्रमविरोधात्। 'संपत्तेरिति जैमिनिः', 'प्रियशिरस्त्वाद्यप्राप्तिः', 'आध्यानाय प्रयोजनाभावात्' इतिवत् जीवेश्वरभेदापारमार्थ्यविषयप्रतिज्ञान्तराभावाच्च। गरुडनरेन्द्रयोरिव वस्तुतो भिन्नयोः परावरात्मनोरैक्योपदेशस्यैवोपासनार्थत्वाश्रयणौचित्याच्च गरुडनरेन्द्रयोरिव[2] भेदस्य काल्पनिकत्वाश्रयणमयुक्तम्। अतः श्रुतिसूत्राणां काल्पनिकभेदविषयत्वमनुपपन्नम् ॥ ६ ॥

**अर्भकौकस्त्वात्तद्व्यपदेशाच्च नेति चेन्न निचाय्यत्वादेवं व्योमवच्च ॥** अल्पायतनत्वमित्यादि। अणीयस्त्वाक्षेपकार्थव्यपदेशात् साक्षादणीयस्त्वव्यपदेशाच्चेत्यर्थः। परमात्मनस्तु वैधर्म्यमाह **सर्वगत**मिति। **निचाय्य**शब्दार्थमाह **द्रष्टव्यत्वेने**ति। "चायृ दर्शने" इति हि धातुः। फलरूपदर्शनव्यावृत्त्यर्थमाह **उपास्यत्वेने**ति। तद्व्यावर्त्यमाह **न पुनरि**ति। तदुपपादकं सूत्रखण्डं व्याचष्टे **व्योमव**दिति। व्योमवद्द्रष्टव्यमित्युक्ते प्रतिज्ञामात्ररूपत्वात् प्रमाणाकाङ्क्षा भवति। व्यपदिश्यत इत्युक्ते प्रमाणमेव दर्शितं भवति। अतोऽध्याहारस्य तुल्यत्वेऽपि निराकाङ्क्षयोजना वरमित्यभिप्रायेण **व्यपदिश्यत**[3] इति पदं पूरकतयाऽध्याहृत्य व्याख्यातम्। **व्योमव**च्छब्दफलितं **स्वाभाविक**मिति।

---

1 अत्र पाठो निरीक्ष्यः। तर्काविषयः परमपुरुषः। तदनुमानं शास्त्रयोनित्वाधिकरणे दूषितमिति प्रमेयम्। तार्किकवश्यस्यानुमानस्येति वाऽर्थः। कर्मावश्यपुरुषेति वा पाठः।

2 भेदस्य काल्पनिकत्वाश्रयणं गरुडनरेन्द्रयोरिवायुक्तमित्यन्वयः।

3 व्यपदिश्यत इति। इदमुपलक्षणम्। महतो व्योम्न इवास्यायमणीयस्त्वव्यपदेश इत्यपि शांकरादावर्थः प्रतीयते। चकारस्वारस्यात् लाघवाच्च महत्त्वं व्यपदिश्यत इत्यध्याहार एवोचित इति।

न्तरिक्षात् ज्यायान् दिवो ज्यायानेभ्यो लोकेभ्यः" इति । अत उपासनार्थमेवाल्पत्वव्यपदेशः ।
तथा हि—"सर्वं खल्विदं ब्रह्म तज्जलानिति शान्त उपासीत" इति सर्वोत्पत्तिप्रलयकारणत्वेन सर्वस्यात्मतयाऽनुप्रवेशकृतजीवयितृत्वेन च सर्वात्मकं ब्रह्मोपासीतेत्युपासनं विधाय, "अथ खलु क्रतुमयः पुरुषः । यथाक्रतुरस्मिंल्लोके पुरुषो भवति, तथेतः प्रेत्य भवति" इति यथोपासनं प्राप्यसिद्धिमभिधाय, "स क्रतुं कुर्वीत" इति गुणविधानार्थमुपासनमनूद्य, "मनोमयः प्राणशरीरो भारूपः सत्यसङ्कल्प आकाशात्मा सर्वकर्मा सर्वकामः सर्वगन्धः सर्वरसः सर्वमिदमभ्यात्तोऽवाक्यनादरः" इति जगदैश्वर्यविशिष्टस्य स्वरूपगुणांश्चोपादेयान् प्रतिपाद्य, "एष म आत्माऽन्तर्हृदयेऽणीयान् व्रीहेर्वा यवाद्वा सर्षपाद्वा श्यामाकाद्वा श्यामाकतण्डुलाद्वा" इत्युपासकस्य हृदयेऽणीयस्त्वेन तदात्मतयोपास्यस्य परमपुरुषस्योपासनार्थमवस्थानमुक्त्वा, 'एष म आत्माऽन्तर्हृदये ज्यायान् पृथिव्या ज्यायानन्तरिक्षाज्ज्यायान् दिवो ज्यायानेभ्यो लोकेभ्यः, सर्वकर्मा सर्वकामः सर्वगन्धः सर्वरसः सर्वमिदमभ्यात्तोऽवाक्यनादरः' इति अन्तर्हृदयेऽवस्थितस्योपास्यमानस्य प्राप्याकारं निर्दिश्य, "एष म आत्मान्तर्हृदये ; एतद्ब्रह्म" इति एवम्भूतं परं ब्रह्म परमकारुण्येनास्मदुज्जिजीवयिषयाऽस्मद्धृदये

---

ज्यायानिति । वृद्धशब्दस्य ज्यादेशे ज्यायश्शब्दनिष्पत्तिः । [1] "ज्य च", "वृद्धस्य च" इति हि सूत्रम् । न तु 'प्रशस्यस्य श्रः' इति तन्निष्पत्तिः । वृद्धिश्च परिमाणाधिवयमिह विवक्षितम् ; न तु कालाधिक्यम् ; अत्राणीयस्त्वप्रतिसम्बन्ध्याकारपरत्वात् ज्यायश्शब्दस्य । अतः उपासनार्थमेवेति । अतः-पृथिव्यादिभ्योऽपि ज्यायस्त्वश्रवणादित्यर्थः । महत्तयाऽवगतस्य वस्तुन उपाध्युक्तिपूर्वकमुक्तं परिमाणमौपाधिकम् ; असम्भावितोपाधिकं परिमाणं स्वाभाविकमिति न्याय इह शिक्षितो भवति । अत्र हि हृदयमल्पत्वोपाधिभूतं श्रुतम् ; न तु ज्यायस्त्वोपाधिः श्रुतः । पृथिव्यादयस्तदुपाधय इति नाऽऽशङ्कनीयम् ; ततोऽपि ज्यायस्त्वश्रवणात् । न हि ततोऽधिकपरिमाणत्वं तदुपाधिकं भवितुमर्हति । अणीयस्त्वस्योपासनार्थत्वमुपासनप्रकरणाविच्छेदेन स्वाभाविकमहत्त्वप्रपञ्चनेन चोपपादयति तथा हीति । सर्वात्मकं ब्रह्मोपासीतेति । सर्वात्मकत्वं नोपास्यगुणतयोक्तम् ; तस्य वाक्यान्तरस्थत्वात् । अतो लक्षणतो धर्मिनिर्देशः । तत्प्रयोजनञ्च शान्तिरूपाधिकारिविशेषणसिद्धिः । भगवदात्मकत्वे हि शास्त्रतोऽवगते रागद्वेषाद्यभावरूपा शमादिनिष्पत्तिः स्यात् । यथोच्यते, "सर्वभूतात्मके तात जगन्नाथे जगन्मये । परमात्मनि गोविन्दे मित्रामित्रकथा कुतः" इति । शास्त्रजन्यज्ञानपूर्वकशमादिनिष्पाद्यमेवोपासनं श्रुतम् , 'तस्मादेवंविच्छान्तो दान्त उपरतस्तितिक्षुः समाहितो भूत्वाऽऽत्मन्येवात्मानं पश्येत्' इति । तस्मान्नोपासननिष्पाद्यः शमः ; किंतु शमनिष्पाद्यमुपासनम् । ब्रह्मात्मकत्वं सर्वस्य शास्त्रादवगम्य रागद्वेषादिरहितस्सन् वक्ष्यमाणगुणकं ब्रह्मोपासीतेत्यर्थः । सर्वात्मकं ब्रह्मेत्यनेन उपक्रमस्याणीयस्त्वविरोधित्वं दर्शितम् । प्रकरणाविच्छेदद्योतनाय अथ खल्वित्याद्युच्यते । उपासनमनूद्येति । यथा 'अग्निहोत्रं जुहोति' इति विहितहोमः 'दध्ना जुहोति' इत्यत्र दध्नो होमसाधनत्वविधानार्थं जुहोतिपदेनानूद्यते, तथेति भावः । जगदैश्वर्यविशिष्टस्येत्यनेन तज्जलानित्यस्यानुवादः । स्वरूपगुणान्—अद्वारकगुणान् । न हि ते प्रकृतिपुरुषद्वारकाः । निचाय्यत्वादित्यस्यार्थमाह एवम्भूतमिति । सर्वकर्मत्वादिगुणानां द्विरुक्तिः उपास्यतया प्राप्यतया च ; हृदि स्थितेर्द्विरुक्तिर्हृदयस्थिति-

---

[1] अत्र, वृद्धस्य चेति हि सूत्रम् ; न तु, 'प्रशस्यस्य श्रः ज्य च' इति तन्निष्पत्तिः इति पाठो युक्तः । भावप्रकाशिकामतिरपि द्रष्टव्या । वृद्धिः—वृद्धिशब्दवाच्यमित्यर्थः ।

संनिहितमितीदमनुसन्धानं विधाय, "एतमितः प्रेत्याभिसंभवितास्मि" इति यथोपासनं प्राप्तिनिश्चयानुसन्धानं च विधाय, "इति यस्य स्यादद्धा न विचिकित्साऽस्ति" इति एवंविधप्राप्यप्राप्तिनिश्चयोपेतस्योपासकस्य प्राप्तौ न संशयोऽस्तीत्युपसंहृतम् । अत उपासनार्थमर्भकौकस्त्वमणीयस्त्वञ्च ॥ ७ ॥

## संभोगप्राप्तिरिति चेन्न वैशेष्यात् ॥ १-२-८ ॥

जीवस्येव परस्यापि ब्रह्मणः शरीरान्तर्वर्तित्वमभ्युपगतं चेत्, तद्वदेव शरीरसंबन्धप्रयुक्तसुखदुःखोपभोगप्राप्तिरिति चेत्—तन्न; हेतुवैशेष्यात् । न हि शरीरान्तर्वर्तित्वमेव सुखदुःखोपभोगहेतुः; अपि तु पुण्यपापरूपकर्मपरवशत्वम्; तत्तु अपहतपाप्मनः परमात्मनो न संभवति । तथा च श्रुतिः, "तयोरन्यः पिप्पलं स्वाद्वत्त्यनश्नन्नन्यो अभिचाकशीति" इति ॥ ८ ॥

॥ इति सर्वत्रप्रसिद्ध्यधिकरणम् ॥

---

ज्ञापनार्थं सौलभ्यानुसन्धानार्थं चेत्यर्थः । एवमत्र पूर्वत्रोत्तरत्र च विभुत्वाभिधानादर्भकौकस्त्वरूपोपाधिकथनाच्च मध्यगतमल्पत्वमौपाधिकमित्ययमर्थ उक्तो भवति ॥

**संभोगप्राप्तिरिति चेन्न वैशेष्यात्** ॥ शरीरान्तर्वर्तित्वम्--हृदयवर्तित्वम् । **वैशेष्यम्**—विशेषः । भोगप्रसञ्जने सुखग्रहणं सांसारिकसुखस्याऽऽदिमध्यावसानेषु दुःखमिश्रत्वेनापुरुषार्थपक्षनिक्षेपनिबन्धनम् । तथा च श्रुतिः—शरीरान्तर्वर्तित्वेऽपि फलसंबन्धासंबन्धौ आहेत्यर्थः ।—अधिकरणार्थनिगमनमर्थसिद्धम् ॥

अस्मिन् सूत्रे परस्मादन्यस्य जीवस्यानभ्युपगमे परस्य कर्मफलभोक्तृत्वप्रसङ्ग इति परिचोद्य परिहर्तृत्वाभिमानेन कैश्चिदेवमुक्तम्---आत्मान्तराभावो यद्यनवगतः; तदा तन्निबन्धनचोद्यानुदयः । अवगतत्वे किं शास्त्रादवगतः(मः), उतासद्भावयात्? । प्रथमे शास्त्रसिद्धात्मान्तराभाववत् परस्य भोक्तृत्वाभावोऽपि शास्त्रसिद्धतया स्वीकार्यः । न ह्यर्द्धजरतीयं न्याय्यम् । द्वितीये तु भ्रान्तिसिद्धगगनतलमलिनताविकल्पो गगनमिव अपारमार्थिकभोक्तृत्वं परमार्थमद्वितीयं परमात्मानं न स्पृशतीति । तत्र प्रथमं शिरः अनभ्युपगमनिरस्तम् । शास्त्रं जीवपरयोरनन्यत्वं प्रतिपादयतीति प्रतिवादिवाक्यादात्मान्तराभावमवगम्य[1] तथा सति परस्य जीववद्भोक्तृत्वप्रसङ्गात् अयोग्यं जीवपरैक्यं शास्त्रं न प्रतिपादयितुं शक्नोतीति हि चोदयितुरभिप्रायः । अतो नार्द्धजरतीयम् । अपरमार्थत्वान्न स्पृशतीति वचनव्यक्तिर्दूषणस्य दुष्परिहरतामवगमयति । जीववदुपभोक्तृत्वं हि चोदयित्रा आपादितम् । जीवस्य च भोक्तृत्वं त्वन्मते मिथ्या । अतो गगने मालिन्यवत् परस्मिन् कल्पितं भोक्तृत्वं न तु स्पृशतीति वदता जीववत् भोक्तृत्वमभ्युपगतं स्यात् । न चांशभेदेन भोगव्यवस्था; वस्तुनो निरंशत्वात् । सांशत्वेऽप्युपाधीनां गत्वरतया घटे चलति नभस्यल्पत्ववत् सर्वप्रदेशैरौपाधिकदोषान्वयप्रसङ्गात् । अतः परपक्षे भोक्तृत्वप्रसङ्गपरिहारोऽनुपपन्नः ॥

सर्वत्रेति सूत्रं स्ववाक्यस्थहेतुपरम् । तदनन्तरवाक्यस्थहेतुपरं द्वितीयम् । तद्व्यतिरेकपरं तृतीयम् । उपसंहारस्थहेतुपरं चतुर्थम् । तत्र शङ्काविशेषपरिहारपरमनन्तरसूत्रद्वयम् । सूत्रद्वयोक्तहृदयावस्थानप्रयुक्तचोद्यपरिहारपरं तदनन्तरसूत्रद्वयमिति सूत्रसङ्गतिः ॥ इति सर्वत्रप्रसिद्ध्यधिकरणम् ।

---

1 अवगम्येत्यस्य चोदयितुरित्यत्रान्वयः; इति ह्यभिप्राय इति च ।

## अत्त्रधिकरणम् १-२-२

यदि परमात्मा न भोक्ता, एवं तर्हि सर्वत्र भोक्तृतया प्रतीयमानो जीव एव स्यादित्याशङ्क्याह—

**अत्ता चराचरग्रहणात् ॥ १-२-९ ॥**

कठवल्लीष्वाम्नायते, "यस्य ब्रह्म च क्षत्रं चोभे भवत ओदनः। मृत्युर्यस्योपसेचनं क इत्था वेद यत्र सः" इति। अत्रौदनोपसेचनसूचितोऽत्ता किं जीव एव, उत परमात्मेति सन्दिह्यते। किं युक्तम्? जीव इति। कुतः? भोक्तृत्वस्य कर्मनिमित्तत्वात् जीवस्यैव तत्संभवात्॥

अत्रोच्यते—अत्ता चराचरग्रहणात्। अत्ता परमात्मैव। कुतः। चराचरग्रहणात्—चरा-

---

अथ उत्तराधिकरणसङ्गतिमाह **यदीति**। **अत्ता चराचरग्रहणात्**॥ **कठेत्यादि**। **यत्र स इति**। यस्मिन् प्रकारे स्थितः, यत्प्रकारविशिष्टः—तं प्रकारं को वेदेत्यर्थः। विषयवाक्ये अत्तेत्यश्रवणादस्याः श्रुतेरेतत्सूत्राविषयत्वशङ्कां परिहर्तुमाह **अत्रेति**। **यस्येति** षष्ठीनिर्दिष्टः संबन्धः ओदनोपसेचनसामर्थ्याद-दनीयात्तृभावलक्षणविशेषपर्यवसितः। तस्मादत्ता सूचित इत्यर्थः। "अग्निरन्नादः" इति श्रुतिप्रसिद्धिम्, अस्यामुपनिषदि अग्नेः प्रस्तुतत्वं चावलम्ब्य, अग्निः जीवः परमात्मेति शिरस्त्रयं कल्पितं **परैः**। चित्याग्नेः प्रस्तुतत्वेन साक्षादग्निप्रस्तावाभावात्, अग्निप्रकरणस्य विच्छिन्नत्वात्, अध्यात्मप्रकरणे विद्याङ्गकर्मोपयोगित्वमात्रं विना अग्निवैभवप्रतिपादनायोगाच्च तत्परत्वाशङ्काया मन्दोत्थानत्वमभिप्रयता भगवता भाष्यकारेण शिरोद्वयं विचारकोटौ निवेशितम्॥

अत्ता जीवः, उत परमात्मेति विचारः; तदर्थमिदमत्तृत्वं किं कर्मफलभोक्तृत्वरूपम्, उत जगदुपसंहर्तृत्वरूपम्; किमत्र पूर्वप्रस्तुतब्रह्मप्रकरणं विच्छिन्नम्, नेति; 'ऋतं पिबन्तौ' इति किं बुद्धिजीवौ निर्दिश्येते, उत जीवपरौ; पिबन्ताविति निर्देशः किं छत्रिवत् लक्षणया, शब्दशक्त्या वा प्रयोज्यप्रयोजकविषयतया नेयः, उत न; 'तं दुर्दर्शम्', 'या प्राणेन' इति परजीवयोर्दर्शनं किं लक्षणामापादयति, उत नेति; उपक्रमे 'येयं प्रेते' इति प्रश्नः किं जीवविषयः, उत परविषय इति। यदा जीवविषयः, तदानीमुपक्रमविरोधेन 'तं दुर्दर्शम्' इत्यादिना ऋतपाननिर्देशस्य प्रयोज्य-प्रयोजकविषयतापादनायोगात् 'ऋतं पिबन्तौ' इति वाक्यस्य बुद्धिजीवपरत्वेन ब्रह्मप्रकरणं विच्छिन्नमिति इह प्रतिपन्नमत्तृत्वं कर्मफलभोक्तृत्वरूपमिति अत्ता जीव इति फलितम्। यदा येयमिति प्रश्नः परविषयः, तदानीमुपक्रमानुगुण्येन **तंदुर्दर्श**मित्यादिना ऋतपाननिर्देशस्य प्रयोज्यप्रयोजकविषयतापादनोपपत्तेः **ऋतंपिबन्ता**विति वाक्यस्य जीवपरमात्मपरत्वेन ब्रह्मप्रकरणविच्छेदाभावात् इह प्रतिपन्नमत्तृत्वं जगदुपसंहर्तृत्वरूपमेवेति अत्ता परमात्मेति फलितम्।

**भोक्तृत्वस्येति**। ओदनोपसेचनसामर्थ्यावगतस्येति भावः। ततः किमित्यत्राह **जीवस्यैवेति**। 'सर्वभूतान्तरात्माऽपहतपाप्मा', 'न कर्मणा वर्धते नो कनीयान्', 'अनश्नन्नन्यः' इति परस्य भोक्तृत्वं निषिद्धमिति भावः। **तत्संभवात्**—कर्मफलभोक्तृत्वसंभवात्। ब्रह्मक्षत्रशब्दवाच्यानां देहिनां स्त्रीपुंसा-त्मकत्वात् तत्तद्रूपजीवानां परस्परभोक्तृभोग्यभावः संभवति। जीवानां नित्यत्वादेव मृत्युवश्यत्वाभावात् मृत्युर्जीवस्य विधेय इत्यभिप्रायेण मृत्यूपसेचनवादोऽपि संभवतीति भावः॥

राद्धान्तमारभते **अत्रेति**। **चराचरग्रहणा**दित्येतद्व्याचष्टे **चराचरस्येति**। **कृत्स्नचराचरविषयं** वा

परस्य कृत्स्नस्य अत्तृत्वं हि तस्यैव संभवति। न चेदं कर्मनिमित्तं भोक्तृत्वम्, अपि तु जगज्जन्मस्थितिलयहेतुभूतस्य परस्य ब्रह्मणो विष्णोः संहर्तृत्वम्; "सोऽध्वनः पारमाप्नोति तद्विष्णोः परमं पदम्" इति अत्रैव दर्शनात्। तथा च 'मृत्युर्यस्योपसेचनम्' इति वचनात् 'ब्रह्म च क्षत्रञ्च' इति कृत्स्नं चराचरं जगदिहादनीयौदनत्वेन गृह्यते। उपसेचनं हि नाम स्वयमद्यमानं सत् अन्यस्या[प्य]दनहेतुः। अत उपसेचनत्वेन मृत्योरप्यद्यमानत्वात् तदुपसिच्यमानस्य कृत्स्नस्य ब्रह्मक्षत्रपूर्वकस्य जगतश्चराचरस्यादनमत्र विवक्षितमिति गम्यते। ईदृशं चादनमुपसंहार एव। तस्मादीदृशं जगदुपसंहारित्वरूपं भोक्तृत्वं परमात्मन एव ॥ ९ ॥

प्रकरणाच्च ॥ १-२-१० ॥

प्रकरणञ्चेदं परस्यैव ब्रह्मणः, "महान्तं विभुमात्मानं मत्वा धीरो न शोचति", "नायमात्मा प्रवचनेन लभ्यो न मेधया न बहुना श्रुतेन। यमेवैष वृणुते तेन लभ्यस्तस्यैष आत्मा विवृणुते

कतिपयविषयं वाऽस्तु; ततः किं जीववैलक्षण्यस्य। उक्तं हि 'कर्मफलभोक्तृत्वरूपमिदमत्तृत्वम्' इति—अत्राह **न चेद**मिति। कृत्स्नचराचरविषयमत्तृत्वं जीवस्यानुपपन्नमिति भावः। अत्तृत्वं विष्णुकर्तृकं चराचरसंहर्तृत्वमिति कथमवगतमित्यत्र हेतुद्वयमाह **सोऽध्वन** इति। प्रकरणे परमात्मवाचिपदश्रवणं प्रथमो हेतुः[1]। द्वितीयं हेतुमाह **तथा च मृत्यु**रिति। कथं चराचरस्यादनीयत्वसिद्धिः; मृत्यूपसेचननिर्देशो हि मृत्युवश्यत्वाभावाभिप्रायः संभवतीत्यत्राह **उपसेचनं ही**ति। यद्यप्युपसेचनशब्दो गौण एव निर्वाह्यः, तथापि साधारणाकारेणोपचारो न घटते, विशेषाकारसंभवात्। न ह्यग्निर्माणवक इत्युक्ते अग्निशब्दो द्रव्यत्वाभिप्रायेण वर्णनीयः। मृत्युः उपसेचनम्—अबाधक इत्युक्ते विशेषाकारोपस्थापनं न स्यात्; अबाधकत्वस्य लोष्टतृणादिसाधारणत्वात्। स्वयमद्यमानत्वे सत्यन्यस्यादनहेतुत्वं तु विशेषाकार इति तेनैवौपचारिकप्रयोगो युक्त इति भावः। साधारणाकारं विहायावान्तराकारेण गौणार्थो वर्णनीय इति न्यायोऽत्र व्युत्पादितः। परस्य जगत्संहारे मृत्यवपेक्षाऽपि नास्तीति असदुक्त एवार्थ इति शङ्कां परिहरन् फलितमाह **अत** इति। कृत्स्नजगत्संहारे मृत्यवपेक्षाभावेऽप्यत्र मृत्योरद्यमानत्वं व्यष्टिसंहारस्य तद्द्वारकत्वञ्चाभिप्रेतम्। एवं मृत्यूपसेचनत्वसामर्थ्यात् ब्रह्मक्षत्रशब्दौ कृत्स्नचराचरप्रदर्शनार्थाविति भावः। ततोऽपि किमित्यत्राह **ईदृश**मिति। सूत्रार्थमुपसंहरति **तस्मा**दिति। सोऽध्वन इत्यादिवाक्ये विष्णोः श्रूयमाणत्वात्, मृत्यूपसेचनत्वसामर्थ्यसिद्धचराचरादनीयत्वाच्च कृत्स्नजगदुपसंहर्तृत्वरूपमेवेदं भोक्तृत्वमिति नेदं कर्मनिमित्तम्। अतः परमात्मैवात्तेत्यर्थः ॥... .... ... ... ...

**प्रकरणाच्च** ॥ स्ववाक्यस्थहेतुः पूर्वमुक्तः; प्राकरणिकहेतुरत्रोच्यते। अस्य सूत्रस्य "न जायते म्रियते" इत्यादिवाक्यं विषयतया परैरुपात्तम्। तदयुक्तम्; पित्रादिमरणस्येव परमात्मनो हन्यमानत्वस्य लोकप्रसिद्ध्यभावेन तन्निषेधायोगात्। एतत्सरूपेण, "न जायते म्रियते वा कदाचित्" इति भगवद्गीतावचनेनास्य वाक्यस्य जीवपरत्वावगमात्। "उभौ तौ न विजानीतो नायं हन्ति न

1 ननु सूत्रेऽनुक्तस्यास्य प्रथमहेतुत्वेन गणनं भाष्ये एतद्घटनञ्च कथमिति चेत्—उच्यते। मृत्युपदस्वारस्यात् चराचरग्रहणे सिद्धे मृत्युञ्जयो व्यष्टिसंहर्ता रुद्र एव जीव एतदर्थः स्यादिति शंकायाम्, विष्णुवचनबलात् ब्रह्मरुद्ररूपसर्वव्यष्टिसंहारविवक्षेति ज्ञापनार्थं तदिति।

तनूं स्वाम्" इति हि प्रकृतम्। 'क इत्था वेद यत्र सः' इत्यपि हि तत्प्रसादादृते तस्य दुरवबोधत्वमेव पूर्वप्रस्तुतं प्रत्यभिज्ञायते ॥ १० ॥

अथ स्यात्—नायं ब्रह्मक्षत्त्रौदनसूचितः पुरुषोऽपहतपाप्मा परमात्मा; अनन्तरम् "ऋतं पिबन्तौ सुकृतस्य लोके गुहां प्रविष्टौ परमे परार्ध्ये। छायातपौ ब्रह्मविदो वदन्ति पञ्चाग्नयो ये च त्रिणाचिकेताः" इति कर्मफलभोक्तुरेव सद्वितीयस्याभिधानात्। द्वितीयश्च प्राणः, बुद्धिर्वा स्यात्। ऋतपानं हि कर्मफलभोग एव; स च परमात्मनो न संभवति; बुद्धिप्राणयोस्तु भोक्तुर्जीवस्योप-

---

हन्यते" इत्यनन्तरमन्त्रोक्तहन्तृहन्तव्यताभ्रान्तेः परमात्माश्रयत्वायोगेन जीवपरत्वोपपत्तेश्च । अतो "नायमात्मा" "महान्तं विभुम्" इत्यादिरेव विषयः। एकप्रकरणत्वं कथमित्यत्राह क इत्थेति। तत्प्रसादादृते तस्य दुरवबोधत्वस्य पूर्वोक्तस्य प्रत्यभिज्ञानादित्यर्थः ॥

कैश्चिदेवमुक्तम्—"अशरीरं शरीरेष्वनवस्थेष्ववस्थितम्" इति परमात्मनः शरीरेऽवस्थितिश्रवणात् 'यस्य ब्रह्म च क्षत्रं च' इत्यनेन श्लोकेन शरीरे हृदयप्रदेशे वा परस्य स्थितिरिति जिज्ञास्यते । अत एव हि, 'क इत्था वेद यत्र सः' इति वचनम्; न पुनः, कस्तं वेदेति ॥ तदनेन निरस्तं वेदितव्यम्, प्रश्नानुगुणप्रतिवचनादर्शनात्। ननु अनन्तरमेव दृश्यते, "ऋतं पिबन्तौ सुकृतस्य लोके गुहां प्रविष्टौ" इति इति चेत्—सत्यं श्रूयते; तत्र स्थानत्वेन किमुक्तम्? किं सुकृतस्य लोकः, उत गुहा?। तत्र सुकृतस्य लोक इति शरीरं वा, अन्यद्वा? उभयमपि शरीरसंबन्धिदेशविशेषो न भवतीति तत् नोत्तरं भवितुमर्हति। न च स्थानमात्रमेव पृष्टम्; 'अशरीरं शरीरेषु' इत्यनेनैव तत्सिद्धेः ॥ अथ गुहा स्थानत्वेन निर्दिष्टा, साऽपि पूर्वमेव ज्ञातेति न प्रश्नसंभवः। 'गुहाहितं गह्वरेष्ठं पुराणम्' इति हि श्रुतम्। 'यत्र सः' इत्येकवचनेन पृष्टे, 'पिबन्तौ' इति द्विवचनो(नेनो ?)त्तरं चानुचितम्। अतः 'क इत्था वेद' इति वाक्यस्य यथोक्त एवार्थः ॥.... ... .... ....

उत्तरसूत्रस्य शङ्कामाह अथ स्यादिति। प्रकरणविच्छेदं दर्शयति ऋतं पिबन्ताविति। लिङ्गाद्धि प्रकरणं दुर्बलम्। ऋतपानलिङ्गबलात् प्रकरणविच्छेदोऽत्र प्रतिपाद्यते ॥ 'यस्य ब्रह्म च' इति वाक्यापेक्षया 'महान्तं विभुम्' इत्यादिपरमात्मप्रकरणविच्छेदो मा भूत्। ऋतपानान्वयवाक्यं तु विच्छिन्नं स्यादिति शङ्कापरिहारार्थमनन्तरमित्युक्तम्। महान्तमित्यादिवाक्यानां [1]व्यवहितत्वाद्विच्छेदो युक्तः; न तु यस्य ब्रह्म चेत्यादिवाक्येनाव्यवहितस्य ऋतं पिबन्ताविति वाक्यस्येति भावः। द्वयोः समप्राधान्यशङ्कापरिहारार्थं सद्वितीयस्येत्युक्तम् ॥ अत्र भोक्तुर्जीवत्वं कथम्; द्वितीयस्य च बुद्धिप्राणयोरन्यतरत्वं कथम्; कथं न परमात्मत्वमित्यत्राह ऋतपानं हीति। कर्मफलभोग एवेति। न हि, सर्वसंहर्तृत्वमुच्यत इतिवत् ऋतपानस्य निर्वाहान्तरं सुवचमिति भावः। ततः किमित्यत्राह स चेति। भवदभिमतस्य कथं तत्संभव इत्यत्राह बुद्धीति। यथाकथञ्चित्—उपकरणत्वेनान्वय इत्यर्थः। करणे कर्तृत्वोपचारात् पिबन्तावि-

---

1 तस्यैष आत्मा विवृणुते तनूं स्वामित्यन्तस्य परमात्मपरत्वं तस्य प्राधान्येन निर्देशात्। नाविरत इति अजितेन्द्रियपुरुषप्रधानकत्वात् जीवपरम्। तेन व्यवहितत्वादत्र परमात्मा पूर्वोक्तो ग्राह्यः। अजितेन्द्रिय एव सर्वभक्षक उच्यते। भोक्तृत्वात्मैक्यश्चावश्यकमिति भावः। खण्डभेदस्तु काल्पनिकः।

करणभूतयोर्यथाकथञ्चित् पानेऽन्वयः संभवतीति तयोरन्यतरेण सद्वितीयो जीव एव प्रतिपाद्यते। तदेकप्रकरणत्वात् पूर्वंप्रस्तुतोऽत्रापि स एव भवितुमर्हतीति ॥ तत्रोच्यते—

**गुहां प्रविष्टावात्मानौ हि तद्दर्शनात् ॥ १-२-११ ॥**

न प्राणजीवौ बुद्धिजीवौ वा गुहां प्रविष्टौ ऋतं पिबन्तावित्युच्येते, अपि तु जीवपरमात्मानौ हि तथा व्यपदिश्येते। कुतः। तद्दर्शनात्। अस्मिन् प्रकरणे जीवपरयोरेव गुहाप्रवेशव्यपदेशो दृश्यते। परमात्मनस्तावत्, "तं दुर्दर्शं गूढमनुप्रविष्टं गुहाहितं गह्वरेष्ठं पुराणम्। अध्यात्मयोगाधिगमेन देवं मत्वा धीरो हर्षशोकौ जहाति" इति। जीवस्यापि, "या प्राणेन संभवत्यदितिर्देवतामयी। गुहां प्रविश्य तिष्ठन्ती या भूतेभिर्व्यजायत" इति। कर्मफलान्यत्तीत्यदितिः जीव उच्यते। प्राणेन संभवति—प्राणेन सह वर्तते। देवतामयी—इन्द्रियाधीनभोगा। गुहां प्रविश्य तिष्ठन्ती—हृदयपुण्डरीकोदरवर्तिनी। भूतेभिर्व्यजायत—पृथिव्यादिभिर्भूतैः सहिता देवादिरूपेण विविधा

---

त्युक्तमिति भावः। **तयोरन्यतरेण सद्वितीयो जीव एवेति।** अयमभिप्रायः—यद्यपि प्रयोजककर्तरि परमात्मनि उपकरणभूतबुद्धिप्राणयोरन्यतरस्मिन् वा पिबन्ताविति निर्देशस्य क्लिष्टत्वं समानम्—तथापि बुद्धिप्राणयोरन्यतरपरिग्रहो न्याय्यः। प्रथममेव पिबन्ताविति निर्देशेन भोक्ता जीवः प्रतिपन्न इत्यविगीतम्। द्वितीयविशेषे हि विप्रतिपत्तिः। तत्र गुहावच्छिन्नत्वं सुकृतसाध्यलोकवर्तित्वञ्च सर्वगतस्य परस्य स्वरसतो न संभवति। अप्रकाशप्रकाशरूपार्थपरच्छायातपशब्दाभ्यामचिदन्तःकरणचेतनोपस्थापनं युक्तम्। तत्र प्रथमत एवानेकैः पदैः स्वरसतः प्रतिपन्नस्य भोक्तुः प्राधान्येन प्रतिपाद्यत्वं यथा न विरुध्यते, तथा द्वितीयो वक्तव्यः। द्वितीयस्य परमात्मत्वे भोक्तुः प्राधान्येन प्रतिपाद्यत्वं विरुध्यते। उपकरणभूतान्तःकरणस्य द्वितीयत्वे भोक्तुः प्राधान्येन प्रतिपाद्यत्वं न विरुध्यत इति ॥ ततः किमतुर्जीवभावस्येत्यत्राह **तदेकेति** ॥... ... ... ...

**गुहां प्रविष्टावात्मानौ हि तद्दर्शनात्** ॥ ऋतं पिबन्ताविति निर्दिष्टव्येऽपि **गुहां प्रविष्टाविति** सूत्रयतोऽयं भावः—द्वितीयस्य पानं पक्षद्वयेऽपि क्लिष्टम्। बुद्धिप्राणयोरन्यतरपक्ष एव छायातपनिर्देशो लोकशब्दनिर्देशश्च घटताम्; गुहाप्रवेशस्तु न कथञ्चिदपि घटते। 'आत्मा गुहायां निहितः'. 'यो वेद निहितं गुहायाम्', 'गुहाहितं गह्वरेष्ठम्', 'विधूय कविरेलदनुतिष्ठेत गुहाशयम्', 'पूः प्राणिनः सर्व एव गुहाशयस्य' इति परमात्मनो गुहाप्रवेशव्यपदेशप्रसिद्धिप्राचुर्यात्; बुद्धिप्राणयोरन्यतरस्य तादृशप्रसिद्ध्यभावाच्चेति। एतमेवाभिप्रायं हृदि निधाय सूत्रे प्रतिज्ञाखण्डं व्याचष्टे **न प्राणजीवाविति। जीवपरमात्मानौ हीति।** सूत्रे हिशब्दः सौत्रार्थस्य परमसाध्योपपादकत्वसूचक इति भावः। सूत्रे प्रतिज्ञोपपादकं हेतुखण्डं व्याचष्टे **अस्मिन्निति। परमात्मनस्तावदिति।** गुहाप्रवेशव्यपदेशो दृश्यत इत्यन्वयः। **तं दुर्दर्शमिति। दुर्दर्शम्**—द्रष्टुमशक्यम्। कुतः? **गूढम्**—तिरोधायककर्मरूपाविद्यादिना तिरोहितत्वादित्यर्थः। **गुहाहितम्**—हृदयवर्तिनम्। **गह्वरेष्ठम्**—आत्मान्तर्यामिणम्, परमव्योमनिलयं वा। **अध्यात्मयोगाधिगमेने**ति परोपासनस्य जीवोपासनमङ्गत्वेन विधीयते; जीवपरयोरुभयोरपि प्रकरणप्रतिपाद्यमानत्वात्। **जीवस्यापीति।** गुहाप्रवेशव्यपदेशो दृश्यत इत्यन्वयः। **अदितिशब्दस्य** देवमातरि, भूमौ च वेदप्रसिद्धेः तद्व्यावृत्त्यर्थमवयवशक्त्या जीववाचित्वं दर्शयति **कर्मफलानीति** रूढार्थस्य गुहाप्रवेशासंभवात् योगपरिग्रह इति भावः। **कर्मफलशब्देन** ऋतशब्दार्थोऽपि दर्शितो

जायते। एवञ्च सति 'ऋतं पिबन्तौ' इति व्यपदेशः छत्रिणो गच्छन्तीतिवत्प्रतिपत्तव्यः। यद्वा प्रयोज्यप्रयोजकरूपेण पाने कर्तृत्वं जीवपरयोरुपपद्यते ॥ ११ ॥

विशेषणाच्च ॥ १-२-१२ ॥

अस्मिन् प्रकरणे जीवपरमात्मानावेवोपास्यत्वोपासकत्वप्राप्यत्वप्राप्तृत्वविशिष्टौ सर्वत्र प्रतिपाद्येते। तथा हि, "ब्रह्मजज्ञं देवमीड्यं विदित्वा निचाय्येमां शान्तिमत्यन्तमेति" इति। ब्रह्मजज्ञो जीवः, ब्रह्मणो जातत्वात् ज्ञत्वाच्च। तं देवमीड्यं विदित्वा—जीवात्मानमुपासकं ब्रह्मात्मकत्वेनावगम्येत्यर्थः। तथा, "यः सेतुरीजानानामक्षरं ब्रह्म यत् परम्। अभयं तितीर्षतां पारं नाचिकेतं शकेमहि" इत्युपास्यः परमात्मोच्यते। नाचिकेतम्—नाचिकेतस्य कर्मणः प्राप्यमित्यर्थः। "आत्मानं रथिनं विद्धि शरीरं रथमेव च" इत्यादिना उपासको जीव उच्यते। तथा "विज्ञानसारथिर्यस्तु मनःप्रग्रहवान्नरः। सोऽध्वनः पारमाप्नोति तद्विष्णोः परमं पदम्" इति प्राप्यप्राप्तारावभिधीयेते जीवपरमात्मानौ। इहापि छायातपावित्यज्ञत्वसर्वज्ञत्वाभ्यां तावेव विशिष्य व्यपदिश्येते ॥

अथ स्यात्—"येयं प्रेते विचिकित्सा मनुष्येऽस्तीत्येके नायमस्तीति चैके" इति जीवस्वरूपयाथात्म्यप्रश्नोपक्रमत्वात् (मात्) सर्वमिदं प्रकरणं जीवपरमिति प्रतीयत इति॥ नैतदेवम्, न हि

---

भवति छत्रिणो गच्छन्तीति न्यायेन निर्वाहे लाक्षणिकत्वं स्यादिति मुख्यकल्पनिर्वाहमाह यद्वेति। मुख्यत्वेऽप्यस्वारस्यमात्रमस्ति, लाक्षणिकत्वादपि तत् वरम्। बुद्धिप्राणयोरन्यतरपरत्वमतीवास्वरसम्। करणत्वेन हि तयोरन्वयः। परमात्मनस्तु "तत्प्रयोजको हेतुश्च" इत्युक्तप्रक्रियया प्रयोजककर्तृतायाः कर्तृत्वविशेषत्वात् तद्वाचित्वे पिबन्ताविति निर्देशः स्वरस इति भावः। पिबन्ताविति निर्देशस्वारस्यमुभयोश्चेतनत्व एव घटते। [गुहां प्रविष्टावित्यपि।?] उभौ गृहं प्रविष्टाविति निर्देशो हि न दण्डसद्वितीयपुरुषविषयः, अपि तु पुरुषद्वयविषयः। ब्रह्मविदो वदन्तीत्युक्तत्वाच्च जीवसद्वितीयपरमात्मपरत्वं युक्तम्। एवं निर्वाहद्वयेनापि प्रकरणविच्छेदकलिङ्गत्वेन पराभिमतस्य ऋतपानान्वयस्य अन्यथासिद्धिरुक्ता भवति। गत्यभावे यदमुख्यम्, तत्र द्वयोः प्रतिपन्नयोः, प्रकरणानुगुणस्य ग्राह्यत्वम्, सजातीययोरेव द्विवचननिर्देशार्हत्वं चेति न्यायद्वयमत्र शिक्षितम् ॥ ११ ॥

विशेषणाच्च ॥ तत्तद्वाक्योदितविशेषणान्तराणि च प्राप्यत्वप्राप्तृत्वोपास्यत्वोपासकत्वान्तर्भूतानीत्यभिप्रायेण उपास्यत्वोपासकत्वप्राप्यत्वप्राप्तृत्वविशिष्टावित्युक्तम्। ब्रह्मजज्ञमित्युपासकं वदति। शकेमहि। उपासितुं प्राप्तुमिति शेषः। आत्मानं रथिनमित्यादि। शरीराद्युपासनपरिकरसहितो जीव उच्यत इत्यर्थः। इहापि—ऋतं पिबन्ताविति वाक्येऽपि। अज्ञत्वसर्वज्ञत्वाभ्यामित्यनेन 'ज्ञाज्ञौ द्वौ' इति वाक्यं स्मारितम्। उदाहृतवाक्यैकार्थ्यात् छायातपशब्दयोरप्ययमेवार्थः। विशेषणाच्च इति सूत्रे छायातपत्वरूपविशेषणमपि विवक्षितमिति भावः ॥

उत्तरत्र "त्रयाणामेव चैवम्..." इत्यादिसूत्रेण वक्ष्यमाणत्वेपि[1] चोद्यस्य बुद्धिस्थत्वात् सुग्रहत्वाय तत्पूर्वकं परिहारमाह अथ स्यादिति। अस्मिन् प्रकरणे जीवपरमात्मनोर्विशेष्यत्वमयुक्तम्, उपक्रमस्य जीवपरत्वादित्याह येयमिति। परिहरति नैतदिति। वरद्वयं किम्, तद्वरणानुपपत्तिः

---

1 तत् सूत्रमव्यक्तादिपरत्वव्युदासकम्। अत्रैवाक्षेपोऽयं सारावलि-दर्पणादिदिशा भवन् परिहर्तव्यः इति भाव्यम्। अत एव, चोद्यस्य बुद्धिस्थ त्वादित्युक्तम्।

जीवस्य देहातिरिक्तस्यास्तित्वनास्तित्वशङ्कयाऽयं प्रश्नः; तथा सति पूर्ववरद्वयवरणानुपपत्तेः। तथा हि पितुः सर्ववेदसदक्षिणक्रतुसमाप्तिवेलायां दीयमानदक्षिणावैगुण्येन क्रतुवैगुण्यं मन्यमानेन कुमारेण नचिकेतसा आस्तिक्यातिरेकेण स्वात्मदानेनापि पितुः क्रतुसाद्गुण्यमिच्छता, 'कस्मै मां दास्यसि' इत्यसकृत् पितरं पृष्टवता, स्वनिर्बन्धरूपपितृवचनात् मृत्युसदनं प्रविष्टेन, स्वसदनात्प्रोषुषि यमे तददर्शनात् तत्र तिस्रो रात्रीरुपोषुषा, स्वोपवासभीततत्प्रतिविधानप्रवृत्तमृत्युप्रत्त वरत्रये आस्तिक्यातिरेकात् प्रथमेन वरेण स्वात्मानं प्रति पितुः प्रसादो वृतः। एतच्च सर्वं देहातिरिक्तमात्मानमजानतो नोपपद्यते। द्वितीयेन च वरेणोत्तीर्णदेहात्मानुभाव्यफलसाधनभूता अग्निविद्या वृता। तदपि देहातिरिक्तात्मानभिज्ञस्य न संभवति। अतस्तृतीयेन वरेण यदिदं व्रियते, "येयं प्रेते विचिकित्सा मनुष्ये अस्तीत्येके नायमस्तीति चैके। एतद्विद्यामनुशिष्टस्त्वयाऽहं वराणामेष वरस्तृतीयः" इति-अत्र परमपुरुषार्थरूपब्रह्मप्राप्तिलक्षणमोक्षयाथात्म्यविज्ञानाय तदुपायभूतपरमात्मोपासन-परावरात्मतत्त्व-जिज्ञासयाऽयं प्रश्नः क्रियते। एवञ्च 'येयं प्रेते' इति न शरीरवियोगमात्राभिप्रायम्; अपि तु सर्वबन्धविनिर्मोक्षाभिप्रायम्। यथा 'न प्रेत्य संज्ञाऽस्ति' इति। अयमर्थः---मोक्षाधिकृते मनुष्ये प्रेते---सर्वबन्धविनिर्मुक्ते तत्स्वरूपविषया वादिविप्रतिपत्तिनिमित्ता अस्तिनास्त्यात्मिका येयं विचिकित्सा, तदपनोदनाय तत्स्वरूपयाथात्म्यं त्वयाऽनुशिष्टोऽहं विद्याम्---जानीयामिति।

तथा हि बहुधा विप्रतिपद्यन्ते---केचित् वित्तिमात्रस्यात्मनः स्वरूपोच्छित्तिलक्षणं मोक्षमाचक्षते। अन्ये वित्तिमात्रस्यैव सतोऽविद्यास्तमयम्। अपरे पाषाणकल्पस्यात्मनो ज्ञानाद्यशेषवैशेषिकगुणोच्छेदलक्षणं कैवल्यरूपम्। अपरे तु अपहतपाप्मानं परमात्मानमभ्युपगच्छन्तः तस्यैवोपाधिसंसर्गनिमित्तजीवभावस्योपाध्यपगमेन तद्भावलक्षणं मोक्षमातिष्ठन्ते। त्रय्यन्तनिष्णातास्तु---निखिलजगदेककारणस्य अशेषहेयप्रत्यनीकानन्तज्ञानानन्दैकस्वरूपस्य स्वाभाविकानवधिकातिशया-

---

कथमित्यत्राह **तथा हीति**। पितृप्रसादवरणस्य अग्निविद्यावरणस्य च प्रत्येकनिरपेक्षहेतुत्वसूचनार्थम् **'एतच्च सर्वं'**, **'तदपि'** इति द्विरुक्तम्। **अत्र परमेति**। अत्र---यदिदं व्रियते---यद्वरणं क्रियते, तत्र वरणे इत्यर्थः। **मोक्षयाथात्म्यविज्ञानाय तदुपायभूतपरमात्मोपासनपरावरात्मतत्त्वजिज्ञासयेति**। मोक्षज्ञानाय मोक्षानुबन्धिजिज्ञासयाऽयं प्रश्न इत्यर्थः। येयमित्यादिप्रश्नवाक्ये मोक्षस्वरूपप्रश्नः कण्ठोक्तः। प्रतिवचनप्रकारेणोपासनादिप्रश्नश्चार्थसिद्ध इत्यवगम्यते। एवं विभागज्ञापनार्थं **'विज्ञानाय' 'जिज्ञासया'** इति पृथगुक्तिः। मोक्षप्राप्तिप्रश्ने प्राप्यप्रापकप्राप्तृप्रश्नोऽप्यन्तर्गत इति भावो दर्शितो भवति। निर्विशेषतापत्तिर्मोक्षश्चेत्, वाक्यार्थज्ञानस्योपायता स्यात्। उभयलिङ्गकं प्राप्यं चेत्, तथात्वेनोपासनमुपायस्स्यात्। अतो मोक्षस्वरूपज्ञानं तदनुबन्धिज्ञानापेक्षम्। एवं प्रश्नस्य ज्ञातेतरविषयत्वात् प्रतिवचनानुरूप्याच्च यथोक्त एवार्थः। प्रेतपदस्य उत्क्रान्तिपरत्वे श्रुत्यन्तरसंवादं दर्शयति **यथेति**। "न प्रेत्य संज्ञाऽस्ति" इति श्रुतिः। कः पुनः वाक्यार्थः; न हि मनुष्यमात्रस्य बन्धविनिर्मोक्षसंभव इत्यत्राह **अयमर्थ इति**। **अस्तिनास्त्यात्मिका**---अस्तिनास्तीत्येवमादिरूपा। **विद्यामिति** पदस्य द्वितीयान्तकारकपदत्वशङ्कां निवर्तयन् व्याचष्टे **जानीयामिति**। विप्रतिपत्तिं दर्शयति **तथा हीति**। कारणशोधक[1]गुणप्रतिपादकवाक्यार्थविशिष्टमाह **निखिलजगदेककारणस्येत्यादि**। अनुकूलापरिच्छिन्न-

---

1 शोधकपदमिह वैलक्षण्यावहधर्मपरम्। न तु वाक्यपरम्। तथा च कारणस्य, शोधकधर्मस्य, गुणानाञ्च प्रतिपादकेत्यर्थः।

सङ्ख्येयकल्याणगुणाकरस्य सकलेतरविलक्षणस्य सर्वात्मभूतस्य परस्य ब्रह्मणः शरीरतया प्रकार-भूतस्यानुकूलापरिच्छिन्नज्ञानस्वरूपस्य परमात्मानुभवैकरसस्य जीवस्यानादिकर्मरूपाविद्यातिरोहित-स्वरूपस्याविद्योच्छेदपूर्वकस्वाभाविकपरमात्मानुभवमेव मोक्षमाचक्षते। तत्र मोक्षस्वरूपं तत्साधनं च त्वत्प्रसादात् विद्यामिति नचिकेतसा पृष्टो मृत्युः तस्यार्थस्य दुरवबोधत्वप्रदर्शनेन, विविधभोग-वितरणप्रलोभनेन चैनं परीक्ष्य योग्यतामभिज्ञाय परावरात्मतत्त्वविज्ञानं परमात्मोपासनं तत्पद-प्राप्तिलक्षणं मोक्षञ्च, "तं दुर्दर्शं गूढमनुप्रविष्टम्" इत्यारभ्य "सोऽध्वनः पारमाप्नोति तद्विष्णोः परमं पदम्" इत्यन्तेन उपदिश्य, तदपेक्षितांश्च विशेषान् उपदिदेशेति सर्वं समञ्जसम्। अतः परमात्मैवात्तेति सिद्धम्॥ इति अत्त्रधिकरणम्॥ २॥

---

ज्ञानस्वरूपस्येति। स्वरूपशब्दो धर्मधर्मिणोः साधारणः। तत्रेत्यादि। परावरात्मतत्त्वविज्ञानम्—[1]ज्ञातव्यपरावरात्मतत्त्वम्; उपदिश्येत्यन्वयः। तदपेक्षितांश्च विशेषान्—प्रणवाग्निविद्यादीन्। अधिकरणार्थमुपसंहरति अत इति।

अत्तेति सूत्रे स्ववाक्यस्थहेतुरुक्तः। प्राकरणिकपूर्ववाक्यस्थहेतुपरं द्वितीयम्। अनन्तरवाक्यशङ्का-परिहारपरं तृतीयम्। अतस्तत्र चशब्दाप्रयोगः। उपरितनवाक्यस्थहेतुभिस्तृतीयसूत्रार्थोपपादकं चतुर्थमिति सूत्रसङ्गतिः। .... .... ... ... ...

'गुहां प्रविष्टावात्मानौ' इत्यादिसूत्रद्वयमधिकरणान्तरं केचिदाहुः।—तदयुक्तम्; एकप्रकरणस्थ-वाक्यविशेषविषयाणामधिकरणान्तर[2]पादान्तराव्यवहितानामुपजीव्योपजीवकभावेन परस्परान्वितार्थप्रतिपाद-कानां सूत्राणां विषयवाक्यभेदे सत्यपि भिन्नाधिकरणत्वाभावात्। ईक्षत्यानन्दमयाधिकरणादिषु, "तन्निष्ठस्य मोक्षोपदेशात्", "प्रतिज्ञाविरोधात्', 'तद्धेतुव्यपदेशाच्च", "मान्त्रवर्णिकमेव च गीयते" इत्यादीनां सूत्राणां पूर्वापरबहुवाक्यविषयत्वेऽप्यव्यवहितत्वात् परस्परोपजीव्योपजीवकभावेन अन्वितार्थपरतयाऽपि ह्यैकाधिकरण्यम्। "अदृश्यत्वादिगुणकः', 'द्युभ्वाद्यायतनम्' इत्यधिकरणयोस्तु एकप्रकरणस्थानेकवाक्यविषयत्वेऽपि भेद उपपद्यते। स्पष्टास्पष्टलिङ्गकवाक्यविषयत्वेनैकस्मिन् पादे सङ्गत्यनुपपत्तेः; उपजीव्योपजीवकभावाभावाच्च। न हि 'यस्मिन् द्यौः पृथिवी' इत्यादिवाक्यस्य परमात्मपरत्वम् अदृश्यत्वादिगुणकस्य अक्षरात्परतः परस्य च परमात्मत्वोपपादकम्; परप्रकरणेऽपि तच्छेषत्वेन अपरमात्मप्रधानादिप्रतिपादनोपपत्तेः। अतः उपजीव्योपजीवकभावाभावादधिकरणभेदस्तत्र युक्तः। इह तु पूर्ववाक्यप्रतिपन्नमत्तृत्वं कर्मफलभोक्तृस्वरूपमित्यनन्तरवाक्येन प्रतिपन्ने सति तस्यात्तुः परमात्म-त्वानुपपत्तेरनन्तरवाक्यस्य परमात्मपरत्वोपपादनमत्तुः परमात्मत्वोपयुक्तमेव। एवमेकप्रकरणस्थवाक्यविषयत्वे सति अधिकरणान्तरपादान्तराव्यवहितत्वे च सति परस्परोपयुक्तार्थप्रतिपादकानां सूत्राणामैकाधि-करण्यमेवोचितम्; अन्यथा ईक्षत्यधिकरणादिष्वपि एकैकाधिकरणस्थसूत्राणामधिकरणभेदकल्पना प्रसजेत्। अतः ऐकाधिकरण्ये स्थित एव अवान्तरशङ्काविशेषपरिहारपरं सूत्रद्वयं व्याख्यातव्यम्। व्याख्यातञ्च भगवता भाष्यकारेण॥

सूत्रभङ्गी च ऐकाधिकरण्य एवोपपद्यते; एकस्मिन् सूत्रे हिशब्दपञ्चम्यन्तपदयोः श्रवणात्।

---

1 उपासनस्य पृथगुक्तत्वात् तत्त्वपरतया व्याख्याति ज्ञातव्येति। 2 पादान्तरेति नावश्यकम्। पादान्तरस्थत्वेऽपि पादव्यवहितत्वं द्युभ्वाद्यधिकरणे नास्ति च।

## अन्तराधिकरणम् १-२-३

### अन्तर उपपत्तेः ॥ १-२-१३ ॥

इदमामनन्तिच्छन्दोगाः ''य एषोऽक्षणि पुरुषो दृश्यते। एष आत्मेति होवाच एतदमृतमेतदभयमेतद्ब्रह्म' इति। तत्र संदेहः—किमयमक्ष्याधारतया निर्दिश्यमानः पुरुषः प्रतिबिम्बात्मा, उत चक्षुरिन्द्रियाधिष्ठाता देवताविशेषः, उत जीवात्मा, अथ परमात्मा इति। किं युक्तम्?

---

गुहां प्रविष्टयोरात्मत्वसाधकं पञ्चम्यन्तपदम्, अतुः परमात्मत्वोपपादकतां सूत्रार्थस्य दर्शयति **हि**शब्दः। 'सर्वगतस्य ब्रह्मणो गुहावच्छिन्नत्वायोगात् गुहागतौ बुद्धिजीवौ; न [1]पर इति गुहां प्रविष्टाविति सूत्रखण्डः पूर्वपक्षपर इति योजनाऽनुपपन्ना; 'विकारशब्दान्नेति चेत्', 'जीवमुख्यप्राणलिङ्गान्नेति चेत्', 'संभोगप्राप्तिरिति चेत्' इतिवत् पूर्वपक्षद्योतकनिर्देशाभावात्। 'अर्भकौकस्त्वात्' इति पूर्वाधिकरणसूत्रेण गुहावच्छेदनिबन्धनशङ्कायाः परिहृतत्वाच्च। **आत्मानावि**ति प्रतिज्ञायां **हि**शब्दोपपादितायाम्, **तद्दर्शना**दिति सूत्रखण्डस्य प्रतिज्ञान्तरमध्याहर्तव्यम्, गुहावच्छेदोऽपि परस्योपपन्न इति। अनध्याहारेण योजना संभवति चेत्, सैव वरम्। तस्मात् पञ्चम्यन्तपदोपपादितसौत्रार्थस्य परमसाध्योपपादकत्वद्योतको **हि**शब्दः। अतश्च औचित्यात् [2]कृतकरत्वात् सूत्रशैल्याश्च युक्तमैकाधिकरण्यं सूत्रचतुष्टयस्य।

"द्वा सुपर्णा" इति वाक्ये अत्रत्यन्यायातिदेशश्चानुपपन्नः; 'स्थित्यदनाभ्यां च' इति सूत्रेण निरूपयिष्यमाणस्य तस्यैतन्न्यायसापेक्षत्वाभावात्। न चास्याधिकरणस्य तद्वाक्यसापेक्षत्वादिह तत्प्रस्तावः; अस्याधिकरणस्य अत्रत्यन्यायातिदेशसापेक्षवाक्यान्तरोपपाद्यत्वे अन्योन्याश्रयप्रसङ्गात्। तस्य च वाक्यस्य बुद्धिजीवपरत्वं भवदभिमतम्। तच्चेह न वक्तव्यम्; प्रकृतानुपयोगात्। 'ऋतं पिबन्तौ' इति वाक्यस्य जीवसद्वितीयपरमात्मविषयत्वे वाक्यान्तरस्य बुद्धिजीवपरत्वं कथमुपयुज्यते। तस्य च वाक्यस्य बुद्धिजीवविषयत्वं पूर्वं निरस्तम्; निरसिष्यते च। अतो भाष्यसंदर्शिता सरणिरेव साधीयसी॥ ॥ इति अत्त्राधिकरणम्॥

**अन्तर उपपत्तेः**॥ अत्र सङ्गतिः पूर्वोक्तया दिशा सिद्धेति न कण्ठोक्ता। "गूढोत्मा न प्रकाशते, "तं दुर्दर्शं गूढमनुप्रविष्टम्", "क इत्था वेद" इति च परमात्मा दुर्दर्शश्चेत्, सुदर्शतया प्रसिद्धत्वेन निर्दिष्टो न परमात्मा भवितुमर्हतीति शङ्कया सङ्गतिः। विषयादिकं दर्शयति **इदमित्यादि**। किमक्ष्याधारतया निर्दिश्यमानः प्रतिबिम्ब-चक्षुरधिष्ठातृ-जीवानामन्यतमः, उत परमात्मेति; तदर्थं किमत्मामृतत्वादयो यथाकथञ्चिन्नेयाः, उत मुख्याः; कं ब्रह्मेति प्रकृतमेव ब्रह्मेह किमुपासनस्थानगुणविधानार्थं निर्दिश्यते, उत नेति; किं मध्यस्थाग्निविद्यया ब्रह्मप्रकरणं विच्छिन्नम्, उत न; किमग्निविद्या ब्रह्मविद्याङ्गम्, उत न; किमग्निविद्याफलं ब्रह्मविद्याङ्गत्वानुगुणम्, उत न—इति विचारः। यदा अननुगुणम्, तदा अग्निविद्यायाः ब्रह्मविद्याङ्गत्वाभावेन ब्रह्मप्रकरणविच्छेदेन पूर्वप्रकृतब्रह्मण इह परामर्शाभावेन अमृतत्वादीनाममुख्यतया प्रतिबिम्बादिष्वन्यतम इति फलितम्। सिद्धान्ते—यदा त्वनुगुणम्, तदा अङ्गत्वेनाग्निविद्यायाः ब्रह्मविद्याप्रकरणविच्छेदकत्वाभावेन प्रकृतब्रह्मण इह परामर्शसंभवेन अमृतत्वादीनां च स्वतःप्राप्तमुख्यत्वसिद्धेः परमात्मेति फलितम्। अपरोक्षप्रसिद्धिः, यौक्तिकप्रसिद्धिः,

---

1 न जीवपरावित्युक्तावपि जीवस्य तद्वेष्टत्वात् परनिषेध एव पर्यवसानात् तावदेवोक्तम्।

2 अर्भकौकस्त्वादिति सूत्रेणैव शंकापरिहारादित्यर्थः भा० प्र०

प्रतिबिम्बात्मेति । कुतः । प्रसिद्धवन्निर्देशात् ; 'दृश्यते' इत्यपरोक्षाभिधानाच्च । जीवात्मा वा । तस्यापि हि चक्षुषि विशेषेण सन्निधानात् प्रसिद्धिरुपपद्यते । उन्मीलितं हि चक्षुरुद्वीक्ष्य जीवात्मनः शरीरे स्थितिगती निश्चिन्वन्ति । 'रश्मिभिरेषोऽस्मिन् प्रतिष्ठितः' इति श्रुतिप्रसिद्ध्या चक्षुः-प्रतिष्ठो देवताविशेषो वा । एष्वेव प्रसिद्धवन्निर्देशोपपत्तेरेषामन्यतमः—

इति प्राप्ते प्रचक्ष्महे—अन्तर उपपत्तेः । अक्ष्यन्तरः परमात्मा । कुतः ? "एष आत्मेति होवाचैतदमृतमेतदभयमेतद्ब्रह्मेति", "एतं संयद्वाम इत्याचक्षते । एतं हि सर्वाणि वामान्यभिसंयन्ति । एष उ एव वामनीः । एष हि सर्वाणि वामानि नयति । एष उ एव भामनीः । एष हि सर्वेषु लोकेषु भाति" इत्येषां गुणानां परमात्मन्येवोपपत्तेः ॥ १३ ॥

स्थानादिव्यपदेशाच्च ॥ १-१-१४ ॥

चक्षुषि स्थितिनियमनादयः परमात्मन एव, "यश्चक्षुषि तिष्ठन्" इत्येवमादौ व्यपदिश्यन्ते । अतश्च 'य एषोऽक्षिणि पुरुषः' इति स एव प्रतीयते । अतः प्रसिद्धवन्निर्देशश्च परमात्मन्युपपद्यते ।

---

श्रुतिप्रसिद्धिश्चेति यथाक्रमं प्रतिबिम्बजीवादित्यानामनुसंधेयाः । य एष इति पदाभ्यां प्रसिद्धवन्निर्देशः । दृश्यत इत्यपरोक्षाभिधानम् । अनेन सङ्गतिरभिप्रेता । संनिधानात्—संनिधानावगमात् । जीवस्य देहसंनिधेश्चक्षुष्यवगमादित्यर्थः । तदेव विवृणोति उन्मीलितं हीति । अस्मिन् कर्मणि अस्य सामर्थ्यं दृष्टमित्युक्ते यथा तत्कर्म तत्सामर्थ्यसूचकमित्युक्तं भवति—एवमक्षिणि दृश्यत इत्युक्ते, देहे जीवावस्थानं चक्षुरधीननिश्चयमित्युक्तं भवतीत्यर्थः । उपक्रमानुगुणमन्यन्नेयम् । तस्मादमृतत्वसंयद्वामत्वाद्युक्तिः स्तुतिरूपा । एष आत्मेति इति इतिकरणं च अर्थतात्पर्यद्योतकम् । देवताविशेषः—आदित्यः । एष्वेव—न तु परमात्मनि ॥ ... ...

राद्धान्ते—एषां गुणानामिति । निरुपाधिका अमृतत्वादयो न जीवादिषु संभवन्तीत्यर्थः । एषामिति । उपक्रमस्थमेकं लिङ्गमुपरितनानेकगुणविरोधे दुर्बलम् । अत एव च नामृतत्वाद्युक्तिः स्तुतिरिति भावः । 'इति होवाच', 'इत्यब्रवीत्' इत्यादिष्वितिकरणमर्थपरमेव दृष्टमिति चानुसंधेयम् । उपपत्तेः अक्ष्यन्तरः परमात्मेत्यन्वयः । [1]"तत् यद्यप्यस्मिन् सर्पिर्वोदकं वा सिञ्चति, वर्त्मनी ह्येव गच्छति" इत्यर्थवादोक्तं सर्पिरुदकादिनिर्लेपत्वं हेतुं कृत्वा निर्लेपस्य परस्य निर्लेपे चक्षुषि स्थितिरुपपन्नेति वक्तुमयुक्तम्, काचादिभिः सलेपे चक्षुषि निर्दोषस्य परस्य स्थित्यनुपपत्तेश्च वक्तुं शक्यत्वात् ॥

स्थानादिव्यपदेशाच्च ॥ अनवस्थितेरिति व्यतिरेकस्य वक्ष्यमाणत्वात् 'चक्षुषि तिष्ठन्' इति श्रुत्यनुरोधेन स्थानशब्दः स्थितिपरतया व्याख्यातः ; न तु प्रदेशपरतया । सौत्रस्य आदिशब्दस्यार्थमाह नियमनेति । आदिशब्दस्य नामरूपान्वयपरत्वेन व्याख्यानमयुक्तम् ; जीवात्मनि संभवतस्तस्य [2]परमात्मसाधकत्वाभावादिति भावः । स्थितिनियमनादय इत्यादिशब्देन धारकत्वादिरभिप्रेतः । अस्य हेतोः सिद्धान्तसाधकत्वं दर्शयति अतश्चेति । अनेन सिद्धान्तसाधकहेतुं [3]वदता पूर्वपक्षहेतोरन्यथा-सिद्धिश्च फलिता ; तामाह अतः प्रसिद्धवदिति । श्रुतिप्रसिद्धत्वात् प्रसिद्धवन्निर्देशः पूर्वपक्षिणोक्तः

---

1 उपपत्तिशब्दार्थतया परोक्तेषु भाष्यकारत्यक्तमेकम् । तत्र कारणमाह तदिति ।

2 सिद्धान्तहेतुवाचिना अनेन सौत्रपदेनेत्यर्थः ; फलितेत्यत्रान्वयात् । 3 ननु न परमात्मत्वसाधकतया तदुपन्यासः, किं तु आशयान्तरेणेति चेत्—एतत्खण्डनमुपरि करिष्यते ।

तत एव 'दृश्यते' इति साक्षात्कारव्यपदेशोऽपि योगिभिर्दृश्यमानत्वादुपपद्यते ॥ १४ ॥

सुखविशिष्टाभिधानादेव च ॥ १-१-१५ ॥

इतश्चाक्ष्याधारः पुरुषोत्तमः; "कं ब्रह्म खं ब्रह्म" इति प्रकृतस्य सुखविशिष्टस्य ब्रह्मणः उपासनस्थानविधानार्थं संयद्वामत्वादिगुणविधानार्थं च, 'य एषोऽक्षणि पुरुषः' इत्यभिधानात्। एवकारो नैरपेक्ष्यं हेतोर्द्योतयति ॥

नन्वग्निविद्याव्यवधानात् 'कं ब्रह्म' इति प्रकृतं ब्रह्म नेह संनिधत्ते। तथा हि अग्नयः 'प्राणो ब्रह्म कं ब्रह्म खं ब्रह्म' इति ब्रह्मविद्यामुपदिश्य, "अथ हैनं गार्हपत्योऽनुशशास" इत्यारभ्याग्नीनामुपासनमुपदिदिशुः। न चाग्निविद्या ब्रह्मविद्याङ्गमिति शक्यं वक्तुम्; ब्रह्मविद्याफलेनान्तर्गततद्विरोधिसर्वायुःप्राप्तिसन्तत्यविच्छेदादिफलश्रवणात् ॥ उच्यते। 'प्राणो ब्रह्म' 'एतदमृतमेतदभयमेतद्ब्रह्म' इत्युभयत्र ब्रह्मसंशब्दनात्, "आचार्यस्तु ते गतिं वक्ता" इत्यग्निवचनाच्च गत्युपदेशात्पूर्वं ब्रह्मविद्याया असमाप्तेः तन्मध्यगता अग्निविद्या ब्रह्मविद्याङ्गमिति निश्चीयते। 'अथ हैनं गार्हपत्योऽनुशशास' इति ब्रह्मविद्याधिकृतस्यैवाग्निविद्योपदेशाच्च। किञ्च 'व्याधिभिः प्रतिपूर्णोऽस्मि' इति ब्रह्मप्राप्तिव्यतिरिक्तनानाविधकामोपहतिपूर्वकगर्भजन्मजरामरणादिभवभयोपतप्तायोपकोसलाय, "एषा सोम्य

---

असत्पक्षेऽपि संभवतीति। पूर्वपक्षहेत्वन्तरस्य चान्यथासिद्धिं सूत्राभिप्रेतां दर्शयति **तत एवेति**। **तत एव**—श्रुतिप्रसिद्धेरेव। शास्त्रप्रतिपन्नं हि तत्त्वं योगिभिरुपास्यं दृश्यञ्च; 'यत्तदद्रेश्यम्' इत्युक्त्वा, 'परिपश्यन्ति धीराः' इत्युक्तेः, 'गूढोऽस्मा न प्रकाशते। दृश्यते त्वग्र्यया बुध्या सूक्ष्मया सूक्ष्मदर्शिभिः' इत्युक्तेश्च। अतोऽर्थतः शब्दतश्च श्रुत्यन्तरप्रसिद्धेरिति भावः।

यादसां समुद्रादिवत् स्थानिनः परमात्मनोऽक्षिस्थानात् परिच्छिन्नत्वशङ्काव्युदासपरत्वं [1]सूत्रस्यायुक्तम्; अर्भकौकस्त्वादिति सूत्रेण तस्याः परिहृततया[अत्र]शङ्कानुदयात्। अतः साधकान्तरप्रदर्शनपरमिदं सूत्रम्। प्रसिद्धवन्निर्देशापरोक्षाभिधानरूपपूर्वपक्षयुक्तिद्वयं चार्थात् परिहृतम् ॥

**सुखविशिष्टाभिधानादेव च ॥ सुखविशिष्टम्**—सुखत्वविशिष्टम्; "द्व्येकयोः" इतिवत्। तद्गुणसारत्वादिति न्यायेन धर्मभूतसुखविशिष्टमिति वा। कं ब्रह्म खं ब्रह्म 'इत्युक्तस्य ब्रह्मणः पुनरभिधानं किमर्थमित्यत्राह **उपासनस्थानेति**। 'एतदमृतमेतदभयमेतद्ब्रह्म' इति ब्रह्मशब्देन कं ब्रह्मेत्युक्तस्य ब्रह्मणः प्रत्यभिज्ञानादित्यर्थः। एवकारप्रयोजनमाह **एवेति**। पूर्वसूत्रद्वयोक्तं हेतुद्वयं व्यतिरेकोक्तिसापेक्षम्; 'अनवस्थितेरसंभवात्' इति हि वक्ष्यते। अयं तु हेतुर्व्यतिरेकोक्तिनिरपेक्ष इति भावः ॥

प्रकरणविच्छेदं दर्शयन् चोदयति **नन्विति**। कथमग्निविद्याव्यवधानमित्यत्राह **तथा हीति**। तर्हि अङ्गाङ्गिभावेनाविरोध इत्यत्राह **न चेति**। "फलवत्संनिधावफलं तदङ्गम्" इति न्यायादिति भावः। अङ्गानामप्यङ्गिफलाविरुद्धफलमुपपद्यत इति शङ्कापरिहारार्थं **तद्विरोधी**त्युक्तम्। प्रकरणाविच्छेदेन परिहरति **उच्यत इति**। उभयत्र उपक्रमोपसंहारयोः ब्रह्मसंशब्दनम्, अग्निविद्यायाः प्राक् ब्रह्मविद्यायाः असमाप्तिः, ब्रह्मविद्याधिकृतस्य अग्निविद्योपदेशः, तापत्रयातुरस्य तच्छान्त्यर्थमुभयोः समुच्चित्योपदेशश्चेति हेतुचतुष्टयेनाङ्गाङ्गित्वमाह **प्राणो ब्रह्मे**त्यादिना। 'अथ हैनं गार्हपत्योऽनुशशास' इत्यत्र एनमित्यन्वादेशेन ब्रह्मविद्याधिकृतत्वे तात्पर्यं सिद्धम्। शब्दतः प्रकृतस्यैव पुनःपरामर्शो

---

1 परिच्छिन्नत्वशङ्कानिरासयुक्तिप्रदर्शनपरत्वमित्यर्थः।

तेऽस्मद्विद्या चात्मविद्या च" इति समुच्चित्योपदेशात् मोक्षैकफलात्मविद्याङ्गत्वमग्निविद्यायाः प्रतीयते। एवं चाङ्गत्वेऽवगते सति फलानुकीर्तनमर्थवाद इति गम्यते। न चात्र मोक्षविरोधिफलं किञ्चिच्छ्रूयते, "अपहते पापकृत्यम्। लोकी भवति। सर्वमायुरेति। ज्योक्जीवति। नास्यावरपुरुषाः क्षीयन्ते। उप वयं तं भुञ्जामोऽस्मिंश्च लोकेऽमुष्मिंश्च' इत्यमीषां फलानां मोक्षाधिकृतस्यानुगुणत्वात्। अपहते पापकृत्याम्—ब्रह्मप्राप्तिविरोधि पापं कर्मापहन्ति। लोकी भवति—तद्विरोधिनि पापे निरस्ते ब्रह्मलोकं प्राप्नोति। सर्वमायुरेति—ब्रह्मोपासनसमाप्तेर्यावत् आयुरपेक्षितम्, तत् सर्वमेति। ज्योग्जीवति-व्याध्यादिभिरनुपहतो यावद्ब्रह्मप्राप्ति जीवति। नास्यावरपुरुषाः क्षीयन्ते—अस्य शिष्यप्रशिष्यादयः, पुत्रपौत्रादयोऽपि ब्रह्मविद एव भवन्ति। 'नास्याब्रह्मवित् कुले भवति' इति च श्रुत्यन्तरे ब्रह्मविद्याफलत्वेन श्रूयते। उप वयं तं भुञ्जामोऽस्मिंश्च लोकेऽमुष्मिंश्च--वयम् अग्नयस्तमेनमुपभुञ्जामः--यावद्ब्रह्मप्राप्ति विघ्नेभ्यः परिपालयाम इति। अतोऽग्निविद्यायाः ब्रह्मविद्याङ्गत्वेन तत्सन्निधानाविरोधात् सुखविशिष्टं प्रकृतमेव ब्रह्म उपासनस्थानविधानार्थं गुणविधानार्थं चोच्यते॥

ननु 'आचार्यस्तु ते गतिं वक्ता' इति गतिमात्रपरिशेषणादाचार्येण गतिरेवोपदेश्येति गम्यते, तत् कथं स्थानगुणविध्यर्थतोच्यते॥ तदभिधीयते। 'आचार्यस्तु ते गतिं वक्ता' इत्यस्यायमभिप्रायः--ब्रह्मविद्यामनुपदिश्य प्रोषुषि गुरौ तदलोभादनाश्वांस[1]मुपकोसलमुज्जीवयितुं स्वपरिचरणप्रीता गार्हपत्यादयो गुरोरग्नयस्तस्मै ब्रह्मस्वरूपमात्रं तदङ्गभूतां चाग्निविद्यामुपदिश्य, "आचार्याद्धैव विद्या विदिता साधिष्ठं प्रापत्' इति श्रुत्यर्थमालोच्य साधुतमत्वप्राप्त्यर्थमाचार्य एवास्य

---

अन्वादेशः; न तु यथाकथञ्चित् बुद्धिस्थमात्रपरामर्शः। अत एनमिति निर्देशः श्रुतब्रह्मविद्यस्यैवाग्निविद्याधिकारित्वज्ञापकः। समुच्चित्योपदेशादिति। समुच्चयशब्द उपदेष्टव्यत्वविशेषविवक्षया समसमुच्चयपरः। यद्वा संबन्धमात्रपरः। स चाङ्गाङ्गिभावे पर्यवस्यति। फलविरोधमभ्युपगम्य परिहरति एवञ्चेति। "द्रव्यसंस्कारकर्मसु परार्थत्वात्फलश्रुतिरर्थवादः स्यात्" इति हि कर्ममीमांसासूत्रम्। अथ फलविरोध एव नास्तीत्याह न चेत्यादिना। ज्योक्—उज्ज्वलः। अनेन व्याध्याद्यनुपहतत्वं फलितम्। तदाह व्याध्यादिभिरिति। कुले ब्रह्मविदुत्पत्तेर्ब्रह्मविद्यानुगुणफलत्वं दर्शयति नास्येति। भुञ्जाम इति। 'भुज पालनाभ्यवहारयोः' इति धातोः 'भुजोऽनवने' इति ह्यात्मनेपदम्। अतः परस्मैपदित्वादयं धातुः अवनार्थ इत्यर्थः[2] परिपालयाम इति। श्रुतौ उपशब्दार्थः परिणोपसर्गेण सूचितः। विघ्ननिवारणपर्यन्तः किञ्चित्कारो ब्रह्मविद्यां प्रति अग्निविद्याया अङ्गत्वनिर्वाहक इत्यभिप्रायः।

उक्तहेतुभिरेकप्रकरणत्वे स्थितेऽपि ब्रह्मणः पुनरवक्तव्यत्वमुखेन चोदयति नन्विति। स्थानगुणयोर्विधेयत्वे सति हि तदर्थं पुनर्ब्रह्मणोऽभिधानम्। तत्तु नास्ति; पूर्वं तयोराचार्येण वक्ष्यमाणत्वाकथनात्। अतः स्थानादिपरवाक्यं न परमात्मविषयमित्यन्यपरमिदं वाक्यमित्यर्थः। परिहरति तदभिधीयत इत्यादिना। परिपूर्णोपदेशोऽनुपदेशो वा स्यात्, कथं विकलोपदेश इत्याशङ्कां च परिहरन् स्थानगुणविध्यर्थतामुपपादयति आचार्यस्त्वित्यादिना। साधिष्ठशब्दः साधुतमत्वशब्देन व्याख्यातः।

---

1 'उपेयिवाननाश्वान्...' इति नञ्पूर्वादश्नातेः रूपम् अनाश्वानिति। अनाश्वांसम्—अभुक्तवन्तम्। भा० प्र०। 'स ह्यनशितुं दध्रे' इति श्रुतिः। 2 भुञ्जाम इतीत्यस्य परस्मैपदित्वादित्यत्रान्वयः। इत्यर्थ इत्यत्र उच्यते इति शेषः। अवनार्थ इति हेतोः परिपालयामेत्यर्थ उक्त इति।

संयद्वामत्वादिगुणकं ब्रह्म तदुपासनस्थानमर्चिरादिकां च गतिमुपदिशत्विति मत्वा, 'आचार्यस्तु ते गतिं वक्ता' इत्यवोचन्। गतिग्रहणमुपदेश्यविद्याशेषप्रदर्शनार्थम्। अत एवाचार्योऽपि 'अहं तु ते तद्वक्ष्यामि यथा पुष्करपलाश आपो न श्लिष्यन्त एवमेवंविदि पापं कर्म न श्लिष्यते" इत्युपक्रम्य संयद्वामत्वादिकल्याणगुणविशिष्टं ब्रह्म अक्षिस्थानोपास्यम् अर्चिरादिकाञ्च गतिमुपदिदेश। अतः 'कं ब्रह्म खं ब्रह्म' इति सुखविशिष्टस्य प्रकृतस्यैव ब्रह्मणोऽत्राभिधानादयमक्ष्याधारः परमात्मा ॥ १५ ॥

ननु च 'कं ब्रह्म खं ब्रह्म' इति परं ब्रह्माभिहितमिति कथमवगम्यते ; यस्येहाक्ष्याधारतयाऽभिधानं ब्रूषे। यावता 'कं ब्रह्म खं ब्रह्म' इति प्रसिद्धाकाशलौकिकसुखयोरेव ब्रह्मदृष्टिर्विधीयत इति प्रतिभाति "नाम ब्रह्म' 'मनो ब्रह्म', इत्यादिवचनसारूप्यात् ॥ तत्राह—

अत एव च स ब्रह्म ॥ १-१-१६ ॥

यतस्तत्र "यदेव कं तदेव खम्" इति सुखविशिष्टस्याकाशस्याभिधानम्--अत एव खशब्दाभिधेयः सः--आकाशः परं ब्रह्म। एतदुक्तं भवति--अग्निभिः 'प्राणो ब्रह्म कं ब्रह्म खं ब्रह्म' इत्युक्ते उपकोसल उवाच-विजानाम्यहं यत् प्राणो ब्रह्म ; कं च तु खं च न विजानामि" इति ॥

---

**साधिष्ठ**मिति भावप्रधानो निर्देश इत्यर्थः। **गतिग्रहण**मिति। उपदेश्यविद्याशेषमाचार्यो वक्तेति, 'आचार्यस्तु ते गतिं वक्ता' इति वदतामभिप्राय इत्यर्थः। तदेवोपपादयति **अत एवे**ति। सूत्रार्थं निगमयति **अत** इति। **अतः**—उपकोसलविषादपरिहारस्यापेक्षितत्वात् गुरुमुखाच्छ्रवणेन साधुतमत्वाय अपुष्कलमुपदिष्टत्वाच्च गतिग्रहणस्य प्रदर्शनार्थत्वादित्यर्थः ॥

उत्तरसूत्रशङ्कामाह **ननु चेति**। **यावता**—प्रत्युत। **वचनसारूप्या**दिति। "नाम ब्रह्म", "मनो ब्रह्म" इत्यादिवत् दृष्टिविशेषणस्य ब्रह्मणः पश्चादुपादानं विशेष्यस्य प्रथमोपादानं च सारूप्यमभिप्रेतम्। 'प्राणश्च हास्मै तदाकाशश्चोचुः' इति प्राणाकाशशब्दाभ्यां निगमितम्, न तु ब्रह्मशब्देन ; ततोऽपि दृष्टिविधिरिति भावः। तस्याप्युत्तरत्र परिहरिष्यमाणत्वात्।—

**अत एव च स ब्रह्म** ॥ **अत्र एवे**त्येतद्व्याचष्टे **यतस्तत्रे**ति। निगमनवाक्यस्थ पुँल्लिङ्गाकाशशब्दकटाक्षेण सूत्रे **स** इति निर्देशः। **अत**शब्दः सुखविशिष्टाभिधानपरः। ननु **अत**शब्दः प्रकृतवाची 'प्राणो ब्रह्म कं ब्रह्म' इति वाक्योदितस्य सुखविशिष्टस्य ब्रह्मणः स्थानगुणविध्यर्थमभिधानं हि प्रकृतं पूर्वसूत्रे, तदेव सुखविशिष्टाभिधानमत्र **अत** इति परामृश्यते। तत् कथं 'यदेव खं तदेव कम्' इति सुखविशिष्टाभिधानमतशब्दार्थतयोच्यते ? ॥ उच्यते। सामान्येन सुखविशिष्टाभिधानं हेतुतया अतशब्देन परामृश्यते। तत्र सुखविशिष्टाभिधानव्यक्तिविशेषौ वाक्यद्वयस्थाविह सूत्रद्वयेऽप्यर्थवशात् हेतुभूतौ, यथा "नात्मा श्रुतेः" "ज्ञोऽत एव" इत्यत्र श्रुतिमात्रस्यातशब्दपरामृष्टत्वेऽप्यर्थसामर्थ्याच्छ्रुतिव्यक्तिविशेषसिद्धिः, तद्वदिहापीति। भाष्ये यदेव कं तदेव खमिति न वाक्योपादानम्, अपि त्वर्थोपादानम् ; 'यद्वाव कं तदेव खम्' इति हि वाक्यम्। यदेव कं तदेव खमित्यत्राप्यन्योन्यदृष्टिविधिरेवास्तु, नान्योन्यव्यवच्छेदकत्वम् ; व्यवच्छेदकत्वे वा कथं खशब्दाभिधेयस्याकाशस्य परब्रह्मत्वमिति शङ्काद्वयं हृदि निधायाह **एतदुक्त**मिति। **अग्निभिरि**त्यादि। दृष्टिविधित्वे 'प्राणो ब्रह्म' इत्यस्य ज्ञातत्वं 'कं च तु खं च' इत्यस्याज्ञातत्वं च नोपपद्यते, दृष्टिविधित्वेन

अस्यायमभिप्रायः—न तावत् प्राणादिप्रतीकोपासनमग्निभिरभिहितम्, जन्मजरामरणादिभव-भयभीतस्य मुमुक्षोर्ब्रह्मोपदेशाय प्रवृत्तत्वात्। अतो ब्रह्मैवोपास्यमुपदिष्टम्। तत्र प्रसिद्धैः प्राणादिभिस्समानाधिकरणं ब्रह्म निर्दिष्टम्। तेषु च प्राणविशिष्टत्वं जगद्विधरणयोगेन वा प्राण-शरीरतया प्राणस्य नियन्तृत्वेन वा ब्रह्मण उपपद्यत इति 'विजानाम्यहं यत्प्राणो ब्रह्म' इत्युक्तवान्। तथा सुखाकाशयोरपि ब्रह्मणः शरीरतया तन्नियाम्यत्वेन विशेषणत्वम्, उताऽन्योन्यव्यवच्छेदकतया निरतिशयानन्दरूपब्रह्मस्वरूपसमर्पणपरत्वेन वा ? । तत्र पृथग्भूतयोः शरीरतया विशेषणत्वे वैषयिकसुख-खभूताकाशयोर्नियामकत्वं ब्रह्मणः स्यादिति स्वरूपावगतिर्न स्यात्। अन्योन्य-व्यवच्छेदकत्वे अपरिच्छिन्नानन्दैकस्वरूपत्वं ब्रह्मणः स्यादित्यन्यतरप्रकारनिर्दिधारयिषया "कं च तु खं च न विजानामि" इत्युक्तवान्। उपकोसलस्येममाशयं जानन्तोऽग्नयः "यद्वाव कं तदेव खं यदेव खं तदेव कम्" इत्यूचिरे। ब्रह्मणस्सुखरूपत्वमेवापरिच्छिन्नमित्यर्थः। अतः प्राण-शरीरतया प्राणविशिष्टं यद्ब्रह्म तदेवापरिच्छिन्नसुखरूपं चेति निगमितम्, "प्राणञ्च हास्मै तदाकाशं

सर्वस्य ज्ञातत्वादिति भावः। प्राणो ब्रह्मेत्यस्य ज्ञातत्वे अन्यस्याज्ञातत्वे च किं वैषम्यम्, आकाशस्य सुखविशिष्टत्वं च कथमित्यपेक्षायां विजानाम्यहमिति वाक्यस्याभिप्रायं विवृणोति अस्यायमिति। नतावदित्यादि। मुमुक्षोरुपदिष्टत्वात् प्रतीकोपासनव्युदासः। मुमुक्षोः प्रतीकोपासनं न कर्तव्यमिति ज्ञानं पूर्वमेव संभवति। यथा मुमुक्षूपास्यं ब्रह्मेति ज्ञानं संभवति, तद्वत्। शरीरवाचिशब्दस्य शरीरिपर्यन्ता-भिधायित्वं च देवमनुष्यादिशब्देषु व्युत्पन्नमेव। तथेत्यादि। शरीरं च नियाम्यमिति लोकसिद्धत्वात् ज्ञातमेव। 'यदेष आकाश आनन्दः' इत्यादिश्रुतिषु ब्रह्मशब्देन विनाऽप्याकाशशब्दस्यानन्दविशेषणत्वेन प्रयोगदर्शनात् तस्य च महत्त्वोपस्थापनेनैवानन्दविशेषणत्वोपपत्तेर्ब्रह्मणोऽपरिच्छिन्नसुखरूपत्वप्रतीति-संभवादेवं विचार उपपद्यत इति भावः। उपकोसलस्येत्यादि। 'यद्वाव कं तदेव खं यदेव खं तदेव कम्' इत्यत्र न दृष्टिविधित्वं शङ्कनीयम्, तथा सति 'कं च तु खं च न विजानामि' इत्यस्योत्तरत्वायोगात्; [1]न ह्यर्थान्तरदृष्टिविध्यज्ञानस्य दृष्टिविध्यन्तरमुत्तरं भवतीत्यभिप्रायः। एवं 'कं च तु खं च न विजानामि' इत्य-ज्ञानवचनात् मुमुक्षोरुपदिष्टत्वात् अर्थान्तराज्ञानं प्रति दृष्टिविध्यन्तरस्योत्तरत्वायोगाच्च 'यद्वाव कम्' इत्यादि-वाक्यस्य दृष्टिविधिपरत्वानुपपत्तेरन्योन्यव्यवच्छेदपरत्वं स्थितम्। 'अस्मद्विद्या चात्मविद्या च' इति अग्नीनां वचने पूर्वप्रकृतविद्यायाः आत्मविद्यात्वावगमाच्च ब्रह्मणो दृष्टिविशेषणत्वशङ्का निरस्ता। तथा सति अस्य वाक्यस्यार्थमाह ब्रह्मण इति। निगमनवाक्यस्यार्थमाह अत इति। उक्तहेतुभिर्दृष्टिविधित्वायोगात् 'यद्वाव कम्' इत्यादिवाक्ये कंखमिति शब्दयोरन्योन्यव्यवच्छेदकत्वेनापरिच्छिन्नसुखरूपब्रह्मपरत्वादुप-संहारस्योपक्रमानुगुण्यस्य न्याय्यत्वात् प्राणं चेत्युपसंहारवाक्यमुक्तार्थपरमित्यर्थः। प्राणं चेति, प्राणो ब्रह्मेत्युक्तार्थस्य निगमनम्। तदाकाशं चेति, यद्वाव कमित्यादिवाक्यार्थनिगमनम्। तदाकाशमित्यत्र

1 ननु न विजानामीत्यनेन दृष्टिविध्यतिरिक्तार्थजिज्ञासैव दर्शितेति न वाच्यम्; दृष्टिविधिर्वा अर्थान्तरं वेति तदज्ञानमाविष्कृतम्। तत्र दृष्टिविधिरित्युत्तरमस्त्विति शंकायामुपपादयति नहीति। खं ब्रह्म कं ब्रह्मेति प्रयोगात् अर्थान्तरं वा ब्रह्मदृष्टिर्वेत्यन्यतराज्ञानमेव वक्तव्यम्। तत्र तदन्यतर-द्विदाय, के स्वदृष्टिः खे कदृष्टिरिति दृष्टिविध्यन्तरकथनमुत्तरं न भवतीत्यर्थः--वस्तुतो दृष्टिविधेः तेन दूरीकृतत्वात् अर्थान्तराज्ञानमेव वक्तव्यमिति मत्वा उपरि तावदेव वक्ष्यति।

चोचुः" इति। अतः 'कं ब्रह्म खं ब्रह्म' इत्यत्रापरिच्छिन्नसुखं (खरूपं) ब्रह्म प्रतिपादितमिति परं ब्रह्मैव तत्र प्रकृतम्। तदेव चात्राक्ष्याधारतयाऽभिधीयत इत्यक्ष्याधारः परमात्मा ॥ १६ ॥

**श्रुतोपनिषत्कगत्यभिधानाच्च ॥ १-२-१७ ॥**

श्रुतोपनिषत्कस्य—अधिगतपरमपुरुषयाथात्म्यस्य अनुसन्धेयतया श्रुत्यन्तरप्रतिपाद्यमाना अर्चिरादिका गतिर्या, तामपुनरावृत्तिलक्षणपरमपुरुषप्राप्तिकरीमुपकोसलायाक्षिपुरुषं श्रुतवते, "तेऽर्चिषमेवाभिसंभवन्ति; अर्चिषोऽहः, अह्न आपूर्यमाणपक्षम्" इत्यारभ्य, 'चन्द्रमसो विद्युतम्; तत्पुरुषोऽमानवः स एनान् ब्रह्म गमयति। एष देवपथो ब्रह्मपथः। एतेन प्रतिपद्यमाना इमं मानवमावर्तं नावर्तन्ते" इत्यन्तेनोपदिशति। अतोऽप्ययमक्षिपुरुषः परमात्मा ॥ १७ ॥

---

प्रकृतपरामर्शिना तच्छब्देन सुखरूपत्वमभिप्रेतम् ॥ कखयोरन्योन्यव्यवच्छेद्यव्यवच्छेदकत्वे विशेषणयोरन्योन्यविशेषणविशेष्यभावप्रसङ्ग इति चेत्—ततः किम्; नीलोत्पलादौ नीलत्वोत्पलत्वादिधर्माणामन्योन्यविशेषणविशेष्यभावस्याप्रामाणिकत्वात् तत्रानिष्टत्वम्; अत्र तु [1]प्रामाणिकत्वान्नानिष्टत्वमिति भावः। कं ब्रह्म खं ब्रह्मेति वाक्यप्रतिपाद्यं न सुखविशिष्टं ब्रह्मेति शङ्कापरिहारार्थं हि अत एव च स ब्रह्मेति सूत्रस्योत्थानम्; तस्याः शङ्काया अनेन परिहृतत्वं दर्शयति अतः कं ब्रह्मेति। यद्वा व कमित्यादिवाक्यस्यापरिच्छिन्नसुखरूपब्रह्मपरत्वात् निगमनवाक्यस्यापि तदनुगुणार्थत्वात् कं ब्रह्म खं ब्रह्मेति वाक्ये परं ब्रह्मैव प्रकृतमित्यर्थः। ततः किमक्षिपुरुषस्य परमात्मत्वे इति शङ्कायां सूत्रार्थस्याधिकरणार्थोपपादकत्वं दर्शयति तदेव चेति। अन्यथा वाक्यभेदश्च प्रसजेत्; संभवत्येकवाक्यत्वे वाक्यभेदोऽनुपपन्न इति भावः। इतीति। कं ब्रह्मेति प्रकृतस्यैवाक्ष्याधारत्वप्रतिपादनात् अक्षिपुरुषः परमात्मेत्यर्थः ॥

श्रुतोपनिषत्कगत्यभिधानाच्च ॥ श्रुतोपनिषत्कस्येति व्याख्येयं पदम्। समस्तमपि व्याख्यानार्थं व्यस्य निर्दिष्टम्। उपनिषत्सु प्रतीकोपासनानामर्चिरादिगतिरहितानामपि विद्यमानत्वात् तद्व्यावृत्त्यर्थं व्याचष्टे अधिगतेति। परमपुरुषशब्देन "तं त्वौपनिषदं पुरुषम्" इति श्रुतिः स्मारिता। उपासनफलम् अर्चिरादिगतिः; न तु श्रवणफलम्; तत् कथं श्रुतोपनिषत्कगतीत्युक्तमित्यत्राह अनुसन्धेयतयेति। तर्हि श्रुतब्रह्मण इति वक्तव्ये किमिति साधारणाधिकाक्षरश्रुतोपनिषत्कपदोपादानमित्यत्राह श्रुत्यन्तरप्रतिपाद्यमानेति। छान्दोग्य एव प्रदेशान्तरे, "तद्य इत्थं विदुर्ये चेमेऽरण्ये श्रद्धा तप इत्युपासते तेऽर्चिषमभिसंभवन्ति" इत्यादिः, वाजसनेयके, "य एवमेतद्विदुर्ये चामी अरण्ये श्रद्धां सत्यमुपासते, तेऽर्चिरभिसंभवन्ति" इत्यादिः, कौषीतकिनां पर्यङ्कविद्यायां "सोऽग्निलोकमागच्छति" इत्यादिः। ताभिः प्रतिपाद्यमानेत्यर्थः। गतिचिन्तनस्य ब्रह्मविद्याङ्गत्वज्ञापकश्रुत्यन्तरज्ञापनार्थं श्रुतोपनिषत्कव्यपदेशः इत्यभिप्रायः। अक्षिपुरुषस्याब्रह्मत्वे तत्क्रतुनयविरोध इत्यभिप्रायेणाह अपुनरावृत्तीति। अर्चिषमेवेत्यतः पूर्वम्, "अथ यदु चैवास्मिन् शव्यं कुर्वन्ति यदु च न" इति वाक्यम्। तत्रास्मिन्नित्येकवचनं जात्यभिप्रायम्, तेऽर्चिषमिति बहुवचनानुरोधात्। [2]पञ्चाग्निविद्योक्ता गतिरिहानूदिता अपुनरावृत्तिविधानार्थम् ॥

---

[1] कपदस्य सुखमात्रार्थकत्वे उत्पलवत् तस्य विशेष्यत्वमेव स्यात्। सुखविशिष्टार्थकत्वात् विनिगमकाभावात् यथेच्छं विशेष्यविशेषणभाव इति भावः। [2] श्रुतोपनिषत्केति सौत्रपदस्य, श्रुत्यन्तर-अपुनरावृत्ति-या-तमिति भाष्यपदानाञ्च भावं विशदयितुमाह पञ्चाग्नीति।

अनवस्थितेरसंभवाच्च नेतरः ॥ १-२-१८ ॥

प्रतिबिम्बादीनामक्षणि नियमेनानवस्थानात् अमृतत्वादीनां च निरुपाधिकानां तेष्वसंभवात् न परमात्मन इतरः, छायादिरक्षिपुरुषो भवितुमर्हति । प्रतिबिम्बस्य तावत् पुरुषान्तरसंनिधानायत्तत्वान्न नियमेनावस्थानसंभवः । जीवस्यापि सर्वेन्द्रियव्यापारानुगुणत्वाय सर्वेन्द्रियकन्दभूते स्थानविशेषे वृत्तिरिति चक्षुषि नावस्थानम् । देवतायाश्च, "रश्मिभिरेषोऽस्मिन् प्रतिष्ठितः" इति रश्मिद्वारेणावस्थानवचनात् देशान्तरावस्थितस्यापीन्द्रियाधिष्ठानोपपत्तेर्न चक्षुष्यवस्थानम् ।

---

अनवस्थितेरसम्भवाच्च नेतरः ॥ अनवस्थितेरिति पदं व्याचष्टे प्रतिबिम्बादीनामिति । असंभवादिति पदं व्याचष्टे अमृतत्वादीनामिति । असंभवादित्यनेन अन्तर उपपत्तेरिति सूत्रार्थस्य व्यतिरेक उक्तः । अनवस्थितेरित्यनेन स्थानादिव्यपदेशाच्चेति सूत्रार्थस्य व्यतिरेको दर्शितः । इतरसूत्रोक्तहेतूनां व्यतिरेकोपपादनानपेक्षत्वात्, व्यतिरेकश्चार्थसिद्ध इति वा व्यतिरेको न प्रदर्शितः । अनवस्थानासंभवौ प्रतिबिम्बादिषु दर्शयति प्रतिबिम्बस्येत्यादिना । सर्वेन्द्रियकन्दभूते स्थानविशेष इति । हृदीत्यर्थः । "शतञ्चैका च हृदयस्य नाड्यः", 'संततं सिराभिः' इत्युक्तप्रकारेण हृदयसंबद्धनाडीसंबद्धानीन्द्रियाणीत्यर्थः । एवंविधे हृदि जीवस्यावस्थानं "हृदि ह्ययमात्मा" इति श्रुतेरवगम्यते ॥

ननु "नेत्रस्थं जाग्रतं विद्यात् कण्ठे स्वप्नं विनिर्दिशेत् । सुषुप्तं हृदयस्थं तु तुरीयं मूर्धनि स्थितम्" इति श्रुत्या जीवस्य जागरावस्थायां नेत्रे स्थितिरुच्यते । न चेयं श्रुतिः परमात्मविषया ; तस्य जाग्रत्स्वप्नसुषुप्त्यसंभवात् ॥ उच्यते । नेत्रशब्दः सर्वेन्द्रियप्रदर्शनार्थः, जाग्रतमित्युक्तत्वात् । तदानीं सर्वेन्द्रियव्यापारदर्शनात् । अणुपरिमाणस्य जीवस्य नेत्रमात्रवर्तित्वे सति शब्दादिज्ञानानुपपत्तेः । तत्र च स्थितत्वं नाम अधिष्ठातृत्वमात्रमुपसङ्ग्राह्यम् ; अधिष्ठानस्यापि स्वाधारत्वन्तर्भूतत्वात् । अणोस्तस्य युगपदेव तत्तदिन्द्रियाधिष्ठानानुपपत्तौ पश्यतः शृण्वतो वा गमनादानोचितपादपाण्याद्यधिष्ठानानुपपत्त्या सर्वेन्द्रियकन्दभूते हृदि स्थितस्य धर्मभूतज्ञानप्रसरणद्वारेणाधिष्ठातृत्वमिति, 'नेत्रस्थं जाग्रतं विद्यात्' इति श्रुतेरर्थ इत्यभिप्रायेण सर्वेन्द्रियकन्दभूत इत्युक्तम् । कण्ठे स्वप्नमिति कण्ठशब्दश्च कण्ठसमीपवर्तिनाडीविशेषपरः ; "आसु तदा नाडीषु सृप्तो भवति" इति नाडीनां स्वप्नस्थानत्वश्रुत्यविरोधात् । इयञ्च श्रुतिः स्वप्नविषया ; 'यदा सुप्तः स्वप्नं न कथञ्चन पश्यति अथास्मिन् प्राण एवैकधा भवति" इत्यनन्तरवाक्यस्य सुषुप्तिस्थानपरत्वात् । हृदयस्थमिति हृदयशब्दो [1]हृद्गतपरमात्मपरः ; 'सता सोम्य तदा सम्पन्नो भवति' इति परमात्मनः सुषुप्तिस्थानत्वावगमात् । तत्र च सच्छब्दो हृदयस्थपरमात्मपरः, "आभिः प्रत्यवसृप्य पुरीतति शेते" इति सुषुप्तौ हृदयागमश्रवणात् । तुरीयशब्दः उत्क्रान्त्यवस्थजीवपरः ; "तासां मूर्धानमभिनिस्सृतैका । तयोर्ध्वमायन्' इति चरमशरीरोत्क्रान्तावेव मूर्द्धसंबन्धश्रवणात्, अवस्थान्तरे तच्छ्रवणाभावाच्च । अतो जीवस्य चक्षुष्यनवस्थितिरुपपद्यते ।

रश्मिद्वारेणेति । खट्वादिद्वारकप्रासादशयनवत् रश्मिद्वारकं चक्षुष्यवस्थानमित्यर्थः । चक्षुष्यवस्थानं नाम चक्षुस्संबन्धित्वम् । यद्वा यथा विद्यानिष्ठ इत्युक्ते तद्वशीकार उक्तः स्यात्, तथा चक्षुष्यवस्थानमपि

---

1 हृत् अयते आप्नोतीति हृदयं ब्रह्म । 'तस्यैतदेव निरुक्तं हृद्ययमिति । तस्मात् हृदयम्' इति छा. 8. 3.

**सर्वेषामेवैषां निरुपाधिकामृतत्वादयो न संभवन्त्येव । तस्मादक्षिपुरुषः परमात्मा ॥**
**॥ इति अन्तराधिकरणम् ॥**

---

तद्वशीकरणम् ; तन्नियमनम् । तच्च सद्वारकम् । अतो नावस्थितिरित्यर्थः । **असंभवमाह सर्वेषामिति** । जीवानां परमात्मोपासनेनाभयत्वामृतत्वादयो भवन्तीति तद्व्यावृत्त्यर्थं **निरुपाधिका** इत्युक्तम् ।

अधिकरणार्थं निगमयति **तस्मादिति** । **अन्तर** इति सूत्रे स्ववाक्यस्थहेतुरुक्तः । श्रुत्यन्तरप्रदर्शनमुखेन स्ववाक्यस्थशङ्कापरिहारपरं द्वितीयसूत्रम् । स्ववाक्यस्थशंकायां परिहृतायाम्, प्राकरणिकपूर्ववाक्येन परमात्मपरत्वोपपादकं तृतीयम् । पूर्ववाक्यस्य ब्रह्मपरत्वोपपादकं चतुर्थम् । ततः पाश्चात्यवाक्येन साध्योपपादकं पञ्चमम् । षष्ठं तु साध्यदृढिम्ने पूर्वसूत्रद्वयोक्तहेतुव्यतिरेकप्रदर्शकमिति सूत्रसङ्गतिः ॥

**यादवप्रकाशीये** तु—**अन्तर उपपत्ते**रित्यादिसूत्रत्रयं छायापुरुषव्युदासपरं योजितम् । ततोऽपि प्रतिबिम्बस्य जीवस्य च व्युदासपरत्वं युक्तम्, अमृतत्वाभयत्वादीनां सर्वव्यावर्तनक्षमत्वात् ; तथाऽभ्युपगतत्वाच्च । '**अत एव च स ब्रह्म**' इति सूत्रस्य च वैयर्थ्यं प्रसजेत् । [1]**अत एव**—छायानिराकरणहेतुभिरेव जीवोऽपि न भवतीति हि योजितम् । पूर्वोक्तहेतवो जीवव्यावर्तनसमर्थाः, न वा । न चेत्---तैरेवाक्षिपुरुषस्य परमात्मत्वसाधनमनुपपन्नम् । तद्व्युदाससमर्थाश्चेत्—तद्धेतूपादानादेव जीवव्यावृत्तिः सिध्यतीति तदनुवादेन परमात्मत्वसाधनाय सूत्रान्तरप्रणयनवैयर्थ्यमेव स्यात् । **प्राणो** ब्रह्मेत्यादिवाक्यस्य दृष्टिविधिपरत्वव्युदासेन सुखविशिष्टब्रह्मपरत्वसमर्थनं चापेक्षितम् । अपेक्षितविधेरनपेक्षितविधानं च दुर्बलम् । किञ्च यथा ईक्षत्यधिकरणादिषु **नाशब्दमिति, आनन्दमयः** इति, **अन्तरिति** च परमात्मत्वं साध्यं प्रतिज्ञायते—तथा तच्छेषभूतव्यतिरेकप्रतिज्ञानं क्वचित् क्रियते, यथा **नानुमानमिति** । अवान्तरशङ्काविशेषपरिहारः क्वचित् प्रतिज्ञायते, यथा **विकारशब्दान्नेति चेन्न** इति । अतोऽस्मिंश्चाधिकरणे 'अन्तर उपपत्तेः' इति सूत्र एव परमात्मत्वसाध्यप्रतिज्ञा । यथा 'अन्तस्तद्धर्मोपदेशात्', 'आकाशस्तल्लिङ्गात्', 'प्राणस्तथानुगमात्' इत्यादिषु आदित्यान्तर्वर्त्याकाशप्राणादीनुद्दिश्य परमात्मत्वं प्रतिज्ञातम्, एवमन्तरशब्दनिर्दिष्टमुद्दिश्य परमात्मत्वं प्रतिज्ञातमिति हि स्वरसतः प्रतीयते । अतो ब्रह्मणः प्रतिपाद्यत्वं न पुनः प्रतिज्ञातव्यम् । इह च परमात्मत्वसाध्योपपादकतयोदाहृतस्य पूर्ववाक्यस्य परमात्मपरत्वशैथिल्ये शङ्किते तत्परिहाराय पूर्ववाक्यप्रतिपाद्यस्य परत्वं प्रतिज्ञायते चेत्—युज्यते ; प्रयोजनवत्त्वात् । तदभावात् पुनःप्रतिज्ञानं तन्मते विफलम् ॥ '**अन्तरं**' इत्यात्ममात्रं प्रतिज्ञातम् ; न परमात्मेति चेत्—तत् सूत्रशैलीविरुद्धत्वात् अमृतत्वादिधर्माणां जीवव्यावर्तनक्षमत्वाच्चानुपपन्नम् ॥ सुखविशिष्टस्येह प्रत्यभिज्ञानानुपपत्तिपरिहारपरम् **अत एव चेति** सूत्रमिति चेन्न ; 'सुखविशिष्टाभिधानादेव च' इति सूत्रेणैव पूर्वत्र अत्र च ब्रह्मसंशब्दनादीनां तत्प्रत्यभिज्ञोपपत्तीनां विवक्षितत्वात् । न हि न्यायनिबन्धनात्मकं सूत्रं प्रतिज्ञामात्रपरम् । छायापुरुषनिराकरणहेतुतयोक्तानाममृतत्वाभयत्वादीनामक्षिपुरुषे सुखविशिष्टब्रह्मप्रत्यभिज्ञोपपादकत्वायोगात् प्रत्यभिज्ञानुपपत्तिपरिहारपरत्वमयुक्तम् । प्रत्यभिज्ञोपपादनप्रकारश्चानुपपन्नः । पूर्ववाक्ये "प्राणो ब्रह्म कं ब्रह्म खं ब्रह्म' इति प्राणस्य सुखविशिष्टाकाशस्य चोक्तत्वात् श्रुत्यन्तरे दक्षिणवामयोरक्ष्णोरिन्द्रशब्दवाच्यस्य प्राणस्य

---

[1] एवञ्चेदं सूत्रं यादवप्रकाशमतेऽप्यस्तीति ज्ञायते । शांकरे न । भास्करीये तु सितासितमुक्तम् ।

अन्तर्याम्यधिकरणम् १-२-४

'स्थानादिव्यपदेशाच्च' इत्यत्र 'यश्चक्षुषि तिष्ठन्' इत्यादिना प्रतिपाद्यमानं चक्षुषि स्थिति-नियमनादिकं परमात्मन एवेति सिद्धं कृत्वा अक्षिपुरुषस्य परमात्मत्वं साधितम्। इदानीं तदेव समर्थ्यते—

**अन्तर्याम्यधिदैवाधिलोकादिषु तद्धर्मव्यपदेशात् ॥ १-२-१९ ॥**

काण्वा माध्यन्दिनाश्च वाजसनेयिनः समामनन्ति ; "यः पृथिव्यां तिष्ठन् पृथिव्या अन्तरो यं पृथिवी न वेद यस्य पृथिवी शरीरं यः पृथिवीमन्तरो यमयति, स त आत्मान्तर्याम्यमृतः" इति । एवमप्स्वग्न्यन्तरिक्षवायुद्यु-आदित्यदिक्चन्द्रतारकाकाशतमस्तेजस्सु दैवेषु च, सर्वेषु भूतेषु च, प्राणवाक्चक्षुःश्रोत्रमनस्त्वग्विज्ञानरेतस्सु आत्मात्मीयेषु च तिष्ठन्तं तत्तदन्तरभूतं तत्तदवेद्यं तत्तच्छरीरकं तत्तत् यमयन्तं कञ्चिन्निर्दिश्य "एष त आत्माऽन्तर्याम्यमृतः" इत्युपदिश्यते । माध्यन्दिनपाठे तु "यः सर्वेषु लोकेषु तिष्ठन्', 'यः सर्वेषु वेदेषु', 'यः सर्वेषु यज्ञेषु' इति च पर्यायाः, 'यो विज्ञाने तिष्ठन्' इत्यस्य पर्यायस्य स्थाने, 'य आत्मनि तिष्ठन्' इति पर्यायः । 'स त

---

तत्पत्न्याश्च स्थित्यवगमात् वाक्च्छक्तिरूपपरमाकाशपत्नीकः प्राणोऽयमक्षिपुरुषः पूर्ववाक्योक्तः प्रत्यभिज्ञायत इति ह्युक्तम्, "वाङ्मयाज्जातस्य प्राणस्य वाङ्मयपत्नीकत्वायोगात्" इति श्रुतिव्याकोपस्य **ज्योतिरधिकरणे** दर्शिततया अस्यार्थस्यानुपपन्नत्वं स्फुटम् । किञ्च इयं तावत् सूत्रकारशैली—यत् सर्वेष्वधिकरणेषु एकस्मिन्नेव सूत्रे परमसाध्योऽर्थः प्रतिज्ञायते ।

**स्थानादिव्यपदेशा**च्चेतीदमपि 'य एषोऽन्तरक्षिणि पुरुषो दृश्यते' इति श्रुतौ चक्षुष्यवस्थान-परिदृश्यमानत्वव्यपदेशात् परमात्मत्वसाधकमिति व्याख्यातम् । ततोऽप्यन्तर्यामिब्राह्मणविषयतया व्याख्यानं युक्तम् । उपजीवकवाक्यादप्युपजीव्यवाक्यप्राबल्यात् । 'य एषोऽन्तरक्षिणि' इति वाक्यं ह्यन्तरादित्यविद्या-तुल्ययोगक्षेमम् । तत्र च देहविशेषयोगाधीनजीवत्वशङ्का निरस्ता । अतः (अथ?) तत्रापि प्रसिद्धवन्निर्देश-दृश्यत्वव्यपदेशाभ्यां जीवविषयत्वे शङ्किते अन्तर्यामिब्राह्मणादिकमेव शरणम् । अत एव ह्यादित्यान्तर्वर्तिनो जीवादन्यत्वसिद्धये **भेदव्यपदेशाच्चान्यः** इति सूत्रं तद्विषयं प्रणीतम् । तत्र च नियन्तृत्वादिभिः परमात्मत्वं स्फुटम् । अतः उपजीव्यवाक्यविषयतया व्याख्यानं युक्तम् । अनन्तराधिकरणे अन्तर्यामिणः परमात्मत्वसाधनं चास्य सूत्रस्य अन्तर्यामिब्राह्मणविषयतां द्योतयति । प्रयुक्तेऽर्थे असिद्धिशङ्कापरिहारो हि यौक्तिकशैली । न च वाच्यम्—त्वदुदाहृतवाक्यमप्युपपाद्यत्वात् दुर्बलमिति । तस्य वाक्यान्तरोपजीवकत्वा-भावात् । तत् खल्वनुग्राहकन्यायमात्रापेक्षम् । अतो न्यायानुगृहीतवाक्यान्तरसापेक्षवाक्यविषयत्वात् वाक्यान्तरनिरपेक्षवाक्यविषयत्वं वरम् ।

**श्रुतोपनिषत्कगत्यभिधाना**च्चेत्यत्राक्षिपुरुषविद्यायाः गतिचिन्तनानुवादेन तदङ्गत्वमुच्यत इत्युक्तम्। तदप्ययुक्तम् ; अक्षिपुरुषस्य परमात्मत्वनिर्णयात् परमात्मोपासनस्यानुष्ठेयान्तरं प्रति अङ्गत्वायोगात् ; गतिचिन्तनस्य सर्वपरविद्याङ्गत्वाच्च । गत्यनुवादस्य प्रयोजनं त्वपुनरावृत्तिविधानमित्युक्तम् ; न त्वङ्गान्तरविधानम् । अतो यथोक्तार्थपराण्येव सूत्राणि ॥

उत्तराधिकरणसङ्गतिमाह **स्थानादीति** ॥ **अन्तर्याम्यधिदैवाधिलोकादिषु तद्धर्मव्यपदेशात्** ॥ विषयं शोधयति **काण्वा** इत्यादिना । **वेदयज्ञशब्दौ** तदभिमानिदेवताविशेषपरौ ; गुणक्रियादेरद्रव्यतया

आत्मान्तर्याम्यमृतः' इति च विशेषः। तत्र संशय्यते—किमयमन्तर्यामी प्रत्यगात्मा, उत परमात्मा इति। किं युक्तम्। प्रत्यगात्मेति। कुतः। वाक्यशेषे 'द्रष्टा श्रोता' इति करणायत्तज्ञानताश्रुतेः। एवं द्रष्टुरेवान्तर्यामित्वोपदेशात् 'नान्यो तोऽस्ति द्रष्टा' इति द्रष्ट्रन्तरनिषेधाच्चेति॥

एवं प्राप्तेऽभिधीयते—अन्तर्याम्यधिदैवाधिलोकादिषु तद्धर्मव्यपदेशात्। अधिदैवाधि-

---

शरीरत्वायोगात्॥ अद्रव्यस्यापि शरीरत्वमनेनैव प्रयोगेण कल्प्यतामिति चेन्न—अनन्यथासिद्धस्यैव प्रयोगस्य कल्पकत्वात्। अभिमानिदेवतापरत्वेनापि द्रव्यपरत्वमेवोचितमिति। संशयमाह **तत्रेति**। **प्रत्यगात्मशब्दः** ऐश्वर्ययोगविशेषनिमित्तप्रकर्षादुत्कृष्टजीवपरः॥ समस्तचेतनाचेतनान्तर्यामित्वेन श्रूयमाणस्यापि कथं जीवत्वशङ्कोत्थानम्॥ उच्यते। 'द्रष्टा श्रोता' इत्यादिशब्देन करणायत्त-ज्ञानवत्ताप्रतीतिबलात् अमृतत्वादिलिङ्गानाम्, 'आत्मनि तिष्ठन्' इत्यादिव्यतिरेकनिर्देशस्य, नियमनस्य चामुख्यत्वशङ्कयाऽधिकरणोत्थानमिति। किमन्तर्यामी जीवः, उत परमात्मेति प्रथमविचारः; तदर्थम् 'आत्मनि तिष्ठन्' इत्यादिकं किं मुख्यम्, उतामुख्यम्; तदर्थं द्रष्टृत्वं किं जीवस्यैव, उतान्तर्यामिणोऽपि संभवति; तदर्थं 'द्रष्टा श्रोता' इति किं करणायत्तज्ञान-त्वमुच्यते, उत रूपादिसाक्षात्कार इति। तदर्थं रूपादिसाक्षात्कर्ता चेत्, द्रष्ट्रन्तरनिषेधः किं नोपपद्यते, उतोपपद्यत इति विचारः। नोपपद्यत इति पूर्वः पक्षः। उपपद्यत इति सिद्धान्तः। यदा निषेधोऽनुप-पन्नः, तदा द्रष्टृत्वादिकं करणायत्तज्ञानवत्त्वमिति तस्य जीवात्मन्येव संभवात् आत्मनि स्थित्यादिकममुख्य-मित्यन्तर्यामी जीवस्स्यात्। यदा निषेध उपपन्नः, तदा रूपादिसाक्षात्काररूपद्रष्टृत्वादेः परमात्मनि संभवेन आत्मनि स्थित्यादीनां मुख्यतया नेयत्वादन्तर्यामी परमात्मेति फलितं स्यात्। **कुत इति**। प्रत्यगात्मनोऽप्यन्तर्यामित्वेन श्रुतस्य कथं प्रत्यगात्मत्वमिति भावः। तत्र जीवत्वे हेतुमाह **वाक्यशेषे** इत्यादिना। ज्ञानस्य करणाधीनत्वोक्त्या नियमनस्य च करणाधीनत्वमर्थसिद्धम्; परप्रेरणरूपस्य सङ्कल्पस्य मनःकरणकत्वदर्शनात्। करणायत्तं ज्ञानमस्तु, ततः किमन्तर्यामिणो जीवत्वस्येत्यत आह **एवं द्रष्टुरेवेति**। तर्हि रूपादिसाक्षात्कार एव द्रष्टृशब्दप्रवृत्तिनिमित्तमस्तु, न करणायत्तं ज्ञानमित्यत्राह **नान्योऽतोऽस्तीति**। रूपादिसाक्षात्कारस्य जीवपरयोः साधारणत्वात् स न निषेद्धुं शक्यते; करणायत्तज्ञानवत्त्वं तु जीवस्यैवेति तत् अयस्य निषेद्धुं शक्यमित्यर्थः। प्रतिपर्यायं यच्छब्दावृत्त्या चान्तर्यामिबहुत्वमवगम्यते। **आत्मनि तिष्ठन्** इति व्यपदेशः, स्वे महिम्नि स्थित इतिवद्भवति। **तदन्तरत्वं** तन्नियन्तृत्वं च **आत्मेश्वर**मितिवत् व्यापक-नियामकवस्त्वन्तराभावाभिप्रायेणोच्यते। 'यमात्मा न वेद' इति संसृष्टेन निष्कृष्टस्वरूपाज्ञानमुच्यत इति नेयम्। यत्तु जीवविशेषान् प्रति अन्तर्यामित्वं तत्तदवेद्यत्वादिकम्, तत् अष्टमूर्त्यादेरिव तत्तद्गणाध्यक्षाणां जीवानां तत्तन्नियन्तृत्वेन संभवति। यद्वा आदित्यचन्द्रशब्दौ मण्डलपरौ। सर्वेषु देवेष्वित्यादिशब्दाश्च शरीरमात्रपराः। **स त आत्मेति** निर्देशः शिलापुत्रस्य शरीरमितिवत् स्यात्। **स** इति पदं जात्यभिप्रायम्; तज्जाती-यस्त्वमित्यर्थः। उपक्रमे च 'य इमं च लोकं परं च लोकम्' इत्यत्र यच्छब्दो जात्यभिप्राय इति भावः॥

**एवं प्राप्त** इति। सूत्रे[1] अधिदैवमधिलोकमिति न निर्दिष्टम्; देवलोकादिष्वित्यपि न निर्दिष्टम्।

---

[1] सूत्र इत्येतदनन्तरम् अधिदैवेति प्रतीकग्रहणात् प्राग्वाक्यजातं शुद्धतालकोशस्थम्। एतदनुप-लम्भात् सूत्र इति पदस्य प्रयोजनं नेति भा० प्र० विमृश्यमासीत्। सूत्र इत्यादि अवतरणरूपं सुस्थम्।

लोकादिपदचिह्नितेषु वाक्येषु श्रूयमाणोऽन्तर्यामी अपहतपाप्मा परमात्मा नारायणः। काण्वपाठसिद्धेभ्योऽधिदेवादिमद्भ्यो वाक्येभ्योऽधिकानि अधिलोकादिमन्ति वाक्यानि माध्यन्दिनपाठे सन्तीति ज्ञापनार्थमधिदैवाधिलोकादिष्वित्युभयोरुपादानम्। तदेवमुभयेष्वपि वाक्येष्वन्तर्यामी परमात्मेत्यर्थः। कुतः। तद्धर्मव्यपदेशात्। परमात्मधर्मो ह्ययम्; यदेक एव सन् सर्वलोकसर्वभूतसर्वदेवादीन्नियमयतीति। तथा ह्युद्दालकप्रश्नः "य इमं च लोकं परं च लोकं सर्वाणि च भूतानि योऽन्तरो यमयति' इत्युपक्रम्य 'तमन्तर्यामिणं ब्रूहि' इति। तस्य चोत्तरम्, 'यः पृथिव्यां तिष्ठन्' इत्यारभ्योक्तम्। तदेतत् सर्वान् लोकान् सर्वाणि च भूतानि सर्वान् देवान् सर्वान् वेदान् सर्वांश्च यज्ञान् अन्तःप्रविश्य सर्वप्रकारनियमनं सर्वशरीरतया सर्वस्यात्मत्वं च सर्वज्ञात् सत्यसङ्कल्पात् पुरुषोत्तमादन्यस्य न संभवति। तथा हि, "अन्तः प्रविष्टः शास्ता जनानाँ सर्वात्मा", "तत् सृष्ट्वा तदेवानुप्राविशत्। तदनुप्रविश्य सच्च त्यच्चाभवत्" इत्यादीन्यौपनिषदानि वाक्यानि परमात्मन एव सर्वस्य प्रशासितृत्वं सर्वस्यात्मत्वमित्यादीनि वदन्ति। तथा सुबालोपनिषदि, "नैवेह किञ्चनाग्र आसीदमूलमनाधारमिमाः प्रजाः प्रजायन्ते दिव्यो देव एको नारायणः। चक्षुश्च द्रष्टव्यं च नारायणः। श्रोत्रं च श्रोतव्यं च नारायणः" इत्यारभ्य, "अन्तश्शरीरे निहितो गुहायामज एको नित्यः। यस्य पृथिवी शरीरं यः पृथिवीमन्तरे सञ्चरन् यं पृथिवी न वेद यस्यापश्शरीरम्" इत्यादि। यस्य मृत्युः शरीरं यो मृत्युमन्तरे सञ्चरन् यं मृत्युर्न वेद एष सर्वभूतान्तरात्माऽपहतपाप्मा दिव्यो देव एको नारायणः" इति परस्यैव ब्रह्मणः सर्वात्मत्वं सर्वशरीरत्वं सर्वस्य नियन्तृत्वं च प्रतिपाद्यते। स्वाभाविकं चामृतत्वं परमात्मन एव धर्मः। न च परस्यात्मनः करणायत्त

---

अधिदैवाधिलोकादिष्वित्येव निर्दिष्टम्। तस्मात् नार्थपरम्। तथासति अधिशब्दसप्तम्योः पौनरुक्त्यात्। अपि तु वाक्यपरमित्यभिप्रायेण व्याचष्टे **अधिदैवाधिलोकादिपदचिह्नितेषु वाक्येष्विति**। अनेन सर्वसूत्रेषु तत्तत्पदचिह्नितवाक्यप्रतिपाद्यत्वं विवक्षितमिति गम्यते। **अधिदैवाधिलोक**पदद्वयोपादानस्य प्रयोजनमाह **काण्वेति**। ततः किमित्यत्राह **तदेव**मिति। माध्यन्दिनपाठे अधिलोकाद्यधिकपर्यायश्रवणेन काण्वमाध्यन्दिनयोर्विषयभेदशङ्कायामुभयसाधारणबहुपर्यायप्रदर्शनार्थेनाधिदैवशब्देनोभयत्रैकविषयत्वप्रत्यभिज्ञानार्थम्, न्यूनपर्यायेऽपि पाठे 'अनुक्तमन्यतो ग्राह्यम्' इति न्यायेन अधिकपर्यायपाठार्थविवक्षाज्ञापनार्थं चोभयपदोपादानमित्यर्थः। एकस्यैव सतः सर्वनियमनं कथमवगतमित्यत्राह **तथा हीति**। **यः पृथिव्याम्** इत्यादिकं तस्य प्रश्नस्योत्तरमस्तु; ततः किमित्यत्राह **तदेत**दिति। नियाम्यापरिज्ञाने मोघसङ्कल्पत्वे च सर्वनियमनायोगात् **सर्वज्ञात्सत्यसङ्कल्पा**दित्युक्तम्। **सुबालोपनिषदि** समानप्रकरणे **पुरुष एवेदं सर्व**मित्युक्तत्वादाह **पुरुषोत्तमा**दिति। पुरुषोत्तमस्यैव सर्वनियमनादिसंभवे श्रुत्यन्तराणि दर्शयति **तथा हीति**। **परमात्मन एवेति**। अत्र सर्वनियन्तृत्वादितरेषां नियाम्यकोटिनिवेशादस्यैवेत्यवधारणं फलितमिति भावः। एतद्वैशद्याय समानप्रकरणोक्तिं दर्शयति **तथा सुबालोपनिषदीति**। सूत्रविवक्षितं हेत्वन्तरञ्चाह **स्वाभाविकं चेति**। पूर्वपक्षयुक्तिं परिजिहीर्षन् दर्शनश्रवणादिशब्दानां करणायत्तज्ञानवाचित्वं किमार्थम् उत शाब्दमिति विकल्पमभिप्रेत्य, प्रथमं शिरः प्रतिवदति **न च परस्येति**। 'अदृष्टो द्रष्टा अश्रुतः श्रोता अमतो मन्ता अविज्ञातो विज्ञाता' इति वाक्ये आत्मसाक्षात्कारतदुपायभूतश्रवणमनननिदिध्यासनकर्तृत्वं हि प्रतीयते, न तु रूपादिसाक्षात्कार इति शङ्कां परिहर्तुं **परस्यात्मन**

**द्रष्टृत्वादिकम्, अपि तु स्वभावत एव सर्वज्ञत्वात्सत्यसङ्कल्पत्वाच्च स्वत एव। तथा च श्रुतिः "पश्यत्यचक्षुः स शृणोत्यकर्णः, अपाणिपादो जवनो गृहीता" इति।**

---

इत्युक्तम्। अत्रायमभिप्रायः—श्रुत्यन्तरेषु 'न दृष्टेर्द्रष्टारं पश्येः, न श्रुतेः श्रोतारं शृणुयाः, न मतेर्मन्तारं मन्वीथाः, न विज्ञातेर्विज्ञातारं विजानीयाः' इति, 'आत्मा वा अरे द्रष्टव्यः श्रोतव्यो मन्तव्यो निदिध्यासितव्यः' इत्यादिवाक्यैः श्रवणमननादिकर्तृत्वं परस्य प्रतिषिद्धम्। तत्कर्मत्वञ्च श्रुतम्। तस्मादिह द्रष्टा श्रोता मन्ता विज्ञातेति प्रतीयमानं परस्यात्मनः श्रवणादिकर्तृत्वं तत्प्रतिषेधकश्रुतिविरुद्धम्। रूपादिसाक्षात्कर्तृत्वं तु 'पश्यत्यचक्षुः स शृणोत्यकर्णः' इत्यादिश्रुत्यन्तरावगतम्। अतः श्रवणादिकर्तृत्वप्रतिषेधकश्रुतिविरोधात् रूपादिसाक्षात्कारविधायकश्रुत्यन्तरानुरोधाच्च इह श्रूयमाणा द्रष्ट्रादिशब्दाश्च रूपादिसाक्षात्कारवाचकाः, न तु श्रवणमननध्यानतत्साध्यदर्शनपरा इति। [1]**द्रष्टृत्वादिकं न करणायत्तमिति**। रूपादिभिरपरोक्षव्यवहारानुगुणः सम्बन्धो न चक्षुराद्यपेक्ष इत्यर्थः। **आदि**शब्देन श्रोतृत्वादिकं कर्मेन्द्रियकार्यगन्तृत्वग्रहीतृत्वादिकं च विवक्षितम्। **करण**शब्दश्च ज्ञानकर्मेन्द्रियसाधारणः। किं तर्हीत्याकाङ्क्षायामाह **अपि त्विति**। **स्वभावत एवेति**। द्रष्टृत्वादिकमित्यन्वयः। **स्वभाव**शब्दो धर्मपरः [2]स्वरूपस्वभावशब्दयोः समभिव्याहारदर्शनात्। **एवकारः** चक्षुरादिकरणापेक्षां योगिप्रत्यक्षहेतुभूतप्रकृष्टादृष्टापेक्षाञ्च व्यावर्तयति। अदृष्टेन्द्रियनिरपेक्षधर्मभूतज्ञानेनैव भवतीत्यर्थः। परमात्मेच्छासापेक्षमुक्तनित्यसिद्धज्ञानव्यावृत्तिं दर्शयन् हेतुमाह **सर्वज्ञत्वादिति**। स्वत एव सर्वज्ञत्वादित्यन्वयः। **स्वत एवेति**। **स्व**शब्दः स्वरूपपरः; सत्ताप्रयुक्तत्वादित्यर्थः। **एवकारः** स्वव्यतिरिक्तचेतनान्तरसङ्कल्पादृष्टचक्षुरादिव्युदासपरः। यद्वा— **न करणायत्तं द्रष्टृत्वादिकम्, अपि तु स्वभावत एवेति**। रूपादिसाक्षात्काराश्रयत्वं न करणापेक्षम्, अपि तु सत्ताप्रयुक्तमित्यर्थः। कुत इत्यत्राह—**स्वत एव सर्वज्ञत्वादिति**। करणानपेक्षसत्ताप्रयुक्तसार्वज्ञ्यवत्त्वादित्यर्थः। सामान्येनेश्वरज्ञानमात्रस्य हेतुमात्रनिरपेक्षत्वात् रूपादिविषयज्ञानविशेषोऽपि अदृष्टेन्द्रियरूपहेतुविशेषनिरपेक्ष इति यावत्। सर्वस्य ब्रह्मात्मकत्वात् त्वं च तदात्मक इतिवत् विवक्षितविशेषसिद्धये सामान्याकारयोगस्य हेतुतयोपन्यासः। ग्रहीतृत्वगन्तृत्वादिषु कर्मेन्द्रियनैरपेक्ष्यसिद्ध्यर्थमाह **सत्यसङ्कल्पत्वाच्च स्वत एवेति**। तत्र प्रमाणं दर्शयति **तथा चेति**। द्रष्टा श्रोतेत्यत्र उपाध्यनुक्तिपूर्वकदर्शनादिश्रवणात् स्वतस्त्वं सिद्धम्; निरुपाधिकत्वकण्ठोक्तिश्चास्तीति **चार्थः**। यद्वा—न केवलं **यः सर्वज्ञः, सत्यसङ्कल्पः** इति सामान्यश्रुत्या तत्सिद्धिः, विशेषविषयश्रुतिश्चास्तीति **चार्थः**। यद्वा— 'स्वाभाविकी ज्ञानबलक्रिया च' इति श्रुत्या करणनिषेधोऽर्थसिद्धः। तस्य स्वाभाविकत्वोक्तिबलात् तद्विशेषभूतदर्शनश्रवणादेः करणनैरपेक्ष्यमपि सामान्यतः सिद्धम्। तदुभयं कण्ठोक्तं चेत्यर्थः। **जवनः**—झटिति दूरस्थसंबन्धक्षमः। अतो विभुत्वाविरोधः।

---

1 द्रष्टृत्वादेः करणायत्तत्वात् तत् परमात्मनि न भवतीति भाष्यार्थः प्रतीयते। तत् सिद्धसाधनं सिद्धान्त्यनिष्टञ्च। अतोऽर्थान्तरं वक्तुं प्रथमतोऽन्वयमुचितं दर्शयति द्रष्टृत्वादिकमिति। इदमेवोत्तरभाष्यानुगुणं वर्णनम्। भाष्यानुपूर्वी तु उपर्यनूद्यमानरूपा।

2 स्वरूपवाचिनः स्वत इति पदस्य सत्त्वादित्यर्थः।

**न च दर्शनश्रवणादिशब्दाश्चक्षुरादिकरणजन्मनो ज्ञानस्य वाचकाः, अपि तु रूपादिसाक्षात्कारस्य। स च रूपादिसाक्षात्कारः कर्मतिरोहितस्वाभाविकज्ञानस्य जीवस्य चक्षुरादिकरणजन्मा, परस्य तु स्वत एव।**

**"नान्योऽतोऽस्ति द्रष्टा' इत्येतदपि पूर्ववाक्योदितात् नियन्तुर्द्रष्टुरन्यो द्रष्टा नास्तीति वदति। "यं पृथिवी न वेद', 'यमात्मा न वेद' इत्येवमादिभिर्वाक्यैः पृथिव्यात्मादिनियाम्यैरनुपलभ्यमान एव नियमयतीति यत् पूर्वमुक्तम्, तदेव 'अदृष्टो द्रष्टा अश्रुतः श्रोता' इति निगमय्य, 'नान्योऽतोऽस्ति द्रष्टा' इत्यादिना तस्य नियन्तुर्नियन्त्रन्तरं निषिध्यते। 'एष त आत्मा', स त आत्मा' इति च त इति व्यतिरेकविभक्तिनिर्दिष्टस्य जीवस्यात्मतयोपदिश्यमानोऽन्तर्यामी न प्रत्यगात्मा भवितुमर्हति॥**

---

एवं दर्शनश्रवणादेरर्थवशात् करणाधीनत्वकल्पनं श्रुतिविरुद्धमित्युक्तम्। अथ अचक्षुः पश्यतीति व्याहतम्, दर्शनश्रवणादिशब्दानां करणायत्तज्ञानवाचित्वादिति शङ्कायां दर्शनश्रवणादिशब्दानां करणायत्तज्ञानवाचितां निषेधति **न च दर्शने**ति। सर्वप्रयोगानुगतं प्रवृत्तिनिमित्तमाह **अपि त्वि**ति। एवञ्च सति **द्रष्टा श्रोते**ति रूपशब्दयोः साक्षात्कर्तेत्यर्थः। **मन्ता**—ये मानसमननाख्यविचारविषयाः, तेषां साक्षात्कर्ता। **विज्ञाता**—बुद्ध्याध्यवसेया ये, तेषां साक्षात्कर्तेत्यर्थः। तत्तदिन्द्रियविषयसाक्षात्कारपरत्वात् प्रकरणस्य। चक्षुरादिबाह्यकरणमनोबुद्धिरूपान्तःकरणकृत्यविशेषः साधारणाकारग्रहण-विचाराध्यवसायरूपाः; तदाश्रयो जीव इति च मोक्षधर्मेऽऽभिहितम्; यथा—"चक्षुरालोकनायैव संशयं कुरुते मनः। बुद्धिरध्यवसायाय साक्षी क्षेत्रज्ञ उच्यते" इति। संसारिचेतनज्ञानानां प्रतिनियतकरणसापेक्षत्वं प्रमाणां प्रमाणरूपत्वं परोक्षापरोक्षरूपत्वं च भवति; परमात्मनस्तु तत्तत्करणादिनिरपेक्षाणि तत्तत्करणतत्तद्विषयादिसर्वपदार्थगोचराणि सम्यङ्निश्चयरूपाण्यपरोक्षात्मकानि ज्ञानानि भवन्तीति वैषम्यम्॥ करणाधीनत्वं शाब्दं मा भूत्, तथापि व्याप्तिबलात् परमात्मनोपि दर्शनश्रवणादयः करणैर्विना नोपपद्यन्त इति सिंहावलोकितकेनाशङ्क्य दर्शनादीनां करणापेक्षायाः कर्मवश्यत्वेन सोपाधिकत्वान्न व्याप्तिरित्यभिप्रयन्नाह **स चे**ति। कर्मवश्यस्यैव करणापेक्षा, न त्वकर्मवश्यस्येत्यर्थः। उपाधेः सपक्षानुगतत्वं दर्शितं **कर्मतिरोहिते**ति। **परस्य त्वि**ति। तुशब्दोऽकर्मवश्यत्वरूपवैलक्षण्यपरः। तेनापक्षवृत्तित्वं दर्शितं भवति।

तर्हि द्रष्ट्रन्तरनिषेधः कथमुपपद्यत इत्यत्राह **नान्योत** इति। तदेव विवृणोति **यं पृथिवी**त्यादिना। **निगमय्ये**ति। अदृष्टो द्रष्टा पृथिव्यादिनियाम्यादृष्टः तत्तन्नियन्तृरूपद्रष्टेत्युक्तार्थनिगमनमित्यर्थः। 'यः पृथिव्याम्' इत्यादिपर्यायेषु द्रष्टृत्वमार्थम्, निगमनवाक्ये नियन्तृत्वमार्थं गर्भितम्। विशिष्टस्य प्रकृतत्वे सति सामान्यनिर्देशावगतोऽपि इतरनिषेधः प्रकृताकारविशिष्टेतरविषयो दृष्टः, यथा 'अस्मिन् ग्रामे देवदत्त एव पुरुषः, नाऽन्यः' इत्युक्ते न पुरुषमात्रं निषिध्यते, किन्तु नैवंविधोऽन्यः पुरुषोऽस्तीति बुद्धिस्थसातन्त्र्यादिविशिष्टपुरुषान्तरं निषिध्यते; अन्यथा प्रमाणविरोधात्। अतः 'नान्योतोऽस्ति द्रष्टा' इत्यत्र अतःशब्दस्वारस्यवशात् प्रकृततयोक्तलक्षणं द्रष्ट्रन्तरं निषिध्यते। ततश्च परमात्मनाऽप्यवेद्यस्तदन्तरः तन्नियामकः कोऽपि द्रष्टा नास्तीत्यर्थः स्यात्। [1]अपवादाभावात् व्यतिरेकनिर्देशस्वारस्यसिद्धिमाह **एष त** इति। एतत्पादाद्याधिकरणे 'शब्दविशेषात्' इति व्यतिरेकनिर्देशो हेतुतयोक्तः, तस्य

---

1 **अपवादः स्वे महिम्नि, आत्मेश्वरमित्यादौ।**

न च स्मार्तमतद्धर्माभिलापाच्छारीरश्च ॥ १ २-२० ॥

स्मार्तम्—प्रधानम् ; शारीरः—जीवः। स्मार्तश्च शारीरश्च नान्तर्यामी; अतद्धर्माभिलापात्—तयोरसंभावितधर्माभिलापात्। स्वभावत एव सर्वस्य द्रष्टृत्वम् सर्वस्य नियन्तृत्वम् सर्वस्यात्मत्वम् स्वत एवामृतत्वं च तयोर्न संभावनागन्धमर्हति। एतदुक्तं भवति—यथा स्मार्तमचेतनं सर्वज्ञत्वनियन्तृत्वसर्वात्मत्वादिकं नार्हति, तथा जीवोऽपि; अतद्धर्मत्वादिति।

अमीषां गुणानां परमात्मन्यन्वयः प्रत्यगात्मनि व्यतिरेकश्च सूत्रद्वयेन दर्शितः।

निरपेक्षं च हेत्वन्तरमाह—

उभयेऽपि हि भेदेनैनमधीयते ॥ १-२ २१ ॥

उभये—माध्यन्दिनाः काण्वाश्च, अन्तर्यामिणो नियाम्यत्वेन वागादिभिरचेतनैः समम् एनम् शारीरमपि विभज्याधीयते। "य आत्मनि तिष्ठन्नात्मनोऽन्तरो यमात्मा न वेद यस्यात्मा शरीरं य आत्मानमन्तरो यमयति स त आत्मान्तर्याम्यमृतः" इति माध्यन्दिनाः, "यो विज्ञाने तिष्ठन्' इति च काण्वाः परमात्मनियाम्यतया तस्माद्विलक्षणत्वेनैनमधीयत इत्यर्थः। अतोऽन्तर्यामी प्रत्यगात्मनो विलक्षणोऽपहतपाप्मा परमात्मा नारायण इति सिद्धम् ॥ इत्यन्तर्याम्यधिकरणम् ॥

---

प्रदर्शनार्थत्वात् तदुपजीवनेन व्यतिरेकनिर्देशो हेतुरुक्तः। 'एष ते' इति सर्वपर्यायानुवृत्तषष्ठीनिर्देशोऽत्र विवक्षितः ; पर्यायविशेषस्थसप्तमीनिर्देशस्तु उभयेऽपीति सूत्रविवक्षित इति विशेषः ॥

**न च स्मार्तमतद्धर्माभिलापाच्छारीरश्च** ॥ अक्षरार्थमाह **स्मार्त**मित्यादिना। के पुनस्तदसंभाविता धर्मा इत्यत्राह **स्वभावत एवे**ति। प्रधानस्यान्तर्यामित्वप्रसङ्गाभावेऽपि किमर्थं सूत्रेण तन्निरसनमित्यत्राह **एतदुक्त**मिति। पूर्वसूत्रे तद्धर्मा उक्ताः, अस्मिन् सूत्रेऽपि प्रकृतिपुरुषयोरसंभाविता धर्मा उक्ता इति सूत्रस्य पौनरुक्त्यमाशङ्क्य परिहरति **अमीषामि**ति ॥

**निरपेक्षं चेति**। पूर्वं व्यतिरेकनिर्देशसापेक्षहेतुरुक्तः, अयं तु वक्ष्यमाणो निरपेक्ष इत्यर्थः। **उभयेपि हि भेदेनैनमधीयते** ॥ अत्रैकैकवस्तुषु परिपूर्णत्वेन नियन्तृतया स्थितिज्ञापनार्थं यच्छब्दावृत्तिः। 'स ते' इति व्यतिरेकनिर्देशो देवादिशब्दानां शरीरमात्रपरत्वं चास्वरसम्। तच्चापवादाभावे अनुपपन्नम्। आत्मशब्दस्य स्ववाचित्वे तिष्ठन्नित्यादयोऽप्यस्वरसाः। 'यो विज्ञाने तिष्ठन्' इति काण्वपाठैकार्थ्यादात्मशब्दस्य स्ववाचित्वमयुक्तम्। प्रश्नवाक्यस्य चास्वारस्यम् इति भिदा। यच्छब्दावृत्तिरेकत्वेऽपि संभवति—इति भावोऽनुसन्धेयः। **हि**र्हेतौ। न हि भेदशब्दोऽत्र श्रूयत इत्यत्राह **परमात्मनियाम्यतये**ति। भेदकधर्मश्रवणात् भेदेन व्यपदेशः सिद्ध इत्यर्थः। न केवलं व्यतिरेकनिर्देशादीनामपवादाभावः, किंतु तदस्वारस्यापवादश्चास्तीति भावः। **सुबालो**पनिषदुक्तविशेषणैस्तदेकविषयतां स्मारयन् अधिकरणार्थमुपसंहरति **अत** इति ॥

अस्मिन्नधिकरणे **कैश्चि**च्चतुर्धा विचारो दर्शितः—पृथिव्याद्यभिमानिदेवताविशेषो वा योगसिद्धो वा परमात्मा वा अर्थान्तरं वेति। तत्रार्थान्तरमिति पक्षस्त्वसंभवनिरस्तः। ऐश्वर्यविशेषयोगस्य प्रकृष्टादृष्ट-

जन्यत्वाविशेषात् देवतास्वेव योगसम्भवाच्च शिरोन्तरभेदकल्पनं विफलम् ॥ [1]कार्यकरणवत्त्वं जीवत्वे हेतुतयोक्तम् । तदयुक्तम् ; पृथिव्यादिष्वेकैकस्य शरीरत्वावगमात् चक्षुरादीनां प्रत्येकं शरीरत्वावगमाच्च, तत्कृतजीवत्वशङ्काया आनन्दमयाधिकरणे व्युदस्तत्वाच्च तेन जीवत्वशङ्कानुदयात् । भूतेन्द्रियादीनां सङ्घातरूपेण शरीरेण उपकरणोपकरणित्वलक्षणसंबन्धो हि जीवत्वसाधकः ॥ अदृष्टत्वश्रवणेन प्रधानत्वशङ्काव्युदासपरं द्वितीयं सूत्रं व्याख्यातम् । तच्चायुक्तम् ; 'अदृष्टो द्रष्टा अश्रुतः श्रोता' इत्यादिवाक्ये अदृष्टाश्रुतादिपदानां द्रष्टृश्रोत्रादिपदान्तरितानामेव श्रूयमाणतया प्रधानपरत्वशङ्कानुदयात् । न ह्येकपदश्रवणेन वाक्यार्थनिर्धारणं पूर्वपक्षेऽपि घटते । प्रधानस्य सर्वविकारकारणत्वेऽपि नियन्तृत्वमुपचारतोऽपि न शक्यशङ्कम् । न हि घटादीन् प्रति मृत्तिकायाः नियन्तृत्वम् । अतः स्मार्तोपन्यासो दृष्टान्ततयैव घटते । अत एव, 'न च स्मार्तमतद्धर्माभिलापाच्छारीरश्च' इत्येवमन्तमेकं सूत्रम् ; अन्यथाऽर्थवैघट्यात् । वैघट्यं च प्रधानशङ्कानुदय एव ॥ पृथिव्यादिनियन्तॄणां जीवानामिव ईश्वरस्यापि सर्वनियन्तुर्नियन्त्रन्तरापेक्षया अनवस्थायां प्रसक्तायां नियन्तृनियाम्ययोरभेदेन तत्परिहार इत्यपि दुरुक्तम् ; अनवस्थाप्रसङ्गाभावात् । युक्त्या कल्पनायां ह्यनवस्थानम् ; न श्रुत्याऽभ्युपगमे । श्रुतिश्च 'न तत्समश्चाभ्यधिकश्च दृश्यते' इत्यादिर्नियन्त्रन्तरं प्रतिषेधति । न चानवस्थाया भेदप्रयुक्तत्वादभेदेन तत्परिहार इति वाच्यम् ; श्रुतभेदनिबन्धनचोद्यस्य श्रुतविरुद्धाभेदकल्पनया परिहारानुपपत्तेः ॥ कयोरभेदः ? न तावत् पृथिव्यादेः परमात्मनश्च, जडाजडयोरैक्याभावात् । नापि जीवेन ; पृथिव्यादिवत् नियाम्यतयाऽवगतस्य तस्य तेनैव न्यायेन परमात्मनैक्यासंभवात् ; पक्षपातस्याहेतुकत्वाच्च । परमात्मसामानाधिकरण्यभेदनिषेधौ ह्युभयत्र समानौ । किञ्च पृथिव्यादेः स्वव्यतिरिक्तज्ञानप्रकाश्यत्वे ज्ञानस्यापि स्वव्यतिरिक्तज्ञानप्रकाश्यत्वेनानवस्थाप्रसङ्गात् तत्परिहारार्थं जडाजडयोरैक्यं किं न स्यात् । ज्ञानस्य स्वप्रकाशत्वेनानवस्थानुदयात् मिथ्यासत्य-जडाजडयोस्तयोः स्वभावविरोधाच्चेति चेत्—तर्हि सर्वनियन्तुरीश्वरस्यापि आत्मेश्वरतया नियन्त्रन्तराभावेन अनवस्थित्यभावात् हेयार्हतदनर्हयोः स्वभावविरोधाच्च न जीवेश्वरयोरेकत्वं युक्तम् । धारणादावप्ययमनवस्थापरिहारोऽनुसन्धेयः ॥ किञ्च भेदो हि प्रतीयते, कथमभेदेनानवस्थापरिहारः ॥ [2]इत्थम् । प्रतीयमानोऽपि भेदो मिथ्या । न च जडाजडयोरैक्यप्रसङ्गः,

---

1 कार्येत्यादि । अत्रैवमर्थः प्रतीयते—अन्तर्यामिब्राह्मणे पृथिव्यांतिष्ठन्नित्यादिना भूतेन्द्रियाणामेव निर्देशात् तथाशरीरेन्द्रियवत्त्वं जीवस्यैवेति स एवान्तर्यामीति परमतः पूर्वपक्षो न युक्तः, तेषां पृथक् शरीरत्वेनैव निर्देशात् संघातोपकरणभावानवगमादिति । नैष युक्तः—तथा परमते पूर्वपक्षाभावात् । तस्मादन्योऽर्थ एवम् । पक्षचतुष्टयं शाङ्करोक्तम् । भामत्यां जीव इति पूर्वपक्ष एव निगमितः । शरीरेन्द्रियवत्त्वाभावे नियन्तृत्वायोगात् जीवस्यैव तत्संभवात् जीव एवान्तर्यामीति यदुक्तं तदयुक्तमिति, तदयुक्तमित्यन्तस्यार्थः । तत्र हेतुरुच्यते पृथिवीति । पूर्वपक्षिणा स्वशरीरप्रेरणे शरीरान्तरनिरपेक्षत्वस्येष्टत्वात् अत्र ब्राह्मणे भूतानां चक्षुरादीनाञ्च शरीरत्वस्य स्पष्टमुक्ततया अन्यापेक्षाविरहेण पूर्वपक्षानुत्थितेः । तेषां शरीरत्वे ईश्वरस्य जीवत्वापत्तिरेव शंक्यत इति चेत्—आनन्दमयाधिकरणादावेव तन्निरासः सिद्ध इति । 2 शंकते इत्थमिति ।

## अदृश्यत्वादिगुणकाधिकरणम् १-२-५

### अदृश्यत्वादिगुणको धर्मोक्तेः ॥ १-२-२२ ॥

आथर्वणिका अधीयते, "अथ परा यया तदक्षरमधिगम्यते, यत्तदद्रेश्यमग्राह्यमगोत्रम-

---

नियाम्यपृथिव्यादिमिथ्यात्वाद्धि पृथिव्यादेः परस्य च भेदमिथ्यात्वम्। जीवपरयोस्तु स्वरूपैक्यात् भेदमिथ्यात्वम्। अत एव च नानवस्थेति चेत्—स्यादेवानवस्था; जीवपरैक्येऽपि पृथिव्यादिकं प्रति जीवस्येव तदेकीभूतस्यापि ब्रह्मणो नियन्त्रन्तराकाङ्क्षाया निवारकाभावात्। यथा पृथिव्यादेर्जीवस्य च नियन्तृनियाम्यभावमिथ्यात्वेऽपि तस्येश्वरं प्रति नियाम्यत्वमपारमार्थिकं संभवति, तथा जीवं प्रति नियन्तुः परमात्मनोऽप्यपरमार्थनियन्तृत्वादेवान्यं प्रति अपरमार्थभूतनियाम्यत्वशङ्कां को वारयेत॥ नियन्त्रन्तरनिषेधकं प्रमाणं निवारकमिति चेत्—यदि प्रमाणबलादनवस्थापरिहारः, तर्हि नियन्तृनियाम्यभावपारमार्थ्यमाश्रित्यैव सा परिह्रियताम्; प्रमाणान्तराबाधेन निर्वाहे संभवति बाधाश्रयणायोगात्॥

अत एव 'नान्योऽतोऽस्ति द्रष्टे'त्यपि, परमात्मैवाविद्याकल्पितभेदेन नियन्ता नियाम्यश्च भवतीति[1] न पारमार्थिकद्रष्ट्रन्तरनिषेधपरम्; किंतु नियन्तृरूपद्रष्ट्रन्तरनिवारणपरम्; विशिष्टे प्रकृते सति इतरनिषेधस्य तत्तुल्येतरविषयत्वदर्शनात्। कथं प्रमाणान्तराप्राप्तं नियन्तृनियाम्यभावादिकं विधाय शास्त्रं तदेव प्रतिषेद्धुमलम्॥ कथमेकस्मिन् शरीरे प्रत्यगात्मद्वित्वमिति चेत्—काऽत्रानुपपत्तिः॥ बहुत्वे प्रत्यक्त्वं हीयेतेति चेत्—किं प्रत्यगात्मद्वित्वमात्रेऽनुपपत्तिः, उतैकस्मिन् शरीरे। न प्रथमः, सर्वेषामात्मनामहमिति प्रत्यक्तयैव स्वात्मानुभवदर्शनात्। न द्वितीयः; एकस्मिन् शरीरे चक्षुराद्यभिमानिनां देवानां प्राणसंवादे 'अहंश्रेयसे विवदमानाः' इत्यनेकेषां प्रत्यक्त्वेन स्वात्मानुभवदर्शनात्॥ तत्र प्रत्यक्त्वमेव सत्यम्, भेदो मिथ्येति चेत्—भेदः सत्यः, प्रत्यक्त्वं मिथ्या [इति?] किं न स्यात्। उभयोरपि ह्यबाधस्तुल्यः॥ 'नेह नानास्ती'त्यादिकं भेदबाधकमिति चेत्—"तत्त्वमसि' 'अयमात्मा" इत्यादिकं प्रत्यक्त्वबाधकं किं न स्यात्। परागर्थो हि इदम्बुद्धिगोचरः॥ अयमिति निर्देशः प्रत्यक्त्वाविरोधी, प्रत्यक्त्वस्य प्रमाणसिद्धत्वादिति चेत्—नेह नानेत्यादिकमपि तत एव प्रमाणवशादात्मबहुत्वाविरोधि। अतो बहुत्वस्य पराक्त्वव्याप्यत्वाभावात् व्याप्तिशून्यस्तर्काभासोऽयम्। अतोऽन्तर्यामिविद्याया यथोक्त एवार्थः॥ इत्यन्तर्याम्यधिकरणम्॥

द्रष्टृत्वादिचेतनधर्मैर्नियन्तृत्वादिपरमात्मधर्मैश्च सहितेन 'अदृष्टो द्रष्टा' इत्याद्युक्तेनादृश्यत्वेन परमात्मपरत्वमुक्तं पूर्वाधिकरणे। चेतनधर्मादिरहितकेवलादृश्यत्वप्रतिपादकं वाक्यं प्रधानपरमेव भवितुमर्हति; रूपादिमत्पृथिव्यादिगतदृश्यत्वनिषेधस्य धर्म्यन्तरप्रतिपत्तौ गौरवेण पृथिव्यादिकारणावस्थप्रधानोपस्थापकत्वादिति शङ्कयोत्थानात् सङ्गतिः। इयमुत्तरत्र पूर्वपक्षोपन्यासे व्यक्तीभविष्यति॥

अदृश्यत्वादिगुणको धर्मोक्तेः॥ अदृश्यत्वादिगुणकशब्देन अक्षरम्, पुंलिङ्गनिर्देशेन अक्षरात्परतः परश्च द्वयमपि विषयीक्रियत इत्यभिप्रायेण वाक्यद्वयं विषयतयोपाददानः संशयञ्च दर्शयति अथेत्यादिना। अद्रेश्यमग्राह्यम्—इन्द्रियादृश्यमनुमानाद्यवेद्यम्; चक्षुरदृश्यमिन्द्रियान्तरादृश्यं

---

1 भवतीति यः पारमार्थिकद्रष्ट्रन्तरनिषेधः, तत्परं नेत्यर्थः।

वर्णमचक्षुश्श्रोत्रं तदपाणिपादम्। नित्यं विभुं सर्वगतं सुसूक्ष्मं तदव्ययं यद् भूतयोनिं परिपश्यन्ति धीराः" इति ; तथोत्तरत्र, "अक्षरात्परतः परः" इति। तत्र सन्दिह्यते—किमिहादृश्यत्वादिगुणकमक्षरम् अक्षरात् परतः परश्च प्रकृतिपुरुषौ, अथोभयत्र परमात्मैवेति। किं तावत् प्राप्तम्? प्रकृतिपुरुषाविति। कुतः। अस्याक्षरस्य 'अदृष्टो द्रष्टा' इत्यादाविव न द्रष्टृत्वादिश्चेतनधर्मविशेष इह श्रूयते, 'अक्षरात् परतः परः' इति च सर्वस्माद्विकारात्परभूतादक्षरादस्मात्परः क्षेत्रज्ञ—

वा। यद्वा अद्रेश्यम्—ज्ञानेन्द्रियाविषयः। अग्राह्यम्—पाण्यादिकार्यहानोपादानाद्यविषयः। किमिहेति। अदृश्यत्वादिगुणकाक्षरस्य प्रकृतित्वम्, अक्षरात्परतः परस्य जीवत्वं च शङ्क्यते, न तूभयोरुभयात्मकत्वम्। उभयत्र—वाक्यद्वयेऽपि। किमदृश्यत्वादिगुणकम् अक्षरात्परतः परश्च प्रधानपुरुषौ, उत परमात्मेति विचारः; तदर्थं पृथिव्यादिसंबन्धितया दृष्टं दृश्यत्वादिकं निषिध्यमानं किं पृथिव्यादिसजातीयमचेतनमेवाश्रयमुपस्थापयति, उत नेति। किमूर्णनाभिदृष्टान्तोपादानमचेतनाश्रयोपस्थापकत्वमुपबृंहयति, उत नेति ; किम् 'अक्षरात् संभवतीह विश्वम्' इति विश्वशब्दः चिदचिदात्मकप्रपञ्चमुपस्थापयति, उताचेतनमिति। अचेतनोपस्थापकत्वे सति ऊर्णनाभिदृष्टान्तस्य च अचिदाश्रयोपस्थापकतोपबृंहकतया निषिध्यमानं दृश्यत्वादिकमचिदुपस्थापकमिति अदृश्यत्वादिगुणकं प्रधानम्, ततः परश्च जीव इति स्यात्। यदा विश्वशब्दः चिदचिदात्मकजगदुपस्थापकः, तदा ऊर्णनाभिदृष्टान्तस्य च अचेतनोपस्थापकत्वानुपबृंहकत्वात् निषिध्यमानं दृश्यत्वादिकमपि नाचेतनोपस्थापकमित्यदृश्यत्वादिगुणकः परमात्मा ; परमात्मनश्च परान्तरासंभवात् अक्षरात्परतः परश्च परमात्मेति फलितम्। कुत इति। अदृष्टशब्दस्य [1]अर्हार्थीयतृजन्तपदविशेषणतया "धातुसंबन्धे प्रत्ययाः" इति स्मृतिवशेनार्हार्थे विश्रान्तिरवगम्यते। अद्रेश्यमिति च पदं कृत्यप्रत्ययान्तत्वादर्हार्थम्। तथाचादृश्यत्वादिकं पूर्वाधिकरणे परमात्मधर्मतयाऽवगतमिति नाक्षरं प्रकृतिः। अत एवाक्षरात्परतः परश्च न समष्टिपुरुषः। न हि परमात्मनोऽन्यत् परं विद्यत इति शङ्कायामदृश्यत्वादिगुणकस्य प्रकृतित्वमुपपादयति अस्याक्षरस्येति। अन्तर्यामिविद्यायामपि न केवलमदृष्टत्वं परमात्मत्वसाधकम्, किन्तु द्रष्टृत्वादिसचिवम्। इह तु तत्साचिव्याभावाददृश्यत्वं नाचिद्व्यावर्तकमित्यर्थः। अदृष्टो द्रष्टेत्यादिना सङ्गतिश्चाभिप्रेता। तथाप्यक्षरात्परतः परो न जीवः। न हि अक्षरात्पर इत्युक्तम्; किन्तु 'परतः परः' इति, इति शङ्कायां तस्य समष्टिपुरुषत्वमुपपादयति सर्वस्मादिति। सर्वस्माद्विकारात्परभूतादक्षरादिति समानविभक्तिनिर्देशस्वारस्यात्, परतोऽक्षरा-

[1] अर्हार्थीयेति। ण्वुल्तृचाविति तृचो वर्तमानकालादन्यत्र न प्रयोग इति भाष्यानुसारेऽपि द्रष्टा इत्यत्र न किञ्चित्कालमात्रे दर्शनविवक्षा ; नित्येन वेदेन नित्यवर्तमानदर्शनवचनात्। आगामिकालेऽपि तत्स्पष्टत्वाय अर्हार्थीयो वा स्यात् तृच्। न चार्हतोक्तिः पूर्वकालभावस्थापिका ; नित्यसंबन्धेन योग्यताया अविरोधात्। एवम् अदृष्ट इति भूतकालिकदर्शनसंबन्धाभावकथनात् सांप्रतं दृश्यमान इति न विवक्षितं यतः, अतः इह धातुसंबन्धे प्रत्ययः। यदा यदा दर्शनं द्रष्टेत्यत्र विवक्षितम्, तत्तत्पूर्वकालावच्छिन्नदर्शनासंबन्ध उक्तो भवति। तेन सार्वकालिकं दर्शनाविषयत्वं सिद्धम्। इदमेव चादृश्यत्वमिति भावः।

समष्टिपुरुषः प्रतिपाद्यते । एतदुक्तं भवति--रूपादिमत्स्थूलरूपाचेतनपृथिव्यादिभूताश्रयं दृश्यत्वादिकं प्रतिषिध्यमानं पृथिव्यादिसजातीयसूक्ष्मरूपाचेतनमेवोपस्थापयति । तच्च प्रधानमेव । तस्मात्परत्वञ्च समष्टिपुरुषस्यैव प्रसिद्धम् । तदधिष्ठितञ्च प्रधानं महदादिविशेषपर्यन्तं विकारजातं प्रसूते इति तत्र दृष्टान्ता उपन्यस्यन्ते, "यथोर्णनाभिः सृजते गृह्णते च यथा पृथिव्यामोषधयः संभवन्ति । यथा सतः पुरुषात् केशलोमानि तथा ऽक्षरात् संभवतीह विश्वम्" इति । अतोऽस्मिन् प्रकरणे प्रधानपुरुषावेव प्रतिपाद्येते--इति ॥

एवं प्राप्ते ब्रूमः--अदृश्यत्वादिगुणको धर्मोक्तेः । अदृश्यत्वादिगुणकः अक्षरात्परतः परश्च परमपुरुष एव । कुतः । तद्धर्मोक्तेः । 'यः सर्वज्ञः सर्ववित्' इत्यादिना सर्वज्ञत्वादिकास्तस्यैव धर्मा उच्यन्ते; तथा हि 'यया तदक्षरमधिगम्यते' इत्यादिना अदृश्यत्वादिगुणकमक्षरमभिधाय, 'अक्षरात् संभवतीह विश्वम्' इति तस्माद्विश्वसंभवञ्चाभिधाय, "यः सर्वज्ञः सर्ववित् यस्य ज्ञानमयं तपः । तस्मादेतद्ब्रह्म नामरूपमन्नञ्च जायते" इति भूतयोनेरक्षरस्य सर्वज्ञत्वादिः प्रतिपाद्यते ।

---

दिति सामानाधिकरण्यमिति भावः । चेतनधर्मविशेषाश्रवणेऽप्यदृश्यत्वं साधारणतया न निर्णायकम्; अतोऽनुकूलयुक्तिर्वक्तव्या । दृष्टान्तश्चेतनकारणत्वानुगुण इत्यत्राह **एतदुक्त**मिति । तदन्यार्थकनञुपश्लिष्टाः अब्राह्मणादयः शब्दा हि ब्राह्मणादिप्रत्यासन्न(न्ने ?)सजातीये क्षत्रियादौ वर्तन्ते, न तु श्वपचादौ, पश्वादौ वा । अबालाकृशशब्दादयः प्रत्यसन्नावस्थान्तराश्रये तस्मिन्नेव धर्मिणि वर्तन्ते, न तु धर्म्यन्तरे, संनिकृष्टबोधनस्य न्याय्यत्वात् । एवमदृश्यत्वादिगुणानां धर्मिविशेषाकाङ्क्षायां निषिध्यमानदृश्यत्वस्याचिदाधारत्वेन अचेतने प्रतिपन्ने, तस्यैव सूक्ष्मावस्थस्यादृश्यत्वादौ च संभवति, विजातीयधर्म्यन्तरकल्पने गौरवप्रसङ्गात् तत्परत्वाश्रयणमयुक्तमिति भावः । दृश्यत्वादिनिषेधात् रूपादिवदचेतनत्वमपि निवर्तेत इत्यत्राह **तच्चे**ति । न दृश्यत्वादिव्याप्यमचेतनत्वम्; मनआदौ व्यभिचारादिति भावः । अदृश्यत्वादिगुणकस्य प्रधानत्वसमर्थनमुपजीव्य अक्षरात्परतः परस्य जीवत्वमाह **तस्मा**दिति । **यथोर्णनाभि**रिति चेतनदृष्टान्तः कथमित्यत्राह **तदधिष्ठितश्चे**ति । अनधिष्ठितत्वेऽपि दृष्टान्तोऽस्ति, **यथा पृथिव्या**मिति । चेतनसंनिधिमात्रापेक्षत्वे दृष्टान्तः **यथा सत** इति । पूर्वपक्षमुपसंहरति **अत** इति ॥

राद्धान्ते—**अदृश्यत्वे**ति । परात्परं पुरुषमिति वाक्यं स्मारयति **परमपुरुष** इति । कस्य धर्मोक्तेरित्यपेक्षां पूरयति **तद्धर्मोक्ते**रिति । नन्वक्षरं प्रकृतिः; सर्वज्ञस्तु स्वसंनिधानात् प्रकृत्युपकारकः प्रकृष्टपुण्यो जीवः, तदवस्थोपलक्षितो मुक्तो वेति शङ्कायामाह **तथाही**ति । **तस्मा**दिति । **अक्षर**शब्दः प्रकृताक्षरपर इति भावः । **भूतयोनेरक्षरस्ये**ति । सार्वज्ञ्यादेःधर्मिविशेषापेक्षायां प्रकृत एव धर्मी स्वीकार्यः; उपक्रमश्रुतिपन्नपरित्यागेनाप्रतिपन्नकल्पनायोगात्; "भूतयोनिम्", "तस्मादेतत्" इति कारणत्वप्रत्यभिज्ञानाच्च । अतः 'यस्सर्वज्ञः—तस्मादेतत्' इति **यत्तच्छब्दौ** प्रकृताक्षरविषयौ । ततश्चाक्षरस्य कारणत्वमनूद्य सृष्टिस्थित्युपयोगित्वेन सार्वज्ञ्यादि विधीयत इत्यर्थः ।

ननु भूतयोनित्वलिङ्गप्रत्यभिज्ञानादपि 'अक्षरात्परत' इति श्रुतिप्रत्यभिज्ञानं प्रबलम्, पञ्चम्यन्ताक्षरपदवाच्यं हि प्रधानम् । अतस्तदेव 'यया तदक्षरम्' इत्यत्रापि प्रतिपाद्यम् । अतस्तदनुवादेन सार्वज्ञ्यादिविधानमयुक्तमिति चेन्न; केवलश्रुतिप्रत्यभिज्ञानादपि 'येनाक्षरं पुरुषं वेद सत्यम्' इति पूर्वोक्तभूतयो-

पश्चात् 'अक्षरात्परतः परः' इति च प्रकृतमदृश्यत्वादिगुणकं भूतयोन्यक्षरं सर्वज्ञमेव परत्वेन व्यपदिश्यते। अतः 'अक्षरात्परतः परः' इत्यक्षरशब्दः पञ्चम्यन्तः प्रकृतमदृश्यत्वादिगुणकमक्षरं नाभिधत्ते; तस्य सर्वज्ञस्य विश्वयोनेः सर्वस्मात्परत्वेन तस्मादन्यस्य परत्वासंभवात् ।

नित्य[1]लिङ्गानुगृहीतस्याक्षरश्रुतिप्रत्यभिज्ञानस्य प्रबलत्वात् ॥ ननु 'भूतयोनिम्', 'अक्षरात्संभवति' इत्युपादानमुच्यते; 'यस्सर्वज्ञस्सर्ववित्' इति निमित्तम्। अतो लिङ्गानुगृहीतत्वमसिद्धम्। न चैतावता 'अक्षरात्परतः', 'अक्षरं पुरुषम्' इति श्रुतिप्रत्यभिज्ञानयोस्तुल्यत्वम्। 'अक्षरात्परतः' इति प्रत्यभिज्ञानस्य ऊर्णनाभिदृष्टान्तानुगृहीतत्वेन प्राबल्यादिति ॥ नैवम्; ऊर्णनाभिदृष्टान्तस्याचिद्विशिष्टब्रह्मकारणत्वेऽप्युपपत्तेः। न चैतावता प्रत्यभिज्ञानयोस्तुल्यत्वम्। 'अक्षरं पुरुषम्' इति प्रत्यभिज्ञानस्य प्रथमभाविनः प्रबलतया पञ्चम्यन्ताक्षरशब्दस्य तदविरोधेन वर्णनीयत्वात्। अतो भूतयोन्यक्षरमेव 'अक्षरं पुरुषम्' इत्युच्यते। पुरुषत्वात् कारणत्वेन प्रत्यभिज्ञानाच्च अक्षरशब्दवाच्यः स एव सर्वज्ञत्वादिगुणकः। तथा च सति 'अक्षरात् संभवति', 'तस्मादेतद्ब्रह्म' इति पञ्चम्योर्वैरूप्यं न स्यात्। निमित्तोपादानाभेदे सत्येव ह्येकविज्ञानेन सर्वविज्ञानप्रतिज्ञानमुपपद्यते ॥

अक्षरं न परमात्मा, अक्षरादपि परस्य प्रतिपन्नत्वादित्यत्राह **पश्चादिति**। **परत्वेन व्यपदिश्यते**। प्रथमान्तेन परशब्देन व्यपदिश्यत इत्यर्थः। **प्रकृतमदृश्यत्वादिगुणकमिति**। अदृश्यत्वादिगुणकत्वेन प्रकृतत्वादित्यर्थः। अपाणिपादत्वेन सर्वगतत्वेन पुरुषशब्दवाच्यत्वेन च प्रकृतं हि भूतयोन्यक्षरम्; 'अपाणिपादम्', 'नित्यं विभुं सर्वगतम्', 'तेनेदं पूर्णं पुरुषेण सर्वम्', 'येनाक्षरं पुरुषं वेद' इति च। अक्षरात्परतः परस्य 'दिव्यो ह्यमूर्तः पुरुषः' इति पुरुषशब्दसामानाधिकरण्यदर्शनात् अमूर्तशब्देनापाणिपादत्वप्रत्यभिज्ञानात् 'बाह्याभ्यन्तर' इत्यनेन सर्वगतत्वप्रत्यभिज्ञानाच्च भूतयोन्यक्षरमेव अक्षरात्परतःपर इत्यर्थः। सर्वज्ञस्य भूतयोन्यक्षरात्परत्वशङ्काव्युदासाय भूतयोन्यक्षरस्यैव सार्वज्ञ्यादिगुणकत्वोपपादनं स्मारयति **सर्वज्ञमेवेति**। नन्वक्षरशब्दार्थवैरूप्यपरिहाराय भूतयोन्यक्षरात्सर्वज्ञत्वादिगुणकः पर इत्यभ्युपगन्तव्यमित्यत्राह **अतोऽक्षरादिति**। **प्रकृतमदृश्यत्वादिगुणकमिति**। अदृश्यत्वादिगुणकमक्षरमेव, 'येनाक्षरं पुरुषम्' इति पूर्वस्मिन् संनिकृष्टवाक्ये **प्रकृतम्**; तदेव **प्रोवाचेति** वक्तव्यतया प्रतिपादितमिति तस्यैव प्राधान्येन प्रतिपाद्यत्वमवगम्यते। अतोऽक्षरपुरुष एव अक्षरात्परतःपरत्वेनोच्यत इत्यभ्युपेत्यम्; अन्यस्य प्रतिपाद्यत्वमुक्त्वा अर्थान्तरस्य प्रतिपादनायोगात्। अतोऽक्षरपुरुषो न पञ्चम्यन्ताक्षरशब्दोक्तः; अपि त्वक्षरात्परतः पर एवेत्यभिप्रायः। **अत** इत्यभिप्रेतं हेतुं विवृणोति **तस्येति**। **सर्वज्ञस्य विश्वयोनेरिति**। 'अक्षरात्संभवतीह विश्वम्' 'तस्मादेतद्ब्रह्म नाम रूपमन्नं च जायते' इत्युभयत्र कारणत्वप्रत्यभिज्ञानात् भूतयोन्यक्षरमेव सर्वज्ञमिति न सर्वज्ञस्तदपेक्षया पर इत्यभिप्रायः। **सर्वस्मात् परत्वेन तस्मादन्यस्य परत्वासम्भवादिति**। भूतयोन्यक्षरमभिधाय, अनन्तरमेव "यस्मात्परं नापरमस्ति किञ्चित्" इति समाम्य-

---

1 लिङ्गानुगृहीतस्य--लिङ्गप्रत्यभिज्ञानानुगृहीतस्येत्यर्थः। तस्मादेतदिति वाक्ये पूर्वोक्तं सर्वज्ञे भूतयोनित्वप्रत्यभिज्ञानम्; अक्षरं पुरुषमिति पुरुषे अक्षरश्रुतिप्रत्यभिज्ञानम्। इदमुभयं पचातदक्षरमित्यक्षरस्य परमात्मत्वस्थापकमिति भावः।

अतोऽत्राक्षरशब्दो भूतसूक्ष्ममचेतनं ब्रूते ॥ २२ ॥

इतश्च न प्रधानपुरुषौ--

विशेषणभेदव्यपदेशाभ्याश्च नेतरौ ॥ १-१-२३ ॥

विशिनष्टि हि प्रकरणम् प्रधानाच्च पुरुषाच्च भूतयोन्यक्षरम्[1] एकविज्ञानेन सर्वविज्ञानप्रतिज्ञोपपादनादिभिः (?) व्यावर्तयतीत्यर्थः। तथा ताभ्यामक्षरस्य भेदश्च व्यपदिश्यते, 'अक्षरात्परतः परः' इत्यादिना।

तथा [2]हि—"स ब्रह्मविद्यां सर्वविद्याप्रतिष्ठामथर्वाय ज्येष्ठपुत्राय प्राह" इति सर्वविद्याप्रतिष्ठाभूता ब्रह्मविद्या प्रक्रान्ता। परविद्यैव च सर्वविद्याप्रतिष्ठा। तामिमां सर्वविद्याप्रतिष्ठां विद्यां चतुर्मुखाथर्वादिगुरुपरम्परयाऽङ्गिरसा प्राप्तां जिज्ञासुः शौनको ह वै महाशालोऽङ्गिरसं

थिकनिषेधस्योपक्रमावगतत्वादित्यर्थः। भूतयोन्यक्षरादनन्यत्वेन सर्वज्ञस्य ततः परत्वासंभवः, उपक्रमविरोधेनाक्षरादर्थान्तरस्य परत्वासंभव इत्युक्तं भवति। अक्षरादिति किमुच्यत इत्यत्राह **अतोऽत्रेति**। **अतः**—यस्य परमात्मधर्मोक्तिः, स हि परमात्मा; प्रथमान्ताक्षरशब्दनिर्दिष्टस्य तद्धर्मश्रवणात् पञ्चम्यन्ताक्षरशब्दनिर्दिष्टस्य तदभावाच्चेत्यर्थः। अक्षरशब्दयोर्भिन्नविषयत्वमुपपन्नम्; अस्मिन्नेव प्रकरणे 'तपसा चीयते ब्रह्म', 'इति ह स्म यद्ब्रह्मविदो वदन्ति', 'तस्मादेतद्ब्रह्म नाम रूपमन्नं च जायते' इत्यत्र ब्रह्मशब्दयोर्भिन्नविषयत्वदर्शनात् ॥ यत्तु समानविभक्तिनिर्देशस्वारस्यात् सामानाधिकरण्यमिति—तन्न; परशब्दस्य पञ्चम्यन्तपदसापेक्षत्वात् तत्स्वारस्यार्थं न सामानाधिकरण्यम्। किञ्च परतोऽक्षरादिति न निर्दिष्टम्। 'अक्षरात्परतः परः' इति हि क्रमः, तत्स्वारस्याच्च न सामानाधिकरण्यम् ॥ २२ ॥

**विशेषणभेदव्यपदेशाभ्यां च नेतरौ** ॥ **विशेषण**शब्दं व्याचष्टे **विशिनष्टि हीति**। कस्मात्किमित्यत्राह **प्रधानादिति**। कैर्धर्मैरित्यत्राह **एकेति**। **भेदव्यपदेश**शब्दं व्याचष्टे **तथेति**। हेतुद्वयं विवरीतुमाह **तथा हीति**। न केवलं विशेष्यवाचिना ब्रह्मविद्याशब्देन, विशेषणवाचिना **सर्वविद्याप्रतिष्ठामिति** शब्देनापि ब्रह्मविषयत्वं सिद्धमित्याह **परविद्यैव चेति**। परब्रह्मविषया विद्या परविद्या। **सर्वविद्याप्रतिष्ठा**त्वम्—सर्वविद्याश्रयत्वम्। ज्ञातव्ये ब्रह्मणि कृत्स्नज्ञातव्यान्तर्भावात् ब्रह्मज्ञाने कृत्स्नविषयज्ञानानि

1 अक्षरमिति पदोत्तरं 'व्यावर्तयतीत्यर्थः' इति पदं सर्वत्र लक्ष्यते। टीकादर्शने तु तत् पदमेव नास्तीति ज्ञायते। परंत्वेतदधिकरणान्ते परमतखण्डनटीकाव्याख्यानावसरे भावप्रकाशिकोक्तस्यानुसारे पदमिदम् उपपादनादिभिरित्येतदनन्तरम् अस्तीति ज्ञायत इति तत्रैव योजयित्वेह मुद्रितम्। अन्यथाऽनन्वयाच्च। तदनुसारेण प्रकरणमित्यत्र वाक्यच्छेदः कार्यः। व्यावर्तयतीत्यर्थ इति पदं (लेखककृतविवरणं) प्रक्षिप्तमिति वेदान्तदीपानुसारेण टीकास्वरसेन च विमर्शे पुनः, आदिभिरित्यन्तमेकमेव वाक्यम्।

2 सभाष्योपनिषत्कोशेषु अदृश्यमानानां वाक्यानामत्र भाष्ये श्रुतप्रकाशिकायाश्चोदाहरणात् तत्तत्स्थलविवेकार्थमत्रैव भावप्रकाशिकादर्शितया आनुपूर्व्या मुण्डकोपनिषत् पूर्णं प्रकाश्यते—

"ब्रह्मा देवानां प्रथमः संबभूव विश्वस्य कर्ता भुवनस्य गोप्ता। स ब्रह्मविद्यां सर्वविद्याप्रतिष्ठामथर्वाय ज्येष्ठपुत्राय प्राह। अथर्वणे यां प्रवदेत ब्रह्मा अथर्वा तां पुरोवाचाङ्गिरे ब्रह्मविद्याम्। स भारद्वाजाय सत्यवाहाय प्राह भारद्वाजोऽङ्गिरसे परावराम् ॥ शौनको ह वै महाशालोऽङ्गिरसं विधिवदुपसन्नः पप्रच्छ—कस्मिन्नु भगवो विज्ञाते सर्वमिदं विज्ञातं भवतीति ॥ तस्मै स होवाच—द्वे विद्ये वेदितव्ये इति ह स्म यद्ब्रह्मविदो वदन्ति, परा चैवापरा

विधिवदुपसन्नः पप्रच्छ, 'कस्मिन्नु भगवो विज्ञाते सर्वमिदं विज्ञातं भवति' इति । ब्रह्मविद्यायाः सर्वविद्याश्रयत्वाद्ब्रह्मविज्ञानेन सर्वं विज्ञातं भवतीति कृत्वा ब्रह्मस्वरूपमनेन पृष्टम् । तस्मै स होवाच, 'द्वे विद्ये वेदितव्ये इति ह स्म यद्ब्रह्मविदो वदन्ति परा चैवापरा च' इति । ब्रह्मप्रेप्सुना द्वे विद्ये वेदितव्ये—ब्रह्मविषये परोक्षापरोक्षरूपे द्वे विज्ञाने उपादेये इत्यर्थः । तत्र परोक्षं शास्त्रजन्यं ज्ञानम्, अपरोक्षं योगजन्यम् । तयोर्ब्रह्मप्राप्त्युपायभूतमपरोक्षं ज्ञानम् । तच्च भक्तिरूपापन्नम्; "यमेवैष वृणुते तेन लभ्यः" इति अत्रैव विशेष्यमाणत्वात्; तदुपायश्चाऽऽगमजन्यं विवेकादिसाधनसप्तकानुगृहीतं ज्ञानम् । "तमेतं वेदानुवचनेन ब्राह्मणा विविदिषन्ति यज्ञेन दानेन तपसाऽनाशकेन" इति श्रुतेः । आह च भगवान् पराशरः, "तत्प्राप्तिहेतुर्ज्ञानं च कर्म चोक्तं महामुने । आगमोत्थं विवेकाच्च द्विधा ज्ञानं तथोच्यते" इति । 'तत्रापरा ऋग्वेदो यजुर्वेदः' इत्यादिना 'धर्मशास्त्राणि' इत्यन्तेन आगमोत्थं ब्रह्मसाक्षात्कारहेतुभूतं परोक्षज्ञानमुक्तम् । साङ्गस्य सेतिहासपुराणस्य सधर्मशास्त्रस्य समीमांसस्य वेदस्य ब्रह्मज्ञानोत्पत्तिहेतुत्वात् । "अथ परा, यया तदक्षरमधिगम्यते" इति उपासनाख्यं ब्रह्मसाक्षात्कार-

---

अन्तर्भूतानीत्यर्थः । ब्रह्म जिज्ञासमानेन ब्रह्म हि प्रष्टव्यम्; 'कस्मिन्नु भगवः' इति प्रश्नस्य कथं ब्रह्मविषयत्वमित्यत्राह ब्रह्मविद्याया इति । 'द्वे विद्ये' इति विद्याद्वयं भिन्नविषयत्वेन इतरैर्व्याख्यातम् । तत्र कैश्चित् परविद्या परमात्मविषया अर्थान्तरविषया चापरविद्येति, कैश्चित् कर्मज्ञानमपरविद्या, ब्रह्मज्ञानं परविद्येति उक्तम्; कैश्चित् अपरमात्मज्ञानमपरविद्या, परमात्मज्ञानं परविद्येत्युक्तम् । तद्व्यावृत्त्यर्थं व्याचष्टे ब्रह्मप्रेप्सुनेति । ब्रह्मैव विषयश्चेत्, द्वयोरपि को भेद इत्यत्राह परोक्षापरोक्षरूपे इति । तस्येति आदिः । 'स तपोऽतप्यत', 'ओदनपाकं पचति' इतिवत् द्वे विद्ये वेदितव्ये इत्युक्तिः । तत्र फलितमाह उपादेये इत्यर्थः इति । किं परोक्षम्, किमपरोक्षमित्यत्राह तत्रेति । ब्रह्मैव विषयश्चेत्, प्रथमेनैवालमित्यत्राह तयोरिति । उपायभूतम्—अव्यवहितोपायभूतम् । तस्यापि निष्फलत्वमत्रत्यवाक्येनावगम्यत इत्यत्राह तच्च भक्तिरूपेति । तर्हि किं प्रथमेनेत्यत्राह तदुपायश्चेति । साधनसप्तकं शास्त्रजन्यज्ञानं चोभयमप्युपासनात्मकज्ञानस्य हेतुरिति यावत् । एतद्द्रढयितुमाह आह चेति । अनेन विद्याद्वयस्य भिन्नविषयत्वोक्तिरुपबृंहणविरुद्धेति दर्शितं भवति । विवेकाच्च—उत्थितमित्यर्थः । यथोक्तलक्षणे ज्ञानद्वयेऽपि किं वाक्यं किंविषयमित्यपेक्षायामागमोत्थज्ञानं तत्रेत्यादिवाक्येनोक्तमित्याह तत्रेति । वेद एव हि ब्रह्मज्ञानहेतुः; धर्मशास्त्रादिकीर्तनं किमर्थम्; न चात्रागमोत्थत्वं ज्ञानस्य शाब्दं प्रतीयत इत्यत्राह साङ्गस्येति । सपरिकरस्यागमस्य तज्ज्ञानहेतुत्वादपरा विद्येत्युक्तमित्यर्थः । 'तत्रापरा ऋग्वेदः' इत्यादिवाक्यस्यागमोत्थज्ञानविषयत्वं पूर्वोक्तोपबृंहणवचनेन द्विधा ज्ञानं तथोच्यते इत्यनेन स्पष्टीकृतम् । अथेत्यादिवाक्यस्य विवेकजन्यज्ञानविषयत्वमाह अथेति । उक्तमित्यन्वयः । यत्तदित्यादिवाक्यस्य विषयमाह

मुण्डकोपनिषत्

च । तत्रापरा—ऋग्वेदो यजुर्वेदस्सामवेदोऽथर्ववेदः शिक्षा कल्पो व्याकरणं निरुक्तं छन्दो ज्योतिषमितिहासपुराणं न्यायो मीमांसा धर्मशास्त्राणीति । अथ परा—यया तदक्षरमधिगम्यते, यत्तदद्रेश्यमग्राह्यमगोत्रमवर्णमचक्षुःश्रोत्रं तदपाणिपादम् । नित्यं विभुं सर्वगतं सुसूक्ष्मं तदव्ययं यद्भूतयोनिं परिपश्यन्ति धीराः ॥ यस्मात्परं नापरमस्ति किञ्चित् यस्मान्नाणीयो न ज्यायोऽस्ति कश्चित् ।

लक्षणभक्तिरूपापन्नं ज्ञानम्। 'यत्तदद्रेश्यमग्राह्यम्' इत्यादिना परोक्षापरोक्षरूपज्ञानद्वयविषयस्य परस्य ब्रह्मणः स्वरूपमुच्यते। 'यथोर्णनाभिस्सृजते गृह्णते च' इत्यादिना यथोक्तस्वरूपात् परस्माद्ब्रह्मणोऽक्षरात् कृत्स्नस्य चेतनाचेतनात्मकप्रपञ्चस्योत्पत्तिरुक्ता, विश्वमिति वचनात्; नाचेतनमात्रस्य। 'तपसा चीयते ब्रह्म ततोऽन्नमभिजायते। अन्नात्प्राणो मनस्सत्यं लोकाः कर्मसु चामृतम्' इति ब्रह्मणो विश्वोत्पत्तिप्रकार उच्यते। तपसा—ज्ञानेन; 'यस्य ज्ञानमयं तपः' इति वक्ष्यमाणत्वात्; चीयते—उपचीयते; 'बहु स्याम्' इति सङ्कल्परूपेण ज्ञानेन ब्रह्म सुसृक्षुन्मुखं भवतीत्यर्थः। ततोऽन्नमभिजायते—अद्यत इत्यन्नम्; विश्वस्य भोक्तृवर्गस्य भोग्यभूतं भूतसूक्ष्ममव्याकृतं परस्माद्ब्रह्मणो जायत इत्यर्थः। प्राणमनःप्रभृति च स्वर्गापवर्गरूपफलसाधनभूतकर्मपर्यन्तं सर्वं विकारजातं तस्मादेव जायते। 'यस्सर्वज्ञस्सर्ववित्' इत्यादिना सृसृक्षुपकरणभूतं सार्वज्ञ्यसत्यसङ्कल्पत्वादिकमुक्तम्। सर्वज्ञात्सत्यसङ्कल्पात्परस्मात् ब्रह्मणोऽक्षरादेतत्—कार्याकारं ब्रह्म नामरूपविभक्तं भोक्तृभोग्यरूपं च जायते॥—'तदेतत्सत्यम्' इति परस्य ब्रह्मणो निरुपाधिकसत्यत्वमुच्यते। "मन्त्रेषु कर्माणि कवयो यान्यपश्यंस्तानि त्रेतायां बहुधा सन्ततानि। तान्याचरत नियतं सत्यकामाः" इति सार्वज्ञ्यसत्यसङ्कल्पत्वादिकल्याणगुणाकरमक्षरं पुरुषं स्वतस्सत्यं नित्यं कामयमानाः तत्प्राप्तये फलान्तरेभ्यो विरक्ताः ऋग्यजुस्सामाथर्वसु कविभिर्दृष्टानि वर्णाश्रमोचितानि

---

यत्तदिति। यथोर्णनाभिरिति भूतयोनित्वविवरणमित्यर्थः। तपसा चीयत इत्यादिकं व्याचष्टे ब्रह्मण इत्यादिना। विश्वस्य भोक्तृवर्गस्येत्यनेनैतद्वाक्यस्थसत्यशब्दो व्याख्यातो भवति। सत्यशब्दवाच्यस्य भोक्तृवर्गस्येत्यर्थः। फलसाधनभूतकर्मपर्यन्तमिति। लोकाः—स्वर्गादयः। कर्मसु चामृतम्—कर्मस्वायत्तममृतम्। अमृतत्वसाधनभूतं कर्मेत्यर्थ इति भावः। पुनः सर्गाभिधानपौनरुक्त्यमाशङ्क्याह यस्सर्वज्ञ इति। यथा 'दध्ना जुहोति' इति वाक्ये जुहोतिपदेन 'अग्निहोत्रं जुहोति' इति विहितं होममनूद्य दध्नस्तत्साधनत्वं विधीयते, तथा कारणानुवादेन सर्वज्ञत्वादिगुणविधानमित्यर्थः। भोक्तृभोग्यरूपश्च जायत इत्यनेन अन्नशब्दो व्याख्यातो भवति। 'अद्यतेऽत्ति च भूतानि' इति ह्यन्नशब्दनिर्वचनम्।

द्वितीयखण्डार्थमाह तदेतत्सत्यमित्यादिना। परस्येति। कारणत्वशङ्कितदोषव्यावृत्त्यर्थमुक्तमित्यभिप्रायः। मन्त्रेष्वित्यादि। केचित् सत्यकामपदं चतुर्मुखलोककामपरं व्याचक्षत इति तद्व्युदासार्थमाह सार्वज्ञ्येति। कामनीयत्वाय कल्याणगुणाकरत्वमुक्तम्। अक्षरं पुरुषं स्वतस्सत्यं...कामयमाना इति। 'तदेतत्सत्यम्' 'येनाक्षरं पुरुषं वेद सत्यम्' पुनश्च 'तदेतत्सत्यम्' इति पूर्वापरयोर्ब्रह्मवाचित्वेन प्रयुक्तसत्यशब्दैकार्थ्यादिति भावः। बहुधेति—अधिकारमन्त्रफलभेदेन। त्रेता—"अग्नित्रयमिदं त्रेता" इति नैघण्टुकाः।

मुण्डकोपनिषत्

वृक्ष इव स्तब्धो दिवि तिष्ठत्येकस्तेनेदं पूर्णं पुरुषेण सर्वम्। यथोर्णनाभिस्सृजते गृह्णते च यथा पृथिव्यामोषधयः संभवन्ति। यथा सतः पुरुषात् केशलोमानि तथाऽक्षरात् संभवतीह विश्वम्। तपसा चीयते ब्रह्म ततोऽन्नमभिजायते। अन्नात् प्राणो मनः सत्यं लोकाः कर्मसु चामृतम्। यः सर्वज्ञः सर्ववित् यस्य ज्ञानमयं तपः। तस्मादेतद्ब्रह्म नाम रूपमन्नं च जायते॥१०॥ इति प्रथमः खण्डः॥

तदेतत् सत्यम्। मन्त्रेषु कर्माणि कवयो यान्यपश्यन् तानि त्रेतायां बहुधा संततानि।

त्रेताग्निषु बहुधा सन्ततानि कर्माण्याचरतेति । 'एष वः पन्थाः' इत्यारभ्य, 'एष वः पुण्यस्सुकृतो ब्रह्मलोकः' इत्यन्तेन कर्मानुष्ठानप्रकारम् श्रुतिस्मृतिचोदितेषु कर्मस्वेकतरकर्मवैधुर्येऽपीतरेषामनुष्ठितानामपि निष्फलत्वम् अयथानुष्ठितस्य चाननुष्ठितसमत्वमभिधाय, "प्लवा ह्येते अदृढा यज्ञरूपा अष्टादशोक्तमवरं येषु कर्म । एतच्छ्रेयो येऽभिनन्दन्ति मूढा जरामृत्यू ते पुनरेवापि यन्ति" इत्यादिना फलाभिसन्धिपूर्वकत्वेन ज्ञानविधुरतया चावरं कर्माऽऽचरतां पुनरावृत्तिमुक्त्वा,

---

आचरतेतीति । उच्यत इति पूर्ववाक्यादनुषङ्गः । एष इत्यादि । **एकतरकर्मवैधुर्येऽपीतरेषां... निष्फलत्वमित्यनेन** "यस्याग्निहोत्रमदर्शपूर्णमासमनाग्रयणमतिथिवर्जितं(जनं) च अहुतमवैश्वदेवम्' इत्यस्यार्थोऽभिप्रेतः । **अयथानुष्ठितस्याननुष्ठितसमत्वं चेत्यनेन** "अश्रद्धया अविधिना हुतमासप्तमात् तस्य लोकान् हिनस्ति" इत्यस्यार्थ उक्तः । इदं त्रिवर्गफलसाधनकर्मविषयमुक्तम् ; 'प्लवा ह्येते अदृढा' इति तत्प्रकरणत्वात् ; "नेहाभिक्रमनाशोऽस्ति" इति मोक्षसाधनकर्मणां यथोक्तविपरीतत्वप्रतिपादनाच्च । **प्लवा ह्येते** इत्यादि । **अष्टादशोक्तम्**—अष्टादशस्मृत्युक्तम् । श्रुतेरपि प्रदर्शनार्थमिदम् । श्रुतिस्मृतिचोदितं कर्मेत्यर्थः । यद्वा षोडशर्त्विक्पत्नीयजमानरूपाष्टादशपुरुषेषु विहितम् । [1]यद्वा "नव ग्राम्यान् पशूनालभते ; नवारण्यान् ; उभयान् पशूनालभते" इति श्रुत्युक्ताष्टादशपशुहविष्कं कर्मेति । **यज्ञशब्दः** कर्तृसामान्यवाची । येषु पुरुषेषु स्मृतिविहितमवरं कर्म फलाभिसन्धिमत्, एतच्छ्रेयो येऽभिनन्दन्ति, ते पुरुषा जरामृत्यू

---

1 अष्टादशत्वसंख्यानिर्वहणविषये परिष्कारोऽपि द्रष्टव्यः ।

मुण्डकोपनिषत्

तान्याचरत (थ) नियतं सत्यकामा एष वः पन्थाः सुकृतो ब्रह्मलोकः । यथा ले(लो)लायते ह्यर्चिः समिद्धे हव्यवाहने । तदाज्यभागावन्तरेणाहुतीः प्रतिपादयेत् (श्रद्धयाहुतम्) । यस्याग्निहोत्रमदर्शपूर्णमासमचातुर्मास्यमनाग्रयणमतिथिवर्जितं च । अहुतमवैश्वदेवमश्रद्धया अविधिना हुतमासप्तमात् तस्य लोकान् हिनस्ति । सप्त ते अग्ने समिधस्सप्त जिह्वाः सप्त ऋषयः सप्त धाम प्रियाणि । सप्त होत्राः सप्तधा त्वा यजन्ति सप्त योनीरापृणस्वा घृतेन । काली कराली च मनोजवा च सुलोहिता या च सुधूम्रवर्णा । स्फुलिङ्गिनी विश्वरूपी(रुची) च देवी लेलायमाना इति सप्त जिह्वाः ॥ एतेषु (एतासु) यश्चरते भ्राजमानेषु यथाकालं चाहुतयो ह्याददायन् । तं नयन्त्येताः सूर्यस्य रश्मयो यत्र देवानां पतिरेकोऽधिवासः ॥ [एतासु भ्राजमानासु सप्तसु जिह्वासु यथाकालं यः कर्माचरति तमाददाना आहुतयस्सूर्यरश्मयो भूत्वा इन्द्रादिलोकं नयन्तीत्यर्थः ।] "एह्येहीति तमाहुतयस्सुवर्चसस्सूर्यस्य रश्मिभिर्यजमानं वहन्ति । प्रियां वाचमभिवदन्त्योऽर्चयन्त्यः एष वः पुण्यस्सुकृतो ब्रह्मलोकः ॥ प्लवा ह्येते अदृढा यज्ञरूपा अष्टादशोक्तमवरं येषु कर्म । एतच्छ्रेयो येऽभिनन्दन्ति मूढा जरामृत्यू ते पुनरेवापियन्ति ॥ अविद्यायामन्तरे वर्तमानाः स्वयं धीराः पण्डितम्मन्यमानाः । जङ्घन्यमानाः परियन्ति मूढा अन्धेनैव नीयमाना यथाऽन्धाः ॥ अविद्यायां बहुधा वर्तमाना वयं कृतार्था इत्यभिमन्यन्ति बालाः । यत् कर्मिणो न प्रवेदयन्ति रागात् तेनातुराः क्षीणलोकाश्च्यवन्ते । [यस्मात्कारणात् कर्मिणो रागोपहतास्तत्त्वं न जानन्ति, तस्माच्च्यवन्त इत्यर्थः ।] इष्टापूर्तं मन्यमाना वरिष्ठं नान्यच्छ्रेयो वेदयन्ते प्रमूढाः । नाकस्य पृष्ठे सुकृते तेऽनुभूत्वा इमं लोकं हीनतरं वाऽऽविशन्ति । [अनुभूत्वा—अनुभूयेत्यर्थः । हीनतरं वा—अतिहीनं नरकं वा इत्यर्थः ।]

"तपश्श्रद्धे ये ह्युपवसन्ति" इत्यादिना पुनरपि फलाभिसन्धिरहितं ज्ञानिनाऽनुष्ठितं कर्म ब्रह्मप्राप्तये भवतीति प्रशस्य, "परीक्ष्य लोकान्" इत्यादिना केवलकर्मफलेषु विरक्तस्य यथोदितकर्मानुगृहीत-ब्रह्मप्राप्त्युपायभूतं ज्ञानं जिज्ञासमानस्य च आचार्योपसदनं विधाय, "तदेतत्सत्यं यथा सुदीप्तात्" इत्यादिना "सोऽविद्याग्रन्थिं विकिरतीह सोम्य" इत्यन्तेन पूर्वोक्तस्याक्षरस्य भूतयोनेः परस्य ब्रह्मणः परमपुरुषस्यानुक्तैः स्वरूपगुणैः सह सर्वभूतान्तरात्मतया विश्वशरीरत्वेन विश्वरूपत्वम्

---

अपियन्तीत्यन्वयः। **ब्रह्मप्राप्तये भवतीत्यनेन** 'सूर्यद्वारेण ते विरजाः प्रयान्ति यत्रामृतः स पुरुषो ह्यव्ययात्मा' इत्यस्यार्थ उक्तः। **परीक्ष्य लोकान्** इत्यादिवाक्ये गुरूपसत्तिविषयनियमविधिः; अन्यत् न्यायसिद्धार्थानुवादरूपम्।

तृतीयखण्डार्थमाह **तदेतत्सत्यं यथेत्यादिना**। भूतयोन्यक्षरस्य अक्षरात्परतः परस्य चानन्यत्वसिद्धये प्रथमतृतीयखण्डयोरैकार्थ्यप्रत्यभिज्ञापकविशेषणानि दर्शयति **पूर्वोक्तस्येत्यादिपदैः**। पूर्वोक्तस्यैवेह प्रति-पाद्यत्वोपपादकानि पदान्तराणि। 'तदक्षरमधिगम्यते...भूतयोनिं परिपश्यन्ति', 'तथाऽक्षरात् विविधाः सोम्य भावाः प्रजायन्ते तत्र चैवापियन्ति' इति वाक्ययोरेकविषयत्वं दर्शितम् **अक्षरस्य भूतयोने-रिति**। 'तपसा चीयते ब्रह्म', 'तपो ब्रह्म परामृतम्' इत्यनयोरैककण्ठ्यं दर्शितम् **परस्य ब्रह्मण इति**। 'तस्मादेतद्ब्रह्म' इत्यवगतकार्यब्रह्मव्युदासार्थः **परशब्दः**। 'तेनेदं पूर्णं पुरुषेण', 'पुरुष एवेदं सर्वम्' इत्यनयोरेकविषयत्वाभिप्रायेण **परमपुरुषस्येत्युक्तम्**। तत्र 'यस्मात् परं नापरमस्ति' इत्युक्तसमाभ्यधि-काराहित्यसूचनार्थः **परमशब्दः**। **अक्षरपुरुषशब्दाभ्यां** 'येनाक्षरं पुरुष'मिति द्वितीयखण्डैकार्थ्यं च दर्शितं

## मुण्डकोपनिषत्

तपश्श्रद्धे ये ह्युपवसन्त्यरण्ये शान्ता विद्वांसो ब्रह्मचर्यं चरन्तः। सूर्यद्वारेण ते विरजाः प्रयान्ति यत्रामृतस्स पुरुषो ह्यव्ययात्मा। परीक्ष्य लोकान् कर्मचितान् ब्राह्मणो निर्वेदमायात् नास्त्यकृतः कृतेन। तद्विज्ञानार्थं स गुरुमेवाभिगच्छेत् समित्पाणिः श्रोत्रियं ब्रह्मनिष्ठम्। तस्मै स विद्वा-नुपसन्नाय सम्यक् प्रशान्तचित्ताय शमान्विताय। येनाक्षरं पुरुषं वेद सत्यं प्रोवाच तां तत्त्वतो ब्रह्मविद्याम्॥ १४॥ इति द्वितीयः खण्डः॥

तदेतत्सत्यम्। यथा सुदीप्तात्पावकाद्विस्फुलिङ्गाः सहस्रशः प्रभवन्ते सरूपाः। तथाऽक्षरा-द्विविधास्सोम्य भावाः प्रजायन्ते तत्र चैवापियन्ति॥ दिव्यो ह्यमूर्तः पुरुषस्स बाह्याभ्यन्तरो ह्यजः। अप्राणो ह्यमनाश्शुभ्रो ह्यक्षरात्परतः परः॥ एतस्माज्जायते प्राणो मनस्सर्वेन्द्रियाणि च। खं वायुर्ज्योतिरापः पृथिवी विश्वस्य धारिणी॥ अग्निर्मूर्द्धा चक्षुषी चन्द्रसूर्यौ दिशः श्रोत्रे वाग्विवृताश्च वेदाः। वायुः प्राणो हृदयं विश्वमस्य पद्भ्यां पृथिवी ह्येष सर्वभूतान्तरात्मा॥ तस्मादग्निस्समिधो यस्य सूर्यस्सोमः पर्जन्य ओषधयः पृथिव्याः (व्याम्)। पुमान् रेतस्सिञ्चति योषितायां बह्वीः प्रजा बहुधा सम्प्रसूताः॥ तस्मादृचस्साम यजूंषि दीक्षा यज्ञाश्च सर्वे क्रतवो दक्षिणाश्च। संवत्सरश्च यजमानश्च लोकः सोमो यत्र पवते यत्र सूर्यः॥ तस्माच्च देवा बहुधा सम्प्रसूतास्साध्या मनुष्याः पशवो वयांसि। प्राणापानौ व्रीहियवौ तपश्च श्रद्धा सत्यं ब्रह्मचर्यं विधिश्च॥ सप्त प्राणाः प्रभवन्ति तस्मात् सप्तार्चिषस्समिधस्सप्त होमाः (जिह्वाः)। सप्तेमे लोका येषु चरन्ति प्राणा गुहाशया निहिताः सप्त सप्त॥ अतस्समुद्रा गिरयश्च सर्वे अस्मात्स्यन्दन्ते सिन्धवस्सप्त(र्व)रूपाः। अतश्च

तस्माद्विश्वसृष्टिं च विस्पष्टमभिधाय,--"आविः संनिहितम्" इत्यादिना तस्यैवाक्षरस्याव्या-

भवति । अत्र हि, 'तथाऽक्षरात् विविधाः सोम्य भावाः प्रजायन्ते तत्र चैवापियन्ति' इत्युक्त्वा, 'दिव्यो ह्यमूर्तः पुरुषः स बाह्याभ्यन्तरः' इति प्रकृतकारणाक्षरपरामर्शितच्छब्देन अक्षरात्परतः परस्य सामानाधिकरण्यात् भूतयोन्यक्षरमेवाक्षरात्परतः पर इत्यवगम्यते । न हि, तस्मादक्षरात्पर इत्युक्तम्, अपि त्वक्षरात्स पर इति । पश्चादपि 'एतस्माज्जायते प्राणः', 'एष सर्वभूतान्तरात्मा', 'तस्मादग्निः समिधश्च सूर्यः' इत्यारभ्य, 'अतः सर्वा ओषधयः" इत्यन्तेषु वाक्येषु तमेव तदेतच्छब्दैः परामृश्य, 'एतेषु भूतेषु तिष्ठते ह्यन्तरात्मा' इत्युक्त्वा, 'पुरुष एवेदं सर्वम्' इत्यभिधानात् भूतयोन्यक्षरब्रह्मशब्दवाच्यः पुरुष एवाक्षरात्परतः पर इति प्रतीयते । अनुक्तैः स्वरूपगुणैरित्यनेन, 'दिव्यो ह्यमूर्तः पुरुषः' इत्याद्युक्ताः दिव्यत्वामूर्तत्वविभुत्वादयो गुणाः विवक्षिताः । विश्वरूपत्वम् विश्वप्रकारत्वम् । तदेव विश्वशरीरशब्देन विशेषितम् । तदुपपादकं सर्वभूतान्तरात्मतयेति पदम् । अन्तःप्रविश्य नियन्तृत्वादस्य विश्वं शरीरतया प्रकार इत्यर्थः । अनेन, 'पद्भ्यां पृथिवी ह्येष सर्वभूतान्तरात्मा', 'अतश्च सर्वा ओषधयो रसाश्च येनैष भूतैस्तिष्ठते ह्यन्तरात्मा', 'पुरुष एवेदं सर्वम्' इति श्रुत्यर्थोऽनुसंहितः । तस्माद्विश्वसृष्टिं चेत्यनेन, 'तस्मादग्निः समिधश्च सूर्यः सोमः पर्जन्य ओषधयः' इत्याद्यर्थ उक्तः । विस्पष्टमित्यनेन प्रथमतृतीयखण्डयोः पौनरुक्त्यपरिहारः । पूर्वोक्तसृष्टिप्रपञ्चनपरत्वान्न पुनरुक्तिरित्यभिप्रायः ।

चतुर्थखण्डार्थमाह आविरिति । आविस्संनिहितम्—योगिनामपरोक्षं संनिहितम् । तस्यैव—प्रथमद्वितीयखण्डप्रतिपादितस्य । अव्याकृतादिति । अक्षरात्परतः परस्येति तृतीयखण्डप्रतिपादितस्येत्यर्थः ।

## मुण्डकोपनिषत्

विश्वा ओषधयो रसाश्च येनैष भूतैस्तिष्ठते ह्यन्तरात्मा ॥ पुरुष एवेदं सर्वं ततो ब्रह्म परामृतम् । एतद्यो वेद निहितं गुहायां सोऽविद्याग्रन्थिं विकिरतीह सोम्य ॥ १० ॥ तृतीयः खण्डः ॥

आविस्सन्निहितं गुहाचरं नाम महत्पदम् । तत्रेदं सर्वमर्पितम् एजत्प्राणत् निमिषच्च यत् । एतज्जानथ सदसद्वरेण्यं परं विज्ञानात् यद्वरिष्ठं प्रजानाम् ॥ [जानथेति—हे शिष्या इति शेषः ।] यदर्चिमद्यदणुभ्योऽणु यस्मिंल्लोका निहिता लोकिनश्च । तदेतदक्षरं ब्रह्म तत्प्राणस्तदवाङ्मनः । [वाङ्मनसागोचरमित्यर्थः ।] तदेतत्सत्यं तदमृतं वेद्धव्यं सोम्य विद्धि ॥ ऋग्धनुर्यजुर्बाणस्साम ज्या घोषणादिना । आथर्वणमयं शुभ्रं प्रतिगृह्णीत सुव्रतः ॥ धनुर्गृहीत्वौपनिषदं महास्त्रं शरं ह्युपासानिशितं संदधीत । आयम्य तद्भावगतेन चेतसा लक्ष्यं तदेवाक्षरं सोम्य विद्धि ॥ प्रणवो धनुश्शरो ह्यात्मा ब्रह्म तल्लक्ष्यमुच्यते । अप्रमत्तेन वेद्धव्यं शरवत् तन्मयो भवेत् ॥ लक्ष्यं सर्वगतं चैव शरो मे सर्वतोमुखम् । वेद्धा सर्वगतश्चैव विद्धं लक्ष्यं न संशयः ॥ आत्मानमरणिं कृत्वा प्रणवं चोत्तरारणिम् । ध्याननिर्मथनाभ्यासात् देवं पश्येन्निगूढवत् ॥

यस्मिन् द्यौः पृथिवी चान्तरिक्षमोतं मनः सह प्राणैश्च सर्वैः । तमेवैकं जानथात्मानमन्या वाचो विमुञ्चथ अमृतस्यैष सेतुः ॥ अरा इव रथनाभौ संहता यत्र नाड्यस्स एषोऽन्तश्चरते बहुधा जायमानः । ओमित्येवं ध्यायथात्मानं स्वस्ति यः पाराय तमसः परस्तात् । [पाराय—

क्षतात्परतोऽपि पुरुषात्परभूतस्य परस्य ब्रह्मणः परमव्योम्नि प्रतिष्ठितस्यानवधिकातिशयानन्दस्वरूपस्य हृदयगुहायामुपासनप्रकारम् [1]उपासनस्य च परभक्तिरूपत्वमुपासीनस्याविद्याविमोकपूर्वकं ब्रह्मसमं ब्रह्मानुभवफलं चोपदिश्योपसंहृतम् ।

---

तदेतदक्षरं ब्रह्मेति वाक्यमभिप्रयन्नाह परस्य ब्रह्मण इति । 'यस्सर्वज्ञस्सर्ववित् यस्यैष महिमा भुवि । दिव्ये ब्रह्मपुरे ह्येष व्योम्न्यात्मा प्रतिष्ठितः' इत्यस्यार्थमाह परमव्योम्नि प्रतिष्ठितस्येति । यस्यैष महिमा भुवीति लीलाविभूत्यन्वय उक्तः । दिव्ये व्योम्नीति त्रिपाद्विभूतिरुक्ता । ब्रह्मपुरे इति शब्दः 'एतत्सत्यं ब्रह्मपुरम्' इतिवन्न कर्मधारयः ; ब्रह्मपुरे आत्मा प्रतिष्ठित इति व्यतिरेकनिर्देशात् । 'तद्विज्ञानेन परिपश्यन्ति धीराः आनन्दरूपममृतं यद्विभाति' इति वाक्यं हृदि निधायाह अनवधिकातिशयेति । हृदयगुहायामुपासनप्रकारमिति । 'एतद्यो वेद निहितं गुहायाम्' इति पूर्वखण्डावसाने हृदयगुहायामुपासनं विहितम्, 'तदेतत्सत्यं तदमृतं तद्वेद्धव्यं सोम्य विद्धि' इत्यारभ्य, "प्रणवो धनुश्शरो ह्यात्मा', 'आत्मानमरणिं कृत्वा' इत्यादिभिरुपासनस्य प्रकार उक्त इत्यर्थः । हृदयगुहासंबन्ध्युपासनस्यैव प्रकारोपदेशोऽयम्, न तूपासनान्तरस्येति इदमवगतम् ; 'गुहाचरं नाम महत् पदम्', 'प्रतिष्ठितोऽन्तर्हृदये संनिधाय,' 'पद्मकोशप्रतीकाशं सुषिरं चाप्यधोमुखम् । हृदयं तद्विजानीयात् विश्वस्यायतनं महत्' इति चतुर्थखण्ड एव तस्योपासनस्य हृदयगुहासंबन्धित्वावगमात् । पाठक्रमादर्थक्रमस्य प्रबलत्वात् षष्ठखण्डे प्रतिपन्नमर्थमाह उपासनस्य चेति । 'यमेवैष वृणुते तेन लभ्यः' इति हि तत्रोक्तम् । [2]अर्थक्रमेण, 'तथा विद्वान् पुण्यपापे विधूय निरञ्जनः परमं साम्यमुपैति' इति पञ्चमखण्डस्थवाक्यं हृदि निधायाह ब्रह्मसममिति । भोगमात्रेण साम्यमित्याह ब्रह्मानुभवफलमिति । अविद्याविमोकपूर्वकमित्यनेन पुण्यपापे विधूयेत्यस्यार्थ उक्तः ॥

---

1 उपासनप्रकारमिति । उपरितनांशस्यात्र विस्तरेणानुक्तिस्तु द्युभ्वाद्यधिकरणस्य भविष्यतोऽयं भागो विषय इति । 2 अर्थक्रमेणेति । भाष्यार्थदर्पणोक्तमपि ग्राह्यम् ।

मुण्डकोपनिषत्

तीरभूतायेत्यर्थः ।] यस्सर्वज्ञस्सर्ववित् यस्यैष महिमा भुवि । दिव्ये ब्रह्मपुरे ह्येष व्योम्नि आत्मा प्रतिष्ठितः ॥ मनोमयः प्राणशरीरनेता प्रतिष्ठितोऽन्तर्हृदये संनिधाय । तद्विज्ञानेन परिपश्यन्ति धीराः आनन्दरूपममृतं यद्विभाति ॥ भिद्यते हृदयग्रन्थिश्छिद्यन्ते सर्वसंशयाः । क्षीयन्ते चास्य कर्माणि तस्मिन् दृष्टे परावरे ॥ हिरण्मये परे कोशे विरजं ब्रह्म निष्कलम् । तच्छुभ्रं ज्योतिषां ज्योतिस्तद्यदात्मविदो विदुः ॥ न तत्र सूर्यो भाति न चन्द्रतारकं नेमा विद्युतो भान्ति कुतोऽयमग्निः । तमेव भान्तमनुभाति सर्वं तस्य भासा सर्वमिदं विभाति । न तत्र चन्द्रार्कवपुः प्रकाशते न वान्ति वाताः कुतोऽन्या देवताः । स एष देवः कृतभूतभावनः स्वयं विरु(शु)द्धो विरजः प्रकाशते । ब्रह्मैवेदममृतं यत्पुरस्तात् ब्रह्म पश्चाद्दक्षिणतश्चोत्तरतश्च । अधश्चोर्ध्वञ्च प्रसृतं ब्रह्म ब्रह्मैवेदं सर्वमिदं वरिष्ठम् ॥ पद्मकोशप्रतीकाशं सुषिरञ्चाप्यधोमुखम् । हृदयं तद्विजानीयाद्विश्वस्यायतनं महत् ॥ १७ ॥ इति चतुर्थः खण्डः ॥

द्वा सुपर्णा सयुजा सखाया समानं वृक्षं परिषस्वजाते । तयोरन्यः पिप्पलं स्वाद्वत्त्यनश्नन्नन्यो अभिचाकशीति ॥ समाने वृक्षे पुरुषो निमग्नोऽनीशया शोचति मुह्यमानः । जुष्टं यदा पश्यत्यन्यमीशमस्य महिमानमिति वीतशोकः ॥ यदा पश्यः पश्यते रुक्मवर्णं कर्तारमीशं पुरुषं ब्रह्मयोनिम् । तदा विद्वान् पुण्यपापे विधूय निरञ्जनः परमं साम्यमुपैति । प्राणो ह्येष[यः] सर्वभूतैर्विभाति विजानन्

ननु पञ्चमखण्डे साम्यापत्तिरूपः सगुणमोक्ष उक्तः । षष्ठे तु 'युक्तात्मानः सर्वमेवाविशन्ति' इति परब्रह्मप्राप्तिरूपपरममोक्ष उक्तः । वेदान्तविज्ञानेति मन्त्रेण तस्य क्रमभावित्वमुक्तम् । 'परेऽव्यये सर्व एकीभवन्ति' इति परममोक्षस्यैक्यापत्तिरूपत्वमुक्तम् । 'यथा नद्य' इति विशेषप्रहाणमुक्तम् । ब्रह्मैव भवतीत्यैक्यापत्तिनिगमनमिति ॥ नैवम् ; तथाहि—सर्वमेवाविशन्तीति न निर्गुणप्राप्तिः, सर्वशब्दस्य निर्गुणवाचित्वाभावात् ; किं तु ब्रह्मविभूतिभूततद्व्याप्यसमस्तजगदनुभवोक्तिः । 'ते सर्वगं सर्वतः प्राप्य धीराः' इति सर्वगस्य ब्रह्मणः प्राप्तेरुक्तत्वात् ; सर्वगशब्देन सर्वशब्दवाच्यस्य ब्रह्मव्याप्यविभूतित्वावगमाच्च । वेदान्तविज्ञानेति तु वाक्यं चरमशरीरावसाने ब्रह्मप्राप्तिप्रतिपादकमिति [1]वक्ष्यते । 'गताः कलाः पञ्चदश प्रतिष्ठाः' इति मन्त्रश्च मुक्तात्मपरित्यक्तदेहेन्द्रियतदभिमानिदेवतादीनामितरचेतनाचेतनवत् प्रलये परमात्मनि लयपरः ; न तु मोक्षपरः ; मुक्तौ कलाशब्दोक्तभूतेन्द्रियाणां परमात्मनैक्यापत्त्य-

1 वक्ष्यते कार्याधिकरणे ।

मुण्डकोपनिषत्

विद्वान् भवते नातिवादी । [अतिवादी न भवति—बहुगर्हवाङ् न भवतीत्यर्थः ।] आत्मक्रीड आत्मरतिः क्रियावानेष हि ब्रह्मविदां वरिष्ठः ॥ सत्येन लभ्यस्तपसा ह्येष आत्मा सम्यज्ज्ञानेन ब्रह्मचर्येण नित्यम् । अन्तश्शरीरे ज्योतिर्मयो हि शुभ्रः यं पश्यन्ति यतयः क्षीणदोषाः ॥ सत्यमेव जयति नानृतम् सत्यस्य पन्था विततो देवयानः । येनाक्रमन्त्यृषयो ह्याप्तकामा यत्र तत् सत्यस्य परमं निधानम् ॥ बृहच्च तद्दिव्यमचिन्त्यरूपं सूक्ष्माच्च तत् सूक्ष्मतरं विभाति । दूरात्सुदूरे तदिहान्तिके च पश्यत्स्वेहैव निहितं गुहायाम् ॥ न चक्षुषा गृह्यते नापि वाचा नान्यैर्देवैस्तपसा कर्मणा वा । ज्ञानप्रसादेन विशुद्धसत्त्वस्ततस्तु तं पश्यति निष्कलं ध्यायमानः ॥ एषोऽणुरात्मा चेतसा वेदितव्यो यस्मिन् प्राणः पञ्चधा संविवेश । प्राणैश्चित्तं सर्वमोतं प्रजानां यस्मिन् विशुद्धे विभवत्येष आत्मा । [विभवति—वैभवयुक्तो भवति ; परमात्मनि प्रसन्ने असंकुचितज्ञानो भवतीत्यर्थः ।] यं यं लोकं मनसा संविभाति विशुद्धसत्त्वः कामयते यांश्च कामान् । तंतं लोकं जयते तांश्च कामान् तस्मादात्मज्ञं ह्यर्चयेद्भूतिकामः ॥ १० ॥ इति पञ्चमः खण्डः ॥

स वेदैतत्परमं ब्रह्म धाम यत्र विश्वं निहितं भाति शुभ्रम् । उपासते पुरुषं ये ह्यकामास्ते शुक्रमेतदतिवर्तन्ति धीराः ॥ [शुभ्रम्—पुरुषमित्यन्वयः । शुक्रम्—शरीरोपादानभूतं यत् शुक्रमित्यर्थः ।] कामान् यः कामयते मन्यमानः स कामभिर्जायते तत्र तत्र । पर्याप्तकामस्य कृतात्मनश्च इहैव सर्वे प्रविलीयन्ति कामाः ॥ नायमात्मा प्रवचनेन लभ्यो न मेधया न बहुना श्रुतेन । यमेवैष वृणुते तेन लभ्यस्तस्यैष आत्मा विवृणुते तनूं स्वाम् ॥ नायमात्मा बलहीनेन लभ्यो न च प्रमादात् तपसो वाप्यलिङ्गात् । [तपश्शब्दो ज्ञानपरः । चक्राङ्कनादिलिङ्गशून्यज्ञानेन च न लभ्य इत्यर्थः ।] एतैरुपायैर्यतते यस्तु विद्वान् तस्यैष आत्मा विशते ब्रह्मधाम ॥ [एतैरुपायैः—बलाप्रमादसलिङ्गज्ञानैरित्यर्थः ।] संप्राप्यैनमृषयो ज्ञानतृप्ताः कृतात्मानो वीतरागाः प्रशान्ताः । ते सर्वगं सर्वतः प्राप्य धीरा युक्तात्मानः सर्वमेवाविशन्ति । वेदान्तविज्ञानसुनिश्चितार्थाः संन्यासयोगात् यतयश्शुद्धसत्त्वाः ।

अत एवं विशेषणाद्भेदव्यपदेशाच्च नास्मिन् प्रकरणे प्रधानपुरुषौ प्रतिपाद्येते ।

भेदव्यपदेशोऽपि हि ताभ्यां परस्य ब्रह्मणोऽत्र विद्यते, "दिव्यो ह्यमूर्तः पुरुषः स बाह्याभ्यन्तरो ह्यजः । अप्राणो ह्यमनाश्शुभ्रो ह्यक्षरात्परतः परः" इत्यादिभिः । अक्षराद्व्याकृतात्परो यः समष्टिपुरुषः, तस्मादपि परभूतोऽदृश्यत्वादिगुणकोऽक्षरशब्दाभिहितः परमात्मेत्यर्थः । अश्नुत इति वा, न क्षरतीति वा अक्षरं तत् । अ(रम् । तत् अ)तदव्याकृतेऽपि स्वविकारव्याप्त्या वा महदादिवन्नामान्तराभिलापयोग्यक्षरणाभावाद्वा अक्षरत्वं कथञ्चिदुपपद्यते ॥

---

भावात् ॥[1] पृथिव्यादिषु लय एव परमात्मनि लय इति चेत्—अमुक्तदेहस्यापि पृथिव्यादिषु लयादस्य वाक्यस्य मुक्तविषयत्वं न स्यात् । एकस्मिन् मुक्ते सति अग्न्यादिदेवताश्च न परमात्मनि लीयन्ते । अतश्चेदं वाक्यं न मुक्तस्य परमात्मैक्यापत्तिपरम् । यथा नद्य इति तु वाक्यं मुक्तस्य ब्रह्मप्राप्तेः कर्मकृतनामरूपप्रहाणपूर्वकत्वपरम् । ब्रह्मैव भवतीति पूर्वोक्तसाम्यापत्तिनिगमनपरम् ; ब्रह्मपर्यन्तस्यात्माविर्भावपरं वा । अतो यथोक्त एवार्थः । एवं सौत्रहेतुद्वये विशेषणं प्रपञ्चितम् । उपपादितं हेतुं हेत्वन्तरेण सहानुवदन् साध्यार्थेन घटयति अत एवमिति । भेदव्यपदेशस्योपादानं तस्य प्रपञ्चनाकाङ्क्षाजननार्थम् ।

अथ भेदव्यपदेशं प्रपञ्चयति भेदव्यपदेशोऽपि हीति । अक्षरशब्दस्याव्याकृतवाचित्वं [2]कथमित्यपेक्षायाम्, "प्रोक्षणीष्वर्थसंयोगात्" इति [3]न्यायमभिप्रेत्यावयवशक्तिं दर्शयति अश्नुत इति । अश्नुत इत्य(त्याद्य ?)वयवार्थः किमव्याकृते संभवतीत्यत्राह अव्याकृतेऽपीति । स्वविकारव्याप्त्येति । कार्याकारेण विकृतमंशं विकृतादन्यः कारणांशः सूक्ष्मतया व्याप्नोतीत्यर्थः ।

अत एवेदमप्यसदर्थद्वयं नाशङ्कनीयम्, यदुच्यते—इहायं सर्वज्ञशब्दः कस्मिंश्चिद्देवताविशेषे रूढः, न तु यौगिकः, अन्यथा सर्वविच्छब्दपौनरुक्त्यात् । तस्मात् ब्रह्मण उत्पत्तिः श्रूयते, 'तस्मादेतद्ब्रह्म नामरूपमन्नञ्च जायते' इति । इह ब्रह्मशब्दवाच्यश्च परमपुरुषः ; 'येनाक्षरं पुरुषं वेद सत्यं प्रोवाच तां तत्त्वतो ब्रह्मविद्याम्' इति, 'पुरुष एवेदं सर्वं तपो ब्रह्म परामृतम्' इति ब्रह्मपुरुषशब्दयोरेकविषयत्वावगमादिति । तत्र पुरुषाक्षरशब्दयोः सामानाधिकरण्यादक्षरस्य भूतयोनित्वश्रवणात् पुरुष उपादानम् ; अक्षरात्परतः परश्च सर्वविस्त्वादियोगात् निमित्तम् । एवञ्च 'अक्षरात् संभवति', 'अक्षरात्परतः' इति

---

1 परमात्मनैक्यापत्त्यभावादित्येतत्, तानिपरे (4-2-25) इति सूत्रे, कलांजातं परब्रह्मविदो ब्रह्मैव संपद्यते इति शांकरभाष्यखण्डनार्थमिति भा० प्र०

2 कथमिति । किं योगेन उत रूढ्या । नाद्यः ; प्रतिक्षणक्षरणस्वभावस्याव्यक्तस्याक्षरत्वायोगात् । नान्त्यः, यया तदक्षरमित्यत्र रूढिभंगेनार्थवर्णनदोषप्रसंगदिति भावः ।

3 न्यायमिति । वर्णविषये महाभाष्यम्, 'अक्षरं न क्षरं विद्यात् अश्नोतेर्वा सरोऽक्षरम्' इति ।

मुण्डकोपनिषत्

ते ब्रह्मलोके तु परान्तकाले परामृतात् परिमुच्यन्ति सर्वे ॥ गताः कलाः पञ्चदश प्रतिष्ठाः देवाश्च सर्वे प्रतिदेवतासु । कर्माणि विज्ञानमयश्च आत्मा परेऽव्यये सर्वमेकं भवन्ति ॥ यथा नद्यः स्यन्दमानाः समुद्रे अस्तं गच्छन्ति नामरूपे विहाय । तथा विद्वान् नामरूपात् विमुक्तः परात्परं पुरुषमुपैति दिव्यम् ॥ स यो ह वै तत् परमं ब्रह्म वेद ब्रह्मैव भवति । नास्याब्रह्मवित् कुले भवति ।

अक्षरशब्दयोर्विरूपार्थता च न स्यादिति ॥ तत्र तावत् निमित्तोपादानभेदोऽनुपपन्नः ; तथा सति निमित्तान्तरस्य स्थितत्वेन ब्रह्मविज्ञानेन सर्वविज्ञानानुपपत्तेः । न च कार्यविषयतया सर्वशब्दसङ्कोचात् निमित्तान्तरस्थित्युपपत्तिः ; उपादानभूतस्यैव ब्रह्मणो निमित्तत्वं वदतां निमित्तान्तरं च निषेधतां वाक्यानां भूयस्त्वात् । एकविज्ञानेन सर्वविज्ञानप्रतिज्ञानं चोपक्रमावगतत्वात् प्रबलम् । अक्षरपुरुषस्य 'यस्मात्परं नापरम्' इति समाभ्यधिकनिषेधश्च उपक्रमावगतः । तेन तत्प्रेरकं निमित्तान्तरमनुपपन्नम् । अस्यामेवोपनिषदि, 'रुक्मवर्णं कर्तारमीशं पुरुषं ब्रह्म योनिम्' इति कर्तृत्वयोनित्वश्रवणाच्च न निमित्तोपादानभेदः । अन्नादिप्रपञ्चकारणत्वप्रत्यभिज्ञानाच्च न सर्वज्ञाक्षरपुरुषयोर्भेदः—"यः सर्वज्ञः सर्ववित् यस्य ज्ञानमयं तपः । तस्मादेतद्ब्रह्म नामरूपमन्नं च जायते" इति सर्वज्ञस्य तथात्वं श्रूयते ; 'तपसा चीयते ब्रह्म ततोऽन्नमभिजायते' इति ब्रह्मणश्च तथात्वं श्रूयते । 'तपसा चीयते ब्रह्म', 'यस्य ज्ञानमयं तपः" इति तपश्शब्दवाच्यज्ञानवत्त्वं सर्वज्ञस्य ब्रह्मणश्चावगम्यते । ब्रह्मपुरुषशब्दयोश्चैकविषयत्वं दर्शितम् । एवं सर्वज्ञशब्दवाच्यस्य ब्रह्मशब्दनिर्दिष्टपुरुषस्य चान्नादिकारणत्वतदुपयोगिसार्वज्ञ्यादिगुणयोगेनानन्यत्वात् निमित्तोपादानभेदो विध्वस्तः । तदभेदे च सति, "तथाऽक्षरात् संभवति', 'तस्मादेतत् ब्रह्म' इति पञ्चम्योर्वैरूप्यं च न स्यात् । 'ब्रह्म वनं ब्रह्म स वृक्ष आसीत्' इति श्रुत्यन्तराविरोधश्च स्यात् । 'तपसा चीयते', 'यस्सर्वज्ञः' इति मन्त्रयोः प्रतिपन्नस्य सर्वज्ञस्य ब्रह्मणश्च कारणतयाऽनन्यत्वात् मिथः कार्यकारणभावशङ्का निरस्ता ।

किञ्च अस्यामुपनिषदि, अक्षरब्रह्मशब्दौ कारणे कार्ये च प्रयुक्तौ, 'अक्षरात् संभवति', 'अक्षरात्परतः परः', 'तपसा चीयते ब्रह्म', 'तस्मादेतद्ब्रह्म' इति । तत्र पुरुषशब्दसमानाधिकरणावक्षरब्रह्मशब्दौ किं कारणविषयौ, उत कार्यविषयौ इति विशये—'नास्त्यकृतः कृतेन' इत्युक्त्वा, 'येनाक्षरं पुरुषं वेद सत्यं प्रोवाच तां तत्त्वतो ब्रह्मविद्याम्' इत्युक्तत्वात् कारणविषयाविति निश्चीयते । ततश्च कारणपुरुषादन्यस्य परत्वासंभवात् भूतयोन्यक्षरमेवाक्षरात्परतः परः । किञ्च 'येनाक्षरं पुरुषं वेद सत्यं प्रोवाच' इत्यक्षरपुरुषस्य वक्तव्यत्वप्रतीतेः तस्यैव प्राधान्यात् स एवाक्षरात्परतः परश्च भवितुमर्हति ; अन्यस्य प्रतिपाद्यत्वं प्रतिज्ञाय अर्थान्तरप्रतिपादन(ने ?)व्याघातात् । भूतयोन्यक्षरधर्माणामक्षरात्परतः परे दर्शनात्, तस्य च स इति प्रकृताक्षरपुरुषपरामर्शितच्छब्दसामानाधिकरण्याच्चाक्षरात्परतः पर एवाक्षरपुरुषः । किञ्च यथा भूतयोन्यक्षरस्य पुरुषत्वम्, अक्षरं पुरुषमिति पुरुषशब्दसामानाधिकरण्यादवगम्यते, तथा अक्षरात्परतः परस्य च पुरुषत्वं 'दिव्यो ह्यमूर्तः पुरुषः' इति पुरुषशब्दसामानाधिकरण्यादवसीयत इति तयोरनन्यत्वसिद्धिः । ब्रह्मशब्दवाच्याक्षरपुरुषादन्यः सर्वज्ञ इह प्रतिपाद्यते चेत्—"स ब्रह्मविद्यां सर्वविद्याप्रतिष्ठाम्"

मुण्डकोपनिषत्

तरति शोकं तरति पाप्मानं गुहाग्रन्थिभ्यो विमुक्तोऽमृतो भवति । तदेष श्लोकः । क्रियावन्तः श्रोत्रिया ब्रह्मनिष्ठाः स्वयं जुह्वत एकर्षिं श्रद्धयन्तः । तेषामेवैतां ब्रह्मविद्यां वदेत शिरोव्रतं विधिवद् यैस्तु चीर्णम् । तदेतत् सत्यमृषिरङ्गिराः प्रोवाच । नैतदचीर्णव्रतोऽधीते नाकृतपावन नासंन्यासी च । नमः परमर्षिभ्यो नमः परमर्षिभ्यः ॥ १० ॥ इति षष्ठः खण्डः ॥ मुण्डकोपनिषत् समाप्ता ।

अत्र निर्दिष्टे मुण्डकोपनिषत्पाठे स्थिता अधिका अंशाः भाष्यटीकानुमोदिता इतीदमनन्तरपुटे द्रष्टव्यम् ।

## रूपोपन्यासाच्च ॥ १-२-२४ ॥

"अग्निर्मूर्धा चक्षुषी चन्द्रसूर्यौ दिशश्श्रोत्रे वाग्विवृताश्च वेदाः। वायुः प्राणो हृदयं विश्वमस्य पद्भ्यां पृथिवी ह्येष सर्वभूतान्तरात्मा" [1]इतीदृशं रूपं सर्वभूतान्तरात्मनः परमात्मन एव संभवति, अतश्च परमात्मा ॥ इति अदृश्यत्वादिगुणकाधिकरणम्।

इत्युपक्रमविरोधश्च स्यात्। अक्षरपुरुषः सर्वज्ञादपरश्चेत्, 'अथ परा यया तदक्षरमधिगम्यते' इत्यक्षरविद्यायाः परविद्यात्वकथनं विरुध्येत। अक्षरपुरुषः परमकारणं न चेत्, 'उपासते पुरुषं ये ह्यकामाः', 'परात्परं पुरुषमुपैति दिव्यम्' इति परमपुरुषस्योपास्यत्वप्राप्यत्वश्रवणविरोधः। परमकारणस्यैव ह्युपास्यत्वप्राप्यत्वे वेदान्तप्रसिद्धे। परमकारणं चेदक्षरपुरुषः, तस्मादन्यस्य परत्वमनुपपन्नम्; 'स कारणं करणाधिपाधिपो न चास्य कश्चिज्जनिता न चाधिपः' इति कारणान्तराधिपत्यन्तरनिषेधात्। एवञ्च सति सर्वज्ञशब्दरूढ्यनुगुणं न पुरुषशब्दो नेयः; अपि तु पुरुषशब्दरूढ्यनुगुणं सर्वज्ञशब्दो नेयः। ततश्च तस्य पशुपतिपरत्वमयुक्तम्। 'दिव्यो ह्यमूर्तः पुरुषः' 'रुक्मवर्णं कर्तारमीशं पुरुषम्', 'परात्परं पुरुषम्' इत्यादिवाक्यानाम्, 'आदित्यवर्णं तमसः परस्तात्', 'आदित्यवर्णं तमसस्तु पारे', 'त्रिपादस्यामृतं दिवि', 'पुरुष एवेदं सर्वम्' इति पुरुषनारायणोत्तरनारायणैकार्थ्यप्रतीतेः, 'नित्यं विभुं सर्वगतं सुसूक्ष्मम्' इत्यनेन 'अणोरणीयान् महतो महीयान्' इति(त्यादि)कठवल्ल्यैकार्थ्यावगमात् तत्र च 'सोऽध्वनः पारमाप्नोति तद्विष्णोः परमं पदम्' इति श्रवणाच्च, 'पद्मकोशप्रतीकाशम्', 'पुरुष एवेदं सर्वम्' इति नारयणानुवाकसुबालोपनिषदैकार्थ्यावगमाच्च परमपुरुषपरत्वसिद्धिः। ब्रह्मरुद्रयोर्नारायणसृज्यत्वादिश्रुतिविरोधश्चान्यथा स्यात्। [2]अतः सर्वज्ञशब्देन सर्वेषां धर्मिणां ज्ञातृत्वमुक्तम्। सर्वविच्छब्दस्तु तत्तद्वस्तुगतसर्वप्रकारवेदित्वपरः। धर्मिमात्रज्ञानादपि तद्गतप्रकारकात्स्न्र्यज्ञानं हि ज्ञातुः प्रकर्षापादकम्। अक्षसंज्ञवृक्षमात्रज्ञानं हि सर्वेषां संभवति, सकृच्चक्षुःसंप्रयोग एव तद्गतशाखापत्रफलसङ्ख्यादिज्ञानं हि अक्षहृदयाभिज्ञस्यैव संभवति। यद्वा सर्वं विन्दतीति सर्ववित्; सर्वस्वामीत्यर्थः। लब्धधनो हि धनस्वामी भवति। अतः सर्वज्ञत्वादिगुणको निमित्तोपादानभूतः सर्वस्मात्परः परमपुरुष एव॥

**रूपोपन्यासाच्च** ॥ सर्वभूतान्तरात्मन इति सर्वभूतान्तरात्मसंबन्धितयोच्यमानमीदृशं रूपं परमात्मन एव संभवतीत्यर्थः ॥

[1] अत्र मुण्डके निवेशितानामधिकपाठानामादरणे प्रमाणभूताः श्रीभाष्य श्रुतप्रकाशिकासूक्तयस्तावत्—(पु. 328) "तत्रापरा-ऋग्वेदो यजुर्वेद इत्यादिना धर्मशास्त्राणीत्यन्तेन......सांगस्य सेतिहासपुराणस्य...समीमांसस्य वेदस्य ब्रह्मज्ञानोत्पत्तिहेतुत्वात् (श्रीभाष्य), (श्रु. प्र. पु. 328) "वेद एव हि ब्रह्मज्ञानहेतुः; धर्मशास्त्रकीर्तनं किमर्थम्", (330 पु) "अश्रद्धया अविधिना हुतम् आसप्तमात् तस्य लोकान् हिनस्तीत्यर्थ उक्तः", (पु. 331) "यस्मात् परं नापरस्तीत्युक्त समाभ्यधिकराहित्यसूचनार्थः परमशब्दः", (पु. 333) "प्रणवो धनुः शरो ह्यात्मा......आत्मानमरणिं कृत्वा इत्यादिभिरुपासनस्य प्रकार उक्तः इत्यर्थः", (पु. 333) "पद्मकोशप्रतीकाशं सुषिरञ्चाप्यधोमुखम्....इति चतुर्थखण्ड एव तस्योपासनस्य हृदयगुहासंबन्धित्वावगमात्", (पु. 337) "पद्मकोशप्रतीकाशम्'...इत्येवम्॥ अत उपनिषद्भाष्यव्याख्याता अप्येते भागाः सन्तीति ध्येयम्।

[2] रूढ्यर्थत्यागे सर्वज्ञशब्द सर्वविच्छब्दपौनरुक्त्यमिति शंकां परिहरति अत इत्यादिना।

वैश्वानराधिकरणम् १-२-६

## वैश्वानरः साधारणशब्दविशेषात् ॥ १-२-२५ ॥

इदमामनन्तिच्छन्दोगाः--'आत्मानमेवेमं वैश्वानरं [1]संप्रत्यध्येषि तमेव नो ब्रूहि' इति प्रक्रम्य, 'यस्त्वेतमेवं प्रादेशमात्रमभिविमानमात्मानं वैश्वानरमुपास्ते' इति ।

---

**निर्विशेषवादे** तावत् इदं सूत्रत्रयमनुपपन्नम् । अभावरूपाणामप्यदृश्यत्वादीनां गुणत्वव्यवहारात् सर्वज्ञत्वादिधर्मव्यवहाराच्च प्रथमसूत्रं विरुद्धम् ; व्यावर्तकधर्मापारमार्थ्ये व्यावृत्त्यपारमार्थ्यात् भूतयोन्यक्षरस्य प्रधानव्यावृत्त्यसिद्धेश्च । भेदमिथ्यात्वे भेदव्यपदेशेन परमात्मत्वसाधनमप्ययुक्तम् । शारीरात् ...[2]विशिनष्टि प्रधानाद्भेदं व्यपदिशतीति द्वितीयसूत्रार्थवर्णनमप्यनुचितम्, विशेषणभेदव्यपदेशयोरेकैकस्यैव शारीरप्रधानव्यावर्तनक्षमत्वात् । दिव्यत्वामूर्तत्वपुरुषत्वादयो हि कार्त्स्न्येन प्रधानस्यापि न संभवन्ति ; अक्षरात्परतः पर इति जीवव्यावृत्तिरपि हि प्रतीयते, स कारणं करणाधिपाधिप इतिवत् । अक्षरात्परो हि जीवः । विशेषणशब्दस्य दिव्यो ह्यमूर्त इति श्लोकोक्तार्थमात्रविषयत्वं चायुक्तम् ; सङ्कोचकाभावात् । एकविज्ञानेन सर्वविज्ञानाभिधानादीनां भूतयोन्यक्षरस्य चिदचिद्व्यावृत्तिफलकत्वात् विशेषणशब्देन वक्तुं युक्तम् ; न तु धर्मशब्देन । न ह्येकविज्ञानेन सर्वविज्ञानाभिधानं नाम परमात्मगतो धर्मः । अतस्तादृशं विशेषणजातं द्वितीयसूत्रेण विवक्षितं भवितुमर्हति ; न तु प्रथमेन । **रूपोपन्यासाच्चेति** सूत्रस्य [3]पुरुष एवेदमिति वाक्यप्रतिपन्नसर्वात्मकत्वप्रतिपादनपरत्ववर्णनमनुपपन्नम् ; पूर्वसूत्रयोरन्यतरविवक्षितैकविज्ञाननिबन्धनसर्वविज्ञानान्तर्गतत्वात् सर्वात्मभावस्य । न च त्रैलोक्यशरीरहिरण्यगर्भोत्पत्तिः 'अग्निर्मूर्धे' त्यादिवाक्यप्रतिपाद्या ; अजायतेत्यध्याहारप्रसङ्गात् ॥ "एतस्माज्जायते प्राणः", "तस्मादग्निः समिधश्च" इति प्रकरणवशादध्याहार इति चेन्न ; अवान्तरप्रकरणस्य भूतयोन्यक्षरविषयमहाप्रकरणविरोधे दुर्बलत्वात् ; सर्वभूतान्तरात्मत्वलिङ्गबाधितत्वाच्च । तद्धि परमकारणस्य लिङ्गम् ; न तु कार्यस्य । न च कारणस्य विग्रहवत्त्वानुपपत्त्या हिरण्यगर्भपरत्वाश्रयणम् ; अनन्तरं(र?)वैश्वानराधिकरण एव त्रैलोक्यशरीरकस्य परमात्मताया उपपादयिष्यमाणत्वात् । "यस्याग्निरास्यं द्यौर्मूर्द्धा" इत्यादिस्मृतिप्रसिद्धं च भगवतः त्रैलोक्यशरीरत्वम् । यदि क्वचिद्धिरण्यगर्भस्य त्रैलोक्यशरीरत्वमवगम्यते, तदानीमपि परमात्मात्मकत्वेनैव तस्य तथात्वं वर्णनीयम्, "सृष्टिं ततः करिष्यामि त्वामाविश्य प्रजापते", "तवान्तरात्मा मम च ये चान्ये देहिसंज्ञिताः" इति चतुर्मुखस्य भगवदनुप्रवेशतदन्तरात्मकत्वावगमात् । अतः परमात्मन एव त्रैलोक्यशरीरत्वमग्निर्मूर्धेत्यादिनाऽभिधीयते । अतः सूत्राणां यथोक्त एवार्थः ॥ इत्यदृश्यत्वादिगुणकाधिकरणम् ।

एवं त्रैलोक्यशरीरत्वेन परमात्मत्वे साधिते तादृशरीरत्वं तद्व्यतिरिक्तस्यापि श्रूयत इति शङ्कयोत्थानात् संगतिः । **वैश्वानरः साधारणशब्दविशेषात्** ॥ विषयमाह इदमिति । **अध्येषि** । 'इक् स्मरणे' । स्मरसि ; उपास्स इत्यर्थः । यद्वा 'इण् गतौ' । गत्यर्था बुद्ध्यर्थाः । अवगच्छसीत्यर्थः । यद्यपि 'को न आत्मा किं ब्रह्म' इत्यात्मब्रह्मशब्दाभ्यामुपक्रमात् उपसंहारस्य च तदानुगुण्येन नेयत्वान्न

---

[1] संप्रति--सम्यक् । [2] भावप्रकाशिका द्रष्टव्या । [3] शांकरे त्रैलोक्यशरीरकत्वरूपार्थोऽपि पूर्वं वर्णितः । परंतु भामत्यादौ तत् परमतमित्युक्त्वा द्वितीयार्थ एव स्वमतत्वेन स्थापितः । तत्र वक्तव्यं सर्वं संग्रहेणाह पुरुष इति । भास्करे तु प्रथमार्थ एव स्वीकृतः ।

तत्र सन्देहः—किमयं वैश्वानर आत्मा परमात्मेति शक्यनिर्णयः, उत नेति। किं प्राप्तम्? अशक्यनिर्णय इति। कुतः? वैश्वानरशब्दस्य चतुर्ष्वर्थेषु प्रयोगदर्शनात्। जाठराग्नौ तावत् 'अयमग्निर्वै-

---

संदेहोदयः, तथाऽपि समानप्रकरणे वाजसनेये अग्निवैश्वानरशब्दाभ्यामुपक्रमात् संशयः संभवतीत्यभिप्रायेणाह तत्र संदेह इति। शक्यनिर्णयत्वाशक्यनिर्णयत्वे संदेहशिरसी कृते। तच्च साधारणशब्दस्य सूत्रस्थत्वनिबन्धनम्॥ ननु प्रयोगसाधारण्यं हि वैश्वानरशब्दस्य साधारणत्वम्, अक्षरशब्दोऽपि हि प्रकृतिपुरुषेश्वरसाधारणः प्रयुज्यते, 'अक्षरात्परतः परः,' 'क्षरं प्रधानममृताक्षरं हरः', 'यया तदक्षरमधिगम्यते' इत्यादि। ततश्च 'अक्षरमम्बरान्तधृतेः' इत्यत्रापि शक्यनिर्णयत्वाशक्यनिर्णयत्वे संदेहविषयतया वक्तव्ये। तथा च न कृतम्। किंतु प्रधानं वा जीवो परमात्मा वेति विचारः कृतः। इहापि तथैव संशयो वक्तव्य इति॥ नैवम्। तत्र हि प्रयोगसाधारण्यातिरिक्तः प्रकृतिपुरुषयोरन्यतरविषयत्वनिर्धारकः पूर्वपक्षहेतुर्विद्यते। अतस्तथा संदेह उपपद्यते। इह तु प्रयोगसाधारण्यस्यैव पूर्वपक्षहेतुत्वात् तस्य च जाठर-भूततृतीय-देवतासु अन्यतमनिर्धारकत्वाभावात् तस्य परमात्मलिङ्गादर्शने तद्विषयत्वनिर्णयप्रतिबन्धकत्वात् त्रेताकल्पनादीनामनिर्धारकत्वस्य वक्ष्यमाणत्वाच्च शक्यनिर्णयत्वाशक्यनिर्णयत्वे संशयविषयतयोक्ते॥ नन्वेवं सति संशयलक्षणाप्रामाण्यं पूर्वपक्षितं स्यात्। तच्चायुक्तम्; प्रथमे काण्डे वेदप्रामाण्यस्य समर्थितत्वमुपजीव्य आरब्धत्वाच्छारीरकस्य। अतोऽर्थविशेषपरत्वं पूर्वपक्षीकर्तव्यम्, न त्वशक्यनिर्णयत्वम्॥ नैवम्; चतुर्ष्वर्थेष्वन्यतमानिर्धारणेऽपि सर्वथा कस्मिंश्चिदर्थे प्रमाणमेवेदमिति सामान्यतः प्रामाण्यनिश्चयस्यानपोद्यत्वात्। तद्धि नित्यानिर्दोषवाक्यतया स्थापितम्। "विधिशब्दस्य[1] मन्त्रत्वे भावः स्यात्" इति न्यायेन प्रामाण्यसिद्धिः।

किमयं वैश्वानरात्मा परमात्मेति शक्यनिर्णयः, उत न; तदर्थमात्मब्रह्मशब्दोपक्रमो वैश्वानरस्य ब्रह्मभावमवगमयति, नेति; तदर्थमग्निशब्दसामानाधिकरण्य-त्रेताकल्पन-प्राणाहुत्याधारत्वानि किं वैश्वानरस्य ब्रह्मभावविरोधीनि, उत नेति। किम् 'एषोऽग्निर्वैश्वानरः' इत्यग्निशब्दोऽग्निमात्रपरः, उताग्न्यवस्थपरमात्मपर इति। अग्निशब्दस्याग्निमात्रपरत्वे अग्निशब्दसामानाधिकरण्यादीनां ब्रह्मभावविरोधितया आत्मब्रह्मशब्दोपक्रमस्यापि ब्रह्मभावावगमकत्वाभावेनाशक्यनिर्णय इति पूर्वःपक्षः। अग्निशब्दस्य परमात्मपरत्वे अग्निशब्दसामानाधिकरण्यादीनां ब्रह्मभावाविरोधितया आत्मब्रह्मशब्दोपक्रमस्य ब्रह्मभावावगमकत्वोपपत्तेर्वैश्वानरः परमात्मेति शक्यनिर्णय इति राद्धान्तः।

**वैश्वानरशब्दस्य चतुर्ष्वर्थेष्विति।** जीवपरसाधारणात्मशब्दसद्भावेऽप्यात्मशब्दस्य वैश्वानरमात्मानमिति वैश्वानरशब्दविशेषितत्वाद्वैश्वानरशब्दस्य च जीवमात्रे प्रयोगाभावादिह जीवविषयत्वशङ्का

---

1 विधीति। मीमांसायां (१०-४-२३) सूत्रे अन्यादिदेवत्यकर्मसु देवतावाचिशब्देषु प्रयोक्तव्येषु पर्यायानेकशब्दसद्भावेऽपि अर्थैक्येऽपि विधिगत एव अग्न्यादिशब्दः प्रयोक्तव्य इति निर्णीतम्। तत्र शब्दवाच्यत्वाकारेणैव ग्रहणवत् इहापि वैश्वानरशब्दवाच्यत्वाकारेण विद्याविधिदर्शितगुणादिविशिष्टतयोपासनमिष्यताम्। शब्दमात्रं देवतेति भ्राम्यतामपि तत्र यथा फलसिद्धिर्विहितानुष्ठानवशात्, वस्तुतो देवतातः सर्वेश्वराद्वा—तथाऽत्राप्यनुष्ठातुरनिश्चयेऽपि पूर्तिरिति पूर्वपक्ष्याशय इति भावः।

श्वानरो येनेदमन्नं पच्यते यदिदमद्यते। तस्यैष घोषो भवति, यावदेतत्कर्णावपिधाय शृणोति। स यदोत्क्रमिष्यन् भवति, नैनं घोषं शृणोति" इति; महाभूततृतीये च, "विश्वस्मा अग्निं भुवनाय देवा वैश्वानरं केतुमह्नामकृण्वन्" इति; देवतायां च, "वैश्वानरस्य सुमतौ स्याम राजा हि कं भुवनानामभिश्रीः" इति; परमात्मनि च, "तदात्मन्येव हृदयेऽग्नौ वैश्वानरे प्रास्यत्" इति, "स एष वैश्वानरो विश्वरूपः प्राणोऽग्निरुदयते" इति च। वाक्योपक्रमादिषूपलभ्यमानान्यपि लिङ्गानि सर्वानुगुणतया नेतुं शक्यानीति॥

एवं प्राप्ते अभिधीयते—वैश्वानरः साधारणशब्दविशेषात्। वैश्वानरः—परमात्मा। कुतः? साधारणशब्दविशेषात्। विशेष्यत इति विशेषः। साधारणस्य वैश्वानरशब्दस्य परमात्मासाधारणैर्धर्मैर्विशेष्यमाणत्वादित्यर्थः। तथा हि—औपमन्यवादयः पञ्चेमे महर्षयः (पञ्च महर्षयः?) समेत्य "को न आत्मा किं ब्रह्म" इति विचार्य, 'उद्दालको ह वै भगवन्तोऽयमारुणिः संप्रतीममात्मानं वैश्वानरमध्येति तँ हन्ताभ्यागच्छाम' इत्युद्दालकस्य वैश्वानरात्मविज्ञानमवगम्य तमभ्याजग्मुः। स चोद्दालक एतान् वैश्वानरात्मजिज्ञासून् अभिलक्ष्य, आत्मनश्च तत्राकृत्स्नवेदित्वं मत्वा तान् होवाच, "अश्वपतिर्वै भगवन्तोऽयं कैकयः संप्रतीममात्मानं वैश्वानरमध्येति तँ हन्ताभ्यागच्छाम" इति। तं चोद्दालकषष्ठास्तमश्वपतिमभ्याजग्मुः। स च तान् महर्षीन् यथार्हं पृथगभ्यर्च्य

---

न संभवति। न हि गोशब्दविशेषितस्य चतुष्पाच्छब्दस्याश्वादिपरत्वशङ्कासंभव इत्यभिप्रायेण [1]पञ्चस्वित्यनुक्तिः। **विश्वस्मा अग्निमिति**। **विश्वस्मै भुवनाय**—विश्वभुवनोपकारार्थं **वैश्वानरम्**—महाभूततृतीयम् **अह्नां केतुम्**—आदित्यमकृण्वन्नित्यर्थः। वैश्वानरस्येति। **सुमतिः**—शोभनमतिः। **सुमतौ स्याम**—तद्विषयभूतास्स्याम। अभितः श्रीर्यस्य सोऽभिश्रीः; श्रियमिच्छेत् हुताशनात्" इत्युक्तत्वात्। **हिकमित्यव्ययम्**[2]। प्रयोगसाधारण्यातिरिक्तेषु त्रेताग्निकल्पनादिषु आत्मब्रह्मशब्दादिषु च प्रतीयमानेषु कथं शक्यनिर्णयत्वतदभावसंदेहोक्तिरित्यत्राह **वाक्योपक्रमे**ति। काल्पनिकं त्रेतारूपत्वं सर्वत्र संभवति; ब्रह्माग्निशब्दौ मिथःप्रतिबन्धकत्वादनिर्धारकौ। अन्नादनरूपं फलञ्च सर्वत्रोपपन्नमित्यभिप्रायः॥ .... .... ... ...

**एवं प्राप्ते** इति। **साधारणशब्दविशेषा**दित्येतत् व्याचष्टे **विशेष्यत इति विशेष** इति। नेदं **विशेष**शब्दस्य प्रत्ययार्थव्याख्यानम्; अपि तु **साधारणशब्दविशेषा**दिति समासान्तर्गतषष्ठीव्याख्यानम्। कर्मणि षष्ठी; न तु कर्तरीत्यर्थः। **विशेष** इति कृदन्तं पदं कर्मार्थषष्ठीनिमित्तमित्यभिप्रायेण[3] विशेषपदोपादानम्। यद्वा **विशेष्यत** इति **विशेष** इति घञः कर्मार्थतामाह। साधारणशब्द एव विशेष इति कर्मधारयः। किं केन विशेष्यत इत्यत्राह **साधारणस्ये**ति। **धर्म**शब्दो लिङ्गपरः। विशेष्यमाणत्वादिति फलितार्थ उक्तः, नाभिधानिकः। के पुनरसाधारणा धर्मा इत्यत्राह **तथा ही**ति। **'को न आत्मा किं ब्रह्म'** इति **किं**शब्दद्वयमात्मत्वब्रह्मत्वयोर्द्वयोरपि ज्ञातव्यत्वाभिप्रायम्। आत्मब्रह्म-

---

1 पञ्चस्विति। वैश्वानरशब्दस्य न पञ्चसु प्रयोगप्रसक्तिः। तथा कैरप्यनुक्तत्वाच्च। अतः वैश्वानरशब्दस्य बहुषु, आत्मशब्दस्य च जीवपरयोः प्रयोगात् पञ्चसु संशय इत्यनुक्तिरित्यर्थः।

2 अव्ययमिदं हिशब्दार्थे। 3 तथा च साधारणशब्दोऽन्यशब्देन विशेष्यत इति तत्कर्मकविशेषणं विशेष इति भाष्यवाक्यार्थ इति भावः।

'न मे स्तेनः' इत्यादिना 'यक्ष्यमाणो ह वै भगवन्तोऽहमस्मि' इत्यन्तेनात्मनो व्रतस्थतया प्रतिग्रहयोग्यतां ज्ञापयन्नेव ब्रह्मविद्भिरपि प्रतिषिद्धपरिहरणीयतां विहितकर्मकर्तव्यतां च प्रज्ञाप्य, 'यावदेकैकस्मा ऋत्विजे धनं दास्यामि तावद्भगवद्भ्यो दास्यामि ; वसन्तु भवन्तः' इत्यवोचत् । ते च मुमुक्षवो वैश्वानरमात्मानं जिज्ञासमानास्तमेवात्मानमस्माकं ब्रूहीत्यवोचन् । तदेवं 'को न आत्मा किं ब्रह्म' इति जीवात्मनामात्मभूतं ब्रह्म जिज्ञासमानैस्तज्ज्ञमन्विच्छद्भिर्वैश्वानरात्मज्ञसकाशमागम्य पृच्छ्यमानो वैश्वानरात्मा परमात्मेति विज्ञायते । आत्मब्रह्मशब्दाभ्यामुपक्रम्य पश्चात् सर्वत्रात्मवैश्वानरशब्दाभ्यां व्यवहाराच्च ब्रह्मशब्दस्थाने निर्दिश्यमानो वैश्वानरशब्दो ब्रह्मैवाभिधत्त इति विज्ञायते । किञ्च "स सर्वेषु लोकेषु सर्वेषु भूतेषु सर्वेष्वात्मस्वन्नमत्ति", "तद्यथेषीकातूलमग्नौ प्रोतं प्रदूयेतैवं हास्य सर्वे पाप्मानः प्रदूयन्ते" इति च वक्ष्यमाणं वैश्वानरात्मविज्ञानफलं वैश्वानरात्मानं परं ब्रह्मेति ज्ञापयति ॥ २५ ॥

इतश्च वैश्वानरः परमात्मा—

स्मर्यमाणमनुमानं स्यादिति ॥ १-२-२६ ॥

द्युप्रभृति पृथिव्यन्तमवयवविभागेन वैश्वानरस्य रूपमिहोपदिश्यते । तच्च श्रुतिस्मृतिषु परमपुरुषरूपतया प्रसिद्धम् । तदिह तदेवेदमिति स्मर्यमाणम्—प्रत्यभिज्ञायमानं वैश्वानरस्य परमपुरुषत्वे अनुमानम्—लिङ्गमित्यर्थः । इतिशब्दः प्रकारवचनः । इत्थंभूतं रूपं प्रत्यभिज्ञायमानं वैश्वानरस्य परमात्मत्वे अनुमानं स्यात् । श्रुतिस्मृतिषु हि परमपुरुषस्येत्थं रूपं प्रसिद्धम् । यथा आथर्वणे, "अग्निर्मूर्धा चक्षुषी चन्द्रसूर्यौ दिशः श्रोत्रे वाग्विवृताश्च वेदाः । वायुः प्राणो हृदयं विश्वमस्य पद्भ्यां पृथिवी ह्येष सर्वभूतान्तरात्मा' इति । अग्निरिह द्युलोकः, "असौ वै लोकोऽग्निः" इति श्रुतेः । स्मरन्ति च मुनयः, "द्यां मूर्धानं यस्य विप्रा वदन्ति खं वै नाभिं

---

शब्दवाच्यधर्म्यैकत्वानेकत्वजिज्ञासया वा किंशब्दद्वयप्रयोगः । विषयवाक्ये 'न मे स्तेनः' इत्यादेः प्रयोजनमाह **आत्मन** इति । फलितानि साधकलिङ्गानि दर्शयति **तदेव**मिति । मुमुक्षुभिः पृच्छ्यमानत्वमात्मत्वम्, ब्रह्मत्वम्, ब्रह्मशब्दस्थाने वैश्वानरशब्दप्रयोगः, फलनिर्देशश्च वैश्वानरस्य परमात्मत्वसाधकलिङ्गानीत्यर्थः । द्युमूर्धत्वादिविशिष्टतारूपधर्मस्यास्मिन् सूत्रे अनुक्तिस्तस्यानन्तरसूत्रोक्तत्वात् ॥

**स्मर्यमाणमनुमानं स्यादिति** ॥ स्मर्यमाणशब्दस्य विशेष्यं दर्शयन् सूत्रं व्याचष्टे **द्युप्रभृती**ति । **लिङ्गमित्यर्थ** इति । **अनुमान**शब्दः करणार्थल्युडन्तः, श्रुतिलिङ्गवाक्येत्यादिसूत्रपठितलिङ्ग[1]परश्चेति भावः । **अनुमान**शब्देन हेतुत्वसिद्धेः **इतिशब्द**वैयर्थ्यमित्यत्राह **इतिशब्द** इति । **इति**शब्दार्थेनान्वितं वाक्यार्थमाह **इत्थ**मिति । परमपुरुषरूपत्वेन प्रसिद्धिं दर्शयति **श्रुती**ति । परमात्मपरत्वेन साधितत्वात् **'अग्निर्मूर्धा'**इत्यादिवाक्यमुदाहृतम् । इह द्यौर्मूर्धत्वेन श्रूयते, उदाहृतवाक्ये अग्निः मूर्धेति, तत् कथमैकार्थ्यमित्यत्राह **अग्निरिहे**ति । परमात्मनस्तथाविधरूपवत्त्वे स्मृतिमुदाहरति **स्मरन्ति चे**ति । **'यस्याग्निरास्यम्'** इत्यत्राग्निशब्दः प्रसिद्धाग्निपरः ; द्यौर्मूर्धेति पृथगुक्तेः । श्रुतिस्मृतिष्वभिज्ञातस्य रूपस्य प्रत्यभि-

---

1 शब्दगतमर्थगतं वा सामर्थ्यमेव श्रुतिलिङ्गाद्यन्तर्गतम् । तत् अङ्गत्वश्रुतिकल्पकम् । तत् यथा तत्र श्रुतिकल्पकम्, तद्वदिदमपि रूपं गृह्यमाणम् अग्निर्मूर्धा—एष सर्वभूतान्तरात्मा' इति श्रुतिज्ञापकं परमात्मानमेवमुपासीतेति श्रुतिकल्पकं भवतीति भावः ।

**चन्द्रसूर्यौ च नेत्रे। दिशः श्रोत्रे विद्धि पादौ क्षितिं च सोऽचिन्त्यात्मा सर्वभूतप्रणेता" इति। "यस्याग्निरास्यं द्यौर्मूर्धा खं नाभिश्चरणौ क्षितिः। सूर्यश्चक्षुर्दिशः श्रोत्रं तस्मै लोकात्मने नमः॥" इति च। इह च द्युप्रभृतयो वैश्वानरस्य मूर्धाद्यवयवत्वेनोच्यन्ते। तथा हि--तैरौपमन्यवप्रभृतिभिर्महर्षिभिः, 'आत्मानमेवेमं वैश्वानरं संप्रत्यध्येषि तमेव नो ब्रूहि' इति पृष्टः केकयस्तेभ्यो वैश्वानरात्मानमुपदिदिक्षुर्विशेषप्रश्नान्यथानुपपत्त्या वैश्वानरात्मनि एतैः किञ्चित् ज्ञातं किञ्चिदज्ञातमिति विज्ञाय ज्ञाताज्ञातांशबुभुत्सया तानेकैकं पप्रच्छ। तत्र 'औपमन्यव कं त्वमात्मानमुपास्से' इति पृष्टे, 'दिवमेव भगवो राजन्' इति तेन चोक्ते, दिवि तस्य पूर्णवैश्वानरात्मबुद्धिं निवर्तयन् वैश्वानरस्य द्यौर्मूर्धेति चोपदिशन् तस्या वैश्वानरांशभूताया दिवः सुतेजा इति गुणनामधेयं प्राचिख्यपत्। एवं सत्ययज्ञादिभिरादित्यवाय्वाकाशपृथिवीनामेकैकेनैकैकमुपास्यमानतया कथितानां 'विश्वरूपः, पृथग्वर्त्मा, बहुलो, रयिः, प्रतिष्ठा' इत्येकैकगुणनामधेयानि वैश्वानरात्मनश्चक्षुःप्राणसन्देहबस्तिपादावयवत्वं चोपदिष्टम्। सन्देहो मध्यकाय उच्यते। अत एवम्भूतद्युमूर्धत्वादिविशिष्टं परमपुरुषस्यैव रूपमिति वैश्वानरः परमपुरुष एव॥ २६॥**

---

ज्ञायमानत्वं दर्शयति **इह चेति**। नन्वत्र अग्निर्मूर्धेत्यादाविव द्युप्रभृतिपृथिव्यन्तानां मूर्धादिपादान्तावयवत्वेन संभूयोपदेशो न दृश्यत इति शङ्कायां विप्रकीर्णप्रतिपादनहेतुमाह **तथा हीति**। **विशेषप्रश्नान्यथानुपपत्त्येति**। न ह्यात्मब्रह्मादिशब्दैः प्रश्नः कृतः; वैश्वानरशब्देन हि प्रश्नः। अनेन द्युप्रभृतीनामपूर्वनामनिर्देशहेतुश्चोक्तो भवति। अज्ञातांशः सर्वोऽपि ह्युपदेष्टव्यः। **गुणनामधेयानीति**। द्यौर्नक्षत्रादितेजस्विनीति **सुतेजाः**; प्रकाशकस्यादित्यस्य विश्वं रूपम् प्रकाश्यम्, तस्मात् आदित्यो **विश्वरूपः**; वायुर्विविधगतिस्वभावत्वात् **पृथग्वर्त्मा**; आकाशो भूतान्तरेभ्यो महत्त्वात् **बहुलः**; आपो वेगवत्त्वात् **रयिः**—रयो हि वेगः। इकारान्तत्वं छान्दसम्। रैरूपधनप्राप्तिहेतुत्वाद्वा रयिः—; पृथिवी प्राण्याधारत्वात् **प्रतिष्ठेति** भावः। श्रुतिस्थं **संदेहशब्दं** व्याचष्टे **संदेहो मध्यकाय** इति। मध्यं हि पूर्वापरांशसाधारण्यात् कुत्रानुप्रविष्टमिति संदिह्यते। एतत् ज्ञापयितुं **मध्यकाय** इति व्याख्यातम्; न तु नाभिरिति। **गुणनामधेयानी**त्यनेनान्यदपि प्रयोजनं फलितम्। न केवलं नामधेयानि, अपि तु गुणनामधेयानि; तत्तद्गुणकत्वं मूर्धादित्वेनोपदिष्टानां द्युप्रभृतीनामनुसन्धेयमित्यर्थः।

अत्रायमभिप्रायः—**वाजसनेयके** मूर्धभूताया दिवोऽतिष्ठात्वमुक्तम्; न तु सुतेजस्त्वम्। चक्षुर्भूतस्यादित्यस्य सुतेजस्त्वमुक्तम्, न तु विश्वरूपत्वम्। न चैतावता विद्याभेदः, तत्तन्नामधेयोपस्थापितगुणेष्वेव तात्पर्यसंभवात्। अतीत्य स्थितत्वं हि दिवोऽतिष्ठात्वम्। तच्च सर्वोत्कृष्टत्वम्। तच्च नक्षत्रादितेजश्शालित्वरूपमित्येकगुणत्वेन फलितमित्यविरोधः। आदित्यस्य च सुतेजस्त्वफलरूपं विश्वरूपत्वम्। तद्धि विश्वनिरूपकत्वं विश्वप्रकाशकत्वम्। अतोऽनर्थान्तरतया फलितम्। अतो न विद्याभेद इति। एतदभिप्रायेण **गुणनामधेयानी**त्युक्तम्।

परमात्मनस्त्रैलोक्यशरीरत्वविषयं **द्यां मूर्धान**मित्यादिस्मृतिवचनं स्वमूलत्वेन वैश्वानरविद्यायाः परमात्मविषयत्वं कल्पयतीति व्याख्यानमनुपपन्नम्। स्मृतिवचनं हि स्वमूलत्वेन श्रुतिं कल्पयति; न तु वैश्वानरविद्यामेव कल्पयितुं प्रभवति। श्रुत्यन्तरसंभवेन कल्पकस्यान्यथासिद्धत्वात्। अस्ति हि, "अग्निर्मूर्धा चक्षुषी चन्द्रसूर्यौ" इत्यादिश्रुतिस्तन्मूलतया संभाव्यमाना। तस्मादाभ्यां

पुनरप्यनिर्णयमेवाशङ्क्य परिहरति—

**शब्दादिभ्योऽन्तःप्रतिष्ठानाच्च नेति चेन्न तथा दृष्ट्युपदेशादसंभवात् पुरुषमपि चैनमधीयते ॥ १-२-२७ ॥**

यदुक्तं वैश्वानरः परमात्मेति निश्चीयत इति—तन्न; शब्दादिभ्योऽन्तःप्रतिष्ठानाच्च जाठरस्याप्यग्नेरिह प्रतीयमानत्वात्। शब्दस्तावत् वाजिनां वैश्वानरविद्याप्रकरणे 'स एषोऽग्निर्वैश्वानरः' इति वैश्वानरसमानाधिकरणतयाऽग्निरिति श्रूयते; अस्मिन् प्रकरणे च, "हृदयं गार्हपत्यो मनोऽन्वाहार्यपचन आस्यमाहवनीयः" इति वैश्वानरस्य हृदयादिष्वग्नित्रयकल्पनं क्रियते। 'तद्यद्भक्तं प्रथममागच्छेत्, तत् होमीयम्। स यां प्रथमामाहुतिं जुहुयात् तां जुहुयात् प्राणाय स्वाहा' इत्यादिना प्राणाहुत्याधारत्वं च वैश्वानरस्यावगम्यते। तथा वैश्वानरस्यास्मिन् पुरुषेऽन्तःप्रतिष्ठानं वाजसनेयिनः समामनन्ति, "स यो हैतमेवमग्निं वैश्वानरं पुरुषविधं पुरुषेऽन्तःप्रतिष्ठितं वेद" इति। अतोऽग्निशब्दसामानाधिकरण्यादग्नित्रेतापरिकल्पनात् प्राणाहुत्याधारभावादन्तःप्रतिष्ठानाच्च वैश्वानरस्य जाठरत्वमपि प्रतीयत इति नैकान्ततः परमात्मत्वमिति चेत्—तन्न; तथा दृष्ट्युपदेशात्—

---

श्रुतिस्मृतिभ्यामैकार्थ्यप्रत्यभिज्ञानमेवास्मिन् सूत्रे हेतुतया विवक्षितम्, **स्मर्यमाण**शब्दश्च प्रत्यभिज्ञायमानोपस्थापकः; तर्कपादे **अनुस्मृते**श्चेत्यत्रानुस्मृतिशब्दस्य प्रत्यभिज्ञापरत्वेन सूत्रकारैः प्रयुक्तत्वात् ॥

उत्तरसूत्रमवतारयति **पुनरपी**ति। अर्थचतुष्टये प्रयोगसाधारण्यादनिर्णयः पूर्वमुक्तः। इदानीं तु विशेषकधर्माणां ब्रह्मशब्दादीनां तत्तदनुरूपविशेषकात् शब्दादेः प्रतिरोधादनिर्णयो विवक्षितः ॥

**शब्दादिभ्योऽन्तःप्रतिष्ठानाच्च नेति चेन्न तथा दृष्ट्युपदेशादसंभवात् पुरुषमपि चैनमधीयते ॥**

**नेति**पदं व्याचष्टे **यदुक्त**मित्यादिना। श्रुत्यन्तरस्थहेत्वोरुभयोर्दूरस्थत्वात् तौ कण्ठोक्तौ। एतत्प्रकरणस्थमग्नित्रयकल्पनं प्राणाहुत्याधारत्वं च **आदि**शब्दोपात्तम्; संनिकृष्टत्वात्। एतदभिप्रायेण **'वाजिनां वैश्वानरविद्याप्रकरणे', 'वाजसनेयिनः समामनन्ति'** इति चोक्तम्। **अस्मिन् प्रकरणे चे**ति चशब्देन वाजिनामप्यस्तीति सूचितम्। **अग्नित्रयकल्पनं क्रियत** इति। अग्नित्रयकल्पनेन होमाधारत्वमात्रं फलितम्; होमाधारत्वविशेषमाह **तद्यद्भक्त**मिति। **अग्नि**शब्दनिर्देशसहितमन्तःप्रतिष्ठानं विवक्षितम्। अन्तःप्रतिष्ठत्वमात्रे हि परस्यापि संभवति। 'स यो हैतमेवमग्निं वैश्वानरं पुरुषविधं पुरुषेऽन्तःप्रतिष्ठितं वेद' इति हि श्रूयते। उक्तहेत्वनुक्रमेण पूर्वपक्षत्वेन शंकितमर्थमुपसंहरति **अत इति**। **शब्दादिभ्य** इत्यादिसूत्रखण्डं जाठरशङ्कामात्रपरम्, न तु देवताभूतपरम्; अन्तःप्रतिष्ठानोपन्यासात्; हेत्वन्तराणां च तत्साहचर्यात्। यद्यपि देवतायाः 'अग्निर्वाग् भूत्वा मुखं प्राविशत्' इति मुखे प्रवेशोऽवगम्यते, तथापि पुरुषेऽन्तःप्रतिष्ठितत्वं न स्वरसम्। जाठरस्य हि तत् स्वरसतः प्रतीयते। 'सोऽग्रभुग् विभजंस्तिष्ठन् आहारमजरः कविः। संतापयति स्वं देहमापादतलमस्तकम्' इति कृत्स्नदेहव्यासत्वात् तस्य। भूततृतीयस्य तु पुरुषेऽन्तःप्रतिष्ठितत्वं तदेकदेशभूतजाठरद्वारकमिति वक्तव्यम्। अतस्तत्क्लिष्टम्। अतोऽन्तःप्रतिष्ठानसहचरैर्हेतुभिर्जाठरभावः शङ्कित इह सूत्रे। अत एव हि देवता-भूततृतीययोः सूत्रान्तरेण व्युदासः; न त्वेतस्मिन्नेव सूत्रे खण्डान्तरे कृतः। एवं शङ्कितं जाठरविषयत्वं परिहरति **तन्नेति**। हेत्वाकाङ्क्षायां सौत्रखण्डान्तरस्थं हेतुवाचिपदमुपादत्ते **तथा दृष्ट्युपदेशादि**ति। 'यस्माभिः

**पूर्वोक्तस्य त्रैलोक्यशरीरस्य परस्य ब्रह्मणो वैश्वानरस्य जाठराग्निशरीरतया तद्विशिष्टस्योपासनोपदेशात्। अग्निशब्दादिभिर्हि न केवलो जाठरः प्रतिपाद्यते, अपि तु जाठराग्निविशिष्टः परमात्मा। कथमिदमवगम्यत इति चेत् असम्भवात्—जाठरस्य केवलस्य त्रैलोक्यशरीरत्वासम्भवात्। त्रैलोक्यशरीरतया प्रतिपन्नवैश्वानरसमानाधिकरणो जाठरविषयतया प्रतीयमानोऽग्निशब्दो जाठरशरीरतया तद्विशिष्टं परमात्मानमेवाभिदधातीत्यर्थः। यथोक्तं भगवता, "अहं वैश्वानरो भूत्वा प्राणिनां देहमाश्रितः। प्राणापानसमायुक्तः पचाम्यन्नं चतुर्विधम्" इति। जाठरानलशरीरो भूत्वेत्यर्थः। अतस्तद्विशिष्टस्योपासनमत्रोपदिश्यते। किञ्च पुरुषमपि चैनमधीयते वाजसनेयिनः, "स एषोऽग्निर्वैश्वानरो यत्पुरुषः" इति। न जाठरस्य केवलस्य पुरुषत्वम्। परमात्मन एव हि निरुपाधिकं पुरुषत्वम, यथा 'सहस्रशीर्षा पुरुष' 'पुरुष एवेदं सर्वम्' इत्यादौ॥**

---

शरीरम्' इति श्रुत्यभिप्रायेणाह **जाठराग्निशरीरतयेति**। **उपासन**शब्देन सौत्र**दृष्टि**शब्दव्याख्यानम्; "आत्मा वा अरे द्रष्टव्यः' 'तस्मिन् दृष्टे परावरे' इति श्रौतप्रयोगात्। 'वैश्वानरमुपास्ते' इति चात्र श्रूयते॥ ननु दृष्टिशब्दोऽतस्मिन् तथात्वानुसंधानपरः किं न स्यात्॥ नैवम्; परमार्थविषयत्वे संभवत्यपरमार्थविषयत्वाश्रयणायोगात्। द्युमूर्धत्वादिकं हि जाठरेऽत्यन्तबाधितम्। अत एव हि न 'मनोब्रह्म' इत्यादिदृष्टितुल्यत्वशङ्का। तत्तुल्यत्वं च गत्यन्तरे संभवत्ययुक्तम्। **जाठराग्निशरीरतये**त्यनेन परमार्थविषयसंभवश्च दर्शितः। उत्कृष्टे परमात्मनि अपकृष्टाग्निदृष्टययोगाच्च न परस्मिन्नग्निदृष्टिः। अग्नौ परमात्मदृष्टिपरत्वं तु परमात्मत्वसमर्थनपरसूत्रतात्पर्यविरुद्धम्। अतः परमात्मलिङ्गानां जाठरलिङ्गानां च दर्शनात् विशिष्टोपासनपरत्वमभ्युपगन्तव्यम्, यथा प्रतर्दनविद्यायामिति वाक्यार्थः। विशिष्टप्रतिपादने सिद्धे हि विशिष्टोपासनपरत्वमित्यत्राह **अग्निशब्दादिभिर्ही**ति। **आदि**शब्देन प्राणाहुत्याधारत्वादिकं गृह्यते। जाठरः [1]**प्रतिपाद्यते**—ज्ञाप्यत इत्यर्थः। अग्निशब्द-त्रेताकल्पनादिलिङ्गान्वितेन वाक्येन परमात्मा[1] अभिधीयत इति वाऽर्थः। तदा त्रेताकल्पनादिना अग्निद्वारा परमात्मा विशेष्यते। **असंभवादि**ति पदस्याकाङ्क्षां दर्शयति **कथमि**ति। केवलाग्नौ प्रसिद्धस्य कथं तद्विशिष्टपरत्वमित्यर्थः। जाठरस्य त्रैलोक्यशरीरत्वासंभवोऽस्तु; ततः किमग्निशब्दस्य विशिष्टपरत्व इत्यत्राह **त्रैलोक्ये**ति। जाठरविषयतया प्रसिद्धस्य शब्दस्य तद्विशिष्टे परमपुरुषे प्रवृत्तिं स्मृत्या द्रढयति **यथोक्त**मिति। सूत्रखण्डमवतारयति **किञ्चे**ति। **अपि चे**त्यत्र विभक्तः **च**शब्दो हेतुसमुच्चयार्थ इति भावः। न केवलमग्नित्वं पुरुषेऽन्तःप्रतिष्ठितत्वं च, किंतु पुरुषशब्दवाच्यतयाप्यधीयत इत्यभिप्रायेणाह **पुरुषमपि चे**ति। **पुरुषत्वम्**—पुरुषशब्दवाच्यत्वम्। **निरुपाधिक**मिति। जीवस्य पुरुषशब्दवाच्यत्वं 'द्वाविमौ पुरुषौ लोके', 'प्रधानपुरुषावेतौ' इत्यादिषु प्रधानादिपदान्तरसमभिव्याहाराक्षरत्वाद्युपाधिनाऽऽश्रीयते, न तु स्वतः। अतः पुरुषशब्दवाच्यत्वं परमात्मन एव निरुपाधिकम्। अतो जाठरस्य पुरुषत्वं दूरतो निरस्तमिति भावः। 'स एषोऽग्निर्वैश्वानरो यत् पुरुषः' इति प्रसिद्धवन्निर्देशात् तस्य च प्रापकप्रमाणसापेक्षत्वात् परमात्मन एव निरुपाधिकपुरुषत्वविषयां प्रमाणतः प्रसिद्धिं दर्शयति **यथे**ति।

---

[1] जाठरः, परमात्मा इति पदद्वये न तात्पर्यम्। प्रतिपाद्यते इत्यस्य शब्देनोच्यत इत्यर्थो मुख्यः। स इह त्रेताकल्पनादिलिङ्गजन्यज्ञाने न घटते इति सामान्येनार्थः ज्ञाप्यत इति। वाक्येनेति पूरणे तु मुख्यार्थ एवेत्यर्थः।

**अत एव न देवता भूतं च ॥ १-२-२८ ॥**

उक्तेभ्य एव हेतुभ्यो देवतायाश्च, तृतीयस्य महाभूतस्यापि न वैश्वानरत्वप्रसङ्गः ॥ २८ ॥

**साक्षादप्यविरोधं जैमिनिः ॥ १-२-२९ ॥**

वैश्वानरसमानाधिकरणस्याग्निशब्दस्य जाठराग्निशरीरतया तद्विशिष्टस्य परमात्मनो वाचकत्वम्, तथैव परमात्मन उपास्यत्वं चोक्तम्। जैमिनिस्त्वाचार्यो वैश्वानरशब्दवत् अग्निशब्दस्यापि

---

अग्निशब्दः त्रेताकल्पनादिलिङ्गत्रयं जाठरविषयत्वसाधकं शङ्कितम्। तत्र पुरुषशब्दस्त्रैलोक्यशरीरत्वासंभवरूपमेकं लिङ्गं च परमात्मविषयत्वसाधकमुक्तम्। तत्र **तथादृष्ट्युपदेशा**दित्यनेनाग्निशब्दलिङ्गत्रययोरन्यथासिद्धिर्दर्शिता। असंभवलिङ्गपुरुषशब्दयोरनन्यथासिद्धतया प्राबल्यं स्थितम्। अत एव **पुरुषमपि चैनमधीयत** इति सूत्रखण्डं नान्तःप्रतिष्ठानमात्रपरिहारपरम्; **तथादृष्ट्युपदेशा**दित्यनेनैवान्तःप्रतिष्ठानस्य हेत्वन्तराणां चान्यथासिद्धेर्दर्शितत्वात्; असंभवहेतौ च सति अन्तःप्रतिष्ठानस्य दुर्बलत्वात्; निरुपाधिकपुरुषत्वश्रवणे सति हेत्वन्तराणामपि दुर्बलत्वाच्च। अतो यथोक्तावेव शङ्कापरिहारौ ॥

**अत एव न देवता भूतं च** ॥ जाठरप्रसिद्धिशङ्का पूर्वसूत्रे परिहृता; तद्व्यतिरिक्तार्थद्वयशङ्कात्र परिह्रियते। देवताभूततृतीययोर्जाठरवत् परिच्छिन्नत्वाभावात् त्रैलोक्यशरीरत्वोपपत्तिः। देवताया अधिष्ठातृतया त्रैलोक्यशरीरत्वम्। महाभूततृतीयस्य च त्रिवृत्कृतस्य त्रैलोक्यरूपेण परिणतत्वात् समुदितस्य चास्य पृथिव्यादयो मूर्द्धपादाद्यवयवाः स्युः। अतस्त्रैलोक्यशरीरत्वकल्पनोपपत्तिः इत्यसंभवाक्षेपेणाधिकाशङ्का। **उक्तेभ्य एव हेतुभ्य** इति। आत्मब्रह्मपुरुषशब्दनिर्देशासङ्कुचितफलावाप्तिसर्वपापप्रदाहादयः सर्वे हेतवः तयोरनुपपन्ना इति परिहार इत्यभिप्रायः ॥

**साक्षादप्यविरोधं जैमिनिः** ॥ सूत्रार्थस्य सङ्गतत्वाय पूर्वोक्तमनुवदति **वैश्वानरे**ति। **तथादृष्ट्युपदेशा**दित्यनेन सङ्गतिरित्यर्थः। अक्षरार्थमाह **जैमिनिरि**ति। अग्निवैश्वानरशब्दयोरुभयोरपि साक्षात्परमात्मप्रतिपादकत्वपरमिदं सूत्रं परैर्व्याख्यातम्; तद्व्यावृत्त्यर्थमाह **वैश्वानरशब्दव**दिति। वैश्वानरशब्दस्य पक्षभूतस्य बह्वर्थसाधारणस्याग्निशब्दसामानाधिकरण्येन विना जाठरविषयत्वनिश्चयायोगात् तदुपपादकत्वेन अग्निशब्दः प्रकृतः। अत उपपादकस्यैवान्यथासिद्धिर्वक्तव्या; न तूपपाद्यस्य। उपपादकान्यथासिद्धौ तूपपाद्यं स्वयमेव न भवति। अत उपपादकाग्निशब्दस्यैव जाठरविशिष्टपरमात्मविषयत्वमुक्तं **तथादृष्ट्युपदेशा**दिति। अत इहापि तस्यैवाग्निशब्दस्य प्रकारान्तरेण परमात्मपरत्वमुच्यत इति **वैश्वानरशब्दो** दृष्टान्ततयोदाहर्तव्यः। तस्य च तथात्वं सिद्धम्। वैश्वानरशब्दस्तावत् परमात्मनि प्रयुक्तः। न च बलसामेव रूढिमाश्रित्य अपर्यवसानात् वैश्वानरशरीरकः परमात्माऽभिधेयः; अग्निशब्देनैवाग्निशरीरके परमात्मन्यभिहिते 'अग्निर्वैश्वानरः' इत्येकवाक्यस्थवैश्वानरशब्दस्याग्निशरीरवाचित्वे पुनरुक्तिप्रसङ्गात्। न चाव्यवधानेन परमात्मनि रूढ्यन्तरं कल्प्यम्, अवयवशक्त्यैव प्रयोगेऽन्यथासिद्धे प्रोक्षणीन्यायेन समुदायशक्तिकल्पनानुपपत्तेः। अतोऽग्निशब्दसमानाधिकरणवैश्वानरशब्दस्यावयवशक्त्या परमात्मविषयत्वे वाक्यान्तरेष्वप्येकप्रयोजकत्वाय अवयवशक्त्यैव वृत्तिरास्थेयेत्यभिप्रायेण, अव्यवधानेन वाचकत्वे वैश्वानरशब्दो दृष्टान्ततयोक्तः **वैश्वानरशब्दव**दिति। **साक्षा**दिति व्याख्येयपदम्। साक्षाच्छब्दस्य विशदतरत्वेऽपि

**परमात्मन एव साक्षात् अव्यवधानेन वाचकत्वे न कश्चिद्विरोध इति मन्यते ॥ एतदुक्तं भवति— यथा वैश्वानरशब्दः साधारणोऽपि परमात्मासाधारणधर्मविशेषितः विश्वेषां नराणां नेतृत्वादिना गुणेन परमात्मानमेवाभिदधातीति निश्चीयते—एवमग्निशब्दोऽप्यग्रनयनादिना येनैव गुणेन योगात् ज्वलने वर्तते, तस्यैव गुणस्य निरुपाधिकस्य काष्ठागतस्य परमात्मनि संभवादस्मिन् प्रकरणे परमात्मासाधारणधर्मविशेषितः परमात्मानमेवाभिधत्त इति ॥ २२ ॥**

---

प्रयोगात् तद्व्यावृत्त्यर्थमाह **अव्यवधानेने**ति । वैश्वानरशब्दस्यावयवशक्त्या वृत्तिः कथम् ? न तावदयं शब्दः "अनृष्यानन्तर्ये बिदादिभ्योञ्", "ऋष्यन्धकवृष्णिकुरुभ्यश्च" इत्यनुशासनानुसारेण बिदाद्यन्तः ऋष्यणन्तो वा, तयोरपत्यार्थत्वात् परमात्मनश्च विश्वानरसञ्ज्ञं कश्चित् प्रति अपत्यत्वाभावात्; विश्वानरशब्दस्य पुरुषसमष्टिवाचकत्वेऽपि[1] तदपत्यत्वायोगात् बिदाद्यन्तत्वम् ऋष्यणन्तत्वं चायुक्तम् । अतो गुणान्तरयोगो वक्तव्यः । तत्र वैश्वानरशब्दस्य केन गुणेन वृत्तिः ; तद्वदग्निशब्दः केन गुणयोगेन वर्तते ; तेन तस्य परमात्मन्यव्यवधानेन वृत्तिः कथमित्यत्राह **एतदुक्त**मिति । **नेतृत्वादिने**ति । आदिशब्देन विश्वैर्नरैर्नेयत्वम्—प्राप्यत्वं विवक्षितम् । **अग्रनयनादिने**ति । आदिशब्देन अग्रत्वेन प्राप्यत्वं विवक्षितम् ; यथा निराहुः, "वैश्वानरः कस्मात् ? विश्वान् नरान् नयति ; विश्व एनं नरा नयन्तीति वा । विश्वानर एव वैश्वानरः । राक्षसो वायस इतिवत् । रक्ष एव हि राक्षसः ; वय एव हि वायसः", यथा च "अग्निः कस्मात् । अग्रणीर्भवति । अग्रं नीयते । अग्रं नयति । नमयति । सन्नमनोक्तो प्रसन्नो भवतीति स्थौलाष्ठिविरितिरिति[2] (स्थूला दृष्टिविधिरिति) । अव्यवधानमाह **तस्यैवे**ति । **काष्ठागतस्ये**ति । अग्निशब्दावयवार्थस्य ब्रह्मणि पुष्कलत्वात् ब्रह्मशब्दरूढिर्न त्याज्या ; ब्रह्मशब्दावयवार्थपौष्कल्यस्याग्नावसंभवादग्निशब्दरूढिरेव त्याज्येति भावः । **परमात्मासाधारणधर्मविशेषित** इति । उपक्रमाद्यानुगुण्याच्च ब्रह्मशब्दः प्रबलः ; अग्निशब्दस्तु तदनुगुणार्थो नेय इति भावः ।

नन्वग्निशरीरकतयाऽनुसंधाने साक्षादेवाग्रनयनादिगुणकत्वानुसंधाने च[3] विद्याभेदः स्यात् । न च वाच्यम्—एकस्यामेव विद्यायामेकस्मिन् कर्मणि व्रीहियवयोरिवाग्निशरीरकत्वस्याग्रनयनादिगुणकत्वस्य च विकल्पेन प्राप्तिः ; विकल्पश्च तयोस्तुल्यबलत्वादवर्जनीयः ; अग्निशरीरकत्वपरिग्रहे रूढ्यपरित्यागादविलम्बः, अर्थानुपपत्त्या परमात्मपर्यन्तत्वनिर्णय इति विशेष्यप्रतिपत्तिर्विलम्बिता ; अग्रनयनादिगुणकत्वपक्षे रूढार्थानुपपत्त्याऽवयवार्थप्रतिपत्तिर्विलम्बिता, अवयवशक्त्युपस्थापितगुणस्य विशेष्यप्रतिपत्तिस्त्वविलम्बिता, गुणस्याद्वारकतयाऽन्वयसंभवात् । अतः पक्षद्वयेऽपि विलम्बाविलम्बसाम्यात् तुल्यबलत्वमिति विकल्पः—इति ; एकेनैव वाक्येन वैकल्पिकार्थद्वयविधानानुपपत्तेः । व्रीहियवयोर्हि वाक्यभेदेन प्राप्तिः ॥—

---

[1] अपिना नरे संज्ञायामिति दीर्घयोगसूचनम् । [2] स्थूलोदष्टिविधिरिति सर्वत्र मुद्रितपाठोऽनन्वितः । विधिशब्दः पुंल्लिङ्गः । तालकोशे 'स्थौलाष्ठिविरितिरिति' इत्यस्ति । नूनमिदं कस्य चिद्रूपेन्तरम् ।

[3] सकृत्प्रयुक्तः शब्दः सकृदेवार्थं गमयतीति न्यायादर्थद्वयस्य युगपदग्राह्यत्वादिति भावः ।

"यस्त्वेतमेवं प्रादेशमात्रमभिविमानम्" इति, अपरिच्छिन्नस्य परस्य ब्रह्मणो द्युप्रभृति-पृथिव्यन्तप्रदेशसंबन्धिन्या मात्रया परिच्छिन्नत्वं कथमुपपद्यते? तत्राह—

अभिव्यक्तेरित्याश्मरथ्यः ॥ १-२-३० ॥

उपासकाभिव्यक्त्यर्थं प्रादेशमात्रत्वं परमात्मन इत्याश्मरथ्य आचार्यो मन्यते। द्यौर्मूर्धा, आदित्यश्चक्षुः, वायुः प्राणः, आकाशो मध्यकायः, आपो वस्तिः, पृथिवी पादौ इति द्युप्रभृति-

---

उच्यते। नात्र विद्याभेदप्रसङ्गः; अस्य सूत्रस्य ब्रह्माग्निशब्दयोस्तुल्यताप्रतिक्षेपपरत्वेनोपास्याकारपरत्वाभावात्। तथा हि ब्रह्माग्निशब्दयोर्द्वयोरपि रूढार्थद्वयाविरोधेन निर्वाहः पूर्वमुक्तः। रूढार्थविरोधाभ्युपगमेनान्यतरस्य यौगिकत्वे प्राप्तेऽपि न ब्रह्माग्निशब्दयोस्तुल्यत्वादशक्यनिर्णयत्वं वाच्यम्, उपक्रमाद्यानुगुण्यात्, अग्निशब्दावयवार्थस्य ब्रह्मणि पुष्कलतया च ब्रह्मशब्दप्राबल्यात् तद्विपरीतोऽग्निशब्दो दुर्बलत्वात् यौगिक इति हि सूत्रतात्पर्यम् ॥ एवं वा—अस्यां विद्यायामग्निशरीरत्वानुसन्धानमेव सूत्रकारमतं तथादृष्ट्युपदेशादिति दर्शितम्; जैमिनिमतं तु सामान्येन परमात्मपरतया तात्पर्यलिङ्गैरवगतेषु प्रकरणेष्वर्थान्तररूढशब्दानां परमात्मपरत्वे अवश्यम्भाविनि सति अवयवशक्त्या साक्षादेव तत्परत्वं वर्णनीयमित्येवंरूपं नैतत्प्रकरणविशेषमात्रविषयम्। अस्य च न्यायस्य सामान्येनोपजीव्यतया यत्र क्वचित् वक्तव्यत्वे सति अत्र परमात्मपर्यन्तनिर्वाहप्रसङ्गादिहाभ्यधायि; न त्वेतद्विद्याया असाधारणत्वात्। अत एव[1] ह्यवयवशक्त्या आकाशशब्दो व्याख्यातः ॥ सामान्येनोपजीव्यस्य न्यायस्येहाप्युपजीव्यत्वात् विद्याभेद इति चेन्न; चिदचिद्विशेषासाधारणलिङ्गान्वितेषु वाक्येषु तच्छरीरत्वाश्रयणस्य न्याय्यत्वेन अस्य न्यायस्य चिदचिदसाधारणलिङ्गरहितवाक्यविषयत्वात्। अत्र च जाठरलिङ्गान्युपक्रम्यन्ते। अत एव हि सूत्रकारः तथादृष्ट्युपदेशादिति स्वमतमुक्तवान्। यथा, न द्वितीयेति[2] कृत्वा अवघातादीनां व्रीहिशेषत्वं चिन्तितम्, तद्वत् जाठरलिङ्गाभावेन(वे?) तद्विशिष्ट[पर?]त्वासंभवेऽपि परमात्मपरत्वं सिध्यतीत्यन्वारुह्य दर्शितं जैमिनिमतम्। अतो न विद्याभेदः ॥

उत्तरसूत्रशङ्कामाह यस्त्वेतमिति। अभिव्यक्तेरित्याश्मरथ्यः ॥ परिच्छिन्नत्वं महाभूततृतीयदेवतयोरेव संभवतीति शङ्कापरिहारार्थमिदं सूत्रम्। अभिव्यक्त्यर्थम्—बुद्धिसौकर्यायेत्यर्थः। परिच्छिन्नत्वे हि बुद्धिसौकर्यं स्यात्। उक्तमर्थं विवृणोति द्यौर्मूर्धेत्यादिना। द्युप्रभृतिप्रदेशेत्यादिना

---

1 अत एव—साक्षादपीत्येतन्न्यायप्रवृत्तिबलादेव; आकाशरूपभूतस्य विशेषणताग्राहकलिङ्गाभावादेव आकाशाधिकरणे अवयवशक्तिवर्णनम्।

2 मी. २. १. तानिद्वैधमित्यत्र व्रीहीनवहन्तीत्यत्र अवघातशेषत्वं वा व्रीहीणाम्, व्रीहिशेषत्वं वाऽवघातस्येति चिन्ता कृता। व्रीहीनिति द्वितीयया उत्तरपक्षे स्पष्टेऽपि तदभावं कृत्वाचिन्ता यथा, तथा जाठराग्निलिङ्गाभावं कृत्वा जैमिनिचिन्तेत्यर्थः।

प्रदेशसंबन्धिन्या मात्रया परिच्छिन्नत्वं कृत्स्नमभिव्याप्तवतो विगतमानस्य ह्यभिव्यक्तेरेवं हेतोर्भवति ॥ ३० ॥

मूर्धप्रभृत्यवयवविशेषैः पुरुषविधत्वं परस्य ब्रह्मणः किमर्थमिति चेत्—तत्राह—

अनुस्मृतेर्बादरिः ॥ १-२-३१ ॥

तथोपासनार्थमिति बादरिराचार्यो मन्यते। "यस्त्वेतमेवमभिविमानमात्मानं वैश्वानरमुपास्ते, स सर्वेषु लोकेषु सर्वेषु भूतेषु सर्वेष्वात्मस्वन्नमत्ति" इति ब्रह्मप्राप्तये ह्युपासनमुपदिश्यते । एतमेवमिति—उक्तप्रकारेण पुरुषाकारमित्यर्थः। सर्वेषु लोकेषु सर्वेषु भूतेषु सर्वेष्वात्मसु वर्तमानं यदन्नम्—भोग्यम्, तदत्ति--सर्वत्र वर्तमानं स्वत एवानवधिकातिशयानन्दं ब्रह्मानुभवति। यत्तु सर्वैः कर्मवश्यैरात्मभिः प्रत्येकमनन्यसाधारणमन्नं भुज्यते, तत् मुमुक्षुभिस्त्याज्यत्वादिह न गृह्यते ॥३१॥

यदि परमात्मा वैश्वानरः, कथं तर्ह्युरःप्रभृतीनां वेद्यादित्वोपदेशः, यावता जाठराग्निपरिग्रह एवैतदुपपद्यत इत्यत्राह—

संपत्तेरिति जैमिनिस्तथा हि दर्शयति ॥ १-२-३२ ॥

अस्य परमात्मन एव वैश्वानरस्य द्युप्रभृतिपृथिव्यन्तशरीरस्य समाराधनभूतायाः उपासकैरहरहः क्रियमाणायाः प्राणाहुतेरग्निहोत्रत्वसंपादनाय अयमुरःप्रभृतीनां वेदित्वाद्युपदेश इति जैमिनिराचार्यो मन्यते। तथा हि—परमात्मोपासनोचितमेव फलं प्राणाहुत्या अग्निहोत्रसंपत्ति

---

प्रादेशमात्रशब्दो [1]व्याख्यातः। अभिविमानमित्यत्राभिशब्दं व्याचष्टे कृत्स्नमभिव्याप्तवत इति। विमानशब्दं व्याचष्टे विगतमानस्येति।

उत्तरसूत्रस्य शङ्कामाह मूर्धप्रभृतीति। प्राकृतमूर्द्धादिद्रव्यावयवत्वम् (प्राकृतद्रव्यमूर्धाद्यवयवत्वम् ?) अप्राकृतरूपस्य परमात्मनो न संभवति, अपि तु देवताया एव संभवतीत्यभिप्रायः। अनुस्मृतेर्बादरिः ॥ प्राकृतमूर्धाद्यवयववत्त्वासंभवपरिहारार्थत्वाभिप्रायेण सूत्रं व्याचष्टे तथेत्यादिना अनुस्मृतिः उपासनम्; उपासनार्थं पुरुषविधत्वमित्यर्थः। कथमुपासनार्थत्वम् ? बुद्ध्यारोहार्थत्वं किं न स्यादित्यत्राह यस्त्वेतमिति। उदाहृतवाक्ये पुरुषविधत्वमुपास्याकारतया न प्रतीयत इत्यत्राह एतमेवमितीति। अत्र मुक्तिफलवाचिशब्दः क इत्यत्राह सर्वेष्विति। अन्नशब्दस्य प्रसिद्धान्नपरत्वानुपपत्तिमाह यत्त्विति ॥

एवं परमात्मनो द्युप्रभृतिप्रदेशसंबधिन्या मात्रया परिच्छिन्नत्वे पुरुषविधत्वे च प्रयोजनमुखेन भूततृतीयदेवताव्युदासः कृतः; अथोत्तरसूत्रस्य जाठरशङ्काव्युदासकत्वं दर्शयन् तदवतारयति यदीति। यावता—प्रत्युतेत्यर्थः। संपत्तेरिति जैमिनिस्तथाहि दर्शयति ॥ कस्य संपत्तिः, सा च कीदृशीत्यपेक्षायामाह अस्येति। संपत्तिः संपादनम्, अतस्मिन् तत्कल्पनम्। तथा हि दर्शयतीति सूत्रखण्डं व्याचष्टे तथेति। परमात्मोपासनोचितमेव फलमिति। अग्निहोत्रसंपत्तेः परमात्मसमाराधनार्थत्वं 'तस्य सर्वेषु लोकेषु' इत्याद्युक्तफलविशेष एव ज्ञापयतीति भावः। स य

---

1 जाबाले अग्निरहस्ये चोक्तमन्यादृशं प्रादेशमात्रत्वमेतदधिकरणान्ते दर्शयिष्यते । अत्र स्वरससिद्धमिदमन्यत्। अनयो विकल्पः।

च दर्शयतीयं श्रुतिः, "स य इदमविद्वानग्निहोत्रं जुहोति यथा अङ्गारानपोह्य भस्मनि जुहुयात्—तादृक् तत् स्यात्। अथ य एतदेवं विद्वानग्निहोत्रं जुहोति, तस्य सर्वेषु लोकेषु सर्वेषु भूतेषु सर्वेष्वात्मसु हुतं भवति। तद्यथेषीकातूलमग्नौ प्रोतं प्रदूयेत, एवं हास्य सर्वे पाप्मानः प्रदूयन्ते" इति ॥

**आमनन्ति चैनमस्मिन् ॥ १-१-३२ ॥**

एनम्—परमपुरुषं द्युमूर्धत्वादिविशिष्टं वैश्वानरम् अस्मिन्—उपासकशरीरे प्राणाहुत्याधारत्वाय आमनन्ति च, "तस्य ह वा एतस्यात्मनो वैश्वानरस्य मूर्धैव सुतेजाः" इत्यादिना। अयमर्थः—'यस्त्वेतमेवं प्रादेशमात्रमभिविमानमात्मानं वैश्वानरमुपास्ते' इति त्रैलोक्यशरीरस्य परमात्मनो वैश्वानरस्योपासनं विधाय, 'सर्वेषु लोकेषु' इत्यादिना ब्रह्मप्राप्तिं च फलमुपदिश्य, अस्यैवोपासनस्याङ्गभूतं प्राणाग्निहोत्रं 'तस्य ह वा एतस्य' इत्यादिनोपदिशति ; यः पूर्वमुपास्यतयोपदिष्टो वैश्वानरस्तस्यावयवभूतान् अग्न्यादित्यादीन् सुतेजोविश्वरूपादिनामधेयान् उपासकशरीरे मूर्धादिपादान्तेषु संपादयति। मूर्धैव सुतेजाः -उपासकस्य मूर्धैव परमात्ममूर्धभूता द्यौरित्यर्थः।

---

इदमित्यादि ॥ **इदमविद्वान्**—[1]**इदम्** उरःप्रभृतीनामग्निहोत्रोपकरणतामजानन् यः **अग्निहोत्रम्**—प्राणाहुतिम् **जुहोति**—अनुतिष्ठतीत्यर्थः। **एतदेवं विद्वानि**त्यत्राप्येवमर्थः **सर्वेष्वात्मसु हुतं भवती**ति। सर्वात्मकभगवदाराधनेन सर्वमाराधितं भवतीति हुतप्रकर्षोक्तिः। अस्याग्निहोत्रस्य परमात्माराधनत्वज्ञापनार्थं तदङ्गकपरोपासनफलं दर्शयति **तद्यथेषीके**ति ॥

परस्यात्मनो द्युप्रभृतिशरीरकत्वमयुक्तम्, उपासकस्य मूर्धाद्यवयवानामेव द्युप्रभृतित्वेनोपासनविधानादिति शङ्कायामाह **आमनन्ति चैनमस्मिन्** ॥ **एन**मिति पदं व्याचष्टे **द्युमूर्धत्वादी**ति। अन्वादेशविषयो ह्येनादेशः। अन्वादेशः अन्वाख्यानम्। तस्मात् **एन**मिति पदम् उक्तधर्मोपेतम् उक्तधर्मिणं परामृशतीति भावः। उपासकशरीरे द्युमूर्धताद्यनुसन्धानं परमात्मनो द्युमूर्धत्वादेर्न विरोधि ; उभयस्यापि विहितत्वात्। अत उपासकशरीर एव द्युमूर्धत्वाद्यवयववत्त्वमिति अवधारणकल्पनमयुक्तमित्यर्थः। **एव**मित्यत्र गर्भितमर्थं विवृण्वन् उभयस्य विहितत्वमुपपादयति **अयमर्थ** इत्यादिना। **ब्रह्मप्राप्तिं च फलमुपदिश्ये**ति। फलवत्संनिधावफलं तदङ्गमिति न्यायात् ब्रह्मप्राप्तिफलकत्वेनोक्तस्य वैश्वानरोपासनस्य प्राणाग्निहोत्रमङ्गमित्यभिप्रायः ॥ कथं प्राणाग्निहोत्रस्याफलत्वम् ; 'अथ य एतदेवं विद्वान्...तद्यथेषीकातूलम्' इत्यादिना तस्य हि फलं श्रूयत इति चेन्न ; प्राणाहुतिमात्रस्य सर्वपापनिवृत्तिपूर्वकापरिच्छिन्नफलहेतुत्वायोगात् अङ्गभूतस्यापि प्राणाग्निहोत्रस्याङ्गिद्वारा[2] मुक्तिरेव फलमिति ज्ञापयितुं **यस्त्वेतमेव**मित्यादिनोक्तवैश्वानरोपासनफलान्तर्गतानिष्टनिवृत्त्यंशस्योक्ततया अङ्गिफलविरोधिफलाश्रवणेन 'तस्य ह वा' इत्यादिवाक्यप्रतिपन्नस्याङ्गि(ङ्ग)भावस्यानपोदितत्वात्। 'तस्य ह वा' इत्यादिवाक्यस्यार्थमाह **यः पूर्व**मिति। अवान्तरवाक्यानि प्रत्येकं व्याचष्टे **मूर्धेत्यादिना**। अधिकरणार्थप्रतिपत्तिसौकर्यार्थं पूर्वसूत्रविषयवाक्यार्थं क्रमप्राप्तमेतत्सूत्रार्थेन संगतमुपन्यस्यति

---

1 श्रुतौ इदमिति पृथक्पदमिति ज्ञापनार्थम् इदमिति पुनर्ग्रहणम्।

2 द्वारेति। प्राणाहुतेर्धर्मस्य पापापनोदनपूर्वमेवोपासननिष्पादकतया किञ्चित्पापापनोदकत्वस्य सत्त्वात्, सर्वपापापनोदकत्वात्मकफलस्याप्यन्ते भविष्यत्वाच्चेति भावः।

चक्षुर्विश्वरूपः ; आदित्य इत्यर्थः ।—प्राणः पृथग्वर्त्मा—वायुरित्यर्थः । सन्देहो बहुलः—उपासकस्य मध्यकाय एव परमात्ममध्यकायभूत आकाश इत्यर्थः । वस्तिरेव रयिः—अस्य वस्तिरेव तदवयवभूता आप इत्यर्थः । पृथिव्येव पादौ—अस्य पादावेव तत्पादभूता पृथिवीत्यर्थः । एवमुपासकः स्वशरीरे परमात्मानं त्रैलोक्यशरीरं वैश्वानरं संनिहितमनुसन्धाय स्वकीयानि उरोलोम-हृदयमनआस्यानि प्राणाहुत्याधारस्य परमात्मनो वैश्वानरस्य वेदिबर्हिर्गार्हपत्यान्वाहार्य-पचनाहवनीयान् अग्निहोत्रोपकरणभूतान् परिकल्प्य प्राणाहुतेश्चाग्निहोत्रत्वं परिकल्प्यैवंविधेन प्राणाग्निहोत्रेण परमात्मानं वैश्वानरमाराधयेदिति 'उर एव वेदिर्लोमानि बर्हिर्हृदयं गार्हपत्यः' इत्यादिनोपदिश्यते । अतः परमात्मा पुरुषोत्तम एव वैश्वानर इति सिद्धम् ॥ १-२-९

इति श्रीभगवद्रामानुजविरचिते शारीरकमीमांसाभाष्ये
प्रथमस्याध्यायस्य द्वितीयः पादः ॥ १-२ ॥

—०—०—०—

---

एवमित्यादिना । अधिकरणार्थमुपसंहरति अत इति । [1]अभिव्यक्तिः, अनुसरणीयत्वम्, द्युप्रभृतिषु मूर्धत्वादिसम्पादनम्, मस्तकचिबुकान्तराले परस्य स्थितेर्जाबालश्रुत्या प्रतिपादनमिति अभिव्यक्तेरित्यादि-सूत्रचतुष्टयार्थ इतरैरुक्तः । तन्मते सूत्राणां परिहरणीयशङ्काया अभावात् वैयर्थ्यमेव स्यात् । अतो यथोक्त एवार्थः ॥ इति वैश्वानराधिकरणम् [2]

इति श्रीहरितकुलतिलकवाग्विजयिसूनुना श्रीरङ्गराजदिव्याज्ञालब्धवेदव्यासापरनामधेयेन श्रीमद्वरदराजाचार्यपादसेवासमधिगत भगवद्रामानुजविरचितशारीरकमीमांसाभाष्यहृदयेन श्रीसुदर्शनसूरिणा विलिखितायां श्रुतप्रकाशिकायां प्रथमस्याध्यायस्य द्वितीयः पादः ॥

शुभमस्तु

—०—०—०—

---

[1] परोक्तसूत्रचतुष्टयार्थाः क्रमेणोच्यन्ते अभिव्यक्तिरिति । प्रादेशमात्रत्वं नाम हृदयादि-प्रदेशे अभिव्यज्यमानत्वं हृदयप्रदेशगतमनउपास्यत्वम् उपासकशरीरप्रदेशविशेषसंपादितद्यु-प्रभृतिस्वशरीरप्रदेशकत्वमिति सूत्रत्रयेणोक्तम् । अन्तिमांशस्य श्रुत्या प्रतिपादनमस्तीति अन्तिम-सूत्रोक्तमिति । सूत्रत्वात् पञ्चम्यन्तपदघटितत्वाच्च शंकाशमनार्थत्वमावश्यकमिति भावः ।

[2] मस्तकचिबुकान्तराले इति । एतदुपपादनं वाजसनेयकाग्निरहस्येऽप्यस्ति (१०-५-६-१०) "स होवाच मूर्धानमुपदिशन्, एष वा अतिष्ठा वैश्वानर इति । चक्षुषी उपदिशन्नुवाच, एष वै सुतेजा वैश्वानर इति । नासिके उपदिशन्नुवाच, एष वै पृथग्वर्त्मा वैश्वानर इति । मुख्यमाकाशमुपदि-शन्नुवाच, एष वै बहुलो वैश्वानर इति । मुख्या अप उपदिशन्नुवाच, एष वै रयिर्वैश्वानर इति । चुबुकमुपदिशन्नुवाच, एष वै प्रतिष्ठा वैश्वानर इति । स एषोऽग्निर्वैश्वानरः, यत् पुरुषः । अप पुनर्मृत्युं जयति । सर्वमायुरेति ।" ॥ श्रीः ॥

इति अभिनवदेशिक-वात्स्यचक्रवर्ति-वीरराघवाचार्यकृतौ सुदर्शनसेवायां प्रथमद्वितीयः ॥

श्रीमते रामानुजाय नमः ॥ श्रीरस्तु ॥

## श्रीभाष्यप्रथमद्वितीयपादगताधिकरणविषयवाक्यानाम् उपनिषत्सूची

| | | | |
|---|---|---|---|
| जि- | 1-1-1 | सर्वाऽप्युपनिषत्—(मुण्डक 1-2-12, 13 परीक्ष्येत्यादि) | |
| ज- | 1-1-2 | तै-उ- | भृगुवल्ली-1(-भृगुर्वै—यतो—) |
| शा- | 1-1-3 | | ,, ,, |
| स- | 1-1-4 | तै-भृ- | आनन्दो ब्रह्मेत्यादिः सर्वाऽप्युपनिषत्। |
| ई- | 1-1-5 | छा- | 6-1-16 सद्विद्या |
| आन- | 1-1-6 | तै-उ-1 | आनन्दवल्ली |
| अ- | 1-1-7 | छा-1-6 | य एषोऽन्तरादित्ये— |
| आका- | 1-1-8 | छा-1-9-1 | आकाश इति होवाच— |
| प्रा- | 1-1-9 | छा-1-11-4, 5 प्राणइतिहोवाच— | |
| ज्यो- | 1-1-10 | छा-3-13-7 अथ यदतः परो | |
| इन्द्र- | 1-1-11 | कौषीतकि-3 प्रतर्दनोहवै— | |
| सर्व- | 1-2-1 | छा-3-14 | सर्वंखल्विदं ब्रह्म |
| अत्त्रधि- | 1-2-2 | कठ-1-2-25 यस्य ब्रह्म च | |
| अन्तरा- | 1-2-3 | छा 4-15 | य एषोऽक्षणि |
| अन्तर्या- | 1-2-4 | बृ-का-5-7 | (मा-6-7) यः पृथिव्यां |
| अदृ- | 1-2-5 | मुण्डकोपनिषत्—अथपरा यथातदक्षरम् | |
| वै- | 1-2-6 | छा-5-11 | वैश्वानरंसंप्रत्यध्येषि |

—०—०—०—

## शारीरकप्रथमद्वितीयपादसूत्राणाम् अकारादिसूची



शुभमस्तु

श्रीः

## भूमिकाभागे शोधनादिकम्

18-6 अत्रोपात्तेषु पूर्वाचार्यवाक्येषु "कर्मसमृद्ध्यर्थत्वे तत्प्रयोजनं तन्निर्वचनात्" इति वाक्यकारवचनं श्रुतप्रकाशिकायां (I.१-७४ पुटे) उपात्तमपि आयोज्यम् ।

19-10 कुहदेव - (कुहदेवः = वामनः, वञ्चनयाऽवतीर्णत्वात्)

70-1 काण्ड इति व्यवहारः

76-16 व्यक्तिपर्यन्तत्व....

## श्रुतप्रकाशिकासहिते श्रीभाष्ये प्रथमसंपुटे आदितः २५६ पुटपर्यन्तभागे पाठभेदशोधनिकादिकम् ।

3-16 मनस्समवधानार्थं

14-22 यत्वप्रतीतेरनन्तस्थिरफलापातप्रतीत्यन्तर्भावात् (पाठभेदः)

15-21 परम्परया ब्रह्मसम्बन्धिना......... (षष्ठीदर्पणे)

15-24 जिज्ञास्यत्वं सूच्यते (षष्ठीदर्पणदृष्टोऽयमेव पाठः स्वरसः)

16-19 लक्षणायामेव । प्राति... (भावप्रकाशिकापाठः)

17-19 स्वेतरवैलक्षण्यं तृणादे... (भा. प्र.)

17-22 निर्गुणत्वस्य

18-5 तदन्तर्गतानामेव (भा. प्र.)

26-15 रात्रिसत्रन्याय...

29-20 उद्यानपत्रिका (May 1939) पाठशोधनम् । (ति. ई. वीरराघवाचार्यः, शिरोमणिः)
"श्रुतप्रकाशिकायां अध्ययनविधिनिरूपणप्रकरणभाष्यव्याख्यावसरे 'आद्ये त्वध्ययनेनैव काचिदस्ति फलश्रुतिः । धारणे जपयज्ञे च या साऽप्येवं निवारिता ॥' इति वचनं धृतम् । इदं च पार्थसारथिमिश्रीयं न्यायरत्नमालावचनम् । तत्र 'फलश्रुतिरियं यतः' इत्येव तुरीयपादो दृश्यते । अग्न्यादिदेवतासायुज्यप्राप्त्यादिफलं ब्रह्मयज्ञादेः । न तु ग्रहणाध्ययनस्य श्रूयते इति तात्पर्यम् अयमेव पाठः प्रकरणानुगुणः । अतस्तदनुवादरूपेऽत्रापि तथैव पाठ्यमिति भाति ।"

31-14 व्यवहितमव्यवहितं

35-7 स्वात्मनां बुद्ध्यु ..

35-15 द्विजः । सकल्पं ...

37-9-10 . . . दैवतब्राह्मणेन मन्त्रेण याजयति . . . गतं वा पतति . . .

38-1 दृष्ट्वा

41-20 नत्वन्ययोग ... (भा. प्र.)

42-16 प्रतिकूलफलत्वमपीत्याह-प्रत्युतेति ।

42-28 न समसमुच्चयपरः । (भा. प्र.)

43-26 क्रमनियामकहेतु ... (भा. प्र.)

44-26 रूपा विशेषा; (भा. प्र. ... सर्पाद्याकाराणां ...

45-4 लोकः क्षीयते, ब्रह्मविदाप्नोति परम्, ब्रह्म वेद...

45-12 न साध्यसाधन...

46-24 "भूत्वा...ऽऽत्मानं पश्येत्"

47-18 ज्ञानोत्पत्तिकरणमाह

47-24 व्यावर्तकः । तेषां

48-15 भ्रान्तिमूलकमिति

50- 2 जातेऽपि सर्वस्य पुंसः सहसैव (भा. प्र.)

52-13 रज्जुसर्पादिभ्रान्ति...(भा. प्रा.)

53- 1 कुर्वीत, अनुविद्य विजानाति, ओमित्येव...

54-17 ...मनादृत्य

54-19 आवृत्तिरिति । आवृत्तिद्वयत्रयव्यावृत्त्यर्थम् 'असकृत्' इति सौत्रं पदम् । उपासनशब्दाश्रवणात सूत्रस्य तत्परत्वमस्फुटमिति तस्यार्थमाह – तदिदमिति । कस्यावृत्ति... (इति पाठ्यम्)

55-10 एतत् वेद्यं ब्रह्म च उभयं...(भा.प्र.)

58-14 जगत्कारणोपासनं चेत्... निदिध्यासनरूपमित्यवगम्यते (भा. प्र.)

67- 5 ...रुत्तरणवाचित्वं

67- 8 कर्मानुबन्धि

68-12 ...दधोनयनस्येति

68-13 विवक्षितमुन्नयनमुपासननिष्पादनरूपम् ।

68-23 जीवत्रद्धयनपेक्षं भवति ।

68-28 तस्यापकर्षन्ति

69- 4 बुद्धिमपकर्षन्ति

69-20 कार्यमेव तत् । यज्ञो दानं

70-18 संराधनात्मके कर्मणि

71-16 नित्यानित्ययो... यस्य धर्मिणो

73- 8 सम्भवशङ्का, ते

74- 1 कर्मसमृद्ध्यर्थान्यपि ब्रह्मदृष्टिरूपाणि ब्रह्मज्ञाना...

76- 5 तुच्छता स्यादित्यत्राह - चिन्मात्रमिति ।

76-22 स्वगतभावाभावरूपभेदः । (पा.)

77-26 मेकवाक्यत्वरूपन्याय...

77-28 उभयलिङ्गत्वं साकारत्वं [भा. प्र.]

78– 6 द्वैतिनोऽतथ्यदर्शिनः ।

87-16 अस्थूलमित्यादिवाक्यं

87-31 द्व्येकेषु इति हि वक्तव्यम् । [भा.प्र.]

88- 3 [इत आरभ्य पु. ९०-२३ 'इति' इत्युत्तरत्र विवरणपर्यन्तात्मको भागः प्रमेयमालाकोशानुवादः । प्रमेयमालाकोशानुसारेण अत्र, एतदनुसारेण तत्र च सुबहु शोधनीयं वर्तते । क्वचित् वाक्यान्यनन्वितानि । भावप्रकाशिकापाठाः समीचीनाः । [सं.]

88- 3 पतञ्जलिना... 'लटः शतृशानचौ अप्रथमासमानाधिकरणे' इत्येतत् सूत्रस्थ...

88-13 नीलं शुक्लं पीतं इत्यादयः ।

88-24 पूर्वोक्तार्थः साधीयान् । [भा. प्र.]

88-25 तत्स्था समानविभक्तिः [भा. प्र.]

89-12 प्रातिपदिकार्थैक्यपरस्य

90- 3 ...त्वपरत्वेन

92- 1 ...जडरूपाद्वस्तुनो

94- 2 ननु च सर्वपदानां

96-15 शास्त्रप्रत्यक्षविरोधे (भा. प्र.)

96-30 शास्त्रबलीयस्त्वस्य

97-28 तथा प्रतियोगिग्रहणमपि [भा. प्र.]

98-14 ...मित्यनवस्था। किञ्च शब्दान्तरेण धर्म इत्युक्तं स्यात्। तथा च धर्मपक्षदूषणान्यापतेयुः। किञ्च-भेद...

99-19 बाधितत्वाबाधितत्वाभ्यां

99-23 सोपाधिकत्वं

101-21 स्वस्मै भासमानत्वात् [भा. प्र.]

103-26 आत्ममनस्संयोगे [भा. प्र.]

104-15 यदि प्रत्यक्षेण [ ,, ,, ]

105- 6 ...अनुमेयत्वदर्शनात् बाधप्रसङ्गात् [भा. प्र.]

106-15 रूपादिर्हीति।

109- 6 साक्षिणि च

110-17 प्रामाणिकानाम्

110-22 ज्ञातुरप्यात्मत्वं [भा. प्र.]

112-23 मधुसूदनः।

113- 8 दुर्निरसत्वमुक्तम् [भा. प्र.]

114- 2 [उद्यानपत्रिका May 1939 पाठशोधनम्। ति-ई-वीरराघवाचार्यः।] "श्रीभाष्ये महासिद्धान्तारम्भे 'यस्तु स्वानुभवसिद्ध इति स्वगोष्ठीनिष्ठः समयः' इति पाठो दृश्यते। अत्र 'स्वानुभवसिद्धम्' इति युक्तः पाठः। श्रुतप्रकाशिकायां 'स्वानुभवसिद्धं हि तत्' इत्येतदवतारणात्, उपरि 'स्वानुभवसिद्धमित्यनेनैकार्थ्यात्' इति श्रीभाष्यपाठानुवादाच्च। स्वानुभवसिद्धमित्यादि निर्विशेषवस्तु विशेष्यमितीदमपि पर्यालोचनीयम्"। (सं.)

115-11 पक्षव्यापको हि हेतुः [भा. प्र.]

116- 3 प्रामाणिकैर्विशेषै...[पा.]

117-31 सविकल्पस्य स्वरूपं [पा.]

118- 7 वृत्तिप्रतीतिरिति। प्रथम... [न्यायपरिशुद्धिव्याख्याने न्यायसारे [पु. ८१] दृष्टः पाठः।

118- 8 सास्नादिसंस्थानरूप... ( ,, ,, )

119- 2 प्रतीत्यभावाच्च प्रथमपिण्ड... [भा. प्र.]

120-16 ...च्छेद्यत्वसिद्धेरुपाधित्वं [भा. प्र.]

120-26 व्यवच्छेदको यः स

122-17 संस्थानसंस्थितानां दण्डादीनां

126- 4 संस्थानस्य उभयसम्प्रतिपन्नत्वाच्च [भा. प्र.]

129-17 भ्रमविरोधी भेदो

129-31 महिषादीनाम्।

131-13 सिद्धसाध्यता।

131-18 तत्पर्यवसायित्वाच्च।

131-25 स्वरूपमात्रमिति

132-13 बाधस्यापि पक्षवृत्त्युपपादनेन [पा.]

133-18 क्रियान्तरावच्छिन्नस्य कालस्य [भा. प्रः]

133-28 तृतीये-अंशतः सिद्धसाध्यता (भाः प्र.)

135-14 क्षेमत्वमाह-तथाऽनुभूतेरिति।

137-23 प्रतिसन्धानं वा घटादि...[भा. प्र.]
139-23 स्मरणञ्च
139-29 प्राग्जन्मभोगा: [पा.]
142-24 साधनाव्यावृत्तत्वलक्षणानियतत्व-
मात्रम् [भा. प्र.]
143-18 हेतुत्वरूपं व्यवहारानुगुण्यं[भा. प्र.]
144- 4 कोऽयमात्मा ?
144-28 संविदात्मभावस्य [भा. प्र.}
144-30 धर्मधर्मिभावपुञ्ज एव [भा. प्र.]
146- 2 प्रतिसन्धानाभावस्तदवस्थ: ।
[न्यायसिद्धाञ्जनव्याख्या (पु.११९)
दृष्ट: पाठ:]
147- 2 तद्बलनिर्भासितत्वात् [श्रुतप्रका-
शिकासम्मत: पाठ:]
150- 6 अस्याश्च (न्यायसिद्धाञ्जने बुद्धि-
परिच्छेदे एवं पाठ:)
151-20 'दीपदीप्ता यथाऽऽकृति:' इति
(मोक्षधर्मे २४८-१५) शुद्ध: पाठ:।
152- 2 ऊर्ध्वमुद्गम्य
153-30 व्यतिरेकशब्देन (भा. प्र.)
155- 4 सम्बन्धविषयकज्ञानेन (भा. प्र.)
155- 7 विशेष्यतैकस्वभाव: स्वात्मानमुप-
स्थापयति । (भा. प्र.)
155-30 उत स्वस्मै प्रकाशमानत्वम्, उत
स्वस्मै स्वयम्प्रकाशमानत्वम् ।
157-27 ननु संविदध्यासानुदयो दुर्वच:
(भा. प्र.)
158- 5 चेतनासाधारणधर्मत्वाच्च (भा. प्र.)
158-32 ज्ञातृत्वाभाव उक्ते पराक्त्वं
160- 6 स्वाभाविकं रूपम्; अपि तु[भा.प्र.]
160-28 अविकारित्ववचनानि [भा. प्र.]
160-30 ...विकारित्वमेवंरूपशब्देन
161- 8 ...अहङ्कारस्येत्यर्थ: । यद्वा स्वरूप-
शब्दो धर्मिपर: । ज्ञानस्वरूपस्यैव
ज्ञानधर्मकत्वं सम्भवति; न तु जड-
स्वरूपस्य - यथा घटादेरिति, ज्ञान-
स्वरूपत्वात् ज्ञानधर्मकस्यैव स्व-
धर्मभूतज्ञानप्रसरकर्तृत्वरूपविकार -
सम्भव:; न तु जडस्वरूपत्वात्, अत-
द्धर्मकस्याहङ्कारस्येत्यर्थ: । एवं वि-
क्रिया...
163- 8 स्वत: सिद्धतया हि प्रागभाव उक्त:।
(भा. प्र.)
164-14 अन्यन्निरसनीयं
165- 6 ...प्रतीत्यनुगुणस्वभावत्वाच्च
(भा. प्र.)
165-20 ज्ञानेऽस्य तथात्वम्,
166- 3 अहम्भानविगमे तु (पा.)
167- 1 सुप्तोत्थित:
167-26 गजो नास्तीति [भा. प्र.]
168-14 तिष्ठत्येव । स्वापस्य बाह्यान्तर-
करण... (न्यायसिद्धाञ्जनव्याख्याने
(पु. १२७) उपनिषद्भाष्यकारैरु-
पात्त: पाठ:)
168-15 अनुसन्धानमस्ति चेत् (,, ,,)
168-16 न चैवं सुखादे: (,, ,,)
169- 9 साक्षाद् द्रष्टर्येव (भा. प्र.)
171- 9 स्वस्मै भासमानत्वेन (भा. प्र.)
173-15 युक्तम् । यथा, (भा. प्र.)
173-21 अत्रैव पुराणे (भा. प्र.)
176-33 यस्य तु दुष्टं करणं
179-23 तत्प्रतिपत्ति:, क्वचित्... (भा. प्र.)

182-18 त्वादिज्ञानम् (चक्षुरादिकं नापेक्षते)। नहि... (पा.)

185-20 वैशेषिकादिमत... [भा. प्र.]

186-20 उपदेशः। प्रत्ययार्थः कर्मत्वम्। 'अकर्तरि...

186-22 'क्ङिति च'

186-30 ब्रह्मण इत्यसाधारणमिति (पा.)

187- 3 ...मितसुख... [पा.]

187- 8 ...वस्तुनोऽपेक्षिता... [पा.]

188-16 ...वाक्येषु अनेकविशेषणविशिष्टैकार्थं... (पा.)

188-22 तथा सति पदानां पर्यायत्व... (भा. प्र.)

189-21 परामर्शदशायां हि सम्भवत्येव। (भा. प्र.)

189-23 विशेष्यैक्यमेवावगमयति; (भा.प्र.)

191-18 वाक्यमखण्डार्थं परं समानाधिकरण... [भा. प्र.]

195- 3 ...मपि न युक्तम् [भा. प्र.]

195-27 ...रुभयोरप्यपच्छेदनियमो (भा.प्र.)

196-13 ज्ञायमानतया वा [पा.]

199-10 स्फुटप्रतीतिहेतुत्व... (भा. प्र.)

199-29 पुरुषबुद्ध्युत्प्रेक्षा...

202-15 बहुधेत्युक्तम्

202-24 ...माविद्यकत्वेन

204- 6 तेन सकृत्प्रयुक्तजगच्छब्दस्य [पा.]

205– 6 ...विशिष्टवस्त्वैक्यम्; [भा. प्र.]

206-12 बहुधा विचारः

206-25 विरोधगन्ध...

209-25 आविद्यकत्वाविशेषेण

214- 9 उद्गमयिता गमयिता सङ्गमयिते... [भा. प्र.]

214-10 नेतेति। अनेन गमयितृ... [भा. प्र.]

214-27 कश्यपः पश्यकोऽभवदिति [पा.]

216- 2 रूपवर्गादि... [पा.]

217- 6 एव विशेषणम्। (भा. प्र.)

228-18 अतोऽनेन वचनेन सत्त्वादि... (भा. प्र.)

231-29 अन्तिमपङ्क्तिस्था टिप्पणी २३० पुटे आयोज्या।

233-22 न तु तस्य शरीरात्म... (भा. प्र.)

234- 8 इत्युक्तप्रश्नस्योत्तरत्वा...

234-21 विस्तररूपत्वं च

236-19 सजातीयस्तेषामिति

237- 6 तपतां श्रेष्ठ!

238-14 ...तादात्म्यमिति निर्देशवत्।

238-19 व्याप्यत्वसहचरितं हि (भा. प्र.)

238-20 अतत्पर्यन्तस्य स्वतन्त्र...

238-30 प्रतीयते;

243-15 नभस्यंशभेदाभिप्रायेण

249-29 सादृश्य एव हि समशब्दस्य (इत्येव महीशूरपुरमुद्रणे पाठः)

253-12 दार्ष्टान्तिके

254-13 घोष इत्यत्र गङ्गापदवत् (न्यायसिद्धाञ्जने एवं पाठः)

## द्वितीयांशे शोधनपरिवर्तनपरिवर्धनादिकम्

12-23 स्पर्शानुपलम्भस्तु (सिद्धान्तसिद्धाञ्जने (पु: ४१) श्रीअनन्ताल्वान्-विरचिते दृष्टोऽयं पाठः साधुः।

14- 2 विद्यमानं हि स्वाश्रयं (पा.)

15-26 स्वरूपभूतं ज्ञानं साश्रयं (भा. प्र.)

31-29 'सोमाभावे' इति श्लोको यामुनार्यणामिति अधिकरणचिन्तामणि-[श्लोकः २०१] दर्शनात् ज्ञायते। 'यन्नाथमुनिमिश्राद्यैर्यथार्थख्यातिसाधनम्' इति न्यायपरिशुद्धिदर्शनात् एताः कारिकाः नाथमुनिमिश्रीया इत्यवगम्यते।

32-20 तथाऽवगम्यते।

34- 9 'जीवस्य' इत्यनन्तरं "स्रष्टृत्वमाशङ्क्य, 'मायामात्रं तु कार्त्स्न्येनानभिव्यक्तस्वरूपत्वात्' [३-१-३] इत्यादिना न जीवस्य सङ्कल्पमात्रेण स्रष्टृत्वमुपपद्यते" इतिपर्यन्तो भागः भाष्ये गलितः।

37- 9 "अथवा किमनेन—" इत्यादिकः कुण्डलितो भाष्यभागः न्यायपरिशुद्ध्यादिषु आचार्यैः (प्रत्यक्षाध्याये प्रथमाह्निके) उपादानात्, श्रुतप्रकाशिकायां व्याख्यातत्वात्, श्रीविष्णुचित्तैः प्रमेयसङ्ग्रहेऽनूदितत्वाच्च प्रामाणिक एव।

70- 7 प्रवृत्तिनिमित्त—

80- 3 "पाठशोधनम्" उद्यानपत्रिका May 1939. मधुरान्तकम् ति. ई. वीरराघवाचार्याः। "श्रीभाष्ये महासिद्धान्तावसाने "चिदचिदीश्वरान् विविक्तस्वरूपस्वभावान् 'क्षरं प्रधानममृताक्षरं हरः...' इत्यादिवाक्यैः, पृथक् प्रतिपाद्य, 'यस्य पृथिवी शरीरं...' इत्यादिभिः वाक्यैः चिदचितोः सर्वावस्थावस्थितयोः परमात्मशरीरतां परमात्मनस्तदात्मतां च प्रतिपाद्य, शरीरिभूतपरमात्माभिधायिभिः सद्ब्रह्मात्मादिशब्दैः कारणावस्थः कार्यावस्थश्च परमात्मा एक एव इति 'सदेव सोम्येदमग्र आसीत्'...इत्यादिवाक्यं प्रतिपादयति" इत्युक्तम्।

अत्र चिदचिदीश्वराणां विविक्तस्वरूपस्वभावप्रतिपादनस्य; तेषां शरीरात्मभावप्रतिपादनस्य कार्यकारणावस्थः परमात्मा एक एवेति प्रतिपादनस्य च विभिन्नवाक्यकर्तृकतया समानकर्तृकत्वपरं ल्यबन्तं पदद्वयं कथमन्वेतु? इति शङ्का जायते। अत्रैवं समाधानम्—णिजन्तात् प्रतिपूर्वकात् पद्धातोः पुनर्हेतुमण्णिचि ल्यप्प्रत्यये च 'प्रतिपाद्य' इति रूपं, णिजर्थश्च निर्वाहकव्यापारः। निर्वाह्यकर्तृत्वस्य

वाक्यान्तरवर्तित्वेऽपि निर्वाहकव्यापारस्य 'सदेव' इत्यादिवाक्ये विवक्षितत्वेन तदुपपत्तिः। 'सदेव' इत्यादिवाक्येन कार्यकारणावस्थब्रह्मप्रतिपादनं चिदचिदीश्वराणां स्वरूपभेदप्रतिपादनं, तेषां शरीरशरीरिभावप्रतिपादनं च अपेक्षत इति प्रातीतिकः क्रम इह विवक्षित इति। अथवा पाठान्तरमन्वेष्टव्यम्।''

82- 2 निवर्तकज्ञानोत्पत्तिरेव

88- 8 तेषु तेष्वर्थेषु स्वात्मनो (पा.)

92-28 कृतिसाध्यत्वातिरेकि कृतिकर्मत्वं

95- 7 अर्यत इति [पा.]

97- 8 स्वातन्त्र्याभिमानवतः

101- 6 अयोगव्यवच्छेद...

101-15 ब्राह्मणाग्नीन्द्रादीनामपि

102-16 ननु नेदं समुदितमपि लक्षणम् [भा. प्र.]

103- 4 अविशेषेण विशेषणं विशेष्यं च एककार्यान्वितत्वेन

103-17 तात्पर्याभाव

103-29 भाष्यकारपरिष्कृतप्रकृत...

105-23 विभूतेरप्युपास्यान्तर्भावज्ञापनार्थं

106-30 उपासनं च जगद्विशिष्टविषयम् (भा. प्र.)

107-14 कारणमनूद्यते। [भा. प्र]

107-21 बुभुत्सितः, धीस्थः सारस...

110- 7 उच्यते। शाखाग्रमुपलक्षणम्। कालविशेषे देशविशेषसम्बन्ध उपलक्ष्याकारः। शाखाचन्द्रयोश्च...(भा.प्र.)

111-32 उपलक्षणाकारमाह–

112-20 भिन्नविषयत्वमेव (भाः प्र.)

115-23 अतो यथोक्त एवार्थं उपपन्नः। (भा. प्र.)

116- 2 सातिशयस्वरूपस्वगुणाः

119- 9 निर्दोषज्ञानमूलत्वं वाच्यम् (भा.प्र.)

120-14 वह्न्यौष्ण्य–

123-24 ...शङ्काद्योतनार्थं (भाः प्र.)

126-11 सद्भावेनानैकान्तिकत्वात्। (पा.)

128- 7 कर्तृकालैक्यनियमाभावात् [भा. प्र.]

130- 7 विरुद्धत्वमित्यर्थः।

131-12 न तद्विलक्षणत्वसिद्धिरित्याह–

138-19 निवर्त्यप्रातिकूल्याभ्यां [भा. प्र.]

139- 3 स्वविषयावबोधित्वात् सर्वप्रमाणानाम् [भा. प्र.]

141- 6 साध्यत्वमविरुद्धमिति। [भा. प्र.]

141-23 स्वर्गादावप्यस्ति; [भाः प्र.]

144- 8 नाप्यनुग्राहकम्। (पाठोऽयं शतदूषण्यां ४६ वादान्ते दृष्टः, स एव साधुः।) (सं.)

146- 4 तत्र तद्ध्याननियोगेन [भा. प्र.]

149-26 प्रमेयतया इत्यर्थः। (भा. प्र.)

151- 3 ह्यपरोक्षज्ञानजनकानि। (भा. प्र.)

162- 7 प्रवृत्तिनिवृत्तिरूपप्रयोजन...

165- 6 निश्चिते सति (भा. प्र.)

165-16 ...प्यविरुद्ध एव। (भा. प्र.)

165-24 ...जिहासाव्याप्तम् [पा.]

173-29 तदनुग्राहकत्वेन चोपनिषदन्तर... [भा. प्र.]

175-30 यद्वा, इदमग्रे आसीदिति [भा. प्र.]

179-13 न्यायो हि [भा. प्र.]
182-29 मृन्मयमितिवत्
184-29 नापि निष्कृष्टपरमात्मपरः (भा. प्र.)
188-10 [1]ओघशब्दः
188-18 सूत्रकार[2]श्रुत्योर्निर्देशः ।
190-13 परमात्मसाध्यस्य हेतुवाचीति [भा. प्र.]
194-20 दश पद्याः, द्वावूरू (ऐतरेयवाक्यमिदमिति स्तोत्ररत्नभाष्ये (श्लो-३३) स्पष्टम् । तदनुसारेण पाठः शोधितः । [सम्पादकः])
198-26 'तथा वर्षति वासवे' इत्येव स्तोत्ररत्नभाष्ये (श्लो.४४) पाठः ।
200-23 एवं सूत्रन्यायाभ्यां [भा. प्र.]
212-17 "आक्षिप्तद्रव्ये गुणजाती" इत्येतत् दीपशिखावाक्यम् । (सम्पादकः)
214- 8 पूर्वपक्षे प्राप्ते तद्व्यावर्तनाय अर्थेकत्व इत्युक्तम् । (अरुणाधिकरणसरणिविवरिण्यां (पु. १७५) दृष्टः पाठभेदोऽयम्) [सम्पादकः] ।
215–19 स्यात् इति किमत्र... अयोगव्यवच्छेदमात्रं हि न विरुद्धम् । [अ.स. वि. पाठः]
215-21 कारकविभक्तित्वाकारात् कारकाणां क्रियान्वयबोधनं [अ.स.वि.पाठः]
215-22 द्याकारात् सङ्ख्या... [अ. स. वि. पाठः]
215-31 बाध्यबाधकभावाङ्गीकार इति चेत् [अ. स. वि. पाठः] ।
216- 9 प्रयोगदर्शनात्-एवं समानविभक्ते... (अ. स. वि. पाठः) ।
222- 3 "चत्वारः पञ्चदश रात्राः... देवत्वं गच्छन्ति" (वाक्यमिदं ताण्ड्यमहाब्राह्मणे २३-६) ।
237-10 गतो भवति
238-26 कपिर्बभस्ति
239-28 वष्टि भागुरि...
240-13 ...शरीरसम्बन्धनिबन्धनजीवत्वशङ्का (तत्त्वमार्तण्डदृष्टः पाठः; सम्पादकः)
245-15 नित्याऽलिङ्गा
246- 9 'रुक्माभम्'
250- 7 इत्यादिष्वपि
279-12 परस्य ब्रह्मणो–
282- 4 परमात्मानमुपास्स्वेत्येकवाक्यत्वम् ।
293- 2 कल्याणगुणजातं
300- 3 अत्ता चराचरग्रहणात्
308- 9 १-२-१४
309- 2 १-२-१५
311-10 १-२-१६
330-13 कर्मसामान्यवाची ।
339-27 अग्न्यादिदेवत्यकर्मसु
347-13 वर्णनोयमिति । एवंरूपं
349- 9 'उद्यानपत्रिका' July and August 1947 पाठशुद्धिः"

श्रीभाष्ये वैश्वानराधिकरणान्ते "यः पूर्वमुपास्यतयोपदिष्टो वैश्वानरः, तस्यावयवभूतान् अग्न्यादित्यादीन् सुतेजोविश्वरूपादिनामधेयान् उपासकशरीरे मूर्धादिपादा-

न्तेषु सम्पादयति''––इत्येतस्मिन् ग्रन्थे ''अग्न्यादित्यादीन्'' इत्यत्र 'अग्नि' इति अनन्वितं भाति। उपनिषद्भाष्योदाहृतेऽस्मिन्नेव श्रीभाष्यग्रन्थे 'द्य्वादित्यादीन्' इति दृश्यते। स एव तात्त्विकः पाठो भवितुमर्हति ।। — शिन्नामु श्रीनिवासपाट्टराचार्यः ।।'' [सं.]

September 1947 उद्यानपत्रिका ''पाठशुद्धिविमर्शः'' (ति. इ. वीरराघवाचार्यः, शिरोमणिः) ''वैश्वानराधिकरण-श्रीभाष्यान्ते 'अग्न्यादित्यादीन्' इत्यत्र 'अग्नि' इति अनन्वितमिति उक्त्वा, 'द्य्वादित्यादीन्' इति अशोधि श्रीमत्पाट्टराचार्यस्वामिभिः। पाठशुद्धिरियं पूर्वस्यां सञ्चिकायां प्राकाशि। इयं विमृश्यते। 'अग्निर्मूर्धा' इति, 'असौ वै लोकोऽग्निः' इति च दिवोऽग्निशब्देन श्रौतो व्यवहारो दृश्यते। 'अग्निरिह द्युलोकः' इति च अभाषि 'स्मर्यमाणम––' इति सूत्रेऽत्रैव। अतः पर्यायेणाग्निशब्देन दिवो निर्देश उपपद्यते। 'स्वर्लोकादित्य–' इति च सारावली पर्यायान्तरेण निर्दिशति। उपनिषद्भाष्येऽनुवादस्तु अंशतः शब्दवैरूप्यसहः पाठभेद-समर्थनाय नालम्। पुरुषं, 'ब्रह्म-प्राप्तिफलं' 'उपासकस्य शरीरे' 'मध्यकायभूताकाशः' इत्यत्रेव, 'द्य्वादित्यादीन्' इत्यत्रापि प्रकृतभाष्यार्थानुवादमात्रं स्यादपि। अतः 'अग्न्यादित्यादीन्' इति पाठे न काऽप्यनुपपत्तिः ।।''

[स्थितं यथाकथञ्चिन्नेतुं शक्यम् –इत्यत्र न पाठान्तरदर्शिनां विप्रतिपत्तिः। अपि तु प्रकरणस्थस्य द्युशब्दस्य आदित्यशब्दस्येव उपादानं स्वरसम्। प्रयोजनलेशं विना प्रकरणान्तरपठितस्य, अर्थान्तरे प्रसिद्धस्य अग्निशब्दस्य किमिति भाष्यकारेणोपादानं कृतं भवेत्?। शून्यहृदयत्वं हि तथा सति आपद्येत्। सारावलौ 'स्वर्लोक–' शब्दश्च भाष्ये द्युशब्दसत्त्वमेव स्वरसतो गमयति। यदि उपनिषद्भाष्ये पदान्तराण्यशुद्धानि भाष्याननुरूपाणि, कामं तानि शोध्यन्ताम्। 'द्य्वादित्यादीन्' इत्यत्र तु अयमेव पाठो भाष्यकारमुखोद्गतो भवितुमर्हतीति मतिरवशाद् भवति।] [श्री D. T. ताताचार्यः]

श्रीरङ्गलक्ष्मणाभिख्यसंयमीन्द्रकटाक्षभाक्।
श्रीवीरराघवाचार्यकृपासम्प्राप्तसन्मतिः ।।
अघमर्षणवंश्योऽसौ श्रीवत्साङ्कः सदीरणात्।
श्रुतप्रकाशिकायुक्ते भाष्येऽकृत परिष्क्रियाम् ।।

शुभम्

अवधेयं किञ्चिदिह । श्रीभाष्ये महासिद्धान्ते सामान्यविशेषन्यायस्य विवेचनावसरे श्रुतप्रकाशिकायां (जिज्ञासाधिकरणे प्रथमसम्पुटे प्रथमभागे १९५-७ पुटे) गोबलीवर्दन्यायादयः प्रस्तुताः । तत्र विषयविवेचनार्थं उद्यानपत्रिकायाम् [July 1940] श्रीमद्भिः V. R. S. ताताचार्यैः विवेचितोऽशस्तथैवात्र प्रस्तूयते । (सम्पादकः, चेट्टलूर् वा. श्रीवत्साङ्काचार्यः) ।

'गोबलीवर्दन्यायः' । "अयं न्यायो बहुभिः शास्त्रग्रन्थकारैः स्वस्वग्रन्थेषु समचार्यत । जिज्ञासाधिकरणश्रुतप्रकाशिकायाम् '[उपात्तविशेषव्यतिरिक्तविषये सामान्यशब्दस्य] अविरोधेऽपि वैयर्थ्यपरिहाराय सङ्कोचश्चेत् गोबलीवर्दन्यायः' इति तत्स्वरूपं न्यरूप्यत । नित्यकर्मापि करणे प्रत्यवायपरिहाररूपफलप्रदमिति काम्यमेव इति, काम्यात् नित्यस्य पृथगभिलापो न युज्यते । एवं मनोऽपि इन्द्रियेष्वन्यतममिति, 'मनस्सर्वेन्द्रियाणि च' इति श्रुतौ मनसः पृथङ्निर्देशो न घटते; इत्याशङ्काद्वयम् अनेन न्यायेन मीमांसापादुका-श्रुतप्रकाशिकाऽधिकरणसारावल्यादौ समाधीयत ।। प्रौढमनोरमायाम्– 'धातुसूत्रगणोणादिवाक्यलिङ्गानुशासनम् । आगमप्रत्ययादेशा उपदेशाः प्रकीर्तिताः' इत्यत्र 'उणादिलिङ्गानुशासनयोरपि सूत्रत्वात् सिद्धे, पृथगुपादानं गोबलीवर्दन्यायेन। एव गणत्वादेव सिद्धे धातोरपीत्यादि' इति प्राचीनवैयाकरणव्याख्यानं प्रादर्श्यत । गोशब्दस्य धेनुबलीवर्दोभयवाचकत्वम्, बलीवर्दपदसमभिव्याहारे तु धेनुमात्रवाचकत्वं च, इति तत्र तत्र एतन्न्यायस्वारस्यतामाशयो लक्ष्यते ।।

'त्यदादीनि सर्वैर्नित्यम्' इति सूत्रे महाभाष्ये तु 'यदि सामान्यविशेषवाचिनोः द्वन्द्वो न भवति इत्युच्यते; शूद्राभीरम्, गोबलीवर्दम्, तृणोलपम् इति न सिद्ध्यति । नैष दोषः । इह तावत् शूद्राभीरमिति । आभीरा जात्यन्तराणि। गाव ।।वर्दमिति । गावः उत्कालितपुंस्काः वाहाय च विक्रयाय च स्त्रिय एवावशिष्यन्ते । तृणोलपमिति । अपां 'उलपम्' इति नामधेयम्' इत्यभाष्यत ।। अत्र प्रदीपे 'स्त्रिय एव' इति प्रतीकमुपादाय 'ततश्चात्र गोशब्दः स्त्रीगवीनामेव वाचकः' इति व्याख्यायत ।।

एतद्व्याख्यानोद्द्योते– 'स्त्रिय एव' इति भाष्यप्रतीकं धृत्वा, 'ततश्च गोशब्दे स्त्रीत्वसमानाधिकरणं गोत्वं प्रवृत्तिनिमित्तं पुंस्त्वसमानाधिकरणं च इति नानार्थो गोशब्दः । तत्र आद्यः प्रसिद्धः । अन्त्यस्तु क्वचिदेव । एवं च गोशब्दः स्त्रीगवीणामेव वाचकः प्रायेण । क्वचिदेव तात्पर्यग्राहकवशेन पुङ्गवानां वाचकः । यथा–'एतान् गाश्चतुरो बलीवर्दान् पश्य' इति 'प्रथमयोः–'इति सूत्रस्थभाष्यप्रयोगे, 'गौर्बाहीकः' इत्यादौ च, इति भावः । एवं च बलीवर्दसमभिव्याहारात् गोशब्दस्तदतिरिक्तपरः' इति कथा चिन्त्या । वाहाद्यर्थं निष्कासितपुरुषाः(-पुंस्काः?) एव गावो गोपदवाच्याः, न तु तत्सहिताः–इत्यर्थो भाष्यस्य । 'एतान् गाः–' इत्युदाहरणे 'बलीवर्दान्' इति तु अवस्थाविशेषप्राप्तत्वबोधनाय–इत्याहुः । ततश्चात्रेति । अत्रोदाहरणे पुंतात्पर्यग्राहकरहिते इत्यर्थः । भाष्यात् लोकाच्च गोशब्दव्यवहारः प्रायेण स्त्रीगवीष्वेव, इति द्रष्टव्यम्'–इति महाभाष्यप्रदीपकारहृदयमवर्ण्यत ।।

लघुमञ्जूषायां प्रातिपदिकार्थविचारान्तेऽयमेवार्थः प्राकाश्यत । एवं च महाभाष्यकारमते गो- बलीवर्दपदयोः गोशब्दो धेनुरूपविशेषवाचकः, न तु प्रथमं धेन्वृषभात्मकार्थद्वयवाची सन् बलीवर्दपदसन्निधानात् धेनुरूपविशेषेऽवतिष्ठते इति गोशब्दस्य सामान्यवाचित्वमभिसन्धाय तैस्तैराश्रितो गोबलीवर्दन्यायो नास्त्येव–इति फलितम् । ब्राह्मणवसिष्ठन्यायस्तु तन्न्यायस्थाने कैयटादिभिरूरीकृत इति, स एव महाभाष्यानुसारिणामादरणीयः।।" [संपादकः] ।

